धर्मो विश्वस्य जगतः प्रतिष्ठा

प्राज्ञपाठशालामण्डलग्रन्थमाला

# मीमांसाकोषः

## षष्ठो भागः

( भ—व )

संपादकः

ब्रह्मीभूतः केवलानन्दसरस्वती

कार्तिकः कृष्णः ६ मन्दवासरः शकः १८८४

Prājña Pāṭhashālā Maṇḍala Grantha Mālā

# *MĪMĀṂSĀKOṢAḤ*

## Part VI



*Edited by*

The Late Kevalānandasaraswatī

1962

Rs.35







PRINTED BY M. S. SATHE, AT THE PRAJNA PRESS, WAI ( SATARA )
&
PUBLISHED BY M. S. SATHE, FOR PRAJNA PATHASHALA MANDAL, WAI ( SATARA )

Price Rs. 35

भारतसंघराज्यमुख्येन राष्ट्रपतिना
**श्रीराधाकृष्णन्महोदयेन**
अयं षष्ठो भागः स्वकरकमलेन
प्रकाशितः ।
कार्तिकः कृष्णः ६ शकः १८८४

# अनुक्रमणिका

# प्रकाशकस्य निवेदनम् ।

भारतसंघराज्यमुख्येन भूतपूर्वेण राष्ट्रपतिना श्रीराजेन्द्रप्रसादेन मीमांसाकोश-पञ्चमभागस्य प्रकाशनं निर्वर्तितं मार्गशीर्षकृष्णदशम्यां पूर्वाह्णे शके १८८२ तमे । मन्यामहे, अहो भाग्यमस्माकं यत् अयं षष्ठोऽपि भागः विश्वविख्यातयशसा परिणतप्रज्ञेन महादार्शनिकेन पौरस्त्यपाश्चात्त्योभयतत्त्वदर्शनेषु निष्णातेन भारतसंघराज्यस्य द्वितीयेन राष्ट्रपतिना **श्रीमद्राधाकृष्णन्महोदयेन** महता संरम्भेण प्रकाशनगोचरतामद्य नीयते ।

गुरुचरणनिर्मितस्यास्य भागस्य संस्कारः गुरुचरणान्तेवासिना मीमांसाभूषणेन तपःस्वाध्यायनिरतेन आहिताग्निना ताम्बेइत्युपाख्येन दत्तात्रेयशास्त्रिणा संपादितः ।

अस्य षष्ठभागस्य यथापूर्वं मुद्रितपरिशोधनादि सूक्ष्मेक्षिकया धर्मकोशस्य कार्यकारिसंपादकेन श्रीरङ्गनाथशास्त्रिणा निर्वर्तितम् । श्रीरङ्गनाथशास्त्रिणः एतादृशकार्य-निर्वर्तनसामर्थ्ये गुरुचरणानामपि विश्वास आसीत् । न्यूनातिरिक्तदोषपरिहाराय गुरुभिस्तेन सह पुनःपुनः विमर्शोऽपि कृतोऽस्ति । ग्रन्थगुणवत्तासंपत्तावेव श्रीरङ्गनाथ-शास्त्रिणश्चित्तसमाधानमित्यस्माकमपि चिरकालीनोऽनुभव इति तस्मिन्विश्रभ्य धर्मकोश-कार्यमपि वयं संचालयामः ।

**अधिकरणादिसंख्या**— षष्ठेऽस्मिन् भागे भाष्याधिकरणानि ८१, संकर्षाधि-करणानि ४१, केवलानन्दीवृत्त्यधिकरणानि १००, तौताततिताधिकरणानि १९, न्यायाः १८४, लघुसिद्धान्ताश्च ४६३४ भवन्ति ।

अथ प्रथमभागमारभ्य भाष्याधिकरणानि ७७९, संकर्षाधिकरणानि २६८, केवला-नन्दीवृत्त्यधिकरणानि ६९०, तौताततिताधिकरणानि ८०, न्यायाः १२१६, लघुसिद्धान्ताश्च २२२८१ इति ।

कार्तिकः कृष्णः ६
शकः १८८४



**लक्ष्मणशास्त्री जोशी, तर्कतीर्थः**
अध्यक्षः प्राज्ञपाठशालामण्डलस्य
मुख्यसंपादकश्च धर्मकोशस्य

# ग्रन्थादिसंक्षेपाक्षराणि तद्विवरणं च ।

**अद्वैत**— अद्वैतसिद्धिः श्रीमधुसूदनसरस्वतीप्रणीता मोहमय्यां निर्णयसागरे १९१७ सने मुद्रिता ।

**अद्वैत. चं**— अद्वैतसिद्धेः टीका लघुचन्द्रिका ब्रह्मानन्दी नाम ।

**अलंकारः**— भाट्टालङ्कारः नाम मीमांसान्यायप्रकाशस्य टीका अनन्तदेवविरचिता । चौखम्बायां १९२१ सने मुद्रितः ।

**आचारमयूखः**— श्री. ज. र. घारपुरेसंपादितः, मुंबई ।

**आपध**— आपस्तम्बधर्मसूत्रम् । प्रश्नः, कण्डिका, सूत्रं इति अङ्कत्रयम् ।

**आपस्तम्बाचार्यः**— प्रसिद्धः कल्पसूत्रकारः ।

**आभरणम्**— शांकरशारीरकभाष्यस्य टीका । अध्याय–पाद–सूत्राङ्काः । क्वचित् तृतीयोऽङ्कः अधिकरणस्य ।

**आर्षेयब्राह्मणम्**— सामवेदीयम् ।

**आश्व. गृ**— आश्वलायनगृह्यसूत्रम्, तत्रत्या नारायणवृत्तिश्च ।

**आश्व. श्रौ**— आश्वलायनश्रौतसूत्रम् । पुण्यपत्तनस्थानन्दाश्रमे मुद्रितम् ।

**इ**— इत्यादि ।

**उद्योतः**— व्याकरणमहाभाष्यस्य टीका ।

**उपदेशसाहस्री**— श्रीशंकराचार्यप्रणीता । रामतीर्थः टीकाकारः । प्रकरणश्लोकाङ्कौ । गद्यं पद्यं च ।

**ऋजु**— ऋजुविमला नाम शाबरभाष्यव्याख्यानरूपायाः प्राभाकरीयबृहत्याः टीका श्रीशालिकनाथप्रणीता । चौखम्बासीरीज् १९२९ सने मुद्रिता ।

**ऋसं**— ऋग्वेदसंहिता । मण्डलम्, सूक्तम्, ऋक् इत्यङ्कत्रयम् ।

**ऐआसा**— ऐतरेयारण्यकस्य सायणभाष्यम् ।

**ऐब्रा**— ऐतरेयब्राह्मणम् । पुण्यपत्तनस्थानन्दाश्रमे १९३० सने मुद्रितम् । अध्यायः, खण्डः, सूत्रं इत्यङ्कत्रयम् ।

**ऐब्रासा**— ऐतरेयब्राह्मणस्य सायणभाष्यम् । अध्याय–खण्ड-सूत्राणामङ्काः । आनन्दाश्रमे १९३० सने मुद्रितम् ।

**कठोप**— कठोपनिषत् ।

**कणादसूत्रम्**— वैशेषिकदर्शनम् । अध्याय– आह्निक– सूत्राणामङ्काः ।

**कणिका**— न्यायकणिका विधिविवेकस्य टीका वाचस्पतिमिश्रप्रणीता । काशी मेडिकलहॉल-मुद्रणालये १९०७ सने मुद्रिता ।

**कर्क**— कर्काचार्यः, कात्यायनश्रौतसूत्रस्य भाष्यकारः ।

**कल्पतरु**— भामत्याः टीका । अमलानन्दसरस्वतीप्रणीतः, १९१७ सने मोहमय्यां निर्णयसागरे मुद्रितः । अध्यायः, पादः, सूत्रं इत्यङ्कत्रयम् ।

**कस्तूरि**— कस्तूरिरङ्गाचार्यविरचिता जैमिनिसूत्रवृत्तिः । १९०८ सने मैसूरनगरे मुद्रिता । सा च भाट्टदीपिकापुस्तके एव मुद्रिता ।

**कातीयसूत्रम्**— कात्यायनश्रौतसूत्रम् ।

**कासं**— काठकसंहिता ।

**कु., कुतूहलम्**— अध्वरमीमांसाकुतूहलवृत्तिः श्रीवासुदेवदीक्षितविरचिता । श्रीरङ्ग-वाणीविलासे मुद्रिता । अध्यायः, पादः, अधिकरणम्, सूत्रं इत्यङ्कचतुष्टयम् ।

**के**— केवलानन्दसरस्वती । तत्कृता जैमिनिसूत्रवृत्तिश्च ।

**कैउ**— कैवल्योपनिषत् ।

**कयटः**— व्याकरणमहाभाष्यस्य टीकाकारः । काश्यां मुद्रितः ।

**कौ., कौस्तुभः** — मीमांसाकौस्तुभः खण्डदेवप्रणीतः । चौखम्बायां १९३९ सने मुद्रितः । अध्यायः, पादः, अधिकरणम्, सूत्रं इत्यङ्कचतुष्टयम्, पष्ठाङ्कश्च ।

**कौब्रा., कौषीतकिब्राह्मणम्**— पुण्यपत्तने आनन्दाश्रमे १९११ सने मुद्रितम् ।

**चतुर्ग्रन्थी**— महामहोपाध्यायश्रीअनन्तकृष्णशास्त्रिभिः प्रणीता न्यायामृत- अद्वैतसिद्धि- न्यायामृततरङ्गिणी-लघुचन्द्रिकाणां चतुर्णां ग्रन्थानां निष्कर्षरूपा ।

**चन्द्रिका**— अद्वैतसिद्धेः टीका ब्रह्मानन्दी नाम । निर्णयसागरे मुद्रिता।

**जै**— जैमिनिकृतद्वादशलक्षणी । अध्यायः, पादः, अधिकरणम्, सूत्रं इत्यङ्कचतुष्टयम् ।

**जैब्रा**— जैमिनीयब्राह्मणम् ।

**टुप्**— टुप्टीका नाम वार्तिकं कुमारिलभट्टप्रणीतम्, पुण्यपत्तने आनन्दाश्रमे शाबरभाष्येण सह १९३३ सनादौ मुद्रितम् ।

**तत्त्वप्रकाशिका**— परिभाषेन्दुशेखरटीकायाः भूतेः टीका । २००२ संवति काश्यां मुद्रिता ।

**तत्त्वबोधिनी**— सिद्धान्तकौमुद्याः टीका निर्णयसागरीया १९२९ सने मुद्रिता ।

**तन्त्ररत्नम्**— टुप्टीकायाः पार्थसारथिप्रणीता टीका । लिखिता । अध्यायः, पादः, अधिकरणम्, सूत्रं चेति अङ्कचतुष्टयम् ।

**ताण्ड्य**— ताण्ड्यब्राह्मणं पञ्चविंशं नाम । अध्यायः, खण्डः, सूत्रं चेति अङ्कत्रयम् ।

**ताण्ड्यसा**— ताण्ड्यब्राह्मणस्य सायणप्रणीतं भाष्यम् ।

**तैसं**— तैत्तिरीयसंहिता । काण्डम्, प्रपाठकः, अनुवाकः इत्यङ्कत्रयम् ।

**तैसंसा**— तैत्तिरीयसंहितायाः सायणभाष्यम् ।



**तौता**— तौतातितमततिलकः भवदेवप्रणीतः मीमांसासूत्रवृत्तिरूपः अधिकरणरचनात्मकः । काश्यां मुद्रितः ।

**दमी**— दत्तकमीमांसा श्रीनन्दपण्डितकृता ।

**द्र०**— द्रष्टव्यम् ।

**धर्मसिन्धुः**— श्रीकाशीनाथोपाध्यायविरचितः ।

**निरुक्त**— यास्काचार्यप्रणीतं निरुक्तम् । अध्यायः खण्डश्च ।

**निर्णयसिन्धुः**— श्रीकमलाकरभट्टविरचितः ।

**न्या.माला**— न्यायरत्नमाला पार्थसारथिमिश्रप्रणीता, चाखम्बायां मुद्रिता ।

**न्यायनि**—न्यायनिर्णयः नाम शांकरशारीरकभाष्यस्य टीका आनन्दगिरिप्रणीता । अध्याय-पाद-सूत्राङ्काः ।

**न्या. सू**— न्यायदर्शनसूत्रम् । अध्यायः, आह्निकम्, सूत्रं इति त्रयोऽङ्काः ।

**पं**— पङ्क्तिः ।

**पञ्जिका**—प्रकरणपाञ्जिका श्रीशालिकनाथप्रणीता प्राभाकरमतानुसारिणी । अनेकप्रकरणात्मको ग्रन्थः । चौखम्बायां मुद्रितः ।

**पराक्रमः**—उपक्रमपराक्रमः अप्पय्यदीक्षितप्रणीतः । लिखितः । पत्रम्, पृष्ठं इत्यङ्कद्वयम् ।

**परि**— पारिभाषा । क्रमाङ्कः ।

**परिभाषेन्दुः**— परिभाषेन्दुशेखरः नागेशप्रणीतः । काश्यां २००२ संवति मुद्रितः ।

**परिमल**— भामत्याष्टीकायाः कल्पतरोः टीका । अप्पय्यदीक्षितविरचितः मोहमय्यां निर्णयसागरे १९१७ सने मुद्रितः ।

**पा**— पाणिनिः व्यकरणाचार्यः प्रसिद्धः । अध्यायः, पादः, सूत्रं चेति अङ्कत्रयम् ।

**पुरुषार्थचिन्तामणिः**— श्रीविष्णुभट्टविरचितः । मोहमय्यां मुद्रितः ।

**पृ**—पृष्ठम् ।

**प्र. पञ्चिका**— प्रकरणपञ्चिका श्रीशालिकनाथप्रणीता । काश्यां विद्याविलासयन्त्रालये १९०४ सने मुद्रिता ।

**प्र. वि**— प्रभाकरविजयः नन्दीश्वरविरचितः । कलकत्तायां १९२६ सने मुद्रितः ।

**बाल**— बालमीमांसाप्रकाशः शंकरभट्टप्रणीतः । काश्यां विद्याविलासमुद्रणालये १९०२ सने मुद्रितः ।

**बिन्दुः**— न्यायबिन्दुः तत्सदुपाह्वयवैद्यनाथप्रणीतः, मुम्बई गुजरातीमुद्रणालये १९१५ सने मुद्रितः ।

**बृहती**— शाबरभाष्यस्य प्रभाकरमतानुसारिणी टीका । नव्यप्राभाकरमतमत्र । चौखम्बायां १९२९ सने मुद्रिता ।

**बृहस्पतिः**— बृहस्पतिस्मृतिः ।

**बौध**— बौधायनधर्मसूत्रम् । प्रश्नः पटलं सूत्रं च ।

**ब्रसू**— ब्रह्मसूत्रम् । अध्यायः, पादः, सूत्रं इत्यङ्कत्रयम् । अङ्कचतुष्टये सति तृतीयोऽङ्कः अधिकरणस्य ।

**भगी**— भगवद्गीता । अध्यायः श्लोकश्च ।

**भट्टसोमेश्वरः** – तन्त्रवार्तिकटीकायाः न्यायसुधायाः कर्ता ।

**भा**— शाबरभाष्यं आनन्दाश्रमे मुद्रितम् । अध्यायः, पादः, अधिकरणम्, सूत्रं इत्यङ्कचतुष्टयम्। क्वचित् पृष्ठाङ्कः अधिकः ।

**भाट्ट**— भाट्टदीपिका नव्यमीमांसकखण्डदेवप्रणीता । मैसूर १९०८ सने मुद्रिता । अध्यायः, पादः, अधिकरणमिति अङ्कत्रयम् ।

**भाट्टालङ्कारः**—मीमांसान्यायप्रकाशस्य अनन्तदेवविरचिता टीका ।

**भामती**—श्रीवाचस्पतिमिश्रप्रणीता शांकरशारीरकभाष्यस्य टीका । मुम्बई निर्णयसागरे १९१७ सने मुद्रिता ।

**भावनाविवेकः**— मण्डनाचार्यप्रणीतः काश्यां १९२३ सने मुद्रितः ।

**भाष्यम्**—शाबरभाष्यम् ।

**भूति**—परिभाषेन्दुशेखरस्य टीका श्रीतात्याशास्त्रीपटवर्धनप्रणीता । काश्यां २००२ सने मुद्रिता ।

**मणि**— भाट्टचिन्तामणिः गागाभट्टविरचितः । तर्कपादमात्रम् । चौखम्बायां १९०० सने मुद्रितः ।

**मण्डन**— मण्डनमिश्रकृता मीमांसाऽनुक्रमणी चौखम्बायां १९२९ सने मुद्रिता, मण्डनाचार्यश्च ।

**माघ**— माघकविकृतं शिशुपालवधं नाम महाकाव्यम् । सर्गः श्लोकः इत्यङ्कद्वयम् ।

**मिताक्षरा**— याज्ञवल्क्यस्मृतिटीका श्रीविज्ञानेश्वरविरचिता ।

**मीको** — मीमांसाकोषः ।

**मीन्या**— मीमांसान्यायप्रकाशः श्रीआपदेवप्रणीतः । चौखम्बायां १९२० सने मुद्रितः ।

**मीमांसाजीवरक्षा**— प्राभाकरमतानुसारिणी शालिकनाथप्रणीता । प्रकरणपञ्चिकापुस्तके अन्ते काश्यां १९०४ सने मुद्रिता ।

**मुरारिः**— अङ्कत्वनिरुक्तिकर्ता । आनन्दाश्रमीये मीमांसादर्शने तृतीये भागे अन्ते १९३१ सने मुद्रिता ।

**मेधातिथिः**— मनुस्मृतेः भाष्यकारः ।

**याज्ञ, यास्मृ**— याज्ञवल्क्यस्मृतिः । अध्यायः, श्लोकः इति द्वौ अङ्कौ ।

**रत्न**— तन्त्ररत्नम् । पार्थसारथिमिश्रप्रणीतम् । टुप्टीकावार्तिकस्य टीका । लिखिता । अध्यायः, पादः, अधिकरणम् , सूत्रं इत्यङ्कचतुष्टयम् ।



**रत्नमाला**— न्यायरत्नमाला पार्थसारथिमिश्रप्रणीता । चौखम्बायां मुद्रिता ।

**रत्नाकरः**— न्यायरत्नाकरः श्लोकवार्तिकस्य टीका पार्थसारथिमिश्रप्रणीता । चौखम्बायां १८९८ सने मुद्रितः ।

**रसायनम्**— विधिरसायनं अप्पय्यदीक्षितप्रणीतम् । चौखम्बायां १९०१ सने मुद्रितम् ।

**रहस्य**— भाट्टरहस्यं श्रीखण्डदेवप्रणीतम् । शाब्दबोधविषयकम् । काञ्चीनगरे मुद्रितम् ।

**वा**— तन्त्रवार्तिकं आचार्यकुमारिलभट्टविरचितं शाबरभाष्यस्य विवरणात्मकम् । पुण्यपत्तने आनन्दाश्रमे भाष्येण सह १९३१ सने मुद्रितम् । अध्यायः, पादः, अधिकरणम् , सूत्रं चेति अङ्कचतुष्टयम् ।

**वाक्यार्थ**— वाक्यार्थमातृकावृत्तिः शालिकनाथप्रणीता । प्रकरणपञ्चिकापुस्तके एव अन्ते १९०३ सने मुद्रिता ।

**वि**— जैमिनीयन्यायमालाविस्तरः सायणमाधवाचार्यप्रणीतः । पुण्यपत्तने आनन्दाश्रमे १९१६ सने मुद्रितः । आध्यायः, पादः, अधिकरणं चेति अङ्कत्रयम् ।

**विवि** – विधिविवेकः मण्डनाचार्यप्रणीतः । काश्यां मेडिकल्हॉलमुद्रणालये १९०७ सने मुद्रितः ।

**वृ**— मीमांसासूत्रवृत्तिः सुबोधिनी नाम रामेश्वरसूरिविरचिता । काश्यां मेडिकल्हॉलमुद्रणालये १९२३ सने मुद्रिता ।

**वैजयन्ती**— महादेवकृता सत्याषाढश्रौतसूत्रवृत्तिः पुण्यपत्तने आनन्दाश्रमे १९०७ सने मुद्रिता ।

**वैद्यनाथः**— शाबरभाष्यीयतर्कपादस्य टीकाकारः । आनन्दाश्रमे १९२९ सने मुद्रिता वैद्यनाथी नाम ।

**वैद्यनाथी**— वैद्यनाथकृता शाबरभाष्यस्य टीका ।

**वैया. भू**— वैयाकरणभूषणसारः ।

**वै. सार. कारिका**— वैयाकरणभूषणसारस्था कारिका ।

**व्यवहारमयूखः**— श्री. ज. र. घारपुरेप्रकाशितः, मुम्बई ।

**शंकर** — शंकरभट्टकृतः मीमांसासारसंग्रहः । काश्यां विद्याविलासमुद्रणालये प्रकरणपञ्चिका-पुस्तकान्ते १९०४ सने मुद्रितः ।

**शब्दकौस्तुभः**— भट्टोजीदीक्षितप्रणीतः ।

**शांभा**— शांकरं भाष्यम् । अध्यायः, पादः, सूत्रं इत्यङ्कत्रयम् । चतुरङ्कत्वे तु तृतीयोऽङ्कः अधिकरणस्य ।

**शांश्रौ**— शाङ्खायनश्रौतसूत्रम् । अध्यायः, खण्डः, सूत्रं च । कलिकातायां १८८८ सने मुद्रितं सभाष्यम् ।

**शा**— शास्त्रदीपिका पार्थसारथिमिश्रप्रणीता । निर्णयसागरे १९१५ सने मुद्रिता । अध्यायः, पादः, अधिकरणं चेति अङ्कत्रयम् ।

**शास्त्रप्रकाशिका**— बृहदारण्यकोपनिषच्छांकरभाष्यगतवार्तिकस्य आनन्दगिरिकृता टीका आनन्दाश्रमे मुद्रिता ।

**शेखर**— परिभाषेन्दुशेखरः नागेशप्रणीतः । काश्यां २००२ संवति मुद्रितः भूत्यादिसहितः ।

**श्राद्धमयूखः**— श्री ज. र. घारपुरेप्रकाशितः, मुम्बई ।

**श्रीकर**— ब्रह्मसूत्रभाष्यकारः शैवमतानुसारी ।

**श्लोवा**— श्लोकवार्तिकं आचार्यकुमारिलभट्टविरचितम् । तर्कपादः । चौखम्बायां १८९८ सने मुद्रितम् ।

**संस्कारकौस्तुभ**— श्रीअनन्तदेवविराचितः निर्णयसागरे मुद्रितः ।

**संकर्ष**— संकर्षकाण्डम् । भास्करभट्टप्रणीता भाट्टचन्द्रिका भाट्टदीपिका वा वृत्तिः । काश्यां मेडिकल्हॉलमुद्रणालये १८९४ सने मुद्रिता ।

**संक्षेपशारीरकम्**— रामतीर्थकृतटीकासहितम् । अध्यायः, श्लोकः इति अङ्कद्वयम् ।

**संग्रहः**— न्यायसंग्रहः । लिखितः ।

**सत्याश्रौ**— सत्याषाढीयं श्रौतसूत्रम् । आनन्दाश्रमे १९०७ सने मुद्रितम् ।

**सत्याषाढः**— तैत्तिरीयहिरण्यकेशिशाखीयकल्पसूत्रं आनन्दाश्रमे १९०७ सने मुद्रितम् ।

**सदसं**— सर्वदर्शनसंग्रहः ।

**सना. ध. प्र.**— सनातनधर्मप्रदीपः । श्रीकुरुमुण्डेकरमहाराजप्रेरितैः म. म. अनन्तकृष्णशास्त्रिभिः प्रणीतः ।

**समयमयूखः**— श्री ज. र. घारपुरेसंपादितः, मुम्बई ।

**साहस्री**— भुवनेशलौकिकन्यायसाहस्री । मुम्बई वेङ्कटेश्वरे १८३० शके मुद्रिता । साहस्र्यां यो न्यायक्रमाङ्को निवेशितः स एवास्माभिः प्रदर्श्यते ।

**सि. कौ**— सिद्धान्तकौमुदी भट्टोजीदीक्षितप्रणीता । निर्णयसागरे १९२९ सने मुद्रिता ।

**सिद्धान्तचन्द्रिका**— तर्कपादस्थशास्त्रदीपिकायाः टीका रामकृष्णप्रणीता निर्णयसागरे १९१५ सने शास्त्रदीपिकया सह मुद्रिता ।

**सिद्धान्तदर्शनम्**— निरञ्जनभाष्यसमेतम् । आनन्दाश्रमे १९०७ सने मुद्रितम् ।

**सिद्धिव्याख्या**— अद्वैतसिद्धेः टीका ।



**सु., सुधा**— न्यायसुधा तन्त्रवार्तिकस्य टीका । भट्टसोमेश्वरविरचिता राणकापरपर्याया । चौखम्बायां मुद्रिता । अत्र पृष्ठाङ्का एव केवलमुपन्यस्ताः । यत्र च ' सु. ३ । ७ ' इति स्यात् तत्र सुधायाः तृतीयाध्यायस्य सप्तमाष्टमपादात्मके भागे ग्रन्थान्ते मुद्रिते पृष्ठं अमुकं इत्यर्थः । तत्र भागे किल पृथगेव अङ्का मुद्रिता आदित आरभ्य ।

**सोम**— सोमनाथी मयूखमालिका नाम शास्त्रदीपिकायाष्टीका अर्थवादाधिकरणमारभ्य द्वादशाध्यायान्ता । निर्णयसागरे १९१५ सने शास्त्रदीपिकया सह मुद्रिता । अत्र अध्यायः, पादः, अधिकरणं इति अङ्कत्रयम् ।

---

# शुद्धिपत्रकम्

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ३००९ | १ | ३२ | वक्तु | वक्तुं |
| ३०३७ | ,, | ११ | तद्धतु | तद्धेतु |
| ३०६७ | २ | २५ | भयसां | भूयसां |
| ३०८४ | ,, | २६ | श्रत्वा | श्रुत्वा |
| ३१०४ | ,, | ८ | चतुःशङ्गं | चतुःशृङ्गं |
| ३१०७ | ,, | १५ | अग्नचो | अग्नैवो |
| ३१०८ | ,, | २५ | पुरोर्डाश | पुरोडाश |
| ३११८ | ,, | १२ | आदित्यै | अदित्यै |
| ३१२५ | ,, | २७ | अग्निद | अग्नीद |
| ३१३६ | १ | ४ | डाशब्द | डाशशब्द |
| ३१३८ | ,, | २९ | विहित | विहितं |
| ३१५१ | २ | २३ | वक्यानां | वाक्यानां |
| ३१६१ | ,, | २९ | व्यसायो | व्यवसायो |
| ३१६३ | १ | २७ | एंवा | एवं |
| ३१६४ | ,, | २ | किया | क्रिया |
| ३१६७ | ,, | ७ | नोप्क्ष | नोत्क्ष |
| ३१७१ | ,, | ८ | निदशा | निर्देशा |
| ३१७२ | २ | ३४ | तिष्प | त्रिष्टुप |
| ३१८९ | १ | ३२ | शास्त्रात्त | शास्त्रात्तु |
| ३२०१ | ,, | ४ | सर्वेष | सर्वेषु |
| ,, | ,, | ६ | श्रतिः | श्रुतिः |
| ,, | २ | ३४ | स्वगः | स्वर्गः |
| ३२११ | ,, | १६ | तृप्तिभव | तृप्तिर्भव |
| ३२१३ | ,, | ३४ | चितिनमि | चितिर्निर्मि |
| ३२२३ | ,, | ३२ | हविराता | हविरार्ता |
| ३२२५ | ,, | ३ | यद्यप | यद्यूप |
| ३२३१ | ,, | १३ | स्मतीनां | स्मृतीनां |
| ३२३२ | १ | ३ | पल्वौ | पैल्वौ |
| ३२४७ | ,, | ३ | कतृधमा | कर्तृधर्मो |

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ३२५१ | १ | १३ | क्षयाथ | क्षयार्थं |
| ,, | २ | ३२ | कुर्तृं | कर्तृं |
| ३२५७ | १ | ३४ | उच्छय | उच्छ्रय |
| ३२६३ | ,, | २१ | ऊरु | उरु |
| ३२९० | १ | ३५ | त्रिमिता | त्रिमित्ता |
| ३२९१ | २ | ३५ | कत्वात् | कत्वात् |
| ३३०१ | ,, | १९ | श्रत्यैव | श्रुत्यैव |
| ३३०४ | १ | ९ | श्रयमाणाः | श्रूयमाणाः |
| ३३२२ | ,, | १८ | राजसय | राजसूय |
| ३३३० | ,, | ७ | ष्टतं | ष्टुतं |
| ३३३७ | २ | ७ | ※ रौमक | * रौमक |
| ३३४८ | ,, | १९ | नाक्नत्व | नाक्नत्वं |
| ३३५५ | ,, | २३ | मैद्री | मैन्द्री |
| ३३६५ | ,, | २१ | श्रत्या | श्रुत्या |
| ३३७० | १ | २३ | तृन्तीया | तृतीया |
| ३३८० | ,, | १५ | अश्रत | अश्रुत |
| ३३८२ | २ | २३ | वनान्तो | वचनान्तो |
| ३३८८ | ,, | २४ | तत्स्मते | तत्स्मृते |
| ३३९१ | ,, | २० | लोकिकाः | लौकिकाः |
| ३३९६ | १ | ६ | वात् | त्वात् |
| ३३९८ | ,, | ३४ | बहुश्रताः | बहुश्रुताः |
| ३४०४ | ,, | १ | तत्त | तत्तु |
| ३४०९ | २ | २० | दशना | दर्शना |
| ३४२८ | १ | ९ | कतृमे | कर्तृमे |
| ३४३२ | ,, | २५ | उत्कोप | उत्कर्षाप |
| ३४४४ | १ | ८ | पर्णपयी | पर्णमयी |
| ,, | २ | २१ | पूण | पूर्ण |
| ३४४६ | ,, | ३२ | धानाथ | धानार्थे |
| ३४४८ | ,, | ८ | आकङ्क्षा | आकाङ्क्षा |
| ३४५० | ,, | ३४ | पति | प्रति |
| ३४५५ | १ | ४ | कुत | कुतः |
| ३४५८ | २ | ६ | दशने | दर्शने |
| ३४६१ | १ | २७ | प्रमणा | प्रमाणा |
| ३४६२ | २ | ९ | वोधापत्तः | बोधापत्तेः |



| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ३४६४ | १ | ३० | पदाथभ्यो | पदार्थेभ्यो |
| ३४६७ | २ | ३२ | पूर्व लाभ | पूर्वलाभ |
| ३४७४ | १ | २१ | च्छिन | छिन्न |
| ३४८४ | ,, | १९ | पशुन् | पशून् |
| ३४८६ | २ | १७ | अग्नि | आग्नि |
| ३४८८ | १ | २९ | पशुन् | पशून् |
| ३४८९ | ,, | १५ | भवेत्त | भवेत्तु |
| ३४९४ | २ | १ | चतुर्मा | चातुर्मा |
| ३५०९ | १ | ३० | प्रामाण्य | प्रामाण्य |
| ३५११ | ,, | १६ | ओत्सर्गि | औत्सर्गि |
| ३५१६ | ,, | १५ | कार्यो | कार्यौ |
| ३५१८ | ,, | १३ | पूवोक्ता | पूर्वोक्ता |
| ३५२३ | ,, | ३० | सद्यःस्का | सद्यस्का |
| ३५३१ | ,, | १५ | पदाथ | पदार्थे |
| ३५३७ | २ | ३१ | अक्षर्दी | अक्षैर्दी |
| ३५४९ | ,, | ९ | याज | यज |
| ३५५० | १ | ९ | षार्थो | षार्थः |
| ३५५५ | ,, | २१ | भास | भासः |
| ३५५७ | ,, | २४ | ऊर्जै | ऊर्जै |
| ३५७६ | ,, | २५ | त्वाद्वौ | त्वादौ |
| ३५८१ | ,, | ९ | चीकीर्षा | चिकीर्षा |
| ३५८४ | ,, | ५ | विधित्र | विधित्रै |
| ,, | २ | ३१ | वृद्ध | वृद्धं |
| ३५८५ | ,, | २३ | ममुभ | मनुभ |
| ३५८८ | १ | १ | काय | कार्य |
| ३५८९ | २ | १४ | युक्त | युक्तं |
| ३५९२ | १ | १ | वचस | वर्चस |
| ,, | २ | १७ | दशनात् | दर्शनात् |
| ३५९५ | ,, | ७ | श्रत्या | श्रुत्या |
| ३५९६ | ,, | ३१ | अथ | अर्थ |

# मीमांसाकोषः

## भ

* भक्तिः अन्याय्या मुख्ये संभवति । भा. १।८।२२।४३.

* भक्षः अस्ति चमसिनां ज्योतिष्टोमे । ३।५।७।२२. * भक्षः अस्ति मैत्रावरुणस्य अग्नीषोमीये पशौ । १०।७।६।१८–१९. **मीको.** पृ. ११७ ' अग्नीषोमीये पशौ मैत्रावरुणस्य० ' इत्यत्र द्रष्टव्यम् । * भक्षः ( इडायाः ) गृहमेधीये अस्ति । आज्यभागौ स्विष्टकृत् भक्षश्च इति यावदुक्तं कर्तव्यम् । नात्र कुतश्चिदतिदेशः । नेयं कस्यचिद्विकृतिः । वि. १०।७।१०. * भक्षः ( व्रतं ) ज्योतिष्टोमे नित्यः । **भा.** ६।८।८।२८. * भक्षः द्विः ज्योतिष्टोमे ऐन्द्रवायवग्रहे, ' द्विरैन्द्रवायवस्य भक्षयति, द्विर्होतस्य वषट्करोति ' इति वचनात् । ३।५।५।१८. * भक्षः न कर्तृसंस्कारः, किन्तु द्रव्यसंस्कारोऽयमिति तत्र तत्र स्थापयिष्यामः । वा. ३।५।८।२६. * भक्षः नास्ति प्रतिप्रस्थातुः पशौ । १०।७।८।२२–२३. **मीको.** पृ. ११३ ' अग्नीषोमीये पशौ प्रतिप्रस्थातुः० ' इत्यत्र द्रष्टव्यम् । * भक्षः प्रथमो वषट्कर्तुः । ३।५।१३।३६–३९. * भक्षः ब्राह्मणानां राजन्यचमसे राजसूयदशपेये । ३।५।२०।५२–५३. * भक्षः वषट्कारनिमित्तकः यजमानस्य स्वयं याज्यापाठे ऋतुयाजेषु, ज्योतिष्टोमे । ३।५।१८।४४–४६. * भक्षः सोमस्य एकपात्रे अनेकैः अनुज्ञाप्यैव । ३।५।१४।४०. * भक्षः सोमस्य एकपात्रे प्रथमं होतुरेव । ३।५।१३।३६–३९. * भक्षः सोमयागे भक्षविधानात् सिध्यति ' अल्पं जुहोति ' इति विशेषवचनात् शेषः सिध्यति । ' आश्विनं भक्षयन्ति ' ' द्विरैन्द्रवायवस्य भक्षयन्ति ' ' सदसि भक्षयन्ति ' इति वचनानि अपूर्वार्थं प्रतिपादयन्ति । वि. ३।५।६. * भक्षः सोमशेषस्यास्ति ज्योतिष्टोमे । ३।५।६।१९–२१. * भक्षः हारियोजने ग्रावस्तुतोऽपि ज्योतिष्टोमे । ३।५।९।२७–३०. * चोदकेन यस्यापूर्वस्य शेषः प्रतिपाद्यते तस्य तत्कर्मकरे भक्षः । एवं हि तस्योपकारकों भवतीति । **भा.** १०।७।९।२३, * **भक्षाः** उपयुक्तशेषाः । १२।१।१५।३१. * भक्षाः कर्तृसंस्कारार्थाः । कृष्णलानां भक्षाश्च वचनाद्विधीयन्ते । कृत्वाचिन्तेयम् । **टुप्.** १०।२।३।१३. * भक्षाः कृष्णलचरौ ब्रह्मणे युगपत् परिहरणीयाः । १०।२।४।१८. * भक्षाः कृष्णलचरौ सर्वेषां इतरपुरुषेभ्योऽपनीय ब्रह्मणे एव देयाः । १०।२।५।१९–२०. **मीको.** पृ. १४८२ ' कृष्णलचरौ सर्वे शेषभक्षाः० ' इत्यत्र द्रष्टव्यम् । * भक्षाः पुरुषसंस्कारा इति याज्ञिकैः विवेकमगृहीत्वा उक्तम् । **टुप्.** ६।४।३।९. * भक्षाः पुरोडाशादौ चत्वारः १ इडाभक्षः, २ प्राशित्रभक्षः, ३ चतुर्धाकरणभक्षः, ४ शंयुवाकभक्षश्चेति । **वि.** १०।२।४. * भक्षाः प्राकृताः सर्वे अपि समन्त्रकाः इति पूर्वपक्षः । समन्त्रकत्वेन विहितेष्वेव समन्त्रकत्वं नेतरेषु इति सिद्धान्तः । **संकर्ष.** ३।१।९. * भक्षाः शेषस्य ज्योतिष्टोमेऽग्नीषोमीये पशौ मैत्रावरुणस्यापि, परन्तु एकभागत्वम् । १०।७।६,७।१८–१९, २०–२१. * भक्षाः शेषस्य प्रतिपत्तिः । १०।२।९।२९–३३. * भक्षाः समाख्यया ससुब्रह्मण्यानां उद्गातॄणामस्ति । **भा.** ३।५।८।२३–२६. ' अपसुब्रह्मण्यानां ' इति वार्तिकम् । * भक्षाः सर्वे पुरुषान्तरेभ्योऽपनीय ब्रह्मणे परिहरणीयाः कृष्णलचरौ । १०।२।५।१९–२०. **मीको.** पृ. १४८२ 'कृष्णलचरौ सर्वे शेषभक्षाः०' इत्यत्र द्रष्टव्यम् । * इडाप्राशित्रादि**भक्षाः** कृष्णलचरौ कर्तव्याः । तत्र च निरवघयन्तः ( दन्तैः पीडामकुर्वन्तः ) चुम्बुषाकारं भक्षयन्ति । १०।२।३।१४–१७. **मीको.** पृ. १४८० ' कृष्णलचरौ भक्षाणां न बाधः ' इत्यत्र द्रष्टव्यम् । * **भक्षस्य** अनुज्ञापनं ज्योतिष्टोमे वैदिकेनैव मन्त्रेण, न लौकिकवाक्यादिना सोमस्य । **भा.** ३।५।१५।४१. * भक्षस्य सर्वत्र द्रव्यसंस्कारार्थतां वक्ष्यति ( १२।१।१७।३३–३४ ) । वा. ३।४।१७।५०.

**भक्षाणां तु प्रीत्यर्थत्वादकर्म स्यात् । १०।२।३।१४॥**

प्रकृतौ इडाप्राशित्रचतुर्धाकरणशंयुवाककाला भक्षा भवन्ति । तेषां भक्षाणां प्रीत्यर्थत्वात् प्रीतिजननार्थत्वेन सामर्थ्यजननार्थत्वात् शतकृष्णले चरौ च तदभावात् अकर्म स्यात् भक्षा न कर्तव्यास्तत्रेति पूर्वपक्षः ।

**स्याद्वा निर्धानदर्शनात् । १५ ॥**

शतकृष्णले चरौ भक्षाणां कर्म स्यात् । भक्षाः कर्तव्याः । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । चोदकेन प्राप्ता भक्षाः । उपायविशेषश्चोक्तस्तत्र निर्धानदर्शनात् निर्धानस्य दर्शनात् । 'निरवधयन्तो भक्षयन्ति, चुञ्छुषा– ( चुश्चुषा )-कारं भक्षयन्ति' इक्षुकाण्डभक्षणे इव । इति । तस्मात् भक्षाः सन्ति इति सिद्धान्तः ।

**वचनं वाऽऽज्यभक्षस्य प्रकृतौ स्यादभागित्वात् । १६ ॥**

वाशब्दः सिद्धान्तपक्षं व्यावर्तयति । प्रकृतौ दर्शपूर्णमासयोः पुरोडाशस्यैव भक्षभागित्वं नाज्यस्य । शतकृष्णले तु हिरण्यस्य अभागित्वात् भक्षभागित्वाभावात् भक्षणार्हत्वाभावात् अर्थलोपात् नातिदेशः । यत्तु वचनमुक्तं 'निरवभ्रयन्तो भक्षयन्ति, चुश्चुषाकारं भक्षयन्ति' इति तत् वचनं आज्यभक्षस्य स्यात् । हिरण्यशकलेषु यत् लिप्तमाज्यं तत् चुश्चुषाकारं भक्षयन्ति इति । तत्र भक्षणं चोदकप्राप्तं चुश्चुषाकारता विधीयते इति न वाक्यभेदः । तस्मात् कृष्णलानां न भक्षाः इति पूर्वः पक्षः ।

**वचनं वा हिरण्यस्य प्रदानवदाज्यस्य गुणभूतत्वात् । १७ ॥**

शतकृष्णले चरौ 'चुश्चुषाकारं भक्षयन्ति' इति शेषभक्षा उक्ताः । तच्च वचनं हिरण्यस्यैव भक्षणे स्यात्, न आज्यस्य, तस्य हिरण्यगुणभूतत्वात् । अत एव सत्याषाढ कल्पसूत्रे 'शतं हिरण्यकृष्णलानि काकिण्या माषेण वा संमितानि । यत् प्रागवहननात् तत् कृत्वा पवित्रान्तर्हिते आज्ये आवपति' इत्यादि ( २।२।१२।१–४, तैसं. २।३।२ ) । प्रदानवत् यथा अभक्षणीयानामपि कृष्णलानां प्रदानं क्रियते तद्वत् भक्षणमपि । इति सिद्धान्तः । के.

* भक्षाणां न बाधः कृष्णलचरौ चुश्चुषाकारेण तत्संभवात् । १०।२।३।१४–१७. **मीको.** पृ. १४८० 'कृष्णलचरौ भक्षाणां न बाधः' इत्यत्र द्रष्टव्यम् । * भक्षाणां सर्वेषां युगपदुपहूतानां ब्रह्मणा स्वस्वकाले भक्षणं शतकृष्णलचरौ । १०।२।६।२१. **मीको.** पृ. १४८१ 'कृष्णलचरौ युगपत्०' इत्यत्र द्रष्टव्यम् । * **भक्षे** कृष्णलेषु चतुर्धाकरणं नास्ति, ब्रह्मेतरभागबाधेन ब्रह्मण एवैकस्य तत्र संबन्धात् । १०।२।७।२२. **मीको.** पृ. १४७९ 'कृष्णलचरौ चतुर्धाकरणस्य बाधः' इत्यत्र द्रष्टव्यम् । * भक्षे वषट्कारोऽपि निमित्तम् । ३।५।१०।३१. * भक्षे होमाभिषवौ अपि निमित्तं ज्योतिष्टोमे । ३।५।११।३२. * **भक्षेषु** अनुज्ञापनं सोमे एकपात्रेषु एव । ३।५।१७।४३.

**भक्षेषु समन्त्रकेष्वेव भक्षमन्त्रः ॥**

'अग्निः प्रथमः' 'भद्रान्नः श्रेयः' 'एतमु त्यम्' इति विहिता भक्षकरणत्वेन मन्त्राः सौमिकेषु भक्षेषु 'भक्षेहि' इति मन्त्रवत्प्राकृतेषु सर्वेषु भक्षेषु भवेयुः । इति प्राप्ते, सोमस्यापूर्वत्वेन मन्त्रविधेस्तदीयसर्वभक्षेषु अन्वयेऽपि प्रकृते चोदकतः समन्त्रकभक्षा ये प्राप्तास्तेषामेव मन्त्रशेषित्वेन हिरण्यगर्भमन्त्रस्यैन्द्राघार इव तेष्वेव मन्त्राणां प्राप्तिः । **संकर्ष.** ३।१।९.

* **भक्षाधिकरणम्** । ३।२।९।२५–२६. 'लिङ्गसमाख्यानाधिकरणम्' इत्यत्र द्रष्टव्यम् ।

* **भक्षानुवाकः** विभज्य विनियोक्तव्यः । 'भक्षेहि मा विश, दीर्घायुत्वाय शंतनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वाय, एहि वसो पुरोवसो प्रियो मे हृदोऽसि, अश्विनोस्त्वा बाहुभ्यां सध्यासम्' ( तैसं. ३।२।५ ) इति मन्त्रभागो ग्रहणे । ( वस्तुतस्तु 'भक्षेहि...हृदोऽसि' इतिभागः आह्रियमाणस्य प्रतीक्षणे विनियोक्तव्यः 'अश्विनो...सध्यासम्' इति ग्रहणे । वेदभाष्योदाहृतकल्पेन तथोक्तत्वात् ) । 'नृचक्षसं त्वा देव सोम सुचक्षा अवख्येषम्' ( तैसं. ३।२।५ ) इतिभागः अवेक्षणे । 'मन्द्राभिभूतिः केतुर्यज्ञानां वाग् जुषाणा सोमस्य तृप्यतु । वसुमद्गणस्य सोम देव ते मतिविदः प्रातःसवनस्य गायत्रछन्दसोऽग्निहुत इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो



भक्षयामि' ( वि. टिप्पणी ) इति भक्षणे । 'हिन्व मे गात्रा हरिवो गणान् मे मा वि तीतृषः । शिवो मे सप्तर्षीनुपतिष्ठस्व मा मेऽवाङ्नाभिमति गाः ॥' ( तैसं. ३।२।५ ) इति जरणे । वि. ३।२।९. * **भक्षानुवाके** ग्रहणादिवाक्यानां समाख्यानात् भक्षाङ्गत्वे प्राप्ते लिङ्गेन ग्रहणावेक्षणसम्यग्जरणेषु विनियुज्यन्ते । लिङ्गं समाख्याया बलवत् । **वा.** ३।२।९।२५. * भक्षानुवाके मन्द्रादिः भक्षयाम्यन्तः एक एव मन्त्रः । न तु तृप्यतु इत्येवमन्तः एकः, वसुमद्गणादिः अपरः इति । ज्योतिष्टोमे । **भा.** ३।२।१०।२७. * भक्षानुवाके ( ३।२।९।२५–२६ ) लिङ्गस्य वाक्यात् बलीयस्त्वं दर्शितम् । वा. ३।३।७।१४ पृ. ८३३, * भक्षानुवाके सूक्तवाकवदेव प्रातःसवनादिशब्दाः तत्सामानाधिकरण्यसंस्तुताश्च वसुमद्गणादयो गायत्रच्छन्दःप्रभृतयः इन्द्रपीतादयश्च क्रमेण यथासवनं निष्कृष्य प्रयोक्तव्याः । ३।२।९।२५.

* **भक्षानुवाकाधिकरणे** ( ३।२।९।२५–२६ ) भक्षानुवाकस्थानि 'एहि सवितः' इत्यादिवाक्यानि समाख्यानात् भक्षाङ्गत्वरूपाय प्रस्थितानि लिङ्गेन ग्रहणादिषु विनियुज्यन्ते इति स्थितम् । **सु.** १२३१.

* **भक्षानुवाकगतसध्यासमित्यादेः** लिङ्गात् ग्रहणादौ विनियोगे अवगततदेकवाक्यतापन्नशेषपदानां समाख्यया भक्षाङ्गत्वप्रसक्तौ वाक्यात् ग्रहणाद्यङ्गत्वम् । तथा आध्वर्यवादिसमाख्यानात् ज्योतिष्टोमादिप्रधानेषु तदर्थेष्वेव प्राप्नुवत्सु स्वर्गकामाद्येकवाक्यत्वात् अर्थिमात्रविषयत्वं विज्ञायते । वाक्यं समाख्याया बलवत् । **वा.** ३।३।७।१४ पृ. ८३७.

* **भक्षानुवाकसमाख्यायाः** वैदिकत्वाभावेऽपि अनादित्वेन पुरुषनिबन्धनदोषाभावः । **सु.** पृ. ११३७.

* **भक्षाभावः** प्रतिप्रस्थातुः ज्योतिष्टोमे अग्नीषोमीये पशौ । १०।७।८।२२–२३.

* **भक्षार्थे** कृष्णलेषु ये उपहारास्तेषु ब्रह्मेतरऋत्विग्भागानां बाधः, सर्वं तु ब्रह्मण एव देयम् । 'सर्वं ब्रह्मणे परिहरति' यत् परिहर्तव्यं तत् सर्वं ब्रह्मणे इति वचनव्यक्तिः । वि. १०।२।५. * भक्षार्थं चतुर्धाकरणं दर्शपूर्णमासयोः । ३।४।१७।४८–५१. * '**भक्षार्थो** वा द्रव्ये समत्वात्' ( ३।४।१७।५० ) इत्यादिषु यत् ऋत्विग्भिः साम्यादस्वामित्वं यजमानस्य तत्रतत्रोच्यते तत्सर्वं विरुध्यते । **वा.** ३।४।१४।४१ पृ. ९७९. *भक्षार्थो वा द्रव्ये समत्वात् । ३।४।१७।५० ॥ वाशब्दोक्तायां परिक्रयार्थत्वनिवृत्तौ सौत्रो हेतुः, न तु भक्षार्थतायाम् । तदुपपादनार्थः चतुर्धाकृते द्रव्ये यजमानस्य ऋत्विग्भिः साम्यात् इति सौत्रो हेतुः । भक्षार्थत्वसिद्धान्तप्रतिज्ञोपपादनार्थत्वेनापि आवृत्त्या परिक्रयार्थेऽपि द्रव्ये भक्षस्य समत्वात् इति सौत्रो हेतुर्योज्यः । **सु.** पृ. १५४४.

**भक्षाश्रवणाद्दानशब्दः परिक्रये । ३।४।१७।४८ ॥**

दर्शपूर्णमासयोः आग्नेयपुरोडाशस्य चतुर्धाकृतस्य 'इदं ब्रह्मणः, इदं होतुः, इदमध्वर्योः, इदमग्नीधः' इति व्यादिष्टस्य 'अग्नीधे प्रथमाय आदधाति' 'वेदेन ब्रह्मणे ब्रह्मभागं परिहरति' इति भागदानमुक्तम् । अयं ऋत्विजां विभागः किं परिक्रयाय उत भक्षणाय इति विचारे पूर्वपक्षमाह । आदधाति, परिहरति इति योऽयं दानशब्दः दानबोधकः शब्दः सः परिक्रये निमित्ते स्यात् । परिक्रयार्थः स्यात् । न तु भक्षार्थः, भक्षाश्रवणात् । नात्र भक्षणं श्रुतम् । तस्मात् ऋत्विजां परिक्रयार्थः आनमनार्थो विभाग इति पूर्वः पक्षः ।

**तत्संस्तवाच्च । ४९ ॥**

'एषा वै दर्शपूर्णमासयोर्दक्षिणा' इति तत्संस्तवात् तया दक्षिणया दक्षिणात्वेन विभागस्य संस्तवात् विभागं परिक्रयार्थं मन्यामहे । इति पूर्वपक्षे हेत्वन्तरम् ।

**भक्षार्थो वा द्रव्ये समत्वात् । ५० ॥**

वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । चतुर्धाकरणोत्तरं 'अग्नीधे प्रथमाय आदधाति' 'वेदेन ब्रह्मणे ब्रह्मभागं परिहरति' इति आदधाति परिहरति इति योऽयं दानशब्दः स न ऋत्विक्परिक्रयार्थः किन्तु भक्षार्थः । इदानीं ऋत्विग्यजमानयोः तस्मिन् द्रव्ये स्वत्वाभावस्य समत्वात् । देवतायै प्रदत्तस्य द्रव्यस्य ऋत्विग्यजमानयोः स्वत्वं नास्तीति समानम् । तस्मात् तेन ऋत्विक्परि-

ऋयं कर्तुं यजमानो न समर्थः । तस्मात् ऋत्विजां भक्षार्थमेव हविःशेषं यजमानो विभजति । तुलापुरुष-दानादौ त्यक्तस्य द्रव्यस्य परस्परं कलहनिवृत्त्यर्थं यथा यजमानकर्तृको विभागः तद्वत् ।

**व्यादेशाद्दानसंस्तुतिः । ५१ ॥**

यदुक्तं पूर्वपक्षिणा दक्षिणात्वेन विभागस्य संस्तुतेः दानशब्दः परिक्रये इति तत्राह सिद्धान्ती । ' अयं ते भागः ' इति विभज्य निर्देशः व्यादेशः । ' इदं ब्रह्मणः इदं होतुः ' इत्यस्मात् व्यादेशात् हेतोः ' यथैवादः सौम्येऽध्वरे आदेशं ऋत्विग्भ्यो दक्षिणा नीयन्ते तादृगेव तत् ' इति दानेन संस्तुतिः ज्ञातव्या । न ऋत्विक्परिक्रयार्थां । तस्मात् दानशब्दो भक्षार्थः इति सिद्धान्तः । **के.**

* **भक्षनिमित्तानां** वषट्कारादीनां संनिपाते समुच्चयः स्वीकार्यः । ३।५।१२।३३–३५.

* **भक्षपेटिका** ( ३।२।९–१८।२५–४४ ) । ज्योतिष्टोमे इन्द्रस्यापि देवतात्वावश्यंभावः । कथमन्यथा भक्षपेटिकायां अनैन्द्रेषु इन्द्रपीतशब्दस्य निवृत्तिपक्षस्य ऊहपक्षस्य चोत्थितिः । **सोम.** ९।१।१४.

* **भक्षभागानां** स्वस्वकाले ब्रह्मणा भक्षणम् । १०।२।६।२१.

* **भक्षमन्त्रः** ऐन्द्रेषु अनैन्द्रेषु च अनूहेन प्रयोज्यः, न तु अनैन्द्राणां अमन्त्रकं भक्षणम्, नापि यथादेवतमूहः । इन्द्रपीतपदं सवनविशेषणं ज्योतिष्टोमे । **भा.** ३।२।११।२८–२९,३९,४४. * भक्षमन्त्रः समन्त्रकेष्वेव भक्षेषु । **संकर्ष.** ३।१।९. **मीको.** पृ. २९९८ ' भक्षेषु समन्त्रकेष्वेव भक्षमन्त्रः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * **भक्षमन्त्राः** ' भक्षेहि मा विश दीर्घायुत्वाय ' इत्यादयः । १०।५।२६।८८. * भक्षमन्त्राः श्यामाक–व्रीहि–यवाग्रयणेषु ' अग्निः प्रथमः ' ' भद्रान्नः श्रेयः ' ' एतमु त्यम् ' इति । **संकर्ष.** ३।१।९. * **भक्षमन्त्रस्य** गायत्रान्यच्छन्दस्केऽपि विनियोगः । ३।२।१९।४१–४२. * **भक्षमन्त्रेषु** विद्यमानानां छन्दोनाम्नां व्यतिक्रमः सवनत्रये कर्तव्यः । प्रातःसवने जगतीछन्दस इति पठनीयम्, माध्यंदिने गायत्रच्छन्दस इति पठनीयम् । तृतीयसवने त्रिष्टुपछन्दसः इति वक्तव्यं व्यूढे द्वादशाहे । **भा.** १०।५।२६।८८. * न च ' भक्षेहि ' इति **भक्षमन्त्रेषु** तृप्तेः अनुनिष्पादितया अननुष्ठेयत्वेन तृप्तिप्रकाशकभागस्य तत्र विभज्यविनियोगाभावेऽपि अवेक्षणस्यानुष्ठेयत्वात् तत्प्रकाशकभागस्य अवेक्षणे विनियोगः इति तृतीयाध्यायोक्तिः विरुध्यते इति वाच्यम् । इन्द्रियसंप्रयोगरूपावेक्षणस्य तृप्त्यादिवत् अनुनिष्पादित्वाभावेन अनुष्ठेयतया तत्प्रकाशकभागस्य तस्मिन् विभज्य विनियोगः इत्येवंपरत्वात् । **अद्वैत.** ३।७।२७–२८.

* **भक्षवषट्कारौ** यजमानस्यैव ऋतुग्रहयागेषु यजमानस्य स्वयं याज्यापाठपक्षे ज्योतिष्टोमे । **भा.** ३।५।१८।४४–४६.

* **भक्षव्यापाराः** सोमे १ ग्रहणं २ अवेक्षणं ३ भक्षणं ४ जरणं इति चत्वारः । वि. ३।२।९.

* **भक्षसमुच्चयः** एकपात्रे । **भा.** ३।५।१२।३३–३५.

* **भक्षसिद्धये** कृष्णलेष्वपि पुरोडाशादिवत् चत्वार उपहाराः । तेषां ब्रह्मणे साहित्येनानुष्ठानम् । इडाकाले एव चत्वारोऽपि उपहारा देयाः । वि. १०।२।४.

* **भक्षणं** अनैन्द्रेषु अमन्त्रकम् ( कृत्वाचिन्ता ) । वि. ३।२।१७. * भक्षणं कर्तव्यं शतकृष्णलचरौ । **भा.** १०।२।३।१४–१७. * भक्षणं नाम सर्वान्तरङ्गः कर्तृसंस्कारः । **वा.** ३।४।१७।५०. * भक्षणं नियमादृष्टार्थम् । **वि.** ३।५।१२. * भक्षणं ( शेषस्य ) पुरुषसंस्कारार्थम् । ( भक्षणक्रियाप्रयोजनं द्रव्यसंस्कारः, भक्षणे कर्तृनियमप्रयोजनं तु कर्तृसंस्कारः इति विवेकः ) पुरुषाः संस्कृताः प्रचरिष्यन्तीति । भा. ६।४।३।५. * भक्षणं यद्यपि कृष्णलेषु न संभवति तथापि कृष्णललिप्तमाज्यं चुश्चुषाकारेण भक्षणीयम् । **वि.** १०।२।३. * भक्षणं शेषस्य ऋत्विग्भिरेव कार्यम् । ६।४।३।४–९. * **भक्षणेन** उत्साहो जन्यते । वि. ३।४।२१. * **भक्षणस्य** सोमसंस्कारत्वम् । वा. ३।५।११।३२. * **भक्षणे** अनुज्ञापनमेकपात्रिणामेव न्यूनाधिकत्वपरिहारार्थम् । वि. ३।५।१७, * भक्षणे चमसित्वं न कारणम्, अचमसिनोऽपि ग्रावस्तुतो भक्षणसद्भावात् । ३।५।९,



* भक्षणे सोमस्य, प्रश्नः ' उपह्वयस्व ' इति मन्त्रेण, उत्तरं च ' उपहूतः ' इति मन्त्रेण कार्यम् । ३।५।१६, * **भक्षणेषु** इडाभक्षार्थे प्राशित्रभक्षार्थे वा अवत्तस्य नाशे पुनर्नावदेयम् , किन्तु तत्तद्भक्षलोप एव । ६।४।२.

* **भक्षणनिमित्तानि** चत्वारि समाख्या, वाक्यम् , वषट्कारः, अभिषवसहितहोमश्च । तत्र ' प्रैतु होतुश्चमसः ' इत्यत्र समाख्या । हारियोजने ' अथैतस्य हारियोजनस्य सर्वे एव लिप्सन्ते ' इति वाक्यम् । ' वषट्कर्तुः प्रथमभक्षः ' इति वषट्कारः । ' हविर्धाने ग्रावभिरभिषुत्य, आहवनीये हुत्वा.........सदसि भक्षयन्ति ' इति अभिषवहोमौ । वि. ३।५।९–१२, * **भक्षणनिमित्तयोः** चमस–वषट्कारयोः संघः होतरि प्राप्तः । चमसाभिषवयोः संघः अध्वर्यौ प्राप्तः । तत्र विकल्पेन अन्यतरनिमित्तकं भक्षणं इति पूर्वपक्षः । चमसिषु चमसिसमाख्यानिमित्तकमेव भक्षणं इति द्वितीयः पक्षः । समुच्चयः निमित्तं इति सिद्धान्तः । नियमादृष्टार्थं भक्षणम् , तच्च अदृष्टं यथावचनं द्विविधम् । ३।५।१२.

* **भक्षणनिमित्तता** होमाभिषवयोः सहितयोरेव न प्रत्येकम् , योऽभिषवं होमं च करोति स भक्षयति । **वि.** ६।४।७.

* **भक्षणमन्त्रः** ' इन्द्रपीतस्य ' इतिपदघटित इति इन्द्रप्रदानशेषभक्षणे एव मन्त्रः मैत्रावरुणादिशेषभक्षणं तु अमन्त्रकमेवेति एकः पक्षः । ' इन्द्रपीतस्य ' इतिपदस्थाने ' मित्रावरुणपीतस्य ' इत्यूहः कार्यः इति इतरभक्षणमपि समन्त्रकं इति द्वितीयः पक्षः । इन्द्रपीतशब्दो बहुव्रीहिणा सवनपरः तथा च ऊहमकृत्वैव यथाश्रुतो मन्त्रः सर्वभक्षणेषु ग्राह्यः इति सिद्धान्तः । वि. ३।२।११. * **भक्षणमन्त्राणां** यथालिङ्गं ग्रहणादौ विनियोगः । ३।२।९।२५–२६. **भक्षणमन्त्रे** अनुवषट्कारदेवताया अनुपलक्षणं ज्योतिष्टोमे । ३।२।१६।३८. * भक्षणमन्त्रे मित्रावरुणादिभिः सह इन्द्रोऽपि उपलक्षणीयः ' इन्द्रमित्रावरुणपीतस्य' इति, न तु इन्द्रपदस्योहमकृत्वा 'मित्रावरुणपीतस्य ' इत्येतावन्मात्रमुच्चार्यम् । वि. ३।२।१२. ( कृत्वाचिन्तेयम् । वस्तुतस्तु ऊहमकृत्वैव ' इन्द्रपीतस्य ' इत्येव मन्त्रः पठनीयः । ) ।

* ' **भक्षयामि,** वाक् तर्प्स्यति ' एषा भविष्यन्ती ( लृट् ) क्रियायामुपपदभूतायां भवति । तत्र द्वयोः क्रिययोः अस्ति संबन्धः । **भा.** ३।२।१०।२७.

**भक्षितेऽपि लशुने न व्याधिशान्तिरिति न्यायः ।** यत्र कृतेऽपि चानिष्टे कर्मणि नाभीष्टप्राप्तिस्तत्रास्य प्रवृत्तिः । **साहस्री.** १६३. * ' भक्षितेऽपि लशुने न शान्तो व्याधिः ' इति न्यायेन अन्यथाख्यातिपरिजिहीर्षया भ्रमस्थले विशिष्टज्ञानमपलप्य, प्रवृत्तौ भेदाग्रहं कारणमाश्रयतः अनुमितावपि स एव कारणं स्यात् इति अन्यथाख्यातिरूपानुमितेरशक्यप्रतिक्षेपः । **परिमल.** १।१।१ पृ. २९. ब्रसू.

**भक्ष्यनियमेनाऽभक्ष्यप्रतिषेधो गम्यते इति न्यायः ।** यथा ' पञ्च पञ्चनखा भक्ष्याः ' इत्युक्तेर्गम्यते एतदन्येऽभक्ष्याः इति । **साहस्री.** ५९५.

* ' **भगो** वां विभजतु ' अयं मन्त्रः पुरोडाशविभागार्थः दर्शादौ वैकल्पिकः । **संकर्ष.** १।२।४.

**भद्रमभद्रं वा कृतमात्मनि प्रकल्पते इति न्यायः । साहस्री.** ७४०.

* ' भद्रम् ' इति मन्त्रोक्तं फलं अध्वर्युयजमानोभयगामि । वि. ३।८।१६. * ' **भद्रान्नः** श्रेयः ' इति व्रीह्याग्रयणे भक्षमन्त्रः । **संकर्ष.** ३।१।९.

* **भद्रत्वं** हस्तित्वावान्तरसामान्यम् । **सु.** पृ. ३४२.

**भर्छुन्यायः** । यथा— श्रूयते हि लौकिकी गाथा वेदान्तग्रन्थस्था । भर्छुनामा मन्त्री कस्यचिद्राज्ञो बभूव । स च राजाज्ञया दूरदेशस्थराजविरोधिदस्युजननिग्रहार्थं गतः । तान् हत्वाऽपि तद्देशमर्यादास्थापनार्थे तत्र चिरं विलम्बिते तस्मिन् राजसमीपे तच्छत्रुभूता राजपुरुषा दस्युकर्तृकं भर्छुवधं निखिलनगरे घोषयित्वा राज्ञेऽपि साभिज्ञानं निवेदितवन्तः । आगतानि भर्छुप्रेषितसमाचारपत्राणि च मार्ग एव विलोपयामासुः । श्रुत्वा च भर्छुवधं राज्ञा सचिवान्तरं कृतम् । ततः कियत्कालानन्तरं कृतकृत्यो भर्छुः स्वपुरमभ्यागच्छन् पथि राजकृतसचिवान्तरं श्रुत्वा वैराग्यमाश्रित्य उपशशाम,

अध्युवास च वने। तच्छत्रभूताः प्राप्तसचिवाधिकाराः सर्वे ह्येकमत्येन राज्ञे मृतभर्छुः प्राप्तपिशाचयोनिर्भस्मावगुण्ठितदेहविकरालस्वरूपो निर्जनवने विचरतीति विज्ञापयामासुः। ततः कदाचित् मदान्धो राजा मृगयानुगतो वने भस्मानुलिप्तशरीरभर्छुं दृष्ट्वा पिशाचतां गतोऽयमिति मेने, तथा प्रकृतेऽपि। **साहस्री.** ३९४.

* **भर्त्रा** भृत्येन सह परिक्रयार्थं पणितव्यम्। **भा.** १०।३।१२।५१.

* **भर्तृमित्रादिभिः** 'नित्यनिषिद्धयोः इष्टानिष्टं फलं नास्ति' इति बहुपसिद्धान्तपरिग्रहेण मीमांसा लोकायतीकृता। **श्लोवा. रत्नाकरः.** १।१।१।१०.

* '**भवत्पूर्वं** ब्राह्मणो भिक्षेत' इति सामान्यविधेरुपसंहारेण 'ब्राह्मणेषु चरेद् भैक्षम्' इत्यनेन व्यावर्तितस्य क्षत्रियादेरभ्यनुज्ञाविधिः 'चातुर्वर्ण्यं चरेद् भैक्षम्' इति। **बाल.** पृ.१७.

* **भवच्छब्दः** (भवन् इति) भवतीत्याख्यातार्थे वर्तमानः धात्वर्थविशिष्टकर्तृवाचित्वात् यौगिकः। **सु.** पृ. ३४८.

* **भवति** इति फलमात्रप्रतीतिः। **मणि.** पृ. १०२, * **भवतेः** प्रपूर्वकस्य प्रकाशजनकवृद्ध्यादिक्रिया अर्थः। पृ. १४१.

* '**भवत्यर्थस्य** यः कर्ता, (सः) करोतेः कर्म जायते' इति न्यायेन अष्टाकपालकर्तृकभवनाक्षिप्तायां भावनायां अष्टाकपालस्य कर्मत्वेन अन्वयनैयत्यम्। **कौ.** १।४।७।९.

* **भवतिक्रियायाः** कर्ता करोतेः कर्म संपद्यते। 'भवत्यर्थस्य कर्ता च करोतेः कर्म जायते'। **वा.** २।१।१।१ पृ. ३७७.

* **भविष्यकथनं** अनादिकालप्रवृत्तयुगस्वभावधर्माधर्मानुष्ठानफलविपाकवैचित्र्यज्ञानद्वारेण वेदमूलम्। **वा.** १।३।१।२.

* '**भविष्यता संयोगस्य तन्निमित्तत्वात्**' (४।१।१।२६)। कथं पुनर्ज्ञायते पुरोडाशार्थे कपाले तुषोपवपनमन्वासज्यते, नैतदुभयार्थमिति। उक्तोऽत्र न्यायः— 'भविष्यता संयोगस्य तन्निमित्तत्वात्' इति। **भा.** १२।४।६।१३.

* **भविष्यत्कालतायास्तु** भूतकालता न्याय्या। **टुप्.** १०।२।२७।६३.

* **भविष्यत्त्वं** वर्तमानप्रागभावप्रतियोग्युत्पत्तिकत्वम्। **मणि.** पृ. २८.

* **भविष्यत्–प्राप्तिप्रतिबन्धकत्वमेव** क्वचिद् बाधकत्वम्। यथा लिङ्गादीनां श्रुत्यादिनिष्ठं बाधकत्वम्। **के.**

* '**भविष्यति**' 'भविता' इत्यादौ उत्पत्तिर्धात्वर्थः। आख्यातार्थः तदनुकूलव्यापारः। तेन वर्तमानकालोत्तरकालीनकपालाधिकरणकोत्पत्त्यनुकूलव्यापारवान्, वर्तमानप्रागभावप्रतियोग्युत्पत्त्यनुकूलव्यापारवान् वा घटः इति बोधः, उत्पत्त्याश्रय इति वा इति शिरोमणिः। **मणि.** पृ. २८.

* **भविष्योत्तरादौ** होलाकाद्याचारा निबद्धाः। **सु.** पृ. १८९.

* **भव्यं** कर्म, भूतं द्रव्यम्। **भा.** ६।१।१।१ पृ. १३४८, * भव्यम्। भूतस्य च भव्यार्थता न्याय्या दृष्टार्थत्वात्, न तु भव्यस्य भूतार्थता। ६।१।१।१ पृ. १३४८, * **भव्यस्य** तु भूतार्थत्वे अदृष्टार्थता स्यात्। ११।२।१६।६६.

* **भव्यार्थास्ते** भूतार्थैः समुच्चारिताः। भूतस्य भव्यार्थतायां दृष्टार्थता, भव्यार्थस्य प्रयोजनवतः उत्पत्तिरर्थवती, सा च भूतेन क्रियते इति दृष्टोऽर्थः। भव्यस्य पुनर्भूतार्थतायां न किञ्चित् दृश्यते, कल्प्यते चादृष्टम्। **भा.** २।१।१।४.

* **भस्माङ्गाराध्यारोपबाधः** सौर्ये चरौ। १०।१।१८।५९.

* **भस्मसंयोगः** इष्टकाधर्मः। स च चित्रिण्यादीनां अप्रकरणे समाम्नातानामपि कर्तव्यः अग्न्यर्थत्वात्। **भा.** ३।६।१२।३५.

**भस्मीभूतस्य देहस्य पुनरागमनं कुतः इति न्यायः।** अयं न्यायः पुनरावृत्तिगमनाभावविवक्षायां प्रवर्तते। **साहस्री.** ८८२.



* **भागः** एक एव, न द्वौ मैत्रावरुणस्य ज्योतिष्टोमे अग्नीषोमीये पशौ। १०।७।७।२०–२१. * यमुद्दिश्य संकल्पो भवति स तस्य **भागः** इति प्रसिद्धिरेषा। **भा.** ३।३।१५।४४.

* **भागरूपः** परस्वस्वीकरणात्मकः अंशः यागस्य। **वा.** ३।३।१५।४४.

* **भागित्वात्।** उक्तस्तु न्यायो 'भागित्वात्' इति। (वैदिकी अपि भागिनी प्रवृत्तिः, साऽपि हि अपूर्वस्येतिकर्तव्यता)। **भा.** ७।४।२।७. * 'भागित्वात्' (७।३।१।२) भागवत्त्वात् योग्यत्वादित्यर्थः। **वृ.** ७।३।१।२.

* **भाग्यज्यानिः।** 'योऽग्नीनाधाय भाग्यज्यानिं पुत्रज्यानिं वा जीयेत स पुनरादधीत'। **भा.** १०।३।५।३०.

* '**भाग्ययशःश्रीकामानां** पुनरादधीत'। **भा.** १०।३।५।३०.

* **भाण्डवाहवणिङ्न्यायः।** भाण्डवाहकदोषेण वणिजो यदि द्रव्यं नश्येत् तत् भाण्डवाहको वहेत् (इत्यक्षरार्थः)। यः शिल्पी कंचन कर्मणि प्रवर्तयति तडागखनने देवस्य गृहकरणे (वा) 'अहं ते समापयिता प्रवर्तस्व' इति। पश्चाच्चापसरेत् तेन स्वामिनः क्षयव्ययायासाः सर्वे संवोढव्याः भाण्डवाहवणिङ्न्यायेन। **मेधातिथिः.** ८।२१५ झा.

**भामतीन्यायः।** यथा एकेनैव नाम्ना (?यथा एकैव) भामती स्त्री रूपयौवनादिसंपन्ना धवं सुखाकरोति, दुःखाकरोति च सपत्नीः, मोहयति च नरान्तरम्। तथा प्रकृतेऽपि। **साहस्री.** १७५.

* **भामाशब्देन** सत्यभामाया अभिधानम्। **सु.** पृ. ६९९.

* '**भारो** यो येन वोढव्यः स प्रागवगतो यथा। तथा कस्तस्य वोढेति शक्यं कर्तृनिरूपणम्॥' ('भारो यो येन वोढव्यः स प्रागातोलितो यदा। तदा......॥' इति वार्तिके पाठः। ३।१।१।२ पृ. ६५१)। यद्यपि लोके 'अयं वोढा अस्य को भारः' इति वोढृतोऽपि भारनिरूपणमस्ति, तथापि लोकेऽपि अयमेतावत् पूर्वमूढवान्, इदानीमपि एतावत् वोढुं शक्नोति इत्येवं वोढृत्वं निश्चित्य 'अयं वोढा, अस्य को भारः' इति वोढृतो भारनिरूपणं वाच्यम्। एतावत् वोढुं शक्तः इति निश्चयश्च वोढव्यस्य एतावत्तानिश्चयाधीनः। एवं च लोके 'अयं वोढा, अयमस्य वोढुर्भारः' इतीदं निरूपणं विविच्यमानं एतावत् वोढुं यत् द्रव्यसामान्यमवगतम्, तस्य द्रव्यस्य 'अयं भारः' इत्येवं विशेषनिरूपणमात्ररूपं पर्यवसितं इति लोकेऽपि नास्ति वोढृतो भारनिरूपणम्। **सोम.** ६।१।१ पृ. ४४४.

* **भारतं** वर्षम्। धर्माधर्मसाधनप्रदेशः जम्बूद्वीपस्य भारतवर्षम्। **सु.** पृ. १२८. * भारतं व्यासेन प्रोक्तं पौरुषेयम्। **वि.** १।१।८.

* **भारतादिवाक्ययोजना** अर्थवादाधिकरणे वार्तिके **मीको.** पृ. ६४७ इत्यत्र द्रष्टव्या।

* **भारुण्डानि** सामानि 'इमं स्तोमं' इत्यत्र गीतानि। **उत्सर्गमयूखः** पृ. ९ (घारपुरे).

* **भार्गवाः** पञ्चावत्तिनः इति गोभिलः। **वि.** १०।७।२० टिप्पणी.

* **भार्या।** एकैव भार्या कर्मार्था अपत्यार्था च। तस्याश्च विद्याग्रहणोत्तरकालता। 'अन्यतरापायेऽन्यां कुर्वीत', 'सोमपो न द्वितीयां जायामभ्यश्नुयते' इति द्वितीयामपि जायां दर्शयति। **भा.** ६।८।३।१७–१८. * सवर्णायां **स्वभार्यायां** उत्पादितः सवर्ण एव। असवर्णायां मूर्धावसिक्तादिः। परभार्यायां जीवत्पतिकायां कुण्डः, विधवायां गोलकः। **सु.** पृ.१०.

* **भार्यात्वम्।** परिणयनं विना भार्यात्वाभावेऽपि न परिणयनं प्रति भार्यात्वस्य सत्ता, किन्तु पतिमेव प्रति। **सु.** पृ. २५३.

* **भार्याद्वयमपि** एकस्य संभवति कारणान्तरे। **मीको.** पृ. २४२७ 'पत्नीद्वयं एकस्य०' इति बिन्दौ द्रष्टव्यम्।

* **भार्यासंयुक्तमाधानं** श्रूयते। **भा.** ६।८।२।१३.

* **भावः।** के पुनर्भावशब्दाः? यजति ददाति जुहोति इत्येवमादयः। **भा.** २।१।१।१ पृ. ३७४। सिद्धान्तवादी भवतेर्णिजन्तात् 'एरच्' इत्यच्प्रत्यये कृते भावनावाचिनं

भावशब्दं व्युत्पाद्य उदाहरति ‘ यजति ददाति ’ इति । **वा.** * **भावः न धात्वर्थ एव** इत्युक्तम् । **वा.** ३।४।४।१२ पृ. ९०३. * ‘ धात्वर्थः केवलः **शुद्धो भावः** इत्यभिधीयते ’ । **सु.** पृ. ५४७. * **भावे** क्रत्वर्थो विधिर्यथा, स्विष्टकृदर्थावत्तनाशे आज्यविधिः ‘ यां वै कां चिद् देवतामन्तरितः तस्या आवृश्च्यते आज्येनैता देवताः परिसंख्याय यजेत ’ इति । **बाल.** पृ. २०, * **भावे** पुरुषार्थो विधिर्यथा ‘ सत्रायागूर्य विश्वजिता यजेत ’ इति । पृ. २०.

* ‘ **भावान्तरमभावोऽन्यो** न कश्चिदनिरूपणात् ’ ( श्लोवा. निरालम्बने ११८ ) इत्यनेन न्यायेन भावनिरपेक्षः अभावः वक्तुमशक्यः । **सु.** पृ. ५१०.

* **भावाभावौ** एकत्र देशे समुच्चेतुमशक्यौ । **शा.** १।१।५ पृ. ७८.

**भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते । २।१।२।१॥**

यदैकस्मादपूर्वं तदा संदेहः किं भावशब्देभ्यः, उत द्रव्यगुणशब्देभ्यः इति । अत्रायं पूर्वपक्षिणोऽभिसंधिः । यद्यपि धात्वर्थनामार्थयोरनियमेनापि संबन्धात् अनेकादृष्टकल्पनापरिहारो भवत्येव, **तथापि** सकृदुच्चरितस्य श्येनादिवाक्यस्य कदा चिन्नामार्थप्राधान्येन धात्वर्थगुणभावबोधकत्वम्, कदा चित् धात्वर्थप्राधान्येन नामार्थगुणभावबोधकत्वम् । एतच्च वैरूप्यलक्षणवाक्यभेदप्रसङ्गात् न संभवति । तदुक्तम् ‘ **प्रधानं फलसंबन्धि तत्संबन्ध्यङ्गमिष्यते । प्रधानाङ्गत्वमेकस्य न चैकत्रावकल्पते ।** ’ इति ( वा. पृ. ३७४ ) । तस्मात् नियमेन एकस्यैकफलसंबन्धो वक्तव्यः । तत्र सिद्धस्य करणत्वयोग्यत्वात् नामार्थस्य सिद्धत्वात् करणवाचितृतीयाविभक्तियोगित्वाच्च धात्वर्थस्य साध्यत्वेन करणत्वायोग्यत्वात् करणवाचितृतीयाविभक्त्यभावाच्च नामार्थादेव फलम् । न च वाच्यं फलसाधनत्वादाश्रयसंबन्धविधाने फलसंबन्धविधाने च वाक्यभेद इति । यथा धात्वर्थस्यैव फलकरणत्वे मत्वर्थलक्षणया नामार्थविशिष्टस्यैव फलकरणत्वात् न वाक्यभेदः सिद्धान्ते, तथा नामार्थस्यापि मत्वर्थलक्षणया धात्वर्थविशिष्टस्यैव फलकरणत्वात् कुतो वाक्यभेद इति । **ननु** भवतु धात्वर्थस्य आश्रयत्वम्, तथापि यथा नामार्थस्य धात्वर्थनिष्पादकत्वमेव दृष्टोपकारकत्वम्, न तथा नामार्थे धात्वर्थस्य दृष्टोपकारकत्वमस्तीति भावार्थगतधात्वर्थजन्यादृष्टकल्पनायां प्रतिपदपूर्वपक्षवत् अत्रापि अदृष्टकल्पनागौरवमेवेति । **मैवम्** । गोदोहनस्येव प्रणयनेनासमर्थस्यापि धात्वर्थेन कारकत्वसंपादनरूपोपकारजननात् । नियमादृष्टं तु द्रव्यविशेषनियमात् सिद्धान्तेऽपि समानम् । **इत्येवं प्राप्ते, अभिधीयते ।** भवेदेवं यदि विधिश्रुतिः समानपदोपात्तस्य धात्वर्थस्य प्रथमं फलभावनायां करणत्वं न प्रतिपादयेत् । तथाहि, ‘ यजेत ’ इत्यत्र विध्यवरुद्धभावनाविषयत्वेन यागः प्रतीयते । भावनाविषयत्वं च भावनाकर्मत्वमेव । भावना च विध्यवरुद्धा पुरुषेप्सितमेव भाव्यं गृह्णाति । कर्मभूतमपि धात्वर्थं नेप्सितकर्मत्वेन अनुमन्यते, किन्तु अनीप्सितकर्मत्वेनैव । पुरुषसमीहितफलोद्देशेनैव प्रवृत्ता कृतिस्तदेवानीप्सितकर्मतया गृह्णाति, यदेतत्साधनभूतम्, ओदनोद्देशप्रवृत्तेव पाकं तत्साधनत्वम्, साधनान्तरानवरुद्धे साध्ये भवतु स्वकारणत्वमेवेति । तेन यजेतेत्यत्र विधिश्रुतितो धात्वर्थस्यैव फलभावनाकरणत्वावगमात् तृतीयान्तस्यापि नामार्थस्य धात्वर्थकरणत्वेनैवान्वय इति सिद्धम् । तदुक्तम् ‘ **आख्यातवर्ती धात्वर्थः सिद्धरूपः प्रतीयते । तस्मिन् फलवतीष्टे तु नाम्नो दृष्टार्थतेष्यते ॥** ’ इति ( वा. पृ. ३८८ ) । **नन्वेवं** सति ‘ गोदोहनेन पशुकामस्य प्रणयेत् ’ ‘ दध्नेन्द्रियकामस्य जुहुयात् ’ इत्यत्रापि समानन्यायेन धात्वर्थस्यैव फलकरणत्वान्न गुणफलसंबन्धः स्यादिति । **नैवम्** । विधिश्रुतिरेव धात्वर्थकरणत्वे प्रमाणमित्युक्तम् । विधिश्चाप्राप्तविषयः । यत्र च फलकरणस्यैव धात्वर्थस्य प्रकरणप्राप्तस्यानूद्यमानत्वान्न तस्य विधिव्यापारविषयत्वमिति गुणसंक्रान्तो विधिः प्राप्ताप्राप्तविवेकेन प्रकृतं धात्वर्थमाश्रित्य तत्र गुण एव फले संबन्धनीय इति । इह तु धात्वर्थस्यैव विधिविषयत्वादुक्तन्यायेन तस्यैव करणत्वमिति वैषम्यम् । **ननु नामार्थस्य** फलकरणत्वनिराकरणेन धात्वर्थस्य फलकरणत्वमिह साध्यम् । तच्च बादर्यधिकरणस्वर्गकामाधिकरणाभ्यामेव सिद्धम् ( ३।१।३,६।१।१ ) ।



तथाहि, बादर्यधिकरणसूत्रं ‘ कर्माण्यपि जैमिनिः फलार्थत्वात् ’ ( ३।१।३।४ ) इति । अनेन कर्मणामेव फलसाधनत्वमित्युक्तम् । तथा स्वर्गकामाधिकरणसूत्रं ‘ असाधकं तु तादर्थ्यात् ’ ( ६।१।१।२ ) इति । अनेनापि अफलार्थत्वे सति कर्मणः साधकपुरुषशून्यत्वप्रसङ्गादिति फलसाधनत्वमेव प्रतिपाद्यते । न च नामार्थस्य फलकरणत्वनिराकरणार्थमेवेदमधिकरणमिति द्रष्टव्यम् । तथाप्यर्थसिद्धत्वात् । यदा प्रतिपदाधिकरणसिद्धान्ते एकस्य फलसाधनत्वमिति निरूपितम्, बादरिस्वर्गकामाधिकरणाभ्यां च धात्वर्थस्य फलकरणत्वमिति प्रतिपादितम्, तदा अर्थादेव नामार्थस्य फलकरणत्वनिराकरणात् तदर्थमिदमधिकरणमुपपद्यते इति । **मैवम्** । नहि बादर्यधिकरणे धात्वर्थस्य फलकरणत्वं प्रतिपाद्यते, किन्तु एतदधिकरणसिद्धेनैव धात्वर्थस्य फलकरणत्वेन दृष्टोपकारदर्शननिबन्धनं द्रव्यगुणसंस्काराणामेव शेषत्वमिति बादरेर्मतं निराक्रियते । स्वर्गकामाधिकरणे चैतदधिकरणसिद्धमेव कर्मणः फलसाधनत्वमाश्रित्य फलकामस्य कर्मस्वधिकारः प्रतिपाद्यते इति न किञ्चिदनुपपन्नम् । सूत्रं तु वार्तिकेनैव व्याख्यातम् । तदुक्तम् ‘ **भावार्थाः कर्मशब्दा ये तेभ्योऽपूर्वक्रियागतिः । तैः कुर्याद्यजिना स्वर्गमेष ह्यर्थो विधीयते ॥** ’ इति ( वा. पृ. ३७५ ) । **तौता.**

**भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते । २।१।१।१॥**

विधायकवाक्यगतात् एकस्मादेव पदात् अपूर्वं गम्यते । तच्च किं भावशब्देभ्यः उत द्रव्यगुणशब्देभ्य इति विचारे सिद्धान्तमाह । भावशब्दाः । भावः भावना । भवतेर्णिजन्तात् ‘ एरच् ’ ( पा० ३।३।५६ ) इत्यच् प्रत्यये कृते भावशब्दो निष्पन्नः । भावस्य वाचकाः शब्दाः भावशब्दाः यजति ददाति जुहोतीत्येवमादयः । भावः अर्थः येषां ते भावार्थाः । ते च कर्मशब्दाः । प्रत्ययेन भावनाप्रतिपादकाः प्रकृत्या च कर्मवचनाः । कर्मवाचकाः शब्दाः कर्मशब्दाः । यागदानहोमाः कर्माणि । तेभ्यः भावार्थेभ्यः कर्मशब्देभ्यः क्रिया कार्यं अपूर्वं प्रतीयेत, न द्रव्यगुणशब्देभ्यः । हि यस्मात् एष धात्वर्थ एव फलभावनाकरणत्वेन विधीयते । तस्मात् यजेत इत्येवमादेः भावशब्दादेव एकस्मात् अपूर्वं प्रतीयते इति सिद्धान्तः ।

**सर्वेषां भावोऽर्थ इति चेत् । २ ॥**

आख्यातशब्दा एव अपूर्ववाचका इति सिद्धान्ते उक्ते पूर्वपक्षी शङ्कते । सर्वेषां द्रव्यगुणवाचकानामपि नामशब्दानां भावः अर्थः स्यात् । नामपदार्थस्यापि प्रत्ययसंबन्धात् भावनानुरञ्जननिमित्तं करणवाचित्वसंभवात् नामशब्दा अपि अपूर्वबोधकाः स्युः इति चेत् ।

**येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि, तस्मात् तेभ्यः पराऽऽकाङ्क्षाभूतत्वात् स्वे प्रयोगे । ३ ॥**

नामशब्देभ्योऽपि अपूर्वबोधः इति पूर्वपक्षोक्तं नामशब्दलक्षणकथनपूर्वकं निरस्यति । कानि नामानि नाम ? उच्यते । उत्पत्तौ ‘ सोमेन यजेत ’ इत्याद्युत्पत्तिवाक्ये येषां शब्दानां स्वे स्वीये प्रयोगे प्रयोगकाले उच्चारणकाले रूपोपलब्धिः रूपस्य वाच्यार्थस्य उपलब्धिः ज्ञानं संभवति । यत् सकृदुत्पन्नं कालान्तरं तिष्ठति, न क्रियेव उत्पन्नमात्रं विनश्यति, तानि नामानि द्रव्यगुणशब्दाः । यतः एषामर्थो न क्षणिकः ततः तेभ्यः तेषां पराकाङ्क्षा परस्य प्रधानस्य आकाङ्क्षा न विद्यते इत्युत्तरसूत्रादनुकृष्यते । किंवा परस्य अकाङ्क्षा काङ्क्षायाः अभावः । अथवा आकाङ्क्षा परा दूरे नास्तीत्यर्थः । इतराकाङ्क्षा कुतो नास्ति तेषाम् ? स्वे प्रयोगे प्रयोगकाले भूतत्वात् विद्यमानत्वात् । तस्मात् नामशब्दाः नापूर्ववाचकाः । अपूर्वं हि साध्यं भवति न सिद्धम् । नामानि तु सिद्धार्थकानि न साध्यार्थकानि ।

**येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्यातानि तस्मात्तेभ्यः प्रतीयेताऽऽश्रितत्वात् प्रयोगस्य । ४ ॥**

अत्र सूत्रे आख्यातलक्षणमुक्त्वा आख्यातशब्द एव अपूर्वबोधक इति सिद्धान्तमाह । तुशब्दः आख्यातपदस्य नामपदात् वैलक्षण्यं सूचयति । ‘ येषां शब्दानां उत्पत्तौ उच्चारणोत्पत्तौ स्वेऽर्थे प्रयोगो न विद्यते प्रयोगकाले येषामर्थो नोपलभ्यते इत्यर्थः ’ इति **भाष्यम्** । ‘ येषां शब्दानां स्वे स्वकीये अर्थे उत्पत्तौ उच्चारणदशायां प्रयोगः

अर्थः न विद्यते, प्रयोगकाले अर्थो न विद्यते इति यावत्' इति **कुतूहलम्** ।

अत्र 'येषां तूत्पत्तौ स्वे प्रयोगे न विद्यते' इति पाठं प्रकल्प्य अर्थं ब्रूमो वयम् । उत्पत्तौ 'सोमेन यजेत' इत्याद्युत्पत्तिवाक्ये 'येषां शब्दानां स्वे स्वीये प्रयोगे प्रयोगकाले उच्चारणकाले रूपोपलब्धिः इति पूर्वसूत्रादनुवर्तते रूपस्य वाच्यार्थस्य उपलब्धिः ज्ञानं न विद्यते'। यत् उत्पन्नमात्रं विनश्यति तानि तदर्थवाचकानि पदानि आख्यातानि आख्यातशब्दवाच्यानि स्युः । इत्यादि सर्वपक्षेषु समानम् । तस्मात् तेभ्यः आख्यातशब्देभ्यः यजेत इत्येवमादिभ्यः क्रिया कार्यं अपूर्वं प्रतीयेत प्रतीतं स्यात् । तानि अपूर्वबोधकानि पदानि ।

आश्रितत्वात् प्रयोगस्य इति अपूर्वबोधकत्वे युक्त्यन्तरमुच्यते । प्रयोगस्य प्रयुज्यमानधात्वर्थस्य भावनया सह एकं पदं आश्रितत्वात् । एकपदश्रुत्या धात्वर्थस्यैव भावनाकरणत्वात् तस्मादेव क्रिया अपूर्वं प्रतीयेत इत्यन्वयः ।

तस्मात् आख्यातपदमेव अपूर्वबोधकं न द्रव्यगुणपदं इति सिद्धान्तः । **के.**

* भावार्थाः । भवन्ति केचित् कर्मशब्दाः, न भावार्थाः यथा श्येनैकत्रिकादयः । केचिद् भावार्थाः, न कर्मशब्दाः यथा भवनं भावो भूतिरिति । **भा.** २।१।१।१.

**भावार्थाधिकरणम्** । आख्यातपदमेव अपूर्वबोधकम् ॥

**भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते । २।१।१।१॥**

**भाष्यम्**— यदा एकं ( अपूर्वमेकस्मादेव पदात् ) तदा संदेहः, किं भावशब्देभ्यः, उत द्रव्यगुणशब्देभ्यः इति । कः पुनर्भावः, के ते पुनः भावशब्दा इति । यजति, ददाति, जुहोति इत्येवमादयः । ननु यागदानहोमशब्दा एते न भावशब्दाः । नैतदेवम् । यागादिशब्दाश्चैते भावशब्दाश्च । यज्याद्यर्थश्चातोऽवगम्यते, भावयेदिति च । तथा यजेत यथा किञ्चिद्भवतीति । तेनैते भावशब्दाः । द्रव्यगुणशब्देभ्यो द्रव्यगुणप्रत्ययो न भावनायाः । अतस्ते न भावशब्दा इति । किं तावत्प्राप्तम् ? अविशेषेणेति । तत उच्यते । 'भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेत' यजेतेत्येवमादिभ्यः । कुतः ? भावार्थत्वादेव । ये आहुः किमपि भावयेदिति, ते स्वर्गकामपदसंबन्धात् स्वर्गं भावयेदिति ब्रूयुः । तस्मात्तेभ्यः क्रिया प्रतीयेत । फलस्य क्रिया करणं निष्पत्तिरिति । ते च यागदानहोमसंबद्धाः स्वर्गस्योत्पत्तिं वदन्ति । कुतः ? एष ह्यर्थो विधीयते । यथा यागादिना स्वर्गकामः केन भावयेत् स्वर्गम्, यागादिनेति । यस्य च शब्दस्यार्थेन फलं साध्यते, तेनापूर्वं कृत्वा नान्यथेति, ततोऽपूर्वं गम्यते । अतो यस्तस्य वाचकः शब्दस्ततोऽपूर्वं प्रतीयते इति । तेन भावशब्दा अपूर्वस्य चोदका इति ब्रूमः । न तु कश्चिच्छब्दः साक्षादपूर्वस्य वाचकोऽस्ति । भावार्थैः किमपि भावयितव्यम्, स्वर्गकामस्य च केनापि भाव्यतेति । तयोर्नष्टाश्वदग्धरथवत् संप्रयोगः । यजेतेत्येवमादयः साकाङ्क्षाः यजेत किं केन कथमिति, स्वर्गकाम इत्यनेन प्रयोजनेन निराकाङ्क्षाः । नैव द्रव्यगुणशब्दाः । तस्मात् भावार्थाः कर्मशब्दा अपूर्वं चोदयन्तीति ।

अथ कस्मादुभयं सूत्रितं भावार्थाः कर्मशब्दा इति । उच्यते । भवन्ति केचित् कर्मशब्दाः, न भावार्थाः यथा श्येनैकत्रिकादयः । केचिद् भावार्थाः, न कर्मशब्दाः यथा भवनं भावो भूतिरिति । किं पुनरिहोदाहरणम् ? 'श्येनेनाभिचरन् यजेत' 'चित्रया यजेत पशुकामः' इति । किं श्येनेनाभिचरन् उत यजेताभिचरन्निति । तथा चित्रया पशुकामः, उत पशुकामो यजेतेति स्थिते एतस्मिन्नधिकरणे गुणविधिः नामधेयमिति विचारो भविष्यति । तथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति दर्शः कालः पूर्णमास इति च । किं ताभ्यां स्वर्गकामः, उत स्वर्गकामो यजेतेति । दर्शपूर्णमासाभ्यामिति च, श्येनेनेति च, चित्रयेति च नैते भाववचनाः । न चैषामर्थिना कश्चित् संबन्धोऽस्ति, विविभक्तित्वात् । तस्मान्न द्रव्यगुणशब्दा अपूर्वस्य विधायका इति ।



वा— 'कः पुनर्भावः के वा भावशब्दाः' इति । यावन्तः फलसंबद्धेषु वाक्येषु आख्यातशब्दा यजतिजुहोतीत्येवमादयस्तेषु प्रत्ययार्थप्राधान्यात् कर्तरि च लकारोत्पत्तेर्यागादिविशिष्टकर्त्रभिधानम्, कथंचिद्वा विपर्ययात् कर्तृविशिष्टयागाद्यभिधानं मन्वानस्य प्रश्नः । सत्यामपि चैकपर्यनुयोगेन उभयपर्यनुयोगसिद्धौ, योऽयं यजनमिज्या याग इत्याद्युदाहृत्यैव भावार्थतां ब्रवीति, तन्नूनं केऽप्यलौकिका भावशब्दा अपीत्युभयप्रश्नः । सिद्धान्तवादी तु भवतेर्णिजन्तात् 'एरच्' ( पा० ३।३।५६ ) इत्यच्प्रत्यये कृते भावनावाचिनं भावशब्दं व्युत्पाद्य, आख्यातस्य चान्वयव्यतिरेकाभ्यां तत्परत्वं कर्त्रभिधानप्रतिषेधं चाभिप्रेत्योदाहरति– यजतिददातीति । परः पुनर्भवतेर्णिजन्तादन्येन नैषोऽर्थोऽभिधीयते, न चाऽऽख्यातप्रत्ययस्यात्र व्यापारः, धात्वन्तरार्थत्वात् । कामं तुल्यजातीयत्वेन धातवो ब्रूयुः, तेऽपि तु यागादिवचनत्वादसमर्था इति मत्वाऽऽह 'ननु यागदानहोमशब्दाः' इति । अत्रोच्यते '**यागदानाद्यनुस्यूतो भावनात्माऽवगम्यते । नित्यमाख्यातशब्देभ्यस्तस्माद्भावार्थतेष्यते ॥**' यावानेव हि अनन्यलभ्योऽर्थः शब्दात् गम्यते स सर्वः शब्दार्थः । सर्वत्र चाऽऽख्याते धात्वर्थश्च तदनुरक्ता च भावना विज्ञायते । तस्माद्भावार्थत्वव्यपदेशः । तद्व्यतिरिक्तास्तु द्रव्यगुणशब्दा विज्ञायन्ते एवेति न पृष्टाः । तत्र द्रव्यादिशब्दानां निष्पन्नार्थाभिधायिनां करणार्थत्वयोग्यत्वात् प्राप्नोति फलसंगतिः । सर्वत्र हि फलं साध्यत्वात् सिद्धरूपं साधनमपेक्षते न साध्यान्तरम्, नामार्थश्च सिद्धत्वात् तदपेक्षापूरणसमर्थो नाऽऽख्यातार्थः स्वयमेव तावत् साध्यत्वात् । तस्मात् द्रव्यादिभिः फलम् । इति प्राप्ते, सूत्रेणोत्तरं दीयते– '**भावार्थाः कर्मशब्दा ये तेभ्योऽपूर्वक्रियागतिः । तैः कुर्याद्यजिना स्वर्गमेष ह्यर्थो विधीयते ॥**' फलसंबन्धो हेत्वपूर्वप्रतिपत्तेः । संबन्धश्चाकाङ्क्षापूर्वकः । सा च भावशब्देभ्यः प्रसर्पन्ती दृश्यते, न द्रव्यगुणशब्देभ्यः । तस्मादाख्यातेभ्यः अपूर्वभावना गम्यते । तत्र च धात्वर्थस्य करणत्वप्रतिपत्तिः, प्रत्यासत्तेः । अतस्तेनैव फलकरणभूतेनान्यथाऽनुपपत्त्या अपूर्वं भाव्यते इत्यवधार्यते । कथं पुनर्यज्यादीन् पृथक्कृत्य केवलप्रत्ययवाच्य एव भावनार्थो लभ्यते भावयेदिति । कुतः ? '**अभिदध्युः स्वशक्त्या हि विधिमात्रं लिङादयः । ण्यन्तस्य भवतेरर्थः केनांशेनाभिधीयते ॥**' न च धात्वन्तरार्थे यज्यादयः प्रतिपादयन्ति, स्वार्थमात्रव्यापृतत्वात् । अतः शब्दरहितमेवेदमारोप्यते भावयेदिति । किंच '**शब्दान्तरस्य योऽप्यर्थः पर्यायैरभिधीयते । न स तेनैव सहितस्तस्मिन्नर्थे प्रयुज्यते ॥**' तद्यथा 'पिकमानय' इत्युक्ते यो नामार्थं न प्रतिपद्यते, तस्मै कोकिलशब्दमेव केवलं प्रयुङ्क्ते, न कोकिलः पिक इति । तथा अत्र यद्याख्यातस्य करोतिर्ण्यन्तो वा भवतिः पर्यायः, ततस्तदर्थकथने तन्मात्रमेव प्रयोक्तव्यम्, नाऽऽख्यातप्रत्ययोऽपि । न हि तदानीं विविच्य ज्ञायते केनांशेन क्रिया प्रत्याय्यते इति । अत्र तु भावयेत्कुर्यादिति वा पुनरपि लिङ् प्रयुज्यते एव । अतश्च योऽनेन यजतेः परेणार्थः प्रतिपादितः, असौ भावयतेरपि परेण तेनैवेत्यधिकावाप एव भावयतिः । तस्मादवैदिक इति । **अत्राभिधीयते ।** सर्वत्रैव तावत् '**सिद्धकर्तृक्रियावाचिन्याख्यातप्रत्यये सति । सामानाधिकरण्येन करोत्यर्थोऽवगम्यते ॥**' इह केभ्यश्चिद्धातुभ्यः परा तिङ्विभक्तिरुच्चार्यमाणा कर्त्रात्मलाभमात्रमेव व्यापारं प्रतिपादयति यथा अस्तिभवतिविद्यतिभ्यः । अपरेभ्यस्तु सिद्धे कर्तर्यन्यात्मलाभविषयव्यापारप्रतीतिः यथा यजति ददाति पचति गच्छतीति । द्रव्यमेव च विशिष्टशक्त्युपेतं प्रचलितात्मतत्त्वं विप्रकीर्णस्वभावं पूर्वापरीभूतं प्रथमावस्थातः प्रच्युतं परामवस्थामप्राप्तं व्यापारशब्दवाच्यं भवति । तत्र कदाचित् कर्तैव एवमवस्थः प्रतीयते, कदाचित् सिद्धे कर्तरि अन्यः । तद्यदा कर्तुरेवैषाऽवस्था भवति तदाऽसौ स्वयमेवान्यस्मादात्मलाभमपेक्षमाणः परनिष्पत्तौ अव्याप्रियमाणत्वान्न करोतिशब्दवाच्यतां प्रतिपद्यते । यदा तु लब्धात्मकोऽन्यत्र व्याप्रियते, तदा करोतीत्येवमपदिश्यते । तथा च किं करोति ? पठति गच्छतीति सामान्यविशेषरूपेण सामानाधिकरण्यप्रयोगो दृश्यते, न तु किं करोति ? भवत्यस्ति वेति प्रयुज्यते । तस्माल्लब्धात्मककर्तृव्यापारवचनानि करोत्यर्थवन्ति आख्यातानि । तत्र च क्रियमाणेन केन चिद्वश्यं भवितव्यम् । कुतः ? '**करोतिः क्रियमाणेन न कश्चित्**

**कर्मणा विना । भवत्यर्थस्य कर्ता च करोतेः कर्म जायते ॥** ' करोतेर्नित्यं सकर्मकत्वात् यावत् क्रियमाणं न लभ्यते, न तावदर्थः पर्यवस्यति । सर्वकारकाणां चावान्तर-क्रियासु कर्तृत्वं प्रतिपाद्यमानानां प्रधानक्रियासु कर्मादि-विभागो जायते । प्रतिक्रियं योग्यताभेदादवान्तरक्रिया-वैचित्र्यं भवति । तत्रान्वयव्यतिरेकाभ्यामिदमवगतम्, भवतिक्रियायाः कर्ता करोतेः कर्म संपद्यते इति । तथा-हि– ' **नित्यं न भवनं यस्य यस्य वा नित्यभूतता । न तस्य क्रियमाणत्वं खपुष्पाकाशयोरिव ॥** ' यः एव हि प्रवृत्तभवनः संभावितभवनो वाऽन्येन प्रयुज्यते, स एव क्रियमाणत्वेनावधार्यते नान्यः । तथाच न कश्चित् खपुष्पमाकाशं वा कुर्वन्नुपलभ्यते । यत्रापि ' पादौ कुरु ' इत्यादिषु निष्पन्नानां कर्मत्वप्रयोगो दृश्यते तत्रापि अनिष्पन्नसंस्कारादिविवक्षया पादादिशब्दप्रयोगादव्यभि-चारः । सत्यपि च करोतेरनेकार्थत्वे सर्वत्र गन्धनावक्षेपणादौ किञ्चिदनुत्पन्नोत्पादनसामान्यमवगम्यते । अथवा यदा अस्योत्पादनाभिधायित्वं तदैव विशिष्टाख्यातसामानाधि-करण्यं दृष्टमिति तद्गतस्योत्पाद्यमानमेव कर्म भवतीत्युपप-न्नम् । तेन भवतिक्रिया तावल्लब्धा । ततश्च '**करोत्यर्थस्य यः कर्ता भवितुः स प्रयोजकः । भविता तमपेक्ष्याथ प्रयोज्यत्वं प्रपद्यते ॥** ' भवतिकरोत्योः शक्तिभेदात् विक्लिदिपचत्योरिव नियतं प्रयोज्यप्रयोजकव्यापारवचन-त्वम् । तत्र च कदाचिदभिधीयमानकर्मशक्त्याऽऽ-क्षिप्तप्रयोज्यव्यापारो वा ( घटं करोतीत्यादौ द्वितीयाभि-हितया कर्माख्यया शक्त्या आक्षिप्तः प्रयोज्यस्य घटस्य, भवनाख्यो व्यापारो यस्य धातोरित्यर्थः । करोतिमात्रप्रयोगे कथं आक्षेप इत्याशङ्कायामाह––स्वयमेवेति । घटो भवतीत्यादौ प्रथमाभिहितकर्तृशक्त्याक्षिप्तः प्रयोज्यव्यापारो यस्मिन् इत्यर्थः । तथा च प्रयोज्यप्रयोजकव्यापारयोरन्य-तरवाचिधातुषु इतरप्रतीतिः आक्षेपेणैवेति न तस्मिन्नपि शब्दव्यापारकल्पनावसर इति भावः ) स्वयमेवाक्षिप्त-प्रयोज्यव्यापारो वा केवलं प्रयोजकव्यापार एव विवक्ष्यते ' कटं करोति, ओदनं पचति ' इति । कदाचिदाक्षिप्त-प्रयोजकव्यापारं प्रयोज्यव्यापारमात्रं ' घटो भवति, विक्लिद्यन्ति तण्डुलाः ' इति । कदाचिदुभौ भिन्नौ समु-च्चित्य प्रयोगः, ' करोति कटं देवदत्तः स च भवति ' । कदाचित् उपसर्जनीभूतप्रयोजकव्यापारः प्रयोज्यव्यापारः ' क्रियते देवदत्तेन ' इति ' स्वयमेव ' इति वा प्रयोगे । कदाचित्पुनः समानपदैकदेशोपात्तोपसर्जनीभूतप्रयोज्यक्रियः प्रयोजकव्यापारो विवक्ष्यते, तदा च करोतिपचत्योस्तादा-त्म्येन अशक्तेः अप्रयोगात् भूविक्लिद्योश्च केवलप्रयोज्य-क्रियानिष्ठत्वान्न साक्षात्प्रवर्तितुं शक्तिरस्तीति वाचकत्वेन द्योतकत्वेन वा णिच् अपरः प्रयुज्यते भावयति विक्लेदय-तीति च । तथा चाऽऽह '**प्रयोज्यकर्तृकैकान्तव्यापार-प्रतिपादकाः । ण्यन्ता एव प्रयुज्यन्ते तत्प्रयोजक-कर्मसु ॥**' न च तेषामण्यन्तानामशक्तिरित्यन्येषामशक्त्या भवितव्यम् । अन्येषां वा शक्तिः इत्येषामपि तद्वद्भवि-तव्यम् । कुतः ? ' **शक्तयः सर्वभावानां नानुयोज्याः स्वभावतः । तेन नाना वदन्त्यर्थान् प्रकृति-प्रत्ययादयः ॥** ' एवं करोत्यर्थद्वारेण सर्वाख्यातेषु भावयत्यर्थः सिद्धः । ' **तेन भूतिषु कर्तृत्वं प्रति-पन्नस्य वस्तुनः । प्रयोजकक्रियामाहुर्भावनां भाव-नाविदः ॥** ' यत्तूक्तं न विधित्वव्यतिरिक्तं लिङादयोऽर्थं वदन्तीति । तदयुक्तम् । कुतः ? ' **अभिधाभावना-माहुरन्यामेव लिङादयः । अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते ॥** ' यदा हि सर्वाख्यातानु-वर्तिनी करोतिधातुवाच्या पुरुषव्यापाररूपा भावना अवगता भवति, तदा तद्विशेषाः सामान्याख्यातव्यति-रिक्तशब्दविशेषवाच्या विधिप्रतिषेधभूतभविष्यद्वर्तमाना-दयः प्रतीयन्ते । तथा च सर्वत्र सामान्यतः करोत्यर्थो-ऽवगम्यते ' किं करोति ? पचति ' ' किमकार्षीत् ? अपाक्षीत् ' ' किं करिष्यति ? पक्ष्यति ' ' किं कुर्यात् ? पचेत् ' ' किं न कुर्यात् ? न पचेत् ' इति । तत्रार्थात्मि-कायां भावनायां लिङादिशब्दानां यः पुरुषं प्रति प्रयोजक-व्यापारः सा द्वितीया शब्दधर्मः अभिधात्मिका भावना विधिरित्युच्यते । विशेषतश्चेयमर्थवादाधिकरणे वर्णिता । यत्तु पर्यायस्थित्यतिलङ्घनं प्रत्ययापरित्यागादभिहितम् । तत्रोच्यते ' **केवलस्याप्रयोगित्वात् कर्तृसंख्यादिसंग्र-हात् । रूपाविनाशसिद्धेश्च प्रत्ययोऽपि प्रयुज्यते ॥** ' यदि हि केवलः करोतिर्भावयतिर्वा प्रयोगार्हौ स्याताम्,



ततः कोकिलशब्दप्रयोगे पिकशब्दवत् प्रत्ययो न प्रयुज्येत, न तु केवलायाः प्रकृतेः प्रयोगः, अपभ्रंशत्वप्रसङ्गात् । तेन यस्मिन् कस्मिंश्चित् प्रत्यये प्रयोक्तव्ये यस्यैवार्थः कथ्यते स एवानुवादभूतः प्रकृत्यनुग्रहार्थं प्रयुज्यते, नान्यो-ऽभ्यधिकार्थान्तरापत्तिप्रसङ्गात् । ननु च, ' इक्श्तिपौ धातुनिर्देशे ' विहितौ अतस्तद्युक्तौ करोतिभावयती प्रयु-ज्येयाताम् । नैतदस्ति । तथा सति शब्दपदार्थकत्वान्नैव ताभ्यामाख्यातार्थः कथ्येत । यत्तु क्वचिदर्थेऽपि धातु-मिक्श्तिवन्तं प्रयुञ्जते यजिः, यजतिः, इति च, तत् शब्दे अभिहिते लक्षणया अर्थप्रतीतिरित्यवगन्तव्यम् । न चेह किञ्चिल्लक्षणाश्रयणे प्रयोजनमस्ति, येनावाचकः प्रयुज्येत । तत्रान्यदेव अनिष्टमापद्येत, कृञ्भुवौ धातू तिङा अभि-धीयेते इति । तस्मादर्थपरत्वसिद्ध्यर्थमाख्यातप्रत्ययसहिता-वेव प्रयुज्येते । यदि च भावनैवैका प्रत्ययार्थः स्यात् करोतिभावयती वा समस्तप्रत्ययार्थोपादानसमर्थौ भवेताम्, ततः केवलप्रयोगोऽप्याशङ्क्येत, न तु तदुभयमप्यस्तीति करोतिभावयतिभ्यां कथितेऽपि भावनार्थे कर्तृसंख्यादि-प्रत्यायनार्थं पुनः प्रत्ययः उच्चार्यते । यस्तु तत्र भावना-भिधानांशः स प्राप्तत्वादनूद्यते, अन्यथा हि भावनै-वैका प्रत्ययार्थः, करोतिभावयती वा कर्तृसंख्यादीनामपि अभिधायकाविति भ्रान्तिः स्यात् । नित्यं च पूर्वापरी-भूता भावना आख्यातेनोच्यते । तत्र यदि प्रत्ययान्तरं प्रयुज्यते ततः करोतिभावयतिभ्यां द्रव्यवदुपसंहृतरूपोच्य-माना नैवाऽऽख्यातसदृशी कथ्येत । तस्मादवश्यं तदपि प्रयोक्तव्यमिति । किंच– ' **भावना गम्यमाना च धातु-प्रत्ययसंनिधौ । कस्य वाच्येति विस्पष्टं न कदाचित् प्रतीयते ॥** ' यदि ह्येकान्तेन अस्याः प्रत्ययार्थत्वमव-धार्येत, ततः करोतिभावयतिभ्यां प्रत्ययपौनरुक्त्याशङ्का स्यात्, न तु तदस्ति, उभयसंनिधौ गम्यमानत्वात् । केवलप्रकृतिप्रत्ययप्रयोगाभावाद्धि न विवेको विज्ञायते । शक्यते हि वक्तु धातुसहितेन प्रत्ययेनोच्यते इति, अथवा प्रत्ययानुगृहीतेन धातुना, अथवोभाभ्याम् । न च शक्तिकल्पनायां विशेषः, सर्वथा अर्थापत्तिसाम्यात् । न च विवेकज्ञानप्रयोजनमस्ति । स्यादेतत्, कृदन्ताद्धातोर-प्रतीतेः तिङ् व्यभिचारिण्येव नेति । तदयुक्तम् । अस्ति-विद्यतिभवतिपरेषु प्रत्ययेष्वप्यदर्शनात् । न वा कृदन्तेष्व-प्यत्यन्तं भावना नास्ति, किञ्चिदपकृष्यमाणरूपप्रतीतेः । कृत्येषु तावत् भोक्तव्यम्, यष्टव्यमिति किञ्चिन्न्यूना आख्याताद्गम्यते । तत्रापि कर्मोत्पन्नेषु द्रव्यप्राधान्यात् ' ब्राह्मणो न हन्तव्यः ' इति भावोत्पन्नेभ्यो न्यूनतरा । नहि तत्र प्रयोजकव्यापारप्राधान्यम्, एकत्र धात्वर्थप्राधान्या-दपरत्र स्वव्यापारविशिष्टप्रयोज्यपरत्वात् । एतेन भाव-कर्मोत्पन्नलकारास्तिङोऽपि व्याख्याताः । तेष्वपि हि प्रयोजकव्यापारगुणत्वप्रतीतिरविशिष्टा । अतो न तिङन्तानां तुल्यकल्पत्वम् । तथा ' अव्ययकृतो भावे भवन्ति ' इति स्मरणाविशेषेऽपि स्वसंवेद्यमीषन्न्यूनभावनाविज्ञानम् । ' अग्निक्रामं जुहोति ' ' दर्भतरुणकेनोपघातं जुहोति ' ' अभिषुत्य हुत्वा भक्षयन्ति ' ' पुरा वाचः प्रवदितोः ' इति सर्वत्र श्रुत्यैव भावनान्तरसापेक्षा भावना अवगम्यते । पक्वः पक्ववानित्यपि निर्वृत्तरूपभावनोपसर्जनद्रव्यप्रतीतिः प्रत्यक्षा । एवं पाचकादिष्वपि द्रष्टव्यम् । तथा च सर्वत्र कारकापेक्षा दृश्यते । अन्यथा हि रूढितद्धितसमासेष्विव इयं न स्यात् । न च निर्व्यापाराणामेते व्यपदेशा भवन्ति । न चास्ति स व्यापारः, यत्र किञ्चिदसन्न जन्यते । ततश्च सिद्धः करोतिभावयत्योरर्थः । शक्यते च सर्वत्र सामाना-धिकरण्यमपि दर्शयितुं विनाऽपि पूर्वापरीभूतत्वेन । तद्यथा ' किं कर्तव्यम् ? पक्तव्यम् ' ' कथंकारं जुहोति ? अग्निक्रामम् ' ' किं कृत्वा जुहोति ? अभिषुत्य ' ' किं कृतवान् ? पक्ववान् ' ' किं कृतम् ? पक्वम् ' ' किंक्रियो देवदत्तः ? पक्ता ' ' केयं क्रिया ? पाकः ' इति । न च करोतिसामानाधिकरण्यातिरिक्तं आख्यातेष्वपि भावना-प्रमाणं विद्यते । तस्माद्धातवोऽपि भावनां न मुञ्चन्ति । तथा चाऽऽहुः ' करोतिरर्थेष्विव सर्वधातून् ' इति । यत्तु अस्याः प्राधान्यम्, तत् कामं तिङाऽभिधेयं द्योत्यं वा अन्वयव्यतिरेकाभ्यामस्तु, न स्वरूपम् । नन्वेवमपि यागेनेति धात्वर्थे निष्कृष्टे तेनैव भावनाऽप्युपात्तेति भाव-येदिति पुनः प्रयोगो न प्राप्नोति । नैष दोषः । तथाहि, द्व्यर्थस्य धातोर्भेदेनार्थे कथ्यमाने यागेनेति विशेषरूपं करणात्मना निष्कृष्टम् । इतरत्तु भावनात्मकं सामान्यरूपः शब्दान्तरेण भावयेदित्यनेन कथ्यते । अथवा केचित्

करणांशकर्तृसंख्यादयः प्रकृतिप्रत्यययोर्भेदेन वाच्याः । भावना तु समुदायाव्यभिचारात् समुदितयोरेवार्थ इत्यपि शक्यं वक्तुम् । तथा च सूत्रकारभाष्यकाराभ्यां 'भावार्थाः कर्मशब्दाः' इति सामानाधिकरण्यमेव आश्रितं न भावार्थत्वेन प्रत्ययाः कथिताः । शास्त्रे तु सर्वत्र प्रत्ययार्थो भावनेति व्यवहारः । तत्रायमभिप्रायः— '**प्रत्ययार्थं सह ब्रूतः प्रकृतिप्रत्ययौ सदा । प्राधान्याद्भावना तेन प्रत्ययार्थोऽवधार्यते ॥**' यद्यपि अन्यत् विवेककारणं नास्ति, तथापि प्राधान्यं प्रत्ययार्थधर्मं दृष्ट्वा नूनमियं प्रत्ययार्थ इत्यवगम्यते । '**तथा क्रमवतोर्नित्यं प्रकृतिप्रत्ययांशयोः । प्रत्ययश्रुतिवेलायां भावनात्माऽवगम्यते ॥**' न केवलमेतावेव अन्वयव्यतिरेकौ यौ परस्परपरित्यागेन लक्ष्येते, तस्मिन्नेव हि पदे 'तदागमे हि तद्दृश्यते' इत्यनेन न्यायेन विवेकः अवधार्यते । यत्तु अस्त्यादिपरः प्रत्ययोऽपि भावनां जहातीति, तुल्यं धातुसमुदायपक्षयोरप्येतत् । सर्वथा यत्र प्रतीयते, तत्र तावत् प्रत्ययार्थत्वं निश्चीयते । अन्यत्र त्वयं विचार एव नास्ति । क्वचित् व्यभिचारस्य चोत्तरमुक्तं तद्भूताधिकरणे ( १।१।७ ) । अथवा नैवात्रापि व्यभिचारः । कुतः ? '**अस्त्यादावपि कर्त्रंशे भाव्येऽस्त्येव हि भावना । अन्यत्राशेषभावात्तु न तथा सा प्रकाशते ॥**' यद्यपि कर्तुरनिष्पन्नत्वात् व्यतिरिक्तभावयितव्याभावात् अस्त्यादिषु प्रयोजकव्यापारो नातीव लक्ष्यते, तथापि प्रत्ययसामर्थ्यात् भावयतीत्यवगम्यते । किमित्यपेक्षिते चानिष्पन्ने कर्तरि, अन्यत् किञ्चित् इत्यकल्पनात् आत्मानमित्येव संबध्यते, केन भावनेन कथं अवयवजननादिप्रकारेणेति । त्रयोऽपि तत्र भावनांशा भवनेनैव पूर्यन्ते, व्यापारान्तरासंभवात् । तत्र केचिदवयवाः भावनव्यापृताः प्रयुज्यन्ते, केचित् सिद्धभवनाः प्रयोजकाः । सिद्धभवनासिद्धभवनवर्ति च सामान्यमुभयसंपर्कात् भावनेत्युच्यते । एतेन जायते निष्पद्यते सिध्यतीत्यादीनि व्याख्यातानि । अस्तिः पुनर्जनिसमानार्थात् भवतेरुपरितनीमवस्थामभिलपन् सत्तया आत्मभवनं भवत् भावयति इत्येवमाख्यातप्रत्ययं लभते । तत्रापि तु कालकृतभेदपूर्वोत्तरसामान्यसत्तारूपेण पूर्ववदेव प्रयोज्यप्रयोजकव्यापारकल्पनाऽनुसर्तव्या । सत्यामपि त्वेवमादिषु भावनायां निष्पन्नचेतनकर्तृविषयत्वात् विधिप्रतिषेधयोरसंभवः । स्यादेतत् । दृष्टो विधिरपि 'तस्मात्प्रायणीयस्याह्न ऋत्विजा भवितव्यम्' 'रथंतरं भवति' 'अत्राध्वर्युः स्यात्' 'इहोक्थ्यानि स्युः' इति । सत्यं दृश्यते, न त्विह पूर्वेण तुल्यो भवत्यर्थः । सिद्धो हि पुरुषः कर्मसंबन्धनिमित्तमृत्विक्त्वं भवत् अन्यैरेव वाक्कायमनोव्यापारैर्भावयेदित्युच्यते । तथा रथंतरादिषु सत्यपि श्रुत्या भवनविधिसंबन्धे तत्र संभवादनुमीयमाना भावनैव विधीयते । यत्र तु 'इहामुको भवेत्' इति प्रयोगस्तत्र भवतेस्तिष्ठत्यर्थवाचित्वात् संभवत्येव व्यतिरिक्तं भावयितव्यमित्येवं विज्ञायते ; स्थानेनान्यत्किञ्चिद्भावयेदिति । तेन भूतभविष्यद्वर्तमानापदेशमात्रेष्वेव अपारमार्थिकं भवितृव्यापारस्य भावनात्वम्, न विध्यादिषु । भूतादिकथनेऽपि यदा समस्तं व्यापारं धातुरेवोपादत्ते नावयवकालादिकृतभेदाश्रयणम्, तदा विस्पष्टात् विरोधात् धात्वर्थमात्रं कर्तृसंख्यादयश्च आख्यातपदार्थत्वेनावधार्यन्ते, न भावना । न च भावनाव्यभिचारेण दोष इत्युक्तम् । यत्तु कृदन्तेष्वपि धातवो भावनां न व्यभिचरन्तीति । सत्यं धात्वर्था न व्यभिचरन्ति, तैरेव तु गम्यमानत्वादनभिधेयत्वमपि शक्यं वक्तुम् । तथाहि '**धात्वर्थकारकैरेव गुणभतोऽवगम्यते । भावनात्मा कृदन्तेपु तस्मान्नैवाभिधीयते ॥**' यथैव भावप्रधानत्वादाख्याते तत्संबन्धादेव गुणभूतकारकप्रतीतिसिद्धेर्न कर्तृकर्मणोरभिधानं भविष्यति, एवं कर्त्राद्यभिधानादेव तदन्यथाऽनुपपत्त्या भावनासिद्धेरनभिधानम्, गम्यमानापेक्षयैव च करोतिसामानाधिकरण्यम्, यथा पचतिशब्दस्य देवदत्तशब्देन, अतथाभूतयैव च कारकसंबन्धोऽप्युपपत्स्यते । अथवा भावनोपसर्जनधात्वर्थनिष्पत्त्यर्थत्वात् कारकाणां धात्वर्थेनैव संबन्धसिद्धिः । स एव हि तानि स्वसिद्ध्यर्थमपेक्षते, भावनाऽपि च तथाभूतान्येव तानि गृह्णातीत्यविरुद्धः संबन्धः । कृत्यानां तु प्रैषवाचित्वात् सत्यपि भावनानभिधाने तावत् स्वार्थपर्यवसानं नास्ति यावदंशत्रयपरिपूर्णा भावना न लब्धा । कुतः ? '**स्वव्यापारे हि पुरुषः कर्तृत्वेन नियुज्यते । प्रैपैस्तस्य स्वरूपं च**



**भावनांऽशत्रयात्मिका ॥**' नहि पुरुषः स्वव्यापारं मुक्त्वा अन्यदनुष्ठातुं शक्तः, प्रैषाश्चैनमनुष्ठापयन्ति । ते यदि तद्व्यापारं कथञ्चिन्नोपादद्युर्न नियोक्तुं शक्नुयुरित्येवमपि भावनाऽऽक्षेपसिद्धिः । यावांश्च ब्राह्मणगतः कश्चित् प्रैषः, स सर्वः प्राप्त्यभावाद्विधिरेव भवतीति विनाऽपि स्मरणेन कृत्यानां विधायकत्वम् । अयमेव च विधिप्रैषयोर्विशेषः । '**प्रवर्तनस्मृतिः प्राप्ते प्रैष इत्यभिधीयते । अप्राप्तप्रैषणं सर्वं विधित्वं प्रतिपद्यते ॥**' तस्मात् प्रत्ययार्थो भावना इत्युपपन्नम् । ननु च यदि प्रयोजकव्यापारो भावना इष्यते, ततः पचौ अधिश्रयणादीनि, यजौ च मानसः संकल्पः, इत्यादीनां भावनात्वम्, ते एव धात्वर्थाः, इति धातुवाच्यैव भावना स्यात् । ( संयोगमात्रं वा अधिश्रयणशब्दवाच्यं स्यात् स्थालीचुल्लीसंयोगो वा ? तत्राद्ये कल्पे सर्वधातूनां पर्यायत्वम् । द्वितीये स्थालीचुल्लयोरपि अभिधानापत्तेः गौरवं दोषः । संयोगवाचित्वे च अधिश्रयतेः उदासीनेऽपि पक्तरि संयोगसद्भावात् 'अधिश्रयणं वर्तते' इति प्रत्ययापत्तिः । क्रियमाणसंयोगवाचित्वे वा प्रत्ययवाच्यायाः प्रक्रियायाः प्रागप्रतीतेर्विशेषणत्वायोगात् धातुनैव क्रियाविशिष्टसंयोगाभिधानापत्तेः दुर्वारं प्रयोजकक्रियाधातुवाच्यत्वम् । अनेनैव न्यायेन गम्यादेः संयोगविभागवाचित्वं निरसनीयम् । संयोगवियोगविशेषलाभाय च संयोगिनोर्विभागिनोश्च अभिधानापत्तेरतिगौरवम् । यज्यादेश्च संयोगविभागवाचित्वायोगात् संयोगविभागात्मकधात्वर्थवचनमव्यापकं स्यात् । वियोगात्मकस्वस्वामिविभागयज्यर्थाभ्युपगमेऽपि जानात्यादौ कथंचित् संयोगविभागानिरूपणात् अव्याप्त्यपरिहारः । 'भवतिकरोत्योः शक्तिभेदात् विक्लिदिपचत्योरिव नियतं प्रयोज्यप्रयोजकव्यापारवचनत्वम्' इति वार्तिकात् ( पृ. २७७ ) व्यापारस्यैव धात्वर्थता अवसीयते, धातुमात्रनिर्देशाच्च न प्रत्ययविषयतया तत् वार्तिकं व्याख्यातुं शक्यम् । प्रत्ययस्य च ण्यन्तत्वाभावात् प्रयोज्यकर्तृकैकान्तव्यापारप्रतिपादका ण्यन्ता एव इति न युज्येत । संयोगविभागात्मकत्वे च धात्वर्थस्य अव्यापाररूपत्वात् गोदोहनादिभिः आश्रयत्वेन ग्रहणं न युज्यते । धात्वर्थावच्छिन्नाया भावनाया एवाश्रयत्वाभ्युपगमे गुणफलसंबन्धविधौ वाक्याभेदभयेन प्रकृताश्रयापेक्षणात् भावनाभेदानुपपत्तेः गुणकामेषु आश्रयैः सह सामानासामानविध्यविचारः संस्थाऽधिकरणे ( २।६।१६ ) करिष्यमाणो न युज्यते । व्यापाररूपत्वेऽपि करोत्यर्थक्रियारूपत्वाभावात् क्रियारूपायां भावनायां कारकत्वाविरोधः । '**व्यापाररूपधात्वर्थादतो भेदमपश्यताम् । संयोगरूपधात्वर्थवर्णनं भेदतृष्णया ॥** व्यापाररूपधात्वर्थात् साऽन्या स्पन्दात्मिका हि किम् । प्रयत्नात्मा, द्विरूपा वा ? सर्वथाऽपि न युज्यते ॥ प्रयत्नो भावना चेत् स्यान्न, रथो गच्छतीति हि । प्रयोगः स्यात्, प्रयत्नो हि चेतनेष्वेव संभवेत् ॥ स्पन्दस्य भावनात्वे तु यजेतेति न चेतने ( संभवेत् ) । द्विः साधारणरूपत्वे शब्दो वक्तीत्यसंभवः ॥ न शब्दे स्पन्दयत्नौ हि विभुत्वाच्चेतनत्वतः । एवं च सति धात्वर्थसामान्यं भावना पतेत् ॥ अथानयोर्हेतुभूतमन्यत्, तन्नोपलभ्यते । अभूतोत्पादनं चान्यद् धात्वर्थान्नैव दृश्यते ॥ अन्योत्पादानुकूलत्वे भावनैकं च तद् यदा । तदा न भावनाभेदो भवेद् धात्वर्थभेदतः ॥ प्रतिधात्वर्थमन्यत्वं न च तस्यावधार्यते । धात्वर्थभेदमात्रेण फलभेदप्रसिद्धितः ॥ अथ धर्मेण येन स्याद् धात्वर्थः फलसाधनम् । स धर्मो भावना,-ऽन्यश्च प्रतिधात्वर्थमिष्यते ॥ तस्य धात्वर्थधर्मत्वे पुंधर्मत्वं विरुध्यते । पुंधर्मस्तु प्रयत्नः स्यात्, स च पूर्वं निराकृतः ॥ किंच धात्वर्थनिर्वृत्तिपर्यन्तत्वात् स भावना । कथं धात्वर्थसाध्या हि सेष्यते फलसाधनम् ॥ अथ धात्वर्थजन्योऽपि शक्त्यात्मा पुरुषाश्रितः । प्रतिधात्वर्थमन्योऽसौ नापूर्वादतिरिच्यते ॥ तस्याव्यापाररूपत्वाद् भावनात्वं न चेष्यते । व्यापारत्वेऽपि करणव्यापारत्वान्न भावना ॥ तत्कर्तृव्यापृतिः सा हि प्रत्ययार्थश्च न त्वदः ॥**' अतो धात्वर्थातिरिक्तभावनाऽनुपपत्तेः प्रत्ययार्थता न युक्तेति तात्पर्यार्थः । सुधा. पृ. ५७४–५७६ ).

( परिहरति— ) नैष दोषः '**धात्वर्थव्यतिरेकेण यद्यप्येपा न लभ्यते । तथापि सर्वसामान्यरूपेणान्याऽवगम्यते ॥**' ( विवृतं चैतन्मण्डनेन [ भावनाविवेकः पृ. ८० ] 'कथ्यमानाद् रूपभेदाद् द्विधा धात्वर्थसंगतिः । ( 'कथ्यमानाद् रूपभेदाद् विना

धात्वन्तराद् गतेः ' इति भावनाविवेके पाठः ) अन्योत्पादानुकूलात्मा भावना किं प्रदुष्यति ॥ ' इति । शा. २।१।१ पृ. १०१ । अत्र **सोम**–धात्वर्थो धातुना यागत्वादिविशेषरूपेण अभिधीयते, आख्यातेन तु अन्योत्पादानुकूलात्मना सामान्यरूपेणाभिधीयते । एवं धात्वाख्याताभ्यां कथ्यमानात् सामान्यविशेषलक्षणरूपभेदात् धात्वर्थस्य द्वेधा वाक्यार्थान्वयः । तथा च अन्योत्पादानुकूलात्मा भावना किं कुतः प्रदुष्यति ? न कुतोऽपीत्यर्थः ) सर्वत्र हि अधिश्रयणादौ करोतीत्यपि सामान्यव्यापारांशः प्रतीयते । पचत्यादिवाच्या विक्लित्यधिश्रयणादयः कर्मस्थाः कर्तृस्थाश्च । तत्र यत् औदासीन्यप्रच्युतिमात्रेण परिस्पन्दरूपं निरूप्यते, सा भावना । ( औदासीन्यं अकुर्वद्रूपत्वावस्था, ततः प्रच्युतिः कुर्वद्रूपत्वं करोतिप्रत्ययवेद्यं अन्योत्पादानुकूलत्वम्, तेन रूपेण यन्निरूप्यते सा भावना इत्यर्थः । संयोगविभागादिहेतोः स्पन्दादेः धात्वर्थात् वैलक्षण्यप्रदर्शनार्थो मात्रशब्दः । अकर्मकधातुवाच्यध्वननादिधात्वर्थानन्तरं नियमेन अन्योत्पादादर्शनात्, सकर्मकधातुवाच्येभ्यश्च गमनादिभ्योऽनन्तरमेव संयोगविभागाद्युत्पत्तेः उत्पाद्यानाकाङ्क्षणात्, भाव्याकाङ्क्षालक्षणभाव्यनिष्ठत्वापरपर्यायान्योत्पादानुकूलत्वरहितात् धात्वर्थात् अकुर्वद्रूपत्वलक्षणौदासीन्यप्रच्युत्यात्मकत्वेन अन्योत्पादनरूपत्वात्, अनन्तरं च फलानुत्पत्तेः भाव्यनिष्ठत्वापरपर्यायान्योत्पादाकाङ्क्षालक्षणान्योत्पादानुकूलत्वात् भावनायाः वैलक्षण्यं इत्याशयः । ततश्च '**यथा** प्रयोज्यापरपर्यायकर्मस्थस्य विक्लेदनादेर्व्यापारत्वे सत्यपि प्रयोजकापरपर्यायकर्तृव्यापारत्वाभावात् न भावनात्वम्, **तथा** अधिश्रयणादेः प्रयोजकव्यापारत्वे सत्यपि भाव्यनिष्ठत्वाभावात् न भावनात्वम् ' इत्याशङ्कापरिहारः सूचितो भवति । ननु अधिश्रयणादेः परिस्पन्दात्मकात् प्रयोजकव्यापारात् अन्यो भाव्यनिष्ठः प्रयोजकव्यापारश्चेदस्ति, किमिति तद्व्यतिरेकेण नोपलभ्यते इत्याशङ्क्य ' परिस्पन्दरूपं ' इत्युक्तम् । भावनायाः धात्वर्थेन विषयभूतेन ज्ञानस्येव ज्ञेयेन निरूपितायाः अवच्छिन्नायाः कार्यभूतेन वा धात्वर्थेन करणतया निरूपितायाः कल्पितायाः निरूप्यत्वात् धात्वर्थं विना अनुपलब्धिर्युक्ता इति भावः । भावनावच्छेदकधात्वर्थमात्रोपलक्षणार्थः परिस्पन्दशब्दः । रूपशब्दस्य करणव्युत्पत्तौ परिस्पन्दो रूपमस्येति विग्रहः । कर्मव्युत्पत्तौ वा परिस्पन्देन निरूप्यमाणं इति विग्रहः । स्वशरीरस्य स्पन्दस्य हि आत्मप्रयत्नहेतुकत्वव्याप्तेः परशरीरे स्पन्ददर्शनात् प्रयत्नोऽनुमीयते, स्वप्रयत्नश्च मानसप्रत्यक्षवेद्योऽपि ' गमने अहं प्रयते ' ' पाके अहं प्रयते ' इति गमनादिना स्पन्देन, ' यागे अहं प्रयते ' ' ध्याने अहं प्रयते ' इति वा चलनात्मकेन यागादिना धात्वर्थेन अवच्छिन्नः एव भाव्यनिष्ठप्रयोजकव्यापारत्वात्मकभावनालक्षणयोगात् अर्थिपुरुषव्यापारत्वाच्च अर्थयते इति कर्तृव्युत्पत्तिद्वारा अर्थयितृपुरुषव्यापारवाच्यर्थभावनाशब्दवाच्यः सर्वेषु लङाद्याख्यातेषु गम्यते । यत्तु अस्मिन् पक्षे ' रथो गच्छति ' इत्यचेतने नाख्यातं प्रयुज्यते इत्युक्तम्, तत्र एवं वाच्यम्, किं आख्यातप्रयोगान्यथाऽनुपपत्त्या रथादौ भावना कल्प्यते, प्रतीतिबलाद्वा अभ्युपगम्यते । न तावत् स्पन्दातिरिक्ता भावना प्रत्यक्षेण प्रतीयते, नापि कादाचित्कत्वं स्पन्दाख्यकार्यदर्शनात् कल्प्यते इति रथवोढ्रश्वादिप्रयत्नात् स्पन्दमानाश्वादिशरीरसंयोगात्, तदभावेऽपि वा पतनप्रतिबन्धकाधारसंयोगाभावसहकृतात् गुरुत्वात् रथस्पन्दोपपत्तेः । वायुसंयोगादिसद्भावभावितया च दृष्टस्य पर्णादिपतनस्य न कारणत्वकल्पना युक्ता । वायोस्तु स्वाभाविकः स्पन्दो न शक्नोत्येव स्वकारणत्वेन व्यापारान्तरं कल्पयितुम् । स्पन्दस्य च वायुरथादेः स्पन्दनं चलनं गमनं वर्तते इति आख्याताश्रवणेऽपि धातुमात्रात् प्रतीतेः आख्यातार्थत्वम्, भाव्यनिष्ठत्वाभावाच्च भावनात्वम्, नाभ्युपगन्तुं युक्तम् । स्पन्दतिचलत्योश्च अकर्मकत्वात् तद्वाच्यस्य स्पन्दस्य भाव्यनिष्ठत्वमनाशङ्क्यमेव । ततश्च वायुरथादौ स्पन्दस्य भावनात्वायोगात् तदतिरिक्तव्यापारानुपलब्धेश्च प्रयत्नात्मकभावनानभ्युपगमे आख्यातस्य भावनाव्यभिचारो दुष्परिहरः । स्पन्दस्य भावनात्वाभ्युपगमेऽपि स्पन्दत्यादिधातुनैव तदभिधानसिद्धेः तत्परस्याख्यातस्य व्यभिचारस्तदवस्थ एव । स्पन्दत्यादिपराख्यातवच्च पचत्यादिपराख्यातस्यापि स्पन्दवाचित्वं न युक्तम् । नहि 'पचति'



इत्यस्य ' पाके स्पन्दते ' इत्यर्थं केचित् व्याचक्षते । तथा ' यज्याद्यर्थश्चातोऽवगम्यते । भावयेदिति चेत्युक्ते कीदृशी पुनराख्यातात् भावनाऽवगम्यते इत्यपेक्षायाम्, तथा यतेत यथा किञ्चिद्भवति ' इति प्रयत्नवाचिता आख्यातस्य भाष्यकृता विवृता । दध्नेन्द्रियकामाधिकरणे च ( २।२।११ ) ' जुहुयात् इति शब्दस्यैतत् सामर्थ्यम्, यत् होमविशिष्टं प्रयत्नमाह ' इत्यभिधानात् ( भा. पृ. ५४९ ) ' जुहुयात् ' इत्यस्य ' होमे यतेत ' इत्यर्थः सूचितो भवति । प्रयत्नस्य च इच्छायोनित्वात्, निष्फले चेच्छाऽयोगात् भाव्यनिष्ठत्वावगतेः धात्वर्थनिष्पत्तिमात्रेण च फलवत्त्वासिद्धेः तन्निष्पत्तिमात्रेण पर्यवसानायोगेन धात्वर्थकरणकस्य प्रयत्नस्य फलसाधनत्वाविघातात् प्रयत्नस्य भावनात्वे न कश्चिद्दोषः । प्रयत्नाभावे च वातरोगादिना देवदत्ते स्पन्दमाने ' नायं स्पन्दं करोति किन्तु वातादिवशात् अस्य स्पन्दो भवति इति व्यवहारदर्शनात् प्रयत्न एव करोत्यर्थोऽवगम्यते । रथादावपि ' न रथः स्वयं गमनं करोति, किन्तु अश्वादिना अस्य गमनं क्रियते ' इति व्यवहारदर्शनात् धातुवाच्यस्पन्दातिरिक्तकरोत्यर्थभावनाप्रतीत्यभावः सिद्धः । आख्यातप्रयोगान्यथाऽनुपपत्त्या तु रथादौ भावनाकल्पने ' रथो भवति ' इत्यत्रापि सर्वदा भावनाकल्पनाऽऽपत्तेः भूतादिकथनेऽपि अवयवादिकृतभेदानाश्रयणे ' धात्वर्थमात्रम्, कर्तृसंख्यादयश्च आख्यातपदार्थत्वेनावधार्यन्ते, न च भावनाव्यभिचारेण दोषः ' इति वार्तिकं ( पृ. ३८२ पं. २–३ ) विरुध्यते । अवयवादिकृतभेदविवक्षायां अस्त्यादौ भावनाऽभ्युपगमः पूर्वोत्तरवार्तिकपर्यालोचनया प्रौढिमात्रेणेति युक्तम् । अथवा सोऽपि प्रयत्नाभिप्रायेण व्याख्यातुं शक्यते । नित्यस्यात्मनः शरीरशरीरिणोः अभेदविवक्षया शरीरानिष्पत्तौ अनिष्पत्तिव्यपदेशोपपत्तेः । ' पञ्च धातून् स्वयं षष्ठ आदत्ते युगपत् प्रभुः ' इत्यादिस्मृतिपर्यालोचनया चात्मनः शरीरोत्पादनप्रयत्नावगमात् सिद्धभवनशरीरावयवाधिष्ठानेन आत्मना सिद्धभवनान् शरीरावयवान् प्रति प्रयोजकस्य प्रयत्नात्मिका भावना न विरुध्यते । एवं च ' सिद्धकर्तृक्रियावाचिनि ' ( वा. पृ. २७६ पं. २५ ) इत्यपि चेतनाभिप्रायं व्याख्यातुं शक्यम् । यद्वा अर्थभावनायाश्चेतनमात्राश्रयत्वेऽपि शब्दभावनायाश्चेतनाश्रयत्वायोगात् उभयव्याप्त्यर्थं सिद्धमात्रग्रहणम् । नित्यस्यापि शब्दस्याभिव्यक्तिः सिद्धिरभिप्रेता । भाव्यनिष्ठप्रयोजकव्यापारत्वलक्षणयोगाच्च शब्दव्यापारस्यापि अविरुद्धं भावनात्वम् । यथैव हि इच्छायोनित्वात् प्रयत्नस्य इष्यमाणभाव्यं विना आत्मलाभायोगात् भाव्यनिष्ठत्वम्, तथा लिङादिव्यापारस्यापि प्रेरणाख्यस्य प्रवृत्त्याख्यभाव्यकत्वेन तन्निष्ठता अवसीयते । **न च** ( भाव्यनिष्ठत्वाभावः इत्यनेन अन्वयः ) **यथा** स्पन्दानन्तरमेव संयोगविभागोत्पत्तेः आकाङ्क्षातः प्रागेव आकाङ्क्षणीयलाभे लब्धव्यालाभनिमित्ताकाङ्क्षाऽनुपपत्तेः अन्यथा च कदाचित् नैराकाङ्क्ष्यानुपपत्तिप्रसङ्गात् स्पन्दस्य भाव्याकाङ्क्षालक्षणं भाव्यनिष्ठत्वं नास्ति, **तथा** प्रेरणायाः भाव्यनिष्ठत्वाभावः ( ' नच ' इति अन्वयः । कुतः ? ) पुरुषप्रवृत्तेः साध्यसाधनेतिकर्तव्यतापर्यालोचनासापेक्षत्वेन प्रेरणानन्तरमनुत्पत्तेः । अनेनैव न्यायेन सर्वशब्दगतस्य अभिधानलक्षणस्यापि व्यापारस्य अर्थप्रतिपत्त्याख्यभाव्यकल्पितस्य भावनात्वमनुसंधेयम् । तस्या अनभिहिताया एव कार्योपयोगित्वात् ' लिङादियुक्तेषु वाक्येषु द्वे भावने प्रतीयेते ' इत्यादौ भावनाद्वयोपन्यासाविरोधः । ' स्पन्दप्रयत्नयोरेव भावनात्वमिति भ्रमम् । अपनेतुं प्रसक्तानुप्रसक्त्यैतदुदीरितम् ॥ प्रयत्नव्यतिरिक्तार्थभावना तु न शक्यते । वक्तुमाख्यातवाच्येह प्रस्तुतेत्युपरम्यते ॥ ' सुधा. पृ. ५७६–५७९ ) । ये तु तदनुरञ्जनसमर्थाः कर्तृकर्मगता विशेषास्ते तस्या एव करणेतिकर्तव्यतांशयोर्निविशन्ते । एवं तर्हि धात्वर्थसामान्यं भावनेत्येतदापन्नम् । सत्यं साध्यतया सामान्यम्, न तु गोत्वादिरूपेण । कथम् ? ' अन्यदेव **हि यागादौ सामान्यं करणात्मकम् । अन्यच्च भावना नाम साध्यत्वेन व्यवस्थितम् ॥** ' भावनायां हि स्वयमेव प्रतिपुरुषं सामान्यविशेषौ भवतः । तथा तत्करणभूते यागादौ समवेतं भावनाकरणांशापेक्षितं धात्वर्थसामान्यं नाम यत् कर्मशब्देन अभिधीयते । विशेषणभावाच्च यागादयो भावनाविशेषा इत्युच्यन्ते, न तद्व्यक्तित्वेन । शास्त्रप्रदेशे तु क्रियाकर्मशब्दौ कदाचि-

द्धात्वर्थे प्रयुज्येते, कदाचिद्भावनायाम्, कदाचित्तु प्रत्यासत्त्या उभयत्रापि प्रयोगः, न स्वरूपाभिधानेन । कुतः ? **‘ यादृशी भावनाऽऽख्याते धात्वर्थश्चापि यादृशः । नासौ तेनैव रूपेण कथ्यतेऽन्यैः पदैः क्वचित् ॥ ’** भावनाशब्दो हि निष्पन्नात्मिकां सत्त्वरूपापन्नां लिङ्गसंख्यायोगिनीमभिधत्ते, न चासौ आख्याते तादृश्यभिधीयते, लिङ्गसंख्यारहितरूपेण गम्यमानत्वात् । एवं धात्वर्थोऽपि वेदितव्यः । तथा करोतिभावयतीत्येताभ्यामपि श्रुत्या तावदन्यादृगेवार्थः प्रतीयते कृञ्भावयत्यर्थकरणिका भावना, न चैवंरूपा असौ यजेतेत्यादिष्वस्ति इत्यपर्यायत्वम् । तत्रानन्तरप्रत्ययोरथापितभावनान्तरबुद्धिमविवक्षित्वाऽर्थसंवादः कर्तव्यः । तेनादूरविप्रकर्षमात्रेणैष प्रयोगः, नार्थसाम्येन इत्यवस्थितमनन्यशब्दवाच्यत्वं भावनायाः । सा तु प्रतीतमात्रैव प्राधान्यात् अपेक्षान्तरानधीनत्वाच्च प्रथमं तावत् साध्यांशमपेक्षते भावयेत् किमिति । तत्र यावती विध्युपेता भावना, तस्यां पूर्वप्रतीतमपि विधित्वं तावन्नाऽऽश्रीयते, यावदंशत्रयपूर्णा भावनाऽनुष्ठानयोग्या न भवति । विधित्वप्रक्रमाच्च प्रथममेव एतत् ज्ञायते, यादृशैरंशैः पूर्णेयं विधानमर्हति तादृशैः पूरयितव्येति । न च बुद्धिपूर्वकारी पुरुषः पुरुषार्थरहितं व्यापारं वचनशतेनाप्युक्तोऽनुतिष्ठति । न च पुरुषार्थः साध्यव्यतिरिक्तांशपातित्वेन कैश्चित् प्रार्थ्यते, ततोऽभ्यर्हिततरस्य अन्यस्य साध्यस्य अविद्यमानत्वात् । तत्र यदि अस्यां भावनायां अपुरुषार्थः साध्यः स्यात् ततः पुरुषेष्वप्रवर्तमानेषु प्रत्ययस्य प्रयोजकशक्तिर्बाध्येत । तेन यद्यपि समानपदोपादानप्रत्यासत्तेर्धात्वर्थः साध्यांशपूरणायोपप्लवते, तथाप्ययोग्यत्वान्निराक्रियते, नहि प्रत्यासत्तिरेवैका संबन्धकारणम्, ( किन्तु ) योग्यत्वाद्यपि । तथा च वक्ष्यति यस्य येनार्थसंबन्ध इति । ( ‘ यस्य येनार्थसंबन्धो दूरस्थस्यापि तेन सः । अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् ॥ ’ इत्यादिना विश्वजिदधिकरणे (४।३।७) पूर्वाचार्यो वक्ष्यति ) । किंच **‘ संबन्धमात्रमुक्तं च श्रुत्या धात्वर्थभावयोः । तदेकांशनिवेशे तु व्यापारोऽस्या न विद्यते ॥ ’** संबन्धमात्रं कृत्वा निवृत्तव्यापारायां श्रुतौ अन्यतरांशनिवेशो योग्यत्वादाश्रयितव्यः । तद्यदि साध्यांशादेकप्रत्ययोपात्तेन प्रत्यासन्नतरेण विधित्वेन प्रच्याव्यते, ततोऽशान्तरेण नूनं संपत्स्यते इत्येवं प्रतीक्ष्यते । किंच **‘ साध्यांशे पुरुषाणां च प्रत्ययो न नियोजकः । स्वयमेव हि जानन्ति कर्तव्यं पुरुषाः सदा ॥ ’** यत्र हि शास्त्राधीना पुरुषप्रवृत्तिस्तत्र तत्संनिकर्षविप्रकर्षावपेक्ष्येते, साध्यं पुनः स्वर्गपशुपुत्रग्रामादि प्रागेव शास्त्रात् सर्वे पुरुषाः प्रतिपद्यन्ते । ततश्च भावयेत्किमित्यपेक्षितमात्रे विनैव तावच्छास्त्रेणैतावदवगतम्, पुरुषार्थः कश्चिदिति । तत्र विशेषमात्रमनवगतत्वादपेक्ष्यते । तदपि च न साध्यात्मना, किं तर्हि ? एतद्भावनाविषयत्वेन । ततश्च दूरस्थस्यापि स्वर्गादेरेव कृतास्पदस्य संगतिः । धात्वर्थसंबन्धस्तु अनपेक्षितः क्रियेत, विध्यानर्थक्याच्च बाध्येततरां श्रुतिः । किंच **‘ भवने यस्य कर्तृत्वं कथंचिदवधारितम् । स्ववाक्ये वाऽन्यवाक्ये वा स साध्यत्वं प्रपद्यते ॥ ’** न चात्र धात्वर्थादेर्भवनक्रियासंबन्धोऽवगतः, स्वर्गादीनां तु कामशब्दोपबन्धात् भवनसंबन्धो विज्ञायते । कुतः ? **‘ स्वर्गो मे स्यादितीत्थं हि स्वर्गादिः प्रार्थ्यते भवन् । तेनासौ भावनापेक्षः प्रयोज्यत्वेन गम्यते ॥ ’** ततोऽवधृतस्वर्गादिसाध्यांशा भावना केन भावयेदित्येवं करणमपेक्षते । तत्र च शास्त्राधीनप्रवृत्तित्वात् तत्संनिकर्षादावाश्रीयमाणे प्रमाणान्तराच्च योग्यायोग्यत्वयोरज्ञानात् विध्यविरोधाच्च अत्यन्तप्रत्यासत्त्युपस्थित–धात्वर्थातिक्रम–कारणाभावात् सर्वफलभावनानां च केनचिद्धात्वर्थविशेषेण विनाऽनुपपत्तेर्यागेनेत्येवं विज्ञायते । यद्यपि च यागः स्वयमेव तावदनिष्पन्नस्तथापि स्वसाधननिष्पादितः सन् साधयिष्यति । सर्वमेव च कदाचिन्निष्पन्नम्, कदाचिदनिष्पन्नम् । न च प्राक् शास्त्रप्रवृत्तेर्निष्पत्तिः क्वचिदुपयुज्यते, फलसिद्धिकालमात्रोपयोगित्वात् करणनिष्पत्तेः । प्रमाणवशाच्च त्रिकालवर्तिनामपि साधनत्वाविरोधः । तस्मात् यागादीनां करणत्वम्, तच्च अपूर्वद्वारेणेति तच्छब्देभ्यः पूर्वप्रतीतिः । अतश्च एवमपि सूत्रार्थः संभवति । ये भावार्थाः भावनाप्रयोजनाः, कर्मशब्दाः यज्यादयः, तेभ्यः क्रिया प्रतीयेतेति । ननु चोक्तेन कर्मकरणसंबन्धन्यायेन सकर्मकधातुयुक्तादेव आख्यातात्



भावनाऽवगतिः प्राप्नोति । तथाहि **‘ येनेप्सिततमैर्भावैः किमित्यंशोऽवरुध्यते । तद्योगी तेन धात्वर्थो न कश्चित् स्यादकर्मकः ॥ ’** यदि वा सर्वधातूनां सकर्मकत्वापत्तिः अथवा अकर्मकेभ्यो भावनया न भवितव्यम् । **नैष दोषः ।** कुतः ? **‘ अन्यदेव हि धात्वर्थप्राप्यं कर्म सकर्मके । अन्यदेव च सर्वत्र प्रत्ययार्थनिबन्धनम् ॥ ’** ‘ ओदनं पचति, ग्रामं गच्छति ’ इति धात्वर्थापवर्गलभ्यमेकं कर्म, अपरं पुनर्भावनाकर्म । तत्र कदाचिद्धात्वर्थकर्मैव भावनाकर्मत्वमपि प्रतिपद्यते, पाकेनौदनं भावयतीति । कदाचित्पुनः स्वकर्मविशिष्टधात्वर्थयुक्ता भावना कर्मान्तरेण युज्यते, ग्रामगमनेन स्वार्थं भावयेदिति, ओदनपाकेन चेति । तच्चैतद्धात्वर्थात् परतस्तदवाप्यमात्रत्वेन गम्यमानं धात्वर्थान्तरतिरोहितं भावनाकर्मतया सर्वत्रावधार्यते । तच्च प्रायेणैवं कामशब्देनैव संबन्धमापद्यते, ‘सुखकामः आसीत, स्वास्थ्यकामः शयीत ’ इति । सत्यपि आस्शिशेत्योरकर्मकत्वे, यः प्रत्ययेन करोत्यर्थोऽभिहितस्तत्कर्मत्वेन च स्वापादीन्यवधार्यन्ते । तेन करोतेः सर्वदा सकर्मकत्वात्, अकर्मकाख्यातानामपि च तत्सामानाधिकरण्यदर्शनात् ‘ किं करोति ? आस्ते ’ ‘ किं करोति ? शेते ’ इति सिद्धैवमादिष्वपि सकर्मिका भावना । **‘ यजेरपि तु यत् कर्म पूज्यत्वाद्देवतेष्यते । तदुज्झित्वैव पुत्रादेः कर्मत्वं भावनाश्रितम् ॥ ’** तस्मात् सकर्मकाकर्मकयोरविशेषात् आसनेन भावयेदित्यपि प्रयोगसिद्धिः । कस्तर्हि सकर्मकाकर्मकयोः भेदः ? उच्यते, **‘ साक्षादव्यभिचारेण धात्वर्थो यत्र कर्मभाक् । सकर्मकः स धातुः स्यात् पारम्पर्ये त्वकर्मकः ॥ ’** आसनशयनादौ हि न नियमेनाऽऽनन्तर्येण वा इदं तदिति वा कर्म निरूप्यते, तेनाकर्मका अभिधीयन्ते । पचिगम्यादीनां तु विक्लिद्यत्संयुज्यमानसाक्षात्संबन्धिकर्माव्यभिचारात् सकर्मकत्वम्, न तु भावनाविशेषणे कश्चिद्विशेषः । सेयं भावना अंशद्वयपरिपूर्णा सती सर्वकरणानामुपायाननुगृहीतानां करणत्वानुपपत्तेः ‘ कथं भावयेत् ’ इतीतिकर्तव्यतामपेक्षते । सा च प्रत्यक्षादीनामनुग्राहकदर्शनशक्त्यभावादत्यन्तशास्त्रगम्येति यथासंनिकर्षं तदसंभवाद्वा यथाकथञ्चिदुपस्थाप्यमाना शास्त्रानुसारेण श्रुत्याद्युपदेशेन चोदनासामान्याद्यतिदेशेन वा अत्यन्तादृष्टोपकारद्वारेण अन्यथानुपपत्त्या कल्प्यते । ततः परिपूर्णत्वादनुष्ठातुं योग्येति विधीयते । तद्विधानाच्चार्थापत्त्या यागादिविधानमित्युपपन्नं भावार्थसूत्रम् ।

‘ भवन्ति केचित् कर्मशब्दाः ’ यागो यजनं इज्या इत्युदाहर्तव्ये तत्सामानाधिकरण्यसिद्धश्येनैकत्रिकाद्युदाहरणं यागादिकरणत्वचोदनोत्तरकालभाविकर्मशब्दत्वेन पारतन्त्र्यात् सुज्ञानम् । स्वतन्त्राणां कथञ्चिदपि भावार्थत्वाशङ्काऽसंभवात् । यागादयो हि स्वातन्त्र्येणापि कदाचिदनुमानात् भावार्थाशङ्काविषयाः स्युरिति । ‘ केचिद्भावार्था न कर्मशब्दाः ’ यथा भावयेत्कुर्यादिति चोदाहरणम् । भूत्यादयस्तु प्रयोज्यव्यापारवचनत्वान्नैव यथावर्णितभावार्था इत्यनुदाहरणम् । तत्र यथाकथञ्चित् णिजन्तव्युत्पत्त्या भावशब्द एको नीयेत, नेतरौ । तावपि तु प्रयोज्यव्यापारांशेन कथञ्चित् भावार्थावित्युदाहृतौ । अथवा द्वितीयसूत्रार्थव्याख्यानेन भावनाप्रयोजनत्वमंशवाचित्वे नास्तीति विनाऽपि सकलार्थाभिधानाद्भवन्ति भावार्थाः । कथं पुनरमी न कर्मशब्दाः यदा धातुमात्रं कर्मशब्दत्वेनोक्तम्, निर्विशेषस्य सामान्यस्यानुष्ठातुमशक्यत्वात् अकर्मशब्दत्वम् । अतो विशेषवाचिनामेव धातूनां कर्मशब्दत्वग्रहणादचोद्यमेतत् । यदि हि श्येनचित्रादर्शपौर्णमासशब्दाः फलैः संबध्येरन् ततो यागकरणत्वाभावात् तत्सामानाधिकरण्यनिमित्तनामधेयत्वानुपपत्तेः प्रसिद्ध्यादिभिर्गुणविधित्वमेव स्यात्, अतः ‘ स्थिते एतस्मिन्नधिकरणे ’ इत्याह । कस्मात्पुनरिदं तत्रैव न नीतम् ? प्रमाणलक्षणेनासंबन्धात् । अथ नामधेयत्वं कस्मादत्र नाऽऽनीयते ? भेदलक्षणेनासंबन्धात् । तस्माद्यथान्यासमेव स्थितयोरर्थात् पौर्वापर्यसिद्धिः । ‘ न चैषामर्थिना ’ इति फलपदाभिप्रायम् । ‘ विविभक्तित्वात् ’ इति । संबन्धनिमित्ताख्यातविभक्तिविगमात् अथवा निष्पन्नार्थाभिधायिसुब्विभक्तिविशेषयोगो विविभक्तित्वम् । तस्मान्न द्रव्यादिशब्दानां फलसंबन्ध इति । आह च **‘ साध्यसाधनसंबन्धः सर्वदा भावनाऽऽश्रयः । तेन तस्य न सिद्धिः स्याद्भावनाप्रत्ययादृते ॥ ’**

**सर्वेषां भावोऽर्थ इति चेत् । २ ॥**

**भाष्यम्--** एवं चेत् भवान् पश्यति, अभावशब्दत्वान्न द्रव्यगुणशब्दा अपूर्वस्य विधायका इति सर्वेषां भावोऽर्थः । स्वर्गकामो दर्शपूर्णमासाभ्यामित्येतयोः संबन्धं ‘ यजेत ’ इति वक्ष्यति, ‘ श्येनेनाभिचरन् ’ इत्येतयोश्च । तथा ‘ चित्रया पशुकामः ’ इति । तस्मादेतेऽपि साकाङ्क्षत्वाद् भाववचनाः । सर्वेषु भाववचनेषु नास्ति विनिगमनायां हेतुः, कर्मशब्दा एवापूर्वस्य विधायकाः, न द्रव्यगुणशब्दा इति ।

**वा--** **‘ न तावत्प्रत्ययस्येष्टमपूर्वप्रतिपादनम् । न च धातोः स्वतस्तत् स्यान्नाम्नो वा परतः समम् ॥ ’** यदि हि भावनावचनस्यैवापूर्वप्रतिपादकत्वमिष्यते धातोर्वा प्रत्ययनिरपेक्षस्य, ततो नामपक्षो दुर्बलः स्यात् , इह तु यथैव धातोः प्रत्ययसंबन्धानुगृहीतस्य भावनानुरञ्जननिमित्तं करणवाचित्वं भवति, एवं नामपदस्यापीत्यविशेषः ।

**येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि, तस्मात्तेभ्यः पराकाङ्क्षा भूतत्वात् स्वे प्रयोगे । ३ ॥**

**भाष्यम्--** येषां शब्दानां उच्चारणोत्पत्तौ स्वेऽर्थे प्रयुज्यमानानां रूपमुपलभ्यते, यत् सकृदुत्पन्नं कालान्तरं तिष्ठति, न क्रियेव उत्पन्नमात्रं विनश्यतीत्यर्थः । तानि नामानि । ते द्रव्यगुणशब्दाः । ईदृशो द्रव्यगुणशब्दानामर्थः । ते द्रव्यगुणशब्दा इति वक्तव्ये, तानि नामानीति सूत्रितम् । अतो नामानीत्येषां पर्यायशब्दः । कथं गम्यते ? यत एषां विभक्तयो नामिक्य उच्यन्ते । कतमास्ताः ? वृक्षः वृक्षौ वृक्षाः, शुक्लः शुक्लौ शुक्लाः इत्येवमादयः । तस्मात् सम्यक् सूत्रितम् । यतः एषां न क्षणिकोऽर्थः , ततस्तेभ्यः पराकाङ्क्षा प्रधानाकाङ्क्षा न विद्यते, इति नैषामुत्पत्तिः कर्तव्या, भूतत्वात् स्वे प्रयोगे स्वप्रयोगकाले विद्यमानत्वादित्यर्थः ।

**वा--**यदुक्तं यदैकस्मादपूर्वं तदेतरत्तदर्थं भविष्यतीति तद्गतं तावत् वस्तुधर्मेण विशेषं दर्शयति । कथम् ? **‘ बह्वदृष्टप्रसङ्गाद्धि धर्मो नेष्टः पदेपदे । नाम्नः फलेन संबन्धे परिहारो न तस्य च ॥ ’** एकस्मादृष्टे कल्पिते यदीतरद् दृष्टार्थत्वेन तादर्थ्यं भजते, ततो लाघवं लभ्यते । अस्य तु तादर्थ्यसिद्धये ततोऽपि पुनरदृष्टं कल्प्यते एव, ततो वरं फलेनैव सर्वाणि संबद्धानि । न च संबन्धवैरूप्यक्लेशाश्रयणम् , नाम्नश्च फलसंबन्धे अवश्यं धात्वर्थस्तदनुग्रहार्थोऽभ्युपगन्तव्यः । स च स्वयं निष्पाद्यः सिद्धरूपस्य नामार्थस्य न शक्नोति दृष्टेनोपकर्तुम् । नहि नामार्थस्तमपेक्षते, शब्दप्रयोगवेलायामेव निष्पन्नतया गम्यमानत्वात् अपेक्षणीयस्य वा सिद्धत्वेनायोग्यत्वात् प्रयुज्यतेऽस्मिन्निति चाभिधेये एव प्रयोगः । तदाधारैव हि निष्पन्नरूपोपलब्धिः अनुत्पन्नत्वे क्रियारूपस्य वक्तव्ये विनाशित्वप्रदर्शनं निष्पन्नस्यापि क्षणिकत्वेन पुनःपुनर्निष्पत्त्यपेक्षोपपत्तेः । तेभ्यः पराकाङ्क्षा अन्याकाङ्क्षा, निष्पाद्यत्वेन वा प्रधानाकाङ्क्षा न विद्यते इत्यध्याहारः । अथवा तेभ्यः परा दूरे, आकाङ्क्षेत्यर्थः । कुतः ? भूतत्वादेवेति । स्वरूपकथनार्थमुपन्यस्तं निष्पन्नत्वादेवेति । पुनरन्ते तदेव हेतुत्वेनोद्दिष्टं सूत्रकारेण ।

**येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्यातानि, तस्मात्तेभ्यः प्रतीयेताऽऽश्रितत्वात् प्रयोगस्य । ४ ॥**

**भाष्यम्--**येषां तु शब्दानामुच्चारणोत्पत्तौ स्वेऽर्थे प्रयोगो न विद्यते । प्रयोगकाले येषामर्थो नोपलभ्यते इत्यर्थः । तान्याख्यातानीति भावशब्दान् पर्यायशब्देनोपदिशति । कथं पर्यायशब्दता भावशब्दानाम् । यत एषां विभक्तयः आख्यातिक्य इत्युच्यन्ते । कतमास्ताः ? पचति पचतः पचन्ति इत्येवमादयः । तस्मात् तेभ्योऽपूर्वं प्रतीयेत । भव्यार्थास्ते भूतार्थैः समुच्चरिताः । भूतस्य भव्यार्थतायां दृष्टार्थता, भव्यार्थस्य प्रयोजनवतः उत्पत्तिरर्थवती । सा च भूतेन क्रियते इति दृष्टोऽर्थः । भव्यस्य पुनर्भूतार्थतायां न किञ्चिद् दृश्यते, कल्प्यते चादृष्टम् । तस्मान्न यागो द्रव्यार्थः । किंच आश्रितत्वात् प्रयोगस्य । एतेषां प्रयोगः पुरुषेण आश्रितो भवति, पुरुषसंबद्धा भावना उच्यते । पुरुषं हि वदति भावयेदिति । तेन ‘ स्वर्गकामो यजेत ’ इति पुरुषोऽपि प्रतीयते, यागोऽपि, संबन्धोऽपि । ‘ स्वर्गकामो द्रव्येण ’ इति द्रव्यं प्रतीयते पुरुषश्च, न तु संबन्धः ।



ननु एतदुक्तं भवति, अर्थिनश्च द्रव्यस्य च संबन्धं यजेतेति वक्ष्यति, द्रव्येण भावयेदिति, अतो द्रव्येणार्थस्य भावना गम्येत, आकाङ्क्षा चेति । सत्यं गम्यते । द्रव्येण भावयेदिति तु वाक्येन, यागेन भावयेदिति तु श्रुत्या । यदा तु, यागेन भावयेदिति यागसंबन्धो विधीयते, न तदा द्रव्येण भावयेदिति द्रव्यसंबन्धः । न च द्रव्यसंबन्धे विधीयमाने यजेतेत्यनेन संबन्धः । अनूद्यमाने तु संभवति । न च यौगपद्येन विध्यनुवादौ संभवतः । तस्मात् श्रुतिवाक्ययोर्विरोधः । विरोधे च श्रुतिर्बलीयसी । तेनार्थिना न द्रव्यसंबन्धः । तत्र द्रव्यमसति स्वर्गकामसंबन्धे स्वर्गार्थं भविष्यतीत्यनुपपन्नम् । एष विनिगमनायां हेतुः, येन भावशब्दा एवापूर्वस्य चोदकाः, न द्रव्यगुणशब्दा इति । यदा यागेन कुर्यादिति, तदा यागवचनमेव भवति दर्शपूर्णमासाभ्यामिति लक्षणया, दर्शे च पूर्णमासे च यागो विहित इति ।

**वा--** **‘ आख्यातवर्ती धात्वर्थः साध्यरूपः प्रतीयते । तस्मिन् फलवतीष्टे तु नाम्नो दृष्टार्थतेष्यते ॥ ’** धात्वर्थस्तावत् प्रकृत्यैव साध्यात्मको विशेषतस्तु आख्यातगतेन धातुना उच्यमानः । स यदि फलसाधनत्वेन चोद्यते, ततोऽसिद्धरूपत्वात्तस्य साधनाकाङ्क्षायां सत्यां नामपदं गुणविधित्वेन नामधेयत्वेन वोभयथाऽपि दृष्टेनैव तादर्थ्यं लभते । ननु नामधेयपक्षे नामपदमपि साध्यार्थं भविष्यतीति धातुतुल्यं स्यात् । न, तस्य फलसंबन्धे गुणविधित्वेन सिद्धार्थत्वात् । अपि च **‘ साध्यात्मकोऽपि धात्वर्थो यदा नाम्नाऽभिधीयते । तदा द्रव्यवदेवासौ निष्पन्नात्मा प्रतीयते ॥ ’** यद्यपि वस्तुस्वरूपेण धात्वर्थः साध्यः तथापि नामपदेन उच्यमानो लिङ्गसंख्यायोगित्वात् सिद्धरूपोऽभिधीयते । अभिधानकृता चाऽऽकाङ्क्षोत्पत्तिर्न वस्तुकृता । तस्माद्युक्ता धातोरेवाऽऽकाङ्क्षा, न नाम्न इति । ‘ किंचाऽऽश्रितत्वात्प्रयोगस्य ’ इति । अधुना शब्दप्रत्यासत्तिकृतो विशेषोऽभिधीयते । पुरुषव्यापारात्मिकायां भावनायां धात्वर्थोपश्लेषोऽपि पुरुषेण आश्रितः तदतिक्रमहेत्वभावाच्च न नामपदग्रहणम् । तस्मादस्ति विशेषः ।

**शा--** यदा एकं ( अपूर्वं ) तदा संदेहः किं भावशब्देभ्यः , उत द्रव्यगुणशब्देभ्य इति । तदर्थं च किं भावार्थाः फलेन संबध्यन्ते, किंवा द्रव्यगुणशब्दार्था इति । ... तत्र अनध्यवसायमेव केचित् ( प्राभाकराः ) पूर्वपक्षमाहुः । तदयुक्तम् । तथा हि अप्रामाण्यमेव स्यात् , तच्चायुक्तम् । तथा सति प्रमाणलक्षणे एवायं विचारः स्यात् न त्विह, सिद्धत्वात् प्रामाण्यस्य । ननु पक्षद्वयेऽपि अनुष्ठानस्य एकरूपत्वेन अध्यवसितत्वात् नाप्रामाण्यम् । मूर्खप्रलपितमेतत् । यदि पक्षद्वयेऽपि न कश्चित् अनुष्ठाने विशेषः , किमर्थमधिकरणम् । अपि च पूर्वपक्षे श्येनादीनां गुणविधित्वात् श्येनद्रव्येण यष्टव्यम् , सिद्धान्ते तु नामधेयत्वात् सोमेन यष्टव्यं इत्यस्ति विशेषः । यथा आह भाष्यकारः ‘ स्थिते एतस्मिन्नधिकरणे गुणविधिर्नामधेयमिति विचारः ’ ( भा. पृ. ३८६ ) इति । यत्र तु न सिद्धान्तेऽपि नामधेयं यथा ‘ सोमेन यजेत ’ इति, तत्र प्रतिनिधिसदसद्भावः प्रयोजनम् । तदप्याह भाष्यकारः ( भा. पृ. ४०५ ) ‘ यदि द्रव्यगुणशब्दाः अपूर्वं चोदयन्ति, द्रव्यगुणापचारे न प्रतिनिधिरुपादातव्यो यथा पूर्वपक्षः , यथा तर्हि सिद्धान्तः , द्रव्यं गुणं वा प्रतिनिधाय प्रयोगोऽनुष्ठातव्यः ’ इति ( भा. २।१।२।५ पृ. ४०५ ) । तस्मात् प्रसज्यते एव अप्रामाण्यमिति नैवं पूर्वः पक्षः । किन्तु द्रव्यादिभ्यः अपूर्वम् , ते एव फलसाधनमिति । कुतः ? **‘ फलं हि साध्यमानत्वात् सिद्धं साधनमिच्छति । द्रव्यादि च तथा, यागः स्वयं साध्यो, न साधनम् ॥ ’** इति प्राप्ते, अभिधीयते । **‘ भावनैव हि भाव्येन फलेनान्वेतुमर्हति । धात्वर्थः करणं तस्यां लाघवात् संनिकर्षतः ॥ ’**

**सोम--सूत्रार्थस्तु-** भावार्थाः प्रत्ययेन भावनाप्रतिपादकाः प्रकृत्या कर्मवचनाः ये शब्दाः तेभ्यः अपूर्वं प्रतीयेत । यद्वा भावार्थाः भावनाप्रयोजनकाः ये कर्मशब्दाः धातवः तेभ्यः अपूर्वं प्रतीयेत इति ।

**प्रयोजनम्--** यदि द्रव्यगुणशब्दाः अपूर्वं प्रतिपादयन्तीति पक्षः, तदा द्रव्यादीनामदृष्टार्थत्वात् अदृष्टार्थस्य प्रतिनिध्यभावात् न प्रतिनिधिः । यदा तु भावशब्देभ्यः

अपूर्वमिति पक्षः, तदा द्रव्यं गुणं वा प्रतिनिधाय अनुष्ठातव्यं इति । ननु पूर्वपक्षेऽपि प्रक्रान्तस्य कर्मणः असमाप्तिदोषपरिहारार्थमवश्यसमापनीयत्वेन प्रतिनिधानमावश्यकम् । इति चेत् तथापि पूर्वपक्षे सदृशमसदृशं वा यत्किंचिदुपादाय कर्म समापनीयं न तु सदृशमेव येन केन चित् समाप्तिसिद्धेः । सिद्धान्ते तु सदृशमेवोपादातव्यम् । न च यत्किंचित् द्रव्यं प्रतिनिधिरिति वक्तुं शक्यम्, विसदृशत्वात् । द्रव्यादेवापूर्वमिति पूर्वपक्षे मुख्यद्रव्यं फलार्थम्, कर्मसमाप्त्यर्थमुपादीयमानं यत्किञ्चित् द्रव्यं तु प्रक्रान्तापरिसमाप्तिदोषपरिहारार्थमिति फलभेदाच्च । तस्मादुपपन्नं प्रयोजनम् ।

**वि**—'द्रव्यादिशब्दतोऽपूर्वधीर्भावार्थपदादुत ।, द्रव्यादीनां फलार्थत्वात् तच्छब्देन ह्यपूर्वधीः ॥, क्रियाद्वारमृते द्रव्यं फलेन नहि युज्यते । भावनावाचिनोऽपूर्वमाख्यातादवगम्यते ॥ धात्वर्थव्यतिरेकेण भावना नेति चेन्न तत् । सर्वधात्वर्थसंबद्धः करोत्यर्थो हि भावना ॥ धात्वर्थः करणं तस्यां समानपदवर्णितः । द्रव्याद्युपकृतिर्दृष्टा धात्वर्थोत्पादनात्मिका ॥' २।१।१ वर्णकं २.

**भाट्ट**-- एवं स्थिते विशेषजिज्ञासायां सोमादेरेव फलकरणत्वम्, तस्य सिद्धत्वेन योग्यतारूपलिङ्गात्, तृतीयायाः करणत्वे शक्तत्वेन कारकश्रुतेः एकपदोपात्तत्वरूपपदश्रुत्यपेक्षया बलीयस्त्वाच्च । फलान्वये पदश्रुतेरप्यभावाच्च । अत एव यागादिर्धात्वर्थः सोमाद्यर्थ एव । न च तदर्थत्वेऽदृष्टकल्पना, अग्निहोत्रहोमेन दधिनिष्ठकरणतासंपादनवत् यागेनादृष्टमन्तरेणैव सोमनिष्ठकरणतासंपादनेन यागस्य सोमाङ्गत्वोपपत्तेः । इति **प्राप्ते**, पदश्रुत्या यागस्यैव फलकरणत्वम् । यद्यपि च फलान्वये न सा । तथापि प्राथमिकभावनाऽन्वये यस्य यत् प्रमाणम्, तद्गतबलवत्त्वस्य तस्यामवस्थायामकिञ्चित्करत्वेऽपि पार्ष्ठिकफलान्वये तस्य निर्णायकत्वात् । अतश्च प्राथमिकभावनाऽन्वये विद्यमाना पदश्रुतिः फलान्वये निर्णायिका । न च तस्याः कारकश्रुत्यपेक्षया दौर्बल्यम्, लाक्षणिकत्वेऽपि यागकरणत्वस्य सोमकरणत्वान्वयात् प्राग्भावनायामन्वितत्वेन तदन्वयस्य प्राथम्यात् । अन्यथा तिङन्तपदस्य परिपूर्णत्वाभावेन तदुपस्थापितभावनायां सोमस्याप्यन्वयानुपपत्तेः 'परिपूर्णं पदं पदान्तरेणान्वेति' इति न्यायात् । न च प्रथमावगतस्यापि कल्प्यस्यौत्तरकालिकेन बाधः, उपजीव्यत्वादिति यागः फलसाधनं सोमो यागार्थ इति सिद्धम् ।

**प्रयोजनम्**—सोमापचारे न प्रतिनिध्युपादानं पूर्वपक्षे । सिद्धान्ते तु तत् । नन्विदं धात्वर्थातिरिक्तभावनासत्त्वे भवेत्, न तु तस्यां प्रमाणमस्ति । धातूनामेव विक्लित्त्यादिफले इव तत्प्रयोजकव्यापारमात्रे फूत्कारादौ यत्नादौ च शक्तत्वात् । अतो यत्नादिरूपभावनायाः अपि धातुवाच्यत्वात् धात्वर्थे एव क्रियारूपे सकलकारकान्वयः, न तु यागस्य पदश्रुत्या फलकरणत्वमिति चेत् । न । 'पचति, पाकं करोति, पाके यतते' इति पाकात् पृथग्विव्रियमाणयत्नादेः पचत्यर्थत्वानुपपत्तेः । न च घञन्तपाकशब्दस्य फले एव शक्तत्वात् पृथग्विवरणोपपत्तिः, व्यापारविगमेऽपि फलदशायां 'पाको विद्यते' इति प्रयोगापत्तेः तस्याः व्यापारवाचित्वावश्यम्भावात् । अतो भासमानो यत्नादिः तिङ्वाच्य एव । अत एव धातुवाच्यमपि साक्षात्फलजनकफूत्कारादिव्यापारवृत्तिपाकत्वादिकमेव । तच्च जातिरखण्डोपाधिर्वेत्यन्यदेतत् । तज्जनकयत्नादिकं तु आख्यातवाच्यमेव । तत्र हि शक्ततावच्छेदकं तु करोतिना विव्रियमाणतिप्पदत्वादिकम्, लाघवात्तिप्त्वादिकमेव वा, न तु स्थानिलत्वम् । तदुपस्थापकादेशविशेषाणां पदज्ञाननिष्ठकारणताऽवच्छेदककोटौ प्रवेशे गुरुभूतकारणताऽवच्छेदकघटितानन्तकार्यकारणभावकल्पनाऽऽपत्तेः, अप्रवेशे यथाकथंचिदुपस्थापितलकारादपि भावनोपस्थित्यापत्तेश्च । शक्यताऽवच्छेदकं तु फलोद्देश्यकधात्वर्थातिरिक्तव्यापारत्वम् । फलं च क्वचिद्धात्वर्थः क्वचिच्च स्वर्गादिरिति यथाविवक्षम् । एवं च 'रथो गच्छति' इत्यादौ न लक्षणा । गमनानुकूलव्यापारस्यैव आख्यातार्थत्वादिति **पार्थसारथिमिश्रः** । **वस्तुतस्तु** यत्नत्वमेव शक्यताऽवच्छेदकम्, लाघवात् । तद्बाधे तु सर्वत्राश्रयत्वादौ लक्षणा । यत्नस्यैव चाख्यातोपात्तस्य नित्यं कर्मसाकाङ्क्षत्वम्, करोतिपर्यायत्वात् एककर्मकत्वं फलभावनाऽनुकूलव्यापारत्वाच्चार्थभावनात्वं द्रष्टव्यम् ।



इयं चाख्यातोपात्तभावनैव मुख्यविशेष्या, तद्व्यतिरेकेणेतरपदार्थान्वयापर्यवसानात् । तस्यामेव चाख्यातोपात्तायां क्त्वाप्रत्ययाद्युपात्तायां वा योग्यताद्यनुसारेण निपातोपसर्गप्रातिपदिकातिरिक्तशब्दगम्यो यः सुबुपात्तलिङ्गसंख्याव्यतिरिक्तोऽर्थः तस्य सर्वस्यापि प्रकारतया अन्वयः । निपातोपसर्गयोस्तु क्रियासमभिव्याहारादौ सति तथा अन्वयः । अन्यसमभिव्याहारादौ अन्येन अपि । प्रातिपदिकार्थोऽपि सुबर्थे करणत्वादौ । तद्धितसमासादिसखण्डप्रातिपदिकावयवार्थानां तु यत्र कारकतासंबन्धेन तद्धितसमासादिवृत्तिः यथा आग्नेय इत्यादौ, तत्राग्नेर्देवतात्वात् भावनायामेवान्वयः, न तु तद्धितोपात्ते द्रव्ये । स तु पार्ष्ठिकः एव । यत्र कारकताऽतिरिक्तसंबन्धेन सा, तत्र परस्परान्वयोऽपि । यथा 'अश्वाभिधानीम्' इत्यादौ । एवं सुबुपात्तलिङ्गसंख्ययोः समानाभिधानश्रुत्या सुबर्थे करणत्वादावेवान्वयः । तद्व्यतिरिक्तपदार्थमात्रस्य तु सुबर्थकरणत्वादेर्धात्वर्थस्य कर्तुस्तदेकत्वस्य कालादेर्लडाद्यर्थस्य लिङाद्यर्थस्य च विध्यादेः सर्वस्यैव लिङ्गानन्वयिभावनावाचिपदोपस्थाप्यायां भावनायां एवान्वयः । अत एव भावनापदोपस्थापितायां तस्यां नान्वयः । आख्यातेन क्त्वादिना वोपस्थितायां तु भवत्येवान्वयः प्रकारतया । प्रकारताघटकाः संबन्धाश्च सर्वे यथायथं पार्ष्ठिकान्वयबोधवेलायामेव गम्यमानाः **कौस्तुभे** एव द्रष्टव्याः । तस्मात् सिद्धा आख्यातवाच्या आर्थी भावना । तस्यां च स्वर्गादि भाव्यम्, धात्वर्थश्च करणम्, सोमादिकं तु करणानुग्राहकत्वादितिकर्तव्यतेति सिद्धम् ।

**मण्डन**-- 'स नूनमाख्यातपदाभिधेयः ।' सः अपूर्वपदार्थः ।

**शंकर**--'भावार्थस्य फलार्थत्वम् ।'

* फलासिद्धौ **भावार्थाधिकरणं** लुप्तम् । वृ. ६।१।१।१. * **भावार्थाधिकरणे** अपूर्वं सिद्धं गृहीत्वा तज्जनकं विचारितम् । **कौ**. २।१।३।६. * भावार्थाधिकरणे कर्मणः फलमिति साधितम् । वा. २।३।४।११. * भावार्थाधिकरणे च फलभावनाकरणस्यैव धर्मत्वोक्तिः । **भाट्टालंकारः** पृ. ९. * भावार्थाधिकरणे विचित्रशक्तयो धातवः प्रयोज्यप्रयोजकोभयव्यापारवचनत्वेन दर्शिताः । **वा**. ३।४।११।३१ पृ. ९६८. * 'ऊर्जोऽवरुध्यै' इति तादर्थ्यचतुर्थ्यैव फलमुपात्तं इति तस्मिन्नौदुम्बरताविधिः । न तु फलस्य विधानं इति ग्रहीतव्यम्, **भावार्थाधिकरणे** फलविधिनिषेधात् ( इदं पूर्वपक्षे ) । **वा**. (१।२।२।१९) । अत्र भावार्थाधिकरणं लिप्सासूत्रस्य ( ४।१।२।२ ) आद्यवर्णकं ग्राह्यम् । **सु**. * दर्शपूर्णमासाभ्यां स्वर्ग इति संबन्धः एतदपि भावार्थाधिकरणे निराकृतम् । याग एव फले विधीयते । तस्मात् भावना सर्वविशेषणविशिष्टा विधीयते । **टुप्**. ११।१।१।१. * धात्वर्थेभ्योऽपूर्वं इति भावार्थाधिकरणे स्थितम् । **कु**. २।१।३।३, * धात्वर्थस्य करणत्वं भावार्थाधिकरणे साधयिष्यते । २।१।१।१, * न च भावार्थाधिकरणे धात्वर्थस्य करणत्वमुक्तं इति वाच्यम् । उक्तस्यापि तस्य षष्ठे स्वर्गकामाधिकरणे समानपदश्रुत्या धात्वर्थस्यैव फलत्वम्, न तु स्वर्गादेः इत्याक्षिप्य साधयिष्यमाणत्वात् । ततश्च स्वर्गकामाधिकरणन्यायेन ( ६।१।१।१ ) भाव्यत्वात् प्रच्युत्यनन्तरमेव भावार्थाधिकरणप्रवृत्तिः । ३।१।२ पृ. २४८. * भावना प्रधानभूता भावार्थाधिकरणे साधयिष्यते । **कौ**. १।४।६।६, * मुख्यविशेष्यं च अस्मन्मते भावार्थाधिकरणे वक्ष्यमाणरीत्या कारकान्वययोग्य-यच्छब्दाद्यसमभिव्याहृततिङन्तपदाभिधेया क्रियैव । १।४।१९।२९. * यदि चैवं कामशब्दैः ( स्वर्गकामः पशुकामः ) फलमभिधीयते ततो भावार्थाधिकरणे चिन्ता किं भावशब्दाः फलसंबन्धिनः उत द्रव्यगुणशब्दाः इति । **टुप्**. ६।१।१।१. * शक्यतावच्छेदकं च उक्तविधत्यागत्वसमव्यापकं जातिरूपं अखण्डोपाधिरूपं वा सामान्यं इत्युक्तमेव भावार्थाधिकरणे । **भाट्ट**. ४।२।१०।२७–२८. * शेषानेकत्वे विजातीयश्रुत्योर्विरोधे 'सोमेन यजेत' इत्यादौ पदश्रुत्यपेक्षया कारकश्रुतेरुपजीवकत्वेन दौर्बल्यं भावार्थाधिकरणे व्याख्यातम् । **कौ**. ३।३।७।१४ पृ. ३५०, * षाष्ठाद्याधिकरणेन इष्टसाधनत्वे भावनायां प्रतिपादिते तत्साधनं याग एव न सोमादिः इति भावार्थाधिकरणे प्रतिपादनम् । ३।१।३।३. * समानपदोपात्त-

धात्वर्थस्यैव भावनाकरणत्वम्, न तु नामार्थस्य इति भावार्थाधिकरणे वक्ष्यते । **सोम.** १।२।१.

* यत्र धात्वर्थः प्राप्तः गुणश्चाप्राप्तः तत्रैव गुणफलसंबन्धः **भावार्थाधिकरणापवादेन**, न तु यत्र गुणोऽपि प्राप्तः । अतः दर्शपूर्णमासवाक्येऽपि, आग्नेयादिवाक्येषु कालयागयोरुभयोरपि प्राप्तौ, गुणफलसंबन्धानुपपत्तिः । **कौ.** १।४।४।४.

* पूर्वोक्तं तु लक्षणद्वयं ( दृष्टोपकारित्वं गुणकर्मलक्षणम्, दृष्टोपकाराभावः प्राधान्यलक्षणम् ) न गुणप्रधानविषयम्, अपि तु अपूर्वसदसद्भावविषयम् । तन्मात्रस्यैव **भावार्थाधिकरणापवादत्वेन** प्रतिपित्सितत्वात् । **शा.** २।१।४ पृ. १०८.

* **भावार्थाधिकरणादौ** न्यायसुधाकृताऽपि 'कृदन्तशब्दस्थले अवाच्यत्वेऽपि भावनायाः तात्पर्यवृत्त्या शाब्दत्वम्' इत्यादिग्रन्थे तात्पर्यस्यापि वृत्तित्वमङ्गीकृतम् । **कौ.** १।३।८।२४.

* **भावार्थाधिकरणन्यायः** । 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यत्र इन्द्रियकर्मिकायां भावनायां भावार्थाधिकरणन्यायेन होमस्यैव करणत्वोपपत्तौ न गुणस्य करणत्वोपपत्तिः इति पूर्वपक्षः । भावार्थाधिकरणन्यायो यत्र धात्वर्थादुत्तारणं विधेः तत्रैव । तदपि च यत्र धात्वर्थमात्रं अप्राप्तं धात्वर्थनामार्थौ उभौ अप्राप्तौ, यत्र वोभौ संभवत्प्राप्तिकौ, प्राप्तौ वा । यथा– 'अग्निहोत्रं जुहोति', 'सोमेन यजेत', 'उरु प्रथस्वेति पुरोडाशं प्रथयति', 'ऐन्द्रवायवाग्रान् गृह्णीयात् यः कामयेत॰' इत्यादौ । यत्र तु नामार्थ एवाप्राप्तः तत्र धात्वर्थांशे विधेयताया अभावेन प्रयोजनाकाङ्क्षत्वात् फलसंबन्धस्य पक्षेऽपि अप्राप्तत्वेन प्रत्यासत्तेरनियामकत्वात् न भावार्थाधिकरणन्यायप्रवृत्तिः । **कौ.** २।२।११।२५.

* **भावार्थाधिकरणन्यायः** । 'यजेत स्वर्गकामः' इत्यत्र आख्यातांशेन आर्थी भावना अभिधीयते– भावयेदिति । सा चांशत्रयमपेक्षते १ किं भावयेत्, २ केन भावयेत्, ३ कथं भावयेदिति । तत्र भाव्याकाङ्क्षायां षष्ठाद्यन्यायेन स्वर्गो भाव्यतयाऽन्वेति स्वर्गं भावयेदिति । करणाकाङ्क्षायां समानपदोपात्तो यागो भावार्थाधिकरणन्यायेन करणतयाऽन्वेति यागेन स्वर्गं भावयेदित्यादि । **साहस्री.** ८५१.

* यत्र द्वयोरपि धात्वर्थगुणयोरप्राप्तिः, संभवत्प्राप्तिः, प्राप्तिरेव वा, धात्वर्थस्यैव वा प्राप्तिः तत्र **भावार्थाधिकरणन्यायः** । यथा– 'सोमेन यजेत', 'उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति', 'ऐन्द्रवायवाग्रान् गृह्णीयात् यः कामयेत॰', 'अग्निहोत्रं जुहोति' इत्यादौ । **भाट्ट.** २।२।११. * **भावार्थाधिकरणन्यायेन** कर्मण एव फलाय विध्यवश्यम्भावः । 'कर्मणः फलं' इति भावार्थाधिकरणे साधितम् । **कु.** २।३।४।११. * भावार्थाधिकरणन्यायेन धात्वर्थस्यैव पूर्वप्रवृत्त्या विधेयत्वं अङ्गीकर्तव्यम् । **कौ.** १।४।५।२७, * भावार्थाधिकरणन्यायेन धात्वर्थस्यैव फलसंबन्धोपपत्तिः । २।३।४।६. * भावार्थाधिकरणन्यायेन फले यागविधानात् यागान्तरं ( दाक्षायणयज्ञादिः इति पूर्वपक्षः ) । **वा.** २।३।४।५ पृ. ५९५. * भावार्थाधिकरणन्यायेन यागकरणिकायां भावनायां भाव्यापेक्षायां स्वर्गस्यैव तत्त्वेन अन्वयः । **भाट्ट.** ९।१।४. * अध्ययनं च **भावार्थाधिकरणन्यायेन** भावनायां करणत्वेन अन्वेति । **कु.** १।२।१।१८. * गुण–धात्वर्थयोः उभयोरपि प्राप्तौ भावार्थाधिकरणन्यायेन विशिष्टधात्वर्थस्यैव फलसंबन्धोपपत्तिः दाक्षायणयज्ञादौ (इदं पूर्वपक्षे) । **कस्तूरि.** २।३।४. * धात्वर्थश्च संभवत्प्राप्तिकोऽपि भावार्थाधिकरणन्यायेन प्रयोजनान्तरार्थं विधीयते 'ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्' इत्यादौ । **भाट्ट.** ५।१।१. * धात्वर्थस्य भाव्यत्वात् प्रच्युतस्य भावार्थाधिकरणन्यायेन करणत्वम् । **सोम.** ६।१।१. * भावनायां भावार्थाधिकरणन्यायेन यागादिः करणत्वेन अन्वेति । **कौ.** २।१।२।५ पृ. ४३. * 'मासमग्निहोत्रं जुह्वति' इत्यत्र मासानुवादेन अग्निहोत्रादिकर्मण एव भावार्थाधिकरणन्यायेन विधेयता । **कु.** २।३।११।२४.

* न च गुणभावनायां आश्रयस्यान्वयः संभावयितुं शक्यः ( 'एतस्यैव रेवतीषु वारवन्तीयम्॰' इत्यत्र ) । स हि न तावत् करणत्वेन, तथात्वे **भावार्थाधिकरणन्यायप्रवृत्त्या** तस्यैव फलसंबन्धापत्तेः । **कौ.** २।२।१२।२६.



* **भावार्थाधिकरणन्यायस्वरूपम्**–– 'भावनायाः करणाकाङ्क्षया धात्वर्थकरणत्वलक्षणा यजौ स्यात्, करणाकाङ्क्षा च विधेयायाः भावनायाः स्यात्, नानूद्यमानायाः' इति । **वाल.** पृ. ९७.

* **भावार्थाधिकरणप्रवृत्तेः** 'एकस्मादपूर्वं' इति निर्णयाधीनत्वात् तदुपोद्घातत्वेन प्रतिपदाधिकरणमारभ्यते । **कु.** २।१।१।१.

* भावनाभेदफलीभूतापूर्वभेदोपयोगि**भावार्थाधिकरणरूपोपोद्घातप्रसक्तानुप्रसक्तादौ** समाप्ते अधुना शब्दान्तरात् भेदोऽभिधीयते । **भाट्ट.** २।२।१.

* 'वाक्यार्थः (परिगृह्यते)' इत्यप्ययुक्तम्, **भावार्थाधिकरणविपरीतत्वात्** । ( भावार्थाधिकरणे हि धात्वर्था एव फलभावनायां करणम्, न नामार्था इत्युक्तम् ) । **टुप्.** ७।१।१।२.

* **भावार्थाधिकरणसिद्ध**कर्मफलसंबन्धमूलोऽपूर्वसद्भावः । **रत्न.** ६।१।१।१.

* **भावार्थाधिकरणसिद्धान्तः** ( प्राभाकरमते ) 'क्रियाविशेषितस्य द्रव्यादेर्न विषयत्वम्, द्रव्यादेः क्रियां प्रति उपसर्जनतया सिद्धतया च प्रतीतस्य अपूर्वविषयत्वानुपपत्तेः । धातोः एकफलावच्छिन्नानेकक्रियाक्षणनिचयवाचकत्वेन धातुना अन्योत्पादानुकूलत्वेन अवगतस्य धात्वर्थस्य तदन्यथाऽनुपपत्त्या साध्यत्वेन प्रतीतेः प्राभाकरैरङ्गीकारेण तस्यैव विषयत्वाच्च । अतो भावार्थस्यैव विषयत्वं इति । **सोम.** २।१।१ पृ. ९७.

* **भावार्थपदं** आख्यातप्रत्ययान्तमपूर्वप्रतिपादकम् । **वि.** २।१।१.

* **भावाख्याते** 'स्थीयते' इत्यादौ संख्या अनन्वितैव धात्वर्थान्विता वा । अनुशासनाच्च द्विवचनादीनां असाधुत्वम् । इति वैयाकरणाः । **मणि.** पृ. १०५.

* **भावाख्यातस्थले** संख्याया अन्वयः । 'संख्याया अपि तिङाद्युक्तायाः॰' इति विन्दौ द्रष्टव्यम् ।

* **भावकृतां** तु पाको याग इत्यादौ धात्वर्थमात्रे शक्तिः । कृतेस्तु आक्षेपः । **मणि.** पृ. ११५.

* **भावप्रत्ययः** । गोमतो भावो गोमत्त्वं इति हि 'यन्निमित्तमपेक्ष्यायं गोमच्छब्दः प्रवर्तते । स एव गोमतो भाव उच्यते त्वतलादिभिः ॥' तेन भावप्रत्ययः 'आनर्थक्यात्तदङ्गेषु' ( ३।१।९।१८ ) इति अर्थप्राप्तं संबन्धमवलम्बते निमित्तत्वमपि च तस्य वस्तुलक्षणमस्ति । **वा.** ३।१।६।१२ पृ. ६७७, * भावप्रत्ययः । यत्र उपसर्जनत्वेन ( गुणं ) विवक्षित्वा पश्चात् निष्कर्षविवक्षा भवति, तत्र यस्य गुणस्य भावात् द्रव्ये शब्दनिवेशः तदभिधाने 'त्वतलौ' इति भावप्रत्ययोत्पत्तिः । ३।४।४।१३ पृ. ९२४ पं. १५–१७, * भावप्रत्ययः समवेतगुणग्राही । ३।१।६।१२ पृ. ६७७, * 'शब्दवृत्तिनिमित्ते हि **भावप्रत्यय** इष्यते ।' ३।१।६।१२ पृ. ६७३, * सर्वत्र हि भावप्रत्ययः संबन्धमभिधत्ते राजपुरुषत्वं औपगवत्वं पाचकत्वं इति ( पूर्वपक्षे स्थित्वा ) । ३।१।६।१२ पृ. ६७४. * '**भावप्रत्ययं** विनापि गुणप्रधानो भवति निर्देशः' इति महाभाष्ये व्युत्पादितम् । **सु.** पृ. १४२२. * **भावप्रत्ययेन** विशेषणभूता जातिः निष्कृष्टा अभिधीयते इति गोपदस्य सैव वाच्यत्वेन यथा इष्टा, तथा देवदत्तस्य गोमत्त्वं इत्युक्ते गवि प्रतिपत्त्यभावात् संबन्धनिष्कर्षप्रतीतेश्च स एव भावप्रत्ययार्थोऽध्यवसीयते ( पूर्वपक्षे इदम् ) । **वा.** ३।१।६।१२ पृ. ६७४. * **भावप्रत्ययस्य** त्वतलादेरर्थः **मीको.** पृ. ९३३ 'तद्धितार्थः' इति विन्दौ मणौ द्रष्टव्यः । **मणि.** पृ. १६१–१६२. * भावप्रत्ययस्य लक्षणास्थलमादायैव गुणवाचित्वम्, अन्यत्र च गुणनिष्ठधर्मवाचित्वम् । **कौ.** ३।१।६।१२. * **भावप्रत्ययानां** धात्वर्थातिरिक्तवाच्याभावनियमः । **मणि.** पृ. १०४.

* **भावप्रत्ययार्थः** यः स एव प्रातिपदिकस्य विशेष्ये वर्तमानस्य निमित्तम् ( पूर्वपक्षे ) । **वा.** ३।१।६।१२ पृ. ६७४.

* **भावप्रत्ययार्थवादार्थः** **मीको.** पृ. ६०५ 'अरुणान्यायः' इति भाष्यीयाधिकरणे द्रष्टव्यः ।

* **भावप्रत्ययार्थवादिभिः** एव प्रत्ययार्थलक्षणं प्रणीतम्, नेतरैः । **वा.** ३।४।४।१२ पृ. ९०३.

* **भावप्रधानं** आख्यातम् । आख्याते न कर्ता न क्रिया प्रधानतः । **भा.** ११।१।४।२४. * 'भावप्रधानमाख्यातम्' इति निरुक्तस्मृत्या १।१।९ भावशब्दवाच्यव्यापारस्य प्राधान्यावगतिः । **कौ.** २।१।२।५. * 'भावप्रधानमाख्यातम्' इति स्मृत्या अनेकार्थप्रतिपादकेषु आख्यातेषु भावनाप्राधान्यनियमः क्रियते । **मणि.** पृ. ११२. * 'भावप्रधानमाख्यातम्' इति स्मृतेः आख्याते भावनायाः प्राधान्यम् । **सु.** पृ. ७०१. * **भावप्रधानः** निर्देशः । अन्तरेणापि भावप्रत्ययं प्रत्यययोग्यवस्तुप्रधानो निर्देशः भावप्रधानो निर्देशः इत्युच्यते । तत्र गुणः प्रथममेव स्वप्रधानो विवक्ष्यते । **के.** * भावप्रधानो निर्देशः । कथमन्तरेण भावप्रत्ययं भावप्रधानो भवति निर्देशः इति पृष्टे, भवति यदा प्रथम एव गुणः स्वप्राधान्येन विवक्ष्यते, इति व्याकृतम् । तथाहि 'पूर्वमेव गुणः कश्चित् स्वातन्त्र्येण विधीयते । कश्चित् द्रव्याङ्गभावेन, ततो निष्कृष्य चापरः ॥' यत्र गुणः प्रथममेव स्वप्रधानो विवक्षितः तत्र अनुत्पाद्यैव भावप्रत्ययं विना च सामानाधिकरण्यं संबद्धो भवति 'पटस्य शुक्लः' इति । यत्र तु द्रव्योपसर्जनत्वेन च न निष्कर्षो विवक्ष्यते तत्र सामानाधिकरण्यं भवति 'शुक्लः पटः' इति । यत्र पुनरुपसर्जनत्वेन विवक्षित्वा पश्चात् निष्कर्षविवक्षा भवति, तत्र यस्य गुणस्य हि भावात् द्रव्ये शब्दनिवेशः तदभिधाने त्वतलौ इति भावप्रत्ययोत्पत्तिः । स्वप्राधान्यविवक्षायां तु असौ (गुणः) अनङ्गत्वात् गुण एव न भवति, न तद्द्वारेण द्रव्ये शब्दनिवेशः, तेन नासौ तदा तस्य द्रव्यस्य शब्दप्रयोगं भावयति इति भावप्रत्ययेन नाभिधीयते । पूर्वमेव निष्कृष्टत्वात् निष्कर्षकारिणः प्रत्ययस्य निष्फलत्वं स्यात् । **वा.** ३।४।४।१३ पृ. ९२४ पं. ९–२०.

* **भावप्रधानत्वादाख्यातेषु** न कदाचित् धात्वर्थस्य नित्यं करणभूतस्य प्राधान्यमिति स्थितम् ( भावार्थाधिकरणे ) । **वा.** ३।४।४।१२ पृ. ९०३.

* **भावप्रयुक्तः** साधनग्रामः अपेक्षितः । यजेत केन, किमर्थम्, कथमिति । कर्तृप्राधान्ये कार्याभावात् न साधनाकाङ्क्षया भवितव्यम् । नहि भवति 'पाचकः' केन किमर्थं कथमिति । ( अतः भावप्रधानमाख्यातम् ) । **भा.** ११।१।४।२४.

* **भावविषयः** अन्यतरकोटिव्यवस्थया कोट्यन्तरस्य आर्थिक–व्यवस्थाविधिः यथा, 'पूर्वेद्युरमावास्यायां वेदिं करोति' इति अमावास्यायां पूर्वेद्युर्वेदिकरणे व्यवस्थापिते अर्थात् हविरभिवासनोत्तरं वेदिकरणं पौर्णमास्यां व्यवस्थितं भवति । इदं उदाहरणं पञ्चमे सिद्धम् 'उत्कर्षाद् ब्राह्मणस्य' ( ५।४।४।१० ) इत्यत्र । **बाल.** पृ. १९.

* **भावशब्दश्च** ण्यन्ताद्भवतेः 'एरच्' ( पा० ३।३।५६ ) इत्यचि व्युत्पत्तेर्भावनामाह । **कणिका.** पृ. ३५९. * भावशब्दो मन्त्रगतो न विधायकः, किन्तु अभिधानवाची । २।१।६।३०–३१. * **भावशब्दाः** । कः पुनर्भावः, के ते पुनर्भावशब्दाः इति । यजतिददातिजुहोति इत्येवमादयः । ननु यागदानहोमशब्दा एते, न भावशब्दाः । नैतदेवम् । यागादिशब्दाश्चैते भावशब्दाश्च । यज्याद्यर्थश्चातोऽवगम्यते भावयेदिति च । तथा यजेत यथा किञ्चिद्भवतीति । तेनैते भावशब्दाः । द्रव्यगुणशब्देभ्यो द्रव्यगुणप्रत्ययः, न भावनायाः । अतस्ते न भावशब्दाः । भा. २।१।१।१ पृ. ३७४–३७५, * भावशब्दाः सर्वे प्रधानकर्मणो विधायका उत केचित् संस्कारकर्मणः इति विचारे केचित् भावशब्दाः प्रधानकर्मणः केचित् गुणकर्मणः विधायकाः इति सिद्धान्तः । २।१।३।६–८, * **भावशब्दान्** आख्यातानीति पर्यायशब्देनोपदिशति ( सूत्रकारः ) । २।१।१।४. * **भावशब्दादेवापूर्वम्**, न द्रव्यगुणशब्देभ्यः । २।१।१।१–४.

* **भावना** अंशत्रयमपेक्षते साध्यं साधनं इतिकर्तव्यतां चेति । किम्, केन, कथं इति । **मीन्या.** * भावना अन्योत्पादनानुकूलं व्यापारसामान्यम् । भवितुर्भवनानुकूलो भावकव्यापारो भावना इत्यन्ये । **मीन्या.** * भावना अर्थवादाधिकरणे विशेषतो वर्णिता । **वा.** २।१।१।१ पृ. ३७८. * भावना आख्यातप्रत्ययार्थो भावयितुर्व्यापारः । भावना द्विविधा शब्दभावना, अर्थभावना चेति । लिङ्–लेट्–लोट्–तव्य–प्रत्ययमात्रगता शब्दभावना । सर्वाख्यातगता अर्थभावना । भिन्नासु भावनासु



भावनात्वं सामान्यम् । प्रयत्नः भावना इति पक्षः, स्पन्दः, उभयसाधारणं उदासीनत्वविच्छेदसामान्यम्, धात्वर्थसामान्यं इति च पक्षाः सन्ति, परन्तु अयुक्तास्ते । **वि.** २।१।१ वर्णकं २, * भावना आख्यातप्रत्ययवाच्या, विशेषरूपात् सामान्यरूपाच्च यज्यादिधातुवाच्यात् अन्यैव । २।१।१ वर्णकं २. * भावना । उत्पत्त्याख्य–आद्यभावविकारानन्तरभावित्वात् द्वितीयभावविकाररूपायाः सत्तायाः, तस्याश्च अवस्थाकालभेदेन भेदात् तदनुनिष्पादिसत्ताभेदस्य अवश्यंभावात् सिद्धसत्ताकाः पूर्वे अवयवाः प्रयोजकाः, सत्ताभवनव्यापृत्ताश्च असिद्धसत्ताकाः उत्तरे अवयवाः प्रयोज्याः, सिद्धसत्ताकासिद्धसत्ताकवर्तिसामान्यं भावनाख्यो व्यापारः इति कल्पना अनुसर्तव्या । **सु.** पृ. ५७०. * 'भावनैव च वाक्यार्थः स्वकारकविशेषिता । तस्याश्च ज्ञायते नित्यं भेदः शब्दान्तरादिभिः ॥' यस्मिन् पदसमूहे शब्दान्तरादिभिः न भावनान्तरं प्रतिपाद्यते तस्य एकवाक्यत्वम्, भावनान्तरापेक्षया तु नानात्वम् । **वा.** २।१।१४।४६. * भावनैव सर्ववाक्येषु मीमांसकमते कारकविशिष्टरूपेण वाक्यार्थः, न तु नैयायिकवत् संसर्गः इति 'अर्थैकत्वादेकं वाक्यम्०' २।१।१४।४६ इत्यत्र भाष्ये वार्तिके च उक्तम् । **बाल.** पृ. ७३. * भावना करण–इतिकर्तव्यता–नामपदविशिष्टा विधीयते । **टुप्.** ७।१।१।१. * भावना कर्तारमङ्गं करोति । करोतिसामानाधिकरण्येन आख्यातप्रत्ययस्य तदर्थवाचित्वावगतेः, करोतेश्च धात्वर्थसामान्यवाचित्वे 'पाकं करोति, पाकेन करोति' इति वा धात्वर्थस्य कारकत्वेन करोत्यर्थान्वयायोगापत्तेः धात्वर्थातिरिक्ता भावना प्रत्ययवाच्या कर्तारमङ्गं करोति । कर्तुः अनभिधानपक्षे भावनाक्षेपं विना कर्त्रन्वयानवगतेः अनुष्ठानसिद्ध्यर्थेन च कर्त्राक्षेपस्य अनुष्ठानयोग्यभावनागत्युत्तरकालत्वात् करणाद्यन्वयं च विना अनुष्ठानयोग्यत्वाभावात् कारणत्वेन धात्वर्थस्य अन्वयात् भावनाङ्गत्वं ( कर्तुः ) युक्तम् । अभिधानपक्षे तु आदौ एव कर्त्रन्वयावगतेः सकलकारकसमवधातृत्वलक्षणत्वाच्च कर्तृत्वस्य सकलकारकसमवधानात् प्राक् असिद्धेः, सिद्धे कर्त्रन्वये भावनायाः सिद्ध्यव्यभिचारित्वेन कारकानाकाङ्क्षत्वात् धात्वर्थान्वयानुपपत्तेः भावनायां व्यापृतः कर्ता धात्वर्थं विना भावनां कर्तुमशक्नुवन् आत्मन एव कर्तृत्वसिद्ध्यै धात्वर्थमङ्गं करोति । **सु.** पृ. १३८२–८३. * भावना । कर्तृव्यापारसामान्यरूपैव चासौ तमेव विशेषतः पर्युपस्थापयति । कारकान्तराणि तु धात्वर्थसंबन्धित्वात् सर्वजघन्येतिकर्तव्यतात्मकव्यापारनिबन्धनत्वाद्वा बहिरङ्गतराणि भवन्ति । **वा.** ३।४।४।१३ पृ. ९१७, * भावना केवलप्रत्ययवाच्यैव लभ्यते 'भावयेत्' इति । २।१।१।१ पृ. ३७६. * भावना । क्रतुभावनान्तर्भावो नास्ति अत्यग्निष्टोमादिसंस्थानाम्, तासां फलार्थत्वात् । अग्निष्टोमसंस्था तु क्रतुभावनान्तर्गता । **शा.** ५।३।१३. * 'भावना गम्यमाना च धातुप्रत्ययसंनिधौ । कस्य वाच्येति विस्पष्टं न कदाचित् प्रतीयते ॥' केवलप्रकृतिप्रत्ययप्रयोगाभावात् न विवेको विज्ञायते । शक्यते हि वक्तुं धातुसहितेन प्रत्ययेनोच्यत इति, अथवा प्रत्ययानुगृहीतेन धातुना, अथवा उभाभ्याम् । न च शक्तिकल्पनायां विशेषः, सर्वथा अर्थापत्तिसाम्यात् । न च विवेकज्ञानप्रयोजनमस्ति । **वा.** २।१।१।१ पृ. ३७९ । भावनाया वस्तुतः प्रत्ययमात्रवाच्यत्वेऽपि प्रतीतिमात्रव्यवहारिणा लोकेन विवेक्तुमशक्यत्वादाख्यातपदेन धात्वर्थवत् भावनाऽप्युच्यते इत्येतावदवगम्य, 'पचति' इत्यस्य कोऽर्थः इति पृष्टे धातुमात्रवाच्यत्वेन निश्चितं धात्वर्थं पाकमिति व्याख्याय संमुग्धाख्यातपदवाच्यत्वेन भावनां ख्यापयितुं करोतौ भावयतौ वा प्रयुज्यमाने प्रकृत्यनुग्रहार्थं प्रत्ययमात्रस्य भावनावाचित्वाभावेन अपौनरुक्त्यं मत्वा प्रयोगो न विरुध्यते । **सुधा.** * भावना च कारकेषु वर्तमाना न विकल्परूपेण वर्तते । किं तर्हि ? सर्वेषु युगपत् । **वा.** ३।४।४।१३ पृ. ९१४. * भावना च फलस्योच्यते न क्रियायाः, तृतीयानिर्देशात् 'उद्भिदा यजेत' 'बलभिदा यजेत' इति । स्वर्गस्त्वीप्सितः कामसंयोगात् 'स्वर्गकामः' इति । **भा.** ११।१।४।२४, * भावना तत्र ( यजेत दद्यादित्यादौ ) यद्यपि परो भागः भावनावचनः सर्वेषु समानः, तथापि एकैकस्य पूर्वोऽवयवोऽन्यः, अन्यश्च तेन समुदायः शब्दान्तरमन्यस्मात् समुदायात् । तत्रार्थान्तरं व्यक्तम् । दद्यादिति दानेन साधयेदिति केवलमेव दानं करणं भावनायाः

प्रतीयते । २।२।१।१. * भावना तावत् न धात्वर्थविशेषाद् विना इतिकर्तव्यतां शक्नोति ग्रहीतुम् । **वा.** ३।६।१६।४३ पृ. १०६९, * भावना तु अनुपस्थानाद् भिद्यमानाऽवधार्यते । भावनान्यत्वानन्यत्वपरीक्षावेलायां सत्यपि धात्वर्थैकत्वे भावना तावत् अनन्यप्रमाणत्वात् आख्यातप्रत्ययान्तरेण अनुपनीयमाना न कथंचित् प्रत्यभिज्ञायते इत्युपपन्नं प्रयोजनान्यत्वं ( कर्मान्तरत्वम् ) । २।३।११।२४ पृ. ६१६, * भावना । 'तेन भूतिषु ( भवनेषु ) कर्तृत्वं प्रतिपन्नस्य वस्तुनः । प्रयोजकक्रियामाहुर्भावनां भावनाविदः ॥' ( भवितुर्भवनानुकूलो भावयितुर्व्यापारविशेषो भावना इत्यर्थः ) । २।१।१।१ पृ. ३७८. * भावना त्र्यंशा । त्रितयस्य फलकरणेतिकर्तव्यत्वस्य यजेतेत्यनेन कर्तव्यतोच्यते । यस्यामेव वेलायां स्वर्गो भवने कर्तृत्वं प्रतिपद्यते तस्मिन्नेव क्षणे करणेतिकर्तव्यते अपि व्याप्रियेते । **टुप्.** ५।१।५।८, * भावना त्र्यंशा । प्रकृतौ षोडशी विधीयते 'षोडशिनं गृह्णाति' इति । तत्र विधीयमानस्य त्र्यंशा भावना, किं केन कथमिति । तत्र किमंशं करणोपकारो विपरिवर्तमानो निराकाङ्क्षं करोति । केन इत्यंशं षोडशी । कथमंशं षोडशिन इतिकर्तव्यता या आम्नायते सा निराकाङ्क्षं करोति । तत्र वाक्यं परिसमाप्तम् । न केनाप्यंशेनापरिपूर्णम् । १०।५।९।३७, * भावना द्रव्यदेवताविशिष्टा यागमन्तरेणानाश्रया यागं कल्पयति, प्रकृतं वोपादत्ते । ६।५।१।२. * भावना । ( यजेत इत्यस्य यागेन भावयेत् इति कथमर्थः ? ) द्व्यर्थस्य धातोः भेदेनार्थे कथ्यमाने यागेन इति विशेषरूपं करणात्मना निष्कृष्टम् । इतरत्तु भावनात्मकं सामान्यरूपं शब्दान्तरेण भावयेत् इत्यनेन कथ्यते । **वा.** २।१।१।१ पृ. ३८०. * भावना द्विविधा शब्दभावना अर्थभावना च । तत्र अर्थभावनाविचारः **मीको.** पृ. ६२९ 'अर्थभावना' इति ' बिन्दौ द्रष्टव्यः । शब्दभावनाविचारश्च 'शब्दभावना' इति बिन्दौ द्रष्टव्यः । * भावना धात्वर्थातिरिक्ता कृतिरूपा आख्यातार्थः । आश्रयस्तु आक्षेपलभ्यः । **मणि.** पृ. ११९. * भावना । धात्वर्थवैलक्षण्याख्य–सामग्र्यपेक्षोऽपि भावनाव्यक्तिवैलक्षण्यावभासः बाधाभावात् प्रमाणम् । **सु.** पृ. ७०६.

* भावना नाम भवितुर्भवनानुकूलप्रयोजकव्यापारः । तेन स्वर्गोत्पत्त्यनुकूलव्यापार एव स्वर्गभावना इत्युच्यते । **सोम.** ३।३।४ पृ. २२७. * भावना । पचतीत्युक्ते पाकं करोति इत्येतमर्थं सर्वे जनाः प्रतियन्ति । तत्र पाकः, पक्तिः, पचनं इत्येतैः शब्दैः व्यवह्रियमाणो लिङ्गकारकसंख्यायोग्यो धात्वर्थः सिद्धस्वभावः । करोति इत्यनेन व्यवह्रियमाणो लिङ्गाद्यपेतः साध्यस्वभावः । तत्र सिद्धस्वभावद्योतनाय यथा घञ्–प्रत्ययादयो विहिताः, तथा साध्यस्वभावद्योतनाय आख्यातप्रत्ययविधिः । स च आख्यातप्रत्ययार्थः ओदनोत्पत्तेरनुकूलः । ततो भवितुरोदनस्य प्रयोजकव्यापारत्वात् णिजन्तेन भावनाशब्देनोच्यते इति । अन्ये भावनापक्षा अयुक्ताः । प्रयत्नो भावना इति चेन्न, 'रथो गच्छति' इत्यत्र तदभावप्रसङ्गात् । स्पन्द इति चेन्न, मानसत्यागरूपे यजतौ अव्याप्तेः । उभयसाधारणं उदासीनत्वविच्छेदसामान्यं भावना इति चेन्न, शब्दभावनायामव्याप्तेः । नहि शब्दस्य विभोरचेतनस्य स्पन्दः प्रयत्नो वाऽस्ति । लिङ्लेट्लोट्तव्यप्रत्ययमात्रगता शब्दभावना । सर्वाख्यातगता अर्थभावना । तदुक्तं 'अभिधां भावना( धाभा )माहुरन्यामेव लिङादयः । अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते ॥' इति । किंच स्पन्दादिवादिनोऽपि न स्वरूपेण स्पन्दादीनां भावनात्वमाहुः, किन्तु अन्योत्पादानुकूलं स्वरूपम् । तस्मादस्मदुक्तैव भावना । यथा 'पचति' इत्यत्र ओदनफलोत्पत्त्यनुकूला, तथा 'यजति' इत्यत्र स्वर्गादिफलोत्पत्त्यनुकूला । तस्यां च फलभावनायां प्रत्ययवाच्यायां एकपदोपात्तत्वेन प्रत्यासन्नत्वात् प्रकृत्यर्थः करणं न तु द्रव्यादि, तस्य पदान्तरोपात्तत्वेन विप्रकृष्टत्वात् । साध्यरूपोऽपि प्रकृत्यर्थः स्वसाधननिष्पादितः सन् शक्नोति फलं साधयितुम् । द्रव्यादीनां तु प्रकृत्यर्थोत्पादनेन दृष्ट एवोपकारः । द्रव्यादिनिष्पादितेन धातुवाच्येन यागादिकरणेन स्वर्गादिफलोत्पत्तौ सत्यां येयमनुकूलव्यापारात्मा कृतिशब्दाभिधेया फलोत्पादना, सेयं यज्यादिधातूनामन्यतमेन केनापि नाभिधीयते सर्वधात्वर्थानुयायित्वात् । अतो न भावनायाः प्रकृत्यर्थत्वमाशङ्कितुं शक्यम् । अस्तु तर्हि धात्वर्थसामान्यमेव भावना इति चेत्, न,



प्रतिधात्वर्थं विलक्षणरूपत्वात् । अन्यद्धि पाकस्य ओदनं प्रति आनुकूल्यम्, अन्यच्च चलनस्य संयोगविभागौ प्रति, अन्यथा फलविभागानुपपत्तेः । भिन्नासु भावनाव्यक्तिषु भावनात्वसामान्यमनुवर्ततां नाम, नैतावता प्रकृत्यर्थसामान्यं तत् भवति । तस्मात् विशेषरूपात् सामान्यरूपाच्च यज्यादिधातुवाच्यात् अन्यैव आख्यातप्रत्ययवाच्या भावना । तथा सति 'यजेत' इत्यत्र आख्यातस्य 'भावयेत्' इत्यर्थो भवति । तत्र 'किं भावयेत्, केन भावयेत्, कथं भावयेत्' इत्याकाङ्क्षायां 'स्वर्गं भावयेत्, यागेन भावयेत्, अग्न्यन्वाधानप्रयाजावघातादिभिः उपकारं संपाद्य भावयेत्' इत्येवं भाव्यकरणेतिकर्तव्यतासमर्पणेन आकाङ्क्षापूरणात् प्रकरणाम्नातः सकलः शब्दसंदर्भो भावनावाचिन आख्यातस्यैव प्रपञ्चः । भाव्याद्यंशत्रयवती सेयं आर्थी भावना इत्युच्यते । सा सर्वाऽपि शब्दभावनाया भाव्या, विधायको लिङादिः करणम्, अर्थवादसंपादिता स्तुतिः इतिकर्तव्यता । सेयं शब्दभावना लिङादिभिरेव गम्यते । अर्थभावना सर्वैराख्यातप्रत्ययैर्गम्यते इत्युक्तम् । तस्यां चार्थभावनायां स्वर्गस्य भाव्यत्वं कमियोगादवगम्यते । प्रकृत्यर्थस्य करणत्वं तृतीयाश्रुत्या । तथा च श्रूयते 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'चित्रया यजेत पशुकामः' इति च । तच्च करणत्वं अपूर्वकल्पनामन्तरेण न संभवति इत्यभिधास्यते । **वि.** २।१।१ वर्णकं २. * भावना पुंप्रयाजापरपर्याया । **सु.** पृ. ७४४. * भावना प्रतीतमात्रैव प्राधान्यात् अपेक्षान्तरानधीनत्वाच्च प्रथमं तावत् साध्यांशमपेक्षते 'किं' इति ।... न च बुद्धिपूर्वकारी पुरुषः पुरुषार्थरहितं व्यापारं वचनशतेनाप्युक्तः अनुतिष्ठति । तत्र यदि अस्यां भावनायां अपुरुषार्थः साध्यः स्यात् ततः पुरुषेषु अप्रवर्तमानेषु प्रत्ययस्य प्रयोजकशक्तिः बाध्येत । तेन यद्यपि समानपदोपादानप्रत्यासत्तेः धात्वर्थः साध्यांशपूरणाय उपप्लवते तथापि अयोग्यत्वान्निराक्रियते । नहि प्रत्यासत्तिरेवैका संबन्धकारणं ( किन्तु ) योग्यत्वाद्यपि ।......साध्यं पुनः स्वर्गपशुपुत्रग्रामादि प्रागेव शास्त्रात् सर्वे पुरुषाः प्रतिपद्यन्ते । ततश्च 'भावयेत्, किं' इत्यपेक्षितमात्रे विनैव तावत् शास्त्रेण एतावदवगतम्, पुरुषार्थः कश्चित् इति । तत्र विशेषमात्रमनवगतत्वादपेक्ष्यते । तदपि न साध्यात्मना, किं तर्हि एतद्भावनाविषयत्वेन । ततश्च दूरस्थस्यापि स्वर्गादेरेव कृतास्पदस्य संगतिः ।... ततः अवधृतसाध्यांशा भावना 'केन भावयेत्' इत्येवं करणमपेक्षते । तत्र च शास्त्राधीनप्रवृत्तित्वात् तत्संनिकर्षादौ आश्रीयमाणे प्रमाणान्तराच्च योग्यायोग्यत्वयोरज्ञानात् विध्यविरोधाच्च अत्यन्तप्रत्यासत्त्युपस्थित–धात्वर्थातिक्रमकारणाभावात् सर्वफलभावनानां च केनचित् धात्वर्थविशेषेण विना अनुपपत्तेः यागेन इत्येवं विज्ञायते ।... सेयं भावना अंशद्वयपरिपूर्णा सती सर्वकरणानां उपायाननुगृहीतानां करणत्वानुपपत्तेः 'कथं भावयेत्' इति इतिकर्तव्यतामपेक्षते । सा च प्रत्यक्षादीनां अनुग्राहकदर्शनशक्त्यभावात् अत्यन्तशास्त्रगम्या इति यथासंनिकर्षं तदसंभवाद्वा यथाकथंचित् उपस्थाप्यमाना शास्त्रानुसारेण श्रुत्याद्युपदेशेन चोदनासामान्याद्यतिदेशेन वा अत्यन्तादृष्टोपकारद्वारेण अन्यथाऽनुपपत्त्या कल्प्यते । ततः परिपूर्णत्वादनुष्ठातुं योग्या इति विधीयते, तद्विधानाच्च अर्थापत्त्या यागादिविधानम् । **वा.** ( खण्डशः ) पृ. ३८३–३८६. * भावना । प्रयत्नस्य चेतनधर्मत्वेन चेतनं विना अनुपपत्तेः चेतनस्य प्रयत्ने स्वातन्त्र्येण कर्तृत्वैकान्तिकत्वात् प्रयत्नात्मकभावनाख्यायाः क्रियायाः कर्तृशून्यायाः कस्याश्चिदभावात् कर्तुर्भावनाव्यभिचारायोगः । **सु.** पृ. १३९८, * भावना प्रयत्नाख्या कर्तारं विना न सिध्यति । पृ. १३९७, * भावना । भिन्नधात्वर्थानुष्ठाने प्रयत्नाख्यभावनाव्यक्तिवैलक्षण्यस्य स्वसंवेद्यत्वात् वैलक्षण्यानवभासेन सामान्यस्य ऐक्यं वाच्यम्, तत्तु इष्टमेव । पृ. ७०६, * भावना । यदा च शुद्धभावनाप्रतीत्यभावात् धात्वर्थान्तरानपेक्षत्वात् न विभज्यमानसाकाङ्क्षत्वम्, भावनाभेदे च भावयितव्यापूर्वभेदावश्यंभावात् न संहत्य एकार्थत्वं तदा एकवाक्योपादानाभावादपि धात्वर्थसंपाद्यस्य एकभावनाऽवच्छेदकता न युक्ता । पृ. ७०९. * भावना यावत् किं–केन–कथं-भावैर्न पूर्यते तावत् विधिर्न प्रवर्तते । **वा.** ३।६।६।१७. * भावना व्यापारत्वेन यत्नत्वेन वा प्रत्ययवाच्यो यत्नः । स च नित्यं

सकर्मकः । तस्याश्च भावनायाः मुख्यविशेष्यत्वेनैव अन्वयः । **मणि.** पृ. ११० . * भावना सर्वैः पदैः कारकविशिष्टत्वेन लक्ष्यते, क्रियापदेन तु सर्वकारकविशिष्टत्वेन । बाल. पृ. ७४ . * भावना सर्वविशेषणविशिष्टा विधीयते । **टुप्.** ११।१।१।३ . * भावना । सिद्धभवनानां नियतपूर्वक्षणवर्तित्वेन असिद्धभवनोत्पादकत्वावगमात् व्यापारं च विना उत्पादकत्वायोगात् भवनाख्यस्य अनन्यनिष्ठत्वेन अन्योत्पत्त्यननुकूलत्वात् अवश्यं सिद्धभवनप्रयोजकावयवव्यापारत्वात् तद्-वृत्त्यसिद्धभवनप्रयोज्यावयवनिष्ठत्वाच्च तद्वृत्तिसर्वधात्वर्थानुरञ्जनसहत्वरूपं व्यापारसामान्यमभ्युपगन्तव्यम् । तत् च भाव्यनिष्ठभावकव्यापारत्वेन भाव्यभावकोभयसंपर्कात् भावना इत्युच्यते । **सु.** पृ. ५६९ . * अकर्मकाख्यातानामपि करोतिसामानाधिकरण्यदर्शनात् ‘ किं करोति ? आस्ते, किं करोति ? शेते ’ इति सिद्धा एवमादिषु अपि सकर्मिका **भावना ।** तस्मात् सकर्मकाकर्मकयोरविशेषात् आसनेन भावयेत् इत्यपि प्रयोगसिद्धिः । **वा.** २।१।१।१ पृ. ३८५, * ‘ अर्थादनेकमप्यर्थं विधापयति भावना । विशेषणविधिस्त्वन्यत्र गृह्णाति विशेषणम् ॥ ’ १।४।२।३, * ‘ अस्त्यादावपि कर्त्रंशे भाव्येऽस्त्येव हि भावना । ’ २।१।१।१ पृ. ३८१. * ‘ धात्वर्थः केवलः शुद्धो भावना ’ इति वैयाकरणैः परिभाषितं धात्वर्थप्राधान्यम् । **मणि.** पृ. १११. * न च कृदन्तेष्वपि अत्यन्तं भावना नास्ति, किञ्चिदपकृष्यमाणरूपप्रतीतेः । कृत्येषु तावत् ‘ भोक्तव्यम् ’ ‘ यष्टव्यम् ’ इति किञ्चित् न्यूना आख्याताद् गम्यते । तत्रापि कर्मोत्पन्नेषु द्रव्यप्राधान्यात् ‘ ब्राह्मणो न हन्तव्यः ’ इति भावोत्पन्नेभ्यो न्यूनतरा । एतेन भावकर्मोत्पन्नलकारास्तिङः अपि व्याख्याताः । तेष्वपि हि प्रयोजकव्यापारगुणत्वप्रतीतिः अविशिष्टा । तथा ‘ अव्ययकृतो भावे भवन्ति ’ इति स्मरणाविशेषेऽपि स्वसंवेद्यमीषन्न्यूनभावनाविज्ञानम् । तथा ‘ अभिक्रामं जुहोति ’ ‘ दर्भतरुणकेनोपघातं करोति ’ इति सर्वत्र भावनान्तरसापेक्षा भावना अवगम्यते । पक्वः, पक्ववान् इत्यपि निर्वृत्तरूपभावनोपसर्जनद्रव्यप्रतीतिः प्रत्यक्षा । एवं पाचकादिष्वपि द्रष्टव्यम् । धातवोऽपि भावनां न मुञ्चन्ति । भावना तु समुदायाव्यभिचारात् ( प्रकृतिप्रत्यययोः ) समुदितयोरेवार्थः इत्यपि शक्यं वक्तुम् । तथा च सूत्रकारभाष्यकाराभ्यां ‘ भावार्थाः कर्मशब्दाः ’ इति सामानाधिकरण्यमेवाश्रितम् । **वा.** २।१।१।१ पृ. ३७९–३८०. * निष्ठान्ते पुनर्नास्ति भावना । **टुप्.** ९।१।२।२ . * ( ननु ) पुरुषप्रयत्नश्च विध्युपेता भावनोच्यते । सत्यं भावार्थाधिकरणन्यायेन एवमन्यत्र आश्रितम् । **वा.** २।२।११।२६ पृ. ५४७, * ‘ यथैवांशत्रयापेक्षा भावनाऽन्यत्र गम्यते । तथा गुणविशिष्टायां चतुर्थोऽंशोऽप्यपेक्ष्यते ॥ ’ इति केचित् । २।२।११।२६, * यदि कर्त्रा धात्वर्थेन च भावना गम्येत ततः पाचकादिशब्देष्विव तिरोहितस्वरूपा गम्येत, प्राधान्यप्रत्ययात्तु शब्दार्थत्वाध्यवसानम् । ३।४।४।१३ पृ. ९१३, * शास्त्रे तु सर्वत्र प्रत्ययार्थो भावना इति व्यवहारः । तत्रायमभिप्रायः । ‘ प्रत्ययार्थं सह ब्रूतः प्रकृतिप्रत्ययौ सदा । प्राधान्याद्भावना तेन प्रत्ययार्थोऽवधार्यते ॥ ’ २।१।१।१ पृ. ३८०, * सर्वत्र हि अधिश्रयणादौ करोति इत्यपि सामान्यव्यापारांशः प्रतीयते, पचत्यादिवाच्याः विक्लित्त्यधिश्रयणादयः कर्मस्थाः कर्तृस्थाश्च । तत्र यत् औदासीन्यप्रच्युतिमात्रेण परिस्पन्दरूपं निरूप्यते सा भावना । २।१।१।१ पृ. ३८२ . * धातवो यथा धात्वर्थं न व्यभिचरन्ति तथा **भावनामपि । सु.** पृ. ५६५ . * **भावनया** इतिकर्तव्यता आकाङ्क्षिता किं केन कथमिति । **टुप्.** ७।१।१।१, * ‘ भावनया इतिकर्तव्यता संबध्यते ’ इति न्यायः भाष्ये नवमाद्ये वर्णित एव । ११।१।२।१० ( टिप्पणी ), * भावनया करणेतिकर्तव्यते आकाङ्क्षिते । तत्र करणं फले व्याप्रियते । इतिकर्तव्यता करणमनुगृह्णती आकाङ्क्षिता । ११।१।७।३५ . * भावनया कर्तुरैकान्तिकमुपादानं विशेषरूपेण च । **वा.** ३।४।४।१३ पृ. ९१९ . * **भावनायाः** अंशत्रयं विना नैराकाङ्क्ष्याभावः । **सु.** पृ. ५६८, * भावनायाः अनुवाद्यायाः भाव्येन विशेष्टुमशक्यता । पृ. ८५२. * भावनाया एककर्मकत्वम् । **भाट्ट.** ३।१।७. * भावनायाः करोत्यर्थरूपत्वेन नित्यं कर्मापरपर्यायसाध्यापेक्षत्वेऽपि धात्वर्थस्य करोत्यर्थत्वात् न करणत्वं विना साध्यापेक्षा । **सु.**



पृ. ७६७ . * भावनायाः कर्तृत्वकर्मत्वाक्षेपकत्वं युक्तम्, न वैपरीत्यम् । **मणि.** पृ. ११४. * भावनायास्तावत् न शब्दव्यतिरिक्तं प्रत्यायकं पश्यामः । **वा.** ३।४।४।१३ पृ. ९१३. * भावनायाः धात्वर्थं प्रति विशेष्यता । **रहस्य.** पृ. ४६. * भावनायाः धात्वर्थाधीननिरूपणत्वात् धात्वर्थभेदेन भेदोऽनुमीयते । यत् यदधीननिरूपणं तत् तद्भेदेन भिद्यते इति व्याप्तेः संबन्धिनिरूपणाधीननिरूपणस्य संबन्धस्य संबन्धिभेदेन भेदे दृष्टत्वात् । **सु.** पृ. ७०४, * भावनायाः धात्वर्थानवच्छिन्नायाः धर्मान्वयः संस्थाधिकरणे (३।६।१६) भाष्ये निराकरिष्यते । पृ. १२१६, * भावनायाः धात्वर्थावच्छेदं विना भावनान्तरात् व्यावृत्त्यप्रतीतेः एकभावनावच्छेदकत्वविरोधप्रसङ्गेन एकस्यां भावनायां अनेकानुरञ्जकसमावेशायोगात् अनुरञ्जकभेदः अनुरञ्ज्यभेदमाक्षिपति । पृ. ७०४. * भावनायाः नैमित्तिकस्थले पापक्षयभाव्यकत्वं यावज्जीवाधिकरणे (२।४।१) निरूपितम् । **भाट्ट.** ६।१।१ पृ. २१९. * भावनायाः प्रत्ययमात्रार्थता शास्त्रकाराणामभिप्रेता । **सु.** पृ. ५६६, * भावनायाः भाव्यापेक्षायां धात्वर्थस्य भाव्यत्वसंभवेऽपि विध्यन्वयबलात् पुरुषार्थस्य भाव्यता उक्ता । पृ. ५८२–५८३, * भावनायाः भेदाभेदावधारणं शब्दान्तरादिसदसद्भावाधीनम् । पृ. ६८३ .

*** भावनायाः मुख्यविशेष्यत्वं इति विचारः ।**

**ननु** आख्यातार्थस्य कृतेः मुख्यविशेष्यत्वे मानाभावः । तथाहि । तिङुपात्तैकत्वादिसंख्या तावत् अन्याविशेषणीभूतप्रथमान्तपदोपस्थाप्ये चैत्रादौ आश्रयतासंबन्धेन अन्वेति इति तावत् अविवादम् । स च ‘ चैत्रः ओदनं पचति ’ इत्यत्र कर्त्राख्याते चैत्रः, ‘ ओदनः पच्यते चैत्रेण ’ इत्यत्र कर्माख्याते च ओदनः, तस्यैव अन्याविशेषणत्वात्, इतरस्य कर्मत्वादिविशेषणत्वात् । अत्र च ‘ चैत्र इव गच्छति मैत्रः ’ इत्यादौ चैत्रे प्रथमान्तपदोपस्थाप्येऽपि न तिङुपात्तसंख्याऽन्वयः, तस्य इवशब्दार्थे सादृश्ये प्रतियोगिताकत्वसंसर्गेण विशेषणत्वात् । अपि तु चैत्रे एव । अत एव ‘ चैत्र इव मुखं चन्द्रश्च भासते ’ इत्यत्र उभयत्र संख्याऽन्वयः उभयोरपि अन्याविशेषणीभूतपदोपस्थाप्यत्वात् । भावाख्याते धात्वर्थस्य अन्याविशेषणत्वात् तत्र संख्यान्वयवारणार्थं प्रथमान्तेति । अतश्च तद्वदेव आख्यातोपात्तार्थभावनाया अपि तस्मिन्नेव आश्रयतासंबन्धेन अन्वयः, न तु तस्य मुख्यविशेष्यत्वम् । कालादिव्यतिरिक्ताख्यातार्थप्रकारकबुद्धित्वावच्छिन्नं प्रति उक्तविधप्रथमान्तपदजन्योपस्थितिः कारणं इति एककार्यकारणभावकल्पने लाघवात् । **इति चेत्,**

उक्तप्रथमान्तार्थस्यैव आधेयतासंबन्धेन कृतौ अन्वयस्य कालादिवत् संभवेन तादृशकार्यकारणभावकल्पने एव नियामकाभावात् । नहि आख्यातार्थभावनायाः प्रथमान्तार्थं प्रति प्रकारत्वेनैव अन्वयबोधः इत्यत्र नियामकं किञ्चित् अस्ति, जैमिनिपाणिन्याद्यनुभवविरुद्धानुभवस्य शपथनिर्णेयत्वात् । ‘ तद्भूतानां क्रियार्थेन समाम्नायः ’ ( १।१।७।२५ ) इति जैमिनिना क्रियामुख्यविशेष्यकानुभवस्य उक्तत्वात् । न चैवं **गौतमानुभवोऽप्यस्ति ।**

**किंच,** संख्याया अपि तिङुपात्तायाः नैव नामार्थे चैत्रादौ अन्वयः । तस्य प्रथमोक्तसंख्यावरोधात् ( प्रथमाविभक्त्युक्तैकत्वादिसंख्यया शान्ताकाङ्क्षत्वात् ) । न च तस्याः साधुत्वार्थत्वात् नावरोधकत्वम्, एकपदोपात्तत्वप्रत्यासत्त्या झटिति उपस्थितस्य तस्य अन्वयेन विलम्बोपस्थितायाः तिङुपात्तायाः एव साधुत्वार्थकत्वौचित्यात् । न चैवम् ‘ चैत्रो मैत्रश्च गच्छति ’ इत्यत्र द्वित्वान्वयानुभवानापत्तिः । द्वित्वान्वयानुभववत् सुपा प्रत्येकैकत्वान्वयानुभवस्यापि अपह्नोतुमशक्यतया अवश्यं एकस्यानुभवस्य अशाब्दत्वे वाच्ये पदान्तरोपात्तद्वित्वस्यैव तदौचित्यात् ।

**वस्तुतस्तु,** तिङो लाघवानुरोधेन कृतौ शक्तावपि वक्ष्यमाणरीत्या कर्त्रादेः निरूढलक्षणया भानस्य आवश्यकत्वात् तत्र च एकपदोपात्तत्वप्रत्यासत्त्या संख्याया अन्वयेन न कुत्रापि तस्याः प्रथमान्ते अन्वयः । अतश्च एकपदोपात्तानां एकविशेष्यकत्वं औत्सर्गिकं इतिन्यायेन एककार्यकारणभावकल्पनालाघवानुरोधेन च यदि संख्याविशेष्ये भावनान्वय इत्याग्रहः, तदा अस्तु आख्यातलक्ष्ये एव कर्त्रादौ उभयान्वयः, न तु प्रथमान्तपदोप-

स्थाप्ये । यथा चैवं सति भावनायाः तं प्रति मुख्यविशेष्यत्वं तथा अग्रे निरूपयिष्यामः ।

किञ्च, भवन्मते कालाद्यतिरिक्ताख्यातार्थनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन आख्यातपदज्ञानजन्य–शाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतासंबन्धेन प्रथमान्तनामपदजन्य–अन्याविशेषणीभूतार्थविशेष्यकोपस्थितित्वेन कारणतेत्येवं कार्यकारणभावः पर्यवसन्नः । न चासौ संभवति । 'न पचति चैत्रः, पचत्येव चैत्रः, पचत्यपि चैत्रः' इत्यादौ आख्यातार्थभावनायाः चैत्रे एव अन्वयप्रसङ्गेन नञर्थे अभावे एवकारार्थान्ययोगव्यावृत्त्या एकदेशभेदे अपिशब्दार्थभूते समुच्चये वा अन्वयानापत्तेः । तत्र चैत्रे संख्यान्वयेन 'भावनाविशेष्ये संख्याऽन्वयः' इति नियमस्यापि व्यभिचारापत्तेश्च । अत एव निपातासमभिव्याहृतत्वं नाख्यातेत्यस्य विशेषणम्, संख्यायाः चैत्रे अन्वयानापत्तेः । न च उक्तकार्यकारणभावे तेन विशेषणेऽपि निपातसमभिव्याहृतस्थले संख्याभावनयोः पृथक् कार्यकारणभावमङ्गीकृत्य स्वस्वविशेष्ये अन्वयोपपत्तिः, अनेककार्यकारणभावकल्पनाऽऽपत्तेः । अस्मन्मते तु एककार्यकारणभावेनैव वक्ष्यमाणरीत्या सर्वेषां भावनान्वयेन भावनाया मुख्यविशेष्यत्वात् तदनापत्तिः ।

किञ्च, सर्वनिपातसाधारण्येनापि नैकरूप्यम् । 'चैत्र एव पचति, घट एव दृश्यते' इत्यादौ निपातसमभिव्याहारेऽपि उभयोरपि संख्याभावनयोः चैत्रान्वयप्रतीतेः । **न च** क्रियासमभिव्याहृतस्थले एव संख्याभावनयोर्वैरूप्यं नान्यत्र इति नियमोऽपि संभवति, 'पचति न चैत्रः, चैत्रो न पचति' इत्यादौ उभयथाऽपि वैरूप्यात् । अतो भवन्मते कार्यकारणभावानन्त्यात् व्यभिचाराच्च न प्रथमान्तपदोपस्थाप्यस्य भावनाविशेष्यत्वम् ।

अपि च 'ओदनं पचति' इत्यत्र प्रथमान्तपदाभावे कारणाभावादेव भावनाप्रकारकबोधानुपपत्तेः इतरसामग्रीवशात् भावनाया मुख्यविशेष्यत्वे बाधकाभावः । **न च** अनुभवानुरोधेन भावनाप्रकारकबोधत्वावच्छिन्नं प्रत्येव आख्यातपदज्ञानस्य कारणत्वं कल्पयित्वा तादृशबोधार्थं प्रथमान्तपदाध्याहार इति **वाच्यम्** । अनुभवस्य शपथनिर्णेयत्वेन तत्कार्यकारणभावकल्पने गौरवात् ।

न च तवापि 'पण्डितश्चैत्रः' इत्यादौ आख्यातपदाभावे प्रथमान्तस्य मुख्यविशेष्यत्वापत्तिः, सुबर्थप्रकारकबोधत्वावच्छिन्नं प्रत्येव सुब्ज्ञानस्य कारणत्वात्, वक्ष्यमाणरीत्या प्रथमाया अपि संख्यातिरिक्तार्थसद्भावाच्च । अनतिरिक्तत्वेऽपि प्रथमान्तनामपदोपस्थाप्यप्रकारकबोधत्वावच्छिन्नं प्रति प्रथमान्तपदज्ञानस्य कारणत्वकल्पनेन तादृशस्थले आख्यातपदाध्याहारोपपत्तेः । न च विनिगमनाविरहः 'अस्तिर्भवन्तीपरः प्रथमपुरुषे अप्रयुज्यमानोऽप्यस्ति' (भवन्तीपरः लट्परः) इति स्मृत्यनुमतत्वेन तस्य अदोषत्वात्, तादृशानुशासनज्ञानाभावे निरुक्तबोधस्य इष्टत्वाच्च ।

किञ्च, भावनाप्रकारकबोधत्वावच्छिन्नं प्रति आख्यातपदज्ञानत्वेन कारणत्वे 'चैत्रेण सुप्यते, गगनेन स्थीयते' इत्यादिभावाख्यातस्थले प्रथमान्तपदाध्याहारापत्तिः । अथ तत्र आख्यातार्थविशेष्यकबोधमेव अङ्गीकृत्य कारणतावच्छेदके भावभिन्नत्वं निवेश्यते, तदा तदपि गौरवम् । अस्मन्मते तु सर्वत्र आख्यातार्थविशेष्यकत्वात् भावाख्यातस्थले च कर्तुरनभिधानेन प्रथमान्तस्य अप्रसक्तिः । किञ्च, यदि अन्याविशेषणीभूतप्रथमान्ते भावनासंख्ययोरन्वयः तदा 'चैत्र एव पचति, घट एव दृश्यते' इत्यादौ कुत्र भावनासंख्ययोः अन्वयः कथं वा शाब्दबोधः ? न तावत् चैत्रादौ, तस्य एवकारार्थभूतान्ययोगव्यावृत्त्येकदेशे भेदे प्रतियोगिताकत्वसंसर्गेण विशेषणत्वात् । नापि एवकारार्थभूतायां व्यावृत्तौ प्रतियोगिताकत्वसंसर्गेण भावनायाः, आश्रयतासंसर्गेण च एवकारार्थभूते अन्यस्मिन् संख्याया अन्वयः, तयोः प्रथमान्तपदोपस्थाप्यत्वाभावात् । न च अव्ययोपरिसुपो लोपेन 'दधि तिष्ठति' इतिवत् प्रथमान्तत्वाविशेषः । तथात्वेऽपि चैत्रे पाकभावनान्वयानुपपत्तेः । चैत्रान्येषु बहुष्वपि 'चैत्र एव पचति' इति एकवचनप्रयोगाच्च । **अत एव** –पचतिपदस्य व्युत्पत्तिवैचित्र्येण वारद्वयं अन्वयमङ्गीकृत्य 'पाकानुकूलकृतिमच्चैत्रभिन्नः पाकानुकूलकृत्यभावाश्रयः' इत्येवं एवकारार्थैकदेशविशेष्यकशाब्दबोधः–**इत्यपास्तम्**, तद्बहुत्वेन एकवचनस्य तत्रान्वयानुपपत्तेः । चैत्रस्य अन्यविशेषणतया तत्रापि अन्वयानुपपत्तेश्च । **न च** चैत्रपदस्य विशेष्यतया



विशेषणतया च वारद्वयं अर्थबोधकत्वम्, ततश्च पाकानुकूलकृतिमांश्चैत्रः, पाकानुकूलकृत्यभाववांश्च चैत्रान्यः इति शाब्दबोधः, इतराविशेषणत्वं च विशेष्यत्वाभावविशिष्टं यत् विशेषणत्वं तदभावः इति **वाच्यम्** । तथात्वेऽपि 'चैत्रो मैत्रश्च गच्छतः' इति 'चैत्रो मैत्रादयश्च गच्छन्ति' इतिवत् द्विवचनबहुवचनयोरपि आपत्तेः । न च 'चैत्रो गच्छति न मैत्रः' इतिवत् एकवचनोपपत्तिः, तथात्वे तत्र गच्छतिपदानुषङ्गेण भिन्नवाक्यत्ववत् इहापि मुख्यविशेष्यभेदेन भिन्नवाक्यत्वापत्तेः । अस्मन्मते तु चैत्रवृत्तिः चैत्रान्यवृत्तिश्च एककर्तृका भावना इति बोधः । भेदे च चैत्रप्रतियोगिकत्वं पार्ष्ठिकं एवकारस्यैव वा तत्र लक्षणा इति न विरोधः ।

वस्तुतस्तु पचति चैत्रे, मैत्रे चापचति 'कीदृशौ चैत्रमैत्रौ' इति प्रश्ने 'चैत्र एव पचति' इत्युत्तरापत्तिः । अत एव 'कीदृशश्चैत्रः' इति प्रश्ने 'पचति' इत्युत्तरापत्तेः न प्रथमान्तविशेष्यको बोध इत्युक्तम् । 'कीदृशी कृतिः' इति प्रश्नोत्तरं तु न लिङ्गानास्कन्दितत्वात् इत्यप्युक्तम् । अतः अनुभवसिद्धमेव भावनामुख्यविशेष्यकत्वम् । **रहस्य.** पृ. २५–३० .

तदपि च (आख्यातेऽपि कर्तृत्वादिलक्षणा इति पूर्वमुक्तम् । तदपि कर्तृत्वादिकमपि) न भावनां प्रति विशेष्यम्, किन्तु भावनैव तद्विशेष्या । इतरथा 'पचति ब्रूते' इति प्रयोगापत्तिः, 'पक्त्वा ब्रूते' इतिवत्, तस्य योग्यत्वात् । 'पचति भवति' इति भाष्योदाहृतप्रयोगानापत्तेश्च । यत्तु 'अपाक्षीत् भवति, पक्ष्यति भवति' इति तदुदाहृतप्रयोगः स च भूधातुना युक्तत्वलक्षणया भूत–भाविपाकभावनावृत्ति–वर्तमानयुक्तत्वाश्रयत्वं इति शाब्दबोधाङ्गीकारात् नायुक्तः । दृश्यते च युज्यते इत्यर्थे लोके भवति इति प्रयोगः । एवं 'पचति भवति' इति प्रयोगोऽपि कर्तृविशेष्यत्वपक्षे नोपपद्यते । तथात्वे 'पचन्ति भवन्ति' इति प्रयोगापत्तेश्च । 'भावप्रधानमाख्यातम्' इति निरुक्तस्मृत्या 'भावनातिरिक्ताख्यातार्थमात्रं प्रति भावपदवाच्यभावनायाः विशेष्यत्वोक्तेश्च । अत्र हि न प्रकृत्यर्थं प्रति भावनायाः प्राधान्यं बोध्यते ।

'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः तयोस्तु प्रत्ययः प्राधान्येन' इति स्मृत्यैव प्रकृत्यर्थनिरूपितप्रत्ययार्थप्राधान्यस्य सुबर्थसाधारण्येन सिद्धेः ।

**न च** 'धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते' इति वैयाकरणस्मृत्यनुरोधेन भावशब्दस्य धात्वर्थपरत्वावसायात् तस्यैव आख्यातार्थापेक्षया प्राधान्यं अनया स्मृत्या ('भावप्रधानमाख्यातम्' इत्यनया) नियम्यते, प्रत्ययार्थप्राधान्यस्मृतिस्तु सामान्यविषयत्वात् सुबर्थाभिप्रायेण व्याख्येया इति वैयाकरणमतमेव युक्तं इति **वाच्यम्** । एतस्य परिभाषारूपत्वेन नदीवृद्ध्यादिवत् अन्यत्राप्रवृत्तेः । अत एव व्याकरणशास्त्रे एव तस्य 'भावे घञ्' (पा० ३।३।१८) इत्यादौ प्रवृत्तिः । साऽपि न सर्वत्र 'भावे त्वतलौ' इत्यादौ अप्रवृत्तेः । अतश्च निरुक्तभावशब्देन णिजन्तभूधातोः अच्प्रत्ययान्तत्वव्युत्पत्त्या भावनानुकूलव्यापाररूपा भावनैव उच्यते । न धात्वर्थः ।

**अत एव** –'सर्वमाख्यातजं नाम' इति स्मृत्या आख्यातशब्दस्य धातुपरत्वावसायात् अनयाऽपि स्मृत्या धातोरेव भावप्राधान्यनियमात् धात्वर्थमुख्यविशेष्यकत्वोपपत्तिः– **इत्यप्यपास्तम्** । कृदन्ते पाचकपदादौ आख्यातशब्दप्रयोगाभावेन तत्रत्याख्यातशब्दस्य धातौ लाक्षणिकत्वस्य कौस्तुभे व्युत्पादितत्वात् । अतश्च आख्यातार्थानेकत्वे कस्य प्राधान्यम्, कस्य वा गुणत्वं इत्यपेक्षिते 'भावप्रधानमाख्यातम्' (निरुक्त १।१) इति स्मृत्या भावनातिरिक्ताख्यातार्थं प्रति भावनाया एव प्राधान्यं इति नियम्यते । अत एव कालादिसाधारण्येन एकः कार्यकारणभावः इत्यपि लाघवम् । **रहस्य.** पृ. २८–२९, * भावनायाः मुख्यविशेष्यत्वम् । भावनातिरिक्ताख्यातार्थस्य सर्वस्य भावनायामेव प्रकारता इति तस्या मुख्यविशेष्यत्वं सिद्धम् । पृ. ४६. * भावनायाः वाक्यार्थत्वम् । सु. पृ. ६८३, * भावनायाः संनिपत्योपकारीतिकर्तव्यतान्वयमात्रेण इतिकर्तव्यताकाङ्क्षानिवृत्तेः आरादुपकारीतिकर्तव्यतानाकाङ्क्षत्वम् । (पूर्वपक्षे) । पृ.११९३, * भावनायाः साध्यसाधनेतिकर्तव्यतारूपांशत्रयाकाङ्क्षत्वम् । पृ. ४४९, * धात्वर्थाविधानेऽपि प्रत्ययार्थभूतायाः **भावनायाः** विशेषणपरेऽपि विधौ विधिरभ्युप-

गम्यते । पृ. ११३२, * शुद्धभावनाया: विधिविषयत्वायोग: । पृ. ९५४. * **भावनायां** इष्टरूपं फलं अस्ति न वा इति विचार: 'स्वर्गकामाधिकरणम्' इति बिन्दौ **भाट्ट**-ग्रन्थे द्रष्टव्य: । * भावनायां धात्वर्थस्य कर्मत्वकरणत्वान्यतरसंसर्गेण प्रकारता । **रहस्य.** पृ. ५७. * भावनायां प्राप्तायां गुणफलयोर्द्वयो: अन्वयायोग: । **सु.** पृ. ८५३. * भावनायां याग: करणम्, अवघातादय: संनिपातीनि अङ्गानि, प्रयाजादीनि आरादुपकारकाणि अङ्गानि । यथा भोजने ओदन: करणं शाकसूपादय: संनिपत्योपकारिण:, पीठदीपादय: आरादुपकारिण: तद्वत् । **वि.** ८।१।३ वर्णकं २. * ब्राह्मणे अग्निहोत्रादिवाक्यै: साध्यसाधनेतिकर्तव्यतावत्यां **भावनायां** पुरुषा नियुक्ता: । **वा.**२।१।१४।४६ पृ. ४४४ पं. ८. * वस्तुतस्तु यस्मात् प्रत्यय: कृतधात्वर्थावच्छेदमेव स्वार्थे वदति तस्मात् फलवाक्येऽपि शुद्धभावनानवगते: नैकस्यां भावनायां अनेकधात्वर्थावच्छेद: संभवति । **सु.** पृ. ७०७. * आसितिष्ठत्यादिषु करणानपेक्षणात् चलनपतनादिषु च आधारानाश्रयणात् अकर्मकेषु कर्माभावात्, आसनस्थानवचनादिषु संप्रदानापादानाभावात् कर्तैव सर्व**भावनासु** एकान्तसंनिहित: । **वा.** ३।४।४।१३ पृ. ९१४.

* **भावनातिरिक्ते** नञ: संबन्धात् पर्युदास: । 'नेक्षेतोद्यन्तमादित्यम्' इत्यत्र । **भाट्ट.** ४।१।३.

* **भावनार्थे** करोतिभावयतिभ्यां कथितेऽपि कर्तृसंख्यादिप्रत्यायनार्थं पुन: प्रत्यय: उच्चार्यते । **वा.** २।१।१।१ पृ. ३७९.

* अकर्मकधातुयुक्तादपि आख्यातात् **भावनावगति:** । **वा.** २।१।१।१ पृ. ३८४–८५.

* **भावनाक्षेपादेव** कर्तृप्रतीतिसिद्धे: आख्यातस्य कर्तृवाचित्वं कर्त्रधिकरणे ( ३।४।४ ) निषेत्स्यते । **सु.** पृ. ५४७.

* **भावनोपसर्जन**धात्वर्थनिष्पत्त्यर्थत्वात् कारकाणां धात्वर्थेनैव संबन्धसिद्धि: । स एव हि तानि स्वसिद्ध्यर्थमपेक्षते, भावनाऽपि च तथाभूतान्येव तानि गृह्णातीत्यविरुद्ध: संबन्ध: । **वा.** २।१।१।१ पृ. ३८२.

* **भावनाकरणत्वं** धात्वर्थस्यैव, न द्रव्यगुणयो: । **मीन्या.** * भावनाकरणत्वं लिङादिज्ञानस्य भावनाभाव्यनिर्वर्तकत्वेन । **मीन्या.**

* **भावनाकर्म** यत् अन्यप्रेरितेन पुंसा अनुष्ठितकर्मणि कदाचिदुत्पद्यते कुतश्चिद्वा कारणान्न कदाचिदुत्पद्यते तत् नियोगप्रयुक्तत्वात् नियोगस्य च भावनाविषयत्वात् भावनाकर्म । **सु.** पृ. ५८५.

* '**भावनात:** प्राप्तत्वात् ( कर्तृकर्मणो: प्रत्ययेन ) कारकानभिधानं इति न्याय: । एतदर्थक एव 'अन्यत: प्राप्ते कर्तृकर्मणोरवाच्यता' इति न्याय: । 'एवं वर्ण्यमाने लौकिकन्यायानुगत: ( पाणिनि– )सूत्रार्थो वर्णितो भवति । सूत्राक्षराणि च न्यायानुगतानि भवन्ति' इति शाबरं भाष्यम् । अत्र वार्तिकम्– एवं च व्याख्यायमाने यत् लौकिकेन न्यायेन 'भावनात:... धानम्' अवगतं तदपि अनुगतं सूत्रैर्भविष्यति । **वा.** ३।४।४।१३ पृ. ९२६.

* **भावनात्वम्** । भूतभविष्यद्वर्तमानापदेशमात्रेष्वेव अपारमार्थिकं भवितृव्यापारस्य भावनात्वम्, न विध्यादिषु । **वा.** २।१।१।१ पृ. ३८१.

* **भावनाद्वयम्** । इह हि लिङादियुक्तेषु वाक्येषु द्वे भावने गम्येते शब्दात्मिका अर्थात्मिका च । तत्र अर्थात्मिकया अर्थवादा: नापेक्ष्यन्ते । शब्दात्मिकया तु ग्रहीष्यन्ते । सा हि एवं प्रवर्तते, स्वाध्यायाध्ययनविधिना इतरे सर्वे विधायका: स्वाध्यायपदोपात्तश्च आत्मा नियुज्यते भावयेदिति । तत्र लिङादीनां प्रयोजककर्तृत्वं पुरुष: प्रयोज्य:, तेन किं इत्यपेक्षायां पुरुषप्रवर्तनं इति संबध्यते । अथ तु योग्यतयैव लिङादिविषया क्रियोच्यते प्रवर्तयेदिति तत: किमिति अपेक्षिते पुरुषं इत्येव संबध्यते । यद्यपि च अचेतनत्वात् लिङादिषु एवंविधं प्रयोजकत्वं न संभवति तथापि पुरुषस्य प्रयोज्यस्य प्रयोजकत्वानुपपत्ते: तद्गतचैतन्यद्वारेण विधायकानां प्रयोजकता । यदि चैवं न कल्प्येत, नैवैषां विधायकत्वव्यपदेशो भवेत् । अथ केनेत्यपेक्षिते पूर्वसंबन्धानुभवापेक्षेण विधिविज्ञानेन इति संबध्यते । कथं इति प्राशस्त्यज्ञानानुगृहीतेन इति । कुत एतत् ? बुद्धि-



पूर्वकारिणो हि पुरुषा: यावत् प्रशस्तोऽयं इति नावबुध्यन्ते तावन्न प्रवर्तन्ते । तत्र विधिविभक्ति: अवसीदति तां प्राशस्त्यज्ञानं उत्तम्नाति । तच्च पुरुषार्थात्मके फलांशे सर्वस्य स्वयमेव अनुष्ठानं भवतीति प्रसिद्धत्वात् न वेदादुत्पद्यमानमपेक्ष्यते । साधनेतिकर्तव्यतयोस्तु अप्रवृत्तपुरुषनियोगात् शास्त्रमेव प्राशस्त्यप्रतिपादनाय आकाङ्क्ष्यते । **वा.**१।२।१।७ पृ.११४ पं.१३–२७.

* **भावनापदस्य** व्यापारवाचकत्वम् । **मणि.** पृ. ९०.

* **भावनापदप्रवृत्तिनिमित्तं** कर्मकरणेतिकर्तव्यतारूपांशत्रयसाकाङ्क्षत्वमेव शब्दार्थभावनोभयगतम् । **मणि.** पृ. ९१.

* **भावनाप्रधाना**ख्यातवादिन: मीमांसका: । **सु.** पृ. १३७०.

* **भावनाप्रमाणम्** । नच करोतिसामानाधिकरण्यातिरिक्तं आख्यातेषु अपि भावनाप्रमाणं विद्यते । **वा.** २।१।१।१ पृ. ३८०.

* **भावनाभेद:** अभ्यासात्, धर्मभेदश्च भावनाभेदात् 'समिधो यजति, तनूनपातं यजति' इत्यादौ । **वि.** २।२।२, * भावनाभेद: शब्दभेदात्, कर्मभेदश्च भावनाभेदात्, 'यजेत, ददाति, जुहोति' इत्यादौ । २।२।१.

* **भावनावचन:** 'यजेत' इति ( शब्द: ) यस्य पर: श्रुत: तस्यैव श्रुत्या कारणतामाह । **टुप्.** ४।४।१।२.

* **भावनावाचि** यजति, ददाति इत्याद्याख्यातमेव अपूर्वं प्रतिपादयति । **वि.** २।१।१ वर्णकं २.

* **भावनावाचित्व**माख्यातस्य । सिद्धभवनानामवयवानां भावनाख्यो व्यापारो भवतिपदेन भवनं करोति इत्यभिधानादुच्यते । असिद्धभवनावयवव्यापारस्तु धातुमात्रेणोच्यते इत्यङ्गीकृत्य प्रयोज्यनिष्ठप्रयोजकव्यापाररूपभावनावाचित्वं आख्यातस्योक्तम् । **सु.** पृ.९७१.

* **भावनाविधानार्थं** यजतिशब्द: । **भा.** ११।१।३।११.

* **भावनाविधिपूर्वकश्च** सर्वत्र धात्वर्थकारकविधिर्भवति । **वा.** १।४।६।९ पृ. ३४२.

* **भावनाविवेक:** ।

**संसर्गमोहितधियो विविक्तं धातुगोचरात् ।**
**भावात्मानं न पश्यन्ति ये तेभ्य: स विविच्यते ॥**

[ **उम्बेक:**– पचतीत्यादिशब्देभ्यो धात्वर्थसंसृष्टैव भावना प्रतीयते न तद्विविक्ता । अतो लाक्षारक्तमिव स्फटिकं धात्वर्थसाध्यं मन्यमानेभ्यो भ्रान्तेभ्य: स्वाभाविकसाध्यत्ववर्जितं संयोगविभागात्मकपाकादिधात्वर्थेभ्यो भावासंस्पर्शकृतं साध्यत्वं अनुभवद्भ्यस्तद्विवेक: प्रतिपाद्यते इति श्लोकार्थ: । कर्तव्यं च पाकादिधात्वर्थेभ्यो भावनाविवेकप्रतिपादनम् । तदभावे 'यजेत स्वर्गकाम:' इत्यस्य वाक्यस्य 'यागेन भावयेत् स्वर्गम्' इत्येतस्मिन्नर्थे प्रामाण्यं न स्यात् । ]

**तथा ह्याहु:**—

**सामानाधिकरण्यात्तदर्थभेदाभिधाऽनुमा ।**
**न तादर्थ्यानुमानाद्वा वृक्षतां शिंशपाश्रुति: ॥**

[ **उम्बेक:**– किं करोति ? पचति इति सामानाधिकरण्यात्तदर्थविशेषाभिधाय्याख्यातमित्यनुमानं प्रवर्तते न करोत्यर्थाभिधायीति । 'वृक्ष: शिंशपा' इत्येवमादौ सामान्यविशेषवचनयो: सामानाधिकरण्यदर्शनात् । न हि वृक्षत्वसामान्यवचन: सन् शिंशपादिशब्दो वृक्षशब्देन सह समानाधिकरण: प्रयुज्यते, अपि तु तद्विशेषवचन इति श्लोकार्थ: । ]

इह खलु गगनशशविषाणयो: अक्रियमाणत्वात् अभवतो: भवतश्च घटादेस्तथात्वाद्भवत्यर्थस्य कर्तु: करोतिकर्मता । तथा च भवितु: करोत्यर्थस्य कर्ता प्रयोजक इति भवते: प्रयोजकव्यापारे णिजुत्पद्यमान: करोत्यर्थमवलम्बते । तेन सा भावना, करोतिसमानाधिकरणाश्च पचत्यादय इति तेषां तदर्थत्वानुमानम् ।

तदसत् । एकाधिकरणता हि तदर्थभेदाभिधाननिमित्तं नैकार्थ्यमवगमयति । तादृशो: सहप्रयोगानुपपत्ते: । न खलु वृक्षता शिंशपादिशब्दगोचर: अपि तु अभिधेयपरिप्रापिततया गम्यमाना । तदिदमैकाधिकरण्यं स्फुटं विपर्ययसाधनम् ।

विशेषाभिधानोन्नयनमेवेत्थम्, इति चेत्, न, तस्याः प्रत्ययार्थत्वेनाभ्युपगमात्। प्रत्ययस्य चैकत्वे वाचकभेदादृते वाच्यनानात्वायोगात्।

धातवस्तु नानात्मानः करोतिसमानाधिकरणतया तदर्थभेदाभिधायिन इति सांप्रतम्।

अपि च—

**भावाभावे प्रयोगस्य द्विधाऽपि खलु दर्शनात्।**
**धात्वर्थवर्ति सामान्यं करोत्यर्थमुपागमत्॥**

'किं करोति, घण्टा ध्वनति' इति न ध्वनिजन्यमन्यत्। सदपि वा न विवक्षितं धात्वर्थमात्रजिज्ञासनात्। तथा च नाभूतप्रादुर्भावनम्। अतो वस्तुतस्तदभावेऽपि प्रयुज्यमानस्य करोतेरिह कुतस्तदर्थः?।

तथा 'का क्रिया? पाकः' इति धात्वर्थमात्रस्यात्र जिज्ञासनात् भावनायास्त्वपरामर्शात् भावनाविशेषनिमित्तमैकाधिकरण्यम्। गम्यमानापेक्षमिति चेत्, न, तिङन्तेष्वपि प्रसङ्गात्। प्राधान्यात्तिङन्तेष्वभिधेयत्वमिति चेत्। न, इहापि तद्विशेषप्रश्नात् धात्वर्थस्य तल्लक्षणार्थत्वात् प्राधान्यमभिन्नम्। अतः सकलधात्वर्थानुयायिनः करोतेः तत्सामान्यमर्थो नाभूतप्रादुर्भावनमिति शब्दप्रवृत्तिविदः प्रतिपेदिरे।

तथा चोचुः 'क्रियावचना धातवः। कथं ज्ञायते क्रियावचनाः पचत्यादयः इति? यदेषां करोतिसामानाधिकरण्यम्। कृभ्वस्तयः क्रियासामान्यवचनाः, क्रियाविशेषवचनाः पचत्यादयः।'

अथ मतम्, न भाव्यरहितो धात्वर्थः। सर्वेण तेन किञ्चिदसन्न्यते। तत्र,

**सर्वत्र यदि धात्वर्थे भाव्यं सैवास्तु भावना।**
**स्वर्गभूतिसमर्थोऽन्यो व्यापारः कोऽनुपागतः॥**

भाव्यभवनसमर्थो हि व्यापारो भावना। धात्वर्थ एव चेत् कस्यचिदात्मलाभानुकूलात्मा स एव भावनाऽस्तु, न तदतिरिच्यमानशरीरा। एवं चेन्न खलु स्वर्गादिफलोदयानुकूलं यागादिधात्वर्थभेदप्रभाव्यं व्यापारान्तरमुपलभामहे यत् भावनाशब्दोऽभिनिविशेत। यागादय एव तु स्वर्गादिफलोदयाय नोदितास्तत्समर्थतया तथा व्यपदेशमर्हन्ति। अव्यापाररूपत्वात् धात्वर्थस्य नैवमिति यदि मन्येत। वक्तव्यः स व्यापारो यदि समीहितकार्योपजननागुणः साध्यस्वभावो धर्मभेदः तदपेक्षया तथा व्यपदेश्यो न धात्वर्थस्तथाविधत्वमतिवर्तत इति।

अथ परिस्पन्दस्तदा तदात्मना 'धात्वर्थानामविहतं भावनात्वम्। अस्पन्दमानसाधनेषु 'आस्ते' 'शेते' 'यजते' 'जानाति' इति चात्मकर्तृकेषु तदभावप्रसङ्गः।

[उम्बेकः— **अपरेषां तु दर्शनम्**— आत्मकर्तृकः प्रयत्नो भावना भूतादिकर्तृकायागादिधात्वर्थात् व्यतिरिक्तः। स चाख्यातप्रत्ययवाच्यः। तस्य स्पन्दमानास्पन्दमानसाधनेषु 'पचति' 'गच्छति' 'आस्ते' 'शेते' 'यजते' 'जानाति' इत्यादिषु च संभवात् सर्वत्राख्यातमर्थवदिति नास्ति अव्याप्तिदोषः। तच्चैतद् दूषणायोपन्यस्यति।

व्यापारोऽपि भावना।

**कर्त्रन्तरेऽस्य नाख्यातं धीसाम्यान्नोपचारतः।**

[उम्बेकः— 'कूलं पतति' 'रथो गच्छति' 'अग्निर्ज्वलति' इत्यादिकूलादिकर्तृषु प्रयत्नाभावादाख्यातप्रयोगानुपपत्तिरित्यर्थः।]

योऽपि मन्यते सकलपुरुषप्रत्यात्मवेदनीयश्चेतनस्यात्मनः [उम्बेकः— 'सकलपुरुषप्रत्यात्मवेदनीयश्चेतनस्यात्मनः' इति मानसं प्रत्यक्षमुपन्यस्तम्।] औदासीन्यप्रच्युत्युपलक्ष्यमाणात्मा प्रयत्नादिशब्दप्रवेदनीयो व्यापारो भावना। कर्त्रन्तरेऽस्य नाख्यातं प्रयुज्येत 'कूलं पतति, रथो गच्छति, अग्निर्ज्वलति' इति।

अपि च—

**धातुगोचरनिर्वृत्तिपर्यन्तत्वाच्च कर्मता॥**
**सर्वत्र तस्य न परः करणाभिमतेऽप्यसौ॥ इति।**

[उम्बेकः— यत्रापि धात्वर्थस्य कामाधिकारे करणत्वं सर्वमीमांसकैरिष्टं तत्रापि प्रयत्नान्तरानुपलब्धेर्न फलस्य कर्मत्वं वक्तुं शक्यते इत्यर्थः।]

पुरुषप्रयत्नो हि धात्वर्थनिर्वृत्तिमात्रापवर्गीति सर्वत्र काम्ये नित्ये नैमित्तिके च तत्कर्मताप्रसङ्गः व्यापारविशेषानुपलम्भात्। न हि काम्ये प्रयोगे करणाभिमतस्य धात्वर्थस्य परस्तात् तत्साध्यस्वर्गादिफलविशेषसाधनप्रयत्नभेदः समस्ति। अपूर्वे तु न प्रयत्नभेदः। न च कर्तृ-



व्यापारः, करणव्यापारत्वाभ्युपगमात्। अन्यथा व्यापारसंकरात् कारकभेदाभावप्रसङ्गात् इत्यलमतिप्रसङ्गेन।

**कर्मणो भावभेदं यः फलावधितया वदेत्।**
**तस्यादृष्टफलेष्विष्टमनुष्ठानं न युक्तिमत्॥**

[उम्बेकः— अपरं मतम्। फलपर्यन्तं कर्म कर्तव्यतया चोद्यते 'यजेत स्वर्गकामः' इत्येवमादिभिर्वाक्यैः। तत्र कर्मस्वरूपं धात्वर्थः, फलपर्यन्तत्वं त्वाख्यातार्थः। सा च भावनेति। तदेतदपि निराकरणाय दर्शयति— कर्मण इति। एवमुपन्यस्य निराकरोति— तस्येति। अदृष्टफलेषु यागादिषु फलपर्यन्तत्वरूपस्याप्रतीयमानत्वाद् व्युत्पन्नविषयस्वरूपो नियुक्तोऽपि नानुतिष्ठेदित्यर्थः।]

धातुर्हि कर्मस्वरूपमात्रेणोपादत्ते आख्यातोपसंदानाच्च भावनात्मनाऽवगम्यते। तथाहि, यावता कर्मक्षणोत्पादनिचयेनेष्टमर्थं साधयति तावत्याख्यातं प्रयुज्यते। अतस्तेन तेन फलोत्पादनिचयेनावच्छिद्यमानः स स कर्मक्षणोत्पादनिचयस्तेन तेनाख्यातेन अभिधीयते। तदिदं फलावधिकं कर्म भावनात्मतयाऽवसीयते। नाभाव्यमानं फलं भावनायालमिति। फलोत्पादिकावस्थाऽऽख्यातार्थः।

तथा यतेत यथा किञ्चिद्भवतीति दर्शितम्। एवमवस्थाभेदेन भावनाकर्मणोर्भेदः। उक्तं च— पूर्वापरीभूतं भावमाख्यातमाचष्टे 'व्रजति पचति' इत्युपक्रमप्रभृत्यपवर्गपर्यन्तम्। तत्र प्रतिक्षणमपवर्गवतः कर्मणः क्वानुपक्रमापवर्गौ? फलापेक्षया तु कल्प्येते इति यो वदेत्, तस्य प्रत्यक्षफलेषु कर्मसु काममारम्भविरामौ कल्प्येते, पुरस्तात्परस्ताच्च तत्पर्यन्तकर्मक्षणप्रचयपरिज्ञानात्। अदृष्टफलकत्वनिरूपितफलपर्यन्तपरिमाणभेदेषु कथं प्रवर्तेत? न हि नियुक्तोऽप्यप्रसिद्धविषयविशेषः प्रवर्तितुमर्हति। प्रवृत्तौ वा पुरःफलादर्शनादकृतशास्त्रार्थमात्मानमवबुध्यमानो न विरन्तुमर्हति। शास्त्रात् फलोत्पत्तिं प्रतिपद्य विरंस्यति, इति चेत्, न। कृतशास्त्रार्थस्य फलोत्पत्तेः, फलोत्पत्त्या च कृतशास्त्रार्थत्वादितरेतराश्रयप्रसङ्गादित्यलमतिप्रसङ्गेन। प्रकृतमनुसरामः।

[उम्बेकः— प्रकृतमनुसरामः इत्यवस्थाभेदपक्षाद्भिन्नमत्यन्तव्यतिरेकपक्षं दूषयितुं गृह्णीम इत्यर्थः।]

**धातुप्रत्यययोर्वाच्ये प्रतीयेते न हि क्रिये।**
**संबन्धो नावकल्प्येत द्वयोः साध्याभिधायिनोः॥**

[उम्बेकः— यदि प्रत्ययः क्रियान्तरमाचक्षीत ततो धातुप्रत्यययोर्वाच्यं क्रियाद्वयं प्रतीयेत। न तु क्रियमाणद्वयनिष्ठं क्रियाद्वयमुपलभामहे। अतो न प्रत्ययः क्रियावचन इति।]

'येषां तूत्पत्तौ॰' (२।१।१४) इत्याख्यातवर्ती धात्वर्थः साध्यक्रियात्मोपेयते। यदि च प्रत्ययः क्रियान्तरमाचक्षीत क्रियाद्वयं प्रतीयेत 'ओदनं पचति, करोति घटम्' इति यथा। तस्मान्न धात्वर्थव्यतिरेकिण्याख्यातेषु क्रियाऽस्ति। साध्यस्य च साध्यान्तरेण संबन्धादर्शनात् तदभिधायिनोः प्रकृतिप्रत्यययोः समभिव्याहारानुपपत्तिः।

[उम्बेकः— 'येषां तूत्पत्तौ॰' इति भावार्थाधिकरणसूत्रे धात्वर्थस्य साध्यात्मनः क्रियात्वमुक्तमिति कुतः करणत्वसंभवः। ततश्च क्रियान्तरप्रतीतिः स्यात्।]

करणत्वात् धात्वर्थस्यानुपालम्भः इति चेत्।

[उम्बेकः— ननु च करणत्वाद्धात्वर्थस्य क्रियाकारकवचनयोरुपपन्न एव समभिव्याहारः। न च सूत्रविरोधः। तस्य भावनासाध्यत्वप्रतिपादनपरत्वादित्यभिप्रायेण चोदयति— करणत्वादिति।]

न, 'येषां तूत्पत्तौ' इति विरोधात्।

[उम्बेकः— तत्र धात्वर्थस्य साध्यत्वप्रतिपादनपरसूत्रं मन्यमानः परिहारमाह— न येषामिति।]

न हि तद्भावनाभिप्रायम्। नामपदार्थस्य धात्वर्थसंबन्धे दृष्टार्थता अपेक्ष्यते, संबन्धप्रतिपादनार्थत्वात्।

[उम्बेकः— नामपदार्थस्य व्रीह्यादेर्धात्वर्थसंबन्धे या दृष्टार्थता तदपेक्षितसाध्यसाधनसंबन्धप्रतिपादनार्थत्वात्तस्य सूत्रस्य।]

अपिच—

**न भावेनापि धात्वर्थे काष्ठैरिति समागमः।**
**अक्रियात्वादन्यरोधाच्छाब्दत्वात्करणस्य च॥**

[उम्बेकः— धात्वर्थभावनयोः कारकत्वेन कारकान्तररोधेन च काष्ठादेः कारकान्तरस्य संबन्धो न संभवतीति। न चेतिकर्तव्यतात्मना काष्ठानां भावनानुप्रवेशः

'काष्ठैः पचति' इतिशब्दात् करणत्वबुद्धेर्द्रव्याणां कथंभावेनाग्रहणात् । अतः 'काष्ठैः पचति' इति समभिव्याहारो न स्यादिति श्लोकार्थः । ]

न तावद्धात्वर्थसंबन्धिता काष्ठानाम्, कारकाणां क्रियापेक्षिणामतदात्मना कारकान्तरेण संगमायोगात् । नापि भावनासंबन्धिता, तस्याः कारकान्तरावरुद्धत्वात् । नाप्यंशान्तरतया संबन्धः, शाब्दत्वात् करणत्वस्य । तदेवं यत्र करणभावः क्रियायां तस्या अवरुद्धत्वाद्धात्वर्थे चाक्रियात्मनि अकरणत्वात् 'काष्ठैः पचति' इति संबन्धाभावः । अर्थाक्षितभावनाद्वारः संबन्ध इति चेत्, न, अव्यवधानेन संबन्धबोधात् । न हि 'मृदा घटम्', 'काष्ठैः पचति' इति समः संबन्धावगमः । एकत्र तैराकाङ्क्षादन्यत्रान्यव्यपेक्षणात् ।

[ उम्बेकः–– अर्थाक्षितभावनाद्वारसंबन्धाभ्युपगमे व्यवहितसंबन्धाभ्युपगमः प्राप्नोति, अपेक्षिताश्रुतक्रियाध्याहारपूर्वकत्वात्, मृदा घटमितिवत् । न चेह तथा, अश्रुतक्रियानपेक्षणात् । यथा 'घटम्' इत्युक्ते करोतीत्यश्रुता क्रियाऽपेक्ष्यते नैवमत्रेत्यर्थः । ]

**विक्लिद्यन्ति पचन्तीति न विशेषः प्रकल्प्यते ।**
**कः प्रत्ययार्थो धातूक्तव्यापारे यदि कर्तृता ॥**

[ उम्बेकः–– उभयत्र प्रयोजकव्यापारवचनत्वात् प्रत्ययस्य धात्वोर्विक्लित्त्यर्थत्वादित्यर्थः । ]

अपि च, विक्लिद्यन्ति पचन्तीत्युभयत्र प्रयोजकव्यापारस्य प्रत्ययेनाभिधानात् धातुभ्यां च विक्लित्तेरिति नार्थभेदः स्यात् । नन्वस्ति तावत्कर्तृभेदेन व्यापारभेदः, तदभिधानान्न दोषः । तथाहि, विक्लिद्यन्तीति तण्डुलाः कर्तारः, पचन्तीति देवदत्तादयः । पुनर्भवान् कर्तृलक्षणं मत्वैवमाह, यदि साधननियोगादिकम्, कथं तण्डुलानां कर्तृत्वम्, देवदत्तादय एव कर्तार इति अविशेषप्रसङ्गः । अथागुणतया धातुना अभिधीयमानव्यापारताक इदानीं प्रत्ययार्थः, कर्तृव्यापारस्य भावनाया धातुनैवाभिधानात् । फलधात्वर्थार्थभावनानात्वाद्धात्वर्थार्थो व्यापारो धातुवाच्यः । फलार्थस्तु धात्वर्थकरणकः प्रत्ययवाच्यः । नैतत्सारम् ।

**न हि धात्वर्थकरणः फलभेदप्रभावनः ॥**

[ उम्बेकः–'धात्वर्थं फलभेदं च व्यापारो दृश्यतेऽन्तरा' इति पाठान्तरम् । ]

योऽपि व्यवहितफलेषु दृश्यते, सोऽपि हन्त्यादिधात्वर्थान्तरात्मको न प्रत्ययार्थः । प्रयत्नान्तरजन्मा न प्राचीनधातुगोचरप्रभावनीय इति ।

[ उम्बेकः–– अतो यथैव पाकादेः पचत्यादिधात्वर्थस्य प्रयत्नान्तरजन्मनो न प्रत्ययार्थत्वं तथात्रापीत्यर्थः । ... 'स प्रायो धातुगोचरप्रभावनीयः' इति क्वचित्पाठः । तत्राप्ययमर्थः–– यद्यपि व्यवहितफलेषु श्येनादिषु व्यापारान्तरं प्रत्ययवाच्यमस्ति तथापि स कर्तृव्यापारः पचत्यादिधातुगोचरप्रभावनीय एव । न हि द्वितीयः फलकर्मकोऽस्ति, यः प्रत्ययवाच्यः स्यात् । अतस्तदवस्थमेव प्रत्ययानर्थक्यम् । धातुगोचरः प्रभावनीयो यस्येति विग्रहः । पाकादिधात्वर्थकर्मक इति यावत् । ]

**कर्मणा च करोत्यर्थो व्याप्तोऽतस्तदयोगतः ।**
**तदभावः प्रत्ययार्थसाधनेऽपि विभक्तयः ॥**

[ उम्बेकः– इतश्च न क्रियान्तरं प्रत्ययवाच्यमस्तीत्याह– कर्मणेति । क्रियमाणनिष्ठत्वात् क्रियायास्तदभावे क्रियाभाव इत्यर्थः । यथोक्तम्–'करोतिः क्रियमाणेन न कश्चित्कर्मणा विना' इति । ननु च 'यजेत स्वर्गकामः' इत्यादावस्त्येव स्वर्गादि कर्म । यत्तु तत्र कर्मबुद्धिर्न जायते, तत् द्वितीयाऽभावात् । तदभावस्तु धात्वर्थकारकविषयत्वात् कारकविभक्तीनाम् । तथा च 'उखायामोदनं काष्ठैर्देवदत्तः पचेत्' इति धात्वर्थकारकेषु कारकविभक्तयो दृश्यन्ते, न भावनाकारकेषु स्वर्गयागादिष्वित्याशङ्क्याह –प्रत्ययार्थेति । अस्यायमर्थः– प्रत्ययार्थभावनाकारकेऽपि विभक्तिभिर्भवितव्यम् । 'कर्मणि द्वितीया' 'कर्तृकरणयोस्तृतीया' इत्येवमादिविभक्तिविधाने विशेषानुपादानात् । न च स्वर्गे द्वितीयां पश्यामः, अतः कर्म नास्तीत्यवगम्यते । ]

करोतेः सदा सकर्मकत्वात्तद्योगविरहेण करोत्यर्थाभावं प्रतीमः । वह्निविरहेणेव धूमाभावम् । तथाहि, न जातु 'यजेत स्वर्गम्' 'शयीत स्वास्थ्यम्' 'आसीत सुखम्' इति दृष्टचरः संसर्गः ।



[ उम्बेकः– सकर्मकत्वात् क्रियायाः क्रियमाणाभावे तदभावः, यथा व्यापकाग्न्यभावे धूमाभाव इत्याह– करोतेरिति । ]

यदि मन्वीत संगतिसमर्थविभक्तिभेदाभावादेवम् । तथाहि, धात्वर्थसाधनावगाहिन्यः सुब्विभक्तयः, प्रत्ययार्थनियोगकर्मणि स्वर्गकामादौ तददर्शनात् ।

[ उम्बेकः–– अस्यायमर्थः– प्रत्ययार्थभावनाकर्मणि स्वर्गादौ तत्करणे विधिपर्यायनियोगकर्मणि च यागादौ द्वितीयातृतीये कर्मकरणविभक्ती न दृश्येते । नियोगकर्मत्वं यागादेर्विषयत्वेन । प्रत्ययार्थनियोगकर्मणि स्वर्गकामादाविति व्यधिकरणे सप्तम्यौ । स्वर्गकामादौ शब्दे प्रत्ययार्थनियोगकर्मणि विषये कारकविभक्तिर्न दृश्यते इत्यर्थः । यद्वा सामानाधिकरण्यम् । सिद्धान्तवादिना स्वर्गकामादिशब्दस्य फलपरत्वेनाभ्युपगम्यमानत्वात् । ततश्चायमर्थो भवति । स्वर्गादौ भावनाया विधेश्च कर्मणि कारकविभक्त्यदर्शनादिति । ]

तच्च वार्तम् । एवं सति शेषत्वे संबन्धहेतोः षष्ठ्या अव्याहतप्रसरत्वात् ।

[ उम्बेकः– वार्तात इदमागतं न प्रामाणिकमिति । यदि स्वर्गस्य द्वितीयाऽभावात्कर्मणोऽनभिव्यक्तेः कर्मत्वं न विवक्षितं ततः 'कारकाणामविवक्षा शेषः' इति न्यायात्तत्र शेषलक्षणा षष्ठी स्यात् स्वर्गस्य यजेतेति स्वर्गभावनयोः संबन्धप्रतिपादिका । न च तामुपलभामहे । तेन न कथञ्चिदुद्भूतः कर्मसंबन्ध इत्यर्थः । ]

अपिच प्रत्ययार्थभावनाकरणधात्वर्थनामधेयेभ्यो विश्वजिदादिभ्यः करणविभक्तिमीक्षमाणेनेदमध्यवसातुमर्हति । अस्त्येव कर्मसंबन्धः 'यजेत स्वर्गकामः' इति चेत् ।

[ उम्बेकः– ननु 'स्वर्गकामः' इत्यत्र पदे स्वर्गः श्रूयते । स तु पुरुषार्थत्वेन साध्यत्वयोग्यः, भावना च भाव्यापेक्षिणी, अतोऽस्त्येव कर्मसंबन्धो द्वितीयामन्तरेणापीति चोदयति– अस्त्येवेति । ]

न, पुरुषविशेषणत्वेन साक्षादसंबन्धात् । 'स्वर्गाय यजेत' इति साक्षात्संगतिरिति चेत् । न, अकर्मरूपत्वात् कर्मरूपसंबन्धाभावस्य च भावनाभिधानाभावहेतुत्वात् । अकर्मता च चतुर्थीनिर्देशात् ।

[ उम्बेकः– ननु सामर्थ्यात्फलार्थित्वावगतनियोज्यपुरुषप्रतिपत्तेरविवक्षितत्वादप्रतीतस्वर्गमात्रप्रतिपादनपरत्वं स्वर्गकामपदस्य ततश्च पुरुषान्तरयोगो नास्ति । एवं चायमर्थो भवति– स्वर्गाय यजेतेति, तदेतच्चोदयति– स्वर्गायेति । ]

स्वर्गाय याग इति च धात्वर्थेनापि संबन्धनात् ।

[ उम्बेकः– न चतुर्थीनिर्दिष्टस्य कर्मत्वं गम्यते । 'भुक्तये पचति' 'तृप्तये भुङ्क्ते' इत्यादौ सत्यपि तृप्त्यादेः चतुर्थीनिर्देशे ओदनादिकर्मिकैव क्रिया प्रतीयते न तृप्त्यादिकर्मिकेत्यर्थः । न च कर्मणि चतुर्थी स्मर्यते । यदि चतुर्थीनिर्देशात् कर्मसंबन्धोऽभ्युपगम्येत ततस्तदविशेषाद्धात्वर्थं प्रत्यपि स्वर्गादेः कर्मत्वसंबन्धप्रसङ्ग इत्याह– स्वर्गायेति । तस्मात्कर्माभावात् क्रियान्तराभाव इति सिद्धम् । ]

**तुल्यार्थत्वं भावयति भवतीति प्रसज्यते ।**
**कः प्रत्ययार्थो धातूक्तव्यापारे खलु कर्तरि ॥**

भावयति घटं ( कुम्भकारः, भवति घटमित्यपि प्रसज्येत । तुल्यार्थत्वात् । तथाहि एकत्र कर्तुः ) कुम्भकारस्य व्यापारं णिजाचष्टे, अन्यत्राख्यातप्रत्यय इति न भिद्यतेऽर्थः । प्रयोजकव्यापारो णिजर्थः कर्तृव्यापार आख्यातार्थ इति नानार्थत्वं योऽपि मन्यते, वक्तव्यस्तेनेह कर्तृप्रयोजकभेदः । यदि साधनानां प्रवर्तयिता निवर्तयिता च कर्ता स चैकः कुम्भकार एवेति तद्व्यापाराभिधानात्तुल्यार्थत्वम् । घटः कर्ता, प्रयोजकः कुम्भकार इति चेत्, कथमनीशितुः साधनप्रवृत्तिनिवृत्त्योर्घटस्य कर्तृत्वं तादृशं कुलालमतिक्रम्य ? अथागुणतो धातुनाऽभिधीयमानव्यापारत्वम् । कस्तर्हीदानीमाख्यातार्थः ? धातुनाऽभिहितत्वात्तद्व्यापारस्य । न च व्यापारभेददर्शनम्, येन धातुप्रत्यययोर्विभागः स्यात् । करणत्वं च शब्दतोऽन्यतो वा धात्वर्थस्योभयत्राप्यविशिष्टमिति दुर्वारं तुल्यार्थत्वम् । अतो न प्रत्ययो भावनावचन इति सूक्तम् ।

**ण्यन्तस्य भवतेरर्थः केनांशेनाभिधीयते ॥**

किञ्च–

**कर्तृव्यापारदृष्टश्च पच्यादौ यदि भावना ।**
**धात्वर्थान्तररूपः स्यात् सोऽप्यधिश्रयणादिकः ॥**

यदि च कर्तृव्यापारो भावना, स च पच्यादिष्वधिश्रयणादिकः, तं पचिरेवोपादत्ते । अन्यथा सिध्यतिविक्लिद्यतिभ्यामविशेषः स्यात् ।

[ उम्बेकः—अस्यायमर्थः— यदि सिद्ध्यतिविक्लिद्यतीतिवत् पचिरपि प्रयोज्यव्यापारवचनः स्यात् ततस्ताविव देवदत्तः पचतीति कर्तृभेदेन सामानाधिकरण्यं न लभेतेति । ]

अथापि नोपाददीत तथाप्यधिश्रयत्यादिधात्वन्तरार्थ इति नान्यो धात्वर्थाद्भावनापदार्थः । अथ मतम्— करोतीत्यन्वितावभासस्य प्रत्ययस्य विषयतयाऽनुवृत्तात्मा व्यावृत्तावग्रहणगोचरेभ्यो धात्वर्थेभ्योऽन्यो भावनापदार्थ इति, तदसत् । एवं हि सामान्यलक्षणानुपातितया धात्वर्थसामान्यरूप एव स्यात् । न पदार्थान्तरं भावनापदार्थः ।

अथ मतम्, सत्यं साध्यतया सामान्यं न गोत्वादिवत्तद्रूपतया । तस्याः प्रतिपुरुषं शीघ्रं करोति मन्दं करोतीति स्वसामान्यविशेषाभ्यां योगात् । धात्वर्थवर्ति तु करणसामान्यमन्यदेव ।

उक्तं च—

**अन्यदेव हि धात्वर्थसामान्यकरणात्मकम् ।**
**अन्यच्च भावना नाम साध्यत्वेन व्यवस्थितम् ॥**

तदेतदपेशलम् । तथाहि—

**न क्रियाकरणाकारे द्वे ज्ञाने अनुयायिनी ।**
**यतः प्रतीमः सामान्ये द्वे साध्यसमवायिनी ॥**

नहि करणं करणमिति क्रियाकारकव्यतिरिक्तेऽर्थे पच्यादिषु प्रत्ययः, यतः क्रियारूपव्यतिरिक्तं करणात्मकं धात्वर्थसामान्यं कल्प्येत ।

शीघ्रमन्दादिश्च धात्वर्थसामान्यस्यैव करोतिवाच्यस्यावान्तरसामान्यभेदः । शोणकर्कादिरिवाश्वत्वस्य ।

उक्तं च—

**न हि धात्वर्थकरणः फलभेदप्रभावनः ।**
**धात्वर्थं फलभेदं च व्यापारो दृश्यतेऽन्तरा ॥**

[ उम्बेकः— यदि क्रियारूपा प्रत्ययवाच्या अन्या भावना भवता नाभ्युपगम्येत कस्य तर्हि शीघ्रं करोति मन्दं करोतीति शीघ्रमन्दादयो विशेषा इत्यपेक्षिते सत्याह—शीघ्रमन्देति । ]

**वाच्यो लक्षणभेदश्च तत्र धात्वर्थभावयोः ।**
**भावः परिस्पन्द इति यजत्यादावसंभवः ॥**

[ उम्बेकः— यदि च धात्वर्थभावनयोर्भेदः स्यात्ततो घटपटयोरिव रूपभेदोऽपि दर्शयितव्यः । न चासौ दर्शयितुं शक्यते इत्यभिप्रायेणाह— वाच्य इति । ]

ननु शक्यते एव रूपभेदो दर्शयितुं स्पन्दात्मा भावः अस्पन्दात्मा धात्वर्थः इति, इत्याशङ्क्याह— भाव इति । ]

अवश्यं च भावनाधात्वर्थभेदवादिना तयोः स्पष्टो रूपभेदो दर्शयितव्यः । अस्पन्दात्मा धात्वर्थः स्पन्दात्मको भावः इति चेत्, एवमस्पन्दमानात्मकर्तृकेषु यजते जानातीत्याख्यातार्थेषु तदभावप्रसङ्गः । गच्छत्यादौ च धात्वर्थस्य भावनात्वप्रसङ्गः । चेतनव्यापारस्तु पुरस्तात् प्रत्युक्तः ।

कश्चैष परिस्पन्दः ? न खल्वयमाश्रयाभिमताद्भेदेन गम्यते ।

[ उम्बेकः— स्पन्द इति विभागाभिप्रायमेतत् देवदत्तादेः संयोगविभागलक्षणस्वभावोऽन्यः परिस्पदो न गम्यते इत्यर्थः । ]

कथं न गम्यते ? यदा सत्यप्याश्रये प्रत्यक्षे कदाचिच्चलतीति प्रत्ययः प्रादुर्भवंस्तदतिरिक्तमर्थमालम्बते ।

नैतत्सारम् ।

**कार्यं विभागसंयोगलक्षणं चलतीति धीः ।**
**आलम्बतां ततो नान्यो विशेषो लक्ष्यते स्थितात् ॥**

[ उम्बेकः— चलतीति प्रत्ययस्य देवदत्तकार्यसंयोगविभागालम्बनत्वान्न . संयोगविभागविलक्षणस्वभावोऽन्यः स्पन्दो देवदत्तात् गम्यते इत्यर्थः । कार्यमित्यालम्बनगतकादाचित्कत्वेन प्रत्ययकादाचित्कतां दर्शयति— तत इति । स्थितात् निश्चलात् चलतो देवदत्तस्य संयोगविभागावेव विशेषो न तदतिरिक्तो भवदभिमतः स्पन्द इत्यर्थः । ]

स खलु परिस्पन्दोऽक्षगोचरः पूर्वोत्तरदेशसंयोगविभागफलोऽभ्युपेयते । तथा च तावेव गोचरयत्वेष प्रत्ययः । न खलु पूर्वोत्तरदेशहानोपादाने अप्रतिपद्य-



मानश्चलतीति बुध्यते । न च स्थितात् निपुणतोऽपि निरूपयद्भिरन्यो व्यापारश्चलतीति लक्ष्यते ।

ननु चलित्वा स्थितोऽपि संयोगविभागवान्न चलतीति गम्यते ।

[ उम्बेकः— चलित्वा स्थित इति तत्कार्यसंयोगविभागवत्त्वं दर्ययति । तत्र स्थित इति संयोगवत्त्वं चलित्वेति विभागवत्त्वम् । ]

अन्यतरकर्मजन्मनोश्च संयोगविभागयोर्द्विष्ठत्वेनोभयक्रियाप्रत्ययप्रसङ्गः । स्थाणुश्येनयोर्विभागमात्रमेकत्र समुदितयोस्तद्धेतुत्वमिति चेत्, अन्यतरकर्मजन्मनोरुभयोः प्रसङ्गः । यदा स्थाणुरेकेन श्येनेन संयुज्यतेऽन्यतश्च वियुज्यते ।

[ उम्बेकः— यदैकश्येनक्रियाजन्यः संयोगो भवत्यपरश्येनक्रियाजन्यो विभागः तस्मिन्नेव काले, तदा संयोगविभागसमुदायसंभवात् स्थाणावपि चलतीति प्रत्ययप्रसङ्ग इत्यर्थः । ]

न च क्रमविशेषवन्तौ तदालम्बनम्, पुरःसंयुक्तश्येनविभागपुरःसरेऽपि श्येनान्तरसंयोगेऽभावात् ।

[ उम्बेकः— अकिञ्चित्करमेतत्क्रमोपादानं संयुक्तश्येनविभागपुरःसरेऽपि संयोगे चलतीति प्रत्ययाभावादित्यर्थः । ]

उच्यते—

**अच्छिन्नोत्पत्तयो देशविशेषत्यागसंगमाः ।**
**तद्गोचरपदार्थानामाकाशो देश इष्यते ॥**

[ उम्बेकः— तत्र अच्छिन्नोत्पत्तय इत्यनेन यः स्थिते प्रत्ययप्रसङ्गो दर्शितः स परिहृतः, देशविशेषग्रहणेन च स्थाणौ । एतदुक्तं भवति । अविरलदेशविशेषविभागसंयोगाश्चलतीतिप्रत्ययस्यालम्बनम् । न च स्थिते पृथिव्यादावविरलत्वं संयोगादेः संभवति । नापि स्थाणौ देशविशेषनिबन्धनत्वम्, श्येनस्यातद्देशत्वात् । आकाश एव हि सर्वपदार्थानां देशत्वेनेष्यते । ]

न खलु संयोगविभागमात्रे चलतीति प्रत्ययः, अपि तु अविच्छिन्नोत्पादसंयोगविभागप्रबन्धे, स्थिते च तदभावः । न च स्थाणौ देशविशेषविषयौ संयोगविभागौ, संयोगिमात्रस्यादेशत्वात् । न हि श्येनौ स्थाणोर्देशाविति प्रतियन्ति लौकिकाः । आकाश एव तु सकलदेशिपदार्थानां देश इति प्रतीमः । अतस्तत्प्रदेशसंयोगविभागौ एव तदालम्बनमिति स्थाणौ न प्रसङ्गः ।

ननु व्योम्नोऽप्रत्यक्षत्वात् वायुवनस्पतिसंयोग(विभाग)वत्तत्संयोगविभागानां प्रत्यक्षावृत्तित्वेन अनैन्द्रियकत्वात् इन्द्रियजन्मनः प्रत्ययस्य विषयता न युक्ता ।

[ उम्बेकः— वायुवनस्पतिसंयोगविभागानामिति क्वचित्पाठः, क्वचिच्च वायुवनस्पतिसंयोगवदिति, स साधुरेव । केवलं दार्ष्टान्तिकानुपादानं दोष इति । प्रकृते त्वेतत्परिहार्यं परिहारान्तरोपपत्तेश्च पक्षिव्योमसंयोगो द्रष्टव्यः । प्रत्यक्षाप्रत्यक्षवृत्तित्वात् आकाशदेशसंयोगस्य पक्षिव्योमसंयोगस्य चेत्यर्थः । ]

ननु युक्ता । अन्यथा—

**कथं गम्येत वयसो नियताऽपरदेशता ।**
**चलतोऽक्षान्निवृत्ताश्चेद्विहायोदेशसंगमाः ॥**

[ उम्बेकः— आकाशे पक्षिणि गच्छति इह अयं वर्तते नेहेति वा चाक्षुषः प्रत्ययो भवति । स कथमिव व्योमसंयोगाप्रत्यक्षतायामवकल्पेत । स हि संयोगिप्रत्यक्षतायां भवति । तथा च व्योमापि प्रत्यक्षम् । अस्ति च विस्तारितदृष्टेः पृथिव्याद्यनात्मकनीलरूपपदार्थप्रत्ययः तदालम्बनमाकाशम् । अन्यथा निरालम्बनतैव स्यात् । न च पृथिव्याद्यभाव एवालम्बनः भावाकारप्रत्ययोत्पत्तेः ऐन्द्रियकत्वाच्च तस्य, न चैन्द्रियकोऽभावप्रत्ययः । यदि चाप्रतिभासमानोऽप्यभावोऽस्य आलम्बनं इत्युच्यते । ततो गोबुद्धिः अश्वाद्यालम्बनेत्यपि प्राप्नोति । किंस्वभावं तदाकाशमिति ? अमूर्तमपि सर्वगतमात्मादिवत् स्वतन्त्रमिति । ]

अप्रत्यक्षत्वे हि नभोविभागसंयोगादीनां कथं पतति पतत्रिणि देशभेदाधिकरणज्ञानम् ।

क्रियया कारणेन कार्यानुमानादिति चेत् ।

[ उम्बेकः— ननु अप्रत्यक्षत्वेऽपि नभोदेशस्य इह प्राप्त इति देशभेदाधिकरणमुपपद्यते एव ज्ञानम् । कथं प्रत्यक्षग्राह्यक्रियात्मकारणजं संयोगविभागकार्यविषयमेतदनुमानं भविष्यतीति नास्ति कश्चित् दोष इति चोदयति— क्रिययेति । ]

न, नियतदेशाधारप्रतीतेः । इह प्राप्तो नेहेति नियतप्रत्ययो न देशविशेषसंयोगाप्रत्यक्षतायामवकल्पते ।

[ उम्बेकः–क्रियाकारणकसंयोगविभागलक्षणकार्यानुमाने यं कंचन देशं प्राप्तः पक्षीत्यनुमानं स्यान्नामुमिति । न च यद्देशे क्रिया तद्देशे एव संयोगोऽनुमीयते इति वक्तव्यम् । कारकदेशत्वात् क्रियायाः संयोगस्य च द्विष्ठत्वात् । न च नियतदेशवर्तिनी क्रिया नियतदेशमेव संयोगमनुमापयतीति वक्तुं शक्यम् । आकाशस्याप्रत्यक्षत्वे नियतदेशवृत्तिकारणाप्रतीतेः । न चायं नियमो यद्देशवृत्ति कारणं तद्देशवृत्त्येव कार्यमुत्पद्यते इति । पादाभ्यङ्गचक्षुरमलत्वयोर्भिन्नदेशयोरपि कारणभावदर्शनात्। तस्मात् प्रत्यक्ष एवाकाशसंयोगः इति सिद्धम् । ]

वियद्विततालोकनिचयावयवनिबन्धनत्वात् उपपन्नमिति चेत्, स एव तर्हि आकाशदेश इति तद्वर्तिसंयोगविभागौ प्रत्यक्षौ ।

अपि च प्रत्यक्षाप्रत्यक्षवृत्त्योरपि संयोगविभागयोः सिद्धयोः प्रत्यक्षत्वकल्पना युक्ता, न त्वसिद्धस्य कर्मणः । ताभ्यामेव तर्हि संयोगविभागाभ्यां क्रियामनुमिमीमहे, कादाचित्कयोरहेतुत्वानुपपत्तेः । कादाचित्कत्वादेव च आश्रयमात्रहेतुत्वायोगात् हेत्वन्तरापेक्षणात् ।

नैतत्सारम् । यतः–

**नित्यत्वे सर्वदा जन्म स्यात्संयोगविभागयोः ।**
**अनित्यत्वेऽस्य यो हेतुस्तयोरेवास्तु तेन किम् ॥**

[ उम्बेकः– यदि परिस्पन्दः सर्वदाऽस्ति किमिति सर्वदा संयोगविभागौ न स्तः । अथ सोऽपि संयोगविभागवदेव कादाचित्कस्तस्यापि हेतुरभ्युपगन्तव्यः, स संयोगविभागानामेव भविष्यति, किं धर्म्यन्तरात्मकपरिस्पन्दग्रहणेत्यर्थः । ]

तद्धि कर्म संयोगविभागाभ्यां नित्यमनित्यं वा अनुमीयते । नियत्वे हेतुसंनिधानात् हेत्वन्तरानपेक्षत्वाच्च सदा संयोगविभागोत्पादप्रसङ्गः । अनित्यत्वे तु तस्यापि हेतुमत्त्वात् तद्धेत्वमिमतादेव तत्सिद्धिरिति किमन्तर्गडुना कर्मणा ।

यस्तु मन्यते नित्यत्वादन्तरङ्गत्वाच्च कर्मैव कारणं संयोगविभागयोः, न प्रयत्नादिः बहिरङ्गत्वात् व्यभिचारित्वाच्च । तथाहि, कर्मैकार्थसमवायिनः संयोगविभागसंस्काराः कर्मणि च सति नियोगतस्तत्सद्भावः, तत्कार्यानुमितस्य हेतोस्तदभावे सत्ताप्रमाणाभावात् ।

[ उम्बेकः–– यत्रैव परिस्पन्दः तत्रैव पाण्यादौ संयोगविभागौ वेगाख्यश्च संस्कारः प्रवर्तते इत्येकाश्रयत्वम् । संस्कारग्रहणं दृष्टान्तार्थम् । संस्कारवत्संयोगविभागयोः परिस्पन्दैकार्थसमवाय इत्यर्थः । कर्मणि च सतीत्यव्यभिचारित्वं परिस्पन्दे दर्शयति । यदिह परिस्पन्दोऽस्ति संयोगविभागौ च न जायेते ततो व्यभिचारः स्यात्, न त्वेतदस्ति । संयोगविभागकार्यानुमेयस्य संयोगविभागाभावे सत्यसिद्धेः कुतो व्यभिचारः । ]

प्रयत्नस्त्वात्मस्थः, सत्यपि च प्रयत्ने बहुषु संयुक्तेषु किञ्चिदेव प्रयत्नाद्देशान्तरं प्राप्नोति ।

[ उम्बेकः– बहुष्वपि हस्तादिषु आत्मसंयुक्तेषु प्रयत्नात् किञ्चिदेवाङ्गं देशान्तरं प्राप्नुवदुपलभ्यते । तत्र यदि प्रयत्नहेतू संयोगविभागौ स्याताम्, ततः किमित्यात्मप्रयत्ने उत्पन्ने संयुक्तसमवायविशेषात् न सर्वेऽवयवाः संयोगविभागौ प्रतिपद्यन्ते । कर्मजन्यत्वे तु नियतावयवत्वात् कर्मणो नियता एवावयवाः संयोगविभागौ प्रतिपद्यन्ते इति । ]

स वक्तव्यः–

**प्रसिद्धस्यान्तरङ्गत्वान्नित्यत्वाद्धेतुता भवेत् ।**
**अकारणत्वमन्यस्य यदि कर्म ततः कथम् ॥**

बहुसमवधाने हि नित्यत्वान्तरङ्गत्वाभ्यां प्रसिद्धसद्भावं वस्तु हेतुरिति व्यवस्थाप्यते, न तु अप्रसिद्धसद्भावस्य कल्पना ।

[ उम्बेकः–– तत्र तावत् पूर्वार्धं विवृणोति– बहुसमवधाने इति । ]

तद्विपरीतस्य हेतुत्वमनुपपन्नमिति । तादृशमप्रसिद्धसद्भावमपि परिकल्प्यते इति यदि मतं हन्त तर्हि कर्मणोऽपि तदकारणमापतति । अथ व्यधिकरणमपि संबन्धात् (केनचित्) कुतश्चिच्च प्रतिबन्धाददृष्टव्यभिचारमपि तत्कर्मणः कारणम्, संयोगविभागाभ्यां किमपराद्धं येन दृष्टं कारणं परित्यज्य अदृष्टं मृग्यते ।



[ उम्बेकः– इदानीमुत्तरार्धं विवृणोति– तद्विपरीतस्येति । अन्तरङ्गाव्यभिचारिविपरीतस्य व्यभिचारिणो बहिरङ्गस्य च प्रयत्नादेर्हेतुत्वमयुक्तमिति कृत्वा अन्तरङ्गमव्यभिचारि च कर्म कारणं संयोगविभागयोरप्रसिद्धमपि कल्पितमित्युच्यते । तदयुक्तम् । संयोगविभागवत्कर्मण्यपि प्रयत्नस्य बहिरङ्गत्वव्यभिचारित्वाविशेषादकारणत्वापत्तेः । अथ आत्माधिकरणमपि प्रयत्नादिपारम्पर्यसंबन्धात् नियतावयवात्मैकविशेषितं नियतावयवं स्पन्दमारभते इत्युच्यते, ततः संयोगविभागयोरप्येवं प्रयत्नः कारणं स्यादित्यविशेषः ]

प्रायेण च कर्महेतवः संयोगविभागैकाधिकरणा इति यत्किञ्चिदेतत् ।

[ उम्बेकः– अपि च गुरुत्वादेः पतनादिकर्महेतोः संयोगविभागैकाधिकरण्यं अस्तीति न बहिरङ्गत्वं वक्तुं शक्यते इत्याह– प्रायेणेति । ]

**हेतुसत्ता च कार्येण ततः प्रागनुमीयते ।**
**वर्तमानावभासः स्यान्न क्रियाधिगमस्ततः ॥**

[ उम्बेकः– संयोगविभागाभ्यां कार्यभूताभ्यां कारणभूतः परिस्पन्दोऽनुमीयमानोऽतिक्रान्तोऽनुमीयते न वर्तमानः । न हि संयोगविभागसद्भावकाले वर्तमानः परिस्पन्दः संयोगविभागयोः कारणम् । उभयोरविशेषात् न समानकालयोः कार्यकारणभाव इष्यते, किं तर्हि ? पौर्वापर्यव्यवस्थितयोः । तेन यद्यपि संयोगविभागकालं यावत् परिस्पन्दोऽधिगम्यते तथापि अनन्तरपूर्वकालया सत्तया कारणं न तत्कालया । अतः 'चलति' इति वर्तमानपरिस्पन्दावभासो न युक्तः स्यात् ।

उक्तं च ––

'तद्भावभाविमात्रं च हेतुकैर्नैव वार्यते । पौर्वापर्यविनिर्मुक्तं कार्यकारणलक्षणम् ॥' इति । ]

कार्योपजननप्रत्यनन्तरकालं हेतुसत्त्वं तदुपयोगि, न कार्यकालम्, तस्य तदा सिद्धत्वात् । (अतः कार्येणेममनुमिमानः तत्कालमेवानुमिमीते, न वर्तमानकालम्) । तथा च फललिङ्गात्मजन्मा ततः प्राक्कालक्रियागोचरः प्रत्ययो न वर्तमानावग्रहः स्यात् ।

अपि च––

**संयोगान्तं वर्तमानं तत उन्नीयते कथम् ।**
**विभागतो मीयमानं स्थाणावप्येतदापतेत् ॥**

[ उम्बेकः– विभागं संयोगं च उत्पाद्य कर्म विनश्यतीति वैशेषिकाः । तेन विभागोपक्रमं संयोगान्तं कर्म विभागपूर्वकसंयोगोत्तरकालं विनष्टमेवानुमीयते, न वर्तमानम् । चलतीति च वर्तमानप्रतिभासः, तस्मान्नानुमीयमानक्रियालम्बनमेतत् ज्ञानं अपि तु वर्तमानसंयोगालम्बनं प्रत्यक्षमेवेति न्याय्यम् ।

ननु च विभागादेव क्रियामनुमास्यामहे, तथा च वर्तमानप्रतिभासो न विरुध्यते संयोगान्तत्वेन तदा तस्य वर्तमानत्वादित्याशङ्क्याह–– विभागत इति ।

यदि विभागानुमेयं कर्मेत्युच्यते तथा सति स्थिते स्थाणावपि कर्मानुमानप्रसङ्गः । स्थाणुश्येनविभागस्य स्थाणावपि विद्यमानत्वात् । अथ देशविभागो लिङ्गम्, न च स्थाणोर्देशभूतेन श्येनेन विभागः, अतः कथं तत्र कर्मानुमानम्, इत्युच्यते तथा सति चलित्वा स्थिते देवदत्तादौ पृथिव्यादिदेशविभागस्य विद्यमानत्वात् कर्मानुमानप्रसङ्गः न चाविरलो विभागो लिङ्गमिति वक्तव्यं विभागान्तरापेक्षायां कर्मविनाशाद्वर्तमानावभासाभावप्रसङ्गादित्यर्थः । ]

संयोगान्तं कर्म संयोगोत्पादज्ञानक्षणोत्तरकालमनुमीयमानं न वर्तमानम्, संयोगविभागौ तु वर्तमानौ । ज्ञानरूपानुरूपश्च विषयः, न तु तद्विपरीतः । तस्मात्तयोरेव चलतीति प्रत्ययविषयता, न तु कर्मणः ।

अथ विभागानुमेयत्वात्तमुपजनय्य आसंयोगोत्पादं व्यवस्थानात् वर्तमानमनुमीयते इति, तदसत् । स्थाणावपि प्रसङ्गात् । विभागस्य तुल्यत्वात् ।

तस्मात् गुणविशेष एव धातूपादानः क्रिया, न तु तदतिरिच्यमानात्मा क्रियापदार्थः, यः प्रत्ययस्य धातोर्वाऽभिधेयः स्यात् ।

[ उम्बेकः– यथा चलतीत्यक्षजः प्रत्ययः संयोगविभागालम्बनस्तथा पचत्यादिशब्दजनिता अपि प्रत्ययाः संयोगविभागरूपगुणविशेषालम्बना न तद्द्रव्यातिरिक्तक्रियाग्राहिण इत्याह–– तस्मादिति । ]

यदप्यनुमानं यत्सर्वेषु साधनेषु संनिहितेषु सत्सु कदाचित् पचतीति प्रत्ययो भवति इति ।

[ उम्बेकः-- यत्पुनः कारकव्यतिरिक्तक्रियाग्राहि कैश्चिदनुमानमुपन्यस्तम्– उखाकाष्ठतण्डुलदेवदत्तादिकारकग्रामसंनिधाने कदाचित् पचतीति प्रत्ययो भवति । कदाचिन्न भवति । स यदि कारककारणक एव स्यात् तदा सर्वदा प्रत्ययः प्राप्नोति, न चैवम् । अतोऽन्यहेतुक इति निश्चीयते । तेन कार्यभूतात् पचतीति प्रत्ययात् कारणभूता क्रियाऽनुमीयते इति, तद्दूषणाय उपन्यस्यति– यदपीति । ]

तन्न,

**सिद्धेर्गुणविशेषेण पचतीत्यपि संविदः ।**
**क्रियापदार्थस्यान्यस्य नानुमानं प्रकल्प्यते ॥**

यः खलु तण्डुलावयवेषु विभागलक्षणः प्रशिथिलावयवसंयोगलक्षणो वा गुणभेदस्तस्य संनिहितेष्वपि साधनेषु कदाचिद्भावात् तन्निबन्धनः पचतीत्यपि प्रत्यय इति तत्र क्रियापदार्थानुमानं युक्तम् । तत एव तर्हि गुणविशेषात् कादाचित्कात् तदस्तु । अन्यथा साधनसंनिधिमात्र एवैष स्यात् । न, कर्मणोऽपि तथा प्रसङ्गात् । कर्मान्तरानुमाने चानवस्थापातात् । अग्निसंयोगस्य क्रमेण भावात् प्रकृष्यमाणत्वाच्च । तद्धेतोर्न तस्य साधनसंनिधिमात्र एव भावः । तस्यैव तर्हि संयोगस्य कारणं कर्मेति चेत् । न, प्रयत्नादेरेव कर्महेतोस्तद्धेतुत्वात् । तत् इत्थं यागादिव्यतिरिक्तभावनाभावात् ।

**यागेन भावयेत् स्वर्गमित्यर्थः परिकल्पितः ।**
**स्वर्गकामस्य यागे तु नियोगः संप्रतीयते ॥**

सत्यां हि भावनायां यागस्य करणत्वं कर्मापेक्षायां पुरुषविशेषणस्यापि स्वर्गस्येष्टस्य सामर्थ्यात् कर्मत्वमवधार्यते । तदभावे तु मन्दान् विप्रलब्धुमेष परिकल्पननिमित्तो वाक्यार्थो यागेन भावयेत् स्वर्गम् । पुरुषविशेषस्य नियोगो यागे गम्यते । तस्मिन् चानुष्ठिते स्वर्गादिफलं स्वतोऽन्यतो वा कुतश्चिद्भविष्यति नैव वा । न त्वयमर्थः शक्योऽभ्युपगन्तुम् ।

ननु पुरुषविशेषणमेव न संभवति । अयोगान्ययोगात्यन्तायोगानां अन्यतमस्यापि व्यवच्छेदासंभवात् । जात्या च तस्याभावात् ।

[ उम्बेकः– ननु स्वर्गस्य पुरुषं प्रति विशेषणत्वं न युक्तम् । त्रिविधं हि विशेषणं भवति । किञ्चिदयोगव्यवच्छेदेन यथा ' पीनो देवदत्तः ' इति । न त्वत्रान्ययोगव्यवच्छेदः संभवति, अन्यस्यापि यज्ञदत्तादेः पीनत्वात् । नाप्यत्यन्तायोगव्यवच्छेदः । देवदत्तस्य कदाचिदन्नक्षयादिना कार्श्योपपत्तेः । अन्ययोगव्यवच्छेदेन यथा ' पार्थो धनुर्धरः ' इति । अन्यत्र तदभावस्य विवक्षितत्वात् । अत्यन्तायोगव्यवच्छेदेन यथा ' गन्धवती पृथ्वी ' इति । अन्यत्र गन्धासंभवेनात्यन्ताभावनिषेधार्थत्वात् । न चात्रैकप्रकारमपि विशेषणत्वं संभवति । न तावदयोगव्यवच्छेदः, अनुष्ठानात् प्रागुत्तरककालं वा यागस्यादृश्यमानत्वात् । नाप्यन्ययोगव्यवच्छेदः, अन्यस्यापि कदाचिद्योगोपपत्तेः । नाप्यत्यन्तायोगव्यवच्छेदः, स्वर्गकामस्य यागाद्यननुतिष्ठतः कदाचित् कार्यस्वर्गयोगाभावात्, ( इति ) न पुरुषविशेषः संभवतीति चोदयति– ननु पुरुषेति । ]

साध्यत्वमपि तर्हि अनुपपन्नम्, स्वर्गस्य तथा अनिर्देशात् विशेषणस्यैवार्थाद्भावनासंबन्धाभ्युपगमात् । वर्तमानेच्छाविशेषणत्वमितरस्याप्यविरुद्धम् ।

[ उम्बेकः-- ननु न पुरुषविशेषणं स्वर्गादि साध्यमभ्युपगच्छामः । किं तर्हि ? इच्छाविशेषणम् । तथाहि, स्वर्गकामादिपदात् कामपदोपात्तेच्छाविशेषणत्वेन स्वर्गादि गम्यते । काम्यस्य च कामं प्रति अयोगव्यवच्छेदेन विशेषणत्वमस्तीत्याशङ्क्याह– वर्तमानेति ।

मीमांसकवत् इतरस्यापि अविरुद्धमेवेच्छाविशेषणत्वं स्वर्गादेः भविष्यति । इच्छाविशेषणस्यैव च पारम्पर्येण कथंचित् पुरुषविशेषणत्वोपपत्तिः । ननु चासाध्ये स्वर्गे कथं तद्विषयिणी इच्छा भवेत् ? तेनेच्छाविशेषणत्वमपि तवानुपपन्नम् । नैष दोषः । साध्ये असाध्ये वा स्वर्गे वर्तते तावदिच्छा । न च नियोगतः साध्यमेवेच्छति, सुरगणिकादौ राज्ये वा असमर्थस्येच्छादर्शनात् । तदेतत् वर्तमानग्रहणेनाह । ]



न फलनिमित्तयोरन्यतरापत्तेः । निमित्तत्वे तु यावज्जीवश्रुत्युपसंहारे तदानर्थक्यम् । अनुपसंहारे त्वेतत् स्यात् ।

[ उम्बेकः– यदि स्वर्गस्य साध्यत्वं नाभ्युपगम्यते ततः फलनिमित्तयोर्मध्ये अन्यतरस्य निमित्तस्य आपत्तेर्निमित्तप्रतिपादकं स्वर्गकामादिपदं स्यात् । स्वर्गेच्छा चेद्भवति यजेत जुहुयाच्चेति । निमित्तत्वे तु ' यावज्जीवमग्निहोत्रं जुहुयात् ' ' यावज्जीवं दर्शपूर्णमासाभ्यां यजेत ' इत्येवमादिसामान्यश्रुतिविशेषोपसंहारायेदमभ्युपगन्तव्यम् । ' अग्निहोत्रं जुहुयात् स्वर्गकामः ' ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इति जीवता स्वर्गकामेन सता होतव्यं यष्टव्यं वेति । एवं च सामान्यश्रुतेः अकिञ्चित्करत्वेन आनर्थक्यमेव स्यात् । कामश्रुतेरेवाधिकारार्थत्वात् । यदि च सामान्यश्रुत्युपसंहारोऽयं नाभ्युपगम्यते ततो विशेषश्रुतेरानर्थक्यं स्यात् । सामान्यश्रुतित एव स्वर्गकामस्यानुष्ठानोपपत्तेः । तदेतदाह– अनुपसंहारे इति । सामान्यश्रुत्यनुपसंहारे सत्येतस्याः विशेषश्रुतेः आनर्थक्यं स्यात् । स्वर्गकामस्य च तया सामान्यश्रुत्या अनुष्ठानं चोदितमेव, किं पुनर्वचनेन स्वर्गकामो यजेत, स्वर्गकामो जुहुयादिति । ]

स्यात्तावदेष नित्येषु परिहारो नानित्येषु ।

[ उम्बेकः– एवं मीमांसकेन चोदिते सति पूर्वपक्षवाद्याह– स्यात्तावदिति । यावन्ति अग्निहोत्रदर्शपूर्णमासादीनि कर्माणि नित्यानि सन्ति पुनः कामसंबन्धेन विधीयन्ते तेषां पुनःश्रुत्यानर्थक्यात् भवतु स्वर्गकामादिपदं फलप्रतिपादकम्, यानि पुनः केवलकामसंबन्धेन चोद्यन्ते यथा ' एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत ' इत्येवमादीनि कर्माणि, तेषु पशुकामादिपदस्य निमित्तार्थत्वमविरुद्धम् । अथवा अग्निहोत्रादावपि स्वर्गकामादिपदस्य निमित्तार्थतैव, न फलार्थता । न हि भावनाऽभावे स्वर्गादेर्भाव्यत्वं संभवति । यदि तु तथा सति सामान्यश्रुत्यानर्थक्यं भवति, भवतु । किं कुर्मः ? सर्वथा तावदीदृशः शब्दार्थो नावगम्यते इति । ]

अपि चानर्थक्यं स्यादित्यनर्थो नावगन्तुं शक्यते इत्युक्तम् ।

[ उम्बेकः– पूर्वापरितोषेण परिहारान्तरमाह– अपि चेति । ]

पुनरुपदेशाद्वा स्वर्गकामः पुनः प्रयोक्ष्यते इति नानर्थक्यम् ।

[ उम्बेकः– यत्त्वेतदानर्थक्यं अस्मिन् पक्षे चोदितं तदपि न भवति, पुनर्विधानेन द्विरनुष्ठानोपपत्तेः । तेन सामान्यश्रुतितस्तावत् स्वर्गकामोऽग्निहोत्रादि अनुतिष्ठति, ' स्वर्गकामो जुहुयात् ' इति पुनरनुष्ठानं स्यात् । अस्वर्गकामस्य तु सकृदेव । तेन पुनरनुष्ठानविधानार्थत्वाद्धनस्याव्यवच्छेदकस्यापि नानर्थक्यमित्याह– पुनरिति । ]

बुद्ध्वेदमेव भगवान् ददर्श खलु बादरिः– न द्रव्यगुणसंस्कारव्यतिरिक्ताऽस्ति शेषता । द्रव्यगुणयोः खलु योग्यता । अतः कारकविभक्तितो वा क्रियायां शेषभावो गम्यते । संस्कारोऽपि संमार्गादिः शब्दतो वस्तुतो वा कर्मसंबन्धी तत्र प्रतिपन्नशेषत्वं तन्मुखेन क्रियां यायात्, यागादिस्तु प्रकृत्याऽकर्मको देवताकर्मको वा कथं स्वर्गेण संबध्येत ? भावनाकर्मणा तेन तद्व्यवहितः संबध्येत, सा च नास्तीति गम्यमानो भगवान् बादरिः द्रव्यगुणसंस्कारेष्वेव शेषभावं मेने इति ।

[ उम्बेकः—द्रव्यगुणयोः व्रीह्यरुणिम्नोर्यागक्रयरूपयोः धातुवाच्यसंयोगविभागरूपक्रिययोः व्रीहिभिररुणयेतितृतीयाशब्दतो भूतभव्यसंनिकर्षवशात् वास्तवतन्निवर्तकत्वेन वा शेषभावो गम्यते । संस्कारस्यापि ग्रहसंमार्गात् ' ग्रहं संमार्ष्टि ' इति द्वितीयाशब्दतः संस्कारस्य च संस्कार्यनिष्ठत्वमिति । वस्तुतो वा ग्रहादिसंबन्धोऽवगम्यते । तत्र प्रतिपन्नशेषत्वं संमार्गादिग्रहमुखेन ग्रहसंबन्धिनीं ज्योतिष्टोमक्रियां गच्छेत् निवर्तनयोग्याम् । तत्र त्रयाणां क्रियां प्रति शेषभावः धातुवाच्ययोः संयोगविभागयोः क्रियाशब्दाभिधेययोरन्यतः साध्यत्वात् । यागस्तु यजेतेत्येवमादिशब्दात्प्रतीयमानः स्वभावतोऽकर्मक एव प्रतीयते । देवतापूजात्मकत्वात् वा यागस्य पूज्यमानदेवताकर्मत्वं गम्यते । न कथंचित् कर्मभूतः स्वर्गसंबन्धः । यदि तु भावना स्यात्ततस्तद्द्वारेण यागस्य स्वर्गसंबन्धो भवेत् । सा चोक्तेन प्रकारेण नास्त्येवेति मन्यमानो भगवान् बादरिर्यागस्य न स्वर्गशेषत्वमिति मेने इति । ]

अत्रोच्यते—

**अनेकार्थत्वमन्याय्यं तेनैकाधिकरण्यतः ।**
**करोतिना तिङन्तेषु भावाभेदोऽनुमीयते ॥**

'घटं करोति' इति तावज्जननोत्पादनादिश्रुतिविषयां भावनां करोतिराचष्टे । स च पचत्यादिसमानाधिकरणोऽपि नान्यत्र वर्तितुमर्हति अनेकार्थत्वे त्वनैकान्तिकत्वात् ततोऽभिधेयनिश्चयायोगात् अव्यवहाराङ्गतापत्तेः । अवगतसामर्थ्यानुसारेण च प्रयोगोपपत्तौ सामर्थ्यान्तरपरिकल्पनायोगात् प्रतीतबाधात् अप्रतीतकल्पनाच्च प्रयोगान्तरेऽपि प्रयोगान्तरनिर्ज्ञातस्यैव प्रत्ययात् किं करोतीति चोत्पादनाया एवाधिगमात् । एवं भावनाभिधानेन करोतिना समानाधिकरणतया आख्यातपदानां तद्विशेषाभिधायित्वमनुमीयते ।

[ उम्बेकः—— श्लोकार्थं विवृणोति— घटं करोतीति । अनेकार्थत्वे हि करोतेस्तदुच्चारणे सति अक्षादिशब्दवदेवार्थे संदेहः प्राप्नोति अनैकान्तिकत्वात् । एवं च व्यवहारो नावकल्पेत । दृश्यते चासौ निश्चितार्थनिबन्धनः प्रकरणादिपरामर्शनिरपेक्षः । तस्मात् भावनार्थ एव करोतिरिति । ]

यद्यपि प्रत्ययो भेदान्न विशेषावगमायालम्, पदं तु प्रकृतिभेदाद्भिन्नप्रकृत्यर्थानुरक्तप्रत्ययार्थप्रधानम्, प्रत्ययोऽपि पौर्वापर्यनियमात् न पदवत् स्वतन्त्रः सामान्यमात्रे धियमादधाति, अपि तु प्रकृत्यर्थापेक्षया विलक्षणः स्वार्थविशेषमेव समर्पयति । सर्वथा पदं तावद्विशेषे वर्तते । तेन तावत्तस्ततोऽभेदवत्या धात्वर्थोपधानव्यज्यमानस्फुटविशेषायास्तत्र विशेषाभिधानानुमानमविरुद्धम् ।

ननु प्रत्ययस्य सामान्यमभिधेयमिष्टं तत्कथमुभयोः सामान्याभिधायिनोरैकाधिकरण्यम् ।

[ उम्बेकः— प्रत्ययो भावनासामान्यवचनः, करोतिरपि भावनासामान्यवचन एव, न च द्वयोः सामान्यवचनयोः सामानाधिकरण्यम् । ]

उच्यते —

**भेदोपहितसामान्यवचनेऽप्यपृथक् श्रुतिः ।**
**को राजा याति ? पाञ्चालराज इत्यभिधीयते ॥**

[ उम्बेकः— एतदुक्तं भवति, यथा पाञ्चालराज इत्यत्र संनिधानादिभिरभिधानाद्वा पाञ्चालविशेषोपहिते राजार्थे गम्यमाने 'को राजा' इत्यनुपहितसामान्यवचनस्य शब्दस्य उपहितसामान्यविषयेणोत्तरवर्तिना राजशब्देन सामानाधिकरण्यम्, तथात्रापीति न अन्विताभिधानचोद्यम्, नाप्यसामानाधिकरण्यम् । ]

प्रश्नवर्तिना हि सामान्यशब्देन व्यवच्छिन्नसामान्यविषयाः श्रुतयः परिदृष्टसामानाधिकरण्यप्रयोगाः, को राजा याति ? पाञ्चालराजः इति यथा । युक्त एव चोत्तरे सामान्यनिर्देशः, अन्यथा प्रश्नगतं तदपेक्षणीयं स्यात् । विशेषतस्तु भावनाया असंविज्ञातपदभेदत्वात् परोपधानव्यज्यमानविशेषायाः । तस्मान्न सिद्धसाधनं न विपर्ययसाधनं नाप्यदृष्टान्तता ।

[ उम्बेकः—— तस्मात् पाकादिशब्दोच्चारणे प्रत्ययसंनिधानादिभिर्विशिष्टे भावे गम्यमाने न करोतिशब्दसाधितस्य साधनम्, येनानर्थक्यात् सहप्रयोगानुपपत्तिः स्यात् । नापि विपर्ययसाधनम् । सामानाधिकरण्यदर्शनात् । यथा, 'को राजा याति ? पाञ्चालराजः' इति । नादृष्टान्ततेत्यस्य अयमर्थः— न चायमसत्पक्षोऽविद्यमानदृष्टान्तः, अस्यैव दृष्टान्तस्य विद्यमानत्वात् । तेन सति दृष्टान्ते न विरुद्धो हेतुरिति । अथवा वृक्षः शिंशपा इत्यस्यासत्पक्षेऽपि नादृष्टान्तता । यथैव ह्यत्र सामान्यविशेषनिबन्धनं सामानाधिकरण्यं तथैव 'किं करोति ? पचति' इत्यत्र करोतिप्रत्यययोः । ]

**भावाभावे प्रयोगस्तु न द्विधाऽपि निरीक्षितः ।**
**अन्ततः सोऽपि धात्वर्थगोचरो लक्ष्यते तथा ॥**

[ उम्बेकः— आख्यातसमानाधिकरणस्य नामसमानाधिकरणस्यैव करोतेः भावनाभावे न प्रयोगो दृष्टः, येन धात्वर्थसामान्यवचनत्वमध्यवसीयेत । तथाहि, 'घण्टा ध्वनति' इत्यत्र भाव्याभावेन भावाभाव उच्यते । स चायुक्तः, सर्वस्य धात्वर्थस्य अन्योत्पादकस्वभावत्वेन भाव्यान्वितत्वात् । अस्ति चात्रापि मृदुतीव्रध्वनिनिष्पाद्यं सुखं दुःखं वा । यदि त्वकर्मकत्वाद्धातोः सुखं दुःखं वा ध्वनतीत्येवं संबन्धानवगमात् भाव्यत्वं नाभ्युपगम्यते ततोऽन्ततो धात्वर्थमेव भाव्यं ब्रूमो ध्वननं करोतीति संयोगविभागौ तज्जनितः शब्दो वा ध्वननम् । परिस्पन्दश्च



करोत्यर्थ इति । यदपि 'का क्रिया ? पाकः' इत्युदाहृतं तत्रापि भावनाविशेषनिबन्धनं सामानाधिकरण्यम्, न श्रुतपाकनिबन्धनम्, येन धात्वर्थवचनता करोतेः स्यात् । तदेतदाह— लक्ष्यते तथेति । ]

'घण्टा ध्वनति' इति हि भाव्याभावेन भावनाभाव उच्यते । सर्वश्च धात्वर्थः किञ्चिदसदुत्पादयति ध्वननमपि सुखं दुःखज्ञानं वाऽन्ततो धात्वर्थ एव भाव्यः ।

[ उम्बेकः—तत्र आख्यातसमानाधिकरणस्य करोतेः यथा भावनाभावे न प्रयोगस्तथा दर्शयति— घण्टेति । ]

न हि सर्वत्र धात्वर्थस्य करणतैव कर्मताऽपि तु क्वचित्तन्मात्रनिर्वृत्तिविवक्षायाम् ।

[ उम्बेकः— ननु धात्वर्थस्य करणत्वाभ्युपगमात् कथमिव कर्मत्वमुच्यते इत्याशङ्क्याह— नहीति । ]

यद्यपि करणं धात्वर्थस्तथापि व्यापारसाध्यत्वात् कर्मताऽपि । तेन यदा धात्वर्थमात्रनिर्वृत्तिर्विवक्षिता भवति नान्यस्य फलस्य तदा कर्मनिर्देशो न विरुध्यते । ]

'का क्रिया ? पाकः' इति चेहापि द्विविधत्वात् शब्दार्थस्य श्रौतलक्ष्यभेदेन नाभावो भावनायाः शब्दतस्तद्विशेषलक्षणाप्रवणत्वात् पाकशब्दस्य ।

[ उम्बेकः—— लक्ष्यते तथेति यदुक्तं तत् विवृणोति— का क्रियेति ।

यद्भावनाप्रतिपादकशब्दाभावेन भावनाभावे सति 'का क्रिया ? पाकः' इति सामानाधिकरण्यं करोतेरुदाहृतं तदयुक्तम् । पाकशब्द एव हि भावनाप्रतिपादकः । न ह्यभिधेय एव शब्दार्थ इति व्यवस्था । किं तर्हि ? यत्परः शब्दः स शब्दार्थ इति पचिना लक्षितभावनाविशेषनिबन्धनमपि ऐकाधिकरण्यमत्रेति न दोषः । ]

तिङन्तेऽपि तर्हि लक्ष्य एव भावोऽस्तु । नैतत्सारम्, यतः सर्वत्र कः पाको बुद्धिभेदमपह्नुते न भावनापरामर्शमन्तरेण च भाक्तमेतत् ।

[ उम्बेकः— यतः 'कः पाकः' 'पचति' इत्यत्र बुद्धिभेदो न स्यात्, अस्ति चासौ । तथाहि पाक इत्यत्र सिद्धरूपो धात्वर्थो गम्यते, पचतीत्यत्र साध्यरूपः । तच्च साध्यत्वं भावनासंस्पर्शकृतम्, तत्संस्पर्शश्चैवं स्याद्यदि सा प्रत्ययेनाभिधीयेत । ततोऽत्राभिधेयभावनानिबन्धनमैकाधिकरण्यम्, न पाकवत् गम्यमानापेक्षमित्यर्थः । ]

इदं भवान् पृष्टो व्याचष्टाम् 'पाकः पचति, इत्यत्र धात्वर्थो भिद्यते न वा' इति । को हि स्फुटं प्रत्ययभेदमवजानीते ? तथाहि, तिङन्ते भाव्यः स गम्यते, न तथाभूतो घञन्ते, भावे तद्विधानात्, शुद्धस्य च धात्वर्थस्य तत्त्वव्याख्यानात् । 'धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते' इति । तर्हि भाव्यत्वं भावनासंस्पर्शकृतमिति तिङन्तानां सोऽर्थः । गम्यमानत्वे हि तिङन्तघञन्तयोर्धीर्न भिद्येत, अविशेषात् ।

न च साधनसाध्यसंबन्धाद्भेदावगमः, 'स्थीयते' इत्यत्राप्रसङ्गात् ।

[ उम्बेकः—— यद्यत्र साध्यत्वावगमः, हन्त तर्हि भावोत्पन्नलकारान्ते स्थीयते इत्येवमादौ शब्दे कारकसंबन्धाभावात् धात्वर्थस्य साध्यत्वावगमो न प्राप्नोति । अस्ति चासौ । देवदत्तेन स्थीयते इत्यत्र स्थितिः क्रियते इत्यर्थोऽवगम्यते । तेन भावनासंस्पर्शकृतमेव साध्यत्वं न कारकसंबन्धकृतमित्यर्थः । ]

किञ्च——

**पाकं करोति पचतीत्याख्यातार्थो न दृश्यते ।**
**भेदेन शब्दतत्त्वज्ञैः पाकादौ न त्वयं क्रमः ॥**

[ उम्बेकः— पचतीत्यस्य पाकं करोति, इतीममर्थं निदर्शयति, न पाकशब्दस्य । तेन तिङन्ते केनचिच्छब्दभागेन पाकोऽभिधीयते केनचित्करोत्यर्थ इति गम्यते । गम्यमाने भावे पाकादावपि तथा निदर्शनप्रसङ्ग इत्यर्थः । ]

पचति पाकं करोतीति तिङन्तपदार्थं भेदेन निदर्शयति नाप्रतिपद्य भेदम्, पाकादिषु तु न तथा भेदप्रतिपत्त्यभावादिति गम्यते ।

[ उम्बेकः—— ननु तिङन्तेऽपि न पृथक्करोत्यर्थोऽभिधीयते, अभिधाने प्रमाणाभावात् । यत्तु निदर्शनं तदशाब्दमेव भेदं परिकल्प्य, यथा कस्याभिनिवर्तनं करोतीति । न तावत् पाकादिनिवर्तनविषयोऽपरः करोत्यर्थोऽभिहितः । करोत्यर्थ एवाभिनिवर्तनम्, न च तत्रापि अपरः करोत्यर्थः संभवति योऽभिधीयते । ]

परिकल्प्य भेदं तथोपदर्शनं पाकस्याभिनिवर्तनं करोति यथेति चेत् ।

[ यत्तु धात्वर्थे साध्यत्वं तद्भावस्यैव स्वाभाविकमित्यभिप्रायेण चोदयति– परिकल्प्येति । ]

न, पाकादावपि भेदप्रतिपादनप्रसङ्गात् ।

[ उम्बेकः— यद्यत्र अशाब्दमेव भेदं परिकल्प्य निदर्शयन्ति, का व्यवस्था यत्तिङन्ते निदर्शयन्ति– न पाकादाविति । ]

शब्दोपकल्पितस्तिङन्तेष्वपि भेद इति चेत् । अस्तु तावच्छब्दार्थभेदो वस्तुन्यपि उपपादयिष्यामः ।

[ उम्बेकः— तिङन्तस्य तावदर्थरूपं भवताऽङ्गीकृतम्, तत्तु तात्त्विकमित्यनन्तरमेव वक्ष्यामः । ]

नन्वेवं भावनाया अपि साध्यरूपाया भावनान्तरापातस्तदपि तथेत्यनवस्था । यदि मतं व्यापारो हि सा स्वरूपमेव तस्यास्तादृशं पराधीनोपजननम् । अतः स्वरूपात्तथात्वसिद्धेः नान्यसंस्पर्शव्यपेक्षेति । धात्वर्थोऽपि तर्हि तथाऽस्तु । तथाहि– वस्तुतः सोऽपि तथा अतथा वा भवन्नापादिततथाभावः स्वशब्दैर्व्यापारात्मोपादीयते ।

घञन्तादिष्वपि कारकसंबन्धोपपत्तेः अन्यथाव्यापारे कारकसंबन्धायोगादव्यापारसंबन्धिनः कारकत्वानुपपत्तेः । क्रियासंबन्धप्रभावितत्वात् कारकभावस्य ।

बुद्धिभेदस्तु पाकादिषु प्रत्ययोपादानेन सिद्धभावेनानुभवात् । अनभिभवति चेत्यादौ न चानभिभूतरूपमन्यथाशक्यं घदर्शनं व्यापारान्तरनिदर्शनेन निदर्शयति भावनाया इव । न च सिद्धसाध्ययोरैकशब्द्यं विरुद्धं भेदाभेदयोरिव गोत्वादिषु भिन्नप्रकृतिप्रत्ययोपादानत्वात् ।

साध्यभावरूपप्रतीतिनिदर्शनाभ्यां च धात्वर्थस्य तिङन्तेषु भावनामिच्छतो धात्वर्थस्य कर्मत्वप्रसङ्गो न करणत्वं स्यात् ।

तस्माद्धात्वर्थ एव व्यापारात्मा धातुशब्दोपादानः फलभवनसमर्थो भावनाक्रिया चेति सांप्रतम् ।

[ उम्बेकः—तस्मात् अलं धात्वर्थातिरिक्तभावनया, धात्वर्थः एव व्यापारात्मना धातुनोपादीयमानः प्रत्ययाच्च फलभवनसमर्थतया गम्यमानः फलभवनसमर्थव्यापारवचनभावनाक्रियाशब्दार्थ इत्याह– तस्मादिति । ]

तदेतदसमञ्जसम् । तथाहि—

**दृश्यमाने वस्तुभेदे नेष्टा शब्दार्थमात्रता ।**
**प्रत्ययार्थेनाभिभवः सिद्धे तद्भावनिश्चयः ॥**

[ उम्बेकः— यदि धात्वर्थभावनयोस्तात्त्विको भेदो न स्यात् ततः शब्दोपकल्पित एवायं भेद इत्यभ्युपगम्येत, न त्वेतदस्ति, प्रयत्नपरिस्पन्दयोः धातुवाच्यसंयोगविभागातिरिक्तयोः प्रत्यक्षसिद्धत्वात् ।

यत्तु पाकादौ साध्यत्वं न गम्यते तत् प्रत्ययार्थेन सिद्धत्वेनाभिभूतत्वादिति तत्राप्याह—प्रत्ययार्थेनेति । ]

दर्शयिष्यते ह्यव्यापारात्मनो धात्वर्थाद्भेदवतः क्रियाऽतो न शब्दसामर्थ्यविलसितमिति युक्तम् । असति हि वस्तुनि तथा नाम भवेदपि ।

संबन्धग्रहणापेक्षत्वाच्च शब्दस्य न वस्तुरूपकल्पतो विभवः । निश्चिते तु धातुभिर्भाव्यतयेहोपादानेऽभिभवाभिधानं युक्तम् । न चेह तथा प्रमाणाभावात् । साधनसंबन्धस्य गम्यमानभावनाविषयत्वात् ।

[ उम्बेकः— यदि धात्वर्थव्यतिरिक्ता भावना नाभ्युपगम्येत ततः संबन्धिन्यगृहीते सति अगृहीतसंबन्धः प्रत्ययः कथमिव भावनाबुद्धिं कुर्याद्येन शब्दोपकल्पितो भेद इत्युच्यते, इत्याह– संबन्धेति । विभवः सामर्थ्यमित्यर्थः ।

उत्तरार्धं विवृणोति— निश्चिते त्विति । साधनसंबन्धस्येति । 'देवदत्तेन पाकः' इति धात्वर्थेन लक्ष्यमाणाध्याह्रियमाणक्रियतेः शब्दवाच्यभावनाविषयत्वादित्यर्थः । ]

तथादर्शनात् शङ्कुलया खण्ड इति ।

[ उम्बेकः— दृश्यते च गम्यमानभावनाविषयः कारकसंबन्ध इत्याह— तथेति । एतावत्युक्ते शङ्कुलया खण्डः क्रियते इत्येतावत्यर्थे वाक्यं समाप्यते इति । ]

किञ्च—

**विक्लिद्यन्ति पचन्तीति न विशेषः प्रकल्प्यते ।**
**ऋते व्यापारनानात्वात् कर्तृभेदोऽपि वै कुतः ॥**

[ उम्बेकः— इतश्च धात्वर्थव्यतिरिक्ता भावना अस्तीत्याह– किञ्चेति । यदि धात्वर्थव्यतिरिक्ता भावना अभ्युपगम्यते तदा विक्लिद्यन्ति पचन्तीत्यनयोरपि शब्दयोस्तुल्यार्थत्वं प्राप्नोति । उभयोरपि विक्लित्त्यात्मकपाक-



विषयत्वात् । ननु पचतीतिप्रत्ययोपात्तदेवदत्तादिकर्तृकः पाकोऽभिधीयते, विक्लिद्यन्तीति च तण्डुलकर्तृकः, अतः कथमैकार्थ्यमित्याशङ्क्याह– ऋते व्यापारेति । सत्यं कर्तृभेदे सति अर्थभेदो भवति । स एव धात्वर्थातिरिक्तव्यापारानभ्युपगमे न युक्तः । ]

न तावत्तिङन्तेषु धात्वर्थ एव व्यापारात्मोपादीयते विक्लिद्यन्ति पचन्तीति धात्वर्थाभेदात् प्रत्ययाभेदप्रसङ्गात् ।

कर्तृभेदान्नैवमिति चेत्, न, व्यापारभेदमन्तरेण तदनुपपत्तेः । तथाहि, साधनानां नियोक्तृत्वे कर्तृलक्षणे देवदत्तादय एव कर्तारो न तण्डुलाः । अगुणतया धातुनाभिधीयमानव्यापारत्वे तु तण्डुला एव कर्तारः । एतेन भिनत्ति विदलति छिनत्ति द्वेधाभवति इत्यादयो व्याख्याताः । तस्मात् धात्वर्थातिरिक्तो व्यापार उपेयः यत्कृतोऽर्थभेदः कर्तृभेदश्च ।

[ उम्बेकः— भिनत्तीति प्रयोजकदेवदत्तादिकर्तृको व्यापारोऽभिधीयते । विदलतीति तु प्रयोज्यकाष्ठादिकर्तृको धात्वर्थः । तथा छिनत्तीति देवदत्तादिकर्तृक एव, द्वेधाभवतीति प्रयोज्यवृक्षादिकर्तृकः । त्वत्पक्षे चैषां शब्दानां धात्वर्थव्यतिरिक्तव्यापारानभ्युपगमे तुल्यार्थत्वं स्यात् । ]

अपरः कल्पः । स्यान्मतम्, कर्मसमवायिक्रियेष्वेव धात्वर्थातिरिक्तो व्यापारोऽभ्युपगम्यते । कर्तृस्थक्रियेषु कथमिति ।

[ उम्बेकः– अनेन शङ्कां दर्शयति । अयं चाशङ्कार्थः कर्मसमवायिक्रियेषु विक्लिद्यन्ति पचन्तीत्येवमादिषूक्तेन प्रकारेण धात्वर्थातिरिक्तः कर्तृव्यापारो बोद्धुं शक्यते । तदनभ्युपगमेऽभिधीयमानव्यापारत्वे च कर्तृलक्षणे सति तण्डुला एव सर्वत्राभिधीयमानव्यापारत्वेन कर्तारः प्राप्नुवन्ति । न हि तण्डुलादिकर्मसमवायिना पाकेन प्रयोज्यव्यापारेणाभिधीयमानेनाभिधीयमानव्यापारा देवदत्तादयो भवन्ति तेन अवश्यं कर्मसमवायिक्रियेषु देवदत्तादीनामभिधीयमानव्यापारत्वसिद्ध्यर्थं प्रयोज्यव्यापारातिरिक्तो व्यापारोऽभ्युपगन्तुं शक्यः । कर्तृस्थक्रियेषु तु यजते यजन्तीत्येवमादिषु शब्देषु यागधात्वर्थस्य यजमानर्त्विक्स्थत्वादुभयोरपि अभिधीयमानव्यापारत्वेन कर्तृत्वोपपत्तेः । असत्यपि व्यापारान्तरे भवति कर्तृभेदोऽर्थभेदश्चेत्यव्यापकमिदं कर्तृभेदकारणमिति । ]

उच्यते—

**ऋते व्यापारनानात्वात् कर्तृभेदोऽपि वै कुतः ।**

'ऋत्विजो यजन्ति' 'यजते यजमानः' इत्यगुणतो धातुनाऽभिधीयमानव्यापारस्य कर्तृत्वात् संकल्पविशेषस्य च यज्यभिधेयस्य यजमानव्यापारत्वात् 'यजन्ति याजकाः' इत्यनुपपत्तिः । धात्वर्थातिरिक्तव्यापारप्राधान्यविवक्षायां तूपपद्यते । नन्वनभिधानेऽपि व्यापारभेदस्य स्वातन्त्र्यविवक्षाभेदात् कर्तृभेदः करणभेद इवातिशयविवक्षाभेदादुपपद्यते ।

[ उम्बेकः— यद्यपि धात्वर्थात् व्यापारान्तरं नाभिधीयते इति तथापि धात्वर्थे एव स्वातन्त्र्यविवक्षाभेदात् कर्तृभेदो भवति । तस्मिन्नेव यजर्थे यदर्त्विजां स्वातन्त्र्यं विवक्ष्यते तदा 'यजन्ति याजकाः' इति प्रयुज्यते । यजमाने तु स्वातन्त्र्येण विवक्षिते ( यजते ) यजमान इति । विवक्षातो हि कारकाणि भवन्ति, यथा 'प्रदीपेन पश्यामि' इति व्यवहितमपि दीपं करणत्वेनोपदिशन्ति, दर्शनक्रियायां तस्यातिशयो विवक्षित इति । ]

किमिदं स्वातन्त्र्यम् ? साधनानां नियोक्तृत्वम् । काष्ठादीनि पचन्तीति कथम् ? नियोज्यान्तराभावात् नियोक्तृत्वविवक्षा प्रयोज्ये न स्यात् । तस्मात् प्राधान्येन प्रतिपाद्यमानव्यापारता स्वातन्त्र्यम् ।

[ उम्बेकः— यस्य व्यापारं प्राधान्येनाख्यातं ब्रवीति तत् स्वतन्त्रम् । काष्ठादीनि पचन्तीति काष्ठादीनां व्यापारः प्राधान्येनाभिधीयते । तस्मात्तानि स्वतन्त्राणि । ]

तथा चोक्तम्– स्थालीस्थे प्रयत्ने कथ्यमाने स्थाली स्वतन्त्रेति ।

[ उम्बेकः—प्रयत्न इतीह स्थालीव्यापारः कथ्यते यथा पच्यमानमोदनं बिभर्ति । स्थाल्या हि धार्यमाण ओदनो निर्वर्त्यते, नान्यथा । तदनेन वर्त्मना स्थाली ओदनपाके स्वतन्त्रेत्युच्यते । अथवा प्रयत्न इति पुरुषप्रयत्नोऽभिधीयते तस्मिन्नोदनभावनापरनाम्नि अनुग्राह्यत्वेन स्थालीस्थे विवक्ष्यमाण इत्यर्थः । न खलु विना स्थाल्या कश्चिदोदनं भावयितुं प्रभवतीति । ]

भवतु व्यापारभेदः, धातूपादान एव तु सः । तथाहि, पचिना देवदत्तव्यापारोपादानात् विक्लिदिना चानुपादानात् विक्लिद्यन्ति पचन्तीत्यर्थभेदकर्तृभेदौ । यजतिना चर्त्विग्व्यापारस्य तादर्थ्येनाभिधानात् ऋत्विजां कर्तृत्वोपपत्तिः । तथा चोक्तम्--तदभिसंधिपूर्वकं प्रेषणमध्येषणं वा यत्तत्सर्वं पच्यर्थः इति ।

नैतत्सारम्—

**विक्लित्तिमात्रसंकल्पविशेषैकावलम्बनौ ।**
**ज्ञायमानतदर्थत्वान्नेष्टावन्याभिधायिनौ ॥**

[ उम्बेकः—भावे घञादयो विधीयन्ते । धात्वर्थश्च केवलो भाव इत्यभिधीयते इति पाकशब्दात् विक्लेदनं प्रतीयते, न तु देवदत्तव्यापारः । तस्माद्विक्लेदनमेवास्यार्थः । यागशब्दाच्च संकल्पविशेषोऽवगम्यते । योऽयं देवतामुद्दिश्य पुरोडाशादेरुत्सर्गस्तदस्य संकल्पविशेष एवार्थः, नावदानादयः ऋत्विजां व्यापाराः इति । ]

भावाभिधायिनौ पाको याग इति विक्लित्तिमात्रं संकल्पमात्रं चाचक्षाते पचतियजती, न तदतिरिक्तौ कर्तृव्यापारौ । पाकस्य क्रिया सिद्धेत्यनिदर्शनात् । तथा 'पच्यन्ते तण्डुलाः स्वयमेव' 'यजते यजमानः' इति तन्मात्रस्यैव तद्व्यापारत्वाभ्युपगमात् ।

[ उम्बेकः—घञन्तेन सिद्धवद्धात्वर्थोऽभिधीयते । तद्यदि विक्लेदनार्थकर्तृव्यापारः पचेरर्थः स्यात् ततः पाक इत्यस्यार्थं पाकस्य क्रिया सिद्धेति व्याचक्षीरन्, न त्वेतदस्ति । तथाहि पाकः सिद्ध इति वदन्ति, न तु पाकस्य क्रिया सिद्धेति । एवं तावत्कृदन्तौ व्याख्यातौ । ]

तथा 'पचति देवदत्तः' 'यजन्ति याजकाः' इति प्रज्ञायमानतदर्थस्य नार्थान्तरविषयत्वं युक्तम् ।

अव्यभिचाराद्धि तन्मात्रमेव तदर्थो नाधिकम्, व्यभिचारात् शब्दान्तरनिबन्धनत्वाच्च । प्रत्ययागमे हि प्रतीयमानस्तदर्थ एव कर्तृव्यापारः ।

[ उम्बेकः--सत्येव विक्लेदने कर्तृव्यापारे चासत्यपि पचिः प्रयुज्यते । तस्मादव्यभिचाराद्विक्लेदनमेव तस्यार्थो न कर्तृव्यापार इति ।

योऽयं पचेः परः प्रत्ययः सोऽस्याभिधायक इति । ]

यथोक्तम्—

**तथा क्रमवतोर्नित्यं प्रकृतिप्रत्ययांशयोः ।**
**प्रत्ययश्रुतिवेलायां भावनात्मा प्रतीयते ॥**

प्रधानानां च प्रायेण प्रत्ययार्थत्वात् प्राधान्यादपि प्रत्ययार्थत्वम् ।

[ उम्बेकः– अपि च पचतीत्यत्र प्राधान्येन कर्तृव्यापारोऽवसीयते । प्रधानस्य च प्रत्ययार्थत्वं 'वैवस्वतः' इत्यादिषु प्रसिद्धम् । तस्मात् प्रत्ययार्थो भावनेत्याह–प्रधानानां चेति । ]

अस्त्यादिषु व्यभिचार इति चेत् ।

[ उम्बेकः-- अस्तीति न व्यापाराविष्टे वस्तुनि प्रयुज्यते । किं तर्हि ? सत्तायाम् । न च सत्ता व्यापार इति । ]

न, वस्तुतो भावेऽपि शब्दात्तथाऽप्रतीतेः । अन्यथा अस्ति भावः सत्ता इत्यभेदः प्रसज्यते ।

सत्ताया एव व्यापारात्मना प्रतीतेर्भेद इति चेत्, न, व्यापारान्तरसंस्पर्शकृतस्य साध्यत्वस्य पच्यादिषु निश्चयात् । इहैव तर्हि व्यभिचारः 'यजते यजमानः' 'पच्यन्ते तण्डुलाः स्वयमेव' इति । व्यापारान्तरोपगमे वा धातोरव्यभिचारः । न, अभ्युपगमात् । तिङोऽभिधानस्य तन्निबन्धनत्वात्, तस्यान्यथासिद्धेः । पाकादिषु व्यभिचारात्, भेदेनानिदर्शनात् अप्रतीतेः, इतरत्राख्याते भेदेन निष्कर्षणात् । अन्यथा तुल्यत्वादनिष्कर्षणं स्यात् । सामान्यविशेषयोश्च साध्यसाधनभावायोगात्, सामान्यस्य असाध्यत्वात् अनभिधेयाख्यानानुपपत्तेश्च ।

[ उम्बेकः— तस्येति । अस्य धातुव्यभिचारस्य अन्यथासिद्धरभ्युपगतमस्माभिरत्र व्यापारान्तरम् । भेदेनेति । पाकस्य क्रिया सिद्धेति न पाकादिधात्वर्थभेदेन करोत्यर्थं निदर्शयति । नापि निष्कर्षणं प्रतीयते । यदि व्यापारान्तरं स्यात् ततः पचत्यादिशब्दतुल्यत्वात् प्रतीतिनिदर्शने स्याताम् । 'नानभ्युपगमात्' इति क्वचित्पाठः । तत्रायमर्थः– न प्रत्ययस्य व्यभिचारो नापि धातोरव्यभिचार इति प्रतिज्ञातम् । तत्रोत्तरप्रतिज्ञायां तावत्कारणमाह-- अनभ्युपगमादिति । व्यापारान्तरस्यात्र भवताऽनभ्युपगमात् भवति भवदभिप्रायेण धातुव्यभिचारोदाहरणमेतत् । सर्वत्र व्यापारान्तरं निह्नुवानेन भवता यत्रास्माभिर्व्यापारान्तरमापादितं विक्लिद्यन्ति पचन्तीत्यनेन तत्रैवाङ्गीकृतो व्यापारभेदः । अस्माभिश्च यजति पचतीत्यत्र व्यापारान्तरमापादितम् । तेन विना देवदत्तादीनां ऋत्विजां च कर्तृत्वानुपपत्तेः, न तु 'यजते यजमानः' 'पच्यन्ते तण्डुलाः स्वयमेव' इत्यत्र । यागपाकमात्रेण अभिहितव्यापारत्वात् यजमानतण्डुलानाम् । तिङभिधानस्येति । अत्र हेतुः तन्निबन्धनत्वादिति । व्यापारान्तरनिबन्धनत्वादित्यर्थः । अतन्निबन्धनत्वादिति क्वचित्पाठः । अत्राप्ययमर्थः– अधात्वर्थनिबन्धनत्वात्, व्यापारान्तरनिबन्धनत्वादिति यावत् । अत्रैव कारणमाह-- तस्यान्यथासिद्धेरिति । ]



किञ्च—

**तदेव तस्य करणं न चैकमवकल्पते ।**
**भावनां संगिरन्तेऽतो धात्वर्थव्यतिरेकिणीम् ॥**

[ उम्बेकः— न च भावनाया एव भावनायां कर्मत्वं करणत्वं च घटते । उभयोरपि क्रियात्वेन तुल्यरूपत्वात् ।

धात्वर्थव्यतिरेकिणीमित्यनेन धात्वर्थेभ्यो व्यतिरेको धात्वनभिधेयत्वं च भावनायाः प्रतिपादितं यदि धातुनोच्येत ततो यागादिव्यतिरिक्ताऽपि सती धात्वर्थत्वान्न धात्वर्थव्यतिरेकिणी स्यात् तेन प्रसिद्धयागादिधात्वर्थव्यतिरिक्तत्वमधातुवाच्यत्वं च प्रतिपादितम् । तदेव तस्य करणमित्यनेन च व्यतिरेके धात्वभिधेयत्वे च कारणमुक्तम् । यदि धात्वभिधेया स्यात् भावनाऽऽख्यातपदे ततो यज्ञपदेऽपि भावनाया धात्वभिधेयत्वात् भावना भावनायाः करणं कर्म चेत्यभ्युपगतं स्यात्, न चैतद्युक्तम् । न हि तदेव कर्म करणं वा भवति । यद्यपि च सामान्यविशेषयोर्भेदोऽस्ति, सामान्यस्य विशेषानात्मकत्वात्तथापि भावनासामान्याभिप्रायेण तदेवेति व्यपदेशः । ]

यजेताश्वमेधेन, इष्टवान् बहुभिर्यज्ञैः, स्वं यज्ञं यजति, इति चैकत्वे क्रियाकारकभावानुपपत्तिः । सामान्यविशेषभेदोऽपि न क्रियाकारकसंबन्धमुपकल्पयितुं क्षमः । सामान्यस्यासाध्यत्वेनाक्रियात्मकत्वात् ।

विशेषणविशेष्यसंबन्धे तु कारकविभक्तेर्विरोधात् ।

[ उम्बेकः—- विशेषणेति । अयुक्तोऽयं पक्ष इति वाक्यं समापनीयम् । ]

नाप्येकदेशयोः क्रियाकारकभावः, उभयत्र समुदायस्य शब्दोपात्तत्वात् ।

[ उम्बेकः-- उभयत्रेति । क्रियापदे कारकपदे च समस्तस्य यागस्य शब्देनोपात्तत्वान्नायं विभागः कर्तुं शक्यते इत्यर्थः । ]

नापि धातूपात्तायां भावनायां अन्तर्भूतसामान्यकर्मकरणिकायां विशेषकर्मकरणसंबन्धो यथा मुण्डयति माणवकम्, उपश्लोकयति मालिन्या इति । 'स्वं यज्ञं बहुभिर्यज्ञैः' इत्यत्रापि धातुना भावनोपादानात् विशेषभावनाऽभ्युपगमात् विशेषणविशेष्यसंबन्धप्रसङ्गात् । अनुपादाने वा सिद्धव्यभिचारोऽसौ न तिङन्तेऽपि तामुपादातुमर्हति ।

[ उम्बेकः— युक्तं तत्र मुण्डशब्देन श्लोकशब्देन च सामान्यतोऽभिहिते कर्मकरणे पश्चात्तद्युक्ता क्रिया तिङोच्यते इति विशेषणविशेष्यभावः । इह तु भावनैव धात्वर्थः, न कर्मकरणसामान्यम् । न चानुपात्ते विशेष्ये विशेषणं भवति । धातुसामानाधिकरण्येन ह्यश्वमेधादिशब्दानां धात्वर्थनामधेयत्वं वक्ष्यते । तद्यदि भावनैव धात्वर्थस्तदा तस्याः तन्नामधेयं स्यात्, न तु तत्करणस्य धातुनाऽभिहितस्य । तस्मान्नैतन्मुण्डयतीत्यादिना तुल्यमिति । ]

एतेनौदनपाकं पचतीत्यादयोऽपि व्याख्याताः ।

तस्माद्यत्रैष कारकभावो नाम पदोपात्तधात्वर्थस्य विभक्तिभिर्व्यज्यते, तदतिरेकी तिङन्तेषु प्रत्ययोपादानः करोत्यर्थः प्रतिज्ञायते वृद्धैः ।

[ उम्बेकः– कारकभाव इत्यधात्वर्थत्वं व्यतिरेकीति च व्यतिरेकमुपसंहरति । 'स्वं यज्ञं अश्वमेधेन' इत्यत्र यज्ञाश्वमेधनामपदोपात्तस्य धात्वर्थस्य आख्यातप्रत्ययोपात्तायां भावनायां द्वितीयातृतीयाभ्यां कर्मत्वं करणत्वं च व्यज्यते, आख्यातादेव धात्वर्थस्य करणत्वमवधारितं कर्मत्वं च । अन्यथा भावनान्वयानुपपत्तेरतोऽभिव्यज्यते इत्याह । यत एव धात्वर्थस्य कारकत्वं व्यज्यते अत एव धात्वर्थातिरेकी भावो धात्वर्थान्तर्भावे तु धात्वर्थस्य

कारकत्वाभिव्यक्तिर्न प्राप्नोति अकारकस्यापि भावस्य धातुनोपात्तत्वादिति । 'न चापि व्यभिचारस्य साक्षात्प्रामाण्यघातिता । क्वचिद् दृष्टा भ्रान्तिबोधे बाधधीरुपघातिका ॥'

नैव हि व्यभिचारस्य क्वचित्साक्षाद्व्याघातकत्वं दृष्टं येन तादृप्यस्य व्यभिचारित्वे गम्यमाने तेन प्रामाण्यं व्याहन्येत । ननु भ्रान्तिबोधे दृष्टं व्यभिचारस्य व्याघातकत्वम्। अत्राह– भ्रान्तिबोधे बाधधीरुपघातिका । भ्रान्तिबोधेऽपि बाधधियो व्याघातकत्वं न व्यभिचारस्य ।

वार्तिककारस्तु लिङादिव्यापारं प्रेरणामाह– इह लिङादियुक्तेभ्यो वाक्येभ्यो द्वे भावने अवगम्येते शब्दात्मिका चार्थात्मिका चेति । प्रयोजकव्यापारश्च भावना । उक्तं च भट्टपादैः— 'स्वाध्यायाध्ययनविधिना सर्वे विधायकाः स्वाध्यायपदोपात्तश्चात्मा नियुज्यते भावयेदिति' इति । एतदनेन निदर्शितं विधिनियुज्यमानवल्लिङादिप्रयोजकव्यापारो भावनेति । ]

इष्टवान् यज्ञैरित्यत्रापि द्रव्यप्रधानभावनाभ्युपगमात् निष्ठादिषु तथाप्रतीतेरविरोधः ।

[ उम्बेकः— ननु इष्टवान् यज्ञैरित्यत्र सत्यपि क्तवतुप्रत्ययप्रयोगे भावनाया अप्रतीतेर्न भावनायां यागस्य करणत्वम् । अतोऽत्र या गतिः साऽन्यत्रापि भविष्यतीत्याशङ्क्याह– इष्टवान् यज्ञैरिति ।

किं कृतवान् ? इष्टवानिति करोतिसामानाधिकरण्यात् द्रव्यप्रधानभावनाभिधानमिति भावनायामेव यागस्य करणत्वमित्यर्थः । तथा किंक्रियो देवदत्तः ? पक्ता, पाचक इति करोतिसामानाधिकरण्यदर्शनात् अस्त्यत्रापि द्रव्यनिष्ठभावनाप्रतिपत्तिरिति आदिग्रहणम् । ]

यत्तूक्तं भावनाविषयत्वप्रतीतेः करणत्वहानिः, तत् अनिरूपितकरणतत्त्वस्य ।

[ उम्बेकः— यत्तूक्तमिति । तत् अनिरूपितकरणतत्त्वस्य वचनमित्यर्थः । ]

तथाहि—

**करणं खलु सर्वत्र कर्तृव्यापारगोचरः ।**
**तिरोदधाति कर्तारं प्रधानं तन्निबन्धनम् ॥**

[ उम्बेकः— तिरोदधातीति । प्रधानं कर्तारं तिरोदधाति कर्तुः प्राधान्यादित्यर्थः । अथवा तिरोदधाति कर्तारमिति प्रतिज्ञायते । तत्र हेतुः प्रधानं तन्निबन्धनमिति । यस्मात्प्रधानं करणनिबन्धनं न साक्षात्कर्तृनिबन्धनं तेन कर्ता करणेन फलात्तिरोधीयते । 'प्राधान्यं तन्निबन्धनात्' इति तु समीचीनः पाठः । ]

न खलु कर्तृव्यापारलक्षणायां भावनायां धात्वर्थस्य कर्मत्वप्रसङ्गः अकरणत्वं वा परश्वादावपि तथाप्रसङ्गात् । तथाहि– छिदादिषु न साक्षाद् व्याप्रियते कर्ता, अपि तु परश्वादिकरणे । तद्व्यापारस्तु उद्यमननिपतनादिलक्षणः परशुगोचर एव ।

[ उम्बेकः– तथाहीति । वेगवता हि परशुना तीक्ष्णधारेण संयुज्यमानं दारु छिद्यते । छेदने परशुरानन्तर्यात् साधकतमत्वेन करणं भवति । कर्तृव्यापारस्तु कुठारे वर्तते न दारुणि इति । ]

अत एव करणस्याव्यवहितव्यापारतया क्रियासिद्धेः साधकतमत्वम् । तद्व्यापारापेक्षप्रवृत्तितया च करणस्य कर्तुः स्वातन्त्र्यमारादुपकारिणोऽपि ।

[ उम्बेकः– कर्तृव्यापारायत्ता हि करणस्य प्रवृत्तिः । यदि पुनर्ह्यसत्युद्यमने निपातने च परशुना दारु छिद्यते । तदेवं करणव्यवधानाद्दूरेणापि फलस्योपकुर्वतः स्वातन्त्र्यं भवति, कर्तृत्वं भवतीत्यर्थः । ]

अन्यथा करणमेव स्यात् ।

[ उम्बेकः– अन्यथेति । अकारो वा प्रश्लिष्यते । तस्यायमर्थः– असति कर्तृव्यापारे परशोः करणतैव न स्यादिति । ]

अपि च–

**साधनानामभावः स्यात्कर्तृकर्मातिरेकिणाम् ।**
**साधनानां नियोगो हि कर्तृव्यापार इष्यते ॥**

प्रलीनेदानीं कर्तृकर्मातिरिक्तसाधनान्तरकथा साधनान्तरनियोगः कर्तृव्यापार इति नियोगविषयतातिपत्त्या सर्वत्र कर्मत्वापातात् ।



कथं तर्हि कर्मेतरसंविभागः ? कथं च करणपरिक्षीणे कर्तृव्यापारे तदाप्तिविरहिणः फलस्य कर्मता ।

उच्यते—

**अन्यार्थाप्तिविवक्षायामकर्मातिशयाद्विना ।**
**उद्देशादन्यवृत्त्याऽपि फलमेवेष्यतेतराम् ॥**

[ उम्बेकः– न वयं परश्वादेरपि कर्तृव्यापारविषयत्वेन कर्मत्वं स्यात् कर्तृकर्मातिरिक्तकारणाभावादित्येतावन्मात्रमेव वदामः । किं तर्हि ? यागादिविषयस्यापि कर्तृव्यापारस्य स्वर्गादिफलकर्मत्वं यागकरणकत्वं च प्रतिपादयामः । तथाहि स्वर्गं प्राप्तुं यागं करोति, न यागं प्राप्तुम् । तेनोद्दिश्यमानत्वेन स्वर्गस्यैव कर्मत्वम्, न यागादेः । 'कर्तुरीप्सिततमं कर्म' इत्याह आचार्यः । तस्मादिच्छातिशयाभावात् कर्तृव्यापारव्याप्तमपि यागाद्यकर्म यागादिप्रवृत्त्याऽपि तु क्रियाफलमेव आप्तुमिष्यते । तस्मात्तस्यैव कर्मत्वमिति श्लोकार्थः । ]

यत्खलु उपदिष्टवस्त्वन्तरायाः क्रियायाः नान्तरीयकत्वेन विषयतामुपयदभिसंहितं नेदं कर्म, इच्छाविषयाभावात् । उद्देश्यं तु कर्मान्यगोचरयाऽपि क्रियया तस्यैवाप्तुमिष्यमाणत्वात्तदभिसंधाय प्रवर्तिताया इतरसंबन्धस्य नान्तरीयकत्वात् ।

[ उम्बेकः— 'नेदं कर्म' इति प्रतिज्ञा । 'इच्छातिशयाभावात्' इत्युत्तरम् । ]

अतः करणस्यापि धात्वर्थस्य साध्यत्वप्रतीतिनिदर्शने अविरुद्धे । यथा परशुना छिनत्तीति परशोरुद्यम्यमानत्वनिपात्यमानत्वप्रतीतिः ।

[ उम्बेकः– अनेन करणस्य परशोः साध्यरूपप्रतीतिनिर्दर्शिता । ]

परशुमुद्यच्छति निपातयति द्विधाभवनायेति निदर्शनं प्रयुक्तं चेति । यत्तु कर्तृव्यापारोऽधिश्रयणादिर्धात्वर्थान्तरात्मक इति, तत्रोच्यते–

**कथ्यमानाद्रूपभेदाद्भिन्ना धात्वन्तराद्रतेः ।**
**अन्योत्पादानुकूलात्मा भावना किं प्रदुष्यति ॥**

[ उम्बेकः– पचतिपठतिगच्छत्यादिषु तावत् प्रत्ययकथ्यमानयोर्धात्वर्थभावनयोः भिन्नरूपत्वात् न धात्वर्थो भावना, अपि तु भावनायां धात्वर्थस्य करणत्वेन कर्मत्वेन च संगतिः । साध्यत्वप्रतीतिनिदर्शनाभ्यां च भावनायां व्यतिरिक्तायां प्रत्ययोपात्तायां धात्वर्थसंगतिः । यत्तु 'अधिश्रयति' 'आवपति' इत्याद्याख्याते कर्तृव्यापारस्याधिश्रयणादेर्भावनाया धात्वर्थत्वम्, न तदस्माकं कंचन दोषमावहति ।

'कथ्यमानाद्रूपभेदाद्विना' इति क्वचित्पाठः । तत्रापि अयमर्थः–– अधिश्रयत्यादौ धातुप्रत्ययकथ्यमानधात्वर्थभावनारूपभेदाद्विनापि भवेत् धात्वर्थेन सह संगतिः । तत्र न किञ्चित् प्रदुष्यति । ]

सर्वथा पचतियजतीति प्राक्प्रयुज्यमानधातुगोचरो न भवतीति प्रतिपादितम् । धात्वन्तरैस्त्वभिधानं करोतिभावयतिभ्यामिव न नः पक्षक्षतिमावहति ।

अथवा––

**धातूनामभिधानीयान् कर्तृकर्मसमाश्रयान् ।**
**लब्धात्मनः क्रियारूपान् विशेषान् प्रतिजानते ॥**

[ उम्बेकः– अथ च 'अधिश्रयति' 'आसिञ्चति' इत्यत्रापि अन्यो धात्वर्थः, अन्या च भावना प्रतिपाद्येत्याह–– अथवेति । 'अधिश्रयति' इत्यत्र स्वरूपेण घटादिवत् असाध्यात्मकः प्रत्ययोपात्तभावनासंस्पर्शकृतसाध्यत्वः स्थालीचुल्लीसंयोगो धात्वर्थः, तत्कारणभूतस्तु कर्तृव्यापारः प्रत्ययार्थ इति न धात्वर्थत्वं भावनायाः । एवं 'आसिञ्चति' इत्यत्रापि स्थाल्युदकसंयोगो धात्वर्थः, प्रत्ययार्थस्तु स एव । पचतीत्यत्र तण्डुलावयवविभागः संयोगशैथिल्यं वा धात्वर्थः । यद्यपि चात्र प्रयोज्यव्यापारः तन्दुलपरिस्पन्दो विद्यते, तथापि 'पच्यन्ते तन्दुलाः स्वयमेव' इत्यत्र परिस्पन्दस्य प्रत्ययार्थत्वात्संयोगविभागवचनत्वमेव पचेर्निर्दिष्टमिति अत्राप्यव्यभिचारात् स एवार्थः । प्रत्ययार्थस्तु कर्तृव्यापार उभयत्र । भुङ्क्ते यजति जुहोति इत्यत्र भोज्यदन्ताद्यवयवसंयोगविभाग–स्वत्ववियोग–आहवनीयप्रक्षिप्यमाणद्रव्यसंयोगा धात्वर्थाः, तत्कारणभूतस्तु कर्तृव्यापारः प्रत्ययार्थः । एवमन्यत्रापि दर्शयितव्यम् । यद्यपि च दन्तस्य अपि संयोगविभागावुभयसंस्थौ, स्वत्ववियोगात्मकः स्वस्वामिविभागश्च, तथापि गच्छति यजति इत्यत्र गमनादेः संयोगविभागात्मनो गन्तृयजमानाधारत्वेन शब्दात् प्रतीतेः

अधिश्रयणस्य आधारकर्माश्रितस्यापि अधिश्रीयमाणस्थाल्यात्मककर्माश्रितत्वेन शब्दादेव अवगमात् कर्मकर्तृसमाश्रयान् इत्युक्तम् । एवमन्यत्रापि कर्तृकर्मसमाश्रयत्वं संयोगविभागयोर्यथाप्रतीति वाच्यम् । संयोगविभागाश्चैते लब्धात्मानो न क्रियावत् साध्यस्वभावाः, निष्पन्नानामुत्तरकालं घटादिवदुपलम्भात् । तेन प्रत्ययोपात्तक्रियासंस्पर्शकृतसाध्यत्वाभिप्रायेण क्रियारूपान् साध्यरूपानित्याह । क्वचित्क्रियारूपादिति पाठः, स शोभन एव । विशेषानिति । संयोगविभागरूपत्वेन विशेषानित्यर्थः । ]

यथाऽधिश्रयतेश्चुल्लीस्थालीसंयोगविशेषः आसिञ्चतेरासिच्यमानजलाधारसंयोगभेदः । एवं सर्वत्र । यावत्पचेः तन्दुलावयवानां विभागः प्रशिथिलावयवसंयोगो वा ।

[उम्वेकः—— आसिच्यमानमुदकं आधारश्च स्थालीति विग्रहः । एतदुक्तं भवति— करोति उत्पादयति भावयति इत्यादिविस्पष्टभावनावचनकतिपयधातुव्यतिरिक्ता ये धातवस्ते संयोगविभागार्था इति नाधिश्रयत्यादिशब्दे धात्वर्थत्वं भावनाया इति । ]

उदासीनत्वविच्छेदलक्ष्यं धात्वर्थकारणम् ।
स्पन्दव्यापारपर्यायं करोत्यर्थं प्रचक्षते ॥

[ उम्वेकः—— यत्पुनरिदमुक्तं ‘ वाच्यो लक्षणभेदश्च ननु धात्वर्थभावयोः ’ इति, तत्राप्याह— उदासीनत्वेति । धात्वर्थस्तावत् संयोगविभागात्मको दर्शितः । भावस्तु परिस्पन्दात्मको धातुवाच्यसंयोगविभागकारणं यस्मिन् सत्यौदासीन्यप्रच्युतिरिति । ]

तथाहि—— अधिश्रयति, उदकं आसिञ्चति पचति च इत्यधिश्रयणादिसंयोगभेदेभ्योऽव्यापारात्मकेभ्यो भेदेन करोति स्पन्दते चेष्टते व्याप्रियते इति व्यापाररूपमवेक्ष्यते । न चैष तज्जन्याभिमतसंयोगविभागालम्बन एव प्रत्ययः ।

यतः——

व्यापारबुद्ध्युपजनो न संयोगविभागयोः ।
सतोरपि हि चेष्टित्वा विरामं समुपागते ॥

न हि चलित्वा स्थितस्य क्रियाप्रभवपूर्वोत्तरदेशसंयोगविभागाभावः । अतस्तदालम्बनो व्यापारप्रत्ययो न जातु विरमेत् ।

विभागेन समुच्छेदात्संयोगप्रचयो न हि ।
भविष्यद्वृत्तसंयोगविभागाध्यक्षता कथम् ॥

यदप्यविच्छिन्नोत्पाददेशसंयोगविभागप्रचय आलम्बनमिति । तदपि न सम्यक् । न ह्युत्तरदेशसंयोगः पूर्वविभागादृते, न च विभागः संयोगेन सहैव वा । तद्विभागेनोच्छेदात् कुतस्तत्प्रचयः ।

अविच्छिन्नोत्पादश्च नियोगभाव्युत्तरकालानां स वर्तमानानाम् । तेपु वर्तमानानागतेषु कथमिन्द्रियं धियमुपजनयेत् ? मनोऽपि चागणितकुशलस्य नैव समर्थम् । यथैकादिक्रमेण गणयतो विंशत्यादिषु विंशत्यादिज्ञानं भवति नागणयतः । तद्वदिह संयोगविभागान् गणयतश्चलतीति बुद्धिः स्यात्, नागणयतः ।

[ उम्वेकः— यथैकेति । अगणितचक्षुरादीन्द्रियस्यागणितवस्तुत्वाभावस्य चेत्यर्थः । ]

अपि च, स्थाणौ पूर्वोत्तरश्येननिबन्धनाभ्यां संयोगविभागाभ्यां व्यापारधीः स्यात् । आधारदेशसंयोगविभागाभ्यां सेति चेत्, तदयुक्तम् ।

तथाहि——

जलावयवसंयोगविभागौ स्थिरमूर्तिषु ।
जलाधारेषु मत्स्येषु व्यापारप्रत्ययाद्विना ॥

[ उम्वेकः—— तथाहीति । जलवर्तिनः स्थिरमूर्तेः मत्स्यस्य अविच्छिन्नोत्पन्नाया एव जलदेशेन संयोगविभागाः संभवन्ति । न च तत्र चलतीति प्रत्ययो जायते । तस्मादकारणमेतदित्यर्थः । ]

प्रतीतं हि जलं मत्स्यानां देशः, न स्थाणोरिव श्येनो न देशः । तदवयवानां च संयोगविभागसद्भावेऽपि तेषु महत्त्वादकम्पनीयेषु बलवद्विधारकप्रयत्नेन विधृतात्मसु न क्रियावगमः । तस्मान्नैष तन्निबन्धनः ।

नभसोऽप्यप्रत्यक्षत्वात्तद्वृत्त्योः संयोगविभागयोर्दुर्लभा प्रत्यक्षता । न च वियद्विततालोकावयवनिबन्धनत्वम् । संतमसे झटिति विद्युति क्रियाप्रत्ययात् ।

[ उम्वेकः—— संतमसे इति । रात्रावन्धकारे विद्युति चलतीति प्रत्ययो भवति, न तत्र व्यतिरिक्तं तेजोऽन्तरमस्ति यन्निबन्धनौ संयोगविभागौ विद्युतः स्याताम् । तमसस्तु भावत्वेऽपि तेजसाऽपसारितत्वान्न तदवयव-



संयोगस्तेजसः संभवति । अन्त्यावयवसंयोगेऽपि च सर्वत्र चलतीति प्रत्ययो न स्यात् । संसर्गिद्रव्यस्य च तेजःसलिलादेर्घटवदकार्यस्यावयवसंघातमात्ररूपत्वान्न तदवयवी विद्यते, येनैकदेशसंयोगेऽपि सर्वत्र चलनप्रत्ययः स्यादित्यर्थः । ]

तस्मादस्ति धातूपात्ततदाहितविशेषातिरिच्यमानात्मा क्रियापदार्थो भावनापर्यायः ।

[ उम्वेकः—— तस्मादिति । धातूपात्तश्चासौ तदाहितविशेषश्चेति विग्रहः । तदाहित इति व्यापाराहितः । गच्छत्यादिपदे प्रत्ययप्रतिपाद्यभावनाकृत इत्यर्थः । विशेष इति गुणविशेषः संयोगविभागात्मकः । ]

नन्वेवं भावनातो धात्वर्थस्य निष्पत्तिस्ततश्च फलस्येति कथं तन्निष्पाद्यो धात्वर्थस्तस्यां करणम्, स्वर्गादि च अन्यसाध्यं कथं कर्म ? तस्मात् धात्वर्थ एव भावनाऽस्तु । स्वर्गे धात्वर्थे चान्तरा व्यापारान्तरानुपलम्भादित्युक्तम् ।

[ उम्वेकः—— स्वर्गमिति । अस्यायमर्थः— यदि धात्वर्थकर्मकात् व्यापारात् व्यापारान्तरं स्यात् ततस्तस्य स्वर्गादेः कर्मत्वं भवेत्, व्यापारान्तरनिष्पादितस्य धात्वर्थस्य करणत्वम्, न तु तदुपलभ्यते इत्युक्तम् । ]

उक्तोत्तरमेतत् । तथाहि——

फलेन साक्षात्करणे कर्तुश्चेष्टाफलार्थितः ।
करणत्वं प्रधानांशे ताद्रूप्यं वा यतस्ततः ॥

[ उम्वेकः—— ताद्रूप्यमिति । ताद्रूप्यं छेदनरूपत्वं परिस्पन्दस्य । ततः इति द्विधाभवनात् । यस्मात् द्विधाभवनावच्छिन्नः परिस्पदः छिनत्तीत्युच्यते तस्मात् तत्र परशोः करणत्वमिति । ]

न इमे अन्यकर्मकरणविलक्षणे फलधात्वर्थयोः कर्मकरणत्वे । दर्शितं हि ‘ परशुना छिनत्ति ’ इति न हि द्विधाभावे कर्तृव्याप्रुतिरपि तु करणे साधननियोगादिलक्षणत्वात् कर्तुः । तत्रैव फले वैष व्यापारस्तदभिसंधानादनन्यप्रकारत्वाच्च । इयांस्तु भेदः—— धात्वर्थस्योत्पादनं नियोगः, परश्वादेस्तु सिद्धस्योद्यमनिपातनादिः । वृक्षादेश्च कर्मत्वं द्विधाभवने कर्तृत्वात् ।

तदर्थं परशुनिष्ठितं निपातोद्यमनादिलक्षणं द्विधाभवनं प्रति करणत्वम् ।

[ उम्वेकः—— ‘ करणत्वं प्रधानांशे ’ इति यदुक्तं तद्विवृणोति— तदर्थमिति । तदर्थमिति तत्कारणकं वृक्षादिकर्मत्वकारणकमित्यर्थः । तदर्थमित्यत्र अर्थशब्दः कारणवाची । निपातोद्यमनादिलक्षणमिति । निपातोद्यमननिमित्तकमित्यर्थः । यद्वा तदर्थमिति वृक्षादिकर्मप्रयोजनं तच्छेषभूतं तद्द्विधाभवनं प्रति करणत्वमिति । ]

तच्च परशोः करणत्वं छिनत्तौ प्रधानांशापेक्षम् । ताद्रूप्यस्य तदधीनत्वात् । न ह्युद्यमननिपातनादिमात्रमसंभवद्द्विधाभवनं छिनत्तीति निरूप्यते ।

[ उम्वेकः—— ‘ ताद्रूप्यं वा यतस्ततः ’ इति यदुक्तम्, तद्विवृणोति— ताद्रूप्यस्येति । ]

तस्मादिहापि धात्वर्थस्योत्पादकोऽनुग्राहको वा कर्तृव्यापारः समुद्दिष्टफलभवनतया प्रतिलब्धभावनाव्यपदेशो धात्वर्थोपनिबद्धप्रधानांशताद्रूप्यफलकर्मको धात्वर्थकरणश्च इति न दोषः । न हि द्विधा भावयति परशुनेति परशुं द्विधाभवनं चान्तरेण कर्तृव्यापार एकोऽपरसाध्योऽपरसाधन उपलभ्यते । न च करणत्वं विरुद्धम् । प्रधानांशनिष्पत्तेस्तदधीनत्वात् । तथेहापि फलभूतेः प्रधानक्रियापेक्षत्वात्कारकविभक्तिः विभागव्यवस्थायाश्च ।

[ उम्वेकः—— एवं दृष्टान्तं व्याख्यायाधुना दार्ष्टान्तिकं योजयति— तस्मादिहेति । धात्वर्थोपनिबद्धप्रधानांशताद्रूप्य इति धात्वर्थकरणकः प्रधानांशः फलभवनं ताद्रूप्यं भावनारूपत्वं यस्येति विग्रहः । प्रधानांशनिमित्तकमपि ताद्रूप्यं प्रधानांश इत्यभेदेनोपचरितम् । यद्वा, प्रधानांशे ताद्रूप्यं यस्येति गमकत्वात् व्यधिकरणोऽपि समासः । अथवा, धात्वर्थोपनिबद्धश्चासौ कर्तृव्यापारः प्रधानांशताद्रूप्यश्चेति विग्रहः । अनेन ग्रन्थेन ‘ ताद्रूप्यं वा यतस्ततः ’ इत्ययं पक्षो दर्शितः । एतदुक्तं भवति— यद्यप्येकः कर्तृव्यापारः, स च धात्वर्थगोचरः, तथापि तस्य धात्वर्थकरणकत्वं स्वर्गादिफलकर्मकत्वं चाविरुद्धं क्रियारूपत्वादिति ।

अमुमेवार्थं दृष्टान्तेन दर्शयति— नहीति । न हि परशुद्विधाभवनगोचरात् व्यतिरिक्तोऽपरसाध्यः अपरसाधनश्च व्यापार उपलभ्यते । अपरं साध्यं अपरं साधनं यस्येति

विग्रहः । परशुगोचरस्य व्यापारस्य यत्साध्यं यच्च साधनं तद्व्यतिरिक्तमित्यर्थः । न च परशुगोचर एकस्मिन्नेव कर्तृव्यापारे परशोः करणत्वं वृक्षादेश्च कर्मत्वं विरुद्धमित्यर्थः । पुनरपि दार्ष्टान्तिके योजयति– तथेहापीति । न यागस्य कर्मत्वमित्यनुषङ्गः । ]

तथाहि —

**प्रधानांशमुपादाय साधनान्येकवाक्यताम् ।**
**व्रजन्ति नान्यव्यापारो रूपतो ह्यन्यसाधनः ॥**

[ उम्बेकः—– तथाहीति । उखायां ओदनं काष्ठैर्देवदत्तः पचेदित्येकस्मिन्नेव कर्तृव्यापारे फलभवननिष्ठकाष्ठादयः करणत्वादिना संबध्यन्ते । न च तत्र व्यापारभेद उपलभ्यते काष्ठगोचरः ओदनगोचरश्च । अपि त्वेक एव कर्तृव्यापारः । स तु रूपतः स्वभावतः फलोद्देशप्रवृत्तत्वात् काष्ठादिसाधनो न काष्ठादिकर्मकः । अन्यसाधन इति । अन्यत्साधनं निवर्तकं गुणरूपं यस्येति विग्रहः । एतेन ' न व्यापारो दृश्यतेऽन्तरा ' इति यदुक्तं दूषणं तन्निरस्तम् । ]

तस्मादनुपालम्भो व्यापारान्तरानुपलम्भादिति ।

[ उम्बेकः– तस्मादिति । तदेवं धात्वर्थभावनयोर्लक्षणभेदो दर्शितः– संयोगविभागात्मको धात्वर्थः, पचति पठतीत्येवमादिषु स्पन्दात्मकश्च भाव इति । ]

यत्त्वात्मकर्तृकेषु यजते इत्यादिष्वसंभव इति । तत्र केचित्—

**भाष्ये यतेतेति गिरा प्रयत्नं प्रतिपेदिरे ।**
**अचेतने प्रयोगस्य प्राचुर्यान्नोपचारधीः ॥**

तथा यतेत यथा किञ्चिद्भवतीति फलभावनानुकूलः प्रयत्न एवाख्यातार्थो दर्शितः । अचेतने त्वाख्यातप्रयोगः, उपचारात् । प्रयोगप्राचुर्यात्तु नौपचारिकः प्रत्ययः ।

[ उम्बेकः—– ' औपचारिकः प्रत्ययः ' इत्यस्य अयमर्थः– औपचारिकोऽयं प्रयोग इत्येवंविधः प्रत्ययः प्रयोगप्राचुर्यान्न भवति । ]

इदं तु समाधानं प्रसिद्धे तद्भावे स्यात् । न च प्रत्यये समाने हेत्वन्तरे चासति तत्प्रसिद्धिरस्ति । विपर्ययोपगमस्याप्यशक्यवारणत्वात् ।

[उम्बेकः–इदं त्विति । सिद्धे औपचारिकत्वे तत्प्रतिपत्त्यभावोऽन्यथासिद्धः शक्यो दर्शयितुम् । न च देवदत्तो गच्छति वायुश्चलतीति समाने मुख्यप्रत्यये औपचारिकत्वप्रतिपादके प्रमाणान्तरे चासति तत्सिद्धिः । अस्तितामात्रेण चौपचारिकत्वाभ्युपगमे चेतने एवाख्यातप्रयोगः औपचारिकोऽन्यत्राचेतने मुख्य इति विपर्ययावगमस्याशक्यवारणत्वादित्याह– विपर्ययेति । ]

**उदासीनत्वविच्छेदसामान्यात्मा ततो मतः ।**
**करोत्यर्थो द्वये चेह तद्रूपप्रत्ययोद्भवः ॥**

[ उम्बेकः– उदासीनेति । औदासीन्यविच्छेदः करोत्यर्थः । स च प्रयत्ने परिस्पन्दे च गम्यते । तथाहि प्रयत्ने सत्यनुदासीनः सन् कुर्वन्नुपलभ्यते परिस्पन्दे च सति रथादिः । तेन प्रयत्नपरिस्पन्दयोरौदासीन्यविच्छेदसामान्यरूपयोः आख्यातार्थत्वात् चेतनाचेतनयोः अर्थवदाख्यातमित्यर्थः । ]

औदासीन्यविच्छेदो हि करोत्यर्थः, उदासीने क्रियाज्ञानाभावात् । औदासीन्यप्रच्युतेश्च द्वैधम्, आत्मनि प्रयत्नादन्यत्र रथादौ परिस्पन्दात् । तथाहि, प्रयत्नवन्तं यतमानं आत्मानमनुदासीनं कुर्वाणं व्यापारवन्तमवैति, परिस्पन्दमानं चान्यम् । अतः प्रयत्नपरिस्पन्दयोः औदासीन्यविच्छेदसामान्यांशरूपयोः तदवभासधीविषयत्वेन क्रियापदार्थत्वान्नात्मकर्तृकेषु तदभावः ।

[ उम्बेकः– तस्मादस्ति पुरुषप्रवृत्तिकर्मिका विधिज्ञानकरणिकार्थवादोत्पादितविषयप्राशस्त्यज्ञानेतिकर्तव्यतोपेता लिङादिव्यापारः प्रेरणात्मिका शब्दभावना, अभिधानलक्षणोऽपि च देवदत्तादेरिव व्यापारः शब्दभावना । ]

तदुक्तम् ' न परिस्पन्द एवैकः क्रिया नः कणभोजिवत् । ' इति । अथापि परिस्पन्देन वः प्रयोजनम्, अस्त्येवासौ ।

**मनोभूतपरिस्पन्द आत्मनस्तत्प्रयत्नजः ।**
**विक्लित्त्यादिर्यथा तस्मिन् साधनोपनिपाततः ॥**

आत्ममनःसंयोगात् विज्ञान–संकल्पविशेषाद्युत्पत्तेः तन्निबन्धनमात्मसमवेतादृष्टप्रयत्नहेतुकं मनसि कर्म स्पन्द-



रूपमुपेयते । आत्मप्रयत्नापेक्षश्च भूतेषु द्रव्योपादानादिलक्षणः परिस्पन्दः । उभयोरप्यसावात्मनः तदधीनत्वात् विक्लित्त्यादिवत् ।

तथाहि—–

विक्लित्तिभिदाच्छिदास्तण्डुलादिसमवायिन्यो देवदत्ते असमवेता अपि देवदत्तस्य क्रियास्तासु तस्य कर्तृत्वात्, प्रधानक्रियायां सर्वकारकोपनिपातात्, एकवाक्यत्वात् ।

[ उम्बेकः—– प्रधानेति । विक्लित्त्यादीनामुद्दिष्टत्वेन साध्यभूतानां प्रधानक्रियात्वात्तत्रैव साधनत्वेन सर्वकारकाण्युपनिपतन्ति । तेनान्यसमवेता अपि विक्लित्त्यादयो देवदत्तसाध्यत्वेन तत्क्रियाः । सर्वकारकोपनिपात एवोपपत्तिमाह—–एकेति । यदि प्रधानक्रियायां सर्वकारकोपनिपातो न स्यात् ततस्तत्कर्मणि पाके देवदत्तादिकर्तृव्यापारसंबन्धाभावात् उखायामोदनं काष्ठैर्देवदत्तः पचेदिति कारकपदानां भिन्नार्थत्वेनैकवाक्यत्वं न स्यात् । विक्लित्त्यर्थानि सन्ति काष्ठादीनि विक्लित्तिफलकेन प्रयोजकव्यापारेण संबध्यन्ते । एवं तदुत्पादनात्मकत्वेनैकवाक्यत्वं भवतीत्यर्थः । ]

न हि स्वव्यापारविषयः करणादिभावः कारकाणाम् । तेषां भेदादेकवाक्यतानुपपत्तेः । एवं च कर्तृविनियोज्यतया सर्वसाधनानां तद्व्यापारः कर्तुरिति तेषां भावनान्तर्गतिः । तन्मुखेन च साधनताऽप्युपपन्ना ।

[ उम्बेकः– तेषामिति । तस्मात्प्रधानक्रियायां सर्वकारकोपनिपातात् विक्लित्त्यादयस्तन्दुलादिसमवायिन्योऽपि देवदत्तक्रियाः । एवं च कर्तृविनियोज्यतया करणादीनां तत्समवेताः परिस्पन्दादयः प्रयोजकादिक्रियाः, विक्लित्तिरिव देवदत्तस्य । अतः करणादिपरिस्पन्दादयोऽपि भावनान्तर्गता इत्याह– एवं चेति ।

तन्मुखेनेति । विचित्रावान्तरव्यापारमुखेन कारकवैचित्र्यं उपपन्नमित्यर्थः । ]

**परोपाधिक्रियारूपात् ज्ञायते न क्रियान्तरम् ।**
**संबन्धादेव साध्यत्वमतः करणसंगतिः ॥**

[ उम्बेकः– ' धातुप्रत्यययोर्वाच्ये प्रतीयेते न हि क्रिये । ' इति, तत्राप्याह– परोपाधीति । काष्ठैः पचतीत्यत्र तन्दुलावयवविभागतत्संयोगशैथिल्यात्मनः पाकधात्वर्थस्य स्वयं अक्रियात्मनो भावनासंस्पर्शकृतं क्रियात्मत्वम् । अतश्च धात्वर्थस्योपाधिना क्रियारूपत्वात् न क्रियाद्वयप्रतीतिप्रसङ्गो दोष इत्यर्थः ।

औपचारिकत्वे एव कारणमाह– संबन्धादेवेति । यदि क्रियासंबन्धनिरपेक्षः पाकादिधात्वर्थः सिध्येत्, सिद्धश्च कालान्तरं न तिष्ठेत्ततः प्रयत्नवदेव क्रियात्वं परिस्पन्दवदेव वा भवेत् । न त्वेतदस्ति, क्रियामन्तरेणासिद्धेः कालान्तरस्थायित्वाच्चेत्यभिप्रायः । अनेन च अक्रियात्मकधात्वर्थप्रतिपादनेन ' संबन्धो नावकल्पेत द्वयोः साध्याभिधायिनोः ' इति यदुक्तं तदपि निराकृतमिति द्रष्टव्यम्, करणाभिधायिक्रियाभिधायिनोः समभिव्याहारोपपत्तेः ।

अतः करणेति । यस्मात् साध्यरूपो धात्वर्थः करणमतस्तस्य काष्ठादिकरणान्तरसंबन्ध इत्यर्थः । ]

धात्वर्थस्य खलु भावनामनुरञ्जयतस्तद्विषयताप्रतीतेः । तस्यां प्रतीत्यां तत्परामर्शकृतं तदन्तर्गतस्य भावनात्वं क्रियात्वमिति कुतः क्रियाद्वयप्रत्ययः ? न हि जातिगुणोपरक्तेषु द्रव्येषु तद्रूपभेदः । भावनासंबन्धितयैव च साध्यता न तत्संबन्धं विहन्ति, तदभावे तस्या अप्यभावात् । अतश्च करणसंबन्धोऽप्युपपन्नः । भावनाविषयतामुपयतः करणभावयोगात्, साध्यताप्रतीतेः क्रियारूपापत्तेः ।

**प्रधानं व्यापृतिर्यस्य धात्वर्थं प्रसमीक्ष्यते ।**
**स कर्तातः पचन्तीति विक्लिद्यन्तीति भिद्यते ॥**

[ उम्बेकः—– यत्पुनः पूर्वपक्षेऽभिहितम्– ' विक्लिद्यन्ति पचन्तीति न विशेषः प्रकल्पते ' इति, तत्र परिहारमाह– प्रधानमिति । विक्लिद्यन्तीत्यत्र तन्दुलावयवपरिस्पन्दः स्थाल्युदकाधिकरणं वा तन्दुलपरिभ्रमणं प्रत्ययेनोच्यते विक्लित्तिधात्वर्थं प्रति प्रधानभूतम् । पचन्तीत्यत्र देवदत्तादिव्यापारः पाकं प्रति प्रधानभूतः पचन्तीतिशब्दात् विक्लिद्यन्ति इत्ययं शब्दोऽर्थभेदेन भिद्यते इति ग्रन्थयोजना । ]

न खल्वगुणतो धातुनाऽभिधीयमानव्यापारः कर्ता येन प्रत्ययार्थः पर्यनुयुज्येत, अपि तु धात्वर्थं प्रत्यभिसंहितप्रधानव्यापारः । सर्वत्र धात्वर्थस्य कर्तृव्यापारमभिधेयं लक्ष्यं च प्रति विशेषणत्वात् । तेन विक्लिद्यन्तीति तन्दुल-

व्यापारस्य ज्वलनाभिघातजन्मनोऽवयवाश्रितस्य स्थाल्युदकाधिकरणतन्दुलभ्रमणात्मनो वा प्रधानभूतस्याभिधानात् पचन्तीति देवदत्तव्यापाराभिधानात् अर्थभेदः कर्तृभेदश्च सिध्यतीति न प्रत्ययार्थपर्यनुयोगावकाशः । कथं पुनः पचिना तुल्यार्थात् विक्लिदेः परेण प्रत्ययेन तन्दुलव्यापार एव विवक्ष्यते, न देवदत्तव्यापारः । प्रकृतीनां रूपभेदात्तुल्यार्थत्वेऽपि प्रत्ययस्य स्वार्थे शक्तिभेदात् ।

**भार्या दारा जलान्याप एकार्थत्वेऽपि दृश्यते ।**
**प्रकृते रूपभेदेन प्रत्ययार्थो विशेषवान् ॥**

[ उम्बेकः– भार्यादारशब्दयोर्जलापशब्दयोश्च तुल्यार्थत्वेऽपि सति तत्परं बहुवचनमेकं विचित्रमर्थं अतिदधद् दृश्यते इत्यर्थः । एतदेव विवृणोति— जलानीति । ]

जलानीति प्रकृत्यर्थसमवायि तदेकार्थसमवायि वा बहुत्वं बहुवचनस्यार्थः । तथा भार्या इति । आपो दारा इति प्रकृत्यर्थावयवसमवायि तदाश्रयैकार्थसमवायि । प्रकृतीनां रूपभेदात् तदपेक्षत्वात् प्रत्ययस्याभिधानशक्तेः । तथेहापि पचिपरो धात्वर्थैकार्थसमवायिनं व्यापारं कर्मकर्तृविषयः प्रत्यय आह । भिन्नाश्रयं वाऽन्यत्र । विक्लिदिपरस्तु प्रकृत्यर्थैकार्थसमवायिनमित्यनवद्यम् ।

[ उम्बेकः–– प्रकृत्यर्थसमवायीति व्यक्तिवाच्यत्वाभिप्रायेण । यत्परः शब्दः स शब्दार्थः इत्येवं चोक्तम् । 'तदेकार्थसमवायि वा' इत्याकृतिवाच्यत्वाभिप्रायेण । यथोक्तम्–– 'कपिञ्जलादिजातेस्तु प्रतीतिर्व्यक्तिसंख्यया' इति । येषां जलस्त्रीव्यक्तय एवाप्दारप्रातिपदिकार्थं इति दर्शनं तेषां प्रकृत्यर्थावयवसमवायित्वं द्रष्टव्यम् । यदा त्वाकृतिप्रातिपदिकार्थत्वमाश्रित्य बहुषु जलव्यक्तिषु दारव्यक्तिषु वा प्रयुज्यते तदा त्वयमर्थं इत्याह– तदाश्रयैकार्थसमवायि वेति । जातिरूपप्रकृत्यर्थाश्रयव्यक्त्येकार्थसमवायीत्यर्थः । व्यक्त्या सहैकार्थसमवायो द्रष्टव्यः । यद्वा तदिति प्रकृत्यर्थवाचोयुक्तिनिर्दिष्टा व्यक्तिः परामृश्यते बुद्धिस्थत्वात् । अथवा तदित्यवयवपरामर्शः । स आश्रयश्चासौ एकोऽर्थश्च अवयवरूप इति विग्रहः । तस्मिन् समवायो यस्य तत्तदाश्रयैकार्थसमवायि ।

'पचति' इत्यत्र शुद्धकर्तृविषयः प्रत्ययः देवदत्ताश्रयं धात्वर्थपाकव्यधिकरणं व्यापारमाह इत्याह– भिन्नाश्रयं वेति ]

**अग्निं चिनुत इत्यत्र स्वं यज्ञं यजतीति च ।**
**दर्शनात्कर्मयोगस्य नाभावस्तदभावतः ॥**

[ उम्बेकः–– यत्पुनरिदमुक्तं कर्मणा च करोत्यर्थो व्याप्त इति । अव्यापकत्वेनात्रापि दूषणमाह– अग्निमित्यादिना । ]

धात्वर्थस्य हि चयनस्येष्टकाः स्थलं वा अव्यवधानात् कर्म न व्यापारान्तरविधीयमानो व्यभिचार्यग्निः ।

[ उम्बेकः— धात्वर्थस्येति । चयनस्य चीयमानं कर्म । इष्टकाश्च चीयन्ते, नाग्निः । तेनेष्टकाकर्मकं चयनं स्थलकर्मकं वा । स्थलस्य चयनसाध्यत्वात् । ननु चेष्टकासंयोगात्मनः चयनस्य अक्रियात्वात् कर्मसंबन्धो न घटते । नैष दोषः । चयनं इह इष्टकानां उपर्युपरि स्थापनं नाम पुरुषपरिस्पन्दोऽभिप्रेतः । स च क्रियात्मकत्वात् कर्मणा युज्यते एव अव्यवधानात् । ]

स तु भावनाकर्म । अग्निशब्दश्च न स्थलवचनोऽपि तु ज्वलनवचनः । एवं ह्युक्तम्– 'अत्र ह्येष प्रसिद्धः' इति भाष्यकारेण । स्वं यज्ञं यजतीति तु न भावनातोऽन्यत्र कर्मत्वमिति दर्शितम् । तथा महाभाष्ये कर्मद्वयसंबन्धो विक्लित्तेर्भावनाभेदेनैव दर्शितः । इह तावत् 'तन्दुलानोदनं पचति' इति । द्व्यर्थः पचिः तन्दुलान् विक्लेदयन् ओदनं निर्वर्तयति । यद्यपि द्व्यर्थः पचिरित्युक्तम् । द्वौ तावद्व्यापारौ कर्मान्वयगोचरौ दर्शितौ, तत्रौदनं निर्वर्तयतीति यथा प्रत्ययार्थस्तथा प्रतिपादितम् ।

**प्रयोजकक्रियामाहुः कर्तृव्यापारगोचराम् ।**
**कर्तृव्यापारविषयो धातोरर्थो विवक्ष्यते ॥**

स्वव्यापारे सर्वस्य नियोगात् कर्तृव्यापारविषयः प्रेरणादिप्रयोजककर्तृव्यापारो णिजर्थः । धात्वर्थविषयः कर्तृव्यापारस्तिङर्थं इति न भवतिभावयत्योस्तुल्यार्थत्वमिति ।

[ उम्बेकः— स्वव्यापारे इति । भावयेत् घटं कुम्भकार इति स्वव्यापारे कुम्भकारो नियुज्यते । तस्य च घटादि कर्तृव्यापारविषयं घटकरणं स्वव्यापार इति स एव णिचो विषय इति प्रयोजकव्यापारो णिजर्थः ।



भवतीत्याख्यातात् भवनधात्वर्थविषयो घटकर्तृव्यापार इत्यतुल्यार्थत्वं भवतिभावयतिशब्दयोः । अथवा घटावयवाः सिद्धभवनाः प्रयोजकाः, भवनव्यापृताश्च प्रयोज्याः, सिद्धभवनानां असिद्धभवनावयववर्तिना भवनेन घटो भाव्यः । सिद्धभावनानां प्रयोजकव्यापारो भावनेत्युच्यते । एतदुक्त भवति– असिद्धभवनावयवभवनं करणं भवन्तश्च घटावयवा भाव्याः सिद्धभवनवर्तिसामान्यं भावना । तदुक्तम्–– 'अस्त्यादावपि कर्त्रंशे भाव्येऽस्त्येव हि भावना । अन्यत्राशेषभावात्तु न तथा सा प्रकाशते ॥' इति ]

**तदेवं भावनार्थत्वादाख्यातप्रत्ययस्य हि ।**
**यागेन भावयेत्स्वर्गमित्यर्थः शब्दनिर्मितः ॥**

[ उम्बेकः–– तदेवमिति । तदनेन भावनाया वाक्यार्थत्वं दर्शितम् । इदं त्विह वक्तव्यम्, फलमेव वाक्यार्थः कस्मान्न भवति ? तद्धि कर्तव्यमभिलषितत्वेन च प्रधानम् । कार्यप्रधानभूतार्थप्रतिपादनपरं च वाक्यम् । उपात्तं चैतत्स्वर्गकामपदेन । नैतत्सारम् । विधेयप्रयोजनं हि वाक्यं विधायकपदप्रधानत्वात् । तथाहि यत्रापि न श्रूयते तत्रापि कल्पते । फलं च न विधीयते, लिप्सात एव पुरुषस्य प्रवृत्तत्वात् । प्रवर्तकश्च विधिर्नान्यरूपः । तेन यत्र पुरुषः प्रवर्तते स विधेयः । न च फले पुरुषः प्रवर्तते इत्यविधेयत्वम् । ननु यागेन स्वर्गं भावयेदिति फलमेव विधीयमानमुपलभ्यते । नेयं वचनव्यक्तिः यागेन स्वर्गं कुर्यादिति, किं तर्हि ? यः स्वर्गं कर्तुमिच्छेत् स यागेन कुर्यादिति । तेनानुवाद्यः स्वर्गो न विधेयः ।

तथा च 'सक्तून् जुहोति' इत्यत्राभिधानतः सत्यपि साध्यत्वावगमे साधनपरत्वाद्वाक्यस्य सक्तुभिर्जुहुयादिति वाक्यार्थो भवति ।

'उद्भिदा यजेत' इत्यस्य वाक्यस्य प्रथमं कीदृशोऽर्थः प्रतीयते ? न तावदुद्भिदा यागेन कुर्यात् इति, साध्यत्वप्रतीत्यभ्युपगमात् । नापि उद्भिदा यागं कुर्यादिति, नामधात्वर्थयोरनन्यत्वात् । वैयधिकरण्ये च गुणविधित्वापत्तेर्दर्शनहानिः । तेन निश्चितकरणार्थत्वतृतीयान्तोद्भित्पदसामानाधिकरण्यादप्येतत् निश्चितं यजते यागेनेति । एवं करणार्थतां प्रतिपाद्य भावार्थाधिकरणे धात्वर्थादपूर्वमिति प्रतिपादयता सूत्रकारेण भाष्यकारेण च यजेतेत्यस्य अयमर्थो व्याख्यातो यागेन कुर्यादिति । तेन करणार्थपदान्तरसामानाधिकरण्यावगमात् करणार्थमाख्यातमिति निश्चयोऽस्ति । तस्मात् भावनैव अंशत्रयोपेता वाक्यार्थः, न धात्वर्थ इति सिद्धम् ।

एवमेव 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यधिकारवाक्येऽपि द्वितीया तृतीयार्थैव व्याख्यातव्या । ]

कथं कर्म इति चेत् ।

**अपेक्षितत्वाद्भाव्यस्य कामशब्दा हि तत्पराः ।**
**विशेषणप्रधानत्वं दण्डीत्यादिषु दर्शितम् ॥**

[ उम्बेकः— ननु स्वर्गकाम इत्यत्र पुरुषविशेषणत्वेन स्वर्गः श्रूयते, विशेष्यत्वेन पुरुषः । तेन विशेष्यपुरुषपरतैव कामिपदस्य युक्ता, न विशेषणभूतस्वर्गपरता स्वर्गकामपदस्य इत्याशङ्क्ते– कथमिति । परिहारमाह– अपेक्षितेति । श्येने ज्योतिष्टोमगतर्त्विक्प्रचरणानां प्रैषानुवचनादीनामतिदेशत एव प्राप्तत्वात् 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' 'दण्डी प्रैषानन्वाह' इतिवचनं विशेषणभूतलोहितोष्णीषदण्डविधानार्थं गम्यते, तथात्राप्यन्यत एव पुरुषस्य प्राप्तत्वात् विशेषणभूतस्वर्गपरता स्वर्गकामपदस्येत्यर्थः । ]

यद्यपि स्वर्गादयः पुरुषविशेषणत्वेन श्रूयन्ते, तथापि कामश्रुतयस्तत्प्रधानाः, 'दण्डी प्रैषानन्वाह' 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इति दर्शनात् । कुतः ? भावनायां भाव्यस्यापेक्षितत्वात् । स्वर्गादीनां च काम्यतया भाव्यत्वप्रतीतेः द्वितीयान्तप्रयोगे इव तयापीष्टत्वप्रतिपादनात् ।

[ उम्बेकः— तयेति । काम्यतयाऽपि इष्टं भाव्यं प्रतीयते इत्यर्थः । ]

तेन पुरुषप्रतीतिः स्वर्गकामपदे अनुवादः स्वर्गमित्येतावद्विधित्सितम्, भाव्यविशेषपरत्वात्, धात्वर्थस्य श्रौतस्यापि विधिज्ञानविरोधादकर्मत्वात्, करणत्वेऽपि श्रुत्यनुग्रहादविरोधात्, शास्त्राधीनत्वात् योग्यायोग्यत्वयोरज्ञानात्, सर्वफलभावनानां धात्वर्थविशेषसाधनत्वात् । स्यान्मतं स्वर्गादिविशेषणपरत्वेऽपि गुणाभात्रः स्वर्गादेः स्यात् । न, भाव्यस्य प्रथममपेक्षणात् ।

[ उम्वेकः— नेति । किं भावयेदिति प्रथममपेक्ष्यते । स्वर्गश्च प्रीत्यात्मकत्वेन पुरुषार्थत्वात् तदपेक्षापूरणसमर्थो भाव्यत्वेन संबध्यते इत्यर्थः । ]

साधनेषु चोपचारादिच्छायाः ।

[ उम्वेकः— साधनेष्विति । भाव्यमेव स्वरसात् काम्यते न करणादिसाधनं अपुरुषार्थत्वात् । ननु अर्जनाङ्गत्वेन साधनमपि काम्यते । बाढं काम्यते । साध्यगतैवेच्छा साधनेषु उपचर्यते । न च स्वर्गेऽन्यगतोपचारं पश्यामः । तस्मात् स्वरसात् स्वर्ग एव काम्य इति तस्यैव भाव्यत्वम् । ]

ननु न भाव्यभेदप्रतिपत्तिप्रधानाः कामश्रुतयः, अपि तु नियोज्यविशेषणप्रतिपादनपराः । अन्यथा कस्यायमुपदेशः को नियुज्यते कस्येदं कर्तव्यमित्यपरिज्ञानात् सापेक्षं अपरिसमाप्तमप्रतिपत्तिकरमेव शास्त्रं स्यात् । नैतत्सारम् । यतः—

**प्रतीयते नियोगोऽर्थात्समर्थस्य फलार्थिनः ।**
**अन्यथा ह्यसमर्थानां दुर्वाराऽधिकृतिर्भवेत् ॥**

[ उम्वेकः- यः स्वर्गादिफलार्थी नियोगं तद्विषयं च साङ्गं कर्मप्रयोगं बोद्धुमनुष्ठातुं च समर्थः स नियोज्य इत्यर्थसिद्धमेतत्, किमत्र शब्देनेत्यर्थः । ]

योऽपि हि शब्दान्नियोज्यविशेषावसायं मन्यते, सोऽपि नियोज्यविशेषप्रतिपत्तौ सामर्थ्यमुपैति । अन्यथा शब्दवशेन शक्तिकल्पनायां अन्धादीनामप्यत्रार्थेऽधिकारः स्यात् । सत्यपि चेच्छब्दे सामर्थ्यमुपाश्रीयते, नियोज्यावगमे तदसत्येवास्तु । तस्माद्यो नियोगार्थं प्रतिपत्तुं तद्विषयं चानुष्ठातुं समर्थः फलार्थी च स नियोज्यः, असमर्थस्यानर्थिनोऽशक्योऽनभिलषिते यागे प्रवर्तनायोगात् । किञ्च —

**अतत्परत्वे फलता पश्वादेर्नास्ति शब्दतः ।**
**न सामर्थ्यादनुष्ठानं नियोगैकनिबन्धनम् ॥**

[ उम्वेकः- नियोगनिबन्धनमनुष्ठानम्, न फलनिबन्धनमिति भवतो दर्शनम् । ]

यदि स्वर्गकामादिश्रुतयो न फलभेदाधिगमपराः, न शब्दवती फलता पश्वादीनां स्वर्गादीनां च । नापि सामर्थ्यतः । अन्यथाऽनुष्ठानमयुक्तमिति चेत् ? न, तस्य नियोगमात्रायत्तत्वाभ्युपगमात् । एकवाक्यत्वमिति चेत् ? को विरोधः ? अन्यदिच्छति अन्यत् करोतीति स्वर्गकामो यागं कुर्यादित्ययमेव विरोधः । अत एव तर्हि न पुरुषविशेषपराः स्वर्गकामादिश्रुतयः, फलपरास्तु सन्तु !

अपि च—

**नियोगपरतन्त्रस्य पुरुषस्यान्यदिच्छतः ।**
**अन्यक्रिया विरुद्धेति न नियोगप्रधानता ॥**

अन्यदिच्छति अन्यत् करोतीति विरुद्धमिति वदतो नियोगप्राधान्यं हीयते, फलार्थिताहेतुत्वात् नियोगस्य । अपि च नियोगसामर्थ्यात् अन्यदिच्छतामन्यक्रिया परतन्त्राणां दृष्टा । साध्यस्यैव विशेषणत्वमिति चेत् ? नियोगविषयसंबन्धः कुतः ?

क्रियान्तरसाध्यस्यापि विशेषणत्वात् । इच्छामात्रे प्रवृत्तिदर्शनाच्चायुक्तमेवैतत् ।

[ उम्वेकः- नियोगविषयो यागः, तेन सह स्वर्गस्य साध्यसाधनसंबन्धः कुतः कस्मादित्याह- क्रियान्तरेति । ]

नन्वेवं नैमित्तिकत्वात् अग्निहोत्रादीनां नित्यत्वव्याघातः । अयमपरो दोषोऽस्तु, नियोज्यविशेषणपरात् स्वर्गपदात् फलप्रतिपत्तिः । ननु च स्वर्गकामस्य यागः कर्तव्योऽवगम्यते । कथं स तस्य कर्तव्यो यदि न तं संपादयति । न, गृहदाहवत इवेच्छावतः किञ्चिदसंपादयतोऽपि कर्तव्यता स्यात् । ननु तर्ह्यसंपादयति स्वर्गं यागे पुरुषः प्रवर्तते । न तर्हि स्वर्गकामः । न, निमिषितादिष्वतथाभूतेष्वपि प्रवर्तमानस्य स्वर्गकामत्वाविघातात् । हेत्वन्तरात्तत्र प्रवृत्तिरिति चेत् ? इहापि नियोगादिति न दोषः ।

[ उम्वेकः-- इहापीति । नियोगेन हि यागे प्रवर्तते न तु फलकामनयेति । ]

स्यादेतत्, स्वर्गसिद्धाविच्छापगमे नियोगनिष्पत्तिः अन्यथा कृतयागोऽपि नियोज्य एव स्यात् न कृतनियोगः । अतो नियोगार्थनिष्पत्तिसामर्थ्यात् स्वर्गादिसिद्धिप्रतीतिः । न, विषयसिद्ध्या नियोगार्थनिष्पत्तेः स्वर्गादेश्च नियोज्यविशेषणत्वेनाविषयत्वात् । अन्यथा



गृहदाहादेरप्यनुपरमप्रसङ्गः । तस्मात् फलपराः स्वर्गकामादिश्रुतय इति मनोहरम् । इति **आर्यमण्डनस्य कृतिः भावनाविवेकः अवसितः ।**

* **भावनाशब्दो** हि निष्पन्नात्मिकां सत्त्वरूपापन्नां लिङ्गसंख्यायोगिनीं ( भावनां ) अभिधत्ते । न चासौ आख्याते तादृशी अभिधीयते, लिङ्गसंख्यारहितरूपेण गम्यमानत्वात् । **वा.** २।१।१।१ **पृ.** ३८३. * **भावनाशब्दस्य** प्रयोजकव्यापारवाचित्वात् विधेरपि प्रयोजकलिङादिव्यापारत्वात् भावनात्वमस्ति । **सु.** पृ. ५५९.

* **भावनासंबन्ध्यर्थ**प्रतिपादनेनैव पदार्थानां अर्थवत्त्वं वक्ष्यते । **सु.** पृ. २५.

* **भावयेत्** कथमित्यपेक्षा भवति, न करणेन कथमिति सप्तमाद्यनवमाद्ययोश्च वक्ष्यति । **वा.** ३।६।१६।४३ पृ. १०६९. * भावयेत् । किम् ? स्वर्गम् । केन ? यागेन करणेन दर्शपूर्णमाससंज्ञकेन । स्वर्गः प्रधानभूतः, यागः साधनं उपादीयमानश्च, तस्मात् तेषामितरेतरयोगो विवक्षितः । **टुप्.** ११।१।१।१, * भावयेत् स्वर्गम् । केन ? यागेन । कथम् ? इति प्रकाराकाङ्क्षा भवति । ९।१।५।१७.

* **भाविनः** सुखरूपस्य फलस्य प्रतिबन्धकं दुःखजनकं यत् पापं तस्य नाशकं दुःखरूपं तपः, स्वामिसंस्कारः । **वि.** ३।८।४.

* **भाव्युपयोगद्रव्यसंस्कारार्थं** अदृष्टार्थं संनिपत्योपकारकं क्रत्वर्थं प्रवृत्तिरूपं वैदिकं कर्म द्विविधं साक्षाद्विनियुक्तसंस्कारार्थं साक्षाद्विनियुक्तोपकारकसंस्कारार्थं चेति । **बाल.** पृ. ८३.

* **भाव्युपयोगसंस्कारार्थं** दृष्टार्थं संनिपत्योपकारकं क्रत्वर्थं प्रवृत्तिरूपं वैदिकं कर्म द्विविधं द्रव्यसंस्कारकं देवतासंस्कारकं चेति । **बाल.** पृ. ८२.

* **भाव्यं** प्रागसत् । यच्च भाव्यते तद् व्यक्तं असत् । सतो हि भावो नोपपद्यते । असच्चेत् कर्मणा भाव्यते, पुनः पुनरपि भावयिष्यते, कृषिवत् । **भा.** ११।१।४।२४. * यद् **भाव्यं** तत् कर्तव्यतां प्रतिपद्यते । यन्निष्पन्नं तत् करणत्वं प्रतिपत्तुं शक्नोति दात्रादि । **टुप्.** ६।१।१।१. * कश्चित् विक्रियमाणतया **भाव्यः** यथा 'व्रीहीनवहन्ति' इत्यत्र अवघातभावनायाः व्रीहयः । कश्चित् संस्कार्यत्वेन यथा व्रीहय एव प्रोक्षणभावनायाः । कश्चिदुत्पाद्यत्वेन यथा 'प्रणीताभिरद्भिर्हवींषि संयौति' इत्यत्र संयवनभावनायाः पुरोडाशः । कश्चित् प्राप्यत्वेन यथा 'गां दोग्धि पयः' इत्यत्र गोदोहनभावनायाः पयः । **टुप्.** टिप्पणी च ९।१।२।२.

* **भाव्यता** । इच्छायोनित्वेन भावनायाः समीहितभाव्यनिष्ठत्वावधारणात् भावनास्वरूपालोचनया पुरुषार्थस्य भाव्यता । **सु.** पृ. ५८३.

* **भाव्यमानं** धर्मानाकाङ्क्षति करणानुग्रहद्वारेण । **टुप्.** ९।१।१।१, * **भाव्यमानेन** करणेतिकर्तव्यते आकाङ्क्षिते । ९।१।१।१.

* **भाषा** । यद्यपि पाणिनिना वेदे इव भाषायामपि स्वरानुशासनस्य कृतत्वात् लोकेऽपि स्वरनियमावश्यम्भावः तथापि लोके स्वरनियमस्य शिष्टैरनादरेण सत्यप्यनुशासने वचन्ति इत्यादिवत् अप्रयोगादेव स्वरनियमो नावश्यक इत्याहुः । **सोम.** १।३।१० वर्णकं १.

* **भाषाशब्दानां** न साधुत्वम्, अनादिशक्त्यभावात् । **मणि.** पृ. ७२.

**भाषास्वराधिकरणम्** । क्रतौ जपादिमन्त्रेषु प्रावचनः स्वरः एव प्रयोक्तव्यः, न भाषिकस्वरः ॥

**भाषास्वरोपदेशादैरवत्प्रावचनप्रतिषेधः स्यात् । १२।३।८।२०॥**

**भाष्यम्**— भाषिकेण स्वरेण केचित् मन्त्रा ब्राह्मणे उपदिष्टाः, मन्त्रसमाम्नाये त्रैस्वर्येण पठिताः । यथा 'इमामगृभ्णन्' इत्यश्वमेधे । कः पुनर्भाषिकः स्वरः ? उच्यते, **'छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः । उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते ॥'** इति । तेषु मन्त्रेषु प्रावचनस्य स्वरस्य प्रतिषेधः स्यात् निवृत्तिः । कस्मात् ? स्वरान्तरोपदेशात् । ऐरवत् । यथा इरापदस्योपदेशात् कर्मकाले गिरापदस्य निवृत्तिः । कथं पुनर्ज्ञायते स्वरस्यायमुपदेशो न मन्त्रस्य इति ? मन्त्रो नोपदेष्टव्यः, रूपादेव प्राप्नोति । स्वरस्त्वनुपदिष्टो न प्राप्नोति । तस्मात्तस्योपदेशः ।

**टुप्**— सामर्थ्येन मन्त्रो यच्छक्नोति अभिधातुम्, तत्र न विधीयते, प्राप्तत्वादेव । किन्तु भाषिकस्वरः तस्य ( मन्त्रस्य ) अप्राप्तः, स विधीयते ब्राह्मणेन । अथवा ( विधीयमानोऽपि ) स्वरविशिष्ट एव मन्त्रो विधीयते ।

**मन्त्रोपदेशो वा, न भाषिकस्य, प्रायापत्तेर्भाषिकश्रुतिः । २१ ॥**

**भाष्यम्**— मन्त्रस्य वाऽयमुपदेशो न स्वरस्येति । कथं ज्ञायते ? मन्त्रोपदेशसरूपोऽयं शब्दः । किमस्य तत्सारूप्यम् ? 'इत्यश्वाभिधानीमादत्ते' इत्याह । मन्त्रेण चासौ ( अभिधानी ) आदीयते, न भाषिकेण स्वरेण । मन्त्रोपादानं प्रत्याययति, नेतरस्य । कस्मात् तदुच्चार्यते ? प्रायापत्तेर्भाषिकश्रुतिः । भाषास्वरो ब्राह्मणे प्रवृत्तः । तन्मध्ये यदि प्रवचनेन पठ्यते, भाषिकस्वरसंतानो विच्छिद्येत, तत्परिहारार्थं भाषिकेणोपदेशः । यथा गायना गीतवस्तुकानि यानि गीतकेषु प्रक्षिपन्ति, तान्यपि तेनैव गीतिस्वरेणैव उच्चारयन्ति, मा भूत् स्वरसंतानस्य विच्छेद इति । तस्मान्न भाषिकस्वरोपदेश इति ।

**टुप्**—ये तावत् मन्त्राः लिङ्गेन विनियुज्यन्ते, ते यादृशा एव निर्ज्ञाताः, तादृशा एव प्रयोक्तव्याः । तत्र ब्राह्मणस्य व्यापार एव नास्ति । ये पुनः लिङ्गेन अप्राप्ताः वचनेन विधीयन्ते, तेषां अप्राप्तत्वादेव मन्त्रविधानेनैव कृतार्थं वाक्यम्, न भूयः स्वरमपि विधत्ते, वाक्यभेदभयात् । न च अरुणाऽधिकरणन्यायः अत्र, स्वरान्तरस्य स्वाध्याये सिद्धस्य द्वितीयस्य अदृष्टार्थताप्रसङ्गात् ।

**मन्त्रोपदेशो वा न भाषिकस्य० । २१ ॥**

**भाष्यम्**— इत्यस्य ( सूत्रस्य ) अपरा व्याख्या । 'इमामगृभ्णन्' इति न एतस्योपदेशः । किं तर्हि ? अनेन प्रतीकेन लक्षणेन असौ यथोत्पन्नो लक्ष्यते । प्रावचनेन ( मान्त्रवर्णिकेन ) च स्वरेण उत्पन्नः । तस्मात् तद्विधानं उपदेशः । यस्तु ब्राह्मणोत्पत्तिरेव मन्त्रः, तत्र लक्षणस्य अभावात् न लक्षणा । अतस्तस्य यथाश्रुति प्रयोगः । ( एतत् सूत्रं अष्टमाधिकरणे भाष्ये व्याख्यातमपि नवमाधिकरणप्रतिपाद्येन विशेषसंबन्धेन पुनर्व्याख्यातम् । तथापि तस्य नवमाधिकरणेन न संबन्धः, किन्तु अष्टमेनैव इति अस्माभिः नवमात् उद्धृत्य अष्टमे एवाधिकरणे निवेश्यते इति ज्ञेयम् ) ।

**विकारः कारणाग्रहणे । २२ ॥**

**भाष्यम्**— इरापदेन तु गिरापदस्य विकारो युक्तः, कारणाग्रहणात् । यथा भाषिकस्यानुपदेशो मन्त्रोपदेशेन कारणेनोक्तः, नैवमिरापदस्य अनुपदेशे किञ्चित् कारणं गृह्यते । तस्मात् तस्योपदेशः । स कर्मकाले विधानात् समाम्नायेन प्राप्तं गिरापदं बाधते । तस्मात्तत्र विकारः ।

**शा**— ये मन्त्राः समाम्नाये स्वरान्तरेण समाम्नाताः, ब्राह्मणे च स्वरान्तरेण उपात्ताः, ते किं स्वसमाम्नायसिद्धेन स्वरेण प्रयोक्तव्याः, उत ब्राह्मणस्वरेण इति संशये वाचनिकत्वात् ब्राह्मणस्वरस्य तेनैव प्रयोगः । ( सिद्धान्तमाह– ) नैवम् । ये तावत् लिङ्गविनियुक्ता मन्त्राः, तेषां ब्राह्मणस्य गुणार्थवादपरिसंख्यार्थत्वात् न मन्त्रस्वरूपे तत्स्वरे वा व्यापारः । येऽपि वचनविनियोज्याः, तेष्वपि मन्त्रविनियोगपरं वचनं न तत्स्वरविनियोगे व्याप्रियते । स्वरान्तरोपादानं तु ब्राह्मणे प्रवृत्तस्य स्वरस्य अविच्छेदार्थम् । तस्मात् आत्मीयेनैव स्वरेण कर्मण्यपि प्रयोगः ।

**सोम**– सर्वत्र कर्मकाले अध्ययनधर्माणामनादरेऽपि इह ब्राह्मणस्वरेणैव मन्त्रोच्चारणलक्षणकार्यसिद्धेः प्रसङ्गसिद्धकार्यत्वात् मन्त्राम्नानस्वरस्य अनादरः इत्युत्थितेः **संगतिः । सूत्रार्थस्तु**– भाषिकस्वरोपदेशेषु प्रवचनसिद्धस्वरस्य इरापदविधाने प्रवचनसिद्धगिरापदस्येव निवृत्तिः स्यादिति ।

**वि**— 'स्वरो मन्त्रे भाषिकः किं स्यात् प्रावचनिकोऽथवा ।, ब्राह्मणोक्तेरादिमो, मोऽन्त्यस्तदुक्तेर्लक्षणत्वतः ॥'

**भाट्ट**— कर्मकाले प्रयोक्तव्यानां मन्त्राणां 'अजपन्यूङ्खसामसु तानस्वरेण प्रयोगः' इत्युक्तम् । जपादिषु तु आम्नातस्वर एव । तत्र ये मन्त्राः समाम्नाये स्वरान्तरसमाम्नाताः, ब्राह्मणे च स्वरान्तरेण प्राप्ताः, तत्र कतरः स्वरो जपादौ उपयोक्तव्य इति चिन्तायाम् । ब्राह्मणेन मन्त्राणां सस्वरकाणामेव विनियोगात् अविनियुक्तमन्त्रसमाम्नायस्थस्वरस्य अर्थनिर्णयादौ पारायणादौ च



उपयोगसंभवेन कर्मकालप्रयोज्यत्वे प्रमाणाभावात् ब्राह्मणस्वर एव प्रयोक्तव्यः । **इति प्राप्ते**, विनियोजकवचनस्य शाब्दमन्त्रस्वरूपमात्रविनियोजकत्वेन अशाब्दस्वरविनियोगपरत्वे प्रमाणाभावात्, ब्राह्मणस्वरस्य च पूर्ववाक्यप्रवृत्तस्वराविच्छेदार्थत्वेन अन्यथासिद्धतया स्वतो विनियोगान्तरकल्पनानुपपत्तेः, मन्त्रसमाम्नानसिद्धस्वरस्य च अनन्यथासिद्धतया स्वाध्यायविधिबलेन विनियोगान्तरकल्पनया क्रतुमध्यप्रयोज्यत्वावधारणात्, तस्यैव जपादौ पाठः ।

यत्तु **पार्थसारथिना** लिङ्गविनियुक्तमन्त्रविषये ब्राह्मणे गुणार्थवादपरिसंख्याद्यर्थत्वेन पुनः श्रवणेऽपि मन्त्रविनियोगफलकत्वस्यैव अभावे सुतरां स्वरविनियोगस्याप्रसक्तेः न ब्राह्मणस्वरप्रसक्तिरिति दूषणान्तरमुक्तम्, **तत्** लिङ्गविनियुक्तमन्त्राणां जपतिचोदनाचोदितत्वाभावे जपत्वे प्रमाणाभावात्, यत्र जपतिचोदनाचोदितत्वसत्त्वे एव लिङ्गविनियोगः, तत्र ब्राह्मणे पुनःश्रवणसत्त्वे व्याख्येयम् ।

**मण्डन**—'मन्त्रोच्चारे भाषिको न स्वरः स्यात् ।'

**शंकर**—'ब्राह्मणस्वरतो न ते ।'

**भाषास्वरोपदेशादैरवत् प्रावचनप्रतिषेधः स्यात् । १२।३।८।२० ॥**

भाषा नाम स्वरविधायको ग्रन्थः, तत्र उक्तः स्वरः भाषास्वरः, तेन भाषास्वरेण मन्त्राणां ब्राह्मणे उपदेशात् कर्मकाले मन्त्राणां प्रावचनस्य प्रवचनकालीनस्य अध्यापनाध्ययनकालीनस्य स्वरस्य प्रतिषेधः स्यात् । कर्मकाले मन्त्राः प्रावचनेन स्वरेण न प्रयोज्याः किन्तु भाषिकस्वरेण प्रयोज्याः । ऐरवत् यथा इरापदस्य उपदेशात् कर्मकाले गिरापदस्य निवृत्तिः तद्वत् । इति पूर्वः पक्षः ।

**मन्त्रोपदेशो वा न भाषिकस्य प्रायापत्तेर्भाषिकश्रुतिः । २१ ॥**

ब्राह्मणे 'इत्यश्वाभिधानीं आदत्ते इत्याह' इत्यादौ मन्त्रोपदेशः मन्त्रस्योपदेशः न भाषिकस्य स्वरस्योपदेशः । भाषिकश्रुतिस्तु प्रायापत्तेः । भाषास्वरो ब्राह्मणे प्रवृत्तः । तन्मध्ये मन्त्रो यदि प्रावचनेन स्वरेण पठ्येत भाषिकस्वरसंतानस्य विच्छेदः स्यात्, तत्परिहारार्थं भाषिकेण उपदेशः । न मन्त्राणां भाषिकस्वरोपदेशः इति सिद्धान्तः । जपादिमन्त्रेष्वेतत् ।

**विकारः कारणाग्रहणे । २२ ॥**

यदुक्तं ऐरवत् इति ( २० सूत्रे ) तत्रोच्यते । युक्तः गिरापदे इरापदरूपो विकारः । कारणाग्रहणात् यथा भाषिकस्वरस्य अनुपदेशो मन्त्रोपदेशेन कारणेन उक्तः नैवं इरापदस्य अनुपदेशे किंचित् कारणं गृह्यते । तस्मात्तत्र विकारः । तस्मात् कर्मकाले जपादिमन्त्रेषु न भाषिकस्वरोपदेशः किन्तु त्रैस्वर्यम् । इति सिद्धान्तः । **के.**

* **भाषिकः** स्वरः । 'छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः । उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते ॥' **भा.** १२।३।८।२०. * भाषिकः स्वरः तत्तच्छाखीयः ब्राह्मणस्वरः । **वि.** १२।३।८. * भाषिकः स्वरः क्रतौ ब्राह्मणोत्पन्नानां मन्त्राणां प्रयोक्तव्यः । १२।३।९।२३–२४. **मीको.** पृ. १४९७ 'क्रतौ ब्राह्मणोत्पन्नानाम्०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **भाष्यान्तर**जनितभ्रान्त्यपनयार्थं तु पुनरारम्भः ( अश्वप्रतिग्रहेष्ट्यधिकरणस्य ) । **वा.** ३।४।११।३१ पृ. ९६७.

* **भाष्यकारेण** सदस्यनिराकरणपरं यत्किञ्चिदुक्तं ( वरणमपि चमसश्च ब्रह्मण एव ) तत् उपेक्षणीयम् । **वा.** ३।७।१८।३८.

* **भाष्यकारान्तरम् ।** यस्तु अत्रैवाधिकरणे भाष्यकारान्तरेण अग्नेः फलवदफलत्व– प्राकृतवैकृतत्व– नित्यानित्यत्व– उत्तरवेदिविकाराविकारत्व– विचारः कृतः, स उदाहरणान्तरेषु अधिकरणान्तरसिद्धः, इह असंबद्धोऽपि स्मरणमात्रदर्पेण उपन्यस्तः इत्युपेक्षितः । **वा.** २।३।१०। २३ । अत्र **सुधा**– फलवदफलत्वविचारः पर्णमय्यधिकरणसिद्धः । प्राकृतवैकृतत्वविचारस्तु अस्मिन्नेवोदाहरणे अग्न्यतिग्राह्याधिकरणसिद्धः । नित्यत्वानित्यत्वविचारस्तु गोदोहनोदाहरणे 'नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषात्' ( ३।६।३।१० ) इति तृतीयाधिकरणसिद्धः । उत्तरवेदिविकाराविकारत्वविचारस्तु संकर्षे द्वितीयेऽध्याये 'मध्यमायामुपसदि अग्निश्चीयते, प्रकृत्यु-

पक्षतत्वात् ' इत्यत्र तत्रत्यभाष्यकृता वक्ष्यमाणः । पृ. ९४९. * **भाष्यकारान्तरैः** वारुणेष्टिः प्रतिग्रहीतुरेवेष्टिः व्यवस्थापिता इति वार्तिकादिषु उक्तम् ( ३।४।११।३१ इत्यत्र ) । **पराक्रमः** ९।१.

* **भिक्षा ।** यज्ञार्थं यद् भिक्षितं तत् ऋत्विजः परिक्रेतुं अन्यच्च यज्ञार्थं साधयितुम् । **भा.** १०।२। ८।२७.

**भिक्षुपादप्रसरणन्यायः ।** यथा कश्चिद्भिक्षुः यथेष्टान्नाच्छादनवासगृहादिलाभाय धनाढ्यगृहे प्रविष्टो युगपत्तल्लाभं दुर्लभं मन्वानः पूर्वमिह पादप्रसारस्तु मे भवतु पश्चात्परिचयं संपाद्य क्रमेण सर्वं सम्पादयिष्यामीति धिया अल्पां भिक्षां स्वीकरोति, तथा मातेवातिहितैषिणी श्रुतिरद्वैततत्त्वे मुमुक्षोः प्रवेशमिच्छन्ती सकृत् तं अशक्यं मन्वाना पूर्वोक्तक्रमेण संसारमुक्तये तद्बोधयतीति बोध्यम् । **साहस्री.** ४३.

* **भिक्षुभिया स्थाल्यनधिश्रयणन्यायः ।** नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते ( भामती. १।१।१ ब्रसू. पृ. ७४ ) । **संग्रहः**.

**भिक्षुभिया स्थाल्यनधिश्रयणन्यायः ।** यथा भिक्षुकभयेन कोऽपि स्थाल्य( न )धिश्रयणं न करोति, तथा स्वतन्त्रविचारेण तत्त्वज्ञानासंभवेनोपदेशकानां च प्रतारकत्वशङ्कास्पदत्वात् प्रत्युत तेभ्योऽनर्थप्राप्तिशङ्कासंभवेन तद्भयेन त्याज्य एव गुर्वधीनो ब्रह्मविचार इति न समीचीनम् । किन्तु शास्त्रोक्तप्रकारेण सम्यक् परीक्षया साधुत्वाऽसाधुत्वनिर्धारणात् असाधुत्याग-साध्वाश्रयणयोः संभवेनाऽसाधुकृतप्रतारणभिया ब्रह्मविचारो न त्याज्य इति भावः । **साहस्री.** ३४७.

* ' **भिक्षुको भिक्षुकान्तरात् लिप्सते** ' इति **न्यायः ।** एकाहाद्यथा द्वादशाहेऽतिदिश्यन्ते उक्थ्यादिस्तोत्राणि तथा शतोक्थ्येऽपि एकाहादेव अतिदिश्यन्ताम् । द्वादशाहादतिदेशे तु ' भिक्षुको भिक्षुकान्तरात् लिप्सते ' इति न्यायः आपतेत् । **वि.** ८।३।५.

* **भिद्येत** हि तथा वाक्यम्, यदि उभयत्र विधिः । द्वे ह्येते तदा वाक्ये । ( ' वाजपेयेन स्वाराज्यकामो यजेत ' इत्यत्र ) । **भा.** १।४।५।८.

* ' **भिन्ने** ' इतिवत् ' पुत्रे ' इति निमित्तपरैव सप्तमी इति पूर्वपक्षः ( ' वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते ' इत्यत्र ) । **भाट्ट.**४।३।१४. * ' भिन्ने जुहोति ' इति सप्तम्यन्तं निमित्तं भवति । **टुप्.**९।१। १।१. * ' भिन्ने जुहोति ' इति हि नैमित्तिकं कर्माङ्गम् । **भा.** ६।४।४।१६, * ' भिन्ने जुहोति ' इति होमः एकदेशभेदेऽपि । कृत्स्नभिन्नं नाम चूर्णीकृतं अयोग्यं प्रयोजनाय । यच्छकले विगतेऽपि प्रयोजनसमर्थं तदेकदेशभिन्नम् । ६।४।४।१०. * ' भिन्ने जुहोति ' ' स्कन्ने जुहोति ' इति विहितो भेदनाद्विहोमः निमित्तावृत्तौ आवर्तनीयः, न तु सकृदेव कार्यः । दर्शपूर्णमासादौ पात्रादिभेदे आज्यादिस्कन्दनादौ चायं होमः । **वि.** ६।२।९, * ' भिन्ने जुहोति ' ' स्कन्ने जुहोति ' एषां भेदनहोमादीनां नैमित्तिकानामनेकेषां प्रयोगवचनपरिगृहीतत्वेन समुच्चयः, न तु विकल्पः, भेदनादिनिमित्तमुपजीव्य विहितत्वात् । १२।३।६.

* **भिन्नकर्तृकत्वं** प्रैषप्रैषार्थयोः । ३।८।११।२३.

* **भिन्नकल्पयोः** अपि राजपुरोहितयोः कुलाययज्ञेऽधिकारः । ६।६।२।१२–१५.

* **भिन्नकार्याणां** गुणानां एकस्मिन् कर्मणि समुच्चयः । १२।३।३।९. **मीको.** पृ. १२६८ ' एकस्मिन् कर्मणि भिन्नकार्याणां॰ ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **भिन्नजातिषु** पशुषु कुम्भ्यादीनां भेदेनानुष्ठानम् । ११।४।१०।४०–४१.

* **भिन्नदेवताकेष्वपि** शूलादीनां तन्त्रता । ११।४। ९।३४–३९.

* **भिन्नदेवताकपशुगणे** वसाहोमस्य आवृत्तिः । ११।२।६।२६.

* **भिन्नदेशकालानामप्यङ्गानां** तन्त्रता वचनानुसारेण । **सोम.** ११।३।१.

* **भिन्नप्रयोगवचनपरिगृहीतानां** अपि पौर्वापर्यं चिन्त्यते । **टुप्.** ५।१।१७।३०–३४.

* **भिन्नप्रवृत्तिनिमित्तैकार्थवृत्तित्वं** सामानाधिकरण्यम् । **सु.** पृ. ४०९.



**भीमभासदृढन्यायः ।** ' दामव्यालकटन्यायो न स्यात् तव कदाचन । भीमभासदृढन्यायः सर्वदा तेऽस्तु राघव ॥ ' इत्यादि वासिष्ठे सप्रपञ्चमुपन्यस्तम् । तत्र आद्यस्य ( दामव्यालकटन्यायस्य ) उच्चैस्तरां दशामापन्नस्यापि अज्ञस्य अतिनीचदशाप्राप्तिः अवश्यं कालेन भवतीति तत्त्वबोधोऽवश्यं संपाद्य इति विवक्षायां प्रवृत्तिः । दामव्यालकटाख्याः त्रयः असुराः शम्बरेण स्वमायया निर्मिताः । ते च तलप्रहारादिना मेर्वादिचूर्णीकरणे शक्ता अपि अज्ञानप्रभावात् कालेन मशकादियोनिं प्रापुः इति प्रसिद्धं तत्र । द्वितीयस्य ( भीमभासदृढन्यायस्य ) तु तत्त्वविन्न कदापि स्वपदात् पततीति विवक्षायां प्रवृत्तिः । यथा भीमभासदृढाख्याः त्रयोऽसुरास्तेनैव शम्बरेण तथा निर्मिताः चिरं जीवन्मुक्तिसुखमनुभूय निर्वाणपदं प्राप्ता इति संक्षेपः । **साहस्री.** ४०५,४०६.

* **भीष्मस्य** च सर्वाश्रमधर्मव्यतिरेकेणावस्थानम् । अपत्नीकस्य च क्रतुप्रयोगः धर्मव्यतिक्रमः । **वा.**१।३। ३।७ पृ. २०३–०४ । भीष्मस्य अनाश्रमित्वं अपत्नीकस्य च ' स एव भीष्मः कुरुवंशकेतुर्येनाहृतास्त्रिंशतो वाजिमेधाः' इति क्रतुप्रयोगश्चेति धर्मव्यतिक्रमद्वयम् । **सु.** पृ. १८५ । ( इति शङ्कायामुत्तरम्— ) भीष्मस्य पितृभक्तिवशात् विद्यमानधर्ममात्रार्थदारस्य व्यवहितापत्यकृतपित्रानृण्यस्य यागसिद्धिः । ' भ्रातृणामेकजातानामेकश्चेत् पुत्रवान् भवेत् । सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥ ' इत्येवं विचित्रवीर्यक्षेत्रजपुत्रलब्धपित्रनृणत्वः केवलयज्ञार्थपत्नीसंबन्ध आसीत् इति अर्थापत्त्या अनुक्तमपि गम्यते । ' यो वा पिण्डं पितुः पाणौ विज्ञातेऽपि न दत्तवान् । शास्त्रार्थातिक्रमाद्भीतो यजेतैकाक्यसौ कथम् ॥ ' **वा.** १।३।३।७ पृ. २०८ । भीष्मेण शंतनवे सत्यवतीं तत्पितरं याचता त्वयि महाबले राज्याभिलाषुके तिष्ठति एतस्याः पुत्राणां राज्यालाभात् नेमां ददामि इति तत्पित्रा प्रत्याख्यातेन 'राज्यं नाहं करिष्यामि' इति प्रतिज्ञाते, त्वय्यनिच्छत्यपि त्वत्संततिभयात् नैतस्याः संततिः राज्यभागिनी स्यात् इति तत्पित्रा पुनः प्रत्याख्यातेन ' अपत्यहेतोरपि च करोम्येतद्विनिश्चयम् । अद्यप्रभृति मे दाश ब्रह्मचर्यं भविष्यति ॥ ' इति पितृभक्त्या ब्रह्मचर्यव्रतग्रहणात् नैमित्तिकेन च व्रतेन नित्यस्य ऋतुकालगमनस्य बाधात्, धर्ममात्रार्थं अहं भार्यां परिणेष्यामि इति परिभाष्य परिणीतायां अगमनेऽपि अदोषः । **सु.** पृ. १९२.

* **भीष्मादेः** यज्ञानधिकारिणः यष्टृत्वकीर्तनालम्बनानि पूजाप्रतिष्ठादानानि पुराणादौ दर्शितानि । **सु.** पृ. ७५०.

**भुजया शिरोवेष्टनेन नासिकास्पर्श इति न्यायः ।** यत्र आयासं विना साक्षात् सिद्ध्यन्तमर्थं उपेक्ष्य आयासेन परम्परया स एवार्थः साध्यते, तत्र अयं न्यायः अवतरतीति । **साहस्री.** २५४.

' **भुवनस्य पते** ' **इत्याद्यो दशाहुतयो रथमुखे स्युः ॥**

' भुवनस्य पते इति रथमुखे दशाहुतीर्जुहोति ' इति विधावेव शाखान्तरे ' पञ्चाहुतीः ' इति पठ्यते, तत्र शाखाभेदाद्विकल्पे प्राप्ते, ' भुवनस्य पते ' ' स नो भुवनस्य पते ' इत्यनयोर्द्वयोरेकरूप्यादेकपर्यायीकृत्य पञ्चेति वादः । अथवा दशसु पञ्चानां अवयुत्यवादः ' यदष्टाकपालो भवति ' इतिवत् । शाखान्तरीयस्याप्युपसंहारेण एकवाक्यतोपपत्तौ वाक्यभेदविकल्पयोः अन्याय्यत्वात् । **संकर्ष.** २।४।२८.

* '**भूः** भुवः सुवरित्युभौ एतौ सहाधत्ते स हि तस्य योनिः ' इति श्रुतौ उभौ इति पदेन गार्हपत्याहवनीययोः उपादानोपादेययोः सहाधानाभावेन परामर्शायोगात् सभ्यावसथ्यपरत्वस्य वक्तव्यतया ' स हि तस्य ' इत्यस्य साहित्यवदुभयपरत्वेन ( साहित्यविशिष्टोभय॰ ) आहवनीययोनिकत्वश्रवणात् सभ्यावसथ्ययोः आहवनीयात् आधानं स्यात् इत्यादिः पूर्वपक्षः 'स हि तस्य इत्येकवचनेन सहितामिद्वयपरत्वायोगेन सः गार्हपत्यः तस्य आहवनीयस्य योनिः इत्येव तदर्थकतया तयोर्लोकतः प्राप्तिः इति सिद्धान्तः । **संकर्ष.** ३।२।३. * ' भूः ( नाम यागः ) वैश्वदेवस्त्रिवृदेव सर्वः, तस्य विश्वत्वः स्तोत्रीयाः धेनुर्दक्षिणा ' । सा च दक्षिणा कृत्स्नस्य क्रतुदाक्षिण्यस्य निर्वर्तिका, न तु केवलं गवाम् । १०।३।१४।

५६–५८. **मीको.** पृ. २२७७ 'धेनुन्यायः' इत्यत्र द्रष्टव्यम्। * 'भूः स्वाहेति गार्हपत्ये जुहुयात्, भुवः स्वाहेति दक्षिणाग्नौ जुहुयात्, स्वः स्वाहेत्याहवनीये जुहुयात्, भूर्भुवःस्वः स्वाहेत्याहवनीये जुहुयात्' एतेषां विकल्पः, न समुच्चयः, विविधवैगुण्यसमाधानाय प्रायश्चित्तत्वेन विहितत्वात्। ऋग्–यजुः–सामतो भ्रेषप्रायश्चित्तार्थं निषिद्धाचरणजन्यदोषपरिहारार्थं च तेषां क्रमेण विधानेन अन्योन्यनिरपेक्षत्वात्। **वि.** १२।३।५, * 'अथैष भूः' इति **एकाहविशेषो भूः**। तत्र 'धेनुर्दक्षिणा'। अनया धेन्वा 'गौश्चाश्वश्चाश्वतरश्च' इत्यादौ गोसामान्यस्यैव बाधः नाश्वादेः, ततश्च द्वादशशतं गावो धेनव एव दातव्याः, अश्वादयश्च दातव्या एव इति पूर्वपक्षः। धेनुरेकैव दातव्या। धेन्वा च तया निखिलदक्षिणाबाधः इति सिद्धान्तः। १०।३।१४.

**⌛ भ्वादिन्यायः।** यथा 'भू सत्तायाम्' इत्यादिधातुर्हि निजनानार्थोपसर्गप्रत्ययरूपोपाधिभेदेन नानात्वं भजति, तद्यथा भवतीत्यत्र 'सत्तायां मङ्गले वृद्धौ निवासे व्याप्तिसंपदोः। अभिप्रायेऽपि शक्तौ च प्रादुर्भावे गतौ च भूः॥' इत्युक्तार्थभेदेन प्रभावानुभावपरीभवेत्यादौ उपसर्गभेदेन भवनं भूयते भवितेत्यादौ प्रत्ययभेदेन चार्थभेदः प्रतीयते, तथैकमेव ब्रह्म उपाधिभेदेन नानेवावभासते इति। **साहस्री.** १७८.

* **भूवादिः** धातुः अभिधात्री श्रुतिः। **बाल.** पृ. ४१.

* **भू–विक्लिद्योः** केवलप्रयोज्यक्रियानिष्ठत्वम्। **वा.** २।१।१।१ पृ. ३७८.

**⌛ भूशैत्यौष्ण्यन्यायः।** अयं न्यायः अन्यासाधारणधर्मस्य अन्यत्र आरोपविवक्षायां प्रवर्तते। **साहस्री.** ३७३.

* **भूसंज्ञकैकाहे** औपदेशिकधेनुदक्षिणया आतिदेशिकद्वादशशतदक्षिणाया बाधः। १०।३।१४।५६–५८. **मीको.** पृ. २२७७ 'धेनुन्यायः' इत्यत्र द्रष्टव्यम्।

* **भूतं** द्रव्यं भव्यं कर्म। **भा.** ६।१।१।१ पृ. १३४८.

**⌛ 'भूतं भव्यं भविष्यद्वषट् स्वाहा नमः' इत्यादौ न मन्त्रभेदः॥**

'भूतं भव्यं भविष्यद् वषट् स्वाहा नम ऋग्यजुःसामवषट् स्वाहा नमः' इत्यादौ वषट्कारस्वाहाकारनमस्काराः प्रदानार्थाः, भूतादित्रयेण यथाक्रममन्वयेन त्रिमन्त्रीत्वसंभवात्। **इति प्राप्ते,** सामान्यसंबन्धकारिप्रमाणाभावेन केवललिङ्गेन होमानां कल्पनायोगात् भूताद्युद्देशेन वषडाद्यभेदकथनस्य स्तुत्यर्थत्वेनोपपत्तेश्च मुष्टिकरणमन्त्रस्थस्वाहाकारवदेतेऽपि न प्रदानार्थाः। **संकर्ष.** २।४।२९.

**⌛ भूतं भव्यायोपदिश्यते इति न्यायः।** अयं मीमांसान्यायप्रकाशे धृतः। तथाहि, किं द्रव्यगुणयोः फलभावनाकरणत्वमुत धात्वर्थस्य इति भावार्थाधिकरणे (२।१।१।१–४) संदिह्य द्रव्यगुणयोरेव भावनाकरणत्वं भूतं भव्यायोपदिश्यते इति न्यायादित्याशङ्क्य धात्वर्थस्यैव भावनाकरणत्वमित्युक्तं तत्र इति। **साहस्री.** ८५२. * भूतं द्रव्यं भव्यां क्रियां निर्वर्तयति इति क्रियातः अदृष्टम्। अथवा यद्यपि यागो देवतां संस्कुर्वन् उपकरोति, तथापि साधनतां प्रतिपद्यमान आश्रयो भवति, नान्यथा। अतो **भूतं भव्यायोपदिश्यते। टुप्.**४।१।७।१८. * स्वर्गादेस्तु नामपदाभिधेयतया सिद्धरूपस्य आख्यातवाच्यं साध्यं धात्वर्थं प्रति 'भूतं भव्यायोपदिश्यते' **इति न्यायात्** साधनतया गुणत्वेनाभिसंबन्धः। तथा च पारमर्षं सूत्रम् 'द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः' (६।१।१।१) **भामती.** ३।२।८।३९ ब्रसू.

**⌛ भूतं भव्याय कल्पते इति न्यायः। साहस्री.** ७७७.

* भूतं हि तावद् भव्यार्थं इत्येतद्विज्ञातं कर्मणां प्रयोजनम्। **भा.** १०।१।६।१०. * **भूताः** नाम मन्त्राः राजसूये 'पृथिव्यै स्वाहा' इत्यादयः। अग्निप्रकरणे 'पृथिव्यसि जन्मना' इत्यादयश्च। तथा च भूतेष्टकोपधाने उभये मन्त्राः समुच्चयेन विकल्पेन वा ग्राह्या इति पूर्वपक्षः। न सर्वे ग्राह्याः किन्तु साकाङ्क्षा एव (अग्निप्रकरणस्थाः) ग्राह्याः इति सिद्धान्तः। **संकर्ष.** २।४।२३. * **भूतस्य** च भव्यार्थता न्याय्या



दृष्टार्थत्वात्। न तु भव्यस्य भूतार्थता। **भा.** ६।१।१।१ पृ. १३४८, * भूतस्य भव्यार्थता भविष्यति। एतद्धि कर्मणां प्रसिद्धं कार्यं यदाराद्दुपक्रिया। १०।४।२०।३८. * भूतस्य स्वर्गपदवादेः द्रव्यस्य, भव्यं कर्म प्रति गुणत्वेन अन्वयः वक्ष्यते। **सु.** पृ. ४१५.

* **भूतान्वाख्यानमात्रं** यथावस्थितैः 'सोऽरोदीद्यद्रोदीत्तद्रुद्रस्य रुद्रत्वम्' इत्यादिवाक्यैः यत् प्रतिपाद्यते तत्र यद्यपि सत्यत्वमस्त्येव तथापि न तेन प्रयोजनम्। **वा.** १।२।१।१.

* **भूतार्चकः।** 'एवं यः सर्वभूतानि ब्राह्मणो नित्यमर्चति। स गच्छति परं स्थानं तेजोमूर्तिः पथर्जुना (पथा ऋजुना)॥' मनुः ३।९३। **वा.** टिप्पणी च ३।१।७।१३ पृ. ७०२.

* **भूतार्थवादः।** 'विरोधे गुणवादः स्यादनुवादोऽवधारिते। भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः॥' विरोधावधारितत्वयोः ज्ञानाभावे भूतार्थवादः। अत्र औपनिषदाः 'प्रजापतिरात्मनो वपामुदक्खिदत्' इत्यादीनुदाहरन्ति। तदयुक्तम्, नवमे विग्रहादिपञ्चकनिरासात्। 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं यत् तत्सुखं स्वःपदास्पदम्॥' इति उपनिषदश्च उदाहरणम्। **बाल.** पृ. ४८–४९.

* **भूताधानवत्।** आधानं भूतं सद्यथा आहिताग्नित्वं उत्पादयति तथा भूतचयनमात्रं अग्निचित्त्वं उत्पादयति इति पूर्वपक्षे। **भाट्ट.** ५।३।१०.

* **भूतेष्टकाः** अग्निशेषः न तु चितिशेषः। तेन ताः सकृदुपधातव्याः न तु प्रतिचिति। **भा.** ५।३।६। १५–१६. * 'भूतेष्टका उपदधाति' इति विहितानां इष्टकानां उपधानं प्राकरणिकैरेव मन्त्रैः। **संकर्ष.**२।४।२३. * भूतेष्टकाः नाम इष्टकाः अप्रकरणे समाम्नाताः। तासामपि अग्न्यर्थत्वात् अखण्डत्वं अक्ष्णत्वं भस्मसंयोगः इति धर्माः कर्तव्याः। प्रकरणात् वाक्यस्य बलवत्त्वात्। **भा.** ३।६।१२।३५.

* **भूतेष्टकोपधानं** प्राकरणिकैरेव मन्त्रैः। **संकर्ष.** २।४।२३. **मीको.** पृ. ४५ 'अग्निचयने भूतेष्टकोपधानं॰' इत्यत्र द्रष्टव्यम्। * भूतेष्टकोपधानं राजसूयमन्त्रैरेव इतिपक्षे यथाऽऽम्नातैरेव स्वाहाकारान्तैर्मन्त्रैः कर्तव्यम्। **संकर्ष.** २।४।२४. **मीको.** पृ. ४५ 'अग्निचयने भूतेष्टकोपधानं राजसूयगतमन्त्रैरेव॰' इत्यत्र द्रष्टव्यम्। * **भूतेष्टकोपधाने** यदि पृथिव्यै स्वाहेत्यादिराजसूयस्थमन्त्राणां विनियोगः स्यात् तदा स्वाहाकारमुन्मूल्य प्रयोगः इति पूर्वः पक्षः। यथाम्नानमेव प्रयोगः इति सिद्धान्तः। **संकर्ष.** २।४।२४.

* **भूतेष्टका–चित्रिणी–वज्रिणी–इष्टकानां** मध्यमचितौ उपधानम्। ५।३।७।१७–१९। तच्च लोकंपृणायाः प्राक्। ५।३।८।२०.

* **भूतोपयोगसंस्कारार्थं** अदृष्टार्थं संनिपत्योपकारकं क्रत्वर्थं प्रवृत्तिरूपं वैदिकं कर्म यथा, हुतहविर्दाहः शिष्टाचारकल्प्यविधिप्राप्तः। **बाल.** पृ. ८३, * भूतोपयोगसंस्कारार्थं दृष्टार्थं संनिपत्योपकारकं क्रत्वर्थं प्रवृत्तिरूपं वैदिकं कर्म प्रतिपत्तिः इत्युच्यते। पृ. ८२.

* **भूतत्वं** वर्तमानध्वंसप्रतियोगित्वम्। **मणि.** पृ. ११६.

* **भूतभविष्यतोः** भूते लक्षणा, भविष्यति नास्ति लक्षणा। **टुप्.** ४।१।११।२६.

* '**भूतभव्यसमुच्चारणे** भूतं भव्यायोपदिश्यते' (भाष्यवाक्यं ३।४।१४।४०)। स्वर्गकामाधिकरण-(६।१।१)पूर्वपक्षसूत्रे भूतस्य स्वर्गपदवादेः भव्यं कर्म प्रति गुणत्वेन अन्वयः वक्ष्यते। **सु.** पृ. ४१५. * भूतभव्यसमुच्चारणे हि भूतं भव्यार्थं भवति। भव्यस्य तु भूतार्थत्वे अदृष्टार्थता कल्प्या स्यात्। न च दृष्टे सति अदृष्टकल्पना भवति। **भा.** ११।२।१६।६६.

* **भूतभव्यसमुच्चारणन्यायः।** (६।१।१।१–३) अयं षष्ठाद्यपूर्वपक्षव्युत्पाद्यः। **सु.** पृ.१५४४. * क्रयस्य यागसाधनसोमप्राप्त्यर्थत्वेन **भूतभव्यसमुच्चारणन्यायेन** विधायकलाघवेन च प्राधान्यम्। **वा.** ३।१।६।१२ पृ. ६९८, * 'पशुमालभेत' इत्यत्र पदौ द्रव्यस्य निष्प्रयोजनत्वात् सक्तुवत् अविवक्षितेप्सितार्थया द्वितीयया कारकसामान्यं लक्षयित्वा तद्विशेषाकाङ्क्षायां सत्यां भूतभव्यसमुच्चारणन्यायेन करणत्वेन गुणभावः अवगमितः। ३।१।७।१५. * प्राभाकराः

भूतभव्यसमुच्चारणन्यायेन अर्थवादानां चोदनार्थकार्ये हेतुत्वेनान्वयात् हेतुसापेक्षत्वलक्षणमप्रामाण्यं चोदनानां निराकर्तुमिदमधिकरणं इत्याहुः । **सोम.** १।२।१. *** भूतभव्यसमुच्चारणन्यायात्** अनुवषट्कारयागे वस्तुसामर्थ्यात् सोमः अङ्गम् । **सु.** पृ. ११५४–५५, * भूतभव्यसमुच्चारणन्यायात् सर्वत्र धात्वर्थनिष्पादकत्वं द्रव्यस्य अवसीयते । पृ. ६२२.

*** ' भूतभाव्युपयोगं** हि संस्कार्यं द्रव्यमिष्यते । सक्तवो नोपयोक्ष्यन्ते नोपयुक्ताश्च ते क्वचित् ॥ ' इति सक्तुन्यायस्य स्वरूपम् । **वा.** २।१।४।१२ पृ. ४११.

*** भूतभाव्युपयोगोभयदेवतासंस्कारार्थं** दृष्टार्थं संनिपत्योपकारकं क्रत्वर्थं प्रवृत्तिरूपं वैदिकं कर्म यथा, पशुपुरोडाशयागः । इदं च आश्रयिकर्मभेदेषु वक्ष्यते । **बाल.** पृ. ८२.

*** भूतभाव्युपयोगोभयसंस्कारार्थं** तु द्रव्यसंस्कारकं कर्म नास्त्येव । **बाल.** पृ. ८२.

*** भूमा गौणीवृत्तिहेतुः ।** ' सृष्टीरुपदधाति ' इत्यत्र ' एकयाऽस्तुवत ' इत्यनुवाके ( तैसं. ४।३।१० ) सृजधातुप्रयोगभूमा वर्तते । तेन सृष्टि–असृष्टि–समुदायः सृष्टिशब्देन लक्ष्यते । **शा.** १।४।१७.

**卐 भूमा । १।४।१२।२३ – ५ ॥**

' सृष्टीरुपदधाति ' इति श्रूयते । अग्निचयने उपधेयाः काश्चित् इष्टकाः सृष्टयो नाम । तदुपधानकरणमन्त्रेषु बहुषु ' ब्रह्म असृज्यत ' ' भूतानि असृज्यन्त ' इति सृजधातुः प्रयुक्तः । केषुचित्तु सृजधातुर्नास्ति । तथापि सृजधातुघटितानां बहुत्वात् सर्वे मन्त्राः तदुपधेया इष्टकाश्च सृष्टिशब्देन उच्यन्ते । तेनात्र सृष्टि–असृष्टिसमुदायः सृष्टिशब्दबोध्यः । तादृशे समुदाये सृष्टिशब्दो गौणः । गुणश्चात्र भूमा नाम बाहुल्यम् । बहोर्भावः भूमा । अत्र सप्तदश मन्त्राः, तेषु प्रथम–चतुर्दश–षोडश–सप्तदशेषु सृजधातुर्नास्ति, तत्र सृष्टिशब्दो गौणः । **के.**

**卐 भूमाऽधिकरणम् ।** सृष्टिन्यायः ॥

**भूमा । १।४।१२।२३–५ ॥**

**भाष्यम्––** ' सृष्टीरुपदधाति ' इति श्रूयते । तत्र गुणविधिः अर्थवादः इति संदेहे, अपूर्वत्वात् विधिः । **इति प्राप्ते, उच्यते ।** यदि विधिः, सृष्टिमन्त्रका उपदधातीष्टकाः इत्यर्थः । तत्र **नेष्टकानां** विशेषः कश्चिदाश्रीयते, एवंरूपाः सृष्टिमन्त्रका **नैवंरूपा** इति । तत्र सर्वासां सृष्टिलिङ्गा मन्त्राः प्राप्नुयुः । अन्येषां असंयुक्तानां मन्त्राणां आनर्थक्यं स्यात् । तस्मात् अनुवादः, मन्त्रसमाम्नानात् प्राप्तानामुपधाने मन्त्राणाम् । सृष्टीनां सृष्टिषु संकीर्तनं सर्जनार्थवादार्थम् । अपि च विधित्वे लक्षणा, ' एकयाऽस्तुवत ' इत्यत्र या असृष्टयस्ता लक्षयेत् । ननु अनुवादेऽपि लक्षणा । नानुवादपक्षे लक्षणायां दोषः । कथं तु असृष्टिषु सृष्टिषु च सृष्टिशब्द इति । भूम्ना । बहवस्तत्र सृष्टिलिङ्गा मन्त्राः, अल्पशो विलिङ्गा इति ।

**वा––भूमा ।** यदि ' सृष्टीरुपदधाति ' इत्याख्यातप्रत्ययबलात् विधिराश्रीयते, तत्र न जात्या धर्मविशेषेण वा काश्चिदिष्टकाः सृष्टयो नाम अन्याभ्यो विलक्षणा विज्ञायन्ते, या एवंविधलिङ्गैर्मन्त्रैः उपधीयन्ते ता एव सृष्टयः, तत्रोपधानमात्रमुद्दिश्य मन्त्रेषु विधीयमानेषु सकलव्याप्तेः प्रत्यक्षवचनाविनियुक्तलिङ्गप्रकरणविनियोज्यमन्त्रानर्थक्यप्रसङ्गः । तस्मात् प्रकरणपाठादेव सर्वत्र मन्त्रेषु प्राप्तेषु एकदेशानुवादः सृष्टयभिधाननिमित्तार्थवादार्थः । **अत्र चोदयन्ति ।** चयनचोदनयैव उपधानस्य प्राप्तत्वात्, लिङ्गप्रकरणानुमितया च श्रुत्या मन्त्रप्राप्तेः, प्रदेशान्तरस्यार्थवादानुपपत्तिः, एकवाक्याधीनत्वात् अर्थवादप्रवृत्तेः । तथा च प्रथनार्थवादे व्याख्यातम् । न चान्यो गुणः श्रूयते, यदर्थता कल्प्येत, तत्र परिसंख्यार्थतैव प्राप्नोति । ततश्च तदवस्थमानर्थक्यमिति वाच्यं पुनःश्रुतिप्रयोजनम् । **तत्र केचिदाहुः ।** उपधानमेवात्र विधीयते, तन्माहात्म्यप्रदर्शनार्थं च मन्त्रग्रहणम् । इत्थमिदं प्रशस्तम्, यदेवंरूपैर्मन्त्रैः क्रियते इति । चयनेनार्थगृहीतमुपधानमिति चेत्, संहतस्थापनेनापि चयनोपपत्तेः । न चैवं संहतानामेवोपधानं स्यात्, न, तस्येष्टकाः प्रति उपादीयमानस्य प्रतिप्रधानावृत्तिन्यायसिद्धेः । अपि च, **' प्राप्नुवन्त्यपि वक्तव्या पुनरेवंविधा क्रिया । आध्वर्यवसमाख्यानं तथा हि प्रतिपद्यते ॥ '** तत-श्चाध्वर्युकर्तृकत्वं च लभ्यते । अर्थगृहीतायां तु अनियमः स्यात् । न चावश्यमुपधाने एव सर्वे मन्त्रा विनियुज्येरन् ।



अविशिष्टसामर्थ्या हि केचिद् ग्रहणाद्यपि कुर्युः । अपिच, **' प्रत्यक्षब्राह्मणोक्तानां मध्यमा चितिराश्रयः । तदर्थमपि संबन्धः कार्यो मन्त्रोपधानयोः ॥ '** ये तु औपानुवाक्यकाण्डाधीनास्तेषां वाक्यादृते संबन्ध एव नास्तीत्यर्थवदेव वचनम् । न चावश्यमनेन सूत्रेणार्थवादत्वं प्रतिपाद्यते, तल्लिङ्गातल्लिङ्गेषु भूयस्त्वनिमित्तशब्दप्रवृत्तिमात्रकथनात् । अतो नातीव सृष्टिनामविधानमादर्तव्यम् । **भाष्यकारेण** तु विधौ लक्षणां परिहरता अनुवादत्वमाश्रितम् । ' एकयाऽस्तुवत ' इति हि अनुवाकात्रयस्यैवासृष्टिलिङ्गत्वात् आत्मपरित्यागेनेतरलक्षणार्थता स्यात्, तल्लक्षयित्वा च पुनरात्माऽपि प्रतिपादनीय इत्यतिगौरवम्, उपधानस्तुत्यर्थत्वेन पुनरनुवादत्वाददुष्टा लक्षणा ।

**शा––** ' सृष्टीरुपदधाति ' इति सृष्टिशब्दो गुणविधिः, उत अर्थवाद इति संशयः । तत्र आख्यातसंबन्धात् विध्यन्तरैकवाक्यत्वाभावात्, अर्थवत्त्वाच्च विधिः । सृष्टिलिङ्गा मन्त्रा उपधानार्थेन विधीयन्ते । ( सृष्टिशब्दो हि ' तद्वानासामुपधानो मन्त्र इतीष्टकासु, लुक् च मतोः ' [ पा० ४।४।१२५ । मत्वन्तात् प्रथमासमर्थात्, आसामिति षष्ठ्यर्थे यत्–प्रत्ययः स्यात्, तत् प्रथमासमर्थं उपधानः उपधानकरणभूतः मन्त्रश्चेत् स भवति । तत् यत् आसामिति निर्दिष्टम्, इष्टकाश्चेत् ताः भवन्ति । मतोश्च लुक् भवति इति सूत्रार्थः ] इति सूत्रेण सृष्टिमान् आसां इष्टकानां उपधानः उपधानार्थो मन्त्रः इत्यस्मिन्नर्थे यत्प्रत्यये मतुप्–प्रत्यये च सति छान्दसत्वेन यत्प्रत्ययलोपात् निष्पन्नः [ सृष्टिशब्दः ] सृजिशब्दवत् मन्त्रोपधेयेष्टकावचनः । तत्र विशेष्यभूतानामिष्टकानां अन्यतः प्राप्तावपि विशेषणभूतमन्त्रविधिः संभवति इति भावः । पूर्वपक्षं निरस्य सिद्धान्तमाह– ) नैवम् । लिङ्गप्रकरणाभ्यामेव प्राप्तत्वात् न विधिर्मन्त्राणां संभवति, तथा सति परिसंख्या स्यात् । तत्र बहुषु मन्त्रेषु प्रकरणप्राप्तेषु सृष्टिविधानात् अन्ये परिसंख्यायेरन् सा च त्रिदोषा परिसंख्यातानां च मन्त्रान्तराणां आनर्थक्यं स्यात् । तस्मात् उपधानमेवात्र विधेयम् । ' सृष्टीः ' इति तु लिङ्गप्राप्तमन्त्रानुवादमात्रम् ' यथासृष्टमेवावरुन्धे ' इत्यस्यार्थवादस्य उपपत्त्यर्थं इति **भाष्याभिप्रायः । केचित्तु** मन्त्रविधिमेव समर्थयन्ते । नहि ' एकयाऽस्तुवत ' इत्येवमादीनां उपधानैकान्तिकं लिङ्गमस्ति, येन प्राप्तिः स्यात् । ( उपधाने योगं विना ' यो वा इष्टकानां प्रतिष्ठां वेद, प्रत्येव तिष्ठति, तया देवतयाऽङ्गिरस्वद् ध्रुवा सीदेत्याह, एषा वा इष्टकानां प्रतिष्ठा ' इतिवाक्यविहितस्य तयादेवतयेतिमन्त्रैकवाक्यभावस्यापि असिद्धेः, न तदेकवाक्यतयाऽपि उपधानैकान्तिकं लिङ्गमुपपादयितुं शक्यमिति भावः ) । साधारणलिङ्गत्वाद्धि इष्टकानां ग्रहणासादनादिष्वपि मन्त्राः प्राप्नुयुः, तत्रास्ति विधेरवकाशः । सत्यामपि उपधानप्राप्तौ मध्यमचितिसंबन्धार्थमपि प्रत्यक्षविधानमर्थवत् भविष्यति । वक्ष्यति हि ' मध्यमायां तु वचनाद् ब्राह्मणवत्यः ' इति ( ५।३।५। १९ ) । ' यां वै कां चन ब्राह्मणवतीमिष्टकामभिजानीयात्, तां मध्यमायां चितावुपदध्यात् ' इति वचनेन अभिपूर्वस्य जानातेः प्रत्यक्षार्थकतया प्रत्यक्षब्राह्मणविहितानामिष्टकानां चयनसंबन्धिचितिपञ्चकमध्ये या मध्यमा तृतीया चितिः तस्यां प्राप्तिः, इति तत्सिद्ध्यर्थं विधानमित्यर्थः ) न चास्मिन् सूत्रे सृष्टीनां विधानमवश्यमादर्तव्यम्, गुणवृत्तिनिमित्तकथनमात्रपरत्वात् । कः पुनरत्र गुणः ? भूमा । सृष्टिसमुदाये हि भूमाऽस्ति । सृष्ट्यसृष्टिसमुदाये अपि ' एकयाऽस्तुवत ' इत्यनुवाके ( तैसं. ४।३।१० ) सृष्टिभूमाऽस्ति इत्यनेन साहश्येन सृष्टिशब्दः । १।४।१७.

**सोम––** पूर्ववैपरीत्येण प्रत्यवस्थानात् **संगतिः ।**

**वि––** ' सृष्टीरुपदधातीति ये मन्त्राः सृष्टिलिङ्गकाः । विधेयास्ते गुणत्वेन वादो वा, ऽत्र गुणे विधिः ॥ आख्यातेनामिसंबन्धादविध्यन्तरयोगतः ।, लिङ्गप्रकरणप्राप्तैर्मन्त्राणां विध्यसंभवात् ॥ताननूद्येष्टकाऽऽधानं विदध्यात् स्तोष्यते यतः । यथासृष्टेत्यनेनातः सृष्टीरित्यर्थवादगीः ॥ एकयाऽस्तुवतेत्यादौ मन्त्रसंघे क्वचिन्नहि । सृष्टिशब्दस्तथाप्युक्तिः सृष्टिशब्देन भूमतः ॥ ' १।४।१७.

**भाट्ट––** ' सृष्टीरुपदधाति ' इत्यत्र विध्यन्तरैकवाक्यत्वाभावात् प्रत्यक्षविधिश्रवणाच्च विधित्वम् । तत्र च उपधानमेव इष्टकासंस्कारार्थत्वेन विधीयते । **यद्यपि**

चेष्टकानां चयनाङ्गत्वान्यथाऽनुपपत्त्यैव उपधानं प्राप्येत, **तथापि** ततः पूर्वमेव प्रत्यक्षविधिना विधीयते । तत्फलं च प्रत्येकोपधानसिद्धिः, चयनसमानकर्तृकत्वसिद्धिश्च । अन्यथा समुदितोपधानमपि कदाचित् प्राप्नुयात् । आर्थिकत्वाच्च नयनभिन्नकर्तृकत्वमपि । सति त्वस्मिन् इष्टकासंस्कारद्वारा चयनाङ्गताबोधकविधौ प्रतिप्रधानावृत्ति-न्यायात् अङ्गप्रधानयोरेककर्तृकत्वाच्च फलद्वयसिद्धिः। सृष्टि-पदं तु लिङ्गप्रकरणप्राप्तसृष्ट्यसृष्टिमन्त्रमात्रस्य गौण्यानुवाद इति **भाष्यकारः । वार्तिककारस्तु**— नोपधानमात्रविधिः तथा सति 'प्राणभृत उपदधाति' इत्याद्यनेकोपधान-विधिवैयर्थ्यापत्तेः । अतो मन्त्रमात्रमुपधानानुवादेन मन्त्र-विशिष्टं वा उपधानमिष्टकासंस्कारार्थत्वेन विधीयते । तत्रोपधानविधिफलं तु पूर्ववत् । मन्त्रविधिफलं तूपधाने तन्नियमः । मन्त्रा हि इष्टकामात्रप्रकाशकास्तद्ग्रहणादिष्वपि प्राप्तिसंभवान्नोपधाने नियमेन प्राप्नुवन्ति । अतस्तन्नियमः ग्रहणादिपरिसंख्यैव वा फलं मध्यमचितिसंबन्धश्च । 'यां वै कांचन ब्राह्मणवतीमिष्टकामभिजानीयात् तां मध्यमायां चितावुपदध्यात्' इति वचनेन प्रत्यक्षब्राह्मणवतीनामिष्ट-कानां मध्यमचितिसंबन्धस्य विधानात् । अन्यथा तत्त-च्चित्यन्तरप्रकरणपाठरहितानां मन्त्राणां चयनमहाप्रकरणेन सर्वचितिषु अन्तिमायामेव वा निवेशापत्तेः । अतो मध्यमचितिसंबन्धार्थे मन्त्रविधिः । इष्टकानां प्रत्यक्षब्राह्मण-वत्त्वं च इष्टकावाचि-प्रत्यक्षब्राह्मणपठित-पदविधेयमन्त्रक-त्वम् । सृष्टिपदं हि सृष्टिप्रकाशकमन्त्रोपधेयेष्टकापरम् । तत्र च विशेषणांशस्य मन्त्रस्य विधेयत्वात् तत्तदिष्टकानां प्रत्यक्षब्राह्मणवत्त्वसिद्धिः । इतिकरणविनियुक्तलोकम्पृण-मन्त्रस्यापि मध्यमचितिमात्रसंबन्धापत्तेः इष्टकावाचीति पदविशेषणम् । अतश्च मन्त्रविशिष्टोपधानमत्र विधीयते । सृष्टिपदं परं गौण्या वृत्त्या सप्तदशसंख्याकसृष्ट्यसृष्टिमन्त्र-परम्, 'यत्सप्तदशेष्टका उपदधाति' इत्यर्थवादानुसारात् । तत्र चतुर्दश सृष्टिमन्त्राः (१,१४,१७ इति–) त्रयः असृष्टिमन्त्राः इति सृष्टिबाहुल्यं गुणो गौणीवृत्तिनिमित्तम् ।

**मण्डन**— 'भूम्ना स्युः सृष्टयो मताः ।' १६.

**शंकर**— 'भूम्ना सृष्ट्यादिगौणता ।' १७.

* प्रत्यक्षब्राह्मणवत्त्वं इष्टकावाचिश्रुतशब्दविनियुक्त-मन्त्रोपधेयत्वं इत्युक्तमेव **भूमाधिकरणे । भाट्ट**.५।३।७.

* **भूमगुणयोगेन** सृष्ट्यसृष्टिसंघे सृष्टिशब्दप्रयोगः 'सृष्टीरुपदधाति' इत्यत्र । **वि.** १।४।१७.

* **भूममूलकगौण्या** इतरा गौणी बाध्यते । **बाल.** पृ. १४३, * भूममूलकगौण्या लिङ्गसमवायमूलिका गौणी बाध्यते, पूर्वस्यां बहूनां शक्यानां वाक्यार्थान्वयात् इतरस्यां तदभावात् । पृ. १४३.

* **भूमिः** न देया । का पुनर्भूमिरत्राभिप्रेता ? यदे-तत् मृदारब्धं द्रव्यान्तरं पृथिवीगोलकं नाम ! न क्षेत्रमात्रं मृत्तिका वा । **भा.** ६।७।२।३, * भूमिर्न देया विश्व-जिति । ६।७।२।३.

* **भूमिरथिकवत् ।** ग्रहणधारणे प्रयोगार्थे भूमि-रथिकवत् । तद्यथा भूमिरथिकः भूमौ रथमालिख्य शिक्षां करोति, संग्रामे- प्राङ्भावो भवितेति । **भा.** ७।२।१।१५, ९।२।२।१३.

* **भूयसा** अल्पं बाध्यते । प्राप्तबाधोऽयम् । **बाल.** पृ. १३२, **वा.** ३।३।७।१४ पृ. ८६०.

* **'भूयसां स्यात् सधर्मत्वम्' इति न्यायः ।** ('विप्रतिषिद्धधर्माणां समवाये०' १२।२।७।२२ इति सूत्रस्यांशोऽयम्) । त्रिवत्सः साण्डः सोमक्रयणः इत्यत्र (प्रकृतितः प्राप्तेषु क्रयसाधनेषु) गोत्व– अजात्व– जात्योः विकल्पेन प्राप्तौ गोत्वस्य 'गोमिथुनेन क्रीणाति' 'एकहायन्या क्रीणाति' इति वाक्यद्वयविहितक्रयद्वय-साधनत्वात् 'भूयसां स्यात् सधर्मत्वम्' इति न्यायेन एकक्रयसाधनीभूत– अजात्व– बाधकता । क्रयान्तराणां तु अनयैव जात्या प्रसङ्गसिद्धिः ! **कौ.** ३।१।६।१२ पृ.१६९. * बहवश्च प्रैषार्थाः एको निगदः, 'तेन **भूयसां स्यात् सधर्मत्वम्**' इत्यपि प्रैषार्थे अध्वर्यु-रिति परिशेषात् प्रैषे अग्नीत् इति पूर्वपक्षः ! **वा.** ३।८। १२।२३.

* **भूयोऽनुग्रहन्यायः ।** दहराकाशमहिमप्रपञ्चनस्य तदन्तर्गतवस्तुप्रतिपत्त्यर्थत्वासंभवात् उपासनार्थत्वावश्यं-भावेन तेषामनन्यथासिद्धानां भूयसामनुग्रहानुरोधेन तस्मि-न्यदन्तः इत्यादेः दहराकाशस्य अन्वेष्टव्यतापरत्वं अव-



सीयते, न तदुपास्तिफलोपसंहारमात्रानुरोधेन । **पराक्रमः** ५९।२. * भूयोऽनुग्रहन्यायः द्रव्यधर्मविषयः । **सु.** पृ. ८१३.

**भूयोऽनुग्रहन्यायः ।** बह्वनुग्रहन्यायः । प्रधानेषु सहानुष्ठीयमानेषु धर्मविरोधे भूयोऽनुरोधेन धर्माणामनु-ष्ठानम् ॥

**विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वम् । १२।२।७।२२ ॥**

**भाष्यम्**— पञ्चदशरात्रे अग्निष्टुदेकाहः प्रथममहः । ततो ज्योतिर्गौरायुरिति त्र्यहः । परिशिष्टान्येकादशाहानि द्वादशाहप्रकृतीनि । तत्र धर्मविप्रतिषेधे सति एकादशा-नामह्नामग्निष्टुतश्च विचार्यते । किमेषु द्वादशाहिको धर्मः कर्तव्यः उत अग्निष्टुत इति । ननु सिद्धमेतत्, चोदकनाम-धेययोर्बलाबलपरीक्षायामैकाहिको धर्मः कर्तव्य इत्युक्तम्, 'न वा क्रत्वभिधानादधिकानामशब्दत्वम्' इति (७।४। ३।१९); तथा सिद्धं न्यायान्तरेण आक्षिप्यते । अथवा नाम्नामेव मिथश्चिन्ता । विप्रतिषिद्धधर्माणामेतेषां अग्नि-ष्टुतश्चैकादशानां चाह्नां समवाये एतस्मिन् पञ्चदशरात्रे भूयसामेकादशानामह्नां सधर्मत्वं स्यात् । तदीयो धर्मः कर्तव्यः । को हेतुः ? भूयस्त्वमेव । बहुषु गुणसंपन्नेषु महत् फलं भवति । एकस्मिन्नल्पं फलम् । एष हि लोके दृष्टान्तः । लोके, एकादशसु प्रदीपेषु तैलवर्ति-संपन्नेष्वेकस्मिन् गृहे महान् प्रकाशो भवति, विपर्यये अल्पः । किं पुनरिहोदाहरणम् । सुब्रह्मण्या अग्निष्टुति आग्नेयी, इतरेष्वहःस्वैन्द्री । तत्रैन्द्री कर्तव्या ।

**टुप्**— (अत्र भाष्यकारेण पञ्चदशरात्रमुदाहृतम् । तत्र अग्निष्टुत् प्रथममहः, ततो ज्योतिः, गौः, आयुः इति त्र्यहः, परिशिष्टानि एकादशाहानि द्वादशाहिकानि । तत्र अग्निष्टुति आग्नेयी सुब्रह्मण्या नामधेयात् प्राप्ता, द्वादशाहि-केषु तु चोदकेन ऐन्द्री, तत्र बलाबलं चिन्त्यते । अथवा ज्योतिर्गौरायुः इति त्र्यहे नाम्ना ऐन्द्री प्राप्ता अग्निष्टुति च नाम्नैव आग्नेयी । तत्र नाम्नामेव बलाबलं चिन्त्यते इति । इदं भाष्यकारोक्तमुदाहरणमाक्षिपति— ) अस्मिन् सूत्रे पञ्चदशरात्रस्तावत् अनुदाहरणम् । (कथम् ?) या तावत् वसतीवरीपरिग्रहणोत्तरकाला सुब्रह्मण्या, सा प्रति-दिवसं क्रियते ('तत्काला त्वावर्तेत' [११।३।११।२४] इति ह्युक्तम्) । यथादेवतं च (सा कर्तव्या) आग्नेयी अग्नि-ष्टुति, अन्येषु ऐन्द्री । तत्र तावत् संशय एव नास्ति (भेदेन करणात्) अविरोधात् । या तु आतिथ्यान्ते उपसत्सु च (क्रियते), तस्यां (तन्त्रेण क्रियमाणायां) विरोधः (संभाव्यते) । तत्रापि देवतासंस्कारकत्वात् निगदस्य, यथादेवतमेव तन्त्रभेदः, नास्ति तन्त्रेणोच्चा-रणम् । यथा निर्वापमन्त्रः संस्कारकत्वात् प्रतिनिर्वापं भिद्यते, एवमियमपि । तस्मात् द्वे अपि सुब्रह्मण्ये आह्वा-तव्ये (इत्यनुदाहरणम्) । किं तर्हि अत्रोदाहरणम् ? यत्र पञ्च यागाः सह चोद्यन्ते फलं प्रति, तत्र च त्रयाणां पौर्णमासिको विध्यन्तः, द्वयोर्दार्शिकः, तत्र अभिमर्श-नाज्यभागमन्त्रयोर्विरोधः (तदुदाहरणम् । तथाहि— अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, इन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं पशुकामः, दधि मधु घृतमापो धानाः प्राजापत्यं इति सप्त यागाः । तत्र आग्नेये पुरोडाशे धानासु च आग्नेयो विध्यन्तः । तेन आग्नेयस्य पौर्ण-मास्यमावास्ययोर्भावात् न विरोधः । इतरे तु पञ्च यागा-श्चिन्त्यन्ते । तत्र ऐन्द्रे पुरोडाशे दधनि च दार्शिको विध्यन्तः, मधुघृतयोश्च उपांशुयाजविकारत्वात् पौर्ण-मासिकः, तत्र अभिमर्शनाज्यभागमन्त्रयोः विरोधः चतु-र्होतृपञ्चहोत्रोः अभिमर्शनमन्त्रयोः, वार्त्रघ्न्योः वृधन्वत्योश्च आज्यभागमन्त्रयोर्विरोधः इत्यर्थः । सिद्धान्तमाह– ) तत्र भूयसां धर्मानुग्रहः प्रयोगवचनानुग्रहाय ।

**सोम**— किं मुख्यधर्मस्यैव इतरत्र प्रसङ्गः, उत भूयसां धर्मस्य इति प्रसङ्गविशेषविचारात् **संगतिः ।**

**वि**— 'या पञ्चदशरात्रस्य सुब्रह्मण्याऽऽद्यकालगा । आग्नेयी स्यात् किमैन्द्री वा, प्रथमाहानुगुण्यतः ॥ आग्नेयी प्रथमं चाह्नो विरोधानुदयाद् बलि ।, न बह्व-नुग्रहादैन्द्री कुलार्थत्यागनीतितः ॥' 'त्यजेदेकं कुल-स्यार्थे' इति न्यायादित्यर्थः । इदं भाष्यमतेनोक्तम् । वार्तिकमतेनाह– 'सप्तयागसमूहस्य वृधन्वत्यावृचावुत । वार्त्रघ्न्यावाज्यभागार्थे, प्रथमत्वाद् दधीन्द्रयोः ॥ दर्श-धर्मातिदेशेन प्राप्त आद्यो, ऽन्तिमो यतः । घृतं मध्वाप इत्येषां बहूनां बलितोचिता ॥'

**भाट्ट**— काम्येष्टिकाण्डे ‘ अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत् इन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं दधि मधु घृतमापो धानाः तत्संसृष्टं प्राजापत्यं पशुकामः ’ इति श्रुतम् । तत्र चित्रेष्टिवदेव दध्यादिद्रव्यका अनेके यागाः । तत्र आद्योऽन्त्यश्च धानायागः आग्नेयविकारः , स उभयकालकत्वादविरुद्धः । ऐन्द्र एकादशकपाल ऐन्द्राग्नविकारः । दधियागो दधियागस्यैव । तयोरमावास्याधर्माः । मधुघृतोदकानां तूपांशुयाजविकारत्वात् पौर्णमासधर्माः । तदिह सप्तयागेषु सहक्रियमाणेषु आज्यभागयोर्वार्त्रघ्नीवृधन्वतीमन्त्राणाम् , हविरभिमर्शने चतुर्होतृपञ्चहोतृमन्त्रयोश्च विरोधे मुख्यत्वेनासञ्जातविरोधित्वात् अमावास्याधर्माः । इति प्राप्ते, मुख्यधर्मानुग्रहस्य प्रथममवगतावपि भूयोऽनुग्रहानुरोधेन प्राप्तबाधविधया मुख्यस्यैवाल्पसंख्यस्य बाधमङ्गीकृत्य भूयोधर्मजन्योपकारोपजीवित्वावगतेः पौर्णमासीविकाराणां भूयसां तन्त्रित्वम् , अल्पानां च विरुद्धधर्मविषये प्रसङ्गित्वम् । अविरुद्धानावृत्तधर्मांशे त्वगृह्यमाणविशेषत्वात् सर्वेषां तन्त्रित्वमेव, आवृत्तधर्मांशे त्वावृत्तिः । इदं च उपांशुयाजस्यामावास्यायामभावपक्षाभिप्रायेणोदाहरणम् । उभयत्र तत्सत्त्वे तूदाहरणान्तरं मृग्यम् ।

**यत्तु** भाष्यकारेण ‘ पञ्चदशरात्रे अग्निष्टुत् प्रथममहस्तस्य नाम्ना अग्निष्टुद्यागविकारत्वादाग्नेयी सुब्रह्मण्या । ज्योतिर्गौरायुरिति त्र्यहः , तेषामपि नाम्नैवैकाहकाण्डपठितज्योतिरादिधर्माः तेनैन्द्री सुब्रह्मण्या । इतरेषु एकादशसु चोदनालिङ्गातिदेशेनैव ऐन्द्री । तदिह सुत्याकालीनसुब्रह्मण्याह्वानस्य तत्तद्दिनभेदेनैव अनुष्ठानात् न कश्चिद्विचारः । आतिथ्योपसत्कालीनसुब्रह्मण्याऽऽह्वानस्य तु सर्वसुत्यार्थं तन्त्रित्वस्य साधितत्वात् विरोधप्रसक्तौ भूयोऽनुग्रहाय ऐन्द्री कार्या ’ इत्युक्तम् , तत् सुब्रह्मण्याह्वानस्य देवताप्रकाशनार्थत्वात् इन्द्रप्रकाशेन च अग्निप्रकाशनरूपकार्यसिद्धेरभावात् भेदेनैवोभयदेवत्यसुब्रह्मण्याकरणावगतेरुपेक्षितम् ।

अत एव एकादशाधिकरणं संप्रतिपन्नदेवताकसुब्रह्मण्याविषयम् । न चैवमभिमर्शनस्यापि द्रव्यभेदेन भिन्नानुष्ठानापत्तेः प्रसङ्गसिद्ध्यनापत्तिः , ‘ आसन्नानि हवींष्यभिमृशति ’ इति वचनान्तरविहिताभिमर्शनानुवादेन तत्तद्धविरुद्दिश्य ‘ चतुर्होत्रा ’ इत्येताभ्यां मन्त्रविधानेनानेकेषामपि हविषां सकृदभिमर्शनसंभवे मन्त्रमात्रानुरोधेन तदावृत्तौ प्रमाणाभावात् प्रसङ्गसिद्ध्युपपत्तेः । अत एवासंभवे यत्राभिमर्शनस्यावृत्तिः तत्र स एव मन्त्र इति न प्रसङ्गः ।

**मण्डन**— ‘ विरोधे बहुधर्मता । ’

**शंकर**— ‘ भूयांसः स्युः सधर्मकाः । ’

* न चाऽऽकाशश्रुतिरपि पञ्चषवारमभ्यस्ता इति **भूयोऽनुग्रहन्यायः** उभयत्रापि तुल्यः इति चेत् , न । **पराक्रमः** ६६।२, * **भूयोऽनुग्रहन्यायेनापि** आकाशे सर्वलोकगतित्वसंबन्धस्यैव अवान्तरतात्पर्येणापि प्रतिपाद्यता । ६६।२, * अनुनिर्वाप्याधिकरणे **भूयोऽनुग्रहन्यायेन** अनुनिर्वाप्यधर्मग्रहे प्राप्ते यत्र सर्वेषां तन्त्रितया न गृह्यते विशेषः, तत्र मुख्यानुग्रहन्यायापवादः भूयोऽनुग्रहः । यत्र तु एकस्तन्त्रि इतरे प्रसङ्गिनः इति गृह्यते विशेषः तत्रैकस्य तन्त्रिण एव धर्माः ग्राह्याः , बहूनामपि प्रसङ्गिनां तत्तन्त्रोपजीवित्वेन स्वधर्माप्रयोजकत्वात् । ५७।१. * नामधेययुक्तेष्वहःसु अविरुद्धा द्वयेऽपि कर्तव्याः विरुद्धास्तु नामप्रापिताः विरुद्धा अपि असुत्याकाला ये सर्वेषामह्नां तन्त्रेणानुष्ठेया धर्माः ते भूयोऽनुग्रहन्यायेन चोदकप्रापिता एव कर्तव्याः न नामप्रापिताः । **सोम.** ७।४।२ . * भूलोकस्य अब्रह्मावगमकान्तवत्त्वश्रवणतद्वत्यन्तरप्रपञ्चानुसारेण तस्य प्रतिष्ठालोकत्वेन प्रसिद्धे पृथिवीलोके एव विश्रान्तेः **भूयोऽनुग्रहन्यायात्** । **पराक्रमः** ६५।१.

## भूयस्त्वेनोभयश्रुति । ३।३।३।१० ॥

‘ ज्योतिष्टोमेन स्वर्गकामो यजेत ’ इति यजुर्वेदे सामवेदे च समानाक्षरमेव आम्नानम् । तत्र सामवेदे यदाम्नानं तत् क्रियार्थं यजुर्वेदे च गुणार्थं विपरीतं वेति न निश्चयः । **इति प्राप्ते, सिद्धान्तमाह** । उभयश्रुति भूयस्त्वेन निर्णयम् । यस्य उभयोर्वेदयोः श्रुतिः श्रवणं भवति तस्य भूयस्त्वेन निर्णयः । यत्र भूयांसो गुणाः समाम्नाताः तत्र तस्य कर्तव्यतया चोदना स्यात् । यत्र च कर्तव्यतया चोदना तत्र इतिकर्तव्यता आकाङ्क्ष्यते । तत् इतिकर्तव्यतालिङ्गेन कर्तव्यताचोदनां अनुमिमीमहे ।



तथा च ज्योतिष्टोमस्य याजुर्वेदिकत्वात् उपांशुः प्रयोगः । **के.**

## भूयस्त्वेनोभयश्रुति । ३।३।३।१०॥

यजुर्वेदे ज्योतिष्टोमं समामनन्ति– ‘ ज्योतिष्टोमेन स्वर्गकामो यजेत ’ इति । तथा सामवेदेऽप्येवं समाम्नातम्– ‘ ज्योतिष्टोमेन स्वर्गकामो यजेत ’ इति । सकृच्च कृतायां क्रियाबुद्धौ द्वितीयं गुणार्थं श्रवणं भवति । तत्र संदेहः किं याजुर्वेदिकं गुणार्थम् , उत विपरीतं इति । पूर्वमङ्गेष्वौत्पत्तिको वेदधर्मो विनियोगविधिवशेनापद्यते इति प्रतिपाद्य इदानीं प्रधानमेव यत्रोभयत्वेन श्रूयते, तत्र कतरस्य वेदस्य संबन्ध उच्चैष्ट्वादिधर्मोऽत्रानुष्ठातव्य इति संदेहे सति अधिकारवाक्यस्य उभयत्राविशेषात् यत्रोत्पत्तिस्तत्रैवानुष्ठातव्य इति स्थिते उत्पत्तिविधिरेव कुत्रेति विचार्यते । अत्रायं पूर्वपक्षिणोऽभिसंधिः । न तावत् एकत्रोत्पन्नस्य अन्यत्र अङ्गसंबन्धार्थं श्रवणम् , उभयत्रैवाङ्गश्रवणाविशेषात् । नापि फले विनियोगार्थम् , फलस्याप्युभयत्र श्रवणाविशेषात् । अतोऽध्येतृभेदेन विकल्पेनैवोत्पादकत्वम् । यतः एकस्य नाम वेदाध्ययनसंभवे सति स्वशाखा तावत्प्रथममस्याध्येतव्या । तेन यद्वेदगता शाखा येन प्रथममधीता स एव वेदस्तस्योत्पादक इति शाखान्तरवद्वेदसमुच्चयोऽपि व्यवस्थितये विकल्प एवेति । **एवं प्राप्ते, अभिधीयते ।** भवेदेवं यद्यङ्गभूयस्त्वश्रवणेन विशेषावगतिर्न स्यात् । यजुर्वेदे हि ज्योतिष्टोमस्य दीक्षणीयादिकेतिकर्तव्यता भूयसी श्रूयते, न तथा वेदान्तरे । इतिकर्तव्यतायाः प्रकरणग्राह्यत्वाद्यत्रेतिकर्तव्यता तत्रैव प्रकरणम् । यत्र च प्रकरणं तत्रैव कर्तव्यतावगमादुत्पत्तिः । इतरत्र च गुणार्थं श्रवणमिति । तदुक्तम्– **‘ गुणानां यत्र भूयस्त्वमितिकर्तव्यतात्मकम् । तत्र तेनैव लिङ्गेन तस्य कर्तव्यतेष्यते ॥ ’** इति ( वा. पृ. ८१५ ) ।

**प्रयोजनम्**— पक्षोक्तम् । **सूत्रं तु** उभयश्रुति यत्कर्म तस्याङ्गभूयस्त्वेनोत्पत्तिनिर्णय इति ।

तदस्य यथाभाष्यं सिद्धान्तहेतुं वार्तिककारपादा नानुमन्यन्ते । यदि खल्वितिकर्तव्यतोत्पत्त्यवगतौ लिङ्गं तदा तदल्पत्वभूयस्त्वयोः को विशेषः ? न हि धूमत्वेनावधारितोऽल्पीयान् धूमोऽग्निं नानुमापयति । तदुक्तम्– **‘ यद्यस्य गमकत्वेन स्वशक्तेरवधारितम् । तदल्पं बहु वा तस्य प्रतीतौ न विशिष्यते ॥ ’** इति **‘ यादृशस्य हि धूमस्य गमकत्वावधारणा । स तादृग्बहुरल्पो वा वह्निं गमयति ध्रुवम् ॥ ’** इति । ( वा. पृ. ८१६ ) । अतो यथावार्तिकमेव सिद्धान्तहेतुर्वर्णनीयः । प्रतिकर्म विशेषस्वरूपविज्ञानमुत्पत्तिः । द्रव्यदेवतेन च कर्मविशेषनिरूपणं भवति । ज्योतिष्टोमस्य च द्रव्यदेवतं कृत्स्नमेव यजुर्वेदे समाम्नायते । तेन तत्रैव कर्मोत्पद्यते । इतरत्र वेदे कर्मस्वरूपमात्रमनुकीर्त्य स्तोत्रशस्त्रमात्रविधानात् गुणार्थमेव श्रवणम् । **ननु** अनेकेऽपि गुणाः प्रतिवेदं विधीयन्ते । तेषां प्रतिवाक्यं कर्मानुवादेन न विधयः श्रूयन्ते । नाप्येकेन कर्मानुवादेन सर्वेषां विधानमवगम्यते । अतो न तावद्वाक्येन अनेकगुणविधानम् । नापि प्रकरणेनानूद्यमानस्य, प्रकरणाभावात् । कर्तव्यस्य हीतिकर्तव्यताकाङ्क्षा प्रकरणम् । न चानुवादे कर्तव्यता संभवति । अतः प्रकरणेनाप्यङ्गसंबन्धासंभवात्कथं गुणार्थं श्रवणमिति । **उच्यते,** न हि स्वरूपेणानूद्यमानमितिकर्तव्यताकाङ्क्षापरिपन्थि । किं तर्हि ? विधातुमुद्देश्यत्वेनानूद्यमानत्वम् । इह तु यादृशं कर्मोत्पत्तिविधाववगतं तेन यद्येतद्वेत्यन्तरे शुद्धस्यैव श्रवणमध्ययनविधिकारितं तदस्य प्रयोजनम् । स तु संनिधिसमाम्नातेतिकर्तव्यतासंबन्धावगमार्थमेवेति निर्णीयते । अतो यजुर्वेदे एव ज्योतिष्टोमस्योत्पत्तिः । वेदान्तरे गुणसंबन्धार्थमेव श्रवणमिति सिद्धम् । **प्रयोजनम्**– पक्षोक्तम् । **सूत्रं तु** द्रव्यदेवतादिव्यञ्जकभूयस्त्वेन यजुर्वेद एव ज्योतिष्टोमस्योत्पत्तिरुभयवेदश्रवणेऽपीति स्थितम् । **तौता.**

* ‘ भूयस्त्वेनोभयश्रुति ’ **इत्यनेन न्यायेन** यत्र यागपरिचायकदेवतादिमत्ता तत्रैव यागविधिः । **कौ.** २।२।४।९. * अंश्वदाभ्ययोः **‘ भूयस्त्वेनोभयश्रुति ’ इति न्यायेन** औपानुवाक्यकाण्डे एव गुणविधिबाहुल्यात् प्रधानविधिरपि । **संकर्ष.** ३।३।१४ . * यस्य कर्मण एकस्यां शाखायां भूयसामङ्गानां विधानम्, ‘ भूयस्त्वेनोभयश्रुति ’ इति न्यायेन प्रधानस्यापि तत्रैव विधानम् । शाखान्तरे तु स्वल्पाङ्गमात्रविधानम्, तत्र कर्मणि

तच्छाखाध्यायिनामेवाधिकारः स्यात् इत्याशङ्का । **सोम.** ६।१।७. * यदि तु उभयत्र ( वेदद्वये मन्त्रः ) विधास्यते तत्रोभयत्र 'भूयस्त्वेनोभयश्रुति' इत्यादि नास्ति तत्रागत्या विकल्पो ग्रहीष्यते । **वा.** ३।३।१।७.

**भूयस्त्वात्तद्वाद इति न्यायः ।** यत्रेतरवस्तुसत्त्वेऽपि यस्य वस्तुनो बाहुल्यं तेनैव लोकप्रवादः इत्यर्थे अयं प्रवर्तते । स्पष्टः । **साहस्री.** ७५९.

**भूयोमन्त्राधिकरणम् ।** एककर्मणि भूयोमन्त्रसत्त्वे विकल्पेन मन्त्रस्य ग्रहणम् ॥

दर्शपूर्णमासयोः पुरोडाशपिण्डविभागे 'यथाभागं व्यावर्तेथाम्' 'भगो वां विभजतु' इत्यादयो बहवो मन्त्रा आम्नाताः । ते सर्वेऽपि समुच्चित्य विभजने अङ्गानि, अन्यतमग्रहणे विनिगमनाविरहात् । एकस्य विनियोगे अन्यस्याऽऽकाङ्क्षाया अशान्तेः । अनेकेषामङ्गिनां एकस्मिन् अङ्गे समुच्चयवद्वैपरीत्यस्यापि न्यायतौल्येन सिद्धेरिति कृतस्य प्रकाशनस्य पुनः करणासंभवात् मन्त्राकाङ्क्षायाश्च विकल्पेन विनियोगेऽपि शान्ते 'तां चतुर्भिरादत्ते' इत्यादिलिङ्गाच्च विकल्पेन विनियोगः । **संकर्ष.** १।२।३.

* **भूयोमन्त्राधिकरणे** ( १।२।३ ) 'यथाभागं व्यावर्तेथाम्' इत्यादिमन्त्राणां विकल्प उक्तः । **संकर्ष.** १।३।१६.

**भूलिङ्गशकुनिन्यायः ।** हिमाचलप्रान्तदेशे भूलिङ्गाख्यः पक्षी 'मा साहसं कुरु' इति पुनःपुनरुच्चैर्वदन् सिंहदंष्ट्राग्रलग्नं मांसं जिघृक्षतीति प्रसिद्धम्, तथा परोपदेशमात्रकुशलः स्वयं च यथेष्टाचरणशीलो दाम्भिकस्त्याज्य एवेति भावः । उक्तं च महाभारते— 'न गाथा गाथिनं शास्ति बहु चेदपि गायति । प्रकृतिं यान्ति भूतानि भूलिङ्गशकुनिर्यथा ॥' इति । **साहस्री.** ३४०.

* **भृगूणां** पञ्चावत्तम् । **वा.** १।३।७।१७.

* **भृगुशुनकवसिष्ठानां** सत्रे नाधिकारः । ६।६।४। २४–२६.

* '**भृतत्वाच्च परिक्रयः**' इत्यत्र 'दक्षिणाः सोमस्य' इति वचनात् प्रधानमात्राङ्गभूतयाऽपि दक्षिणया प्रसङ्गात् कार्यसिद्धेः न अङ्गभूतेष्टिपशुषु आतिदेशिकान्वाहार्यदक्षिणाप्राप्तिः इति वक्ष्यते । **कौ.** २।१।५।१२ पृ. ८३–८४

**भृतत्वाच्च परिक्रयः । १२।१।१६।३३ ॥**

दर्शपूर्णमासयोः परिक्रयः परिक्रीयन्ते ऋत्विजो येन स परिक्रयः अन्वाहार्यः चोदकप्राप्तोऽपि सोमे ऐष्टिकेषु न कर्तव्यः । भृतत्वात् सोमार्थेन परिक्रयेण गवादिना भृता ऋत्विजः । अङ्गप्रधानार्थश्च सौमिकः परिक्रयः । तस्मादन्वाहार्यो न कर्तव्यः इति सिद्धान्तः । **के.**

* **भृतिः** कर्मकरेभ्य आनत्यर्थं यद्दीयते तत् । **भा.** १०।२।८।२७, * त्रिभिः प्रकारैः **भृतिः** भवति व्यापारतः फलतः वचनतः इति । व्यापारतस्तावत् न माषबीजानां द्वादशशतं भृतिः । कर्मकुर्वाणा हि कर्मकराः पादिकमपि अहः लभन्ते । फलानुरूप्यं नैव ज्ञायते । वचनं तु भृतौ सत्यां परिमाणविशेषपरं भवति । यत्र हि पादिकमपि अहर्न लभ्यते न सा दक्षिणा भवति । न हि सा तस्मिन् कर्मणि दक्षं करोति । स्नेहाद्वा अन्येन वा प्रकारेण कृत्स्नमपि अहः कर्म कुर्यात् । न व्रीहीणां द्वादशशतेन प्रोत्साहितः । आशितम्भवं यद् द्रव्यं सा भृतिः । ( 'तस्य द्वादशशतं दक्षिणा' इत्यत्र इदम् । आशितम्भवं उदरपूरणपर्याप्तम् ) । १०।३।११।४५, * यो बहु कर्म करोति तस्मै बह्वी भृतिः दीयते । १०।३।१३।५४.

* **भृतियाचनं ( वननं )** ज्योतिष्टोमे धनवतोऽपि नित्यम् । ६।८।७।२६–२७. **मीको.** पृ.१८२३ 'ज्योतिष्टोमे भृतिवननं०' इत्यत्र द्रष्टव्यम् । * भृतिवननं यज्ञार्थं याच्ञया द्रव्यसंपादनम् । 'दीक्षितो भृतिं वन्वीत' इति वचनात् । **वि.** ६।५।८.

* **भृतिवननादिवत्** । यथा भृतिवननं नियतं तदार्जितद्रव्यस्य च क्रत्वर्थत्वं तथा प्रतिग्रहादिनियमस्य क्रत्वर्थत्वेन तदार्जितद्रव्यस्य क्रत्वर्थत्वम् । **भाट्ट.** ४।१।२ वर्णकं ३.

* **भृत्येन** सह भर्त्रा परिक्रयार्थं पणितव्यम् । **भा.** १०।३।१३।५१.



* **भृत्यादीनां** प्रत्येकं बुद्ध्या व्याप्रियमाणानां एकस्मिन् एकस्मिन् शत्रुजयादौ स्वाम्युपात्तानेकव्यापारसाध्ये संहत्य साधनत्वम् । **सु.** पृ. १२०७.

**भेकोऽपि पादप्रसाराय चेष्टते इति न्यायः ।** असमर्थस्य समर्थार्हकर्मकरणसमीहने अयमवतरति । **साहस्री.** ९०४.

* **भेदः** अङ्गापूर्वाणां शब्दभेदे । **वि.** २।२।१. * भेदः अपूर्वाणां द्वितीयाध्यायार्थः । **टुप्.** ७।१।१।१. * भेदः कर्मणो द्रव्यदेवतायुक्तत्वे, यथा 'वायव्यं श्वेतमालभेत' 'सौर्यं चरुं निर्वपेत्' इत्यत्र । **वि.** २।३।५. * भेदः कर्मणां अभ्यासेन भावनाभेदात् । २।२।२।२. * भेदः कर्मणां गुणात् । २।२।९।२३. * भेदः कर्मणां द्रव्यदेवताभेदात्, यथा चातुर्मास्यवैश्वदेवपर्वणि 'वैश्वदेव्यामिक्षा', 'वाजिभ्यो वाजिनम्' इत्यत्र । **वि.** २।२।९. * भेदः कर्मणां संख्यया, यथा 'सांग्रहण्यामिष्टौ 'तिस्रः आहुतीर्जुहोति' इत्यत्र । २।२।७।२१. * भेदः कर्मणां संज्ञाभेदात्, यथा 'अथैष ज्योतिः अथैष विश्वज्योतिः अथैष सर्वज्योतिः' इत्यत्र । २।२।८।२२. * भेदः । मन्त्राः स्वगताख्यातपदैः न कर्मान्तरं ( भेदं ) कल्पयन्ति । **वा.** ३।१।१।१ पृ. ६४९, * भेदः । विधेयान्तररहितोऽनन्यपरो विधिः कर्मस्वरूपमेव विदधत् पूर्वविहितादवश्यमेव कर्मान्तरं ( भेदं ) करोति । इति (प्रथमाध्यायोक्त–) विधित्वनिर्णयफलोपजीवनम् । ३।१। १।१ पृ. ६४९.

**भेदस्तु तद्भेदात् कर्मभेदः प्रयोगे स्यात् तेषां प्रधानशब्दत्वात् । ११।४।६।२६ ॥**

तद्भेदात्, तदित्यनेन पूर्वसूत्रनिर्दिष्टः कालो गृह्यते । कालभेदात् सुत्याकालीनानामङ्गानां भेदः स्यात् । प्रयोगे तेषां कर्मभेदः करणभेदः स्यात् प्रत्यहं भेदेनानुष्ठानं स्यात् । कालभेदे हेतुमाह । तेषां सुत्याकालीनानामङ्गानां प्रधानशब्दत्वात् प्रधानग्राहकेण शब्देनैव गृहीतत्वात् । तस्मात् तेषामावृत्तिः इति सिद्धान्तः ।

**तथा चान्यार्थदर्शनम् । २७ ॥**

अङ्गानामावृत्तौ लिङ्गमाह । 'पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते' इति अन्यार्थदर्शनं भेदेन अह्नां पत्नीसंयाजान्ततां दर्शयति । तस्माद्भेदः ।

**श्वःसुत्यावचनं तद्वत् । २८ ॥**

'संस्थितेसंस्थितेऽहनि आग्नीध्रागारं प्रविश्य सुब्रह्मण्यामाह्वयति श्वः सुत्यामागच्छ' इति ( 'संस्थितेसंस्थितेऽहन्यग्नीदाग्नीध्रागारं प्रविश्य सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति प्रेष्यति' इति भाष्ये पाठः ) । अत्र संस्थितेसंस्थिते इति वीप्सावचनात् सुब्रह्मण्याभेदं दर्शयति । तस्मादङ्गभेदः ।

**पश्वतिरेकश्च । २९ ॥**

द्वादश अहानि, ऐकादशिनास्तु पशवः एकादश । प्रत्यहं एकैकस्मिन् पशौ एकस्य अह्नः पशुशून्यत्वेन प्रसक्तेन अतिरेको भवति । तत्र 'स ऐन्द्राग्नः कार्यः' इत्युक्तम् । तदाह पश्वतिरेक इति । तस्मात् सुत्याकालीनानामङ्गानां आवृत्तिः इति सिद्धान्तः । **के.**

**भेदस्तु संदेहाद् देवतान्तरे स्यात् । ११। ४।९।३४ ॥**

देवतान्तरे देवताभेदे सति पशुगणे ऐकादशिनेषु कुम्भीशूलवपाश्रपणीनां भेदः स्यात् । संदेहात् एकस्यां उप्तानां अवदानानां कस्य पशोः कान्यवदानानि इति संदेहप्रसङ्गः । तस्मात्तत्र भेदः । इति पूर्वः पक्षः ।

**अर्थाद्वा लिङ्गकर्म स्यात् । ३५ ॥**

ऐकादशिनेषु पशुषु कुम्भीशूलवपाश्रपणीनां भेदो न स्यात्, किन्तु तन्त्रम् । हृदयाद्यङ्गानां प्रत्येकमनेकत्वात् कस्य किं हृदयं इति संदेहप्रसङ्गे तु अर्थात् भेदज्ञानरूपप्रयोजनसिद्ध्यर्थं लिङ्गकर्म लिङ्गस्य चिह्नस्य कर्म करणं स्यात् । हृदयादौ किञ्चित् चिह्नं करिष्यामः तेन भेदो ज्ञास्यते । इति सिद्धान्तः । वाशब्दः भेदपूर्वपक्षनिरासार्थः ।

**अयाज्यत्वाद्वसानां भेदः स्यात् स्वयाज्याप्रदानत्वात् । ३६ ॥**

पूर्वपक्षी पुनराह । वसानां अयाज्यत्वात् स्वयाज्याप्रदानत्वाच्च कुम्भ्यादीनां भेदः स्यात् इत्यन्वयः । अविद्यमाना होत्रा पठनीया याज्या यासां ताः अयाज्याः,

अयाज्यत्वात् । अध्वर्युणा क्रियमाणस्य हृदयाद्यङ्गानां होमस्य कृते या होत्रा पठनीया याज्या, तस्याः प्रथमस्य अर्धर्चस्य अन्ते प्रतिप्रस्थाता वसां जुहोति, तदर्थं च स 'घृतं घृतपावानः' इत्यादिकं 'अन्तरिक्षाय स्वाहा' इत्यन्तं मन्त्रं पठति । होतृयाज्यायाः प्रथमार्धर्चसमाप्तिः यदा स्यात् तदैव प्रतिप्रस्थातृमन्त्रसमाप्त्या भवितव्यम् । तदा च वसाहोमः । होतृयाज्यायाश्च उत्तरार्धर्चान्ते वषट्कारे अध्वर्युः हृदयाद्यङ्गानि जुहोति । तथा च वसाहोमे होतृयाज्या करणभूता नास्ति । तदेतत् 'अयाज्यत्वाद्वसानाम्' इत्युक्तम् । अथ वसाहोमे करण-मन्त्रः प्रतिप्रस्थात्रा पठनीयः 'घृतं घृतपावानः' इत्यादि-रेव, सैव च स्वयाज्या स्वस्य वसायाः याज्या, तया स्वयाज्यया प्रदानं यासां ताः स्वयाज्याप्रदानाः वसाः । तदेतत् स्वयाज्याप्रदानत्वादित्यनेनोक्तम् । वसा नाम मांसरसः । पशुगणे च भिन्ना एव वसाः । तासां च भेदज्ञानार्थं चिह्नकरणासंभवात् तद्धारणार्थानां कुम्भीना-मपि भेदः स्यात् । इति पूर्वपक्षः ।

**अपिवा प्रतिपत्तित्वात् तन्त्रं स्यात् स्वत्वस्या-श्रुतिभूतत्वात् । ३७ ॥**

सिद्धान्ती आह । अपिवा तन्त्रं कुम्भी स्यात् । प्रतिपत्तित्वात्, शेषभूतानां वसानां प्रतिपत्तिरियम् । ननु कुम्भ्यास्तन्त्रे वसाः स्वयाज्यार्धर्चान्ते एव हुता न भवेयुः । उच्यते । स्वत्वस्य अश्रुतिभूतत्वात् । स्वत्वं श्रुतिभूतं श्रुत्या विहितं न भवति । तस्मात् परत्र होमो न दोषाय नाभ्युदयाय । तस्मात् कुम्भी तन्त्रं स्यात् ।

**सकृदिति चेत् । ३८ ॥**

पूर्वपक्षी आह । तर्हि प्रथमे एव याज्यार्धर्चान्ते सर्वासां वसानां सकृत् होमो भवतु । इति चेत् ।

**न कालभेदात् । ३९ ॥**

सिद्धान्ती आह । न वसानां सकृत् होमः । काल-भेदात् याज्यार्धर्चान्ताः भिन्नाः तत्र कालभेदः स्पष्टः । तस्मात् याज्यार्धर्चान्तानां कालभेदात् वसाहोमो भेदेनैव । ततश्च सर्वयाज्यार्धर्चान्तेषु होमः । **के.**

* भेदः द्वितीयाध्यायप्रतिपाद्यः । कर्मभेदकानि प्रमा-णानि षट्, शब्दान्तरमभ्यासः संख्या संज्ञा गुणः प्रकरणा-न्तरं चेति । **बाल.** पृ. ८. * भेदो नैव वाक्यार्थत्वेन अभिप्रेतः, अस्माकं आकृतिपदार्थकत्वात् । **वा.** २।१।१४।४६. * भेदो न कर्मणः उत्पत्तिवाक्ये द्रव्यविशेषा-नुक्तौ, यथा 'अग्निहोत्रं जुहोति', 'दध्ना जुहोति', 'पयसा जुहोति' इत्यत्र । **वि.** २।२।१०. * भेदो न भवति यागस्य द्रव्यभेदेऽपि । ६।३।३।११–१२. * 'भेदो नाम पदार्थानां व्यवच्छेदः परस्परम् ।' वा. २।१।१४।४६. * भेदो यावन्नावधृतः तावत् शेषशेषि-भावो नास्ति । ( अतः द्वितीयानन्तरं तृतीयोऽध्यायः ) । **टुप्.** ७।१।१।१. * भेदः संज्ञाशब्दान्तरयोः गुणसंख्य-योश्च अभिधीयते 'स्वरूपानभिधानत्वात्संज्ञा शब्दान्तरात् पृथक् । व्यासज्यसमवायाच्च संख्या भिन्ना गुणान्तरात् ॥' **वा.** २।३।१३।२६. * भेदः समिदाद्यपूर्वाणां दर्शपूर्ण-मासयोः । २।२।२।२. * अविपरिवर्तमाने हि पूर्वकर्मणि केनापि प्रकारेण उत्तरस्य **भेदः** प्रतीयते, न तु प्रकरणान्तरं सदपि किञ्चिदुपाकरोति, तथा च 'फलं चाकर्मसंनिधौ' ( २।३।१२।२५ ) इत्यत्र वक्ष्यामः । **वा.** २।३।११।२४ पृ. ६१५. * **भेदं** विना प्रकृति-विकारभावायोगः । **सु.** पृ. ४०९. * **भेदेन** व्यपदेशः पृथक्त्वे सति भवति । **भा.** १०।६।१३।३४. * **भेदस्य** अग्रहणं अतिसादृश्यात् अजाविकानां ज्वाला-दीनां च दृष्टम् । अग्रहणे च भेदस्य नान्यत्वं व्यपदेष्टुं शक्यते । **बृहती.** पृ. २४४. * **भेदे** एकदेशस्यापि प्रायश्चित्तं स्कन्दने वा । ६।४।४।१०–१६.

* **भेदाग्रहणात्** तद्बुद्धिः अतस्मिन्नपि भवति । **बृहती.** पृ. २०४.

* **भेदाग्रहणनिबन्धन** एव शुक्तिकादिषु रजत-भ्रमः । **बृहती.** पृ. २०५.

* **भेदाभेदौ** आकृतिव्यक्त्योः । **मीको.** पृ. ७८६ 'आकृतिवादः' इति बिन्दौ शास्त्रदीपिकाग्रन्थे द्रष्टव्यम् । * भेदाभेदौ । 'इयं गौः' इति पदयोः भिन्नप्रवृत्ति-निमित्तकयोः सामानाधिकरण्येन अनुवृत्तव्यावृत्ताकारबोध-कत्वेन भेदाभेदसिद्धिः । एवं अवयवावयविनोः गुण-गुणिनोः क्रियाक्रियावतोरपि भेदाभेदोऽनुसंधेयः । **मणि.** पृ. २३.



* **भेदाभेदनिरासः** । संप्रति भेदाभेदौ निरा-क्रियेते । **केचित्** जातिव्यक्तिगुणगुण्यवयवावयव्यादीनां भेदाभेदौ वर्णयन्ति । तथाहि, जातिव्यक्त्योर्भेदस्तावत्सर्व-जनसिद्धः । अभेदोऽपि तयोः प्रतीयते । खण्डो गौरित्यत्र प्रतीतौ तावत् खण्डतादात्म्येन गोत्वं प्रतीयते, अन्यथा खण्डश्च गौश्चेति प्रतीतिः स्यात्, खण्डस्य गोत्वं इति वा । न कदाचिदपि तथा प्रतिपत्तिः । अतः खण्डतादा-त्म्येन गोत्वस्य प्रतीतत्वात् खण्ड एव गौरित्यभेदः प्रतीतः । तथा अत्रैव प्रतीतौ खण्ड एव गौः, न मुण्ड इति व्यवहारात्, खण्डतादात्म्येन प्रतिपन्नस्यैव मुण्डा-द्भेदोऽवसीयते । तथा मुण्डो गौरित्यत्र मुण्डतादात्म्येन प्रतिपन्नस्य सामान्यस्य न खण्ड इति व्यावृत्तिदर्शनात् भेदोऽप्यवसीयते । एतत् उक्तं भवति, यस्यां व्यक्तौ तादात्म्येन सामान्यस्य प्रतीतिः, तस्यां व्यक्तौ तया प्रतीत्या तदभेदः एव प्रतीतः ।

अथास्यामेव प्रतीतौ भेदस्य विषयीकर्तुमशक्यत्वम्, किन्तु व्यक्त्यन्तरात् भेदः प्रतीयते, अतो जातिव्यक्त्योः प्रत्यक्षेणैव भेदोऽभेदश्च प्रतीतः । न च भेदाभेदावेकत्र संभवतः विरुद्धत्वात्, सदसत्त्ववदिति वाच्यम्, विरोधा-भावात्, ययोरेकत्र प्रतीतिर्नास्ति तयोरेव विरुद्धत्वम्, यथा सदसतोः । तदुक्तम् 'प्रतीयते चेदुभयं विरोधः कोऽयमुच्यते ।' इति । प्रतीतयोरपि विरोधेऽङ्गीक्रिय-माणे एकस्यैव सामान्यस्य नानाभूतासु व्यक्तिषु युग-पत्परिसमाप्य वृत्तिर्नाङ्गीक्रियेत । यदि प्रतीतिबलादङ्गी-क्रियते, तर्हि भेदाभेदयोरपि समानमिति तुल्यचर्चः । किञ्च, प्रथमव्यक्तिदर्शने तावदेव प्रतीयते, तदानीमनु-वृत्ताकारस्य न प्रतीतिरेवाङ्गीकृता सर्ववादिभिः । किञ्च अभेदप्रतीतिर्नास्तीति यो वदति, तस्य सर्वलोकविरोधः । सर्वेषामेव विस्फारिताक्षाणां पुरतः स्थितेषु वस्तुषु प्रथमं एकाकारेणैव प्रतीतिः । अतः सर्वेषु वस्तुषु सर्वेषां प्रथम-मभेदप्रतीतिरेव समुत्पद्यते पश्चात् भेदप्रतीतिः । अतो-ऽबाधितविषयप्रतीतिसिद्धौ भेदाभेदौ नापह्नवमर्हतः ।

किञ्च, अयं गौरिति सामानाधिकरण्येन प्रतीति-रस्तीति निर्विवादम् । तत्र अत्यन्तभिन्नयोर्गवाश्वयोः यथा सामानाधिकरण्यं न दृश्यते, तथाऽत्यन्ताभिन्नजात्यादि-स्वरूपप्रतिपत्तौ न च दृश्यते । अतोऽत्यन्तभिन्नादत्यन्ता-भिन्नाच्च व्यावृत्तं सामानाधिकरण्यं भेदाभेदौ कल्पयति । न च वाच्यम्, अत्यन्ताभिन्नयोरपि प्रकारप्रकारितया प्रतीतत्वेन सामानाधिकरण्योपपत्तिः इति, प्रकारप्रकारित्व-स्यैव अत्यन्तभिन्नयोरत्यन्ताभिन्नयोश्च अदर्शनात् तदपि भेदाभेदमेव कल्पयति । न हि अत्यन्तभिन्नयोर्दण्डपुरुषयोः प्रकारप्रकारित्वं सामानाधिकरण्यं वा दृश्यते । न च समवायनिबन्धनं सामानाधिकरण्यम्, समवायसंबन्धस्यैव प्रमाणाभावेनानभ्युपगमात् । अतो येन पिण्डेन अभिन्नं सामान्यं प्रतीयते, तदपेक्षया भिन्नमेव पिण्डान्तरापेक्षया अभिन्नम् । यथा एक एव देवदत्तः पुरुषान्तरापेक्षया दीर्घः प्रतीयते, स एवान्यापेक्षया ह्रस्वो भवति, तथा भेदाभेदावपि एकप्रतीतिबलसिद्धत्वान्नापह्नवमर्हतः । तदु-क्तम् 'सर्ववस्तुषु बुद्धिर्या व्यावृत्त्यनुगमात्मिका । जायते द्व्यात्मकत्वेन विना सा च न सिध्यति ॥'

**अत्रोच्यते** । ययोर्जातिव्यक्त्योर्भेदः प्रतीतः तयो-रेवाभेदः प्रतीयते इति दुर्घटं वचः । तथाहि, अनुवृत्ता-कारस्वभावा जातिः प्रतीता, व्यावृत्ताकारस्वभावा च व्यक्तिः । अतः आकारद्वयव्यतिरेकेण तयोरभेदकं नाम आकारान्तरं न पश्यामः । आकारान्तरभासेऽपि सोऽपि तृतीय एवाकारः स्यात्, न तु जातिजातिमतो-रभेदावभासः सः । यथाऽयमनयोः संयोग इति प्रतीतौ संयोगिद्वयाकारव्यतिरेकेण संयोगाकारस्तृतीयः ।

ननु यथा संयोगिनोराकारः संयोगाकारः एवं जाति-व्यक्त्योरभेद इति प्रतीतौ अभेदाकारे जात्याद्याकारो न स्यात् । अथोच्येत न वयं जातिव्यक्त्योरभेद इत्यभेद-प्रतिपत्तिं अभ्युपगच्छामः किन्तु भिन्नाकारेण प्रतिपत्ति-मेव, नहि जातिव्यक्ती एकाकारेण कदाचित् प्रतीयेते । अतो न तृतीयाकारप्रसङ्ग इति । **तन्न,** भिन्नाकारेण प्रतीतयोः कदाचिदेकाकारप्रतीतिरसिद्धैव । तथाप्युच्यते, स चायमेकाकारेण यदि तयोः संबन्धित्वेन प्रतीतः, तदा संयोगवत्तृतीयाकारः स्यादिति ... प्रतीतिर्नास्ति केवल-मेकाकारप्रतीतिरेव, तर्हि जातिव्यक्त्योः का वार्ता ? वस्त्वन्तरप्रतीतिरेव भवतु, को दोषः ? अथ निरूप्यमाण-वस्त्वन्तरस्यादर्शनात् तयोरेव आकार इत्यङ्गीक्रियेत,

तर्हि भिन्नाकारेण प्रतिपन्नयोरेकाकारप्रतीतिर्भ्रान्तिरेव स्यात्, अन्यथावस्थितस्यान्यथाप्रतिभानात्। अथ प्रतीतत्वादेकाकारस्य तयोरेकत्वमप्यस्तीति मन्यसे, तर्हि नानाभूतानामपि वृक्षाणामेकं वनं इत्येकत्वं अभ्रान्तमेव स्यात्। अथासीदतां नानावृक्षानुसंधानात् एकं वनं इत्यननुसंधानाच्च एकत्वं बाधितम्, अतो वनप्रत्ययो भ्रान्त इति चेत्, न। तर्हि अत्रापि भेदप्रतीतिकालेऽभेदस्याननुसंधानादभेदस्य भ्रान्तत्वं स्यात्। तत्रापि वनप्रत्ययकाले नानात्वानुसंधानं नास्ति, नानात्वानुसंधानकाले एकत्वानुसंधानम्। अथ भेदो नास्तीति बाधकज्ञानं न दृश्यते, अतो न भ्रान्तत्वमिति, तर्हि अत्रापि न इदमेकं वनमिति बाधकज्ञानं नास्ति, नानात्वानुसंधानादर्थात् एकत्वस्य बाध इति। अथ दूरत्वादपि दोषसंभावनया वनप्रत्ययस्य भ्रान्तत्वमिति, तर्ह्यत्रापि अतिनिरन्तरतया भेदभ्रम इति सर्वं समानं अन्यत्राभिनिवेशात्।

**किञ्च**, अस्तु तावदेकाकारप्रतिभासः, अस्तु च तस्याभ्रान्तत्वम्, तथाप्याकारप्रतिभासो जातिः जातिभागस्य पिण्डभागस्य वा द्वितीयावभास एव स्यात्, न तु जातिजातिमतोरभेदावभासः। अथोच्येत न विलक्षणाकारेण वस्तुद्वयप्रतीतिरेव भेदप्रतीतिः। (अपरिपूर्णमेवेदं प्रकरणं दृश्यते)। प्रवि. पृ. १००–१०२.

* **भेदाभेदवादिभट्टभास्करमतनिरासः**। (तत्रादौ पूर्वपक्षः)। **केचित्तु** औपनिषदाः परमार्थत एव आत्मा प्रपञ्चरूपेण स्वेच्छया परिणमति इति मन्यन्ते। तथा च 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' 'तदैक्षत बहु स्यां प्रजायेय' इति एकस्यैव सन्मात्ररूपतया प्रागवस्थितात्मनः अनेकव्योमादिभेदभिन्नप्रपञ्चरूपेण बीजस्येव वृक्षरूपेण परिणामो दर्शितः। 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इति औपनिषदा वादाः पुराणवादाश्च अस्मिन्नर्थे शतशो दृश्यन्ते। 'पुरुष एवेदं सर्वम्' 'नेह नानाऽस्ति किंचन' इत्यादि तु धर्मिभेदाभावाभिप्रायम्। तद्यथा एको वृक्षः प्रादेशमात्रादूर्ध्वं नानाशाखोऽवस्थितः दूरस्थैर्नाना वृक्षाः इति गम्यते। तद्वेदिनश्च अन्ये तेभ्यः कथयन्ति 'न इमे नाना वृक्षाः, किन्तु एक एवायं वृक्षः नानाशाखः अवस्थितः' इति, तथा नामरूपप्रपञ्चं नानारूपं पश्यतां मूलकारणस्य एकस्यात्मनः अयं नानारूपः परिणामः इत्येवमजानतां तत्त्वकथनार्था एवंविधा वादाः। सर्वमेकस्यैव विस्तारः, न किञ्चिदत्र नानाऽस्तीति। ये च पुनः असत्त्ववादाः प्रपञ्चविषया अविद्यावादाः भ्रान्तिवादा मायावादाश्च ते सर्वे प्रपञ्चस्य अनित्यत्वात् औपचारिकाः। यथा मृगतोयरज्जुसर्पस्वप्नप्रपञ्चादयः किञ्चित्कालं आविर्भूय पश्चाद्विलीयन्ते तथा भेदप्रपञ्चरूपः ब्रह्मपरिणामोऽपि आविर्भवति विलीयते च इति आविर्भावतिरोभावधर्मकत्वसाम्यात् असन्नित्युपचर्यते। तस्य च असत्कल्पत्वे तद्विषयस्य ज्ञानस्यापि सिध्यति औपचारिकं भ्रान्तित्वम्। मायानिबन्धनत्वं च 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादिषु युक्तं उपचारेण वक्तुम्। 'आत्मैव एकः सत्यः' इति च तस्यैव नित्यत्वादुच्यते, यथा 'गोअश्वा एव पशवः, अन्ये तु अपशवः' इति, तथा इदं द्रष्टव्यम्। यस्तु एवंविधान् वादान् यथाश्रुतार्थान् गृह्णाति स पश्वन्तरेषु अपशुत्ववादम् 'आदित्यो यूपः' इत्यादि च यथाश्रुतं गृह्णीयात्। अथ तत्र प्रमाणान्तरविरोधः सः अत्रापि समानः। अथ अर्थवादत्वात्तत्र न यथाश्रुतार्थग्रहणम्, तदपि समानम्। प्रपञ्चस्यापि असत्यत्वं वैराग्यजननार्थम्। आत्मनश्च परमार्थत्वं मुमुक्षूणामुत्साहजननार्थम्। विस्पष्टं च एतत् मृत्पिडविकारदृष्टान्तदर्शनात्। ततश्च यथा कारणभूतमृत्पिण्डज्ञानेन मृन्मयो विकारः सर्वो विज्ञातो भवति, शरावादिविकारो हि वाचारम्भणं नामधेयमात्रम्, मृत्तिका इत्येव सत्यम्, एवं प्रपञ्चोऽपि सद्विज्ञानेन विज्ञातो भवति, विकारो हि वाचारम्भणं नामधेयमात्रम्, सदित्येव सत्यं इत्युक्ते ज्ञायते एतत्—यथा आविर्भावतिरोभावधर्मा नानाविधो विकारः शरावादिः प्रपञ्चः, मृत्तिका च सर्वत्र अनपायिनी तेषां कारणम्, कार्यकारणयोश्च अवस्थामात्रभेदात् स्वरूपभेदाभावात्कारणज्ञानेन तत्सर्वं कार्यं अवस्थाभेदेन अज्ञातमपि स्वरूपेण ज्ञातं भवति, तथा प्रपञ्चोऽपि आविर्भावतिरोभावधर्मा अनवस्थायी, तत्कारणं च आत्मा सद्रूपः सर्वानुयायी नापायधर्मा, तस्मिन् विज्ञाते सर्वं तदात्मकमविज्ञातमपि व्यासरूपेण समासेन ज्ञातं भवति इत्येतदत्र विवक्षितमिति। तस्मादेकस्यैवात्मनः परिणामोऽयं भेदप्रपञ्चः न तु असन्नेव। असत्त्वे हि कथं सद्विज्ञानेन विज्ञातः स्यात् शशविषाणवत्। नहि मृत्पिण्डे विज्ञाते सति शशविषाणं विज्ञातं भवति, तथा प्रपञ्चोऽपि स्यात्। ततस्तु प्रस्तुतहानिरेव स्यात्। एकोऽपि आत्मा अन्तःकरणोपाधिभेदात् भिन्नः जीव इत्युच्यते, जीवभेदाच्च बन्धमुक्तिव्यवस्थाऽपि उपपन्ना इति।

**तदिदमयुक्तम्**। चिद्रूपस्यात्मनः जडरूपपरिणामासंभवात्। एकत्वे च आत्मनः सर्वशरीरेषु प्रतिसंधानं स्यात् देवदत्तोऽहं यज्ञदत्तोऽहमेवेति। तथा देवदत्तशरीरे मे सुखं यज्ञदत्तशरीरे मे दुःखमिति, पादे मे सुखं शिरसि मे वेदना इतिवत् सर्वसुखदुःखोपलब्धिश्च स्यात्। अन्तःकरणभेदात् व्यवस्था इति चेत्, न, अचेतनत्वात्। न हि अन्तःकरणं सुखदुःखे अनुभवति, अचेतनत्वात्। आत्मा तु अनुभविता, स च सर्वत्र एकः इति कः प्रतिसंधानं वारयेत्। तस्मात् इदमपि नातीव सुन्दरमिति। इत्यात्मपरिणामवादनिरासः। **शा.** तर्कपादः १।१।५।५ पृ. १११–११३.

* **भेदकारणानि**। वृत्त्यन्तरे तु चत्वार्येव भेदकारणानि शब्दान्तरसंज्ञागुणफलान्युदाहृतानि। पुनःश्रुतिसंख्ययोः शब्दान्तरे एव अन्तर्भावात् प्रकरणान्तरस्य च फलाद्यनुग्रहमात्रार्थत्वात्। तत्तु अयुक्तमिव दृश्यते। **वा.** २।३।१३।२६.

* **भेदनिबन्धनः** संबन्धः। वा. २।१।५।२७ पृ. ४३०.

* **भेदहेतवः**। एवं षडपि भेदहेतवः पर्यवसिताः। संप्रति प्रकरणान्तरस्यैव प्रकारान्तरप्रदर्शनं क्रियते। यो नाम प्रकरणान्तरकृतमेव कालसंबन्धकृतं वा भेदं मन्यते, न असंनिधानानुपादेयवस्तुसंबन्धमात्रकृतम्, तं प्रति विस्पष्टीकरणार्थं 'फलं चाकर्मसंनिधौ' (२।३।१२।२५) इत्यारभ्यते। तत्तु एतत् सप्तमं भेदाधिकरणम्। तत्र देशनिमित्तयोः अनुपादेयत्वं सुज्ञानं इति पूर्वाधिकरणे सिद्धत्वात् इह अनुदाहरणम्। पूर्वत्रैव तु एवमादि दर्शयितव्यम्। तद्यथा, 'सत्रायागूर्य विश्वजिता यजेत' 'साम्युत्थाने विश्वजित्' इत्यादीनि निमित्ते। देशेऽपि 'दक्षिणेन तीरेण सरस्वत्या आग्नेयेनाष्टाकपालेन' 'शम्यापरासमीयात्' इत्यादीनि। यद्यपि अतिरात्रादिवदेव यज्यश्रवणं तथापि प्राग्यज्यनुमानात् तद्धितान्तपदयुक्तवाक्यापरिसमाप्तेः वाक्यान्तरस्य अनपेक्षणात् कर्मान्तरत्वम्। फलसंस्कार्ययोस्तु तुल्यहेतुत्वादिह विचारः। तत्र फलमुदाहृतमेव। संस्कार्यमपि उदाहर्तव्यम् 'त्रैधातवीया दीक्षणीया' इति। यजमानसंस्कारार्थत्वेन उपादानात्। **वा.** २।३।१२।२५.

* **भेदहेतुत्वम्**। भाष्यकारः उपसद्भिश्चरित्वा इति तल्लक्षितकालमेव अनुपादेयरूपं भेदहेतुत्वेन दर्शयति। **वा.** २।३।११।२४.

* **भेदकं** कर्मणां फलं संस्कार्यं च। २।३।१२।२५.

**भेदका गुणा इति न्यायः**। एवं हि दृश्यते लोके– एकोऽयं आत्मा उदकं नाम। तस्य गुणभेदादन्यत्वं भवति अन्यदिदं शीतमन्यदिदमुष्णमिति। एवं प्रकृतेऽपि। **साहस्री.** ८३१.

* **भेदकत्वं** नास्ति फलादेः संनिधौ। २।३।१३।२६.

* भेदकत्वम्। ('अथैष ज्योतिः' इत्यत्र) यागसंज्ञात्वानिश्चयेऽपि अधिकारार्थाथशब्दान्वयेन अनुष्ठेयक्रियासंज्ञात्वनिश्चयात् भेदकत्वोपपत्तिः (संज्ञायाः)। **सु.** पृ. ७१२, * आख्यातस्य भेदकत्वसंभवे तत्पारतन्त्र्यात् गुणस्य **भेदकत्वं** नास्ति। पृ. ७१२.

* **भेदनं** निमित्तं भेदनहोमं स्वार्थं न प्रयुङ्क्ते किन्तु क्रतूपकारादिशेष्यर्थं प्रयुङ्क्ते। **बाल.** पृ. १०७. * **भेदनस्य** प्रयोजकत्वे सत्यपि न भेदनार्थो होमः किन्तु क्रत्वर्थः। **टुप्.** ९।१।१।१. * **भेदने** होमः प्रायश्चित्तम्। **वि.** ६।२।९.

* **भेदनादिनिमित्तावृत्त्या** होमावृत्तिः दर्शादौ। (भेदनस्कन्दनाद्यावृत्तौ प्रायश्चित्तावृत्तिः)। ६।२।९।३०. **मीको.** पृ. १५०० 'क्रत्वर्थानां नैमित्तिकानां०' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **भेदनादिनिमित्तकहोमानां** दर्शपूर्णमासमात्राङ्गता। ६।५।१५।४५–४७. **मीको.** पृ. २०६९ 'दर्शपूर्णमासाङ्गं भेदनादिनिमित्तकहोमाः' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **भेदनादिवत्** । काम्यमानफलसाधनत्वेन हि तानि ( काम्यानि ) कर्माणि कामोत्पत्तौ सत्यां कर्तव्यानि भवन्ति इति कामनानां निमित्तत्वमुच्यते, न तु भेदनादिवत् निमित्ततया वाक्येनान्वयात् । **रत्न.** ५।३।१२। ३३.

* **भेदनहोमः** तु निमित्तानन्तरमेव क्रियते । **टुप्.** ४।३।१६।३९ वर्णकं २. * भेदनहोमः स्कन्दनहोमश्च न लौकिके । **वि.** ६।५।१५.

* **भेदनहोमादीनां** नैमित्तिकानामनुष्ठाने पाठक्रमो न नियामकः किन्तु यथानिमित्तमनुष्ठानम् । **भाट्ट.** ५।३।१२. * भेदनहोमादीनां नैमित्तिकानामनेकेषां प्रयोगवचनपरिगृहीतत्वात् समुच्चयः, न तु विकल्पः भेदनादिनिमित्तमुपजीव्य विहितत्वात् । **वि.**१२।३।६.

* **भेदनहोमादिवत्** । भेदनहोमो यथा क्रतु–निमित्त–उभयप्रयुक्तः तथा चयने वैश्वानरयागः । **भाट्ट.** ४।४।६.

**भेर्याघातन्यायः** । तद्यथा भेर्याघातो भेरीमाहत्य कश्चिद्विंशतिपदानि गच्छति, कश्चित्त्रिंशत्, कश्चिच्चत्वारिंशदेवं प्रकृतेऽपि । **साहस्री.** ६०८.

**भैरवविप्रन्यायः** । भर्छुन्यायवदेव अयम् । **साहस्री.** ३९५.

* **भोगः** सुखदुःखविषयः अपरोक्षानुभव उच्यते । **शा.** १।१।५ पृ. १२५.

* **भोग्यस्य** प्राप्तस्यापि भोक्तृत्वाशक्तौ भोगो न दृश्यते । **सु.** ३।८ पृ. ५५.

* **भोजनं** आसन्दीस्थं अनाचारो दाक्षिणात्यानाम् । **वा.** १।३।३।७ पृ. २०४. * भोजनम् । दक्षिणहस्तभोजनाचारमूलभूता श्रुतिः 'अन्नमेव तद्दक्षिणतो दधाति, तस्माद्दक्षिणेन हस्तेन पुरुषोऽन्नमत्ति ' इति । **वा.** १।३। ४।९ पृ. २२१, * भोजनम् । पात्रधारणपूर्वकभोजनाचारमूलभूता श्रुतिः ' यत्ससदशवतीमुपदधाति ' इत्याद्या अग्निप्रकरणे । १।३।४।९ पृ. २२१. * भोजनम् । प्राङ्मुखभोजनशास्त्रविरोधः दिङ्मोहस्य ( ' देवा वै देवयजनमध्यवसाय दिशो न प्राजानन् ' इति वाक्योक्तस्य) । **सु.** पृ. ४. * भोजनं मित्रस्वजनोच्छिष्टस्पृष्टान्नस्य अनाचारः उदीच्यानां दाक्षिणात्यानां च । **वा.** १।३।३।७ पृ. २०४. * **भोजने** उपयुक्तं कदलीपर्णं प्रक्षाल्यापि न पुनः शिष्टाः स्वीकुर्वन्ति । **वि.**११।३। १२, * भोजने ' प्राङ्मुखोऽन्नानि भुञ्जीत ' इति स्मार्तो नियमः । तत्रोपनीतस्यैवाधिकारो नानुपनीतस्य । ६।२।६. * भोजने प्राङ्मुखता नियम्यते । **भा.** ५।२। ५।९.

* **भोजनादौ** मौनविधाने शाकादेर्निवारणादि हस्तसंज्ञादिना न कार्यम् । **सु.** पृ. ३१८, * भोजनादौ लौकिके अपि वैदिकप्राङ्मुखत्वादिनियमो दृश्यते । पृ. ९२९.

* **भोजनवत्** । यथा चतुर्थे चतुर्थेऽहनि देवदत्तो भुङ्क्ते इति चतुर्थे भुक्त्वा ततश्चतुर्थे गम्यते एकस्मिन् पक्षे इति । **भा.** १०।५।१४।५५.

* **भोज्यं** अनतिकाठिन्यात् अतिप्रयत्नवत्खण्डनानपेक्षं चर्वयित्वैव यन्निगीर्यते तत् इति हेमाद्रिः । **बाल.** पृ. १६८.

* **भ्रमः** अग्रहणात्मकः । नार्थशून्यात्मकः । **ऋजु.** पृ. ५७. * भ्रमः । यस्य हि दर्शनस्य प्रमाणं नास्ति व्यामोहः सः । यथा शुक्तिकायां रजतविज्ञानम् । **भा.** ३।८।१२।२४. * **भ्रमे** अलिङ्गे लिङ्गस्य साधारणरूपं पश्यन् अलिङ्गतामविविञ्चन् लिङ्गतामन्यत्र दृष्टां स्मरन् लिङ्गव्यवहारं प्रवर्तयति । **ऋजु.** पृ. २१. * भ्रमे दोषः कारणं इति नैयायिकाः । **मणि.** पृ. १४.

* **भ्रमज्ञानम्** । ननु प्रत्यक्षमपि व्यभिचारि स्यात् । तत्रापि विनाऽप्यर्थेन ऐन्द्रियकं ज्ञानं दृश्यते शुक्तिकायां रजतमिदमिति । ( उच्यते– ) न तत्र ऐन्द्रियकं ज्ञानं व्यभिचरति । एकं हि तत्र ज्ञानं इदं इति चाक्षुषम् । अपरमपि रजतमिदं इति रजतावलम्बि स्मरणज्ञानम् । तयोर्विवेकाग्रहणनिबन्धनो भ्रमोऽयम्, न पुनः ऐन्द्रियकं विज्ञानं व्यभिचरति । बाधकं च तत्र ज्ञानं विवेकग्राहकम् । प्रत्यक्षादिषु दोषवशात् इन्द्रियं न संपूर्णं कार्यं करोति । तेन विवेकाग्रहणात् भ्रमः । बाधकज्ञानोत्पत्तौ सत्यां विवेके अवधारिते प्रतिपक्षविज्ञानं विवेकग्रहणनिबन्धनम् । भ्रान्तिज्ञानं न तन्निबन्धनं बाधकावस्थाभाविनिर्दोषेन्द्रियादिसामग्रीप्रभवं किन्तु दोषखण्डितशक्तिकज्ञानजननकारणचक्रोत्थम् । नैव कदाचित् विज्ञानं ( वेद्यं प्रति ) व्यभिचरति येन अनिश्चयः स्यात् । बाधकज्ञानमपि नैवार्थव्यभिचारितां दर्शयति । किन्तु ग्रहणस्मरणयोः विवेकमवधारयति । **ऋजु.** पृ. १९–२०.

* **भ्रमसंशयोत्तरप्रत्यक्षे** विशेषदर्शनस्य भ्रमादिविरोधित्वेन हेतुत्वम् । **मणि.** पृ. ३०.

* **भ्रमणत्वादिन्यायः** । वाक्यत्वं नाम जातिः भिन्नस्थानकरणप्रयत्नाभिव्यङ्ग्य–क्रमवद्वर्णात्मक–पदसमूहे अन्त्यवर्णे वा विलक्षणावयवपदार्थसंबन्धप्रत्ययाकाङ्क्षाव्यवधानात् भ्रमणत्वादिन्यायेन कल्पयितुं तद्भूताधिकरणे नाध्यवसितम् । **वा.** ३।३।१।१ पृ. ८०५.

**भ्रमरन्यायः** ॥

१ यथा भ्रमरो हि पुष्पाणां कण्टकादींस्त्यक्त्वा गन्धगुणमात्रमादत्ते, तथा प्रकृतेऽपि । ३२३.

२ यथा भ्रमरो हि प्रतिपुष्पं गन्धमादत्ते, निर्गन्धीभूतं परित्यज्यान्यत्पुष्पमवलम्बते, तथा प्रकृतेऽपि । ३२४.

३ यथा भ्रमरो हि स्वदंशेन कठिनकाष्ठमपि सच्छिद्रीकरोति, परन्तु स्वप्रीतिपात्रकोमलावयवसुकुमारकमलकुसुमान्तःपाती स्वजातिक्रियां त्यजति, तथा सन्मित्रं सन्मित्रं प्रति वर्तते । **साहस्री.** ३२५.

**भ्रष्टावसरन्यायः** । यथा केनचित् कश्चित् प्रति उक्तम्, ' त्वया अमुकावसरेऽत्रागन्तव्यम्, तव अभीष्टसिद्धिर्भविष्यति, ह्यन्यथा न ' । एवं प्रतिज्ञातावसरे स न आयातः, भ्रष्टावसरत्वात् तस्य अभीष्टसिद्धिः न जाता, तथा प्रकृतेऽपि । **साहस्री.** ३९.

* ' **भ्रातॄणामेकजातानामेकश्चेत् पुत्रवान् भवेत्** । सर्वे तेनैव पुत्रेण पुत्रिणो मनुरब्रवीत् ॥ ' (मनु. ९।१८२ ' सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ' इति मुद्रिते मनौ पाठः ) । इत्येवं भीष्मः केवलयज्ञार्थपत्नीसंबन्धः आसीदिति गम्यते । **वा.** १।३।३।७ पृ. २०८.

* **भ्रातृजायायाः** कनीयोऽर्जितायाः परिणयनं अनाचारः । **वा.** १।३।३।७ पृ. २०३–२०४.

* **भ्रातृव्यवान्** अध्वरकल्पया यजेत । **भा.**११। २।४।१९. * ' **भ्रातृव्यवता** अदाभ्यो ग्राह्यो बुभूषताऽशुः ' । **संकर्ष.** ३।३।१५. * **भ्रातृव्यवतः** अभिजिदतिरात्रः कातीये । **बाल.** पृ. ३४, * भ्रातृव्यवतः गौरतिरात्रः कातीये । पृ. ३४.

* **भ्रान्तः** । न च कालान्तरे पुरुषान्तरे अवस्थान्तरे वा अविपर्यासात् भ्रान्त इति शक्यते कल्पयितुम् ( प्रत्यक्षेणोपलभ्यमानः इष्टकाव्यतिरिक्तः अवयवी ) । **टुप्.** ९।१।७।२७ टिप्पण्याम्.

* **भ्राष्ट्राद्यग्निना** काम्येन अग्निचयनगतेन उख्यस्याग्नेर्बाधः । १२।४।७।१७–२५. **मीको.** पृ. २४ ' अग्निचयनगतेन ज्वलद्वृक्षाग्राद्याहृतेन० ' इत्यत्र द्रष्टव्यम् । * **भ्राष्ट्राद्यग्नेः** काम्यस्याहवनीयत्वाभावादाहवनीयधर्मवत्ता नास्ति चयने । १२।४।८।२६–२७. **मीको.** पृ. २६ ' अग्निचयनप्रकरणे श्रुतस्य० ' इत्यत्र द्रष्टव्यम् ।

* **भ्राष्ट्रादिकाम्येऽग्नौ** आधानादिसंस्काराणां लोपश्चयने । १२।४।९।२८–२९.

* **भ्रूणहा** । ' तस्मादविज्ञातेन गर्भेण हतेन भ्रूणहा भवति ' इति । भ्रूणहा पापकृत्तमः । यश्चोभयोर्लोकयोरुपकरोति, तस्य हन्ता भ्रूणहा । यज्ञहन्ता भ्रूणहा । स यज्ञसाधनवधकारी । तस्मात् यज्ञं भ्रूणशब्देनाभिदधाति । स हि बिभर्ति वा सर्वं भूतिं वा नयति । अतो भ्रूणहा यज्ञवधकारी । तथा ' आत्रेयीं हत्वा भ्रूणहा भवति । आत्रेयीमापन्नगर्भामाहुः । अत्र कुक्षौ अस्या विद्यते इत्यात्रेयी ' ( पूर्वपक्षे इदम् ) । **भा.** ६।१।३।७.

## म

**मक्षिकान्यायः ।** यथा मक्षिका हि सर्वं देहं परिहृत्य व्रणस्थानमेवावलम्बते, तथा दुष्टोऽपि । **साहस्री.** ३२८.

**मक्षिकास्थाने मक्षिकापात इति न्यायः ।** अयं यादृशे तादृशकरणविषये प्रवर्तते । **साहस्री.** ७५१.

* **मङ्गलम् ।** तत्त्वं च समाप्तिविघ्नध्वंसान्यतरहेतुत्वेन विहितत्वम् । विधायको वेदस्तु आचारानुमेयः । न च नास्तिकग्रन्थकादम्बर्यादौ अन्वयव्यतिरेकव्यभिचारेण मङ्गलस्य तद्धेतुत्वेन विधिर्न संभवति इति वाच्यम् । व्यभिचारस्य हेत्वन्तरप्रयुक्ततया श्रुतिबोधितहेतुत्वबाधकत्वाभावात् विघ्नसमसंख्याकमङ्गलत्वेन कारणत्वकल्पनाद्वा इति **जीर्णाः ।** समाप्तेः बुद्धिप्रतिभादिदृष्टसामग्रीजन्यतया मङ्गलाजन्यत्वेन विघ्नध्वंसहेतुत्वेन विहितत्वं मङ्गलत्वं इति **मणिकृत् ।**

अत्र चिन्तयन्ति । विघ्नध्वंसस्य न भाव्यता अपुरुषार्थत्वात् । न च समाप्तिजनकत्वेन तस्य पुरुषार्थता, समाप्तौ विघ्नसंसर्गाभावस्यैव जनकतया ध्वंसस्य अजनकत्वात् । अन्यथा विघ्नात्यन्ताभाववदारब्धस्य समाप्तिर्न स्यात् । इष्टसाधनत्वभाव्यत्वयोः समानप्रकारकत्वनियमात् । न च विघ्नसंसर्गाभावस्यैव भाव्यता अत्यन्ताभावप्रागभावयोः ध्वंसवदजन्यत्वेन संसर्गाभावत्वस्य भाव्यतानवच्छेदकत्वात् । अतः अदृष्टद्वारा मङ्गलस्य, बुद्धिप्रतिभादीनां च दृष्टद्वारा समाप्तिजनकत्वम् । यदि च उपवापकर्मत्वेन तुषाणामन्वये तादृशनियमस्य व्यभिचार इति विभाव्यते तदा आकीर्णकरप्रतिपत्तिकर्मत्वातिरिक्तकर्मत्वान्वये तादृशनियमात् विघ्नध्वंसत्वस्य भाव्यतावच्छेदकत्वानुपपत्तिरेव । अदृष्टकल्पनागौरवं तु विघ्नध्वंसस्य फलत्वेऽपि मङ्गले पूर्वोत्तराङ्गोपसंहृतये तुल्यं इति दिक् । **मणि.** पृ. ६.

* **मङ्गलाचारशास्त्रविरोधो रोदनस्य** ( ' सोऽरोदीद्यदरोदीत् तद्रुद्रस्य रुद्रत्वम् ' इत्यत्र ) । **सु.** पृ.४.

**मज्जनोन्मज्जनन्यायः ।** यथा नद्यादौ पतितस्तरणानभिज्ञः कदाचिन्मज्जति कदाचिदुन्मज्जति, तथा संसारसमुद्रे पतितो ब्रह्मतत्त्वानभिज्ञो जीवः कदाचित् मज्जति शान्तिसुखं न प्राप्नोति यावद्भगवच्चरणारविन्दाश्रयो न भवेत् । **साहस्री.** ७.

* ' **मञ्चाः** क्रोशन्ति ' इत्यत्र स्थानं गौणनिमित्तं उक्तमक्षपादादिभिः । **वा.** १।४।१२।२३ पृ. ३५४. * 'मञ्चाः क्रोशन्ति' इत्यादौ लक्षणां विना पदान्तरान्वयासंभवः । **सु.** पृ. ७९३.

**मञ्जूषाऽऽखुन्यायः ।** अयं न्यायः इष्टार्थसमुद्यमे अनिष्टार्थप्राप्तिविषये संचरति । यथा कदाचित्कश्चिन्मूषको भक्षाऽऽशया सर्पमञ्जूषां दृष्ट्वा प्रविष्टस्तत्र तेन भक्षित इति । **साहस्री.** १७८.

**मणिप्रदीपप्रभान्यायः ।** मणिश्च प्रदीपश्च मणिप्रदीपौ, तयोः प्रभा मणिप्रदीपप्रभा । यथा कस्मिंश्चिन्मन्दिरे अपवरकस्य अन्तः दीपस्तिष्ठति तस्य प्रभा बहिर्द्वारप्रदेशे रत्नमिव वर्तुला ह्युपलभ्यते, तथाऽन्यस्मिन् मन्दिरेऽपवरकस्यान्तःस्थितस्य रत्नस्य प्रभा बहिर्द्वारप्रदेशे दीपप्रभेव रत्नसमानोपलभ्यते, तथाविधं प्रभाद्वयं दूरतो दृष्ट्वाऽयं मणिरयं मणिरिति बुद्ध्या द्वौ पुरुषावभिधावनं कुरुतस्तयोर्द्वयोरपि प्रभाविषये जायमानं मणिज्ञानं भ्रान्तमेव । अथापि दीपप्रभायां मणिबुद्धिं कृत्वा धावता पुरुषेण मणिर्नोपलभ्यते, मणेः प्रभायां मणिबुद्ध्या धावता मणिर्लभ्यते एव । अयं भावः – या दीपप्रभायां मणिभ्रान्तिरस्ति स विसंवादिभ्रमः, या मणिप्रभायां मणिबुद्धिरस्ति स संवादिभ्रम इति । एवं हि 'स्वयं भ्रमोऽपि संवादी यथा सम्यक्फलप्रदः । ब्रह्मतत्त्वोपासनाऽपि तथा मुक्तिफलप्रदा ॥ ' इत्युक्तमित्यन्यत्र विस्तरः । **साहस्री.** ४५८.

**मणिप्रवालन्यायः ।** मालायां एकः सौवर्णो मणिः एकः प्रवालः पुनर्मणिः पुनः प्रवालः इति ग्रथनरीतिः । तथा वालखिल्यसूक्तेषु प्रथमा बृहती ( ८।८।१२।८ ) द्वितीया सतोबृहती ( १२।८।१२।८ ) तृतीया बृहती चतुर्थी सतोबृहती इत्येवं मणिप्रवालन्यायेन एकान्तरपठिताः । **ऐब्रासा.** ३।२।५.

**मणिमन्त्रन्यायः ।** यथा मणिमन्त्रादीनां वह्नेः दाहं प्रति स्वातन्त्र्येण प्रतिबन्धकत्वं लोकप्रसिद्धम्, न च तत्र युक्त्यपेक्षा, एवं कामिनो जिज्ञासाया अपि ज्ञानमात्रं प्रति प्रतिबन्धकत्वम् । इत्येवं यत्र पृथक्प्रतिबन्धकत्वम् , तत्रास्य प्रवृत्तिरिति । **साहस्री.** ४९९.



* **मण्डपस्य** आग्नीध्रस्योपस्थानं प्रकृताभिरेव आग्नेयीभिः एवं हविर्धानाख्यस्य प्रकृताभिरेव वैष्णवीभिः, तथा सदोनामकस्य प्रकृताभिरेवैन्द्रीभिः, ज्योतिष्टोमे । ( याज्ञिकास्तु एभिर्मन्त्रैः अभिमर्शनमाचरन्ति नोपस्थानम् । तत्र ' आग्नेय्यर्चाऽऽग्नीध्रमभिमृशेत् ' इति तैत्तिरीयश्रुतिरेव प्रमाणं द्रष्टव्यं इति शम्भुभट्टः ) । **वि.** ३।२।८.

* ' **मण्डलेष्टकाः** उपदधाति ' इति चतुरस्राणामेवेष्टकानां नामान्तरं अग्निचयने । **संकर्ष.** २।१।२५. **मीको.** पृ. ३४ ' अग्निचयने चतुरस्राणां० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **मण्डूकेन** विकर्षणं अग्निचयने ' मण्डूकेनाग्निं विकर्षति ' इति विहितम् । तच्च प्रतीष्टकं न कर्तव्यं किन्तु सकृदेव, अग्नेः एकत्वात् । **वि.** ९।१।८. * **मण्डूकस्य** अदेवतात्वेऽपि अग्निचयने विनियुक्तत्वेन तत्स्तुतेः तच्छेषत्वं पूर्वपक्षाभिमतम् । **सु.** पृ. ६४०.

**मण्डूकतोलनन्यायः ।** यथा मण्डूकतोलने तुलास्था मण्डूकास्तुलातः उत्प्लुत्योत्प्लुत्य पतन्ति तथा प्रकृतेऽपीति बोध्यम् । **साहस्री.** ९०.

**मण्डूकप्लुतिन्यायः ।** यथा मण्डूकाः उत्प्लुत्योत्प्लुत्य गच्छन्ति, तद्वत्प्रकृतेऽपि । अयम् ' इको गुणवृद्धी । ' पा० १।१।३ इति सूत्रमहाभाष्येऽभिहितः । **साहस्री.** ४३९.

* **मण्डूकप्लुतिवत्** क्वचिदनुवृत्तिः । ( मण्डूको गच्छन् उत्प्लुत्य उत्प्लुत्य गच्छति मध्यभूभागांश्च न स्पृशति तद्वत् ) । **मणि.** पृ. ७१.

* **मण्डूकवसया** अक्ताक्षाः वंशान् उरगानिव पश्यन्ति । **बृहती.** पृ. २०६ । न मण्डूकवसाञ्जनं नेत्रसंस्कारः । किन्तु शक्तिप्रतिबन्धकमेव । अत एव वंशाकारस्य अप्रतीतिः, उरगाकारस्य स्मरणं इति स्मृतिप्रमोषे दर्शितम् । **ऋजु.** पृ. २०७.

* **मण्डूकसूक्तस्य** अग्नौ प्रयोगः, तत्र मण्डूकेन अग्निविकर्षणाम्नानात् । ( अतः मण्डूकसूक्तस्य अर्थवत्त्वम् ) । **वा.** २।१।५।२२-२३.

* ' **मत्वर्थो** वाक्यवेलायामेकवाक्यवशाद् भवेत् । इवार्थः पदवेलायां गृह्यमाणोऽतिदुर्बलः ॥ ' ( इदं पूर्वपक्षे, ' श्येनेनाभिचरन् यजेत ' इत्यत्र । सिद्धान्ते तु– ) गुणवचनेभ्यश्च मतुब्लोपः स्मर्यते, न द्रव्यवचनेभ्यः । इवार्थस्तु परशब्दस्य परत्र प्रयोगात् स्वयमेवोपजायते । मत्वर्थलक्षणा च स्वयं कल्पनीया, क्लृप्तस्तु वत्यर्थः । **वा.** १।४।४।५.

* **मत्वर्थीयः ।** ' सोऽस्यास्तीति च संबन्धे मत्वर्थीयः प्रवर्तते ' । **वा.** ३।१।६।१२ पृ. ६७३, * षष्ठीसप्तमीभ्यां हि यादृक् संबन्धः स्वप्रधानः असत्त्वभूतश्च प्रत्याय्यते न तादृक् **मत्वर्थीयेन ।** ३।१।६।१२ पृ. ६७६.

* **मत्वर्थलक्षणा** गौण्या बाध्यते श्येनादौ, उपमानानर्थक्यात् । **बाल.** पृ. १४५, * मत्वर्थलक्षणा । विशिष्टविधिष्वपि यत्र ' सोमेन यजेत ' इत्यादौ तृतीयान्तेन द्रव्यादिविधिः, तत्र सोमादिप्रातिपदिके सोमादिमान् यागो मत्वर्थः तल्लक्षणाऽस्ति । तथाहि, सोमादि हि करणत्वेन श्रूयते, करणं च कारकत्वात् क्रिययैव संबध्यते नान्येन, क्रिया चात्र फलभावनैव प्रत्ययवाच्या, न च तस्यां सोमादेः करणत्वं संभवति समानपदोपात्तधात्वर्थावरोधात् इति भावार्थाधिकरणे ( २।१।२।१-४ ) स्थितम् , न च धात्वर्थेनैव सोमादेः संबन्धः संभवति तस्य धातुना प्रत्ययार्थं प्रति करणत्वेन उपादानात् क्रियारूपतया अनवगमात् , क्रियारूपत्वे वा धात्वर्थस्य प्रत्ययार्थं प्रति करणत्वानुपपत्तेः । न च सत्यपि प्रत्ययवाच्यायाः फलभावनायाः धात्वर्थावरोधे अर्थाक्षिप्तधात्वर्थभावनया सोमादेः संबन्ध इति **वाच्यम् ।** तस्या इहाश्रुतत्वात् , अश्रुतया च तया शब्दान्तरस्यान्वयायोगात् । फलभावना हि अत्र श्रुता, न धात्वर्थभावना । न चाध्याहृत्य धात्वर्थभावनां तया सोमादेरन्वयः, सोमेन भाव्यमानेन यागेन इष्टं भावयेत् इति विनाऽपि अध्याहारेण

वाक्यसमन्वयोपपत्तेः । तदवश्यं यत्र प्रत्ययार्थे करणं यागः तत्रैव तृतीयान्तेन सोमादिपदेन वर्तितव्यं नान्या गतिरस्ति । तत्र अत्यन्तं निरूढत्वेन सोमादिपदस्य सामानाधिकरण्यमात्रेण नामत्वासंभवात् अर्थान्तरवाचिनः सोमादिपदस्य अर्थान्तरे यागे वृत्तिः मत्वर्थलक्षणया अङ्गीक्रियते इति ।

सेयं मत्वर्थलक्षणा विशिष्टविधावेव इति ग्रन्थतः प्रतिभाति । उद्भिदधिकरणवार्तिके हि ( १।४।१।१–२ ) कर्मणि गुणविधिः, फले गुणविधिः, विशिष्टविधिरूपेण वा इति विकल्प्य त्रिष्वपि पक्षेषु पञ्चपञ्च दोषा उक्ताः । तत्र तृतीयपक्षे एव मत्वर्थलक्षणादोष उक्तो नेतरयोः । **शास्त्रदीपिकायामपि** ' विशिष्टविधिपक्षे च भवेन्मत्वर्थलक्षणा ' इति । तेन ' दध्नेन्द्रियकामस्य जुहुयात् ' इत्यादिगुणफलसंबन्धेषु यथा धात्वर्थाविधानात् न मत्वर्थलक्षणा अभिमता, एवम् ' व्रीहिभिर्यजेत ' इति कर्मणि गुणविधावपि इति । **केचिदे**वमेव सिद्धान्तं वर्णयन्ति– ननु धात्वर्थस्य करणत्वावगतिः मत्वर्थलक्षणायां बीजम् । तत्करणत्वं च न शब्दाभिहितमस्ति, किन्तु लाक्षणिकम् । भावनायाश्च करणाकाङ्क्षया तल्लक्षणा यजौ स्यात् । करणाकाङ्क्षा च विधेयाया भावनायाः स्यात्, नानूद्यमानायाः । सोऽयं भावार्थाधिकरणन्यायः । तेन ' व्रीहिभिर्यजेत ' इत्यादौ भावनाऽनुवादात् न करणाकाङ्क्षाऽस्ति, इति न धातुना धात्वर्थः करणत्वेनोच्यते, किन्तु कर्मत्वेनैव, भावार्थाधिकरणन्यायाप्रवृत्तेः । धात्वर्थकर्मिकायां च भावनायां व्रीह्यादेः करणत्वेनैव अन्वयो घटते, इति न मत्वर्थलक्षणा इति । तदयुक्तम् । धात्वर्थस्य हि करणत्वं सिध्यति, तथापि नवमाद्यन्यायेन यागस्वरूपे व्रीहिविधिरनर्थकः, इति साधनांशे गुणं विधातुं अवश्यं धात्वर्थः करणत्वेन अनुवदितव्यो लक्षणया, इति गुणविधावपि सिद्धा मत्वर्थलक्षणा, तदुक्तं ' विधाने वाऽनुवादे वा यागः करणमिष्यते ' इति ( वा. १।४।१।२ पृ. ३२४. वापदयोः स्थाने च–पदयोः पाठस्तत्र )। विशिष्टविधावेव तु मत्वर्थलक्षणोक्तिः भावार्थाधिकरणन्यायेन अतिसुलभत्वात् कृता इति ज्ञेयम् । इति मत्वर्थलक्षणा । पृ. ९६–९७.

* **मत्वर्थलक्षणातः** लक्षितलक्षणा दुर्बलतरा । **सु.** पृ. ४१३.

* **मत्वर्थवादार्थः मीको.** पृ. ६०५ ' अरुणान्यायः ' इत्यत्र वार्तिके द्रष्टव्यः ।

* **मतुप्** अस्त्यर्थे स्मृतः । **सु.** पृ. ८९३. * **मतुपः** अस्तित्वयोगविषयत्वम् । **वा.** २।३।१।२ पृ. ५७६.

**मत्तकाशिन्या दृष्टा तिर्यक्षु कामितेति न्यायः** । अयं न्यायो यत्र अधिकार्थलाभे अल्पार्थे वृत्तिरिति विवक्षा तत्र प्रवर्तते । मत्तकाशिनी स्त्रीविशेषः । **साहस्री**. ४७७.

* **मत्स्यान्** न पयसा समश्नीयात् । यद्यपि सगुणा मत्स्या भवन्ति तथापि पयसा सह न समश्यन्ते लोके । **भा.** १०।७।१९।६६ .

**मत्स्यकण्टकन्यायः** । यथा मत्स्यमांसार्थी तत्संबद्धान् कण्टकादीनपि तावत् गृह्णाति, त्यजति च तस्मिन् गृहीते, तथा तत्त्वम्पदलक्ष्यार्थजिघृक्षया तदुपाधी अपि गृह्येते, त्यज्येते च भागत्यागलक्षणया सति लक्ष्यार्थग्रहे । ' तस्यापत्यम् ' ( पा० ४।१।९२ ) इतिसूत्रमहाभाष्ये अयमुक्तः । तथाहि ' यथा कश्चित् मांसार्थी मत्स्यान् सशकलान् सकण्टकानाहरति नान्तरीयकत्वात् । स यावदादेयं तावदादाय शकलकण्टकानुत्सृजति ' इति संक्षेपः । **साहस्री** २३९ .

* **मथितः** अग्निः आधाने गार्हपत्यार्थ एव । **संकर्ष.** ३।२।१. **मीको.** पृ.९२७ 'आधाने मथितोऽग्निः ' इत्यत्र द्रष्टव्यम् ।

* **मथुरानिवासिब्राह्मणीनां** सुरापानं अद्यत्वेऽपि दृश्यते, स अनाचारः । **वा.** १।३।३।७ पृ. २०४. अधिकं तु **मीको.** पृ. ३६९ ' अनाचाराः ' इति बिन्दौ द्रष्टव्यम् ।

**मधु न दीक्षिता ब्रह्मचारित्वात् । १०।६।१२।३२ ॥**

गवामयने सत्रे द्वादशाहात् ' संस्थिते पृष्ठ्ये षडहे मध्वाशयेत् घृतं वा ' इति प्राप्तम् । परन्तु सत्रिणः मधु न भक्षयेयुः, ब्रह्मचारित्वात् । सत्रिणो हि दीक्षिताः, दीक्षितत्वात् ब्रह्मचारिणः, ब्रह्मचारिणां च ' मधु मांसं च वर्जयेत् ' इति मधुनो निषेधात् । तस्मात् सत्रिणः मधु न प्राश्नीयुः इति पूर्वः पक्षः ।

**प्राश्येत वा यज्ञार्थत्वात् । ३३ ॥**

गवामयने सत्रे द्वादशाहात् ' संस्थिते पृष्ठ्ये षडहे मध्वाशयेत् घृतं वा ' इति चोदकेन प्राप्तं मधु सत्रिभिः प्राश्येत । सत्रिणां दीक्षितत्वेन ब्रह्मचारित्वेऽपि ब्रह्मचारिणां निषिद्धमपि मधु प्राशनीयमेव यज्ञार्थत्वात् क्रत्वर्थत्वात् । पुरुषार्थः प्रतिषेधः क्रत्वर्थं प्राशनम् । क्रतुसाद्गुण्यार्थं सत्रिभिरपि मधु प्राशनीयम् । इति सिद्धान्तः । वाशब्दः न प्राश्नीयुरितिपूर्वपक्षव्यावृत्त्यर्थः । **के.**

* **मध्वशनं** द्वादशाहगते पृष्ठ्यषडहे त्रयस्त्रिंशसमीपे क्रियते । क्वचित् विकृतौ यत्र त्रयस्त्रिंशादिः त्रिवृदन्तः पृष्ठ्यषडहः तत्र त्रिवृत्संनिधौ कार्यम् । मध्वशनस्य षडहाङ्गत्वात् त्रयस्त्रिंशसामीप्यस्य च आकस्मिकत्वात् । **वि.** १०।६।९. * मध्वशनं षडहधर्मो गृहपतिव्रतं द्वादशाहे । **भाट्ट.** १०।६।१२. * **मध्वशनेन** पृष्ठ्ये षडहे उपदिष्टेन अतिदिष्टस्य पयोव्रतादेः न बाधः, किन्तु समुच्चयः । १०।४।१।१–२. **मीको.** पृ. २३२७ ' नारिष्ठहोमादीनां आतिदेशिकानां० ' इत्यत्र द्रष्टव्यम् ।

* **मध्वशनादेः** अनुष्ठानं गवामयने पृष्ठ्यषडहावृत्तौ सर्वषडहान्ते सकृदेव न तु प्रतिषडहान्ते । १०।६।१०।२९–३०. **मीको.** पृ. १५५४ ' गवामयनादौ पृष्ठ्यषडहावृत्तौ० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * मध्वशनादेरप्यावृत्तिः पृष्ठ्यषडहस्य कर्मान्तरव्यवधानेनावृत्तौ गवामयने । १०।६।११।३१.

* **मध्वशनघृताशनयोः** वैकल्पिकयोः गवामयने पृष्ठ्यषडहान्ते अनुष्ठानम् । १०।६।९।२७–२८. **मीको.** पृ. १५५२ ' गवामयने पृष्ठ्यषडहान्ते० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**मधूदके द्रवसामान्यात् पयोविकारः स्यात् । ८।१।१९।४०॥**

चित्रायामिष्टौ ' दधि मधु घृतं पयो धाना उदकं तण्डुलाः तत् संसृष्टं प्राजापत्यं भवति ' इति श्रूयते । तत्र मधुनि उदके च को विध्यन्त इति विचारः । तत्र पूर्वपक्षमाह । मधु च उदकं च ते मधूदके पयोविकारः स्यात् । पयसो विकारः । पयः प्रकृतिः । तस्मात् मधूदकयोः पयसो विध्यन्तः स्यात् । द्रवसामान्यात् । मधु उदकं च द्रवः, पयश्च द्रवः । इति द्रवत्वं सामान्यम् ।

**आज्यं वा वर्णसामान्यात् । ४१ ॥**

चित्रेष्टौ मधूदकयोः पयः प्रकृतिः इति पूर्वपक्षं वाशब्देन निरस्यन् सिद्धान्तमाह । मधुनः उदकस्य च हविषः आज्यं प्रकृतिः स्यात् न पयः । वर्णसामान्यात् । मधूदकयोः आज्यस्य च वर्णः समानः न मधूदकयोः पयसश्च वर्णः समानः । तस्मात् आज्यं प्रकृतिः तस्य विकारः मधूदके । अतः आज्यविध्यन्तो मधुनि उदके च ।

**धर्मानुग्रहाच्च । ४२ ॥**

चित्रेष्टौ मधूदकयोः हविर्विशेषयोः आज्यविध्यन्तो ग्राह्यः इति सिद्धान्ते हेत्वन्तरमाह । मधुनि उदके भूयसां आज्यधर्माणां उत्पवनादीनां अनुग्रहो भवति, पयोधर्माणां दोहनादीनां तु नानुग्रहः । तथा च मधूदकयोः आज्यधर्मानुग्रहात् आज्यविध्यन्त एवेति ।

**पूर्वस्य चाविशिष्टत्वात् । ४३ ॥**

चित्रेष्टौ मधूदकयोः हविर्विशेषयोः आज्यविध्यन्तो ग्राह्यः वर्णसामान्यात् इत्युक्तम् । पूर्वस्य च पूर्वपक्षोक्तस्य च द्रवत्वसामान्यस्य तु मधूदकयोः अविशिष्टत्वमेव । आज्यमपि अग्निसंयोगात् द्रवं मधूदके च द्रवे इति तदपि सामान्यमत्र वर्तते एवेति न विशेषः । तस्मात् मधूदकयोः आज्यविध्यन्त एव स्यात् इति सिद्धान्तः । **के.**

* **मधूदकयोः** आज्यविकारत्वं अष्टमे ( ८।१।१९।४० ) वक्ष्यते । **सु.** पृ. ८१२. * मधूदकयोः चित्रेष्टिगतयोः उपांशुयाजधर्माणामतिदेशः । ८।१।१९।४०-४३. **मीको.** पृ. २०८ ' अतिदेशः चित्रेष्टौ० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **मधुभक्षणं** क्रत्वर्थं सत्रिभिः कर्तव्यम् । १०।६।१२।३२–३३. **मीको.** पृ. २२०३ ' द्वादशाहे सत्रात्मके सत्रिभिः० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **मधुभक्षणनिषेधः** ब्रह्मचारिणां पुरुषार्थः । वि. १०।६।१२.

* **मधुमिश्रेण** दध्ना अग्निचयने अग्निं ( चिति-समुदायं ) प्रोक्षति । तच्च सकृदेव, न प्रतीष्टकम् । वि. ९।१।८.

* **मधुयागः** पशुकामेष्टौ सतयागगतः उपांशुयाजस्य विकृतिः । चि. १२।२।७ वर्णकं २.

* **मधुकरन्यायः** । सत्यपि विग्रहे हविषो देवतया भोगः प्रत्यक्षविरुद्धोऽशक्योऽभ्युपगन्तुम् । शा. ९।१।४। प्रत्यक्षेणाग्नौ भस्मीभावावगमात् , मधुकरन्यायेन रसमात्र-ग्रहणे प्रमाणाभावाच्चेति भावः । **सोम.**

**मधुकरराजमधुमक्षिकान्यायः** । यथा मधुकर-राजं मधुमक्षिका अनुवर्तन्ते, तथेन्द्रियाणि चित्तमिति योगशास्त्रे विस्तरः । **साहस्री.** ८७१.

* ‘ **मधुपर्के** च सोमे च अप्सु प्राणाहुतीषु च । नोच्छिष्टो भवति द्विजः’ अयं प्रकृतिगतसंनिपत्योपकारक–अदृष्टार्थक्रियानिषेधः । **बाल.** पृ. ३६.

* **मधुपर्कार्थं** अग्नेः सोमस्य च, अग्नीषोमीयः पशुः , औपवसथ्येऽहनि सौत्यात् पूर्वाह्णे क्रियते । वि. ४।२।१३, ५।१।६.

**मधुमक्षिकान्यायः** । सा हि रसगुणमेवादत्ते न कण्टकादि, तथा सज्जनः गणमात्रं गृह्णाति न दोषान् । **संग्रहः.**

* **मधुरः** रसः, स्निग्धः शीतो गुरुः इति स्निग्ध-शीतत्वादीनां गुणान्तरविशेषत्वात् न रसेन संबन्धोऽस्ति इति रसलक्षितेन द्रव्येण संबध्यते । **वा.** ३।१।६।१२ पृ. ६८४.

**मधुररसभावितामब्रीजन्यायः** । यथा मधुर-रसभावितानामाम्रबीजानां परिकर्षितायां धरायामुप्तानां अङ्कुरकाण्डस्कन्धशाखापल्लवादिषु तद्द्वारा परम्परया फले माधुर्यनियमः, तथा प्रकृतेऽपि । **साहस्री.** ६९९.

* ‘ **मध्यादवद्यति**, पूर्वार्धादवद्यति ’ इत्यत्र समु-दायेनानुसमयः । **भा.** ५।२।३।४–५. * मध्यात् पूर्वा-र्धात् इति द्विरवदानं अवदानधर्मः । चि. ६।४।१.

* **मध्यतःकारिणः** ब्रह्मयजमानहोत्रुद्गातारः । **सु.** पृ. ११४३.

**मध्यदीपकन्यायः** । ‘ मध्यमणिवत् ’ अस्य ( न्यायस्य ) प्रवृत्तिः । **साहस्री.** ६७३.

**मध्यमणिन्यायः** । यथा नासिकालङ्कारमुक्ता-फलयोर्मध्ये संयोजितो लोहितको मणिः मौक्तिके स्वप्रभया भूषयतीति प्रसिद्धम् । **साहस्री.** २४७.

**मध्यस्थं यस्य तन्मध्ये । ४।४।२।३ ॥**

राजसूयप्रकरणे अभिषेचनीयमध्ये ‘ पष्ठौहीं दीव्यति ’ इति विदेवनादयः पठिताः । ते किं अभिषेचनीयस्याङ्गं उत कृत्स्नराजसूयस्य इति विचारे पूर्वः पक्षः । यत् यस्य मध्यस्थं तत् तन्मध्ये तदङ्गं इति ज्ञेयम् । यत् विदेव-नादि, यस्य अभिषेचनीययागस्य मध्यस्थं मध्ये पठि-तम्, तत् विदेवनादि तन्मध्ये अभिषेचनीयमध्ये अभि-षेचनीयाङ्गं इति ।

**सर्वासां वा समत्वाच्चोदनातः स्यान्नहि तस्य प्रकरणं देशार्थमुच्यते मध्ये । ४ ॥**

‘ पष्ठौहीं दीव्यति ’ इत्यादिविदेवनादीनां अभिषेच-नीययागमध्ये पाठात् अभिषेचनीयाङ्गत्वं विदेवनादि-चोदनानां इति सूत्रेण पूर्वपक्षे प्राप्ते सिद्धान्तयति । वाशब्दः पूर्वपक्षनिरासार्थः । विदेवनादिचोदनानां नाभिषेचनीयाङ्गत्वं किन्तु सर्वासां इष्टिपशुसोमदर्विहोम-चोदनानां विदेवनादिकं अङ्गं स्यात् चोदनातः समत्वात् ‘राजसूयेन स्वाराज्यकामः’ इति फलचोदनायाः समत्वात् फलवत्त्वादिति यावत् । ननु अवान्तरप्रकरणेन अभिषेच-नीयाङ्गत्वं भवतु अत आह, नहि तस्य प्रकरणमिति तस्य अभिषेचनीयस्य प्रकरणं नास्त्येव । तस्मान्न तदङ्ग-त्वम् । ननु तर्हि अभिषेचनीयमध्ये किमर्थं पाठ इति चेदुच्यते । देशार्थमुच्यते मध्ये इति । अभिषेचनीयस्य मध्ये विदेवनादिकं देशार्थमुच्यते । देशार्थं कालार्थ-मित्यर्थः । विदेवनादीनां सकलराजसूयाङ्गत्वेऽपि तेषा-मनुष्ठानं अभिषेचनीये माहेन्द्रस्तोत्रकाले, तद्विधानार्थं अभिषेचनीयमध्ये पाठः । तस्मात् विदेवनादिकं सकल-राजसूयाङ्गमेव । अनुष्ठानं तु अभिषेचनीयगतमाहेन्द्रकाले माध्यन्दिने । **के.**

* ‘ **मध्यमेन** पलाशपर्णेन जुहोति ’ । **संकर्ष.** १।३।२. * **मध्यमस्य** इति त्रयाणां निरुपपदं भवति



गृहमेधीये ‘ ओदनानुद्धरति ’ इत्यत्र । अन्यत्र सोपपदम् ‘ पञ्चानां मध्यमः ’, ‘ अष्टानां मध्यमः ’ इति । **भा.** ११।१।८।४६. * **मध्यमयोरेव** पर्वणोः प्रणयन-नियमः । ७।३।९।२४–२६. * ‘ प्रत्यक्षब्राह्मणोक्तानां (मन्त्राणां) **मध्यमा** चितिराश्रयः’ । **वा.** १।४।१२।२३ पृ. ३६४. * **मध्यमायामुपसद्यग्निश्रीयते** प्रकृत्युप-कृतत्वात् । इति संकर्षे द्वितीयेऽध्याये ( षड्विंशेऽधि-करणे ) किं चितौ औत्तरवेदिका धर्माः कार्या न वा इति संदिह्य अग्न्युत्तरवेद्योः समुच्चयाभावात् भिन्नकार्य-त्वावगमेन अग्नेः उत्तरवेदिकार्यापत्त्यभावावगतेः औत्तर-वेदिकधर्मानतिदेशं पूर्वपक्षयित्वा, सोत्तरवेदिस्तु ‘ क्रतुं चित्वा उत्तरवेद्यामग्निश्रीयते ’ इति वचनालोचनया समुच्चयावगमे अपि चयननिष्पादितस्थलस्य ‘ अग्निं चिनुते ’ इति द्वितीयोक्ताग्निसंस्कारार्थत्वे अस्य योग्यतया अग्निधारणात्मकसंस्कारार्थत्वावगमेन ‘ उत्तरवेद्यां अग्निं निदधाति ’ इत्यग्निधारणाख्योत्तरवेदिकार्यापत्त्यवगमात् , कार्यैक्येऽपि च ‘ वेद्यां बर्हिषि हवींष्यासादयति ’ इति वेदिबर्हिषोरिव स्थलोत्तरवेद्योरपि पाक्षिकप्राप्त्य-भावेन नियमविध्यभावात् अन्योन्यनैरपेक्ष्यानवगतेः समुच्चयाविरोधात् उत्तरवेदिकार्यापत्त्या स्थलाख्यस्याग्नेः तद्धर्मातिदेशं सिद्धान्तयितुं उत्तरवेद्या समुच्चीयमानेऽपि चयने उत्तरवेदिकार्यापन्ने उत्तरवेदिधर्मा भवेयुः इति वदता तत्रत्यभाष्यकृता औत्तरवेदिकधर्मग्राहित्वलक्षणस्य तद्विकारत्वस्य अतद्विकारत्वपूर्वपक्षनिरासपूर्वकं उपपाद-यिष्यमाणत्वात् । सिद्धवच्च समुच्चयोक्त्या अतद्विकारत्व-निरासेन तद्विकारत्वस्य तत्र वक्ष्यमाणत्वात् तदधि-करणसिद्धः प्राकृतत्ववैकृतत्वविचारः । **सु.** पृ. ९४९.

* **मध्यमचितौ** चित्रिण्यादीनां इष्टकानामुपधानं न पञ्चम्याम् । ५।३।७।१७–१९ । तच्च लोकंपृणायाः प्राक् । ५।३।८।२०.

* **मध्यमपुरुषः** नहि परप्रेषणमन्तरेण उपपद्यते इति वक्ष्यामः ( ३।८।११।२३ इत्यत्र ) । **वा.** ३।२।४।१०.

* **मध्यमपुरोडाशस्य** यवमयस्य नियमस्त्रैधात-व्यायाम् । **भा.** १०।७।१६।५१–५७.

* **मनः** ( बौद्धमतेन ) । न खलु मनो नाम चक्षुरा-दिवत् किञ्चिदिन्द्रियान्तरं रोचयामहे, किन्तु पूर्वमेव विज्ञानं चरमज्ञानस्य उपादानमाचक्ष्महे । तदेव हि समं विज्ञानत्वेन अनन्तरं चाव्यवहितत्वेन समनन्तरप्रत्यय इत्युच्यते । तत्र यदिन्द्रियजविज्ञानसमनन्तरप्रत्ययसह-करिणा तदिन्द्रियजविषयक्षणोपादानेन रूपेक्षणान्तरेण इन्द्रियजविज्ञानसमानकालेन जनितं स्वजनकक्षणविषयं विशदाभं उपरतेन्द्रियव्यापारस्य ज्ञानम्, तत् मानसं प्रत्यक्षं ( नाम ) । न तत् इन्द्रियजं तद्व्यापारोपरमे भावात् । नान्तरविषयं इन्द्रियजविषयविज्ञानविषयक्षण-जनितक्षणान्तरगोचरत्वात् । न च अन्धबधिराद्यभावः, तेषां इन्द्रियरहिततया तज्जविज्ञानाभावेन उपादानविर-हात् । न चाप्रत्यक्षं विशदाभासत्वात् इति । **कणिका.** पृ. १२०. * **मनसो** विभुत्वनयः सांख्यमते । **मणि.** पृ. ५४, * **मनसि** इन्द्रिये ‘ सुखी इति प्रत्यक्षं इन्द्रियजन्यं प्रत्यक्षत्वात् ’ इत्यनुमानं प्रमाणम् । **अन्ये** तु सुखादीनां नित्यद्रव्यविशेषगुणत्वेन द्रव्यान्तरसंयोगा-समवायिकारणकत्वे सिद्धे तादृशसंयोगाश्रयतया मनः-सिद्धिरित्याहुः । **तन्न** । शरीरसंयोगेन सिद्धसाधनात् अर्थान्तरत्वाच्च । तच्च अन्तरिन्द्रियम् , स्वातन्त्र्येण आत्म-तद्योग्यगुण–तद्गतजातिमात्रग्राहकम् , बाह्यविषयेषु तस्य स्वातन्त्र्याभावात् । कुतो न स्वातन्त्र्यमिति चेन्न । तस्य अणुपरिमाणस्य देहात् बहिर्भावाभावेन संनिकर्षासंभ-वात् । युगपज्ज्ञानानुत्पत्तिश्च मनसोऽणुत्वे प्रमाणम् । येऽपि तस्य विभुत्वमाहुः, तेषामपि देहावच्छिन्नस्य इन्द्रियत्वात् अस्वातन्त्र्याक्षतिः । युगपज्ज्ञानोत्पत्तिरिष्टैव । पृ. १९–२०.

* **मनोभेदस्य** आत्मभेदाधीनत्वात् आत्मत्व-सामान्योक्त्यैव मनस्त्वसामान्यसिद्धिः । **सु.** पृ. ३४२.

**मनोराज्यविजृम्भणन्यायः** । स्वचित्तपरिकल्पित-मनोरथविकाश इत्यर्थः । ‘ मनोरथानां न समाप्तिरस्ति वर्षायुतेनाप्यथ वाऽब्दलक्षैः । पूर्णेषुपूर्णेषु पुनर्नवाना-मुत्पत्तयः सन्ति मनोरथानाम् ॥ ’ इति । अयं च सर्व-दर्शनसंग्रहे चार्वाकदर्शने, पाणिनिदर्शने च दर्शितः । तथाहि, चार्वाके ‘ नद्यास्तीरे फलानि सन्ति ’ इति

वचनश्रवणसमनन्तरं फलार्थिनां नदीतीरे प्रवृत्तिरिति तदेतन्मनोराज्यविजृम्भणमिति । पाणिनीये तु— ननु स्फोटवाचकतापक्षेऽपि प्रागुक्तविकल्पप्रसरेण घट्टकुटीप्रभायितमिति चेत् तदेतन्मनोराज्यविजृम्भणं वैषम्यादिति । **साहस्री.** ६९२.

* **मनःसद्भावतदणुत्वे ।** इदानीं मनःसद्भावोऽणुपरिमितत्वं च साध्यते । बुद्ध्यादिकं तावत् कार्यम्, तस्यात्मसमवायित्वे असमवायिकारणत्वेन द्रव्यान्तरसंयोग एव आस्थेयः । तथाहि, बुद्ध्यादिकार्यं स्वसमवायिकारणद्रव्यान्तरसंयोगासमवायिकारणकं नित्यद्रव्यगतानित्यविशेषगुणत्वात् पार्थिवपरमाणुगतरूपादिवत्, तत् द्रव्यं मनःशब्दाभिधेयं तत् च नित्यमिति आस्थेयम् । इतरथा तस्यापि कारणकल्पनाप्रसङ्गात् । नित्यं च द्रव्यमणुरूपं विभुरूपं वा भवति । तस्य च विभुत्वमयुक्तम्, संयोगाभावप्रसङ्गात्, संयोगस्य साक्षाद्वा परंपरया वा क्रियैव कारणम्, संप्रतिपन्ने संयोगे तथा दर्शनात् । न च नैरन्तर्यमात्रं संयोगः, गुणगुणिनोरपि संयोगप्रसङ्गात् । न च द्रव्यनैरन्तर्यं अवयवावयविनोः व्यभिचारात् । अप्राप्तयोर्द्रव्ययोरेव प्राप्तिः संयोगः, स च विभुनोर्न संभवति ।

ननु विभुनोरपि संयोगः संभवति । तथाहि विभुनी मिथः संयुक्ते, द्रव्यत्वे सति निरन्तरत्वात् रज्जुघटवत् । तथाहि— आकाशमात्मसंयोगि, तत्संयुक्तद्रव्यान्तरसंयोगित्वात्, आत्मसंयुक्तघटसंयुक्तपटवत् इत्यादि । **नैवम्,** प्रमाणान्तरबाधितविषयत्वात् । अन्यत्र संयोगमनुगम्य विभुनोः साधयितुं युक्तम्, इतरथा अप्रसिद्धविशेषणत्वात् शशविषाणवानयमितिवत् । ततश्च अन्यत्र संयोगः क्रियाजन्यत्वेन दृष्टः, विभुद्वये तु संयोगे साध्ये कारणाभावात् कार्याभावानुमानबाधात् बाधितविषयत्वम् । अतो न विभुनोः संयोगः ।

**यच्च** विभुत्वसाधकमनुमानम्— मनो विभु, ज्ञानासमवायिकारणसंयोगाश्रयत्वात्, आत्मवत्, द्रव्यत्वे सति स्पर्शशून्यत्वात् आकाशवत्, निरवयवत्वे सति द्रव्यानारम्भकद्रव्यत्वात् आकाशवत्, द्रव्यत्वे सति भूतत्वात् आकाशवत्, स्पर्शशून्यत्वे सति इन्द्रियत्वात् श्रोत्रवत् इत्यादि, तत् सर्वं धर्मिग्राहकप्रमाणविरोधादेवापास्तं संयोगार्थत्वान्मनःकल्पनायाः । अतः पारिशेष्यादणुत्वमेव निश्चीयते । तर्हि पार्थिवाद्यणुरेवास्तु, न द्रव्यान्तरं मन इति चेन्न, पार्थिवाद्यणूनां द्रव्यारम्भकत्वनियमात्, मनसश्च न द्रव्यारम्भकत्वं स्पर्शशून्यत्वादिति व्योमटीकायां प्रपञ्चितम् । **किञ्च** विवादाध्यासितः पार्थिवादिद्रव्ययोगो न ज्ञानासमवायिकारणम्, पार्थिवादिद्रव्यसंयोगत्वात् इतरपार्थिवादिद्रव्यसंयोगवत् द्रव्यान्तरसंयोगवद्वा । विभुत्वपक्षे दिगात्मसंयोगो वा भवतु, कालात्मसंयोगो वा, किं द्रव्यान्तरेण मनसा इति तुल्योऽयमनुयोगः । अतो मनसोऽस्तित्वमणुत्वं च सिद्धम् । **प्रवि.** पृ. ३०–३२.

* **मनोर्ऋचः** ( मनुसंबन्धिन्यः ऋचः ) सामिधेन्यः यावदर्थं उपादेयाः न सर्वाः । १०।६।१९।७३–७६. * मनोर्ऋचां 'अग्निरुक्थे पुरोहितः' ( ऋसं. ८।२७।१ ) इत्याद्यानां 'पृथुपाजा' ऋसं. ( ३।२७।५–६ ) इति द्वयोश्च धाय्या इति समाख्या । **सु.** पृ. १११९. * मनोर्ऋचां पृथपाजवत्यश्च समाख्यया याज्यात्वे प्राप्ते लिङ्गेन सामिधेनीत्वेन विनियोगः इत्युक्तं ( ३।२।७।२० ) इत्यत्र । **वा.** ३।३।७।१४ पृ. ८३७. * मनोः क्षत्रियस्यापि प्रवर्तकत्वं 'यद्वै किंच मनुरवदत् तद्भेषजम्' इति वेदानुज्ञातत्वात् अविरुद्धम् । **सु.** पृ. १७२.

* **मन्वादयः** राज्यशब्दाभिधेयं परिपालनादि कर्म क्षत्रियस्य इति स्मरन्ति । **वा.** २।३।२।३ पृ.५८४, * न च अवश्यं **मन्वादयः** सर्वशाखाध्यायिनः, ते हि प्रयत्नेन शाखान्तराध्यायिभ्यः श्रुत्वाऽर्थमात्रं स्ववाक्यैरविस्मरणार्थं निबध्नीयुः । १।३।१।२ पृ. १६४, * **मन्वादिभिः** क्षत्रियस्य रक्षणं विहितं तद्राजकर्मत्वेन ज्ञायमानं राज्यं इत्यत्र प्रत्ययार्थत्वेन प्रतिपद्यते । ३।७।१९।४०.

* **मन्वादिवाक्यप्रतिषिद्धाचाराणां प्रामाण्यं अशक्यमभ्युपगन्तुम्** । **चा.** १।३।३।७ पृ.२११.

* **मन्वादिस्मृतयः** पौरुषेया एव । दृष्टपुरुषकर्तृकत्वस्य अविच्छिन्नपारंपर्येणानुवर्तनात् वेदमूलत्वाच्च प्रामाण्यं तासाम् । **वि.** १।३।७.



**मनुवत्कल्पः त्र्यार्षेयभिन्नब्राह्मणानाम् ॥**

'आवृश्चयत एष ओषधिवनस्पतिभ्यो यः परान् वृणीते' इति त्र्यार्षेयवरणं विनिन्द्य 'मनुवदित्येव ब्रूयात्' इति श्रुतम् । अयं च मनुवत्कल्पो राजन्यवैश्यपरः । तेषां ब्राह्मणर्षिसंतानत्वाभावात् । **इति प्राप्ते,** त्र्यार्षेयवरणप्रतिषेधपूर्वकं मनुवत्कल्पविधानात् तस्य च प्रसक्तिपूर्वकत्वेन तस्याश्च 'ब्राह्मणेष्विव पुरोहितस्यार्षेयेण वेदयेत्' इति वचनान्तरेण राजन्यवैश्ययोश्च सत्त्वात् त्रैवर्णिकानां आर्षेयमनुवत्कल्पयोस्तुल्यवद्विकल्पः । **वस्तुतस्तु** निन्दार्थवादस्य विधिशेषत्वेन प्रतिषेधकल्पकत्वाक्षमतया कल्पने च वाक्यभेदापत्तेर्मनुवत्कल्पस्य च त्र्यार्षेययोग्यातिरिक्तब्राह्मणेषु सावकाशत्वात् सौत्रो विकल्पशब्दो व्यवस्थितविकल्पपरः । पुरोहितस्य इत्यादिकं तु अस्यैव गुणसूत्रम् । पञ्चावत्तातिरिक्तपरत्वेन चतुरवत्तस्येव ब्राह्मणातिरिक्तपरत्वेन मनुवत्कल्पस्य व्यवस्थया निरासार्थम् । राजन्यवैश्ययोः पार्थक्येन विधिदर्शनान्न तेषु मनुवत्पक्षस्य नियता प्रवृत्तिरित्येव व्याख्येयम् । **संकर्ष.** ३।४।५.

* **मनुवत्पक्षे** तु यस्याप्येको ( प्रवरः ) यस्यापि पञ्च तस्यापि सकृदेवोच्चारणं 'मनुवत्' इति । **टुप्.** ६।१।११।४३.

* **मनुष्याः** प्रायशः निवीतं स्वार्थं कुर्वन्ति । **भा.** ३।४।१।२. * मनुष्याः रसायनेन सिद्धाः दीर्घायुषो भवन्तीति केचित् । तन्न । रसायनं नायुर्हेतुः किन्तु आरोग्यपुष्ट्यादिजनकम् । **वि.** ६।७।१३. * मनुष्याः शमितारो वाक्यसंयोगात् । संकर्षसूत्रं १।१।१३ । ... 'दैव्याः शमितार आरभध्वमुत मनुष्याः' इति मनुष्यसमभिव्याहारात् अनियमेन प्रकृतपुरुषमात्रस्य शमितृत्वं इति पूर्वपक्षः प्रथमः ।

ऋत्विजो वा संनिधानात् । १।१।१३। ... परिक्रयेण ऋत्विजां सर्वकर्मार्थत्वावधारणात् शमनकाले च तेषामेव संनिधानात् शमितरि च एकस्मिन् बहुवचनायोगेन 'शमितारः' इति बहुवचनस्य शमनार्थपशुनयनादिकार्यापेक्षत्वात् पशुनयनादेश्च आर्त्विजत्वनिश्चयात् शमनमपि आर्त्विजं इति पूर्वपक्षान्तरम् ।

शमिता सर्वकर्मणामविशेषात् । १।१।१३ । ... ऋत्विजामन्यत्र व्यापृतत्वात् शमनान्तर्भूतानां सर्वकर्मधर्मायोगमाशङ्क्य —

अध्वर्यौ व्यापृते तत्पुरुष एव कश्चित्, त्रिष्वपि वा व्यापृतेषु अन्यः कश्चिदृत्विक् शमिता इति सिद्धान्तितम् । **सु.** ३।७ पृ. २७. * क्षेत्राणामीशितारो **मनुष्याः** दृश्यन्ते, न कृत्स्नस्य पृथिवीगोलकस्येति । **भा.** ६।७।२।३. * **मनुष्याणां** परमायुः शतं वर्षाणि कलियुगे, कृतादियुगान्तरेषु तु पुराणेतिहासस्मृत्यादिप्रामाण्यात् अनेकसहस्रसंवत्सरमपि आयुः । **भाट्ट.** ६।७।१२. * मनुष्याणां समर्थानामेव यागादिष्वधिकारः । **वि.** ६।१।२. * न **मनुष्याणामेतावत्** ( सहस्रसंवत्सरं ) आयुर्विद्यते । गन्धर्वादयस्तु एतावदायुष इति भवति स्मृतिः । **भा.** ६।७।१३।३१. * **मनुष्येषु** वाचनविष्णुक्रमणाज्यावेक्षणेषु असमर्थः यागादिषु नाधिक्रियते । **टुप्.** ६।१।२।५..

* **मनुष्याधिकारं** शास्त्रं समधिगतम् । **भा.** ६।७।१३।३२. * **मनुष्याधिकार** एव विश्वसृजामयने संवत्सरशब्दस्य दिवसपरत्वात् । ६।७।१३।३१–४०.

* '**मनुष्यधर्मः** शब्दस्य तत्प्रधानत्वात् ।' ( ३।४।१।१ ) इति विनाऽपि षष्ठीनिर्देशात् अभजन्त इति मनुष्यसंबन्धात् तादर्थ्यम् । इतरेषु षष्ठ्येव । **वा.** ३।४।३।११.

* **मनोता** पुरोनुवाक्या च आवर्तते कृष्णग्रीवयोः । कालभेदात् सौम्येन व्यवायात् । **भा.** ११।४।२०।५४–५६ .

**मनोतायां तु वचनादविकारः स्यात् । १०।४।२१।४३॥**

अग्नीषोमीये पशौ 'त्वं ह्यग्ने प्रथमो मनोता' इति मनोतासूक्तम् । वायव्ये पशौ तत् चोदकेन प्राप्तम् । तत् यथादेवतं ऊहितव्यं इति उत्सूत्रे पूर्वपक्षे **सिद्धान्तमाह ।** 'यद्यप्यन्यदेवत्यः पशुः आग्नेय्येव मनोता कार्या' इति वचनात् मनोतायां मनोतासूक्ते अविकारः स्यात् यथादेवतमूहो न स्यात् । तुशब्दः ऊहव्यावृत्त्यर्थः । **के.**

* अग्नीषोमीये **मनोतायां** अग्निशब्दः प्रकरणात् समासस्थः प्रतीयमानः साहचर्यात् सोममपि प्रतिपादयन् समुदायार्थो विज्ञायते । वा. २।१।५।२१ पृ. ४२६.

* **मनोताधिकरणे** ( १०।४।२१।४३ ) मनोतामन्त्रस्याग्निशब्दस्य एकदेशद्वारा अग्नीषोमप्रकाशकत्वस्य समर्थितत्वात् । **पराक्रमः**. ४२।२.

**मनोतान्यायः ।** वायव्यादिपशौ मनोतामन्त्रस्य न ऊहः ॥

**मनोतायां तु वचनादविकारः स्यात् । १०।४।२१।४३ ॥**

**भाष्यम्—** अस्ति वायव्यः पशुः ' वायव्यं श्वेतमालभेत भूमिकामः ' इति । अस्ति तु प्रकृतौ अग्नीषोमीये पशौ मनोतामन्त्रः । ' त्वं ह्यग्ने प्रथमो मनोतास्या धियो अभवो दस्म होता' (ऋसं. ६।१।१) इति । स इह चोदकेन प्राप्यते । तत्र संदेहः किं यथादेवतमूहितव्यो मनोतामन्त्रः, अथवा अविकारेण प्रयोक्तव्य इति । उच्यते । ननु प्रकृतावन्यायनिगदोऽयम् । अग्नीषोमौ हि प्रकृतौ देवता । अयमप्याग्नेयः । असमवेताभिधानादविकारेण प्रयोक्तव्यः । अत्रोच्यते । सत्यमग्नीषोमौ देवता प्रकृतौ । तौ तु अग्निश्च सोमश्च । तत्राग्निः अदेवता, न त्वसमवेतः । अग्निप्रत्ययेन याऽत्र देवता, सा प्रतीयते । अयमिह वायुर्देवताकार्ये श्रूयते । स देवताकार्ये श्रूयमाणोऽग्निकार्यमपि करोति देवताप्रत्ययम् । तस्मात्तदर्थापत्तेस्तद्धर्मा स्यात् । तस्माद्यथादेवतं मनोतामन्त्रः प्रयोक्तव्य इति । **एवं प्राप्ते, ब्रूमः ।** मनोतायां तु वचनादविकारः स्यादिति । वचनमिदं भवति ' यद्यप्यन्यदेवत्यः पशुः, आग्नेय्येव मनोता कार्या ' इति । किमिव वचनं न कुर्यात् । नास्ति वचनस्यातिभारः । तस्मादविकारेण मनोतामन्त्रः प्रयोक्तव्य इति ।

**टुप्—** ( ननु वचने सति केयं चिन्ता ? अत आह– ) ' यद्यप्यन्यदेवत्यः पशुः ' ( आग्नेय्येव मनोता कार्या ) इति वचनं चिन्त्यते किं प्रकृतौ उपपद्यते, उत ( तत्रानुपपन्नं ) विकृतौ ( उत्क्रष्टव्यं ) इति । ( तत्र ) पूर्वः पक्षः प्रकृताविति । ( कथम् ? ) अग्निलिङ्गा ( हि ) मनोता, सा प्रकृतौ नाग्नीषोमौ अभिधातुं शक्नोति इत्याशङ्का भवति । तस्यां ( आशङ्कायां च ) उत्कर्षे प्राप्ते ( प्रकृतौ इदं वचनं इति पूर्वेण संबन्धः । पूर्वपक्षमाक्षिपति– ) विकृतौ अनाम्नानात् तस्यामपि न भवति, श्रुतिलिङ्गाद्यभावात् । ननु लिङ्गेन प्राप्नोति ( विकृतौ ) । उच्यते । सामान्यसंबन्धे ( सति ) लिङ्गमवकाशं लभते । न च ( विकृतौ मनोतायाः ) सामान्यसंबन्धोऽस्ति । तस्मात् प्रकृतौ ( एव मनोतायाः ) निवेशः । न च अदृष्टार्था मनोता प्रकृतौ । ( सा हि ) अग्निं तावत् श्रुत्यैवाभिधत्ते, ( तत्संबद्धं ) सोमं ( अपि ) लक्षणया शक्नोति वक्तुम्, उभयोर्यागसाधनत्वात् । ( कथमित्याह– ) इतरेतरयुक्तौ हि तौ देवतात्वं प्रतिपद्येते ( तेन एककार्यकरत्वात् शक्यते अग्निना सोमो लक्षयितुम् ) । यथा पुष्करं ( पद्मं ) स्वनन्तं दृष्ट्वा ( सहचारी ) ग्रहेश्वरोऽपि ( मकरोऽपि ) स्वनन्निव लक्ष्यते एककार्यत्वात् । ग्रहेश्वरः इत्यत्र गजेश्वरः इति पाठस्वीकारे तु ' पुष्करं ( शुण्डाग्रं ) स्वनन्तं दृष्ट्वा गजेश्वरोऽपि स्वनन्निव लक्ष्यते इत्यर्थः कर्तव्यः । उत्तरत्र पुनः ' पुष्करवत् ग्रहेश्वरम् ' इति वक्ष्यमाणत्वात् गजेश्वर इति पाठो न स्वीकार्य एव । के. ) एवमिहापि । ( समाधत्ते– ) इदं वचनं ( अर्थवादत्वेन ) स्तुवत् मन्त्रं प्रकृतावेव निवेशयति । ( यत् प्रकृतौ मनोताविधायकं वचनं 'मनोतामन्वाह' इति तस्यायमर्थवाद इत्यर्थः ) । अथवा उत्कर्षाशङ्कायां इदमेव ( वचनं ) अनुत्कर्षं करोति । लक्षणया च सोमं प्रत्याययति इत्युक्तमेव पुष्करवत् ग्रहेश्वरम् । ( तस्मादूहः ) । सिद्धान्तस्तु ( आग्नेय्येव मनोता इति ) एवकारकरणं अनर्थकं प्रकृतौ, अवधारणाभावात् । विकृतौ चावधारणं विद्यते । ( तत्र चोदकेन यद्देवत्यः पशुः तद्देवत्यैव मनोता प्राप्नोति ऊहेन । एवं प्राप्ते अवधारणं क्रियते आग्नेय्येवेति इति आनन्दाश्रमीये अधिकम् ) । न चार्थवादत्वेन उपपद्यते ( प्रकृतौ इदं वचनम् ) । अन्यत्रैव ( हि ) मनोता श्रूयते ( विधीयते ) ' मनोतामन्वाह ' इति, अन्यत्र ( च ) ' यद्यपि अन्यदेवत्यः पशुः ( ' आग्नेय्येव मनोता कार्या ' ) इति ( तेन एकवाक्यत्वाभावात् नार्थवादः इति ) । अपि च अर्थवादत्वे अपि ( सति ) एवकारस्य पर्युदसितव्याभावो भवत्येव यथा विधौ



( विधौ इव अर्थवादेऽपि भाक्तव्याख्याने दोष एव । तस्मात् विकृत्यर्थमिदं वचनं इत्यनूहः । ऊहानूहविचारस्य अध्यायसंबन्धमाह– ) दशमसंबन्धः बाधसामान्येन ( न्यायप्राप्तस्य ) ऊहस्य ( वचनेन ) बाधः इति । ( इदं चाधिकरणं आग्नेयः सवनीयः पशुः ज्योतिष्टोमे नास्तीति कृत्वा चिन्तितम् । ) ।

**शा—** अग्नीषोमीये पशौ मनोतामन्त्रः ' त्वं ह्यग्ने प्रथमो मनोता ' इति । तत्रैव चेदं वचनं ' यद्यप्यन्यदेवत्यः पशुः, आग्नेय्येव मनोता कार्या ' इति । सोऽयं मनोतामन्त्रः किं विकृतिषु वायव्यादिपशुषु यथादेवतं ऊहितव्यः, अथवा अविकारेण प्रयोक्तव्य इति संशयः । तदर्थं च ' यद्यप्यन्यदेवत्यः ' इत्येतत् वचनं प्रकृत्यर्थम्, उत विकृत्यर्थमिति । तत्र पशोः अग्नीषोमदेवत्यत्वात् केवलाग्निदेवत्या मनोता । तत्रासामर्थ्यात् उत्कृष्यमाणा वचनेनानेन वार्यते । यद्यपि द्विदेवत्यः तथापि एकदेवत्यैव मनोता तत्र कार्या, नोत्क्रष्टव्येति । ... तस्मात् वायव्यादिषु यथादेवतं ऊहितव्या । **इति प्राप्ते, ब्रूमः । ' अग्निद्वारेण मन्त्रोऽयमग्नीषोमौ प्रकाशयन् । अन्तरेणैव वचनं प्रकृताववतिष्ठते ॥ '** न च विकृतिषु सामान्यसंबन्धोऽस्ति, येन लिङ्गेन केवलाग्निदेवत्यायाः उत्कर्षः स्यात् । तस्मात् नोत्कर्षप्राप्तिः, येन तन्निवारणेन प्रकृतावेव वचनं कार्यं कुर्यात् । तस्मात् विकृतिषु यथादेवतं ऊहे प्राप्ते तन्निवारणार्थं वचनमिति वायव्यादिषु अनूहः इति अग्निशब्दस्य अबाधः ।

**सोम–** याज्यादिवत् मनोताया अपि दृष्टार्थत्वादूहः इत्युत्थितेः **संगतिः** ।

**वि–** ' मनोतामन्त्र ऊहोऽस्ति वायव्ये नास्ति वा, ऽस्त्यसौ । आग्नेय्येवेतिवचनं प्रकृतौ सार्थकं यतः ॥, अग्नीषोमावग्निनैव लक्ष्येतां वचनं विना । अनर्थकात् तत्र वाक्याद् विकृतावूहवारणम् ॥ ' तस्मात् ऊहो नास्ति ।

**भाट्ट–** अग्नीषोमदेवत्ये पशौ मनोतामन्त्रः समाम्नातः केवलाग्निप्रकाशकः । स किं विकृतौ ऊहितव्यो न वेति चिन्तायाम्, प्रकृतावग्नीषोमयोर्देवतात्वेऽपि देवतात्वप्रथमाधिष्ठानप्रकाशकत्वेन मनोतास्थाग्निपदस्य समवेतार्थत्वात् विकृतावपि तत्प्रकाशनार्थमूहः । स च यत्रानेकदेवत्यः पशुस्तत्र स्पष्ट एव । यत्राप्येकदेवत्यः, यथा वायव्यादौ, तत्रापि स एव । तत्र प्रथमाधिष्ठानमिति भवत्येवोहः । माऽस्तु वा तत्र । अत एव प्रकृतौ मनोतामन्त्रो नाग्नीषोमयोर्लाक्षणिकः प्रमाणाभावात् । **यदि** तु मनोताशब्दस्य ' मनोतायै हविषोऽवदीयमानस्य ' इति मन्त्रे चतुर्थ्यन्ततया अवदीयमान – हविःसंबन्धिदेवतावाचित्वावगमात् प्रकृतमन्त्रे चाग्निशब्दस्य ' त्वं ह्यग्ने प्रथमो मनोता ' इति मनोतापदसामानाधिकरण्येन देवतापरत्वावगतेः अन्यधिष्ठानकत्वसंबन्धेन प्रकृतदेवताभूताग्नीषोमलक्षकत्वमाश्रीयते, **तदा** अग्नि( ग्नी )वरुणदेवत्ये पशौ ऊहाप्रसक्तावपि वायव्यादिपशौ निरुक्तसंबन्धासंभवेनाग्निपदनिवृत्तौ देवताप्रकाशनरूपकार्यानुरोधेन ' धान्यमसि ' इत्यत्रेव वायव्यादिपदोहे बाधकाभावः । न चैवमपि ' पूयति वा एतदृचोऽक्षरं यदेनदूहति तस्मादृचं नोहेत् ' इति ऋगूहपर्युदासादूहानुपपत्तिः, उपक्रमस्थार्थवादे ऋगक्षरोहनिन्दया पर्युदासस्य पदोहविषयत्वेऽपि प्रकृते प्राकृतऋग्बाधे वृत्तिलोपेन सिद्धे प्रयोजनानुरोधेन ऋगन्तरागमरूपभाक्तोहे बाधकाभावात् । अत एव बाधमात्रस्यैवेह विचार्यत्वादध्यायसंगतिः ।

**न च** एवमपि ' यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्या ' इति बाधपर्युदासोपपत्तेर्नेष्टसिद्धिरिति **वाच्यम् ।** अस्य दैक्षप्रकरणस्थत्वेन विकृतिविषयत्वे उत्कर्षापत्तेः । मनोतामन्त्रस्याग्नेये पशौ उत्कर्षप्रसक्तौ तन्निवृत्त्यर्थत्वेन प्रकृतावेवोपपत्तेश्च । **इति प्राप्ते,** दैक्षसंनिधौ पठितस्य मनोतामन्त्रस्याग्नेयपश्वन्तरे सामान्यसंबन्धबोधकप्रमाणाभावेन उत्कर्षानुपपत्तेः अस्य वचनस्य प्रकृतावुत्कर्षनिवृत्त्यर्थत्वायोगात् तत उत्कृष्टस्य वायव्यादिपशावूहनिवृत्त्यर्थत्वावगतेर्न तत्र मनोतामन्त्रस्य बाधः । इदं च ज्योतिष्टोमे सवनीयाभावं कृत्वा चिन्तया । **यदा** तु आग्नेयः सवनीयः पशुर्ज्योतिष्टोमेऽस्ति **तदा** मनोतामन्त्रस्य महाप्रकरणात् ज्योतिष्टोमसंबन्धेऽवगते अवदीयमानहृदयादिसंबन्धावगमाच्च तत्रानर्थक्यप्रसक्तौ आनर्थक्यतदङ्गन्यायसहकृतप्रकरणेन सवनीये सामान्यसंबन्धबोधकप्रमाणेन तत्रैव निवेशोपपत्तेः अस्य वचनस्य प्रकृता-

वेवोत्कर्षनिवृत्त्यर्थत्वेन सार्थक्यम् । तदाऽस्य विकृतावूहनिवृत्त्यर्थत्वे प्रमाणाभावात् वायव्यादिपशौ ऋगन्तरोह इष्ट एव ।

**याज्ञिकास्तु** नैवोहमाचरन्ति । तेषामयमभिप्रायः , प्रकृतौ नाग्न्यधिष्ठानकत्वसंबन्धेनाग्नीषोमलक्षणा, व्याप्यवृत्तिसंबन्धेन लक्षणोपपत्तौ अव्याप्यवृत्तिशक्यसंबन्धेन तद्योगात् , अपि तु अग्न्यधिकरणकहविरुद्देश्यत्वसंबन्धेन । अतश्च वायव्यादिपशौ तेनैव संबन्धेन लक्षणोपपत्तेर्न बाधोहाविति । **वस्तुतस्तु** देवतात्वे अग्न्यधिष्ठानकत्वस्याव्याप्यवृत्तित्वे प्रमाणाभावादिष्येते एवोहबाधौ । २२.

**मण्डन**— ' मनोता न विकारभाक् । ' २४.

**शंकर**— ' मनोताऽग्नेरनूहनम् । ' २४.

* ' अग्नीषोमाभ्यामाज्यभागौ यजति ' इत्यत्र द्वयोरपि अग्नीषोमदेवतासंस्कारकत्वम् । मन्त्राः पुनः **मनोतान्यायेन** उभय( देवता )लक्षकाः । **भाट्ट.** १०।१।८. * यत्तु वार्तिके अनयोरेव ( मन्त्रयोः ) एका अनुवाक्या एका याज्या उभयत्रापि मनोतान्यायेन उभयत्र लक्षकत्वमङ्गीकृत्य कल्पनीया इत्युक्तम् , तत् अनुवाक्यासमाख्याबाधापत्तेः लक्षणायां प्रमाणाभावात् च उपेक्षितम् ( ' वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायाम् ' इत्यत्र इदम् )। **कौ.** २।२।३।३.

* **मनोतामन्त्रस्तन्त्रं** प्राजापत्येषु पशुषु वाजपेये । **भा.** ५।२।६।१२. * **मनोतामन्त्रस्य** गौणार्थे विनियोगः । **भाट्ट.** ३।२।१. * मनोतामन्त्रस्य ' त्वं ह्यग्ने मनोता ' इत्यस्य सौम्यन्यवहितयोः कृष्णग्रीवयोरावृत्तिः । ११।४।२०।५७–५९. ' हविष्कृतः अध्रिगोः पुरोऽनुवाक्यामनोतयोश्च आवृत्तिः ज्योतिष्टोमे ' इत्यत्र द्रष्टव्यम् ।

* **मन्त्रः** ' अग्नये जुष्टं निर्वपामि ' इति आम्नायते । आम्नानसामर्थ्याच्च तेनोपकर्तव्यं प्रकरणिनः । तत्र कथं खलु उपकरिष्यतीति विशेषाकाङ्क्षा जायते किं उच्चारणमात्रेण उपकरिष्यति उत प्रकाशनद्वारेणेति । अपूर्वदेवताप्रकाशनमाकाङ्क्षितम् । शक्नोति च अयं तत् कर्तुम् । तस्मात् प्रकाशनद्वारेणैवोपकरोतीति । **टुप्.** ९।१।१।१ वर्णकं २. * मन्त्रः अभिदधत् कर्म तत्साधनं वा कर्मणि समवैति । **भा.** १।४।३।४. * मन्त्रः अभिधानं मुक्त्वा अन्यत्र करणं न भवति । **वा.** ३।२।२।३. * मन्त्रः अभिवर्षणाङ्गं ' उन्दतीरोजो धत्त ' इति संतानेनाभिवर्षणे तन्त्रं ज्योतिष्टोमे । **भा.** ११।४।१७।५०, * मन्त्रः अमेध्यप्रतिमन्त्रणो ज्योतिष्टोमे ' अबद्धं चक्षुः ० ' इति । यदा एककालं अनेकं अमेध्यं पश्यति तदा सकृदेव मन्त्रः । ११।४।१७।५० , * मन्त्रः अर्थाभिधानेन अङ्गं भवति । १२।३।१४।३०, * मन्त्रः अर्थाभिधानसंयोगात् शक्नोति उपकर्तुम् , न गौणमर्थं शक्नोत्यभिधातुम् । ३।२।१।१ पृ. ७४९. * मन्त्रः अवघाताङ्गं तन्त्रं दर्शपूर्णमासयोः । ११।४।१२।४५. * मन्त्रः आग्नीध्रमण्डपोपस्थाने प्रकृत एव आग्नेयः । ३।२।८।२१–२४. * मन्त्रः आज्यग्रहणाङ्गं तन्त्रं न दर्शपूर्णमासयोः । **भा.** ११।४।१४।४४–४५. * मन्त्रः ' आयुर्दा अग्नेऽसि ' इत्यादिर्याजमानः दर्शपूर्णमासयोः । ३।८।६।१५–१६. * मन्त्रः उपभृतोऽभिमर्शने ' युनज्मि ते वायुमन्तरिक्षेण ते सह ' इति । **भा.** १२।१।४।११. * मन्त्रः एक एव ' मन्द्राभिभूतिः ' इत्यादिः ' भक्षयामि ' अन्तः भक्षानुवाके । ३।२।१०।२७. * मन्त्रः कण्डूयनाङ्गं तन्त्रं ज्योतिष्टोमे ( कण्डूयनमन्त्रस्तु ' कृषिषु स्थामकृषे ' इति भाष्ये । ' कृषिं सुसस्यामुत्कृषे ' इति मैत्रायणीये । ' सुपिप्पलाभ्यस्त्वौषधीभ्यः ' इति विस्तरे । ' कृष्यै त्वा सुसस्यायै ' इति भाट्टदीपिकादौ । ' विषाणे निष्वैतं ' इति शम्भुभट्टयाम् । ) । ११।४।१६।५१–५२. * मन्त्रः ' कदाचन स्तरीरसि० ' इति गार्हपत्योपस्थानाङ्गं श्रुतिप्राबल्यात् । **वि.** ३।३।७. * मन्त्रः करणभूतः कर्तव्यस्य वस्तुनः अभिसंधानार्थः समधिगतः । **भा.** ११।४।१२।४२. * मन्त्रः किं अग्निस्वरूपप्रकाशनार्थमुच्चार्यते उताग्निस्वरूपमविवक्षितम् , तस्मादित्थं प्रयोक्तव्यं इत्यतिदेशप्रकार एव नवमे चिन्त्यते । **टुप्.** ७।१।१।१. * मन्त्रः कश्चिद् वेदभागः यः विहितमर्थं प्रयोगकाले प्रकाशयति यथा ' बर्हिर्देवसदनं दामि ' इत्येवमादिः । **भा.** १।४।१।१. * मन्त्रः क्वचिद्विधायकः यथा ' वसन्ताय कपिञ्जलानालभेत ' इति । **वि.** २।१।७. * मन्त्रः जपरूपः ' वैष्णवीमनूच्य वाग्यन्तव्या ' इति । स्तुतिरूपः ' अग्निर्मूर्धा दिवः ' इति । आशीरूपः ' आयुर्दा अग्नेऽस्यायुर्मे



देहि ' इति । अभिधानार्थः ' एषोऽसि, त्वेषोऽसि ' इति । **भा.** १२।४।१।११, * मन्त्रः जुह्वा अभिमन्त्रणे 'युनज्मि वाचं सह दिवा सूर्येण ' इति । १२।१।४।११,* मन्त्रः ' त्रीन् परिधीन्० ' इति दर्शपूर्णमासयोः अपूर्वप्रयुक्तः न तु परिधित्वसंख्याप्रयुक्तः । ९।१।५।११–१९.

* **मन्त्रः त्रिविधः** ऋक्, यजुः, साम इति । ( १ ) विधायकः ऋङ्मन्त्रः– ' पृणीयादिन्नाधमानाय तव्यान् ' इति । ( २ ) विधायको यजुर्मन्त्रः– ' वसन्ताय कपिञ्जलानालभते ' इति । ( ३ ) अस्यन्तो मन्त्रः– ' मेधोऽसि ' । ( ४ ) त्वान्तः– ' इषे त्वा ' । ( ५ ) आशीर्मन्त्रः– ' आयुर्दा असि ' । ( ६ ) स्तुतिरूपः– ' अग्निर्मूर्धा ' । ( ७ ) संख्यामन्त्रः– ' एको मम एका च तस्य ' । ( ८ ) प्रलपितमन्त्रः– ' अक्षी ते इन्द्र पिङ्गले डुलेरिव ' । ( ९ ) परिदेवनमन्त्रः– 'अम्बेऽम्बिके०' । ( १० ) प्रैषमन्त्रः– ' अग्नीदग्नीन् विहर ' । ( ११ ) अन्वेषणमन्त्रः– ' कोऽसि कतमोऽसि ' । ( १२ ) प्रश्नमन्त्रः– ' पृच्छामि त्वा परमन्तं० ' । ( १३ ) आख्यानमन्त्रः– ' इयं वेदिः परो अन्तः ' । ( १४ ) पुरस्तादनुषङ्गमन्त्रः– ' या ते अग्नेऽयाशया ' । ( १५ ) परस्तादनुषङ्गमन्त्रः– ' चित्पतिस्त्वा पुनातु ' । परस्तादनुषङ्गे ऋङ्मन्त्रः– ' अभ्यक् सा त इन्द्र ' । ( १६ ) प्रयोगरूपः त्रैस्वर्यवान् ऋङ्मन्त्रः– ' अग्ने मृळ महां असि ' । ( १७ ) प्रयोगरूपः त्रैस्वर्यवान् यजुर्मन्त्रः– ' इषे त्वोर्जे त्वा ' । ( १८ ) प्रयोगरूपः चातुःस्वर्यवान् ऋङ्मन्त्रः– ' अग्निमीळे पुरोहितम् ' । ( १९ ) प्रयोगरूपः चातुःस्वर्यवान् यजुर्मन्त्रः– ' देवो वः सविता प्रार्पयतु ' । ( २० ) सामर्थ्यवान् मन्त्रः– ' देवस्य त्वा ' । ( २१ ) असिमध्यः– ' ईड्यश्चासि वन्द्यश्चासि ' । ( २२ ) त्वामध्यः– ' तत्त्वा यामि ब्रह्मणा ' । ( २३ ) इतिकरणबहुलः– ' इति वा इति मे मनः ' । ( २४ ) इत्याहोपनिबद्धः– ' भगं भक्षीत्याह ' । ( २५ ) आख्यायिकारूपः– ' तुग्रो ह भुज्युम् ' । ( २६ ) हेतुविधिः– ' इन्दवो वामुशन्ति हि ' । ( २७ ) निर्वचनार्थः– ' यत् प्रेषिता वरुणेन ' । (२८) निन्दामन्त्रः– ' मोघमन्नं विन्दते ' । ( २९ ) संशयार्थः– ' तिरश्चीनो विततो ' । ( ३० ) परकृतिरूपः– ' चित्र इद्राजा राजका ' । ( ३१ ) पुराकल्परूपः– ' यज्ञेन यज्ञमयजन्त ' । ( ३२ ) हेतुविधिसरूपः– ' द्वादशारं न हि ' । ( ३३ ) यजमानगामिफलविधिः– ' ममाग्ने वर्चो० ' । ( ३४ ) ऋत्विग्गामिफलविधिः– ' अग्नाविष्णू मा वां ' । ( ३५ ) यजमानऋत्विगुभयगामिफलविधिः– ' किमत्र भद्रं तन्नौ सह ' । ( ३६ ) फलविधिसरूपः– ' आयुर्दा अग्नेऽसि ' । ( ३७ ) गुणभूतदेवताविधिः– ' समिधः समिधो ' । ( ३८ ) प्रधानभूतदेवताविधिः– ' स्वाहाऽग्निं स्वाहा ' । ( ३९ ) देवताविधिसरूपः– ' ऐभिरग्ने सरथं ' । ( ४० ) गुणभूतद्रव्यविधिः– ' प्रैतु होतुश्चमसः ' । ( ४१ ) प्रधानभूतद्रव्यविधिः– ' सोमस्याग्ने वीहि ' । ( ४२ ) द्रव्यविधिसरूपः– ' युवा सुवासाः ' । ( ४३ ) जातिविधिः– ' छागस्य वपायाः ' । ( ४४ ) जातिविधिसरूपः– ' बर्हिर्देवसदनं दामि ' । ( ४५ ) गुणविधिः– ' दर्भैः स्तृणीत हरितैः ' । (४६) गुणविधिसरूपः ' षड्विंशतिरस्य ' । ( ४७ ) क्रियाविधिः– ' अश्विनोस्त्वा बाहुभ्यां ' । (४८) क्रियाविधिसरूपः– 'न ता नशन्ति' । (४९) निषेधविधिः– 'अश्रीरा तनूर्भवति ' । ( ५० ) निषेधविधिसरूपः– ' वनिष्ठुमस्य मा ' । (५१) निमित्तविधिसरूपः– ' यत् पशुर्मायु ' । (५२) सादृश्यविधिसरूपः– ' श्येनमस्य वक्षः ' ।

पुनरपि ऋङ्मन्त्राणां चतुर्दशच्छन्दःप्रयुक्ताः १४ भेदाः । गायत्री– उष्णिक्– अनुष्टुप् – बृहती – पङ्क्तिः– त्रिष्टुप् – जगती – अतिजगती – शक्वरी – अतिशक्वरी – अष्टिः – अत्यष्टिः–धृतिः–अतिधृतिः इति । तत्र गायत्री चतुर्विंशत्यक्षरा तत उत्तरोत्तरं चतुरक्षरचतुरक्षरवृद्ध्या उष्णिगाद्याः । तेन उष्णिहि २८ अक्षराणि, अनुष्टुभि ३२, बृहत्यां ३६, पङ्क्तौ ४०, त्रिष्टुभि ४४, जगत्यां ४८, अतिजगत्यां ५२, शक्वर्यां ५६, अतिशक्वर्यां ६०, अष्ट्यां ६४, अत्यष्ट्यां ६८,धृत्यां ७२, अतिधृत्यां ७६ इत्यक्षराणि । तत्रापि सर्वानुक्रमणीकृता गायत्र्यादीनामाद्यानां सप्तानां अवान्तरभेदा उक्ताः । यथा–

गायत्र्याः भेदाः– **गायत्री** ८।८।८ ( प्रथमादिपादेषु तावन्ति तावन्ति अक्षराणि ज्ञेयानि ) । उदाहरणम्– 'अयं

देवाय ' ( ऋसं. १।२०।७ )। **पदपङ्क्तिः** ५।५।५।६ उदा० ' आभिष्टे अद्य ' ( ऋसं. ४।१०।४ ) । किंवा ५।५।५।४।६ उदा० 'अग्ने तमद्य' (ऋसं. ४।१०।१)। **उष्णिग्गर्भा** ६।७।११ उदा० ' ता मे अश्व्यानां ' ( ऋसं. ८।२५।२३ ) । **पादनिचृत्** ७।७।७ उदा० 'त्वावतः पुरूवसो' (ऋसं. ८।४६।१ )। **अतिनिचृत्** ७।६।७ उदा० ' पुरूतमं पुरूणां ' ( ऋसं. ६।४५। २९ )। **यवमध्या** ७।१०।७ उदा० ' स सुन्वे यो वसूनां ' ( ऋसं. ९।१०८।१३ )। **वर्धमाना** ६।७।८ उदा० ' ईशाना वार्याणां ' ( ऋसं. १०।९।५ )। **प्रतिष्ठा** ८।७।६ उदा० 'आपः पृणीत भेषजं' ( ऋसं. १०।९।७ ) । **ह्रसीयसी** ६।६।७ उदा० ' प्रेष्ठमु प्रियाणां' (ऋसं. ८।१०३।१०)। **विपरीता ह्रसीयसी** ७।६।६ उदा० ' इन्द्रः सहस्रदाव्नां ' (ऋसं. १।१७।५)।

अथ उष्णिक् तद्भेदाश्च। **उष्णिक्** ८।८।१२ उदा० ' य इन्द्र सोम पातमः ' ( ऋसं. ८।१२।१ )। **पुर-उष्णिक्** १२।८।८ उदा० ' युञ्जन्ति हरी इषिर ' ( ऋसं. ८।९८।९ )। **ककुप्** ८।१२।८ उदा० ' शर्धं शर्धं व एषां ' ( ऋसं. ५।५३।११ )। **ककुम्न्यङ्कुशिरा** ११।१२।४ उदा० ' ददी रेक्णस्तन्वे ' (ऋसं. ८।४६।१५ )। **तनुशिरा** ११।११।६ उदा० ' प्र या घोषे भृगवा ' ( ऋसं. १।१२०।५ )। **पिपीलिकमध्या** ११।६।११ उदा० ' हरी यस्य सुयुजा ' (ऋसं.१०। १०५।२ )। **अनुष्टुब्गर्भा** ५।८।८।८ उदा० ' पितुं नु स्तोषं ' ( ऋसं. १।१८७।१ )। **उष्णिक्** ७।७।७।७ उदा० ' मंसीमहि त्वा वयं ' (ऋसं. १०।२६।४ )।

अथ अनुष्टुप् तद्भेदाश्च। **अनुष्टुप्** ८।८।८।८ उदा० ' अग्न ओजिष्ठमा भर ' ( ऋसं. ५।१०।१ )। **महापदपङ्क्तिः** ५।५।५।५।५।६ उदा० ' तव स्वादिष्ठा '। ( ऋसं. ४।१०।५ )। **कृतिः** १२।१२।८ उदा० ' मा कस्मै धातमभ्य ' ( ऋसं. १।१२०।८ )। **पिपीलिकमध्या** १२।८।१२ उदा० ' पर्यू षु प्र धन्व वाजसा ' ( ऋसं. ९।११०।१ )। **काविराट्** ९।१२।९ उदा० 'ता विद्वांसा हवामहे' ( ऋसं. १।१२०।३ )। **नष्टरूपी** ९।१०।१३ उदा० ' वि पृच्छामि पाक्या ' ( ऋसं. १।१२०।४ )। **विराट्** १०।१०।१० उदा० ' प्रेद्धो अग्ने दीदिहि ' ( ऋसं. ७।१।३ )। किंवा ११।११।११ उदा० ' अग्निं नरो दीधितिभिः ' ( ऋसं. ७।१।१ )।

अथ बृहती तद्भेदाश्च। **बृहती** ८।८।१२।८ उदा० ' मा चिदन्यत् ' ( ऋसं. ८।१।१ )। **पुरस्ताद्बृहती** १२।८।८।८ उदा० 'महो यस्पतिः ' ( ऋसं. १०।२२। ३ )। **न्यङ्कुसारिणी** ८।१२।८।८ उदा० ' ईजानमिद् द्यौ ' ( ऋसं. १०।१३२।१ ) इयमेव उरोबृहती वा स्कन्धोग्रीवी वा। **उपरिष्टाद्बृहती** ८।८।८।१२ उदा० ' ये पातयन्ते अज्म ' ( ऋसं. ८।४६।१८ )। **विष्टारबृहती** ८।१०।१०।८ उदा० ' युवं ह्यास्तं महो ' (ऋसं. १।१२०।७)। **ऊर्ध्वबृहती** १२।१२।१२ उदा० 'अध यदिमे पव' ( ऋसं. ९।११०।९ )। **पिपीलिकमध्या** १३।८।१३ उदा० ' अभि नो वीरमन्धसो ' ( ऋसं. ८।४६।१४)। **विषमपदा** ९।८।११।८ उदा० ' सनितः सुसनित ' ( ऋसं. ८।४६।२० )। **बृहती** ९।९।९।९ उदा० ' तं त्वा वयं पितो वचो ' ( ऋसं. १।१८७।११ )।

अथ पङ्क्तिः तद्भेदाश्च । **पङ्क्तिः** ८।८।८।८।८ उदा० ' दानासः पृथु ' ( ऋसं. ८।४६।२४ )। **विराट्** १०।१०।१०।१० उदा० 'वि पिप्रोरहिमा ' ( ऋसं. ६।२०।७ ) । **सतोबृहती** १२।८।१२।८ उदा० ' आ यं नरः सुदानवो ' ( ऋसं. ५।५३।६ )। **विपरीता** ८।१२।८।१२ उदा० ' य ऋष्वः श्रावयत् ' (ऋसं. ८।४६।१२)। **प्रस्तारपङ्क्तिः** १२।१२।८।८ उदा० 'तस्याः समुद्रा अधि' ( ऋसं. १।१६४।४२ )। **आस्तारपङ्क्तिः** ८।८।१२।१२ उदा० ' अग्निं न स्व' ( ऋसं. १०।२१।१ )। **संस्तारपङ्क्तिः** १२।८।८।१२ उदा० ' षष्टिं सहस्रा ' ( ऋसं. ८।४६।२२ ) । **विष्टारपङ्क्तिः** ८।१२।१२।८ उदा० ' अतीयाम निदस्तिरः ' ( ऋसं. ५।५३।१४ )।

अथ त्रिष्टुप् तद्भेदाश्च। **त्रिष्टुप्** ११।११।११।११ उदा० ' कस्य नूनं कतमस्या ' ( ऋसं. १।२४।१ )। **अभिसारिणी** १०।१०।१२।१२ उदा० ' यो वाचा विवाचो ' ( ऋसं. १०।२३।५ )। **विराट्स्थाना** ९।९।



१०।११ उदा० 'स्वस्ति न इन्द्रो' (ऋसं. १।८९।६)। किंवा १०।९।११।९ उदा० 'शुभ्रं नु ते शुष्मं ' (ऋसं. २।११।४ ) । किंवा १०।९।१०।११ उदा० 'श्रुधी हवमिन्द्र मा ' ( ऋसं. २।११।१ ) । **विराड्रूपा** ११।११।११।८ उदा० ' श्रुतं मे मित्रावरुणा ' ( ऋसं. १।१२२।६ ) । **विपरीता विराड्रूपा** ८।११।११। ११ उदा० ' क्रीळन्नो रश्म ' ( ऋसं. ५।१९।५ )। **ज्योतिष्मती** १२।१२।१२।८ उदा० ' अग्निनेन्द्रेण वरुणेन' (ऋसं. ८।३५।१)। **ज्योतिः** १२।८।१२।१२ उदा० ' तामिरायातं ' ( ऋसं. ८।२२।१२ )। **महाबृहती** ८।८।८।८।१२ उदा० ' नवानां नवतीनां ' (ऋसं. १।१९१।१३ )। **यवमध्या** ८।८।१२।८।८ उदा० 'सं मा तपन्त्यभितः ' (ऋसं. १।१०५।८)। **पङ्क्त्युत्तरा** १०।१०।८।८।८ उदा० ' एवेन्द्राग्निभ्यां ' ( ऋसं. ५।८६।६ )। किंवा विराट्पूर्वा नाम इयमेव।

अथ जगती तद्भेदाश्च। **जगती** १२।१२।१२।१२ उदा० ' प्र देवमच्छ ' (ऋसं. ९।६८।१)। **महासतोबृहती** १२।८।१२।८।८ उदा० 'आ यः पप्रौ भानुना' ( ऋसं. ६।४८।६ )। **महापङ्क्तिः** ८।८।७।६।१०।९ उदा० 'इयत्तिका शकुन्तिका' ( ऋसं. १।१९१।११ )। किंवा ८।८।८।८।८।८ उदा० ' तदन्नाय तदपसे' ( ऋसं. ८।४७।१६ )।

अथ प्रगाथाः। **बार्हतः प्रगाथः** बृहती–सतोबृहत्यौ उदा० ' अयं वां मधुमत्तमः ' + ' त्रिवन्धुरेण त्रिवृता ' ( ऋसं. १।४७।१–२ ) । **काकुभः** ककुप् – सतोबृहत्यौ उदा० ' आ सखायः सबर्दुघां ' + ' या शर्धाय मारुताय ' ( ऋसं. ६।४८।११–१२ ) । **महाबार्हतः** महाबृहती – महासतोबृहत्यौ उदा० 'बृहद्भिरग्ने अर्चि'+ ' विश्वासां गृहपतिः ' ( ऋसं. ६।४८।७–८ )। **विपरीतोत्तरः** बृहती – विपरीते उदा० ' नहि ते शूर राधसः' + 'य ऋष्वः श्रावयत्' ( ऋसं. ८।४६।११–१२ )। **आनुष्टुभः** अनुष्टुप् एका + गायत्र्यौ द्वे उदा० ' आ त्वा रथं ' + ' तुविशुष्म तुविक्रतो ' + ' यस्य ते महिना महः ' ( ऋसं. ८।६८।१+२–३ )।

अथ **अतिजगती** १२।१२।१२।८।८ उदा० 'प्र वो महे मतयो ' ( ऋसं. ५।८७।१ )।

अथ **शक्वरी** ८।८।८।८।८।८।८ उदा० 'प्रो ष्वस्मै पुरोरथं ' ( ऋसं. १०।१३३।१ )।

अथ **अतिशक्वरी** १६।१६।१२।८।८ उदा० ' साकं जातः क्रतुना ' ( ऋसं. २।२२।३ )।

अथ **अष्टिः** १६।१६।१६।८।८ उदा० ' त्रिकद्रुकेषु महिषो ' ( ऋसं. २।२२।१ )।

अथ **अत्यष्टिः** १२।१२।८।८।८।१२।८ उदा० ' अग्निं होतारं मन्ये ' ( ऋसं. १।१२७।१ )।

अथ **धृतिः** १२।१२।८।८।८।१६।८ उदा० ' अवर्मह इन्द्र ' ( ऋसं. १।१३३।६ )।

अथ **अतिधृतिः** १२।१२।८।८।८।१२।८।८ उदा० ' स हि शर्धो न ' ( ऋसं. १।१२७।६ )।

एते गायत्र्याद्याः सर्वे भेदाः प्रत्येकं चतुर्विधाः १ एकेनाक्षरेण न्यूनाः निचृद्गायत्र्याद्याः, २ एकेनाक्षरेण अधिकाः भुरिग्गायत्र्याद्याः, ३ द्वाभ्यामक्षराभ्यां न्यूनाः विराड्गायत्र्याद्याः, ४ द्वाभ्यामक्षराभ्यां अधिकाः स्वराड्गायत्र्याद्याः इति।

| | गायत्री | उष्णिक् | अनुष्टुप् | बृहती | पङ्क्तिः | त्रिष्टुप् | जगती |
|---|---|---|---|---|---|---|---|
| दैवी | १ | २ | ३ | ४ | ५ | ६ | ७ |
| आसुरी | १५ | १४ | १३ | १२ | ११ | १० | ९ |
| प्राजापत्या | ८ | १२ | १६ | २० | २४ | २८ | ३२ |
| याजुषी | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| साम्नी | १२ | १४ | १६ | १८ | २० | २२ | २४ |
| आर्ची | १८ | २१ | २४ | २७ | ३० | ३३ | ३६ |
| आर्षी | २४ | २८ | ३२ | ३६ | ४० | ४४ | ४८ |
| ब्राह्मी | ३६ | ४२ | ४८ | ५४ | ६० | ६६ | ७२ |

अत्र दैवी गायत्री १ अक्षरा । दैवी उष्णिक् २ अक्षरा । ...दैवी जगती ७ अक्षरा । एवं आसुरी गायत्री १५ अक्षरा, आसुरी उष्णिक् १४ अक्षरा इ० । ब्राह्मी गायत्री ३६ अक्षरा, ब्राह्मी उष्णिक् ४२ अक्षरा, ब्राह्मी जगती ७२ अक्षरा इतिरीत्या कोष्टकार्थो ज्ञेयः । एते सर्वे भेदाः यजुःष्वेव संभवन्ति न ऋक्षु । एकेनाक्षरेण न्यूनाधिकत्वे निचृत्भुरिजौ, द्वाभ्यामक्षराभ्यां न्यूनत्वाधिकत्वे विराट्स्वराजौ । एते चत्वारश्चत्वारो भेदाः उक्तेषु यजुःषु संभवन्त्येव । **बाल.** पृ. ५८–७०.

* मन्त्रः दर्भलवनाङ्गं 'बर्हिर्देवसदनं दामि' इति तन्त्रं न दर्शपूर्णमासयोः । **भा.** ११।४।१४।४४–४५, * मन्त्रः 'देवस्य त्वा' इति निर्वपणस्य न तन्त्रं दर्शपूर्णमासयोः । ११।४।१४।४४, * मन्त्रः देवताप्रकाशकः 'अग्नेरहमुज्जितिमनूज्जेषम्' इत्यादिः अपूर्वप्रयुक्तः । ९।१।३।४–५. * मन्त्रः द्विविधः क्रियाप्रकाशकः फलप्रकाशकश्चेति । इडोपाह्वानमन्त्रः क्रियाप्रकाशकः । सूक्तवाकमन्त्रः फलप्रकाशकः । **वि.** ९।१।१५. * मन्त्रः 'धाम नामासि' इति आज्यग्रहणस्य न तन्त्रं दर्शपूर्णमासयोः । **भा.** ११।४।१४।४४, * मन्त्रः ध्रुवाभिमर्शने 'युनज्मि ते पृथिवीं ज्योतिषा सह' इति । १२।१।४।११, * मन्त्रः नदीतरणार्थः 'देवीरापः०' इति । यदा अनेकस्रोतसं नदीं तरति तदा आदौ सकृदेव मन्त्रः, न तु प्रत्येकं स्रोतसि मन्त्रावृत्तिः, ज्योतिष्टोमे । ११।४।१७।५०, * मन्त्रः प्रकरणे समाम्नानात् प्रधानेनैकवाक्यतामुपैति । ३।२।१।१ पृ.७४९, * मन्त्रः फलप्रकाशकः दर्शपूर्णमासादौ 'अगन्म स्वः सं ज्योतिषाऽभूम' इत्यादिरपूर्वप्रयुक्तः न तु स्वर्गादिफलप्रयुक्तः । ९।१।३।४–५. * मन्त्रः बर्हिषः संनहनस्य हरणस्य च आतिथ्यादेशात् अग्नीषोमीयदेशे नयनकाले नावर्तनीयः । (संनहनहरणमन्त्राधिकरणम्) । १२।१।२१।४६–४७. * मन्त्रः । मन्यतेः मनोतेर्वा 'गुधृवीप्रचिवचियमि०' (६ १६) इत्यौणादिके त्रन्प्रत्यये कृते मन्त्रशब्दव्युत्पत्तिः । **सु.** पृ. ९९. * मन्त्रः मुख्ये एव विनियोक्तव्यः न गौणे । बर्हिर्न्यायः । ३।२।१।१–२. * मन्त्रः यमर्थं प्राधान्येन अभिदधाति साऽपि देवता । **सु.** पृ. ४५७. * मन्त्रः यागहोमस्थले तदङ्गभूतदेवताप्रकाशनार्थं एव । **भाट्ट.** ४।१।७. * मन्त्रः लिङ्गविनियोज्यः न फलकल्पनायै प्रभवति । **वा.** १।२।४।३५. * मन्त्रः 'वाजस्य मा०' इति अध्वर्युयजमानोभयप्रयोज्यः दर्शपूर्णमासयोः । **भा.** ३।८।२।८. * मन्त्रः वेदिप्रोक्षणस्य 'वेदिरसि बर्हिषे त्वा' इति त्रिः प्रोक्षणे सकृत् प्रयोक्तव्यः । ११।४।१५।४९–५०. * मन्त्रः 'शुन्धध्वम्' इति सांनाय्यपात्रप्रोक्षणाङ्गं संनिधिक्रमात् दर्शपूर्णमासयोः । **वि.** ३।३।५. * मन्त्रः संस्कारकः । **भा.** ३।२।१।२, * मन्त्रः स्तरणाङ्गं 'ऊर्णाम्रदसं त्वा स्तृणामि' इति तन्त्रं न दर्शपूर्णमासयोः । ११।४।१४।४४–४५, * मन्त्रः स्वप्नार्थो ज्योतिष्टोमे 'त्वमग्ने व्रतपा असि' इति । एकस्यां रात्रौ पुनः पुनः स्वापे न तस्यावृत्तिः । ११।४।१७।५०. * 'मन्त्रो हीनः स्वरतो वर्णतो वा' इति बहुजनप्रसिद्धस्य शिक्षाकारपठितस्य मन्त्रपदस्य उद्धारेण पदान्तरप्रक्षेपः स्वपक्षानुरागमात्रेण व्याकरणमहाभाष्यकारेण कृतः, न वस्तुतः । (शिक्षायां 'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥' इति श्लोकः, महाभाष्यकृता तु 'दुष्टः शब्दः स्वरतो वर्णतो वा' इति पठितम्) । **सु.** पृ. २९३. * उपरवमन्त्रः प्रत्युपरवमावर्तते ज्योतिष्टोमे 'रक्षोहणो वलगहनो वैष्णवान् खनामि' इति । ११।४।१९।५५–५६. * 'चोदितार्थानुरोधेन मन्त्रः सर्वः प्रवर्तते ।' मन्त्रस्य परार्थत्वात् न चोदनामतिक्रम्य स्वातन्त्र्येण प्रकाशनसामर्थ्यं अवकल्पते । **वा.** ३।२।१५।३७. * जपादिमन्त्रः अदृष्टार्थः । **भाट्ट.** ३।२।१. * दध्विमन्त्रः उपांशुयाजाङ्गं यथासंख्यक्रमात् दर्शपूर्णमासयोः । **वि.** ३।३।५. * 'नहि श्रुत्यनुमानात् प्राक् स्वयं मन्त्रो विधीयते ।' **वा.** ३।१।७।१४ पृ. ७११. * बर्हिषः स्तरणमन्त्रः आतिथ्यायां उपसत्सु अग्नीषोमीये च अभ्यावर्तते देशपृथक्त्वात् । १२।१।२०।४५. * मनोतामन्त्रो वायव्यादिपशौ अविकृतः प्रयोक्तव्यः । **भा.** १०।४।११।२१. * 'यत्र वर्णविकारो वा वर्णलोपोऽपि वा स्मृतः । स्वरान्तरनियोगो वा न मन्त्रस्तत्र नेष्यते ॥' (किन्तु



मन्त्रत्वं इष्यते एव) । **वा.** २।१।९।३४, * सर्वत्र क्रियां तत्साधनं वा अभिदधत् मन्त्रः अङ्गभावं गच्छति । ३।२।५।१३ पृ. ७६२. * **मन्त्राः** अकर्मकरणाः (कर्मसु करणतया न संबद्धाः) याजमानाः । **वि.** ३।८।७. * मन्त्राः (१) अर्थप्रकाशनार्थाः न ते उच्चारणमात्राददृष्टं कुर्वन्ति । (२) मुख्यार्थाभिधायिनः न तु गौणार्थाः । (३) अपूर्वप्रयुक्ताः न तु अग्न्यादिस्वरूपप्रयुक्ताः । (४) समवेतार्थाभिधायिनः न तु सवित्रादिपदवत् असमवेतार्थाः । (५) अपरार्थाः न तु यज्ञपतिशब्दवत् परार्थाः । (६) प्राकृतस्थानापन्नान्यद्रव्यदेवताकाः यथा विकृतौ । इति षड्विधाः । **टुप्.**, **रत्न.** ९।३।१।१. * मन्त्राः अलौकिकशब्दाः । **संकर्ष.** २।४।२२. * मन्त्राः अविज्ञातार्था यथा 'अम्यक् सा त इन्द्र ऋष्टिरस्मे' इति 'सृण्येव जर्भरी तुर्फरीतू' इति, 'इन्द्रः सोमस्य काणुका' इति च (इदं पूर्वपक्षे) । भा. १।२।४।३१–८ । सिद्धान्ते तु विद्यमानोऽप्यर्थः प्रमादालस्यादिभिर्नोपलभ्यते । निगमनिरुक्तव्याकरणवशेन धातुतः अर्थः कल्पयितव्यः । यथा 'सृण्येव जर्भरी' इत्येवमादीनि अश्विनोरभिधानानि द्विवचनान्तानि लक्ष्यन्ते । अनेन 'अश्विनोः काममप्रा' इत्याश्विनं सूक्तमवगम्यते । **भा.** १।२।४।४१. * मन्त्रा अविधायकाः इति प्रसिद्धिः । **वा.** २।१।६।३१. * मन्त्राः अष्टकालिङ्गा वेदे दृश्यन्ते 'यां जनाः प्रतिनन्दन्ति' इत्येवमादयः । **भा.** १।३।१।२. * मन्त्राः ऋषिभिः न कृताः, किन्तु अवतरणरूपेणोदाहृताः । वा– न तु स मन्त्रः तैरेव (ऋषिभिरेव) कृतः, तदानीं वा पुरुषान्तरेषु असन्नेव तेषामाविर्भूतः । किं तर्हि ? यथा अद्यत्वेऽपि कश्चित् प्रकृतार्थविवक्षायां तदर्थं वाक्यं उपादित्समानः तदर्थसरूपं मन्त्रं श्लोकं वा अन्यदीयं स्मृत्वा स्ववाक्यस्थाने प्रयुङ्क्ते, तत्प्रत्ययेन च अन्ये तदर्थमवधारयन्ति, एवमिहापि वेदार्थविद्भिः तद्वासितान्तःकरणैः भृग्वादिभिः आत्मीयव्यवहारेषु श्रुतिसामान्यरूपेण विशिष्टार्थप्रत्यायनार्थं मन्त्राः प्रयुक्ताः । तद्बलेन चास्मदादीनां तदनुरूपा अनित्यार्थप्रतिपत्तिर्भवति । प्रत्ययदृढत्वार्थमेव च आर्षस्मरणम् । **वा.** १।२।४।४१. * मन्त्राः कर्मोपकारित्वात् कर्मशेषभूतार्थसंस्कारकत्वसंभवे प्रयोक्तव्याः, नान्यथा इति द्वितीयसूक्तवाकाधिकरणन्यायः । **सु.** पृ. ११०८. * मन्त्राः किं विवक्षितवचना उत अविवक्षितवचनाः । किं अर्थप्रकाशनेन यागस्य उपकुर्वन्ति उत उच्चारणमात्रेण इति संदेहे विवक्षितवचना मन्त्राः । नियतोच्चारणं तु अदृष्टार्थमेव इति सिद्धान्तः । कर्माङ्गस्मारका मन्त्राः । मन्त्रैरेव मन्त्रार्थः स्मर्तव्यः । **भा.** १।२।४।३१–४५. * मन्त्राः क्रियास्वरूपप्रकाशनेन तत्संबन्धिप्रकाशनेन वा कर्मोपयोगितां गच्छन्ति । **वा.** १।४।६।९ पृ. ३४०.

**मन्त्राश्चाकर्मकरणास्तद्वत् । ३।८।६।१५ ॥**

'आयुर्दा अग्नेऽस्यायुर्मे देहि' इत्यादयः मन्त्राः अकर्मकरणाः कर्मसु करणतया न संबद्धाः । आशीर्मन्त्रा ह्येते । एतादृशा मन्त्राः आध्वर्यवसमाख्यानात् अध्वर्युणा पठनीया इति उत्सूत्रे पूर्वपक्षे प्राप्ते सिद्धान्त उच्यते, अकर्मकरणा मन्त्राः याजमानाः यजमानेन प्रयोक्तव्याः । चकारेण अर्थसंयोगात् इति पूर्वतरसूत्रात् अनुकृष्टं पदं हेतुत्वेन संबध्यते । 'आयुर्मे देहि' इति प्रार्थनया यजमानस्य अर्थेन फलेन संयोगः अपेक्षितः । तस्मात् अर्थसंयोगात् याजमानास्तादृशा मन्त्राः । तद्वत् 'यः कामयेत' इत्युक्तः कामो यथा याजमानः तद्वत् । एवं च अर्थसंयोगरूपसामर्थ्यात् समाख्याया बाधः इति भावः । अत्र **सुधा**— आशीर्मन्त्राणामपि फलप्रार्थनसामर्थ्यात्मकात् लिङ्गात् कामवत् याजमानत्वम्, इति ।

**विप्रयोगे च दर्शनात् । १६ ॥**

'आयुर्दा अग्नेऽस्यायुर्मे देहि' इत्यादयः आशीर्मन्त्रा याजमाना एव नाध्वर्यवाः इति पूर्वसूत्रेण उक्ते सिद्धान्ते हेत्वन्तरोपन्यासार्थं सूत्रमिदम् । विप्रयोगे यजमानस्य अग्निभिर्वियोगे प्रवासे इत्यर्थः । अग्नयः स्वगृहे सन्ति, यजमानश्च प्रोषितः तदापि तस्य अग्न्युपस्थानं दृश्यते 'इहैव सन् तत्र सन्तं त्वाऽग्ने' इत्यादिना मन्त्रेण । न चैतदध्वर्योः संभवति । उपस्थानमन्त्रश्च आशीर्मन्त्र एव 'तिरो मा सन्तमायुर्मा प्रहासीत्' इति तृतीयचरणे प्रार्थितत्वात् । तस्मात् 'आयुर्दा अग्नेऽसि' इत्यादिरपि मन्त्रः याजमान एवेति सिद्धान्तः । **के.**

**मन्त्राश्चाकर्मकरणास्तद्वत् । ३।८।६।१५ ॥**

इह एवंजातीयका मन्त्रा उदाहरणम् 'आयुर्दा अग्नेऽस्यायुर्मे देहि, वर्चोधा अग्नेऽसि वर्चो मे देहि, चक्षुर्दा अग्नेऽसि चक्षुर्मे देहि' इति । तेषु संदेहः किमार्त्विजाः उत याजमानाः इति । इहापि अधिकाराशङ्का-निरासार्थं पूर्वोक्तन्यायस्तद्वच्छब्देनातिदिश्यते ।

पूर्वपक्षस्तु भवतु फलाय विधीयमानस्य नीचैस्त्वादेः प्रकृतप्रयोगान्तर्गतत्वात् फलस्य याजमानत्वेन कामनाया अपि याजमानत्वम् । आयुर्दादिमन्त्राणां त्वविधायकत्वेन यथाप्राप्तफलानुवादकत्वम् । फलं च प्रकृते कर्मणि यथा यजमानस्य स्वर्गादिरूपं अस्ति, तथा ऋत्विजामपि दक्षिणारूपमस्त्येव । यजमानफलानुवादकत्वेन मन्त्रपदानां मुख्यत्वम् । स्वर्गस्य फलस्य आयुरादिपदैरनभिधानात् । यथा च लक्षणया तदनुवादकत्वम्, तथा ऋत्विक्फलानु-वादकत्वमपि संभवत्येव । तेन समाख्यावगताध्वर्युकर्तृ-कत्वानुरोधेन अध्वर्योरेव दक्षिणालाभात्मकफलं आयुरादि-रूपेणोत्साहनार्थमाशास्यते । तस्मात् अध्वर्युणा एवंजाती-यका मन्त्राः प्रयोक्तव्या इति । **एवं प्राप्ते, अभिधीयते ।** भवेदेवं यद्यृत्विजां फलमग्नेः सकाशादाशासनमर्हेत् । तद्धि अग्नितः फलमेतदाशास्महे । यजमानस्य च फलं कर्मद्वारेणाग्निसंबन्धिना । ऋत्विक्फलं तु नाग्नितः प्रार्थ-नीयम् । यजमानादेव तस्य लभ्यमानत्वेन अग्निसंबन्धा-भावात् । किञ्च उत्साहजननार्थमिदमाशासनम्, यज-मानफलं चात्यन्तादृष्टं यथाचोदितानुष्ठानसाध्यम् । तदा-शास्यमानमुत्साहजननं यथाचोदितप्रयोगसंपत्तिहेतुः भूत्वा सिध्यतीति तदेवाशासनीयम् । ऋत्विक्फलं तु यजमान-व्यापारकरणादेव सिद्धमाशासनं(न)प्रयुङ्क्ते । अतो यज-मानस्यैवाशासनयोग्यरूपं लिङ्गेन ( आशासनयोग्यतारूप-लिङ्गेन ) समाख्याया बाधितत्वात् यजमानेनैवाशीर्मन्त्राः प्रयोक्तव्या इति सिद्धम् ।

**प्रयोजनम्**– पक्षोक्तम । **सूत्रं तु**– मन्त्राश्चाकर्म-करणा यैर्मन्त्रैः कर्म न क्रियते, तेऽपि याजमानाः तद्वत् गुणकामवदिति । **तौता.**

* मन्त्राश्च ब्राह्मणं च वेदः । **भा.** २।१।८।३३.

**मन्त्राश्च संनिपातित्वात् ।१२।१।९।१८॥**

वरुणप्रघासेषु विहारपृथक्त्वे सति ये मन्त्राः संनि-पातिनः यथा आज्यग्रहणे प्रोक्षणे अभिमर्शने इति ते भेदेन कर्तव्याः । संनिपातित्वात् । संनिपत्योपकारिण एते मन्त्राः उपस्थितं कर्म अभिदधति । तस्मात् अध्वर्यु-प्रतिप्रस्थातृभ्यां पृथक् प्रयोक्तव्याः इति सिद्धान्तः । **के.**

* मन्त्राः । दर्शपूर्णमासयोः पुरोडाशविभागे 'यथा-भागं व्यावर्तेथाम्', 'भगो वां विभजतु' इत्यादीनां सर्वेषां समुच्चयः । **इति प्राप्ते,** कृतस्य प्रकाशनस्य पुनः करणासंभवात् मन्त्राकाङ्क्षायाश्च विकल्पेन विनियोगे अपि शान्तेः 'तां चतुर्भिरादत्ते' इति लिङ्गाच्च विकल्पेन विनियोगः इति सिद्धान्तः । **संकर्ष.** १।२।४. * मन्त्राः द्विविधाः करणाः क्रियमाणानुवादिनश्चेति । करणाः 'करोमि' इत्येवं प्रत्ययं कुर्वन्ति । क्रियमाणानुवादिनः एवं कर्तव्यमिति प्रत्ययं कुर्वन्ति । अध्वर्योस्तावत् करोमी-त्येतेन प्रत्ययेनार्थः । क्रियमाणानुवादिनश्च अध्वर्युणा क्रियमाणमर्थमनुवदन्ति । सोऽनुवादोऽलमध्वर्योः स्मृतिं कर्तुम् । क्रियमाणानुवादिनो मन्त्राः स्मरणार्थाः । मन्त्रस्या-म्नानसामर्थ्यात् मन्त्रेण स्मृतिः कर्तव्या । स्मरणार्थस्य च मन्त्रस्य आम्नानसामर्थ्यात् स्मारितं कृतमदृष्टार्थाय भवति । प्रततेषु च कर्मसु स्मृतिसंतानेनार्थः । **भा.** १२।३।१६।३७. * मन्त्राः धर्मे प्रमाणम् । **मणि.** पृ. १३. * मन्त्राः प्रैषरूपा आध्वर्यवाः दर्शपूर्णमासयोः । ३।८।१२।२४–२५. * मन्त्राः प्रोत्साहनार्था याजमानाः 'आयुर्दा अग्नेऽसि०' इत्यादयः । **भा.** ३।८।६। १५–१६. * मन्त्राः मन्त्रसमाम्नायपठितत्रैस्वर्येण एव कर्मणि प्रयोक्तव्याः, न तु ब्राह्मणगतभाषिकेण स्वरेण । भाषास्वराधिकरणम् । १२।३।८।२०–२२. * मन्त्राः ये परप्रत्यायनार्थास्ते निगदाः, तेषां च यजुष्ट्वमेव । **वि.** २।१।१३. * मन्त्राः ये ब्राह्मणोपदिष्टाः एव न मन्त्र-समाम्नाये पठिताः ते ब्राह्मणस्वरेण एव प्रयोक्तव्याः । १२।३।९।२३–२४. * मन्त्राः ये लिङ्गेन अप्राप्ता वचनेन विधीयन्ते तेषामप्राप्तत्वादेव मन्त्रविधानेनैव कृतार्थं वाक्यं न भूयः स्वरमपि विधत्ते, वाक्यभेदभयात् । **टुप्.** १२।३।८।२१, * मन्त्राः ये लिङ्गेन विनियुज्यन्ते ते



यादृशा एव निर्ज्ञाताः तादृशा एव प्रयोक्तव्याः । तत्र ब्राह्मणस्य व्यापार एव नास्ति । १२।३।८।२१. * मन्त्राः यच्छब्द– आमन्त्रण– उत्तमपुरुषाद्युपहतविधि-शक्तयः धर्मसाधनत्वेन उच्यमानाः 'देवांश्च याभिर्यजते ददाति च' इत्येवमादिभिः आख्यातपदैः पुनः पुनः श्रुतैरपि न कर्मान्तरं कल्पयन्ति । **वा.** ३।१।१।१ पृ. ६४९. * मन्त्राः वेदैकदेशः । धर्मे प्रमाणम् । **वि.** १।४।१. * अभिधेये तावत् विनियोगाय **मन्त्राः** श्रुतिं परिकल्पयन्ति । तत्र यदि जहत्स्वार्था गौणी वृत्ति-र्भवेत् ततस्तुल्यवदुभयत्रापि श्रुतिः कल्प्येत । यदि तु गौणमपि वदता पूर्वतरं स्वार्थोऽभिधेयः तदा तदतिक्रम-कारणाभावात् तद्विनियोगश्रुतौ कल्पितायां निराकाङ्क्षेषु मन्त्रप्रकरणस्वाध्यायाध्ययनविधिषु न पुनः श्रुतिकल्पनहेतु-रस्ति इति न विनियोगः । **वा.** ३।२।१।१ पृ. ७५०. * 'कुशा दर्व्यादयो मन्त्रा ब्राह्मणाश्च बहुश्रुताः । न ते निर्माल्यतां यान्ति विनियोज्याः पुनः पुनः ॥' **सु.** पृ. ११२१. * नाभिधायकत्वं मन्त्रत्वे हेतुः । किं तर्हि ? अभियुक्तप्रयोगः । येऽभियुक्तैः मन्त्रा इति नोच्यन्ते न ते मन्त्राः । **भा.** २।१।९।३४ । 'स्वाध्याये पठ्यमानेषु येषु मन्त्रपदं स्मृतम् । ते मन्त्रा नाभिधानं हि मन्त्राणां लक्षणं स्मृतम् ॥' **वा.** * शेषभूतमर्थं संस्कु-र्वन्तो मन्त्राः उपकुर्वन्ति नान्यथा । **भा.** ३।२।६।१७. * **मन्त्रं** यूपपरिव्याणकरणभूतं 'परिवीरसि०' इति होता पठेत् कौण्डपायिनामयने अग्नीषोमीये पशौ । **वि.** ३।८।११. * **मन्त्रान्** क्लृप्तिसंज्ञकान् अभिज्ञमेव यजमानं वाचयेत् वाजपेये । 'आयुर्यज्ञेन कल्पताम्०' इत्यादयो मन्त्राः क्लृप्तयः । ३।८।८।१८. * **मन्त्रेण** 'उपह्वयस्व' इत्यनेन अनुज्ञापनम्, 'उपहूतः' इत्यनेन च प्रतिवचनं ज्योतिष्टोमे सोमभक्षे । **भा.** ३।५।१६। ४२, * मन्त्रेण एकेन कृते कर्मणि द्वितीयस्य प्रयोगो-ऽनर्थकः । १२।३।१३।२९. * मन्त्रेण यत् देवतासं-कीर्तनं तत् दृष्टार्थाय, स्मरणस्यापेक्षितत्वात् । **टुप्.** ४।१।७।१९. * मन्त्रेण स्मृतं क्रियमाणं अभ्युदयकारि भवति । **वा.** १।२।१।७ पृ. ११८. * मन्त्रेण हिरण्य-गर्भेण वायव्यपशौ आघारे विहितेन प्राकृताङ्गान्तराणां न बाधः । **भा.** १०।३।१।१–१२. * न च यावत् कर्मा-ङ्गभूतेऽर्थे विद्यते तत् सर्वं **मन्त्रेण** अभिधातव्यम् । न्यूनमधिकं वा असौ यदभिधातुं समर्थः तदभिधत्ते । **वा.** २।१।५।१५ पृ. ४१७. * **अभिमर्शनमन्त्राभ्यां** अङ्गप्रधानोभयहविरभिमर्शनं दर्शपूर्णमासयोः । **भा.** ३।७। ४।८, १०, * चतुर्होतृपञ्चहोतृमन्त्राभ्यां अभिमर्शनस्य अपूर्वं प्रयोजकम्, न तु दर्शपूर्णमाससमुदायः, दर्शपूर्ण-मासयोः । ९।१।५।११–१९, * **मन्त्रैः** एव मन्त्रार्थः स्मर्तव्यः । 'अनेनोपायेन स्मृतिः कर्तव्या इति नियमा-र्थमाम्नानं संस्कारत्वात्' ( तच्च अदृष्टार्थम् ) । १।२।४।३७. * मन्त्रैरेव स्मृत्वा कृतं कर्म अभ्युदयकारि भवति इति नियमादृष्टसिद्धिरवधार्यते । **वा.** २।१।६।३१. * मन्त्रैः प्रकृतैराग्नेयैः आग्नीध्रोपस्थानं ज्योतिष्टोमे । ३।२। ८।२१–२४. * **मन्त्रस्य** अग्निहोत्राङ्गोद्धरणाङ्गस्य नानु-ष्ठानं दर्शपूर्णमासार्थोद्धरणकाले । ९।४।८।३१. * मन्त्रस्य अपचारे प्रतिनिधिर्नास्ति । **भा.** ६।३।५।१८–१९. * मन्त्रस्यापि अर्थवादत्वं उक्तं सूत्रभाष्यकाराभ्याम् । 'अर्थवादश्च तदर्थवत्' ४।४।९।२४ इति सूत्रम् । 'एवं च मन्त्रार्थवादः अर्थवान् भविष्यति युवा सुवासाः परिवीत आगात्०' इत्यादि च भाष्यम् । **के.** * मन्त्रस्य अभिधानार्थस्य आम्नानसामर्थ्यात् अभिहितं अभ्यु-दयकरं भवति । **भा.** १२।३।१४।३०. * मन्त्रस्य अभिधानपूर्वकमेव सामर्थ्यकल्पनं तथापि न तद्विनि-योगस्याभिधानम् । किं तर्हि ? अर्थस्वरूपस्य । अन्यैव च तेन प्रथमं तदभिधानशक्तिः कल्प्यते अन्या च तद्बलेन विनियोगशक्तिः । **वा.** ३।३।७।१४ पृ. ८२५. * मन्त्रस्य अवहननकरणस्य सकृत् प्रयोगः प्रहारसमुदायार्थः दर्शपूर्णमासयोः । ११।४।१२।४५. * मन्त्रस्य ऊहः अष्टविधः– ( १ ) प्रकृत्यूहः ( २ ) वचनोहः ( ३ ) लिङ्गोहः ( ४ ) प्रकृतिवचनोहः ( ५ ) लिङ्गवचनोहः ( ६ ) प्रकृतिलिङ्गोहः ( ७ ) प्रकृति–वचन– लिङ्ग– त्रितयोहः ( ८ ) अभ्यासलक्षणः ऊहः । ( विस्तरस्तु **मीको.** पृ. १२२४ इत्यत्र टुप्ग्रन्थे बालग्रन्थे च द्रष्टव्यः ) । **टुप्.** ९।३।१।१. * मन्त्रस्य करणता क्रियातत्संबन्धिप्रकाशनेनैव । **पराक्रमः.** ४८।१.

* मन्त्रस्य करणार्थस्य भवति असकृत् प्रयोगः, यथा 'कुरु कुरु करवाणि' इति । **भा.** १२।३।१४।३०. * मन्त्रस्य कर्मणा आकृष्यमाणस्य कर्म-समानकर्तृकत्वनियमः । **वा.** ३।८।१३।२६. * मन्त्रस्य कर्मसमवेतार्थप्रकाशकत्वं विना करणत्वायोगात् करणत्व-श्रवणे तदन्यथानुपपत्त्या मन्त्रार्थस्य कर्मसमवायकल्पना नान्यथा । **सु.** पृ. ७२८. * मन्त्रस्य कर्मसमवेतार्थ-प्रकाशनसामर्थ्यं एकवाक्यतोपगमनसामर्थ्यं च शब्दसाम-र्थ्यम् । **बाल.** पृ. ९. * मन्त्रस्य तन्त्रं न दर्शपूर्णमासयोः --निर्वापे प्रतिमुष्टि, लवने प्रतिलवनम्, वेदिस्तरणे प्रतिधातु, आज्यग्रहणेषु प्रतिग्रहणम् । **भा.** ११।४।१४।४४–४५. * मन्त्रस्य तावत् अविधायकत्वात् लिङ्गवत् श्रुतितो दौर्बल्यं भवेत् ( देवताविधाने ) । **वा.** २।२।९।२३ पृ. ५३३, * मन्त्रस्य तु सापेक्षमपि वदतो नैव कश्चिद् विरोधः । ३।२।१५।३७. * मन्त्रस्य दर्भस्य च प्राकृतस्य बाधः वाजपेये माहेन्द्रस्तोत्रोपा-करणसाधनतया विहितेन रथघोषादिना । **भा.** १०।४।१।१–२ वर्णकं ३. * मन्त्रस्य 'पत्नीं संनह्य' इत्यस्य द्वि-पत्नीके विकृतियागेऽपि नोहः । ९।३।७।२२. * मन्त्रस्य प्रतिनिधिः नास्ति । **भा.** ६।३।५।१८–१९. **मीको.** पृ. २१३० 'देवताऽग्निशब्दक्रियाणां॰' इत्यत्र द्रष्टव्यम् । * मन्त्रस्य प्रमाणान्तरप्राप्तं अर्थं प्रकाशयितुं सामर्थ्यं नानारम्यवादं विशेष्टुम्, अविधायकत्वात् । **टुप्.** १०।८।१०।२०. * मन्त्रस्य प्रयाणाङ्गस्य सकृत् प्रयोगः ज्योतिष्टोमे दीक्षितस्य । ११।४।१८।५४. * मन्त्रस्य ब्राह्मणानुरोधवृत्तित्वं मन्त्रब्राह्मणयोर्विरोधे 'मन्त्रस्य तु ब्राह्मणचोदितार्थप्रकाशनात् तत्परतन्त्रवृत्तेः ।' ( 'विरो-धिनं स्वार्थमतीत्य मुख्यं युक्तो हि गौणार्थनिमित्तभावः ॥' इति शेषः । वा. पृ. ७५३ ) इति ऐन्द्र्यधिकरणवार्तिके उक्तम् । **सु.** पृ. १२४८. * मन्त्रस्य यस्यैव यत्र वेदे विधानं स एव तेन व्यपदेश्यते । यदि तु उभयत्र विधा-स्यते तत्र अगत्या विकल्पो ग्रहीष्यते । **वा.** ३।३।१।७. * मन्त्रस्य लक्षणमस्ति नास्तीति विचारे अस्तीति निर्णयः । मन्त्रत्वेन अभियुक्तप्रसिद्धित्वं मन्त्रलक्षणम् । **भा.** २।१।७।३२, * मन्त्रस्य वचनार्थः प्रयोगकाले पदार्थस्योपस्थापनम् । मन्त्रेणोपस्थितः पदार्थः कर्तव्य इति विज्ञायते । १२।३।१०।२५. * मन्त्रस्य विध्युप-संहारत्वाभावः । **पराक्रमः.** ४३।२. * मन्त्रस्य सकृद्वचनम् । 'असंनिपातिकर्मणां विशेषाग्रहणे कालैक-त्वात् सकृद्वचनम् ।' सूत्रम् ११।४।१९।५३ । यथा सुब्रह्मण्याह्वाने 'देवा ब्रह्माणः' इति औपवसथ्ये अहनि । **भा.** ११।४।१९।५३. * मन्त्रस्य स्तरणाङ्गस्य आतिथ्याबर्हिषः अग्नीषोमीयार्थं स्तरणकाले पृथक् आवृत्तिः कर्तव्या ज्योतिष्टोमे । १२।१।२०।४५. * मन्त्रस्य स्मरणार्थस्य आम्नानसामर्थ्यात् स्मारितं कृतं अदृष्टार्थाय भवति । यथा प्रेषितं कृतम् । ननु विधिशब्दादेव स्मृतिर्भवति । सत्यं विधिशब्दादपि सामर्थ्यात् भवति । मन्त्रादपि भवति । मन्त्रस्य आम्ना-नसामर्थ्यात् मन्त्रेण कर्तव्या । **भा.** १२।३।१५।३७, * मन्त्रस्य हि एतत् प्रयोजनं यत् स्मारयति क्रियां साधनं वा । असति स्मरणे न क्रिया संवर्तेत । ६।३।५।१८. * मन्त्रस्य हिरण्यगर्भस्य वायव्यपशौ आघारे विहितस्य उत्तराघारे निवेशः । १०।३।२।१३–१७. * अकर्मसमवेतार्थाभिधायिनामपि पदानां समवेतार्थ-पदशेषत्वेन स्मृत्यर्थत्वोपपत्तेः सकलस्य मन्त्रस्य करणत्वसिद्धिः । **सु.** पृ. ११०. * अग्निविहरणमन्त्रस्य 'उत्तिष्ठन्नन्वाह' इत्यनेन कालविधिर्ज्योतिष्टोमे । **वि.** ३।२।४. * अभिमर्शनमन्त्रस्य आग्नेयविकारेषु विकल्पः । **भा.** ८।२।५।२४. * अवघातमन्त्रस्यावृत्तिर्नानाबीजेष्टौ राजसूये । ११।४।१३।४६. * चयने लोकंपृणायाः आवृत्तौ तन्मन्त्रस्याप्यावृत्तिः । **भा.** ११।४।१२।४२. * न च विधिमन्त्रयोः पूर्वापरभावनियमोऽस्ति । अतः मन्त्रस्य विध्युपसंहारत्वाभावः । **पराक्रमः.** ४३।२. * पूषानुमन्त्रणमन्त्रस्य दर्शपूर्णमासाभ्यामुत्कर्षः । **भाट्ट.** ३।२।१. * प्रकाशनार्हानुष्ठेयक्रियां विना प्रकाशक-मन्त्रस्य अन्वयायोगः । **सु.** पृ. ४५७. * बहुवचनान्त-पाशमन्त्रस्य प्रकृतावेव निवेशः । ९।३।५।१५–२०. * मनोतामन्त्रस्य गौणार्थे विनियोगः । **भाट्ट.** ३।२।१. * लवनमन्त्रस्य मुख्ये बर्हिष्येव विनियोगः । **वि.** ३।२।१. * 'विधिशक्तिर्नियोगेन न मन्त्रस्यापनीयते ।



ततो विधास्यति ह्येषः नियोगात् स्मारयिष्यति ॥' ( इदं पूर्वपक्षे) । **वा.** २।१।६।३०. * व्रतकरणमन्त्रस्य 'वाचं विसृजति' इत्यनेन कालविधिर्ज्योतिष्टोमे । **वि.** ३।२।४. * व्रीहिमन्त्रस्य विकारो न प्रतिनिधिप्रयोगेऽपि । ९।३।९।२४–२७. * 'हविष्कृदेहि' इत्याह्वानमन्त्रस्याह्वाने विनि-योगः । **वि.** ३।२।३. * **मन्त्रयोः** फलदेवताप्रकाशकयोर-पूर्वप्रयुक्तत्वम् । 'फलदेवताधिकरणम्' । ९।१।३।४–५. * पाशमन्त्रयोरेकवचनान्तबहुवचनान्तयोर्द्विवचनान्तेनोहो द्विपशुकायां विकृतौ । 'पाशन्यायः' । ९।३।४।१०–१४. * '**मन्त्राणामपि** यत्कार्यं विहितार्थप्रकाशनम् । तेन गोदानगोयागौ नाभ्यासाद् भेदमागतौ ॥' **वा.** ३।१।१।१ पृ. ६४९. * मन्त्राणां अर्थप्रत्यायनार्थत्वम् । 'मन्त्राधि-करणम्' । १।२।४।३१–४५. * मन्त्राणां अल्पत्वे आवृत्त्या संख्यापूर्तिः । **संकर्ष.** ३।३।१८. * मन्त्राणां 'इन्द्र-पीतस्य' इत्यादीनां अनूहेन सर्वभक्षणेषु विनियोगो ज्योतिष्टोमे । ३।२।११।२८–२९, ३९–४४. * मन्त्राणां उच्चारणं प्रतिप्रस्थात्रा अध्वर्योः पृथक् कार्यं चातुर्मास्येषु वरुणप्रघासेषु दक्षिणविहारे । १२।१।९।१८. * मन्त्राणां ऋषिकृतत्वाभावात् प्रयोगस्य च प्रवाहरूपेण सर्वदा सद्भावात् न वेदानित्यत्वापादकत्वम् । **सु.** पृ. १११, * मन्त्राणामेकनाशेऽपि न कृत्स्नावृत्त्यापत्तिः, स्वार्था-भिधानद्वारा मन्त्राणां स्तोत्रादिसाधनत्वात् प्रतिमन्त्रं च वाक्यार्थभेदात् प्रत्येकमेव स्वार्थाभिधानाख्यावान्तरकार्य-द्वारा स्तोत्रादिसाधनत्त्वे सति संख्यायुक्तेन वचनेन साधनानां समुच्चयाश्रयणात् समुच्चितसाधनत्वाभावेन साधनत्वस्य व्यासज्यत्वाभावात् । पृ. ८१७, * मन्त्राणां औत्पत्तिकेन प्रथमावगतेन मुख्येनैवार्थेन संबन्धः । पृ. १०८४.

**मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्मादि-संनिपातः स्यात् सर्वस्य वचनार्थत्वात् । १२।३।१०।२५॥**

'इषे त्वेति छिनत्ति' 'देवस्य त्वा सवितुः प्रसवे इत्यादत्ते' इत्यादिवाक्योक्तानां मन्त्राणां करणार्थत्वात् करणरूपत्वात् मन्त्रान्तेन मन्त्रस्य अन्त्येन अवयवेन कर्मादिसंनिपातः कर्मणः य आद्योऽवयवः तस्य कर्मादेः, संनिपातः साहित्यं कर्तव्यम् । 'इषे त्वा' इति मन्त्रस्य यत् अन्तिमं 'त्वा' इति पदं तत्रापि वा 'आ' इति अन्तिमो वर्णः तदुच्चारणकाले शाखायां शस्त्रस्य प्रहारः कर्तव्यः । एवं सर्वत्र । तस्मात् करणमन्त्रेषु मन्त्रान्ते कर्मप्रारम्भः इति सिद्धान्तः । **के.**

* मन्त्राणां करणभूतानामन्ते कर्मारम्भः । १२।३।१०।२५. * मन्त्राणां करणभूतानामेकार्थानां विकल्पः । १२।३।१३।२९. * मन्त्राणां कर्मौपयिकार्थाभिधानार्थत्वेन प्रकरणपाठार्थत्वोपपत्तेः नादृष्टकल्पना युक्ता । **सु.** पृ. १०२. * मन्त्राणां कर्मप्रकाशनार्थत्वम् । **वा.** ३।८।७।१७.

**मन्त्राणां कर्मसंयोगात् स्वधर्मेण प्रयोगः स्याद्धर्मस्य तन्निमित्तत्वात् ।१२।३।७।१८ ॥**

मन्त्राणां कर्मसंयोगात् कर्मसु प्रयोज्यत्वात् ग्रहणकाले यस्तेषां धर्मः 'पर्वणि नाध्येयम्' इत्यादिः, तेन स्वधर्मेण स्वेन धर्मेण विशिष्टः कर्मकाले प्रयोगः स्यात् । धर्मस्य तन्निमित्तत्वात्, सः मन्त्रप्रयोगः निमित्तं यस्य तादृशत्वात् । तस्मात् अनध्यायकाले कर्मसु मन्त्रा नोच्चार्याः । इति पूर्वः पक्षः ।

**विद्यां प्रति विधानाद्वा सर्वकालं प्रयोगः स्यात् कर्मार्थत्वात् प्रयोगस्य । १९ ॥**

'पर्वणि नाध्येयम्' इत्यादीनां धर्माणां विद्यां प्रति ग्रहणार्थाध्ययनकाले विधानात् प्रयोगस्य च कर्मार्थत्वात् मन्त्रप्रयोगस्य कर्मानुष्ठानार्थत्वात् सर्वकालं स्वाध्याये अनध्याये च मन्त्राणां प्रयोगः स्यात् । इति सिद्धान्तः । **के.**

* मन्त्राणां च अर्थवचनं कार्यम्, न स्वरूपम् । स्वरूपे हि अदृष्टं कल्पयितव्यम् । अर्थवचनेन दृष्ट उप-कारः । **भा.** ९।३।१।१. * मन्त्राणां च स्वरूपे साम-र्थ्यम्, नापूर्वीयस्वरूपे । **टुप्.** ९।१।३।४. * मन्त्राणां जपस्तुत्याशीरभिधानानां समुच्चयः, न विकल्पः । १२।४।१।१–२. * मन्त्राणां निर्वापाग्न्यादिस्मारकत्वेन अनधि-गतार्थगन्तृत्वरूपप्रामाण्यासंभवेऽपि अविसंवादिफलकत्व-मेव प्रामाण्यं इति **जीर्णाः** । अङ्गताविधिकल्पनद्वारा इष्ट-साधन–निर्वापादि-विशेष्यकमन्त्रप्रकारकप्रकाश्यतादिसंसर्ग-कप्रमाप्रयोजकत्वेन उभयोपपत्तिः इति **सोमेश्वरः** ।

प्रयाजादिमन्त्रादिविशिष्टेन भावयेत् इति प्रयोगविध्यर्थे पदार्थे पदार्थविषया प्रामाण्यमिति **मिश्राः** । **वस्तुतस्तु** मन्त्राणां मन्त्रवाक्यार्थबोधजनकत्वेनैव प्रामाण्यं निर्वापाग्न्यादिसंसर्गस्य अनधिगतत्वेन अनधिगतार्थगन्तृत्वोपपत्तेः, इष्टसाधननिर्वापस्य विशेष्यत्वात् धर्मप्रामाण्योपपत्तेश्च । यदि च स्वसमानाधिकरणस्वाव्यवहितपूर्वक्षणवृत्तिज्ञानाविषयविषयकत्वरूपं अनधिगतार्थकत्वं विभाव्यते तदा सुतरां स्मारकत्वेऽपि प्रामाण्योपपत्तिः । **मणि**. पृ. १०–११. * मन्त्राणां पदार्थत्वेन प्रामाण्यम्, वाक्यार्थे पदार्थानां प्रामाण्याभ्युपगमात् इति **शास्त्रदीपिका** । **गुरुचरणास्तु** ( भट्टनारायणाः ) स्मृतिवत् याथार्थ्यलक्षणमेव एषां प्रामाण्यमाहुः । **भट्टसोमेश्वरस्तु** अनधिगतार्थगन्तृत्वमप्याह । **बाल**. पृ. ७०, मन्त्रार्थानुसंधानविषयं तु प्रामाण्यं संभवति इति तदेव युक्तम् । पृ. ७२. * मन्त्राणां प्रत्यक्षब्राह्मणोक्तानां मध्यमा चितिराश्रयः । ये तु औपानुवाक्यकाण्डाधीनास्तेषां वाक्यादृते संबन्ध एव नास्ति । **वा**. १।४।१२।२३ पृ. ३६४. * मन्त्राणां ब्राह्मणोत्पन्नानां भाषिकः स्वरः प्रयोक्तव्यः । १२।३।९।२३–२४. **मीको**. पृ. १४९७ 'क्रतौ ब्राह्मणोत्पन्नानां मन्त्राणां॰ ' इत्यत्र द्रष्टव्यम् ।

**मन्त्राणां ब्राह्मणविनियुक्तानां विकल्पः ।**
दर्शपूर्णमासादौ पुरोडाशप्रथनमन्त्रयोर्विकल्पः ॥

**ब्राह्मणविहितेषु च संख्यावत् सर्वेषामुपदिष्टत्वात् । १२।३।१५।३१॥**

**भाष्यम्**— ब्राह्मणे च ये मन्त्रा विधीयन्ते यथा ' उरु प्रथस्वेति पुरोडाशं प्रथयति, उरु प्रथा उरु ते यज्ञपतिः प्रथतामिति पुरोडाशं प्रथयति ' इति च । तेषु च समुच्चयः स्यात् । सर्वेषामुपदिष्टत्वात् । यो न प्रयुज्यते तस्योपदेशो बाध्यते । सर्वाङ्गोपसंहारी च प्रयोगवचनोऽनुग्रहीष्यते । संख्याविहितवच्च सर्वेषामसकृदभिधानेनार्थवत्ता भविष्यति । तस्मात् समुच्चयः ।

**याज्यावषट्कारयोश्च समुच्चयस्य दर्शनं तद्वत् । ३२ ॥**

**भाष्यम्**— समुच्चये एव याज्यावषट्कारयोः समुच्चयदर्शनं भवति, 'याज्याया अधि वषट्करोति' इति । समुच्चये हि पौर्वापर्यं भवति । तस्मादपि समुच्चयः ।

**विकल्पो वा, समुच्चयस्याश्रुतित्वात् । ३३ ॥**

**भाष्यम्**-- विकल्पो वैषां मन्त्राणाम्, न समुच्चयः । कुतः ? उक्तो न्यायः । मन्त्राणां संनिपातित्वादेकार्थानां विकल्पः स्यात् ( १२।३।१३।२९ ) इति । ननु संख्याविहितवदेकार्था अपि सन्तः असकृदभिधानेन समुच्चेष्यन्ते । नैतद्युक्तम् । कुतः ? समुच्चयस्याश्रुतित्वात् । यथा तत्र संख्याश्रवणात् कृतकरमपि असकृदभिधानमाश्रितम्, नैवं समुच्चयश्रवणमस्ति । तस्माद्यथान्यायमेकार्थत्वाद्विकल्पः ।

**गुणार्थत्वादुपदेशस्य । ३४ ॥**

**भाष्यम्**--यच्च सर्वेषामुपदेशोऽर्थवान् भविष्यतीति । अहेतुः सः । गुणार्थत्वादुपदेशस्य । नैवासौ मन्त्रप्राप्त्यर्थ उपदेशः । किं तर्हि गुणार्थः । अर्थवादो गुणं विधास्यतीति । तदुक्तम् ' गुणार्थेन पुनःश्रुतिः', ' परिसंख्या ', ' अर्थवादो वा ' ( १।२।४।३३–३५ ) इति । यदि तर्हि नैवायं मन्त्रोपदेशः किमिदमुच्यते, सर्वेषामुपदिष्टत्वादिति । एवं तर्हि क्त्वाचिन्तेयम् । मन्त्रोपदेश इति कृत्वा चिन्त्यते । अथवा उदाहरणान्तरं द्रष्टव्यम् ।

**वषट्कारे नानार्थत्वात् समुच्चयः । ३५ ॥**

**भाष्यम्**-- वषट्कारः प्रदानार्थः, याज्या देवतोपलक्षणार्था । तयोर्नानार्थत्वात् समुच्चयः, न सर्वोपदेशात् ।

**शा** — वचनविनियोगाङ्गीकारेण भाष्यकारेण पूर्वपक्षितम् । वार्तिककारस्तु लिङ्गविनियोगेनैव मन्त्राणां विनियोगसिद्धेः समुच्चयार्थमेव वचनं मन्यते ।

**सोम**-- दृष्टान्तसंगतिः । वचनेन समुच्चयविधौ सति लिङ्गस्य नैरपेक्ष्ये व्यापारः कुण्ठीभवति । भाष्यकारमते तु समुच्चयविधावपि वचनान्तराभावात् मन्त्रविनियोजकवचनस्य नैरपेक्ष्ये व्यापारः अकुण्ठितः इति वैषम्यम् ।

**रत्न**—मन्त्राणां लिङ्गप्राप्तत्वात् समुच्चयार्थान्येव वचनानि इति मन्यते । सिद्धान्तस्तु ये तावत् मन्त्रलिङ्गेन प्राप्ताः, तेषु मन्त्रविनियोगेनैव कृतार्थं वाक्यं न



समुच्चये प्रमाणं भवति । लिङ्गप्राप्तमपि गुणार्थं पुनःश्रवणं इत्युक्तं मन्त्राधिकरणे ।

**वि**— ' प्रथमन्त्रौ समुच्चेयौ विकल्प्यौ वा चतुष्ट्ववत् । आद्य उक्तिद्वयात्, मैवं समुच्चित्यनुदीरणात् ॥ '

**भाट्ट**— ये तु संख्यां विनैव ब्राह्मणेन अनेके मन्त्राः प्रत्येकं विनियुक्ताः, येषु वा लिङ्गविनियुक्तेष्वपि ब्राह्मणे एव अर्थवादाद्यर्थं प्रत्येकं पुनःश्रुतिः, तत्र ये तावद्वचनविनियुक्ताः, तेष्वदृष्टार्थत्वादेव प्रयाजादिवत् समुच्चयः, अन्यथा तद्विनियोगवैयर्थ्यापत्तेः । लिङ्गविनियुक्तेष्वपि ' उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति ' ' उरु ते यज्ञपतिरिति पुरोडाशं प्रथयति ' इत्यादिषु यथा आर्थवादिक पुनःश्रुतिप्रयोजनं तथा समुच्चयोऽपीति मन्यमानस्योत्तरम्, दृष्टार्थत्वेऽपि वचनविनियोगस्य 'इषे त्वेति शाखां छिनत्ति ' इतिवत् तत्रतत्र प्रयोजनान्तरार्थत्वेनोपपत्तेः, न दृष्टार्थत्वसंभवे तत्कल्पनम् । अतश्च निरपेक्षसाधनत्वबलात् विकल्पः एव । एवं लिङ्गविनियुक्तेष्वपि मन्त्रपुनःश्रुतेरर्थवादमात्रार्थत्वात् न मणिमन्त्रौषधन्यायेन समुच्चयकल्पकता । अत एव तत्र प्रथनमेव अध्वर्युकर्तृकत्वाद्यर्थं तत्तच्छाखासु विधीयते इत्युक्तम् ।

**मण्डन**— ' मन्त्रोऽनेको ब्राह्मणोक्तो विकल्प्यः । '

**शंकर**— ' ब्राह्मणे विहितेष्वेवम् । ' विकल्पः ।

* मन्त्राणां मुख्येऽर्थे विनियोगः ( ३।२।१।१–२ ) इत्यस्य ऐन्द्रीन्यायः अपवादः । **वा**. ३।२।२।३. * मन्त्राणां यज्ञश्रवणेऽपि क्रियातत्समवेतार्थप्रकाशनेन क्रियाङ्गता । **सु**. पृ. ४५७. * मन्त्राणां यजूरूपाणामवसाननिर्णयः एकवाक्यत्वनिर्णयेन भवति । **वि**. २।१।१४. * मन्त्राणां लिङ्गं नाम अर्थप्रत्यायनसामर्थ्यम् । तच्च मुख्ये गौणे च केनचित् प्रकारेण विद्यते । (गौणस्य अर्थस्य अशाब्दत्वे शाब्दार्थान्तरानन्वयापत्तेः गौणेऽप्यर्थे शब्दव्यापारः अस्ति– इति **सु**. ) । **वा**. ३।२।१।१. * मन्त्राणां विध्यन्वयेन प्रामाण्यम्, न साक्षात् । **वि**. १।४।१. * मन्त्राणां विशिष्टार्थस्मरणं प्रयोजनम् । **मणि**. पृ. ५. * मन्त्राणां श्रुतिलिङ्गादि–प्रमाणप्राप्त– क्रत्वङ्गभावानां व्यापारं विना स्वरूपेण क्रत्वङ्गत्वानुपपत्तेः व्यापाराकाङ्क्षायां उच्चारणं अदृष्टार्थत्वादुपेक्ष्य अर्थाभिधानमेव शाब्दबोधरूपं अनुष्ठेयार्थस्मरणं अनुष्ठानरूपदृष्टप्रयोजनार्थत्वात् व्यापारत्वेन अङ्गीक्रियते । तदेतत् ' अग्नये जुष्टं निर्वपामि ' इत्यादिकरणमन्त्रेषु सूपपादम् । यत्र तु स्वरसतो नानुष्ठेयक्रियावगतिः, अथ च विनियुज्यते, ' इषे त्वोर्जे त्वेति शाखामाच्छिनत्ति ' इत्यादिना तत्रापि ' छिनद्मि ' इत्यध्याहारेण अनुष्ठेयक्रियाभिधानं संभावनीयम् । क्रियमाणानुवादिषु ' युवा सुवासाः ' इत्यादिषु यूपपरिव्याणादिक्रियायाः दीर्घकालव्यासक्तत्वेन कदाचिन्मध्ये ' परिवीरसि ' इति परिव्याणमन्त्रजन्यस्मरणविच्छेदे प्रसक्ते सति तत्स्मृतिदार्ढ्यार्थं स्मारकापेक्षायां अनुष्ठेयस्मृतिदार्ढ्यहेतुत्वेन अर्थाभिधानं अर्थवत् । कर्मणः स्मारकानपेक्षायामपि मन्त्राकाङ्क्षयैव तदाकाङ्क्षोत्थापनात् न दोषः । **के**. * मन्त्राणां संख्यायुक्तवचनविहितानां समुच्चयः, यथा अग्निचयने अभ्यादाने चतुर्णाम्, खनने द्वयोः, मृदाहरणे षण्णाम् । १२।३।१४।३०. **मीको**. पृ. ५१ ' अग्निचयने संख्यया विहितानां॰ ' इत्यत्र द्रष्टव्यम् ।

**मन्त्राणां संनिपातित्वादेकार्थानां विकल्पः स्यात् । १२।३।१३।२९॥**

एकार्थानां एककार्याणां मन्त्राणां ' पूषा वां विभजतु ' ' भगो वां विभजतु ' ' अर्यमा वां विभजतु ' इत्यादीनां विकल्पः स्यात् । संनिपातित्वात् समवेतत्वात् करणत्वात् । करणमन्त्राणां च कर्मादिसंनिपात उक्तः । न च विकल्पमन्तरेण सर्वेषामन्त्रैः कर्मादिसंनिपातः कर्तुं शक्यः । तस्मात् एकार्थानां करणमन्त्राणां विकल्पः इति सिद्धान्तः । **के**.

* ' मन्त्राणां संनिपातित्वादेकार्थानां विकल्पः स्यात् ' ( १२।३।१३।२९ ) । विकल्पो वा एषां मन्त्राणाम् ( ' उरु प्रथस्व ' इत्यादीनां ), न समुच्चयः । कुतः ? उक्तो न्यायः ' मन्त्राणां॰ ' इति । **भा**. १२।३।१५।३३. * मन्त्राणां स्मारकत्वेऽपि प्रामाण्यम् । **मणि**. पृ. १२. * मन्त्राणां हौत्राणां क्रियमाणानुवादित्वात् समुच्चयः, न तु एकार्थत्वे विकल्पः । १२।३।१६।३६–३८. ' हौत्रमन्त्राणां समुच्चयः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * ' अर्थाभिधानसंयोगान्मन्त्राणां क्रतुशेषता । मुख्येन

च कृतार्थानां न गौणे श्रुतिकल्पना ॥' 'अपिवा प्रयोगसामर्थ्यात्०' ( २।१।६।३१ ) इत्यनेन न्यायेन अभिधेये तावद्विनियोगाय मन्त्राः श्रुतिं परिकल्पयन्ति । तत्र यदि जहत्स्वार्था गौणीवृत्तिर्भवेत् ततस्तुल्यवत् उभयत्रापि श्रुतिः कल्प्येत । यदि तु गौणमपि वदता पूर्वतरं स्वार्थोऽभिधेयः, तदा तदतिक्रमकारणाभावात् तद्विनियोगश्रुतौ कल्पितायां निराकाङ्क्षेषु मन्त्रप्रकरण-स्वाध्यायाध्ययनविधिषु न पुनः श्रुतिकल्पनहेतुरस्ति इति न विनियोगः । वा. ३।२।१।१ पृ. ७४९–५०. * करणमन्त्राणां कर्मसमवेतानुष्ठास्यमानार्थ– स्मृतिफलकत्वम् । क्रियमाणानुवादिनां अनुष्ठीयमानार्थस्मृतिफलकत्वम् । अनुमन्त्रणादीनां कृताकृतप्रत्यवेक्षणाय अनुष्ठितार्थ-स्मृतिफलकत्वम् । प्रोत्साहनार्थानाम् 'अगन्म स्वः सं ज्योतिषाऽभूम' इत्यादीनां 'यदेव श्रद्धया करोति तदेव वीर्यवत्तरं भवति' इति वाक्यावधारितकर्माङ्ग-भूतश्रद्धाजननार्थं अनुष्ठेयकर्मस्मृतिफलकत्वम् । स्तोत्र-शस्त्रमन्त्राणां आराdुपकारकत्वम् । सु. पृ. १०२, * 'चतुर्भिरभ्रिमादत्ते' इति तृतीयया मन्त्राणां करणत्वे अभिहिते स्वव्यापारं विना तदयोगात् उच्चारण-स्यातद्व्यापारत्वात् कर्मोत्पत्त्यनुपयोगित्वाच्च स्वव्यापार-कर्मोत्पत्त्युपयोग्यभिधानव्यापारेण करणत्वाध्यवसायात् चतु-र्भिरभ्र्यादानं अभिदध्यादिति वाक्यार्थावगमे इतिकरण-विनियुक्तानां अर्थक्रियारूपत्वेन कथंभावाग्राह्यत्वात् द्रव्य-देवतावत् क्रियोत्पत्त्युपयोगित्वावगतेः कारकत्वावसायात् करणव्यतिरिक्तकारकत्वानुपपत्तेः करणत्वनिश्चये सति अभिधानार्थत्वसिद्धेः स्तोत्रशस्त्रमन्त्राणां च स्तौतिशंसति-भ्यामेव अभिधानार्थत्वावसायात् 'तां चतुर्भिरादत्ते' इत्यादिश्रुतिविनियोज्येषु अभ्र्यादानादिमन्त्रेषु तदर्थ-शास्त्रानर्थक्यप्रसङ्गायोगेनापि अर्थप्राधान्यं अविहतम् । पृ. १०३. * दीक्षाहुतिमन्त्राणामग्निचयनप्रकरणे श्रुतानां सौमिकदीक्षाहुतिमन्त्रैः समुच्चयः । १०।३।४।२३–२९. * न तावत्सर्वेषामेव मन्त्राणां ब्राह्मणे विनियोगोऽस्ति । वा. २।१।१४।४६. * प्रयाजानुमन्त्रणमन्त्राणां याजमानानां न कश्चित् क्रमः दर्शपूर्णमासयोः । ५।१।३।३. * प्रैष-मन्त्राणामाध्वर्यवत्वम् । ३।८।१२।२४–२५. * मुख्य-विषयविनियोजकश्रुतिकल्पनां विना गौणविषयश्रुति-कल्पनाऽयोगात् मुख्यविषयश्रुतिकल्पनायाः प्राथम्यावगतेः मुख्यविनियोगेन मन्त्राणां नैराकाङ्क्ष्यात् गौणे मन्त्र-विनियोगकल्पना न युक्ता । सु. पृ.१०८४. * सत्स्वपि उपायान्तरेषु विशिष्टानुपूर्वीकमन्त्रविशेषाम्नानात् उपाया-न्तरनिवृत्तौ नियमादृष्टमात्रकल्पनया मन्त्राणां अर्थाभि-धानं सिद्धम् । वा. १।२।४।३६. * मन्त्रे 'अगन्म सुवः सुवरगन्म' इत्यत्र स्वर्गस्वरूपं अपूर्वार्थस्य मन्त्रस्य द्वारं उत अपूर्वसंबन्धिविशेष इति चिन्ता । द्वितीया कोटिः सिद्धान्तः । सोम. ९।१।१ वर्णकं २. * मन्त्रे एकस्मिन् त्रितयमपि संभवति स्तुतिः अभिधानं जपश्च । यथा 'इदं विष्णुर्विचक्रमे' इति । यदि विष्णुर्नोच्यते ततः स्तुतिः । अथ अन्यस्मै वृत्तान्त आख्यायते ततोऽभिधानम् । अथ आत्मना अवधार्यते ततो जपः । भा. १२।४।१।२, * मन्त्रे मौद्गे चरौ बर्हिःस्तरणविषयके हरितपदस्थाने रक्तपदस्य ऊहः । ९।३।२।३. * मन्त्रे सौर्यादिविकृतौ अतिदिष्टे वैकृतद्रव्यदेवतावाचकपदोहः । ( मन्त्रोहन्यायः ) । ९।३।१।१–८. * मन्त्रे 'स्योनं ते०' इत्यस्मिन् नीवारपदस्योहः 'इन्द्राय मरुत्वते नैवारमेकादशकपालम्' इत्यत्र । भा. ९।३।१।१–८. * आहवनीयान्वाधानकरणमन्त्रे श्रुतं फलं याजमानं दर्शपूर्णमासयोः । (वर्चोन्यायः) । ३।८।१३।२६–२८. * ऐन्द्राग्नैकादशकपालनिर्वापमन्त्रे ऐन्द्राग्नपदोहः । भा. ९।३।१।१–८, चित्रेष्टिगतनिर्वापमन्त्रे तद्देवतापदोहः । ९।३।१।१–८. * द्विबहुपत्नीके दर्शपूर्णमासप्रयोगे प्रैषमन्त्रे पत्नीशब्दस्य नोहः, एवं विकृतावपि । ९।३।६–७।२०–२१. * सर्वत्र हि मन्त्रे किञ्चिदेव पदं कर्म-समवेतमर्थं वदति, यथा 'अग्नये जुष्टं निर्वपामि' इति अग्निनिर्वपामिपदे । शिष्टानि तु असमवेतार्थाभिधायि-त्वात् अप्रयोगार्हाणि दृश्यमानैकवाक्यतान्यथानुपपत्त्या अनुमितसामर्थ्याभिधानानि सन्ति स्वार्थमुपसर्जनीकृत्य तद्विशिष्टसमवेतार्थप्रकाशनेन प्रयोगार्थत्वं प्रतिपद्यन्ते । ततश्च श्रुतिमनुमाय विनियुज्यन्ते । तच्चाविरोधे सति सर्व-मभ्यनुज्ञायते । वा. ३।३।७।१४ पृ. ८३२. * सांग्रहणी-ष्टिनिर्वापमन्त्रे विश्वदेवपदोहः । भा. ९।३।१।१–८.



* **मन्त्रेषु** अग्न्यादिस्वरूपं न विवक्षितम्, किन्तु अग्न्या-दिनिष्ठापूर्वसाधनतामात्रम् । **सोम.** ९।१।१ वर्णकं २. * मन्त्रेष्वपि ब्राह्मणलिङ्गानि दृश्यन्ते । तेन अभि-युक्तैः मन्त्रत्वेन अभिधानमेव मन्त्रलक्षणं तदितरवेद-वाक्यत्वं च ब्राह्मणलक्षणं इत्येव स्वीकर्तव्यम् । न च हेत्वादीनामन्यतमं ब्राह्मणं इति ब्राह्मणलक्षणम् । मन्त्रे-ष्वपि हेत्वादिसद्भावात् । तथाहि– 'इन्दवो वामुशन्ति हि' अत्र हेतुः । 'उदानिषुर्महीरिति तस्मादुदकमुच्यते' अत्र निर्वचनम् । 'मोघमन्नं विन्दते अप्रचेताः' अत्र निन्दा । 'अग्निर्मूर्धा दिवः ककुत् पतिः' अत्र प्रशंसा । 'अधः स्विदासीदुपरि स्विदासीत्' अत्र संशयः । 'कपिञ्जलानालभेत' अत्र विधिः । 'सहस्रमयुतं ददत्' अत्र परकृतिः । 'यज्ञेन यज्ञमयजन्त देवाः' अत्र पुराकल्पः । 'इत्यददा इत्ययजथा इत्यपचः इति ब्राह्मणो गायेत्' अत्र ब्राह्मणोक्तमन्त्रे इतिकरणबाहुल्यम् । 'राजा चिद्यं भगं भक्षीत्याह' 'यो वा रक्षाः शुचिरस्मीत्याह' अत्र 'इत्याह' इति वाक्योपबन्धः । वि.२।१।७.

**मन्त्रेष्ववाक्यशेषत्वं गुणोपदेशात् स्यात् । १०।८।१०।२०॥**

'वषट्कारेण वा स्वाहाकारेण वा देवेभ्योऽन्नाद्यं प्रदीयते' इति अनारभ्यवचनस्य दर्विहोमेषु श्रूयमाणम् 'पृथिव्यै स्वाहा, अन्तरिक्षाय स्वाहा, वायवे स्वाहा' इति वाक्यशेषः यत् स्वाहाकारेण देवेभ्यः प्रदीयते, तत् 'पृथिव्यै स्वाहा' इत्यादौ इति पूर्वपक्षे सिद्धान्तयति । मन्त्रेषु 'पृथिव्यै स्वाहा' इत्यादिषु अवाक्यशेषत्वम्, न वाक्यशेषत्वम् । ब्राह्मणं विधायकम्, मन्त्रो न विधायकः, विधायकाविधायकयोश्च नैकवाक्यता स्यात् । अपि च 'पृथिव्यै स्वाहा' इत्यादौ गुणोपदेशात् देवतालक्षण-गुणोपदेशात् देवताविधिकल्पकत्वं न तु स्वाहाकारविधि-कल्पनया उपसंहारार्थत्वम् । तस्मादन्येष्वपि दर्विहोमेषु स्वाहाकारोऽस्ति इति सिद्धान्तः ।

**अनाम्नाते च दर्शनात् । २१ ॥**

क्वचिद्दर्विहोमे स्वाहाकारे अनाम्नातेऽपि स्वाहाकारस्य दर्शनात् सर्वेषु दर्विहोमेषु स्वाहाकारः कर्तव्यः । ज्योति-ष्टोमे 'घृतेन द्यावापृथिवी आपृणेथां इति औदुम्बर्या विशाखे जुहोति आऽन्तादन्ववस्रावयति भूमिगते स्वाहा करोति' इति अनाम्नाते स्वाहाकारस्य दर्शनम् । सिद्धान्तोऽयम् ।

**प्रतिषेधाच्च । २२ ॥**

'न स्वाहेति वचनं करोति, मन्त्रं च नाह' इति क्वचित् दर्विहोमे स्वाहाकारस्य प्रतिषेधात्, प्रतिषेधस्य च प्राप्तिपूर्वकत्वात् सर्वेषु दर्विहोमेषु स्वाहाकारो भवति इति सिद्धान्तः । **के.**

* मन्त्रेषु जपाद्यर्थेषु मन्त्रसमाम्नायसिद्धस्वरनियमः ( भाषास्वराधिकरणम् ) । १२।३।८।२०–२२. * मन्त्रेषु प्राधान्याभिधानात् देवतात्वेन अग्न्यादयः प्रज्ञाताः । **वा.** १।४।६।९ पृ. ३४०. * मन्त्रेषु 'यथाभागं व्यावर्तेथाम्' इत्यादिषु पुरोडाशपिण्डौ एव संबोध्यौ न देवता । **संकर्ष.** १।३।१६. * मन्त्रेषु लिङ्ग वचनसामर्थ्ये 'बर्हिर्देवसदनं दामि' इति विनियोगकारण-मुक्तम् । **भा.** ३।३।४।११. * यस्तु **मन्त्रेषु** अध्ये-तृणां वेदशब्दप्रयोगो दृष्टः ( वेदमधीमहे, वेदो वर्तते इति ) सत्यम्, अस्त्यत्रापि लक्षणा, तथापि तु इतरैव ( ऋक्शब्दस्य वेदे लक्षणा ) ज्यायसी । **वा.** ३।३।१।३.

* **मन्त्राकरणपक्षः** । अश्वमेधे अश्वविषये वङ्क्री-यत्ताप्रकाशनार्थं वैशेषिकमन्त्राकरणपक्षे त्रयाणां पशूनामर्थे, षडशीतिरेषां वङ्क्रयः इति समासवचनम् । ९।४।२।१७–२१. **मीको.** पृ. ७४१ 'अश्वमेधे अध्रिगुप्रैषे०' इत्यत्र द्रष्टव्यम् ।

* **मन्त्राधिकरणम्** ( प्रोत्साहनमन्त्राणां याजमान-त्वम् ) । ३।८।६।१५. **मीको.** पृ. १०१२ 'आशी-रधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**मन्त्राधिकरणम् ।** मन्त्रा अनुष्ठेयार्थस्मारकाः ॥
**तदर्थशास्त्रात् । १।२।४।३१–१ ॥**

**भाष्यम्**— अथेदानीं किं विवक्षितवचना मन्त्राः उत अविवक्षितवचनाः । किमर्थप्रकाशनेन यागस्योप-कुर्वन्ति, उत उच्चारणमात्रेण इति । यद्युच्चारणमात्रेण तदा न नियोगतः 'बर्हिर्देवसदनं दामि' इत्येष बर्हिर्लवने विनियुज्येत । अभिधानेन चेत्, प्रकरणेन विज्ञाताङ्ग-भावो नान्यत्रोपकर्तुं शक्नोतीत्यन्तरेणापि वचनं बर्हिर्लवने

एव विनियुज्येतेति । तदेवमवगच्छामः, उच्चारणमात्रेणैवोपकुर्वन्तीति । कुतः ? तदर्थशास्त्रात् । यदभिधानसमर्थो मन्त्रस्तत्रैवैनं शास्त्रं निबध्नाति 'उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति' इति । वचनमिदमनर्थकं यद्यर्थाभिधानेनोपकुर्वन्ति । अथ उच्चारणमात्रेण, ततो वक्तव्यो विनियोग उक्तश्च । अतो नार्थाभिधानेन । यथा साक्षः पुरुषः परेण चेन्नीयते नूनमक्षिभ्यां न पश्यतीति गम्यते । नन्वर्थवादार्थं भविष्यतीति चेत्, नहि, येन विधीयते तस्य वाक्यशेषोऽर्थवाद इत्युक्तम् । न च निरपेक्षेण विहितेऽर्थवादेन किञ्चिदपि प्रयोजनं क्रियते । अतो नार्थवादार्थं वचनम् । तथा अभ्र्यादानसमर्था मन्त्रा उदाहरणम् । लिङ्गादेवाऽऽदाने प्राप्ता वचनेन विधीयन्ते 'तां चतुर्भिरादत्ते' इति । चतुःसंख्यार्थमिति चेत्, न, समुच्चयशब्दाभावात् ।

तथा 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्युदाहरणम् । रशनादाने प्राप्तस्य रशनादाने एव शास्त्रं विनियोजकम् । तत् विवक्षितार्थत्वे न घटेतेति । ननु गर्दभरशनां परिसंख्यास्यति । न शक्नोति परिसंख्यातुम् । परिसंचक्षाणो हि स्वार्थं च जह्यात्, परार्थं च कल्पेत, प्राप्तं च बाधेत । तस्मान्न विवक्षितवचना मन्त्राः । अतो न प्रमाणं 'बर्हिर्देवसदनं दामि' इत्यस्य रूपं बर्हिर्लवने विनियोगस्य ।

**वा**— इहाऽऽनर्थक्यश्रवणात्केचिदेवं संदेहमुपन्यस्यन्ति किमर्थवन्तो मन्त्रा उतानर्थका इति । तत्वयुक्तम् ।

**'स्पष्टे शब्दात्प्रतीतेऽर्थे नानर्थक्यं हि शङ्क्यते ।**
**अग्नौ दहति दृष्टे वा दग्धृत्वं किं विचार्यते ॥'**

सर्वत्र हि कार्यदर्शनाच्छब्दानां शक्तयः कल्प्यन्ते । तच्च अर्थप्रत्यायनं मन्त्रेष्वप्युच्चार्यमाणेषु उपलभ्यते । न च 'अविशिष्टस्तु वाक्यार्थः' इत्येवमादिप्रतिज्ञामात्रसाध्योत्तराः पूर्वपक्षा भवन्ति । तस्मादयुक्तोऽयमुपन्यास इति मत्वाऽऽह 'किं विवक्षितवचना मन्त्रा उताविवक्षितवचनाः' इति । नन्वनेनैव हेतुनेदमपि न विचारणीयम् । नैष दोषः । अर्थवतामपि वाक्यानां द्वैविध्यदर्शनात् । उच्चारणार्थप्रत्यायने ह्यविनाभूते तत्र अन्यतरविवक्षया प्रयुज्यमानेऽपि किञ्चिन्नान्तरीयकं भवति । यद्यर्थप्रत्यायनं विवक्ष्यते तदोच्चारणमर्थात्, अथोच्चारणविवक्षा ततोऽर्थप्रत्यायनं अनुषङ्गात् । यथा जपेषु विषविद्यासु चेत्यस्ति विचारावसरः । कथं पुनरस्य प्रमाणलक्षणेन संबन्धः ? पूर्वमेवोक्तमेतत् ( अर्थवादाधिकरणोपक्रमे ) । यथा 'आम्नायस्य क्रियार्थत्वात्' (१।२।१।१) इत्ययमेवात्र पूर्वपक्ष इति तदुत्तरेणैव च निराकाङ्क्षत्वान्न पुनरभिहितम् । एवं हि मन्यते यत्र 'सोऽरोदीत्' इत्येवमादेः कथंचित् संबन्धापादनम्, तत्र मन्त्रेषु कः संदेहः ? तस्मादुपयोगविशेष एव चिन्तनीय इति । तत्र विधिस्तुतित्वे तावत् स्वयमेव ( भाष्यकारः 'अपि वा प्रयोग०' २।१।६।३१ इत्यत्र ) निराकरिष्यति, अविधिसरूपत्वात्, प्रदेशान्तरविहितस्तुत्यसंभवाच्च । परिशेषात् स्वरूपप्रयोगे सत्यर्थोच्चारणयोः किं विवक्षितमिति विचार्यते । सामसु तु वाचकत्वाभावादात्मप्रयोगमात्राक्षराभिव्यक्तिपरत्वगतसंदेहः । कथं पुनः पूर्वपक्षवादिनः श्रुत्यसंयुक्तानां केषांचिन्मन्त्राणां प्रयोगसिद्धिः ? केचिदाहुः । अप्रयोगार्थमेवासौ अविवक्षितार्थत्वे यतते । न ह्यनाश्रितार्थान् मन्त्रान् कश्चिदपि प्रयुङ्क्ते । अतो यच्च 'किमुच्चारणमात्रेणोपकुर्वन्ति' इति सिद्धवत्प्रयोगाभिधानं नैतदञ्जसैव द्रष्टव्यम् । अयं हि तत्र दुष्टोऽभिप्रायः । यदि नामोच्चारणमात्रोपकारं वक्ष्यति । तत्र शक्ष्याम्यस्याप्रयोगं वक्तुमिति । यदपि प्रयोजनकथने 'बर्हिर्देवसदनं दामि' इत्ययं बर्हिर्लवनात्प्रच्याव्यते तदनेन प्रकारेण प्रयोगप्रच्यावनमेव द्रष्टव्यम् । अथवा याज्ञिकदर्शनेनाविगानात्प्रयोगसिद्धिमविचार्येतरो विचारः । किमर्थं तु याज्ञिकप्रसिद्धिरुपेक्षिता, यतः सैव तावद्युक्तायुक्तत्वेन न विचार्यते । तत्रायमभिप्रायः । सर्वथा तावत् दृढमेषां स्मृतिन्यायेन प्रयोगित्वमवस्थितं तत्र ( ? तन्न ) शक्यं बाधितुम् । तस्यैव त्विदं मूलं निरूप्यते । तद्यदि पूर्वपक्षो भविष्यति ततोऽन्यप्रमाणाभावाद्विनियोजकश्रुत्यनुमानेन मूलं कल्पयिष्यामः । सिद्धान्ते तु लिङ्गप्रकरणयोरेव मूलत्वाध्यवसानम् । अथवैवं पूर्वपक्षेऽपि प्रयोगः । स्वाध्यायाध्ययनविधिनैव मन्त्राः पुरुषार्थाय नीयन्ते । तथाहि । दर्शपूर्णमासादिभिः क्रमप्रकरणाभ्यां यावत्संस्पृश्यते तत्सर्वमुपकारकत्वेन स्वीक्रियते । प्रयाजादिवाक्यानि मन्त्ररूपमपि



च । तत्र प्रयाजादिवाक्यान्यर्थं समर्प्य चरितार्थानि स्वरूपसंस्पर्शे सत्यपि प्रयोज्यतां न प्रतिपद्यन्ते । मन्त्राः पुनः कर्मानौपयिकार्थाभिधायित्वात् तेनांशेनानपेक्षिताः । स्तुतिविधिस्मृतीनां तु प्रकारान्तरेण सिद्धिरिति प्रयोगवचनेनैषां रूपमेवाङ्गीक्रियते । स्वाध्यायाध्ययनचोदनाऽपि प्रत्यासन्नतरमन्त्रस्वरूपमेव समर्प्य चरितार्थत्वात् न विप्रकृष्टमर्थाभिधानं यावद्गच्छति । प्रयाजादिवाक्येष्वपि तावत् रूपग्रहणमेव प्रसक्तमासीत्, तत्त्वभिप्रेतार्थदानेन युक्तं न त्विह तथा किञ्चित् । शब्दे च कार्यस्यासंभवादर्थे कार्यं विज्ञायते । मन्त्राणां तु शब्द एव संभवति । अवश्यं ह्यर्थप्राधान्यपक्षेऽपि पुरुषः शब्दे नियोक्तव्यः, तद्व्यापारोत्तरकालत्वादर्थाभिधानस्य । तस्माद्रूपमेवाङ्गम् । तथा च तदर्थशास्त्रादीन्युच्यन्ते । परिहारसूत्रक्रमानुरोधेन विपर्यस्तान्युदाहरणानि अभ्र्यादानात्प्रभृति दातव्यानि । भाष्यकारस्तु यथातथोदाहृतैरपि कार्यसिद्धिं मत्वैवमुपन्यस्तवान् 'उरु प्रथा उरु प्रथस्व' इत्यादि । 'यथा साक्षः' इति । नीलीरोगाद्युपहतेन्द्रियस्य चक्षुरस्त्येवेति परैर्दृश्यते, परेण तु नीयमानमुपलभ्य न पश्यतीति ज्ञायते, तथा मन्त्ररूपमालोचयतां अर्थप्रकाशनशक्तिबुद्धिर्यद्यपि भवति तथापि परेण विनियोगं दृष्ट्वा स्वयं विनियोजकशक्तिर्नास्तीति गम्यते । ततश्चार्थातन्त्रत्वम् । अन्यथा स्वयमेव विनियुज्येत । 'नन्वर्थवादार्थम्' इति लिङ्गप्रकरणानुमितमन्त्रविधिस्तुत्यभिप्रायम् । न हि इति छेदः । विधिनैकवाक्यतया अर्थवादाः स्तुत्यर्थाः कल्पिताः । प्रदेशान्तरस्थस्य तु प्रत्यक्षस्याऽऽनुमानिकस्य वा विधेरात्मनः समीपेऽर्थवादमपश्यतः स्वयं प्ररोचनाशक्त्याविर्भावेन व्यावृत्तापेक्षत्वान्न दूरस्थया स्तुत्या कार्यम् । तथा अभ्र्यादाने रूपादेव प्राप्तत्वात् मन्त्राणाम् 'तां चतुर्भिरादत्ते' इत्यनर्थकं वचनम् । चतुःसंख्यामपि ब्रुवदेतन्मन्त्रगतामेव ब्रूयान्न क्रियागताम् । न ह्यन्यगुणोऽन्यगामी भवति । न च निष्क्रियत्वात्कर्माङ्गत्वेनोपदेष्टुं शक्यते । तेनैवं वाक्यं भवेत् 'ये एते चत्वारस्तैरभ्र्यादानं कुर्यात्' ते च प्रागेव वचनाच्चत्वार इत्यानर्थक्यम् । क्रियानङ्गत्वादेव च संख्यायाः समुच्चयशब्दाभावाच्च प्रत्येकं च सामर्थ्याद्विकल्पः प्रसज्यमानो न शक्यो वारयितुम् । अस्मत्पक्षे पुनर्वचनगम्यत्वात् अदृष्टस्य न चतुर्भ्यः प्रागस्तित्वे प्रमाणमिति युक्तः समुच्चयः । उभयोरपि तावद्रशनयोरश्वगर्दभबन्धनार्थमादानमर्थप्राप्तत्वान्न विधीयते । यदि मन्त्रोऽपि रूपात् प्राप्तोऽनर्थकं वचनम् । परिसंख्येति परैर्वर्जनार्थत्वात्तद्विषया बुद्धिरभिधीयते । साऽपि गर्दभरशनाया आदाने वा स्यान्मन्त्रे वा । उभयथा च त्रिदोषी । विधिपरः सन्न गृह्यते इति स्वार्थं जह्यात् । परस्य च वाक्यस्य गर्दभरशनां न इत्यस्यार्थे कल्पेत । प्राप्तं च रूपादर्थाद्वा मन्त्रमादानं वा बाधेत । अदृष्टार्थत्वे त्वन्धन्यायेन यत्रैव नीयते तत्रैव वर्तिष्यते । यदि चाश्वाभिधानीमिति संबन्धः स्यात्ततः परिसंचक्षीतापि, न त्वसावस्ति । कारकाणां क्रियापरिहारेणान्योन्यसंबन्धाभावात् । तेन वाक्यमपि क्रिययैव संबध्नीयात् । एका च सा । प्रकरणापूर्वसंयोगश्चाविशिष्टस्तस्मान्न परिसंख्याप्रयोजनं कथयति । 'अतो न प्रमाणं बर्हिः' इत्यादि । तदा हि महाप्रयोगवचनेन सर्वे मन्त्राः केवलप्रधानार्थाः तत्प्रयोगाबहिर्भाववृत्तयो नाङ्गैः संबध्येरन् । पाठक्रमानुरोधात्तु तदाऽपि नैव व्युत्क्रमेण प्रयोगः कर्माण्यनादृत्य सकृदेव अनुवाकमध्यायं वा पठित्वाऽनुष्ठीयते ।

**वाक्यनियमात् । ३१-२ ॥**

**भाष्यम्**— नियतपदक्रमा हि मन्त्रा भवन्ति 'अग्निर्मूर्धा दिवः' इति, न विपर्ययेण । यद्यर्थप्रत्यायनार्था विपर्ययेणाप्यर्थः प्रतीयते इति नियमोऽनर्थकः स्यात् । अथोच्चारणविशेषार्था विपर्ययेऽन्यदुच्चारणमिति नियम आश्रीयते तेन यतरस्मिन् पक्षे नियमोऽर्थवान् स नूनं पक्ष इति । ननु अर्थवत्स्वपि नियमो दृश्यते, यथा इन्द्राग्नी इति । युक्तं तत्र तत् । विपर्ययेऽर्थप्रत्ययाभावात् ।

**वा**— 'अग्निर्मूर्धा' इति योऽर्थः प्रतीयते स मूर्धाऽग्निः इत्यनेनापीत्यनर्थको नियमः । यस्य त्वदृष्टार्थता तस्य क्रमान्यत्वे तदुच्चारणजन्यादृष्टप्रमाणाभावात् क्रमान्यत्वं न युक्तमिति नियमार्थवत्ता । अथ नियतप्रत्यायनाददृष्टं कल्प्येत तत् उच्चारणादेवोपपद्यते तदधीनत्वान्नियतप्रतीतेः । यस्तु दृष्टार्थेषु प्रकृतिप्रत्ययसमासेषु

नियमो दृश्यते यथेन्द्राग्नी नीलोत्पलं राजपुरुषश्चित्रगुः निष्कौशाम्बिरिति, युक्तं तत्र विपर्ययेऽपशब्दार्थान्यत्वा-नर्थक्यप्रसङ्गात् । अजाद्यदन्तविशेषणत्वादिनिमित्तो हि तत्र नियतः पूर्वनिपातः स्मर्यते । तेनाग्नीन्द्रौ इत्यसाधु-त्वम्, पुरुषराजः इत्यर्थान्यत्वम्, कौशाम्बिनिः इत्य-नर्थकत्वम् । यस्तु अग्नीन्द्रौ इति क्वचित् प्रयोगः स च्छान्दसः, अग्नेर्वाऽभ्यर्हितत्वस्य विवक्षयेति मन्तव्यम् । तुल्यकक्षार्थप्रतीतौ इन्द्राग्नीपदमेव व्यवस्थितम् । ननु इहापि क्रमान्यत्वादमन्त्रत्वं स्यात् । तदेवार्थपरत्वे सति तदविनाशे तु किं निमित्तमिति न विद्मः । तेन मन्त्र-प्रसिद्धौ 'वाक्यनियमात्' इत्यपि सूत्रम् (सूत्रैकदेशे सूत्रशब्दप्रयोगः, ग्रामैकदेशे 'ग्राम आयातः' इति प्रयोग-दर्शनात्) । अथवा अस्त्वप्रकरणाधीतवाक्यनियमात् । न ह्यर्थाभिधाने अन्यदीयस्याऽऽत्मीयस्य च विशेषः । अथवा मन्त्रपौरुषेयवाक्ययोः तुल्ये अर्थाभिधानसामर्थ्ये मन्त्रवाक्यनियमोऽदृष्टार्थः । अथवा अनेकध्यानादि-स्मरणोपायप्रसङ्गे वाक्यनियमात् । न हि दृष्टेऽर्थे मन्त्रस्य ध्यानादेर्वा कश्चिद्विशेष इत्यदृष्टार्थता ।

**बुद्धशास्त्रात् । ३१–३ ॥**

**भाष्यम्**— बुद्धे खल्वपि पाठादर्थे तदभिधानसमर्थो मन्त्रो भवति 'अग्नीदग्नीन् विहर' इति । स बुद्धे किं बोधयेत् ? अथ नूच्चारणविशेषार्थाः, बुद्धेऽपि उच्चारण-विशेषोऽवकल्प्येतेति । ननु पुनर्वचनात् संस्कारविशेषो भविष्यति । एवमस्मत्पक्षमेव आश्रितोऽसि । वचन-मुच्चारणम् । तद्धि शक्यते कर्तुं नार्थप्रत्यायनम् । तत्प्र-तीतेऽशक्यम् । यथा सोपानत्के पादे द्वितीयामुपानह-मशक्यत्वान्नोपादत्ते ।

**वा**— 'न ह्यविद्वान् विहितोऽस्ति' (३।८।८।१८) इत्यवश्यं तावदग्नीधाऽऽत्मीयाः पदार्थाः प्रागेव कर्म-प्रक्रमादवगन्तव्याः । तत्र प्रैषः पिष्टपेषणन्यायेनार्थं ज्ञाप-यितुमशक्नुवन् अदृष्टार्थो भवति । अथ स्मारको मन्त्र इत्युच्यते । तदपि नास्ति । ब्राह्मणज्ञानाभ्यासपाटव-निमित्तसंस्कारादेव तत्सिद्धेः । संस्काराभिव्यक्तिहेतुरपि पूर्वपदार्थसमाप्तिर्ब्राह्मणमेव वा भविष्यति नार्थो मन्त्रैः । तत्र यत् उच्यते संस्कारविशेषो भविष्यतीति, नासाव-दृष्टादन्यः संभवति, अतः पूर्वपक्षापत्तिः । यदि हि प्रतीतोऽप्यर्थो नैव दृष्टं साधयति ततो यत्तद्दूरमपि गत्वाऽवश्यं कल्पनीयं तदुच्चारणादेव वरमिति ।

**अविद्यमानवचनात् । ३१–४ ॥**

**भाष्यम्**— यज्ञे साधनभूतः प्रकाशयितव्यः । न च तादृशोऽर्थोऽस्ति यादृशं अभिवदति, यथा 'चत्वारि शृङ्गा' (तैआ. १०।१०।१७) इति । न हि चतुःशृङ्गं त्रिपादं द्विशिरस्कं सप्तहस्तं किञ्चिद् यज्ञसाधनमस्ति । तदत्राभिधानार्थः किमभिदध्यात् । उच्चारणार्थे त्वव-कल्प्यते । तथा 'मा मा हिंसीः' इत्यसत्यामपि हिंसायां किमभिदध्यात् ? ।

**वा**— न चतुःशृङ्गादि किञ्चित्कर्म तत्संबन्धि वा प्रकृतौ विकृतौ वा विद्यते । यद्यपि च गुणवादेन किञ्चित् स्यात् तथापि तदनुष्ठानाभावान्न तत्स्मृत्या कार्यम् । न च ज्ञायते क्व प्रदेशे प्रयुज्यतामिति । तत्र मन्त्रपाठक्रमानुरोधेनोच्चारणमापततीति सिद्धः पूर्वः पक्षः । 'मा मा हिंसीः' 'मा मा संताप्तम्' इत्यादीनि वेदिहविर्धानादिविषयत्वात् 'अचेतनेऽर्थबन्धनात्' इत्यत्राप्युदाहरणम् । इह त्वप्रसक्तायां हिंसायां प्रतिषेधा-नर्थक्यम् ।

**अचेतनाऽर्थबन्धनात् । ३१–५ ॥**

**भाष्यम्**— अचेतने अर्थे खलु अर्थं निबध्नन्ति 'ओषधे त्रायस्वैनम्' इति । अभिधानेनोपकुर्वन्तः एवं-जातीयका ओषधिं पशुत्राणाय प्रतिपादयेयुः । न चासाव-चेतना शक्या प्रतिपादयितुम् । उच्चारणार्थे तु नैष दोषो भवति । तस्मादुच्चारणार्थाः । 'शृणोत ग्रावाणः' इति चोदाहरणम् ।

**वा**— 'ओषधे त्रायस्व', 'शृणोत ग्रावाणः' इति च संबोधनं कार्यनियोगाभिमुख्यकरणार्थम् । न चाचेत-नस्याऽऽभिमुख्यं संभवति । न च पशुत्राणे प्रातरनु-वाकश्रवणे वा प्रैषेण प्रवृत्तिरुपपद्यते इत्यानर्थक्यमर्थ-विवक्षायाम् ।

**अर्थविप्रतिषेधात् । ३१–६ ॥**

**भाष्यम्**— अर्थविप्रतिषेधोऽपि भवति 'अदिति-र्द्यौरदितिरन्तरिक्षम्' इति । सैव द्यौस्तदेवान्तरिक्षमिति



को जातुचिदवधारयेत् । अनवधारयंश्च किमभिधानेनोप-कुर्यात् । उच्चारणमात्रे तु नैष विरोधो भवति । तस्मा-दुच्चारणार्था मन्त्राः । 'एको रुद्रो न द्वितीयोऽवतस्थे', 'असंख्याताः सहस्राणि ये रुद्रा अधि भूम्याम्' इति चोदाहरणम् ।

**वा**— युक्तमन्तरिक्षत्वं चादितेरेकानेकत्वं च रुद्रस्य विप्रतिषिद्धम् । न चैष विप्रतिषिद्धोऽर्थः कर्मोपयिकः । कथं वा अदितिर्देवता अन्तरिक्षं द्यौर्वा भवेत् । न च स्तुत्यर्थतयाऽपि हेतुद्वयं परिहर्तुं शक्यम् । ब्राह्मणे हि विधिशेषभूताः स्तुतयोऽर्थवन्त्यो भवन्ति । मन्त्रस्तुतिस्तु अप्रयोजनत्वान्नाऽऽदर्तव्या ।

**स्वाध्यायवदवचनात् । ३१–७ ॥**

**भाष्यम्**— स्वाध्यायकाले पूर्णिका (स्त्रीसामान्य-निर्देशोऽयम्) अवहन्तिं करोति । माणवकोऽवहन्ति-मन्त्रमधीते । नासौ तेन मन्त्रेण तदभिधानमभ्यस्यति अक्षरानुपूर्व्याः अवधारणे एव यतते । येन च नाम प्रयोजनं तदभ्यसितव्यम् । अतः उच्चारणाभ्यासादुच्चारणेन प्रयोजनमित्यवगच्छामः ।

**वा**— स्वाध्यायाध्ययनस्य कर्मार्थत्वात् यत्कर्मण्युप-योक्ष्यते तत् अभ्यसितव्यम्, तच्चैवं विद्वांसः सन्तो वृद्धाः शिष्यानक्षरावधारणे एव प्रवर्तयन्ति संनिहितेऽप्यर्थे, न तद्वचनाभ्यासे । तेनावश्यं तेषामुच्चारणमेवाङ्ग-त्वेनाभिप्रेतमिति ।

**अविज्ञेयात् । ३१–८ ॥**

**भाष्यम्**— अपि च केषांचिन्मन्त्राणां अशक्य एवार्थो वेदितुम् । यथा 'अम्यक् सा त इन्द्र ऋष्टिरस्मे' इति, 'सृण्येव जर्भरी तुर्फरीतू' इति, 'इन्द्रः सोमस्य काणुका' इति च । एते किं प्रत्याययेयुः । उच्चारणार्थे तु न दोषः । तस्मादुच्चारणार्था मन्त्रा इति ।

**वा**— केचित् पदार्था ज्ञानेनाविज्ञेयाः । केषाञ्चित्तु वाक्यार्थ एव न ज्ञायते । न च मन्त्रार्थः सत्तामात्रेणोप-करोति क्रियावेलायामस्मर्यमाण इति यदेकान्तेन शक्यं कर्तुमुच्चारणं तदेव कार्यमित्यवधार्यते ।

**अनित्यसंयोगान्मन्त्रानर्थक्यम् । ३१–९ ॥**

**भाष्यम्**— अनित्यसंयोगः खल्वपि भवेत् मन्त्रेष्व-भिधानार्थेषु, यथा 'किं ते कृण्वन्ति कीकटेषु गावः' ('किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम् । आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन् रन्धया नः ॥' ऋसं. ३।५३।१४) इति । कीकटा नाम जनपदाः, नैचाशाखं नाम नगरम्, प्रमगन्दो राजेति । यद्यभिधानार्थाः, प्राक् प्रमगन्दात् नायं मन्त्रो-ऽनुभूतपूर्व इति गम्यते । तदेतैस्तदर्थशास्त्रादिभिः कारणै-र्मन्त्राणामविवक्षितवचनता ।

**वा**— अर्थप्रकाशनपक्षे यस्य योऽर्थः स एव तेन प्रकाशयितव्यः । केचित् च अनित्यैरकर्माङ्गभूतैश्चार्थैरर्थ-वन्तो मन्त्रा लक्ष्यन्ते यथा 'किं ते कृण्वन्ति कीकटेषु गावः' इति । अयं हि दृढेनाध्येतॄणां स्मरणेन विश्वामित्रस्या-ऽऽर्षं गम्यते । तेन किल कर्मार्थं धनं प्रार्थयमानेनेन्द्रो-ऽभिहितः । त्रैलोक्याधिपते याः कीकटेषु जनपदेषु गाव-स्तास्तत्र किं कुर्वन्ति । ते हि नास्तिकाः किं क्रतुना इति वदन्तो न किञ्चित्कर्म अनुतिष्ठन्ति । अतश्च ता नाऽऽशिरं (सोममिश्रणार्थं पयः) सोमसंस्कारार्थं दुहते, न घर्मं (घर्मः=तप्ते घृते पयोनिक्षेपेण निस्यन्दितं यत् शिष्टं तत्) तपन्ति न घर्मतपने पयोदानेन साधनी-भवन्ति । तस्मात् प्रमगन्दस्य कीकटाधिपतेः यत् वेदः धनं तदस्माकं नैचाशाखं नगरमाभर । 'हृग्रहोर्भ-श्छन्दसि' (पा. ३।१।८४ वा.) इति भकारः । अथवा अस्मान् प्रति तत् बिभृहि धारय पोषय चेत्ये-तज्जो मघवन् रन्धया साधयास्माकमिति । छान्दसं दीर्घ-त्वम् । यद्येतद्विवक्षितं तथा सति आदिमदर्थाभिधानात् वेदस्य कृत्रिमत्वेनाप्रामाण्यं प्रसज्यते । न चान्यो मन्त्रार्थः शक्यते वक्तुमप्रतीतेः । अतोऽर्थसदसद्भावावनादृत्याक्षरो-च्चारणं फलवदाश्रयणीयमिति ।

**अविशिष्टस्तु वाक्यार्थः । ३२ ॥**

**भाष्यम्**— अविशिष्टस्तु लोके प्रयुज्यमानानां वेदे च पदानामर्थः । स यथैव लोके विवक्षितस्तथैव वेदेऽपि भवितुमर्हति । नैवम् । लोके तैरर्थैरबुद्धैः संव्यवहारः । इह देवतामिरप्रत्यक्षाभिर्यज्ञाङ्गैश्चाचेतनैः संलापे न कश्चि-

यज्ञस्योपकारः । यदि अदृष्टं परिकल्प्येत, उच्चारणादेव तद्भवितुमर्हति । यद्धि कर्तव्यं तत् प्रयोजनवत् । उच्चारणं च न कथंचिन्न कर्तव्यम्, यत्त्वपूर्वाय यद्यर्थाय । यद्यर्थो न प्रत्याय्यते न किञ्चिदनर्थकम् । यदि न प्रयुज्यते समाम्नानानर्थक्यम् । तस्मादुच्चारणादपूर्वम् । तथा च तदर्थशास्त्रादि उक्तम् । तदुच्यते । अर्थप्रत्यायनार्थमेव यज्ञे मन्त्रोच्चारणम् । यदुक्तं न देवताभिर्यज्ञाङ्गैश्च संलापे प्रयोजनमस्तीति । यज्ञे यज्ञाङ्गप्रकाशनमेव प्रयोजनम् । कथम् ? न ह्यप्रकाशिते यज्ञे यज्ञाङ्गे च यागः शक्योऽभिनिर्वर्तयितुम् । तस्मात् तन्निर्वृत्त्यर्थं अर्थप्रकाशनं महानुपकारः कर्मणः, तच्च करोतीत्यवगम्यते । तस्मादस्ति अस्य प्रयोजनम् । तच्च दृष्टं न शक्यमपवदितुम्, नार्थाभिधानं प्रयोजनमिति । नन्वर्थाभिधानेनोपकुर्वंस्तु ‘ तां चतुर्भिरादत्ते ’ इत्येवमाद्यनर्थकं भवति । काममनर्थकं भवतु, न जातुचिदपजानीमहे दृष्टमर्थाभिधानस्य उपकारकत्वम् ।

**वा**— मन्त्रोच्चारणं तावदक्षरग्रहणेन निराकाङ्क्षीकृतं न साक्षात्क्रत्वङ्गत्वं प्रतिपद्यते । अक्षराणां च द्रव्यवदनितिकर्तव्यतात्मकत्वात् प्रकरणेनाग्रहणम् । एवं पदार्थज्ञानस्य वाक्यार्थप्रत्ययेन नैराकाङ्क्ष्यादग्रहणम् । वाक्यार्थप्रत्ययस्त्वकृतार्थः प्रकरणे विपरिवर्तमानः क्रियात्मकत्वात्प्रयोगवचनाकाङ्क्षितः कर्मसमवेतानुष्ठास्यमानार्थस्मृतिफलत्वेन इतिकर्तव्यता भवति । तत्रादृष्टकल्पनानिमित्ताभावः । समाम्नानान्यथानुपपत्त्या हि तत्कल्प्येत, नोपपन्नेऽर्थवत्त्वे । यद्यपि च तत्कल्पनावसरो भवेत्तथापि कामं वाक्यार्थप्रत्ययादेव, न त्वौपयिकार्थप्रतीतिनिराकाङ्क्षाद्वाक्यात् । अवश्यं च दृष्टादृष्टयोर्विनियुज्यमानस्य प्रमाणमुपन्यसितव्यम् । इह च प्रकरणात् अदृष्टार्थता लिङ्गाच्च दृष्टार्थता । न च प्रकरणमशक्येऽर्थे विनियोक्तुमर्हतीत्येकान्तेनैतदापतति यच्छक्नुयात्तन्मन्त्रेण कुर्यादिति । न चासावदृष्टं शक्नोतीति लौकिकं वैदिकं वा प्रमाणं विद्यते । तस्मादुभयोर्लिङ्गप्रकरणयोः दृष्टार्थप्रयोगेण एकवाक्यता । एवं च सति याज्ञिकप्रयोगप्रसिद्धेर्न मूलान्तरकल्पनाक्लेशो भविष्यति । अतः स्वाभाविकमेवार्थप्राधान्यमवस्थितम् । नैवमिति । न दृष्टोऽर्थो निर्वृत्त इत्येतावतैव तादर्थ्यं अवसीयते । पुरुषार्थानुपयोगेन स्वाध्यायाध्ययनविधेरानर्थक्यात् ! न च वृद्धशास्त्राविद्यमानवचनाचेतनार्थबन्धनात् मन्त्रार्थोपयोगः । तत्र यदि दूरेऽप्यदृष्टकल्पनातो न मुच्यामहे ततोऽतिक्रमकारणाभावात् उच्चारणादेव कल्पनीयम्, उभयवादिसिद्धत्वात् उच्चारणकर्तव्यतायाः तत्प्रभवत्वाच्च अदृष्टकल्पनस्य । तत्रोच्यते ‘ यज्ञे यज्ञाङ्गप्रकाशनमेव प्रयोजनम् ’ इति । यद्यपि लोकवत्तैर्न संव्यवहारस्तथाऽपि तत्स्वरूपप्रकाशनमात्रमेवानुष्ठातॄणामुपकरिष्यति । अतश्च यावन्मात्रमेवानौपयिकं संबोधनादि कामं तन्न विवक्ष्येत, न तु तद्वशेन सर्वमेव त्यक्तव्यम् । न ह्येकरूप्यं नाम केनचिन्नियतम् । तस्माद्यथादर्शनाभ्युपगमात् ‘ बर्हिर्देवसदनं दामि ’ इत्येवमादीनां तावदविहतमर्थप्राधान्यम् ।

## गुणार्थेन पुनः श्रुतिः ।३३॥

**भाष्यम्**— अथ किं तच्छास्त्रमनर्थकमेव ? न हि । गुणार्थेन पुनः श्रुतिः । यदुक्तम्, ‘ तां चतुर्भिरादत्ते ’ इति समुच्चयशब्दाभावान्न समुच्चयार्थमिति । चतुःसंख्याविशिष्टमादानं कर्तव्यमिति वाक्यादवगम्यते । तदेकेन मन्त्रेण गृह्णन्न यथाश्रुतं गृह्णीयादिति ।

**वा**— ‘ तां चतुर्भिरादत्त ’ इत्यत्रापि वदामः । ( इयं पङ्क्तिः आनन्दाश्रमीये पूर्वसूत्रान्ते मुद्रिता । न्यायसुधामनुसृत्य सा अस्माभिरत्र गृहीता) । यद्यपि मन्त्राः प्राप्ताः सामर्थ्येन तथापि चतुःसंख्यामादाने विधास्यति । तत्रारुणैकहायनीन्यायेन परस्परनियमे सति मन्त्रगतचतुःसंख्याविशिष्टमादानं चोदितं समुच्चयादृते कर्तुं न शक्यते इत्यर्थात्समुच्चयफलम् । अथवा यावल्लिङ्गानुमिताः श्रुतयः प्रतिमन्त्रं कल्पयितुमारभ्यन्ते तावदनेन प्रत्यक्षवचनेन चतुःसंख्याविशिष्टास्ते विहिताः, तेन अप्राप्तविधिरेव वचनम् । तत्र तु विनाप्येतेन मन्त्रेषु अर्थात्प्राप्तवत्सु तत्परत्वे मन्दं फलमित्यनन्यलभ्यचतुःसंख्यार्थं तस्योपदेशः ।

## परिसंख्या । ३४ ॥

**भाष्यम्**— परिसंचक्षाणे च इमामगृभ्णन्नित्यश्वाभिधानीमादत्ते इति त्रयो दोषाः प्रादुःष्युरिति । नैवं संबन्धः ‘ इत्यादत्ते ’ इति । कथं तर्हि ? ‘ इत्यश्वा-



भिधानीम् ’ इति । लिङ्गाद्रशनामात्रे शब्दात्तु विशेषे अश्वाभिधान्यामिति । सति च वाक्ये लिङ्गं विनियोजकम् । तच्चास्य प्रकरणाम्नानानुमितं वाक्यं नास्ति । कतरत्तत् ? एतेन मन्त्रेणाऽऽदानं कुर्यादिति यस्मिन् सति रशनामात्रे लिङ्गात्प्राप्नोति । अश्वाभिधान्यां तु प्रत्यक्षमेव वचनम् । अस्मिन् सति तदानुमानिकं नास्ति । तेन गर्दभरशनायां न प्राप्तिरेवेति ।

**वा**— यावद्धि मन्त्राम्नानमनवगतप्रयोजनं प्रकरणी च अकृतार्थस्तावद्यत्तत्सिद्ध्यर्थं कल्प्यते तत्सर्वं वैदिकं भवति । नैराकाङ्क्षयोत्तरकालं तु कल्पितमपि पौरुषेयत्वादप्रमाणं स्यात् ।

न च श्रुतिमकल्पयित्वा लिङ्गादेः स्वातन्त्र्येण प्रामाण्यमिति वक्ष्यते ( तृतीये अध्याये ) । तदेतदाह ‘ सति च वाक्ये लिङ्गं विनियोजकं तच्चास्य नास्ति ’ इति । यदेव हि प्रकरणात् अनेन यजेत, रशनां वा गृह्णीयादिति कल्पयितुमिष्यते तदैवाश्वाभिधानीमित्यनेनापहारो मन्त्रस्य । यदपि “नैवं संबन्धः ‘ इत्यादत्ते ’ इति, कथं तर्हि ‘ इत्यश्वाभिधानीम् ” इति । तत्कारकसंबन्धासंभवात्क्रिययैव सह सामान्याभिप्रायेण द्रष्टव्यम् । तस्मान्न आदानमात्रे विधीयते । किं तर्हि ? अश्वाभिधानीविशिष्टे । अथ वा फलतः पश्चात्तनकारकसंबन्ध उपन्यस्यते । सर्वथा दर्शशास्त्रता नास्ति । यदि हि यदेव मन्त्रवचनात्प्राप्नुयात्तदेव प्रत्यक्षवचनेनोच्यते ततो वयमुपालभ्येमहि । नन्वेवमप्राप्तविधिरेवायं संजात इति न वक्तव्यं परिसंख्येति । फलेनैवमभिधानाददोषः । सर्वत्र हि परिसंख्याशब्दादेवकाराद्वा विना न श्रुत्या परिसंख्या नियमो वोच्यते । विधिरेव त्वेवंजातीयकस्य फलेनैवं व्यपदेशः । कस्तर्हि विधिनियमपरिसंख्यानां भेदः ? उच्यते । **‘ विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्ते परिसंख्येति कीर्त्यते ॥ ’** विधिरेव हि केनचिद्विशेषेणैवं भिद्यते । तत्र योऽत्यन्तमप्राप्तो न च प्राप्स्यति प्राग्वचनादित्यवगम्यते तत्र नियोगः शुद्ध एव विधिः, यथा ‘ व्रीहीन्प्रोक्षति ’ इति । यत्र तु प्राग्वचनात्पाक्षिकी प्राप्तिः संभाव्यते तत्राप्राप्तिपक्षं पूरयन्यो विधिः प्रवर्तते स नियन्तृत्वान्नियम इत्युच्यते यथा ‘ व्रीहीनवहन्ति ’ इति । तण्डुलनिष्पत्त्यर्थाक्षेपादेव तत्सिद्धेर्न तत्प्राप्तिमात्रं विधेः फलम् । किं तर्हि ? अप्राप्तांशपूरणम् । तदप्राप्तिपक्षे च तण्डुलैरुपायान्तराण्याक्षिप्येरन्, पूरणे तु सति या तेषां निवृत्तिरसावर्थात्, न वाक्यात् । न च तद्वारणं नियमः । परिसंख्या हि तथा स्यात् । प्रत्यासन्नां वा अवहन्तिनियततामुत्सृज्य नान्यनिवृत्तिफलकल्पनावसरः । तत्प्रसक्तिद्वारा त्ववहन्तेः अनियतिरासीदिति नियमान्तर्गतैवार्थान्निवृत्तिर्गम्यते । न च प्राप्ते सति विधिरयं प्रवृत्तो येनास्यान्यनिवृत्त्यर्थता कल्प्येत । प्रागेव तु प्रवर्तमानेनार्थस्य प्रापकशक्तिनिरोधादन्याप्राप्तिः कृता, सा चार्थलभ्येति न तयैव व्यपदिश्यते । यः पुनः प्राङ्नियोगात्तत्र चान्यत्र च प्राप्नुयादिति संभाव्यते यत्र वा यच्चान्यच्च सा परिसंख्या यथा अत्रवोदाहृते यथा च गृहमेधीये पञ्चमे पक्षे । अत्रापि च न प्राप्ते सत्येषा प्रवर्तते प्रापकस्य शास्त्रस्याननुमितत्वात् । कथं तर्हि ? यद्येतद्वाक्यं नाभविष्यत्तत एनं प्राप्स्यदिति । सर्वस्य प्रत्यक्षस्य वाक्यस्य नानुमानिकवाक्यप्रतिबन्धमात्रं फलमिष्यते । किं हि तेन पठितेन यस्यान्यतोऽप्यर्थः सिध्यति ? तदर्थं गर्दभरशनानिवृत्तिः फलं कल्प्यते । तेनैवं कल्प्यते कृत्वाचिन्तान्यायेन, यदि नामैवं वाक्यं न भवेत्ततः कीदृशमनुष्ठानं स्यात् । तत्र मन्त्रप्राप्तिस्तावदेकान्तेन सिध्येदश्वाभिधान्याम्, तद्वदेव तु गर्दभरशनायामपि प्रसज्येत ।

यदा त्वनेन वाक्येन प्रत्यक्षेण नैराकाङ्क्ष्यादविशेषविनियोगसमर्थवाक्यानुमानं निषिद्धं तदा केवलाश्वाभिधानीविषयत्वसिद्धिरित्यपौनरुक्त्यादर्थवद्वाक्यम् ।

## अर्थवादो वा । ३५ ॥

**भाष्यम्**— ‘ उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति ’ इत्यर्थवादार्थेन पुनः श्रुतिः ‘ यज्ञपतिमेव तत्प्रथयति ’ इति । ननु नायं मन्त्रस्य वाक्यशेषः, न च प्राप्तस्य स्तुत्या प्रयोजनम् । सत्यम् । नायं मन्त्रस्य विधिर्न संस्तवः । प्रथनमेव तत्र स्तूयते । मन्त्रः पुना रूपादेव प्राप्त इहानूद्यते प्रथनं स्तोतुम् । इत्थं प्रथनं प्रशस्तं यत्क्रियमाणमेवंरूपेण मन्त्रेण क्रियते । कस्तदा भवति गुणः । यज्ञपतिमेव तत्प्रजया पशुभिः प्रथयति । किमेतदेवास्य

फलं भवति । नेति ब्रूमः । स्तुतिः कथं भविष्यतीत्येवमुच्यते । कथमसति प्रथने प्रथयतीति शब्दः । मन्त्राभिधानात् । मन्त्रेण पुरोडाशमध्वर्युः प्रथस्व इति ब्रूते । यश्चैवं प्रथस्व इति ब्रूते स प्रथयति, यथा यः कुरु इति ब्रूते स कारयति ।

वा-- यद्यपि प्रदेशान्तरस्थत्वान्मन्त्रविधानं न स्तूयते तथापि प्रथनविधानात्तत्प्ररोचनया च सकलं वाक्यमर्थवत् । तस्य ह्येतदेवोत्पत्तिवाक्यम् । ननु च पुरोडाशान्यथानुपपत्तिप्राप्तत्वात्प्रथनं न विधातव्यम् । नैतन्नियोगतः प्राप्नोति । द्रुततरं हि पिष्टमप्रथितमपि प्रथेत । विधाने तु सति तादृशं कर्तव्यं येन प्रथयितव्यं भवति । एवं च अध्वर्युकर्तृकताऽपि सिध्यति । पठ्यमानं ह्याध्वर्यवसमाख्यां लब्ध्वा कर्तृविशेषं नियच्छति । अर्थप्राप्तं त्वसमाख्यातत्वान्न नियामकं स्यात् । एवमर्थं च यद्यप्येकान्ततोऽर्थात् प्राप्नुयात्तथापि वाक्येनैव प्रापयितव्यम् । तस्मादुपपन्ना प्रथनस्तुतिः । एवमपि 'यज्ञपतिमेव तत्प्रथयति' इत्यनेन स्तुतौ सिद्धायां मन्त्रग्रहणमनर्थकम् । न । मन्त्रस्यैव स्तुत्यर्थमुपादानात्, प्रथनं कर्तव्यं तस्य हि क्रियमाणस्यायं मन्त्रः साधनं भवति । तत्र च 'उरु ते यज्ञपतिः प्रथताम्' इत्येतान्यक्षराणि प्रयुज्यन्ते । तथा सति यज्ञपतिः प्रथितो भवतीति गुणो लभ्यते । 'किमेतदेवास्य फलमिति नेत्याह' । स्तुत्यर्थमेव तत् 'द्रव्यसंस्कारकर्मसु' ('फलश्रुतिरर्थवादः स्यात् ।' ४।३।१।१) इति न्यायात् । यद्यप्यत्र करणमन्त्राभिहितत्वात्फलं कल्प्यते तथापि ब्राह्मणे तावत्तत्संकीर्तनमेकान्तेन स्तावकम् । मन्त्रोऽपि तु लिङ्गविनियोज्यो न फलकल्पनायै प्रभवति । करणविभक्तिविनियुक्तानां हि सकलोपयोगान्यथानुपपत्त्या फलसाधनता युक्ता । लिङ्गानुमिता पुनः श्रुतिराकाङ्क्षावशेन क्रियाप्रकाशनमात्रविनियोगायैव ज्ञायते । तेनैवंजातीयको मन्त्रोऽपि प्रधानफलसंकीर्तनात्मिका स्तुतिरेवाभ्युपगन्तव्या । 'कथमसति प्रथने' इति कस्यायं प्रश्नः ('कस्य' इति कर्मणि षष्ठी किंविषयः इत्यर्थः) किं विध्युद्देशवर्तिनः पुरोडाशप्रथनस्य, अथ अर्थवादगतस्य यज्ञपतिप्रथनस्येति । द्विधाऽपि चायुक्तम् । पुरोडाशप्रथनं तावद् विधीयमानत्वादेव न प्रष्टव्यम् । न च मन्त्राभिधानात् तस्यास्तित्वम् । किं तर्हि ? स्वरूपसद्भावात्, इत्युत्तरमप्यसंबद्धम् । अथ पुनरितरार्थवादन्यायेन कथमरुदतीतिवत्प्रश्नः, तथाप्युत्तरमसंबद्धम् । 'मन्त्रेणाध्वर्युः पुरोडाशम्' इति पुरोडाशेन संबध्यते न यजमानेन । तस्मात् अग्रन्थ इति केचित् । उभयथाऽपि त्विदमदुष्टम् । अस्तु तावत्पुरोडाशप्रथने । तत्र हि याज्ञिकानां केषांचिदयं मन्त्रः कृत्वा प्रथनमभिमर्शने प्रयुज्यते, सोऽयं स्वसिद्धान्तेन पृच्छति– कथमसति वृत्ते प्रथने प्रयुज्यमानेनानेन प्रथयतीति । तत्राभ्युपेत्यवादेन उत्तरं 'मन्त्राभिधानात्' इति । यद्यपि प्रथनं प्रथमकृतत्वान्नास्ति, मन्त्रेण तु सत्तया (यथा वर्तमानता भवति तथा) उच्यते इत्युपपन्नः शब्दार्थः । अथवा सर्वप्रयोजकव्यापाराणां प्रयोज्यव्यापारपूर्वकत्वं अर्थरूपेण स्थितमिति शब्दैरपि तथैव प्रवर्तितव्यम् । इह च स्तुतिविषयसिद्ध्यर्थं प्रथयति इत्येतद्विधीयते इत्युक्तम् । तत्राऽऽह, नायं विधिः संभवति विषयानुपपत्तेः । प्रयोजकव्यापारो हि प्रतीयमानस्तद्गोचरः स्यात् । स चानुपात्तप्रयोज्यव्यापारत्वात् न प्रतीयते । तेन यथा यजेतेत्यनुक्ते याजयतीति नोच्यते तथेह प्रथेतेत्यनुक्ते प्रथयतीति न वाच्यम् । न चेह पुरोडाशः प्रथेत तेन वा प्रथितव्यमित्युपादानमस्ति । तस्मिन्नसति प्रथयतीत्यनुपपन्नम् । तदुपपादयति 'मन्त्राभिधानात्' इति प्रतीकगृहीतमन्त्रोपात्तप्रयोज्यव्यापारं हि ब्राह्मणं प्रथयतीति विधत्ते । 'यश्च प्रथस्वेति ब्रूते' इत्यनेन पुरोडाशकर्तृकां क्रियामध्वर्युः प्रेष्यतीत्येतद्दर्शयति । यद्यपि च संभाव्यमानक्रियाणां प्रयोज्यानामनुपादायापि व्यापारं शब्देन प्रयोजकव्यापारः सिध्यतीत्येतदप्युत्तरं संभवति तथाऽपि तूत्तरविभवादुपादानपूर्वकतैवोक्ता । अथवा अस्तु यजमानप्रथने 'कथमसति' इति सर्वस्तुतीनां किञ्चिच्छब्दगतमर्थगतं वाऽऽलम्बनमुक्तम् । तदत्र किंनिबन्धना स्तुतिरिति । तदभिधीयते । मन्त्रोक्तमर्थमाश्रित्य स्तुतिः प्रवर्तिष्यते । 'मन्त्रेणाध्वर्युः पुरोडाशं ब्रूते' इति न पुरोडाशप्रथनोपादानाभिप्रायम् । किं तर्हि ? पुरोडाशं ब्रवीति, उरु ते यज्ञपतिः प्रथतामिति । प्रथस्वेत्यपीतिकरणः प्रभृत्यर्थो न शब्दपदार्थतायै । 'यश्च प्रथस्वेति ब्रूते' इत्यपि तदाद्यर्थ



एव । प्रथतामिति ब्रूते इत्यर्थः । यश्चैवं ब्रूते स प्रथयत्यनेनैव, गुणवादात् । अथ वा 'तदाचष्टे.' इत्येवं मुख्यमेव प्रथयतीत्यर्थमाश्रित्य प्रथनबुद्ध्या सिद्धा स्तुतिः ।

**अविरुद्धं परम् । ३६ ॥**

**भाष्यम्**--यदुक्तं पदनियमस्यार्थवत्त्वादविवक्षितार्था मन्त्रा इति । काममनर्थको नियमो न दृष्टमप्रमाणम् । नियतोच्चारणमदृष्टायेति चेत्, अविरुद्धा अदृष्टकल्पना अस्मत्पक्षेऽपि । एवं प्रत्याय्यमानमभ्युदयकारि भवतीति ।

वा--अदृष्टार्थोच्चारणवादिनोऽपि तन्नियमात् अपरमवश्यं कल्पनीयमदृष्टं तन्ममापि प्रत्यायननियमाद्भविष्यतीत्यविरोधः । एतेन मन्त्रत्वादिनियमः प्रत्युक्तः । सत्स्वपि उपायान्तरेषु विशिष्टानुपूर्वीकमन्त्रविशेषाम्नानादुपायान्तरनिवृत्तौ नियमादृष्टमात्रकल्पनया सिद्धमर्थाभिधानम् ।

**संप्रैषे कर्मगर्हानुपालम्भः संस्कारत्वात् ।३७॥**

**भाष्यम्**-- अथ यदुक्तम् 'प्रोक्षणीरासादय' इति वृद्धबोधनमशक्यमत उच्चारणादृष्टमिति । तन्न । कर्तव्यमित्यपि विज्ञातेऽनुष्ठानकाले स्मृत्या प्रयोजनम् । उपायान्तरेणापि सा प्राप्नोति । अतोऽनेनोपायेन कर्तव्येति नियमार्थमाम्नानम् । संस्कारत्वात् ।

वा-- येयं संप्रैषे 'अग्नीदग्नीन्' इत्यत्र बुद्धबोधनासंभवात् अभिधानकर्मगर्हाऽभिहिता साऽप्यनुपालम्भः ' स्मरणसंस्कारार्थत्वात् । बुद्धीनां हि क्षणिकत्वात्स्वाध्यायकालोत्पन्नानां न प्रयोगकालं यावदवस्थानम्, तत्रावश्यं केनचिद्ध्यानादिनाऽनुसंधाने कर्तव्ये मन्त्रो नियम्यते ।

अथवा संस्कारत्वात् इति । यदि हि बोध एवावतिष्ठते ततोऽनवकाशत्वं भवेत् । इह तु तदीयसंस्कारमात्रावस्थानात्तदभिव्यक्तिद्वारेणास्ति ज्ञानोत्पत्त्यवसर इति न मन्त्रानर्थक्यम् ।

**अभिधानेऽर्थवादः । ३८ ॥**

**भाष्यम्**-- 'चत्वारि शृङ्गा' इत्यसदभिधाने गौणः शब्दः । गौणीकल्पना, प्रमाणवत्त्वात् । उच्चारणादृष्टमप्रमाणम् । चतस्रो होत्राः शृङ्गाणीवास्य । त्रयो अस्य पादा इति सवनाभिप्रायम् । द्वे शीर्षे इति पत्नीयजमानौ । सप्त हस्तासः इति छन्दांस्यभिप्रेत्य । त्रिधा बद्धः इति त्रिभिर्वेदैर्बद्धः । वृषभः कामान्वर्षतीति, रोरवीति शब्दकर्मा, महो देवो मर्त्यानाविवेश इति मनुष्याधिकाराभिप्रायम् । तद्यथा चक्रवाकस्तनी हंसदन्तावली काशवस्त्रा शैवालकेशी नदी इति नद्याः स्तुतिः । यज्ञसमृद्धये साधनानां चेतनसादृश्यमुपपादयितुकाम आमन्त्रणशब्देन लक्षयति 'ओषधे त्रायस्वैनम्' इति, 'शृणोत ग्रावाणः' इति । अतः परं प्रातरनुवाकानुवचनं भविष्यति, यत्राचेतनाः सन्तो ग्रावाणोऽपि शृणुयुः, किं पुनर्विद्वांसोऽपि ब्राह्मणा इति । इत्थं चाचेतना अपि ग्रावाण आमन्त्र्यन्ते ।

वा-- 'चत्वारि शृङ्गा' इति रूपकद्वारेण यागस्तुतिः कर्मकाले उत्साहं करोति । (भाष्यकारीयव्याख्याने प्रदेशविशेषाज्ञानात् अदृष्टार्थत्वापत्तेः अपरितुष्य स्वयमन्यथा व्याचष्टे-) हौत्रे त्वयं विषुवति होतुराज्ये विनियुक्तः । तस्य च आग्नेयत्वादह्नश्च आदित्यदेवतत्वसंस्तवादादित्यरूपेणाग्निस्तुतिरुपवर्ण्यते । तत्र चत्वारि शृङ्गा इति दिवसयामानां ग्रहणम् । त्रयो अस्य पादा इति शीतोष्णवर्षाकालाः । द्वे शीर्षे इत्ययनाभिप्रायम् । सप्त हस्तासः इत्यश्वस्तुतिः । त्रिधा बद्धः इति सवनाभिप्रायेण । वृषभः इति वृष्टिहेतुत्वेन स्तुतिः । रोरवीति स्तनयित्नुना । सर्वलोकप्रसिद्धेर्महान् देवो मर्त्यानाविवेश इत्युत्साहकरणोपकारेण सर्वपुरुषहृदयानुप्रवेशात् । एवमनेन मार्गेणास्ति तावद्धर्मसाधनस्मृतिः ।

**गुणादविप्रतिषेधः स्यात् । ३९ ॥**

**भाष्यम्**-- 'अदितिर्द्यौः' इति गौण एष शब्दः । अतो न विप्रतिषेधः । यथा त्वमेव माता पितेति, तथैकरुद्रदैवत्ये एको रुद्रः, शतरुद्रदैवत्ये शतं रुद्रा इत्यविरोधः ।

वा— अदितिर्द्यौरदितिरिति । नात्र द्युत्वादीनि विवक्षितानि । किं तर्हि ? अदितौ प्रकाशयितव्यायामविद्यमानविप्रतिषिद्धधर्मोपादानं स्तुत्यर्थम् । गुणवादेन त्वौदुम्बराधिकरणवत्संवादो योजयितव्यः ।

**विद्याऽवचनमसंयोगात् । ४० ॥**

**भाष्यम्**--- यत्तु अकर्मकालेऽवहन्तिमन्त्रेण माणवको न पूर्णिकावहन्ति प्रकाशयितुमिच्छतीति । अयज्ञसंयोगात्, न यज्ञोपकारायैतत्प्रकाशयितुमिच्छति । ननु प्रकाशनान-

भ्यासोऽक्षराभ्यासश्च परिचोदितः । उच्यते । सौकर्यात्प्रकाशनानभ्यासः, दुर्ग्रहत्वाच्चाक्षराभ्यासः ।

वा-- यद्यपि पूर्वपक्षेऽयमभिप्रायो नोपन्यस्तस्तथापि संभवादुपन्यस्यते । यदि हि स्वाध्यायकालेऽर्थवचनमुपयुज्येत ततस्तदाश्रीयेत । न त्वेवमस्ति, कर्मभिरसंयोगात् । तदनभ्यासस्तु प्रोक्षणादिवत्सौकर्यात् ।

**सतः परमविज्ञानम् । ४१ ॥**

**भाष्यम्--** विद्यमानोऽप्यर्थः प्रमादालस्यादिभिर्नोपलभ्यते । निगमनिरुक्तव्याकरणवशेन धातुतोऽर्थः कल्पयितव्यः । यथा 'सृण्येव जर्भरी तुर्फरीतू' ('सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका । उदन्यजेव जेमना मदेरू ता मे जराय्वजरं मरायु ॥' ऋसं. १०।१०६।६) इत्येवमादीन्यश्विनोरभिधानानि द्विवचनान्तानि लक्ष्यन्ते । अनेन 'अश्विनोः काममप्राः' इत्याश्विनं सूक्तमवगम्यते । देवताभिधानानि च घटन्ते जर्भरी इत्येवमादीनि । अवयवप्रसिद्ध्या च लौकिकेनार्थेन विशेष्यन्ते । एवं सर्वत्र ।

वा-- यत्तु परं कारणमविज्ञेयत्वमुक्तं तदयुक्तम् । सत एवार्थस्य पुरुषापराधेनाविज्ञानात् । तत्र चार्थप्रकरणसूक्तदेवतार्षनिगमनिरुक्तव्याकरणज्ञानान्यधिगमोपायाः । तेषां ह्येवमर्थमेव परिपालनम् । यथैव च व्याकरणेन नित्यपदान्वाख्याने क्रियमाणे लोपविकारादीनामुपायत्वेनोपादानमव्युत्पन्नाश्च तैरेव पदोत्पादनमिव मन्यन्ते । तथाऽत्र नित्यवाक्यार्थप्रतिपत्त्युपायोपाख्यानमनित्यवदाभासमानमुपायत्वं प्रतिपद्यते । तत्र यथा कश्चित् व्याचक्षाणः पदतदवयवादीनां चेतनत्वमिवाध्यस्य विशेषबाधादिव्यापारं निरूपयति एतेनैवमुक्तोऽयमेवं प्रत्याहेति, यथा च पूर्वपक्षोत्तरपक्षवादिनौ व्यवहारार्थं कल्पितौ एवमृष्यार्षेयत्रिविषया कल्पना । अथवा परमार्थेनैवेदमृषिभिस्तथोक्तम्, न तु स मन्त्रस्तैरेव कृतः, तदानीं वा पुरुषान्तरेष्वसन्नेव तेषामाविर्भूतः । किं तर्हि ? यथाऽद्यत्वेऽपि कश्चित्प्रकृतार्थविवक्षायां तदर्थं वाक्यमुपादित्समानस्तदर्थसरूपं मन्त्रं श्लोकं वाऽन्यदीयं स्मृत्वा स्ववाक्यस्थाने प्रयुङ्क्ते, तत्प्रत्ययेन चान्ये तदर्थमवधारयन्ति, एवमिहापि वेदार्थविद्भिस्तद्वासितान्तःकरणैः भृग्वादिभिः आत्मीयव्यवहारेषु श्रुतिसामान्यरूपेण विशिष्टार्थप्रत्यायनार्थं मन्त्राः प्रयुक्ताः, तद्बलेन चास्मदादीनां तदनुरूपाऽनित्यार्थप्रतिपत्तिर्भवति । प्रत्ययदृढत्वार्थमेव चाऽऽर्षस्मरणम् । तत्रैवं उपाख्यानं स्मरन्ति । यथा किल भूतांशो नाम कश्चिदृषिर्जरामरणनिराकरणार्थी सृण्येवेत्येवमादिना सूक्तेनाश्विनौ स्तुतवान् । 'भूतांशो अश्विनोः काममप्राः' इति चान्ते संकीर्तनाच्चास्याऽऽर्षमाश्विनं सूक्तमिति च द्योतितम् । तत्र सृणिः अङ्कुशः सरणसाधनत्वात्तमर्हन्तौ तत्र वा साधू इति सृण्यौ अर्थात् कुञ्जरौ । आकारश्छन्दसि द्विवचनादेशः । ताविवात्यर्थं जृम्भमाणावष्टाङ्गप्रहरणव्यापृतौ जर्भरी । तुर्फरीतू हिंसन्तौ । नितोशतिर्वधकर्मा तत्कारिणौ नैतोशौ योद्धारौ ताविव तुर्फरी त्वरमाणा हिंसकाविति वा । पर्फरीका शोभायुक्तौ । उदन्यतिः पिपासार्थः, तत्र जातौ उदन्यजौ प्रावृषिजौ चातकौ । जेमना उदकवन्तौ जेमशब्दात्पामादिविहितो मत्वर्थीयो नप्रत्ययः । तौ यथोदकलाभेन मत्तौ भवतस्तथा यौ मदेरू तौ मे जरायु मरायु जरामरणधर्मकं अर्थात् शरीरं अजरं अमरं च कुरुतमिति वाक्यशेषः । तेनैवं वाक्यार्थः, यौ अङ्कुशचोदिताविव कुञ्जरौ सर्वतो जृम्भमाणौ शत्रूणां निहन्तारौ भवतो हिंस्रौ इव च हिंसनव्यापृतौ दाक्ष्येण च शोभेते चातकाविव चोदकलाभेन मदात्प्रीयेते तावुभावपि जरामरणयोः कुपिताविवाजरत्वस्यामरत्वस्य वा प्रीतावजरममरं मे शरीरं विधत्तामिति । 'अम्यक् सा त' इत्यगस्त्यार्षम्, तेन किलेन्द्रोऽमरत्वं धनं प्रार्थितः, तथा चोपरितन्यामृचि 'त्वं तू न इन्द्र तं रयिं दा' इति श्रूयते । तदेवास्यामृच्यनुषङ्गेण द्रष्टव्यम् । इयं च छन्दोमद्वितीयेऽहनि मरुत्वतीये शस्त्रे विनियुक्ता । तत्र अम्यक् इति । अमाशब्दोऽव्ययं साहित्यवाची यतोऽमात्य इति भवति, सहाञ्चतीत्यम्यक् सा त इन्द्र, ऋष्टिः आयुधविशेषः पाणिक्षेप्यः, अस्मे इति अस्माकम्, सनेमि पुराणम्, अभ्वं तोयम्, मरुतो जुनन्ति क्षिपन्ति । अग्निश्चिदित्युपमार्थो हि स्म, अतसे शुष्कतृणे, शुशुकान् दीप्तवान्, आप इव द्वीपं दधति प्रयांसि अन्नान्यानि । वाक्यार्थे तु प्रथमतृतीययोर्द्वितीयचतुर्थयोश्च पदानां संबन्धः । तत्र सेत्येतदाक्षिप्तो यच्छब्दः तृतीयपादे



कल्प्यते । शुष्कतृणे दीप्तोऽग्निरिव या लक्ष्यते तव सहचारिणी नित्यमृष्टिस्तव वल्लभा सा तावत् त्वत्प्रसादेनास्माकमेव । येऽप्यमी पुराणं जलं वृष्टिरूपेण विक्षिपन्तः आप इव द्वीपमन्नान्यानि धारयन्ति तव प्रियसखास्तेऽप्यस्माकमेव । स त्वमेवं साधारणद्रव्यः सन्नमरत्वं न केवलं देहि । 'एकया प्रतिधापिबत्' इतीन्द्रस्यैव स्तुतिः । ('एकया प्रतिधापिबत् साकं सरांसि त्रिंशतम् । इन्द्रः सोमस्य काणुका ॥' ऋसं. ८।७७।४) । एकेन प्रयत्नेनापिबत् साकं यौगपद्येन, सरांसि पात्राणि सोमस्य पूर्णानि इन्द्रः काणुका कामयमानः कामुकशब्दस्य छान्दसो वर्णव्यत्ययः, आकारस्तु विभक्त्यादेशः, अथवा कान्तकानीत्यादयः (कान्तकानि = प्रियाणि इति दुर्गः । कान्तं प्रियं कं उदकं सोमं रसात्मकं येषु तानि इति सु.) निरुक्तोक्ताः काणुकाशब्दविकल्पाः योजनीयाः । तदेवं सर्वत्र केनचित्प्रकारेणाभियुक्तानामर्थोत्प्रेक्षोपपत्तेः प्रसिद्धतरार्थाभावेऽपि वेदस्य तदभ्युपगमात्सिद्धमर्थवत्त्वम् ।

**उक्तश्चानित्यसंयोगः । ४२ ॥**

**भाष्यम्—** 'परं तु श्रुतिसामान्यमात्रम्' (१।१।८।३१) इत्यत्रेति ।

वा-- परं तु श्रुतिसामान्यमात्रमिति । यजमानस्तावत्प्रार्थयिता इन्द्रश्च प्रार्थ्यमानः सर्वदाऽस्ति । कीकटा नाम यद्यपि जनपदास्तथापि नित्याः । अथवा सर्वलोकस्थाः कृपणाः कीकटाः । प्रमगन्दः कुसीदवृत्तिः, स हि प्रभूततरमागमिष्यतीत्येवं ददाति । नीचाशाखः षण्ढः तदीयं धनं नैचाशाखम् । तच्च सर्वमयज्ञाङ्गभूतं तेषां कर्मण्यप्रवृत्तेस्तदस्माकमाहरेति । शेषं गतार्थम् ।

**लिङ्गोपदेशश्च तदर्थवत् । ४३ ॥**

**भाष्यम्—** 'आग्नेय्याऽऽग्नीध्रमुपतिष्ठते' इति विधानाद्विवक्षितार्थानामेव मन्त्राणां भवति लिङ्गेनोपदेशः । यदि तेऽग्निप्रयोजनास्ततस्ते आग्नेय्या नाग्निशब्दसंनिधानात् ।

वा— आग्नेय्येत्यग्निना देवतया लिङ्गेन तदभिधानसामर्थ्येन वा य उपदेशः स तदर्थार्हतां मन्त्रस्य द्योतयति । देवतातद्धितो ह्येष स्मर्यते यं चार्थप्राधान्येन मन्त्रः प्रकाशयति सा तस्य देवता नाभिधानमात्रेण । एकदेवत्येऽपि मन्त्रे अनेकदेवतान्तरपदप्रयोगे सति तद्देवत्यव्यपदेशाभावात् । प्राधान्याभिधानं च नार्थपरत्वेन विनोपपद्यते ।

**ऊहः । ४४ ॥**

**भाष्यम्--** ऊहदर्शनं च विवक्षितार्थानामेव भवति । किमूहदर्शनम् ? 'न पिता वर्धते न माता' इति । अन्ये वर्धन्ते इति गम्यते । प्रत्यक्षं कौमारयौवनस्थाविरैर्वर्धन्ते मात्रादयः । शब्दो न वर्धते इति ब्रूते । का पुनः शब्दस्य वृद्धिः । यद्द्विवचनबहुवचनसंयोगः ।

वा-- ऊहदर्शनं 'न माता वर्धते' इति । अर्थे च पुष्ट्यादिवृद्धेः प्रत्यक्षत्वात्प्रतिषेधासंभवात् 'आनर्थक्यात्तदङ्गेषु' (३।१।९।१८) इति शब्दे विज्ञायते । तत्रापि स्थौल्यादिवृद्ध्यसंभवादधिकार्थवाचित्वेन द्विवचनबहुवचनयोः प्रतिषेधः । स चार्थपरत्वे सर्वपशुविशेषणमात्राद्युपादित्सायां सत्यामवकल्पते । या चान्यपदवृद्धिसद्भावप्रतीतिरियं च । यद्यपि मातृप्रभृतीनां पारार्थ्यासंबन्धिभेदादेव च भेदसिद्धेरनूह्यत्वं सदेवानुवदति तथापि न्यायावगतानूहसंकीर्तनान्न्यायरहितेषूहसंप्रत्ययात् प्रकृतौ विवक्षितार्थता विज्ञायते । अन्यथा तु तददृष्टमविकृतैरेव साध्येत । तथा 'यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्या' इत्यूहप्रातिदर्शनम्, एवम् 'उस्राणां वपानाम्' इत्येवमादीनां यथार्थमूहितानामेव आम्नानमपि विवक्षितार्थं भविष्यति । इतरथा प्राकृतपदत्यागे अन्यकल्पने च अदृष्टद्वयं कल्प्येत ।

**विधिशब्दाश्च । ४५ ॥**

**भाष्यम्--** विधिशब्दाश्च विवक्षितार्थानेव मन्त्राननुवदन्ति 'शतं हिमाः शतं वर्षाणि जीव्यासमित्येतदेवाऽऽह' इति ।

वा-- विधिरेव च ब्राह्मणाभिधस्तत्रतत्र पर्यायैरवयवान्वाख्याननिर्वचनादिभिश्चार्थप्रकाशनपरत्वं दर्शयति । अर्थानाश्रयणे हि सर्वं तदनर्थकं स्यात् । तस्माद्विवक्षितवचना मन्त्राः इति सिद्धम् ।

शा-- **'यदि दृष्टार्थतैव स्यान्मन्त्राम्नानमनर्थकम् । प्रत्यायनाददृष्टं चेत्तदुच्चारणतो वरम् ॥'** अत्राभिधीयते- **'यस्य दृष्टं न लभ्येत स्यात् तस्या-**

दृष्टकल्पना । अनुष्ठेयस्मृतेश्चेह मन्त्रोच्चारणमर्थवत् ॥ स्मरणं च प्रयोगार्थं प्रयोगाच्च फलोदयः । एवं दृष्टार्थतालाभान्नादृष्टपरिकल्पना ॥ तस्मात्प्रकाशनेनैवं मन्त्राणामुपकारिता । उपायनियमादेव त्वदृष्टपरिकल्पनम् ॥ '

**सोम—— संगतिः**– विधिसमभिव्याहृत-अर्थवाद-विचारानन्तरं अवसरसंगत्या तदसमभिव्याहृतमन्त्रविचारः ।

**वि**—— ' मन्त्रा उरु प्रथस्वेति किमदृष्टैकहेतवः । यागेषूत पुरोडाशप्रथनादेश्च भासकाः ॥, ब्राह्मणेनापि तद्धानात् मन्त्राः पुण्यैकहेतवः ।, न तद्धानस्य दृष्टत्वात् दृष्टं वरमदृष्टतः ॥ '

**गुरुमतेन**—— ' मन्त्रब्राह्मणयोर्यद्वा कलहो विनियोजने ।, न मन्त्रलिङ्गसिद्धार्थमनुवर्त्तीतरद्यतः ॥ '

**भाट्ट**—— मन्त्राणां धर्माधर्मयोः प्रामाण्यमस्ति न वेति चिन्तायां न तावद्विधित्वेन प्रामाण्यम्, तस्य द्वितीये निराकरिष्यमाणत्वात् । नापि स्तावकत्वेन अर्थवादवत्, तेषां हि संनिहितेन विधिना पदैकवाक्यत्वात् युक्तं स्वसमर्पितप्राशस्त्यान्वित-–भावनाविषयकशाब्दज्ञानजनकत्वम् । मन्त्राणां तु दूरस्थत्वेन पदैकवाक्यत्वानुपपत्तेः न तद्विधया प्रामाण्यसंभवः । नापि प्राशस्त्यं स्वातन्त्र्येण वाक्यार्थः, पदार्थविधयोपस्थितत्वात् । नाप्यर्थस्मारकत्वेन प्रामाण्यम्, अनधिगतार्थबोधकत्वाभावेन तदसंभवात् । साममन्त्राणामर्थाभावेन याथार्थ्यस्याप्यनुपपत्तेश्च । न च प्रामाण्याभावेऽपि स्मारकत्वादिना प्रयोजनवत्त्वमात्राङ्गीकारः, ध्यानाद्युपायान्तरेणापि स्मृतिसिद्धौ नियतमन्त्राम्नानवैयर्थ्यात् । प्रयोगसमवेतार्थस्मारकेषु स्मृतिवैयर्थ्याच्च । अतोऽधिकाराख्यप्रकरणादिना अवगतक्रत्वङ्गभावनायां मन्त्राणां उच्चारणमात्रं अदृष्टार्थं विधीयते । स्वाध्यायविधिश्चोच्चारणोपयोगिप्रयोगप्राशुभावफलकतयैव अध्ययनं विधत्ते इति न कश्चिद्दोषः । **इति प्राप्ते, अभिधीयते** । दृष्टे संभवत्यदृष्टकल्पनाऽनुपपत्तेः प्रयोगसमवेतार्थस्मृतिरेव संभवतां मन्त्राणां प्रयोजनम् । असंभवतां कामं भवत्वदृष्टं प्रयोजनम् । शक्यते तु तत्रापि मन्त्राः अर्थप्रकाशनार्थाः प्रकाशनं परमदृष्टार्थमिति वक्तुम् । साम्नां तु ऋगक्षराभिव्यक्तिरेव दृष्टं प्रयोजनमर्थाभावेऽप्यव्याहतम् । अनृक्साम्नां त्वदृष्टार्थत्वमेवेत्यन्यत्र विस्तरः । न त्वेतावता सर्वत्रैव अदृष्टार्थत्वम् । न च मन्त्राणां नियमेन पाठवैयर्थ्यम्, तद्बलेन मन्त्रैरेव स्मर्तव्यमिति नियमकल्पनात् । तस्य चादृष्टफलकत्वेऽपि न दोषः । न चैवं सामर्थ्यादेव तत्रतत्र मन्त्राणां विनियोगसिद्धौ पुनस्तेषां क्वचिद्विनियोगकरणं व्यर्थमिति वाच्यम् । गुणपरिसंख्याद्यर्थकत्वेन सार्थक्यात् । तथाहि, अर्थप्राप्ते अभ्यादाने विकल्पेन चतुर्णां मन्त्राणां लिङ्गेन प्राप्स्यमानानां प्रापकप्रमाणात् पूर्वमेव प्रवृत्तेन ' तां चतुर्भिरभ्रिमादत्ते ' इति वचनेन मन्त्रसंख्योभयविशिष्टादानभावनायां विहितायां एतद्वचनाभावेऽपि मन्त्राणां आदानस्य च प्राप्तिसंभवे एतद्वचनप्रवृत्तिफलजिज्ञासायां समुच्चयफलकचतुःसंख्यारूपगुणप्राप्तिरिति निश्चीयते । तथा लिङ्गादेवाग्निचयनाङ्गभूताश्वरशनादाने प्राप्स्यमानस्य मन्त्रस्य ततः पूर्वप्रवृत्तेन ' इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते ' इत्यनेन वचनेन मन्त्रविशिष्टादाने अश्वरशनाङ्गत्वेन विहिते पूर्ववत् फलजिज्ञासायां गर्दभरशनानिवृत्तिरूपशेषपरिसंख्या फलम् । न च फलतः परिसंख्यायां स्वार्थहानिः परार्थकल्पनं प्राप्तबाध इति त्रैदोष्यम् । अश्वाभिधानीसंबन्धरूपस्वार्थस्यैव विधेयत्वात्, अन्यनिवृत्तिरूपपरार्थस्य अर्थसिद्धत्वेन अकल्पनीयत्वात्, प्रापकप्रमाणस्याप्रवृत्ततया प्राप्तबाधाभावाच्च । अत एव यत्र प्रापकप्रमाणप्रवृत्त्युत्तरमेव परिसंख्याशास्त्रस्य प्रवृत्तिः यथा– ' पञ्च पञ्चनखा भक्ष्याः ' इत्यादौ रागतः प्राप्तपञ्चनखभक्षणे पञ्चातिरिक्तपरिसंख्याकरणं तत्रैव तत् । यत्रापि च श्रौती परिसंख्या यथा ' नानृतं वदेत् ' इत्यादौ तत्रापि न तत् । तदेवं मन्त्राणामर्थस्मारकत्वेऽपि न क्वचिद्विनियोगवैयर्थ्यम् । न चैवमपि प्रामाण्यायोगः, याथार्थ्यलक्षणस्याविघातात् । सामादिसर्वमन्त्रसाधारण्येन तु पदार्थविधया । यथा हि शाब्दबोधं प्रति कारणीभूतज्ञानविषयत्वाच्छब्दः प्रमाणमिति सर्वदर्शनमतं तथा पदार्थज्ञानस्यापि कारणत्वात् पदार्थोऽपि तथेत्यपि वक्तुं शक्यते । अतश्च मन्त्रविनियोगविधौ मन्त्राणां पदार्थत्वात् युक्तं प्रामाण्यमिति । अस्तु वा प्रामाण्याभावेऽपि



प्रयोजनवत्त्वलाभमात्रेण स्वाध्यायविध्युपपत्तेर्न कश्चिद्दोषः । प्रयोजनमर्थवादवदेव स्पष्टम् ।

**मण्डन**—— ' मन्त्रस्यार्थो विवक्षितः । '

**शंकर**—— ' मन्त्राणां च प्रमाणता । '

* मन्त्राधिकरणम् । मन्त्राणां प्रयोजनविशेषः ( मन्त्राधिकरणे वक्ष्यते ) । [ अर्थवादाधिकरणे तु ] मन्त्राणामपि प्रयोजनवत्त्वात् प्रामाण्यमस्ति इत्येतावत् सिद्धम् । शा. १।२।१. * **मन्त्राधिकरणे** अर्थवाद-प्रचोदित– मन्त्रस्मारित – द्रव्यदेवतादियुक्तनामावच्छिन्न-धात्वर्थभावनाख्यधर्मप्रमितौ अर्थवादानां प्ररोचकतयेव मन्त्राणामपि स्मारकतया प्रामाण्यं सिध्यति । **सोम.** १।२।१. * मन्त्राधिकरणे ' उक्तश्चानित्यसंयोगः ' ( १।२।४।४२ ) इत्यत्र कल्पानां प्रवाहनित्यतया नित्यब्रह्मयज्ञविधिविषयत्वं प्रपञ्चितम् । कु. १।३।७।१०. * मन्त्राधिकरणे ऋङ्मन्त्रेऽपि अनुषङ्ग उक्तः । 'अम्यक् सा ते' (ऋसं.१।१६९।३) इत्यस्यामृचि, उपरितन्यामृचि ' त्वं तू न इन्द्र तं रयिं दाः ' इति श्रूयते तदेव अनुषङ्गेण द्रष्टव्यं इति (वा. पृ. १५७) । **वाल.** पृ. ६०. * मन्त्राधिकरणे चेतनप्रतिपादकेषु मन्त्रेषु तत्स्तुत्यानां देवतानाम्, अचेतनप्रतिपादकेषु तदभिमानिदेवतानां शाब्दबोधः, न तु प्रयोक्तुः इति अवोचाम । कु. २।१।१५।४३. * मन्त्राधिकरणे तु अर्थप्रकाशनरूपद्वारव्युत्पादनेन मन्त्राणां स्मारकतया प्रामाण्यं सिध्यति इति व्युत्पाद्यम् । **सोम.** १।२।१. * मन्त्राधिकरणे प्रथनमन्त्रस्याऽऽध्वर्यवत्वेऽपि प्रथनस्य आध्वर्यवत्वसिद्ध्यर्थं प्रथने विधिरङ्गीकृतः । **रसायनं.** पृ. १४६. * मन्त्राधिकरणे मन्त्राणां अभिधानार्थत्वमुक्तम् । **सु.** पृ. ६८८, उच्चारणमात्रप्रयोजनत्वं च निरस्तम् । पृ. ६८९ . * अनुष्ठेयार्थप्रकाशनसामर्थ्यं **मन्त्राधिकरणे** स्थितम् । कु. ३।२।१।१, * अर्थाभिधानलक्षणद्वारसंयोगात् मन्त्रेषु क्रतुशेषत्वं मन्त्राधिकरणे व्यवस्थापितम् । ३।२।१।१ . * ' चत्वारि शृङ्गा ' इत्यस्य तु विषुवति होतुराज्ये प्रयुक्तस्य योऽर्थः स मन्त्राधिकरणे व्याख्यातः । १।३।८।२४ पृ. २७० . * ' देवांश्च याभिर्यजते ददाति च ' इत्यादिमन्त्राणां यच्छब्दादिना विधिशक्तिप्रतिबन्धात् विधायकत्वं नास्ति इति विधिमन्त्राधिकरणे ( २।१।६ ) उक्तम् । **सोम.** १।२।१ . * नियमविधिप्रकारश्च सर्वोऽपि कौस्तुभे मन्त्राधिकरणे प्रदर्शितः । **भाट्ट.** ४।२।९. * मनोतास्याग्निशब्दे देवतावाचिमनोतापदसामानाधिकरण्येन लक्षणाङ्गीकरणं इत्युक्तं मन्त्राधिकरणे । **कौ.** २।१।६।२१, * मन्त्रेष्वपि हि अभ्युदयकारित्वं तन्नियमविधेरेव प्रमेयम्, न मन्त्राणाम् । अत एव मन्त्राणां पदार्थविधयैव प्रामाण्यं इत्युक्तं मन्त्राधिकरणे । १।३।६।१२, * यथा च नास्य वाक्यस्य ( ' यद्यप्यन्यदेवत्यः पशुः आग्नेय्येव मनोता कार्या ' ) वायव्यादिपशौ ऊहनिवर्तकत्वं तस्य प्रकृतौ अन्यायनिगदत्वेन अप्रसक्तत्वात् किन्तु उत्कर्षनिवर्तकत्वमेव, तथा मन्त्राधिकरणे एव प्रपञ्चितम् । ३।३।७।१४ पृ. ३५९. * शंसतेः प्रयोक्तृगतशाब्दबोधप्रधानत्वे, पूर्वपूर्वस्याः ऋचः अर्थावबोधे व्यापृतचित्तस्य प्रयोक्तुः, उत्तरोत्तरस्याः ऋचः सांतत्यानुपपत्तिः इत्यादि मन्त्राधिकरणे अवोचाम । कु. २।१।५।१०. * शक्यार्थानुवादकत्वे अपि अनधिगतसमुदायादिबोधकत्वेन प्रामाण्योपपत्तिः मन्त्राधिकरणे उक्ता । **कौ.** २।२।३।३, * संमीलनादिविधिष्वपि न बृहद्रथंतरत्वादिविवक्षा, किन्तु तत्तत्पृष्ठस्तोत्रारम्भकीभूत–गुणाभिधानजन्यावान्तरापूर्वसाधनत्व–विवक्षैवेत्युक्तं मन्त्राधिकरणे । ३।१।४।८. * ' चतुर्भिरभ्रिमादत्ते' इत्यत्र प्रचयशिष्टसंख्यानुवाद एवायं चतुर्भिः इति शब्दः **मन्त्राधिकरणोक्तगुणविधित्वाक्षेपेण** पूर्वः पक्षः । **सोम.** १२।३।१४. * न चैवं पदाध्याहारोपपत्तावपि ( ' सं यज्ञपतिराशिषा ' इत्यत्र ) अध्याहृतस्य पदस्य ध्यानेनापि स्मरणोपपत्तेः, नावश्यमुच्चारणोपपत्तिः । **मन्त्राधिकरणोक्तन्यायेन** पठितमन्त्रेष्विव अध्याहृतमन्त्रेष्वपि प्रयोगसमवेतार्थप्रकाशकेषु उच्चारणोपपत्तेः । **कौ.** २।१।१८।५०. * यदपि च कृत्स्नवाक्यस्य ( ' सृष्टीरुपदधाति ' इत्यस्य ) अर्थवादत्वे संनिहितविध्यन्तराभावेन अर्थवादत्वमेव न निर्वहतीति, तदपि आपाततः । ' अर्थवादो वा ' इति **मन्त्राधिकरणगुणसूत्र**रीत्या प्राकरणिकविधिविहितसृष्टिमन्त्राणामपि भिन्नदेशकानामेव कृत्स्नवाक्यस्य स्तावकत्वोपपत्तेः ।

कु. १।४।१७।१९ पृ. ११६. * मन्त्रगतानां पदानां **मन्त्राधिकरणन्यायेन** प्रयोगकाले अर्थाभिधायकत्वेन विध्युपयोगः। **कौ.** २।१।७।३२, * 'तत्सिद्धिजाति–गुणाश्रयाः' (१।४।१२।२३) इत्यन्तस्यैकसूत्रत्वेऽपि **मन्त्राधिकरणपूर्वपक्षसूत्रवत्** ('तदर्थशास्त्रात्–मन्त्रानर्थक्यम्' १।२।४।३१ इति सूत्रवत्) प्रत्येकं प्रथमान्तसूत्रोपन्यासो व्याख्यासौकर्यार्थं न विरुध्यते। १।४।१३।२३. * **मन्त्राधिकरणभाष्ये** लिङ्गविनियोज्यमन्त्रप्रकाश्यस्य यज्ञपतिप्रथनस्य पुरोडाशप्रथनफलत्वं निराकृतम्। **पराक्रमः.** ४८।१. * अर्थवादानामवयवार्थपरत्वाभावे 'विधिशब्दाश्च' इति **मन्त्राधिकरणस्थगुणसूत्र**विरोधः। **कु.** १।२।१।१८.

* **मन्त्रानुसारेण** आकाङ्क्षाभावे पदार्थस्य संकोचः अयुक्तः। मन्त्रो हि अनुष्ठानकाले पदार्थं प्रकाशयन् पदार्थशेषः। न च शेषानुसारेण शेषिसंकोचो युक्तः। **पराक्रमः.** ४३।१, * मन्त्रानुसारेण निराकाङ्क्षस्य विधेः संकोचः इन्द्रपीताधिकरणे निराकृतः। ४३।१, * मन्त्रानुसारेण विधेः पर्यवसाननियमः। ४३।२.

* **मन्त्रान्तेन** कर्मादिसंनिपातः। **भा.** ११।४।१९।५३. * मन्त्रान्तेन कर्मादिसंनिपातः आघारे दर्शपूर्णमासयोः। १२।३।१२।२८. **मीको.** पृ. ८५८ 'आघारे मन्त्रान्तेन०' इत्यत्र अधिकरणं द्रष्टव्यम्। * मन्त्रान्तेन कर्मादिसंनिपातो वसोर्धारायामग्निचयने। १२।३।११।२६–२७. **मीको.** पृ. ४७ 'अग्निचयने वसोर्धारायाम्०' इत्यत्र अधिकरणं द्रष्टव्यम्। * **मन्त्रान्ते** कर्मप्रारम्भः करणमन्त्रेषु। १२।३।१०।२५. **मीको.** पृ. १३६४ 'करणमन्त्रेषु मन्त्रान्ते कर्मप्रारम्भः' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **मन्त्रापचारे** नान्यो मन्त्रः प्रतिनिधीयते। न शब्दस्य प्रतिनिधिः। **भा.** ६।३।५।१८.

* **मन्त्राभिधेयत्वावगतिः** प्रसिद्धक्रियान्वयस्य (पुरुषस्य) प्रथमं भवति, तथापि प्रसिद्धक्रियान्वयाभिधानसामर्थ्याभावात् मन्त्रस्य प्रसिद्धक्रियान्वयपदार्थाभिधायित्वाप्रतिपत्तौ श्रुताङ्गत्वान्यथानुपपत्त्या मन्त्राभिधेयस्य क्रियान्वयकल्पनारूपो विपर्ययः पश्चाद्भवति। **सु.** पृ. ११०५.

* **मन्त्राभेदे** सत्यपि पाठभेदात् विषयान्यत्वम्। पाठभेदेन हि प्रयोजनं कल्पयितव्यम्। **वा.** ३।८।७।१७.

* **मन्त्रार्थः** यत्रैक एव तत्र मन्त्रावृत्तिरनर्थिका। **भा.** ११।४।१२।४२, * **मन्त्रार्थं** ह्यनुरुध्यते चोदकः न मन्त्राक्षराणि। अर्थपराणि हि तानि न स्वरूपप्रधानानि। ९।३।२।६. * **मन्त्रार्थान्** यथाविनियोगं मन्त्रविदो वर्णयन्ति। **बृहती.** १।१।७।२४ पृ. २७०. * **मन्त्रार्थस्य** यत्र नानात्वं तत्र मन्त्रस्य आवृत्तिर्भवति, यथा अग्नौ लोकंपृणायाः। **भा.** ११।४।१२।४२.

* **मन्त्रार्थाधिगमोपायाः**। अर्थ–प्रकरण–सूक्त–देवता–आर्ष–निगम–निरुक्त–व्याकरणज्ञानानि अधिगमोपायाः। **वा.** १।२।४।४१। अत्र **सुधा**– अर्थः सामर्थ्यं पदान्तरसामानाधिकरण्यादियोग्यता। प्रकरणं प्रक्रमः। सूक्तं देवताज्ञानं अव्यक्तलिङ्गायामृचि देवताज्ञानहेतुत्वेन अर्थज्ञानोपायः। आर्षज्ञानस्य 'अहं मनुरभवं सूर्यश्च' इत्यादौ अस्मदर्थज्ञानहेतुत्वेन अर्थज्ञानोपायत्वम्। पृ. १११.

* **मन्त्रार्थप्रतिपत्तिः** मन्त्रप्रयोक्तुर्वा मन्त्रश्रोतुर्वेति विचारः। मन्त्रभागस्य कृत्स्नस्य विवक्षितार्थत्वं सिद्धं मन्त्राधिकरणे (१।२।४।३१–४५)।

अत्रेदं प्रतिभाति। अस्मिन्नधिकरणे 'तदर्थशास्त्रात्' इत्यादिपञ्चदशभिः सूत्रैः मन्त्राः अर्थप्रत्यायकाः इत्येतावत् अवगतम्। मन्त्रार्थप्रतिपत्तिः मन्त्रप्रयोक्तुर्वा मन्त्रश्रोतुर्वा इत्येतत्तु सूत्राक्षरतः स्पष्टं न निर्धारितम्। तत्र अनुष्ठानहेतुभूतानुष्ठेयस्मरणार्थत्वं करणमन्त्राणां वदन्तो भाष्यवार्तिकादिकृतः मन्त्रप्रयोक्तुरेव मन्त्रजन्यं शाब्दबोधं मन्यन्ते। तत्तु वयं न मृष्यामहे किन्तु श्रोतुरेव मन्यामहे, शब्दोच्चारणस्य परं प्रत्येव शाब्दबोधजनकत्वस्वाभाव्यात्। नहि स्वस्मिन्नेव शाब्दबोधाय वाक्यप्रयोगः अर्थवान् भवति। वक्तुः तदर्थावबोधस्य शब्दप्रयोगात् पूर्वं अवश्यं भावित्वात्। नहि अबुद्धेऽर्थे वाक्यरचना युज्यते। सूत्रकारोऽपि 'अविशिष्टस्तु वाक्यार्थः' (१।२।४।३२) इति लौकिकस्य वैदिकस्य च



वाक्यस्य अर्थावबोधं निर्विशेषं ब्रुवन् श्रोतुरेव मन्त्रजन्यं शाब्दबोधं अभ्युपगच्छति। अन्यथा लोके श्रोतुः शाब्दबोधः, मन्त्रेषु तु उच्चारयितुः इति वैरूप्यापत्तेः।

किञ्च श्रोतुरेव मन्त्रतः शाब्दबोधः इत्ययमर्थः मन्त्रगतपदशक्त्यैव स्पष्टं लभ्यते। प्रायेण हि सर्वे मन्त्राः संबोध्यविषयाः। तथाहि, 'इषे त्वोर्जे त्वा' इत्ययं मन्त्रः शाखाछेदने विनियुक्तः। तत्र साकाङ्क्षत्वात् त्वाशब्दस्य संबोध्यैकविषयत्वात् विनियोगबलाच्च 'शाखे छिनद्मि' इत्यध्याहार्यम्। शाखे इति संबोधने प्रथमा 'संबोधने च' इति व्याकरणसूत्रेण विहिता। संबोधनं ज्ञापनम्। 'इषे त्वा ऊर्जे त्वा छिनद्मि' इति शाखां प्रति ज्ञाप्योऽर्थः। मन्त्रं प्रयुञ्जानो ज्ञापयति। तज्ज्ञात्वा शाखा अनुजानाति। शाखाशब्देन हि तदभिमानिनी देवता अभेदेन उपचर्यते। ततश्च छेदनस्य तज्ज्ञापनस्य च तत्रान्वयो न विरुध्यते। 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' इति बादरायणसूत्रे (२।१।५।३) तद्भाष्यादौ च स्पष्टमेतत्। 'विष्णो हव्यं रक्षस्व' इत्यादौ तु सूपपादमेतत्।

ननु देवताविग्रहचैतन्यादिकं नवमे निराकरिष्यते। सत्यं निराकरिष्यते उत्सूत्रं भाष्यकृता, न तु सूत्रकृता। प्रत्युत सूत्रकारस्य देवताविग्रहादिकं अभिमतं वार्तिकाभिमतं च इति प्राष्ठतिर्यगधिकरणे प्रपञ्चयिष्यते।

किंच, स्तोत्रशस्त्रीया ऋचः देवतास्तुतिपराः स्तुत्यदेवताः प्रत्येव तद्गुणबोधिकाः। स्तुतिवाक्यानां स्तुत्यं प्रत्येव बोधकत्वस्य लोकसिद्धत्वात्। लोके हि स्तोता गद्यपद्यादिभिः स्तुत्यं स्तौति। स्तुत्यश्च तत्कृतं चमत्कारं जानानः प्रसीदति। वेदेऽपि तथा भाव्यम्। न च सामानि गातुः शस्त्राणि च शंसितुः अग्निवायुसूर्यादिस्तुत्यगुणबोधं स्तोत्रीयाः शस्त्रीयाश्च ऋचः शक्नुवन्ति कर्तुम् 'अग्न आयाहि वीतये' इत्यादिसंबोधनविभक्त्यनुपपत्तेः।

किंच, शस्त्रीयाणामृचां सांतत्यं विहितम् 'संततमन्वाह' इति। पूर्वपूर्वस्या ऋचः उत्तरमुत्तरमर्धर्चं प्रणवान्तमुक्त्वा अविरतमेव उत्तरोत्तरस्या ऋचः पूर्वपूर्वमर्धर्चमुक्त्वा विरमति इति सांतत्यलक्षणम्। नहि एवं शंसितुः होतुः प्रत्यृचं अर्थावबोधः कथमपि संभवति, तत्तदृगवसाने तत्तदर्थावबोधव्यापृतचित्तस्य उत्तरोत्तरस्याः ऋचः सांतत्येन स्फुरणासंभवात्। तत्तत्स्तुत्यदेवताया एव प्रत्यृचं अर्थावबोधे तु न किञ्चित् विरुध्यते।

किञ्च, द्वादशस्य तृतीये 'मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्मादिसंनिपातः स्यात् सर्वस्य वचनार्थत्वात्' (१२।३।१०।२५) इत्यधिकरणे करणमन्त्रेषु मन्त्रान्तेन कर्मादिसंनिपातः सिद्धान्तितः। मन्त्रार्थस्मरणस्य प्रयोक्तृगतस्य अनुष्ठानहेतुत्वे च आदौ मन्त्रोच्चारणं ततः अनुष्ठेयार्थस्मरणं ततः अनुष्ठानं इति क्रमः स्यात्। ततश्च अनुष्ठेयार्थस्मरणेन व्यवहितत्वात् कथं मन्त्रान्तेन कर्मादिसंनिपातो घटेत। मन्त्रबोध्यदेवताया एव मन्त्रतः शाब्दबोधाभ्युपगमे तु न कश्चिद्विरोधः। न च एवं सति करणमन्त्राणां अदृष्टार्थत्वापत्तिः। देवतागतशाब्दबोधस्य मन्त्रजन्यस्य अनुष्ठानहेतुत्वाभावात् इति वाच्यम्। देवतागतं शाब्दबोधं आदायैव दृष्टार्थत्वसंभवात्, जपानुमन्त्रणादिमन्त्रेषु कर्मसमवेतानभिधायिषु तथैव अभ्युपगतत्वाच्च। न च श्रोतृदेवतागतशाब्दबोधस्य कथं दृष्टत्वं देवतानामप्रत्यक्षत्वात् इति वाच्यम्। तर्हि लोकेऽपि वाक्यस्य परप्रत्यायकतया दृष्टत्वानुपपत्तिः, परबुद्धेरप्रत्यक्षत्वात्। अनुमानादिना लोके परस्मिन् शाब्दबोधस्य दृष्टत्वं इति चेत्, वेदेऽपि तुल्यम्, देवतासंबोधनादिलिङ्गात् तस्य तदुपपत्तेः। 'देवानां परिषूतमसीत्याह। यद्वा इदं किंच। तद्देवानां परिषूतम्। अथो यथा वस्यसे प्रतिप्रोच्याहेदं करिष्यामीति। एवमेव तदध्वर्युः देवेभ्यः प्रतिप्रोच्य बर्हिर्दाति। आत्मनोऽहिंसायै' 'अग्नाविष्णू मा वामवक्रमिषमित्याह। अग्निः पुरस्तात्। विष्णुर्यज्ञः पश्चात्। ताभ्यामेव प्रतिप्रोच्यात्याक्रामति' 'अग्निं होतारमिह तं हुवे इति देवेभ्य एव प्रतिप्रोच्य यज्ञेन यजते' 'यदाह। ब्रह्मन्नश्वं मेध्यं भन्त्स्यामि देवेभ्यः प्रजापतये तेन राध्यासमिति। ब्रह्म वै ब्रह्मा। ब्रह्मण एव देवेभ्यः प्रजापतये प्रतिप्रोच्य अश्वं मेध्यं बध्नाति। न देवताभ्य आवृश्चयते। वसीयान् भवति' इत्यादिवाक्यशेषा अपि अत्र अनुकूलाः। इयांस्तु विशेषः। लोके वाक्यरचनस्य प्रयोक्तृपुरुषाधीनत्वात्

अज्ञाते चार्थे वाक्यरचनायोगात् प्रयोक्तुः अर्थज्ञानं नान्तरीयकमस्ति । न तु तत्प्रयोक्तृतात्पर्यविषयीभूतम्, परप्रत्यायनेच्छयैव वाक्यप्रयोगात् । मन्त्राणां तु अपौरुषेयत्वेन नित्यसिद्धतया तत्प्रयोक्तुरर्थज्ञानं नावश्यकम् । तथा च अव्युत्पन्नस्यापि मन्त्रप्रयोगो न विरुध्यते । नहि वक्तुरर्थज्ञानमपि श्रोतुर्वाक्यार्थबोधे प्रयोजकम् । अव्युत्पन्नपुरुष– शुकसारिकाद्युदीरित – कालिदासादिरचितगद्यपद्येभ्यो व्युत्पन्नानां शाब्दबोधदर्शनात् । ‘ देवदत्त घटमानय ’ इत्यत्र संबोधने प्रथमा । संबोधनं अभिमुखीकृत्य ज्ञापनम् । ज्ञानं श्रोतरि, ज्ञापनं प्रयोक्तरि । ततश्च अभिमुखीभूतदेवदत्तनिष्ठं यत् घटानयनज्ञानं तदनुकूलः प्रयोक्तृगतव्यापारो वाक्यार्थः । एवंविधबोधश्च संबोध्यस्य तदितरेषां श्रोतृणां प्रयोक्तुश्च संभाव्यमानोऽपि न सर्वेषां कार्यकारी । संबोध्यगतं घटानयनज्ञानमेव कार्यकारि, अन्यथा ‘ देवदत्त ’ इत्यस्य वैयर्थ्यात् । एवमत्रापि ।

न च छान्दोग्यब्राह्मणे ‘यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा’ इत्युपक्रम्य ‘तस्मादेतानि मन्त्रेमन्त्रे विद्यात्’ इति विधानात् प्रयोक्तुरपि अर्थज्ञानमावश्यकं इति वाच्यम् । नहि अत्र देवताज्ञानं वाक्यार्थज्ञानरूपं विधेयम्, व्युत्पन्नस्य मन्त्रोच्चारणादेव तत्सिद्धेः । ऋषिच्छन्दोविषये तदसंभवाच्च । किन्तु अस्य मन्त्रस्य अग्निर्देवता, इन्द्रो देवता इत्येवं व्युत्पन्नाव्युत्पन्नसाधारण्येन देवतापरिज्ञानमात्रं ऋषिच्छन्दोज्ञानवत् विवक्षितम् । तच्च कात्यायनादिप्रणीतसर्वानुक्रमणिकादिग्रन्थतः मन्त्रार्थज्ञानाभावेऽपि सुलभमेव । प्रयोक्तुः मन्त्रार्थज्ञानस्य आवश्यकत्वे देवताज्ञानविधिवैयर्थ्यादपि न प्रयोक्तुः तदावश्यकं इति प्रतीमः ।

अत एव च उपनीयमानस्य बटोः उपनीतमात्रस्य च मन्त्रविधयः संगच्छन्ते । नहि तस्य मन्त्रार्थज्ञानं कथमपि संभाव्यते । अस्य मन्त्रस्य इयं देवता इति एतावन्मात्रं तु कथंचिदपि ग्राहयितुं शक्यते । ग्राहयन्ति च शिष्टाः । यथा ‘ गायत्र्याः विश्वामित्र ऋषिः, गायत्री छन्दः, सविता देवता ’ इत्यादि ।

अत एव च सर्वाङ्गोपसंहरणाय प्रवृत्तेषु कल्पसूत्रेषु क्वापि मन्त्रार्थस्मरणं अङ्गतया नोपनिबद्धम् । न च तेषु ऋषिच्छन्दोज्ञानस्यापि अनुपबन्धात् अङ्गत्वं न स्यात् इति वाच्यम् । इष्टापत्तेः । नहि कर्मकाले प्रतिमन्त्रं ऋष्यादिज्ञानं तत्र विवक्षितम् । शस्त्रीयासु ऋक्षु सांतत्येन शस्यमानासु तदसंभवात् । किन्तु बहिर्भूतं याजयितृपुरुषयोग्यताविधायकं तत् ।

किञ्च संकर्षकाण्डे चतुर्थस्य तृतीये ‘ यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्यायेत् वषट् करिष्यन् ’ इति वाक्यमुदाहृत्य इतिहासपुराणमन्त्रार्थवादप्रत्यायितदेवतारूपध्यानं अत्र विवक्षितं इति पूर्वपक्षयित्वा आग्नेयं ऐन्द्रं इत्यादौ देवताप्रतिपादकस्य अग्न्यादिशब्दस्य श्रवणात् तस्य च प्रथमोपस्थितस्य त्यागे प्रमाणाभावात्, शब्दे कार्यासंभवे सत्येव अर्थे कार्यविज्ञानात्, इह च शब्दे ध्यानसंभवात् देवताशब्दस्यैव ध्यानं इति सिद्धान्तितम् ( संकर्ष. ४।३।७ ) । तन्न्यायेन ‘ मन्त्रेमन्त्रे विद्यात् ’ इत्यत्रापि देवताशब्दध्यानस्यैव विवक्षितत्वात् मन्त्रजन्यवाक्यार्थज्ञानरूपं तत् इति दूरापास्तम् । न च मन्त्रजन्यशाब्दबोधस्य देवतागतस्य अनुष्ठेयक्रियानुपयोगात् करणमन्त्रत्वव्यवहारोच्छेदः, ‘ इति शाखामाच्छिनत्ति ’ इत्यादौ इतिकरणावगतकरणत्वविरोधः, ‘ चतुर्भिरभ्रिमादत्ते ’ इत्यादौ तृतीयाविरोधश्च इति वाच्यम् । प्रयोक्तुः अर्थज्ञानाभ्युपगमेऽपि तुल्यत्वात् । ‘इषे त्वा’ इति मन्त्रो हि साकाङ्क्षः ‘ शाखे छिनद्मि ’ इत्यध्याहारेण शाखाछेदनप्रकाशकः । तदध्याहारश्च ‘ इति शाखामाच्छिनत्ति इति विनियोजकवाक्यलभ्यः । एवं च आदौ विनियोजकवाक्यत एव शाखाछेदने अवगते पुनः मन्त्रतः तत्स्मरणस्य अदृष्टार्थत्वमवश्यमास्थेयम् । एवं च मन्त्रजन्यार्थस्मरणस्य अनुष्ठेयक्रियास्वरूपनिष्पत्तौ अनुपयोगात् कथं तद्द्वारा मन्त्राणां करणत्वसंभवः ? तस्मात् अतिशयविशेषवत्त्वेन छेदनाद्युत्पत्तौ मन्त्राणां साधनतया तृतीयाश्रुत्यादेरविरोधः उपपाद्यः । अन्यथा ‘ रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति ’ इत्यादौ तृतीयायाः का गतिः । ‘ व्यृद्धं वा एतद्यज्ञस्य यदयजुष्केण क्रियते । इमामगृभ्णन् रशनामृतस्येत्यधिवदति यजुष्कृत्यै यज्ञस्य समृद्ध्यै ’



‘संभृत्या एव संभाराः कर्तव्यं यजुः यज्ञस्य समृद्ध्यै ’ इत्यादिवाक्यशेषा अपि अत्रानुकूलाः । न च मन्त्रजन्यशाब्दबोधस्य प्रयोक्तृगतत्वाभावे दृष्टोपकाराभावात् ऊहोच्छेद इति वाच्यम् । नहि ऊहे शाब्दबोधस्य दृष्टार्थत्वमपि प्रयोजकम्, शाब्दबोधसामान्ये तस्य व्यापारात् । किन्तु प्राकृतस्य वैकृतार्थाभिधानशक्त्यभावः तत्र बीजम् । तथाच ‘ अग्नये वो जुष्टं प्रोक्षामि ’ इति प्राकृतस्य अग्निदेवत्यव्रीहिप्रोक्षणमन्त्रस्य अग्निं प्रति व्रीहिप्रोक्षणज्ञापने समर्थस्य सौर्येष्टौ सूर्यदेवत्यव्रीहिप्रोक्षणाभिधाने अशक्त्या अग्निपदस्य स्थाने सूर्यपदं प्रक्षेप्यम् । ‘ न माता वर्धते न पिता ’ ‘तस्माद्दृत्वं नोहेत्’ इत्याद्यूहदर्शनं अत्रैव लिङ्गं भवति ।

अनुमन्त्रणादिमन्त्रा अपि तत्स्तुत्यदेवताया एव शाब्दबोधजनकाः, न तु प्रयोक्तुः । ‘ प्रस्थिता गा अनुमन्त्रयते’ ‘ अभिसंधाय मन्त्रं जपति ’ ‘ स्पृश्यमभिमन्त्रयते, अभिमृश्य मन्त्रं जपति, अभिमुखेन अभिसंधाय वा जपति ’ इति कल्पभाष्यकृतः । ‘ मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत् । शेषिणं तन्मना भूत्वा ’ इति लक्षणस्य ( अनुमन्त्रणलक्षणस्य ) प्रामाणिकत्वेऽपि संस्मरेत् इत्यनेन वाक्यार्थविधया मन्त्रजन्यज्ञानं न विवक्षितम् । किन्तु मन्त्रार्थत्वप्रकारकमेव विवक्षितम् । तच्च विनियोगबलात् अव्युत्पन्नस्यापि सुलभम् । अत एव मन्त्रोच्चारणतदर्थस्मरणयोः समानकालकत्वबोधकस्य ‘ उच्चारयन्नेव ’ इति शतुः उपपत्तिः । ‘ इति गार्हपत्यमुपतिष्ठते ’ इत्यस्य च इति मन्त्रेण गार्हपत्यमुपेत्य तद्गुणान् प्रख्यापयति इत्यर्थः ।

‘ तदाहुर्नाग्निरुपस्थेयः, कः श्रेयांसं सुतं बोधयिष्यति ’ इत्यादिर्वाक्यशेषश्च इह लिङ्गम् । ‘ उपस्थितिस्तु बोधः स्यात् ’ इत्यत्र च ण्यन्तात् घञि ज्ञापनमुच्यते । वस्तुतस्तु समीपं प्राप्य अवस्थानं उपतिष्ठतेरर्थः । मन्त्रेण गार्हपत्यमुपेत्य तिष्ठतीत्यर्थः । अतस्तत्रापि मन्त्रार्थज्ञानं न प्रयोक्तुर्विवक्षितम् ।

तथा च कर्मकाले कल्पसूत्रादितः विनियोगमात्रं जानानस्य अर्थज्ञानशून्यस्यापि मन्त्रप्रयोगः सिद्धः । मन्त्रार्थज्ञानपूर्वकं अनुष्ठाने तु अभ्युदयः । ‘ योऽर्थज्ञ इत् सकलं भद्रमश्नुते ’ इति श्रवणात् । ‘ स्थाणुरयं भारहारः किलाभूत्, अधीत्य वेदं न विजानाति योऽर्थम् ’ इत्यादिनिन्दा तु नहि निन्दान्यायेन ज्ञानप्रशंसार्था इति निरुक्ते यास्काचार्यैः स्पष्टमेवाभिहितम् । एतेन ‘ मन्त्रार्थज्ञो जपन् जुह्वत् तथैवाध्यापयन् द्विजः । स्वर्गं लोकमवाप्नोति नरकं तु विपर्यये ॥ ’ इत्याद्यपि व्याख्यातम् । कु. पृ. ४६–५०.

* **मन्त्राविधायकत्वाधिकरणम्** । २।१।६।३० –३१ । इदमेव विधिमन्त्राधिकरणम् ।

* **मन्त्राम्नानक्रमः** ( मन्त्रपाठक्रमः ) अनुष्ठानक्रमनियामकः । तदभावे तु विधायकत्वेनोपयुक्तस्यापि विधिवाक्यस्य पदार्थक्रमनियामकत्वम् । **भाट्ट.** ५।१।४.

* **मन्त्रोक्तं** ‘ भद्रम् ’ इति फलं अध्वर्युयजमानोभयगामि ज्योतिष्टोमे उपरवेषु । **वि.** ३।८।१६, * वेद्यतिक्रमणकरण**मन्त्रोक्तं** ( ‘ अग्नाविष्णू मा वामवक्रमिषं० ’ इत्यादिमन्त्रोक्तम् ) फलं आध्वर्यवं दर्शपूर्णमासयोराघारहोमे । ३।८।१५.

* **मन्त्रोच्चारणं** अर्थप्रत्यायनार्थमेव यज्ञे । **भा.** १।२।४।३२. * मन्त्रोच्चारणं प्रतिप्रस्थात्रा अध्वर्योः पृथक् कार्यं चातुर्मास्यगतवरुणप्रघासेषु दक्षिणविहारे । १२।१।९।१८. * **मन्त्रोच्चारणस्य** यागप्रयोगे प्रयोजनं दृष्टमेव अर्थानुस्मरणरूपम्– मन्त्रैरेव मन्त्रार्थः स्मर्तव्यः इति । नियमस्य तु अदृष्टं प्रयोजनम् । **भा.** १।२।४।३१–४५.

* **‘ मन्त्रोपदेशोऽयं तद्रूपत्वाच्छब्दस्य ’** इति योऽसौ न्याय उक्तः तेनैव न्यायेन अदृष्टोऽपि मन्त्रोपदेश एव न भाषिकोपदेशः । ( इदं पूर्वपक्षे ) । भा. १२।३।९।२३ । ( ‘ मन्त्रोपदेशो वा न भाषिकस्य ’ इति १२।३।८।२१ पूर्वमुक्तम्, स एवासौ न्यायः । के. ) * ‘ मन्त्रोपदेशोऽयं तद्रूपत्वाच्छब्दस्य ’ । मन्त्रसमाम्नाये त्रैस्वर्येण पठितानां मन्त्राणामेव ब्राह्मणग्रन्थे ‘इमामगृभ्णन् रशनामृतस्य इत्यश्वाभिधानीमादत्ते ’ इत्यादौ उपदेशः मन्त्ररूपत्वात् तादृशस्य शब्दस्य इति न्यायशरीरार्थः । तेन न्यायेन मन्त्रसमाम्नाये अदृष्टोऽपि ब्राह्मणग्रन्थोक्तो मन्त्रः मन्त्रोपदेश एव नासौ केवलब्राह्मणवाक्यरूपः इति उत्तरवाक्यार्थः । **के.**

* मन्त्रोहः सामोहः संस्कारोहश्चेति ऊहः त्रिविधः। भा. ९।१।१।१.

मन्त्रोहन्यायः। सौर्यादिविकृतौ अतिदिष्टे मन्त्रे वैकृतद्रव्यादिवाचकपदस्य ऊहः ॥

**प्रकृतौ यथोत्पत्तिवचनमर्थानां तथोत्तरस्यां ततौ तत्प्रकृतित्वादर्थे चाकार्यत्वात्। ९।३।१।१ ॥**

**भाष्यम्—** वैकृतानि कर्माण्युदाहरणम्। 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इति, 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' इति, 'चित्रया यजेत पशुकामः' इति, 'वैश्वदेवीं सांग्रहणीं निर्वपेद्ग्रामकामः' इति। अस्ति तु प्रकृतौ निर्वापमन्त्रः 'अग्नये जुष्टं निर्वपामि' इति। तथा, 'इन्द्राय मरुत्वते नैवारमेकादशकपालं निर्वपेत्' इति। अस्ति तु प्रकृतौ व्रीहिलिङ्गो मन्त्रः 'स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि। तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः ॥' इति। तच्चैतच्च विकृतौ चोदकप्राप्तं संदिह्यते किमविकारेण प्रयोक्तव्यम्, उत ऊहेनेति। किं प्राप्तम्? अविकारेणेति। तथा आर्षं अनुगृह्यते। यत् प्रकृतौ कर्तव्यम्, तद्विकृताविति। प्रकृतौ च अग्निव्रीहिशब्दौ प्रयुक्तौ। तस्माद्विकृतावपि तावेव प्रयोक्तव्याविति। एवं प्राप्ते, ब्रूमः। सत्यम्, प्रकृतौ यथोत्पत्तिवचनमर्थानां कृतं मन्त्रे, तथोत्तरस्यामपि ततौ विकृतौ तेनैव मन्त्रेण वचनं कर्तव्यम्, तत्प्रकृतित्वात्। तथा प्राप्ते इदमुच्यते। नैतदेवम्। अर्थे चाकार्यत्वादिति। एतावर्थौ अग्निव्रीहिशब्दौ सूर्यं नीवारं च नाभिदध्याताम्। चशब्दोऽत्र तुशब्दस्यार्थे। मन्त्राणां चार्थवचनं कार्यम्, न स्वरूपम्। स्वरूपे ह्यदृष्टं कल्पयितव्यम्। अर्थवचनेन दृष्ट उपकारः। तस्मादूहितव्याविति।

टुप्— (सामसंस्कारविषय ऊहश्चिन्तितः) मन्त्रविषय इदानीमूहश्चिन्त्यते। स च षडङ्गः। यदि अर्थवन्तः (अर्थप्रकाशनार्थाः) मन्त्राः (न तु उच्चारणमात्राददृष्टं कुर्वन्ति। तथा—) मुख्यार्थाभिधायिनश्च (न तु गौणार्थाः। तथा—) अपूर्वप्रयुक्ताश्च धर्माः (न तु अग्न्यादिस्वरूपप्रयुक्ताः। तथा—) प्रकृतौ समवेतार्थाभिधायिनः (न तु सवित्रादिपदवत् असमवेतार्थाः। तथा—) अपरार्थाश्च (न तु यज्ञपतिशब्दवत् परार्थाः। तथा—) यदि च प्राकृतस्थानापन्नान्यद्रव्यदेवताका विकृतिः इति। [अनेन षडङ्गत्वमुक्तम्]। तथा ऊहोऽपि (स्वयं) अष्टविधः। क्वचित् प्रकृतिरूह्यते यथा सूर्याय (जुष्टं) इति (लिङ्गं वचनं च तदवस्थम्)। क्वचित् लिङ्गमूह्यते यथा (वस्व्यसि रुद्राऽसि इत्येकहायन्यां मन्त्रः) वसुरसि रुद्रोऽसि इति (ऊह्यते) साण्डे (अत्र प्रकृतिवचने तदवस्थे)। क्वचित् वचनमूह्यते यथा (छागस्य वपाया मेदसः इत्ययं मन्त्रः) प्राजापत्येषु छागानां (इत्येवमूह्यते। अत्र प्रकृतिलिङ्गे तदवस्थे)। क्वचित् प्रकृतिश्च लिङ्गं च यथा (अग्नये जुष्टं इति मन्त्रः) आदित्यै जुष्टं इति (अत्र वचनं तदवस्थम्)। क्वचित् प्रकृतिवचने (ऊह्येते) यथा (अग्नये जुष्टं इत्यत्र) विश्वेभ्यो देवेभ्यः इति (ऊह्यते। अत्र लिङ्गं तदवस्थम्)। क्वचित् लिङ्गवचने (ऊह्येते न प्रकृतिः। यथा 'प्रास्मा अग्निं भरत' इत्यत्र अस्मैपदं पुंलिङ्गैकवचनं भङ्क्त्वा महला आलभेत इत्यादौ) प्राभ्योऽग्निं इति (स्त्रीलिङ्गबहुवचनरूपेण ऊह्यते। अत्र प्रकृतिस्तदवस्था)। क्वचित् त्रयाणामपि (प्रकृतिलिङ्गवचनानामूहः) यथा ('आपो देवीः शुद्धाः स्थ' प्रोक्षण्यभिमन्त्रणमन्त्रे 'घृतं प्रोक्षणं' इति विहिते) घृते प्रोक्षणे 'घृत देव शुद्धमसि' (इति)। क्वचित् (तु तदवस्थस्य सकलस्य) अभ्यासः (यथा पशुगणे अधिगुप्रैषे) एकधैकधा इति (एकधाशब्दः अभ्यस्यते)।

(तत्र) यथा प्रकृतेरूहः (तथा 'अर्थाभिधानसंयोगात्' ९।१।१२।३६ इत्यादिना) प्रथमे पादे प्रायेण चिन्तितः (अल्पशस्तु इदानीं प्रकृत्यूहः यथा अस्मिन्नधिकरणे प्रतिनिध्यधिकरणे च) इदानीं वचनोहः (बाहुल्येन) चिन्त्यते।

(इदानीं प्रकृतमधिकरणमनुसंधत्ते—) ननु 'फलदेवतयोश्च' (९।१।३।४) इत्येवमादिना गतार्थमेतत्। उच्यते। यत् तत्रानाशङ्कितम्, तत् (अत्र) आशङ्क्यते। (किं तदित्याह—) चोदकः (हि) द्विविधः शब्दचोदकः अर्थचोदकश्च (अक्षरकार्यं अर्थशब्देनोच्यते)। तत्र 'सौर्यं चरुं निर्वपेत्' इति (एतत्) विध्यादिवाक्यं (साकाङ्क्षं) विध्यन्तवाक्यैः (दार्शपौर्णमासिकैः) निराकाङ्क्षीक्रियते (विध्यन्ताधिकरणन्यायात् ७।४।२। तत्र) वाक्यत्वसामान्याच्च (यथा) प्रयाजादिवाक्यानां (विधायकानां स्वार्थं विधातुं इह) अतिदेशः, एवं मन्त्रवाक्यानामपि (स्मरणार्थमतिदेशः) इति पूर्वः पक्षः। उपकारापेक्षया तु सिद्धान्तः। अर्थचोदकत्वेन (कारणेन) सः (उपकारातिदेशः) बलवान्। (कुतः?) अर्थाभिधानाय हि शब्दचोदकः प्रवर्तते, न (शब्दस्वरूपे शास्त्रेण) पृथक् (अतिदेशोऽस्ति) अदृष्टकल्पनाभयात्। तस्मात् नास्त्यक्षराणां (स्वरूपेण) अतिदेशः। अर्थातिदेशस्तु (साक्षात् कार्यसिद्ध्यर्थत्वात् आवश्यकः) इति।



**लिङ्गदर्शनाच्च। २ ॥**

**भाष्यम्—** लिङ्गं खल्वप्यस्मिन्नर्थे भवति 'न माता वर्धते न पिता न भ्राता न सखा' इति। प्रत्यक्षं भ्रातरं सखायं च वर्धमानं पश्यामः। अतो नार्थवृद्धिप्रतिषेधसंवादोऽयम्। शब्दवृद्धिप्रतिषेधस्तु— न भ्रातृशब्दो वर्धते, न सखिशब्द इति। का च तयोर्वृद्धिः? वर्णान्तरोपजननम्। सा, एकस्मिन् भ्रातेति, द्वयोर्भ्रातराविति। एतदुक्तं भवति। न भ्रातृशब्दः ऊह्यते, न सखिशब्दश्चेति। अतोऽवगम्यते, अन्य ऊह्यन्ते इति। यथा 'न भवन्तः समाजं गच्छन्ति, न भवन्तः प्रेक्षका भवन्ति' इत्युक्ते, नूनमन्ये गच्छन्तीति गम्यते। एवमिहापि 'न भ्रातोह्यते न सखा' इत्युक्ते, नूनमन्य ऊह्यन्ते इति लिङ्गदर्शनम्।

**भाष्यम्—** स्थितं तावदपर्यवसितमेव, अन्तरा चिन्तान्तरं वर्तिष्यते। (अत्र मध्ये 'जातिनैमित्तिकं॰' इति सूत्रे अन्तरागर्भिण्यधिकरणं विरचितम्। तत्तु **मीको.** पृ. १२२६ 'ऊहः रक्तपदस्य॰' इत्यत्र द्रष्टव्यम्।) तत एव अन्तरागर्भिणीन्यायो भवति इत्यन्यथा सूत्रं (सूत्रद्वयं) वर्ण्यते— 'लिङ्गदर्शनाच्च, जातिनैमित्तिकं यथास्थानम्' इति।

**लिङ्गदर्शनाच्च। २ ॥**

**भाष्यम्—** इतश्च पश्यामो विकृतौ ऊहः कर्तव्यः इति। कुतः? लिङ्गं दृश्यते। किं लिङ्गं भवति? एवमाह 'विश्वेषां देवानामुस्राणां वपानां मेदसोऽनुब्रूहि' इति।

**जातिनैमित्तिकं यथास्थानम्। ३ ॥**

**भाष्यम्—** जातिशब्दानामूहितानां समुच्चारणं भवति, तत् मन्त्राणां अर्थवचनपक्षे एव कल्पते। ऊहे अक्रियमाणे अनर्थपरत्वे अग्निच्छागशब्दावेव प्रयुज्येयाताम्। तत्र अमीषामक्रियार्थानां वचनमनर्थकमेव स्यात्। न च अत्रैते शब्दा विधीयन्ते, विधायकस्याभावात्। ननु प्रयोगवचनेन विधायिष्यन्ते, एवं तर्हि अदृष्टार्थता दोषः। तस्मात् अस्ति ऊह इति।

**अविकारमेकेऽनार्षत्वात्। ४ ॥**

**भाष्यम्—** एके पुनराचार्या अविकारमनुमन्यन्ते। अस्मिन्नर्थे लिङ्गं वक्ष्यति। तस्येयं प्राप्तिः क्रियते। यदि ह्यूह्येत, आर्षश्चोदको बाध्येत। तस्मादनूह इति।

**लिङ्गदर्शनाच्च। ५ ॥**

**भाष्यम्—** लिङ्गमस्मिन् अर्थे दृश्यते। आग्नेये वैकृते पशावाम्नायते 'अग्नये छागस्य वपाया मेदसोऽनुब्रूहि' इति। ऊहपक्षे न विधातव्यं स्यात्। विधीयते तु। तस्मादनूह इति। अपि चेदमपरं लिङ्गमग्नीषोमीये पशौ श्रूयते 'यद्येकं यूपमुपस्पृशेत्, एष ते वायो इति ब्रूयात्। यदि द्वौ, एतौ ते वायू इति। यदि बहून्, एते ते वायव इति'। यद्यूहो भवेदेतदपि प्राप्तत्वान्न विधातव्यं स्यात्। विधीयते तु। तस्मादप्यनूह इति।

**विकारो वा तदुक्तो हेतुः। ६ ॥**

**भाष्यम्—** वाशब्देन पक्षो व्यावर्त्यते। यदुक्तं अविकार इति, तन्न। ऊहः स्यात्। अस्मिन्नर्थे पूर्वोक्तो हेतुः 'अर्थे चाकार्यत्वात्' इति। मन्त्रार्थं ह्यनुरुध्यते चोदको न मन्त्राक्षराणि। अर्थपराणि हि तानि, न स्वरूपप्रधानानि। तस्मादूहः स्यात् पूर्वेणैव हेतुना। केवलं लिङ्गपरिहारो वक्तव्यः।

**लिङ्गं मन्त्रचिकीर्षार्थम्। ७ ॥**

**भाष्यम्—** यत् लिङ्गमुक्तम्, 'अग्नये छागस्य वपाया मेदसोऽनुब्रूहि' इति, तत् मन्त्रचिकीर्षया विधीयते। इतरथा, ऊहितत्वादमन्त्रः स्यात्। तस्मात् पुनर्वचनम्।

**नियमो वोभयभागित्वात्। ८ ॥**

**भाष्यम्—** यल्लिङ्गमुक्तम् 'एष ते वायो' इति, तत् परिह्रियते। यदि ह्येतन्नोच्येत, यदि द्वावुपस्पृशेत्, यदि

बहूनिति, सर्वे इमे मन्त्रा एकयूपे भवेयुः। उभयमपि मा प्रकृतौ भूदिति नियमः क्रियते। यदि द्वावुपस्पृशेत्, एतौ ते वायू इति ब्रूयात्। यदि बहून्, एते ते वायव इति ब्रूयात्। तस्मादेतदप्यलिङ्गमिति।

**शा**— मन्त्राणामिदानीमूहश्चिन्त्यते ( प्राक्प्रस्तुतावशिष्टो मन्त्रोह एवेदानीं चिन्त्यते इत्यर्थः )। 'अग्नये जुष्टं निर्वपामि' इति 'व्रीहीणां मेध सुमनस्यमानः' इत्येतौ मन्त्रौ किं सौर्यादिषु नीवारादिषु च ऊहितव्यौ, उत नेति संशये '**प्रकृतौ यादृशो मन्त्रश्चोदकेन हि तादृशः। प्राप्यते विकृतौ, तस्मान्नोहस्तत्रावकल्पते॥**' इति प्राप्ते, अभिधीयते। '**प्रकृतौ यादृशं रूपं मन्त्राणां हि विवक्षितम्। तादृगेवातिदेष्टव्यं विकृतौ नाविवक्षितम्॥**' तस्मादूहः।

**सोम**— प्रथमपादे मन्त्रोहमध्ये एव अवान्तरसंगतिलोभेन सामोहोपोद्घातप्रसक्त्या सोपोद्घातं सामोहविचारं तत्संगतसंस्कारोहविचारं च परिसमाप्य इदानीं स एव मन्त्रोहः प्रस्तूयते इत्यानन्तर्यम्। प्रथमपादे प्रायेण प्रकृत्यूहो विचारितः। अत्र पादे (तृतीये) तु प्रायेण वचनोहश्चिन्त्यते, प्रकृत्यूहस्तु अल्पशः। **सूत्रार्थस्तु**— प्रकृतौ यथा उत्पत्तिमत्पदयुक्ततया मन्त्रा उत्पन्नाः तत्पदयुक्तैरेव मन्त्रैः अर्थानामभिधानं कृतं तद्विकारत्वात् उत्तरस्यामपि ततौ विकृतावपि तथैव अग्निपदयुक्तैरेव अभिधानं कर्तव्यं इति प्रापितं पक्षं चशब्देन निराचष्टे। नैतदेवम्। अर्थे अकार्यत्वात् वैकृतेऽर्थे यथाऽऽम्नातमन्त्रप्रकाश्यत्वासंभवात् इति।

**वि**—'अग्निव्रीह्यादयो नोह्या ऊह्या वा, नहि चोदनात्।, विवक्षा देवहविषोर्दृष्टत्वादूह्यते ततः॥' ('इन्द्राय मरुत्वते नैवारमेकादशकपालम्' इत्यादौ नीवारविषये ऊहो द्रष्टव्यः )।

**भाट्ट**— 'अग्नेरहं देवयज्यया' 'व्रीहीणां मेध' इत्यादिमन्त्रेषु समवेतार्थत्वादियुक्तिबलेन अग्निव्रीह्यादिपदानां सौर्यनीवारादिषु द्वारान्तरसंबन्धनिमित्तान्यथाभावात्मकः ऊहः सिद्ध एव प्रोक्षणादिवत्। तद्दृशेन पदान्तरप्रक्षेपणात्मको भाक्त ऊहः परमार्थसिद्धोऽपि आक्षिप्य समाधीयते। प्रकृतौ हि अग्निव्रीह्यादिपदेन अग्निव्रीह्यादीनां लक्षणयैव अपूर्वसाधनत्वेन रूपेण प्रतिपादनात् सूर्यनीवारादीनामपि तेनैव रूपेण प्रकाशनोपपत्तेः न पदान्तरप्रक्षेपो युक्तः। अत एव 'पाशान्' इति बहुवचनान्तस्य मन्त्रस्य प्रकृताविव एकपाशिकायां विकृतावपि लक्षणयैव एकत्वप्रकाशकत्वात् नोहः। नहि अग्निव्रीह्यादिपदं शक्त्या अपूर्वसाधनीभूतद्रव्यदेवतादिपरम्, अपि तु लक्षणयैव 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा' इति न्यायात्। विशेषतश्च शब्दस्यैव देवतात्वात्, तस्य चाग्निपदेन लक्षणयैव प्रतीतेः सूर्यस्यापि तथैव प्रतीतिसिद्धौ नोहसिद्धिः। **इति प्राप्ते**, सत्यपि अपूर्वसाधनत्वस्य प्रकृतौ उद्देश्यताऽवच्छेदकत्वे अग्निव्रीह्यादिपदेन स्वशक्तिजन्यबोधद्वारा अपूर्वसाधनीभूतद्रव्यदेवतादि संस्कुर्यात् इत्यर्थोऽवगम्यते। अत एव शक्तिजन्यबोधोऽपि व्रीहित्वाग्नित्वादिप्रकारक एव, न तु अपूर्वसाधनत्वप्रकारकः। लिङ्गकल्प्यश्रुतिवाक्येन तदवच्छिन्नस्य उद्देश्यत्वेऽपि मन्त्रान्तर्गतव्रीह्यग्न्यादिपदे लक्षणायां प्रमाणाभावात्। अत एव तादृशबोधेनापि प्रोक्षणजन्यादृष्टवत् विशेष्ये एव द्रव्यदेवतादौ संस्कारो जन्यते, न तु उद्देश्यताऽवच्छेदकेऽपि अपूर्वसाधनत्वे। अतश्च उपकारपृष्ठभावेन द्वारस्य शक्तिजन्यबोधस्य विकृतौ अतिदेशे तत्पृष्ठभावेन प्राप्यमाणस्य अग्न्यादिपदस्य सौर्यादौ बाधात् द्वारसिद्ध्यर्थं पदान्तरप्रक्षेपो युक्त एव। अत एव अग्निव्रीह्यादिपदानां अवघातादिवत् तत्त्वेनैव रूपेण प्रकृतौ निरुक्तकार्यजनकत्वेन विधानेऽपि तत्कार्याभावे इव तत्कार्यस्य तेन कर्तुमशक्यत्वेऽपि युक्त एव तस्य विकृतौ लोपः। तत्र तु एतावान् विशेषः, कार्याभावे लोप एव, अशक्यत्वे तु तज्जनकोपायान्तरानुष्ठानमिति।

यत्तु मूले प्रकृतावेव नावघातस्य तत्त्वेन विधेयता, अपि तु अपूर्वसाधनताविशेषोपायत्वेन, इतरथा अदृष्टार्थत्वापत्तेः। अतश्च अग्न्यादिपदस्य स्वरूपेण अविवक्षितत्वात् युक्त एव पदान्तरप्रक्षेप इति, **तन्न**, तथात्वे प्रकृतावेव व्रीहिपर्यायाणां विदलनादेश्च अनुष्ठाने वैगुण्यानापत्तेः, येनैव रूपेण मुख्यकार्यं प्रति जनकता, तेनैव रूपेण नियमादृष्टं प्रत्यपि जनकत्वौचित्याच्च। यत्तु अग्निपदेन शब्दरूपदेवताप्रकाशनार्थं लक्षणावश्यम्भाव इति,



**अत्र ब्रूमः**। सत्यामपि लक्षणायां येन स्वशक्यवाचकत्वसंबन्धेन प्रकृतौ शब्दलक्षणा, न तेनैव संबन्धेन विकृतौ इति द्वारभेदात् युक्तः पदान्तरप्रक्षेपः। **वस्तुतस्तु**, शब्दस्य देवतात्वेऽपि अपूर्वीयदेवतारूपशब्दवाच्यत्वसंबन्धेन अर्थस्यापि अपूर्वसंबन्धात् प्रकाश्यत्वोपपत्तेः न मन्त्रान्तर्गताग्न्यादिशब्दे शब्दलक्षणा, इति युक्तो व्रीहिपदे इव पदान्तरप्रक्षेपः। अत एव सर्वत्रैव तत्प्राप्तौ 'पूयति वा एतदृचोऽक्षरं यदेनमूहति, तस्मादृचं नोहेत्' इति ऋगक्षरोहपर्युदासोऽपि संगच्छते। अत एव तत्कार्यप्रकाशनार्थं तत्प्रकाशनसमर्थऋगन्तरोहः एव कार्यो वैदिकत्वसामान्यात्, तदसंभवे लौकिकवाक्योहः। तथा 'अन्वेनं माता मन्यताम्' इत्याद्यध्रिगुप्रैषे मात्रादिशब्दोहप्रतिषेधोऽपि 'न माता वर्धते, न पिता' इत्यादिरूपः अन्यत्रोहलिङ्गम्। यद्यपि च नायं प्रतिषेधविधिः न्यायप्राप्तत्वात् इत्युक्तं मन्त्राधिकरणकौस्तुभे, तथापि नित्यानुवादः एवायं अन्यत्रोहलिङ्गम्। न च ऊहस्य न्यायसिद्धत्वे विकृतिविशेषे 'विश्वेषां देवानामुस्राणां वपानां मेदसोऽनुब्रूहि' 'छागस्य वपाया मेदसोऽनुब्रूहि' इत्यादिमन्त्रपाठवैयर्थ्यम्, तस्य मन्त्रभ्रेषप्रायश्चित्तप्रातिफलकमन्त्रत्वसिद्ध्यर्थत्वात्।

**मण्डन**— 'निर्वापमन्त्रे ध्रुवमूहनं स्यात्।'

**शंकर**— 'व्रीह्यादिमन्त्र ऊह्यः स्यात्।'

* **मन्त्रकल्प्यः** प्रतिषेधो द्विविधः, मन्त्रगतस्यैव नञ्युक्तवर्तमानापदेशस्य निषेधत्वकल्पनात् निषेधयुक्तवाक्यान्तरकल्पनाच्च। बाल. पृ. ३०, * मन्त्रकल्प्यः विधिः द्विविधः, मन्त्रगताख्यातस्यैव लेट्त्वकल्पनात् विधियुक्तवाक्यान्तरकल्पनाच्च। पृ. १२.

* **मन्त्रकाण्ड-विधिकाण्डयोः** उपांशुग्रहः प्रथमः, अन्तर्यामग्रहो द्वितीयः, ऐन्द्रवायवस्तृतीयः, मैत्रावरुणश्चतुर्थः। धाराग्रहेषु तु ऐन्द्रवायवः प्रथमः। वि. १०।५।१७.

* **मन्त्रक्रमेणैव** अनुष्ठानम्, तदभावे तु विधिरपि स्मारक इति तत्रैव तत्क्रमस्य प्राभाण्यम्। तेनाग्नेयधर्माः प्रथमं ततः अग्नीषोमीयस्य दर्शपूर्णमासयोः। **भा.** ५।१।९।१६. * मन्त्रक्रमेण ब्राह्मणक्रमो बाध्यते, यथोक्तं 'मन्त्रतस्तु विरोधे स्यात्०' इति (५।१।९।१६)। अप्राप्तबाधः। बाल. पृ. १४३.

* **मन्त्रगतं** आख्यातं न विधायकम्। २।१।६।३०–३१. 'विधिमन्त्राधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्। * मन्त्रगतं लिङ्गं प्राप्तस्य द्योतकम्, चोदनागतं प्रापकम्। **भा.** ८।१।१६।३१. * **मन्त्रगतः** यजते ददाति इति भावशब्दः विधायको न वेति विचारे न विधायकः, किन्तु अभिधानवाचकः। (विधिमन्त्राधिकरणम्)। २।१।६।३०–३१. * **मन्त्रगताः** अपि विधायकाः क्वचित् दृश्यन्ते 'वसन्ताय कपिञ्जलानालभते' इत्यादयः। **वा.** २।१।६।३०. * **मन्त्रगतस्यैव** नञ्युक्तवर्तमानापदेशस्य निषेधत्वकल्पनात् मन्त्रकल्प्यः प्रतिषेधः। **बाल.** पृ. ३०. * **मन्त्रगतानां** ब्राह्मणगतानां चाख्यातशब्दानां येषां विधिशक्तिरपगच्छति तेषामभिधायकत्वम्। **वा.** २।१।६।३१.

* **मन्त्रगताख्यातस्यैव** लेट्त्वकल्पनात् मन्त्रकल्प्यः विधिः यथा 'वसन्ताय कपिञ्जलानालभते' इति। **बाल.** पृ. १२.

* **मन्त्रजन्यार्थस्मरणं** कर्मणोऽङ्गम्। **वि.** १२।३।१०.

* **मन्त्रजपः** अस्थियज्ञे मृताधिकारपक्षे लुप्यते। (कृत्वाचिन्ता)। वि. १०।२।१८.

* **मन्त्रजातम्।** याज्यानुवाक्यादिसंनिपत्योपकारिमन्त्रव्यतिरिक्तस्य आरादुपकारिणः स्तोत्रादेः कृत्स्नस्य मन्त्रजातस्य निष्फलसवनाङ्गत्वायोगेन ज्योतिष्टोमाङ्गत्वावसायात् सवनीयाद्यङ्गान्तरवत् स्तोत्राद्यपि प्रति आधारत्वमात्रत्वं सवनानाम्, न तु प्रधानता इति सवनीयादितुल्यता वक्तुं शक्या। सु. पृ. ११८०.

* **मन्त्रतः** कर्तृतश्च विशेषग्रहणं सवनीयपशौ मैत्रावरुणकर्तृकम् 'अग्निमद्य होतारमवृणीतायं सुतासुती यजमानः' इति अग्नीषोमीयात् अनतिदिष्टात् सूक्तवाकप्रैषात् तन्निश्रिणि सवनीयहविरङ्गानां मैत्रावरुणरहितानां प्रसङ्गसिद्धौ। बाल. पृ. १४८. * '**मन्त्रतस्तु विरोधे स्यात् प्रयोगरूपसामर्थ्यात् तस्मादुत्पत्तिदेशः सः**' (५।१।९।१६) इत्यस्मिन्नधिकरणे मन्त्रस्य कर्मकाल·

प्रयोज्यत्वात् रूपेणाभिधानेनैव कर्मप्रयोगे अनुष्ठाने सामर्थ्यात् स्मारकत्वावगतेः स्मृतिकार्यत्वेन चानुष्ठानस्य स्मृतिक्रमेण क्रमस्य न्याय्यत्वात् मन्त्रब्राह्मणपाठयोः विरोधे मन्त्रपाठक्रमानुरोधेन पश्चाद्विहितस्यापि आग्नेयस्य प्रागनुष्ठानं इत्युक्ते, ननु ब्राह्मणपाठस्यापि तदेव दृष्टमनुष्ठेयस्मरणं प्रयोजनं इत्याशङ्क्य 'उत्पत्तिदेशः सः' इति सूत्रावयवेन कर्मोत्पत्तिमात्रार्थो ब्राह्मणपाठः इति वक्ष्यते। 'उत्पत्तिदेशः सः' इति यत् सूत्रकृत् वक्ष्यति तत् विरोधे सति न तु अविरोधेऽपि। सु. पृ. ६६७.

**मन्त्रतस्तु विरोधे स्यात् प्रयोगरूपसामर्थ्यात् तस्मादुत्पत्तिदेशः सः। ५।१।९।१६॥**

दर्शपूर्णमासगतः अग्नीषोमीययागः पूर्वमाम्नातः आग्नेययागः पश्चादाम्नातः। हौत्रकाण्डे आग्नेययाज्यानुवाक्ये पूर्वमाम्नाते, अग्नीषोमीययाज्यानुवाक्ये पश्चादाम्नाते, एवं आध्वर्यवकाण्डे याजमानकाण्डे च। एवं सति ब्राह्मणपाठो वा बलीयान् मन्त्रपाठो वा इति विचारे अनियम इति पूर्वपक्षं तुशब्देन निरस्य सिद्धान्तमाह। ब्राह्मणपाठमन्त्रपाठयोर्विरोधे मन्त्रतः मन्त्रपाठानुसारेण अनुष्ठानं स्यात्। मन्त्रपाठो बलीयान्। प्रयोगरूपसामर्थ्यात् प्रयोगे रूपस्य मन्त्रस्वरूपस्य सामर्थ्यात् समवायात्। मन्त्रो हि प्रयोगे समवैति। ब्राह्मणं तु विधाय कृतार्थं सत् प्रयोगे न समवैति। तस्मात् सः ब्राह्मणपाठः उत्पत्तिदेशः प्रयोगोत्पत्तेः देशः प्रदेशो भवति। अनुष्ठाने मन्त्रः संनिकृष्टः ब्राह्मणं तु विप्रकृष्टम्। तस्मात् मन्त्रपाठो ब्राह्मणपाठात् बलीयान्। तथा च मन्त्रानुसारेण आग्नेयः पूर्वं पश्चादग्नीषोमीयः इति सिद्धान्तः। **के.**

❋ "विधायकं सदप्यर्थं ब्राह्मणं स्मारयिष्यति। '**मन्त्रतस्तु विरोधे स्यात्**' इत्यत्रैतद्वदिष्यते॥" **वा.** २।१।६।३१ पृ. ४३२.

❋ **मन्त्रत्वं** ऊहप्रवरनामधेयानामस्ति वा नास्तीति विचारे नास्तीति निर्णयः। २।१।९।३४. ❋ मन्त्रत्वं नास्ति उद्भिदादीनाम्, अध्येतृस्मरणाभावात्। **वा.** १।४।१।१. ❋ विशिष्टक्रमकपदसमूहात्मकवाक्यविशेषस्य **मन्त्रत्वम्**। **सु.** पृ. ९९. ❋ **मन्त्रत्वेन** आख्यातविशेषाणां विधिशक्तिस्तिरोधीयते इति न नियमः। **वा.** २।१।६।३० पृ. ४३१.

❋ **मन्त्रनियमार्थवत्ता**। यस्य (मते) तु अदृष्टार्थता तस्य क्रमान्यत्वे तदुच्चारणजन्यादृष्टप्रमाणाभावात् क्रमान्यत्वं न युक्तं इति नियमार्थवत्ता। **वा.** १।२।४।३१–२.

❋ **मन्त्रपदानां** एतद्धि दृष्टं प्रयोजनं यत् समवेतमर्थं प्रकाशयन्ति इति। **भा.** ९।१।११।३६.

❋ **मन्त्रपाठो** ब्राह्मणपाठात् प्रबलः, यथा आग्नेयाग्नीषोमयोः क्रमे। ५।१।९।१६. ❋ **मन्त्रपाठात्** मन्त्रलिङ्गोपोद्बलितब्राह्मणपाठो बलवान्। **संकर्ष.** ४।२।६.

❋ **मन्त्रपाठानन्तरमेव** पदार्थानुष्ठानम्। १२।३।१०।२५.

❋ **मन्त्रपौरुषेयवाक्ययोः** तुल्ये अर्थाभिधानसामर्थ्ये मन्त्रवाक्यनियमः अदृष्टार्थः। अथवा अनेकध्यानादिस्मरणोपायप्रसङ्गे वाक्यनियमात्। (अदृष्टार्थता। इदं पूर्वपक्षे)। **वा.** १।२।४।३१–३.

❋ **मन्त्रप्रकाश्यः** देवतारूपः अर्थः। **सु.** पृ. ६४१. ❋ लिङ्गविनियोज्य**मन्त्रप्रकाश्यस्य** यज्ञपतिप्रथनस्य पुरोडाशप्रथनफलकत्वं निराकृतं मन्त्राधिकरणभाष्ये। **पराक्रमः.** ४८।१.

❋ **मन्त्रप्रकाश्यत्वम्**। 'येषां पृथगनुष्ठानमर्थाक्षिप्तं प्रतीयते। तेषां मन्त्रप्रकाश्यत्वं नानुनिष्पादिनां भवेत्॥' **वा.** ३।२।१०।२७.

❋ **मन्त्रप्रकाश्यफलम्**। करणमन्त्रप्रकाश्यफलस्य याजमानत्वम्। ३।८।१३।२६–२८.

❋ **मन्त्रप्रतिपाद्यस्य** प्रजापत्यादेरेव देवतात्वम्। 'प्रजापते न त्वदेतान्यन्य इति जुहुयात्' इत्यादौ। **संकर्ष.** २।४।२.

❋ **मन्त्रप्रयोगः** कर्मकालीनोऽनध्यायादावपि। १२।३।७।१८–१९. **मीको.** पृ. ३६४. 'अनध्यायादावपि कर्मकालीनमन्त्रप्रयोगः' इत्यत्र अधिकरणं द्रष्टव्यम्। ❋ अर्थाभिधानार्थश्च **मन्त्रप्रयोगः**। **भा.** ८।३।६।३६.

❋ **मन्त्रप्रयोगकाले** शक्तिज्ञानापेक्षायामपि विनियोगकाले अनपेक्षणम्। **सु.** पृ. १२११.



❋ **मन्त्रप्रामाण्यम्**। मन्त्राणां पदार्थत्वेन प्रामाण्यं वाक्यार्थे पदार्थानां प्रामाण्याभ्युपगमात् इति **पार्थसारथिमिश्राः** शास्त्रदीपिकायामाहुः। तस्यार्थः तर्कपादे 'उत्पत्तौ वाऽवचनाः स्युः' इति सूत्रे (१।१।७।२४) आचार्यैः 'अत्राभिधीयते, यद्यप्यस्ति मूलान्तरं न नः। पदार्थानां तु मूलत्वमिष्टं तद्भावनावतः॥' इति वाक्यार्थप्रतीतौ पदार्थानां करणत्वमुक्तम्। दर्शपूर्णमासादिप्रयोगविधिषु श्रुतिलिङ्गादिविनियोज्या मन्त्राः पदार्थत्वेन प्रविष्टा वाक्यैकवाक्यतया इति मन्त्रविशिष्टां दर्शपूर्णमासादिभावनां विदधतो महावाक्यस्य दर्शपूर्णमासादिप्रयोगविधेः महावाक्यार्थे पदार्थभूता मन्त्राः प्रमाणभावं लभन्ते इति। **गुरुचरणास्तु** एवं सति व्रीह्यादिवत् पदार्थविधयैव एषां प्रामाण्यं स्यात्, न शब्दविधया इति दूषयित्वा स्मृतिवत् याथार्थ्यलक्षणमेव एषां प्रामाण्यं इत्याहुः। **भट्टसोमेश्वरस्तु** अनधिगतार्थगन्तृत्वमप्याह। 'प्रपादिस्मृतिलिङ्गत्वं मन्त्राणां वक्ष्यतेऽत्र यत्। देवताकल्पनं यच्च मान्त्रं तस्माद्यजिश्च यः॥ मन्त्रवर्णाच्च यद्धोतुः पूर्वपानं वदिष्यते। मे देहीत्यात्मवादित्वान्मन्त्राणां याजमानता॥ करणानां त्वा- (नामा-) र्त्विजत्वेऽप्यङ्गसाध्यफलस्य यत्। स्वामिगत्वं क्रियार्थस्य कर्तृगत्वं च वक्ष्यते॥ मन्त्रक्रमानुरोधाच्च ब्राह्मणक्रमबाधनम्। छागस्य निश्चयो यश्च पशावूहश्च मन्त्रगः॥ तदर्थपरतायां स्यात् सर्वं नैवान्यथा भवेत्। सर्वसाधारणत्वेन विचारस्य प्रयोजनम्॥ कर्मकाले तु संधेयो मन्त्रार्थोऽर्थपरत्वतः। इषे त्वादिषु चोच्चार्यं छिनद्मीत्यादि पूर्तये॥ असावित्यादिशब्दस्य स्थाने यष्ट्रादिनाम च। सिद्धान्ते मन्त्रलोपश्च प्रकाश्याभाव इष्यते॥ यथाम्नातप्रयोगस्तु केवलोऽर्थाविवक्षणे। यदि त्वर्थपरत्वेऽपि नैतावत् स्यात् प्रयोजनम्॥ ततो धर्मप्रमाणत्वं मन्त्राणां नैव सिध्यति। लवनादिस्वरूपस्य प्रकाश्यत्वे हि धर्मता॥ समीहिताङ्गताभावान्न कथंचित् प्रतीयते॥ अपूर्वसाधनत्वेन यद्यप्येतत् प्रकाश्यते। विधिप्राप्तानुवादत्वान्न तथापि प्रमाणता॥ अपूर्वसाधनत्वात्तु लवनादौ समीहिते। आत्मनोऽङ्गत्वबोधेन मन्त्रः प्रामाण्यमश्नुते॥ अश्रुतद्रव्ययागादिकल्पनाच्च प्रमाणता। (स्फुटैवार्थपरत्वे स्यादिति सर्वमसूसुचन्॥)' इति। (न्यायसुधायां इमे श्लोकाः पृ. ९७–९८)।

तदत्रापि गुरुचरणोक्ते याथार्थ्यलक्षणे प्रामाण्ये सोमेश्वरोक्ते च सर्वमन्त्रसाधारणे मन्त्रार्थानुसंधानविषये प्रामाण्ये जपमन्त्रेषु अव्याप्तिरूपो दोषोऽस्त्येव। अविवक्षितार्थकमुच्चारणमात्रं एव हि जपः। तदुक्तं द्वादशे (१२।४।१ अधिकरणारम्भे शास्त्रदीपिकायां) 'यत्र सन्तमपि अर्थं अविवक्षित्वा उच्चारणमात्रं अदृष्टार्थं क्रियते यथा वैष्णवीमृचमनूच्येति स जपः' इति (शास्त्रदीपिकायां तु 'यत्र सन्तमपि अर्थप्रत्ययं अविवक्षित्वा उच्चारणमात्रं अदृष्टाय क्रियते 'वैष्णवीमनूच्य वाग् यन्तव्या' इत्यादौ स जपः' इति अक्षरपरिपाटी)। 'तत्र सन्तमपि' इति अपिशब्दात् क्वचिदर्थाभावोऽपि प्रतीयते। ततश्च असतः कुतो याथार्थ्यं कुतो वा अनुसंधानम् इति केचित्। तन्न। जपमन्त्राणामपि 'सर्वा ऋचः सर्वाणि यजूंषि सर्वाणि सामानि वाचस्तोमे पारिप्लवं शंसति' इति गुणगुणिसंबन्धकीर्तनात्मके शस्त्रे विनियोगात् गुणगुणिसंबन्धरूपेऽर्थे तात्पर्यमस्त्येव। तेन तेषां मन्त्रार्थानुसंधानविषये प्रामाण्यं संभवत्येव। याथार्थ्यं तु तत्रापि अव्याप्तमेव।

**ननु** तत्रापि लक्षणया याथार्थ्यं वाच्यमेव। अत एव अर्थवादाधिकरणे 'धूम एवाग्नेर्दिवा ददृशे' इत्यादिषु अयथार्थेषु 'गुणवादस्तु' इत्युपक्रम्य 'दूरभूयस्त्वात्' इत्यादिसूत्रैः उपचारादेव याथार्थ्यमुक्तम्, **इति चेत्**, **न**। तेषूदाहरणेषु संभवमात्रेण तदुक्तम्, न तु अयं नियमः। असताऽपि गुणेन असतोऽपि गुणिनः स्तुतिबुद्ध्युत्पत्तिसंभवात्। अत एव अर्थवादाधिकरणे एव 'प्रजापतिरात्मनो वपामुदखिदत्' इत्यत्र महाभूतविषयत्वेन भाष्योक्तां व्याख्यां 'एवं तु (किन्तु) स्तुतित्वमेव हीयते' इति दूषयित्वा अर्थवादादिमूलिकां सृष्टिप्रलयप्रतीतिमात्रेण असतोऽपि प्रजापतेः असताऽपि गुणेन स्तुतिरङ्गीकृता (वार्तिके), तस्मात् स्तोत्रमन्त्रेषु याथार्थ्यं अव्याप्तमेव, मन्त्रार्थानुसंधानविषयं तु प्रामाण्यं संभवति इति तदेव युक्तं इति सिद्धम्।

ननु एवमपि साममन्त्राणां कथं शब्दविधया प्रामाण्यं इति चेत् । उच्यते । तेषामशब्दतायामपि शब्दाभिव्यञ्जकत्वेन शब्दानुग्राहकत्वात् शाब्दप्रमाजनकसामग्र्यन्तर्गतत्वेन शब्दप्रमाणान्तर्भावात् । सा च इयमपि अनृक्केषु प्रजापतेर्हृदयादिषु विधा न संभवति । अतस्तान्यपि व्याप्नोति इति ईदृशं पदार्थविधया प्रामाण्यं मिश्रैरुक्तम् । बाल. पृ. ७०—७२.

* **मन्त्रब्राह्मणयोः** । ' गौणत्वं यत्र नाम स्यात् क्वचिद् **ब्राह्मणमन्त्रयोः** । तत्रानुवादरूपत्वात् मन्त्राणां गौणतेष्यते ॥ ' अवश्यंभावि ( यत्र ) ब्राह्मणस्य मन्त्रस्य वा **गौणत्वम्** , तत्र ब्राह्मणस्य अत्यन्ताप्राप्तविधित्वात् प्रथमप्रवृत्तेश्च अनन्यप्रमाणके अर्थे गौणत्वमयुक्तम् । ' मन्त्रस्य तु ब्राह्मणचोदितार्थप्रकाशनात् तत्परतन्त्रवृत्तेः । विरोधिनं स्वार्थमतीत्य मुख्यं युक्तो हि गौणार्थनिमित्तभावः ॥ ' वा. ३।२।२।३ पृ. ७५३. * मन्त्रब्राह्मणयोः दीक्षोत्तरमेव चयनपाठात् उपसद्भ्यः पूर्वमेव अग्निश्चेतव्यः , इति **प्राप्ते**, ' यदहरग्निं चेष्यमाणस्तदहरुभयं समस्येत् ' इत्यग्न्युपसदोः एकाहक्रियमाणत्वरूपसमासविधानात् उपसद्दिने एवाग्निश्चेतव्यः । **संकर्ष**. २।१।२७. * मन्त्रब्राह्मणयोर्विरोधे अन्यतरस्य यत्र **गौणता** आश्रयणीया आपद्यते तत्र मन्त्राणां **गौणता** युक्ता मन्त्रस्य लिङ्गरूपत्वात् ब्राह्मणस्य च श्रुतिरूपत्वात् । ' मैत्रावरुणः प्रेष्यति चानु चाह ' इति ब्राह्मणस्य तु वाक्यरूपस्यैव ' प्रशास्तर्यज ' इतिमन्त्रलिङ्गेन बाधोऽभ्युपगतः । **सु.** पृ. १०९०.

* **मन्त्रब्राह्मणात्मका** वेदाः । **वा.** ३।३।१।१ पृ. ८०३.

* **मन्त्रभूयस्त्वन्यायः** (संकर्ष. १।२।४) । इष्टश्रा-त्पत्वेऽपि मन्त्रभूयस्त्वन्यायेन एकार्थत्वात् विकल्पसंभवः । (इदं पूर्वपक्षे) । **संकर्ष**. २।१।३५, * पशौ अनूयाजेषु एकादशप्रैषाः मैत्रावरुणकर्तृकाः । अध्वर्युः 'देवान् यज' इति प्रथमानूयाजे एव सकृत् ब्रूयात् । प्रशास्ता तु पञ्चमानूयाजमारभ्य प्रैषाननुब्रूयात् । अन्ये **मन्त्रभूयस्त्वन्यायेन** विकल्पेरन् इति पूर्वपक्षः । २।३।८.

* **मन्त्रभेदाभेदपूर्वकत्वं** अदृष्टप्रयोजनभेदाभेदयोः । **सु.** पृ. ७०५.

* **मन्त्ररूपं** विधिरूपं चेति द्विविधं अवान्तरवाक्यम् । **बाल.** पृ. ९.

**मन्त्रलक्षणम् ॥**

**तच्चोदकेषु मन्त्राख्या । २।१।७।३२॥**

**भाष्यम्**— मन्त्रगतो भावशब्दो विधायको नेति परीक्षितम् । कोऽयं मन्त्रो नामेति ? उच्यते । अज्ञाते मन्त्रे तद्गतो भावशब्दः कथं विचारित इति । इदमर्थतोऽधिकरणं पूर्वं द्रष्टव्यम् । कथंलक्षणो मन्त्र इति । तच्चोदकेषु मन्त्राख्या । अभिधानस्य चोदकेषु एवंजातीयकेषु अभियुक्ता उपदिशन्ति मन्त्रानधीमहे, मन्त्रानध्यापयामः, मन्त्रा वर्तन्ते इति ।

प्रायिकमिदं लक्षणम् । अनभिधायका अपि केचिन्मन्त्रा इत्युच्यन्ते, यथा 'वसन्ताय कपिञ्जलानालभते' इति । न शक्यं पृष्ठाकोटेन तत्र तत्र उपदेष्टुमिति लक्षणमुक्तम् । **' ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः । लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ॥ '** उदाहरणम् , ' मेधोऽसि ' इत्येवमादयोऽस्यन्ताः । ' इषे त्वा ' इत्येवमादयस्त्वान्ताः । 'आयुर्दा असि' इत्याशीः । ' अग्निर्मूर्धा ' इति स्तुतिः । संख्या ' एको मम ' इति । प्रलपितम् ' अक्षी ते इन्द्र पिङ्गले डुलेरिव ' इति । परिदेवनम् ' अम्बे अम्बिके ' इति । प्रैषः ' अग्नीदग्नीन् ' इति । अन्वेषणम् ' कोऽसि कतमोऽसि ' इति । पृष्टम् ' पृच्छामि त्वा ' इति । आख्यानम् ' इयं वेदिः ' इति । अनुषङ्गः ' अच्छिद्रेण पवित्रेण ' इति । प्रयोगः त्रैस्वर्यं चातुःस्वर्यं च । सामर्थ्यमभिधानम् । तच्चैतद्वृत्तिकारेणोदाहरणापदेशेनाऽऽख्यातम् । एतदपि प्रायिकमेव । असिमध्या अपि च मन्त्रा भवन्ति ' ईड्यश्चासि वन्द्यश्च वाजिन् ' इति । त्वामध्याश्च ' तत्त्वा यामि ' इति । आशीर्ब्राह्मणमपि ' सोऽकामयत प्रजाः सृजेय ' इति । स्तुतिरपि ' वायुर्वै क्षेपिष्ठा देवता ' इति । प्रलापः ' न चैतद्विद्मो यदि ब्राह्मणा वा स्मोऽब्राह्मणाः स्मो वा ' इति । परिदेवनम् ' ये मामधुक्षन्त ते मां प्रत्यमुञ्चन्त ' इति । प्रैषः ' अमुतः सोममाहर ' इति ।



अन्वेषणम् ' इह वा स इह वा ' इति । प्रश्नः ' वेद कर्णवतीं सूर्मिम् ' इति । प्रतिवचनम् ' विद्मो वा ' इति । अनुषङ्गः ' हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः ' इति । प्रयोगः त्रैस्वर्यं चातुःस्वर्यं च इति । सामर्थ्यं स्रुवेणावद्यति द्रवेष्विति । लक्षणकर्माणि प्रयोजनं प्रसिद्धत्वान्न वक्तव्यम् । लघीयसी प्रतिपत्तिर्लक्षणेन । **' आक्षेपेष्वपवादेषु प्राप्त्यां लक्षणकर्मणि । प्रयोजनं न वक्तव्यं यच्च कृत्वा प्रवर्तते ॥ '** आक्षेपेषु पूर्वाधिकरणस्य प्रयोजनम् , अपवादेषु उत्सर्गस्य, प्राप्त्यामुत्तरविवक्षा, कृत्वाचिन्तायां पूर्वाधिकरणस्य प्रयोजनम् । अस्ति वेदे मन्त्रशब्दो यस्यायमर्थः परीक्षितः । ' अहे बुध्निय मन्त्रं मे गोपाय यमृषयस्त्रैविदा विदुः ऋचः सामानि यजूंषि ' इति ।

वा—— यथोक्तेन न्यायेन मन्त्रोदाहरणस्य अतन्त्रत्वात् प्रासङ्गिकमिदं पूर्वसूत्रप्रयुक्तमन्त्रशब्दार्थलक्षणाभिधानमिति नावश्यमिदमर्थतोऽधिकरणं पूर्वम् । शक्यं हि वाक्यमात्रमप्युदाहृत्य विचारयितुम् । भाष्यकारस्तु सूत्रकारोच्चारितमन्त्रशब्दादरेण पौर्वापर्यविशेषमाह । 'तच्चोदकेषु' इति । तदभिधानं चोदकं प्रयोजकं येषामिति बहुव्रीहिः । अर्थदर्शनमात्रार्थं तु षष्ठीकथनं भाष्ये । अध्येतृवृद्धव्यवहारसिद्धं चेदं प्रायिकचिह्नयुक्तं लक्षणं लाघवार्थमुक्तम् । धरणिगतानेकद्रव्यप्रत्येकनिरीक्षणे पुनः पुनः पृष्ठं कुटिलीक्रियत इति तत्सामान्येन पृष्ठाकोटाभिधानम् । श्लोकश्चैवं द्रष्टव्यः —**'ऋषयोऽपि हि लक्ष्याणां नान्तं यान्ति पृथक्त्वशः । लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ॥ '**

**' वृत्तौ लक्षणमेतेषामस्यन्तत्वान्तरूपता । आशिषः स्तुतिसंख्ये च प्रलप्तं परिदेवितम् ॥ प्रैषान्वेषणपृष्टाख्यानानुषङ्गप्रयोगिताः । सामर्थ्यं चेति मन्त्राणां विस्तरः प्रायिको मतः ॥ '** डुलेरिवेति । डुलिः कच्छपः । प्रतिपुनातुशब्दम् ' अच्छिद्रेण पवित्रेण ' इत्यनुषङ्गः । सामर्थ्यं अभिधानशक्तिः । ये मां दुग्धवन्तस्त एव निराकृतवन्त इति वेन्याः परिदेवितम् । ' अमुतः सोममाहर ' इति सौपर्णोपाख्याने विनतया गरुत्मानमृतार्थं प्रेषितः । ' कर्णवन्तीं सूर्मिम्' । सूर्मिः स्थूणा ।

**सोम**—— भाष्यकारेण इदमर्थतः विधिमन्त्राधिकरणात् पूर्वं द्रष्टव्यं इत्युक्तम् । तदयुक्तम् , विधिमन्त्राधिकरणे मन्त्रत्वस्य न्यायानुपयुक्तत्वात् इति आचार्यैर्दूषयित्वा प्रासङ्गिकं इदं इत्युक्तम् । **सूत्रार्थस्तु**– तत् अभिधानं चोदकं प्रयोजकं येषां तेषु मन्त्राख्या इति ।

**वि**—— 'अहे बुध्निय मन्त्रं म इति मन्त्रस्य लक्षणम् । नास्त्यस्ति वा, ऽस्य नास्त्येतदव्याप्त्यादेरवारणात् ॥, याज्ञिकानां समाख्यानं लक्षणं दोषवर्जितम् । तेऽनुष्ठानस्मारकादौ मन्त्रशब्दं प्रयुञ्जते ॥ '

**भाट्ट**—— मन्त्रप्रसङ्गात् ' अहे बुध्निय मन्त्रं मे गोपाय ' इति वेदप्रयुक्तमन्त्रशब्दार्थनिर्णयाय तल्लक्षणमुच्यते । यत्राभियुक्तानां मन्त्रपदवाच्यत्वप्रकारिका उपस्थितिर्विषयतासंबन्धेन स मन्त्रः । वाच्यतावच्छेदकं च मन्त्रत्वमखण्डोपाधिर्वेदत्ववत् ।

**मण्डन**—— ' मन्त्रस्तु वेदः क्रियमाणवाची । '

**शंकर**—— ' मन्त्रलक्षणमत्रोक्तम् । '

* मन्त्रलक्षणम् । ' मन्त्रोऽयम् ' इति अभियुक्तानां समाख्यानं इत्येव । विहितार्थाभिधायकत्वम् , मननहेतुत्वम् , असिपदान्तत्वम् , उत्तमपुरुषान्तत्वम् , इत्यादिलक्षणं ब्राह्मणवाक्येषु अतिव्याप्तिग्रस्तम् । ' मन्त्रोऽयम् ' इति याज्ञिकसमाख्यानं निर्दोषं मन्त्रलक्षणम् । तच्च समाख्यानं अनुष्ठानस्मारकादीनां मन्त्रत्वं गमयति । तत्र अनुष्ठानस्मारकाः ' उरु प्रथस्वोरु ते० ' इत्यादयः , स्तुतिरूपाः ' अग्निमीळे पुरोहितं ' इत्यादयः , प्रैषरूपाः ' अग्निदग्नीन् विहर ' इत्यादयः , विचाररूपाः ' अधः स्विदासी ३ दुपरि स्विदासी ३ त् ' इत्यादयः , प्रश्नरूपाः ' पृच्छामि त्वा परमन्तं पृथिव्याः' इत्यादयः, उत्तररूपाः 'वेदिमाहुः परमन्तं पृथिव्याः ' इत्यादयः । अत्र सर्वत्र याज्ञिकसमाख्यानम् , अभियुक्तसमाख्यानं इत्येवानुगतं लक्षणम् । वि. २।१।७.

* **मन्त्रलक्षणशेषाधिकरणम्** । २।१।९।३४. **मीको.** पृ. १२३४ ' ऊहप्रवरनामधेयानां नास्ति मन्त्रत्वम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **मन्त्रलिङ्गानि** उत्तमामन्त्रणास्यन्तत्वान्तरूपादीनि । उत्तमपुरुषः 'अग्नये जुष्टं निर्वपामि' इति । आमन्त्रणम् 'अग्ने यशस्विन् यशसे समर्पय' इति । असि–अन्तम् 'उर्वी चासि वस्वी चासि' इति । त्वान्तम् 'इषे त्वा' 'ऊर्जे त्वा'। आदिशब्देन आशीः ('आयुराशास्ते सुप्रजास्त्वमाशास्ते' इति)। देवताप्रतिपादनम् ('अग्निर्नः पातु कृत्तिकाः' इति)। वि. १।४।१. * **मन्त्रलिङ्गेन** ब्राह्मणवाक्यस्य न बाधः। कौ. ३।३।७।१४ पृ. ३५९.

* **मन्त्रलिङ्गाधिकरणम्** । **मीको.** पृ. ३१०१ 'मन्त्राधिकरणम्' इत्यत्र द्रष्टव्यम्।

* **मन्त्रलिङ्गानुसारेण** निराकाङ्क्षस्य विधेः संकोचः निराकृतः इन्द्रपीताधिकरणे । **पराक्रमः**. ४।३।१.

* **मन्त्रलिङ्गोपोद्बलितब्राह्मणपाठः** मन्त्रपाठात् बलवान्। **संकर्ष.** ४।२।६.

* **मन्त्रवर्णः** चतुर्थ्या बाध्यते देवताविधौ। यथा 'यदग्नये च प्रजापतये च सायं जुहोति' इति चतुर्थ्या केवलस्य अग्नेर्देवतात्वप्रापिकया 'अग्निर्ज्योतिः' इति मन्त्रवर्णः । **बाल.** पृ. १४४, * मन्त्रवर्णः तद्धितेन बाध्यते देवताविधौ । यथा 'पात्नीवतं गृह्णाति' इति तद्धितेन निरपेक्षस्य पत्नीवतो देवतात्वं बोधयता 'अग्नाइ पत्नीवन्' इति आध्वर्यवमन्त्रवर्णः । पृ. १४४, * **मन्त्रवर्णेन** देवताविधिः अपूर्वविधिः। पृ. २२, * मन्त्रवर्णेन द्वितीया बाध्यते। यथा उपांशुयाजे अग्नीषोमीययाज्यामन्त्रवर्णेन 'तावब्रूतामाज्यस्यैव नौ' इति द्वितीया। पृ. १४४. * 'तद्धितेन चतुर्थ्या वा **मन्त्रवर्णेन** चेष्यते। देवतासंगतिस्तत्र दुर्बलं तु परं परम् ॥' **वा.** २।२।९।२३. * **मन्त्रवर्णात्** उपांशुयाजस्य देवतावत्त्वात् व्यक्तचोदनत्वम्। **टुप्.** ८।१।३।५. * न च **मन्त्रवर्णस्य** ('छागस्य वपाया मेदसोऽनुब्रूहि' इत्यस्य) अत्यन्ताविहितच्छागप्रापणसामर्थ्यं पशुचोदनाविहितस्य तु संदेहापनयनमात्रमुपयुज्यते। **वा.** २।२।६। १८ पृ. ५१६.

* **मन्त्रवाचिता** 'पृष्ठैरुपतिष्ठते' इतिपृष्ठशब्दस्य। ७।३।१४।३५–३६.

* **मन्त्रविकल्पः** यथा, उपांशुयाजादौ वैष्णवादियाज्यानुवाक्यानाम्। **बाल.** पृ. १६३.

* **मन्त्रसमाम्नाये** मन्त्राः त्रैस्वर्येण पठिताः। कर्मप्रयोगे च तादृशा एव प्रयोक्तव्याः न ब्राह्मणगतभाषिकस्वरेण। (भाषास्वराधिकरणम्)। १२।३।८।२०–२२.

* **मन्थः** महापितृयज्ञे 'अभिवान्यायै मन्थे दुग्धम्' इति। तस्य श्रपणादुत्तरं पेषणं प्राप्नोति। तत्र धर्मा न भवन्ति इति पूर्वपक्षः। भवन्तीति सिद्धान्तः। (दुग्धमिश्राः सक्तवो मन्थाः। धानापिष्टानि सक्तवः। भर्जितयवा धानाः। टुप्टिप्पणी.)। **टुप्.** १०।२।३३।७४.

* **मन्थी** ग्रहः ज्योतिष्टोमे प्रातःसवने गृह्यते। **वि.** २।३।१.

* '**मन्थ्यग्रान्** गृह्णीयात् अभिचर्यमाणस्य' ज्योतिष्टोमे। **भा.** १०।५।१९।६७.

* **मन्थिग्रहस्य** आदितः प्रतिकर्षः कामसंयोगे। **भा.** १०।५।१९।६७–६९, स च अन्तर्यामादूर्ध्वं ऐन्द्रवायवात् प्राक्। १०।५।२०।७०–७२, ग्रहणस्य प्रतिकर्षे सादनस्यापि प्रतिकर्षः। १०।५।२१।७३–७४, प्रदानस्य तु न प्रतिकर्षः। १०।५।२२।७५–७६.

* **मन्दधियामपि** चोपदेशः क्रियमाणः फलवान् भवति। अपिच कंचिदपेक्ष्य सर्वे मन्दधियः। **भा.** १०।४।२४।४९.

* **मन्दविषन्यायः** । इमां शङ्कां (शाक्यादिग्रन्थानां प्रामाण्याशङ्कां) मन्दविषन्यायेन निराकरोति 'विरोधे त्वनपेक्षं स्यात्' इति। **कु.** १।३।३।४ पृ. ५५. * मन्दविषन्यायः । यत्र श्रुतब्रह्मवर्चसादिफलकेष्वपि शास्त्रस्य महाविषयत्वलाभार्थं स्वर्गफलकल्पना, ब्रह्मवर्चसादिकं आयुरादिवत् आनुषङ्गिकं तत्र किं वाच्यं रात्रिसत्रे इति शङ्कां मन्दविषन्यायेन शिष्यहितार्थं परिहर्तुं सूत्रम् ('काम्ये कर्मणि०' इति)। **भाट्ट.** ४।३।७.

* **मन्दसदृशप्रतिनिधेः** मुख्यस्य च समानविधित्वम्। ३।६।१५।४०.

卐 '**मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः**' **इति न्यायः** । अस्यार्थः– सुहृदां मित्राणां ये अभ्युपेतार्थकृत्याः अङ्गीकृतपरकार्यकरणदृढप्रतिज्ञाः सत्पुरुषास्ते न मन्दायन्ते नाऽऽलस्यं कुर्वन्ति इति। **साहस्री.** ९७६.



* **मन्द्रः** स्वरः प्रायणीयायाम्, स च प्रायणीयाप्रयुक्त एव न परमापूर्वप्रयुक्तः ज्योतिष्टोमे। **भा.** ९।१। २।२–३ वर्णकं २. * '**मन्द्रं** प्रातःसवने' ज्योतिष्टोमे। **सु.** पृ. ११८१. * 'मन्द्रं प्रायणीयायाम्' ज्योतिष्टोमे। **वा.** ३।३।२।९ पृ. ८१२. * '**मन्द्राऽभिभूतिः** केतुर्यज्ञानाम्' इत्यारभ्य 'भक्षयामि' इत्यन्तो भाग एको मन्त्रः, स च भक्षणे विनियुज्यते इति सिद्धान्तः। पूर्वपक्षस्तु 'मन्द्राऽभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु' इति तृप्तिप्रकाशकः पृथक्, 'वसुमद्गणस्य सोम देव ... उपहूतस्योपहूतो भक्षयामि' इति भक्षणप्रकाशकः पृथक् कर्तव्यः इति। ३।२।१०। २७. **मीको.** पृ. १५९८ 'गुणाभिधानाधिकरणम्' इत्यत्र द्रष्टव्यम्। * '**मन्द्रया** आज्यभागान्तम्' दर्शपूर्णमासयोः। **वा.** ३।३।२।९ पृ. ८११.

* **मन्द्रादिः** भक्षयाम्यन्तः तृप्तिविशिष्टभक्षप्रकाशनार्थः सकलो मन्त्रः। गुणाभिधानाधिकरणम्। ३।२। १०।२७.

* **मन्द्रतरः** स्वरः आतिथ्यायाम्, स चाऽऽतिथ्याप्रयुक्तो न परमापूर्वप्रयुक्तः ज्योतिष्टोमे। **भा.** ९।१।२। २–३ वर्णकं २. * '**मन्द्रतरमातिथ्यायाम्**' ज्योतिष्टोमे। **वा.** ३।३।२।९ पृ. ८१२.

* **मन्द्रत्वादिधर्मस्य** 'मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम्' इत्यक्षरशिक्षया स्वरनिष्ठत्वमुक्तम्। तेन न वर्णनिष्ठोऽसौ धर्मः। **मणि.** पृ. १६९.

* **मन्यतेः** उत्तमपुरुषैकवचनस्य प्रहासे शक्तिः। अतादृशत्वेन जानतः तादृशत्वकथनं प्रहासः। प्रहासादिकं व्यञ्जनागम्यं इति आलंकारिकाः। **मणि.** पृ. ११६.

* **मयूरनृत्यम्**। तदेतन्मयूरनृत्यमापद्यते। तद्यथा, मयूरस्य नृत्यतः अन्यदपाक्रियते अन्यत् संक्रियते। **भा.** ७।४।२।१०.

* **मरणं** अनियतकालम्। **भा.** ११।३।१४।३६.

卐 **मरणाद्वरं व्याधिरिति न्यायः। साहस्री.** १४२.

* **मरणस्य** निःशेषस्मृतिबीजसंस्कारनाशकत्वं जन्मान्तरीयस्य कस्यचिदर्थस्य अस्मरणात् अवसीयते। जातमात्रस्य तु स्तन्यपाने प्रवृत्तिः यादृच्छिकी, प्रथमस्त्रीभोगप्रवृत्तिवत्। **सु.** पृ. १२५. * **मरणे** कस्यचित् स्वामिनः सत्रे प्रतिनिधिर्ग्राह्यः। ६।३।८।२२। परन्तु तस्य कर्मकरत्वमेव, न फलस्वामित्वम्। ६।३।९।२३–२५। अथापि तस्य अनुष्ठाने स्वामिधर्मत्वं भवत्येव। **भा.** ६।३।१०।२६. * सायंहोमोत्तरं यजमानस्य **मरणे** कथंचित् प्रातर्होमः कर्तव्यः प्रक्रान्तासमाप्तिनिमित्तदोषपरिहारार्थम्। **वा.** २।२।५।१६.

* **मरणोत्तरं** यजमानस्य सर्वस्वारस्य समापनम्। १०।२।२३।५८–५९.

* **मरणकामस्य** सर्वस्वारो नाम क्रतुः 'मरणकामो ह्येतेन यजेत, यः कामयेतानामयः स्वर्गं लोकमियाम्' इति। यजमानमरणोत्तरं च यज्ञावशेषः ऋत्विग्भिः समापनीयः। 'ब्राह्मणाः समापयत मे यज्ञम्' इति हि यजमानप्रैषः। **वि.** १०।२।२३.

* **मरणकामना** दीर्घरोगसंतप्तस्य प्रत्याख्यातभिषक्क्रियस्य संभवति। **संकर्ष.** ४।३।५.

* **मरुत्वतीयादयो** ग्रहाः माध्यंदिने सवने। **वि.** ३।६।९.

卐 **मर्कटमदिरापानादिन्यायः। साहस्री.** ९४०.

* **मलापकर्षणार्थं** स्नानम्। **वा.** ३।४।५।१४.

* '**मलवद्वाससा** न संवदेत, नास्या अन्नमद्यात्' इति निषेधः क्रत्वर्थः पुरुषार्थो वा इति संशये केवलपुरुषार्थः इति सिद्धान्तः। दर्शपूर्णमासयोः। (संवादाधिकरणम्)। ३।४।७।१८–१९.

* **मलवद्वासःसंवादः**। 'यस्य व्रत्येऽहनि पत्नी अनालम्भुका स्यात् तामपरुध्य यजेत' इत्यवरोधवचनात् दर्शपूर्णमासयोः उदक्यासंवादाप्रसक्तेः 'न मलवद्वाससा संवदेत' इति प्रतिषेधः प्रकरणादुत्कृष्यते। **सु.** पृ. १२३.

* **मलवद्वास:संवादनिषेधाधिकरणम्** । ( रजस्वलया संवादस्य निषेधः पुरुषार्थः ) । ३।४।७।१८–१९. ‘ संवादाधिकरणम् ’ इति बिन्दौ द्रष्टव्यम् ।

* **‘ मलिनः स्नायात् ’** इतिवत् । नायमेकान्तो यत् प्रथमान्तं गुणभूतम्, प्रधानमपि भवति क्रियायां यथा ‘ मलिनः स्नायात् ’ इति । **टुप्.** ६।१।१।१.

**मलिनदर्पणन्यायः** । ‘ संसर्गजा दोषगुणा भवन्ति ’ इति न्यायेन समानार्थोऽयं तत्रैव द्रष्टव्यः । **साहस्री.** १००.

**मल्लग्रामन्यायः** । यथा अन्येष्वपि जनेषु सत्सु मल्लानां बहुत्वात् मल्लग्राम इत्युच्यते, तथा प्रकृतेऽपि । **साहस्री.** २६.

* **मसूरादिनिषेधः** श्राद्धे, अयं जातिनिषेधः पुरुषार्थः । यथा हि भोजनाश्रितं प्राङ्मुखत्वं विधीयते न भोजनम्, एवं अत्रापि भक्षणाश्रितं मसूरादि निषिध्यते, न भक्षणम् । **बाल.** पृ. ३१.

* **मस्तु शूद्रस्य व्रतम्** । **भा.** ६।१।७।३१.

**महान्महत्स्वेव करोति विक्रममिति न्यायः** । अयं महान् जनो महत्सु जनेष्वेव पराक्रमं करोति, न दुर्बलेष्विति भावविवक्षायामवतरति । **साहस्री.** ७९४.

* **महेन्द्रस्य** याज्यानुवाक्याद्वयम् ‘ महाँ इन्द्रो य ओजसा ० ’, ‘ भुवस्त्वमिन्द्र ब्रह्मणा महान् ० ’ इति । **सु.** पृ. ६५५.

* **महेन्द्राधिकरणम्** । २।१।५।१३–२९. ‘ स्तुतशस्त्राधिकरणम् ’ इति बिन्दौ द्रष्टव्यम् ।

* **महर्षयः** शापानुग्रहसमर्थाः श्रूयन्ते । **वा.** १।३।३।७ पृ. २०८.

* **महाकुलीनाः** विशिष्टेन प्रयत्नेन परिरक्षन्त्यात्मानम् । **वा.** १।२।१।२ पृ. १०९.

* **‘ महादिवाकीर्त्यं पृष्ठं भवति ’** इति ‘ विभ्राड् बृहत् पिबतु ’ इति जगत्यामुत्पन्नस्य महादिवाकीर्त्यस्य साम्नः विषुवति पृष्ठसाधनत्वेन विधानम् । **सु.** पृ. ८९२.

* **महादिवाकीर्त्यानि** नव सामानि अनृक्काणि । **बाल.** पृ. ७२.

**महादोषत्यागोऽल्पदोषाङ्गीकारो यथा लोकप्रसिद्धिरिति न्यायः** । **साहस्री.** ५६२.

* **महापङ्क्तिः** जगती । पादेषु अक्षराणि ८।८।७।६।१०।९ । उदा० ‘ इयत्तिका शकुन्तिका० ’ ( ऋसं. १।१९१।११ ), किंवा ८।८।८।८।८।८ । उदा० ‘ तदन्नाय तदपसे० ’ ( ऋसं. ८।४७।१६ ) । **के.**

* **महापदपङ्क्तिः** अनुष्टुप् । पादेषु अक्षराणि ५।५।५।५।५।६ । उदा० ‘ तव स्वादिष्ठा० ’ ( ऋसं. ४।१०।५ ) । **के.**

* **महापापकारिणः** ( ब्रह्महत्याव्यतिरिक्तं ) अपरिहरणं अनाचारः उदीच्यानां दाक्षिणात्यानां च । **वा.** १।३।३।७ पृ. २०४.

* **महापितृयज्ञे** ‘ अधं उपमन्थति ’ इत्यनेनोक्तस्य पात्राधोभागस्य स्तुतये ‘ यत् पूर्णं तन्मनुष्याणाम्, उपर्यर्धो देवानाम् ’ इत्यनुवादः । **वि.** ३।४।७. * महापितृयज्ञे ‘ उपरि हि देवेभ्यो धारयति ’ इत्यत्र अनुवादो विधिर्वेति संशयः । विधिः सिद्धान्तः । **वा.** ३।४।१। पट-सूत्र्याम् – ६. * महापितृयज्ञे चोदकप्राप्ते वरणे ‘ नार्षेयं वृणीते न होतारम् ’ । अत्र चोदकप्रत्यक्षवचनाभ्यां वरणस्य विकल्पः इति पूर्वपक्षः । चोदकप्रत्यक्षवचनयोः एकवाक्यत्वेन वरणव्यतिरिक्तमङ्गजातं अनुष्ठेयं इति पर्युदासपरता इति सिद्धान्तः । **वि.** १०।८।१.

**महापितृयज्ञे तिसृणां ऋचां द्वे एव पुरोनुवाक्ये, तृतीया याज्या ॥**

महापितृयज्ञे तिस्रः ऋचः याज्यानुवाक्यात्वेनाम्नाताः । तासु द्वयोर्ऋचोः समुच्चित्य याज्यात्वम् ‘ द्वे वै देवाना याज्यानुवाक्ये ’ इति प्रकृत्य ‘ परे हि देवेभ्यः पितरः ’ इति श्रुत्या देवापेक्षयाऽऽधिक्यकथनात् । आधिक्यं च प्रदानमन्त्रांश एव, ‘ तदेषा तृतीयैतया वै प्रददाति ’ इति श्रुत्या विवरणात् । अनुवाक्यायाज्यात्वेन क्रमप्राप्तयोर्द्वयोर्विनियोगे तृतीयाया अवशिष्टायाः संनिहितत्वेन याज्यायामेवोक्तलिङ्गेन समुच्चित्य विनियोगस्य न्याय्यत्वात् । इति प्राप्ते, ( द्वे ? ) पुरोनुवाक्यात्वेनैव द्वे विनियोज्ये, लिङ्गस्योभयसाधारणत्वात् । ‘ प्रथमया द्वितीयया गमयति



प्रैव तृतीयया यच्छति ’ इति स्पष्टमेव कौषीतके विनियोगाच्च । **संकर्ष.** ४।४।५.

**महापितृयज्ञे द्वयोरनुवाक्ययोः प्रत्येकं प्रणवः ॥**

अग्नीषोमयोर्देवतात्ववत् उभयोः पुरोनुवाक्यात्वस्य व्यासज्यवृत्तितया अन्ते अधीयमानः प्रणवो द्वितीयर्चान्ते एव स्यात् । इति प्राप्ते, ‘ पुरोऽनुवाक्ये ’ इति द्विवचनेन प्रत्येकपर्याप्तत्वावधारणात् प्रतिपुरोऽनुवाक्यं प्रणवो निधेयः । एतेन ‘ ऋचमुक्त्वा प्रणौत्यपरामुक्त्वा प्रणौति ’ इति श्रुतिरुपपद्यते । **संकर्ष.** ४।४।६.

**महापितृयज्ञे धानासु अवघातस्य न बाधः ॥**

**अर्थेन च विपर्यासे तादर्थ्यात् तत्त्वमेव स्यात् । १०।२।३४।७५ ॥**

**भाष्यम्—** अस्ति महापितृयज्ञः ‘ सोमाय पितृमते षट्कपालम्, पितृभ्यो बर्हिषद्भ्यो धानाः, पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम् ’ इति । धाना इत्यत्र संदेहः किं धानासु हन्तिः कर्तव्यः, उत नेति । किं प्राप्तम् ? न कर्तव्य इति । कुतः ? विघातात् । क्रियमाणे हन्तौ धानात्वं विहन्येत, सक्तवो हि भवेयुः । तस्मान्न कर्तव्य इति । **एवं प्राप्ते, ब्रूमः** । उक्तमविघातकमधिकाय गुणाय कर्तव्यं अञ्जनवदिति । आह । अञ्जनमविघातकम्, हन्तिस्तु धानात्वं विहन्तीति । अत्रोच्यते । यथा न विघातकं भवति तथा करिष्यते । विपर्यसिष्यते, तथा न विहनिष्यते । विपर्यासे क्रममात्रं न कृतं भवति, पदार्थस्तु न निवर्तते । तदुक्तम् ‘ गुणलोपे च मुख्यक्रिया भवति ’ इति ( १०।२।२७।६४ ) । तस्मात् पूर्वं हन्तिं कृत्वा पाकः कार्यः । तत्र हि हन्तिः पाकार्थो भविष्यति, न धानात्वं विहनिष्यते इति ।

**टुप्—** धाना इत्यनुदाहरणम् । द्विधाऽप्यनुपपन्नत्वात् । कथमनुपपत्तिः ? चोदकेनापि विपर्यास एव प्राप्यते । पूर्वमवघातः, ततः श्रपणम् । अथ श्रपणादुत्तरमवघातः प्राप्यते, तथापि तथैवानुष्ठेयः । तत्र ‘ अर्थेन च विपर्यासे ’ इत्ययुक्तम् । अथोभयत्रावघातः प्राप्नोति, तथापि अर्थविपर्यासो न युक्तः ( तथैवानुष्ठानात् ) । अथैवमुच्यते निष्पन्नायां यागचोदनायां चोदकः इति । धानासु चेह निष्पन्नासु चोदना, ततश्चोदकः अवघातं श्रपणं च प्रापयति । एवमेव अवघाते प्राप्ते अर्थेन विपर्यासे इत्युक्तम् (पश्चात् प्राप्तस्य पूर्वमनुष्ठानात् ), तदपि अनुपपन्नम् । यदि निष्पन्नरूपं द्रव्यं गृह्यते खलेवालीवत्, तथा अवघातादीनामक्रिया छेदनादीनामिव ( स्यात् ) तदाऽपि ( क्रम– ) विपर्यासाशङ्कैव नास्ति ( हन्तिस्वरूपस्यैव लुप्तत्वात् ) । अथ नैव निष्पन्नानां ग्रहणम्, तत्रापि यथाप्राप्तमेवानुष्ठानम्, न विपर्यासः ( तस्मादनुदाहरणं धानाः ) ।

किं तर्हि उदाहरणम् ? तत्रैव ( महापितृयज्ञे ‘ अभिवान्यायै ( मृतवत्सायाः ) दुग्धे मन्थम् ’ इति ) मन्थस्य श्रपणादुत्तरकालं पेषणं प्राप्नोति अर्थेन । तत्र ( पेषणे संशयः किं प्राकृताः पेषण– )धर्मा भवन्ति, न भवन्ति इति । ( तदर्थं च किं प्राकृतमिदम्, उतान्यत् लौकिकमिति । तत्र ) पूर्वपक्षे पेषणान्तरमिदम् । इत्यतः ( हेतोः ) अधर्मकमेव ( इदं ) पेषणम् । सिद्धान्ते तु तदेव पेषणम्, प्राकृतकार्यत्वात् । क्रममात्रमन्यत् ( न तु कार्यान्यत्वम् ) । अतः अर्थकृतेऽपि विपर्यासे ( तादर्थ्यात् तत्कार्यत्वात् पेषणस्य तत्त्वमेव स्यात्, नान्यत्वम् । इति धर्माः– ) भवन्त्येव । ( उदाहरणान्तरमाह– ) कृष्णलेषु पाकधर्माः ( प्राकृताः ) भवन्ति, न भवन्ति इति ( संशयः ) । यदि अपूर्वोऽयं पाकः ( ‘ घृते श्रपयति ’ इति ) ततः ( पाकधर्माः ) न भवन्ति । अथ प्राकृतस्य प्रतिप्रसवः, ततो भवन्ति । ( तत्र प्रतिप्रसवविधौ वाक्यभेदात् पाकान्तरविधिः इति पूर्वपक्षः । सिद्धान्तमाह– ) तत्र प्रतिप्रसवोऽयम् । कथम् ? चोदकेन प्राप्ताः (पाक–) धर्माः अर्थलोपान्निवृत्ताः, श्रपणविधानात् प्रतिप्रसूयन्ते । **ननु** प्रतिप्रसवे श्रपणमात्रमेव विधातव्यम्, न घृतम् । घृते हि विधीयमाने वाक्यं भिद्येत ( प्राप्तस्य प्रतिप्रसवो गुणश्च विधीयते इति ) । यदि ( तु ) अपूर्वविधानं तथा सति विशिष्टविधानात् अदोषः, अप्राप्तत्वात् । **उच्यते** । प्राप्तत्वात् अस्मिन् वाक्ये ( ‘ घृते श्रपयति ’ इत्यत्र ) घृतं न विधीयते, ( किन्तु ) श्रपणमात्रमेव ( विधीयते ) ! कुतः प्राप्तिर्घृतस्य ? उत्पत्ति-

वाक्ये घृतमेव आधारत्वेन श्रूयते, ( 'प्राजापत्यं घृते चरुम्' इति– ) सप्तमीविभक्तिसंयोगात् चरुशब्दसामर्थ्याच्च । यथा आदित्ये ( अदितिदेवताके चरौ ) पयः अधिकरणम्, तथेहाप्युत्पत्तिवाक्ये ( सप्तमीबलात् अधिकरणं घृतम् । तच्च श्रपणावस्थायामेव–अर्धश्रपणोत्तरम्–चरुशब्दसामर्थ्यात् ) तस्मात् गुणवाक्ये घृतमनुवादः ( 'तस्मात् पाकान्तरं नैतदपूर्वविधिदोषतः । प्रतिप्रसवमात्रं तु लाघवाद्विहितं परम् ॥' ) ।

शा— महापितृयज्ञे श्रूयते 'सोमाय पितृमते पुरोडाशं षट्कपालं निर्वपति, पितृभ्यो बर्हिषद्भ्यो धानाः, पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम्' इति । ( प्राभाकरोक्तं भाष्यसमर्थनप्रकारमाह– ) ये त्वाहुः 'न क्रमो नाम कश्चित् गुणः पदार्थव्यतिरिक्तोऽस्ति, यस्य पृथक् बाधं व्यवस्थापयामः । पदार्था एव हि वितताः प्रतीयन्ते । तेन केवलस्य क्रमस्य बाधासंभवात् तद्वावे पदार्थोऽपि बाधितः, इत्यवघातो न कर्तव्यः इत्येतन्निराकरणार्थं इदमधिकरणम् । यत्तु 'विपर्यासो नास्ति' इति तत्राप्याहुः– धानासु श्रपणं कृत्वा अवघातः, प्रकृतौ च विपरीतम्, इत्यस्ति विपर्यासः इति । यदि विपर्यासः, कथं तर्हि अवघातानुष्ठानम्, नहि क्रमस्य पृथक् बाधः संभवति । सत्यम्, न तु अत्र परमार्थतः क्रमबाधः । प्रकृतौ हि श्रुतेष्वेव व्रीहिषु अवघातः कृतः, अत्रापि श्रुतास्वेव धानासु अवघातः, इति नास्ति क्रमविपर्यासः । प्रकृतौ अवघातात् परं श्रपणम्, इह तु विपरीतमित्येतावता विपर्यासवाचोयुक्तिः । ननु धानावस्थायां हन्तिः क्रियमाणो विघातं ( धानात्वस्य ) कुर्यात् । यथा न विघातो भवति, तथा कुर्महे, सकृदेव अनभ्यस्तमवहननं क्रियते, न च भविष्यति विघात इति । (इदं प्राभाकरव्याख्यानं दूषयति) तदयुक्तम् । संभवति हि पृथक् क्रमस्य बाधः । त एव हि पदार्थाः अन्येनान्येन च क्रमेणानुष्ठातुं शक्यन्ते, तेन क्रमस्य प्राकृतस्याभावेऽपि पदार्था न निवर्तन्ते । यत्तु 'श्रपणं कृत्वा अवघातः' इति, तत् 'पूर्वं हन्ति कृत्वा पश्चात् पाकः कार्यः' इति भाष्यविरुद्धम् । यदपि श्रपणोत्तरकालेऽपि अवघाते विपर्यासो नास्ति, श्रुते द्रव्ये अवघातकरणात् इति, तदपि असारम् । प्रकृतौ हि द्वे द्रव्यश्रवणे पुरोडाशश्रवणं व्रीहिश्रवणं च । तत्र धाना देवतासंबन्धात् पुरोडाशकार्ये वर्तन्ते, न व्रीहिकार्ये । प्रकृतौ च व्रीहिविषयः अवघातः, न पुरोडाशविषयः, तेन धानास्वपि चोदकप्राप्तेषु व्रीहिष्वेव अवघातः, न धानावस्थायाम् । तत्र तु क्रियमाणे हन्तौ क्रमविपर्यासः स्यादेव । धानासु चावघातकरणे धानात्वं विहन्येत । यत्तु सकृदेव अवहनिष्याम इति, तथा सति अप्राकृतकार्यमदृष्टार्थमवहननं स्यात् । प्रकृतिवत्तु तुषविमोकार्थोऽवघातः क्रियमाणो धानात्वं विहन्यात् । तस्मात् नैवमधिकरणं युक्तम् ।

**सोम—** पर्यूहणादिवैषम्यप्रतिपादनात् **संगतिः ।** **सूत्रार्थस्तु—** अर्थात् क्रमविपर्यासे हन्तेर्धानार्थत्वात् तत्त्वं अविहतं धानात्वमेव स्यात् इति **भाष्यकारपक्षे ।** **वार्तिककारपक्षे** तु तत्त्वं पेषणस्य प्राकृतत्वमेव स्यात् हविरर्थत्वात् इति ।

वि— 'नावघातोऽवघातो वा धानानाम्, नाविनश्ये । , न नाशः क्रमबाधेऽतोऽवघातो नात्र बाध्यते ॥' तस्मात् क्रमबाधेन अवघातः कार्यः । इति भाष्यमते । वार्तिकमते तु– 'पेषणं नूतनं मन्ये प्राकृतं वा, क्रमान्तरात् । नूतनम्, प्राकृतं धर्ममात्रबाधस्य लाघवात् ॥'

भाट्ट— 'पितृभ्यो बर्हिषद्भ्यो धानाः पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम्' इत्यादिना विहिते धानाद्रव्यके यागे धानावस्थायां भर्जनोत्तरमवघातः कर्तव्यो न वेति भाष्यकारेण विचारितः । तस्यायमभिप्रायः, चोदकेन पाकात् पूर्वमेव यवावस्थायां अवघातविधानात् भर्जनोत्तरं तदप्राप्तेः, तदुत्तरमवघातकरणे च धानात्वव्याघातापत्तेः न भर्जनोत्तरमवघातः कार्यः । **इति प्राप्ते**, लोके पूर्वं किञ्चिदवहतानां यवानां भर्जनोत्तरं पुनरवघाते कृते एव धानात्वप्रसिद्धेः प्रयोजनानुरोधेन प्राकृतक्रमं बाधित्वाऽपि 'गुणलोपे च मुख्यस्य' इति न्यायेन ( १०।२। २७।६४ ) भर्जनोत्तरमपि प्राकृतः सधर्मकोऽवघातः कर्तव्य एव । न च धानात्वव्याघातः, दृढतरमुसलप्रहाराकरणेन तदनापत्तेः । प्रकृतौ हि हविःसंपादकवैतुष्यार्थमवघातो यथा हविः संपद्यते तथा कार्यः । अत



एव तदनुरोधेन भर्जनात् पूर्वमपि यत्किञ्चिद्वैतुष्यसंपत्त्यर्थमवघातः सधर्मकः कार्य एव, अन्यथा लोकप्रसिद्धधानात्वानिष्पत्तेः । अत एव आवृत्तिरपि तदनुरोधेन न दुष्यति । तत्र पूर्वोऽवघातः पाकार्थः, उत्तरस्तु धानात्वसिद्ध्यर्थः इति न कश्चित् विरोधः । एवंविधं भाष्याभिप्रायमजानतः **पार्थसारथेः** तद्दूषणाय प्रयास उपेक्षणीय एव । **वार्तिककारस्य** तु न द्विवारमवहतानामेव धानात्वम्, पूर्वमेव सम्यग्वितुषीकृतानां यवानां भर्जने कृते धानात्वाव्याहतेः । अतो यथाप्रकृत्येवावघातस्य भर्जनात् पूर्वमेवानुष्ठानोपपत्तेः नात्र धाना उदाहरणमपि तु मन्थः । स च दुग्धमिश्राः सक्तवः । प्रकृते च अभिवान्या मृतवत्सा गौः, तस्या दुग्धं विवक्षितम् । तत्र भर्जितयवतण्डुलानां पिष्टे एव सक्तुत्वप्रसिद्धेर्भर्जनोत्तरमेव पेषणं प्राकृतक्रमबाधेऽपि हविःसंपत्त्यर्थं पेषणस्य गुणलोपाधिकरणन्यायेनैव भर्जनोत्तरं करणोपपत्तेः । न च क्रमान्यत्वे पदार्थानामन्यत्वम्, व्युत्क्रमेऽपि तादृशप्रत्यभिज्ञाया अबाधात् । न च प्रकृतौ पेषणस्य पाकार्थत्वम्, येनेह भर्जनोत्तरं पाकाभावात् पेषणाभावः शङ्क्येत । सत्यपि पुरोडाशपाकं प्रति तस्योपकारकत्वे पाकपेषणयोर्द्वयोरपि द्वितीयया द्रव्यसंस्कारार्थत्वात् । अतश्च यथैव प्रकृतौ हविःसंपत्त्यर्थमेव पेषणं पाकात् पूर्वमनुष्ठितम्, तथैवेह सक्तुसंपत्त्यर्थं पाकोत्तरमनुष्ठानेऽपि न कश्चिद्विरोधः । अत एव प्रकृतौ पेषणपाकयोः पाठोऽप्यनुवाद एव । अतो वस्तुतो नात्र क्रमबाधोऽपि । तेनात्र भर्जनोत्तरमेव पेषणम् । अवघातस्तु भाष्यवार्तिककारमतयोः पूर्वोक्तरीत्या मन्थेऽपि भर्जनपूर्वोत्तरं पूर्वमेव वा कार्यः । धानापिष्टस्यैव सक्तुत्वात् । परिवापे तु न निर्वापप्रोक्षणादि, नावघातः न वा पेषणमित्युक्तमेव ।

मण्डन–'धानार्थमवहन्यते ।'

शंकर— 'पेषणं धर्मवन्मन्ये ।' वार्तिकमतेनेदम् ।

* महापितृयज्ञे 'नार्षेयं वृणीते' इति पर्युदासः । **भा.** १०।८।१।१–४. * **महापितृयज्ञे,** पात्रविशेषाधोभागरूपार्धेन परिमिते वत्सरहिताया धेन्वा दुग्धे पिष्टं प्रक्षिप्य मन्थः क्रियते । **वि.** ३।४।७. * महापितृयज्ञे मन्थे पेषणस्य न बाधः । १०।२।३४।७५. **मीको.** पृ. ३१२९ 'महापितृयज्ञे धानासु०' इत्यत्र द्रष्टव्यम् । * महापितृयज्ञे मन्थे भर्जनादुत्तरत्र सधर्मकं पेषणादि कर्तव्यम् । **टुप्.** १०।२।३४।७४. * महापितृयज्ञे 'ये पुरोदञ्चो दर्भाः' इत्यत्र विधिरनुवादो वेति संशयः, अनुवाद इति सिद्धान्तः । **वा.** ३।४।१। षट्सूत्र्याम् ४–५. * महापितृयज्ञे येयजामहस्य पर्युदासः । १०।८।१।१–४. **मीको.** पृ. २४७४ 'पर्युदासन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । * महापितृयज्ञे वैदिक्या एव इतिकर्तव्यताया अतिदेशः । **भा.** ७।४।२।२–१२.

* **महाप्रकरणं** प्रकृतेः विकृतेश्च । **बाल.** पृ. ९. * महाप्रकरणं प्रत्यक्षं परिकल्पितावान्तरप्रकरणात् प्रबलम् । तेन अभिषेचनीयप्रकरणात् राजसूयप्रकरणस्य प्राबल्यात् 'अक्षैर्दीव्यति' इत्यादीनां राजसूयाङ्गत्वमेव । **वि.** ४।४।२. * महाप्रकरणं ( विनियोजकं प्रमाणं ) प्रधानस्य । **बाल.** पृ. ९. ***महाप्रकरणात्** अवान्तरप्रकरणं प्रबलं तेन अभिक्रमणादेः न दर्शपूर्णमासाङ्गत्वम्, किन्तु प्रयाजाङ्गत्वम् । **कौ.** ३।३।७।१४ पृ. ३६३. * महाप्रकरणात् अवान्तरप्रकरणस्य बलीयस्त्वं अभिक्रमाधिकरणे ( ३।१।१० ) वक्ष्यते । **सु.** पृ. ९११. * महाप्रकरणात् बलीयांसि विनियोजकानि योग्यत्वं अवान्तरप्रकरणं एकवाक्यत्वं चेति । **वा.** ३।१।१४।२४.

* **महाप्रयोगविधिः** पुरुषार्थः यथा 'समे दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । **बाल.** पृ. १३.

* **महाबृहती** त्रिष्टुप् । पादेषु अक्षराणि ८।८।८। ८।१२। उदा० 'नवानां नवतीनाम्' (ऋसं. १।१९१। १३ ) । **के.**

* **महाब्राह्मणः** इत्यादौ महच्छब्दस्य पूज्यत्वाल्यगुणवाचित्वं अवगम्यते । **सु.** पृ.६४८.

* **महाभारत**निर्वचनान्वाख्याने द्वैपायनेन उक्तम् 'महत्त्वात् भारतत्वाच्च महाभारतमुच्यते । निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥' **वा.** १।३।५।१० पृ. २२८.

* **महाभाष्यकारः** उपवर्षः । 'व्याकरणे द्वितीयायाः तृतीयार्थवाचित्वानभिधानात्, या परीष्टिः

निमित्तानां कर्तव्या इत्युपपादिता, सा महाभाष्यकारेण न कर्तव्या इति उपवर्णिता ' इति उपवर्षे महाभाष्यकारशब्दप्रयोगः । सु. पृ. ६३२.

* **महाभूतानि** पृथिव्यप्तेजोवाय्वाकाशाख्यानि । **सु.** १००९.

* **महाभूतगुणाः** रूपस्पर्शादयः । **वा.** ३।१।७।१३ पृ. ७०२.

* **महाभूमिः** गोपथ-राजमार्ग-जलाशयादिसहिता सर्वेषां प्राणिनां साधारणं स्वं इति सार्वभौमोऽपि महाभूमिं सर्वस्वदाने दातुं न शक्नोति विश्वजिदादौ । वि. ६।७।२. * महाभूमिर्न देया विश्वजिति सर्वस्वदाने । ६।७।२।३. ' विश्वजिति सर्वस्वदाने महाभूमिर्न देया ' इत्यत्र द्रष्टव्यम् ।

* **महाभौतिकदेहस्थाः** आत्मानः । **वा.** ३।१।७। १३ पृ. ७०२.

**महामत्स्यतीरन्यायः** । श्रौतोऽयं न्यायः । यथा महामत्स्यस्तीरात्तीरं संचरन् तीराद्भिन्न एव, न त्वभिन्नो नापि तेन तीरेण लिप्यते, एवं आध्यात्मिकसंबन्धेन देह्यात्मा जाग्रदादौ संचरन् तस्माद्भिन्न एव, नापि जाग्रदादिरूपधर्मवान् वा । तथा च श्रुतिः ' महामत्स्य उभे कूले संचरति, पूर्वं चापरं चैवमेवायं पुरुष एतान् संचरति, स्वप्नान्तं बुद्धान्तं च ' इति । **साहस्री.** ८९७.

* **' महायज्ञैश्च** यज्ञैश्च ब्राह्मीयं क्रियते तनुः ' इति मनुः २।२८ । अयं पञ्चमलकारेण विधिः स्मार्तः । **बाल.** पृ. ४०.

* **महायानिक**संमतशून्यवादनिरासोऽपि **औत्पत्तिक**सूत्रे (१।१।५।५) एव भाष्ये कृतः । **बाल.** पृ. ६ .

* **महारात्रं** त्रिभागावशिष्टा रात्रिः । **सोम.** ६।५।१ । चन्द्रोदयात् पूर्वं इति भाट्टदीपिका । **भाट्ट.** ६।५।१ पृ. २८८.

* **महावाक्यं** ( विनियोजकं प्रमाणं ) प्रयोगविधिरूपं नित्यानुमेयमेव । **बाल.** पृ. ९. * न च **महावाक्ये** सति अवान्तरवाक्यं प्रमाणं भवति, पदान्तरस्य बाधनात्, यथा ' नोद्यन्तमादित्यमीक्षेत ' इति प्रतिषेधो गम्यते महावाक्यात्, अवान्तरवाक्यात् ईक्षणविधानम् । **भा.** ६।४।७।२५. * **महावाक्येषु** यद्यपि अवान्तरवाक्यानि अप्रमाणं तथापि अर्थासंभवात् अविवक्षिते महावाक्ये अवान्तरवाक्याश्रयणम् । **वा.** २।३।१।१.

* **महावीरस्य** ( मृण्मयपात्रविशेषस्य ) ज्योतिष्टोमे प्रवर्ग्याङ्गभूतस्य भेदने ' तं भिन्नमभिमृशेत् यद्दते चिदभिश्रियः ' इति सामवेदविहितस्य उच्चैस्त्वम् । **वा.** ३।३।२।९ पृ. ८१३.

* **महावेदिः** अष्टाविंशत्यूनं पदसहस्रमिता । **कु.** ३।७।६।१४. * **महावेद्यां** मन्त्रपूर्वकं प्रवर्त्य हविर्धानमण्डपे हविर्धानाख्ये शकटे भवतः । **वि.** १२।१।७ .

* **महाव्रतस्य** प्रकृतिः ज्योतिष्टोमः । **वि.** १०।४।८ . * **महाव्रते** उपगात्रीणां पत्नीनां अतिदिष्टैः उपगातृभिः ऋत्विग्भिः समुच्चयः, तार्प्येण अहतस्य समुच्चयः, उपदिष्टश्लोकादिसाम्नां अतिदिष्टगायत्रादिसाम्नां च समुच्चयः । **बाल.** पृ. १७८. * महाव्रते काण्डवीणाभिः ' पत्नय उपगायन्ति ' । तच्चोपगानं कर्मान्तरं दुन्दुभिगानस्योपगानम् । **वि.** १०।४।६ . * महाव्रते गवामयनगते उपगानकर्त्रीभिः पत्नीभिः आतिदेशिकानामुपगानकर्तृणामृत्विजां न बाधः । १०। ४।५।८-९.

**महाव्रते तार्प्यादिभिः प्राकृताहतवाससः समुच्चयः ॥**

**आच्छादने त्वैकार्थ्यात् प्राकृतस्य विकारः स्यात् । १०।४।७।१३॥**

**भाष्यम्**— महाव्रते श्रूयते ' तार्प्यं यजमानः परिधत्ते, दर्भमयं पत्नी ' इति । अस्ति तु प्रकृतौ ' अहतं वासः परिधत्ते ' इति । तदिह चोदकेन प्राप्तम् । तत्र संशयः किमहतस्य वाससो निवृत्तिः, नेति । किं प्राप्तम् ? आच्छादने तु प्राकृतस्य विकारः स्यात् । कुतः ? ऐकार्थ्यात् । एको ह्यर्थः प्राकृतस्य वैकृतस्य च । कौपीनमाच्छादयितुं प्रकृतौ विकृतौ च प्रच्छादनं क्रियते । तस्मात् प्रत्यक्षश्रुतेन चोदकप्राप्तं निवर्तेत ।

**अधिकं वाऽन्यार्थत्वात् । १४ ॥**

**भाष्यम्**— वाशब्दः पक्षं व्यावर्तयति । अधिकमिदं प्राकृताद् वाससो भवितुमर्हतीति । कुतः ? तद्धि



निवर्तकं भवति, यदनिवर्त्य न शक्नोति निवेष्टुम् । यत्त्वनिवर्त्यापि शक्नोति भवितुम् , न तन्निवर्तयति । तद्धि निवर्तयदप्रतिषेधकं सच्चोदकं प्राप्तं बाधेत । **ननु** कौपीनप्रछादने परिधत्ते इति भवति, नान्यकार्यके । **उच्यते** । नैतदेवम् । उपरिवाससोऽपि कार्ये परिधत्ते इति भवति, तद्यथा कम्बलं परिधत्ते, रौरवं परिधत्ते इति । सर्वतो धत्ते परिधत्ते इत्यवयवप्रसिद्ध्या भवति । तस्मादहतस्य वाससो न निवृत्तिः, समुच्चयः इति ।

**समुच्चयं च दर्शयति । १५ ॥**

**भाष्यम्**— समुच्चयं च वासःशब्देन बहुवचनान्तेन दर्शयति ' वासांसि वाराही चोपानहौ विमुञ्चति ' इति । कृष्णविषाणया वासांसि विस्रंसयति, ततोऽध्वर्युः परिधत्ते इति । तस्मादपि पश्यामः अनिवृत्तिः, समुच्चयः इति ।

**सोम**-- तार्प्यमिति घृताक्तं वासः । तृपाख्यवृक्षविशेषस्य ( ' तृपाख्य ' इति मुद्रिते दृश्यते । तच्चशुद्धमेव । तथा च शास्त्रदीपिकायां विस्तरादिषु च ' तार्यं यजमानः परिधत्ते ' इति पाठः सोऽपि अशुद्ध एव । भाट्टदीपिकाटीकायां शम्भुभट्टेन ' तार्प्यमिति पवर्गीयः पकारः ' इति स्पष्टमेव उक्तत्वात् । ) विकारः इत्येके ( इति ) भट्टभास्करः । अहतं सद्यःकृतमनुपभुक्तं अकृत्तदशम् । एककार्यत्वादेव **संगतिः** ।

**वि**-— ' तार्प्याद्यहतवस्त्रस्य बाधकं स्यान्न वा, ऽग्रिमः । गुह्याच्छादनकार्यैक्या, दयोग्यत्वात् समुच्चयः ॥ '

**भाट्ट**-- स्वतन्त्रे महाव्रते ' तार्प्यं यजमानः परिधत्ते दर्भमयं पत्नी ' इति श्रुतम् । तत्र तार्प्यं घृताक्तकम्बल इति माधवः । अत्रापि परिधानोद्देशेन तार्प्यादिविधौ पत्न्यादिपरिधानेऽपि तदापत्तेः यजमानोद्देशेन तद्विधौ शयनादावपि तदापत्तेरवश्यं तार्प्यादिविशिष्टं परिधानमेव यजमानाद्युद्देशेन विधीयते, तच्च प्राकृतमेवातिदेशतः प्राप्तेः पूर्वं विधीयते, कर्मान्तरमेव वेत्यन्यदेतत् । तस्य च प्राकृतकार्यापन्नत्वेनैव विधानात् प्राकृतस्य अहतस्य निवृत्तिः । **न च** प्रकृतावहतस्य कौपीनपदवाच्यभगलिङ्गाच्छादने विनियुक्तत्वात् तत्र च तार्प्यादीनामयोग्यत्वात् योग्यतयैवोपरिधारण एव तन्निवेशप्रतीतेः अभिन्नकार्यत्वेन नाहतनिवृत्तिरिति वाच्यम्, कौपीनाच्छादने एव परिदधातिप्रयोगेणोपरिधारणे तार्प्यादिविधाने लक्षणापत्तेः । तार्प्यादिना कौपीनाच्छादनस्यापि कर्तुं शक्यत्वाच्च । **वस्तुतस्तु**— अन्याच्छादनेऽपि ' परिस्तृणीत परिधत्त वेदिम् ' इत्यादौ परिदधातिपदप्रयोगात् यद्यपि न कौपीनाच्छादने एव तद्विधानम्, तथापि प्रकृतावपि ' अहतं वासः परिधत्ते ' इत्यनेन कौपीनाच्छादन इव आचारप्राप्तोपरिभागाच्छादनेऽप्यहतविधानाद्विकृतावपि तार्प्यादेरुभयत्रैव विधानादुभयत्रैवाहतनिवृत्तिः । इति प्राप्ते, कौपीनाच्छादने गृहस्थस्य कच्छाद्यसंभवेन तार्प्यादीनामयोग्यत्वात् उपरिधारणे एव तार्प्यादिविधिप्रतीतेर्न कौपीनाच्छादने अहतनिवृत्तिः । अत एव न्यायेन आचारप्राप्तोपरिधारण एव प्राकृताहतनिवृत्तिप्रसक्तौ ' वासांसि विभ्रंसयति ' इति प्रतिपत्तिविशेषविधायके वाक्ये वासोबहुत्वानुवादलिङ्गेन समुच्चयप्रतीतेर्न तत्राप्यहतनिवृत्तिः । एवं च यद्यपि तार्प्यं कौपीनाच्छादनेऽपि कथञ्चिद्योग्यम्, तथापि वासोबहुत्वानुवादबलेनैव तस्याहतेन समुच्चयः । दर्भमयस्य तु कथमप्ययोग्यत्वादुपरिधारण एव विधिप्रतीतेर्वासोबहुत्वानुरोधेन तत्रापि समुच्चयः । अत एव यत्र न वासोबहुत्वानुवादः यथा विश्वजिति ' अवभृथादुदेत्य वत्सत्वचं परिधत्ते ' इति श्रुते तत्रैकस्याः वत्सत्वचः कौपीनाच्छादनेऽयोग्यत्वात् तत्राहतस्यातिदेशप्राप्तस्यानिवृत्तावपि उपरिधारणे तन्निवृत्तिरिष्टैव । विशिष्य चेदं द्वादशे वक्ष्यते ।

**मण्डन**— ' समुच्चयो वाससां स्यात् । '

**शंकर**-- ' बाध्यं न वासस्तार्प्येण । '

* महाव्रते ' दिक्षु दुन्दुभयो नदन्ति ' इति दुन्दुभिगानम्, तत्सजातीयं च काण्डवीणोपगानम् । **वि.** १०।४।६ .

* महाव्रते पत्नय उपगायन्ति, पिच्छोलाभिः, काण्डवीणादिभिः, आपाटलिकाभिः । **भा.** १०।४।५।८.

* महाव्रते शुक्रग्रहेण ऐन्द्रवायवादिग्रहाणां समुच्चयः । १०।४।२।३-५ . **मीको.** पृ. १६४४ ' ग्रहसमुच्चयन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**महाव्रते स्तोत्रान्तरसाधनीभूतैः श्लोकादिसामभिः प्राकृतसाम्नां समुच्चयः ॥**

**सामस्वर्थान्तरश्रुतेरविकारः प्रतीयेत । १०।४।८।१६ ॥**

**भाष्यम्**-- महाव्रते श्रूयते 'श्लोकेन पुरस्तात्सदसः स्तुवते, अनुश्लोकेन पश्चात्सदसः, क्रौञ्चेन चात्वालमवेक्ष्यमाणः' इति । सन्ति तु प्राकृतानि सामानीह चोदकेन प्राप्तानि । तत्र संशयः किं प्राकृतानां साम्नां निवृत्तिः, उतानिवृत्तिः समुच्चय इति । किं प्राप्तम् ? स्तुवते इति प्रकृतिलिङ्गसंयोगे प्रत्यक्षश्रुते चोदकप्राप्तानि सामानि निवर्त्यन्ते इति । यथा 'कौत्सं भवति, काण्वं भवति, वसिष्ठस्य जनित्रे भवतः, शुद्धाशुद्धीये भवतः, भर्गयशसी भवतः, क्रौञ्चानि भवन्ति' इति श्रुतेषु चोदकप्राप्तानि निवर्त्यन्ते, एवमिहापि द्रष्टव्यम् । **एवं प्राप्ते, ब्रूमः** । सामसु 'श्लोकेन पुरस्तात्स्तुवते' इत्येवमादिश्रूयमाणेषु प्राकृतानामविकारः प्रतीयेत । कुतः ? अर्थान्तरश्रुतेः । अर्थान्तरेण हि संबन्धः श्रूयते 'पुरस्तात्सदसः स्तुवते' इत्येवमादि । यच्च पदं केनचित् पदेन संबध्यते विशेषणत्वेन, न तत् पदान्तरेण सह संबन्धमर्हति सकृदुच्चरितम् । यथा 'भार्या राज्ञः, पुरुषो देवदत्तस्य' इति भार्याविशेषणत्वेनोच्चार्यमाणो राज्ञः इति शब्दो न पुनः पुरुषशब्देन संबध्यते इति । एवं 'पुरस्तात्सदसः स्तुवते' इत्यनेन संबध्यमानो न पुनः 'श्लोकेन स्तुवते' इति संबन्धमर्हति । यदि स्तुतौ देशसत्ता विधीयते, श्लोकेन चेत्यनूद्येत, तत उपपद्येतैकं वाक्यमिति । यदा तु पुनर्देशसत्ता विहिता, तदा परिपूर्णं वाक्यम्, श्लोकेन चेत्येतदपि विधातव्यम्, तदा पुनर्विधिप्रत्ययो हृदयमानेतव्यः । हृदयमानेतुमुच्चारयितव्यः, न चोच्चारितः । तस्मादनुच्चारितो वा कल्पयितव्यः, उच्चारणं वा कल्पयितव्यम् । कल्पनायां च शब्दो बाध्येत । तस्मान्नैवम् । कथं तर्हि ? देशसामविशिष्टा स्तुतिः श्रुत्या विधीयते । न चैकेन केनचित् संबन्धे विहिते, परिपूर्णे वाक्ये, पुनरपरं वाक्यं कल्पयितव्यं भवति । उभयविशेषणविशिष्टा हि स्तुतिः श्रुत्या यदा विहिता, तदा परिपूर्णं वाक्यम्, न तदा पुनरपरेण केनचित् संबन्धः कल्पयितव्यो भवति, यदर्थं किंचित् द्विरुच्चार्येत । तस्मात् स्तुत्यन्तरमिदं विधीयते, न प्राकृतं निवर्त्यते, समुच्चय इति ।

**अर्थे त्वश्रूयमाणे शेषत्वात् प्राकृतस्य विकारः स्यात् । १७ ॥**

**भाष्यम्**— अथ यदुपवर्णितम्, यथा 'कौत्सं भवति, काण्वं भवति, वशिष्ठस्य जनित्रे भवतः' इत्येवमादिभिरिव प्राकृतानां निवृत्तिरिति, तत्परिहर्तव्यम् । अत्रोच्यते । युक्तमत्र यत् प्राकृतं निवर्त्यते । अत्र ह्यर्थान्तरं न श्रूयते, प्राकृतस्यैव शेषः श्रूयते । तस्मात्तत्र वैकृतेन प्रत्यक्षश्रुतेन प्राकृतस्य निवृत्तिरिति । इह तु अर्थान्तरश्रवणात् वाक्यभेदप्रसङ्गात् अनिवृत्तिरित्युक्तम् ।

**सोम**— पूर्वेण एककार्यत्वात् **संगतिः । सूत्रे**-- अर्थान्तरश्रुतेः प्राकृतस्तुत्यपेक्षया स्तुत्यन्तरसंयोगश्रुतेः प्राकृतसाम्नामबाधः इत्यर्थः ।

**वि**-- 'बाध्यं श्लोकादिनाऽऽज्यादि न वा, ऽऽद्यः स्तुतिलिङ्गतः ।, देशसाम्नोर्विधौ भेदे ( भेदात् ) वैशिष्ट्याच्च समुच्चयः ॥' ९.

**भाट्ट**-- तत्रैव 'श्लोकेन पुरस्तात् सदसः स्तुवीत' इत्यादिना प्राकृतस्तोत्रानुवादेन श्लोकाख्यसाममात्रविधे देशाख्यगुणान्तरस्यापि विधेयत्वानुपपत्तेः, वाक्यभेदापादकगुणादेव कर्मान्तरत्वप्रतीतेः, तस्य च उपहोमन्यायेन ( ५।२।९ ) अदृष्टार्थत्वात् समुच्चयः स्तोत्रान्तरैः । **न च** प्राकृतस्तोत्राण्येव अतिदेशतः पूर्वप्रवृत्त्यङ्गीकारेण गुणद्वयविशिष्टानि विधीयन्तां तेन प्राकृतसाम्नः प्राकृतदेशस्य च निवृत्तिरिति **वाच्यम्** । स्तौतिधातोः पूर्वविहिताविहितसाधारणस्तोत्रमात्रवाचित्वेनातिदेशतः पूर्वं प्राकृतस्तोत्राणामेव विशिष्योपस्थापकाभावेन विधिवशात् कर्मान्तरत्वप्रतीतेः । गृहमेधीये 'आज्यभागौ यजति' इत्यत्र तु आज्यभागपदमेव पूर्वकर्मणो विशिष्योपस्थापकमिति विशेषः । ९.

**मण्डन**-- 'श्लोकस्तोत्रं न बाधकम् ।' १०.

**शंकर**-- 'प्राकृती वैकृतस्तुतेः ।' प्राकृती स्तुतिः न बाध्या । १०.

* **महाव्रतगतं धर्मं** संवत्सरसत्रे दर्शयति 'पत्नय उपगायन्ति' इति । **भा.** ८।१।११।१८.



* **महाव्रतप्रयोग**प्रतिपादकं आश्वलायननिर्मितं कल्पसूत्रं अरण्येऽधीयाना बह्वृचाः कर्तुर्विस्मरणात् वेदत्वेन व्यवहरन्ति । वि. ९।२।१ वर्णकं २.

* **महासतोबृहती** जगती । पादेषु अक्षराणि १२।८।१२।८।८ । उदा० 'आ यः पप्रौ भानुना' । ( ऋसं. ६।४८।६ ) । **के.**

* **महिमग्रहाभ्यां** ऐन्द्रवायवादिग्रहाणां समुच्चयः अश्वमेधे । १०।४।२।३–५. **मीको**. पृ. १६४४ 'ग्रहसमुच्चयन्यायः' इत्यत्र द्रष्टव्यम् ।

**महिषी प्रसवोन्मुखी महिषो मदनातुर इति न्यायः** । यत्र केचित् महामूर्खा मृतम्लेच्छाद्यधमजातिस्थानानि स्वस्वकुलदैवतानि स्वाभिलषितप्रदानि च मत्वा म्लेच्छाद्यधमजातिनीचयोनिप्राप्त्या अतिदुःखितेभ्योऽपि स्वामीष्टं याचन्ते, तत्रास्य प्रवृत्तिरिति । उक्तं च गुमानीकविना रावणमारीचसंवादविषये । तथाहि, तं मारीचं प्राप्य भीरुकं दशाननः प्रागुदाजहार 'सीतामीहे हनुमत्र मे रणे सहायो भवार्थकार । कुत्ता रोवे दर्द देह की मीयाँ कहे तुम चलो शिकार ॥' इति । **साहस्री.** ८१.

* **महिष्याः** गृहे आदित्यश्चरुः राजसूये । **भा.** ११।२।३।१३.

* **मांसं** आमयदोषात् व्रतकार्ये उपादीयते । **भा.** १२।२।१।७.

* **'मांसं तु सवनीयानां चोदनाविशेषात् ।'** ३।८।२२।४३ ॥ इत्यत्र पुरोडाशानादरेण सवनीयमात्रे मांसविधिः वक्ष्यते शाक्यानामयने । **सु.** पृ. ६३७.
* 'मांसं तु सवनीयानाम्' इति सिद्धान्तात् पुरोडाशमात्रेण असंबध्यमानं तरसमयत्वम् । **वा.** २।१।४।१२ पृ. ४१४.

**मांसं तु सवनीयानां चोदनाविशेषात् । ३।८।२२।४३ ॥**

शाक्यानामयनं (शाक्त्यानामयनं इत्यपि पाठः) नाम षट्त्रिंशत्संवत्सरं सत्रम् । 'तत्र संस्थितेसंस्थितेऽहनि गृहपतिर्मृगयां याति, स तत्र यान् मृगान् हन्ति, तेषां तरसाः पुरोडाशाः सवनीया भवन्ति' इति श्रुतम् । इदं तरसमयत्वं नाम मांसमयत्वं किं सर्वेषामेव पुरोडाशानां सवनीयपुरोडाशानामेव वेति विचारे सर्वेषामेवेति उत्सूत्रे पूर्वपक्षे सिद्धान्तमाह । तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । तरसशब्देन यत् मांसं उक्तं तत् सवनीयानामेव पुरोडाशानाम् । कुतः ? चोदनाविशेषात् । 'तरसाः पुरोडाशाः सवनीयाः' इति तरससवनीयसंबन्धो विधीयते । पुरोडाशाः इति तु अनुवादः । तस्मात् धानाकरम्भपरिवापपयस्यापुरोडाशरूपाणां पञ्चानामपि सवनीयपुरोडाशशब्दितानां द्रव्याणां स्थाने मांसं ग्राह्यं सवनीयेति विशेषचोदनत्वात् इति सिद्धान्तः ।

**भक्तिरसंनिधावन्याय्येति चेत् । ४४ ॥**

शाक्यानामयने नामसत्रे 'तरसाः पुरोडाशाः सवनीया भवन्ति' इति तरसशब्दितमांसमयत्वं पुरोडाशानामुक्तम् । तच्च धानादिपञ्चद्रव्यात्मकानां सवनीयानामेव पुरोडाशानां न तु यावतां पुरोडाशानां इति सिद्धान्ते पूर्वसूत्रेण उक्ते पूर्वपक्षी ब्रूते । सिद्धान्तिना पुरोडाशशब्दः धानाकरम्भपरिवापपयस्यासु गौणः स्वीक्रियते । ततो वरं चरमश्रुतः सवनीयशब्द एव सवनीयासवनीयसमुदायवाचित्वेन स्वीकर्तुम् । तदाह– असंनिधौ, संनिधिः अभेदः असंनिधिः अत्यन्तभेदः, असंनिधौ धानादीनां पुरोडाशात् अत्यन्तभेदे सति पुरोडाशशब्दस्य धानादिषु भक्तिः गौणता लाक्षणिकता वा अन्याय्या । ततश्च पुरोडाशशब्दस्य लक्षणा न स्वीकार्या मुख्येऽर्थे संभवति । अत्र सिद्धान्ती ब्रूते, इति चेत् पूर्वपक्षी ब्रूयात् इति ।

**स्यात् प्रकृतिलिङ्गत्वाद् वैराजवत् । ४५ ॥**

पुरोडाशशब्देन धानादीनामपि ग्रहणे पुरोडाशशब्दस्य लक्षणा स्यात् । सा चान्याय्या मुख्येऽर्थे संभवति । इति पूर्वपक्षिणा पूर्वसूत्रे शङ्कितम् । तत्र उत्तरार्थं सिद्धान्तसूत्रम् । स्यात् पुरोडाशशब्दस्यैव धानादिषु लाक्षणिकत्वं न्याय्यम् । न तु सवनीयासवनीयसमूहे लाक्षणिकत्वं सवनीयशब्दस्य न्याय्यम् । "प्रकृतिलिङ्गत्वात् । प्रकृतौ अग्निष्टोमे पुरोडाशशब्दस्य धानादिसवनीयहविःपञ्चके लिङ्गत्वात् तल्लक्षणार्थत्वात् भक्तिः स्यात् । पुरोडाशशब्दस्य मुख्यस्यापि गौणत्वमुचितम् । पुरोडाशस्य सवनीयशब्देन अवयुत्यानुवादानुपपत्तेः धानादिसमूहोक्ति-

द्वारैव असवनीयपुरोडाशलक्षणा अङ्गीकार्या, धानादिसमूहेन च सवनबाह्यस्य पुरोडाशस्य अनन्वयात् न शक्या तल्लक्षणा इति कृत्वा मुख्यस्यापि पुरोडाशब्दस्यैव लक्षणावृत्तिर्युक्ता इत्याशयः " इति **सुधा**। " प्रकृतौ ज्योतिष्टोमे ' अनुसवनं पुरोडाशा निरुप्यन्ते ' इत्यादौ दृष्टं लिङ्गं धानादिपञ्चहविःप्रत्यायनसामर्थ्यं लाक्षणिकं यस्य सः प्रकृतिलिङ्गः पुरोडाशशब्दः । अतो विकृतावपि लक्षणा न दुष्यति " इति तु **कुतूहलम्**। वैराजवत् इति सौत्रो दृष्टान्तः । यथा प्रकृतौ ज्योतिष्टोमे ' यदि रथंतरसामा सोमः स्यात् ' इत्यादौ सामशब्दस्य पृष्ठस्तोत्रे लाक्षणिकस्य दृष्टत्वात् विकृतावपि ' एकविंशः षोडशी वैराजसामा ' इत्यत्र सामशब्दस्य पृष्ठस्तोत्रे लक्षणा तद्वत् । वैराजशब्देन वैराजसामशब्दो दृष्टान्तितः । तस्मात् शाक्यानामयने सवनीयपुरोडाशशब्दितहविःपञ्चके एव मांसमयत्वमिति सिद्धान्तः । **के.**

**मांसं तु सवनीयानां चोदनाविशेषात्स्यात् । ३।८।२०।४२ ॥**

शाक्यानामयनं षट्त्रिंशत्संवत्सरम् । तत्रेदं समामनन्ति ' संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति, स तत्र यान् मृगान् हन्ति तेषां तरसाः पुरोडाशाः सवनीया भवन्ति ' इति । तत्र संदेहः किं सवनीयानामन्येषां च संभवतां पुरोडाशानां स्थाने तरसाः उत सवनीयानामेवेति । पूर्वापवादेनेदमारभ्यते । अत्रायं पूर्वपक्षः । ' सवनीया भवन्ति ' इति श्रूयते । तत्र सवनीयत्वविशिष्टपुरोडाशोद्देशेन तरसविधिः संभवति, उद्दिश्यमानविशेषणविवक्षायां वाक्यभेदप्रसङ्गात् । अन्यतरोद्देशेन च तरसविधौ संनिकर्षविशेषात् पुरोडाशोद्देशेनैव युक्तः, न तु व्यवहितसवनीयोद्देशः । सवनीयपदं तु लक्षणया सवनीयपुरोडाशानुवादकं अवयुत्यानुवादो वेति । तेन षट्त्रिंशत्संवत्सराख्यायां विकृतौ मांसविधिरयं सवनीयपुरोडाशविषय एवेति । **एवं प्राप्ते, अभिधीयते ।** भवेदेवं यदि सवनीयशब्दः प्रमादपाठो भवेत् । तथाहि, यदा पुरोडाशोद्देशेन मांसविधानं तदा सवनीयशब्दः सवनीयपुरोडाशेषु लाक्षणिको वक्तव्यः । लक्षणा च संबन्धविधिना । न च सवनीयपुरोडाशानां सवनीयशब्दोपात्तैः पुरोडाशधानादिभिः कश्चित् संबन्धोऽस्ति, येन लक्षणा भवेत् । तथा च श्रुत्यनुवादत्वं सवनीयशब्दस्य पुरोडाशाः सवनीया इति सामानाधिकरण्यानुपपत्तेः । जातिगुणावयवद्वारेण समानविषययोर्हि शब्दयोः सामानाधिकरण्यं भवति । यथा गौः शुक्ला इति, न तु गावः शुक्ल इति, नानाजातीया वा पुरुषा ब्राह्मणा इति । सवनीयोद्देशेन तरसविधौ पुरोडाशस्य धानादेश्च सवनीयत्वं न संभवतीति छत्रिन्यायेन पुरोडाशशब्दस्य सवनीयशब्दोपात्तेषु पुरोडाशधानादिषु लक्षणया वृत्तिरिति । न च पूर्वपक्षे सवनीयपदस्यानुवादप्रयोजनमप्यस्ति । सिद्धान्ते तु हविर्व्यतिरिक्तानामन्येषामपि सवनीयत्वात् हविःपरत्वज्ञापनार्थो युक्तः पुरोडाशपदेनानुवाद इति । किञ्च प्रकृतौ ' पुरोडाशानलंकुरु ' इति प्रैषे पुरोडाशशब्दस्य लक्षणावृत्तत्वं दृष्टम् । अतो जघन्यत्वात् पुरोडाशशब्दस्यैव लाक्षणिकत्वमुचितम् । न त्वप्रतीतलक्षणमुचितम् । न च प्रतीतलक्षणादृते ( ? ) सवनीयशब्दस्य नैकसवनीयवर्तिनां पुरोडाशधानादीनां स्थाने तरसविधिरिति सिद्धम् । **प्रयोजनम्**— पूर्वपक्षे सवनीयपुरोडाशानामेव कार्यं मांसेन कर्तव्यम् , सिद्धान्ते त्वेकस्यैव सवनीयस्य पुरोडाशस्य धानादीनां वेति । **सूत्रं तु** सवनीयपुरोडाशादीनां कार्ये मांसचोदनाविशेषादिति । **तौता.**

* मांसं ब्रह्मचारिणा न भक्षयितव्यं इत्युक्ते दर्विगतमपि लेपं वर्जयन्ति । **भा.** ९।४।९।३९, * ' मधु **मांसं** च वर्जयेत् ' ब्रह्मचारी । १०।६।१२।३२. * **मांसस्य** हवीरूपस्य पाको नियतः । वि. १०।७।२.

**मांसाधिकरणम्** । शाक्यानामयने सवनीयपुरोडाशास्तरसमयाः ॥

**मांसं तु सवनीयानां चोदनाविशेषात् । ३।८।२२।४२॥**

**भाष्यम्**— शाक्यानामयनं षट्त्रिंशत्संवत्सरम् । तत्रेदं समामनन्ति ' संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति, स तत्र यान् मृगान् हन्ति तेषां तरसाः पुरोडाशाः सवनीया भवन्ति ' इति । तत्र संदेहः, किं सवनीयानामन्येषां च संभवतां पुरोडाशानां स्थाने तरसा उत सवनीयानामेवेति । किं प्राप्तम् ? सर्वपुरोडाशानां मांसमयता स्यात् । न शक्यते पुरोडाशानां च मांसमयता विधातुं सवनीयशब्देन च पुरोडाशान् विशेषयितुम् । भिद्येत हि तथा वाक्यम् । तस्मात्सर्वपुरोडाशानां मांसमयता । इति **प्राप्ते, उच्यते । मांसं तु** सवनीयानां स्यात् । तरसाः सवनीया भवन्तीति तरससवनीयसंबन्धो विधीयते, तरसाः पुरोडाशा भवन्ति इत्ययं त्वनूद्यते । कुत एतत् ? सर्वपुरोडाशेषु सवनीयशब्दोऽनुवादो न घटते, पुरोडाशशब्दस्तु सवनीयेष्ववकल्पते । तस्मात्पुरोडाशशब्दोऽनुवाद इति । तस्मात्सवनीयानां धानादीनां स्थाने मांसं चोदनाविशेषादिति ।

**वा**— पुरोडाशशब्दस्य धानादिष्वसमर्थत्वात्सर्वपुरोडाशविषयत्वम्, सत्यपि सवनीयत्वे विशेष्टुमशक्यत्वात् । इति **प्राप्ते, अभिधीयते ।** सवनीयशब्दस्याप्रमादपाठात्पुरोडाशशब्दं लिङ्गसमवायाद्गौणं कृत्वा धानादीनामपि ग्रहणमिति ।

**भक्तिरसंनिधावन्याय्येति चेत् । ४३ ॥**

**भाष्यम्**— इति चेत् पश्यसि, सवनीयेषु पुरोडाशशब्दोऽनुवादो भविष्यतीति । धानादिषु पुरोडाशशब्दो न वर्तते । भक्तिश्चान्याय्या मुख्ये संभवति ।

**वा**— अत्यन्तभिन्नत्वात् द्रव्यान्तरेषूपचारो न युक्तो यदि वा सवनीयशब्दस्याप्यवयुत्यानुवादेन भवत्विति ।

**स्यात्प्रकृतिलिङ्गत्वाद्वैराजवत् । ४४ ॥**

**भाष्यम्**— प्रकृतौ ज्योतिष्टोमे धानादिष्वयं पुरोडाशशब्दो भाक्तः संनिहितेषु प्रयुक्तः । इहापि भाक्त एव प्रयोक्ष्यते । अत्रापि हि सवनीयशब्देन ते संनिहिताः । प्रकृतौ लिङ्गसमवायाच्छब्दप्रवृत्तिर्विकृतावपि तथैव । यथा छत्रिणो गच्छन्ति, ध्वजिनो गच्छन्तीति, यथा उक्थ्यो वैरूपसामा, एकविंशः षोडशी वैराजसामा, इति प्रकृतिलिङ्गेन सामशब्देन वैरूपपृष्ठो वैराजपृष्ठ इति गम्यते । एवमिहापि सवनीयानां मांसमयतेति ।

**वा**— ' पुरोडाशानलंकुरु ' इति प्रकृतौ धानादिषु लक्षणा दृष्टा, न तु सवनीयशब्दस्यासवनीयेषु प्रवृत्तिः । साहित्याच्च शक्यते तेन लक्षयितुं नेतरेण । न ह्यसवनीयस्य पुरोडाशस्य धानादिभिः सह संबन्धोऽस्ति । तस्मात् धानादीनां स्थाने तरसा इति सिद्धम् । ' इति कथितबलाबलप्रवेकैरवगतसर्वविरोधबाधमार्गैः । श्रुतिकृतदृढनिश्चयैः प्रमाणैः स्थित इह कर्मसु शेषशेषिभावः ॥ '

**शा**— ' नह्युद्देश्यः पुरोडाशः सवनीयेन शक्यते । विशेष्टुं तेन सर्वार्थं तरसं नवनीतवत् ॥' इति प्राप्ते, अभिधीयते । ' पुरोडाशं समुद्दिश्य तरसं चोद्यते यदि । ततः स्यात्सर्वगामित्वमुद्देश्यस्याविशेषणात् ॥ उद्दिश्य सवनीयांस्तु मांसमत्र विधीयते । पुरोडाशापुरोडाशसमवाये तु लक्षणा ॥ पुरोडाशपदे तद्धि जघन्यं लक्षणां व्रजेत् । प्रकृतौ चास्य दृष्टा सा पुरोडाशानलंकुरु ॥ सवनीयपदं मुख्यं न मुख्यार्थं परित्यजेत् । दृष्टा च प्रकृतौ नैव सवनीयस्य लक्षणा ॥ अव्यवायाच्च तेनैव युक्ता तरससंगतिः । तद्व्यवेतः पुरोडाश इति तेन न संगतिः ॥ '

**सोम**—**सूत्रार्थस्तु**— श्रौततरसशब्दव्याख्यानं मांसमिति तद्धानादीनां सवनीयानामेव, न तु सवनीयासवनीयपुरोडाशानाम्, संनिहितान्वयरूपविशेषलाभात् इति ।

**वि**— ' शाक्त्यायने पुरोडाशास्तरसा इति मांसता । सर्वत्र सवनीये वा सर्वत्र नवनीतवत् ॥ तरसाः सवनीयाः स्युरिति तत्संनिधिः श्रुतः । पुरोडाशस्य मांसत्वं तेष्वेवातो नियम्यते ॥ '

**भाट्ट**— षट्त्रिंशदाब्दिके शाक्यानामयनाख्ये सत्रे ' संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति, तत्र यान् मृगान् हन्ति तेषां तरसाः सवनीयाः पुरोडाशा भवन्ति ' इति श्रुतं मांसं 'भवन्ति' इति विधिभावनाप्रत्यासन्नत्वात् पुरोडाशस्य तदुद्देशेनैव विधीयते । विधेरेव हि प्रवर्तनार्थं भावनाभाव्यसाकाङ्क्षत्वम् । अतस्तत्प्रत्यासन्नस्यैव तदुचितम्, न सवनीयानाम् । यदा तु ' पुरोडाशाः सवनीयाः ' इति भवदेवादिधृतः पाठस्तदा प्राथमिकत्वाद्विधेयतरसप्रत्यासन्नत्वाच्च पुरोडाशकार्यस्यैवोद्देश्यत्वं स्पष्टमेव । न च पुरोडाशस्य सवनीयपदेन विशेषणम्, विशिष्टोद्देशापत्तेः । अतः सर्वपुरोडाशकार्ये तरसं विधीयते । सवनीयपदं तु सवनीयासवनीयपुरोडाशमात्रे गौणं लाक्षणिकं वा । अतः पुरोडाशमात्रस्थाने तरसम्, न धानादिस्थाने। इति प्राप्ते,

सवनीयपदवत्पुरोडाशपदेऽपि कार्यलक्षणापत्तेः प्राथमिकसवनीयपदमेव सवनीययागोद्देश्यतापरम् । प्रथमायास्तु द्वितीयार्थे लक्षणा उभयवादिसिद्धैव । अतः सवनीययागोद्देशेनैव धानादिपञ्चकबाधेन तरसं विधीयते । पुरोडाशपदं तु एकं जघन्यं च पुरोडाशवत्त्वसंबन्धेन सवनीययागेषु लाक्षणिकमनुवादः । दृष्टश्च ' पुरोडाशानलंकुरु ' इत्यादौ पुरोडाशशब्दः सवनीयसंबन्धिहविःपर इति तस्य सवनीययागलक्षकत्वं सुकरमेव । तदेवं श्रुत्यादिषट्प्रमाणकमङ्गत्वं निरूपितम् । अतः परं प्रयोज्यत्वं निरूपयिष्यते ।

**मण्डन—** ' मांसं विधेयं सवनीयकार्ये । '

**शंकर—** ' तरसं सवनीयाङ्गम् । '

* मांसाधिकरणम् । ९।१।१३।३८–३९ वर्णकं १. **मीको.** पृ. २२७३ ' धान्याधिकरणम् ' इत्यत्र द्रष्टव्यम् ।

* **मांसावदाने** छेदनार्थं स्वधितिः करणं सामर्थ्यात् । **भा.** १।४।१४।२५.

* **मांसपाकः** शामित्रे न आहवनीयादौ । **भा.** १२।२।१।२, * **मांसपाकस्य** वैहारिकेऽग्नौ अभावः । १२।२।१।५.

* **मांसपाकप्रतिषेधः** योऽयं वैहारिकेऽग्नौ सः यत् वपायाः श्रपणं आहवनीये विहितं तस्य स्यात् । अथवा दक्षिणेऽग्नौ पत्न्याः व्रतस्य श्रपणमाम्नातम् । यदा आमयदोषात् मांसं व्रतकार्ये उपादीयते तदा तत्र दक्षिणाग्नौ श्रपयितव्यं इति तस्य दक्षिणाग्नौ व्रतश्रपणवाक्यस्यायं शेषः , अन्यत्र मांसात् इति । **भा.** १२।२।१।७.

* **मांसप्रसङ्गः** न वैदिके, किन्तु लौकिके पाके । **भा.** १२।२।१।२.

* **मांसभक्षणम्** ' यथैवाश्राद्धभोजित्वं यथा वाऽमांसभक्षणम् । श्रेयसे विहित धर्म्यं न सर्वत्र निषिध्यते ॥ ' षष्ठ्यष्टमीचतुर्दशीपञ्चदशीषु मांसभक्षणमैथुनादिक्रियाप्रतिषेधात् गृहस्थस्य अन्यत्र कामचारे प्राप्ते तदकरणनियमः श्रेयसे विहितः । यथाह ' न मांसभक्षणे दोषो न मद्ये न च मैथुने । प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥ ' ( मनु. ५।५६ ) इति । **वा.** १।३।२।४ पृ. १९१.

* **मांसमयाः** पुरोडाशाः पर्यग्निकर्तव्याः षट्त्रिंशत्संवत्सरे सिद्धान्ते । पूर्वपक्षे तु पिष्टमयः पुरोडाशः । **भा.** २।१।४।१२.

* **मांसविक्रयिणो** हि प्रत्यङ्गविभक्तानेव पशून् विक्रीणते । **वा.** ३।३।१०।२३.

* **मांसस्पर्शनमपि** वैहारिकाणामग्नीनां पशुबन्धादन्यत्र परिहृतम् । **भा.** १२।२।१।५.

**' माजीवन् यः परावज्ञादुःखदग्धोऽपि जीवति ' इति न्यायः ।** उक्तं च माघकविना ' माजीवन् यः परावज्ञादुःखदग्धोऽपि जीवति । तस्याऽजननिरेवास्तु जननीक्लेशकारिणः ॥ ' इति । **साहस्री.** ९०३.

* **माघ्याः** पौर्णमास्याः पुरस्तात् चतुरहे गवामयनदीक्षा कर्तव्या, न चैत्र्याः प्राक् । ६।५।९।३०–३७. **मीको.** पृ. १५४५ ' गवामयनस्य दीक्षा० ' इत्यत्र द्रष्टव्यम् ।

* **माघकृष्णाष्टमी** एकाष्टका नाम । **वि.** ६।५।१०.

* **माघसप्तमीपौर्णमासीफाल्गुनीप्रतिपद्वसन्तोत्सवादीनां** नियमक्रियाप्रमाणं न शास्त्रादृते किञ्चिदस्ति । **वा.** १।३।३।७ पृ. २०५ । फाल्गुनीपौर्णमास्यनन्तरायां प्रतिपदि वसन्तनिमित्तः उत्सवः । **सु.** पृ. १८७ .

* **मातुलकन्यापरिणयादीनां** अननुष्ठानम् । **भाट्ट.** १।३।४ वर्णकं २ .

* **मातुलदुहितृपरिणयनं** अनाचारः वासुदेवार्जुनयोः दाक्षिणात्यानां च । **वा.** १।३।३।७ पृ. २०३–२०४ .

* **मातुलदुहितृपरिणयनादिविषयाणां** स्मृतिविरुद्धाचाराणां कामादिहेत्वन्तरं स्पष्टमेव दृश्यते इति न कथंचिदपि श्रुतिमूलत्वं संभावनीयम् । नहि मातुलदुहितृपरिणयनात् प्रत्यवायोत्पत्तिः अनुत्पत्तिश्च संभवति इत्यवश्यं अन्यतरस्याप्रामाण्यं आश्रयणीयम् । तत्र गृह्यमाणनिमित्तस्य आचारस्य अप्रामाण्यं इति सिद्धमेवंजातीयकानां दुराचारत्वम् । **शा.** १।३।५ पृ. ३४.



* **मातुलसुतापरिणयः** केषुचित् दक्षिणदेशेषु क्रियते, स प्रमाणम् । इति चेत्, न, स्मृतिबाधितत्वात् । ' मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥ ' इति स्मृतिः । सदाचाराच्च स्मृतिः प्रबला । **वि.** १।३।५ वर्णकं २.

* **मातुलसुतापरिणयनम्** ' मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥ ' इतिस्मृतिनिषिद्धम् । अत्र मातुलसुतायाः पुत्रिकाकरणादौ गान्धर्वादिविवाहादौ वा यत्र मातृगोत्रनिवृत्तिः नास्ति, तद्विषयो मातुलसुतापरिणयननिषेधः, न तु यत्र गोत्रनिवृत्तिः तद्विषयोऽपि इति चन्द्रिकादौ ( स्मृतिचन्द्रिका ) प्रपञ्चितम् । **सोम.** १।३।५ पृ. ३४.

* **माता** च परमं दैवतम्, समा च पुत्रेषु इत्येतैरुपनिबध्यमानो ( मातृशब्दः ) जननीवचनः अवगम्यते । माता समः क्षिप्रश्च इत्येभिरप्यनुबध्यमानो धान्यस्य मातुर्वाचकः । **भा.** १०।१।७।१४. * ' माता भस्त्रा पितुः पुत्रः ' ( महाभारतम् १।९५।३० ) इति स्मर्तॄणां दर्शनं जनयितुश्च नानाजातित्वोपपत्तिः, तेन वर्णसंकरः । **वा.** १।२।१।१३ पृ. १२८ (' येन जातः स एव सः ' इति द्वितीयश्चरणः । सुधा. ) । * **मातुरेव** क्षेत्रिणो वा यदि पुत्रः स्यात् ततस्तयोः प्रसिद्धजातित्वात् नैव ( पुत्रजातेः ) दुर्ज्ञानता भवेत् । **वा.** १।२।१।१३.

* **मातृगणयागः** लौकिकः । **वि.** ( गुरुमते ) १।४।२.

* **मातृगोत्रा** कुमारी न परिणेया । **वि.** १।३।५ वर्णकं २.

* **मातापितृगुर्वादिशुश्रूषा** फलप्रदा । **वि.** ९।१।४.

**मात्स्यन्यायः ।** प्रबलमत्स्या निर्बलांस्तान् नाशयन्तीति न्यायार्थः । अयं च वासिष्ठे प्रह्लादोपाख्याने तत्समाधिं प्रस्तुत्योक्तः ' एतावताऽथ कालेन तद्रसातलमण्डलम् । बभूवाराजकं तीक्ष्णं मात्स्यन्यायकदर्थितम् ॥ ' ( योगवासिष्ठम् ५।३७।७ ) इति । **साहस्री.** २३०.

* **माथुरवत् ।** यथा मथुरामभिप्रस्थितो माथुर इति, मथुरायां वसन् मथुराया निर्गतश्च ( उच्यते ) । यस्य तु अतोऽन्यतमः संबन्धो नास्ति न स माथुरः । तथा आह्नीनैबुकानां न दाक्षिणात्यादिकया आख्यया व्यवस्था । **भा.** १।३।७।२१ । अत्र **वार्तिकम्-** यत्तु मथुरामभिप्रस्थितो माथुर इति भाष्यकारेणोक्तम्, तत् ' तद्गच्छति पथिदूतयोः ' ( पा. ४।३।८५ ) इति वा दूतविषयं कल्पयितव्यम्, अप्रत्ययितोक्तत्वाद् वा उपेक्षितव्यम्, सर्वस्मिन्नपि प्रस्थिते तद्धितस्मरणाभावात् ।

* **माध्यंदिनं** सवनम् । ' षष्टिस्त्रिष्टुभो माध्यंदिनं सवनम् ' इत्यत्र अनेकाख्यातार्थोद्देशेन भावनाप्रधानविधिः । **मणि.** पृ. १११. * **माध्यंदिनः** पवमानः । ' त्रिच्छन्दा आवापो माध्यंदिनः पवमानः पञ्चसामा ' इति ज्योतिष्टोमे त्रीणि छन्दांसि । **भा.** १०।५।२।७. * माध्यंदिनः पवमानः त्रिच्छन्दस्कः । गायत्री बृहती त्रिष्टुभः इति छन्दस्त्रयम् । **वि.** १०।५।२, * माध्यंदिनः पवमानः नाम स्तोत्रं अग्निष्टोमे माध्यंदिने सवने प्रथमम्, चत्वारि च पृष्ठस्तोत्राणि इति पञ्च स्तोत्राणि माध्यंदिने सवने । ८।३।५. * **माध्यंदिने** पवमाने गानं आद्ये तृचे न तु तृचाद्यासु स्तोत्रियासु, एकत्रिके क्रतौ । १०।५।२।७–९. **मीको.** पृ. ४५४ ' अन्त्यलोपाधिकरणम् ' इत्यत्र द्रष्टव्यम् । * माध्यंदिने पशुपुरोडाशेन चरन्ति सवनीयस्य पशोः । **भा.** ११।२।३।१४, * माध्यंदिने सवने एकादशकपालः सवनीयपुरोडाशः । १०।५।२६।८८. * माध्यंदिने सवने ग्रहाः पञ्च ' पञ्च माध्यंदिने गृह्णाति ' इति वचनात् । **सोम.** २।२।६. * माध्यंदिने सवने चत्वारि पृष्ठस्तोत्राणि सप्तदशस्तोमकानि ज्योतिष्टोमे । **वि.** १।४।३. * ' माध्यंदिने सवने दक्षिणा नीयन्ते ' ज्योतिष्टोमे । **भा.** १०।६।१८।६९, * माध्यंदिने सवने पौतुदारवेणाभ्यञ्जते अञ्जनाभ्यञ्जने नाम सत्रे । १०।४।६।१०, * माध्यंदिने सवने ब्रह्मसामकाले प्राजापत्यानामालम्भः श्रूयते ' तान् पर्यग्निकृतानुत्सृजन्ति, ब्रह्मसाम्न्यालभते ' इति । ४।१।१८।३३, * माध्यंदिने सवने सकला दक्षिणाः संस्कृताः ज्योतिष्टोमे । १०।६।१८।६९. * ' आग्नावैष्णवमेकादशकपालं ( निर्वपेत् ), माध्यंदिने सारस्वतं चरुम्, बार्हस्पत्यं चरुम् ' अध्वरकल्पायाम् । ११।२।४।१९,

* सांतपनीयस्य ' माध्यंदिने निरुप्यते ' इति वचनात् माध्यंदिनकालान्येव अङ्गानि भवन्ति । ११।४।५।१६ .

* **माध्यंदिनार्भवपवमानयोः** आगन्तूनां साम्नां गायत्र्यादिष्वेव ( गायत्रीबृहत्यनुष्टुप्सु ) निवेशः न तु अन्ते, विवृद्धस्तोमकेषु क्रतुषु । ५।३।५।१३–१४. **मीको.** पृ. २६० ' अतिरात्रे काम्यस्तोम० ' इत्यत्र द्रष्टव्यम् ।

* माध्यंदिनार्भवपवमानयोरेव साम्नामावापोद्वापौ विवृद्धाविवृद्धस्तोमकक्रतुषु । १०।४।११।२१–२२. ' विवृद्धाविवृद्धस्तोमकक्रतुषु माध्यंदिनार्भव० ' इत्यत्र द्रष्टव्यम् ।

* माध्यंदिनार्भवपवमानयोः साम्नामागम इति वक्ष्यते ( १०।५।६–७।१५–२६ ) । **भा.** ५।३।५।१३.

* **माध्यंदिनतृतीयसवनगतानां** पशुपुरोडाशानां पशुतन्त्रमध्ये उपक्रमात् प्रसङ्गित्वमेव न तु तन्त्रित्वम् । प्रातःसवनेऽपि पशुसमाप्तिपूर्वभावित्वनिश्चयेन पशुमध्यपातित्वात् पुरोडाशानां तन्त्रित्वमेव । **वि.** १२।२।१२.

* **माध्यंदिनपवमानस्य** आद्यस्तृचः ( अतिरात्रे ) ' उच्चा ते जातमन्धसः ' इति गायत्रः एव एकविंशस्तोमपूरणार्थं आगन्तूनां साम्नामावापः न तु त्रिष्टुब्जगतीछन्दस्कयोः । वि. ५।३।५, * **माध्यंदिनपवमाने** त्रीणि सूक्तानि आम्नातानि । १।४।३.

* **माध्यंदिनसवनीयाः** तृतीयसवनीयाश्च पुरोडाशाः असंशयं पशोः प्रातःसवनीयानां वा तन्त्रमध्ये पतिताः । **भा.** १२।२।१२।३२.

* **माध्यंदिनीयायाः** सांतपनीयायाः कदाचिदुत्कर्षेऽपि सायमग्निहोत्रस्य नोत्कर्षः । सांतपनीयान्यायः । ५।१।१७।३०–३४.

* **माध्यमिकाः** अर्थाभावादेव ज्ञानमपि नास्तीति वदन्ति, तदपि हेतुनिरासादेव निरस्तम् । **वाल.** पृ. ६ .

* **माध्वी** सुरा ब्राह्मणस्यैव निषिद्धा न क्षत्रियवैश्ययोः । **वा.** १।३।३।७ पृ. २०९–२१० .

* **मानं** उपावहरणं च वाससा कर्तव्ये ज्योतिष्टोमे । १०।६।२०।७७. **मीको.** पृ. १८३१ ' ज्योतिष्टोमे सोमस्य० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**मानं प्रत्युत्पादयेत् प्रकृतौ तेन दर्शनादुपावहरणस्य । १०।६।२२।७९ ॥**

अहर्गणे सोमस्य मानं प्रति मानार्थं परिमाणं कर्तुं वासः उत्पादयेत् मानकाले । प्रकृतौ ज्योतिष्टोमे तेन मानवाससैव उपावहरणस्य दर्शनात् उपावहरणार्थं अहर्गणेऽपि पृथग्वासो नोत्पाद्यम् । उत्पाद्यत्वेऽपि वा मानकाले एवोत्पाद्यम् । इति पूर्वः पक्षः ।

**हरणे वा श्रुत्यसंयोगादर्थाद्धि प्रकृतौ तेन । ८० ॥**

वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । अहर्गणे प्रत्यहं सोमोपावहरणार्थं वासः मानकाले नोत्पादयेत् किन्तु हरणे हरणकाले उपावहरणकाले उत्पादयेत् । श्रुत्यसंयोगात् श्रुत्या संयोगाभावात् श्रुत्यनुक्तत्वात् । नहि श्रूयते मानकाले उत्पादयेत् इति । ननु प्रकृतौ मानवाससैव उपावहरणदर्शनात् मानकाले एव हरणवास उत्पादनीयं इति चेत्तत्राह । श्रुत्यसंयोगात् श्रुत्यनुक्तत्वात् । नहि श्रूयते मानवाससैव उपावहरणं कर्तव्यमिति । किन्तु प्रकृतौ अह्न एकत्वात् अर्थात् । नहि मानवासः उपावहरणकाले अन्यत्र व्यापृतं इति अर्थात् तेनैव क्रियते । अहर्गणे तु मानवाससः दिवसान्तरोपयोगिसोमधारणे व्यापृतत्वात् तेन प्रत्यहं उपावहरणासंभवात् प्रत्यहं उपावहरणकाले पृथक् वासः उत्पादनीयं इति सिद्धान्तः । **के.**

* मानं सोमधर्मः । **भा.**३।६।१३।३६.

**मानाधीना मेयसिद्धिरिति** ( प्रमाणाधीना प्रमेयसिद्धिरिति वा ) **न्यायः । साहस्री.** ४६६ .

* ' मानाधीना मेयसिद्धिः ' इति **न्यायेन** प्रमाणनिरूपणस्य धर्मस्वरूपनिरूपणं प्रति हेतुत्वम् । **कौ.** २।१।१।१,

* न चैवं बलाबलद्वयसंनिपाते निर्णायकाभावः । श्रौतत्वस्मार्तत्वरूपप्रमाणबलाबलस्य मानाधीनत्वेन 'मानाधीना० ' इति **न्यायेन** प्रमेयत्वस्य प्रमाणोपजीवकत्वात् असंजातविरोधित्वेन बलवत्त्वावगतेः, निर्णायकसत्त्वात् । पूर्वपक्षे । १।३।३।६.

* **मानोपावहरणादीनां** सोममात्रधर्मता । ३।६। १३।३६.

* **मानवीनां** ऋचां एकादशानामेव सामिधेनीकार्ये दाशतयीभ्यः समानयनं सोमारौद्रेष्टौ । १०।६।१९।७३–७६. ' सोमारौद्रेष्टौ सामिधेनीकार्ये० ' इत्यत्र द्रष्टव्यम् ।



* **मानवीषु** पञ्चदशानामेव सामिधेनीत्वम् । वि. १०।६।१९.

* **मानसं** अहः । ' एष वै दशमस्याह्नो विसर्गो यन्मानसम् ' । द्वादशाहे ' दशमेऽहनि मानसाय प्रसर्पन्ति ' । **भा.** १०।६।१३।३९–४०.

**मानसमहरन्तरं स्याद् भेदव्यपदेशात् । १०।६।१३।३४॥**

द्वादशाहे ' अनया त्वा पात्रेण समुद्रस्य प्रजापतये जुष्टं गृह्णामि इति प्राजापत्यं मनोग्रहं गृह्णाति' इति श्रूयते । इदं मानसं कर्म मानसो ग्रहः द्वादशाहात् अहरन्तरं भिन्नं अहः स्यात् । ' वाग् वै द्वादशाहो मनो मानसम्' इति द्वादशाहात् मानसस्य भेदेन व्यपदेशात् । किञ्च ' वाग्वै द्वादशाहः ' इति वाचा द्वादशाहः संस्तुतः, ' मनो मानसम् ' इति च मनसा मानसं संस्तुतम् । वाङ्मनसयोश्च भेदः प्रसिद्धः, तेन द्वादशाहमानसयोरपि भेदो गम्यते । तस्मात् द्वादशाहात् मानसं भिन्नमहः इति पूर्वः पक्षः ।

**तेन च संस्तवात् । ३५ ॥**

तेन च मानसेन द्वादशाहस्य संस्तवात् द्वादशाहात् मानसं अहरन्तरं इति गम्यते । ' विधूतानि ह वै द्वादशाहस्य गतरसानि छन्दांसि, तानि मानसेनैव आप्याययन्ति ' । द्वादशाहस्य यानि गतरसानि छन्दांसि तानि मानसेन आप्याययन्ति इति ब्रुवन् द्वादशाहात् मानसं भिन्नं दर्शयति । नहि स्वेनैव स्वं संस्तूयते । स्तुत्यस्तावकत्वयोर्भेदाधीनत्वात् । तस्मात् द्वादशाहात् मानसं अहरन्तरं इति पूर्वपक्षे हेत्वन्तरमुक्तम् ।

**अहरन्ताच्च परेण चोदना । ३६ ॥**

प्राजापत्यो मानसो ग्रहः द्वादशाहाङ्गमपि सन् द्वादशाहात् अहरन्तरम् । कुतः ? अहरन्तात् । अह्नः अन्तः पत्नीसंयाजाः । ' पत्नीः संयाज्य प्राञ्च उदेत्य मानसाय प्रसर्पन्ति ' इति पत्नीसंयाजरूपात् अहरन्तात् परेण परस्तात् मानसस्य चोदना भवति । तस्मात् मानसं द्वादशाहात् अहरन्तरम् । द्वादशाहिकस्यैव गुणत्वे तु पत्नीसंयाजेभ्यः प्राक् स्यात् । परस्तात्तु असौ विहितः । तस्मात् अहरन्तरं इति पूर्वपक्षे हेत्वन्तरमुक्तम् ।

**पक्षे संख्या सहस्रवत् । ३७ ॥**

प्राजापत्यो मानसो ग्रहः द्वादशाहाङ्गमपि सन् द्वादशाहात् अहरन्तरं इति पूर्वपक्षिणा उक्ते सिद्धान्तिनः शङ्का । ननु एवं त्रयोदशसु अहःसु द्वादशाह इति संज्ञा नोपपद्येतेति । अत्रोच्यते । पक्षे त्रयोदशाहत्वपक्षेऽपि संख्या संख्याविशेषवाचकपदघटितो द्वादशाहशब्दः कर्मगणनामधेयत्वात् उपपद्यते । सहस्रवत् । यथा अतिरात्रः सहस्रमहानि ' अतिरात्रेण सहस्रसाध्येन यजेत ' इति सहस्रादधिकेऽपि सहस्रशब्दो दृष्टः तद्वत् । तस्मात् मानसं द्वादशाहात् अहरन्तरं इति पूर्वः पक्षः ।

**अहरङ्गं वांऽशुवच्चोदनाऽभावात् । ३८ ॥**

मानसो ग्रहः द्वादशाहाङ्गमपि द्वादशाहादहरन्तरं इति पूर्वपक्षे प्राप्ते सिद्धान्तयति । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । मानसो ग्रहः अहरङ्गं दशमस्य अह्नः अङ्गं स्यात् न अन्यदहः । चोदनाभावात् अहरन्तरप्रकल्पिकायाः चोदनायाः अभावात् । ' अनया त्वा पात्रेण समुद्रस्य प्रजापतये जुष्टं गृह्णामि इति प्राजापत्यं मनोग्रहं गृह्णाति ' इति दशममहरङ्गीकृत्य ग्रहचोदना एषा । अंशुवत्, यथा अंश्वदाभ्यौ विधीयमानौ यस्मिन् कर्मणि भवतः तत्रापरौ ग्रहाभ्यासौ इति विज्ञायते न कर्मान्तरे तद्वत् । तस्मात् दशमेऽहन्येव गुणविधिरयम् ।

**दशमविसर्गवचनाच्च । ३९ ॥**

सिद्धान्ते हेत्वन्तरमाह । ' एष वै दशमस्याह्नो विसर्गो यन्मानसम् ' एष दशमस्य विसर्गः अन्तः यन्मानसं इति ब्रुवन् अन्तोऽयं दशमस्य न स्वतन्त्रमेतत् कर्म इति दशमस्य अह्नः विसर्गस्य वचनं दर्शयति ।

**दशमेऽहनीति च तद्गुणशास्त्रात् । ४० ॥**

' दशमेऽहनि मानसाय प्रसर्पन्ति ', ' दशमेऽहनि सार्पराज्ञीभिर्ऋग्भिः स्तुवन्ति ' इति दशमे अहनि इति तद्गुणशास्त्रात् तस्य दशमस्याह्नः गुणस्य शास्त्रात् शासनात् मानसो ग्रहः दशमस्याह्नोऽङ्गं नाहरन्तरं इति सिद्धान्तः ।

**संख्यासामञ्जस्यात् । ४१ ॥**

द्वादशाह इति द्वादशत्वसंख्यायाः सामञ्जस्याच्च मानसो ग्रहः दशमस्याह्नोऽङ्गं इति । मानसस्य अहरन्तरत्वे तु त्रयोदशसु द्वादशाह इति संख्यावचनं असमञ्जसं स्यात् । तस्मान्नाहरन्तरं इति सिद्धान्तः ।

**पशवतिरेके चैकस्य भावात् । ४२ ॥**

द्वादशाहे ऐकादशिनेभ्यः पशुभ्यः अह्नः अतिरेके आधिक्ये सति एकस्य अह्नः अधिकस्य भावात्, द्वयोरह्नोरभावात् मानसं न अहरन्तरं इति विज्ञायते । अहरन्तरत्वे तु द्वयोरतिरेकः स्यात् । अह्नां तत्पक्षे त्रयोदशत्वात् पशूनां चैकादशत्वात् । 'यः पशुरतिरिच्यते स ऐन्द्राग्नः कार्यः' इति एकादशिनीं द्वादशाहे विधाय विहृतायां तस्यां एकस्यातिरेकं दर्शयति । एकादश पशवः द्वादश अहानि । एकस्यातिरेकं ब्रुवन् द्वादश एतान्यहानि इति गमयति । तस्मात् मानसं दशमाङ्गं न कर्मान्तरमिति सिद्धान्तः ।

**स्तुतिव्यपदेशमङ्गेन विप्रतिषिद्धं व्रतवत् । ४३ ॥**

यदुक्तं पूर्वपक्षिणा 'मानसमहरन्तरं भेदेन व्यपदेशात्' ( १०।६।१३।३४ ) इति 'तेन च मानसेन द्वादशाहस्य संस्तवात् भेदः' ( १०।६।१३।३५ ) इति च, तत्रोत्तरमाह सिद्धान्ती । अङ्गेन समुदायस्य स्तुतेर्व्यपदेशं अविप्रतिषिद्धं मन्यामहे । व्रतवत् यथा महाव्रतधर्मेण संवत्सरसत्रस्य । 'यन्ति वा एते मिथुनात् ये संवत्सरमुपयन्ति । अन्तर्वेदि मिथुनौ संभवतः, तेनैव मिथुनान्न यन्ति' इति समुदायदोषममिधाय तदवयवभूतस्य महाव्रतस्य धर्मेण अनुजिघृक्षन् समुदायस्य अवयवधर्मेण स्तुतिं दर्शयति । लोकेऽपि 'दीर्घैः केशैः शोभनो देवदत्तः' इति अवयवधर्मेण अवयवी संस्तूयते । तस्मान्न दोषः ।

**वचनादतदन्तत्वम् । ४४ ॥**

यदुक्तं पूर्वपक्षिणा 'अहरन्ताच्च परेण चोदना' ( १०।६।१३।३६ ) इति, तत्राह सिद्धान्ती । 'पत्नीः संयाज्य प्राञ्च उदेत्य मानसाय प्रसर्पन्ति' इति वचनात् दशमस्याह्नः अतदन्तत्वं तदन्तत्वाभावः पत्नीसंयाजान्तत्वाभावः । द्वादशाहिकानामह्नां सामान्येन पत्नीसंयाजान्तता, विशेषेण तु दशमस्याह्नो मानसान्तता उच्यते । अतो न दोषः । तस्मात् मानसं दशमस्याह्नोऽङ्गं न द्वादशाहादहरन्तरं इति सिद्धान्तः । के.

* **मानसो** ग्रहः द्वादशाहस्य दशमेऽहनि । तत्र 'द्वादशाहस्य हृतरसानि छन्दांसि, तानि मानसेनाऽऽप्याययन्ति' इति मानसेन द्वादशाहस्तुतिः । 'वाग्वै द्वादशाहः, मनो मानसम्' इति व्यपदेशभेदः । 'एष वै दशमस्याह्नो विसर्गो यन्मानसम्' इति विसर्गोक्तिः । **वि.** १०।६।१३. * **मानसे** ज्ञाने चाक्षुषादिसामग्री प्रतिबन्धिका । **मणि.** पृ. ६३.

* **मानसान्तता** दशमस्याह्नो न पत्नीसंयाजान्तता द्वादशाहे । **भा.** १०।६।१४।४४.

* **मानसमहान्तता** वचनेनोक्ता द्वादशाहगतस्य दशमस्याह्नः । **भा.** ९।१।९।२९.

* **मानसप्रत्यक्षे** महत्त्वं हेतुरिति केचित्, नेत्यन्ये । **मणि.** पृ. २१.

ॐ **मानससंज्ञको ग्रहः द्वादशाहदशमाहाङ्गम् ।** मानसाधिकरणम् । मानसग्रहाधिकरणम् ॥

**मानसमहरन्तरं स्याद्भेदव्यपदेशात् । १०।६। १३।३४ ॥**

**भाष्यम्**— द्वादशाहे श्रूयते 'अनया त्वा पात्रेण समुद्रसया प्रजापतये जुष्टं गृह्णामीति प्राजापत्यं मनोग्रहं गृह्णाति' इति । तत्र संशयः किं मानसमहर्द्वादशाहादहरन्तरं उत अहरङ्गमिति । तत्रेह कानिचित् भेदकारणानि प्रतिभान्ति । तानि निराचिकीर्षन् आचार्य उपन्यस्यति 'मानसमहरन्तरं स्यात्' इति । कुतः ? भेदेन व्यपदेशात् । द्वादशाहाद्भेदेन व्यपदिश्यते । कथम् ? 'वाग्वै द्वादशाहो मनो मानसम्' इति द्वादशाहानन्तर्भूतं मानसं व्यपदिशति, 'वाग्वै द्वादशाहः' इति वाक्संस्तवात्, 'मनो मानसम्' इति च मनःसंस्तवात् । यथा वाङ्मनसयोर्भेदो वस्तुतोऽवगम्यते एवमेतयोरपि द्वादशाहमानसयोः । यतः पृथक्त्वे सति भेदेन व्यपदेशो भवति, नान्यथा । अतो भिद्यते एतदहरिति व्यपदेशाद्गम्यते ।



**तेन च संस्तवात् । ३५ ॥**

**भाष्यम्**— इतश्च अहरन्तरमिति । कुतः ? तेन मानसेनाह्ना द्वादशाहः संस्तूयते । कथम् ? 'विधूतानि ह वै द्वादशाहस्य गतरसानि छन्दांसि, तानि मानसेनैवाऽऽप्याययन्ति' इति । द्वादशाहस्य यानि गतरसानि छन्दांसि तानि मानसेनाऽऽप्याययन्ति इति ब्रुवन् भिन्नं द्वादशाहाद् दर्शयति । कथम् ? संस्तवात् । न हि तेनैव आत्मना तस्य संस्तुतिर्भवति । कुतः ? अत्यन्तभेदात् स्तुतिस्तुत्ययोः । न हि देवदत्तो देवदत्तेन स्तूयते । भिन्नैः शिरःपाण्यादिभिः संस्तूयते । तद्वदिहापि द्वादशाहो मानसेन स्तूयते इति संस्तवाद्भेदोऽधिगम्यते इति ।

**अहरन्ताच्च परेण चोदना । ३६ ॥**

**भाष्यम्**— इतश्च अहरन्तरमेवेति गम्यते । कुतः ? द्वादशाहिकादहरन्तात्परेण चोद्यते 'पत्नीः संयाज्य प्राञ्च उदेत्य मानसाय प्रसर्पन्ति' इति । तद्यदि द्वादशाहिकस्याह्नो गुणविधिर्भवेद् द्वादशाहिकी पत्नीसंयाजान्तता स्यात् । अथ त्वहरन्तरं भवति, ततो द्वादशाहिकानामयं धर्मो नान्यस्येति न दोषो भविष्यति । अतोऽपि वैलक्षण्यादहरन्तरसिद्धिरिति गम्यते ।

**पक्षे संख्या सहस्रवत् । ३७ ॥**

**भाष्यम्**— परिचोदनापरिहारोऽयम् । किमियं परिचोदना ? नन्वेवं द्वादशाहः इति त्रयोदशस्वहःसु नोपपद्यते । अत्रोच्यते । यदा प्रमाणान्तरेण शब्दः एतावत्यर्थे प्रयुक्त इति गम्यते, तदा संख्यासंनिकर्षात् त्रयोदशसु गुणवृत्त्या प्रयोगः सेत्स्यति । यथा 'अतिरात्रः सहस्रमहानि', 'अतिरात्रेण सहस्रसाध्येन यजेत' इति अधिकेऽपि सहस्रे सहस्रशब्दो दृष्टः, तद्वदिहाप्यधिके भविष्यति । अथवा कर्मगणनामधेयमेतत् द्वादशाह इति । यावन्ति कर्माण्यङ्गीकृत्य प्रयुक्तस्तावतां वाचक इति निश्चीयते । सर्वाणि प्रकरणादङ्गीकृत्य प्रयोगात् सर्वेषां वाचको भविष्यतीति न दोषः ।

**अहरङ्गं वांऽशुवच्चोदनाऽभावात् । ३८ ॥**

**भाष्यम्**— दशमस्याह्नो गुणस्य विधिः स्यात्, नाहरन्तरचोदना । कुतः ? अहरन्तरप्रकल्पकस्य वचनस्य अभावात् । कथम् ? एवं तावत् श्रूयते 'अनया त्वा पात्रेण समुद्रसया प्रजापतये जुष्टं गृह्णामीति प्राजापत्यं मनोग्रहं गृह्णाति' इति । दशममहरङ्गीकृत्य ग्रहचोदनैषा । गृह्णातीति संस्कारविधानात् । न च संस्कारभेदे कर्मभेदो भवति । 'अचोदकाश्च संस्काराः' ( २।२।६।१८ ) इत्युक्तम् । 'यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र' ( २।१। ३।८ ) कर्म न प्रधानमिति । यथा अंश्वदाभ्यौ विधीयमानौ न कर्म मिन्तः । यस्मिन् कर्मणि भवतस्तत्रापरौ ग्रहाभ्यासाविति विज्ञायते, न कर्मान्तरे इति । यदि चाहरङ्गमेतत् भवति, न कर्मान्तरम् । एवमल्पीयस्येव अदृष्टानुमानप्रसङ्गकल्पना भविष्यति, प्रकृतसंबन्धश्च, नाप्रकृतप्रक्रिया क्रियान्तरस्य । अतो नाहरन्तरम् । दशमे एवाहनि गुणविधिरिति ।

**दशमविसर्गवचनाच्च । ३९ ॥**

**भाष्यम्** — इतश्च नाहरन्तरम्, तत्रैव गुणविधिः । कुतः ? दशमविसर्गवचनात् । दशमविसर्गवचनं हि भवति 'एष वै दशमस्याह्नो विसर्गो यन्मानसम्' इति । एष दशमस्य विसर्गः अन्तः यन्मानसमिति ब्रुवन् अन्तोऽयमन्तवतो दशमस्य, न स्वतन्त्रमेतत्कर्मेति दर्शयति । तस्मादपि दशमस्याङ्गम्, नार्थान्तरमिति गम्यते ।

**दशमेऽहनीति च तद्गुणशास्त्रात् । ४० ॥**

**भाष्यम्**— इतश्चाङ्गम् । कथम् ? एवं गुणशास्त्रं युक्तं भविष्यति 'दशमेऽहनि मानसाय प्रसर्पन्ति' इति, 'दशमेऽहनि सार्पराज्ञीभिर्ऋग्भिः स्तुवन्ति' इति । दशमस्याह्नः प्रधानभावेन निर्देशात्, ग्रहस्य आधेयभावेन, तस्स्तोत्रस्य गुणोऽयं दशमस्य, नार्थान्तरमिति गम्यते ।

**संख्यासामञ्जस्यात् । ४१ ॥**

**भाष्यम्** — यदि च गुणोऽयम्, एवं संख्या समञ्जसा भविष्यति द्वादशाह इति । इतरथा त्रयोदशसु द्वादशाह इत्यसमञ्जसं संख्यावचनं स्यात् । अवाच्यत्वात् । यदुक्तं गुणवृत्त्या सहस्रसाध्यवद्भविष्यतीति, तदनुपपन्नम् । कुतः ? तत्र हि प्रमाणान्तरेण संख्येयावगमादधिके सहस्रशब्दो गौण्या वृत्त्या प्रयुक्त इति निश्चीयते । न त्विह संख्येयातिरिक्ते प्रमाणमस्ति, येन गौणीयं वृत्तिराश्रीयेत । यदप्येतत् 'अनया त्वा पात्रेण' इति वचनम्,

तदपि ग्रहसंस्कारविधानाद्दशमेऽहनि यागाभ्यासं विधत्ते, न कर्मान्तरमिति समधिगतम् । एवं चेत्, नैतत्प्रत्यक्षवचनमहरन्तरप्रकल्पकम्, नान्यत्प्रमाणान्तरं प्रापकम्, येन संख्येयेऽतिरिक्ते शब्दप्रयोग इत्यध्यवस्यामः । तस्मान्नेह गौण्या वृत्त्या प्रयोग इति । यदपि कर्मगणनामधेयत्वात् प्रकरणवशेन तावतामङ्गीकरणात् नामधेयरूपेण वा वृत्तिर्भविष्यतीति । तदपि न युक्तम् । सत्यं कर्मगणनामधेयमेतत्, न त्वयथार्थसमन्वयेन । द्वादश एतानि कर्माण्यहोभिः परिमितान्येकत्र समाहृतानीत्यनेन रूपेण तत्कर्मगणस्य नामधेयम्, न वर्णानुपूर्व्यमात्रेणेति । तथा हि सर्वेष्वेव कर्मनामधेयेष्वर्थसमन्वयेनानुवादभूतो नामशब्दो वर्तते, न लौकिकार्थतिरस्कारेण परिभाषामात्रेण वृद्धिगुणवत् । यथा अग्निहोत्रं श्येनः ज्योतिष्टोमः इति । एवं द्वादशाहः इत्यर्थान्वयेन नामधेयम्, नार्थाभावेनेति । तस्मादपरिचोदनैषा ।

**पश्वतिरेके चैकस्य भावात् । ४२ ॥**

**भाष्यम्**-- इतश्चाहरङ्गमिति विज्ञायते । कुतः ? पश्वतिरेकेणैकस्यातिरेकं दर्शयति, न द्वयोः । कथम् ? 'यः पशुरतिरिच्येत स ऐन्द्राग्नः कार्यः' इति एकादशिनीं द्वादशाहे विधाय विहृतायामेकस्यातिरेकं दर्शयति । तत्र तावदतिरिच्यते, एको न भवति । कथम् ? एकादश पशवः, द्वादशाहानि । एकस्यातिरेकं ब्रुवन् द्वादशैतान्यहानीति गमयति । यदि त्रयोदशाहानि स्युः द्वयोरभावः स्यात्, नैकस्येति । तस्मादप्यहरङ्गं न कर्मान्तरमिति ।

**स्तुतिव्यपदेशमङ्गेनाविप्रतिषिद्धं व्रतवत् ।४३॥**

**भाष्यम्**-- अस्मिन् सूत्रे द्वयोः सूत्रयोः परिहार उच्यते । यदुक्तम्, मानसमहरन्तरम्, भेदेन व्यपदेशात् । तेन च मानसेन संस्तवाद्भेदः । न ह्यात्मनैव आत्मा संस्तूयते इति । अत्राभिधीयते । नैतद्विप्रतिषिद्धम् । अङ्गेनापि समुदायस्य स्तुतिर्दृष्टा । यथा महाव्रतधर्मेण संवत्सरसत्रस्य । 'यन्ति वा एते मिथुनाद्ये संवत्सरमुपयन्ति । अन्तर्वेदि मिथुनौ संभवतस्तेनैव मिथुनान्न यन्ति' इति समुदायदोषमभिधाय तदवयवभूतस्य महाव्रतस्य धर्मेणानुजिघृक्षन् समुदायस्यावयवधर्मेण स्तुतिं दर्शयति । लोकेऽप्यवयवधर्मेणावयवी संस्तूयते एवेति । यथा दीर्घैः केशैः शोभनो देवदत्त इति । तद्वदिहापि द्वादशाहः संस्ताविष्यत इति न दोषः ।

**वचनादतदन्तत्वम् । ४४ ॥**

**भाष्यम्**-- यदुक्तम्, यद्यहरन्तरमेतत्, एवं द्वादशाहधर्मवैलक्षण्यं मानसान्तता युक्ता भविष्यति, न तदङ्गत्वे । पत्नीसंयाजान्तता भवेदिति । अत्र वदामः । वचनादतदन्तत्वं भविष्यति । द्वादशाहिकानामह्नां सामान्येन पत्नीसंयाजान्तता । विशेषेण तु दशमस्याह्नो मानसान्ततोच्यते 'पत्नीः संयाज्य प्राञ्च उदेत्य मानसाय प्रसर्पन्ति' इति । नास्ति वचनस्यातिभारः । तस्मादप्यदोषः । अतो दशमस्याह्नो मानसमङ्गं न स्वतन्त्रमिति ।

**सोम**— मध्वशनस्य सत्रद्वादशाहाङ्गत्वेऽपि मानसस्य न द्वादशाहाङ्गत्वमित्युत्थानात् **संगतिः** । **प्रयोजनम्**– विकृतिषु दशरात्रप्रवृत्तौ मानसस्याप्रवृत्तिः पूर्वपक्षे । सिद्धान्ते त्वङ्गत्वात् प्रवृत्तिः ।

**वि**-- 'मानसं किमहर्भिन्नमङ्गं वा दशमेऽहनि ।, भिन्नं स्तुत्यादिना, ऽङ्गं तद् विसर्गोक्त्यादिभिर्भवेत् ॥'

**भाट्ट**-- द्वादशाहिके दशमेऽहनि 'प्राजापत्यं मानसं ग्रहं गृह्णाति' इति श्रुतम् । तत्र किं सुत्यान्तरविधिः उत दशमसुत्याङ्गत्वेन ग्रहणान्तरमात्रविधिः इति चिन्तायाम्, 'वाग्वै द्वादशाहो मनो मानसम्' इति भेदव्यपदेशात् 'विधूतानि वै द्वादशाहस्य गतरसानि छन्दांसि तानि मानसेनैवाऽऽप्याययन्ति' इति मानसेन द्वादशाहस्याप्यायनवचनेन भेदानुमानादहरन्तरविधिं मन्यन्ते । द्वादशाहपदं त्ववयुत्यानुवादस्त्रयोदशाहे रूढं वा । इति प्राप्ते, भेदव्यपदेशस्य अवयवावयविभेदादप्युपपत्तेः ग्रहणविधायकस्यास्य यागान्तरविधायकत्वे प्रमाणाभावात् द्वादशाहपदस्य रूढत्वकल्पने प्रमाणाभावाच्च तत्रैव ग्रहणान्तरविधिः । अत एव दशमेऽहनि 'मानसाय प्रसर्पन्ति एष वै दशमस्याह्नो विसर्गो यन्मानसम्' इत्यादिलिङ्गान्यप्युपपद्यन्ते । विसर्गः अन्तः । किञ्च विहृतां पश्वेकादशिनीं विधाय 'अथ यः पशुरतिरिच्यते स ऐन्द्राग्नः कार्यः' इत्येकस्यैव पशोरतिरेकं दर्शयति न द्वयोः । या तु सर्वेषामह्नां पत्नीसंयाजान्तत्वात् 'पत्नीः



संयाज्य मानसाय प्रसर्पन्ति' इति मानसस्य तद्बहिर्भावावगतिः, सा पत्नीसंयाजान्तत्वस्य सामान्यविहितत्वात् दशमाहर्व्यतिरिक्तविषयत्वोपपत्तेर्निरस्ता । अतो विकृतिषु दशरात्रे प्रवर्तमाने दशमाहाङ्गत्वेन मानसग्रहस्यापि प्रवृत्तिः, अहरन्तरत्वे बाध इत्यध्यायसंगतिः ।

**मण्डन**— 'न मानसमहर्भिन्नम् ।'

**शंकर**— 'नाहरन्यन्मानसं स्यात् ।'

* **मान्त्रवर्णिको** देवताविधिः दर्शपूर्णमासयोरुत्तमप्रयाजे । **टुप्**. १०।१।७।१४. * मान्त्रवर्णिको देवताविधिः प्रयाजेषु । समिदादिशब्दास्तु कर्मनामधेयम् । **भा.** ९।२।२०।५९-६०, * मान्त्रवर्णिको द्रव्यनियमविधिः (अग्नीषोमीये पशौ) । ६।८।१०।३१, * **मान्त्रवर्णिकी** देवता आघारे 'इन्द्र ऊर्ध्वोऽध्वर इत्याघारमाघारयति' इति । १।४।३।४.

* **मान्त्रवर्णिकदेवताकल्पना** आघारादिषु क्रियात्मकत्वात् मन्त्राकाङ्क्षायां वचनविनियोगवशाच्च भवति । सर्वजघन्यश्चायं देवताविधिः । **वा.** १।४।६।९ पृ. ३४१.

* **मान्त्रवर्णिकदेवताकल्पनातश्च** वरमारादुपकारकत्वम् । **वा.** २।२।३।३ पृ. ४७९.

* **मान्त्रवर्णिकद्रव्यकल्पनायां** अपि **गौरवम्**, 'उद्भिदा यजेत' इत्यादौ । **वा.** १।४।१।१.

* **मान्यानां** विप्रादीनामनिमन्त्रणे भोजनाद्यर्थमागमनं न भवति । स्नेहातिशयेन तु पूज्यानां अनिमन्त्रितानामपि स्वयमेव भोक्तुमागमनं दृष्टम् । **वि.** १०।१।१ वर्णकं ३.

* **मायावादी** नामरूपप्रपञ्चस्य असद्भावं प्रतिजानीते । तस्य प्रत्यक्षविरोधः । **रत्नाकरः** पृ. ३६५.

⧖ **मायिका गुणा वास्तवं निर्गुणत्वं न विघ्नन्तीति न्यायः** । यथा सत्यकामादिगुणा अपाणिपाद इति प्रकृतिनिर्गुणत्वमीश्वरस्य न निवारयन्तीति भावः । **साहस्री.** ७८५.

⧖ **मारणाय गृहीतोऽङ्गच्छेदं स्वीकरोतीति न्यायः** । स्पष्टः । **साहस्री.** १४१.

* '**मारुतः** कल्माषः' ऐकादशिनेषु अष्टमः पशुः अश्वमेधे ज्योतिष्टोमे च । **वि.** ८।१।७. * '**मारुती** आमिक्षा', 'वारुणी आमिक्षा' वरुणप्रघासेषु । **भा.** ११।२।१५।६३, * मारुती मेषी दक्षिणविहारे हविस्तदर्थं वरुणप्रघासेषु अग्निमन्थनादेः पुनर्विधिः चातुर्मास्येषु । ७।१।३।२१, * मारुती साङ्गा दक्षिणे विहारे कर्तव्या वरुणप्रघासेषु । ११।२।९।३९, * **मारुतीमेव** दक्षिणस्मिन् विहारे आसादयति इति लक्षणया यागचोदना भवति । ११।२।९।३९. * मारुतीमेव (आमिक्षां) प्रतिप्रस्थाता दक्षिणस्मिन् विहारे आसादयति वरुणप्रघासेषु, तत्र पृथगङ्गानुष्ठानम् । ११।२।९।३५-४३. * 'मारुतीं पृश्निम्' इति राजसूये पशुः पृश्निः अल्पतनुः । **वि.** ४।४।१. * **मारुत्याः** भेदे प्रयाजादीनां भेदेन क्रिया वरुणप्रघासेषु । **भा.** ११।२।१०।४५.

* **मारुतसप्तकपालस्य** ऐन्द्राग्नविकृतित्वं त्र्यक्षरदेवताविधिसाम्यात् । **बाल.** पृ. १२०.

* **मारुत्यर्थं** दक्षिणविहारे पृथगङ्गानुष्ठानं चातुर्मास्येषु वरुणप्रघासेषु । **भा.** ११।२।९।३५-४३.

* **मार्जनं** परिधिधर्मः अग्निपरिधानार्थमनुष्ठीयते । **वि.** १२।२।१०.

* **मार्जनादयः** परिधिधर्माः अग्निपरिधानार्थमनुष्ठीयन्ते । त्वक्सहितत्वं शयानत्वं इत्यादयः परिधिधर्माः । **वि.** १२।२।१०-११.

* **मार्जालीयस्य** चतुर्वारं विहरणं सोमे । **संकर्ष.** ३।२।१६.

⧖ **मार्दवे बहवो दोषा इति न्यायः** । अयं च माघकविना विवृतः प्रकारान्तरेण । तथाहि 'तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत् । हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम् ॥' इति । **साहस्री.** ८३०.

⧖ **मालतीपुष्पमश्मना हन्तुमीहते इति न्यायः** । मालतीति पुष्पविशेषस्य नाम । तामश्मना पाषाणेन हन्तुमीहते यतते इति भावः । अयोग्यसंमेलने अस्य प्रचारः इति । **साहस्री.** ७३७.

⧖ **'माल्यं कस्य विचित्रपुष्परचितं प्रीत्यै न संजायते' इति न्यायः** । सर्वसुन्दरपदार्थे सर्वजनाभिरुचित्वविवक्षायामवतरत्ययम् । **साहस्री.** ८८१.

* **माषादेः** प्रतिषिद्धस्य द्रव्यस्य न प्रतिनिधित्वम्। (' अयज्ञिया वै माषाः ' इति माषप्रतिषेधः)। ६।३।६।२०. **मीको.** पृ. २७१७ ' प्रतिनिधित्वं प्रतिषिद्धस्य० ' इत्यत्र द्रष्टव्यम्।

* **माषपाकाधिकरणम्**। ' माषानेव मह्यं पचत ' इत्यर्थवादः। ६।७।१२।२६–३०. **मीको.** पृ. २४४४ ' परकृतिपुराकल्पाधिकरणम् ' इत्यत्र द्रष्टव्यम्।

* **माषपाकसंबन्धो** न केवलं बर्कोर्वार्ष्णेः किन्तु सर्वेषामेव। बर्कुसंबन्धोक्तिस्तु स्तुत्यर्था ' इति ह स्माह बर्कुर्वार्ष्णिः माषानेव मह्यं पचत, न वा एतेषां हविर्गृह्णाति ' इति। (कृत्वाचिन्तेयम्। वस्तुतस्तु माषःपाको न कस्यापि, आरण्याशनस्य तु स्तुतिरेषा। माषास्तु निषिद्धा एव यज्ञिये कर्मणि)। **वि.** ६।७।१२.

* ' **मासमग्निहोत्रं जुहोति** ' इत्यग्निहोत्रशब्दः जुहोतिना समानाधिकृतत्वात् कर्मपरः। **वि.**७।३।१४. * ' मासमग्निहोत्रं जुहोति ' इत्यग्निहोत्रशब्दवत् (अग्निहोत्रशब्दो यथा नित्याग्निहोत्रधर्मलक्षकस्तथा ' यदेवादः पौर्णमासं हविः ' इति) पौर्णमासशब्दः धर्मलक्षकः (इति सिद्धान्त्येकदेशी)। **सोम.** ५।४।४. * ' मासमग्निहोत्रं जुहोति ' इति कुण्डपायिनामयने नित्यादग्निहोत्रात् कर्मान्तरं विधीयते, न तु मासः कालो विधीयते। **भा.** २।३।११।२४. * ' मासमग्निहोत्रं जुहोति '। न चायं गुणविधिः, तद्धितचतुर्थ्योरभावात्। **टुप्.** ७।३।१।१. * ' मासं दर्शपूर्णमासाभ्यां यजेत ' इति कर्मान्तरविधिः न मासगुणविधिः, कुण्डपायिनामयने। **वि.** २।३।११. * ' मासं दर्शपूर्णमासाभ्यां यजेत ' इति प्रत्यहं यागः कुण्डपायिनामयने। **संकर्ष.** ३।१।२५. **मीको.** पृ. १४६५ ' कुण्डपायिनामयने मासं० ' इत्यत्र द्रष्टव्यम्। * ' **मासेन** शूद्रो भवति ब्राह्मणः क्षीरविक्रयात्। ' इत्यादयः प्रायश्चित्तविधिशेषभूताः निन्दार्थवादा न जातिनाशपराः। **संकर्ष.** ३।४।७. * ' मासेन शूद्रीभवति ' इत्येवमादीनि कर्मनिन्दावचनानि, अथवा वर्णत्रयकर्महानिप्रतिपादनार्थानि इति वक्तव्यम्। **वा.** १।२।१।२ पृ. ११०.

* **मासाग्निहोत्रस्य** नित्याग्निहोत्रं प्रकृतिः। **वि.** ७।३।१. * **मासाग्निहोत्रे** कुण्डपायिनामयनगते अग्नीषोमीयात् प्राचीनेऽपि उपांशुत्वस्य संबन्धो नास्ति, तस्य परमापूर्वप्रयुक्तत्वाभावात्। **भा.** ९।१।६।२०–२२, २५.

**मासाग्निहोत्रन्यायः**। अग्निहोत्रादिनाम्ना धर्मातिदेशः। अग्निहोत्रनामन्यायः। अग्निहोत्रशब्दन्यायः॥

**उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात्। ७।३।१।१॥**

**भाष्यम्**— नाम्ना धर्मप्रदेशं वक्ष्याम इति आदौ प्रतिज्ञातम्। सोऽयमुच्यते। कुण्डपायिनामयने श्रूयते ' मासमग्निहोत्रं जुहोति ' इति। तत्रैतत् समधिगतं नैयमिकात् अग्निहोत्रात् कर्मान्तरमेतत् इति (२।३।११)। अधुना अग्निहोत्रशब्दश्चिन्त्यते कथमयं प्रयुक्त इति। तदर्थमारभ्यते। ' उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात् ' इति। उक्तमादौ क्रियाऽभिधानं कर्मनामधेयं अग्निहोत्रशब्द इति ' तत्प्रख्यं चान्यशास्त्रम् ' (१।४।३।४) इत्यत्र। तस्यान्यत्र श्रुतौ कौण्डपायिनामयनीये जुहोतौ विधिप्रदेशः स्यात् धर्मप्रदेशः। नैयमिकस्याग्निहोत्रस्य ये धर्माः ते अस्मिन् अनेन नाम्ना अतिदिश्येरन्। किं कारणम्? उच्यते। परशब्दोऽयं परत्र वृत्तः। परशब्दस्य परत्र वृत्तौ तद्वद्भावो गम्यते। स यत्र विज्ञातो भवति तत्रानूद्यते। यथा सिंहो देवदत्त इति। यत्र अविज्ञातः तत्र विधीयते, यथा अमी पिष्टपिण्डाः सिंहाः क्रियन्तां इति। इह चाविज्ञातः अस्य जुहोतेः अग्निहोत्रवद्भावः। तस्मात् स विधीयते। ' मासमग्निहोत्रं जुहोति ' इति अग्निहोत्रवत् जुहोति इति। कथं पुनः असति वतिप्रत्यये वत्यर्थः शक्योऽवगन्तुं इति। उच्यते, साहचर्यात्। अग्निहोत्रशब्दोऽयं कर्मणा संबद्धः तत्सहचरितदोहनादिधर्मवत्तां लक्षणया शक्नोति गमयितुम्। शक्नोति चेद्गमयितुं प्रदेष्टुमपि शक्ष्यति। एवमन्तरेणापि वतिं वत्यर्थः शक्योऽवगन्तुमिति।

**टुप्**— नैयमिकस्य अग्निहोत्रशब्दो नामधेयं इत्युक्तम्। पुनरुच्चार्यमाणो धर्मातिदेशको भवति। कथम्?



अग्निहोत्रस्य या अवगता इतिकर्तव्यता तां शक्नोति लक्षयितुं विनापि वतिना। न वाक्यसंयोगात्। न चायं गुणविधिः तद्धितचतुर्थ्योः अभावात्। उच्चार्यमाण एव विज्ञातं नामिनं अवबोधयति। उभयत्र नामधेयमिति चेत्, तन्न, नामधेयं विशिष्टे भवति। न चेह विशिष्टताऽस्ति, द्रव्यदेवताऽभावात्। उभयत्र च नामधेयत्वे अदृष्टा शक्तिः कल्प्या।

**अपूर्वे वाऽपि भागित्वात्। २॥**

**भाष्यम्**— वाऽपीति विपर्यासेन प्रयुङ्क्ते, अपिवेत्यर्थः। अपिवा अपूर्वे एते उभे अपि कर्मणी स्याताम्। न कौण्डपायिनामयनीयो जुहोतिः नैयमिकपूर्वः। साधारणं च नामधेयमुभयोः। कुतः? भागित्वात्। अयमपि जुहोतिः भागी एतस्य नामधेयस्य। यथैव तत्र ' अग्निहोत्रं जुहोति ' इति समुच्चारणम्, एवमिहापि। तत्र तुल्ये समुच्चारणे तस्यैव एतन्नामधेयं नास्य इत्यत्र विशेषहेतुर्नास्ति। तस्मादुभयोः साधारणं नाम इति नास्ति धर्मप्रदेशः।

**नाम्नस्त्वौत्पत्तिकत्वात्। ३॥**

**भाष्यम्**— नैतद्युक्तम्। कुतः? नाम्नस्त्वौत्पत्तिकत्वात्। औत्पत्तिको हि नामिनाम्नोः संबन्धः। यन्नाम यस्मिन्नर्थे औत्पत्तिकेन संबन्धेन प्रसिद्धं तस्मिन्नेव सदा विज्ञेयं नान्यत्र च। तथा अव्यवस्थायां शब्दार्थे विश्वासो न स्यात्। उक्तं अन्यायश्चानेकार्थत्वं इति। यदा च नोभयार्थः तदा नैयमिकं तावदाह। तत्सादृश्यविधानार्थं चेतरत्रापि प्रयोग उपपद्यते इति नास्ति इतराभिधानत्वे हेतुः। तस्मात् विधिप्रदेशः स्यात्।

**प्रत्यक्षाद् गुणसंयोगात् क्रियाऽभिधानं स्यात् तदभावेऽप्रसिद्धं स्यात्। ४॥**

**भाष्यम्**— अत्राह। कस्मात् पुनः तन्नामधेयं इदं इह प्रयुक्तमित्युच्यते, न पुनः एतन्नामधेयं तत्रेति। तत आह ' प्रत्यक्षाद् गुणसंयोगात् क्रियाभिधानं स्यात् तदभावेऽप्रसिद्धं स्यात् '। नैयमिके अग्निहोत्रे प्रत्यक्षो गुणसंयोगः। प्रत्यक्षविहिता धर्माः सन्ति। इत्थं दोग्धि, इत्थं श्रपयति, चतुरुन्नयति, खादिरी अग्निहोत्रसमिद् भवति, इत्थं जुहोति, एतस्मिन् काले जुहोति, इत्येवं प्रत्यक्षात् गुणसंयोगात् नैयमिकस्य तन्नामधेयम्। इह प्रयुज्यमानं दोहनादिक्रियाभिधानं स्यात्। धर्मप्रदेशकमित्यर्थः। अस्य पुनर्जुहोतेः न केचिद्धर्माः सन्ति। तदभावे तेषां धर्माणामभावे अप्रसिद्धं स्यात्, न प्रज्ञायेत किमर्थमयमग्निहोत्रशब्द इह प्रयुक्त इति।

एवं वा। प्रत्यक्षो गुणसंयोगो नैयमिकस्य द्रव्यदेवतासंयोगः। ' दध्ना जुहोति ', ' पयसा जुहोति ', ' अग्नये च प्रजापतये च सायं जुहोति ' इति। एतस्मात् प्रत्यक्षात् गुणसंयोगात् क्रियाभिधानं स्यात्, कर्मनामधेयम्। इत्थंरूपो जुहोतिः अग्निहोत्राख्य इति। अथ इतरजुहोतेः रूपं नास्ति। तदभावे अप्रसिद्धं स्यात्, न ज्ञायेत कीदृशं तदग्निहोत्रमिति। ननु मासोऽस्य रूपं भविष्यति। न मासः कर्माङ्गम्, कर्तृधर्मः सः। अपि च अग्निहोत्रं तु मासे विधीयते, न मासेन अग्निहोत्रं रूप्यते। तस्मात् नैयमिकस्य एतन्नामधेयम्, इतरत्र तद्वदतिदेशः इति।

**शा**— कुण्डपायिनामयने श्रूयते ' मासमग्निहोत्रं जुहोति ' इति। तत् नैयमिकाग्निहोत्रात् कर्मान्तरं इति स्थिते (२।३।११।२४) संशयः किमयं अग्निहोत्रशब्दः नैयमिकाग्निहोत्रधर्माणामतिदेशकः उत नेति। **' उभयोरविशेषेण सामानाधिकरण्यतः। नामधेयमिदं तस्मान्न धर्मानतिदेक्ष्यति॥ एकस्य त्वभिधेयत्वे गौणत्वेनापि संभवात्। नान्यस्याप्यभिधेयत्वमनेकार्थत्वदोषतः॥ '** न च अगृह्यमाणविशेषत्वं नैयमिके अग्नये होत्रं इत्येवं प्रवृत्तिनिमित्तं संभवति। इतरस्य तु अग्निदेवत्यत्वं नावगतम्। अधर्मकश्च कौण्डपायिनः, तद्वचनत्वे सति न गौणत्वं नैयमिकस्य युज्यते। नैयमिकस्तु धर्मवान्। अतस्तन्नामेदं तत्सादृश्यविधित्सया अन्यत्र प्रयुज्यते। सादृश्यं च धर्मनिमित्तं अतो धर्मातिदेशोऽयं ' मासमग्निहोत्रं जुहोति ' इति।

**सोम**— प्रत्यक्षवचनस्य प्रथमं बुद्धौ आरोहात् तन्निमित्तमतिदेशं पादद्वयेन विचार्य कल्पनीयवत्यर्थतया ततः विलम्बितः नामधेयनिमित्तः अतिदेशः तृतीयपादे प्रस्तूयते। **सूत्रार्थस्तु**— अग्निहोत्रशब्दः कर्मनामधेय-

मित्युक्तम्, तत्प्रख्यस्थले तस्य अग्निहोत्रशब्दस्य प्रकरणान्तरे श्रवणे विधीयमानधर्माणां प्रदेशः अतिदेशः स्यात्।

वि-- ‘ मासं जुहोत्यग्निहोत्रमिति नामाग्निहोत्रतः। नित्यान्मासाग्निहोत्रेऽस्मिन् धर्माणां नातिदेशकम् ॥ उतातिदेशकं, नैव द्वयोर्नाम्नः समत्वतः।, अग्नये होत्रमित्यस्य नित्ये संपादितत्वतः ॥ तत्र मुख्यं ततोऽन्यत्र गौणत्वस्य प्रसिद्धये। नित्याग्निहोत्रगान् धर्मांस्तन्नामातिदिशेदिह ॥ ’

भाट्ट-- इदानीं नामातिदेशः प्रस्तूयते। ‘ मासमग्निहोत्रं जुहोति ’ इत्यादौ नैयमिकाग्निहोत्रवाचिनो नाम्नः न तावत् कर्मान्तरवाचकत्वम्, अनेकशक्तिकल्पनापत्तेः। दर्विहोमत्वेन चोदनालिङ्गातिदेशाभावात् नामातिदेशाभावे अग्निदेवताकत्वे प्रमाणाभावेन तत्प्रख्यन्यायानुपपत्तेश्च। न च ‘ यदाहवनीये जुहोति ’ इत्यनेन अग्नेः प्राप्तत्वात् अग्न्यधिकरणकत्वेन योगोपपत्तिः। तस्य अतिप्रसक्तत्वेन रूढ्यादिकल्पने पुनः गौरवतादवस्थ्यात्। अन्तोदात्तस्वरस्य सप्तमीबहुव्रीहौ अनुपपत्तेश्च। सप्तमीतत्पुरुषस्य शौण्डादिगणे पाठाभावेन अनुपपत्तेश्च। यदि तु नित्याग्निहोत्रे इव अग्नेः होत्रं होम इति व्युत्पत्त्या अधिकरणत्वं षष्ठ्यर्थमङ्गीकृत्य मासाग्निहोत्रेऽपि योग आश्रीयेत तदापि प्रचुरप्रयोगात् अग्निहोत्रपदस्य निरूढलक्षणया नित्याग्निहोत्रे प्रयोगात् तस्याश्च शक्तितुल्यत्वेन मासाग्निहोत्रे तदसंभवात् गौणत्वमावश्यकम्।

अनयैव दिशा ‘ मासं दर्शपूर्णमासाभ्याम् ’ इत्यादौ गौणत्वोपपादनं द्रष्टव्यम्। अन्यथा ‘ य इष्ट्या ’ इत्यादिना पौर्णमासीकालकत्वप्राप्तेः उभयत्र लाक्षणिकत्वाविशेषात्। दर्शादिकालप्राप्तावपि वा एकत्र मुख्यस्य अपरत्र गौणत्वनियमात् प्रसिद्धदर्शादौ निरूढलक्षणा आवश्यकी एव। सौमिकचोदनालिङ्गातिदेशादेव रूपलाभोपपत्तौ तदभावस्यापि अत्रासाधकत्वाच्च। एतेन गौणत्वाभावेऽपि एकनामकत्वसादृश्येन चोदनालिङ्गातिदेशादेव अग्निहोत्रधर्मलाभः इत्यपास्तम्। उभयत्र निरूढलक्षणायां प्रमाणाभावेन एकनामकल्पनासिद्धेः। न च तथापि देवताकालादिरूपगुणविधायकत्वेनैव उपपत्तौ गौणत्वे प्रमाणाभावः। तत्प्रख्याधिकरणोक्तकौस्तुभोक्तरीत्या समासासंभवेन देवताविध्यनुपपत्तेः। कालस्य प्राप्तत्वादिना विध्यनुपपत्तेश्च। अतश्च अग्निहोत्रादिशब्दाः कर्मान्तरे गौणाः। तत्र वत्यर्थरूपधर्मलक्षणापूर्वकं कर्मान्तरे गौणी इति प्राञ्चः। तत्सिद्धिसूत्रोक्तकौस्तुभरीत्या तु गौणीज्ञानकार्यतावच्छेदकमेव अग्निहोत्रीयधर्मविशिष्टकर्मान्तरशाब्दबोधत्वं इत्यपि शक्यं वक्तुम्। तत्र च सिंहो देवदत्त इतिवत् प्रमाणान्तरसिद्धसादृश्येन गौणत्वासंभवेऽपि अस्मिन्नेव वाक्ये तदीयधर्मविशिष्टकर्मान्तरविधानेन साध्यसादृश्येन गौणत्वोपपत्तिः इति सिद्धो नामातिदेशः। पदार्थातिदेशोऽपि च निरूपितरूपस्यैव अतिदेशात् ऊहबाधसिद्धिः।

**मण्डन**-- ‘ धर्मातिदेशे पदमग्निहोत्रम्। ’

**शंकर**-- ‘ नामातिदेशकं चाथ। ’

* मासाग्निहोत्रन्यायः। ( २।३।११।२४, ७।३।१।१–४ इत्यधिकरणद्वयमपि मासाग्निहोत्रन्यायत्वेन प्रसिद्धम्। तत्र २।३।११।२४ इत्यत्र कर्मभेदविचारः, ७।३।१।१–४ इत्यत्र च अतिदेशविचारः इति यथासंदर्भं विवेकः करणीयः ) ‘ वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत ’ इति बृहस्पतिसवस्य अङ्गत्वे कर्मान्तरत्वेन प्रसिद्धबृहस्पतिसवत्वाभावात् तच्छब्दः अनुपपन्नः, इति चेन्न, मासाग्निहोत्रन्यायेन तद्धर्मातिदेशार्थत्वात्। वि. ४।३।१३, * मासाग्निहोत्रन्यायः। न च पूर्वोक्तमासाग्निहोत्रन्यायेन ( २।३।११।२४ ) ‘ आग्नेयमष्टाकपालं निर्वपेद् रुक्कामः ’ इत्यत्र कर्मान्तरत्वम्, वैषम्यात्। तत्र अयनमारभ्याधीतत्वात् अस्ति प्रकरणान्तरत्वम्। इह तु अनारभ्याधीतत्वेन प्रकरणमेव तावन्नास्ति, कुतः प्रकरणान्तरत्वम्। २।३।१२. * दाक्षायणयज्ञे निमित्तश्रुत्या सातत्यानुष्ठाने प्रसक्ते आहारविहारादिवशेन तद्बाधात् जातेष्टि**मासाग्निहोत्रन्यायेन** पौर्णमास्याद्यनुग्रहेऽपि सातत्यस्यात्यन्तबाधायोगात् पुनःपुनरनुष्ठानोपपत्तिः। कौ. २।३।४।९. * सौमिककर्मवाचिनं अवभृथशब्दं वरुणप्रघासप्रकरणे प्रयुञ्जानः ‘ वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति ’ इत्याम्नायः मासाग्निहोत्रन्यायेन सौमिकधर्मान् अतिदिशन् कर्मान्तरं तद्धर्मसंयुक्तं विधत्ते। वि. ७।३।४.



* **मासाग्निहोत्रमासदर्शपूर्णमासकर्मभेदाभेदविचारः।** अथ ‘ मासमग्निहोत्रं जुहोति ’ इत्यत्र कर्मभेदो नैयमिकाग्निहोत्रवत्कर्माभेदो वेति चिन्त्यते। तत्र पूर्वपक्षः, ‘ तिस्र आहुतीर्जुहोति ’ इत्यादौ अयं न्यायः स्थितः ‘ यत्र गुणद्वये अन्योन्यविरुद्धे कर्मोत्पत्तिवाक्योपात्ते भेदावृत्त्योः अन्यतराक्षेपमन्तरेण कर्मान्वयोऽनुपपन्नस्तत्र भेद एवाक्षिप्यते नावृत्तिः’ इति। मासाग्निहोत्रवाक्ये च नामातिदेशेन परस्परविरुद्धं सायंप्रातःकालद्वयं कर्मोत्पत्तिवाक्यगतमस्ति। तेन कर्मभेद एवाक्षिप्यते ‘ यदाग्नेयोऽष्टाकपालः ’ इत्यत्र पौर्णमास्यमावास्याकालद्वयेनेव इति। **अत्रोच्यते।** नामातिदेशेन अङ्गत्वाविशेषात् अभ्यासोऽपि कालद्वयवत् प्राप्त एव। ततश्च उपात्तेन अभ्यासेनैव कालद्वयान्वयोपपत्तेः न कर्मभेदाक्षेपः। ‘ तिस्रः आहुतीर्जुहोति ’ इत्यादौ तु नैव केनचिच्छब्देन अभ्यास उपात्तः, यतस्तेनैव त्रित्वसंख्या उपपन्ना स्यात्, अतस्तदुपपत्त्यै कर्मभेद एवाक्षिप्यते। एवं आग्नेयवाक्येऽपि, इति दृष्टान्तद्वयवैषम्यम्।

अथेदानीमिदं चिन्त्यते ‘ मासं दर्शपूर्णमासाभ्यां यजते ’ इत्यत्र ‘ आज्यभागौ यजति ’ इतिवत् द्वित्वसंख्यया कर्मभेदात् द्वे कर्मणी यजिना विधीयेते इति तावदविवादम्। तथा दर्शशब्देन पूर्णमासशब्देन च प्राकृताग्नेयादित्रयसंबन्धि इतिकर्तव्यतात्रयं एकैकेन शब्देन एकैकस्मिन् कर्मणि अतिदिश्यते इत्यप्यविवादम्। अथ परस्परविरुद्धद्रव्यदेवतादिरूपेतिकर्तव्यतायाः त्रयं उत्पत्तिवाक्यगतं एकैकस्य कर्मणो भेदमाक्षिपति न वेति चिन्त्यम्। तत्र पूर्वपक्षः, यद्यप्यत्र ‘ मासमग्निहोत्रं जुहोति ’ इत्यत्रेव अभ्यासोपादानं नास्ति, तथापि विध्यन्ताधिकरणे ( ७।४।२ ) इतिकर्तव्यताद्वयसमुच्चयनिरासात् यथा सौर्ये प्राकृताग्नेयकर्मभेदेऽपि तदीयपौर्णमास्यमावास्यादिविरुद्धेतिकर्तव्यतयोः विकल्पेन अतिदेशः, एवमिहापि विनिगमकाभावात् दर्शशब्देन पूर्णमासशब्देन च तिस्रस्तिस्र इतिकर्तव्यताः आग्नेयादित्रयसंबन्धिन्यः अतिदिष्टाः विकल्पेन एकैकस्मिन् कर्मणि निवेक्ष्यन्ते इति न कर्मभेदः षोढा, किन्तु द्वैधैवेति। अत्र ब्रूमः। इतिकर्तव्यताविकल्पोऽपि अष्टमाद्ये निरस्त एव, तथापि ‘ मासं दर्शपूर्णमासाभ्यां ’ इत्यत्र दर्शशब्देन पूर्णमासशब्देन च एकैकेन लक्षणा इत्येकशब्दोपादानात् समुच्चये सति आग्नेयवाक्यमुद्रामुद्रितत्वात् षट्कर्माणि, सौर्ये तु प्राकृताग्नेयेतिकर्तव्यतयोः न प्रत्यक्षैकशब्दोपादानमस्ति, येन समुच्चयः, तद्बलाच्च कर्मभेदः स्यात्, किन्तु तत्र एकेतिकर्तव्यताकाङ्क्षावशात् शब्दकल्पना, एकेतिकर्तव्यतयैव च आकाङ्क्षा उपशाम्यति इति ईदृगेव अतिदेशकः शब्दः कल्प्यते पौर्णमास्याग्नेयवत् दर्शाग्नेयवद्वा इति। एवं वाशब्दयुक्तातिदेशकशब्दकल्पनात् न प्राकृताग्नेयेतिकर्तव्यतयोः समुच्चयः, न वा तद्बलात् कर्मभेदापत्तिः इति वैषम्यम्। ननु इह यथा पूर्णमासशब्देन दर्शशब्देन वा कर्मत्रयकर्मत्रयसंबन्धीतिकर्तव्यतात्रयं लक्षणया अतिदिश्यते, इतिकर्तव्यतायाश्च त्रयस्यत्रयस्य एकैकशब्दोपादानात् समुच्चयावगतेः षट् कर्माणि। एवं सांनाय्ययागद्वयेन सह प्राक् सोमात् वैकल्पिकस्य ऐन्द्राग्नस्यापि द्रव्यदेवतारूपेतिकर्तव्यताऽपि प्रकृतिस्था दर्शशब्देन लक्षणया एकशब्दोपात्तैव इति सप्तममपि कर्म दर्शपूर्णमासवाक्ये विधीयते इति षट्कर्मानुष्ठानं याज्ञिकानां चिन्त्यमेव। प्रकृतौ ऐन्द्राग्नविकल्पेऽपि इह तदितिकर्तव्यताया अपि एकशब्दोपादानेन समुच्चित्य विधानात्। तत्र तु इयान् विशेषः, प्रकृतौ ऐन्द्राग्नः प्राक् सोमात् इह तु तद्विकृतावपि सत्रस्य सोमोत्तरकालत्वात् तदङ्गत्वे अङ्गगुणविरोधन्यायेन ( १२।२।९।२५ ) समप्राधान्ये तु ‘ भूयसां स्यात् सधर्मत्वम् ’ इति न्यायेन ( १२।२।७।२२ ) सोमप्राक्त्वबाधः इति। सत्यं सप्तमं कर्म ऐन्द्राग्नविकृतिभूतं सिध्यति, तस्य तु नित्यवदनुष्ठाने दर्शशब्दनाम्ना अतिदिष्टस्य प्रकृतिवद्भावस्य बाधः स्यात्। तथा च एकादशे ( ११।२।१५।६३–६५) ‘वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति’ इत्यत्र प्रकरणान्तरात् कर्मान्तरत्वेन तत्प्रतिपत्तिः अर्थकर्मभूतसौमिकावभृथवद्भावबाधकापत्तेः इत्युक्तम्। अतः षट्कर्मानुष्ठानं याज्ञिकानां युक्तमेवेति। ननु समुच्चयावगमकोपदेशेन प्रकृतिवद्भावातिदेशबाधोऽस्तु, मैवम्। प्रकृतिवद्भावेन हि प्रधानाङ्गं विकल्पः अतिदिष्टः, समुच्चयस्तु वैकृते प्रधाने कल्प्यः, श्रुतस्तु इतिकर्तव्यता-

यामङ्गे । तत्र च अङ्गगुणविरोधन्यायात् औपदेशिकोऽपि समुच्चयः आतिदेशिकेनापि विकल्पेन बाध्यते इति प्रकृतिवदेवानुष्ठानं सिद्धम् । बाल. पृ. ८९–९१.

* **मासाग्निहोत्रश्रपणं** कौण्डपायिनामयने प्राजहितेऽग्नौ कार्यं न शालामुखीये । १२।१।६।१३. **मीको.** पृ. १४६३ ' कुण्डपायिनामयने प्राजहिते० ' इत्यत्र द्रष्टव्यम् ।

* **मासादिदीक्षाकल्पस्यैव** इष्टकानिर्माणपर्याप्तकालत्वात् साग्निचित्यक्रतौ एकादिदीक्षापक्षा न प्रवर्तेरन् । **इति प्राप्ते,** ' न प्राजापत्येनानिष्ट्वा इष्टकाः कारयेत् ' इति प्रतिषेधान्यथानुपपत्त्या दीक्षातः पूर्वं प्राजापत्यपशोः परतोऽपि तन्निर्माणकाललाभात् अनेन कालेन सह अविरोधात् एकादिदीक्षापक्षाणां प्रकृतितः प्राप्तानां न बाधः । **संकर्ष.** २।१।२९.

* **माहायानिकः** पक्षः ( शून्यवादिपक्षः ) प्रत्युक्तः प्रागेव निराकृतः इत्यर्थः । **भा.**१।१।५।५ पृ.५१.

* **माहेन्द्रं** इत्यादीनि चत्वारि पृष्ठस्तोत्राणि ज्योतिष्टोमे । **वि.** ७।३।३, * माहेन्द्रं स्तोत्रं राजसूयगताभिषेचनीये अतिदेशप्राप्तम् । तस्य काले अपकर्षेण यजमानस्याभिषेकः क्रियते । अभिषेकात् प्राक् च विदेवनादयः क्रियन्ते । ४।४।२, * माहेन्द्रं स्तोत्रं वाजपेये ' रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति ', ' दुन्दुभिघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति ' इति । १०।४।२ वर्णकं २. * **' माहेन्द्रमनुहूयन्ते '** इत्यस्य माहेन्द्राव्यवहितकाले अतिग्राह्या हूयन्ते इत्यर्थ इति पूर्वपक्षः । माहेन्द्रेण इष्ट्वा अतिग्राह्यान् हुत्वा अनुवषट् कुर्यात् इत्यर्थः इति सिद्धान्तः । **संकर्ष.** ३।३।७.

* **माहेन्द्रस्तोत्रानन्तरमेव** अतिग्राह्याणां होमः, न तु सह । **संकर्ष.**३।३।७. **मीको.** पृ. १९० ' अतिग्राह्याणां माहेन्द्रग्रहानन्तरमेव० ' इत्यत्र द्रष्टव्यम् ।

* **माहेन्द्रस्तोत्रादीनि** चत्वारि पृष्ठानि ज्योतिष्टोमे न सर्वाणि षडपि । **भा.** ७।३।३।६.

* **माहेन्द्रस्तोत्रोपाकरणसाधनतया** विहितेन रथदुन्दुभिघोषेण प्राकृतदर्भमन्त्रयोर्बाधो वाजपेये । रथघोषाधिकरणम् । १०।४।१।१–२ वर्णकं ३.

* **माहेन्द्रस्तोत्रकाले** अभिषेकापकर्षे विदेवनादीनामपि ततः प्रागपकर्षः, राजसूये अभिषेचनीयसोमयागे । **भा.** ५।२।९।२१.

* **मित्रदायादादिभ्यः** प्रीत्यादिना क्रियमाणेऽश्वदाने नास्ति दोषः नापि प्रायश्चित्तम् । **वि.** ३।४।१४.

* **मित्रावरुणयोरयनं** सारस्वतसत्रविशेषः । **सु.** पृ. ९९९.

* **मित्रविन्दायां** अनारभ्याधीतं सामिधेनीसप्तदश्यं निविशते । **वि.** ३।६।२. * मित्रविन्दायां अनारभ्यविहितं ( सामिधेनी– )सप्तदश्यं अतिदेशप्राप्तपाञ्चदश्यबाधेन निविशते । **वा.** ३।६।२।९.

* **मित्रविन्दादौ** सामिधेनीसाप्तदश्यपुनःश्रवणस्य अनारभ्याधीतसाप्तदश्येन उपसंहारः । १०।८।९।१७–१९. * **मित्रविन्दादिषु** ' सप्तदश ( सामिधेनीः ) अनुब्रूयात् ' इति वचनम् । **भा.** १०।८।१३।३४.

* **' मिथश्चानर्थसंबन्धात् । '** ( ३।१।१३।२३ ) इत्यत्र आज्यभागक्रमाम्नानात् वार्त्रघ्नीवृधन्वत्याख्यमन्त्राणां तदङ्गत्वं वक्ष्यते । **सु.** पृ. ७२२.

## मिथश्चानर्थसंबन्धात् । ३।१।१३।२३॥

दर्शपूर्णमासयोः श्रूयते ' वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायाम् ' इति । इदमनुवाक्याचतुष्टयं किं प्रधाने निविशते उत आज्यभागयोः इति विचार्य सिद्धान्तमाह । मिथः परस्परं मिलिताभ्यां इत्यर्थः । वार्त्रघ्नीभ्यां अनुवाक्याभ्यां पौर्णमासीकर्मणः वृधन्वतीभ्यां च अमावास्याकर्मणः अर्थेन प्रयोजनेन न संबन्धः । प्रधाने नोपयोगः कश्चित् । अनर्थसंबन्धः, अर्थेन संबन्धः अर्थसंबन्धः न अर्थसंबन्धः अनर्थसंबन्धः अर्थसंबन्धाभाव इत्यर्थः तस्मात् । ' अग्निर्वृत्राणि जङ्घनत् ' इति वार्त्रघ्नी आग्नेयी, ' त्वं सोमासि सत्पतिः ' इति वार्त्रघ्नी सौमी । ' अग्निः प्रत्नेन जन्मना ' इति वृधन्वती आग्नेयी, ' सोमगीर्भिष्ट्वा वयम् ' इति वृधन्वती सौमी । पौर्णमास्यां केवलसोमाभावात् अमावास्यायां तु सर्वथैव सोमाभावात् । प्रधाने उक्तानां अनुवाक्यानां नास्ति प्रयोजनम् । आज्यभागयोस्तु अस्त्युपयोगः । इति आज्यभागयोः अनुवाक्यानां विनियोगः स्यात् इति



सिद्धान्तः । प्रधानस्य अनुवाक्यानां च मिथः न अर्थसंबन्धः प्रयोजनप्रयोजनिसंबन्धः लिङ्गादिबाधापत्तेः इति कौस्तुभोक्तः सूत्रार्थः साधीयान् । **के.**

## मिथश्चानर्थसंबन्धात् । ३।१।१३।२४ ॥

दर्शपूर्णमासयोः श्रूयते ' वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायाम् ' इति । तत्र संदेहः किं अनुवाक्यायुगलस्य प्रधाने निवेशः उत आज्यभागयोः इति । आनर्थक्यतदङ्गन्यायप्रसङ्गागतं विचारद्वयं परिसमाप्य इदानीं आनर्थक्यतदङ्गन्यायवैधर्म्येण प्रसङ्गात् यथायोगं व्यवस्था प्रतिपाद्यते । अत्रायं पूर्वपक्षिणोऽभिसंधिः । यद्यपि पौर्णमास्यमावास्याशब्दौ काले मुख्यौ, तथाप्यनुवाक्यायुगलद्वयस्य देवताप्रकाशकस्य कालार्थत्वासंभवात् स्वभावादेव यागयोगित्वात् लक्षणया यागपरत्वमेव । तत्र किं क्रमानुरोधेनाज्यभागपरत्वं वाऽनयोः, यदि वा प्रकरणानुरोधेन प्रधानयागपरत्वम् । तत्र प्रकरणस्य बलीयस्त्वात् क्रमबाधेन प्रधानसंबन्ध एव अनुवाक्याद्वयस्य प्रकरणानुगृहीतेन वाक्येन प्रतिपाद्यते । तदुक्तम् **' नित्यं तत्रानुवाक्याभियोगानामेव संगतिः । न कालयोः क्रमस्तस्मात्प्रधानाङ्गतया हतः ॥ '** इति ( वा. पृ. ७३९ ) ।

किञ्च, यथा प्रकरणेनाज्यभागयोः प्रधानार्थत्वं तथा अनुवाक्यायुगलयोरपि । अतोऽपि प्रधानार्थत्वादनयोर्नान्योन्यसंबन्धः । तदुक्तम् **' गुणानां च परार्थत्वादित्यनेनापि हेतुना । संबद्धं नाज्यभागाभ्यामनुवाक्याचतुष्टयम् ॥ '** इति ( वा. पृ. ७३९ ) ।

तस्मात् आज्यभागक्रमं बाधित्वा वाक्येन प्रधानार्थत्वमेव अनुवाक्यानामिति । **एवं प्राप्ते, अभिधीयते ।** भवेदेवं यद्यनुवाक्याद्वयस्य प्रधानकर्मण्यर्थसमवायो भवेत् । तथाहि, एकात्रानुवाक्याऽऽग्नेयी, अपरा सौमी । पौर्णमास्याख्यकर्मत्रयेऽप्यग्नीषोमीये अग्निसहितस्यैव सोमस्य देवतात्वम् । केवलस्य सोमस्य प्रकाशनं महेन्द्राधिकरणन्यायेनैव न संभवति । न चानुवाक्याद्वयेनैव अग्नीषोमप्रकाशनमिति वाच्यम् । ' अनुवाक्यामन्वाह ' इत्येकस्मिन् कर्मणि विवक्षितानुवाक्यागतैकत्वबाधप्रसङ्गात् । न च अनेनैव वाक्येन द्वित्वमपि

विधीयते । प्राप्ते कर्मणि द्वित्वस्य मन्त्रविशेषस्य च विधाने वाक्यभेदप्रसङ्गात् । ' पुरोऽनुवाक्यामन्वाह ' इत्यत्र तु अनेकासां पुरोनुवाक्यानां क्रमप्राप्तत्वात् एकत्वमात्रं विधीयते इति युक्तम् । अत्र तु मन्त्रविशेषस्यापि विवक्षायां वाक्यभेद एवेति किञ्चित्कालवचनत्वेनोपपत्तौ कथं लाक्षणिककर्मपरत्वाश्रयणम् ? न च मन्त्रस्य कालार्थत्वासंभवात् पौर्णमास्यमावास्याशब्दयोर्लक्षणया कर्मपरत्वमिति वाच्यम् । व्यवस्थार्थत्वेनैव कालवचनोपपत्तेः । तथापि आज्यभागयोः कामवादवदनुवाक्यायुगलद्वयमाम्नायते । आज्यभागयोश्च प्रथमस्य अग्निर्देवता, द्वितीयस्य सोमः । तेन क्रमलिङ्गाभ्यामाज्यभागार्थमेतदनुवाक्यायुगलद्वयमवगतम् । आज्यभागौ च प्रतिप्रधानगुणावृत्तिन्यायेन पौर्णमास्यमावास्याक्रमसमुदायद्वये आवृत्त्या प्रयोक्तव्यौ । तत्र चाव्यवस्थया मन्त्रप्राप्तौ व्यवस्थार्थं वचनम् । पौर्णमास्यां यावाज्यभागौ तौ वृत्रहपदवन्मन्त्रकौ, अमावास्यायां यावाज्यभागौ तौ वृधन्वत्पदवन्मन्त्रकौ प्रयोक्तव्याविति । एतच्च पौर्णमास्यधिकरणे एव प्रपञ्चितम् । अतो मुख्यकालार्थत्वेनैव वाक्योपपत्तौ न लिङ्गक्रमबाधेन लक्षणया प्रधानकर्मपरत्वाश्रयणं युक्तम् । तेन अनुवाक्यायुगलस्य आज्यभागयोरेव निवेश इति सिद्धम् ।

**प्रयोजनम्**— पक्षोक्तम् । **सूत्रं** तु मिथोऽन्योन्यमनुवाक्यानां प्रधानयोश्च दर्शपूर्णमासयोरङ्गाङ्गिभावेन अनर्थसंबन्धात् अर्थसंबन्धाभावादित्यर्थः । **तौता.**

* अथ अग्निर्देवता भविष्यतीति कश्चित् ब्रूयात् स वक्तव्यः **' मिथश्चानर्थसंबन्धः '** इति । नहि आग्नेयशब्दः ' यदाग्नेयोऽष्टाकपालः ' इति अनुवादो विधिश्च भवतीति । **भा.** २।२।३।६ पृ ४८७. * मन्त्रसमाम्नाये अविशेषपठितस्य पुरोनुवाक्यायुगलद्वयस्य आज्यभागयोः कालद्वयगतयोः अव्यवस्थया प्राप्तौ तद्व्यवस्थार्थत्वं तृतीयाद्ये ' मिथश्चानर्थ० ' इत्यत्र वक्ष्यते । **कु.** २।२।३।३. * यदि एतयोः ( आज्यभागयोः ) अग्नीषोमीयादिवत् अन्यदेवताकत्वमवगतं स्यात् ततः वाक्येन लिङ्गबाधायोगात् अगत्या विशिष्टलक्षणां अङ्गीकृत्य गौरवमपि ' मिथश्चानर्थ० ' इति न्यायेन आश्रियेत । न तु तदस्ति । **कौ.** २।२।३।३. * ' वार्त्रघ्नी

पूर्णमासे अनूच्येते, वृधन्वती अमावास्यायाम्' इति वाक्ययोः, आज्यभागयोः पुरोनुवाक्याव्यवस्थापकत्वं इति 'मिथश्चानर्थं०' इत्यत्र वक्ष्यते। कु. ३।२।३।३.

* **मिथुनस्य** गर्भः प्रयोजको न गर्भोदकम्। **भा.** ४।१।९।२४.

* **मिथ्या** प्रत्ययः। यो हि जनित्वा प्रध्वंसते नैतदेवं इति सः मिथ्या प्रत्ययः। न चैष (चोदनाया अवगम्यमानः अर्थः) कालान्तरे पुरुषान्तरे अवस्थान्तरे देशान्तरे वा विपर्येति। तस्मादवितथः। **भा.** १।१।२।२, * किं नु खलु अमिथ्याज्ञानस्य स्वरूपम्? यस्य बाधकः प्रत्ययः विमृश्यमानस्यापि नोपपद्यते न तत् **मिथ्या**। ३।३।७।१४ पृ. ८६२.

* '**मिथ्याभिशंसिनो** दोषो द्विः समो भूतवादिनः। मिथ्याभिशस्तदोषं च समादत्ते मृषा वदन्॥' (यास्मृ. ३।२८४)। अयं दोषार्थस्वतन्त्रार्थवादकल्प्यः प्रतिषेधः। बाल. पृ. ३०.

* **मिथ्याज्ञानम्।** बाधकं हि यत्र ज्ञानमुत्पद्यते 'नैतदेवं (किन्तु) मिथ्याज्ञानम्' इति तदन्यसंप्रयोगे, विपरीतं तत्संप्रयोगे इति। यदा हि चक्षुरादिभिरुपहतं मनो भवति, इन्द्रियं वा तिमिरादिभिः सौक्ष्म्यादिभिर्बाह्यो वा विषयः, ततो मिथ्याज्ञानम्। असति तस्मिन् (इन्द्रियमनोऽर्थसंनिकर्षे) मिथ्याज्ञानम्। तदुभयगतो दोषो मिथ्याज्ञानस्य हेतुः। दुष्टेषु हि ज्ञानं मिथ्या भवति। तस्माद्यस्य च दुष्टं करणम्, यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः प्रत्ययो नान्यः इति। **भा.** १।१।५।५ पृ. २७–२८.

* **मिथ्याभावः।** सनिद्रस्य मनसो दौर्बल्यान्निद्रा मिथ्याभावस्य हेतुः स्वप्नादौ। **भा.** १।१।५।५ पृ. ३०.

* **मीमांसकः** वचनव्यक्तिकुशलः। **वा.** ३।४।४।१३ पृ. ९२६. * **मीमांसकाः।** अनुष्ठातृषु निष्पन्नस्यापि संबन्धस्य अमीभिः मीमांसकमूलप्रमाणं विना याज्ञिकानुष्ठानमात्रात् अविश्वसद्भिः प्रतिपत्तेः समाख्याख्यमूलप्रमाणदर्शनेनैव वयं मीमांसकाः संबन्धं प्रतिपद्यामहे। **सु.** पृ. ११०३. * मीमांसकाः ज्ञानस्य प्रामाण्यं स्वतः, अप्रामाण्यं परतः इति वदन्ति। **वैद्यनाथः** १।१।२।२ पृ. १४. * मीमांसकाः न्यायेन वेदं व्याचक्षते। **वा.** ३।१।७।१३ पृ. ७०१. * मीमांसकाः 'वाक्यार्थो लाक्षणिकः' इति वदन्ति। **रत्नमाला.** वाक्यार्थनिर्णये पृ. १०१. * मीमांसकाः व्यपेक्षामात्राश्रयिणः एकार्थीभावं नाभ्युपगच्छन्ति। **वि.** १०।८।२ टिप्पणी. * मीमांसकाः शक्तिः पदार्थान्तरं इति वदन्ति। अस्या एव संकेत इति व्यवहारः। साक्षात् शब्दजन्यार्थप्रतीतिसहकारिज्ञानविषयत्वं वा। **मणि.** पृ. ७४. * 'मीमांसका हि वाक्यार्थविचारे प्रस्तुते सति। लोकदृष्टीः प्रतिघ्नन्ति वचनव्यक्तिपांसुभिः॥' **वा.** ३।१।७।१४ पृ. ७०६. * **मीमांसकस्य** (मते) बुद्धेरनुमेयत्वम्। **ऋजु.** पृ. ६०. * **मीमांसकानां** आकृतिः (जातिः) पदार्थः। **बाल.** पृ. ७. * मीमांसकानां राद्धान्ते सविकल्पकस्यापि प्रमाणत्वम्। **ऋजु.** पृ. ४१.

* **मीमांसकप्रवादः** 'स्वार्थत्यागः, परार्थग्रहणम्, प्राप्तबाधः' इति परिसंख्यासु प्रसिद्धं दोषत्रयं अप्राप्तपरिसंख्यासु न भवति किन्तु प्राप्तपरिसंख्यासु इति। **रसायनम्** पृ. १६८.

* **मीमांसकमते** कर्मसंख्यायां तिङुत्पत्तिः, वैयाकरणमते कर्मणि। **सु.** पृ. १४०७. * मीमांसकमते अर्थभावनैव कारकविशिष्टरूपेण वाक्यार्थः। **बाल.** पृ. ७३. * मीमांसकमते युगादिव्यवस्था अस्त्येव। तत्तद्युगधर्मव्यवस्थापकस्मार्तविधीनां निर्विषयत्वापत्तेः। **भाट्ट.** ६।७।१२. * मीमांसकमते शब्दो द्रव्यम्। **सु.** पृ. १४४३.

* **मीमांसकमर्यादा।** अनारभ्याधीतस्य साप्तदश्यस्योपसंहारार्थानि तत्तत्प्रकरणाधीतानि साप्तदश्यवचनानि। ततश्च प्राकरणिकवचनैः साप्तदश्यस्य क्रतुसंबन्धसिद्धिः 'अनारभ्याधीतवाक्येन सामिधेनीसंबन्धसिद्धिः' इति मीमांसकमर्यादा। **रसायनम्** पृ. ३८, * सर्वे द्रव्यविधयो नियमविधयः इति **मीमांसकमर्यादा।** पृ. ४०.

* **मीमांसा** अभिघारणानभिघारणस्य त्र्यम्बकपुरोडाशेषु। १०।८।५।८. **मीको.** पृ. १९८५ 'त्र्यम्बकाधिकरणम्' इत्यत्र द्रष्टव्यम्। * मीमांसा कर्तव्या न वेति संशये धर्मज्ञानार्थं कर्तव्येति सिद्धान्तः। **भा.** १।१।१।१. * मीमांसा च इतिकर्तव्यतात्वेन अङ्गम्। तदुक्तं 'धर्मे प्रमीयमाणे हि वेदेन करणात्मना। इतिकर्तव्यताभागं मीमांसा पूरयिष्यति॥' इति। अतो वैध एवायं शास्त्रारम्भः। **वाक्यार्थ.** पृ. १७. * मीमांसा न्यायनिरूपणात्मिका। **बाल.** पृ. २. * मीमांसा लोकादेव प्रत्यक्षानुमानादिभिः अविच्छिन्नसंप्रदाय–पण्डितव्यवहारैः प्रवृत्ता। नहिं कश्चिदपि प्रथममेव एतावन्तं युक्तिकलापं उपसंहर्तुं क्षमः। **वा.** १।३।१।२, * मीमांसा समस्तवैदिकतर्कोपसंहारात्मिका वेदशब्दवाच्या 'विधिर्विधेयस्तर्कश्च वेदः' इत्येतस्मिन् दर्शने सति भवति। १।३।६।१३ पृ. २४१. * मीमांसा सर्ववाक्यगतन्यायनिरूपणात्मिका। तेन अस्यां यो न्यायमार्गः, तस्मिन्नज्ञाते दुर्ज्ञाते वा विवेकाभावात् न किञ्चित् ज्ञायेत। **रत्नाकरः.** १।१।१।१ श्लोवा. १५. * **मीमांसया** वेदवाक्यानि व्याख्यायन्ते। **भा.** १।१।१।१. * **मीमांसायाः** द्वादशाध्यायानां द्वादश विषयाः- प्रमाण– भेद– शेषत्व– प्रयुक्ति– क्रम–अधिकार– सामान्यातिदेश– विशेषातिदेश– ऊह– बाध–तन्त्र–प्रसङ्गाः। **बाल.** पृ. २. * मीमांसायाः धर्मज्ञानप्रयोजनत्वम्। **सु.** पृ. १३०, * मीमांसायाः न्यायनिष्ठत्वात् प्रयोगनिरूपणमयुक्तं इत्याशङ्क्य प्रयोगार्थत्वाश्रयस्य तत्साम्येऽपि यत्र प्रयोगवैषम्यं तत्र तन्निरूपणीयं इत्याह। पृ. १६९. * मीमांसायाः पूर्वेण अध्यायषट्केन प्रत्यक्षविहितधर्माणां कर्मणां दर्शपूर्णमासादीनां इतिकर्तव्यता चिन्तिता। उत्तरेण इदानीं अविहितेतिकर्तव्यताकेषु ऐन्द्राग्नादिषु चिन्तयितुमिष्यते। **भा.** ७।१।१।१. * मीमांसायाः विषयः। धर्म इत्येव शास्त्रविषयः न वेदार्थः इति। तथा च दर्शितम् 'अथातो धर्मजिज्ञासा सूत्रमाद्यमिदं कृतम्। धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम्॥' (श्लोवा. १।१।१।११) इति। तथा च 'अथातो धर्मजिज्ञासा, चोदनालक्षणोऽर्थो धर्मः' इति च सूत्रम्, 'को धर्मः कथंलक्षणः' इत्यादि भाष्यं च न कुकविकृतिरिव वेदार्थपरं व्याख्येयम्। **शा.** २।१।१.

प्रथमेऽध्याये प्रमाणम्, द्वितीये स्वरूपम्, षष्ठे फलम्, इतरेषु साधनं विचार्यते इति विवेकः। **सोम.** १।२।१.

'धर्मो द्वादशलक्षण्या व्युत्पाद्यस्, तत्र लक्षणैः। प्रमाण–भेद–शेषत्व–प्रयुक्ति–क्रमसंज्ञकाः॥ अधिकारोऽतिदेशश्च सामान्येन विशेषतः। ऊहो बाधश्च तन्त्रं च प्रसङ्गश्चोदिताः क्रमात्॥' द्वादशाध्यायोपेतस्य शास्त्रस्य धर्मो विषयः। प्रथमेऽध्याये विध्यर्थवादादिरूपं प्रमाणं निरूपितम्। द्वितीये यागादिकर्मभेदः। तृतीये प्रयाजादीनां दर्शपूर्णमासाद्यर्थत्वेन तच्छेषत्वम्। चतुर्थे गोदोहनस्य पुरुषार्थत्वप्रयुक्त्या अनुष्ठानं न तु क्रत्वर्थप्रयुक्त्या इत्येवमादयः। पञ्चमे क्रमनियतिविधेयत्वादयः। षष्ठे कर्तुरधिकारो नान्धादेः इत्यादयः। सप्तमे सामान्यतः अतिदेशः प्रत्यक्षवचनेन अनुमितवचनेन च। अष्टमे विशेषरूपेण अतिदेशः। नवमे 'अग्नये जुष्टं निर्वपामि' इत्यत्र 'सूर्याय जुष्टं निर्वपामि' इत्यादिः ऊहः। दशमे बाधः। एकादशे तन्त्रम्। द्वादशे प्रसङ्गः। वि. प्रस्तावना.

पूर्वेण अध्यायषट्केन प्रत्यक्षविहितधर्माणां कर्मणां दर्शपूर्णमासादीनां इतिकर्तव्यता चिन्तिता। **भा.** ७।१।१।१.

पूर्वे षट्के उपदेशविचारः। **सोम.** ७।१।१.

* **मीमांसायां** द्वादशलक्षण्यां धर्माधर्माविव जैमिनिना अनुष्ठानोपयोगितया विचारितौ। यद्यपि धर्माधर्मौ अदृष्टविशेषात्मकौ, न क्रियारूपौ, अत एव 'धर्मः क्षरति कीर्तनात्' इत्यादौ वैशेषिकतन्त्रे च क्रियाजन्यादृष्टे धर्माधर्मशब्दप्रयोगः, तथापि 'धर्मस्त्वनुष्ठितः पुंसाम्' इत्यादौ तज्जनकविहितनिषिद्धक्रियायामपि धर्माधर्मशब्दप्रयोगात् ताविह प्राधान्येन विचार्येते। **रहस्य.** पृ. १.

* **मीमांसाशास्त्रं** वेदवाक्यार्थविचारोपायभूतन्यायनिबन्धनम्। **पञ्जिका.** पृ. १. * **मीमांसाशास्त्रस्य** अनुष्ठानपर्यवसायित्वम्। **सु.** पृ. ५४०. * **मीमांसाशास्त्रे** जिज्ञास्यत्वेन धर्मः प्रमेयः प्रक्रान्तः। **वा.** २।१।१।१ पृ. ३७०.

* **मीमांसाशास्त्रारम्भसिद्धिः** अधीतवेदजन्यार्थज्ञानोपयोगित्वात् वैधी। **मणि.** पृ. ५.

* **मीमांसासिद्धान्ते व्यवहारः।** यतः विधिर्न कर्तव्यतां कर्मणः अवबोधयति, तस्मात् यद्यदुपादीयते

तत्तत् विधेयं इति तन्त्रे व्यवहारः, न पुनः यद्यत् कर्तव्यतया ज्ञाप्यते तत्तत् विधेयं इति मीमांसासिद्धान्ते व्यवहारः। ऋजु. पृ. ३०.

* मुक्तिवादः 'मोक्षवादः' इति बिन्दौ द्रष्टव्यः।

**'मुखमस्तीति वक्तव्यं दशहस्ता हरीतकी' इति न्यायः।** अयं असंभववस्तुवक्तरि जने आक्षेपरूपः इति। **साहस्री.** ५७४.

* 'मुखं व्यादाय स्वपिति' इत्यादौ समानकर्तृकत्वमात्रे सामानाधिकरण्ये वा क्त्वाप्रत्ययस्य लक्षणा। 'सुप्त्वा मुखं व्यादत्ते' इति वैपरीत्येन बोध इति कश्चित्। **मणि.** पृ. १६४. * 'मुखं व्यादाय स्वपिति' इति क्त्वाप्रत्ययस्य समानकर्तृकत्वमात्रेण उपपत्तिः। **सु.** पृ. ८६७. * 'मुखं व्यादाय स्वपिति'। स्वापोत्तरकालमेव हि मुखव्यादानम्। न च ये मुखव्यादानात् निद्राणस्य पराञ्चः क्षणाः तान् विवक्षित्वा व्याख्येयम्, लोकाधीनावधारणत्वात् शब्दार्थसंबन्धस्य। व्यादानस्य तु पुरस्तात्तनेष्वपि निद्राणां क्षणेषु 'मुखं व्यादाय स्वपिति' इति सोरस्ताडं क्रन्दन्तोऽपि लोकप्रयोगस्य अनिवृत्तेः। समानकर्तृकता एव अव्यभिचारिणी क्त्वाऽर्थः समानकर्तृकेऽर्थे वर्तमानाच्च धातोः विधीयमानं य एव पूर्वं प्रयुज्यते तत्रैव क्त्वाप्रत्ययं प्रयुज्यन्ते लौकिकाः। यथाप्रयोगं च अर्थप्रत्ययः। **कणिका.** पृ. ४१४.

* मुख्यं आद्यं जघन्यमन्त्यम्। **भा.** १०।५।१।१, * मुख्यमेव ग्राह्यम्, यदि तत् प्रधानमात्रसमर्थमपि स्यात्। ६।३।२०।४०–४१. * 'मुख्यं वा पूर्वचोदनाल्लोकवत्।' (१२।२।८।२३) इत्यत्र 'आग्नावैष्णवमेकादशकपालं निर्वपेत्, सरस्वतीमाज्यस्य यजेत' इति यागद्वये विहिते अमावास्यायां उपांशुयाजपक्षे तद्विकारे सारस्वते वेदानन्तरवेदिकरणपञ्चहोत्राभिमर्शनवृधन्वत्याज्यभागानुवाक्याप्राप्तेः अग्नीषोमीयविकारे च आग्नावैष्णवे हविरभिवासनानन्तरवेदिकरणचतुर्होत्राभिमर्शनवार्त्रघ्न्यनुवाक्याप्राप्तेः अनियमेन एकस्य कल्पः अन्यत्र प्रसज्यते इति पूर्वपक्षयित्वा मुख्यत्वात् आग्नावैष्णवः कल्पः सारस्वते प्रसज्यते इति वक्ष्यते। **सु.** पृ. १०४३. * 'मुख्यं वा पूर्वचोदनात्' इत्यत्रैव, यत्र प्रथमोपस्थितिजन्यनिर्णयोत्तरमेव उत्तरोपस्थितिः तत्रैव प्रथमस्य असंजातविरोधित्वात् प्राबल्यं इति वक्ष्येत। **कौ.** ३।३।१।१. * 'मुख्यं वा पूर्वचोदनात्' इत्यत्र मुख्यनियमहेतुत्वेन मुख्यस्य अनुग्राह्यता वक्ष्यते। **सु.** पृ. १५४१. * 'मुख्यं वा पूर्वचोदनात्' इत्यधिकरणे मुख्यजघन्ययोर्धर्मविप्रतिषेधे मुख्यधर्मानुग्रहस्य वक्ष्यमाणतया तन्न्यायेन प्रकृतेऽपि 'उच्चैर्ऋचा क्रियते' इत्यत्र प्रथमश्रुतार्थवादस्यैवानुसरणीयत्वं इत्याशङ्का। **कु.** ३।३।१।१. * 'मुख्यं वा पूर्वचोदनात्' इत्यस्य 'विप्रतिषिद्धधर्मसमवाये भूयसां स्यात् सधर्मत्वम्' इत्यस्मात् भिन्नाधिकरणतया समसंख्यविरोधविषयत्वं अङ्गीकृत्य अल्पस्य मुख्यत्वेऽपि भूयोऽनुसारित्वं सूचितम्। **सु.** पृ. ११७३. * 'मुख्यं वा पूर्वचोदनात्०' इति च श्रुतिलिङ्गाधिकरणन्यायेन च सर्वत्रैव तावत् पूर्वं विज्ञानं अनुपजातप्रतिद्वंद्वि द्वितीयविज्ञानान्तरानुत्पत्त्यवस्थत्वात् आञ्जस्येन आत्मानं लभते। **वा.** ३।४।११।३१ पृ. ९६६. * 'मुख्यं वा पूर्वचोदनात्' इति द्वादशाधिकरणन्यायेन ('यजमानः प्रस्तरः' इत्यत्र) यजमानशब्दस्य मुख्यार्थत्वमङ्गीकृत्य प्रस्तरशब्दस्य कार्यलक्षणार्थत्वमाह। (न्यायसूत्रार्थस्तु–) 'आग्नावैष्णवमेकादशकपालं निर्वपेत्, सरस्वतीमाज्यस्य यजेत' इत्युदाहृत्य किं विकल्पेन अन्यतरस्य तन्त्रं प्रसङ्गेन अन्यतरस्य उपकारकत्वात् कर्तव्यं उत आग्नावैष्णवं चरुं इति तन्त्रमेव इति संदिह्य अविशेषादनियमे प्राप्ते, 'भूयसां स्यात् स्व(स)धर्मत्वं' इति पूर्वसूत्रात् स्व(स)धर्मत्वपदं परित्यक्तभावप्रत्ययं अनुषज्य मुख्यं आग्नावैष्णवं कर्म पूर्वचोदितत्वेन अनुपसंजातविरोधित्वात् स्व(स)धर्मकम्। यथा लोके पूर्वमागतानां पूर्वासनेषु उपवेशनम्, जघन्यागतानां इतरेषु, इति वक्ष्यते। **सु.** पृ. ४९६–४९७. * 'मुख्यं वा पूर्वचोदनात्' इति प्राथम्यात् प्रैषे समाख्यातः कर्ता युक्तः। नहि तदानीं विरोधः कश्चिदस्ति। **वा.** ३।८।१२।२४, '* मुख्यं वा पूर्वचोदनात्०' (१२।२।८।२३) इति यजमानशब्दः (यजमानः प्रस्तरः इत्यत्र) स्वार्थवृत्तः प्रस्तरशब्दः स्रुग्धारणादिकार्यलक्षणार्थः



इति गुणविधिः। (पूर्वपक्षे)। १।४।१२।२३–१ पृ. ३५५.

**मुख्यं वा पूर्वचोदनाल्लोकवत्। १२।२।८।२३॥**

यत्र तुल्यसंख्यानां प्रधानानां धर्मविप्रतिषेधः तत्र मुख्यं मुख्यधर्मः कर्तव्यः। यथा 'आग्नावैष्णवमेकादशकपालं निर्वपेत् अपराह्णे सरस्वतीमथाज्यस्य यजते' इति। अत्र मुख्यस्य मुखे आरम्भे विद्यमानस्य आग्नावैष्णवस्य कल्पो भवति। पूर्वचोदनात् पाठक्रमेण पूर्वं विहितत्वात्। लोकवत् लोके एवं दृष्टत्वात्।

**तथा चान्यार्थदर्शनम्। २४॥**

पूर्वं प्राप्तस्य बलीयस्त्वं इत्यत्र तथा च अन्यार्थदर्शनं भवति। 'अध्वरस्येव पूर्वमथाग्नेयीज्यते रूपाऽपि ह्येव कर्मवदग्निकर्म' इति। इदं चापि 'यथा वै पूर्वावसायिनो जघन्यावसायिनं नोन्नीयन्ते नावसास्यन्ति इत्येवमेवैतत्' इति भाष्ये उदाहृतं तत्र प्रथमवाक्यार्थो नास्माभिरंशतोऽपि ज्ञातः। उत्तरवाक्यस्य तु कंचिद् विषयं विचार्य निर्णयकारिणां मध्ये ये पूर्वावसायिनः पूर्वमागत्य विचार्य निर्णीतवन्तः ते, जघन्यं पश्चादागत्य स्वीयं निश्चयं कथितवन्तं प्रति न उन्नीयन्ते उन्नयनं तस्य स्वीकारं न कुर्वन्ति। न च तदनुसारेण अवसास्यन्ति निर्णयं करिष्यन्ति, निर्णयं न कुर्वन्ति इत्यर्थः। इति। **के.**

* न च ('वाजिभ्यो वाजिनम्' इत्यत्र) त्रिषु अवधारणज्ञानमिति चेत्, न, '**मुख्यं वा०**' इत्यवधारणहेतुसद्भावात्। **वा.** २।२।९।२३ पृ. ५३८. * न हि प्रधानमप्युपसंहारस्थं दुर्बलम्, अङ्गगुणविरोधन्यायस्य 'मुख्यं वा०' इति न्यायापवादकत्वात्। अन्यथा 'य इष्टया पशुना सोमेन' इत्यत्र उपसंहारस्थस्यापि सोमयागस्य, प्रधानत्वात् पूर्वानुग्रहो विरुध्येत। **कौ.** ३।३।१।१. * निधनमात्रानुवादेन हीषादिसंबन्धे उपेत्यापितु (सौभरस्य) आश्रयत्वं अनेकप्रस्तावादिभक्तिनि सौभरे, कतमस्यां भक्तौ हीषादयः प्रयुज्यन्तां इति नैव ज्ञायते, 'मुख्यं वा०' इति प्रस्तावे वा प्राप्नुवन्ति। **वा.** २।२।१३।२९ पृ. ५६८. * 'प्रजापतिर्वरुणायाश्वमनयत्' इति वरुणात् अश्वं प्रत्यगृह्णात् इत्युपसंहारानुरोधेन कल्प्येत, यद्वा उपक्रमवशेनोपसंहारं 'योऽश्वं प्रतिगृह्णाति' इति 'योऽश्वं प्रतिग्राहयति' इति। तत्र 'मुख्यं वा पूर्व०' इति प्रथममनुग्रहीतव्यं विरोधाभावात्। पश्चात्तनं तु विरोधात् लक्षणया कल्पनीयम्। **भा.** ३।८।११।३१ पृ. ९६६। अत्र **वार्तिकम्**–– सर्वत्रैव तावत् 'मुख्यं वा०' इति श्रुतिलिङ्गाधिकरणन्यायेन च पूर्वं विज्ञानं अनुपजातप्रतिद्वंद्वि द्वितीयविज्ञानान्तरानुत्पत्त्यवस्थत्वात् आञ्जस्येन आत्मानं लभते। पश्चात्तनं तु पूर्वविज्ञानावरुद्धज्ञानविषये उपजायमानं सत्यां विरोधावस्थायां तदानुगुण्यातिरिक्तेन रूपेण उत्पत्तुमेव न शक्नोति इति अन्यथात्वमपि प्रतिपद्यते। * ('यो होता सोऽध्वर्युः' इत्यत्र) प्रथमोच्चारिते होतृशब्दे किञ्चिदपि कल्पनाबीजं न पश्यामः। तेन 'मुख्यं वा पूर्व०' इति तं स्वार्थवृत्तमेव गृहीत्वा अध्वर्युशब्दः कर्मलक्षणार्थः अध्यवसीयते। **वा.** ३।८।१०।२१ पृ. ११२५. * यत्तु 'मुख्यं वा०' इति न्यायेन प्रथमश्रुतार्थवादस्यैवानुसरणमिति तन्न। विप्रतिषिद्धधर्मसमवाये प्रधानयोर्विरोधे मुख्यानुसरणमिति तदर्थत्वात् (पूर्वपक्षे)। **कु.** ३।३।१।१. * 'यस्य पुरोडाशो' इत्यादिषु आधिकारिकं हविरुभयत्ववद् द्विवचनम्। अन्यथा हि 'मुख्यं वा०' (१२।१।८।२३) इति कदाचित् आग्नेयग्रहणभ्रान्तिः स्यात्। **वा.** ३।१।७।१४ पृ. ७२३, * ('अग्नेर्ऋग्वेदः' इत्यादीनां) सत्यपि विध्युद्देशगतत्वे दौर्बल्यं 'मुख्यं वा०' इत्येवं इतरबलीयस्त्वात्। ३।३।१।२ पृ. ८०६, * 'मुख्यः प्रथमकार्यत्वाज्ज्योतिष्टोमोऽभिधीयते।' ३।३।८।१६. * मुख्यः (अर्थः) यः शब्दादेवावगम्यते स प्रथमोऽर्थो मुख्यः। मुखमिव भवतीति मुख्य इत्युच्यते। (किंवा) यस्मिन् निरुपपदात् शब्दात् संप्रत्ययः स मुख्यः। **भा.** ३।२।१।१ पृ. ७४६, यः सुष्ठु प्रसिद्धः स मुख्यः। यस्य बहुशः प्रयोगोऽस्ति स मुख्यः। पृ. ७४८.

**मुख्यो वाऽविप्रतिषेधात्। १२।४।१३।३४॥**

सत्रे यजमानगणे शुक्रान्वारम्भादीनि कर्माणि मुख्यो

यजमानो गृहपतिः कुर्यात् नेतरः कश्चित् । क्रत्वर्थानां याजमानानां करणेनैव गृहपतेरर्थवत्त्वम् । तस्मात् सत्रे गृहपतिः कुर्यात् इति सिद्धान्तः । **के.**

* गुणो बाधितव्यो न्याय्यः, न मुख्यः । **भा.** १०।१।१०।३९. * **मुख्येन** गौणं बाध्यते, अप्राप्तबाधः । **वा.** ३।३।७।१४ पृ. ८६०. * मुख्येन समानविधानः प्रतिनिधिः । **भा.** ३।६।१४।३७–३८.

**मुख्यस्य अङ्गनिर्वाहासमर्थस्यापि प्रधाननिर्वाहसमर्थस्य सतः उपादानम् ॥**

**विधिरप्येकदेशे स्यात् । ६।३।२०।४०॥**

**भाष्यम्**— सन्ति व्रीहयः, यावन्तो ह्यवदानमात्रं निर्वर्तयन्ति । तथा सन्ति नीवाराः शेषकार्याणामपि पर्याप्ताः । तत्र किमुपादेयमिति । किं प्राप्तम् ? अप्येकदेशे ह्यवदानमात्रेऽपि निर्वर्त्यमाने प्रतिनिधिरुपादेयः । किं कारणम् ? शेषकार्याणां संपत्तिर्भविष्यतीति ।

**अपिवाऽर्थस्य शक्यत्वादेकदेशेन निर्वर्त्येतार्थानामविभक्तत्वाद् गुणमात्रमितरत् तदर्थत्वात् । ४१ ॥**

**भाष्यम्**— अपिवेति पक्षव्यावृत्तिः । एकदेशेन व्रीहीणां प्रधानमात्रं निर्वर्तयितव्यम् । कुतः ? अर्थस्य शक्यत्वात् । योऽत्रार्थः, येन कार्यं तत्तावन्निर्वर्त्यते । शेषकार्याणि यदि न शक्यानि, नाङ्गानुरोधेन प्रधानस्य गुणो बाधितव्यः । तद्ध्यङ्गं यत्प्रधानस्योपकरोति, न यदपकारे वर्तते । तत्र च शेषकार्याणि क्रियमाणानि प्रधाने व्रीहित्वं गुणं विहन्युः । व्रीहित्वं च प्रधाने साक्षादङ्गभूतं श्रूयते 'व्रीहिभिर्यजेत' इति । तस्मान्न तेष्वनुरोधः कार्यः । असति ह्यङ्गप्रधानविभागे एतदेवं स्यात् । अस्ति ह्यसौ । तस्मान्न प्रतिनिधिरिति ।

**तथा चान्यार्थदर्शनम् । ४२ ॥** ( य-पुस्तकमनुसृत्य इदं सूत्रम् ) ।

**भाष्यम्**-- तथा च अन्यार्थदर्शनं अपि भवति 'तदेव यादृक् तादृग् होतव्यम्' इति ।

**शा**— दर्शपूर्णमासयोर्यदा अश्वशफपरिमाणशेषकार्येभ्यश्चापर्याप्ताः पुरोडाशजातिमात्राभिव्यक्तिसमर्था व्रीहयो लभ्यन्ते तदा किं तैरेव पुरोडाशः कर्तव्यः, उत नीवारैरिति संशये '**भूयसां शेषकार्याणां मा भूदत्यन्तबाधनम् । एकस्य व्रीहिशास्त्रस्य किञ्चिद्बाधस्तु युज्यते ॥**' उच्यते । '**व्रीहयोऽपि पुरोडाशभूता यागस्य साधनम् । तद्वैकल्ये प्रधानस्य गुणहानिः प्रसज्यते ॥**' तस्माच्छेषकार्याण्यनादृत्य व्रीहिभिरेव पुरोडाशः कर्तव्यः ।

**सोम**— पूर्ववदिहापि प्रतिनिधिरिति प्रत्यवस्थानात् संगतिः । **सूत्रार्थस्तु**— एकदेशेऽपि पुरोडाशमात्रसमर्थव्रीहिद्रव्येऽपि प्रतिनिधिः स्यात् शेषकार्यादिविधेः इति ।

**वि**— 'शेषकार्येष्वपूर्णाश्चेद् व्रीहयः किं तदेतरत् । व्रीहयो वा, सर्वसिद्ध्यै नीवारादिकमिष्यते ॥, पुरोडाशतया व्रीहेः प्रधानत्वादलोप्यता । शेषकार्याणि लुप्यन्तां मुख्यवैगुण्यतो वरम् ॥'

**भाट्ट**— यत्र त्वश्वशफपरिमाणशेषकार्याद्यपर्याप्ताः पुरोडाशत्वजातिमात्राभिव्यक्तिसमर्था व्रीहयो लभ्यन्ते तत्र तेनैव पुरोडाशं कृत्वा प्रधानमनुष्ठेयम् । शेषकार्याणां लोपः । न च बहूनां शेषकार्याणां पुरोडाशाङ्गभूतानां पुरोडाशाङ्गभूतैकव्रीह्यनुरोधेन लोपासंभवः । व्रीहीणामपि यागोद्देशेन विहिततया यागाङ्गत्वेन पुरोडाशाङ्गत्वाभावात् । न चोत्पत्तिशिष्टपुरोडाशावरोधात् 'व्रीहिभिः' इति तृतीया प्रयोजकत्वपरेति वाच्यम्, पुरोडाशद्वारकत्वरूपव्यापारकत्वेऽपि करणत्वस्य 'काष्ठैः पचति' इत्यादिवदुपपन्नतरत्वेन लक्षणायां प्रमाणाभावात् । अतश्चैकप्रधानाङ्गानुरोधेनानेकेषामप्यङ्गानां लोपो नायुक्तः ।

**मण्डन**— 'ग्राह्यं तन्मुख्यमात्रकृत् ।'

**शंकर**— 'शेषकार्याक्षमं मुख्यम् ।'

* मुख्यस्य न लोपः गुणस्य लोपेऽपि । **भा.** १०।२।२७।६३. * मुख्यस्य पुनः प्राप्तौ पूर्वं मुख्यापचारेऽपि मुख्यस्यैवोपादानम् । मुख्यानुग्रहन्यायः । ६।३।१६।३५. * मुख्यस्य संस्कारार्हस्य लाभे संस्कृतोऽपि प्रतिनिधिः परित्याज्यः खदिरलाभे कदरः परित्याज्यः यूपविधौ । **वि.** ६।३।१७, * मुख्यस्य हविषो नाशे आज्यं प्रतिनिधाय यष्टव्यम् । ६।४।१. * एकत्र **मुख्यस्य** अपरत्र गौणत्वनियमः । **भाट्ट.** ७।३।१.



**मुख्ये कार्यासमर्थे लब्धेऽपि प्रतिनिधेः कार्यसमर्थस्य सत उपादानम् ॥**

**अर्थद्रव्यविरोधेऽर्थो द्रव्याभावे तदुत्पत्तेर्द्रव्याणामर्थशेषत्वात् । ६।३।१९।३९ ॥**

**भाष्यम्**-- अस्ति यूपकाले खदिरलता पशोरप्रागल्भ्ये न समर्था, कदरद्रव्यं तु तत्समर्थम् । तत्र संदेहः किमुपादेयं खदिरद्रव्यमुत कदरद्रव्यमिति । खदिरद्रव्यमित्याह । तद्धि श्रुतम् । तदुपाददानः शास्त्रविहितं करोति ! प्रतिनिधावश्रुतकारी स्यात् । तस्मान्न प्रतिनिधातव्यम् । इत्येवं **प्राप्ते, ब्रूमः** । अर्थद्रव्यविरोधे अर्थं प्रत्यादर्तव्यम् । तदर्थं हि द्रव्योपादानम् । नियोजनादप्रागल्भ्यं पशोर्भविष्यतीति, न द्रव्यमेवोपादीयेतेति । कदरमुपाददानो द्रव्यश्रुतिं बाधते, अर्थं त्वनुगृह्णाति । खदिरलतामुपाददान उभयं बाधते । तस्मात्कदरद्रव्यमुपादेयम् । द्रव्याभावे हि तदुत्पत्तिः, प्रतिनिधेरुत्पत्तिरुक्ता । द्रव्याण्यर्थं प्रति शेषभूतानि ।

**सोम**-- **सूत्रार्थस्तु**– प्रयोजनद्रव्यविरोधे प्रयोजनं बलवत्, अतो द्रव्याणां प्रयोजनशेषत्वात् द्रव्याभावे प्रतिनिध्युत्पत्तिः कार्या इति ।

**वि**-- 'नियोजनेऽप्ययोग्यश्चेत्खदिरः किं तदा भवेत् ।, मुख्यत्वेन स एव स्यात्, तद्वैयर्थ्येन हीतरः ॥'

[**भाट्टे** इदमधिकरणं पूर्वाधिकरणे एवान्तर्भावितम् । ]

**मण्डन**— 'कार्यहानेस्तदग्राह्यम् ।'

**शंकर**-- 'न तु कार्याक्षमं तथा ।'

* मुख्ये प्रधानपर्याप्ते एव लब्धे शेषकार्यलोपः कार्यः । **वि.** ६।३।२१. * मुख्ये विद्यमाने गौणो नोपादीयते । **भा.** १०।३।१९।७१, मुख्ये संभवति भक्तिरन्याय्या ३।८।२२।४२.

* **मुख्यातिक्रमः** संख्यायाः आनर्थक्येन कारणेन 'सप्तभिराधूनोति' इत्यादौ । **भा.** १०।५।५।१४.

* '**मुख्याधिगमे मुख्यमागमो हि तद्भावात्** ।' ६।३।१६।३५ ॥ इत्यधिकरणे यदा यूपार्थे मुख्यं खदिरमलभ्यं मत्वा तत्प्रतिनिधिं कदरमुपादातुं प्रस्थितो मध्ये मुख्यं लभते चेत् मुख्य एव ग्राह्यः, कदरं गृहीत्वा तक्षणादिषु केषुचित् संस्कारेषु कृतेषु प्राक् पशुनियोजनात् मुख्यं लभते चेत् तथापि मुख्य एव ग्राह्य इति व्यवस्थापितम् । **परिमल.** ४।१।१३।१८ ब्रसू.

**मुख्याधिगमे मुख्यमागमो हि तद्भावात् । ६।३।१६।३५ ॥**

श्रुते खदिरादिद्रव्ये अपचरिते कदरादिं प्रतिनिधिं उपादास्ये इति संकल्प्य प्रयोगे प्रवृत्तः । कदरमन्विष्यन् दैवात् मुख्यं खदिरमेव लब्धवान् । तदानीं तु संकल्पितोऽपि प्रतिनिधिर्न ग्राह्यः किन्तु मुख्य एव खदिरो लब्धत्वात् ग्राह्यः, तदलाभे तु प्रतिनिधिरेव । तदाह, मुख्याधिगमे मुख्यस्य अधिगमे लाभे सति मुख्यमेव ग्राह्यम् । हि यस्मात् तद्भावात् मुख्याभावात् प्रतिनिधेः आगमः स्वीकृतः । इदानीं तु मुख्यमेव लब्धं तत्र किं प्रतिनिधिना । इति सिद्धान्तः । **के.**

**मुख्यानुग्रहन्यायः** । मुख्यद्रव्यापचारे गृहीते प्रतिनिधौ पुनर्मुख्यप्राप्तौ मुख्यस्यैवोपादानम् ॥

**मुख्याधिगमे मुख्यमागमो हि तद्भावात् । ६।३।१६।३५ ॥**

**भाष्यम्**-- अथ यत्र विनष्टे श्रुते प्रतिनिधिमुपादातुं प्रस्थितो मुख्यमेवोपलभते, तत्र किं प्रतिनिधिमेवोपाददीत उत तमेव मुख्यमिति । किं तावत्प्राप्तम् ? प्रतिनिधिमुपादास्ये इत्येवं संकल्पितवानसौ प्रतिनिधिमुपाददान एव सत्यसंकल्पो भवति । तस्मात्प्रतिनिधातव्यं तेन । इत्येवं **प्राप्ते, ब्रूमः** । मुख्याधिगमे तमेवोपाददीत । अभावे हि श्रुतस्यानुकल्पः प्रतिनिधिः । श्रुते हि सकला व्यक्तयः । प्रतिनिधौ विकलाः । अथ यदुक्तं संकल्पभेददोषः इति । श्रुतेष्वसौ, शिष्टविगर्हणायां वा ।

**सोम**-- पूर्वत्र वैकल्पिकन्यायानवतारेऽपि इह तदवतारात् मुख्यानादर इति प्रत्यवस्थानात् **संगतिः** । **सूत्रार्थस्तु**– मुख्यलाभे तदेव यतो मुख्याभावादमुख्यागमः इति ।

**वि**— 'प्रतिनिध्युद्यमे मुख्यलाभे ग्राह्यं तु किं द्वयोः । संकल्पेन प्रतिनिधिर्मुख्यं शास्त्रार्थलाभतः ॥'

**भाट्ट**--[ भाट्टे १६-१७ अधिकरणयोः एकमेवाधिकरणं कृतम् । तत्समर्थनं तु शम्भुभट्टेन एवं कृतम्– अत्र

‘ मुख्याधिगमे मुख्यमागमो हि तदभावात् ’, ‘ प्रवृत्तेऽपीति चेत् ’, ‘ नानर्थकत्वात् ’ इति सूत्रत्रयमुत्सूत्रपूर्वपक्षत्रयनिराकरणार्थं सत् सिद्धान्तत्रयप्रदर्शकमिति अधिकरणत्रयप्रदर्शकतया पृथक् पृथक् भाष्यकारैर्व्याख्यातम् । तत्राद्यसूत्रे मुख्यालाभेन प्रतिनिध्युपादाने प्रवृत्तस्य मध्ये मुख्यलाभः यदा तदा तेन मुख्यमेवोपात्तव्यमिति सिद्धान्तो दर्शितः । द्वितीये तु सूत्रे यदा पुनः प्रतिनिधिमुपादाय केचन संस्काराः कृताः तदनन्तरमपि मुख्यलाभे मुख्यमेवोपादेयम्, न तु संस्कृतोऽपि प्रतिनिधिरुपादेय इति सिद्धान्तः । तृतीये तु सूत्रे प्रतिनिधौ संस्कारकरणानन्तरं नियोजनादिरूपप्रधानस्यापि सिद्धिर्जाता तदनन्तरं मुख्यद्रव्यलाभेऽपि न मुख्यमुपादेयं किन्तु प्रतिनिधिरेवेति सिद्धान्तः । सर्वत्रापि च पूर्वपक्षः उत्सूत्र एव द्रष्टव्यः । अथवा ‘ प्रवृत्तेऽपीति चेत् ’ इति पूर्वपक्षसूत्रमेव । तदा कृते प्रयोजने श्रुतमेवागमयितव्यमिति पूर्वपक्षोत्तरं ‘ नानर्थकत्वात् ’ इति सूत्रं प्रयोजनाभावान्न श्रुतमागमयितव्यमिति सिद्धान्तप्रदर्शनमेवेति सूत्रद्वयेनैकमेवाधिकरणमिति । तदेतदधिकरणभेदप्रदर्शनं सूत्रानुरोधात् भाष्यकारादिभिः कृतमपि प्रयोजनाभावात् स्वयं न प्रदर्शितम् । इति ]

यदा मुख्यमलभ्यं मत्वा प्रतिनिधिमुपादातुं प्रवृत्तः उपादाय वा द्वित्राः सर्वे वा संस्काराः कृताः, कार्यं न कृतं तत्र कार्यकरणात्पूर्वं मुख्यलाभे तमेवोपादाय पुनः संस्कारानाशु कृत्वा तेनैव प्रधानं कार्यम्, मुख्यसंभवे विकल्पोपादानस्य वाचनिकस्याप्यन्याय्यत्वात् । न च प्रतिनिधित्यागे संकल्पबाधः, द्रव्यांशे पृथक् संकल्पे प्रमाणाभावात् । सत्त्वेऽपि वा ‘ यथाशक्ति शास्त्रार्थं संपादयिष्ये ’ इत्येव संकल्पात् । प्रधानानुरोधेन पुनःसंस्कारकरणस्य न्याय्यत्वाच्च । यदा तु प्रतिनिधिनैव कार्यं निष्पन्नं तदा प्रयोजनाभावात् न मुख्यमुपादेयम् । मुख्याभावनिमित्तकप्रायश्चित्तमात्रमेव तु कार्यम् । १४.

**मण्डन**— ‘ मुख्यप्राप्तौ तदानयेत् । ’

**शंकर**— ‘ नीवारे मुख्यमेव तत् । ’

* मुख्यानुग्रहन्यायः । यत्र एकस्तन्त्री इतरे प्रसङ्गिनः इति गृह्यते विशेषः तत्र एकस्यापि तन्त्रिण एव धर्मा ग्राह्याः, बहूनामपि प्रसङ्गिनां तत्तन्त्रोपजीवित्वेन स्वधर्माप्रयोजकत्वात् । **पराक्रमः**. ५७।१, * मुख्यानुग्रहन्यायः । यत्र सर्वेषां तन्त्रितया न गृह्यते विशेषः तत्र मुख्यानुग्रहन्यायापवादः भूयोऽनुग्रहन्यायः । ५६।२–५७।१.

* **मुख्यानुरोधेन** गुणो व्यतिक्रमितव्यो न्याय्यः । मुख्यश्चानुगृहीतव्यः । कुतः ? मुख्यार्थत्वात् गुणस्य । **भा.** ३।३।२।९.

* **मुख्यापचारे** प्रतिनिधिः इति न्यायात् औरसपुत्रस्येव औरसपुत्र्या अप्यपचारे क्षेत्रजाद्याः पुत्र्यः प्रतिनिधयो भवन्ति । **दत्तकमीमांसा**. १०४.

* **मुख्याभावे** गौणो गृह्यते नान्यथा । **भा.** ६।४।५।२१.

* ‘ **मुख्यार्थो वाऽङ्गस्याचोदितत्वात् ।** ’ ( ३।८।१९।३६ ) इत्यनेन न्यायेन वैकृतविशेषाणां प्रकृतावेव श्रुतानां केवलं प्रधानार्थं उपांशुत्वम् । **शा.** ११।२।७ । **सोम**– ‘ यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्याः ’ इति श्रुतमुपांशुत्वं प्रधानार्थम्, अङ्गस्य कामार्थत्वेनाचोदितत्वात् काम्यशब्दार्थत्वाभावात् इति सूत्रार्थः । ततश्च काम्येष्टिशब्दसंयुक्तस्योपांशुत्वस्य प्रधाने एव श्रवणात् प्रधानार्थत्वम् । * ‘ मुख्यार्थो वाऽङ्गस्याचोदितत्वात् । ’ इति वैकृतविशेषाणां केवलप्रधानार्थत्वम्, तच्च यत्र वाक्योपात्तप्रधानार्थसंबन्धः तत्र । **वा.**२।१।४।१२ पृ. ४१३–४१४. * **मुख्यार्थे** विनियोगो मन्त्राणाम् । ३।२।१।१–२.

* **मुख्यार्थानुपपत्तिज्ञानं** मुख्यार्थबोधे प्रतिबन्धकम्, न तु लक्ष्यार्थबोधकारणम् । **मणि.** पृ. ७६.

* **मुख्यार्थोपपत्तौ** सत्यां सादृश्यलक्षणाऽनुपपत्तिः । **वा.** १।३।८।२६.

* **मुख्यार्थता** च न्याय्या, न लक्ष्यार्थता । **भा.** ३।२।८।२६.

* **मुख्यार्थप्रयोगो** हि औत्सर्गिकत्वात् अपवाददर्शनेन भ्रान्तित्वं प्रतिपद्यते । **वा.** २।१।४।१२ पृ. ४११.



**मुख्यासंभवे गौणग्रहणं युक्तमिति न्यायः ।** अयं मुहूर्तचिन्तामणिटीकायां धृतः । तत्र च ‘ सा दृष्टेन्दुः सिनीवाली ’ इति वाक्यमीमांसायाम्, ननु च दृष्टश्चन्द्रो यस्यां इत्यन्यपदार्थे सप्तमी सामीप्यपरेति व्याख्यायते इति चेत्, न, तस्याः सामीप्यसप्तम्या गौणाधारपरत्वात् मुख्यासंभवे गौणग्रहणं युक्तं इत्युक्तमिति । **साहस्री**. ८२३.

* **मुख्यकार्ये** कृते प्रतिनिधिना, ततः मुख्यद्रव्यलाभेऽपि मुख्यं न ग्राह्यम् । ६।३।१७।३६–३७.

* **मुख्यक्रमः** अपि अङ्गक्रमनियमे प्रमाणम् । मुख्यत्वं च प्रधानत्वम् । मुख्यक्रमाधिकरणम् । ५।१।७।१४. * मुख्यक्रमः अतिदेशविषयः अपि । **टुप्**. ५।१।१।१ । स च प्रकृतौ आग्नेयसांनाय्ययोः विकृतौ सारस्वतयोः । **तन्त्ररत्नम्**. * मुख्यक्रमः अर्थक्रमाद् दुर्बलः, प्रयोगवचनाश्रितत्वात् । **टुप्**. ५।१।१०।१८. * मुख्यक्रमः एकं क्रमप्रमाणम् । **बाल.** पृ. ८. * मुख्यक्रमः पाठक्रमात् दुर्बलः, आनुमानिकत्वात् विलम्बोपस्थितिकत्वाच्च । तेन पौर्णमास्यां अग्नीषोमीयपुरोडाशनिर्वापः प्रथमं तत उपांशुयाजाज्यनिर्वापः । **भा.** ५।१।८।१५. * मुख्यक्रमः प्रवृत्तिक्रमाद् बलवान् । दर्शपूर्णमासयोः आग्नेयस्यावदानाभिघारणासादनानि पूर्वं कार्याणि न दध्नः । **भा.** ५।४।२।२–४ । **टुप्**— स्विष्टकृदवदानं प्रयाजशेषाभिघारणं बर्हिषि हविरासादनं चोदाहरणम् । **तन्त्ररत्नम्**— न तु प्रधानचतुरवत्तावयवभूतावदानाभिघारणविषयम् । * **मुख्यक्रमेण** प्रवृत्तिक्रमो बाध्यते यथा– सांनाय्यधर्माः पूर्वं प्रवृत्ताः पश्चात् आग्नेयधर्माः । प्रधानं तु आग्नेयस्य प्रथमं पश्चात् सांनाय्यस्य । तत्र सांनाय्यस्य पूर्वं प्रवृत्तिक्रमात् प्राप्तं अवदानादि, स्विष्टकृदवदानं वा मुख्यक्रमात्तु आग्नेयस्य पूर्वं कार्यम् । इदं ‘ अवदानाभिघारणासादनेषु० ’ इत्यधिकरणे ( ५।४।२ ) उक्तम् । **बाल.** पृ. १३७. * मुख्यक्रमेण प्रवृत्तिक्रमस्य बाधो यथा– पाठादर्थाच्च दध्नो धर्मा दोहनादयः पूर्वं क्रियन्ते, पश्चादाग्नेयस्य निर्वापादयः । तत्प्रवृत्तिक्रमेण च दध्नः हविरासादनप्रयाजशेषाभिघारणस्विष्टकृदवदानान्यपि पूर्वं प्राप्तानि मुख्यक्रमात्तु प्रथमं आग्नेयस्य कर्तव्यानि पश्चात् दध्नः । दर्शपूर्णमासयोः । वस्तुतस्तु नेदं विरोधोदाहरणं संभवति । उदाहरणं तु मृग्यम् । **भाट्ट.** ५।४।२. * ‘ मुख्यक्रमेण वाऽङ्गानां तदर्थत्वात् ’ ( ५।१।७।१४ ) इत्यधिकरणे ‘ सारस्वतौ भवतः ’ इत्यत्र स्त्रीपुंसदेवत्याविमौ, न पुंद्वयदेवत्यौ इति निर्णयः, ‘ एतद्वै दैव्यं मिथुनं यत् सरस्वतीसरस्वांश्च ’ इत्यर्थवादाद्भवति इति शास्त्रदीपिकायामुक्तम् । **बाल.** पृ.५७.

**मुख्यक्रमेण वाऽङ्गानां तदर्थत्वात् । ५।१।७।१४ ॥**

चित्रायागे चतुर्थपञ्चमे हविषी ‘ सारस्वतौ भवतः, एतद्वै दैव्यं मिथुनम् ’ इति समाम्नायेते । ‘ सरस्वती च सरस्वांश्च ’ इति विगृह्य समासे ‘ पुमान् स्त्रिया ’ ( पा. १।२।६७ ) इत्येकशेषात् सरस्वन्तौ इति भवति । तौ देवते ययोः तौ सारस्वतौ यागौ । तस्य च मिथुनत्वोक्त्या स्त्रीपुंरूपत्वम् । तत्र किं निर्वापादयः प्रथमं स्त्रीदेवत्यस्य पुंदेवत्यस्य वेति विचारे अनियम इति पूर्वपक्षं वाशब्देन निराकृत्य सिद्धान्तमाह । न अनियमेन निर्वापादयः । किन्तु मुख्यक्रमेण अङ्गानां निर्वापादीनां क्रम आस्थेयः । हौत्रकाण्डे ‘ प्र णो देवी सरस्वती ’ इत्यादियाज्यानुवाक्यायुगलं स्त्रीदेवत्यं प्रथमं पठितम्, ततः ‘पीपिवांसं सरस्वतः’ इत्यादि पुंदेवत्यम् । तेन मन्त्रपाठेन स्त्रीदेवत्यं हविः मुख्यं प्रथमं इत्यवगम्यते । तस्मात् तेन मुख्यक्रमेण निर्वापादीनां अङ्गानां क्रमः स्वीकर्तव्यः । तदर्थत्वात् अङ्गानां प्रधानार्थत्वात् प्रधानानां च मन्त्रपाठक्रमेण नियतत्वात् । **के.**

* **मुख्यक्रमात्** औपदेशिकात् आतिदेशिकपाठक्रमो बलवान् । ५।१।१०।१७–१८. **मीको.** पृ. ३५५ ‘ अध्वरकल्पान्यायः ’ इत्यत्र द्रष्टव्यम् । **मुख्यक्रमे** प्रधानक्रमेण नियमः क्रियते सह चोदितानाम् । **टुप्**. ५।१।३।३. * मुख्यक्रमे प्रधाननिरूपितप्रत्यासत्त्यनुग्रहो बीजम् । **भाट्ट.** ५।१।७.

**मुख्यक्रमाधिकरणम् ॥**

**मुख्यक्रमेण वाऽङ्गानां तदर्थत्वात् । ५।१।७।१४ ॥**

**भाष्यम्**-- ' सारस्वतौ भवतः । एतद्वै दैव्यं मिथुनम् ' इति श्रूयते । तत्र संदेहः किं स्त्रीदेवत्यस्य प्रथमं धर्मा उत पुंदेवत्यस्य इति । नियमकारिणः शास्त्रस्याभावादनियमः । इति प्राप्ते, ब्रूमः । मुख्यक्रमेण वा नियमः स्यादिति । स्त्रीदेवत्यस्य हि पूर्वं याज्यानुवाक्ययोः समाम्नानम् ' प्र णो देवी सरस्वती ' इति । तस्मात् स्त्रीदेवत्यस्य पूर्वं प्रदानेन भवितव्यम् । तस्मात् स्त्रीदेवत्यस्य पूर्वं धर्माः कार्याः । तथा हि प्रधानकालता भवत्यङ्गानाम् । इतरथा यैः पदार्थैर्व्यवधानं सामर्थ्यादनुज्ञातं तेभ्योऽधिकैरपि व्यवधानं स्यात् ।

**टुप्**-- ( प्राजापत्यपशुवदेकप्रयोगत्वाददृष्टार्थान्यङ्गानि तन्त्रम् । संनिपातिष्वपि द्वितीयादिषु तद्वदेव प्रवृत्त्या नियमसंभवात् न अनियमः । प्रथमे तु पदार्थे किमनियमः उत अस्ति कश्चित् नियमः इति । तत्र ) श्रुत्यर्थपाठप्रवृत्तिकाण्डैः ( क्रम- )नियमस्य अभावात् प्रथमे पदार्थे अनियमः । एवं प्राप्ते, ब्रूमः । स्त्रीदेवत्यस्य प्रथमं याज्यानुवाक्ये, तस्यैव प्रथमं प्रदानम्, ततः स्त्रीदेवत्यस्यैव प्रथमः पदार्थः ( पूर्वं ) आरम्भणीयो मुख्यक्रमेण । कथम् ? सहचोदितत्वात् ( अनयोः एकैकमात्मीयान् ) एकक्षणव्यवहितान् पदार्थान् अपेक्षते । तत्र पुंदेवत्यस्य प्रथमः पदार्थो यद्यारभ्यते ततः ( प्रधानसंनिहितो यः पदार्थः तत्प्राग्भूतस्यैव पूर्वाङ्गस्य ) प्रवृत्त्या एकक्षणव्यवहितता, स्त्रीदेवत्यस्य स एव पदार्थः क्रियते । एवं द्वितीयादिष्वपि पदार्थेषु प्राप्नोति । तत्र प्राक् स्त्रीदेवत्यस्य प्रदानात् ( प्रदानानुष्ठानात् ) यः पदार्थः ( अव्यवहितः ) तस्मिन् ( प्रथमपदार्थ- ) प्रवृत्त्या स्त्रीदेवत्यस्य ( पश्चात् ) कृते ततोऽनन्तरमेव स्त्रीदेवत्यस्य ( मन्त्र- )पाठक्रमेण प्रदानं प्राप्नोति । किं अतः ? ( अत्रेदं भवति । ) आनन्तर्येण स्त्रीदेवत्यस्य द्वौ पदार्थौ प्राप्नुतः । तत्र एकक्षणव्यवहितता बाध्येत या सहवचनेनापेक्षिता, इतरस्यापि ताभ्यां व्यवहितौ ( क्षणद्वयव्यवहितौ ) पदार्थौ, ततः पूर्वेषामपि एकक्षणविप्रकर्षः । तस्मात् प्रथमं स्त्रीदेवत्यस्य धर्माः । अत आह ( भाष्यकारः ) - यैः पदार्थैः व्यवधानं सामर्थ्यादभ्यनुज्ञातं तेभ्योऽधिकैरपि व्यवधानं स्यात् ।

**वि**-- ' स्त्रीपुंसदेवकौ सारस्वतौ तद्धर्मगः क्रमः । नास्त्यस्ति वा,ऽत्र नास्त्येष तन्नियामकवर्जनात् । याज्यानुवाक्यापाठेन स्त्रीप्राथम्यं हि मुख्ययोः । मुख्यार्थत्वेन धर्माणां स्यान्मुख्यक्रमतः क्रमः ॥ '

**भाट्ट**— मुख्यक्रमोऽपि अङ्गक्रमनियमे प्रमाणम् । मुख्यत्वं च प्रधानत्वम् । यत्र ह्यनेकेषां साङ्गानां प्रधानानां सहकर्तव्यता, तत्र प्रयोगविधिनाऽङ्गप्रधानयोः साहित्यावगतावपि प्रधानान्तरसाहित्यानुरोधेन यावदनुज्ञातव्यवधानस्वीकारेऽपि तदधिकव्यवधाने प्रमाणाभावात् प्रधानप्रत्यासत्त्यनुग्रहाय मुख्यक्रमेणैवाङ्गे क्रमनियमः । अत एव प्रवृत्तौ अङ्गनिरूपितप्रत्यासत्त्यनुग्रहो बीजम्, मुख्यक्रमे तु प्रधाननिरूपितप्रत्यासत्त्यनुग्रहो बीजमिति तयोर्भेदः, वैपरीत्येन बलाबलं चेति वक्ष्यते । मुख्यक्रमोदाहरणं च चित्रायागे ' सारस्वतौ भवत एतद्वै दैव्यं मिथुनं यत् सरस्वती सरस्वांश्च ' इति वाक्यविहितप्रधानद्वयक्रमात्तन्निर्वापक्रमः । अत्र हि द्रव्यसामानाधिकरण्याभावेऽपि संबन्धसामान्यवाचिनस्तद्धितस्य ' दैव्यम् ' इति वाक्यशेषाद्देवतापरत्वोपपत्तेः द्विवचनेन देवताकल्पितयागद्वयं विधीयते । अत एव न यागद्वये अपि सरस्वानेव देवता । अर्थवादस्य विरूपैकशेषतात्पर्यग्राहकत्वेन सरस्वतीसरस्वद्देवत्यत्वावगमात् । न चैवमपि सरस्वती च सरस्वांश्च सरस्वन्तौ, सरस्वन्तौ देवते ययोस्तौ इति व्युत्पत्त्या एकैकस्य द्विदेवत्यत्वं किं न स्यादिति वाच्यम्, एकैकदेवत्ययाज्याऽनुवाक्यापाठेन एकैकदेवत्यत्वावगतेः । अत एव प्राजापत्यवत्संप्रतिपन्नदेवताकत्वाभावेन मन्त्रपाठक्रमात् प्रधानक्रमे सति मुख्यक्रमेणैव तन्निर्वापयोः क्रमः ।

**वस्तुतस्तु**--तुल्यन्यायतया पूर्वपदार्थप्रवृत्तेरिवोत्तरपदार्थप्रवृत्तेरपि पूर्वपदार्थक्रमनियामकत्वस्योक्तत्वात् प्रकृते च याज्याऽनुवाक्यादिरूपोत्तरपदार्थप्रवृत्त्यैव निर्वापक्रमोपपत्तेर्यद्यपि नेदं मुख्यक्रमस्यासंकीर्णमुदाहरणम्, तथापि दध्नः पूर्वं शाखाहरणादयो धर्माः पठिताः पश्चादाग्नेयस्य निर्वापादयः, याज्यानुवाक्ययोस्तु विपरीतः पाठः । ततश्च भूतभाविप्रवृत्तिद्वयवशात् प्रयाजशेषाभिघारणे



अनियमप्रसक्तौ मुख्यक्रमेण आग्नेयस्य प्रथममभिघारणं पश्चाद्दध्न इत्युदाहरणं वक्ष्यमाणं द्रष्टव्यम् ।

**मण्डन**— 'मुख्यक्रमात् क्रमोऽङ्गेषु । '

**शंकर**— ' मुख्यक्रमात् तदङ्गानाम् । '

* **मुख्यक्रमानुरोधः** । वैकृतमुख्यक्रमानुरोधेन अध्वरकल्पायां प्रथमं आग्नावैष्णवस्य निर्वापः ततो बार्हस्पत्यचरोः । **भाट्ट**. ५।१।१० .

* **मुख्यक्रमादेः** दौर्बल्यं आतिदेशिकपाठविरोधे एव । **भाट्ट**. ५।१।१० .

* **मुख्यगौणयोः** मुख्ये कार्यसंप्रत्ययः । **भा.** ३।२।१।१.

* **मुख्यजघन्ययोः** अन्यतरस्मिन् लोतव्ये जघन्यो लुप्येत, मुख्यो ह्यनुग्रहीतव्यः । तदुक्तम् ' मुख्यं वा पूर्वचोदनाल्लोकवत् ' ( १२।२।८।२३ ) इति । **भा.** १०।५।१।१ .

* **मुख्यद्रव्यस्य** प्रधानमात्रसमर्थस्य लाभेऽपि मुख्यस्यैवोपादानम् । ६।३।२०।४०-४२ . * **मुख्यद्रव्ये** कार्यासमर्थे प्रतिनिधेरेवोपादानम् । ६।३।१९।३९.

* **मुख्यद्रव्यलाभेऽपि** प्रतिनिधिना मुख्यकार्यकरणोत्तरं मुख्यं न ग्राह्यम् । ६।३।१७।३६-३७ .

* **मुख्यद्रव्यसदृशस्य** एव प्रतिनिधित्वं श्रुतप्रतिनिध्यपचारेऽपि । ६।३।१५।३३-३४.

* **मुख्यप्रतिनिध्योः** सामानविध्यम् । ३।६।१४।३७-३९.

* **मुख्यप्रावृत्तिकक्रमौ** प्रयोजकवशौ । **वा.** ३।१।११ पृ. ६५१.

* **मुख्ययागक्रमेण** निर्वापाद्यङ्गक्रमो ग्राह्यः । चित्रायागे हि चतुर्थपञ्चमयोः सारस्वतयोः स्त्रीदेवत्यस्य याज्यानुवाक्यापाठस्य प्राथम्येन स्त्रीयागस्य मुख्यस्य प्राथम्यं सिध्यति । **वि.** ५।१।७.

* **मुख्यलक्षणम्** । ' तत्पुनर्मुख्यलक्षणं यत् फलवत्त्वम् ' । **सूत्रम्** ४।४।११।३४.

* **मुख्यलाभे** मुख्यं ग्राह्यं न प्रतिनिधिः । **वि.** ६।३।१६.

* **मुख्यविशेष्यत्वं** वाक्यार्थे भावनायाः । **भाट्ट.** २।१।१-२.

* **मुख्यवृत्तिः** लक्षणया बाध्यते आनर्थक्यप्रतिघाते विपरीतो बाधो भवति इति रीत्या । **बाल.** पृ. १४५.

* **मुख्यव्रीह्यादिधर्माः** प्रतिनिधिष्वपि नीवारादिषु कर्तव्याः दर्शपूर्णमासादौ । **भा.** ३।६।१४।३७-३९ .

* **मुख्यशब्दः** प्रधाने । **भा.** ७।१।१।१.

* **मुख्यसंभवे** गौणग्रहणं नार्हति । **भा.** ३।३।८।१६ । अहीनशब्दस्य न हीनः अहीनः इति नञ्समासं स्वीकृत्य ज्योतिष्टोमार्थता न युक्ता । स हि ' अह्नः खः क्रतुसमूहे ' इति व्युत्पाद्यमानः मुख्यः । **वा.**

* **मुख्यसिद्धौ** गुणलोपः सोढुं शक्यते । **वि.**६।३।१९.

**मुञ्जादिषीकोद्धरणन्यायः** । यथा मुञ्जाख्यतृणादिषीकाख्यं गर्भस्थं मृदु तृणं बहिरावरणकतया स्थितानां मुञ्जाख्यतृणानां विभजनेन समुद्ध्रियते तथा आत्मा अपि युक्त्या अन्वयव्यतिरेकलक्षणोपायेन शरीरत्रितयात् ब्रह्मचर्यादिसाधनसंपन्नैः पृथक् कृतश्चेत्स परब्रह्मैव जायते, चिदानन्दरूपत्वस्य लक्षणस्योभयोरविशिष्टत्वात् । उक्तं च पञ्चदश्याम् ' यथा मुञ्जादिषिकैवमात्मा युक्त्या समृद्धृतः । शरीरत्रितयाद्धीरैः परं ब्रह्मैव जायते ॥ ' इति । **साहस्री.** २२ .

* **मुद्गानां** माष-चणक-कोद्रवा न प्रतिनिधिः ' अयज्ञिया वै माषाश्चणकाः कोद्रवाः ' इति वचनात् । **वि.** ६।३।६.

* **मुरारिमिश्राः** घटादिज्ञानोत्तरं घटं जानामि इत्याद्यनुव्यसायो जायते, तेन घटत्ववद्विशेष्यकत्वे सति घटत्वप्रकारकरूपप्रामाण्यग्रहः इत्याहुः । **मणि.** पृ. १८.

* **मुष्करत्वं** पुंसां गुणः । तेन पुंप्राप्तिं दर्शयति ' मुष्करा भवन्ति सेन्द्रियत्वाय ' इति । **भा.** ४।१।६।१७.

* **मुष्टिकपालादिषु** चतुर्मुष्टिनिर्वापादिसमुदायेन अनुसमयः । समुदायानुसमयन्यायः । ५।२।३।४-५.

**मुष्टिकपालोपधानावदानाञ्जनाभ्यञ्जनवपनपावनेषु चैकेन । ५।२।३।४॥**

पूर्वपक्षसूत्रमिदम् । पूर्णमासेष्टौ आग्नेयस्य अग्नीषोमीयस्य च पुरोडाशार्थं व्रीहीणां निर्वापः 'चतुरो मुष्टीन् निर्वपति' इत्युक्तः । तत्र आग्नेयार्थं एकां मुष्टिं निरुप्य अग्नीषोमीयार्थं एका मुष्टिः निर्वप्तव्या । ततः उभयार्थं द्वितीया, इत्यादि । एवं मुष्टिषु चतुर्षु एकेन एकैकेन मुष्टिना अनुसमयः कर्तव्यः इति पूर्वपक्षः ।

तथा पूर्णमासेष्टौ आग्नेयपुरोडाशश्रपणार्थं अष्टौ कपालानि उपधीयन्ते, अग्नीषोमीयार्थं तु एकादशकपालानि । तत्रापि आग्नेयार्थं एकं कपालमुपधाय अग्नीषोमीयार्थं एकं कपालमुपदध्यात् । तत उभयार्थं द्वितीयादि । अग्नीषोमीयार्थं नवमादिकपालानि तु अव्यवधानेन उपधेयानि इति पूर्वपक्षः ।

तथा आग्नेयस्य पुरोडाशस्य एकं अवदानं गृहीत्वा अग्नीषोमीयस्य एकं ग्राह्यम् । तत उभयोर्द्वितीयं इति पूर्वपक्षः ।

तथा ज्योतिष्टोमे दीक्षायां यजमानस्य नेत्रयोरञ्जनं 'त्रिराङ्क्ते' इत्युक्तम् । तत्र दक्षिणनेत्रे एकदा अञ्जनं कृत्वा सव्यनेत्रे एकदा अञ्जनं कर्तव्यम् । ततः उभयोर्नेत्रयोः द्वितीयवारं एवं उभयोर्नेत्रयोः तृतीयवारं अञ्जनं कार्यम् ।

तथा सत्रादौ अनेकयजमानकत्वे सति एकस्य यजमानस्य नवनीतेन सर्वाङ्गे अभ्यञ्जनं कृत्वा ततो द्वितीयस्य यजमानस्य ततः तृतीयस्य इत्यादि एकैकेनैव अनुसमयः ।

तथा चातुर्मास्यादौ यजमानस्य वपनम् 'प्रतिदिशं त्रिस्त्रिर्वपति' इत्युक्तम् । तत्र मस्तकस्य पूर्वदिग्भागे एकदा वपनम्, ततो दक्षिणभागे एकदा इतिरीत्या चतुर्दिक्षु त्रित्वं संपादनीयम् ।

तथा दर्शपूर्णमासयोरादौ 'चित्पतिस्त्वा पुनातु' इति मन्त्रेण सप्तभिर्दर्भपिञ्जूलैः कण्ठादुपरि 'वाक्पतिस्त्वा पुनातु' इति कण्ठादारभ्य नाभिपर्यन्तम्, 'देवस्त्वा सविता पुनातु' इति नाभिमारभ्य पादपर्यन्तं पुनाति । तदेतत् पावनं सत्रादौ अनेकयजमानकत्वे सर्वेषां यजमानानां प्रथमतः कण्ठादुपरि, ततः सर्वेषां यजमानानां कण्ठादधस्तात्, ततः सर्वेषां यजमानानां नाभेरधस्तात् इति एकैकेन अनुसमयः कर्तव्यः इति ।

एवं मुष्टिषु च कपालानां उपधाने च अवदानेषु च अञ्जनेषु च अभ्यञ्जनेषु च वपनेषु च पावनेषु च एकेन एकैकेन अनुसमयः कर्तव्यः इति पूर्वः पक्षः । चकारः प्राजापत्यपशुषु उक्तस्य उपाकरणादेः दृष्टान्तार्थः । उपाकरणादिर्धर्मः एकैकशः पशूनां भवति तथा मुष्ट्यादौ इति ।

**सर्वाणि त्वेककार्यत्वादेषां तद्गुणत्वात् । ५ ॥**

सिद्धान्तसूत्रम् । तुशब्दः पूर्वपक्षनिरासार्थः । सर्वाणि एव अनुक्रमेतव्यानि, न तु एकैकम् । मुष्टिचतुष्टयस्य, कपालाष्टकस्य, अवदानद्वयस्य, अञ्जनत्रयस्य, अभ्यञ्जनस्य एकस्य, वपनत्रयस्य, एकविंशत्या दर्भपिञ्जूलैः पावनस्य च प्रत्येकं एककार्यत्वात् एकं कार्यं अपूर्वं यस्य तादृशत्वात् । ऐककर्म्यात् इति पाठेऽपि स एवार्थः । एषां एतेषां इति वा चतुर्णां मुष्टीनां तद्गुणत्वात् एकभावनाङ्गत्वात् । एवं कपालोपधानादावपि योज्यम् । तस्मात् एकैकेन मुष्टिना, एककेन कपालोपधानेन, एककेन अवदानेन, एकैकेन अञ्जनेन, अभ्यञ्जनेन, एकैकेन च पावनेन नानुसमयः । किन्तु मुष्टिचतुष्टयादिना अनुसमयः कर्तव्यः । तथा च समुदायानुसमयोऽत्र सिद्धान्तः । के.

* **मुष्टिचतुष्टयं** एकः पदार्थः निर्वापे, दर्शपूर्णमासयोः । वि. ५।२।३.

* **मुष्टिपरिमाणं** निर्वापे अध्वर्योरेव । **संकर्ष.** १।४।११. **मीको.** पृ. २३७७ 'निर्वापे मुष्टिपरिमाणं॰' इत्यत्र द्रष्टव्यम् ।

* **मुष्टिलोपेन** सप्तदशशरावे चरौ चतुःसंख्यानुग्रहो वाजपेये । १०।२।२८।६५–६८.

**मुष्टिलोपात्तु संख्यालोपस्तद्गुणत्वात् स्यात् । १०।२।२८।६५ ॥**

दर्शपूर्णमासयोः 'चतुरो मुष्टीन् निर्वपति' इति निर्वापसाधनं मुष्टिः, मुष्टिगुणश्च चतुःसंख्या उक्ता । अथ वाजपेये 'नैवारः सप्तदशशरावः क्षीरे चरुर्भवति' इत्युक्तम् । तत्र मुष्टिसंख्ययोरन्यतरस्य उभयोर्वा लोपः प्राप्तः । एवं सति मुष्टिलोपात् संख्यालोपो वरः स्यात् तद्गुणत्वात्



संख्यायाः मुष्टिगुणत्वात् । मुष्टिलोपो न कर्तव्यः तदपेक्षया संख्यायाः लोपो वरम् । संख्या हि मुष्टेर्गुणः । मुख्यापेक्षया गुणलोपो न्याय्यः । तस्मात् यावद्भिर्मुष्टिभिः सप्तदशशरावाः पूर्येरन् तावद्भिर्मुष्टिभिर्नीवारा निर्वप्तव्याः इति पूर्वः पक्षः ।

**न निर्वापशेषत्वात् । ६६ ॥**

दर्शपूर्णमासयोः 'चतुरो मुष्टीन्निर्वपति' इत्यत्र निर्वापसाधनं मुष्टिः संख्या चोक्ता । अथ वाजपेये 'सप्तदशशरावः नैवारश्चरुर्भवति' तत्र मुष्टिलोपो न कर्तव्यः चतुःसंख्यालोपस्तु कर्तव्य इति प्रथमः पूर्वपक्षः सूत्रेणोक्तः । तं पक्षं नशब्देन निषेधयति । न मुष्टिलोपः कर्तव्यः । चतुःसंख्यायाः मुष्टिगुणत्वे स्यात्तथा । न तु संख्या मुष्टेर्गुणः । संख्यायाः निर्वापशेषत्वात् । चतुरो निर्वपति मुष्टीन् निर्वपति इति च पृथगन्वयः । तस्मान्न संख्यालोपः किन्तु मुष्टिलोपः कर्तव्यः इति द्वितीयः पूर्वपक्षः । इममेव पक्षं पश्चात् सिद्धान्तत्वेन स्थापयिष्यति ।

**संख्या तु चोदनां प्रति सामान्यात् तद्विकारः संयोगाच्च परं मुष्टेः । ६७ ॥**

तुशब्दः द्वितीयं पूर्वपक्षं व्यावर्तयति । अथ तृतीयः पूर्वपक्षः उच्यते उभयलोपः इति । न केवलं मुष्टिलोपः । चोदनां प्रति सामान्यात् संख्या तद्विकारः, संयोगाच्च परं मुष्टेः विकारः इति सौत्रपदान्वयः । चोदनां प्रति नैवारचरुविधिं प्रति संख्या सप्तदशसंख्या प्राकृतचतुःसंख्याया विकारः । सप्तदशसंख्या चतुःसंख्याया बाधिका । किंच संयोगात् द्रव्यमापकसंयोगात् परं शरावद्रव्यं मुष्टेर्विकारः मुष्टेर्बाधकः । तथा च वैकृतसंख्यया प्राकृतसंख्या निवर्त्यते वैकृतैः शरावैश्च प्राकृता मुष्टयो निवर्त्यन्ते । तस्मात् मुष्टिसंख्ययोरुभयोर्लोपः इति तृतीयः पूर्वपक्षः ।

**न चोदनाभिसंबन्धात् प्रकृतौ संस्कारयोगात् । ६८ ॥**

दर्शपूर्णमासयोः 'चतुरो मुष्टीन् निर्वपति' इति निर्वापसाधनं मुष्टिः संख्या चोक्ता । अथ वाजपेये 'सप्तदशशरावः नैवारश्चरुर्भवति' । तत्र सप्तदशसंख्यया चतुःसंख्या बाध्यते शरावैश्च मुष्टयो बाध्यन्ते इति तृतीयः पूर्वपक्ष उक्तः । तं नशब्देन निषिध्य द्वितीयं पूर्वपक्षमेव सिद्धान्तमाह । न उभयबाधः । चोदनाऽभिसंबन्धात् । चोदनेति यागं ब्रूमः । यागसंबद्धा हि सप्तदशसंख्या शरावद्रव्यं च । प्रकृतौ दर्शपूर्णमासयोस्तु संस्कारयोगात् निर्वापसंस्कारसंबद्धा चतुःसंख्या मुष्टिद्रव्यं च । यस्य हि प्रत्यक्षश्रुतेन चोदकप्राप्तस्य कार्यं अभिनिर्वर्त्यते तत् तेन निवर्त्यताम् । तत्र चतुःसंख्यानुग्रहात् मुष्टिलोपो न्याय्यतरः । तस्मात् मुष्टिलोपः कर्तव्यः, चतुःसंख्यालोपस्तु न कर्तव्यः । तर्हि कथमनुष्ठानम् ? उच्यते । चतुर्भिः कुडवादिभिः शरावं पूरयित्वा तस्य निर्वापः कर्तव्यः, पुनरेवं पुनरेवं एवं सप्तदशवारम् । इति । इति सिद्धान्तः । के.

* 'मुष्टिलोपात्तु संख्यालोपस्तद्गुणत्वात् स्यात्' इत्यत्र 'चतुरो मुष्टीन् निर्वपति' इत्यत्र चतुःसंख्यायाः लक्षितमुष्टिविशेषणत्वापत्तेः सप्तदशशरावे चरौ प्रधानभूतमुष्ट्यनुग्रहापत्तौ संख्यानुग्रहो वक्ष्यते । **कौ.** ३।१।६।१२.

* **मुष्टीकरणं** याजमानं ज्योतिष्टोमे । **वा.** ३।१।१४।२४. * मुष्टीकरणं 'मुष्टीकरोति' इति ज्योतिष्टोमे कृत्स्नप्रकरणार्थं न तु दीक्षावेदनार्थम् । **भा.** ३।१।१४।२४–२५. * **मुष्टीकरणेन** हस्तचापलं निवारितं ज्योतिष्टोमे दीक्षायाम् । **वि.** ३।१।१४.

* **मुसलं** यज्ञायुधम्, 'उलूखलमुसलाभ्यामवहन्ति' इति । **वि.** ३।१।५. * मुसलं राजसूये नानाबीजेष्टौ तन्त्रेणैकम् । **टुप्.** ५।२।७।१३.

* **मुसलप्रोक्षणस्य** प्रयोजकं अपूर्वम् । **भा.** ९।१।२।२–३.

* **मुसलशब्दः** दण्डे प्रसिद्धः । यथा, कथं नु खलु मुसलिनो माणवका गङ्गां नावतरेयुः इति । **भा.** ४।२।६।१८.

* **मुहूर्तः** नभस्त्रिंशत्तमभागातिलङ्घनफलः सूर्यादिगतिक्षणचयः इति क्रियातिरिक्तकालाभाववादिनः । **सु.** पृ. ९७०.

**मूढं मूढभाषयैव बोधयेदिति न्यायः ।** स्पष्टार्थोऽयम् । **साहस्री.** ७४२.

**मूर्खसेवनन्यायः** । यत्र किया निष्फला तत्रास्य प्रवृत्तिरिति भावः । स्पष्टार्थः । **साहस्री**. ३०७.

* **मूलं** न प्रयोजकं शाखाछेदनाहरणपरिवासनानां दर्शपूर्णमासयोः । **भाट्ट**. ४।२।३. * **मूलानामवसेचनं** बर्हिषः संस्कारः । **भा**. १२।१।१९।४२.

* **मूलावधारणद्वारैव पौरुषेयवाक्येषु अर्थनिश्चय-**प्रतिष्ठा इति मूलाभावे झटिति जातोऽपि निश्चयो द्रागेव विलीनोऽनुत्पन्नसमो भवति । **वैद्यनाथः** १।१।२।२ पृ. १६.

* **मूलोच्छेदलक्षणः** बाध एव अप्राप्तबाध इत्युच्यते । **बाल**. पृ. १३१.

* '**मूलतः** शाखां परिवास्योपवेषं करोति ' इयं पूर्वस्योत्तराङ्गत्वे क्त्वाप्रत्ययरूपा विनियोक्त्री श्रुतिः, सोमेश्वरमतेन । **बाल**. पृ. ४५.

* **मूलप्रकृतित्वं** इष्ट्यग्निहोत्रसोमानाम् । **वि**. ८।१।३ वर्णकं २.

* **मूल्येन** विक्रेतुः आनमनं क्रियते । तद् बहुमिर्द्रव्यैः सुकरतरं भवति । **भा**.

**मूषकविषाणन्यायः** । न हि कश्चित् प्रेक्षावान् मूषकविषाणं प्रतिषेद्धुं यतते । **साहस्री**. ७१४.

* **मूषिकासूक्तस्य** ऐकादशिन्यां विनियोगः । **भा**. २।१।५।२३ । अत्र **सुधा**– मूषिकासूक्तस्य यूपैकादशिन्यां उपशयाख्ये यूपे ' आखुस्ते पशुरिति ब्रूयात् ' इति विधानात् आखुस्तुतौ अर्थवत्त्वम् । पृ. ६५७

**मूषासिक्तताम्रन्यायः** । ' तैजसावर्तनी मूषा ' इत्यमरः । तैजसमावर्तते यत्र सा तैजसावर्तनी स्वर्णादिपाकार्थः पात्रविशेषो मूषा स्यात् । ' कुठाली ' इति मुलतानभाषायां ख्याता । ' मूष स्तेये ' इत्यस्माद्धातोर्भिदाद्यङिति । यथा तत्र मूषायां द्रुतं ताम्रं सिक्तं सत् तन्निभं जायते तत्समानाकारवद्भवति, तथा रूपादीन् विषयान् व्याप्नुवत् विषयीकुर्वत् चित्तमवश्यं तत्सदृशमुपलभ्यते इति भावः । उक्तं च पञ्चदश्याम् ' मूषासिक्तं यथा ताम्रं तन्निभं जायते तथा । रूपादीन् व्याप्नुवच्चित्तं तन्निभं दृश्यते ध्रुवम् ॥ ' इति । **साहस्री**. ४५१.

* **मृगजलम्** । रश्मितप्तोषरे भ्रान्त्या शौक्ल्यचाञ्चल्यादितोयगुणदर्शनेन तोयसादृश्याध्यवसानात् तोयमुत्प्रेक्ष्य तोयशब्दप्रयोगः । **सु**. पृ. ५०१.

* **मृगतृष्णायां** भ्रान्त्या तोयमध्यारोप्य यदा शब्दं प्रयुङ्क्ते तदा उभयोर्मुख्यार्थाध्यवसानरूपेण तोयप्रतीतेः भ्रान्तिमुख्यत्वम् ( भ्रान्त्यध्यवसितः मुख्यः शब्दः भ्रान्तिमुख्यः इति मध्यमपदलोपिसमासः । **सु**. पृ. ५०० ) । **वा**. १।४।१२।२३ पृ. ३५८.

* **मृगतृष्णादिज्ञानानि** उत्पन्नानि मिथ्यात्वकल्पनया बाध्यन्ते, हानोपादानादिफलवियोगाच्च बाध्यव्यपदेशं लभन्ते । **वा**. ३।३।७।१४ पृ. ८५८–८५९.

* **मृगतृष्णादिप्रत्ययाः** प्रत्यक्षेण बाध्यन्ते । **वा**. ३।३।७।१४ पृ. ८५९.

* **मृगतृष्णादर्शनमिव** अन्यार्थदर्शनं असति श्रुत्यन्तरे न्याये वा । **भा**. ४।४।११।३३.

**मृगतृष्णान्यायः** । यथा ग्रीष्मे मरुदेशे सिकतासु सूर्यरश्मयः प्रतिकल्पिता अपां धारा इव भवन्ति, मृगास्तृषितास्ता अपां धारा मत्वा पश्यन्ति, भ्रमान्ति च । न च ताः सन्ति । सा भ्रान्तिर्मृगतृष्णापदवाच्या । साऽस्त्यस्याम् 'अर्शआद्यच्' । उक्तं च 'रे चित्त चिन्तय चिरं चरणौ मुरारेः, पारं गमिष्यसि यतो भवसागरस्य । पुत्राः कलत्रमितरे सुहृदः सहायाः, सर्वं विलोकय सखे मृगतृष्णिकाभम् ॥ ' इति । **साहस्री**. ४४२.

* **मृगतृष्णारूपमे**तद्दर्शनम् ( येषु पत्नीसंयाजान्तता तेषु असंस्थादर्शनम् ) । **भा**. ९।१।९।३१.

* **मृगतृष्णावत्** अप्रमाणमूलत्वात् मिथ्यादर्शनम् ( ' अग्नीषोमीयस्य स्थाने अग्नीषोमीयः पुरोडाशः ' इत्यादि दर्शनम् ) । **भा**. ३।८।२१।४१.

**मृगभिया सस्यानाश्रयणन्यायः** । ( अस्यार्थः ' भिक्षुभिया स्थाल्यनधिश्रयणन्यायः ' **मीको**. पृ. ३०६० इत्यत्र द्रष्टव्यः । ) । **साहस्री**. ३४८.

**मृगवागुरान्यायः** । वागुरा मृगबन्धनी । अयं विशिष्टवाचकपदानां सति पृथग्विशेषणवाचकपदसमवधाने विशेष्यमात्रपरतायां प्रवर्तते । **साहस्री**. २१४.



* **मृगारेष्टिः** नाम इष्टिविशेषः । **भा**. ११।२।४।२३.

* **मृदाहरणे** षण्णां मन्त्राणां समुच्चयोऽग्निचयने । **भा**. १२।३।१४।३०.

* **मृन्मयं** पात्रं ' मृन्मयेन प्रतिष्ठाकामस्य प्रणयेत् ' इति विहितं काम्यम् । तत्तु नित्ये अपां प्रणयने ग्रहीतुं न योग्यम् । नित्ये तु ' चमसेनापः प्रणयेत् ' । **वि**. ४।३।२. * ' **मृन्मयेन** प्रतिष्ठाकामस्य प्रणयेत्, कांस्येन ब्रह्मवर्चसकामस्य ' इयं फलतो वाचनिकी व्यवस्था । **बाल**. पृ. १९.

* **मृन्मयादिपात्राणां** अपां प्रणयने न नित्यता । **भा**. ४।३।२।४.

* **मृताग्निहोत्रे** महापितृयज्ञे वा 'उपरि हि देवेभ्यः' इत्यत्र अनुवादो विधिर्वा इति संशयः । विधिः सिद्धान्तः । **वा**. ३।४।१। षट्सूत्री ६, * मृताग्निहोत्रे महापितृयज्ञे वा ' ये पुरोदञ्चो दर्भाः ' इत्यत्र विधिरनुवादो वा इति संशयः । अनुवादः सिद्धान्तः । ३।४।१। षट्सूत्री ४–५. * मृताग्निहोत्रे श्रुतेन 'यज्ञोपवीती हि देवेभ्यो दोहयति ' इत्यनेन प्राचीनावीतस्तुत्यर्थमनुवादः यज्ञोपवीतस्य । **भाट्ट**. ३।४।३.

* **मृताधिकारपक्षे** अस्थियज्ञे इव सर्वस्वारे बाध्याबाध्यविवेकः । १०।२।२४।६०.

* **मृताधिकारित्वपक्षे** अस्थियज्ञस्य जप–संस्कार–इष्टीनां लोपः । १०।२।१८।५०.

* '**मृतानुगमनं** नास्ति ब्राह्मण्या ब्रह्मशासनात् ' इत्ययं प्रतिषेधः ' पृथक् चितिं समारुह्य न विप्रा गन्तुमर्हति ' इत्यनेन विशेषे उपसंह्रियते । **बाल**. पृ. ३४.

* **मृतकर्तृकत्वपक्षे** अस्थियज्ञस्य क्रत्वर्थानामनुष्ठानम् । १०।२।१९।५१. * मृतकर्तृकत्वपक्षे अस्थियज्ञस्य गुणकामानां नानुष्ठानम् । १०।२।२०।५२. * मृतकर्तृकत्वपक्षे अस्थियज्ञस्य सूक्तवाकान्तर्गतायुरादिफलप्रकाशकभागस्य लोपः । १०।२।२१।५३–५५. * मृतकर्तृकत्वपक्षे अस्थियज्ञस्य होतृकामनया अनुष्ठीयमानानां गुणकामानां नानुष्ठानम् । १०।२।२२।५६–५७.

**मृतमारणन्यायः** । स्पष्टार्थः । यत्र क्रिया निष्फला, तत्र अस्य प्रवृत्तिरिति भावः । **साहस्री**. ३००.

* **मेखला** न संस्कारजनिका, द्रव्यत्वात् । परन्तु तया दीक्षाभिव्यक्तिर्भवति । **वि**. ५।३।११.

**मेघोदये शालिसमृद्धौ कोद्रवानशनमिति न्यायः** । यथा मेघोदये वृष्टौ सत्यां शालिसमृद्धौ व्रीहिसंपत्त्या कोद्रवः कुत्सितधान्यविशेषस्तस्य भक्षणं त्यज्यते, तथा ज्ञानोदये कर्मादिकं तुच्छमेव । केचित्तु मेघोदये इति पदं विहाय 'शालिसमृद्धौ कोद्रवाशनम् ' इति न्यायस्वरूपं वदन्ति । यथा शालिः उत्तमधान्यविशेषः, कोद्रवः इत्यधमधान्यविशेषः । उत्तमवस्तुसद्भावे यत्राधमवस्तुसेवनं तत्रास्य प्रवृत्तिरिति । **साहस्री**. १४४.

* **मेधश्च** यज्ञः । **भा**. ३।८।३।१०.

**मेधपत्यधिकरणम्** । अध्रिगुप्रैषे मेधपतिशब्दः देवतापरः ॥

**मेधपतित्वं स्वामिदेवतस्य समवायात् सर्वत्र च प्रयुक्तत्वात् तस्य चान्यायनिगदत्वात् सर्वत्रैवाविकारः स्यात् । ९।३।१२।३३ ॥**

**भाष्यम्**–– अस्ति ज्योतिष्टोमे अग्नीषोमीये पशौ अध्रिगुप्रैषे मेधपतिशब्द एकवन्निगदः, परेषां शाखिनां द्विवन्निगदः । तं प्रति संशयो भवति । द्विपश्वादिषु पशुगणेषु किं अविकारेण इतरश्च इतरश्च प्रयोक्तव्यः, उत स्वामिपरः ऊहः कर्तव्यः, उत देवतापरः इति । किं प्राप्तम् ? अविकारः । कुतः ? मेधपतित्वं स्वामिदेवतस्य, स्वामी मेधपतिर्देवता च । स्वामिना पशुः देवताभ्यां दत्तः संकल्पितः । मेधपतये स्वामिनेऽपि असौ भवति, तस्य कार्यं करिष्यतीति । देवताभ्यामपि, ताभ्यां उत्लक्ष्यते इति । त्रयाणामपि हि तं मेधं प्रति आधिपत्येन समवायोऽस्ति । सर्वत्र चाधिपत्ये पतिशब्दः प्रयुक्तः आ हिमवत आ च कुमारीभ्यः । स एष त्रयाणामेकवचनान्तो वाचको द्विवचनान्तश्च । यथा प्रकृतौ अविवक्षितैकत्वः अविवक्षितद्वित्वश्च संबन्धमात्रनिबन्धनः, एवं सर्वासु विकृतिषु । तस्मात् न विक्रियेत ।

टुप्-- मेधं इत्यत्र चत्वारः पक्षाः, अविकारेणोभयोः प्रयोगः, व्यवस्थया वा द्विवन्निगदो देवतायां एकवन्निगदो यजमाने, उभौ वा स्वामिपरौ द्विवन्निगदः पत्न्यपेक्षया, उभौ वा देवतापरौ संघातापेक्षया एकवन्निगद इति । तत्र तृतीये पक्षे दोषमाह 'उत्कर्षो देवतायां स्यात्' इति (३५ सूत्रे), यस्य देवतावचनः तस्योत्कर्षः प्राप्नोति, एकवन्निगदोऽसौ एकदेवत्येषु पशुषु इति । तत् पाशन्यायमनालोच्य । (पाशन्यायं दर्शयति-) 'यत्रास्ति प्रधानभूतः प्रातिपदिकार्थः, तत्र गुणभूतं वचनं नीयते' इति । (उत्कर्षे कारणान्तरमाह--) संघातस्य देवतात्वमदृष्टमेव ।

**अपिवा द्विसमवायोऽर्थान्यत्वे यथासंख्यं प्रयोगः स्यात् । ३४ ॥**

भाष्यम्—अपिवा नैतदेवम् । तयोरिह समवायः एकवन्निगदस्य द्विवन्निगदस्य च । तयोः एकवन्निगदः स्वामिनि प्रयोक्ष्यते येषां समाम्नातः । येषां द्विवन्निगदः समाम्नातः, तेषां स देवते वक्ष्यति । तस्मात् विकृतौ बह्वीषु देवतासु द्विवन्निगदः ऊहेन प्रवर्तिष्यते । बहुयजमानेषु एकवन्निगदः ऊहिष्यते । एवं यथासंख्यं प्रयोगो भविष्यति ।

**स्वामिनो वैकशब्द्यादुत्कर्षो देवतायां स्यात् पत्न्या द्वितीयशब्दः स्यात् । ३५ ॥**

भाष्यम्-- वाशब्दः पक्षं व्यावर्तयति । स्वामिदेवतयोरुभयोर्वाचक इति नैतदेवम् । एक एव मेधपतिशब्दः यस्मात् द्विवचनम्, यस्मात् एकवचनं स एव न स्वामिदेवतयोर्वाचको भविष्यति । ननु एकोऽपि मेधपतिः अपरोऽपि प्रतीयते, कथमवाचक इति । उच्यते । यदा स्वामिनः, तदा मेधपतये यो मेधः, तं मेध्या दुर उपनयत इति संबन्धः । यदा देवतावचनः, तदा मेधपतये उपनयत मेध्या दुरः इति संबन्धः । स एष सकृदुच्चरितः उभाभ्यां पदाभ्यां न संबन्धुमुत्सहते । वचनव्यक्तिभेदात् वाक्यभेदः प्रसज्यते । तस्मात् स्वामिनो वाचक इति अध्यवसीयते । अथ किमर्थं न देवतावचनः कल्प्यते ? तथाहि कल्प्यमाने एकवन्निगद उत्कृष्येत एकदेवत्ये क्रतौ । तत्र प्रकरणं बाध्येत । यजमानवचने पुनः कल्प्यमाने न द्विवन्निगद उत्कृष्येत । तत्रैव यजमानयोः दंपत्योः वाचको भविष्यति । तस्मात् प्रकरणानुग्रहाय स्वामिवचनः कल्प्यते । स्वामिपरस्य ऊहो भविष्यतीति ।

**देवता तु तदाशीष्ट्वात् संप्राप्तत्वात् स्वामिन्यनर्थिका स्यात् । ३६ ॥**

भाष्यम्— तुशब्दः पक्षं व्यावर्तयति । न स्वामिवचनः, देवतापरो भविष्यति । कुतः ? तदाशीष्ट्वात् । 'आशासाना मेधपतये मेधम्' इति देवताभ्यां हविराशास्यते, मेधपतिभ्यां मेधमाशासाना उपनयत ताभ्यां इति । यजमानं प्रति आशासानानुकीर्तनमनर्थकं अकर्तव्यं च । स प्राप्त एव स्वामिनं मेधः किमर्थमाशास्यते । न च तेन नित्यमेव स्वामिसंबद्धेन प्रयोजनम् । याग एव हि न संवर्तेत । तस्मात् देवतावचनो मेधपतिशब्द इति ।

टुप्— सिद्धान्तस्तु देवतावादिपक्षः । स्वामिपक्षे वाक्यार्थ एव तावन्न घटते, आशासानपदानर्थक्यात् । अपि च यजमानाय मेधपतये यो मेधः, तं मेध्या दुरः यज्ञद्वारं उपनयत । किमर्थं इति प्रयोजनार्थित्वात् असमर्थो वाक्यार्थः । न च मेधमनूद्य किञ्चित् विधीयते इति । इतरथा (देवतापक्षे) मेध्या दुर उपनयत मेधपतये मेधं कर्तुं इत्येवमाशासानाः इत्युपपन्नो वाक्यार्थः । न च परकीयो देवतायै कर्तुं शक्यते इत्यर्थात् योऽयं यजमानस्येति ।

**उत्सर्गाच्च भक्त्या तस्मिन् पतित्वं स्यात् । ३७ ॥**

भाष्यम्— उत्सृष्टं च यजमानेन नायं ममेति । केवलं परकीयो रक्ष्यते । कालेन देवतया संभन्स्यते इति । कः पुनरस्य देवतया संबन्धः, यत् तामुद्दिश्य परिग्रहोऽस्य त्यज्यते । स च यागः प्राक् कृतः । तस्मात् यागात् परार्थं द्रव्यं नात्मीयम्, परित्यज्य आस्ते । आत्मप्रधानं यत् तदात्मीयम्, न यं प्रति आत्मा गुणभूतः । तादृशे तु भक्त्या पतित्वं भवति । तस्माद्देवतयोरेव तत्र मुख्यं मेधपतित्वम्, भाक्तं स्वामिनि इति ।

**उत्कृष्येतैकसंयुक्तो द्विदेवतेऽसंभवात् । ३८ ॥**



भाष्यम्-- इति यदुक्तम्, तत् परिहर्तव्यम् ।

**एकस्तु समवायात् तस्य तल्लक्षणत्वात् । ३९ ॥**

भाष्यम्— अत्रोच्यते । यौ हि तौ द्वौ अग्नीषोमौ तयोर्गणे मेधपतिशब्दः । स चात्र देवतासमवेतः । तस्मिन् कर्मणि एकस्मै गणाय मेधमुपनयत इत्युच्यते । तस्मात् एकवचनान्तो गणवाची मेधपतिशब्दो नोत्कृष्यते इति ।

**संसर्गित्वाच्च तस्मात् तेन विकल्पः स्यात् । ४० ॥**

भाष्यम्— अयं चान्यः परिहारः । संसर्गी अयमर्थो देवता नाम । द्वावर्थौ संसृष्टौ कदाचित् एका देवता भवति । यदि द्वयाय परिकल्पितं किंचिद् द्रव्यम्, तत्र द्वयं देवता भवति । द्वावर्थौ संसृष्टौ एकतां यातः । तस्मात् एकवचनान्तोऽपि प्रकरणमभिनिविशते, पूर्वेण च सह विकल्प्यते इति ।

**एकत्वेऽपि गुणानपायात् । ४१ ॥**

भाष्यम्— अन्वारुह्य वचनमिदम् । मा तावत् भूत् इहैकत्वमर्थः । तथापि प्रकरणं अनुप्रविशेतैव एकवचनान्तः । प्रातिपदिकं हि तस्य विद्यमानार्थम् । एकवचनं च उपनयनसंबन्धार्थम् । एकत्वं वा अविवक्षितम् । तस्मात् न प्रकरणादुत्कृष्येतेति । अथोच्यते, एकत्वविशिष्टस्य विभक्तिः संबन्धं ब्रवीति इति । तथापि अस्मत्पक्ष उपपद्यतेतराम् । सर्वोऽपि हि एकत्वसंबद्ध इति । अथ संबन्धं करोति एकत्वं च ब्रवीतीति, न तेन विशिनष्टि, अविवक्षितत्वात् अविरुद्धं भविष्यतीति । अथोच्यते अविवक्षितेऽपि वचने एकत्वसंबन्धे एकवचनं भवति नान्यत्रेति, तथा मेधपतिगतं एकत्वं अस्य भविष्यति, ततः सोऽनुवदिष्यते । तस्माददोष इति ।

शा-- द्विवचनं अधिष्ठानसंख्यावशात् एकवचनं च देवतासंख्यावशात् विकृतिषु ऊहितव्यम् ।

सोम-- एकधेत्यादिवत् समवेतार्थत्वाभावात् मेधपतिशब्दस्य अनूहः इत्युत्थितेः **संगतिः** । अत्र 'पशुर्वै मेधो यजमानो मेधपतिर्यजमानमेव तत् स्वेन मेधेन समर्धयति' (ऐब्रा. ६।६।४) इति पूर्वपक्षप्रतिपादनपूर्वकम् 'अथो खल्वाहुर्यस्यै वाव कस्यै देवतायै पशुरालभ्यते सैव मेधपतिरिति । स यद्येकदेवत्यः पशुः स्यात् मेधपतय इति ब्रूयात्, यदि द्विदेवत्यो मेधपतिभ्यामिति, यदि बहुदेवत्यो मेधपतिभ्यः' (ऐब्रा. ६।६।५-६) इत्यैतरेयाम्नानं नास्तीति कृत्वाचिन्तेयं इत्युक्तं तन्त्ररत्ने । **सूत्रार्थस्तु**— मेधपतित्वं स्वामिनो देवतायाश्च त्रयाणामपि मेधसमवायात्, सर्वत्र चाधिपत्ये पतिशब्दप्रयोगात् त्रिषु चैकवचनस्यान्याय्यनिगदत्वात् सर्वासु विकृतिषु अविकार इति ।

वि— 'अविकारो विकारो वा स्वाम्मेधपतिशब्दयोः । विकारे स्वामिदेवार्थ एकार्थो वाऽन्तिमेऽपि किम् ॥ स्वाम्यर्थो देवतार्थो वा, स्यादन्याय्यत्वतोऽग्रिमः । अर्थभेदाद् विकारोऽत्र द्वावर्थौ शब्दयोर्द्वयोः ॥ मन्त्रैक्यादर्थ एकोऽत्र स्वाम्यस्मिन् जायया द्विता । , देवार्थाशीर्देव एकोऽधिष्ठाने द्वे द्विधेरणम् ॥'

भाट्ट-- तत्रैव प्रैषे (अध्रिगुप्रैषे) 'उपनयत मेध्या दुर आशासाना मेधपतिभ्यां मेधम्' इति श्रुतम् । केषांचित्तु शाखिनां 'मेधपतये मेधम्' इति । तत्र न तावत् शाखाभेदेन अत्र मन्त्रभेदः, एकदेशवैलक्षण्येऽपि शाखान्तराधिकरणन्यायेन (२।४।२८-३३) प्रत्यभिज्ञानबलेन तदेकत्वावगतेः । ततश्च तदर्थोऽपि एक एव वाच्यः । तेन मेधस्य पशोः पतिः यजमानो देवता वा अर्थो वाच्यः, न तूभयम् । न च मेधपतित्वस्य शक्यतावच्छेदकस्य एकत्वात् तदवच्छिन्नोभयाभिधानेऽपि न दोष इति वाच्यम् । तथात्वेऽपि इतरपदानां तत्तदर्थघटिततत्तद्वाक्यार्थविषयकविलक्षणबोधद्वयजनकत्वानुपपत्तेः । तथाहि, यजमानपरत्वे यजमानाय यो मेधः पशुः भोगसाधनत्वेन आसीत् तं मेध्या भवन्तः ऋत्विजः दुरः यज्ञद्वारं चात्वालोत्करयोर्मध्यं उपनयत स्वकीयदक्षिणां यजमाननिष्ठं फलं वा आशासानाः सन्तः इत्यर्थः । देवतापक्षे देवतायै मेधं पशुं आशासाना मेध्या भवन्तः तं दुरः प्रति उपनयत इत्यर्थः । केचित्तु देवतापक्षे देवतायै पशुमाशासाना भवन्तो मेध्याः तदीया दुरो यज्ञद्वाराणि हृदयादीनि उपनयत इत्यर्थः इत्याहुः । सर्वथा विलक्षणबोधद्वयजनकत्वानुपपत्तेः एकरूप एवार्थो वाच्यः । न च बोधद्वयजनकत्वे सकृदुच्चरितस्य सकृदर्थप्रत्यायकत्वं इति नियम-

भङ्ग एव दूषकताबीजम् । न च तदत्रास्ति । शाखाभेदेन द्विःश्रुतस्य सकृच्छ्रवणाभावात् इति वाच्यम् । तथापि लिङ्गकल्पितश्रुतेः अनेकत्वकल्पनागौरवभिया एकस्यैवार्थस्य वाच्यत्वात् । तदिह किंपरत्वमिति चिन्तायाम्, देवताया विग्रहाद्यभावेन स्वामित्वापरपर्यायपतित्वानुपपत्तेर्यजमानपरत्वमेव । न च तस्य एकत्वेन द्विवचनानुपपत्तिः । पाशन्यायेन ( ९।३।४ ) तदुपपत्तेः । वस्तुतस्तु दंपत्योर्व्यासज्यवृत्तिकर्तृत्वैक्यात् यजेत इतिवत् एकवचनम्, पत्नीयजमानाभिप्रायेण च वसानौ इतिवत् द्विवचनम् । अत एव एकपत्नीकप्रयोगे द्विवचनान्त एव मन्त्रः अन्यत्र तु एकवचनान्त एव इति नास्मन्मते विकल्पोऽपि, इति प्राप्ते, यजमानपरत्वे पशोराशासनस्य तावत् सिद्धत्वेनैव वैयर्थ्यम् । दक्षिणादीनां च अश्रुतानां कल्पनात् न तदाशासनमपि संभवि । अतः देवस्वादिव्यवहारसिद्ध्यर्थं देवताया अपि स्वीकाराख्यसंबन्धस्य तृतीये साधितत्वात् तमादाय मेधपतित्वोपपत्तेः देवतापरत्वमेव । वचनं तु त्वदुक्तरीत्यैव देवतात्वस्य अग्नीषोमयोः व्यासज्यवृत्तित्वात् एकत्वोपपत्तेः अधिष्ठानभेदेन च द्वित्वोपपत्तेः ममाप्युपपन्नमेव । कर्तृत्व इव च देवतात्वेऽपि मेधपतित्वं सामानाधिकरण्यादेव उपपन्नं इति न काचित् क्षतिः । एवं च विकल्पोऽपि फलमुखत्वात् न दोषाय । प्रयोजनं पूर्वपक्षे सत्रे द्वयोरपि ऊहः विकल्पश्च अर्थद्वयानुसंधाने । सिद्धान्ते तु अग्रिमाधिकरणे वक्ष्यते ।

**मण्डन**—' स्यादूहनं मेधपतेर्विकृत्याम् । '

**शंकर**—' देवतत्वान्मेधपतिः । ' ऊह्यः ।

**मेधपतित्वं स्वामिदेवतस्य समवायात् सर्वत्र च प्रयुक्तत्वात् तस्य चान्यायनिगदत्वात् सर्वत्रैवाविकारः स्यात् । ९।३।१२।३३ ॥**

अध्रिगुप्रैषे एकेषां शाखिनाम् ' मेधपतये मेधम् ' इति एकवन्निगदः । अन्येषां शाखिनां तु ' मेधपतिभ्यां मेधम् ' इति द्विवन्निगदः । अनयोर्मन्त्रयोः पशुगणेषु विकृतिषु अविकारेण प्रयोगः, उत द्विवचनस्य देवतापर ऊहः एकवचनस्य तु यजमानपरः, अथवा उभयोर्यजमानपर एव, अथवा उभयोर्देवतापर ऊहः इति विचारे प्रथमं पक्षमाह । सर्वत्रैव विकृतिषु अविकारः स्यात् । मेधो यज्ञः, तत्साधनत्वात् पशुर्मेधः । मेधस्य पतिः मेधपतिः । मेधपतित्वं च स्वामिदेवतस्य । स्वामी यजमानश्च अग्नीषोमौ देवता च तत्समाहारस्य स्वामिदेवतस्य । समवायात् संबन्धात् । दातृत्वेन यजमानस्य संबन्धः । ग्राहकत्वेन च अग्नीषोमयोः संबन्धः । सर्वत्र च देशेषु आ हिमवतः आ च कुमारीभ्यः पतिशब्दस्य आधिपत्ये प्रयुक्तत्वात् । तस्य च एकवचनान्तमेधपतिशब्दघटितस्य द्विवचनान्तमेधपतिशब्दघटितस्य च मन्त्रस्य प्रकृतौ एव अन्यायनिगदत्वात् एकवचनेन द्विवचनेन वा त्रयाणां मेधपतीनां वक्तुमशक्यत्वात् । तत्रैवं सति एकत्वं द्वित्वं वा अविवक्षित्वा प्रातिपदिकार्थमात्रेण प्रकृतौ मन्त्रयोः प्रयोगस्य स्वीकृतत्वात् विकृतावपि तथैव प्रयोगात् न दोषः । तस्मात् पशुगणेषु अनूहेनैव मन्त्रयोः प्रयोगः स्यात् इत्येकः पक्षः । पतिशब्दस्य आधिपत्ये सर्वत्र च प्रयुक्तत्वात्, समवायात् स्वामिदेवतस्य मेधपतित्वं स्यात् । एकवचनान्तस्य द्विवचनान्तस्य च मन्त्रस्य अन्यायनिगदत्वात् प्रातिपदिकार्थमात्रविवक्षया च सर्वत्रैव प्रकृतौ विकृतौ च मन्त्रयोरविकारः स्यात् । इति सूत्रपदानामन्वयोऽर्थश्च ।

**अपिवा द्विसमवायोऽर्थान्यत्वे यथासंख्यं प्रयोगः स्यात् । ३४ ॥**

अध्रिगुप्रैषे मेधपतिशब्दः क्वचित् एकवचनान्तः पठितः मेधपतये इति, क्वचित् द्विवचनान्तः मेधपतिभ्यां इति । तयोरविकारेण पशुगणेषु प्रयोग इति प्रथमः पक्षः उक्तः, तं निराकरोति अपिवाशब्दः । अथ द्वितीयं पक्षमाह । मेधपतिशब्दस्य द्विसमवायो भविष्यति स्वामिनि देवताद्वन्द्वे चेति द्वयोः समवायः । येषामेकवचनान्तो मेधपतिशब्दः तेषां स स्वामिनमभिप्रेत्य स्यात् । येषां तु द्विवचनान्तः तेषां अग्नीषोमौ अभिप्रेत्य स्यात् । एवं अर्थान्यत्वे अर्थयोः स्वामिदेवतयोः अन्यत्वे भिन्नत्वे सति यथासंख्यं प्रयोगः स्यात् । प्रकृतौ एकवचनान्तस्य स्वामिनमपेक्ष्य प्रयोगः द्विबहुयजमानकेषु च ऊहेन प्रयोगः । द्विवचनान्तस्य देवताद्वंद्वमपेक्ष्य प्रकृतौ प्रयोगः बह्वीषु देवतासु सतीषु ऊहेन प्रयोगः इति यथासंख्य



प्रयोगः स्यात् । स्वाम्यपेक्षया एकवचनान्तः देवतापेक्षया द्विवचनान्तः इति यथासंख्यता । अयं द्वितीयः पूर्वपक्षः ।

**स्वामिनो वैकशब्द्यादुत्कर्षो देवतायां स्यात् पत्न्या द्वितीयशब्दः स्यात् । ३५ ॥**

वाशब्दो द्वितीयपक्षनिरासार्थः । अध्रिगुप्रैषे मेधपतिशब्दः स्वामिनो बोधकः स्यात् । एकवचनान्तः यजमानपरः द्विवचनान्तस्तु देवतापरः इति वैलक्षण्यं तु न युक्तं ऐकशब्द्यात् एकस्य शब्दस्य एकस्मिन्नेव वाक्ये अनेकार्थत्वस्य अन्याय्यत्वात् । ननु द्विविधौ अपि मेधपतिशब्दौ देवतापरावेव किं न स्यातां इति चेन्न, एकवचनान्तमेधपतिशब्दस्य एकदेवताके विकारे उत्कर्षः स्यात्, स च प्रकरणविरुद्धः । तस्मान्न देवतापरः । किन्तु स्वामिपर एव । ननु द्विवचनस्य का गतिः स्वामिपरत्वे ? उच्यते । द्वितीयशब्दः द्विवचनं पत्न्या स्यात् पत्नीं अभिप्रेत्य द्विवचनं युज्यते । तथा च प्रकृतौ यजमानमभिप्रेत्य मेधपतये इत्येकवचनं पत्नीयजमानौ अभिप्रेत्य मेधपतिभ्यां इति द्विवचनम् । पशुगणे तु यत्र यजमानविवृद्धिः तत्र ऊहेन तयोः प्रवृत्तिः मेधपतिशब्दः नैव देवतापरः इति तृतीयः पक्षः ।

**देवता तु तदाशीष्ट्वात् संप्राप्तत्वात् स्वामिन्यनर्थिका स्यात् । ३६ ॥**

तुशब्देन तृतीयं पक्षं निरस्य चतुर्थं सिद्धान्तपक्षमाह । देवता मेधपतिशब्दार्थः स्यात् । तदाशीष्ट्वात् ताभ्यां देवताभ्यां आशास्यते हविरनेन स मन्त्रः तदाशीः, तस्य भावः तदाशीष्ट्वं तस्मात् देवतापरत्वं मन्त्रगतमेधपतिशब्दस्य । ' आशासाना मेधपतिभ्यां मेधं उपनयत मेध्या दुरः ' इति । स्वामिनि तु मेधपतिशब्दस्य स्वामिपरत्वे तु सा आशीः अनर्थिका स्यात् संप्राप्तत्वात् स्वामिनः पशुः प्राप्त एव पूर्वमपि, इति पुनराशासनं व्यर्थम् । तस्मात् मेधपतिशब्दः देवतापर एव । तस्मात् देवताबहुत्वे एव ऊहः ।

**उत्सर्गाच्च भक्त्या तस्मिन् पतित्वं स्यात् ।३७॥**

अध्रिगुप्रैषगतमेधपतिशब्दो देवतापर इति सिद्धान्त उक्तः । यत्तु तस्मिन् यजमाने पतित्वं मेधपतित्वं तत् भक्त्या गौण्या वृत्त्या । उत्सर्गात् ' अग्नीषोमाभ्यामिदं न मम ' इति यजमानेन पशोरुत्सर्गः कृतो भवति इति उत्सर्गकर्तृत्वात् गुणात् यजमानस्य मेधपतित्वं स्यात् । मुख्यं तु मेधपतित्वं देवताया एव ।

**उत्कृष्येतैकसंयुक्तो द्विदेवतेऽसंभवात् । ३८ ॥**

अध्रिगुप्रैषगतमेधपतिशब्दस्य देवतापरत्वे द्विदेवते द्विदेवताके पशुगणे एकसंयुक्तः एकवचनान्तो मेधपतिशब्दः असंभवात् न संभवतीति कृत्वा उत्कृष्येत मेधपतिशब्दस्य एकदेवताके पशौ उत्कर्षः कर्तव्यः स्यात् इति यदुक्तं ' उत्कर्षो देवतायां स्यात् ' ( ९।३।१२।३४ ) इत्यत्र तत् परिहर्तव्यम् । अनुवादसूत्रमेतत् ।

**एकस्तु समवायात् तस्य तल्लक्षणत्वात् । ३९ ॥**

अध्रिगुप्रैषगतमेधपतिशब्दः एकः यः अग्नीषोमयोर्गणः तत्परः । समवायात् तस्मिन् गणे मेधपतिशब्दस्य वाचकत्वेन संबन्धात् । ' आशासाना मेधपतये देवतागणाय मेधं उपनयत ' इति उच्यते । तस्य गणस्य च तल्लक्षणत्वात् सः एकत्वरूपः गुणः लक्षणं यस्य तादृशत्वात् । गणस्य एकत्वात् एकवचनान्तमेधपतिशब्दवाच्यत्वं युज्यते इत्यर्थः । तुशब्दः चार्थः अनुक्तसमुच्चयार्थः द्विवचनान्तमेधपतिशब्दोऽपि गणगतावयवद्वयपरत्वेन उपपन्नः इति । तस्मात् एकवचनान्तो गणवाची मेधपतिशब्दः एकदेवताके पशौ नोत्कर्षणीयः ।

**संसर्गित्वाच्च तस्मात्तेन विकल्पः स्यात् । ४० ॥**

अध्रिगुप्रैषगतमेधपतिशब्दः द्विवचनान्तोऽपि क्वचित् पठ्यते मेधपतिभ्यां इति । तस्य देवतापरत्वेऽपि न विरोधः संसर्गित्वात् अग्नीषोमात्मकदेवतागणस्य । संसर्गी अयमर्थो देवता नाम । द्वावथा संसृष्टौ कदाचित् एका देवता भवति । द्वौ अर्थौ संसृष्टौ एकतां यातः तस्मात् एकवचनान्तः द्विवचनान्तोऽपि च मेधपतिशब्दः प्रकरणमेव अभिनिविशते । तस्मात् विरोधाभावात् तेन द्विवचनान्तेन सह एकवचनान्तस्य विकल्पः स्यात् प्रकृतावेव । विकृतौ तु बहुदेवताके ऊहेन प्रवर्तिष्यते ।

**एकत्वेऽपि गुणानपायात् । ४१ ॥**

अध्रिगुप्रैषगतमेधपतिशब्दः एकवचनान्तः पठ्यते । तत्र एकवचनेन एकत्वे विवक्षितेऽपि गुणानपायात् एकत्वस्य गुणस्य अग्नीषोमरूपदेवतागणे अन्तर्भूते अग्नौ

सोमे च प्रत्येकं अनपायात् अपायाभावात् तद्विवक्षया 'मेधपतये मेधं उपनयत' इति वक्तुं शक्यत्वात् एकवचनान्तस्यापि मन्त्रस्य प्रकरणान्नोत्कर्षः। देवताकारेण एकत्वात् एकवचनं मेधपतिशब्दस्योपपन्नम्। अग्नित्वसोमत्वाकारेण च द्वित्वात् द्विवचनमपि उपपन्नम्। तस्मात् देवतानुसारेण विकृतौ मेधपतिशब्दस्य ऊहः न यजमानानुसारेण इति सिद्धान्तः। के.

* 'मेधपतित्वं स्वामिदेवतस्य०' (० देवत्यस्य इति सुपाठः) इति आद्यसूत्रगतमेधपतित्वशब्दस्य 'स्वामिनो वा०' इत्यनन्तरसूत्रे अनुषक्तस्य लुप्तभावप्रत्ययस्यानुषङ्गः। सु. पृ. ६४७.

* मेधपतिशब्दस्य अध्रिगुप्रैषगतस्य एकवचनान्तस्य एकादशिन्यां बहुवचनान्तेन ऊहः। भा. ९।३।१४।४४. मीको. पृ. ३४० 'अध्रिगुप्रैषगतस्य मेधपतिशब्दस्यैकवचनान्तस्य एकादशिन्यामूहः' इत्यत्र अधिकरणं द्रष्टव्यम्। * मेधपतिशब्दस्य अध्रिगुप्रैषगतस्य एकवचनान्तस्य बहुदेवत्ये पशौ द्विवचनान्तेन विकल्पः। ९।३।१३।४२-४३. मीको. पृ.३४० 'अध्रिगुप्रैषगतस्य मेधपतिशब्दस्यैकवचनान्तस्य बहुदेवत्ये पशौ०' इत्यत्र अधिकरणं द्रष्टव्यम्।

* मेधाप्राप्तिः वचाभक्षणेन भवति। सु. पृ. ५९.

* 'मेधातिथेर्मेष:' इत्येवमादि इतिहासवचनमिव प्रतिभाति। इतिहासे च विधौ सति आदिमत्त्वादोषो वेदस्य प्रसज्येत। अस्तु इति चेत् तथा सति तस्याप्रामाण्यात् मेधातिथेर्हि काण्वायनस्य मेषः इत्यप्रसिद्धिः। भा. ९।१।१६।४४.

## मेष्यधिकरणम्।

अग्नीषोमीयपशुगताध्रिगुप्रैषः प्रास्मैपदघटितः अतिरात्रगतायां सारस्वत्यां मेष्यां न पठनीयः। कृत्वाचिन्ता॥

**लिङ्गविशेषनिर्देशात्समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वात्। ९।१।१७।४५॥**

**भाष्यम्**— अस्ति ज्योतिष्टोमः। तत्र पशवः समाम्नाताः 'आग्नेयः पशुरग्निष्टोमे आलब्धव्यः, ऐन्द्राग्नः पशुरुक्थ्ये, ऐन्द्रो वृष्णिः षोडशिनि, सारस्वती मेष्यतिरात्रे' इति। अस्ति तु अग्नीषोमीये अध्रिगुप्रैषः 'उपनयत मेध्या दुर आशासाना मेधपतिभ्यां मेधम्' इति। तत्र संदेहः किं सारस्वत्यां मेष्यामध्रिगुवचनं कर्तव्यम्, नेति। नन्वग्नीषोमीयार्थं तत्, चोदकेनेह प्राप्तमिति। अत्रोच्यते। सर्वेषां समानो विधिरिति कृत्वा चिन्ता। किं तावत् प्राप्तम्? समानविधानेषु पशुषु, अप्राप्ता सारस्वती मेषी अध्रिगुवचनम्। कुतः? लिङ्गविशेषनिर्देशात्। विशिष्टलिङ्गो ह्यध्रिगुवचनेन निर्दिष्टः, 'प्रास्मा अग्निं भरत' इति पुंपशुः, स्त्रीत्वं चास्याः। न च पुंवचनः स्त्रियमभिवदितुमलं भवति शब्दः। तस्मादध्रिगुवचनमप्राप्ता सारस्वती मेषीति।

**टुप्**— चतुर्षु पशुष्वेकवचनान्तोऽसमर्थ एव प्रास्मैशब्दः। उच्यते। प्रातिपदिकार्थस्तावद्विद्यते। वचनेन यथा प्रातिपदिकं नोत्कृष्यते तथा वक्ष्यामः पाशाधिकरणे (९।३।४)। तस्मात् समवेतवचनः, प्रातिपदिकार्थसंभवात्। स्त्री तु पुंलिङ्गेन न शक्यते वदितुम्। नात्र लिङ्गवचनमिव विभक्त्यर्थः। किन्तु प्रातिपदिकार्थो लिङ्गमित्युक्तम्। तस्मात् मेष्यामभावो युक्तः, असमवेतार्थत्वादिति सिद्धान्तवादी मन्यते, 'लिङ्गविशेषनिर्देशात्' इति।

**पश्वभिधानाद्वा, तद्धि चोदनाभूतं, पुंविषयं पुनः पशुत्वम्। ४६॥**

**भाष्यम्**— वाशब्दः पक्षं व्यावर्तयति। नैतदस्ति अप्राप्ता सारस्वती अध्रिगुवचनमिति। तस्यामप्यध्रिगुवचनं स्यात्। कुतः? प्रकरणात्। समानं प्रकरणं सर्वेषां पशूनामिति कृत्वा चिन्त्यते। तेन सारस्वत्या अपि प्राप्नोतीति। लिङ्गविशेषादयुक्तं तस्यामिति यदुच्यते, तन्न। पश्वभिधानात्। अस्ति तत्र पशुत्वं संनिहितम्। तदभिप्रेत्य 'प्रास्मा अग्निं भरत पशवः' इति ब्रूयात्। तद्धि चोदनाभूतं सर्वनामशब्दस्य पुंविषयत्वम्। तत् पशुशब्देनोच्यते। अस्ति च तत् मेष्याम्। तदभिप्रेत्य पशुशब्दसमानाधिकरणं सर्वनामशब्दं समुच्चारयिष्यति। एवं प्रकरणमनुग्रहीष्यते। तस्मात् प्राप्नुयात् सारस्वती अध्रिगुवचनमिति।

**टुप्**— पूर्वपक्षवादी तु मन्यते। पशुशब्देनात्र सामानाधिकरण्यं भविष्यति, 'प्रास्मै पशवे' इति।



तच्च पशुशब्दवाच्यं मेष्यामपि विद्यते। तस्मात् समर्थो निगदोऽयम्। 'पश्वभिधानाद्वा' इत्यनेन प्रतिपादयति।

**विशेषो वा तदर्थनिर्देशात्। ४७॥**

**भाष्यम्**— वाशब्दः एतं पक्षं व्यावर्तयति। नैतदस्ति प्राप्नुयात् सारस्वत्यध्रिगुवचनमिति। अयमन्यः पक्षः, न प्राप्नुयादिति। कुतः? विशेषो वा तदर्थनिदेशात्। पुमर्थं ह्येष शब्दो निर्देष्टुं शक्नोति। स्त्रीलिङ्गश्चायमर्थो मेषीति। स्त्रियं पुंशब्दो न शक्नोत्यभिवदितुमिति प्रथम एव पक्षः संकीर्तितः। केवलं परपक्षस्यानवक्लृप्तिर्वक्तव्या।

**टुप्**— 'विशेषो वा तदर्थनिर्देशात्' इति सिद्धान्तसूत्रेण प्रथमसूत्रार्थ एव स्मार्यते।

**पशुत्वं चैकशब्द्यात्। ४८॥**

**भाष्यम्**— अथ यदुक्तम्, पशुत्वाभिप्रायमेतद्वचनम्, एको हि शब्दः पशुत्वस्य च पशोश्च, तेन प्रास्मै पशव इत्यभिसंबन्धो भविष्यतीति। तत् परिहर्तव्यमिति।

**टुप्**— 'पशुत्वं चैकशब्द्यात्' इति पशुशब्दोऽयं पुंलिङ्गः। अस्मैशब्दोऽपि, तयोर्यत् सामानाधिकरण्यम्, तत् प्रति उच्चार्यते।

**यथोक्तं वा संनिधानात्। ४९॥**

**भाष्यम्**— यथोक्तं स्यात् अध्रिगुवचनं अप्राप्ता सारस्वती। कुतः? पूर्वस्मादेव कारणाल्लिङ्गविरोधादिति। यदुक्तम्, पशुशब्दसमानाधिकरणः सर्वनामशब्दः प्रयोक्ष्यते इति, तन्न। कुतः? संनिधानात्। संनिहितवचनो हि सर्वनामशब्दः। उच्चरितमात्रो यः पदार्थः शब्देन संनिहितः, तेन संबध्यते। अथ तस्मिन्नसति लिङ्गादिसर्वविशेषणविशिष्टे रूपेण संनिहिते प्रयुज्यते। संनिधाने नैकेन विशेषणेन विशिष्टां व्यक्तिमभिवदितुं शक्नोति। संनिधानात् तत्रैकं सामान्यं आश्रीयते, नान्यत् किञ्चित् पशुत्वादि। तत्रोच्चार्यमाणे पशुशब्दे, शब्देन व्यक्तेर्निष्कृष्टे पशुत्वे, 'अस्मै पशवे' इति शक्यते संबन्धः कर्तुम्। अनुच्चार्यमाणे तु लिङ्गविशेषवचनः प्राप्नोति। तस्मादप्राप्ता सारस्वत्यध्रिगुवचनमिति। कृत्वा चिन्तेयम्। अत्र प्रयोजनं न वक्तव्यम्। किमग्नीषोमीयार्थाः पशुधर्मा उत साधारणा इत्यस्मिन्नधिकरणे प्रयोजनाय विचारोऽयम्। यदि साधारणाः पशुधर्मास्ततः सारस्वत्यध्रिगुवचनमप्राप्ता, अथाग्नीषोमीयधर्मास्ततोऽस्यामध्रिगुवचनमूहेन प्राप्यते। न च प्रयोजनस्य प्रयोजनं वक्तव्यम्।

**टुप्**— 'यथोक्तं वा संनिधानात्' इति पूर्वपक्षवादिना यदुक्तं तदेतेन निराक्रियते। संनिहितवचनत्वं सर्वनामशब्दानां स्वभावः। उच्चरितमात्रः सर्वनामशब्दो यत्पदान्तरेण संनिधाप्यते, तेन सह शीघ्रं संबध्यते। न चेह पशुशब्द उच्चरितः, येन संबन्धः स्यात्। तस्मिन्नसति शब्दोपात्ते, संबन्धप्रकारः आश्रीयते प्रकरणाद्यालोचनेन। 'लिङ्गादिसर्वविशेषणविशिष्टे रूपेण संनिहिते प्रयुज्यते' इति कोऽर्थः: (आदिशब्दस्य रूपशब्दस्य च कोऽर्थः इति प्रश्नः) जातिलिङ्गसंख्याविशेषणविशिष्टां व्यक्तिमभिदधाति रूपेण स्वसामर्थ्येनेत्यर्थः। सर्वनाम्नामेतदेव सामर्थ्यम्, यदेतानि विपरिवर्तमानमेवाभिदधति। व्यक्तिस्तु विपरिवर्तते। अथवा, रूपेणेति रूपशब्देन विद्यमानं वस्त्वभिधीयते। तच्च विद्यमानं यदि विपरिवर्तते प्रकरणसंनिहितम्। संनिधाने नैकेन विशेषणेन विशिष्टां व्यक्तिमभिवदितुं शक्नुवन्ति। यत्रत् संनिधानविशिष्टं तत्तदभिदधति। तस्मात् संनिधानमेषां सामान्यं निमित्तम्। संनिहितं च पुंलिङ्गम्। यद्यपि स्त्रीलिङ्गमपि संनिहितं तथाप्ययमसमर्थः शब्दस्तत्र वर्तितुम्, पुंलिङ्गत्वात्। 'तत्रोच्चार्यमाणे पशुशब्दे' इति। उच्चार्यमाणः पशुशब्दः 'प्रास्मै पशवे' इति पुंलिङ्गेन पुंलिङ्गशब्दः शक्यः संबन्धयितुम्। अस्मिन् पक्षे व्यक्तितो निष्कृष्य पशुत्वम्, तेन सह संबध्यते अस्मैशब्दः, न व्यक्त्या। एतदपि पशुशब्दे उच्चार्यमाणे न भवतीत्युक्तमेव।

**शा**— प्रकरणाविशेषात् 'प्रास्मा अग्निं भरत' इति च पुंलिङ्गस्य अस्मैशब्दस्य नियतलिङ्गपशुशब्दाभिधेयपशुत्वाभिप्रायेण 'प्रास्मै पशवे' इत्येवं स्त्रियामपि उपपत्तेर्लिङ्गविरोधाभावात् तस्यामपि स्यादध्रिगुवचनम्। इति प्राप्ते, अभिधीयते। '**पशुशब्दश्रुतावेवं भवेन्न त्विह स श्रुतः। तस्मात् प्रयोगकाले यदपरोक्षतया स्थितम्॥ द्रव्यं, तत्र प्रयुक्तोऽयं पुंलिङ्गं वदितुं क्षमः। न स्त्रीद्रव्यमतो मेष्या-**

**मशक्तेर्न प्रवर्तते** ॥ ' तेन सामानविध्यपूर्वपक्षे अध्रिगोर्मेष्यामप्रवृत्तिः । ( **न च** पाशान् इति बहुत्ववत् विमक्तिवाच्यलिङ्गस्य अविवक्षया प्रवृत्तिः स्यात् इति वाच्यम् । त्रिकं प्रातिपदिकार्थः इति लिङ्गस्यापि प्रातिपदिकार्थत्वात्, विभक्तिविकाराणां स्मै–इत्यादीनां टाब्रादीनां च वाच्यं लिङ्गं इति पक्षेऽपि मेषीव्यतिरिक्तपशुषु लिङ्गस्य समवायेन विवक्षायां संभवन्त्यामविवक्षाकल्पनस्य अयुक्तत्वात् इति भावः । इदमत्रावधेयम् – अतिरात्रे आग्नेय–एन्द्राग्न–ऐन्द्र–सारस्वतीलक्षणाः चत्वारः पशवः इत्येकः पक्षः । सारस्वतमेषीलक्षण एक एव पशुः इत्यपरः । तत्र एकपशुपक्षे मेष्यामध्रिगुवचनस्य निवृत्तिरेव । चतुःपशुपक्षे तु तेषां समुच्चितानां सहालम्यतया अध्रिगुवचनस्य प्रतिपश्वावृत्त्यभावेन च इतरपश्वर्थतया वचनमनादृत्य प्रवृत्त्यवश्यंभावात् अप्रवृत्तिशब्देन मेष्यनभिधानमेव विवक्षितम्, न तु सर्वात्मना प्रवृत्त्यभावः इति ) सिद्धान्ते अग्नीषोमीयार्थत्वात् धर्माणामतिदेशेन पश्वन्तरगमनात् ऊहेन प्रवृत्तिः । १५.

**सोम**— पुंलिङ्गस्य पशुत्वाभिप्रायत्वे पूर्वपक्षे यथा मेष्यां प्रवृत्तिः तथा अग्नीषोमीयार्थोऽध्रिगुप्रैषः इति सिद्धान्तेऽपि तदभिप्रायेणैव पुंलिङ्गोपपत्तेः अविकारेणैव प्रयोगः स्यात् । इति सिद्धान्ते ऊहस्यापि एतदधिकरणव्युत्पाद्यपुंलिङ्गसमवायाधीनत्वेन अत्रैवास्य **संगतिः** । एवं च पूर्वाधिकरणस्य लिङ्गोहोपगमेन प्रवृत्त्या इहापि लिङ्गोहव्युत्पादनात् अवान्तरसंगतिरपि द्रष्टव्या । **सूत्रार्थस्तु** –समानविधानेषु पशुषु सारस्वती मेषी अध्रिगुवचनमप्राप्ता, तस्मिन् पुंलिङ्गनिर्देशात् अस्याश्च स्त्रीत्वात् ।

**वि**–– ' दैव्या इत्यस्ति मेष्यां नो वा, ऽस्मा इति पशूक्तितः । अस्ति, मैवं पश्वनुक्तेः पुंव्यक्तित्वविवक्षया ॥ ' क्त्वाचिन्ता ।

**भाट्ट**–– ज्योतिष्टोमे क्रतुपशवः समाम्नाताः । ' आग्नेयमजमग्निष्टोमे आलभते, ऐन्द्राग्नमुक्थ्ये द्वितीयम्, ऐन्द्रं वृष्णिं षोडशिनि तृतीयम्, सारस्वतीं मेषीमतिरात्रे चतुर्थीम् ' इति । अत्र तत्तत्संस्थाकत्वे निमित्ते प्रकरणात् क्रतुपशुसमाख्याबलाच्च ज्योतिष्टोमाङ्गत्वेन पशुयागा विधीयन्ते, न तु तत्तत्संस्थोद्देशेनैव । तेषां चाग्नीषोमीयाद्धर्मातिदेशः, न तु तेन समानविधानत्वमित्युक्तं तृतीये ( ३।६।७ )। अग्नीषोमीयाङ्गं चाध्रिगुप्रैषः ' प्रास्मा अग्निं भरत ' इत्यादिः । स क्रतुपशुष्वतिदेशेन प्राप्तः अतिरात्रे चतुर्णामर्थे तन्त्रेण पठनीयः ' प्रैभ्यो अग्निं भरत ' इत्यूहितव्यः, एवं मेष्यामपीत्यविवादम् । यदा तु पशूनां समानविधानत्वं तदा मेष्यर्थत्वमस्यास्ति न वेति चिन्त्यते । तत्र पुंलिङ्गस्य मेष्यामसमर्थत्वेऽपि ' अस्मै ' इति प्रातिपदिकार्थचतुर्थ्यर्थयोः प्रधानभूतयोः मेष्यां समवेतत्वात्, पुंलिङ्गस्य च गुणभूतस्य पाशाधिकरणन्यायेन ( ९।३।४ ) निर्देशमात्रार्थत्वात्, समस्तस्य मन्त्रस्य प्रकरणात् मेष्यर्थत्वमप्यविरुद्धम् । **न च** पुंलिङ्गस्य क्वचिद्विभक्त्यर्थत्वेऽपि क्वचित् प्रातिपदिकाद्यर्थत्वस्यापि सत्त्वात् कथं प्रातिपदिकार्थं प्रति लिङ्गस्य गुणत्वमिति **वाच्यम्** । विभक्त्यर्थत्वेऽपि संख्यायामिवानुभवस्य सत्त्वसमाख्याया वा लिङ्गेऽपि गुणत्वनियामकत्वात् । नहि संख्यायामपि विभक्त्यर्थत्वं गुणत्वनियामकम्, विरुद्धत्वात् । अतो लिङ्गस्य यत्किञ्चिदर्थत्वेऽप्यनुभवबलेन प्रातिपदिकार्थं प्रति कारकं प्रति च गुणत्वात् पाशाधिकरणप्रवृत्त्युपपत्तेः मन्त्रस्य मेष्यामपि प्रवृत्तिः । नच पुंलिगस्य पुंपशुषु प्रकृतेष्वर्थवत्त्वे तदनुरोधेन 'व्रीहीणां मेध' इत्यत्र गुणभूतव्रीहिपदानुरोधेनेव इतरमन्त्रस्य संकोचोपपत्तिः, ' पत्नीं संनह्य ' इत्यस्य एकवचनानुरोधेन एकपत्नीकप्रयोगमात्रविषयत्वाकल्पनवत् अस्यापि पुंपशुमात्रविषयत्वाकल्पनात् । अत एव प्रकृतमन्त्रेऽप्येकवचनानुरोधेन न दैक्षमात्रविषयत्वम्, गुणानुरोधेन प्रधानसंकोचस्यान्याय्यत्वात् । इतरथा मेष्यविषयत्ववत् सर्वपुंपशुविषयत्वस्याप्यनापत्तेः । अतः एवंविधेषु सर्वेषु वचनस्य लिङ्गस्य वा साधुत्वमात्रार्थं प्रयोगः । **न च** ' जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् ' ( पा० १।२।५८ ) इति स्मृत्या जातिमात्राभिधाने विवक्षिते तस्या एकत्वेऽपि बहुवचनं विकल्पेन भवतीत्यर्थिकया बहुष्वप्यर्थेषु जात्यभिप्रायेणैकवचनस्यानुशासितत्वादेकवचनप्रयोगसंभवेऽपि लिङ्गस्य कथं विलिङ्गे साधुत्वार्थं प्रयोग इति **वाच्यम्** । लिङ्गस्यापि ' सुतिङुपग्रहलिङ्गनराणाम् ' ( कालहलच्स्वरकर्तृयङां च । व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन ॥ '



सुप्, तिङ्, उपग्रहः परस्मैपदात्मनेपदे, लिङ्गम्, नरः प्रथममध्यमोत्तमपुरुषाः, कालः कालवाची प्रत्ययः लुट्लृडादिः, हल्, अच्, स्वरः उदात्तादिः, कर्तृशब्दः कारकमात्रपरः तथा च तद्वाचिनां कृत्तद्धितानां व्यत्ययः, यङ् यङो यशब्दादारभ्य लिङ्याशिष्यङ् इति ङकारेण प्रत्याहारः । ' व्यत्ययो बहुलं ' ( ३।१।८५ ) इति सूत्रे महाभाष्यम् । कौमुदी ) इत्यनेन छन्दस्यनुशासितत्वात्, ' प्रास्मै ' इति सर्वनाम्न उपस्थितव्यक्तिवाचित्वेन जात्यभिप्रायकत्वानुपपत्तेश्च, अस्य सूत्रस्य भाष्यकारेण प्रत्याख्यातत्वाच्च । अतो वचनवत् लिङ्गस्यापि प्रातिपदिकार्थगतलिङ्गमात्रोपलक्षणतया साधुत्वार्थं उपादानात् तदनुरोधेन प्रधानभूतसर्वमन्त्रसंकोचानुपपत्तेर्युक्तो मेष्यामप्यध्रिगुः । ' व्रीहीणां मेध ' इत्यत्र तु यवप्रयोगे साधुत्वार्थं प्रयोगः इत्यस्य वक्तुमशक्यत्वात्, पदद्वयरहितमन्त्रप्रयोगस्य च यावन्ति वाक्ये पदानि श्रुतानि, तावतां संभूयार्थप्रतीतिकारित्वनियमेन वक्तुमशक्यत्वात् युक्तः एव व्रीहिप्रयोगमात्रे संकोचः । एतादृशनियमानङ्गीकारे चेष्ट एव पदद्वयरहितमन्त्रप्रयोगः केषांचित् **याज्ञिकानाम्** । वस्तुतस्तु पुंलिङ्गमपि मेष्यां प्रातिपदिकस्य चोदनागतपशुशब्दाभिप्रायत्वात् पशुशब्दस्य नित्यं पुंलिङ्गत्वात् ' प्रास्मै पशवे ' इत्युपपत्तेः समवेतमेव, **इति प्राप्ते**, मन्त्रे पशुशब्दाश्रवणात् ' प्रास्मै ' इति शब्देन प्रयोगकाले यदपरोक्षतया स्थितं तत् परामर्ष्टव्यम् । तदा च व्यक्तिरेव न पशुशब्दः, अतः पुंलिङ्गनिर्देशात् पुंव्यक्तिरेवाभिधीयते, न स्त्रीद्रव्यं मेषी । अतो न तावत् समवेतं मेष्यां लिङ्गम् । नाप्यसमवेतत्वेऽप्येकवचनवत् साधुत्वार्थं मेष्यां प्रयोगः, स्त्रियां पुंल्लिङ्गस्यानुशासनाभावेन साधुत्वे प्रमाणाभावात् । प्रकृते पुंपशूनामपि सत्त्वेन व्यत्ययानुशासनस्याप्रवृत्तेः । अत एव यत्र स्त्रीमात्रविषयं पुंलिङ्गं तत्रैव व्यत्ययानुशासनप्रवृत्तिः । नहि ' दृष्टानुविधिश्छन्दसि ' इति विधानं दर्शनाभावे प्राप्नोति । नापि पुंलिङ्गस्य प्रातिपदिकार्थगतलिङ्गमात्रोपलक्षणत्वम्, लक्षणायां प्रमाणाभावात् । इतरथा बहुतरपदसंकोचानुरोधेन एकस्य ' व्रीहीणाम् ' इत्यस्यैव पदस्य प्रकृतपुरोडाशीयप्रकृतिद्रव्योपलक्षणत्वापत्तेः । अतो मन्त्रपदानामसति वचने मुख्ये एवार्थे विनियोगात् तदनुरोधेन संकोचोऽपि नायुक्तः । वचने तु ' पत्नीं संनह्य ' ' प्रास्मा अग्निं भरत ' इत्यादौ पत्न्यादेः संस्कार्यत्वात् प्रातिपदिकस्यानेकव्यक्तिपरत्वेऽपि प्रत्येकव्यक्तिवृत्त्येकत्वविवक्षया एकवचनस्यापि लक्षणां विनैवोपपत्तेर्न सकलस्य मन्त्रस्य संकोचः । संभवति ह्यनेकास्वपि व्यक्तिषु शुक्लगुणस्य प्रत्येकवृत्तितया ' शुक्ला घटाः ' इत्यादौ विशेषणत्ववत् एकत्वस्य प्रत्येकवृत्तितया सर्वप्रातिपदिकार्थविशेषणत्वम् । नह्यत्र लिङ्गस्य मेषीरूपप्रातिपदिकार्थे अवृत्तित्ववत् एकत्वस्य कस्यामपि पत्न्यां पशौ वा अवृत्तित्वमस्ति । न चैवं प्रातिपदिकार्थबहुत्वेऽपि बहुवचनानापत्तौ ' बहुषु बहुवचनम् ' इत्यस्य निर्विषयत्वापत्तिः, बहुत्वस्य शाब्दप्रतीतिविषयत्वविवक्षायां तदुपपत्तेः । न चैवं ' पशुना यजेत ' इत्यादावप्येकवचनस्य प्रत्येकवृत्तित्वेनापि उपपत्तेरनेकद्रव्योपादानेऽपि बाधकानापत्तिः, तत्र गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वात्, प्रथमातिक्रमे कारणाभावाच्च अनेकद्रव्योपादाने प्रमाणाभावेनैकवचनेन ऐच्छिकद्रव्यान्तरव्यावृत्त्युपपत्तेः । अतश्च ' पत्नीं संनह्य, प्रास्मै ' इत्यादावेकवचनस्यानेकेषु लक्षणां विनैवोपपत्तेर्न मन्त्रसंकोचकत्वम् । **न चैवं** गुणभूतेऽपि लक्षणापरिहारार्थं प्रधानस्य संकोचाभ्युपगमे ' अदितिः पाशान् ' इत्यादौ बहुवचने लक्षणापरिहारार्थं प्रधानभूतस्य प्रातिपदिकादेरुत्कर्षोऽपि किं न स्यात्, न ह्येकस्मिन् बहुवचनं लक्षणां विनोपपद्यते, इति **वाच्यम्** । गुणभूतानुरोधेन प्रधानभूतस्य संकोचेऽपि प्रकरणबाधप्रसङ्गेनोत्कर्षे प्रमाणाभावात् । संकोचे तु अवर्जनीयत्वान्नान्तरीयकसंनिधिबाधेऽपि उत्कर्षे नान्तरीयकत्वाभावेन तद्बाधस्यान्याय्यत्वात् । सामान्यसंबन्धबोधकप्रमाणाभावेनोत्कर्षानुपपत्तेश्च । अतः सिद्धं मेष्यामध्रिगुप्रैषः अनङ्गमिति । **प्रयोजनं** ' स्थूलपृषतीं ' इत्यादौ अध्रिगुप्रैषे ' प्रास्यै ' इत्यूहः, लिङ्गस्य प्रकृतौ समवेतत्वात् । पूर्वपक्षे तु अनूहः साधुत्वार्थत्वात् । अत एवोहोपयोगोऽपि । स्त्रीद्रव्यकत्वसादृश्यात् मेषीयागमात्रप्रकृतिकत्वाङ्गीकारे तु अध्रिगुप्रैषस्याप्रवृत्तिरेव सिद्धान्ते । क्त्वाचिन्तोद्घाटने तु मेष्यामप्यूहः प्रागेव दर्शितः । वस्तुतस्तु **आश्वलायनेन**

' पुंवन्मिथुने ' ( श्रौसू. ३।२।१२ ) इत्यनेन स्त्रीपुंससमवाये पुंलिङ्गस्यैव विधानात् कृत्वाचिन्तोद्घाटनेऽप्यूहः । लक्षणयैव तूभयलिङ्गप्रकाशनं वाचनिकम् । १६.

**मण्डन**— 'सामानविध्येऽग्निगुयुङ् न मेषी ।' १९.

**शंकर**-- ' मेष्यामग्निगुबाधः स्यात् । ' २५.

* **मेष्यधिकरणन्यायः ।** अष्टरात्रे विश्वजिति प्रथमेऽहनि ' अवभृथादुदेत्य वत्सत्वचं परिधत्ते ' । उपरिधारणे परिदधाति इति सहस्रशः प्रयोगात् तत्र एकस्या एव वत्सत्वचो विधानसंभवे मेष्यधिकरणन्यायेन एकवचनलक्षणाया अन्याय्यत्वात् उपरिधारणे एव वत्सत्वचो विधानम् । **भाट्ट.** १२।३।१.

* **'मैत्रं** श्वेतमालमेत, वारुणं कृष्णम्, अपां चौषधीनां च संधावन्नकामः ' इति अस्यां विकृतौ ज्योतिष्टोमीयाग्नीषोमीयपशुप्रकरणस्थपादामन्त्रयोः एकवचनद्विवचनान्तयोः अतिदेशः । तत्र च उभयोरपि द्विवचनान्तत्वेन विपरिणामः कर्तव्यः । **वि.** ९।३।४, * ' मैत्रं श्वेतमालमेत, वारुणं कृष्णम् ' इति द्विपशुके यागे अग्निप्रैषे ' सूर्यं चक्षुर्गमयतात्, वातं प्राणमन्ववसृजतात्, दिशः श्रोत्रम् ' इत्यादौ चक्षुरादिशब्दे द्विवचनान्तत्वेनोहो न कर्तव्यः । ९।३।१०.

* **मैत्राबार्हस्पत्यो** यागः राजसूये रत्निनां हविष्षु अन्यतमः । तत्र ' स्वयंकृता वेदिर्भवति, स्वयंकृत इध्मः ' । तत्र लुप्तोपकाराणामङ्गानां नानुष्ठानं अलुप्तोपकाराणामेवानुष्ठानम् । इति उद्धननादिकं न कर्तव्यम्, बर्हिस्तरणादिकं तु कर्तव्यम् । **वि.** १०।१।१.

* **मैत्रायणीयानां** अग्निः अन्वारोहेषु परिसमाप्यते न सर्वेषाम् । **भा.** २।४।२।२०. * मैत्रायणीयानां ' स एष श्वः प्रतिगृह्यते ' इत्येकरूपोपक्रमोपसंहारविधिना विस्पष्टमेव प्रतिग्रहीतुरिष्टिरिति गम्यते, तथापि तैत्तिरीयशाखावाक्येन दातुरिष्टिः सिद्धा । **वा.** ३।४।११।३१ पृ. ९६९. * मैत्रायणीयानां समिदादयः प्रयाजा न समाम्नायन्ते । अथ च गुणाः श्रूयन्ते ' ऋतवो वै प्रयाजा समानीय होतव्याः ' इति । **भा.** २।४।२।३१.

* **मैत्रावरुण** एव ऋतुयाजेषु प्रैषान् ब्रूयात् । **संकर्ष.** २।३।१३. **मीको.** पृ. २८७७ ' प्रैषान् मैत्रावरुण एव० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * मैत्रावरुणः प्रैषे अध्वर्युविकारः अनुवचनेषु च होतुविकारः । **भा.** १०।७।६।१९, * मैत्रावरुणः मित्रावरुणौ ' मित्रं वयं हवामहे ' इति पुनरभ्युन्नीते सोमे यजति । ३।२।१२।३०. * मैत्रावरुणः यत्र प्रैषश्चानुवाक्या च सहोच्येते तत्रैव, न केवलप्रैषेषु केवलानुवचनेषु च । प्रैषानुवचनाधिकरणम् । ३।७।२१।४३–४५. * मैत्रावरुणः सदसि स्थित्वा प्रेष्यति अध्वर्युस्तु उत्तरवेद्यां स्थित्वा । **संकर्ष.** २।३।१३. * मैत्रावरुणः होतुः पुरुषः । द्वितीयवर्गस्थोऽयम् । अयं अर्धी दक्षिणाया अर्धं षड् गाः लभते । मैत्रावरुणं प्रतिप्रस्थाता दीक्षयति द्वादशाहे दीक्षायाम् । **वि.** ३।७।१७.

* **मैत्रावरुणेन** पशोः सूक्तवाकप्रैषो वक्तव्यः ' अग्निमद्य ' इति । मैत्रावरुणश्च पशौ अस्ति पुरोडाशे नास्ति । **भा.** १२।२।१२।३१. * ' **मैत्रावरुणाय** दण्डं प्रयच्छति ' इयं संप्रदाने चतुर्थी कारकविभक्तिरूपा विनियोक्त्री श्रुतिः । **बाल.** पृ. ४४. * मैत्रावरुणाय दण्डदानं अर्थकर्म, न प्रतिपत्तिः ज्योतिष्टोमे । ४।२।६।१६–१८. **मीको.** पृ. २००० ' दण्डदानन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * मैत्रावरुणाय दण्डदानस्य प्रयोजकं प्रैषानुवचनं सोमे । **भाट्ट.** ४।२।६, * मैत्रावरुणाय सत्रे सर्वेषां दण्डानां दानम् । ४।२।६. * **मैत्रावरुणस्य** अग्नीषोमीये पशौ अस्ति भक्षः । १०।७।६।१८–१९. **मीको.** पृ. ११७ 'अग्नीषोमीये पशौ मैत्रावरुणस्य०' इत्यत्र अधिकरणं द्रष्टव्यम् । * मैत्रावरुणस्य अग्नीषोमीये पशौ एक एव भागः । १०।७।७।२०–२१. **मीको.** पृ. ११८ ' अग्नीषोमीये पशौ मैत्रावरुणस्य एक एव भागः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * मैत्रावरुणस्य ग्रहस्यैव श्रयणं ' पयसा मैत्रावरुणं श्रीणाति ' इति वचनात् । **भा.** ३।६।११।३२, * मैत्रावरुणस्य प्रैषानुवचनकर्तृत्वम् । ३।७।२१।४३ –४५. **मीको.** पृ. २८८० ' प्रैषानुवचनाधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * मैत्रावरुणस्य वैराजं पृष्ठं विश्वजिति । **भा.** ७।३।३।८.

* **मैत्रावरुणी** आमिक्षा वैश्वदेव्याः आमिक्षायाः धर्माणां ग्राहिका । **भा.** ७।३।१०।२६–२७. * 'मैत्रा-



वरुणीमामिक्षां वशा दक्षिणा ' इतीयं चतुर्थी अवेष्टिः राजसूये । **भाट्ट.** ११।४।३. * **मैत्रावरुण्यामामिक्षायां** ' न वाजिनेन प्रचरन्ति ' इति निषेधः । **भा.** ७।३। १०।२६.

* **मैत्रावरुणादिग्रहेषु** श्रयणार्थेषु पयआदिषु प्रदेयधर्मा नानुष्ठेयाः । ९।४।१२।४५–५०. **मीको.** पृ. १८२४ ' ज्योतिष्टोमे मैत्रावरुणादिग्रहेषु० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **मैत्रावरुणादिग्रहापेक्षया** ऐन्द्रवायवस्य प्रथममनुष्ठानं ज्योतिष्टोमे । १०।५।१७।६२–६४, कामसंयोगेऽपि ऐन्द्रवायवस्य ग्रहस्य पाठप्राप्ते स्वस्थाने एवानुष्ठानम् । १०।५।१८।६५–६६.

* **मैत्रावरुणग्रहः** चतुर्थो ज्योतिष्टोमे मन्त्रकाण्डविधिकाण्डयोः । **वि.** १०।५।१७, * मैत्रावरुणग्रहः ज्योतिष्टोमे प्रातःसवने गृह्यते । २।३।१.

* **मैत्रावरुणदण्डदानन्यायः** ( ४।२।६ ) । न च प्रागुक्तमपि एकमेव मानवस्त्रात् भिन्नं वस्त्रमुपादाय तेनैव प्रत्यहं उपावहरणं ( अहर्गणे ) कर्तव्यमिति वाच्यम्, उपावहरणवस्त्रस्य ग्रावस्तुते दानविधानात् तस्य च मैत्रावरुणदण्डदानन्यायेन ग्रावस्तोत्रीयानुब्रुवाणग्रावस्तुदुत्साहजनकत्वेन प्रात्यहिकत्वावश्यंभावात् । **भाट्ट.** १०।६।१९.

* **मैत्रावरुणपात्रे** पयस्यां निदधाति ज्योतिष्टोमे । विद्यमानाया एवायं एकदेशसंयोगः न तु अन्यतः । **भा.** ३।८।१८।३३.

* **मैत्रावरुणप्रैषे** सवनीयपशुगते ' अयं यजमानः ' इत्यत्र ' अयं सुतासुती यजमानः ' इति पाठविकारः । **वि.** १२।२।१२.

* **मैत्रावरुणसाम** शाक्करं विश्वजिति सर्वपृष्ठे । **भा.** १०।६।५।१४.

* **मोक्षः** ज्ञानात् भवति । कथम् ? इत्थम् । यो हि देहात् विविक्तं अनन्तं अजरं अमरं अदुःखमात्मानं जानाति, तस्य देहसंप्रयोगविरक्तस्य पूर्वकृतानां कर्मणां फलोपभोगेन क्षयात् तन्निमित्ते शरीरे पतिते अनागतानां च कर्मणामननुष्ठानादेव असत्त्वात् देहान्तरानुत्पत्तेः अत्यन्तासंबन्धः शरीरेण भवति । ' तत्र ज्ञातात्मतत्त्वानां भोगात् पूर्वक्रियाक्षये । उत्तरप्रचयासत्त्वाद् देहो नोत्पद्यते पुनः ॥ कर्मजन्योपभोगार्थं शरीरं न प्रवर्तते । तदभावे न कश्चिद्धि हेतुस्तत्रावतिष्ठते ॥ मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः । नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया ॥ प्रार्थ्यमानं फलं ज्ञातं न चानिच्छोर्भविष्यति । आत्मज्ञे चैतदस्तीति तज्ज्ञानमुपयुज्यते ॥ ' **श्लोवा.** संबन्धाक्षेपपरिहारे १०८–१११, **रत्नाकरश्च.** * मोक्षः ब्रह्मविषयकसविलासाज्ञाननिवृत्तिः । **रहस्य.** पृ. ३. * मोक्षः । शरीरसंबन्धो बन्धः । तदभावो मोक्षः । तेन निष्पन्नानां देहानां यः प्रध्वंसाभावः यश्च अनुत्पन्नानां प्रागभावः स मोक्षः । कर्मनिमित्तश्च बन्धः कर्मक्षयादेव न भवति । **रत्नाकरः.** संबन्धाक्षेपपरिहारे १०६. * **मोक्षस्य** धर्मविशेषस्यापि ब्राह्मणपरिव्राजकवत् भेदेनोपादानम् । **सु.** पृ. १२७.

* ' **मोक्षार्थी** न प्रवर्तेत तत्र काम्यनिषिद्धयोः । नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया ॥ ' ( श्लोवा. संबन्धाक्षेपपरिहारः ११० ) इत्यनेन न्यायेन काम्यनिषिद्धवर्जनात् तत्फलोपभोगार्थं शरीरानुत्पत्तिः । **सु.** पृ. ३२९. * यः स्वर्गं न कामयते बन्धात्मकत्वात् **मोक्षार्थी** तस्य कर्मस्वरूपे एव कर्तव्यता ( न फले ) । **टुप्.** ६।३। १२ पृ. १४०८, * **मोक्षार्थिना**ऽपि अवश्यं पापक्षय एषितव्यः, तस्मिन् (अ–)सति मोक्षाभावात् । ६।३। १२.

* **मोक्षवादः ।** कः पुनरयं मोक्षो नाम । विचित्रवासनावशेन विचित्रनीलपीतादिरूपेण प्रवहतो ज्ञानसंतानस्य निःशेषवासनोच्छेदात् नीलपीतादिवैचित्र्यं हित्वा केवलं संविन्मात्रेणावस्थानं इति **केचित् । अपरे** तु दीपसंतानस्येव ज्ञानसंतानस्योपरमम् । उभयमप्येतत् बाह्यार्थाभावमूलं इति तत्सद्भावप्रतिपादनेनैव निराकृतम् ।

**अपरे** तु प्रपञ्चविलयं अपवर्गमाहुः । अविद्यानिर्मितो हि प्रपञ्चः स्वप्नप्रपञ्चवत् प्रबोधेनैव ब्रह्मविद्यया अविद्यायां विलीनायां स्वयमेव विलीयते । तथाहि श्रुतिः ' यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् ' इति ।

तदिदमपि प्रपञ्चस्य अविद्यानिर्मितत्वनिराकरणेन परमार्थत्वप्रतिपादनात् निरस्तमेवेति । 'आत्मैवेदं सर्वम्' इति सर्वस्यात्मा भोक्ता इत्यर्थः । यथा 'यः कामयेत राष्ट्रं स्याम्' इति राष्ट्रस्य भोक्ता इत्यर्थः, यथा 'यः कामयेत सर्वमिदं भवेयम्' इति सर्वस्य भोक्ता भवेयमित्यर्थः, तथा 'आत्मा सर्वम्' इति सर्वस्यात्मा भोक्तेत्यर्थः ।

यत्तु 'यत्र हि द्वैतमिव भवति' इति द्वैतभावस्य भ्रान्तित्ववचनं तदौपचारिकम् । यथा खलु स्वप्नप्रपञ्चइन्द्रजाल–मृगतोयादिः कियन्तंचित् कालं दृष्टिपथमापन्नः पश्चात् विलीनो भोग्यतामतिवर्तते, तथा अयं शरीरेन्द्रियविषयरूपप्रपञ्चोऽपि अस्य आत्मनः कियन्तंचित् कालं उपभोग्यः सन् पश्चात् विनाशात् अनुपभोग्यो भवति इत्यनेन सादृश्येन भ्रान्तिः इति उपचारेणोच्यते, पुरुषाणां विषयभोगेषु आस्थानिवर्तनेन मुक्तौ अभिरुचिं जनयितुम् । यदपि 'यत्र त्वस्य सर्वमात्मैवाभूत्' इति मुक्तौ आत्मनः अद्वितीयत्ववचनम्, तदपि न प्रपञ्चस्वरूपनिषेधार्थम्, किन्तु सत एव प्रपञ्चस्य आत्मसंबन्धनिषेधार्थम्, 'अस्य' इति वचनात् । नहि अत्र एतावदुच्यते 'यत्र सर्वं आत्मैवाभूत्' इति, किं तर्हि ? 'यत्र त्वस्य सर्वमात्मैव' इति । तेन अस्यायमर्थः, यत्र यस्यामवस्थायां मुक्तौ इत्यर्थः, अस्य आत्मनः दृश्यत्वेन दर्शनसाधनत्वेन दर्शनायतनत्वेन वा न किञ्चित् अन्यत् संबन्धि विद्यते, किन्तु आत्मैवास्य सर्वं नान्यत् किञ्चित् तदा केन कं पश्येदिति । यथा लोके यस्य न किञ्चिदपि बान्धवो वित्तं वाऽस्ति स एवं वदति 'न मे किञ्चिदस्ति अहमेव सर्वम्' इति तत्र संबन्ध्यन्तरं न किञ्चिदस्ति इत्येतावद्विवक्षितम्, एवं मुक्तौ आत्मैवात्मनः सर्वं इति संबन्ध्यन्तराभावमात्रं विवक्षितम्, न प्रपञ्चस्वरूपाभावः । तस्मात् न प्रपञ्चविलयो मोक्षः, किन्तु प्रपञ्चसंबन्धविलयः । त्रेधा हि प्रपञ्चः– पुरुषं बध्नाति भोगायतनं शरीरम्, भोगसाधनानीन्द्रियाणि, भोग्याः शब्दादयो विषयाः । भोग इति च सुखदुःखविषयः अपरोक्षानुभव उच्यते । तदस्य त्रिविधस्यापि बन्धस्य आत्यन्तिको विलयो मोक्षः । किमिदं आत्यन्तिकत्वम् ? पूर्वोत्पन्नानां शरीरेन्द्रियविषयाणां विनाशः, अनुत्पन्नानां चात्यन्तिकोऽनुत्पादः । कथमत्यन्तानुत्पत्तिः ? उत्पादकयोः धर्माधर्मयोः निःशेषयोः परिक्षयात् । सोऽयं प्रपञ्चसंबन्धो बन्धः, तद्विमोक्षश्च मोक्षः ।

ननु एवं अशेषधर्मक्षयात् मुक्तस्य न किञ्चित् सुखं स्यात्, ततश्च अपुरुषार्थो मोक्षः स्यात् । नैष दोषः । नहि धर्मजन्यो मुक्तस्य आनन्दः, तथा सति उत्पत्तिमत्त्वात् विनाशी स्यात् । तत्र अपुनरावृत्तिश्रुतेः विरोधः स्यात् । स्वाभाविकस्तु आत्मानन्दः संसारेणाभिभूतः सन् निर्मुक्तसंसारस्य अभिव्यक्तौ भोग्यो भवति । स्वाभाविकत्वे च आनन्दस्य 'आनन्दं ब्रह्म' इत्यादिश्रुतिसहस्रं प्रमाणम् । **ननु** सुखाभावेऽपि श्रुतिरस्ति 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति । **सत्यम्**, विषयसुखाभिप्रायं तु एवंजातीयकम्, अन्यथा आनन्दश्रुतिविरोधात् । अथ सुखाभाववचनबलेन आनन्दवचनमेव दुःखाभावाभिप्रायं किमिति न व्याख्यायते सुखाभाववचनानां अत्यल्पत्वात् तेषामेव अन्यथाकरणं युक्तम्, न भूयसां आनन्दवचनानाम् । किञ्च, आनन्दशब्दस्य दुःखाभावपरत्वे अत्यन्तस्वार्थहानिः स्यात्, सुखशब्दस्य तु सामान्यवचनस्य विशेषेऽपि व्याख्याने नातीव स्वार्थहानिः इति तदेव युक्तम् ।

ननु विद्यमानोऽपि आनन्दः अननुभूयमानः अकिञ्चित्कर एव । न च युक्तस्य सर्वकरणहीनस्य आनन्दानुभवः संभवति । स्वप्रकाशोऽयमानन्दः इति चेन्न, संसारावस्थायामप्रकाशात् । ननु तत्रापि आनन्दस्वभावः पुरुषः प्रकाशते एव, आत्मनि प्रेमोत्पत्तेः । नहि असुखे प्रेमोत्पत्तिः संभवति नाप्यविज्ञाते सुखे । ( उत्तरम्– ) किमिदानीं अस्माभिः आत्मा सुखरूपोऽनुभूयते ? सत्यमिति ब्रुवाणस्य अतिसाहसिकस्य नोत्तरं वाच्यम् । यदि संसारिणोऽपि परमानन्दं अनुभवेयुः, ततो मुक्तस्य न कश्चिदतिशयः इति तदेव अपुरुषार्थत्वं मोक्षस्यापद्येत । अतो बलात् असुखरूपस्यापि आत्मनः प्रेमविषयत्वं दृष्टत्वात् अङ्गीकर्तव्यम् । अथ स्वप्रकाशोऽपि आनन्दः संसारावस्थायामभिभूतः न प्रकाशते, ( तदा ) कोऽयं प्रकाशमानस्य अभिभवो नाम ? प्रकाशनिवारणं हि



अभिभवः, न च प्रकाशमानस्य अप्रकाशनं संभवति । यदि तु नैव प्रकाशते संसारावस्थायाम्, तस्यामवस्थायां असतः प्रकाशस्य मुक्तावस्थायां उत्पद्यमानस्य कारणं वक्तव्यम् । विज्ञानमेव च प्रकाशाख्यस्य फलस्य कारणम्, तच्च इन्द्रियाधीनम् । न च मुक्तस्य इन्द्रियाणि संभवन्ति, इति कथं आनन्दानुभवः स्यात् । उच्यते । बाह्येन्द्रियाण्येव मुक्तस्य निवर्तन्ते मनस्तु तस्यामवस्थायामनुवर्तते इति आनन्दश्रुतिबलादेव अध्यवसीयते, एवं ज्ञानं च, 'नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति श्रुतेः, विज्ञानघनश्रुतेश्च । तस्मात् मुक्त्यवस्थायां मानसप्रत्यक्षेण परमानन्दमनुभवन् आत्माऽवतिष्ठते । तदुक्तम् 'निजं यत्त्वात्मचैतन्यमानन्दश्चेष्यते च यः । यच्च नित्यविभुत्वादि तैरात्मा नैव मुच्यते ॥' इति ।

यत्तु 'तस्मात् कर्मक्षयादेव हेत्वभावेन मुच्यते । न ह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वकारणम् ॥' इति वार्तिकं ( श्लोवा. संबन्धाक्षेपपरिहारः १०६–१०७ ) तत् परमतं इत्येवं आनन्दमोक्षवादिनो मतम् ।

**अपरे त्वाहुः**, अभावात्मकत्ववचनमेव स्वमतं उपपत्त्यभिधानात्, आनन्दवचनं तु उपन्यासमात्रत्वात् परमतम् । नहि मुक्तस्य आनन्दानुभवः संभवति, करणाभावात् । मनः स्यादिति चेत्, न, अमनस्कत्वश्रुतेः 'अमनोवाक्' इति ।

यत्तु 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति, तत् ज्ञानशक्त्यभिप्रायम्, अन्यथा हि सुषुप्तावपि ज्ञानानुवृत्तिरुक्ता स्यात्, सा च संविद्विरुद्धा इत्युक्तम् । एवं विज्ञानं ब्रह्म विज्ञानघनः इत्यादीनामपि शक्तिपरत्वं वेदितव्यम् । स्वयमेव श्रुत्या शक्तिपरत्वं व्याख्यातम् 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति' इति भूतेन्द्रियनाशात् आत्माऽपि प्रमाणागोचरत्वमापन्नो विनष्ट इव भवतीति । न तस्य इतःप्रेतस्य मुक्तस्य संज्ञाऽस्तीति । संभवति च शक्तस्यापि ज्ञानाभावः इति नास्ति विरोधः । अनया च श्रुत्या सर्वविज्ञानश्रुतयः शक्त्यभिप्राया व्याख्याताः । ( ननु ) यदि शक्तिरस्ति ततः तस्यां अवस्थायां केन ज्ञानानुत्पत्तिः ? ज्ञानसाधनानां इन्द्रियाणां ज्ञेयानां च विषयाणामभावात् । एवं अर्थान्तरज्ञाने साधनाभावान्निराकृते सति आत्मानमेव मुक्तावस्थायां जानातु इत्याशङ्क्याह 'विज्ञातारमरे केन विजानीयात्' इति । न हि आत्माऽपि विना साधनेन ज्ञातुं शक्यते । मनसा खल्वसौ संसारावस्थायां ज्ञायते । न च मुक्तस्य मनःसंबन्धोऽस्ति, अतः केनात्मानं जानातु इति व्यक्त एव मुक्तस्य आत्मज्ञानस्याभावः ज्ञानशक्तिमात्रस्यावस्थानं श्रुत्या दर्शितम् । तस्मात् निःसंबन्धः निरानन्दश्च मोक्षः । शा. पृ. १२५–१२८.

* मोक्षवादः । कः पुनर्मोक्षः ? अत्र **केचित्**, संस्काराजनकानुभवध्वंसो मुक्तिः इति । **केचित्तु** दुःखप्रागभावासहवृत्तिदुःखसाधनध्वंसो मुक्तिः इति । दुःखमग्रसंसारबीजमिथ्याज्ञानध्वंसः मुक्तिः **इत्यपरे** । शरीरेन्द्रियबुद्ध्यादितन्निदानधर्माधर्मध्वंसः **इत्यन्ये** ।

आत्यन्तिकदुःखप्रागभावो मोक्ष इति **गुरवः** । संस्काराजनकभोगविषयदुःखध्वंसः इति **केचित्** । समानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वंसो मुक्तिः इति **मणिकृत्** ।

प्रपञ्चसंबन्धविलयो मुक्तिः इति **वेदान्तिनः** । प्रपञ्चसंबन्धो बन्धः । तस्य आत्यन्तिकविलयो मोक्षः । तथाहि, भोगायतनभोगसाधनभोगविषयाणां शरीरेन्द्रियाणां संबन्धात् आत्मा बद्ध इत्युच्यते । एतत्कारणधर्माधर्मपरिक्षयात् एतेषामात्यन्तिको विलयः पूर्वनाशपरानुत्पादस्वरूपः ।

न चैवं अपुरुषार्थत्वापत्तिः । सुखवत् दुःखानुत्पादस्यापि पुरुषार्थत्वात्, तत्संबन्धविलयपूर्वकनित्यानन्दरूपात्माभिव्यक्तेः मुक्तित्वाङ्गीकाराद्वा । तस्य सुखस्य नित्यतया धर्मजन्यत्वाभावात् ।

आत्मनश्च सुखात्मकत्वे मुक्तावस्थायां तन्नित्यत्वे च 'आनन्दं ब्रह्मणो रूपम्' 'न स पुनरावर्तते' इत्यादिश्रुतयो मानम् ।

यत्तु 'अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशतः' इति मुक्तस्य सुखाभाववत्त्ववचनम्, तत् प्रपञ्चसुखाभिप्रायम् ।

ननु मनःशरीराद्यभावात् कथं तत्रानन्दानुभवः । न च तस्यानन्दस्य स्वप्रकाशत्वम्, संसारावस्थायां तादृशस्य

अननुभवात् । न च तदानीमभिभवात् न तादृगनुभव इति वाच्यम् । स्वप्रकाशस्य अभिभवासंभवात् इति चेत् । तस्य आनन्दस्य 'अत्रायं पुरुषः स्वयंज्योतिः' इति श्रुतिसिद्धस्वप्रकाशतया आत्मरूपानन्दानुभवस्य लोकसिद्धकारणान्तरानपेक्षत्वात् । तदुक्तम्– 'निजं यच्चात्मचैतन्यमानन्दश्चेष्यते च यः । यच्च नित्यविभुत्वादि तेनात्मा नैव मुच्यते ॥' इति ।

अतो नित्यसुखाभिव्यक्तिर्मुक्तिः इत्याहुः ।

**तन्न ।** 'विज्ञातारं केन विजानीयात् अस्य सर्वमात्मैवाभूत् केन कं पश्येत्' इति च मोक्षकाले ज्ञानाभावप्रतिपादकश्रुतिविरुद्धत्वात् । आत्मनश्च न विज्ञानसुखादिरूपत्वम् 'आनन्दं ब्रह्मणो विद्वान्' 'स एको ब्रह्मण आनन्दः' इति श्रुत्या भेदप्रतीतेः । 'मम न किमपि सुखम्, केवलं दुःखमेव' इत्यनुभवात् । 'ता एताः प्रजा अहरहर्ब्रह्मलोकं यन्ति, अहरहरागच्छन्ति' इति सुषुप्तिमुक्त्योः सादृश्यप्रतिपादकश्रुत्या आनन्दात्मकत्वनिषेधाच्च । सुषुप्त्यवस्थायां आनन्दानुभवाभावात् । अतो न नित्यसुखाभिव्यक्तिर्मुक्तिः ।

तस्मात् प्रपञ्चस्य सर्वथा विलयो मुक्तिः । स च दुःखाभावरूपत्वात् पुरुषार्थः । तेन सुखदुःखोपभोगाभावो मोक्ष इति फलितम् । तथा च श्रुतिः 'प्रियाप्रिये न स्पृशतः' इति ।

न चैवं आनन्दश्रुतिविरोधः । 'मन आनन्दम्' इति श्रुतेः मनस आनन्दधर्मत्वात् । तदानीं तु 'अमनस्कम्' इतिश्रुत्या मनोऽभावेन 'विज्ञातारं केन विजानीयात्' इतिश्रुत्या च तदानीं आनन्दानुभवनिषेधात् । 'अलं वा अरे इदं विज्ञानाय' इति तु शक्तिमात्रपरम् । ( इदं आत्मरूपम्, विज्ञानाय पदार्थ विज्ञातुं अलं समर्थं इति एतच्छ्रुत्यर्थो गृहीतो मणिकारेण । के. )

किञ्च, आनन्दप्रियाभाववचनयोः विरोधे प्रमाणान्तरोपपत्तिभ्यां आनन्दवचसो दुःखाभावपरत्वं परिकल्प्य तत्परिहारः, उभयत्रापि सामान्योपादानात् । अतः उक्तरीत्यैव विरोधपरिहारः इति आत्यन्तिकदुःखाभाव एव मोक्ष इति ।

न चैवं सुखस्यापि नानुपादेयत्वम्, इति पुमर्थत्वम् ( किन्तु उपादेयत्वमेव, इति नञ्द्वयेन बोध्यम् ) । मधुविषभोजनदुःखवत् सुखस्यापि बहुतरदुःखानुबद्धत्वेन हेयत्वात् ।

न च एवमपि वर्तमानदुःखानां स्वभावेन विरोधिगुणान्तरोत्पत्त्या वा नाशात् आगन्तूनां प्रतियोग्यभावात् अतीतानां अतीतत्वादेव नाशासंभवात् न मोक्षः साध्यः स्यात् इति वाच्यम् । सुखदुःखहेतुधर्माधर्मोच्छेदस्य पुंव्यापारसाध्यत्वात् । तथाहि, संचितानां प्रारब्धानां च अदृष्टानां भोग–आत्मज्ञान–नैमित्तिकप्रायश्चित्तानुष्ठानेन नाशात् काम्यानुष्ठानजन्यानां तदननुष्ठानेन अनुत्पादात् विहितानुष्ठाननिषिद्धाकरणाभ्यां प्रत्यवायपरिहाराच्च सुखदुःखजनकधर्माधर्मनाशात् पूर्वशरीरनाशे मुक्तो भवति ।

अत एव ज्ञानकर्मणोः समुच्चयेन जनकता । ज्ञानेन संचितानां उत्पन्नधर्माधर्माणां नाशः, नित्यकर्मभिश्च तदनुत्पत्तिः । अन्यथा नित्याकरणजन्यप्रत्यवायेन शरीरोत्पत्तिप्रसङ्गात् । तस्मादुभयोरपि शरीरोत्पत्त्यभावसंपादकतया मोक्षजनकता । प्रारब्धकर्मणां तु न कर्मभिः, न ज्ञानेन नाशः, किन्तु भोगेनेति ।

**न च** 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन' इति ज्ञानस्यैव शरीरोत्पत्त्यभावसंपादकतया मोक्षजनकत्वमस्तु, किं कर्मणा इति **वाच्यम् ।** ज्ञानवतोऽपि विहिताननुष्ठाननिषिद्धाचरणाभ्यां प्रत्यवायोत्पत्तेः । तेन ज्ञानकर्मणोः समुच्चयेन जनकत्वम् । तत्रापि उपनिषज्जन्यात्मज्ञानं दृष्टोपयोगित्वात् क्रत्वर्थम् । उपासनात्मकं तु दृष्टोपयोगाभावात् 'सर्वान् कामानवाप्नोति' 'न स पुनरावर्तते' इत्यादिवाक्यशेषाच्च अभ्युदयफलकं निःश्रेयसफलकं चेति विवेकः ।

अतः सिद्धो ज्ञानकर्मसमुच्चयः इति संक्षेपः । तदुक्तम् । 'सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण वा' इति । 'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।' 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ।' तमभ्यर्च्य तं ज्ञात्वेत्यर्थः । 'तस्मात् तत्प्राप्तये यत्नः कर्तव्यः पण्डितैर्नरैः । तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामते ॥ उभाभ्यामिव पक्षाभ्यां यथा खे पक्षिणां



गतिः । तथैव ज्ञानकर्मभ्यां प्राप्यते ब्रह्म शाश्वतम् ॥' इति ।

ब्रह्मप्राप्तिर्मुक्तिः इति **जीर्णाः ।**

नव्यास्तु 'तमेव विदित्वाऽतिमृत्युमेति, नान्यः पन्था विद्यतेऽयनाय' इति श्रुत्या 'न कर्मणा न प्रजया' इति श्रुत्या च मोक्षे ज्ञानातिरिक्तसाधननिषेधात् तीर्थस्नानमहादानकाशीमरणादिकर्मणां ज्ञानद्वारैव मोक्षजनकत्वाच्च ज्ञानमेव साक्षात् मोक्षजनकम् । कर्म तु ज्ञानजनकान्तःकरणशुद्धिजनकम् ।

न च 'तमेव' इति आत्मातिरिक्तविषयकज्ञानस्य मोक्षजनकत्वपरिसंख्या इति वाच्यम् । ज्ञानस्य मोक्षजनकत्वेन नियतप्राप्त्यभावात् परिसंख्यानुपपत्तेः । वाक्यान्तरप्राप्तपरिसंख्यायां तत्तद्वाक्यानां 'नान्यः पन्थाः' इति निषेधस्य चानुपपत्तिः ।

एतेन उपनिषज्जन्यज्ञानातिरिक्तभाषाग्रन्थादिजन्यज्ञानपरिसंख्या इति परास्तम् । अध्ययनविधिनैव तत्सिद्धेः ।

न चैवं उपनिषदध्ययनजन्यतत्त्वज्ञानस्य त्रैवर्णिकेष्वेव संभवात् शूद्रादीनां मुक्तिर्न स्यादिति वाच्यम् । तेषामपि 'श्रावयेच्चतुरो वर्णान्' इति पुराणश्रवणविधिना तज्जन्यार्थज्ञानसत्त्वात् मुक्तिसिद्धेः । अतोऽयं ज्ञानस्य मोक्षसाधनत्वविधिः, 'नान्यः पन्थाः' इति तदतिरिक्तकर्मणः साक्षात्साधनत्वनिषेधः । 'न चतुस्त्रिंशदिति ब्रूयात्, षड्विंशतिरित्येव ब्रूयात्' इतिवत् । एतन्निषेधवशादेव कर्मणां मोक्षसाधनत्वबोधकश्रुतयः परंपरासाधनत्वपराः । अत एव 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' इति श्रुतेः अविद्यारूपकर्मणः मृत्युतरणशब्दलक्षिताज्ञाननाशस्य आत्मज्ञानद्वारकत्वबोधकश्रुतिरपि संगच्छते । 'न कर्मणा' इत्यादि श्रुतिरपि परंपरया मोक्षसाधने संन्याससादृश्यनिषेधनद्वारा संन्यासप्राशस्त्यबोधिका कर्मणां परंपरया साधनत्वं बोधयति, न साक्षात् । एवं 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुतिरपि कर्मणां ज्ञानार्थत्वमेव बोधयति, न साक्षात् मोक्षार्थत्वमिति ।

न चैवं ज्ञानेन संचितकर्मविनाशेऽपि शरीरजनकनित्याकरणजन्याधर्मविनाशायोगात् मोक्षो न स्यादिति वाच्यम् । तस्य संचितविनाशकत्ववत् अधर्मानुत्पादकत्वस्यापि अङ्गीकारात्, उत्पन्ननाशाङ्गीकाराद्वा ।

न चैवं वेदान्ताध्ययनजन्यतत्त्वज्ञानोत्तरं मुक्तिः स्यात् इति वाच्यम् । प्रारब्धस्य प्रतिबन्धकत्वात् ।

न चैवं संचितानां प्रायश्चित्तेन, प्रारब्धानां भोगेन नाशात् नित्यकर्मभिश्च अनुत्पादात् तत्त्वज्ञानस्य अनुपयोग इति वाच्यम् । सुखभोगयोग्यदेहजनकधर्मविनाशद्वारा तस्य मोक्षोपयोगित्वात् इति **जीर्णाः ।**

अन्ये तु तत्त्वज्ञानस्य संचितनाशकत्ववत् प्रारब्धनाशकत्वमपि । तत्त्वज्ञानव्यक्तिविशेषस्यैव मोक्षजनकतया तदुत्तरमेव मुक्तिः । जीवन्मुक्तादिव्यवहारस्तु शरीररूपदुःखसत्त्वेन बाधात् भाक्तः इत्याहुः । **मणि.** पृ. ५५–५९.

* **मोक्षसंबन्धि** यत् तत् वेदप्रभवम् । **वा.** १।३।१।२ .

* '**मोघमन्नं** विन्दते अप्रचेताः' अयं निषेधयुक्तवाक्यान्तरकल्पनात् मन्त्रकल्प्यः प्रतिषेधः । **बाल.** पृ. ३०.

* **मोदकापूपपायसानां** दानभक्षणादि सदाचारः । **वा.** १।३।३।७ पृ. २०५.

* '**मौद्गं** चरुं निर्वपेत् श्रीकामः' अत्र मुद्गानां माषचणकादयः प्रतिनिधिर्न भवन्ति, 'अयज्ञिया वै माषाश्चणकाः कोद्रवाः' । **वि.** ६।३।६. * **मौद्गे** चरौ प्राकृतबर्हिःस्तरणमन्त्रे हरितपदस्थाने रक्तपदस्य ऊहः । ९।३।२।३. **मीको.** पृ. १२२६ 'ऊहः रक्तपदस्य०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **मौनिना** स्वाभिप्रायप्रकाशनद्वारा अर्थज्ञापनं अक्षिनिकोचादिना क्रियमाणं न श्रेयःसाधनम् । **सु.** पृ. ३१८.

* **म्रक्षणशब्दस्य** मैथुने प्रयोगो दृश्यते । **सु.** पृ. १४७६.

* **म्लेच्छाः** पक्षिणां पोषणे बन्धने च अभियुक्ततराः । **भा.** १।३।५।१०. * 'येषां दर्शनमात्रेऽपि

वेद एव न पठ्यते । संभाषाऽपि च न म्लेच्छैः सहार्यावर्तवासिनाम् ॥ तत्र तेषु प्रसिद्धोऽर्थः कथमार्यैः प्रतीयताम् ॥ ' ( इदं पूर्वपक्षे ) । वा. १।३।५।१०.

* **म्लेच्छेभ्यः** अन्त्यजनपदवासिभ्यः आर्यावर्तनिवासिनां समीचीनतरः आचारो भवति । भा.२।३।२।३ .

* 'तस्मायैव सेवादौ गृहादिषु च कौशलम् । **म्लेच्छानामधिकं** तद्वदभिधेयार्थनिर्णये ॥ ' वा. १।३।६।१०,

* यस्तु कथमपि अविनष्ट एव शब्दः म्लेच्छानामपि प्रयोगविषयमापन्नः तस्य च आर्यवदेव अनादिवृद्ध-व्यवहारपरंपरया अर्थं जानन्ति तत् किं तेषां निराकर्तुं शक्यते । १।३।५।१० पृ. २२८.

* **म्लेच्छादीनां** दुर्गमदेशव्यवस्थितानां वेदव्यवहाराभावः । ऋजु. पृ. १५५. * यानि पुनः अनुपपन्नवेदसंभावनानां **म्लेच्छादीनां** अतीन्द्रियार्थस्मरणानि तेषां मूलकल्पनावेलायामेव चोदना संभावनापदं नारूढा इति मिथ्यात्वहेतुभूतचतुष्टयपारिशेष्यात् अप्रमाणत्वम् । संभावितायां पुनश्चोदनायां कारणान्तरनिषेधे कृते निर्मूलत्वासंभवात् परिशेषसिद्धं चोदनामूलत्वम् । वा. १।३।१।२.

* **म्लेच्छार्यप्रयोगविप्रतिपत्तौ** बलाबलविचारः । वा. १।३।४।९ पृ. २१९.

* **म्लेच्छदेशाः** अनन्ताः । ' अनन्तम्लेच्छदेशांश्च कः सर्वानुपलप्स्यते । अनन्तेषु हि देशेषु कः सिद्धः क्वेति गम्यताम् ॥ ' वा. १।३।५।१० पृ. २२५.

* **म्लेच्छप्रयोगः** । 'दृष्टार्थेषु तु ( कर्मसु ) तुल्यत्वमार्यम्लेच्छप्रयोगिणाम् । ' वा. १।३।४।९ पृ. २१९.

* **म्लेच्छप्रसिद्धोऽर्थः** पिकनेमादिशब्दानां ग्राह्यः, न तु निगमनिरुक्तादिना कल्पनीयः । पिकनेमाधिकरणम् । १।३।५।१०.

* **म्लेच्छप्रसिद्धिः** आर्यविरुद्धा नादरणीया । आर्याविरोधे आर्याप्रसिद्धौ च म्लेच्छप्रसिद्धिरपि आदरणीया । पिक– नेम– तामरस– इत्यादिशब्दार्थविषये निर्णयोऽयम् । वि. १।३।६, * **म्लेच्छप्रसिद्ध्या** वराहशब्दस्य कृष्णशकुनिरर्थः, स न ग्राह्यः । आर्यप्रसिद्ध्या तु सूकर इत्येवार्थो ग्राह्यः । १।३।५.

* **म्लेच्छभाषा** ' न म्लेच्छभाषां शिक्षेत ' इत्येवमादिस्मृत्यनुसारेण हिमवद्विन्ध्यान्तरालकृष्णमृगसंचरणाद्युपलक्षितधर्माधिकृतार्यावर्तनिवासिभ्यति रिक्तबर्बरादिभाषागतस्य म्लेच्छितत्वसमानाधिकरणापशब्दत्वज्ञानात् तेन भाषणं प्रतिषिध्यते । युक्तं च तस्य अशेषतदीयाचरणवत् परिहरणीयत्वम् । वा. १।३।८।२४पृ. २५८.

* ' यथा साध्वनुरूपत्वात् प्रमादाशक्तिजेष्वपि । जायते वाचकभ्रान्तिस्तथैव **म्लेच्छभाषिते** ॥ ' वा. १।३।४।९ पृ. २१९.

## य

* ' **यजतिस्तु** द्रव्यफलभोक्तृसंयोगात्०' ( २।३।५।१४ ) इति न्यायेन यागं विना द्रव्यदेवतान्वयायोगः । सु. पृ. ७४३. * यजतिः भावनाविधानार्थः ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इत्यादौ । भा. ११।१।१।३, * यजतिः यत्र श्रूयते तत्र अहीनभूतस्य द्वादशाहस्य प्रवृत्तिः । ८।२।५।२५, * यजतिः समुदायवचनः ' दर्शपूर्णमासाभ्यां यजेत ' इति । किमर्थं तर्हि दर्शपूर्णमासशब्दः ? नित्यानुवादमात्रम् ( श्रुत्यर्थविधानपक्षे) । ११।१।१।३, * **यजतेः** त्यागार्थत्वम् । २।२।१।१. * यजतेः देवपूजादानान्यतरवाचित्वम् । संकर्ष. २।४।१. * यजतेः न विवक्षा गुणे फलकल्पनायाम् । भा. १।४।२।३. * यजतेः स्वत्वध्वंसरूपफलवाचित्वम् । स्वत्वध्वंसरूपफलोपलक्षित–देवतोद्देश्यक–द्रव्यत्यागो यजिवाच्यः । मणि. पृ.१०२. * ' **यजतिषु** ये यजामहं करोति नानुयाजेषु ' अयं क्रत्वर्थः उद्देश्यविशेषणपर्युदासविधिः । बाल. पृ. २०, * ' यजतिषु ये यजामहं करोति नानुयाजेषु ' अयं पर्युदासविधिः दृष्टार्थः । पृ. २१. * यजतिषु ' ये यजामहे ' इति मन्त्रः अनारभ्यवादेन प्राप्तः । नानुयाजेषु इति च अनुयाजेषु प्रतिषेधः । तत्र अनुयाजवर्जितेषु यजतिषु ' ये यजामहं करोति ' इति पर्युदासः न तु विकल्पः । भा. १०।८।१।१–४.



* **यजत्यर्थः** । ' इदं द्रव्यं नेतःप्रभृति कस्मिंश्चित् स्वकार्ये विनियोक्ष्यामि ' इति संकल्परूपे मानसे त्यागे, वाचिके च न ममेतिशब्दोच्चारणरूपे कृतेऽपि हस्तादिना उपादाय क्वचिद्देशे निक्षेपरूपं कायिकं त्यागं विना यागापर्यवसानम् । सु. पृ.१५२७. * **यजत्यर्थस्य** यत् कार्यं तत् प्रधानम् । तद्धि कर्तव्यतया चोद्यते । भा. ९।१।१।१ वर्णकं २.

* **यजतिचोदनः** सोमः, दर्विहोमाः पुनः जुहोतिचोदनाः । भा. ८।४।५।१२. * **यजतिचोदनाः** अहीनाः, आसनोपायिचोदनानि सत्राणि । वि. १०।६।१६. * **यजतिचोदनात्** स्वामिनां च अस्थितपरिमाणत्वात् अहीनत्वम् । भा.१०।६।१७।६१.

### ☒ यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् । ४।२।१२।२७ ॥

अत्र सूत्रे यागलक्षणं उच्यते यागप्रयोगो वा कथ्यते । यजतिचोदना यजति यजेत् यजेत इति यजधातुः द्रव्यं च देवता च ' न मम ' इति त्यागरूपा क्रिया च तेषां समाहारं द्रव्यदेवताक्रियं ब्रवीति, एतावान् यागपदार्थः । यजतिचोदनायाः समुदाये द्रव्यदेवतात्यागसमुदाये कृतार्थत्वात् अर्थतः परिपूर्णत्वात् । के.

* ' यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् ' इत्यत्र देवतोद्देश्यकस्वत्वत्यागो यागः, स एव प्रक्षेपसहितो होमः इति वक्ष्यते । कु.३।४।१८।४७. * उत्पन्नशिष्टगुणविधौ तु उत्पत्तिवाक्यस्थितामिक्षादिपदस्य द्रव्यसामान्यपरत्वे तत्पदवैयर्थ्यापत्तिः तद्धितार्थास्येति सर्वनाम्ना ' **यजतिचोदना द्रव्यदेवताक्रियं**० ' इति **न्यायेन** यागचोदनामात्रेण च द्रव्यसामान्यलाभात् । अद्वैत. २।२९।४०–४१.

### ☒ यजतिचोदनासु प्रक्षेपान्तत्वम् ॥

' आग्नेयोऽष्टाकपालो भवति ' ' वैश्वदेव्यामिक्षा ' इत्यादौ द्रव्यदेवतासंबन्धमात्रश्रवणेन जुहोतेरश्रवणादारण्योत्सर्गादाविव त्यागमात्रं कर्तव्यं नाहुतिः । **इति प्राप्ते,** यजतेर्देवपूजादानान्यतरवाचित्वेन देवता गन्धादिभिरिज्यते, विप्राय दीयते इत्यादौ च त्यज्यमानद्रव्यस्य प्रक्षेपान्तताप्रतीतेर्देवताविग्रहाद्यभावेन परस्वत्वमात्रस्यानुत्पत्तावप्यस्त्येव प्रक्षेपः । अत एव ' मध्येऽग्नेराज्याहुतीः पश्चाहुतीः पुरोडाशाहुतीश्च जुहोति' इति श्रुतिरुपपद्यते । संकर्ष. २।४।१.

* **यजतिचोदनोत्पत्तिषु** पुनः सिद्धयोः त्यागदेवतोद्देशयोः जुहोतिः प्रवर्तमानः प्रक्षेपमात्रवचनो विज्ञायते । वा. ३।४।१४।४१ पृ. ९८६.

* **यजतिचोदनत्वे** सति अहर्गणसाध्यत्वमहीनत्वम् । १०।६।१६।६०–६१. ' सत्रत्वमासनोपायिचोदनत्वम्० ' इत्यत्र द्रष्टव्यम् ।

* **यजति–जुहोति–इत्यादौ** शब्दान्तरं कर्मभेदकं प्रमाणम् । २।२।१।१. ' शब्दान्तराधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* यजति–ददाति–जुहोति–इत्यादिभ्यः यज्याद्यर्थश्च गम्यते भावयेदिति च । भा. २।१।१।१ .

* **यजतिपदाभ्यासात्** कर्मभेदः ' समिधो यजति, तनूनपातं यजति ' इत्यादौ । भा. २।२।२।२ .

* द्रव्यदेवताक्रिये **यजतिशब्दो** वर्तते । भा. ६।१।१।२.

* **यजतिशब्दवाच्यमेव** धर्मं समामनन्ति ' यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ' इति । भा. १।१।२।२.

* ' **यजनीयेऽह्नि** सोमश्चेद् वारुण्यां दिशि दृश्यते । तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद् द्विजातये ॥' अयं दण्डकल्प्यः प्रतिषेधः । बाल. पृ. ३०.

* **यजमानः** एक एव ज्योतिष्टोमे । वि. ३।३।१४, * ' यजमानः एककपालः ' इत्यत्र एककपालस्य यजमानशब्देन स्तुतिः, न तु यजमानशब्दो नामधेयं नापि गुणविधिः । १।४।१३. * यजमानः गृहपतिरेव सत्रे शुक्रान्वारम्भादियाजमानकर्ता, न यः कोऽपि । १२।४।१३।३४. * यजमानः द्विपत्नीको बहुपत्नीकश्चास्ति । भा. ९।३।६।२०. * ' यजमानः प्रस्तरः ' इति समाम्नायते । तत्र किमेष गुणविधिः किमर्थवादः इति संदेहे एवंजातीयकः अर्थवादः न विधिः इति सिद्धान्तः ( ' यजमानः प्रस्तरः ' इति यजमानशब्दः प्रस्तरस्य स्तावकः, उभयोः कर्मसाधकत्वात् ) । भा. १।४।१२।

२३-१. **मीको.** पृ. १९१० 'तत्सिद्ध्यधिकरणम्' इत्यत्र द्रष्टव्यम् । * यजमानः महाव्रते तार्प्यं परिधत्ते । तस्य प्राकृतेन अहतवाससा समुच्चयः । १०|४|७|१३-१५. * यजमानः यत्र गुणभूतो विधीयते, तत्र येन केनचित् यजमानेन स विधिः सिध्यति, यथा 'यजमानसंमितौदुम्बरी भवति' 'शुक्रं यजमानोऽन्वारभते' इति । **भा.** ९|१|१३|४०, * 'यजमानो यूपः' इति तत्र गुणविधिः अर्थवादः इति संदेहः । अर्थवादोऽयं न गुणविधिः इति सिद्धान्तः । १|४|१२|२२-३. * यजमानो यूपं नावसृजेत् अञ्जनादिपरिव्याणान्तम् । वि. ५|२|५. * 'यजमानो वा एककपालेषु वैश्वानर्यां च वपायाम्' इत्यादिना अवदानेन यजमानस्य मरणमुक्तम् । **संकर्ष.** २|२|१६. * याजमानानेव पदार्थान् परिक्रयादीन् कुर्वन् यजते इत्युच्यते **यजमानः** । **भा.** ६|१|४|१७. * **यजमानाः** अस्थियज्ञे जीवन्तोऽवशिष्टाः । १०|२|१७|४८-४९. * यजमाना एव ऋत्विजः स्युः सत्रे । १०|६|१५|५१-५९. 'सत्रे यजमाना एव ऋत्विजः' इत्यत्र द्रष्टव्यम् । * यजमानाः सत्रे बहवः । १०|६|१४|४५-५०. 'सत्रे यजमानाः बहवः' इत्यत्र द्रष्टव्यम् । * **यजमानेन** कर्मसु त्यागः स्वयं कर्तव्यः, इतरत् ऋत्विग्द्वारा । ३|७|८|१८-२०. 'शास्त्रफलाधिकरणम्' इत्यत्र द्रष्टव्यम् । * यजमानेन व्रीहिमयं संकल्प्य न यवमयो दातव्यः 'नानृतं वदेत्' इति निषेधात् । **वा.** ३|४|४,१३ पृ. ९४३. * 'यजमानेन संमितः' इति वचनात् यूपादेः पञ्चारत्नित्वादि यजमानस्य अरत्निनैव । **संकर्ष.** १|४|९. * यजमानेन साङ्गकर्मणि त्यागमात्रं कर्तव्यम्, इतरत् सर्वमृत्विग्भिः कर्तव्यम्, तदर्थमेव तेषां परिक्रीतत्वात् । साक्षात् परंपरया च यजमानस्यैव सर्वकर्तृत्वात् फलभोक्तृत्वं यजमानस्य न विरुद्धम् । शास्त्रफलाधिकरणम् । **वि.** ३|७|८, * यजमानेन सप्तदशत्वमृत्विजां ज्योतिष्टोमे । ३|७|१८. * यजमानेन सर्वं स्वयं वा कर्तव्यं परिक्रयेण वा कारयितव्यम् । **वा.** ३|८|२|८. * यज्ञे दक्षिणां **यजमानेन** विभज्य यस्य यावान् भाग आभजति स्वयमेव तस्य तावान् कल्पयितव्यः, न परिषदा । **भा.** १०|३|१२|५०. * यथैव अध्वर्युणा पदार्थाः कर्तव्याः तथैव यजमानेन अप्रमादार्थं प्रत्यवेक्षितव्याः । **वा.** ३|८|७|१७, * **यजमानात्** भक्षो नापनीयते होतुः याज्यापनयेऽपि ज्योतिष्टोमे ऋतुग्रहयाजेषु यजमानस्य स्वयंयाज्यापाठपक्षे । ३|५|१८|४४-४६. * **यजमानस्य** अनुमन्त्रणं दर्शपूर्णमासयोः द्वादशानां कर्मणां मध्ये केषुचित् । **भा.** ३|८|९|२०. * यजमानस्य आत्मीयमेकत्वमपि षष्ठं अनुपादेयम् । **बाल.** पृ. ९७. * यजमानस्य ऐष्टिकेषु इडादिभक्षाः सन्त्येव ज्योतिष्टोमे । **वि.** १२|१|१५. * यजमानस्य ज्योतिष्टोमे ऋतुग्रहयागेषु स्वयंयाज्यापाठपक्षे वषट्कारनिमित्तः अस्ति भक्षः । ३|५|१८|४४-४६. **मीको.** पृ. १२४३ 'ऋतुयाजेषु स्वयंयाज्यापाठे०' इत्यत्र द्रष्टव्यम् । * यजमानस्य द्वावाकारौ क्रियाकर्तृत्वं फलभोक्तृत्वं च । तयोः क्रियानिष्पत्तिर्दृष्टा फलभोगस्तु अदृष्टः । **वि.** ३|७|२. * यजमानस्य परिक्रयेण सर्वत्र स्वयंकर्तृत्वमुपपादितम् । **वा.** ३|८|१|१. * यजमानस्य प्रतिनिधिर्नास्ति । सत्रे अन्यतमयजमानमरणे तत्स्थाने नियुक्तः प्रतिनिधिरेव यद्यपि तस्य यजमानधर्मवत्त्वं तथापि न तस्य सत्रफलभाक्त्वम् । **वि.** ६|३|७-९. * यजमानस्य प्रधानापूर्वाश्रयत्वम् । **वा.** ३|८|२|७, * यजमानस्य प्रोषितस्यापि द्रव्यत्यागेन उपपद्यते यजमानत्वम् । ३|८|६|१६. * यजमानस्य फलमाशासितव्यं नाध्वर्योः, दर्शपूर्णमासयोः अग्न्यन्वाधाने । वर्चोन्यायः । ३|८|१३|२६-२८. * यजमानस्य यानि कर्माणि तान्यनुष्ठातुमेव परिक्रीता ऋत्विजः । **वि.** ३|८|१०. * यजमानस्य याज्यायाः पक्षद्वयं विहितम्, होत्रे प्रत्यर्पणं स्वयं वोच्चारणं ज्योतिष्टोमे ऋतुग्रहयागेषु । **वा.** ३|५|१८|४४. * यजमानस्य सोमवमने सौमेन्द्रचरुः प्रायश्चित्तं न तु ऋत्विजामपि ( यजमानसोमपानव्यापत्तौ सोमेन्द्रश्चरुः ) । ३|४|१३|३४-३६. 'सोमेन्द्रः चरुः यजमानपानव्यापदि' इत्यत्र द्रष्टव्यम् । * पुरुषार्थानि प्रधानकर्माणि **यजमानस्य** भवन्ति । **भा.** ३|८|२|४. * सायं होमे कृते यदा नाम यजमानस्य कदाचिदापद् भवति तदा



यथाकथंचित् प्रातर्होमः कर्तव्यः प्रक्रान्तासमाप्तिनिमित्तदोषपरिहारार्थम् । **वा.** २|२|५|१६ पृ. ५०८.

* **यजमानाध्वर्युभ्यामुभाभ्याम्** 'वाजस्य मा०' इति मन्त्रो दर्शपूर्णमासयोः पठनीयः । **वि.** ३|८|८.

* **यजमानाध्वर्यूभयगामि** 'भद्रम्' इति मन्त्रोक्तं फलं ज्योतिष्टोमे उपरवेषु । **वि.** ३|८|१६.

* **यजमानाध्वर्यूभयप्रयोज्यो** 'वाजस्य मा०' इति मन्त्रः दर्शपूर्णमासयोः । **वि.** ३|८|८.

* **यजमानानेकत्वे** अहीने शुक्रान्वारम्भादीनामेकयजमानकर्तृकत्वम् । १२|४|११|३२। स चैकः अनियतः । १२|४|१२|३३.

* **यजमानान्वारम्भः** स्रुच्याघारशुक्रग्रहादौ । **सोम.** ६|१|४.

* **यजमानार्थं** हि कर्म साङ्गम् । **भा.** ३|८|१३|२६.

* **यजमानावेक्षितेन** पत्न्यवेक्षितेन चाज्येन होम उच्यते । तत्रान्यतराभावे वैगुण्यम् । **भा.** ६|१|१०|४२.

* **यजमानाहवनीययोः** पितापुत्रभावसंबन्धः । **संकर्ष.** ३|४|२.

* **यजमान-ऋत्विगुभयगामि-फलविधिः** मन्त्रः 'किमत्र, भद्रं तन्नौ सह' इति । **बाल.** पृ. ६३.

* **यजमानैकत्वं** ज्योतिष्टोमादौ, यजमानद्वित्वं कुलाययज्ञे, यजमानबहुत्वं सत्रे । **वि.** ३|३|१४.

* **यजमानकर्तृकत्वं** दक्षिणादानस्य । ३|८|१|१-२.

* **यजमानकाण्डं** यजुर्वेदे अवान्तरकाण्डम् । **वि.** ३|८|१०.

* **यजमानगणकृते** कर्मणि 'यजमानसंमितौदुम्बरी भवति' इति औदुम्बरीसंमानं एकेनैव यजमानेन न सर्वैः । स चैको गृहपतिरेव सत्रे । अहीने च केनचिद्यजमानेन न सर्वैः । **वि.** १२|४|११-१३.

* **यजमानगतमेव** अरत्न्यादिपरिमाणं यूपादौ । **संकर्ष.** १|४|९. 'यूपादौ अरत्न्यादिपरिमाणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * यजमानगतं मानं अग्निचयने चितिमानेषु ग्राह्यम् । **संकर्ष.** १|४|१०. **मीको.** पृ. ३४ 'अग्निचयने चितिमानेषु०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **यजमानगामिता** करणमन्त्रप्रकाश्यफलस्य । ३|८|१३|२६-२८.

* **यजमानगामिफलविधिः** मन्त्रः 'ममाग्ने वर्चो विहवेष्वस्तु०' इति । **बाल.** पृ. ६२.

* **यजमानत्वं** अधीतवेदस्य विदितवेदार्थस्य च । **वि.** ३|८|९.

* **यजमानद्वित्वबहुत्वे** कुलायादिषु एकाहेषु अहीनेषु च प्रत्यक्षविहिते विद्येते, 'राजपुरोहितौ यजेयाताम्' 'एतेनैव द्वौ याजयेत्' 'एतेनैव त्रीन् याजयेत्' 'एको द्वौ बहवो वा अहीनैर्यजेरन्' इति । **वा.** ३|३|९|१७.

* **यजमानधर्मग्राहिता** सत्रे प्रतिनिधेः । ६|३|१०|२६.

* **यजमाननामनिर्देशः** सूक्तवाकनिगदे नित्यः, न वैकल्पिकः । **संकर्ष.** ४|३|२१.

* '**यजमानपञ्चमाः** इडां भक्षयन्ति' इति द्रव्यसंस्कारत्वात् यजमानोऽप्राप्तो विधीयते वाक्यप्रकरणसमाख्याभिः । **टुप्.** ६|४|३|५. * 'यजमानपञ्चमाः संभूयेडां भक्षयन्ति' इति यजमानस्यापि भक्षोऽस्ति दर्शादौ । **वि.** १०|२|९.

**यजमानपत्नीनां सर्वासां संनहनं दर्शपूर्णमासादौ ॥**

पत्न्याः संनहनेन क्रतौ सा कुर्यादिति विधौ एकत्वस्योपादेयविशेषणत्वेन विवक्षितत्वात् औदुम्बरीसंमानवदेकस्यामपि विधेश्चारितार्थ्यादेकैव या काचिद्यजमानपत्नी संनह्या । इति प्राप्ते, सर्वासामपि संनहनादिसंस्काराः कर्तव्याः, कर्तृत्वाविशेषात् फलाधानांशप्रयुक्तत्वेन संनिपातित्वाच्च । ग्रहवत्संस्कार्यत्वाविशेषेण संख्याया अविवक्षितत्वाच्च । पत्नीप्रातिपदिकस्य यज्ञस्वामिमात्रवाचित्वाच्च । **संकर्ष.** १|२|१ वर्णकं २.

* **यजमानपदमूहितव्यं** बहुकर्तृके विकारे सूक्तवाके प्रस्तरप्रहरणाङ्गे । ९|१|१४|४०.

* **यजमानपुरुषेभ्यश्चैते** ( चमसाध्वर्यवः ) अन्ये ऋत्विग्भ्यश्च । यजमानेन चमसाध्वर्यवो न वरीतव्याः । ऋत्विग्भिस्ते वरीतव्याः । **भा.** ३|७|१०|२५.

* **यजमानपूर्वजाः** एव ऋषयः 'आर्षेयं वृणीते' इति उक्ताः। **संकर्ष.** ३।४।१. **मीको.** पृ. १००४ 'आर्षेयं वृणीते इति०' इत्यत्र द्रष्टव्यम्।

* **यजमानफलविघ्न**प्रसङ्गनिवृत्त्यर्थत्वेन इष्टेर्यजमानकर्तृत्वावसायात् यच्छब्देन च इष्टिवमनयोरेककर्तृकत्वनिर्देशात् यजमानवमने एव इष्टया भवितव्यम्। **सु. पृ. १५१२.**

* **यजमानबहुत्वं** सत्रलक्षणम्। **भा.** १०।६।१६। ६०-६१.

* **यजमानभक्षाः** ज्योतिष्टोमे ऐष्टिकेषु सन्त्येव। **वि.** १२।१।१५.

* **यजमानभिन्न**कर्त्रन्तरप्रतिपादनम्। **भा.** ३।७। ८।१८-२० पृ. १०८९.

* **यजमानमरणोत्तरम**पि सर्वस्वारः ऋत्विग्भिः समापनीयः। १०।२।२३।५८-५९. 'सर्वस्वारः यजमानमरणोत्तरम्०' इत्यत्र द्रष्टव्यम्।

* **यजमानशब्दः** एककपालस्तुत्यर्थः 'यजमान एककपालः' इत्यत्र। **वि.** १।४।१३. * यजमानशब्दः एकयजमानवाचिनि स्वसंख्यावाच्येकवचनमिति कृत्वा द्वियजमानके च प्रयोगे स्वसंख्यावचनप्रदेशात् ऊहः क्रियते। **भा.** ९।४।१।१०.

* **यजमानशरीरे** अग्नीनां यज्ञपात्राणां च निक्षेपः प्रतिपत्तिः परिधानीये कर्मणि। **भा.** ११।३।१३। ३४-४२,४५.

* **यजमानसंस्कारः** हि दीक्षापदार्थः। **भा.**१०।६। १५।५२, * **यजमानसंस्काराः** ज्योतिष्टोमे 'केशश्मश्रु वपते, दतो धावते, नखानि निकृन्तते, स्नाति' 'तं अभ्यनक्ति, शरेषीकया अनक्ति' इति। ३।८। २।३-८. * यजमानसंस्कारा वपनादयः प्रधानोपकारका नाङ्गोपकारकाः 'स्वामियुक्ताधिकरणम्' इत्यत्र द्रष्टव्यम्। ३।७।२।६. * यजमानसंस्काराः सर्वयजमानार्थाः सत्रे। १२।४।१४।३५-४१. 'सत्रे यजमानसंस्काराः०' इत्यत्र द्रष्टव्यम्। * **यजमानसंस्काराणां** च यागगुणभूतकर्त्रतिरेकेण फलप्रतिग्रहणयोग्यपुरुषकरणात् भोक्तृत्वांशपातिनामपि यागाङ्गत्वं वक्ष्यते (३।७।२।६)। **वा.** ३।१।७।१४ पृ. ७१८. * यजमानसंस्काराणां रुक्मप्रतिमोकात् पूर्वभाविता चयने। ५।२।१२।२३.

* **यजिरपूर्वं** साधयति, ततश्चापूर्वात् कालान्तरे फलं भवतीति उक्तम् 'चोदना पुनरारम्भः' इत्यत्र (२।१।२।५)। **भा.** ७।४।१।११. * यजिः उद्देश्यविशिष्टत्यागवाची। **सु.** पृ. ७४९, * यजिः देवतोद्देशद्रव्यत्यागसमुदायवाची। पृ. ७४८. * **यजेः** प्रत्यक्षः फले गुणभाव इति यत्, स नाकृत्वा अपूर्वं भवति इति प्राणालिको विज्ञायते। **भा.** ७।१।१।७.

* **यज्यर्थः** द्रव्यदेवतासंबन्धः। **भा.** १०।१।१०। ४२. * यज्यर्थः याज्याकरणक-देवतोद्देश्यक-प्रक्षिप्यमाणद्रव्यत्यागाः। **कु.** ४।१।७।१९.

* **यजिमत्कर्म**विधानत्वसिद्धिः पशुसोमाधिकरणसिद्धान्तेन। **सु.** पृ. ९२५.

* **यजिवाच्यं** कर्म। अग्नीषोमीयवाक्येऽपि एतदधिकरण-(२।३।५)सिद्धयजिवाच्यकर्मवाचित्वाङ्गीकरणेन। पशुसोमाधिकरणे विध्यनुवादविचारः। **सु.** पृ. ९२५.

* **यजूंषि** कानिचित् त्रिष्वपि वेदेषु पठ्यन्ते, तथा ऋचोऽपि। **वा.** ३।३।१।१. * यजूंषि तान्येव उच्चैस्त्वेन गुणेन व्यपदिश्यन्ते निगदा इति। **भा.** २।१।१३।४३, * यजूंषि यानि न परसंबोधनार्थानि तेषु उपांशुत्वं निवेक्ष्यते। २।१।१३।४२. * 'यजूंषि वा तद्रूपत्वात्' (२।१।१३।४०) इति निगदा यजुर्भेदा एवेत्युक्तम्। **बाल.** पृ. ५८.

* **यजुरेकत्वम्**। यावत्पदजातं यजुर्लक्षणलक्षितं यागसाधनं अथ च विभागे साकाङ्क्षं तावदेकं यजुः। **कु.** २।१।१४।४२.

* **यजुष्टो** यज्ञभ्रेषप्रायश्चित्तार्थे 'भुवः स्वाहेति दक्षिणाग्नौ जुहुयात्'। **वि.** १२।३।५.

* **यजुष्ट्वं** निगदानाम्। निगदाधिकरणम्। २।१। १३।३८-४५.

* **यजुःपरिमाणाधिकरणम्।** २।१।१४।४६.

* **यजुर्भेदः** परस्परनिराकाङ्क्षत्वेन तुल्येषु। **कु.** २।१।१५।४३.



* '**यजुर्युक्तो दक्षिणा**' इत्यधिकरणे (१०।३। २१।७४-७५) प्राकाशवत् यजुर्युक्तरथोऽपि अध्वर्युभागस्य निवर्तकः इति पूर्वपक्षं कृत्वा प्राकाशौ अपूर्वौ विधीयमानौ युक्तं यत् अध्वर्युभागं बाधेते (१०।३।१७। ६३-६४)। इह तु सप्तदश सप्तदशानि प्राकृतदक्षिणाबाधेन परस्परसहितान्येव दक्षिणात्वेन विहितानि, तत्र यजुर्युक्तस्यापि प्राप्तमेव दानम्, स तु अध्वर्यवे अन्यस्मै वा दातव्यः प्राप्तः अध्वर्यौ उपसंह्रियते इति सिद्धान्तितम्। **बाल.** पृ. १७.

**यजुर्युक्तो दक्षिणा त्वध्वर्योर्विकारः स्यात्। १०।३।२१।७४॥**

'वाजपेये रथाः निष्काः इत्यादयः सप्तपदार्थाः सप्तदशसप्तदशसंख्याकाः सप्तदस्येभ्यः सप्तदशभ्यः ऋत्विग्भ्यो दीयन्ते। तत्र 'यजुर्युक्तं रथमध्वर्यवे ददाति' इत्याम्नायते। सोऽयं यजुर्युक्तः यजुर्मन्त्रेण युक्तः संयोजितो रथः दक्षिणा अध्वर्योः भागस्य विकारः बाधकः स्यात्। यजुर्युक्तो रथ एव अध्वर्यवे नान्यत् किञ्चिदिति। इति पूर्वः पक्षः।

**अपिवा श्रुतिभूतत्वात् सर्वासां, तस्य भागो नियम्यते। ७५॥**

पूर्वपक्षं अपिवाशब्दो व्यावर्तयति। सर्वासां सप्तदशरथरूपाणां दक्षिणानां श्रुतिभूतत्वात् 'सप्तदश रथाः' इति श्रुत्या विहितत्वात् कश्चिद्रथः अध्वर्योः स्यादेव। तेन तस्य अध्वर्योः भागः नियम्यते यजुर्युक्तो रथः अध्वर्यवे एव नान्यस्मै इति। यथा ऋग्युक्तः होत्रे एव सामयुक्तः उद्गात्रे एव इति। यस्मिन् रथे अश्वौ यजुषा मन्त्रेण युक्तौ भवतः, यो रथो यजुषा युक्तः अश्वयुक्तः कृतः सः यजुर्युक्तः एवं ऋग्युक्तः सामयुक्तः इति। तस्मात् अध्वर्योः सर्वस्य दक्षिणाभागस्य रथेन न निवृत्तिः इति सिद्धान्तः। **के.**

* 'यजुर्युक्तो०' (१०।३।२०।७४-७५) इत्यधिकरणे वाजपेये यजुर्युक्तेन उपदिष्टेन रथेन अतिदिष्टस्य अध्वर्युभागस्य समुच्चयः उक्तः। **बाल.** पृ. १७७. * यजुर्युक्तो रथः वाजपेये यजमानरथः 'इन्द्रस्य वज्रोऽसि' इत्यादिमन्त्रैः सज्जीकृतः। **वि.** १०।३।२०.

* 'यजुर्युक्तं रथमध्वर्यवे ददाति' इति वाजपेये अयं अनियमतः उपसंहारविषये प्राप्तौ उपसंहाररूपः प्रतिषेधः। **बाल.** पृ. १७.

**यजुर्युक्ताधिकरणम्।** वाजपेये श्रुतेन यजुर्युक्तरथेन अध्वर्योः दास्यादिभागान्तरस्य समुच्चयः॥

**यजुर्युक्तो दक्षिणा त्वध्वर्योर्विकारः स्यात्। १०।३।२१।७४॥**

**भाष्यम्—** अस्ति वाजपेयः। तत्रेदं समाम्नायते 'यजुर्युक्तं रथमध्वर्यवे ददाति' इति। तत्रायमर्थः सांशयिकः किं यजुर्युक्तोऽध्वर्योर्भागस्य निवर्तकः, किं भागे नियम इति। किं प्राप्तम्? यजुर्युक्तो (यजुर्युक्ते इति मुद्रितपाठः) दक्षिणा त्वध्वर्योर्विकारः स्यात्। तुशब्दः संशयव्यावृत्त्यर्थः। न खलु संशयोऽस्ति। यजुर्युक्तं रथमध्वर्यवे ददाति, नान्यदिति गम्यते। स रथोऽध्वर्युभागं निवर्त्य कृतार्थोऽवशिष्टानां चोदकप्राप्तानां निवृत्तिं न शक्नोति कर्तुम्। नैवमभिसंबन्धः क्रियते यजुर्युक्तं रथं वाजपेये ददातीति, येन क्रतुसंयोगो गम्यते। कुतः? प्रकृतो हि वाजपेयः। अध्वर्युः पुनर्वाक्येन श्रूयते। वाक्यं पुनः प्रकरणाद्बलीयः। तस्मादध्वर्युभागस्य निवर्तको रथ इति।

**अपिवा श्रुतिभूतत्वात् सर्वासां, तस्य भागो नियम्यते। ७५॥**

**भाष्यम्—** अपिवेति पक्षव्यावृत्तिः। श्रुतिभूता हि सर्वे रथाः सामान्येन वचनेन 'सप्त सप्तदशकानि ददाति' इति। 'सप्तदश रथाः, सप्तदश निष्काः, सप्तदश दास्यः, सप्तदश युग्यानि, सप्तदश गवां शतानि, वयसो वयस्यश्च सप्तदश' इति। तेनाविशेषेण सप्तदश रथाः सर्वेषां प्राप्ता विभक्तव्याः। तत्र न ज्ञायते कस्य को रथः। तत्राध्वर्योर्यजुर्युक्तः पक्षे प्राप्तः स नियम्यते। यजुर्युक्तमध्वर्यवे ददाति, नान्यम्, न चान्यस्मै। एवं ऋग्भिर्युक्तं होत्रे, नान्यम्, न चान्यस्मै। सामभिर्युक्तमुद्गात्रे, नान्यम्, न चान्यस्मै। तत्र पक्षे विधानार्थं यजुर्युक्तग्रहणं नाध्वर्योः भागं निवर्तयितुमुत्सहते। तस्यानिवृत्तौ चोदकानुग्रहो भविष्यति। तस्मादध्वर्योर्भागे रथो नियम्यते, न तद्भागं निवर्तयतीति।

शा--वाजपेये 'सप्तदश रथाः सप्तदश दास्यः' इति दक्षिणां विधाय श्रूयते 'यजुर्युक्तं रथमध्वर्यवे ददाति' इति। (यजुर्युक्तं 'इन्द्रस्य वज्रोऽसि' इति यजुर्मन्त्रैः सज्जीकृतमित्यर्थः)। तत्र संशयः किं यजुर्युक्तो रथोऽध्वर्युभागं निवर्तयेन्नेति। तत्र '**प्राकाशवद्यजुर्युक्तः स्यात्तद्भागस्य बाधकः।, न त्वयं बाधकस्तस्य प्राप्तस्य नियमो ह्यसौ॥**'

**सोम**-- यदि दक्षिणाशब्दे सत्यपि एकवाक्यतायां भागबाधस्तदा तदभावे किं वक्तव्यमित्युत्थितेः **संगतिः**।

वि— 'यजुर्युक्तोऽध्वर्युभागं बाधते यमयत्युत।, बाधः प्राकाशवत्, मैवं पक्षे प्राप्तेर्नियम्यते॥'

**भाट्ट**— वाजपेये 'सप्तदश रथाः सप्तदश दास्यः सप्तदश निष्काः सप्तदश युग्यानि सप्तदश गवां शतानि सप्तदश वयसो वयस्यश्च इति सप्त सप्तदशकानि ददाति' इति श्रुतम्। तत्रापि प्राकृतमेव दानं पूर्वप्रवृत्त्यङ्गीकारेण निरुक्तद्रव्यविशिष्टं विधीयते इति प्राकृतद्रव्यनिवृत्तिः। तत्र च 'यजुर्युक्तं रथमध्वर्यवे ददाति' इत्यादि श्रुतम्। तत्रापि 'प्राकाशावध्वर्यवे ददाति' इतिवत् यजुर्युक्तरथोऽध्वर्युभागान्तरस्य दास्यादेः निवर्तकः, वैकृतद्रव्येण प्राकृतद्रव्यस्येव वैकृतविभागेन प्राकृताध्व्र्यादिविभागस्यापि बाधात्। इति **प्राप्ते**, नात्र प्राकाशवदपूर्वो यजुर्युक्तो रथो विधीयते, येन भागान्तरनिवृत्तिराशङ्क्येत, पूर्ववाक्येन प्राप्त एव तु लाघवाद्यजुर्युक्तो रथोऽनियमेन यस्मै कस्मैचिदृत्विजे प्राप्तोऽध्वर्यवे नियम्यते। प्राप्तिश्च दास्यादिद्रव्यान्तरसाहित्येनैवेति तादृश एव नियम्यते। अत एवात्र नियमद्वयम्। यथैव हि अनियमेन यस्मै कस्मैचिदृत्विजे प्राप्त इति शेषिरूपाध्वर्युनियमः तथैवाध्वर्योर्यजुर्युक्तः कदाचित् प्राप्तः कदाचिन्न इति शेषरूपयजुर्युक्तनियमोऽपि। नियमद्वयस्यापि च फलत्वान्न वाक्यभेदः। शाब्दबोधे तु संप्रदानत्वस्योद्देश्यत्वेनान्वयायोगमते चतुर्थ्या तस्य कर्मत्वं लक्षयित्वा अध्वर्यूद्देशेन यजुर्युक्तो विधीयते। दानं तु संनिधिप्राप्तमाश्रय इति प्राकाशवैषम्यम्। अत एव नियमफलकत्वेनैवोपपत्तौ समुच्चित्य प्राप्तदास्यादिभागान्तरपरिसंख्याफलकत्वमपि अवघातादिविधेः लघुभूतनियमफलकत्वेनैवोपपत्तौ यवादिपरिसंख्याफलकत्वानङ्गीकारवत् नाङ्गीकर्तुमुचितम्। अतो नात्र भागान्तरनिवृत्तिः।

**मण्डन**-- 'यजूरथोऽध्वर्युमुपैति नान्यम्।'

**शंकर**-- 'यजुर्युक्ते मतो न सः।' सः भागबाधः।

* **यजूरूपः** ऋग्रूपः सामरूपश्चेति त्रिविधो मन्त्रः। **बाल.** पृ. ५८.

**यजुर्लक्षणम्॥**

**शेषे यजुःशब्दः। २।१।१२।३७॥**

**भाष्यम्**— अथ यजुषः किं लक्षणमिति। यजुषो लक्षणं न वक्तव्यम्। ऋग्लक्षणसामलक्षणाभ्यामेव यजुर्विज्ञास्यते वैपरीत्येन, या न गीतिर्न च पादबद्धम्, तत् प्रश्लिष्टपठितं यजुरिति।

**वा**— 'शेषे ब्राह्मणशब्दः' इतिवत् समस्तं व्याख्येयम्।

**वि**— 'नर्क्सामयजुषां लक्ष्म सांकर्यादिति शङ्किते। पादश्च गीतिः प्रश्लिष्टपाठ इत्यस्त्वसंकरः॥' वृत्तगीतिवर्जितत्वेन प्रश्लिष्टपठिता मन्त्रा यजूंषि।

**भाट्ट**—ऋक्सामभिन्नमन्त्रत्वं यजुष्ट्वम्। स्तोभाक्षरेष्वपि तत्त्वान्नातिव्याप्तिः।

**मण्डन**--'ऋक्सामभिन्नो यजुरेव मन्त्रः।'

**शंकर**--'यजुषां लक्षणं तथा।' (उक्तमिति शेषः)। १५.

* **यजुर्वेदः** आध्वर्यवप्रवचनाख्यः। **सु.** पृ. ७५७. * **यजुर्वेदेन** यत् किञ्चित् काम्यं नैमित्तिकं वा चोद्यते तत् सर्वं उपांशु कर्तव्यम्। **वा.** ३।३।२।९. * **यजुर्वेदस्य** उपांशुत्वं स्वरः। **भा.** ३।३।१।१. * **यजुर्वेदे** दोहननिर्वापादयो धर्माः पठिताः। **वि.** ३।३।६. * यजुर्वेदे द्रव्यदेवताक्रियं सकलमाम्नायते। वेदान्तरे तु क्रियामात्रं संकीर्त्य स्तोत्रशस्त्रादीनि पठ्यन्ते। ततश्च द्रव्यदेवताकाङ्क्षित्वमपनीतं इत्यशक्यं स्वतन्त्रक्रियाविधानम्। यजुर्वेदे तु समस्तस्वरूपाम्नानात् विनापि स्तोत्रादिभिः शक्यते यागो निर्वर्तयितुम्। **वा.** ३।३।४।१०. * यजुर्वेदे याजमानं अवान्तरकाण्डम्, महाकाण्डं तु आध्वर्यवमेव। **वि.** ३।८।१०, * यजुर्वेदे सोमद्रव्यस्याधिगतिः इन्द्रवाय्वादिदेवतानां च इति तत्रैव विधिः ज्योतिष्टोमस्य। ३।३।३.



* **यजुर्वेदोक्तं** वाजपेये हिरण्यमालित्वं सर्वेषामेव ऋत्विजां न तु अध्वर्यूणामेव। **वि.** ३।८।५.

* **यजुर्वेदविहितप्रधानविधिविहितत्वात्** आधानसाम्नां उपांशुत्वम्। **वा.** ३।३।२।९ पृ. ८१३.

* **यजेत** इत्यत्र अस्ति अंशद्वयं यजिधातुः प्रत्ययश्च। प्रत्ययेऽपि अस्ति अंशद्वयं आख्यातत्वं लिङ्त्वं चेति। तत्र लिङ्वाच्या शाब्दीभावना, आख्यातवाच्या च आर्थीभावना। **मीन्या.** * यजेत इत्यत्र आख्यातस्य 'भावयेत्' इत्यर्थः। भावनायाश्च आकाङ्क्षात्रयं 'किम्' इति भाव्यस्य साध्यस्य फलस्य, 'केन' इति करणस्य साधनस्य, 'कथम्' इति इतिकर्तव्यतायाः—अङ्गसमूहस्य —उपकारकसमूहस्य इति। तत्र अर्थभावनायां भाव्याकाङ्क्षया स्वर्गादिरन्वेति, करणाकाङ्क्षया यागादिरन्वेति, इतिकर्तव्यताकाङ्क्षया च अग्न्यन्वाधान–प्रयाज–प्रोक्षण–अवघातादियावदङ्गकलापः अन्वेति। प्रयाजादि कृत्वा यागानुष्ठानेन स्वर्गः प्राप्तव्यः इति तात्पर्यम्। **वि.** २।१।१ वर्णकं २, * यजेत इत्यत्र प्रत्ययस्य आख्यातत्वाकारेण भावनाभिधायित्वम्, लिङ्प्रत्ययत्वेन विधिरूपत्वात् पुरुषप्रवर्तकत्वम्। पुरुषश्च फलमन्तरेण न प्रवर्तते इति कृत्वा सुखं तत्र भाव्यम्। ६।१।१, * यजेत इत्यत्र विधेया यागक्रिया। आख्यातगतं चैकत्वं तस्या विशेषणम्। क्रिया च कर्तारमाक्षिपति इति क्रियाद्वारा कर्ताऽपि विधेयः। विधेयकर्तृगता च संख्या विवक्षिता भवितुमर्हति। ६।२।२. * यजेत इत्यत्र शाब्दीभावना प्रत्ययगतलिङ्त्वांशेन बोध्या। सा त्र्यंशा, भाव्यं करणं इतिकर्तव्यता चेति त्रयोऽशाः। तत्र भाव्यं प्रत्ययगताख्यातत्वांशेन बोध्या अर्थभावना, करणं भावनाभाव्यनिर्वर्तकं लिङ्ज्ञानम्, अर्थवादलक्ष्यं प्राशस्त्यं च इतिकर्तव्यता इति। **मीन्या.** * यजेत इत्यात्मनेपदं विधिप्राप्तानुवादकमेव। **सोम.** ६।२।२. * यजेत इत्यादौ अंशद्वयं धातुः प्रत्ययश्च। प्रत्ययस्य अपूर्वं अर्थः। स च भावना नाम अर्थः। णिजन्तात् भवतेर्भावनाशब्दनिष्पत्तिः। भावनायां करोतिः। करोतेः भवतिमाकाङ्क्षति। एव करोत्यर्थद्वारेण सर्वाख्यातेषु भावयत्यर्थः सिद्धः। **के.** (वा. २।१।१।१). * यजेत इत्यनेनाऽऽक्षिप्तः कर्ता। स विशेष्यते स्वर्गकामशब्देन। यथा 'राजा राजसूयेन यजेत' इति। विशेषणं च कर्माङ्गं भवति। ११।१।१।१, यजेत इति भावनावचनः श्रुत्या पुरुषार्थमाक्षिपति। स चाऽऽक्षिप्तः किमंशं प्रथमं पूरयति। तत्रोपायत्वेन यागो विधीयते। **टुप्.** ११।१।१।१, * यजेत इत्यनेन त्रितयस्य फलकरणेतिकर्तव्यत्वस्य कर्तव्यतोच्यते। ५।१।५।८. * यजेत इत्यस्यार्थः यागं कुर्यात् यागेन वा कुर्यात् इति। सत्ताभिव्यक्तिमात्रं गम्यते न फलस्य कर्ता आधारता वा। यज्यर्थः करणं कर्म वा। **भा.** ६।२।२।६, * यजेत इत्यस्य पूर्वो भागः यजत्यर्थं ब्रवीति, उत्तरो (भागः) भावयेदिति, तथा ददातीति पूर्वो भागो ददात्यर्थम्, उत्तरः तमेव भावयेत् इत्यनुवदति। एवं जुहोति इति पूर्वो भागः जुहोत्यर्थं उत्तरस्तमेव (भावयेत् इति) अनुवदति। परो भागो भावनावचनः सर्वेषु समानः। दद्यात् इति दानेन साधयेत् इति केवलमेव दानं करणं भावनायाः प्रतीयते। २।२।१।१, * यजेत इत्यस्य यागेन कुर्यात् इत्यर्थः। करणं हि यागः। १।४।१।२. * यजेत इयं तिङन्त–एकपदरूपा विनियोक्त्री श्रुतिः। **बाल.** पृ. ४२. * यजेत इत्युक्ते किं केन कथं इत्याकाङ्क्षात्रयं भवति। तत्र किं केन इति फलकरणाभ्यां निराकाङ्क्षीकृते। कथमिति अव्यावृत्ताकाङ्क्षायां संनिधाने अनाम्नानात् इतिकर्तव्यतायाः तुल्यं वाक्यं बुद्धौ संनिधीयते; तत् संनिधापितं आत्मीयमर्थं संनिधापयति। अनेन द्वारेण अग्न्यन्वाधानादिका इतिकर्तव्यता अनुषज्यते। एवं चेत् यत्र सादृश्यं तत्र धर्माः प्राप्यन्ते, असति सादृश्ये नास्ति धर्मप्राप्तिः। **टुप्.** ८।१।२।२. * यजेत इत्युक्ते जुहोतित्वाविरोधः अवगन्तव्यः। **वा.** ३।४।१४।४१ पृ. ९८२. * यजेत इत्युच्चरिते किं केन कथमिति तिस्र आकाङ्क्षा जायन्ते। तत्र किं इति नित्यमेव पुरुषार्थापेक्षः साक्षात् पारंपर्येण वा। धातुस्तत्करणं भवति। ओदनं पचेत् इत्यत्रापि तिस्र आकाङ्क्षा विद्यन्ते। तत्र (पाके)

प्रत्यक्षादिना निर्दिश्यते इतिकर्तव्यता । इह ( वैदिके कर्मणि ) शास्त्रेण निर्दिश्यते । आकाङ्क्षात्रयं तु तुल्यम्। **टुप्**. ७।४।१।१. * यजेत इत्येवमादयः साकाङ्क्षा जायन्ते किं केन कथमिति, स्वर्गकामः इत्यनेन प्रयोजनेन निराकाङ्क्षाः । **भा**. २।१।१।१, * यजेत जुहुयात् इति धातुना क्रियोच्यते, प्रत्ययेन कर्ता । तयोः कर्ता प्रधानभूतः उपसर्जनभूता क्रिया । प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः । ११।१।४।२२, * यजेत जुहोति ददाति इति शब्दान्तरे कर्मभेदः । २।२।१।१, * यजेत यागेन स्वर्गं कुर्यात् स्वर्गार्थं व्याप्रियेत इत्यर्थः । इदं तु न ज्ञायते कोऽसौ व्यापार इति । तत्संनिधौ च अग्न्यन्वाधानादि श्रूयते । तस्मिन् आकाङ्क्षितत्वात् संनिधानाच्च एतद्भवति अयमस्मिन् व्यापारः येन यागः स्वर्गं करोति इति । ११।१।२।१०. * ' यजेत स्वर्गकामः ' इति । यजेत इत्यस्य उत्तरार्धात् तिस्र आकाङ्क्षा जायन्ते । तत्र प्रथमं तावत् भाव्यमानं आकाङ्क्षति ' भावयेत् किं ' इति । तत् फलपदेन निराकाङ्क्षीक्रियते । तत् भाव्यमानं केन भाव्यते इति द्वितीयां आकाङ्क्षां पूर्वार्धो निराकाङ्क्षीकरोति । कथं इति तृतीयामाकाङ्क्षां अग्न्यन्वाधानादीनि निराकाङ्क्षीकुर्वन्ति संनिधानात् । तदेवं अस्माद्वाक्यात् यागात् फलं श्रूयते न देवतातः । **टुप्**. ९।१।४।९ पृ. १६५२.

* **यज्ञश्च** त्यागः । **भा**. ३।८।३।१०, * यज्ञो हि मेधः । ३।८।३।१०, * **यज्ञस्योदराणि** । ' त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् । अत्र ह्येवावपन्ति अत एवोद्वपन्ति । ' १०।५।६।२२, * यज्ञस्य एतानि पात्राणि ( वारणवैकङ्कतानि ) वाक्येन प्रकरणं बाधित्वा भवन्ति । ३।१।१२।२२. * **यज्ञानामग्निष्टोमपूर्वकता** ( यज्ञेषु अग्निष्टोमस्य प्राथम्यम् ) । ५।३।१३।३७–३८ . **मीको**. पृ. ७१ ' अग्निष्टोमस्य यज्ञेषु प्राथम्यम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * यज्ञानां सर्वेषामङ्गं वारणादिकम् । वारणाधिकरणम् । ३।१।१२।२२. * **यज्ञे** ऋत्विग्भ्यो दक्षिणायाः यस्य यावान् भाग आभजति स्वयमेव यजमानेन विभज्य तस्य तावान् कल्पयितव्यः, न परिषदा । **भा**.१०।३।१२।५०, * यज्ञे च अचिकीर्षितो न प्रयोक्तव्यः । ९।२।१।१ वर्णकं २. * यज्ञे रथंतरादिसाम्नां तृचे गानम् । १०।६।१।१–२.

* **यज्ञावचरः** यज्ञे अवचर्यते अनुष्ठीयते अनेन इति यज्ञावचरशब्देन यागाङ्गत्वाभिधानम् । **सु**. पृ. १०६०. * यज्ञावचरः यज्ञप्रचारहेतुः पात्राणि इत्यर्थः । **वि**. ३।१।१२.

* ' **यज्ञादौ** सावनः ( मासः ) स्मृतः ' इति स्मृतिः । **संकर्ष**. ३।१।१८.

* **यज्ञायुधानि** दश ' स्फ्यश्च, कपालानि च, अग्निहोत्रहवणी च शूर्पं च, कृष्णाजिनं च शम्या च, उलूखलं च मुसलं च दृषच्च उपला च, एतानि वै दश यज्ञायुधानि ' दर्शपूर्णमासयोः । **भा**. ४।१।४।७.

**यज्ञायुधानि धार्येरन् प्रतिपत्तिविधानादृजीषवत् । ११।३।१३।३६ ॥**

यज्ञायुधानि यज्ञपात्राणि यावज्जीवं धार्येरन् धारयितव्यानि । प्रतिपत्तिविधानात् ' आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च ' इति तेषां प्रतिपत्तेः अन्त्येष्टौ विधानात् । ऋजीषवत् यथा अहर्गणे सर्वेषामह्नां ऋजीषं अवभृथे प्रतिपत्त्यर्थं धार्यते तद्वत् । इति सिद्धान्तः ।

**यजमानसंस्कारो वा तदर्थः श्रूयते तत्र यथाकामी तदर्थत्वात् । ३७ ॥**

पूर्वपक्षमाह । ' यज्ञपात्रैर्दहन्ति ' इति यजमानसंस्कारः अयम्, न पात्राणां प्रतिपत्तिः । तदर्थः तेषां पात्राणां अर्थः विनियोगः श्रूयते, पात्राणां तृतीयया यजमानस्य द्वितीयया च निर्देशात् । तत्र एवं सति पात्राणां तदर्थत्वात् अर्थकर्मत्वात् यजमानसंस्कारार्थत्वात् यथाकामी स्यात् तेषामन्येषां वा अन्त्येष्टौ प्रासनम् । इति ।

**मुख्यधारणं वा मरणस्यानियतत्वात् । ३८ ॥**

सिद्धान्ती पुनराह । मुख्यधारणं मुख्यानां आधानकालीनानां आद्यानामेव पात्राणां धारणं कर्तव्यम् । मरणस्य अनियतत्वात् । कदाचित् तानि पात्राणि उत्सृष्टानि भवेयुः मरणं चापद्येत । तत्र यजमानशरीरसंस्कारलोपः स्यात् । तस्मात् मुख्यधारणमेव न्याय्यम् ।



**यो वा यजनीयेऽहनि म्रियेत सोऽधिकृतः स्यादुपवेषवत् । ३९ ॥**

पूर्वपक्षी पक्षान्तरमाह । यो यजमानः यजनीये अहनि यागदिने म्रियेत, सः अस्मिन् संस्कारे अधिकृतः स्यात्, तस्मिन् दिने पात्राणां संनिहितत्वात् । उपवेषवत् यथा सांनाय्ययाजिन एव उपवेषेण कपालोपधाने अधिकारः, उपवेषस्य संनिहितत्वात् तद्वत् ।

**न शास्त्रलक्षणत्वात् । ४० ॥**

नायं दृष्टान्तोऽत्र संभवति । उपवेषस्य शास्त्रलक्षणत्वात् । यथा सांनाय्ययाजिन एव उपवेषो नान्यस्य इति शास्त्रेण लक्ष्यते । सांनाय्यार्था शाखा, तामनुनिष्पन्नः उपवेषः । पात्राणां तु धारणस्य यावज्जीवं संभवः । तस्माद्विषमो दृष्टान्तः ।

**उत्पत्तिर्वा प्रयोजकत्वादाशिरवत् । ४१ ॥**

पूर्वपक्षान्तरमाह । अथवा न मुख्यानां धारणम् । किन्तु संस्कारकाले नवानां पात्राणामुत्पत्तिः कर्तव्या । संस्कारस्य पात्रप्रयोजकत्वात् । संस्कारः पात्राणां प्रयोजकः । आशिरवत्, यथा ऋतपेये क्रतौ ' वृतव्रतौ भवतः ' इति वचनात् व्रतदुहः गोरभावे ' अन्यां यजमानस्य व्रतयुक्तामाशिरे दुहन्ति ' इति श्रुतेः आशिरार्थं अन्या गौरुपादीयते तद्वत् ।

**शब्दासामञ्जस्यमिति चेत् । ४२ ॥**

उक्ते पक्षे कश्चिदाशङ्कते । संस्कारकाले नवीनोत्पत्तिपक्षे ' यज्ञपात्रैः ' इति यज्ञशब्दस्य असामञ्जस्यं प्राप्नोति । नहि नवीनानां पात्राणां यज्ञेन संबन्धोऽस्ति । इति चेत् ।

**तथाऽऽशिरेऽपि । ४३ ॥**

नवीनपात्रवादी प्रतिबन्द्या शङ्कां प्रतिक्षिपति । तथा पात्रेषु यज्ञशब्दस्येव आशिरेऽपि ' व्रतयुक्ता ' इति शब्दस्यापि असामञ्जस्यं तुल्यमेव । नहि अन्या गौः अद्यापि व्रतदुहा ।

**शास्त्रात्तु विप्रयोगस्तत्रैकद्रव्यचिकीर्षा प्रकृतावथेहापूर्वार्थवद् भूतोपदेशः । ४४ ॥**

सिद्धान्ती आह । तत्र आशिरविषये शास्त्रादेव विप्रयोगः शब्दासामञ्जस्यं भवति । ' वृतव्रतौ भवतः ' इति शास्त्रेणैव व्रतदुहो गोः विप्रयोगः निवृत्तिः कृता । प्रकृतौ ज्योतिष्टोमे एकद्रव्यचिकीर्षा एकस्याः गोः यत् पयो द्रव्यं तस्यैव व्रते आशिरे च चिकीर्षा, तस्मात् ' व्रतदुघामाशिरे दुहन्ति ' इति प्रकृतौ श्रुतम् । तस्य च ऋतपेये विप्रयोगः । तस्मात्तत्र न दोषः । अथ इह यज्ञपात्रविषये तु अपूर्वार्थवत् अपूर्वः अर्थः अस्ति अस्य इति अपूर्वार्थवत् श्रवणम् । नहि यज्ञपात्रैर्दाहः अन्यतः प्राप्तः । तस्मात् यज्ञशब्दासामञ्जस्यं अत्र दोषः स्यात् । अतः भूतोपदेशः भूतानां पूर्वसिद्धानां पात्राणां उपदेशोऽयम् । तस्मात् यज्ञपात्राणां यावज्जीवं धारणं इति सिद्धान्तः ।

**प्रतिपत्तिर्वा यथाऽन्येषाम् । ४७ ॥**

प्रेतयजमानशरीरे पात्रासादनं नार्थकर्म किन्तु प्रतिपत्तिः । यथा अन्येषां सोमलिप्तानां द्रव्याणां अवभृथगमनं प्रतिपत्तिः तद्वत् । तस्मात् आधानप्रभृति यावज्जीवं यज्ञपात्रधारणं इति सिद्धान्तः । **के**.

* यज्ञायुधानि व्यवस्थितानि विशिष्टक्रियासु ' स्फ्येनोद्धन्ति, कपालेषु श्रपयति, अग्निहोत्रहवण्या हवींषि निर्वपति, शूर्पेण विविनक्ति, कृष्णाजिनमधस्तादुलूखलस्यावस्तृणाति, शम्यां दृषदमुपदधाति ( शम्यया इति पाठः ), उलूखलमुसलाभ्यामवहन्ति, दृषदुपलाभ्यां पिनष्टि ' इति । **वि**. ३।१।५, * ' यज्ञायुधानि संभरति ' अत्र यज्ञायुधानां दशानां संभरणस्य विधिः । ४।१।४.

**यज्ञायुधाधिकरणम्** । यज्ञायुधवाक्यमनुवादकम् ॥

**द्रव्याणि त्वविशेषेणाऽऽनर्थक्यात् प्रदीयेरन् । ४।१।४।७ ॥**

**भाष्यम्**— स्तो दर्शपूर्णमासौ । तत्राऽऽम्नायते ' स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानि ' इति । तत्र संशयः किमेतानि द्रव्याणि प्रदातव्यानि, उत स्वेन स्वेनार्थेन संबन्धनीयानि । तदेतत्सिद्ध्यर्थमिदं चिन्तनीयं किमेष विधिः, उत अनुवादः इति । विधौ सति प्रदानम्, अनुवादे सति यथार्थसंबन्धः । किं प्राप्तम् ? विधिरिति । तथा हि

प्रवृत्तौ विशेषः, इतरथा वादमात्रमनर्थकम् । प्रदाने चैषां यज्ञायुधशब्दोऽनुगृहीतः । यज्ञस्य आयुधानि यज्ञस्य साधनानीति । इतरथा उद्धननादीनां आयुधानि भवेयुः श्रवणेन, लक्षणया यज्ञस्य । संख्या चैवमवकल्पते, यागेनैकेन संबन्धात् । इतरथा नानार्थसंबन्धाद्दशेति संख्या नावकल्पते । तस्मात् प्रदीयेरन् । अविशेषेण विहितं प्रकरणेन प्रधानस्य भवितुमर्हति ।

टुप्— ( ननु तृतीये एवैषां यथासंयोगं विनियोगेन उद्धननाद्यर्थत्वं सिद्धम् । अतः किमन्यच्चिन्त्यते इत्यत आह– ) प्रदेयत्वे इह निराकृते तृतीये चिन्ता ( किं सर्वमुद्धननादि सर्वैः कार्यमुत यथासंयोगमिति । इह तु प्रदेयत्वमेवाशङ्क्य निराक्रियते इति । पूर्वपक्षमाह– ) ' एतानि वै दश यज्ञायुधानि ' इति विधिरयम् ( यागसाधनतया स्फ्यादीनामप्राप्तानाम् ), स्वार्थत्वात् ( यज्ञायुधशब्दस्य श्रुत्यर्थलाभात् ) । इतरथा ( यदि उद्धननाङ्गतया प्राप्तानामनुवादः ततः ) परार्थता ( लक्षणार्थता ) स्यात् । यद्येतानि (स्फ्यादीनि) प्रदीयमानानि यागं निर्वर्तयन्ति ततो भवन्ति यज्ञसाधनानि । साधनवचनोऽयं ( यज्ञायुधशब्दः, अतः ) तत्र ( प्रदेयत्वपक्षे ) यज्ञायुधशब्दो मुख्यः । इतरथा ( यदि प्रदेयत्वं नोच्यते ततः ) प्रणाड्या ( यज्ञसाधनानुसाधनमिति कृत्वा ) गौणः स्यात् । (गौणशब्देन लक्षणैव उच्यते ) । यागसाधनत्वाविशेषेऽपि ( यागविशेषेऽपि इति मुद्रितपाठः अयुक्तः ) प्रधानयागसाधनान्येव । कथम् ? ' एतानि वै दश यज्ञायुधानि ' इति ( एतानि पदानि ) ( अत्र ' दर्शपूर्णमासयोराम्नानात् प्रधानस्यैव अङ्गं इति अधिकं मुद्रिते । लिखिते तन्त्ररत्ने च इदं नास्ति ) साकाङ्क्षाणि प्रकरणेन ( प्रकृतेन दर्शपूर्णमासेन सह ) एकवाक्यतां यान्ति । अतो नैषां प्रयाजादिभिः ( अङ्गैः ) संबन्धः । अथवा ' एतानि वै दश यज्ञायुधानि ' इति दर्शपूर्णमासयोः आम्नानात् प्रधानस्यैवाङ्गम्, न प्रयाजादीनाम् । ( ननु यज्ञशब्दस्य यागमात्रवाचित्वात् तदनुवादेन विधीयमानानि द्रव्याणि प्रकरणबाधेन वेदि–तद्धर्मादिवदङ्गप्रधानार्थानि इति युक्तम् । अत आह– ) ' यद्धवींष्यासादयति ' इति अर्थप्राप्तमासादनमनूद्य वेदिर्नियम्यते । अङ्गप्रधानहविरासादनमर्थप्राप्तम् । तस्मात् तत्र ( प्रकरणबाधेन ) वाक्यादङ्गप्रधानार्थता ' ( इह तु ) ' एतानि वै दश यज्ञायुधानि ' इति न किञ्चिदनूद्यते ( येन सर्वानुवादेन विधीयमानानि द्रव्याणि सर्वार्थानि भवेयुः ) । न खलु समासान्तर्गतयोरेकमुद्देशकमितरद्विधायकं भवितुमर्हति । ( एवं सति ) संख्या चैकक्रियायोगादुपपत्स्यते ।

**स्वेन त्वर्थेन संबन्धो द्रव्याणां पृथगर्थत्वात् तस्माद् यथाश्रुति स्युः । ८ ॥**

**भाष्यम्**— न चैतदस्ति विधिः प्रदेयानीति । अनुवादः, प्राप्तत्वात् । ' स्फ्येनोद्धन्ति ', ' कपालेषु श्रपयन्ति ', ' अग्निहोत्रहवण्या निर्वपति ', ' शूर्पेण विविनक्ति ', ' कृष्णाजिनमुलूखलस्याधस्तादवस्तृणाति ', ' शम्यायां दृषदमुपदधाति ', ' प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति ', ' प्रोक्षिताभ्यां दृषदुपलाभ्यां पिनष्टि ' इत्येवं स्वेन स्वेन वाक्येनोद्धननादिषु प्राप्नुवन्ति । प्राप्तानां वचनमनुवादः । प्रकरणमपि वाक्येन बाध्यते । यज्ञायुधशब्दश्चानुवादपक्षे न्याय्यः, न विधिपक्षे । गौणो हि स आयुधशब्दः स्फ्यादिषु । संख्याऽपि पाठाभिप्राया भविष्यति । विस्पष्टं चैतदुद्धननादिभिः स्फ्यादीनि प्रयुक्तानीति । भवति हि तत्र विधिः, ' स्फ्येनोद्धन्ति ' इत्येवमादिः । न तु यज्ञायुधानि कर्तव्यानीति । तस्मादुद्धननादिषु वाक्येन प्राप्तानामनुवाद इति ।

टुप्— करणविभक्त्या स्फ्येन ( ह्यनेन इति मुद्रितपाठः ) किमपि कर्तव्यमिति ( आकाङ्क्षिते ) पदान्तरेण ( उद्धन्ति इत्यनेन ) उद्धनने दत्ते ( प्रयोजनं प्रति ) निराकाङ्क्षत्वान्नान्यप्रयोजनं आकाङ्क्षति । वाक्यादेषां ( स्फ्यादीनां ) उद्धननादि प्रयोजनम् । प्रकरणेन क्रतुसंबन्धो भवेद्वा न वा । आयुधशब्दोऽप्यायुधेष्वेव ( शक्त्यादिषु ) प्रसिद्धो लक्षणया ( गौण्या वृत्त्या ) स्फ्यादिषु वर्तते । तान्यपि साधनानि एतान्यपि इति । न च विद्यमाने विधौ लक्षणा न्याय्या । अतः स्तुतित्वादनुवादोऽयम् । ( अस्ति हि विधिः ' यज्ञायुधानि संभरन्ति' इति । तेन स्तावकतया एकवाक्यभूतमवगम्यमानं न पृथक् विधित्वमर्हति, वाक्यभेदप्रसङ्गात् । संख्या चाऽऽसादनाभिप्राया ।

**चोद्यन्ते चार्थकर्मसु । ९ ॥**

**भाष्यम्** — अर्थकर्मसु चोद्यन्ते पुरोडाशादीनि, तान्यपि विकल्पेरन्, तत्र पक्षे बाधः । न समुच्चयः, पुरोडाशादीनां निरपेक्षाणां यजिसंबन्धात्, स्फ्यादीनां च ।

**एवं वा** । चोद्यन्ते चार्थकर्मसु । चोद्यन्ते परिधानीये कर्मणि ' आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च ' इति । यदि प्रदीयेरंस्तत्र न भवेयुः । तस्मादपि न प्रदातव्यानीति ।

टुप् — ( अत्र भाष्यकारेण अर्थकर्मसु आग्नेयाग्नीषोमीयादियागेषु पुरोडाशादीनि चोद्यन्ते तैरेषां न विकल्पः पाक्षिकबाधप्रसङ्गात्, न समुच्चयः निरपेक्षविधानात् इत्युक्त्वा पुनः वर्णकान्तरं उक्तं परिधानीये कर्मणि पात्राणां दर्शनं प्रदेयत्वेन अवकल्पते इति । तत्र यदिदं पाक्षिकबाधनं विकल्पदूषणमुक्तं तन्न शोभनं इत्यभिप्रायेण आह— ) अयुक्तोऽयं विकल्पः, विषमशिष्टत्वात् । द्वितीयेऽपि वर्णके ( अस्त्येव अनुपपत्तिः । कथम् ? पूर्वपक्षे ) ' मध्यात् पूर्वार्धाच्च द्विरवद्यति ' इति ( वचनेन ) तावन्मात्रस्य होमात् शिष्टं विद्यते । तेन यजमानो धक्ष्यते । नैतदेवम् । ( कुतः ? ) मरणस्य अनियतत्वात् कदाचित् ( दीर्घकालेऽपि म्रियमाणे सति स्फ्यादीनां ) आकारविनाशः स्यात्, बहुद्व्यवदानोद्धरणात् । तत्र यज्ञपात्रता नोपपद्यते ( स्फ्यादिजातीयं हि द्रव्यं यज्ञपात्रम् । जात्यपगमे तदनुपपत्तिः । ) अथवा देवतोद्देशेन द्रव्यपरित्यागात् निरिष्टकानि । तस्मात् प्रतिप्रयोगमुत्पाद्येरन् (एकप्रयोगोपयुक्तानामनीशानेन यजमानेन पुनस्त्यागायोगात् ) । तत्रान्तरे म्रियमाणो न तैर्दह्येत । निरिष्टकान्यप्युपादातुमशक्तः, निरिष्टकत्वादेव । ( न हि निरिष्टकेन एकस्मिन् कर्मणि उपयुक्तेन शिष्टाः कार्यं कुर्वन्ति) । अथवा द्व्यवदाने उद्धृते यादृशं (अविकलं) सत् ( द्व्यवदानोद्धरणात् ) पूर्वं यज्ञसाधनमभूत् मरणवेलायां न तादृक् ( विकलत्वात् ) इति यज्ञपात्रता नोपपद्यते । उद्धननाद्यर्थत्वे तु न किञ्चित् विरुद्धम् ।

**लिङ्गदर्शनाच्च । १० ॥**

**भाष्यम्**— लिङ्गदर्शनेन च, ' चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायाम् ' इति । तस्मादप्यनुवाद इति ।

टुप्— [ अत्रत्यः टुप्ग्रन्थः आनन्दाश्रमीयादौ पूर्वसूत्रे मुद्रितः । परं तन्त्ररत्ने ' लिङ्गदर्शनाच्चेतिसूत्रमाक्षिपति ' इत्यवतारितत्वात् सः अस्मिन् सूत्रे आवश्यकः इति प्रतिभाति । ] ( ' लिङ्गदर्शनाच्च ' इति सूत्रमाक्षिपति ) चतुर्दश त्रयोदश इति उभयत्र ( पूर्वपक्षे सिद्धान्ते च ) तुल्यम् । ( कुतः ? ) न हि द्रव्यभेदादाहुतिभेदः । एकदेवतत्वात् सर्वैरेकैवाहुतिः ( करिष्यते ) । तत्र केचिदाहुः । उत्पत्तिवाक्यशिष्टेन ( पुरोडाशादि– ) द्रव्येण बाधितत्वात् ( स्फ्यादीनि ) कर्मान्तरं ( कल्पयन्ति इत्यस्य वाक्यस्य कर्मान्तरमेव पूर्वपक्षे विधेयं ) आपतति इति ( लिङ्ग– ) दर्शनं ( उपपन्नमिति । तदेतदेकदेशिमतं दूषयति– ) इदं नोपपद्यते । न हि द्रव्यसंयोगमात्रेण ( देवतामन्तरेण ) कर्मान्तरं भवति । तस्मादन्यथा वर्ण्यते । ' चतुरवत्तं जुहोति ' इति प्राकरणिकेषु सर्वहोमेषु चतुरवत्तम् ( विहितम् ) । तत्रेमानि दश दश द्रव्याणि इतरेतरयुक्तानि होमसाधनानि ( न व्रीहियववन्निरपेक्षाणि, सहविधानात् ) । तत्रैषां प्रतिद्रव्यं द्व्यवदाने गृह्यमाणे बहूनि चतुरवत्तानि भवन्ति । होमे चैकं चतुरवत्तं श्रुतम् । तद्यदि एकस्माद् गृह्येत, इतरेषां साधनत्वं हीयेत । (यदि तदनुरोधेन सर्वेभ्यो गृहीत्वा हूयेत तत एकत्वं हीयेत ) । तस्मात् तत्संपत्तये अभ्यस्यते यागः एकैकेन चतुरवत्तेन । ननु बहूनि गृहीत्वा सकृद्धोष्यन्ते देवतैक्यात् । यथा सांनाय्ये द्वे चतुरवत्ते ( गृहीत्वा सकृद्धोमः ) । उच्यते । तत्र कर्मभेदादन्येन सह प्रदाने सकृत् क्रियमाणे, इतरदपि ( प्रदानं ) आत्मीयं चतुरवत्तं विवेकेन गृह्णाति, इतरदपि विवेकेन तत्र चतुरवत्तविघातो नास्ति । इह तु एकत्वात् कर्मणः सह क्रियमाणे चतुरवत्तविघातभयादभ्यस्यते सोमयागवत् । तत्राहुतिबहुत्वात् दर्शनं नोपपद्यते ।

शा— ' स्फ्यश्च कपालानि च ' इत्यनुक्रम्य ' एतानि वै दश यज्ञायुधानि ' इति श्रुतम् । किमयं

प्रधानयागहविष्ट्वेन स्फ्यादीनां विधिः, उत 'स्फ्येनोद्धन्ति' इत्यादिवाक्यप्राप्तानुवादः इति संशये '**अर्थवत्त्वाद्विधिर्न्याय्यो वादमात्रं ह्यनर्थकम् । यज्ञशब्दः प्रकरणादाग्नेयादिषु वर्तते ॥ गौणेनायुधशब्देन तत्प्रधानतया ततः । स्फ्यादिद्रव्याणि चोद्यन्ते पुरोडाशादिभिः सह ॥ समुच्चयो विकल्पो वा स्यादिति प्राप्त उच्यते । न ह्यत्रास्यातशब्दोऽपि श्रूयते नतरां विधिः ॥ विकल्पोऽपि न वैषम्यात् पुरोडाशादिभिः सह । समुच्चयोऽपि नैकार्थ्यान्निरपेक्षश्रुतेरपि ॥**' 'यज्ञायुधानि संभरन्ति' इति च अनन्तरश्रुतेन विधिना एकवाक्यत्वात् शेषोऽयमुद्धननादिद्वारा प्राप्तयज्ञसाधनत्वानुवादः ।

**सोम**— यथा पूर्वत्र व्रतशब्दबलान्नेक्षेतेति न प्रतिषेधः एवमिहापि यज्ञायुधशब्दबलान्नोद्धननादिमात्रसाधनमिति प्रत्यवस्थानात् **संगतिः । सूत्रार्थस्तु**-- स्फ्यादिद्रव्याणि प्रदीयेरन् प्रदेयहवींषि भवेयुः इतरथा यज्ञायुधवाक्यानर्थक्यात् प्रदेयत्वे च सति अविशेषणश्रुतान्यपि प्रकरणात् प्रधानमात्रार्थानीति ।

वि--'दश यज्ञायुधानीति हविष्ट्वेन विधिर्न वा, । आद्योऽप्राप्तेः पुरोडाशे समुच्चयविकल्पने ॥, सार्धमुत्पत्तिशिष्टेन विकल्पादिर्न युज्यते । स्फ्येनोद्धन्तीति यत्प्राप्तं तदत्रानूद्य संस्तवः ॥'

**भाट्ट**— 'स्फ्यश्च' इत्याद्युपक्रम्य श्रुतस्य यज्ञायुधवाक्यस्य तृतीये उदाहृतस्यैव साक्षात् प्रधानभूताग्नेयाद्युद्देशेन उत्पत्तिवाक्याविहितद्रव्यकोपांशुयाजोद्देशेनैव वा स्फ्यादिद्रव्यविधायकत्वम्, इतरथा समस्तवाक्यवैयर्थ्यापत्तेः, यज्ञशब्दस्य तत्साधनोद्धननादिलक्षकत्वापत्तेश्च । तस्मादुद्धननादिवाक्यैः स्फ्यादीनामुद्धननाद्यर्थत्वे अपि आज्येन सह विकल्पेन उपांशुयाजार्थत्वमपि, **इति प्राप्ते,** संभरणविध्येकवाक्यत्वादस्य तदर्थवादत्वेनापि उपपत्तेरनन्यशेषभूतेन 'सर्वस्मै वै' इति वाक्येन विहितस्य आज्यस्य पाक्षिकत्वापादकत्वानुपपत्तेः, उद्धननादिक्रियाभेदेऽपि च दशत्वस्य संभरणरूपैकक्रियासंबन्धादेवोपपत्तेरायुधशब्दस्य च प्रयोजकत्वमात्रलक्षणयाऽप्युपपत्तौ साधनत्वलक्षकत्वाभावात् यज्ञशब्देऽपि तदनापत्तेर्नैतस्य स्फ्यादिविधायकत्वम् । तदेतदर्थवादत्वस्य तृतीयसिद्धत्वेन पूर्वपक्षोत्थानाभावेऽपि शिष्यहितार्थमुक्तमिति द्रष्टव्यम् ।

यत्त्वत्र भाष्यकारादिभिर्लिङ्गमुक्तं स्फ्याद्याकारस्य ह्यवदानेन विकलत्वात् पूर्वपक्षे परिधानीये कर्मणि 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इति यज्ञपात्रकरणकदाहानुपपत्तिरिति, तत् पूर्वपक्षे उद्धननाद्यर्थपात्राणां पृथक् सत्त्वात् तेषां च यज्ञसाधनत्वाभावेऽपि आयुधशब्दाभावेन प्रयोजकतयैव यज्ञपात्रत्वोपपत्त्या दाहोपपत्तेरुपेक्षणीयम् ।

**मण्डन**— 'होतव्याः स्फ्यादयो न हि ।' ६.

**शंकर**— 'प्रदेयं स्फ्यादि नो यजौ ।' ७.

* **यज्ञायुधवाक्यं** संभरणविध्यर्थवादः न तु उपांशुयाजोद्देशेन स्फ्यादिद्रव्यविधायकं दर्शपूर्णमासयोः । **भाट्ट.** ४।१।४. * **यज्ञायुधवाक्यानाम**नुवादता । **भा.** ४।१।४।७–१०.

* **यज्ञायुधी** यजमानः। "दृष्टविरुद्धमपि भवति किञ्चित् वचनम्, पात्रचयनं विधायाह 'स एष यज्ञायुधी यजमानः अञ्जसा स्वर्गं लोकं याति' इति प्रत्यक्षं शरीरकं व्यपदिशति ।" (भा. १।१।५।५ पृ. ४१) "यत्तु प्रत्यक्षविरुद्धं वचनमुपन्यस्तम्, 'स एष यज्ञायुधी यजमानः अञ्जसा स्वर्गं लोकं याति' इति प्रत्यक्षं शरीरकं व्यपदिशति इति । तदुच्यते, शरीरसंबन्धात् । यस्य तत् शरीरम्, सोऽपि तैर्यज्ञायुधैः यज्ञायुधी इत्युच्यते ।" (पृ. ६०) । **भा.** १।१।५।५.

**यज्ञोत्पत्त्युपदेशे निष्ठितकर्म प्रयोगभेदात् प्रतितन्त्रं क्रियेत । १२।१।१९।४३ ॥**

'यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्य' इति सोमे श्रूयते । अत्र यज्ञोत्पत्त्युपदेशे यज्ञस्य उत्पत्तेः उपदेशे आतिथ्यायाः उत्पत्तेः उपदेशे एकस्मिन् उक्तं यत् निष्ठितस्य लूनस्य बर्हिषः कर्म प्रोक्षणम्, अग्राणामुपपायनम्, मूलानामवसेचनं इति । तत् प्रयोगभेदात् आतिथ्यायाः, उपसदां अग्नीषोमीयस्य च प्रयोगस्य भेदात् प्रतितन्त्रं प्रतिकर्म क्रियेत । नहि



आतिथ्यायास्तन्त्रमध्यपतिता उपसदोऽग्नीषोमीयो वा । इति पूर्वः पक्षः ।

**न वा कृतत्वात् तदुपदेशो हि । ४४ ॥**

प्रोक्षणम्, अग्राणामुपपायनम्, मूलानामवसेचनं इति लूनस्य बर्हिषः कर्म आतिथ्यायां उपसत्सु अग्नीषोमीये चेति प्रतिकर्म न कर्तव्यं आतिथ्यायां कृतत्वात् । पुनः क्रियायां हेतुर्नास्ति । साधारणं चेदं आतिथ्यादीनां बर्हिः । कथं ज्ञायते ? हि यस्मात् तदुपदेशः 'यदातिथ्यायां बर्हिः, तदुपसदाम्, तदग्नीषोमीयस्य' इत्यनेन वाक्येन बर्हिषः साधारण्यस्योपदेशः, न धर्मातिदेशः । तस्मात् आतिथ्यायां क्रियमाणाः बर्हिःसंस्काराः सर्वार्था एव भवन्ति, तस्मान्न प्रतिकर्म कर्तव्याः । इति सिद्धान्तः । **के.**

**यज्ञकर्म प्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् । ९।१।१।१॥**

अग्निहोत्रे दर्शपूर्णमासयोः ज्योतिष्टोमे च ये पृथक् धर्माः समाम्नाताः, ते किं यजिप्रयुक्ताः अपूर्वप्रयुक्ता वा इति विचारे सिद्धान्तमाह । यज्ञकर्म यज्ञस्य अग्निहोत्रादेर्यागस्य कर्म कार्यं अपूर्वं इतिकर्तव्यतां प्रति प्रधानम् । हि यस्मात् तत् चोदनाभूतं विधिना प्राप्तं भवति । अतः तस्य अपूर्वस्य द्रव्येषु द्रव्यदेवतादिषु संस्कारः, तत्प्रयुक्तः अपूर्वप्रयुक्तः । तदर्थत्वात् धर्माणां अपूर्वार्थत्वात् । अपूर्वप्रयुक्तत्वे सति तदीयविशेषे विधीयमानाः अन्यस्मिन्नपि तदीयविशेषापन्ने भविष्यन्ति । तस्मात्तत्र ऊहः सिद्धो भवति । **के.**

* 'यज्ञकर्म प्रधानं॰' (९।१।१।१) इति तस्यैव (अपूर्वस्य) प्रयोजकत्वं वक्ष्यते । **वा.** ३।३।७।१४ पृ. ८५१. * 'यज्ञकर्म प्रधानं॰' (९।१।१।१) इति नवमाद्याधिकरणन्यायेन यज्ञसंयुक्ताया एव अवघातादिक्रियायाः मन्त्रप्रकाश्यत्वम् । **कु.** १।२।४।३८. * 'यज्ञकर्म प्रधानं॰' देवतावत् । (पौष्णपेषणे) भागधर्मत्वानुपपत्तेः यागद्वारा अपूर्वधर्म एवायं नवमाद्यन्यायेन विज्ञायते । **वा.**३।३।१५।४४ पृ. ८८७. * **यज्ञकर्मणि** ऋग्यजुर्मन्त्राणां तानस्वरेण प्रयोगः । तानः एकश्रुतिः । **भा.** ९।२।८।३०–३१ वर्णकं ३.

* **यज्ञतन्वादिहोमा**धिकरणं आग्नीध्रीयोऽग्निः । **संकर्ष.** ३।२।१४.

* **यज्ञद्वारं** चात्वालोत्करयोर्मध्यम् । **भाट्ट.** ९।३।१२.

**यज्ञपत्यधिकरणम् ।** इडानिगदस्थयज्ञपतिशब्दस्य असमवेतार्थकत्वात् विकृतौ नोहः ॥

**चोदिते तु परार्थत्वाद् विधिवदविकारः स्यात् । ९।१।१४।४० ॥**

**भाष्यम्**— स्तो दर्शपूर्णमासौ, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । तत्र इडानिगदः 'इडोपहूता' इत्येवमादिः । तत्रदमाम्नायते 'दैव्या अध्वर्यव उपहूता उपहूता मनुष्या य इमं यज्ञमवान् ये च यज्ञपतिं वर्धान्' इति । तत्र अयमर्थः सांशयिकः । किं बहुयजमानके यज्ञपतिशब्दः ऊहितव्यः, उत अविकारेण प्रयोक्तव्य इति । तत्रेदं तावत् परीक्ष्यते किं समवेतवचनो यज्ञपतिशब्दः, उत असमवेतवचन इति । कथं समवेतवचनः ? यदि यज्ञपतिवृद्धिवचनं यज्ञपतेरुपकारकम्, ततः समवेताभिधायी । अथैतत्स्तुत्यर्थम्, ततो न समवेताभिधायी । किं प्राप्तम् ? ऊहितव्यः, समवेताभिधायीति । कथम् ? यज्ञपतिवृद्धिवचनात् यज्ञपतयः प्रोत्सहन्ते । इडापदानपेक्षश्च पदैर्यज्ञपतिवृद्धिरभिधीयते । तस्मान्मुख्यः प्रत्ययः, इडास्तुतौ जघन्यः । तस्मादर्थविप्रकर्षात् न इडास्तुतिः । अतो यज्ञपतिशब्दः ऊहितव्यः । यस्यैव वृद्धिर्नोच्यते, स एवोत्साहसंस्कारेण संस्कृतो न स्यात् । तस्मात् सर्वे वृद्धिसंस्कारार्थं वदितव्याः । सर्वेषु वदितव्येषु बहुवचनम् । **एवं प्राप्ते, ब्रूमः** । चोदिते तु परार्थत्वाद्विधिवदविकारः स्यात् । चोदितमपि यत्, समवेतं परार्थं चिकीर्ष्यते न स्वसंस्कारार्थम्, तदपि अविकारेण प्रयुज्यते । तन्नोहितव्यं स्यात्, परार्थत्वात् । अत्र हि यज्ञपतिवचनं वृद्धिविशेषणार्थम्, वृद्धिवचनं चेडास्तुत्यर्थम् । कथमवगम्यते ? इडोपाह्वानेनैकवाक्यत्वात्, इडाप्रकरणाच्च । अथ यदुक्तं गम्यते इडापदानपेक्षं यज्ञपतिवृद्धिवचनं तेषामुत्साहकम्, उपहूता मनुष्या ये यज्ञपतिं वर्धयेयुरिति । अत्रोच्यते । 'स यो हैवं विद्वानिडया चरति' इति अभिधाय 'अथ प्रतिपद्यते,

इडोपहूतोपहूतेडोपास्माँ इडाह्वयतामिडोपहूता ' इत्याह । तेनावगम्यते यस्यैष आरम्भः, स इडाया मन्त्र इति । तन्मध्यपतितश्च, उपहूता मनुष्या इत्येवमादिः, यज्ञपतिं वर्धान् इत्यन्तः। तस्मादिडामुपह्वातुं वदितव्यः इति वाक्यादवगम्यते । समर्थश्चेडोपाह्वाने । यजमानं तु प्रोत्साहयितुं वदितव्य इति नास्ति वाक्यम् । केवलं वदितुं सामर्थ्यमस्ति । न च सामर्थ्यमात्रेण वाक्यादृते विनियोगा भवन्ति। इडाप्रकरणं चैवमनुगृहीतं भविष्यतीति । इडया च सहैकवाक्यता । तस्मादियं वचनव्यक्तिः, उपहूता मनुष्या ये यज्ञपतिं वर्धयितुं समर्था इति । तत्र यज्ञपतिविशिष्टा वृद्धिर्वक्तव्येति, एकस्मिन्नपि यजमाने कीर्तिते भवति विशेषणकार्यम् । तस्मादविकारः स्यात् । विधिवत् । यथा यत्र यजमानो गुणभूतो विधीयते, तत्र येन केनचिद्यजमानेन स विधिः सिध्यति । यथा, 'यजमानसंमितौदुम्बरी भवति ', ' शुक्रं यजमानोऽन्वारभते ' इति ।

**टुप्**— ' यज्ञपतिं वर्धान् ' इति वृद्ध्या सह यज्ञपतेः इडापदमनपेक्ष्य प्रत्यक्षैकवाक्यता, इडया सह परोक्षा इति पूर्वः पक्षः । सिद्धान्तस्तु, यज्ञपतिशब्दो वृद्धिविशेषणम् । वृद्धिरिडास्तुत्यर्था । इडोपह्वानेन एकवाक्यत्वात् । अथ यदुक्तमिडापदानपेक्षं यज्ञपतिवृद्धिवचनं गम्यते इति । उच्यते । ' स यो हैवं विद्वानिडया चरति ' इत्यनेन इडया चरितव्यमिति विधीयते । तत्रेडाप्रचारस्यायं मन्त्र इडोपहूतेत्यादिः ' ब्रह्मदेवकृतमुपहूतम् ' इत्येवमन्तः इडोपह्वानार्थः । ' दैव्या अध्वर्यवः ' इत्यादिः ऋत्विगुपह्वानार्थः । अध्वर्युशब्दवाच्याः सर्वे ऋत्विजो लक्षणया, ' उपहूता मनुष्याः ' इति त एवोच्यन्ते । कीदृशास्त इति । उच्यते । ये यज्ञमवन्ति रक्षन्ति, ये च यज्ञपतिं वर्धयितुं क्षमास्तादृशा मनुष्या उपहूताः । तस्मात् मनुष्यविशेषणत्वात्परार्थो यज्ञपतिशब्दः । तेन नोह्यते ।

**शा**-- ' उपहूता मनुष्या ये यज्ञपतिं वर्धान् ' इति किं एतत् यज्ञपतिवृद्धिप्रकाशनेन प्रोत्साहनकरणेन तत्संस्कारार्थं सत् अनेकयजमानकेषु कर्मसु ऊहितव्यम्, उत इडास्तुत्यर्थो यज्ञपतिशब्दो नोहितव्य इति ( तदर्थं च किं यज्ञपतिशब्दाभिधेययजमानसंस्कारार्थमिदम्, उत इडास्तुत्यर्थमिति संशयनिष्कर्षः ) । ' **इडामन्त्रैकवाक्यत्वादिडास्तुत्यर्थता भवेत् । स्वामिवृद्ध्यर्थता त्वस्य सामर्थ्येनावगम्यते ॥ वाक्याच्च बलवल्लिङ्गम्, दृष्टं चेह प्रयोजनम् । उत्साहकरणात्, स्तुत्यामदृष्टार्थत्वमापतेत् ॥ यजमानेषु बहुषु सर्वसंस्कारसिद्धये । ऊहे यज्ञपतिं वर्धानित्येवं प्राप्त उच्यते ॥ प्रत्यक्षादेव वचनादिडोपाह्वानशेषता । कृत्स्नस्य निगदस्योक्ता तन्मध्यपतितं ततः ॥ न पृथग् भवितुं शक्तमतः स्तुत्यर्थता वरम् । वृद्धिप्रकाशने कल्प्यं लिङ्गेन विनियोजकम् ॥ यच्छब्देन च पारार्थ्यं वृद्धेः श्रुत्या विधीयते । लिङ्गादपि ततो वृद्धेर्न स्वार्थेन प्रकाशनम् ॥**' सत्रे तु एकयजमानवृद्धिप्रकाशनेन इडास्तुतिसिद्धेः नोहः ।

**सोम**— प्रकृतौ लाक्षणिकस्यापि धान्यशब्दस्य यदि ऊहः, तदा किमु वक्तव्यं प्रकृतौ मुख्यस्य यज्ञपतिशब्दस्य इत्युत्थानात् **संगतिः । सूत्रार्थस्तु**- चोदितेऽपि यज्ञपतिशब्दे परार्थत्वात् इडास्तुत्यर्थत्वात् अविकारः नोहः स्यात् । विधिवत् । यत्र परार्थतया यजमानो विधीयते ' शुक्रं यजमानोऽन्वारभते ' इत्यादौ, तत्र यथा एकनापि तत्सिद्धिः, एवमिहापि एकयजमानवृद्धिप्रकाशनेनापि स्तुतिसिद्धिरिति ।

**वि**-- ' ऊह्यो यज्ञपतिर्नो वा, वृद्ध्यर्थोत्साहतोऽग्रिमः ।, प्रत्यक्षोक्त्या कृत्स्नमन्त्र इडार्थो नोहनं ततः ॥ ' प्रत्यक्षश्रुत्या कृत्स्नो मन्त्रः इडोपाह्वाने विनियुक्तः, इति नास्ति सत्रे ऊहः ।

**भाट्ट**— दर्शपूर्णमासयोरिडानिगदे श्रुतम् । ' दैव्या अध्वर्यव उपहूता उपहूता मनुष्या य इमं यज्ञमवान् ये यज्ञपतिं वर्धानुपहूते द्यावापृथिवी ' इत्यादि । तत्र सत्रे यज्ञपतिशब्दो बहुवचनान्तेनोहितव्यो न ति चिन्तायाम्, न तावदसमवेतार्थकत्वादनूहः यज्ञपतेः तद्वृद्धश्च मनुष्यरूपाध्वर्युपदवाच्यऋत्विक्कर्तृकायाः कर्मणि समवेतत्वात् । न चास्य इडोपाह्वानवाचकपदैकवाक्यतया तदर्थत्वावगमात् यज्ञपतिवृद्धिप्रकाशनार्थत्वाभावेन सत्यपि समवेतार्थत्वे परार्थत्वादनूहः, लिङ्गेन मन्त्रगतवाक्यस्य ' स्योनं ते ' इतिवत् बाधेन यज्ञपतिवृद्ध्यर्थत्वोपपत्तेः । न च ' स यो



हैवं विद्वान् इडया प्रचरति ' इति विधाय ' अथ प्रतिपद्यते इळोपहूतोपहूतेळोपास्मां इळाह्वयतामिळोपहूतेत्याह ' इति ब्राह्मणवाक्येन प्रतीकग्रहणेन कृत्स्नस्य निगदस्येडोपाह्वाने विनियोगात् तत्सहकृतेन मन्त्रगतवाक्येन मन्त्रलिङ्गस्यैव बाध इति **वाच्यम्**, ब्राह्मणवाक्येन यावदुपात्तस्यैव विनियोगोपपत्तौ प्रतीकग्रहणे प्रमाणाभावात् । अस्तु वा विनियोगान्तरकल्पनागौरवभिया प्रत्यक्षवाक्येनैव प्रतीकग्रहणेन समस्तविनियोगकल्पनम् । अत एव ' स्योनं ते ' इत्यादौ प्रत्यक्षविनियोजकवाक्याभावात् अपेक्षितविनियोगद्वयकल्पनेऽपि न क्षतिः । किञ्च ' ये यज्ञपतिं वर्धान् ' इत्यादौ यच्छब्दबलादेव यज्ञपतिवृद्धिकर्तॄणां मनुष्यरूपऋत्विजामुपाह्वानकर्मत्वं प्रतीयते । अतो यच्छब्दसामर्थ्यात्मकलिङ्गादेव अस्य इडोपाह्वानशेषता । अत एव ' स्योनं ते ' इत्यत्रापि यदि पूर्वार्धे यच्छब्दः स्यात्, तदा स्यादेव तत्रैकवाक्यता, न त्वेतदस्तीत्यतो मन्त्रभेदोऽङ्गीकृतः । प्रकृते तु यच्छब्दसद्भावादिडोपाह्वानशेषतैव । तथापि प्रथनशेषभूतस्यापि ' उरु ते यज्ञपतिः प्रथताम् ' इति मन्त्रस्यानुषङ्गिकयज्ञपतिप्रोत्साहनार्थत्ववदस्यापि तथात्वोपपत्तेः । सत्रे तद्वदेव ऊहोपपत्तिः । नहि प्रोत्साहनार्थेषु ' आयुर्दा अग्नेऽस्यायुर्मे देहि ' इत्यादिषु सत्रे नोहः आवृत्तिर्वा । अतश्च यद्यपि नेदं प्रथनफलम्, तथापि आनुषङ्गिकप्रोत्साहनमात्रेणोहवत् इहापि इडोपाह्वानशेषभूतस्याप्यस्य मन्त्रस्यानुषङ्गिकयज्ञपतिप्रोत्साहनार्थत्वादूहोपपत्तिरविकलैव । वस्तुतस्तु प्रहरणाङ्गभूतस्यापि प्रस्तरप्रतिपादकपदैकवाक्यतापन्नस्यापि ' आयुराशास्ते ' इत्यादेः प्रहरणफलप्रतिपादकत्वात् यथा सत्रे ऊह इति प्रत्युदाहरणसूत्रे वक्ष्यते तथा इहापि इडोपाह्वानाङ्गस्यापि इडोपाह्वानपदैकवाक्यतापन्नस्यापि अस्य इडोपाह्वानफलप्रतिपादकत्वात् युक्त एव सत्रे ऊहः । नहि तृतीयानिर्दिष्ट एव मान्त्रवर्णिकं फलं नान्यत्रेति नियमे प्रमाणमस्ति, स्थानादिविनियुक्तस्यापि मन्त्रस्य देवताकल्पकत्ववत् फलकल्पकत्वेऽपि बाधकाभावात् । न च अपेक्षितकल्पकत्वेऽपि यत्र इडोपाह्वानादेः इडासंस्कारार्थत्वेन कृतार्थता, तत्र विना तृतीयां न फलकल्पकत्वमिति **वाच्यम्**, तृतीयास्थलेऽपि प्रहरणप्रतिपाद्यप्रस्तरप्रतिपादकतया सूक्तवाकप्रातिपदिकबलेन मान्त्रवर्णिकदेवतामात्रकल्पनेन वा तृतीयावगतकरणत्वनिर्वाहोपपत्तौ 'इदं द्यावा' इति पदानामिव आयुरादिपदानामपि स्तावकत्वेनोपपत्तेः फलकल्पकत्वे प्रमाणाभावात् । ' ममाग्ने वर्चः इति पूर्वमग्निं परिगृह्णाति ' इति इतिकरणविनियुक्तस्थले फलकल्पकत्ववत् इडोपाह्वानेऽपि इतिकरणविनियुक्तत्वात् फलकल्पकत्वोपपत्तेश्च । न च एवमपि एवमादिस्थले सर्वत्रैव यज्ञपतेरुद्देश्यत्वात् तद्विशेषणस्यैकत्वादेर्वस्तुतः अविवक्षितत्वेन प्रकाशनानर्हत्वात् सर्वयज्ञपतीनां च ' ग्रहं संमार्ष्टि ' इतिवत् प्रातिपदिकेनैव प्रतीत्युपपत्तेः, प्रकृतौ साधुत्वार्थस्यैकवचनस्य कथं विकृतावूह इति **वाच्यम्**, प्रकृतौ अविहितस्यापि अधिकार्येकत्वस्योपकारकत्वमात्रेण तावत् सद्भावात् तावतैव एकवचनेन एकत्वप्रकाशनोपपत्तौ साधुत्वार्थकत्वकल्पने प्रमाणाभावात् । अतश्च विकृतौ तद्गतबहुत्वप्रकाशनार्थं सिध्यत्येवोहः । इति प्राप्ते, न तावत् यज्ञपतिवृद्धिरुपाह्वानफलम्, इडाभक्षणाङ्गत्वेन कृतार्थस्य स्वरसतः फलानपेक्षत्वात् । एवं सत्यपि यदि तृतीयया इतिकरणेन वा क्रियां प्रति विनियोगः स्यात्, ततः क्रियाकरणत्वं मन्त्रस्य सकलस्य क्रियाप्रकाशनद्वारेणैव, इति प्रथमतस्तावत् क्रियाप्रकाशकत्वमेव, तदसंभवे तत्संबन्धिप्रस्तरादिप्रकाशकत्वम्, तस्याप्यसंभवे मन्त्रप्रकाश्यस्य अनपेक्षितस्यापि क्रियासंबन्धकल्पनम् । इतरथा सकलस्य मन्त्रस्य श्रुतकरणत्वानिर्वाहात् । तत्र च विनिगमनाविरहात् यथैव सूक्तवाकप्रतिपाद्यमन्त्रदेवतायाः कल्पनम्, तथा आयुरादेरपि फलस्य । यत्र तु सर्वथा असंभवस्तत्र ' इदं द्यावा ' इत्यादौ अगत्या स्तावकत्वमिष्टमेव । अनयैव च दिशा ' ममाग्ने ' इत्यादौ वर्चःप्रभृतीनामपि फलत्वं बोध्यम् । तत्रापीतिकरणविनियुक्तत्वस्य कौस्तुभे स्थापितत्वात् । अत एव कौस्तुभोक्तरीत्यैव यत्र प्रथनमन्त्रादौ नेतिकरणेन विनियोगः, अपि तु लिङ्गादेव सः, तत्र ' प्रथस्व ' इति भागस्य प्रथनप्रकाशकत्वेन प्रयोजनवत्त्वलाभे अवशिष्टभागस्य प्रोत्साहनस्तावकत्वादिनैव तदेकवाक्यत्वोपपत्तौ न प्रथनफलकल्पकत्वम्, लिङ्गैकदेशेऽपि प्रयोजनलाभे सकलस्य

प्रयोजनवत्त्वोपपत्तेः इति मीमांसकमर्यादा । तत्रापि तु लिङ्गवशात् फलकल्पकत्वाङ्गीकारे नातीव काचिदनुपपत्तिः, परंतु तत्र क्रियाजन्यत्वं फलस्य लिङ्गवशात् प्रतीयते यथा प्रथनमन्त्रादौ । प्रकृते तु प्रथमं तावन्न इति-करणेन क्रियां प्रति विनियोगः 'अथ प्रतिपद्यते इत्याह' इत्यादिना मन्त्रोच्चारणस्यैव इडाभक्षणाङ्गत्वेन विधेयत्वात् । अस्तु वा ब्रूआदेशत्वादाहशब्दस्य उक्तविशेषणविशिष्टोपाह्वानप्रकाशनस्यैव इडाभक्षणाङ्गत्वेन विधिः । सर्वथा नोपाह्वानं नाम किञ्चिदस्ति क्रियाङ्गम्, यत्फलं यज्ञपतिवृद्धिर्भवेत् । द्यावापृथिव्याद्युपाह्वानप्रकाशनस्येव उक्तविधमनुष्योपाह्वानस्यैवादृष्टार्थत्वात् ।

वस्तुतस्तु सत्यप्युपाह्वानस्य भक्षणाङ्गत्वे न तत्फलत्वं यज्ञपतिवृद्धेरत्र मन्त्रे प्रतीयते, येन मान्त्रवर्णिकफलकल्पना शङ्क्येत । नहि इडाभक्षणार्थे यज्ञपतिवृद्धिकर्तृमनुष्योपाह्वानमात्रेण यज्ञपतिवृद्धिर्जायते इति शब्दस्तारस्यात् प्रमाणान्तरमन्तरेण प्रतीयते, 'ये यज्ञपतिवृद्धिं कर्तुं समर्थास्ते उपहूताः' इति हि तदर्थः । न च यो यत्कर्तुं समर्थः तदुपाह्वाने तज्जायते इत्यत्र प्रमाणमस्ति, अतो न तावदस्य फलप्रतिपादकत्वम् । अत एव न प्रोत्साहनार्थत्वमपि, वृद्धिगतस्वनिष्ठत्वज्ञानमन्तरेण प्रोत्साहनानुपपत्तेः । अतोऽत्र यज्ञपतिवृद्धेः उपाह्वानविशेषणत्वेन उपात्तायाः परार्थत्वात्, अदृष्टार्थप्रकाशनविषयत्वेन अदृष्टार्थत्वाच्च, सत्रे प्रकृताप्रकृतसाधारणैकयज्ञपतिप्रकाशनमात्रेण च तद्दृष्टोपपत्तेरनूहः । यत्रापि यजमानः न स्वरूपेणोपयुज्यते परं तु गुणभूतः यथा औदुम्बरीसंमानादिषु, तत्राप्याग्नेयीन्यायात् (३।२।८) प्रकृतग्रहणेऽपि एकस्यैव ग्रहणं न सर्वेषाम्, यजमानसंस्कारकत्वाभावात् । तत्र का कथा अदृष्टार्थप्रकाशनविषयभूते यज्ञपताविति । अत एव यत्र यजमानस्य मान्त्रवर्णिकायुरादिफलभोक्तृत्वेन प्राधान्यं यथा सूक्तवाकादौ 'आशास्तेऽयं यजमानः' इत्यादौ, यत्र वा प्रोत्साहनार्थत्वेन यजमाननिष्ठश्रद्धाजननात् तस्य प्राधान्यं यथा 'आयुर्दा अग्ने' 'उरु ते यज्ञपतिः प्रथताम्' इत्यादौ, तत्रोभयत्रापि सत्रे ऊहः । तदिदमुक्तं 'विकारस्तत्प्रधाने स्यात्' इति प्रत्युदाहरणसूत्रेण ।

मण्डन-- 'नहि व्रजेद् यज्ञपतिस्त्विडायाम् ।'

शंकर-- 'न यज्ञपतिशब्देऽसौ ।' २२.

* **यज्ञपतिवत्** । यथा 'य इमं यज्ञमवान् ये च यज्ञपतिं वर्धान्' इति यज्ञपतिर्मनुष्याणां होतॄणां प्रशसार्थो न स्वार्थे कीर्त्यते इति अविकारेण प्रयुज्यते । न सर्वान् यजमानान् प्रति आदरः । भा. १०।४।२५।५१.

* **यज्ञपतिशब्दस्य** इडोपाह्वानमन्त्रगतस्य बहुयजमानके विकारे नोहः, असमवेतार्थकत्वात् तस्य । भा. ९।१।१३।४०.

* **यज्ञपात्राणि** आ अन्तात् (यावज्जीवं) धारयितव्यानि । ११।३।१३।३४-४२, ४५, * यज्ञपात्राणि यज्ञसंबन्धेन हि पात्राणि भवन्ति । भा. ११।३।१३।४०, * **यज्ञपात्रैः** 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' । ६।६।६।३४, * **यज्ञपात्राणां** अग्नीनां च परिधानीये कर्मणि प्रतिपत्तिः यजमानशरीरे निक्षेपणम् । ११।३।१३।३४. * यज्ञपात्राणां तन्त्रस्य नियमः । भाट्ट. ११।३।१३.

**ॐ यज्ञपात्राणां धारणं आधानमारभ्यैव ॥**

**प्रकृत्यर्थत्वात् पौर्णमास्याः क्रियेरन् । ११।३।१४।४३ ॥**

**भाष्यम्**--एवं स्थितमपर्यवसितम् । अन्तरा चिन्तान्तरं क्रियते (सूत्रद्वयेन) । यज्ञपात्राणि धारयितव्यानि इत्युक्तम् । तत्र चिन्त्यते किं पौर्णमास्याः आरभ्य धारयितव्यानि, उत आ अग्न्याधेयात् इति । किं प्राप्तम् ? पौर्णमास्याः आरभ्य धारयितव्यानि इति । कुतः ? प्रकृत्यर्थत्वात् । इमानि पात्राणि अनारभ्योक्तत्वात् दर्शपूर्णमासार्थानि । तत्रैषामुत्पत्तिः । उत्पत्तिप्रभृति च धारणम् । तस्मात् पौर्णमास्याः आरभ्य धारयितव्यानि ।

**अग्न्याधेये वाऽविप्रतिषेधात् तानि धारयेन्मरणस्यानिमित्तत्वात् । ४४ ॥**

**भाष्यम्**-- न वा पौर्णमास्या आरभ्य धारणम् । किं तर्हि ? अग्न्याधेयात् । कुतः ? अविप्रतिषेधात् । यद्यपि पौर्णमास्यां विहितानि चोदकेन पवमानहविःषु प्राप्तानि । ततःप्रभृति धार्यमाणेषु विप्रतिषेधो भवति, मरणस्यानिमित्तत्वात् । प्राक् पौर्णमास्या यदि मरण-



मापद्येत, यजमानशरीरसंस्कारलोपो भवति । आधानाद्यारभ्य धार्यमाणेषु अविप्रतिषेधो भवति । तस्मादाधानादारभ्य धारणम् ।

**वि**-- 'किं पौर्णमासीमारभ्य यद्वाऽऽधानमियं भृतिः ।, प्रकृत्यर्थतयाऽऽद्यः स्यात्, मरणानियमात् परः ॥' परः पक्षः आधानमारभ्य धारणमिति ।

**भाट्टदीपिका** तु पूर्वाधिकरणे गता । तत्र हि अन्तरागर्भिणीसहितमेकमेवाधिकरणं कृत्वा व्याख्यातम् ।

**मण्डन**-- 'तेषामग्न्याधानतो धारणं स्यात् ।'

**शंकर**-- 'पवमानेष्टितस्तु सा ।' सा पात्रभृतिः ।

**ॐ यज्ञपात्राणां यावज्जीवं धारणं नियतम् ॥**

**यज्ञायुधानि धारयेरन्, प्रतिपत्तिविधानादृजीषवत् । ११।३।१३।३४ ॥**

**भाष्यम्**-- यज्ञपात्राणि तु आ अन्तात् धारयितव्यानि । कुतः ? प्रतिपत्तिविधानात् । प्रतिपत्तिस्तेषां परिधानीये कर्मणि विधीयते, 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इति । ऋजीषवत् । तद्यथा, अहर्गणे सर्वेषामह्नामृजीषोऽवभृथे प्रतिपादनार्थं धार्यते । 'ऋजीषमप्सु प्रहरति' इति श्रूयते (तद्वत्) ।

**यजमानसंस्कारो वा तदर्थः श्रूयते तत्र यथाकामी तदर्थत्वात् । ३५ ॥**

**भाष्यम्**-- न वेयं पात्राणां प्रतिपत्तिः । किं तर्हि ? यजमानसंस्कारोऽयम् । तदर्थस्तेषां पात्राणामर्थः श्रूयते । कथं ज्ञायते ? तेषां तृतीयया निर्देशात्, यजमानस्य द्वितीयया । तत्र यथाकामी स्यात् । तेषामन्येषां वा प्रासनम् । तदर्थत्वात् अर्थकर्मत्वात्, पात्राणां यैः कैश्चिदप्यर्थः सिध्यतीति ।

**मुख्यधारणं वा, मरणस्यानियतत्वात् । ३६ ॥**

**भाष्यम्**-- मुख्यानां वा आद्यानां पात्राणां धारणम्, नानियमः । कुतः ? मरणस्यानियतत्वात् । अनियतकालं मरणम् । कदाचित्तानि पात्राण्युत्सृष्टानि भवेयुः, मरणं चापद्येत । तत्र यजमानशरीरसंस्कारलोपः स्यात् । एवमपि तावद्धारयितव्यानि यावदपरः प्रयोगः, परतस्तदीयैः पात्रैरर्थकर्म भविष्यति । पूर्वेषु विद्यमानेषूपादानमन्येषामनर्थकम् । तस्मान्मुख्यधारणमेव न्याय्यम् ।

**यो वा यजनीयेऽहनि म्रियेत सोऽधिकृतः स्यादुपवेषवत् । ३७ ॥**

**भाष्यम्**--अथवा न मुख्यानां धारणम् । यो यजनीयेऽहनि म्रियेत यजमानः, सोऽनेन संस्कारेणाधिकृतः स्यात् । तस्य तानि पात्राणि संनिहितानि । उपवेषवत् । यथा सांनाय्ययाजिनः एवोपवेषोपधानेनाधिकारः । तस्योपवेषः संनिहितः इति ।

**न, शास्त्रलक्षणत्वात् । ३८ ॥**

**भाष्यम्**--तदेतन्नोपपद्यते । किं कारणम् ? शास्त्रलक्षणं तद्भवति । यथा सांनाय्ययाजिनः एवोपवेषो नान्यस्येति । तत्र हि सांनाय्यार्था शाखा । तामनुनिष्पद्यते उपवेषः । तस्या असांनाय्ययाजिनः असंभवः । अथेदमनियतं संस्कारविधानम्, यजनीये वाऽहन्यन्यत्र वा, अनारभ्यविधानात् 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इति । न चान्यस्मिन्नहनि यज्ञपात्राणामुपवेषवदसंभवः । शक्यते हि धारणेन संपादयितुम् । तस्मादुपवेषः अदृष्टान्तः ।

**उत्पत्तिर्वा, प्रयोजकत्वादाशिरवत् । ३९ ॥**

**भाष्यम्**-- अथवा न धारणम् । किं तर्हि ? संस्कारकालेऽन्यानि नवानि पात्राण्युत्पाद्यानि । प्रयोजकत्वात् संस्कारस्य । आशिरवत् । यथा क्रतपेये 'घृतव्रतौ भवतः' इति वचनादभावे व्रतदुहः, 'अन्यां यजमानस्य व्रतमाशिरे दुहन्ति' इति श्रुतेराशिरार्थमन्या गौरुपादीयते, एवम् ।

**शब्दासामञ्जस्यमिति चेत् । ४० ॥**

**भाष्यम्**-- अथ पश्यसि एवं सति यज्ञमात्रशब्दः असमञ्जसो भवति । यज्ञसंबन्धेन हि पात्राणि यज्ञपात्राणि भवन्ति । न च नवानां यज्ञसंबन्धोऽस्तीति ।

**तथाऽऽशिरेऽपि । ४१ ॥**

**भाष्यम्**-- आशिरेऽपि याऽसावन्या गौरुपादीयते, सा यजमानस्य व्रतधुङ् न भवति । तत्र शब्दस्यासामञ्जस्यमेव । यदि तत्रान्या गौः, इहाप्यन्यानि पात्राणि भविष्यन्ति । वक्तव्यो वा विशेष इति ।

**शाखात्तु विप्रयोगस्तत्रैकद्रव्यचिकीर्षा प्रकृतावथेहापूर्वार्थवद् भूतोपदेशः । ४२ ॥**

**भाष्यम्**— अयमुच्यते। शास्त्राद्धि प्रयोगस्तत्र। शास्त्रेण तत्र शब्दस्यासामञ्जस्यं व्रतदुहो विप्रयोगः कृतः, 'धृतव्रतौ भवतः' इति। एकद्रव्यचिकीर्षायां 'यजमानस्य व्रतयुक्तामाशिरे दुहन्ति' इति, ऋतपेये चोदकेन प्राप्यते। ततश्चासंभवान्निवर्तेत। आशिरं च गां प्रयुङ्क्ते। तस्मात्तत्र शब्दासामञ्जस्यमनुरुध्यते। अथेहापूर्वोऽर्थो नान्यतः प्राप्यते। यज्ञपात्रैश्च दाहः अविशेषेण प्रत्यक्षश्रुतः। संभवति च तेषां संपादनं धारणेन। तस्मादिह आकस्मिकं शब्दस्यासामञ्जस्याश्रयणं भवतीति धारणमेव पात्राणाम्।

**प्रतिपत्तिर्वा, यथाऽन्येषाम्। ४५॥**

**भाष्यम्**— स्थितादुत्तरम्। (पूर्वसूत्राभ्यां अन्तर्गर्भिणी—अधिकरणम्)। यदुक्तं पात्रैर्थः क्रियते यजमानस्य संस्कार: इति, तन्न। किं तर्हि? प्रतिपत्तिरेषां पात्राणां अग्नीनां च यजमानशरीरे। कथम्? यथा अन्येषां द्रव्याणां सोमलिप्तानां अवभृथगमनं प्रतिपत्तिः तद्वत्। तुल्यो हेतुः। तान्यपि नानाकर्मसु उपयुक्तानि प्रतिपादनार्हाणि; इमान्यपि पात्राणि अग्नयश्च तथैव, तस्मात् तेषामपि प्रतिपत्तिः। ननु तृतीयासंयोगः उभयत्र विद्यते, न खलु। यजमानशरीरे अग्नीनां पात्राणां च निक्षेपणं प्रतिपत्तिः, न दहनमाहिताग्नेः। दहने च तृतीया, तत्र तेषां गुणभाव एव, तर्हि तत् साध्यते। निक्षेपणे तु द्वितीयैव, यथा 'दक्षिणे पाणौ जुहूमासादयति' इति।

**शा**— सिद्धान्त्येकदेशी तु (प्राभाकरः) आह— यद्यपि गुणाभावः पात्राणाम्, तथापि धारणम्। परित्यागे हि सति मरणस्य अनियतत्वात् कदाचित् पूर्वप्रयोगोपयुक्तेषु परित्यक्तेषु उत्तरप्रयोगकाले अनागते यजमानः प्रमीयेत, तत्र यज्ञपात्राभावात् विगुणो दाहः स्यात्। तस्मादवश्यं उत्तरकालं यावत् तेषामेव धारणम्। धारितेषु च तेषु तैरेव तत्प्रयोगस्यापि सिद्धेः नान्योपादानम्। एवमतः परमपि इति आ अन्तात् धारणम्। (अत्रोत्तरं तु) यद्यपि अग्निनैरपि दाहस्यावैगुण्यम्, तथापि आसादनरूपा प्रतिपत्तिः मः विलोपि इति आधानामेव धारणम् (इति)।

**सोम**— पात्रेषु प्रागुक्तनियमाभावस्य पर्यवसानकथनात् **संगतिः**। **सूत्रे** ऋजीषवत् ऋजीषस्य अवभृथे प्रतिपत्तिपर्यन्तं धारणवत् **इत्यर्थः**।

**वि**— 'मा भूदन्यत्वनियमः पात्रे तन्त्रं किमैच्छिकम्। नियतं वा, ऽग्निमो देशवत्, मैवं प्रतिपत्तितः॥'

**भाट्ट**— पात्रेषु तु नियम एव। 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इति वचनेन तैर्दाहविधानात्। यद्यपि अत्र आहिताग्निशरीरप्रतिपत्त्यर्थदाहे विधीयमाने पात्राणामग्नीनां च गुणत्वमेव, तृतीयाश्रवणात्, दाहस्य शरीरप्रतिपत्त्यर्थतया दृष्टार्थत्वेन प्राचीनप्रवाहशेषन्यायस्याप्यभावाच्च। अत एव शरीरमपि सत्यपि आहिताग्निपदश्रवणे नाधानोपयुक्तं संस्क्रियते, तथात्वे तत्प्रतिपत्तिरूपसंस्काराभावात् आधानमात्रेणाग्न्युत्पत्तेरसंभवेन उत्तरकर्मस्वनधिकारप्रसङ्गात्। किंतु अव्यभिचरितक्रतुसंबन्धात् आहिताग्निसाध्यक्लृप्तयुक्तमेव। एवं चाधानोत्तरं क्रतुकरणात् प्राक् यजमानमरणे दाहकरणं दाहस्य संस्कारेषु पाठेन पुरुषार्थत्वस्यापि संयोगपृथक्त्वन्यायेन सत्त्वाद्बोध्यम्। अतश्च दाहस्याग्निपात्रप्रतिपत्त्यर्थत्वाभावात् न तदनुरोधेन आ अन्तं धारणनियमः। तथापि क्रतुकरणोत्तरकालं तत्परित्यागे मरणस्यानियतकालत्वात् कदाचित् पूर्वप्रयोगोपयुक्तेषु परित्यक्तेषु उत्तरप्रयोगकालात् पूर्वं यजमानमरणे यज्ञपात्राभावेन दाहवैगुण्यापत्तेः धारणमावश्यकम्, ततश्च तैरेवोपादानलाघवानुरोधेन उत्तरप्रयोगसिद्धेर्न पात्रान्तराक्षेपः। एवं पात्रधारणं न दर्शपूर्णमासप्रभृत्येव। सत्यपि तत्र पात्राणामुपदेशे ततः पूर्वं पवमानेष्ट्यनन्तरं यजमानमरणे दाहवैगुण्यापत्तेः, पवमानेष्टिषु पात्राणामतिदेशेन सत्त्वाच्च, तत एव धारणम्। यज्ञपात्रपदेन प्रमाणसिद्धो येषां यज्ञत्वावच्छिन्नसंबन्धः, तान्युच्यन्ते, न त्वौपदेशिक एव, प्रकृतिमात्रसंबन्धो वा, संकोचे प्रमाणाभावात्। एवं च पवमानेष्टितः पूर्वमाधानमात्रोत्तरं यजमानमरणे यज्ञपात्राभावेऽपि यैः कैश्चित्काष्ठैर्दाहः। अग्निषु तु परमापूर्वविशिष्ट-अग्न्युत्पत्त्यभावेऽपि आधानमात्रजन्य-उत्पत्त्यपूर्वविशिष्टाग्न्युत्पत्तेर्जातत्वेन तैरेव दाहः। अग्निशब्दस्य गार्हपत्यादिशब्दानां च तत्रापि निरूढलक्षणया प्रयोगाविशेषात्



सति संभवे मुख्याग्न्यसंभवे लौकिकाग्न्यपेक्षया तस्यैव ग्रहणौचित्याच्च। आधानोत्तरं हि आहिताग्नित्वत् आहिताग्निशरीरदाहे पुरुषार्थतया प्राप्ते तत्र मुख्याग्नेः परमापूर्वविशिष्टस्याभावेन करणत्वासंभवेऽपि, सति संभवे आधानप्रयुक्तापूर्वविशिष्टस्याग्नेरर्थात् कारणत्वेन अवगतस्य त्यागे प्रमाणाभावः।

वस्तुतस्तु तदा पात्रैरपि दाहः इति शक्यते वक्तुम्, आधानसमये एव पात्रोत्पत्तेर्वक्ष्यमाणत्वात्। तथा यज्ञकरणाभावेऽपि यज्ञार्थमुपादानमात्रेण पुरोडाशकपालवद्यज्ञपात्रत्वोपपत्तेः। अतो दाहवैगुण्यार्थं पात्राणि धारणीयानीति न पात्रे अनियम इति **सिद्धान्तैकदेशिनः**। **सिद्धान्ती** तु— यद्यपि मरणस्यानियतकालत्वात् पात्राणां धारणं भवेत्। तथापि यो नाम प्रयोगान्तरकाले रमणीयानि नवानि पात्राणि लभेत तस्येच्छावशेन पूर्वत्यागेनान्योपादानेऽपि न कश्चिद्दोषः स्यात्, दाहस्य पुरोडाशकपालन्यायेन यैः कैश्चिदपि यज्ञपात्रैरुपपत्तेः। अतो दाहं प्रति पात्राग्न्योर्गुणभावेऽपि 'दक्षिणे हस्ते जुहूमासादयति दक्षिणपूर्वे आहवनीयम्' इत्यासादनं प्रति पात्राग्न्योः संस्कार्यत्वावगमादासादनस्य प्रतिपत्तित्वावगतेः तदनुरोधेन आ अन्तं धारणम्। वस्तुतस्तु— तदनुरोधेन आऽन्तधारणेऽपि इच्छावशेनान्यैरपि क्रत्वन्तरकरणे वैगुण्यानापत्तेः सर्वेषामेव चासादनाख्यप्रतिपत्त्युपपत्तेरस्मिन्नपि पक्षे सर्वकर्मसु पात्रैक्ये प्रमाणाभावः। अत एवं वर्णनीयम्, यज्ञार्थानामपि पात्राणामाधानप्रकरणे उत्पन्नानामाधानाङ्गभूतारण्याहरणकाले एव 'यज्ञियैः केतुभिः सह' इति मन्त्रलिङ्गेन आहरणप्रतीतेः यूपवद्भिन्नकालत्वात् सर्वयज्ञार्थं तन्त्रेणैवोपादानम्, आसादनं तु तेषामेव प्रतिपत्तिः। न चैवमाधानोत्तरं प्राक्पवमानेष्टिभ्यो यजमानमरणे पात्राग्न्योरनुपयुक्तत्वादासादनाख्यप्रतिपत्त्यनापत्तिः। अनुपयुक्तत्वेऽपि आकीर्णवद्यज्ञार्थमुपात्तस्य यज्ञाभावेऽपि प्रतिपत्तिसापेक्षत्वात्। वस्तुतस्तु, ईदृशप्रतिपत्तेरनुपयुक्तत्वादासादनं दाहोपयोगिपात्राग्निसंस्कारकतया उपयोक्ष्यमाणसंस्कारकमपीति तादृशविषयेऽप्यासादनोपपत्तिः। अत एव प्रतिपत्तिरपीयं आमुष्मिकफले एवोपयुज्यते, न त्वैहिके इत्यपि ध्येयम्। अतश्चेयं प्रतिपत्तिरैहिकातिरिक्तस्यैवाङ्गम्। अत एव पवमानेष्ट्यनङ्गत्वेऽपि तदुत्तरमाधानोत्तरं वा मरणे पारलौकिकफलिकदाहोपयोगितयैवासादनमिति ध्येयम्। न ह्यस्य प्रतिपत्तिमात्रकर्मत्वम्, उभयत्र दृष्टार्थत्वाविशेषेण उपयोक्ष्यमाणसंस्कारकत्वस्यापि अङ्गीकारात्। प्रतिपत्तिकर्मत्वादेव च आधानकालोत्पन्नप्राकृतपात्राणामिव तत्तद्विकृतिविशेषकालोत्पन्नवारुणप्रघासिकपात्राणामपि आसादनम्। तेषां परं प्रयोगभेदे अनियमो भिन्नकालत्वाभावात्।

यत्तु वैकृतपात्राणां विकृतिप्रयोगमध्य एव यजमानमरणे आसादनम्, न तु प्रयोगबहिर्भूतमरणेऽपीति **नारायणवृत्तिकारेणोक्तम्**, तत् प्रमाणाभावादुपेक्ष्यम्।

**मण्डन**— 'पात्राणां स्याद्धारणं सर्वकाले।'

**शंकर**— 'आऽन्तात् पात्रधृतिस्त्विष्टा।'

* **यज्ञपुच्छं** 'अनूयाजादि उदवसानीयान्तं' अग्निष्टोमादौ भवति। **कु.** ३।६।१६।४१.

* **यज्ञायज्ञीयं** एकविंशम्। **भा.** ९।२।६।२८ वर्णकं ३. * **यज्ञायज्ञीयं** साम अग्निष्टुति विकृतिरूपायां वायव्यासु ऋक्षु एकविंशस्तोमयुक्तं गातव्यम्, ब्रह्मवर्चसकामेन। **वि.** २।२।१२. * यज्ञायज्ञीयं साम आधाने गायति। **भा.** ३।३।२।९. * यज्ञायज्ञीयं साम अग्निष्टोमे तृतीयसवने अन्ते गीयते। **वि.** ८।३।५, * यज्ञायज्ञीयं साम ज्योतिष्टोमे गीयते। योनिगाने च सामगाः 'गायीरा गिरा' इति गायन्ति। प्रयोगे तु 'आयीरा यीरा' इति गातव्यम्। ब्राह्मणेन निषेधपूर्वकं 'ऐरं कृत्वोद्गायेत्' इति विधानात्। ९।१।१८, * यज्ञायज्ञीयं साम बृहती— सतोबृहतीछन्दस्कऋग्द्वयात्मके सूक्ते, प्रग्रथनेन जगती— ककुब्द्वयरूपतृचात्मके तृतीयसवने गीयते। एकविंशश्च स्तोमस्तत्र। 'यज्ञायज्ञा वो अग्नये' (उत्तरा. ७०३) इति बृहती, 'ऊर्जो न पातं०' इति सतोबृहती (उत्तरा. ७०४)। **वि.** ९।२।६ वर्णकं ३, * यज्ञायज्ञीयं साम 'यज्ञायज्ञा वो अग्नये' इत्याग्नेयीषु ऋक्षु गीयते। २।२।१२, * **यज्ञायज्ञीयेन** अग्निष्टोमः संतिष्ठते। २।२।१२. * **यज्ञायज्ञीये** गिरापदस्य इरापदेन बाधः ज्योतिष्टोमे। ९।१।१८।

५०-५३. मीको. पृ. १५६१ 'गिरापदस्य इरापदेन बाधः०' इत्यत्र अधिकरणं द्रष्टव्यम्। * यज्ञायज्ञीये गिरापदधर्मा इरापदे भवेयुः ज्योतिष्टोमे। भा. ९।२। १३।४०. * यज्ञायज्ञीये गिरापदस्थानापन्ने इरापदे गानं कर्तव्यं ज्योतिष्टोमे। ९।१।१९।५४-५८. मीको. पृ. १५६४ 'गिरापदस्थानापन्ने इरापदे गानं०' इत्यत्र अधिकरणं द्रष्टव्यम्।

* यज्ञोपवीतम्। मीको. पृ. ११६७ 'उपवीतं-यज्ञोपवीतम्' इति बिन्दौ द्रष्टव्यम्। * यज्ञोपवीतम् (नवतन्तुकं वासोविशेषश्च)। 'यज्ञोपवीत्येवाधीयीत अध्यापयेत् यजेत याजयेद्वा' इति कठशाखाविहितस्य नवतन्तुकत्रिवृद्ग्रन्थिकस्य यज्ञोपवीतस्य प्राचीनावीतनिवीतत्वाख्ययोः विन्यासविशेषयोः स्मृतिप्राप्तं पितृमनुष्यप्रधानकर्मविषयत्वम्, यज्ञोपवीतविन्यासस्य विधेयोपवीतवत् वासोविन्यासत्वाभावेऽपि विन्यासत्वसाम्यात् श्रुत्यालम्बनवासोविन्यासविशेषलक्षणस्य उपवीतस्य देवप्रधानकर्ममात्राङ्गत्वापादकं 'उपवीतं देवानां' इत्यस्य विधित्वं निराकर्तुम्। सु. पृ. १३५२। 'यज्ञोपवीती हि' इत्यस्य नवतन्तुकत्रिसूत्रत्रिवृद्ग्रन्थिकब्रह्मसूत्रविषयत्वेन वासोविन्यासविशेषरूपस्य उपवीतस्य सर्वधर्मत्वे लिङ्गत्वाशङ्कायोगः। सु. पृ. १३५२-५३. * यज्ञोपवीतम्। 'स्मृतिभिः पुरुषो नित्यं कृतो यज्ञोपवीतवान्'। वा. ३।४।१।९-३ पृ. ८९६. * 'यज्ञोपवीतिना कर्तव्यम्' इत्यादिस्मृतिः वेदाविरुद्धत्वात् प्रमाणम्। भा. १।३।३।५-७. * यज्ञोपवीतस्य दर्शपूर्णमासादिषु 'उपव्ययते देवलक्ष्ममेव तत् कुरुते' (तैसं. २।५।११) इति क्रत्वङ्गत्वेन प्रत्यक्षविधानात्। तथा काठके च अनारभ्यवादविधिना सर्वयज्ञगतयजनयाजनसंबन्धः अध्यापनाध्ययनसंबन्धश्च श्रूयते 'प्रसृतेन वै यज्ञेन देवाः स्वर्गं लोकमायन्०' इति। वा. १।३। ३।७ पृ. २०१.

* 'यदग्नये च प्रजापतये च सायं जुहोति सूर्याय च प्रजापतये च प्रातः' अयं ब्राह्मणेन देवताविधिपक्षे अनुभयप्राप्तौ व्यवस्थया विधिः। बाल. पृ. १८.

* 'यदन्तरिक्षं०' इति मन्त्रेण गार्हपत्यस्योपस्थानं पितृयज्ञे विहितम्। संकर्ष. १।२।१५.

**यदन्तरेण यन्न संभवति तस्य तदर्थत्वं तदपेक्षमिति न्यायः।** यथा– न हि ज्ञानमन्तरेण कर्मानुष्ठानं संभवतीति। साहस्री. ८५५. * 'यदग्नावैष्णवो पुरोडाशौ अन्तरा यजति'। संकर्ष. १।२।५, * यदपरमवदानं तत्पूर्वमवदाय स्रुचौ निदध्यात्। अत्र अपरशब्दः कर्मपरः न देशकालपरः। २।२।११. * 'यदभूता वषट् कुर्युर्भ्रातृव्यं यजमानस्याशीर्गच्छेत्' एतदपि गुणवाक्यस्य अर्थवादः। टुप्. ११।३।९।१८.

**यदसंदिग्धमप्रयोजनं न च तत्प्रेक्षावत्प्रतिपित्सागोचरः, यथा समनस्केन्द्रियसंनिकृष्टः स्पष्टालोकमध्यमध्यासीनो घटः इति न्यायः।** 'यदसंदिग्ध०घटः' इति न्यायेन विषयप्रयोजनयोरसंभवेन विचारशास्त्रमनारभ्यमिति पूर्वपक्षः इति सर्वदर्शनसंग्रहे जैमिनीये। (अत्र साहस्र्यां 'मध्यासीनो घट इति न्यायः' इति न्यायनाम विद्यते। तस्य अनुपपन्नत्वात् अस्माभिः परिवृत्तिः कृतेति ध्येयम्)। साहस्री. ७२१. * 'यदहरेव न पुरस्तान्न पश्चाच्च दृश्यते' इति अत्यन्तरेण कुह्वामेव विशिष्य विधानं पिण्डपितृयज्ञस्य। संकर्ष. १।२। ११. * 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति। अत्र द्रव्यदेवतमेव विधीयते न यागविधिः इत्यभ्युपगमे विवक्षितार्थापेक्षया न्यूनत्वाभ्युपगमे वाक्यभेदप्रसङ्गः। बाल. पृ. ३, * 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' अयं विधिः सिद्धवत्कीर्तनार्थवादकल्पः। पृ. ३० * 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवति' इति दर्शे आग्नेयपुनःश्रुतिः 'ऐन्द्राग्नः कर्तव्यः' इति विधेयस्य स्तुत्यर्था। वि. २।३।१४. * 'यदाग्नेयोऽष्टाकपालो भवति' अनेन यागोत्पत्तिः विधीयते। टुप्. ९।१।१।१ पृ. १६३६. * 'यदाङ्क्ते' इति अञ्जनस्य ज्योतिष्टोमे 'चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' इति फलार्थश्रुतिः फलार्थवादः, न तु फलविधिः। भा. ४।३।१।१. * 'यदातिथ्यायां बर्हिः तदुपसदां तदग्नीषोमीयस्य' अयं विनियोगसाधारण्यविधिः। बाल. पृ. २०, * 'यदाहवनीये



जुहोति' अयं सामान्यविधिः क्रत्वर्थः। पृ. १५. * 'यदुत्तमे प्रयाजे देवताः समावपति, प्रयाजभाज एवैनास्तत् करोति' तद्यथा अग्निः सर्वेष भागी भवति एवं तदग्नेर्भागे देवताभागिनीः करोति। प्रयाजविषयिका कौषीतकिश्रुतिः। संकर्ष. २।२।२. * 'यदेकया जुहुयात् दर्विहोमं कुर्यात्' इत्यत्र दर्विहोमः कर्मनामधेयम्। स्थालीपाकः, अष्टकाः, अग्निहोत्रम्, नारिष्ठहोमाः इत्यादयो दर्विहोमाः। नात्र वाक्ये दर्वीरूपो गुणो विधीयते, 'दर्विहोमो यज्ञाभिधानं होमसंयोगात्' इति। वि. ८।४।१. * 'यदेवादः पौर्णमास्यां हविः' इति वाक्ये पौर्णमासं हविः अग्नीषोमीयपुरोडाश एव नान्यत्, तस्यैव सोमादुत्कर्षः। उपांशुयाजाज्यमपि अग्नीषोमीयं सोमात् प्राङ् न कर्तव्यं ब्राह्मणेन, परंतु प्राजापत्यं वैष्णवं कर्तव्यमेवेति न तस्योत्कर्षः। दर्शपूर्णमासयोः। भा. ५।४। ६।१९-२१. * 'यदेव तृतीयं ज्योतिस्तदेव तेनाप्यते' इदं आहवनीयं प्रकृत्य श्रुत्यन्तरं इति पूर्वः पक्षः। तृतीयज्योतिःपदं औत्तरवेदिकाग्निपरं इति सिद्धान्तः। संकर्ष. ३।२।३.

**यत्कार्यं जायते यस्मात्तस्मिंस्तत्प्रतितिष्ठतीति न्यायः।** यथा— 'मृत्तिकायां घटस्तन्तौ पटः स्वर्णे अङ्गुलीयकम्' इति वैशेषिकाः प्राहुस्तथा नैयायिका अपि। इति। साहस्री. ९०८.

* 'यत् किंचित् सोमलिप्तं तेनावभृथं यन्ति' इतिवत्। अत्र यथा प्रतिपत्तित्वं स्वीक्रियते तथा 'स्वरुणा पशुमनक्ति' इति पश्वञ्जनं प्रतिपत्तिः, पूर्वपक्षे। सोमलिप्ते तु अवभृथपदे गौणत्वाद्यनेकदोषभिया तदङ्गीकरणमित्युक्तमेव (४।२।८ इत्यत्र) इत्युत्तरः। भाट्ट. ४।४।१०. * 'यत् कुम्भ्यैर्जुहोति तन्निष्ठूर्यै दारुमयेण होतव्यमनिष्ठूर्यतायै'। साकंप्रस्थायीये इदम्। संकर्ष. १।३।२.

**यत्कृतकं तदनित्यमिति न्यायः।** कृतकं कार्यम्, जन्यभाव इति यावत्। तथा च कार्यमात्रस्योत्पत्तेः प्रागसत्त्वेन प्रागभावप्रतियोगित्वान्न प्रागभावाप्रतियोगित्वघटितनित्यत्वम्। ध्वंसस्य प्रागभावप्रतियोगित्वेऽपि भावत्वाभावान्न व्यभिचार इति तार्किकाः। वेदान्तिमते तु ध्वंसस्यापि नाशाभ्युपगमेन न भावत्वं विशेषणीयमिति भेदः। साहस्री. ४९१.

* यच्चार्थात् कृतं न तत् चोदकः प्रापयति। भा. १०।७।८।२३, * यच्च बुद्धौ (विशेष्यत्वेन) संनिहितं तल्लिङ्गं (प्रमाणं)' इत्युक्तम्। ८।१।१७।३३-३४, * यच्च विद्यमानं न दृश्यते, तद्दर्शनाय यत्नः क्रियते। यथा घटं न पश्यामि इति प्रदीपं करोति, न शशविषाणं न पश्यामीति। ७।२।१।१०.

**यच्च स्तूयते तद्विधीयते इति न्यायः।** अनेन अध्ययनवदर्थज्ञानस्यापि विधिरभ्युपगन्तव्य इत्युक्तं महाभारते उपोद्घाते। साहस्री. ७६६.

* 'यत्रास्ति भूतलादौ घटादि तस्याप्रमीयमाणस्य। योऽसौ प्रमाणविरहः प्रमाणविषयेऽपि सोऽभावः॥' ऋजु. पृ. ९४.

**यद् दृष्टं दृश्यते स्वप्नेऽननुभूतं कदापि नेति न्यायः।** स्पष्टोऽयम्। साहस्री. ९७४.

* 'यन्न दुःखेन संभिन्नं, न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं यत् तत्सुखं स्वःपदास्पदम्॥' इदं न लक्षणम्, विशेषणचतुष्टयव्यावर्त्याभावात्। किन्तु स्वरूपकथनमात्रम्। विशेषणचतुष्टयेनापि हि सांसारिकसुखवैलक्षण्यमस्य ब्रुवता सुखत्वावान्तरजातिः स्वर्गत्वमुपलक्ष्यते। तद्धि दुःखमिश्रम्, इदं तु न तथा। एवं सांसारिकं राज्यादिसुखं वर्षाद्यवधिप्रमाणाभावात् शत्रुकृतापहारादिशङ्काग्रस्तम्। इदं तु अर्थवादादिप्रमाणतो वर्षादियावत्कालभोग्यतया प्रमितम्, न तन्मध्ये अपहारादिशङ्काग्रस्तम्। तथा इदं अनन्तरं अवच्छिन्नं संततं वर्षादिपर्यन्तम्, इतरत्तु न तथा। किंतु सुखदुःखोभयरहितावस्थया अवच्छिन्नम्। एवमिदं अभिलाषमात्रेण उपनीतं उपस्थितेन स्रक्चन्दनवनितादिविषयापेक्षम्, इतरत्तु विषयापेक्षमेव। यद्वा, इदं प्रयत्नानपेक्षाभिलाषमात्रोपनीतविषयम्, इतरत्तु प्रयत्नोपनीतविषयमिति। अत एव आकृत्यधिकरणे 'अस्त्यर्थः सर्वशब्दानामिति प्रत्याख्यलक्षणम्। अपूर्वदेवतास्वर्गः सममाहुर्गवादिषु॥' (१।३।९।३० पृ. २९७) इति, वैयाकरणमतनिरासावसरे तदुक्तदृष्टान्तवैषम्योक्त्यर्थे 'कार्यसामर्थ्यमिन्द्रादि-

निर्मिश्रसुखसंततिः ' ( वा. पृ. २९९ ) इति वार्तिके निर्मिश्र-संततिपदाभ्यां आद्यतृतीयविशेषणार्थौं एव स्वर्गत्वजात्युपलक्षणार्थमुक्तौ । तद्व्याख्याने भाट्ट-सोमेश्वरेण तु ' केवलमेव सुखं इत्युक्तेः दुःखामिश्रत्वमेव स्वर्गत्वसामान्योपलक्षणत्वेनोक्तम्, संततित्वं तु चिरकालताख्यं दुःखामिश्रत्वेनैव आक्षिप्यते ' इति वदता अलौकिकसुखविशेषप्रतिपत्त्यर्थं तदुपात्तं इत्युक्तमिति । **बाल.** पृ. ४८–४९.

⧗ **यन्निवृत्तिमद्वस्तु तदुत्पत्तिमदपीति न्यायः ।** ' ध्रुवं जन्म मृतस्य च ' इति भगवद्वाक्यमस्मिन् न्याये बीजम् । **साहस्री.** २६२.

* ' यत् पशुर्मायुमकृत० ' इति मन्त्रः निमित्तविधिसरूपः । **बाल.** पृ. ६५. * ' यत् पूर्णं तन्मनुष्याणां०' इत्यादौ विधिरनुवादो वा इति संशये, अनुवादः इति सिद्धान्तः ज्योतिष्टोमे । **भा.** ३।४।३।११.

⧗ **यद्यथा वर्तते तस्य तथात्वं भाति मानतः इति न्यायः ।** यत् शुक्त्यादि यथा येन शुक्तिकादिरूपेण वर्तते, तस्य तथात्वं शुक्त्यादिरूपत्वं प्रमाणतः स्फुरतीत्यर्थः । उक्तं च– ' यद्यथा वर्तते तस्य तथात्वं भाति मानतः । अन्यथात्वं भ्रमेणेति न्यायोऽयं सार्वलौकिकः ॥ ' इति । **साहस्री.** ५५१.

⧗ **यद्यदा यत्करणसमर्थं तत्तदा तत्करोतीति न्यायः ।** यथा– ' सामग्री स्वकार्यं ( कर्तुं ) समर्था ' इति । सामग्री कारणसमूह इत्यर्थः इति तत्र बौद्धे । **साहस्री.** ६९६.

⧗ **यद्यदा यन्न करोति तत्तदा तत्राऽसमर्थमिति न्यायः ।** यथा हि– शिलाशकलमङ्कुरे इति सर्वदर्शनसंग्रहे बौद्धे । **साहस्री.** ६९७.

* यत् यस्मात् प्रतीयते तत् तस्य वाच्यम्, यथा गोशब्दस्य गोत्वम् । **मीन्या.** * ' यद्योन्यां तदुत्तरयोर्गायति ' । वृद्धं तालव्यं ( ऐ ) आयी भवति । सोऽयं आयीभावरूप ऊहः उत्तरावर्णवशेन कर्तव्यः न तु योनिवशात् । ' कया नश्चित्र ' इत्यत्र ' कया ' इत्यक्षरद्वयात्मकः आद्यो भागः । ' नश्चित्र आभुवत् ' इति द्वितीयो भागः । तत्र ' श्चि ' इत्यक्षरस्थः इकारो वृद्धसंज्ञत्वात् ऐ भवति, स च संध्यक्षरत्वात् विश्लेषेण ' आई ' भवति । परंतु ' कस्त्वा सत्यो मदानां ' इत्यत्र ' सताई मदानां ' इति न कर्तव्यम् । किन्तु ' जराई तृणाम् ' इत्यत्र कर्तव्यम् । **वि.** ९।२।९. * **' यद्वैतदविशेषेण स्थितं क्रमवशादुभौ । प्रत्ययार्थं सह ब्रूतः प्रकृतिप्रत्ययाविति ॥ '** इति **न्यायेन** ( वा पृ. ९०२ ) कर्तुः प्राधान्यस्यापि वाच्यत्ववत् आगमिकतया दर्शनीयत्वात् ( व्याकरणमते ) । **सु.** पृ. १४१७.

* यद् विधेयमवधार्यते तदेव स्तोतव्यम् । **वा.** १।४।१२।२० पृ. ३५१. * ' यत् सप्तदशवतीमुपदधाति० ' इत्यादिश्रुतिः, पात्रधारणपूर्वकभोजनाचारमूलभूता । एकेन परिगृह्य इतरेण अत्ति इति श्रुत्यर्थः । **सु.** पृ. २१४. * ' यः अमावास्यां पौर्णमासीं चातिपातयेत्, अग्नये पथिकृतेऽष्टाकपालं निर्वपेत् ' । अयं विहिताक्रमनिमित्तकपुरुषार्थाधिकारविधिः । **बाल.** पृ. १५. * ' य इष्ट्या पशुना सोमेन वा यजेत, सोऽमावास्यायां पौर्णमास्यां वा ' इत्यत्र सुत्यैव पर्वणि, दीक्षायास्तु अपकर्षः । न तु दीक्षणीया पर्वणि, सुत्यायाश्चोत्कर्ष इति । प्रधानशेषयोः प्रधानस्य प्राबल्यात् । **वि.** १२।२।९, ' य इष्ट्या ' इति वचनं ( यथा ) साङ्गानि कर्माणि अमावास्याकालं प्रति उपाददानं द्वयोरह्नोस्तकालासंभवात् युक्तं यत् आतिदेशिकं व्यहकालत्वं बाधते, न तथा चातुर्मास्यसाकमेधीयेष्टिषु । इति पूर्वपक्षः । **शा.** ५।१।११. * ' य इष्ट्या 'इत्यादिवाक्येन यथा पौर्णमास्यादिकालविधानात्, इतरासां ( विकृतीनां ) इष्टीनां सद्यस्कालत्वं एवं प्रातरादिकालविधानात् सद्यस्कालता किं न स्यात् अत आह पूर्वपक्षी । **सोम.** ५।१।११. ' य इष्ट्या पशुना० ' इति वचनेन विकृतीनां चोदकेन प्राप्तं व्यहकालत्वं बाध्यते । **वि.** ५।४।७, * ' य एतेनानिष्ट्वाऽथान्येन यजेत ' इत्यत्रान्यशब्देन अत्यग्निष्टोमादयः संस्थाः, एकाहाः, अहीनाः, सत्राणि, चेति अशेषाः सोमविकृतयो गृह्यन्ते । ५।३।१४.



⧗ **य एतेनेत्यग्निष्टोमः, प्रकरणात् । ५।३।१३।३७ ॥**

' एष वाव प्रथमो यज्ञो यज्ञानाम्, यत् ज्योतिष्टोमः, य एतेनानिष्ट्वा अथान्येन यजेत गर्तपत्यमेव तज्जायते, प्र वा मीयते ' इति श्रुतम् । यज्ञानां मध्ये ज्योतिष्टोमः प्रथमो यज्ञः । यः ज्योतिष्टोमं अकृत्वा अन्यं यागं प्रथमतः कुर्यात् तेन तथा कृतेन गर्तपत्यं गर्ते पतनमेव स्यात् अथवा प्रमीयेत मरणं स्यात् इति श्रुत्यर्थः । अत्र श्रुतौ ' य एतेन ' इति एतच्छब्देन को यागो गृह्यतां इति विचारे **सिद्धान्तमेवाह** । य एतेन इति एतच्छब्देन अग्निष्टोम एव उक्तः, नान्यः कश्चित् । प्रकरणात् । अग्निष्टोम एव हि प्रकृतः । प्रकृतवाचकं च सर्वनाम । तथा च अग्निष्टोमविषयकमेतद्वचनम् । वाक्यार्थकथनार्थमेव सूत्रम् ।

**लिङ्गाच्च । ३८ ॥**

सिद्धान्ते हेत्वन्तरमाह । चकारः समुच्चये । लिङ्गात् अग्निष्टोमपरः एतच्छब्दः । उक्तवाक्यस्य वाक्यशेषे, नवत्यधिकशतपरिमिताः स्तोत्रीया ऋचः उक्ताः । ताश्च अग्निष्टोमे एव भवन्ति नान्यत्र । वाक्यशेषश्च ' तस्य नवतिशतं ( १९० ) स्तोत्रीयाः ' इति । संख्यासंपत्तिश्च भाष्ये एवमुक्ता– त्रिवृद् बहिष्पवमानं एवं च नव ऋचः, पञ्चदश आज्यानि चत्वारि, सा एकोनसप्ततिः । [ ९+ ( १५ × ४ = ६० ) = ६९ ] पञ्चदशो माध्यंदिनः पवमानः, तेन चतुरशीतिः [ ६९ + १५ = ८४ ], सप्तदशानि पृष्ठानि चत्वारि, सा अष्टषष्टिः चतुरशीत्या सह द्विपञ्चाशच्छतम् [ ८४ + ( १७ × ४ =६८ ) १५२ ] । सप्तदश आर्भवः पवमानः तेन षष्ट्यधिकं शतं नव च [ १५२ + १७ = १६९ ] । एकविंशं यज्ञायज्ञीयं तदेतत् नवतिशतं [ १६९ + २१ = १९० ] अग्निष्टोमस्य इति । **के.**

* 'य एतेनेत्यग्निष्टोमः प्रकरणात् ' । ५।३।१३।३७–३८ ॥ ' न प्रथमयज्ञे प्रवृञ्ज्यात् '– प्रत्येकशक्त्यैव अर्थबोधोपपत्तौ अतिरिक्तशक्तिकल्पनायां प्रमाणाभावात् प्रथमशब्दस्य च अप्रवृत्तप्रवर्तनविषयवाचित्वात् आद्यप्रयोगपरत्वावगतेः, यज्ञशब्दस्य च लक्षणया प्रयोगपरत्वम्, प्रकरणात् ज्योतिष्टोमरूपयज्ञपरत्वमेव वा अङ्गीकृत्य प्रथमयज्ञपदेन ज्योतिष्टोमप्रथमप्रयोगोऽभिधीयते । स च अग्निष्टोमसंस्थाकज्योतिष्टोमस्य पाञ्चमिकन्यायात् अतिरात्रसंस्थाकस्य च वचनात् । **भाट्ट.** ३।३।१२. * ' य एतेन० ' इत्यनेन अग्निष्टोमस्य ज्योतिष्टोमस्य वादः । **भा.** ५।३।१३।३७–३८. * ' य एतेन अनिष्ट्वा अथान्येन ' इति वाक्यं पूर्वमग्निष्टोमस्य कर्तव्यतामाह पश्चाद् गवादीनाम् । **वा.** ५।३।१४।३९. * ' य एवं विद्वानग्निं चिनुते ' इति चयनं अग्निद्रव्यसंस्कारः । **वि.** २।३।१०, * ' य एवं विद्वान् पौर्णमासीं यजते ' इत्यादि विद्वद्वाक्यं अनुवादकं न कर्मान्तरविधायकम् । २।२।३. * ' य एवं विद्वान् वामदेव्यं गायति ' इत्यादीनि यजुर्वेदवाक्यान्येव । **वा.** ३।३।२।९ पृ. ८१३. * ' य एव पदानां प्रतिपत्तौ प्रतिपदं पाठः ' इति महाभाष्यकारोक्तन्यायेन साधूनां प्रतिपदं पाटं नाध्यवस्यति । **सु.** पृ. २६३.

⧗ **यः कल्पः स कल्पपूर्वक इति न्यायः ।** एवं हि संसारस्यानादित्वात् ईश्वरस्य च सर्वज्ञत्वादीश्वरो गतकल्पीयं वेदमस्मिन् कल्पे स्मृत्वोपदिशतीति भावः । ' यथापूर्वमकल्पयत् ' इति श्रुतेरिति । **साहस्री.** ४७१.

* ' यः कामयेत, प्रथेय पशुभिः, प्रप्रजया जायेयेति, स एतामविं वशामादित्येभ्यः कामायाऽऽलभेत ' । अत्र बहुदैवत्येऽपि एकस्मिन् पशौ गणैकत्वात् मेधपतिशब्दे नास्त्यूहः । एकवचनान्तश्च मेधपतिशब्दः ( तद्घटितमन्त्रः ) द्विवचनान्तेन विकल्प्यते प्रकृताविव । **वि.** ९।३।१३. * ' यः कामयेत वीरो म आजायेतेति स चतुर्होतारं जुहुयात् ' अयं विशेषविधिः पुरुषार्थः । **बाल.** पृ. १५.

⧗ **यः कारयति स करोत्येवेति न्यायः ।** कारयितुः कर्तृत्वमिति । यथा राजादिर्हि भृत्यैः युद्धादिकं कारयन् स्वयं करोतीति प्रसिद्ध तथा प्रकृतेऽपि । **साहस्री.** ५४.

**यः कुरुते स भुङ्क्ते इति न्यायः ।** स्पष्टार्थः । **साहस्री.** १०७.

**यश्चार्थादर्थो न स चोदनार्थ इति न्यायः ।** अस्यार्थः– यः श्रुतार्थनान्तरीयकतया लभ्यते, न स वेदार्थ इत्यर्थः । नान्तरीयकतयेत्यस्य संबन्धिरूपकतयेत्यर्थः । शबरस्वाम्युक्तिरूपोऽयं इति (११।३।६।१४) । **साहस्री.** ७८३.

* यश्चोभयोर्दोषो नासौ एकं पक्षं निवर्तयति । **भा.** ८।३।३।७, * यश्चोभयोर्दोषो नासावेकस्य वाच्यः । ८।३।६।१४, * यश्चोभयोः पक्षयोर्दोषो न तमेकश्चोद्यो भवति । ६।६।३।२०.

**यश्चोभयोः समो दोषो न तेनैकश्चोद्यो भवतीति न्यायः ।** वर्णानामेव वाचकत्वोपपत्तौ नातिरिक्तस्फोटकल्पना अवकल्प्यते इति सर्वदर्शनसंग्रहे पाणिनीयेऽभिहितः । **साहस्री.** ७२३.

* 'यश्चोभयोः समो दोषः परिहारोऽपि वा समः । नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥' इति न्यायः । 'तस्माद्यत्रोभयोर्दोषः' शेषं समानम् । **श्लोवा.** शून्यवादे २५२. * यश्च यस्य कर्ता, स तेन व्यपदिश्यते, यथा पाचको लावक इति । **भा.** १।१।२।२. * 'यो नाम क्रतुमध्यस्थः कलञ्जादीनि भक्षयेत् । न क्रतोस्तस्य वैगुण्यं यथाचोदितसिद्धितः ॥' पुरुषार्थानृतवदने तु 'यो नाम०' इति न्यायात् क्रतोर्न वैगुण्यं किन्तु पुरुषस्य प्रत्यवायमात्रं इति प्रतिषेध्यप्रतिषेधयोः ऐकरूप्यमेवाश्रितं कर्त्रधिकरणे । **सोम.** १०।८।७. * यः फले चोद्यते, स इतिकर्तव्यतया संबध्यमानः इतिकर्तव्यतां प्रति प्रधानम् । **वा.** ७।१।१।२. * 'यो ब्राह्मणायावगुरेत्, तं शतेन यातयात्, यो निहनेत् सहस्रेण, यो लोहितं कुर्यात् यावतः प्रस्कन्द्य पांसून् संगृह्णीयात् तावतः संवत्सरान् सुवर्गं लोकं न प्रजानीयात्, तस्मान्न ब्राह्मणायावगुरेत्, न हन्यात्, न लोहितं कुर्यात्' अयं फलतो व्यवस्थारूपः प्रतिषेधः । **बाल.** पृ. ३५. * 'यो ब्राह्मणायावगुरेत्०' इत्यादिः प्रतिषेधः नरकपरिहारार्थः । स च पुरुषगतनरकपातः संकीर्तितः न तु क्रतुगतः । **वा.** ३।४।६।१७. * 'यो मासः, स संवत्सरः' इति वचनात् मासः गौणः संवत्सरः । **वि.** ६।७।१३.

**यो यद्वपति बीजं हि लभते सोऽपि तत्फलमिति न्यायः ।** स्पष्टः । **साहस्री.** ७३६.

**यो यं प्रति सेव्यः स तस्माद्भिन्न इति न्यायः ।** तत्र तथाहि अनुमानेनापि जीवेश्वरयोर्भेदोऽवसीयते । परमेश्वरो जीवाद्भिन्नः, तं प्रति सेव्यत्वात् । यो यं प्रति सेव्यः स तस्माद्भिन्नः, यथा भृत्याद्राजा । **साहस्री.** ७१०.

**यो यस्य प्रसङ्गे लभतेऽसौ तत्कृतानि कार्याणीति न्यायः ।** तद्यथा– उपाध्यायस्य शिष्यो याज्यकुलानि गत्वाऽग्रासनादीनि लभते, एवं प्रकृतान्तरेऽपि बोध्यम् । अयं 'स्थानिवदादेशोऽनल्विधौ' १।१।५६ इति सूत्रभाष्ये स्पष्टः । **साहस्री.** ८३३.

**यो यस्य मित्रं न हि तस्य दूरमिति न्यायः ।** स्पष्टः । **साहस्री.** ९८०.

**यो यन्निरूपितसांसिद्धिकप्रकाराक्रान्तः स तन्निरूपित–तज्जातीयविशेषणाधानविशेषसंतानकः इति न्यायः ।** अयं मर्यादापरिपाटीग्रन्थे विस्तरशो निरूपित इति विरम्यते । **साहस्री.** ८२५.

* यो यद्विशेषस्य बोधकः स तद्बोधकः इति श्रोत्रादौ व्याप्तिदर्शनम् । **सु.** पृ. १४३६. * यो यागकर्ता स एव यागफलभोक्ता । यजमानस्य च प्रयोजकतया सर्वकर्तृत्वमस्त्येव । साक्षात्तु त्यागमात्रं यजमानेन कर्तव्यं इतरत् ऋत्विग्भिः । **वि.** ३।७।८. * 'यो वा अन्यस्यान्यस्य प्रवरेण' इति यजमानेतरप्रवरानुकीर्तने निन्देयम् । **संकर्ष.** ३।४।१. * 'यो विदग्धः स नैर्ऋतः' इत्यादौ दर्शपूर्णमासयोः विधिरनुवादो वा इति संशये अनुवादः सिद्धान्तः। **भा.** ३।४।३।११, * 'यो वृष्टिकामो, योऽन्नाद्यकामो, यः स्वर्गकामः, स सौभरेण स्तुवीत । हीष् इति वृष्टिकामाय निधनं कुर्यात्, ऊर्क् इत्यन्नाद्यकामाय, ऊ इति स्वर्गकामाय इति' । तत्र किं सौभरं वृष्ट्यादेर्निमित्तं हीष् इत्यादि अपरं वृष्टेर्निमित्तं अथ सौभरे एव निधनविशेषव्यवस्था इति विचारे



निधनविशेषव्यवस्था इति निर्णयः । २।२।१३।२८–२९.

**यो वै चित्तेन दूरस्थः समीपस्थो हि दूरतः इति न्यायः ।** **साहस्री.** ९७९.

* **'यः शिष्यते स लुप्तार्थाभिधायी' इति न्यायः ।** प्रजापतिर्देवता एषां इति विगृह्य प्रजापतिशब्दात् सप्तदशसु तद्धितेषु कृतेषु, तेषां केवलानां एकशेषे सति 'यः शिष्यते०' इति न्यायेन शिष्टस्यैकस्य तद्धितस्य सप्तदशसु वृत्त्या प्रथमं बहुत्वेनान्वितस्य, पश्चात् प्रकृतिभूतप्रजापतिशब्देन अन्वयः । **कु.** २।२।७।२१.

* 'यः सोमेन यक्ष्यमाणोऽग्निमादधीत, नर्तुं प्रतीक्षेत न नक्षत्रम्' इति कालविशेषबाधः सोमस्यैव, न आधानस्य । **भा.** ५।४।५।१५–१६, * यो हि अन्येन सह संबन्धुमुच्चार्यते, न तत्समीपगतोऽपि अन्यः तेन सह संबन्धुमर्हति । यथा भार्या राज्ञः, पुरुषो देवदत्तस्येति । भार्याविशेषणार्थं उच्चार्यमाणो राजशब्दो न पुरुषेण संबध्यते । ३।१।६।१२, * यो हि अमेध्यं द्रव्यं उच्छिष्टः शयानो प्रौढपादो वा, वामेन हस्तेन वा पादेन वा, यथाकथंचित् देवतायै उत्सृजति, तस्य फलं न भवति इति शिष्टाः स्मरन्ति । यस्तु मेध्यं द्रव्यं शुचौ देशे, प्रयतः, प्राङ्मुखः, दक्षिणेन हस्तेन, समाहितमनाः, मन्त्रवत् नियमवच्च देवतायै उत्सृजति, तस्य फलं भवति इति स्मरन्ति । ७।४।१।१. * 'यो हि प्रधानोपकारित्वेन श्रूयते, स तदङ्गेऽपि स्थित उपकरोति इति कल्प्यते' इति औदुम्बराधिकरणोक्तस्य (वा. १।२।२।२२ पृ. १३६) अङ्गावतारन्यायस्य स्वरूपम् । **सु.** पृ. ८५५. * यो हि बहून् यागान् कल्पयति, कल्पयत्यसौ एकम् । **भा.** २।२।७।२१.

**यो हि भुक्तवन्तं प्रति ब्रूयान्मा भुक्था इति किं तेन कृतं स्यादिति न्यायः ।** अयं 'स्थानेऽन्तरतमः' । १।१।५० इतिसूत्रमहाभाष्ये 'अनर्थकं च' इति वार्तिकव्याख्यावसरे ह्युदाहृतः । भुक्था इति निरनुस्वारपाठ इति बोध्यम् । **साहस्री.** ४३०.

* **'यो हि यदिच्छति, स तत् करोति' इति न्यायः ।** **कणिका.** पृ.९६. * 'यो हि यदिच्छति०' इति न्यायश्च प्रवृत्तस्यैव सिध्यति नाप्रवृत्तस्य इति निश्चयवद्विषयः इति भावः । **सोम.** ६।२।२. * 'यो हि यदिच्छति०' इति हि इन्द्रियं भावयितुं स्वरसत एव पुरुषः प्रवर्तते । **वा.** २।२।११।२६ पृ. ५५१. * यो हि स्मरति इदं मया कर्तव्यमिति स तत् करोति । **भा.** १२।३।१६।३७, * यौ द्वौ कौरव्यौ स एको वाहीकः (इति गौणता) । ८।३।६।२२. * ये एव लौकिकाः पदार्थाः, ते एव वैदिकाः, लोपागमविकारविशेषास्तु क्वाचित्काः व्याकरणसिद्धाः । **वि** १।३।१०, * ये धर्मा यस्मिन् प्रकरणे आम्नाताः, ते तत्रैव व्यवतिष्ठन्ते । अतः अतिदेशविचारः कर्तव्यः । ७।१।१. * 'ये पुरोदञ्चो दर्भाः' इत्यस्यानुवादता (प्रेताग्निहोत्रे) । **भाट्ट.** ३।४।४. * 'ये पुरोदञ्चो दर्भाः तान् दक्षिणाग्रान् स्तृणीयात्' इति मृताग्निहोत्रे, महापितृयज्ञे वा श्रूयते । तत्र अनुवादः एव, न विधिः । **भा.** ३।४।१।१ – ४, ५ पृ. ८९७. * 'ये वा अमी वैराजस्य स्तोमास्तैरेवैते सामन्वन्तः' अत्र सस्तोत्रकग्रहान्तरसाम्यसंपिपादयिषया गौणसामवत्त्वोपपादनम् । **संकर्ष.** ३।३।६.

**येनोपक्रम्यते येन चोपसंह्रियते स वाक्यार्थ इति न्यायः ।** यथा– 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥' इत्युक्ततात्पर्यनिर्णायकषड्विधलिङ्गेषु आदिमौ प्रकरणप्रतिपाद्यस्य अर्थस्य तदाद्यन्तयोरुपपादनरूपावुपक्रमोपसंहारौ स्तः । अयं न्यायः परार्थाऽनुमाने प्रसिद्धः । **साहस्री.** १२८.

* येन क्रमेणोपकरणं तेनैव क्रमेण नियोजनादि वाजपेये प्राजापत्यपशुषु । **बिन्दु.** ५।१।५.

**येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवतीति न्यायः ।** प्राप्तमिति भावे क्तः, येन नाप्राप्ते इत्यस्य यत्कर्तृकावश्यंप्राप्तावित्यर्थः, नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात् । अयं हि विशेषशास्त्रोद्देश्यविशेषधर्मावच्छिन्न-वृत्तिसामान्यधर्मावच्छिन्नोद्देश्यक -

शास्त्रस्य विशेषशास्त्रेण बाधो यत्र, तत्र प्रवर्तते। सामान्यशास्त्रस्याप्राप्तिनोगोऽचारितार्थ्यं हि विशेषशास्त्रस्य बाधकत्वे बीजमिति। **साहस्री.** २२३.

* येन विंशतिरुपात्ताः उपात्तास्तेन दश भवन्ति। **भा.** ८।३।६।१५. * येन स्तोत्रेण अतिरात्रस्य समाप्तिर्भवति, तेन प्रत्यहमनुष्ठीयमानेन, समाप्यमानस्यातिरात्रयागस्य, शतकृत्वोऽभ्यासेन जायमानो गणः शतातिरात्रः। तत्र द्वादशाहगतदशाहस्य विध्यन्तः। स्तोत्राणि तु ज्योतिष्टोमादेव ग्राह्याणि न द्वादशाहात्। तत्रत्यविंशतिसंख्याकाग्निष्टोमेषु स्तोत्रविवृद्ध्या अतिरात्रत्वं संपादनीयम्। दशरात्रे हि आद्यन्तौ द्वावग्निष्टोमौ। **वि.** ८।३।४–५. * '**यैस्तु** द्रव्यं चिकीर्ष्यते॰' ( २।१।३।८ ) इत्येवं संस्कारकर्माण्येतानि ( शेषकार्याणि )। **वा.** ३।४।१५।४४ पृ. ९८५, * 'यैस्तु द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि॰' ( २।१।३।७ )। ( यैर्द्रव्यं इति अन्यत्र पाठः )। **होमस्य** फलवत्त्वात्, 'यैस्तु द्रव्यं॰' इति प्राधान्यावगमात्। ३।४।१४।४१ पृ. ९७६. * **यस्मात्** कस्माच्चित् हविःशेषात् नास्ति स्विष्टकृत्, किंतु प्रथमहविःशेषादेव। ( इदं ) कृत्वाचिन्ता, यदा कस्माच्चित् तदा प्रथमादेव, इति न्यायप्रतिपादनार्था। वस्तुतस्तु स्विष्टकृत् सर्वेभ्य एव न कस्माच्चित्। **वि.** ३।४।२०.

**यस्याज्ञानं भ्रमस्तस्य भ्रान्तः सम्यङ्न वेद सः इति न्यायः।** यथा— यस्याऽनात्मनि देहादावात्मत्वभ्रमोऽस्ति तस्याज्ञानमस्तीति कल्प्यते इति। **साहस्री.** ३८५.

* **यस्य** अपूर्वस्य शेषः प्रतिपाद्यते तस्य तत्कर्मकरे भक्षः। **भा.** १०।७।८।२३. * 'यस्याहिताग्नेरग्निर्गृहान् दहेत्, सोऽग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्' अयं अनियतनिमित्तकः नैमित्तिकपुरुषार्थाधिकारविधिः। **बाल.** पृ. १४. * 'यस्योद्धृतोऽग्निः, अहुतेऽग्निहोत्रे, उद्वायेत्... तान्येवावक्षाणानि संनिधाय मन्थेत्'। अत्र अग्निहोत्रहोमापवर्गात् प्राक् अग्न्युद्वाने एव पुनर्मन्थनमुक्तम्, तेन कर्मापवर्गे अग्न्यभावात् ( दृश्यमानस्य ज्वलनस्य ) लौकिकत्वं ध्वनितम्। **संकर्ष.** ३।२।९. * 'यस्योभयं हविरार्तिमार्छेत्' इत्यत्र उभयपदमविवक्षितम्, तेन एकदोहनाशेऽपि प्रायश्चित्तम्, न केवलं द्वयोरेव नाशे। **वि.** ६।४।६. * 'यस्यैष धिष्णियो विह्रियते, सोऽनुध्यायति'... 'यजमानं वा एतद्विकर्षन्ते, यदाहवनीयात्पशुश्रपणं हरन्ति, स वैव ( स वा एव ) स्यात्, निर्मन्थ्यं वा कुर्यात् यजमानस्य सात्मत्वाय'। अत्र 'स वा' इति पदेन आहवनीयवादः इति पूर्वपक्षः। प्राजहितवादः सिद्धान्तः। **संकर्ष.** ३।२।२१. * यस्य क्षीरेण भोजनमुदितं भवति, यदि तस्मै सशर्करं दीयते, न कश्चित् विरोधो भवति। सशर्करमपि तत् पय एवेति। **भा.** १२।१।१।४, * यस्य च यो धर्मः, प्रायेण दृष्टः, स तस्यादृश्यमानोऽपि अनुमीयते। यथा यः परार्थान् प्रायेण करोति, अन्यस्मिन्नपि परार्थकरणे स एव संभाव्यते। ८।४।५।१८, * यस्य चिकीर्षा प्रत्युपस्थिता तस्य पूर्वं प्रयोगः। १२।२।१३।३३.

**यस्य दण्डस्तस्य महिषीति न्यायः।** लौकिकगाथारूपोऽयम्। **साहस्री.** ९०१.

* यस्य दश गावः तस्य द्वौ पञ्चकौ गवाम्। **भा.** ८।३।६।१५. * 'यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोति' अयं फलार्थवादकल्प्यो विधिः। **बाल.** पृ. १२. * 'यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोति' इति जुह्वाः फलश्रुतिः फलार्थवादः, न तु फलविधिः। **भा.** ४।३।१।१–३. * 'यस्य पूर्वमवदानं तस्य पूर्वमभिघारणम्' **इति न्यायं** 'स वै ध्रुवामेवाग्रेऽभिघारयति, ततो हि प्रथमावाज्यभागौ यक्ष्यन् भवति' इति लिङ्गदर्शनं ( च ) हेतुवन्निगदेन अर्थवादेन दर्शयति। **टुप्.** ५।४।२।२ पृ. १३३७. * **यस्य येनार्थसंबन्धो दूरस्थेनापि तस्य सः। अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्॥**' वृद्धानां श्लोकोऽयम्। दूरस्थत्वात् अशक्योऽस्य उपसंहार इति चेत्, न, 'यस्य॰ कारणम्' इति न्यायेन दूरस्थस्याप्युपसंहारो नाशक्यः। **सु.** पृ. १०७६, * 'यस्य येनार्थसंबन्धो दूरस्थस्यापि तेन सः। अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्॥' इत्यनेन न्यायेन, अपेक्षावशात् विधिवाक्यान्वयः, अनेकैरपि चैकस्य तन्त्रेणान्वयो न विरुद्धः।



पृ. ७४६, * 'यस्य येन सह संबन्ध एकवाक्यतया न विद्यते, न तस्य तद्विषया शक्तिः कल्प्यते' इति वार्तिकोक्तेन न्यायेन, लिङ्गस्य केवलपदविनियोगे पर्यवसानाऽयोगेन, पदान्तरैकवाक्यत्वापेक्षित्वात् वाक्यमपि लिङ्गात् शीघ्रं प्रवृत्तेस्ततो बलीयः। ( पूर्वपक्षे )। पृ. १२५१.

**यस्य लिङ्गमर्थसंयोगादभिधानवत्। ८।१।२।२॥**

कस्य कस्मिन् अतिदेशः इति सामान्यतो नियामकमाह। यस्य वैदिकस्य विध्यन्तस्य लिङ्गं किंचित् शब्दगतं अर्थगतं वा, विकृतिचोदनायां तद्गुणवाक्ये वा दृश्येत तत्र स विध्यन्तः स्यात्। अर्थसंयोगात्। तस्य अर्थस्य लिङ्गस्य संयोगात् अनुभूतपूर्वसंयोगात्। तस्य लिङ्गस्य तेन विध्यन्तेन संयोगः पूर्वम्, प्रकृतौ अनुभूतः। तस्मात् तेन लिङ्गेन तस्य विध्यन्तस्य अतिदेशः। अभिधानवत्। कुण्डपायिनामयनगतं अग्निहोत्रं इत्यभिधानं यथा नित्याग्निहोत्रधर्मान् बुद्धौ संनिधापयति तद्वत्। अभिधानमिव अभिधानवत्। तथा च लिङ्गसादृश्यं अतिदेशनियामकम्। एवं च यत्र सूक्ष्ममपि किंचित् सामान्यम्, शब्दो वा अर्थो वा हविर्देवतादि, तद्गुणा वा रूपादयः, उपलभ्येरन् तत्र तदीयो विध्यन्तः कल्प्यः। **के.**

* 'यस्य लिङ्गमर्थसंयोगादभिधानवत्' ( ८।१।२।२ ) इत्यनेन न्यायेन प्रकृतिलिङ्गसंयोगेन वैरूपसामतया वैराजसामतया च पृष्ठकार्ये वृत्तिः ( वैरूपस्य वैराजस्य च ) अवगम्यते। **भा.** १०।६।६।१६. * 'यस्य लिङ्गमर्थ॰' इति न्यायेन, अनुवचनत्वसामान्यात् नित्यसामिधेन्यनुवचनप्रकृतित्वस्य काम्यानुवचनेषु सत्त्वेन चोदकतः प्राप्तानां ऋचां प्राप्तिः। **कु.** ३।१।११।२२. * 'यस्य लिङ्गमर्थसंयोगात्' इति प्रकृतिलिङ्गेन विध्यन्तविशेष उक्तः। **भा.** ८।१।४।११, * 'यस्य वैकङ्कती ध्रुवा भवति, प्रत्येवास्याऽऽहुतयस्तिष्ठन्ति, अथो प्रैव जायते' इति ध्रुवायाः फलश्रुतिः फलार्थवादः न तु फलविधिः। ४।३।१।१–३, * यस्य वैदिकस्य विध्यन्तस्य लिङ्गं किंचित्, शब्दगतमर्थगतं वा वैकृत्यां कर्मचोदनायां तद्गुणवाक्ये वा दृश्यते, तत्र स विध्यन्तः स्यात्। ८।१।२।२. * 'यस्य सोममपहरेयुरेकां गां दक्षिणां दद्यात्, अभिदग्धे पञ्च गाः' अत्र पञ्चत्वविशिष्टगोभिः द्वादशशतत्वविशिष्टगवां अश्वादीनां च बाधः इति पूर्वपक्षः। पञ्चसंख्यया केवलं द्वादशशतसंख्याया एव बाधः, न तु अधिकसंख्याविशिष्टगवां अश्वादीनां वा। १०।३।१५।५९, ६२. * 'यस्य सोममपहरेयुः' इत्यादावेकां गामित्यनेन गोगतसंख्याबाधः। **बिन्दु.** १०।३।१३।५९. * 'यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा उदेति, त्रेधा तण्डुलान् विभजेत्। ये मध्यमाः स्युः तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात्। ये स्थविष्ठाः तानिन्द्राय प्रदात्रे दधंश्चरुम्। येऽणिष्ठाः तान् विष्णवे शिपिविष्टाय शृते चरुम्'। अनेन विहितं न कर्मान्तरं निरुप्तहविषः पूर्वदेवताभ्यो दार्शिकाभ्यः अपनयोऽत्र विधीयते। देवताहविषोः परस्परविभागोऽत्र विधीयते, न तु अत्र तण्डुलानां विभागविधिः। निरुप्तस्यैव हविषः तस्मिन्नेव कर्मणि कालव्यत्यासं निमित्तीकृत्य देवतान्तरसंयोगरूपः प्रयोगप्रकारभेदः उपदिश्यते। **वि.** ६।५।१. * **येषां** चार्थानां ज्ञायते एवेतिकर्तव्यता, तेषां कर्तव्यत्वमात्रमुपदिश्यते। यथा— ओदनं पचेत् इति। येषां तु न ज्ञायते, ते सहेतिकर्तव्यतया एव उपदिश्यन्ते, यथा दर्शपूर्णमासौ। एवं चेत् नूनं ज्ञायते यागेनापूर्वनिर्वृत्तो इतिकर्तव्यता, यस्मान्नोक्ता तस्मान्नूनमसावस्तीति। **भा.** ७।४।१।१.

**येषां पुनरवयवा अनर्थकाः समुदाया अपि तेषामनर्थका इति न्यायः।** तद्यथा— 'एकोऽन्धो दर्शनेऽसमर्थस्तत्समुदायश्च शतमपि दर्शनेऽसमर्थम्, एका सिकता तैलदानेऽसमर्था, तत्समुदायश्च खारीशतमप्यसमर्थम्'। **साहस्री.** ६०४.

**येषां संघाता अर्थवन्तोऽवयवा अपि तेषामर्थवन्त इति न्यायः।** तद्यथा— 'एकश्चक्षुष्मान् दर्शने समर्थस्तत्समुदायश्च शतमपि समर्थम्, एकश्च तिलस्तैलदाने समर्थस्तत्समुदायश्च खारीशतमपि समर्थम्' इत्ययं 'हयवरट्' सूत्रमहाभाष्ये स्पष्टः। **साहस्री.** ६०३.

* **यस्मिन्** काले यत् प्रयोजनमपेक्षते तस्मिन् काले एव तत् संपाद्यते इति लोकक्लृप्तो न्यायः उपावहरणाधिकरणे बीजम् । वृ. १०।६।२२।८०.

**यस्मिन् गुणोपदेशः प्रधानतोऽभिसंबन्धः। १।४।३।३॥**

'चित्रया यजेत पशुकामः' 'त्रिवृद् बहिष्पवमानम्' 'पञ्चदशान्याज्यानि' 'सप्तदशानि पृष्ठानि' इत्युदाहरणम्। किं चित्राशब्दः, बहिष्पवमानशब्दः, आज्यशब्दः, पृष्ठशब्दश्च गुणविधयः, उत कर्मनामधेयानि इति संशयः। अत्र प्राभाकरेण उद्भिदधिकरणे एव सर्वेषां कमिसामानाधिकरण्येनैव नामधेयत्वे सिद्धे तत्तदुदाहरणेषु विशेषाशङ्का वाजपेयपर्यन्ताधिकरणचतुष्टये निराक्रियते इति चतुर्णामधिकरणानां उद्भिदधिकरणशेषत्वात् तदीयसंगतिप्रदर्शनेनैव प्रमाणलक्षणे सर्वेषां संगतिरुपवर्णिता । तेन उद्भिदधिकरणसंगतिदूषणमेव सर्वत्र ऊहनीयमिति यथावार्तिकमेव अधिकरणं प्रस्तूयते ।

उद्भिदादिपदानां यौगिकानां क्वचिदर्थविशेषे प्रसिद्धिरहितानां नामधेयत्वं निरूप्येदानीं व्रीह्यादिपदवत् निरूढार्थानां चित्रादिपदानां नामधेयत्वं निरूप्यते। अत्रायं पूर्वपक्षिणोऽभिसंधिः। भवतु उद्भिदादिपदानां क्वचिदर्थविशेषे निरूढत्वासंभवेन यजिसामानाधिकरण्यात् यागनामधेयत्वम्, चित्रापदस्य तु चित्ररूपार्थविशेषे, तथा आज्यादिपदानां घृतादिरूपार्थविशेषे निरूढत्वात् व्रीहिसोमवत् यागनामत्वासंभवात् गुणविधित्वमेव युक्तम् । एतच्च पूर्वाधिकरणे एवोक्तं '**पदमज्ञातसंदिग्धं प्रसिद्धैरपृथक्श्रुति । निर्णीयते, निरूढं तु न स्वार्थादपनीयते ॥**' इति (वा. पृ. ३२५)। तथा च सति प्रसिद्धार्थत्वम्, अधिकार्थत्वम्, प्रवृत्तिविशेषकरत्वं चानुरुद्धं भवतीति। ननु कुत्रायं गुणो विधीयते ? न तावत् फले, आश्रयाभावात् । **नापि** 'दधि मधु घृतं धाना उदकं तण्डुलास्तत् संसृष्टं प्राजापत्यं भवति' इत्येतद्वाक्यविहिता प्राजापत्येष्टिः संनिहिता समस्ति, तामेवाश्रयमासाद्य पशुरूपे फले गुणविधानं इति वक्तव्यम् । तस्या अफलत्वेन आश्रयत्वायोग्यत्वात् । अथ तस्यामेव प्राजापत्येष्टौ गुणविधिरयं (द्रव्ये) इत्युच्यते, मैवम् । तस्या उत्पत्तिशिष्टदध्याद्यवरुद्धत्वेन गुणान्तरप्रवेशासंभवात् । अथोच्यते नायं चित्राशब्दो द्रव्यपरः, किंतु चित्ररूपवर्णपर एवायम् । न चात्र वर्णान्तरं श्रुतमस्ति, अतो दध्यादिभिरेव विहितैः चित्रवर्णैर्यजेत इति वाक्यार्थः । **एतदप्ययुक्तम्** । पशुकामपदस्य विध्यनुवादासंभवेन आनर्थक्यात् । किंच चित्रया इत्यनेन स्त्रीप्रत्ययान्तेन पदेन स्त्रीत्वसमानाधिकरणं चित्रत्वं प्रतिपाद्यते, न तु चित्रत्वमात्रम्, तच्च प्राणिद्रव्ये एव परं संभवति, न दध्यादौ । तेन प्रकृतप्राजापत्ययागेऽपि न गुणविधिः। अत एव दधिमधुघृतवाक्योत्पन्नं यागमनूद्य चित्रापदेन यथासिद्धान्तं फले विधानं इत्येतदपि न संभवति, स्त्रीप्रत्ययान्तेन चित्रापदेन अप्राप्तरूपस्य अनुवादासंभवात् इति । नापि चित्रद्रव्यविशिष्टं यागान्तरमेव फले विधीयते अध्यवसितचित्रगुणकद्रव्योपप्लवे प्रकृतिविशेषानिर्धारणेन विध्यन्तरानुपस्थितेः देवताया अभावेन यागत्वाभावात् । किंच गुणस्याप्रदेयस्य न तावद्यागसाधनत्वम्, द्रव्यलक्षणायां तु लक्षणैव तावद्दोषः । किंच मत्वर्थलक्षणा, विशेषणविधिकल्पना, उत्पत्तिविधिकल्पनाऽपि, चित्रापदाच्च नानाजातीयद्रव्योपप्लवेन अध्यवसायश्चेति न विशिष्टविधिः । उच्यते । पशुयागस्य प्राणिद्रव्यकत्वात् 'प्रकृतौ वा द्विरुक्तत्वात्' इति न्यायेन (३।६।१।२) सकलपशुयागप्रकृतिभूतेऽग्नीषोमीयपशुयागे चित्रत्वस्त्रीत्वविधिरयमिति ब्रूमः। **ननु** अग्नीषोमीयपशुः उत्पत्तिशिष्टकृष्णसारङ्गलोहितसारङ्गादिवर्णान्तरावरुद्धः पुंस्त्वावरुद्धश्च, तेन तत्र कथं वर्णान्तरं लिङ्गान्तरं च विधातुं शक्येत, तथा प्राप्ते कर्मणि कथमनेकार्थविधानं उत्प्रेक्षापदमपि उपयाति ? न च अत्र गत्यन्तरासंभवोऽपि, यतोऽस्ति अग्नीषोमीयविकृतिभूता सारस्वती मेषी, न च तस्यां वर्णान्तरं विरोधकमस्ति लिङ्गान्तरं वा। न च तत्र अनेकार्थविधानदोषोऽपि, चित्रत्वमात्रविधानात् । तेन यथा अनारभ्याधीतमपि साप्तदश्यं दर्शपूर्णमासाख्यप्रकृतौ पाञ्चदश्यावरोधेन प्रवेशं अलभमानं मित्रविन्दाऽध्वरकल्पाद्यासु विकृतिषु निविशते, तथा इहापि चित्रत्वमात्रविधानं सारस्वतमेषीगोचरमेव भविष्यतीति।



**मैवम्** । 'चित्रया' इत्यत्र चित्रत्वस्त्रीत्वविशिष्टं करणत्वं तावत् तृतीयाविभक्त्या अभिहितं प्रतीयते । यथा 'पशुना' इत्यत्र एकत्वपशुत्वविशिष्टं कर्मत्वं प्रतीयते। तथा मेषीगतं स्त्रीत्वविशिष्टं करणत्वमनुवाद्यं तथा किं चित्रत्वविशिष्टमनुवाद्यं विधेयं वा ? न तावदनुवाद्यम्, मेषीगतत्वेन चित्रत्वस्य अप्राप्तत्वात् । नाऽपि विधेयम्, सकृदुच्चरिताया विभक्तेः अनुवाद्यविधेयार्थप्रतिपादनासंभवात् । न च एकस्मिन्नेव प्रातिपदिके कारकत्वं स्त्रीत्वेन संबध्येत, न चित्रत्वेन इति शङ्क्यम् ? न च गत्यन्तरं नास्ति, अग्नीषोमीयगतत्वेनैवोपपत्तेः । तेन लिङ्गाभिधानमनुपदं कारकस्यासंगतमेवेति । न चोत्पत्तिशिष्टलोहितसारङ्गकृष्णसारङ्गादिगुणावरोधेन चित्रत्वाविधानं लोहितसारङ्गकृष्णसारङ्गगुणयोः चित्रत्वाविरोधात् । तेन यथा 'वायव्यं श्वेतमालभेत भूतिकामः' 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इत्यत्रातिदेशलभ्यमानयोरेव आलम्भनिर्वापयोरनुवादः, तथा एतद्वाक्यविधास्यमानचित्रत्वान्तर्गतलोहितकृष्णवर्णादेरयमनुवादः। नापि पुंस्त्वावरुद्धे कथं स्त्रीत्वविधानमिति वक्तव्यम्, 'पशुना यजेत' इत्यत्र नित्यं पुंलिङ्गस्य पशुशब्दस्य पुंस्पशुस्त्रीपशुसाधारणत्वेन एतद्वाक्यगतस्त्रीत्वविधानाविरोधात्, निष्कृष्टानुवादेन वा वासःप्रभृतीनामिव एकहायन्यवरुद्धेऽपि क्रये विधानाविरोधात् । न च प्राप्ते कर्मणि अनेकगुणविधानं दोषः, चित्रत्वस्त्रीत्वविशिष्टकरणरूपैककारकविधानात् पशुकामपदमपि पशुसाधनकैककर्मणि पशूपादानेन अर्थप्राप्तकामनानुवादेनैव उपपन्नमिति अग्नीषोमीयगत एवायं गुणविधिः। तदुक्तं '**चित्रत्वस्त्रीत्वयोगो हि प्राणिजातौ स्वभावतः । तेनैते प्राणियागाङ्गं प्रकृतिं दैक्षमाश्रिते ॥**' इति (वा. पृ. ३२८)।

तथा 'पञ्चदशान्याज्यानि' इत्यत्र आज्यशब्दस्तावत् घृते निरूढः, न च स्तोत्रसमानाधिकरणः श्रूयते, तेनास्य न स्तोत्रनामधेयत्वम्, किंतु 'पञ्चदशान्याज्यानि' इत्यत्र पञ्चदशसंख्याविशिष्टाज्यविधानात् अत्रापि प्राप्तः उभयविधिदोषः । अथ यत्र प्रतीता स्तुतिः अन्यक्रियापदेन श्रूयते तत्र 'अस्तिर्भवन्तीपरः प्रथमपुरुषेऽप्रयुज्यमानोऽपि' इति **कात्यायनस्मरणात्** पञ्चदशसंख्याविशिष्टानां घृतानां सत्ता प्रतीयते । सा च स्तुतिसंनिधिप्रतीता स्तुतिप्रयोगवचनोन्नेयविधिना विधीयते तथाभूतायाश्च प्रकरणेन ग्रहणात् भवति सत्ताविशेषणत्वेन ससंख्यस्यैव आज्यस्य साधनत्वेन विधिः, तेन साधनत्वावगतस्यैव आज्यस्य 'आज्यैः स्तुवते' इत्यत्रानुवादः, स्तुतिमात्रं विधीयते इति । न चाज्यस्य स्तुतिसाधनत्वं न संभवति, 'अग्निमुपनिधाय स्तुवते' इतिवत् पात्रभेदोपकल्पितपञ्चदशसंख्याकानामाज्यानां उपनिधानेनैव स्तुतिहेतुत्वोपपत्तेः । **ननु** 'स्तोमे डविधिः पञ्चदशाद्यर्थः' इत्यनुशासनात् स्तोमशब्दार्थस्तुतिसमुदायावगमात् कथं डप्रत्ययान्तस्य पञ्चदशानीति पदस्य घृतसंख्यावाचित्वम् । **मैवम्** । स्तुतिसाधनसमूहवचनो हि स्तोमशब्दो न स्तोत्रीयासमूहवचनः । स च स्तुतिसाधनत्वाविशेषात् स्तोत्र इव घृतेऽप्यविशिष्टत्वात् तेनात्रापि गुणविधानमेवेति ।

एवमेव 'त्रिवृत् बहिष्पवमानम्' इत्यत्र लोकसिद्धं त्रिवृत् औषधं द्रव्यम्, बहिःस्थितं पवनरूपं बहिष्पवमानशब्दाभिधेयम्, 'बहिष्पवमानेन स्तुवते' इति विहितस्तुतिप्रयोगवचनोन्नेयविधिना विधीयते ।

तथा 'सप्तदशानि पृष्ठानि' इत्यत्रापि लोकप्रसिद्धपृष्ठाख्यानि प्राण्यङ्गान्येव सप्तदशसंख्याविशिष्टानि 'पृष्ठैः स्तुवते' इत्येतद्विहितस्तुतिप्रयोगवचनोन्नेयविधिना विधीयन्ते । इति सर्वत्र गुणविधिरेवेति ।

**एवं प्राप्तेऽभिधीयते** । भवेदेवं यदि प्राप्ते कर्मणि चित्रत्वं स्त्रीत्वं च अनावृत्तेन विधिना विधातुं शक्यते । न च चित्रत्वस्त्रीत्वविशिष्टैककरणत्वविधानादनावृत्तिरिति वक्तव्यम् । यतः करणत्वस्यापि प्राप्तत्वेन अविधेयत्वात् । अथ प्राप्तत्वेऽपि तस्य चित्रत्वस्त्रीत्वावच्छेदेनाप्राप्तत्वात् विधानमित्युच्यते । एवं तर्हि 'दध्ना जुहोति' 'पयसा जुहोति' इत्यत्रापि दध्यवच्छिन्नस्य होमस्य पयोऽवच्छिन्नस्य च होमविशेषणस्य अप्राप्तत्वेन विधानप्रसङ्गः । न च चित्रत्वस्त्रीत्वविशिष्टं करणान्तरमेव विधीयते, उत्पत्तिशिष्टकरणान्तरावरोधेन तस्य विधातुमशक्यत्वात् । प्राप्ते तु करणत्वे चित्रत्वस्त्रीत्वविधाने विध्यावृत्तिर्दुर्वारैवेति । तदुक्तं '**अर्थादनेकमप्यर्थं विधापयति भावना । विशेषणविधिस्त्वन्यत्र गृह्णाति विशेषणम् ॥**'

इति ( वा. पृ. ३२९ ) । अनेकविधिशक्तिकल्पनागौरवं च सुव्यक्तमेवेति ।

तथा उत्पत्तिशिष्टपुंस्त्वावरोधेनापि नाग्नीषोमीये स्त्रीत्वविधानं संभवति । न च नित्यपुंलिङ्गत्वेन साधारणत्वात् पशुशब्दस्य स्त्रीत्वविधानाविरोध इति वक्तव्यम् । शाखान्तरे ‘ अजोऽग्नीषोमीयः ’ इत्याम्नानेन साधारणस्यापि पशुशब्दस्य पुंलिङ्गछागपरत्वात् । न च शाखान्तरविधेर्गुणविधायकत्वात् स्त्रीत्वपुंस्त्वयोर्विकल्पः इति पूर्वपक्ष्यभिप्रायो वाच्यः । शाखान्तरेऽपि ‘ अजोऽग्नीषोमीयः ’ इत्यस्य द्रव्यदेवतासंबन्धाविशेषेणोत्पादकत्वात् ‘सर्वशाखाप्रत्ययमेकं कर्म ’ इत्युत्पत्तिशिष्टपुंस्त्वावरोधेन स्त्रीत्वानवकाशात् । न च वर्णान्तरावरुद्धेऽपि निष्कृष्टानुवादेन गुणान्तरविधिः शक्यते इति वक्तव्यम् । निष्कृष्टानुवादस्यैवाशक्यत्वात् । तदुक्तं ‘ **प्रथमं हि स्ववाक्यस्थैर्गुणैः संबध्यते क्रिया । वाक्यान्तरगतैः पश्चान्न शुद्धा सा ह्यवाप्यते ॥** ’ ( वा. पृ. ३३० ) इति । वासःप्रभृतीनां तु गुणान्तरावरुद्धेऽपि ऋत्विगानतिलक्षणद्वारभेदात् आकाङ्क्षासंभवात् विधानमुपपद्यते एवेति तत्र न विकल्पः, किंतु समुच्चय एवेति । तथा पशुकामपदोपात्तफलसंबन्धनिमित्तोऽपि अपरो वाक्यभेदः । यद्यपि फलं न विधीयते, तथापि तत्र कर्मविधानात् कर्मणि च गुणविधानात् संबन्धद्वयविधानस्य वाक्यावृत्तिमन्तरेणासंभवात् वाक्यभेद एव । न च पशुसाधनके कर्मणि अर्थप्राप्तपशुकामनाऽनुवादोऽयमिति वक्तव्यम् । यतः पशुकामपदात् काम्यमानत्वेन प्रधानीभूतफलसंबन्धितया कामना अवगम्यते । अग्नीषोमीये तु पशुकामनायास्ताद्रूप्याभावान्नानुवादकत्वं इत्यतो गुणविध्यभावात् विचित्रनानाद्रव्यकप्रकृतप्राजापत्येष्टिनामधेयमेव चित्रापदम् । एवं सति चित्रापदेन प्रकृतकर्मोपस्थाप्यपशुरूपफले विधीयते इति । चित्रया इति स्त्रीलिङ्गनिर्देशश्च इष्ट्यभिप्रायेणैवेति न किंचिदनुपपन्नम् ।

तथा ‘ पञ्चदशान्याज्यानि ’ इत्यत्रापि प्राप्ते स्तोत्रे गुणद्वयविधानं नोपपद्यते, वाक्यभेदप्रसङ्गात् । नापि पञ्चदशसंख्याविशिष्टान्याज्यानि विधीयन्ते इति वक्तव्यम् । यतः क्रिया विधीयते, तद्विशेषणं वा, न चाज्यपदवाच्यं घृतं क्रिया, नापि क्रियाविशेषणम् । अतो न विशिष्टद्रव्यविधिः । अथ यत्र अन्यत् क्रियापदं न श्रूयते, तत्र ‘ अस्तिर्भवन्तीपरः प्रथमपुरुषे अप्रयुज्यमानोऽप्यस्ति ’ इत्येतद्बलात् अध्याहृता अस्तिक्रिया समस्ति, सैवोभयविशिष्टा स्तुतिप्रयोगवचनोन्नेयविधिना विधीयते इत्युच्यते, तदप्यसत् । सर्वत्र पुरुषव्यापारो हि विधीयते । अस्तिशब्दवाच्यायास्तु सत्ताया वस्त्वात्मलाभमात्रत्वेन अविधिविषयत्वात् ‘अग्निमुपनिधाय स्तुवीत ’ इत्युपनिधानस्य पुरुषव्यापाररूपत्वेन भवतु विधानम् । न चात्रापि पात्रभेदोपकल्पितानि पञ्चदशसंख्याकानि आज्यानि उपनिधाय इति कल्पनीयम् , कल्पनागौरवदोषादेव वाक्यस्य चान्यथाऽप्युपपत्तेः । तेन उद्भिदधिकरणन्यायेन ‘आज्यैः स्तुवते ’ इति स्ततिनामधेयत्वे सिद्धे, ‘पञ्चदशान्याज्यानि’ इत्यनेन आज्यनामकस्तोत्रानुवादेन संख्यामात्रं विधीयते इति । एवं च सति ‘ स्तोमे डविधिः पञ्चदशाद्यर्थः ’ इति अनुशासनमपि अर्थवद्भविष्यतीति । प्रवृत्तिनिमित्तं च अर्थवादावगतं एतस्मिन् स्तोत्रे क्रियमाणं देवानामाजिगमनम् । अर्थवादश्च ‘ यदाजिमीयुः तदाज्यानामाज्यत्वम् ’ इति ।

एवं प्राप्ते स्तोत्रे ‘ त्रिवृद् बहिष्पवमानम् ’ इत्यत्र त्रिवृद्विशिष्टपवमानरूपगुणद्वयविधाने, तथा ‘ सप्तदशानि पृष्ठानि ’ इत्यत्र सप्तदशसंख्याकपृष्ठद्रव्यविधाने वाक्यभेदप्रसङ्गात् न गुणविधित्वम् । अन्यतरविशिष्टान्यतरविधानं च उभयविशिष्टाध्याहृतक्रियाविधानं च आज्योदाहरणदूषणेनैव निरस्तं इति अत्रापि नामधेयत्वमेव । तथा च सति ‘ बहिष्पवमानैः स्तुवते ’ इत्येतद्वाक्यविहितबहिष्पवमाननामकस्तोत्रानुवादेन ऋगाश्रिता नवसंख्या स्तोत्राङ्गत्वेन विधीयते । तत्प्रवृत्तिनिमित्तं च बहिष्पवमानपदयुक्तमन्त्रनिर्वर्तनीयत्वमेव स्तोत्रस्येति । तथा ‘ सप्तदशानि पृष्ठानि ’ इत्यत्रापि ‘ पृष्ठैः स्तुवते ’ इत्येतद्वाक्यविहित– पृष्ठनामकस्तोत्रानुवादेन सप्तदशसंख्यामात्रं विधीयते इति । नामप्रवृत्तिनिमित्तं च अपां वायुना पृष्ठे स्पृष्टे रथंतरादिसामानि जातानि, तस्मात् तत्साधनतन्नामकानि स्तोत्राणि



पृष्ठानि । तथा चार्थवादोऽपि ‘ तासां वायुः पृष्ठे व्यवर्तत’ इति । **प्रयोजनं** तत्रतत्र तत्तद्गुणोपादानं पूर्वपक्षे, सिद्धान्ते तु नामधेयपक्षोक्तानि । **सूत्रं** तु यस्मिन् गुणविधिनामधेयत्वेन संदिग्धे सति वाक्ये गुणान्तरोपदेशः प्रतीयते, तस्मिन् उपपदस्य प्रधानेन कर्मणा नामधेयत्वेनैव संबन्धः इति । **तौता.**

**यस्मिन् गुणोपदेशः प्रधानतोऽभिसंबन्धः । १।४।२।३ ॥**

‘ चित्रया यजेत पशुकामः ’ ‘ त्रिवृद् बहिष्पवमानं ’ ‘ पञ्चदशान्याज्यानि ’, ‘ सप्तदशानि पृष्ठानि ’ इति चित्रा – पवमान – आज्य – पृष्ठशब्दाः, किं गुणविधयः, उत कर्मनामधेयानि इति विचारे सिद्धान्तमाह । यस्मिन् वाक्ये गुणोपदेशः गुणस्य अपरस्य उपदेशो भवति तस्य प्रधानतः प्रधानेन कर्मणा अभिसंबन्धः परिच्छेदकत्वेन । तद्वाक्यस्थं चित्रादिपदं नामधेयं स्यात् इत्यर्थः ।

किंवा नामधेयं स्यात् इत्यनुवर्तते । प्रधानतः अभिसंबन्धः इत्यस्य प्रधानद्वारा, अनेकेषां गुणानां अनेकविशेषणविधिप्रसवसमर्थेन एकेन विधिना संबन्धो भवति इत्यर्थः ( सु. पृ. ४१९ ) । ‘ चित्रया यजेत पशुकामः ’ इति चित्राशब्दः ‘ दधि मधु घृतमापो धानाः तण्डुलाः तत्संसृष्टं प्राजापत्यम् ’ इत्युत्पत्तिवाक्ये विहितस्य यागस्य नामधेयम् । अग्निष्टोमे सवनत्रये, पवमानदेवताकैस्तृचैर्गीयमानानां स्तोत्रविशेषाणां नामधेयं पवमानपदम् । तत्र प्रातःसवने बहिष्पवमानं नाम, माध्यंदिने सवने माध्यंदिनपवमानं नाम, तृतीयसवने च आर्भवं पवमानं नामेति । प्रातःसवने एव पवमानस्तोत्रोत्तरं गीयमानानि चत्वारि स्तोत्राणि तेषां नामधेयं आज्यं ( आज्यानि ) इति । माध्यंदिने सवने पवमानोत्तरं गीयमानानि स्तोत्राणि चत्वारि, तेषां पृष्ठं ( पृष्ठानि ) इति नामधेयम् । **के.**

**यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणाऽविभक्तत्वात् । ४।१।२।२ ॥**

इदं सूत्रं साक्षात् पुरुषार्थस्य लक्षणं प्रतिपादयति, क्रत्वर्थस्य तु अर्थात् । यस्मिन् इति फलपरं करणपरं च । प्रीतिः इत्यत्र ‘ क्तिन् ’ भावे करणे च । यस्मिन् फले फलविषया पुरुषस्य प्रीतिः इच्छा भवति स पुरुषार्थः साध्यरूपः । यस्मिंश्च करणरूपे यागादौ कृते सति पुरुषस्य प्रीतिः प्रियं स्वर्गादि भवति, सोऽपि पुरुषार्थः साधनरूपः । तस्य पुरुषार्थस्य उभयविधस्यापि लिप्सा लब्धुमिच्छा अर्थलक्षणा । अर्थेन पुरुषार्थेन लक्ष्यते न शास्त्रेण । शास्त्रं विनैव सिद्धत्वात् । अविभक्तत्वात् । प्रियरूपः प्रियसाधनरूपश्च पुरुषार्थः, प्रीत्या सह स्वरूपेण साधकत्वेन च अविभक्तो भवति । तस्मात् स्वर्गादिः प्रियः साक्षात् पुरुषार्थः, साधनरूपश्च यागादिः साधकतया पुरुषार्थः ।

पुरुषार्थभिन्नः सन् यो विहितः, स क्रत्वर्थः इति तु क्रत्वर्थस्य लक्षणं अर्थात् सिद्धम् ।

**किंवा** यस्मिन् फले अनुभूयमाने पुरुषस्य प्रीतिः तृप्तिर्भवति, तस्य फलस्य लिप्सा फलविषया प्रवृत्तिः, अर्थलक्षणा रागप्राप्ता, न विध्यधीना । अविभक्तत्वात् फलस्य रागाविनाभूतत्वात् इत्यर्थः ।

**किंवा,** वर्णकान्तरानुसारेण सूत्रस्य अन्योऽर्थः । यस्मिन् उपात्ते पुरुषस्य प्रीतिः प्रियं पशुलक्षणं फलं भवति, तस्य गोदोहनस्य लिप्सा अनुष्ठितिः अर्थलक्षणा पशुलक्षणफलप्रयुक्ता, न तु क्रतुप्रयुक्ता । विभक्तत्वात् । अत्र पक्षे अकारप्रश्लेषो न कर्तव्यः, गोदोहनस्य प्रयोगविधिपरिग्रहाभावात् । तथा च गोदोहनं पुरुषार्थं न क्रत्वर्थम् ।

**किंवा** अन्यवर्णकान्तरानुसारेण सूत्रस्य अन्योऽर्थः । यस्मिन् द्रव्ये पुरुषस्य प्रीतिः अभिलाषो भवति, तस्य द्रव्यस्य लिप्सा अर्जनं अर्थलक्षणा पुरुषभोग्यरूपप्रयोजननिबन्धना पुरुषार्था इत्यर्थः । अविभक्तत्वात् पुरुषार्थतायाः इन्द्रियसंनिकृष्टत्वात् । तस्मात् द्रव्यार्जनं पुरुषार्थमेव सत् क्रतावपि उपकरोति । **के.**

* ‘ यस्मिन् प्रीतिः पुरुषस्य ’ ( ४।१।२।२ ) इत्यनेन न्यायेन एकैकस्य फलं प्रार्थयमानस्य सत्रमुपायो विधीयते, न सत्रं प्रति ते विधीयन्ते । टुप्. ६।२।१।२ पृ. १३८९. * ‘ या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीं स्वाहा ।

या ते अग्ने रजाशया, या ते अग्ने हराशया ' इत्यत्र संदेहः किं तनूर्वर्षिष्ठा० इति सर्वेषु अनुषक्तव्यं आहोस्वित् लौकिको वाक्यशेषोऽध्याहर्तव्यः । ' या ते अग्नेऽयाशया० ' इत्यादौ अनुषङ्गेणैकवाक्यत्वं ज्योतिष्टोमे उपसद्धोमेषु । वि. २।१।१६. * ' या ते अग्ने (ऽयाशया) ' इति मन्त्रत्रये तनूरित्याद्यंशस्य सकृदाम्नातस्यापि आवृत्त्या विनिष्कर्षः । **संकर्ष.** २।४।२७.

**' या प्रीतिरविवेकानां विषयेष्वनपायिनी । त्वामनुस्मरतः सा मे हृदयान्माप सर्पतु ॥ ' इति न्यायः ।** ' इति न्यायेन सर्वस्माद्भोग्यजाताद्विरक्तधीः । उपसंहृत्य तां प्रीतिं भोक्तर्येव बुभुत्सते ॥ ' अयमर्थः- भोग्येषु प्रेमत्यागपुरःसरमात्मप्रेमकर्तव्यतायां दृष्टान्तत्वेन ईश्वरे प्रेमप्रार्थनापुरःसरं पुराणवचनरूपन्यायमुदाहरति- या प्रीतिरिति । नास्ति विवेको येषां ते अविवेकाः । अर्थादविवेकिनामात्मज्ञानशून्यानां विषयेष्वनपायिनी दृढा या प्रीतिरस्ति हे माप लक्ष्मीपते सा प्रीतिस्त्वामनुस्मरतस्त्वां सदा चिन्तयतो मम हृदयात् मनसः सर्पतु अपगच्छतु । मम मनो विषयेष्वासक्तिं परित्यज्य त्वय्येव सदा तिष्ठत्वित्यर्थः । यद्वा- अविवेकिनां विषयेषु दृढा या यादृशी प्रीतिरस्ति सा तादृशी विषयेषु विद्यमाना प्रीतिस्त्वामनुस्मरतो मे हृदयान्माऽपसर्पतु मा अपगच्छतु सदा तिष्ठत्वित्यर्थः । भवत्वेवं पुराणे श्रुतौ किमायातमित्यत आह-- इति न्यायेनेति । इत्यनेन पुराणोक्तन्यायेन सर्वस्माद्भोग्यजातात् पतिजायादिलक्षणात् विरक्तधीः विरक्ता धीः यस्यासौ विरक्तधीः पुरुषः तां भोग्यगोचरां प्रीतिं भोक्तर्यात्मनि ह्युपसंहृत्यैवमात्मानं बुभुत्सते बोद्धमिच्छतीति भावः । उक्तं च कयाचिद्भक्तशिरोमणिगोप्या- ' हस्तमुत्क्षिप्य यातोऽसि बलात्कृष्ण किमद्भुतम् । हृदयाद्यदि निर्यासि पौरुषं गणयामि ते ॥ ' इति । **साहस्री.** ४५४.

* **याः** इष्टा देवता स्ताः ( सूक्तवाके ) संकीर्तनेन प्रत्यवेक्ष्यन्ते, इयमपीष्टा, न काचिदन्तरितेति । **भा.** ११।३।१६।५४. * **यां** इमां प्रजा आपद्य चरन्ति सा वा ऐकादशिनी । **संकर्ष.** १।४।२७. * ' यां वै कां च देवतामन्तरियात्, तस्या आवृश्च्येत आज्येनैता देवताः परिसंख्याय यजेत् ' अयं भावे क्त्वर्थो विधिः । **बाल.** पृ. २०. * **यस्यां** चितौ ये मन्त्राः प्रक्रान्ताः, तैरेव मन्त्रैः आवृत्तैः, सा सा चितिः पूरणीया । इति प्राप्ते । ' यदेवास्योनं यच्छिद्रं तदेतथा पूरयति ' इति वचनेन लोकंपृणाया ऋच एव न्यूनपूरणे विनियोगात्, प्रक्रान्तनियतसंख्याकमन्त्रसमाप्तौ अवशिष्टा इष्टकाः, लोकंपृणमन्त्रेणैव उपधेयाः, पुनः पुनरावर्त्यमानत्वादेव, ' अयातयाम्नी लोकंपृणा ' इति स्तुतिरुपपद्यते । **संकर्ष.** २।१।१६.

**यदन्नः पुरुषो लोके तदन्नास्तस्य देवताः इति न्यायः ।** यथा- विश्वामित्रर्षिः, श्वजाघनीं श्वपचगृहादाहृत्येन्द्रादिदेवोद्देशेन त्यक्त्वा भोक्ष्यामीति मनसि कृत्वा यदा यथादेवतं तद्भागाँस्त्यक्तुं प्रवृत्तस्तदा तुष्टैरिन्द्रादिभिर्वृष्टिः सृष्टा, सस्यं च तत्क्षणमेव प्रभूतमभूदित्याख्यायिका पुराणेषु स्मर्यते इत्यन्यत्र विस्तरः । **साहस्री.** ९३३.

* **यदर्थो** नियमाश्रयः, तदर्थो नियम इति सर्वत्र क्लृप्तम् । **भाट्ट.** ४।१।१४. * **' यदर्था** क्रिया, तदर्थो नियमः ' । अवघातादिनियमादृष्टस्यापि ' यदर्था० ' इति न्यायेन व्रीह्यर्थतावधारणात् व्रीहिनिष्ठत्वमेव । **कौ.** २।१।३।६ पृ. ५७.

* **यदागमे** योऽर्थः स तस्य । **सु.** पृ. ५६८.

* **यत्किंचिच्छब्दस्य** पर्याप्तिसंबन्धेन बुद्धिविषयत्वविशिष्ट-घटत्वाद्यवच्छिन्ने शक्तिः । ' यत्किंचित् प्राचीनमग्नीषोमीयात् ' ' यत्किंचित् सोमलिप्तं ' इत्यादौ तथैव बोधात् । अत एव शक्यतावच्छेदकतावच्छेदकस्य विषयत्वस्य ऐक्यात् न वाक्यभेदः । यत्किंचिदानय इत्यादौ तु पर्याप्तिसंबन्धेन उपेतबुद्धिविषयत्वविशिष्टे लक्षणा । केवलकिंचित्पदस्य अज्ञातप्रकारावच्छिन्ने शक्तिः । **मणि.** पृ. १६३-६४.

**यद्ग्रहे यदपेक्षं चक्षुस्तदभावग्रहेऽपि तदपेक्षते इति न्यायः ।** आलोकग्रहे आलोकापेक्षाया अभावेन तदभावग्रहेऽपि तदपेक्षाया अभावादिति । सर्वदर्शनसंग्रहे औलूक्ये विस्तरः । **साहस्री.** ७१६.



* **यत्तदोः** एकविषयत्वम् । **सु.** पृ. ४९१. * **यत्तदोर्नित्यसंबन्धः** । ' नहि यच्छब्दतच्छब्दौ वर्तेते भिन्नवस्तुनि ' ॥ **श्लोवा.** आत्मवादे ५० पृ. ७०१. * **' यद्देवत्यः** पशुः तद्देवत्यः पुरोडाशः ' इति न्यायेन पुरोडाशस्य पूषा देवता । **वि.** ३।३।१९.

**यत्परः शब्दः स शब्दार्थः इति न्यायः ।** यः अर्थः परः तात्पर्यविषयो यस्य स यत्परः । स्पष्टमन्यत् । **साहस्री.** ७८४, **मणि.** पृ. ८१. * ' यत्परः शब्दः स शब्दार्थः ' इत्यनेन **न्यायेन** अभिधेयसंबन्धित्वरूपस्यापि शब्दार्थत्वम् । **सु.** पृ. ४९८. * ' यत्परः शब्दः स शब्दार्थः ' इति न्यायेन ' य एवं वेद ' इत्यादिवचनानां स्वार्थे प्रामाण्यं नास्ति इति चेत्, न । महातात्पर्यस्य विधेयविषयत्वेऽपि अवान्तरतात्पर्यस्य स्वार्थविषयत्वानिवारणात् । ततश्च वेदनस्य अनुष्ठानवत् स्वतन्त्रफलवत्त्वम् । **तैसं.** उपोद्घातः पृ. ५ ( सायणभाष्यम् ).

* **' यत्प्रसङ्गेन** यद् आगतं तत्समाप्तौ तद् बुद्धिस्थं जायते ' इति न्यायेन आग्नेयाधिकरणोक्तगुणविधित्वे बुद्धिस्थे सति अत्रापि ( वैश्वदेवाधिकरणे ) तत्प्रग्रन्यन्यायाक्षेपेण गुणविधित्वपूर्वपक्षकरणम् । **कौ.** १।४।११।१३.

* **यन्मध्यपातिनोऽङ्गं** न प्रयुक्तम्, तत्कार्ये तन्त्रिणोऽङ्गं प्रसज्यते । **भा.** १२।१।४।११ । यत् तन्त्रिणोङ्गमध्यपात्यङ्गेन, एकार्थं तत् प्रसज्यते । यथा पाशुकाः प्रयाजाः पौरोडाशिकेषु । १२।१।३।८ । यत्र तन्त्रिणोऽङ्गं क्रियमाणं इतरस्यापि कृतं भवति तत्र प्रसङ्गः यथा पाशुकेषु प्रयाजेषु क्रियमाणेषु पौरोडाशिकाः । १२।१।४।११.

* **यन्मात्रं** तत्र वचनान्तरवशेनापनेष्यते तन्मात्रव्यतिरिक्तेन सर्वेण यष्टव्यं इति न्यायः । **वा.** २।२।६।१७ पृ. ५१२. * **' यन्मात्रेण** विना चोदितद्रव्यदेवतासंबन्धानुपपत्तिः, तन्मात्रमेव अदृष्टाश्रुतं अर्थापत्त्या कल्पयितुं शक्यते नान्यत् ' इति न्यायः शब्दान्तराधिकरणपूर्वपक्षोक्तः । **वा.** २।२।७।२१ पृ. ५२३.

**यद्विवाहस्तद्गीतगानमिति न्यायः ।** यथा यद्वधूवरयोर्विवाहो भवति लोके गानमपि तत्संबन्धि गीयते, नान्यदिति । तथा तत्तद्देवतापुराणादिषु तत्तद्देवतामाहात्म्यवचनानि ह्युपपद्यन्ते इति नापि क्षतिर्नापि परस्परं विरोधः पुराणानामिति । **साहस्री.** ४६४.

**यद्विशेषयोः कार्यकारणभावोऽसति बाधके तत्सामान्ययोरपीति न्यायः ।** यथा- तार्किकाणां घटत्वकुलालकृतित्वादिना कार्यकारणभावे सिद्धे, कार्यत्वेन कृतित्वेन च कार्यकारणभावः, न तु कुलालकृतेर्जातित्वेन द्रव्यत्वेन घटादिकं प्रति कारणत्वम्, तथात्वे तयोरन्यथासिद्धत्वेनाकारणत्वं स्यात्, कारणतां प्रत्यन्यथासिद्धेर्बाधकत्वात् । अत एव न द्रव्यत्वेन दण्डादेर्घटादिकं प्रति कारणत्वम्, नापीन्द्रियत्वेन प्रत्यक्षत्वावच्छिन्नं प्रति इन्द्रियत्वस्यैकस्याऽभावादिति । **साहस्री.** ५००.

* **' यद्वृत्तयोगः** प्राथम्यमित्याद्युद्देश्यलक्षणम् ' इति **न्यायः** । **सु.** पृ. ८६३. * ' यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् ' इति **न्यायेन** प्रथमनिर्दिष्टस्य प्राधान्यमवगम्यते इति भावः । **आभरणम्** ४।१।५।६ ब्रसू. * ' यद्वृत्तयोगः० ' इति **न्यायात्** (' वसन्ते आदधीत, उपनयीत ' इत्यत्र ) वसन्तादिकालस्य निमित्तता प्राथम्यादुपपन्ना भवति । तत्फलं च वसन्ताद्यतिरिक्तहेमन्तादिकालिकस्य आधानस्योपनयनस्य वा ब्राह्मणाद्यनियतकर्तृकत्वसिद्धिः । **कौ.** २।३।३।४ पृ. २८.

* **यच्छब्दः** एव हि तच्छब्दार्थं स्ववाक्योपस्थितं नियमेनापेक्षते, ' येन कर्मणेर्त्सेत् तत्र जयान् जुहुयात् ' इत्यादौ तथैव व्युत्पत्तिदर्शनात् । न तु तच्छब्दोऽपि । **कौ.** ३।३।७।१४ पृ. ३५८. * यच्छब्दः कर्तृसमानाधिकरणः, यदिशब्दः, सप्तमी च निमित्तत्वबोधकाः । यथा- ' यो वै संवत्सरमुख्यमभृत्वाऽग्निं चिनुते ' । अत्र अभरणकर्तृत्वनिमित्ता वैश्वानरेष्टिः । यथा वा- ' यो न प्रतितिष्ठति... स षष्ठीं चितिं चिनुते ' अत्र कर्तृसमानाधिकरणात् यच्छब्दात् षष्ठी चितिनिमित्तिकी । ' यदि रथंतरसामा सोमः स्यात्, ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् ' इत्यत्र यदिशब्दः रथंतरसामत्वस्य

ऐन्द्रवायवाग्रतानिमित्तत्वं बोधयति । 'भिन्ने जुहोति' अत्र सप्तमी पात्रभेदस्य होमनिमित्तत्वं बोधयति । **वि.** ४।४।५–७. *यच्छब्दः–क्रियासामानाधिकरण्याच्च 'यदाग्नेयोऽष्टाकपालः' इत्यादेर्यच्छब्दात् विलक्षणः कर्तृसमानाधिकरणोऽयं 'य एवं विद्वान्' इत्युपबध्यमानो विधिसामर्थ्यं निरुन्ध्यात् । तथा चोक्तं – 'क्रियापदैकयोगित्वे यच्छब्दो न रुजेद्विधिम् । कर्तृयुक्तः स एवान्यप्रापितार्थानुवादकृत् ॥' **वा.** २।२।३।७ पृ. ४८८. * **यच्छब्देन** अनुवादत्वप्रतीतिः । **त्रि.** ३।४।४. * यच्छब्देन, उत्तमपुरुषेण, आमन्त्रणादिना च विधिशक्तिक्षयः । यथा – 'यस्योभयं हविरार्तिमार्छति' अत्र यच्छब्दः 'बर्हिर्देवसदनं दामि' इतिवाक्ये उत्तमपुरुषः, 'अग्नीदग्नीन् विहर' इत्यादौ आमन्त्रणं ( संबोधनं ) विधिशक्तिं हत्वा अनुवादत्वं बोधयति । **वि.** २।१।६. * यच्छब्देन विधिशक्तिप्रतिबन्धः, 'न ता नशन्ति' इत्यादौ । **वा.** २।१।६।३१ पृ. ४३३. * **यच्छब्दस्य** क्रियासमानाधिकरणस्य, विधिशक्त्यप्रतिबन्धकत्वेऽपि, कर्तृसमानाधिकरणः, कर्तव्यत्वानुवादित्वात् विधिशक्तिं प्रतिबध्नाति । **सु.** पृ. ७४४.

* **यच्छब्द–आमन्त्रण**–उत्तमपुरुषाद्युपहतविधिशक्तयो ( हि ) मन्त्राः न कर्मान्तरं कल्पयन्ति । **वा.** ३।१।१।१ पृ. ६४९.

* **यच्छब्दोपबन्धेन** आख्यातस्य विधायकत्वशक्तेः प्रतिबन्धः । **सु.** पृ. ७२६.

* **यच्छब्दतच्छब्दौ** उद्देश्यप्रतिनिर्देशकौ । **वा.** ६।६।३।१६ पृ. १४८५.

* '**यच्छब्दयोगः** प्राथम्यमित्याद्युद्देश्यलक्षणं' इति **न्यायेन** दक्षिणासंबन्धे प्रथमं गवादीनामुपादानेन उद्देश्यत्वावगमत्वम् । **सु.** पृ. ४३५.

* '**यच्छब्दसमभिव्याहारे** सति तच्छब्दस्य तदर्थपरामर्शित्वम्' ( यच्छब्दार्थपरामर्शित्वं तच्छब्दस्य ) इति नियमः ( अयं जातेष्टि–अधिकरणन्यायो नाम ) । **भाट्ट.** ४।३।१४.

* '**यत्संनिधाने यो दृष्टः**' इति न्यायः । ननु ब्राह्मणस्य विधायकत्वोत्तरकालं संबन्धित्वेन 'यत्संनिधाने यो दृष्टः' इति न्यायात् विधेयस्मारकत्वावगतेः, विनियोगात् प्राक् विधायकत्वमविरुद्धम् । **सु.** पृ. ६६७.

* **यद्धविःसंस्कारकं** यद्भक्षणं तत् तद्धविर्यागसंबन्धिपदार्थकर्त्रानतिरूपम्, तद्धविर्यागसंबन्धिकरिष्यमाणपदार्थविषये बलाधानरूपम् वा संस्कारं जनयति । **भाट्ट.** १०।७।८.

* '**यतः** एवकारस्ततोऽन्यस्य व्यावृत्तिः' इति न्यायेन एवकारस्यान्यव्यवच्छेदवाचित्वात् । **सु.** पृ. ८९३.

* **यतीभावः** विरामः समाप्तिर्वा । 'बहव एते यागाः । यदि तु सह क्रियन्ते, ततः सर्वसमाप्तौ यतीभावः पर्यवसितो भवति इत्येकवदुपचार उपपद्यते' । **भा.** ११।२।४।२०.

**यत्रार्थावगतिरेव नास्ति, तत्र संदेहस्य का कथेति न्यायः ।** सर्वदर्शनसंग्रहे जैमिनीये स्पष्टः । **साहस्री.** ७२०.

* यत्राख्यातेन कर्म प्रतिपाद्यते, तत्र यन्नाम, तत् धर्मातिदेशकं भवति । यथा 'मासमग्निहोत्रं जुहोति' इति । **टुप्.** ११।२।१५।६३. * 'यत्रेति वाऽर्थवत्त्वात् स्यात्' । २।१।५।२१ । यत्र संस्कार्यसद्भावः, तत्र प्रगाथः स्यात् इत्येवं सूत्रं व्याख्यातम् । **सु.** पृ. ६५६. * यत्रोभयोः प्रत्यक्षवचनत्वेन सरूपत्वम्, तत्र उपसंहारः, यथा 'पुरोडाशं चतुर्धा करोति, आग्नेयं चतुर्धा करोति' इति । यत्र तु विरूपत्वम्, नास्ति तत्रोपसंहारः । यथा– प्रत्यक्षपरोक्षयोः 'आज्यभागौ यजति' इति चोदकप्रत्यक्षवचनरूपयोः । **वि.** १०।७।९.

**यत्रोभयोः समो दोषो न तत्रैकोऽनुयोज्यः इति न्यायः । साहस्री.** १४०.

**'यत्रोभयोः समो दोषः, परिहारोऽपि वा समः । नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥' इति न्यायः ।** अयं सांख्यप्रवचनभाष्यधृतः । यत्र वादिप्रतिवादिभ्यां न्यस्तपक्षयोस्तुल्यदोषः, न तत्रैकः पर्यनुयोज्यः, स्वपक्षेऽपि तद्दोषसत्त्वात् इत्येवं यत्र विवक्षा तत्रास्य प्रवृत्तिरिति । **साहस्री.** १३९.

* 'यत्र च कारणात् कार्यदर्शनम्, तत्र शक्तेरस्तित्वं संप्रतीयते' इति न्यायेन शक्तेः कारणाश्रितत्वेन शब्द-



समवेतत्वात् तद्भेदे (शब्दभेदे) युक्त एव भेदः (शक्तेः) । **सु.** पृ. २५९. * 'यत्र नित्यानुवादवचनानि स्युः' ७।४।२।५ इति न्यायेन । कृष्णलविशिष्टप्रयाजान्तरस्यैव सौर्ययागाङ्गतया विध्यङ्गीकारेण, दार्शपौर्णमासिकप्रयाजानुवादेन कृष्णलविध्यङ्गीकारेण वा 'यत्र० स्युः' इति न्यायेन परिहर्तव्यम् । **कौ.** २।२।३।५. * 'यत्र नित्या० स्युः' अयं विध्यन्ताधिकरणोक्तो न्यायः । **सु.** पृ. ४४७. * यत्र परशब्दसामानाधिकरण्यम्, तत्र गुणेन ( निमित्तेन ) परशब्दः परत्र वर्तते । **टुप्.** ९।१।११।३६, * यत्र बहूनामल्पानां च धर्मविरोधः, तत्र भूयोऽनुग्रहः, 'भूयसां स्यात् सधर्मत्वं' ( १२।२।७।२२ ) इति । यत्र तुल्यसंख्यानि तत्र 'मुख्यं वा पूर्वचोदनाल्लोकवत्' ( १२।२।८।२३ ) इति । न हि न्यूनसंख्यं मुख्यहीनकारणे न भूयांसि समर्थं बाधितुम् । ७।४।३।१९. * यत्र मन्त्रार्थस्य नानात्वम्, तत्र अस्य ( मन्त्रस्य ) आवृत्तिर्भवति । यथा अग्नौ ( चयने ) लोकंपृणायाः । **भा.** ११।४।१२।४२. * यत्रयत्रानूयाजसामान्याभावः, तत्र चतुर्थचतुर्गृहीतनिवृत्तिः । **भाट्ट.** ४।१।१७. * यत्र यागः फलं प्रति चोद्यते, तत्राङ्गानि गृह्णाति । **भा.** ११।२।९।३६. * 'यत्र लक्षणमुद्दिश्य लक्ष्ये कार्यं विधीयते । तन्मात्रग्रहणं तस्मिन्' इत्यनेन न्यायेन उद्देश्यापूर्वसाधनांशलक्षणत्वोपक्षीणस्य पुरुषस्वरूपस्य उद्देश्यत्वाभावः । **सु.** पृ. १३९५. * यत्र विशिष्टं नैमित्तिकम्, तत्र विशेषणबाधे विशिष्टमेव बाध्यम् । **बाल.** पृ. ११६. * यत्र सूक्ष्ममपि किंचित् सामान्यम्, शब्दोऽर्थो वा, हविर्देवतादि, तद्गुणा वा रूपादय उपलभ्येरन्, तत्र तदीयो विध्यन्तः कल्प्यः । **भा.** ८।१।२।२.

* '**यथर्तावृतुलिङ्गानि** नानारूपाणि पर्यये । दृश्यन्ते तानितान्येव तथा भावा युगादिषु ॥' **इति न्यायेन** प्रतियुगमनुवर्तमाना बबरादयः प्रवाहनित्यतया चन्द्रसूर्यादिवत् वैदिकपदगोचराः सन्तः नैव वेदस्य नित्यतां विरुन्धते । **कु.** १।२।१।१८ पृ. २६. * 'यथैव पाठः प्रतिपत्त्युपायः ( तथैव सामर्थ्यमपि श्रुतीनाम् । तेनैव चैता न समामनन्ति सहस्रभागं तु समामनेयुः ॥' वार्तिकं १।४।१४।२५ सूत्रे ) ननु अध्याहार्यपदस्य यथैव पाठः प्रतिपत्त्युपायः इत्यनेन न्यायेन सामर्थ्यलभ्यतया अनुच्चार्यमाणत्वात् लौकिकशेषकर्तव्यत्वाभिधानं अयुक्तं इत्याशङ्क्य । **सु.** पृ. ६९७. * यथा 'जातस्य पुत्रस्य क्रीडनकं' एवं चोदितस्य परिपूर्णस्य शेषः आम्नायते । इति पूर्वपक्षः । **भा.** ५।२।९।१७.

**यथा नाम तथा गुण इति न्यायः । साहस्री.** ६५७.

* यथा प्रकृतौ पुरोडाशस्य कपाले पाकः, तथा विकृतौ चरोः इत्येकः पक्षः । उदकधारणयोग्ये कटाहघटादौ क्वापि पाकः इति द्वितीयः पक्षः । चरोः स्थाल्यामेव पाकः इति सिद्धान्तः । चरौ पेषणादिनिवृत्तिश्च । **वि.** १०।१।११. * 'यथा शक्नुयात् तथा आश्रयेत्' इति न्यायः । **वा.** २।२।१३।२९ पृ. ५६८, **सु.** पृ. ८७९. * 'यथा शक्नुयात्तथा कुर्यात्' । द्रव्येन्द्रियवैकल्यादिना स्वतोऽशक्तोऽपि, द्रव्यार्जनादिना यथा शक्तो भवति, तथा शक्तिमापाद्य सर्वधर्मोपेतं कुर्यात् इत्यर्थः । यदि तु न कश्चित् सर्वाङ्गोपसंहारसमर्थः स्यात्, ततः कतिपयाङ्गोपसंहारेणापि अधिकारः कल्प्येत । **सु.** पृ. ५३२. * 'यथा स्यात् सत्त्वदर्शनम्' । युगपत् प्रवृत्तेः 'यथा सत्त्वदर्शनं' इत्यनेन न्यायेन तदेव कर्म एकेन इतरेण च प्रतिपाद्यते । न च गम्यते विशेषः कतरेण प्रतिपाद्यते कतरत् पौनरुक्त्यादनर्थकमिति । **वा.** २।३।१४।२८. * 'अपि चोत्पत्तिसंयोगात् **यथा स्यात् सत्त्वदर्शनं** तथा भावो विभागे स्यात्' । यथा एकैकस्य सत्त्वस्य हस्तिनोऽश्वस्य वा दर्शनं एकैकेन कृत्स्नमभिनिर्वर्त्यते एवमेव सत्रे तन्त्रभावो भवेत् । सर्वेषां मध्यकं द्रव्यम् । **भा.** ६।२।१।२.

* '**यथोत्तरं** मुनीनां प्रामाण्यम्' इति न्यायः । ( उत्तरोत्तरं मुनीनां प्रामाण्यं' इत्यत्र द्रष्टव्यम् ) । **कौ.** १।३।८।२७ पृ. १३१.

* **यथादेवतं वा तत्प्रकृतित्वं हि दर्शयति ।** ३।२।११।२९ ॥ लिङ्गेन मन्त्रस्य अनैन्द्रसोमभक्षणे विनियोगाभावेऽपि 'इन्द्राय त्वा वसुमते गृह्णामि' इति इन्द्रलिङ्गेन मन्त्रेण सोमग्रहणात् इन्द्रलिङ्गेनैव च सोम-

मानात् सोमस्य मानग्रहणयोः इन्द्रलिङ्गमन्त्रनिर्देशात् ऐन्द्राणां एव प्रदानानां औपदेशिकधर्मवत्त्वावगतेः, 'सोमेन यजेत' इत्यस्यापि मन्त्रालोचनया 'ऐन्द्रेण सोमेन यजेत' इत्येवमर्थत्वावगतेः, कर्मैक्येऽपि च अभ्यासानां प्रकृतिविकारभावोपपत्तेः, सर्वेषां प्रदानानां समानविधानत्वाभावात् अनैन्द्रसोमभक्षणानां यथादेवतं मन्त्रवत्ता इत्येवं ( पूर्वसूत्रोक्त- ) पूर्वपक्षप्रयोजनाक्षेपार्थं इदं सूत्रम् । प्रयोजनोक्त्यर्थपूर्वसूत्रावयवोक्तामन्त्रकत्व-निरासार्थो वा-शब्दः । 'तत्प्रकृतित्वं हि' अनैन्द्राणां प्रतियोगित्वेन उपस्थापितेन्द्रप्रकृतित्वं हि । 'लिङ्गविशेष-निर्देशात्' इति पूर्वसूत्रावयवमनुषज्य ऐन्द्राणां प्रकृति-त्वोपपादनं ग्रहणमन्त्रेण सोमस्य इन्द्रप्रदानविषयत्वात् इति । लिङ्गविशेषनिर्देशात् तत्प्रकृतित्वं इत्यस्याघृत्त्या अन्यल्लिङ्गं 'नमति' इत्यनूद्य 'अनुष्टुप्छन्दसः' इति विशेषविधानं इति द्रष्टव्यम् । सु. पृ. ११४१-४२.

* '**यथाभागं** व्यावर्तध्वम्' इति ऊहः पुरोडाश-गणे कार्यः । **संकर्ष** १।२।१८. **मीको.** पृ. २५९० 'पुरोडाशगणे यथाभागं व्यावर्तध्वम्' इत्यत्र द्रष्टव्यम् ।

**यथाभागं व्यावर्तेथां इत्यत्र पिण्डावेव संबोध्यौ ॥**

भूयोमन्त्राधिकरणे 'यथाभागं व्यावर्तेथाम्' इत्यादि-मन्त्राणां विकल्प उक्तः ते देवते संबोध्य विभजनं विदधति, देवतानां यागसंबन्धित्वात् संसृष्टद्रव्यकत्वात्, चेतनत्वेन संबोधनार्हत्वाच्च । **इति प्राप्ते ।** पिण्डावेवात्र संबोध्यौ । तयोर्देवतातोऽन्तरङ्गत्वात्, स्वधित्याद्यचेतना-नामपि संबोधनदर्शनात् देवताया अपि शब्दरूपत्वाच्च । **संकर्ष.** १।२।१६.

* **यथाशक्ति ।** यद्धि प्रयोगवशादुपादेयं तद्धि यथा-शक्ति इत्युपबध्यते । **शा.** ६।२।७.

**यथाशक्त्यधिकरणम्** । यथाशक्तिन्यायः । यथाशक्त्युपबन्धन्यायः । नित्ये यथाशक्त्यङ्गानुष्ठातुरपि अधिकारः ॥

**सर्वशक्तौ प्रवृत्तिः स्यात्तथाभूतोपदेशात् । ६।३।१।१॥**

**भाष्यम्**— बह्वृचब्राह्मणे श्रूयते, 'यावज्जीवमग्नि-होत्रं जुहोति' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति । नित्यमग्निहोत्रं, नित्यौ च दर्शपूर्णमासौ । तत्र यदेतत् कामश्रवणादन्यत् अकामश्रवणं द्वितीयम्, तत्र संदेहः । किं यः कार्त्स्न्येन विधिमुपसंहर्तुं शक्नोति तस्यैवाधि-कारः, उत विगुणमपि तत् प्रयोक्तव्यमिति । एकादशे कामसंयुक्ते प्रथमे श्रवणे चिन्तयिष्यते साङ्गे । इह नित्ये श्रवणे द्वितीये इति । किं प्राप्तम् ? सर्वशक्तौ प्रवृत्तिः स्यात्तथाभूतोपदेशात् । यः कार्त्स्न्येन विधिमुपसंहर्तुं शक्नोति, स एवानुतिष्ठेत् । तथाभूतोपदेशात् । यथा-भूतं हि तत् कामसंयुक्तं श्रुतम्, तथाभूतमेव नित्यमप्यु-पदिश्यते । तस्मात् सर्वाङ्गोपसंहारेण प्रयोगः कर्तव्यः । दर्शपूर्णमासशब्दश्च साङ्गस्यैव वाचकः । कथम् ? पौर्ण-मास्याममावास्यायां च साङ्गं विधीयते । यच्च पौर्णमास्यां विहितम्, सा च पौर्णमासी । यदमावास्यायां विहितम्, सा चामावास्येति । साङ्गममावास्यायां विहितं पौर्णमास्यां च, तस्मात् साङ्गं दर्शपूर्णमासशब्देनोच्यते इति ।

**टुप्**– ('सर्वशक्तौ प्रवृत्तिः स्यात् तथाभूतोपदेशात् ।') यावज्जीविके प्रयोगे चिन्त्यते किं सर्वाङ्गोपसंहारसमर्थः पुरुषोऽधिक्रियते, उत ( अङ्ग-) एकदेशोपसंहारसमर्थो-ऽपि इति । एकादशे तु ( ११।१।२।१६ ) कथ-म्भावः, किं सर्वैरङ्गैः निराकाङ्क्षीक्रियते, उत एकैकेनापि इति ( चिन्ता ) सर्वैरिति सिद्धान्तः । एकादशे ( कथ-म्भावेन ) सर्वाङ्गग्रहणे स्थिते ( एव ) इदम् ( अधि-करणम् ) आरभ्यते । ( भाष्ये 'प्रथमे श्रवणे' इति श्रवणग्रहणं कृतम्, न तु प्रथमकर्मणि, प्रथमप्रयोगे इति वा । तस्याभिप्रायमाह-) 'अग्निहोत्रं जुहोति' इत्ये-वमुत्पन्नस्य ( कर्मणः ) विपरिवर्तमानस्य निमित्ते फले च विधानात् न तावत् कर्मान्तरमिदम् । नापि प्रयोगा-न्तरम् ( प्रयोगभेदः इति आनन्दाश्रमीये रत्ने च पाठः ) अन्तर्गतत्वात् काम्ये नित्यप्रयोगस्य ( काम्यनित्ययोः तन्त्रेणानुष्ठानादित्यर्थः ) । श्रुतिकृतस्तु अस्ति भेदः । तमेव ( भेदम् ) आश्रित्य भाष्यकारस्तु आह द्वितीये श्रवणे इति । ( उत्तराधिकरणमपि न विकृतिमात्रविष-यम्, किन्तु सकलकाम्यविषयम् । विकृत्युदाहरणं तु



प्रदर्शनार्थं इत्यभिप्रायेणाह –) सर्वशक्त्यधिकरणसिद्धान्त-जनिताशङ्कस्य ( कृते ) उत्तरमधिकरणमारभ्यते 'काम्येषु चैवमर्थित्वात्' इति । ( यद्वा, यथा निमित्तबलेन अङ्गत्यागः, तथा स्वर्गकामादिमात्रस्य अधिकारावगमात्, तद्बलेन काम्यमपि हीनाङ्गं प्रयोक्तव्यं इत्येवमाश-ङ्कमानं प्रति उत्तरमधिकरणं सकामविषयमारभ्यते इत्यभिप्रायः )। सर्वाङ्गोपसंहारसमर्थस्य (एव काम्येषु) अधिकारः, तादृशस्य ( एव ) विद्यमानत्वात् । न तु नित्ये तादृशोऽस्ति, सर्वदा यः सर्वाङ्गानि उपसंहर्तुं शक्नोति । तस्मात् ( तत्र ) एकदेशाङ्ग– ( उप-संहार- ) समर्थोऽपि अधिक्रियते । ( एवं अधिकर-णानां विषयविभागः कथितः । इदानीं प्रकृतमधिकरणं पूर्वपक्षप्रभृति अभिधीयते– ) सर्वैः अङ्गैः क्रतुर्निरा-काङ्क्षीक्रियते । तादृश एव ( क्रतुः ) कर्तुर्धर्मत्वेन ( यावज्जीववाक्येन ) चोद्यते । तदुक्तम् 'तथाभूतोप-देशात्' (इति । योजनान्तरमाह-) **अथवा** यथा धातोः ( धात्वर्थस्य ) पूर्वापरीभूतस्य ( भावना- ) कारणता सर्वैः ( अङ्गैः ) निराकाङ्क्षीक्रियते काम्ये, तथा नित्येऽपि ( विधेस्त्वेकश्रुतित्वात् इत्यस्य न्यायस्य काम्ये नित्ये वा अविशेषात् ) इत्यतः तथाभूतोपदेशात् ( इत्युक्तम् । यथाभूतं काम्यम्, तथाभूतमेव नित्य-मिति ) । **अथवा** नामविशिष्टं ( दर्शपूर्णमासाख्यं कर्म ) सर्वैः ( अङ्गैः ) निराकाङ्क्षीक्रियते यथा काम्ये तथा नित्येऽपि, तन्नाम्नस्तुल्यत्वात् । इत्यतः तथा-भूतोपदेशात् । **अथवा** यथा काम्यस्य संनिधौ इतिकर्तव्यता ( आम्नाता ) तथा नित्यस्यापि ( द्वयो-रपि ) संनिधानाविशेषात् । इत्यतः तथाभूतोप-देशात् ( इत्युक्तम् ) । **अथवा** नामधेयगतेतरेतरयोग-करणविभक्त्योः आख्यातपदस्य च ( 'भावनाऽऽत्मनेपदे-तरेतरयोगकरणानाम्' इति वार्तिकपाठः लिखितमुद्रितेषु ) तुल्यत्वात् तथाभूतोपदेशात् । **अथवा** पुरुषार्थस्य ( भाव्यस्य ) उभयत्र ( काम्ये नित्ये च ) विद्यमानत्वात् तथाभूतोपदेशात् ( इत्युक्तम् । अत्र षट् पक्षा उक्ताः ) ।

**अपिवाऽप्येकदेशे स्यात्, प्रधाने ह्यर्थनिर्वृत्ति-र्गुणमात्रमितरत् तदर्थत्वात् । २ ॥**

मी. को. ४०३

**भाष्यम्** — अपिवेति पक्षव्यावृत्तिः । अप्येक-देशे अङ्गानां स्यादेव प्रयोगः । यतः साङ्गस्यापि अनङ्ग-स्यापि प्रयुज्यमानस्य प्रधानादेव अयमर्थो निष्पद्यते । गुणमात्रं सर्वाङ्गप्रयोगेण भवति । को गुणः । साङ्गात् स्वर्गाभिनिर्वृत्तिः प्रधानमात्रात् इदमन्यत् फलम् । तस्मात् स्वर्गप्राप्त्यर्थं संपूर्णाङ्गं करिष्यामि इत्यारब्धम् । यदि कानिचिदङ्गानि न शक्नोति कर्तुम्, तथापि अस्मात् एकदेशाङ्गगुणयुक्तात् प्रधानात् फलं भविष्यति । तस्मात् प्रधानमात्रस्य प्रयोगमाह, नाङ्गानाम् । दर्शपूर्णमास-शब्दकः अग्निहोत्रशब्दकश्च प्रधानपदार्थः, अन्यानि अङ्गानि तदर्थानीति ।

**टुप्**–– ( एकदेशिमतेन तावत् सिद्धान्तमाह ) नास्ति इतिकर्तव्यता, ( अपूर्वाभावात् । अपूर्वप्रयुक्ता हि इतिकर्तव्यता ) । कथमपूर्वाभावः ? फलाभावात्, ( कालान्तरभाविफलसिद्ध्यर्थं हि अपूर्वं कल्प्यते ) । कथं फलाभावः ? निमित्तफलयोः एकत्र ( वाक्ये ) असंभवात् । कथमेकत्रासंभवः ? निमित्तफलयोः ( द्वयो-रपि ) अनुपादेयत्वात्, ते प्रति कर्म उपादीयते । ( 'ते प्रतिकर्म उपादीयेते' इति तु आनन्दाश्रमीये पाठः, स च उत्तरग्रन्थानुसारी न भाति ) । तत्र अन्यतरोपादाने ( वाक्यस्य ) कृतार्थत्वात् एकं ( एव ) प्रति उपादीयते ( कर्म, न द्वे अपि प्रति ) उभयोपादाने वाक्यभेदः स्यात् । ( फलमेव तु प्रति कस्मात् नोपा-दीयते ? अत आह- ) निमित्तस्य श्रुतत्वात् तत् प्रति ( कर्म ) उपादीयते ( न फलं प्रति ) ।

( इतः परं अस्मदीयलिखिते प्रायश्चित्तसूत्रात् प्राक्त-नस्य ग्रन्थस्य अभावात् आनन्दाश्रमीय एव संगृह्यते, क्वचित्तु पुस्तकान्तरादपि ) ।

**ननु** भावनावचनस्य 'किम्' इति आकाङ्क्षा उत्पन्ना न निमित्तेन पूर्यते ( निष्फलत्वात् ), नापि यागेन ( अपुरुषार्थत्वात् ) । केन तर्हि ? फलेनैव ( तेन बलात् फलार्थत्वं युक्तम् ) । उच्यते । यदि फलार्थी पुरुषः कर्मणि प्रवर्तेत ( ततः ) तस्य 'यावज्जीवम्' इत्येतत् अङ्गत्वेन स्यात्, ( इतरथा वाक्यभेदात् । किञ्च फलप्रयुक्ते कर्मणि ) फले च अनर्थी न प्रवर्तेत

इत्ययं च दोषः ( स्यात् ) कृत्स्ना च इतिकर्तव्यता ( नैमित्तिकेऽपि ) स्यात् ( काम्यवत् । ततश्च ) 'अपिवाऽप्येकदेशे ' इति च ( सूत्रम् ) विरुध्येत । ( किञ्च इदं काम्यम्, इदं नैमित्तिकं इति– ) व्यपदेशभेदश्च न स्यात् । नित्यकाम्ययोः फले सति ( द्वयोरपि कामार्थतया काम्यव्यपदेश एव स्यात् । तस्मात् यागस्यैव भाव्यत्वमिति ) ।

**अथोच्येत द्वौ अंशौ** ( कर्मणः ) प्रयोजकौ फलांशो निमित्तांशश्च । तत्र श्रुतेन निमित्तेन ( निमित्तस्य श्रुतत्वादित्यर्थः ) निमित्तांशः ( एव प्रयोजकतया ) विवक्षितः । फलं तु ( केवलम् ) विद्यते ( न तु प्रयोजकम् ) । अतो न विरोधो भिन्नविषयत्वात् । एवं च निमित्तप्रयुक्तं अवश्यं कर्तव्यं कर्म । तस्मिन् ( कर्मणि ) क्रियमाणे सति फलं किमिति न कामयते इति । ( इतिः चोद्यसमाप्तौ । परिहरति– ) **एतदपि अनुपपन्नम्** । ( कथम् ? ) यः स्वर्गं न कामयते बन्धकत्वात् मोक्षार्थी, तस्य कर्मस्वरूपे एव कर्तव्यता, निमित्तसंभवात् ( जीवनं हि निमित्तम् ) । न च सकृत् श्रुतस्य ( निमित्तस्य ) कंचित् प्रति प्रयोजकता कंचित् प्रति अप्रयोजकता न्याय्या । ( तस्मात् मुमुक्षोरपि प्रयोजकमेव निमित्तम् ) । तस्मात् निमित्ते कर्मविधानम् ।

**अथोच्येत** क्रियायाः कर्तव्यतोपदेशात् कर्मणः स्वसामर्थ्याच्च फलोत्पादकता । न चान्यत् फलमस्ति यागस्य स्वर्गादृते ( विश्वजिन्न्यायात् ) । तस्मात् क्रियाशक्त्या ( मुमुक्षुणाऽपि प्रयुज्यमानस्य ) फलमस्ति । न च शक्तयो वेदेन उत्पाद्यन्ते इति । **एतदपि अयुक्तम्** । कथम् ? ज्योतिष्टोमदर्शपूर्णमासयोः ( सर्वफलशक्तत्वात् ) सकृत्प्रयोगे सर्वफलप्राप्तिः स्यात् । न चेष्यते त्वया । तस्मात् यासु क्रियासु फलं प्रत्यक्षतः अवगम्यते, ताः ( एव ) फलवत्यः ( यथा भोजनादयः ) नाश्रुतफलाः वैदिक्यः ( यावज्जीवादिवाक्यविहिताः क्रियाः फलवत्यः ) । न च काम्यमानं फलं भवति, अपुरुषार्थत्वात् । ' कर्तव्यतावचनः पुरुषार्थेन अविनाभूतः ' इति चेत् ( नेत्याह ) प्रयाजादीनामपि ( फलवत्त्वेन ) पुरुषार्थत्वात् अनङ्गता स्यात् । न चेष्यते ( क्रत्वर्थत्वात् ) । तस्मात् निमित्तं प्रति कर्ममात्रं विधीयते ( निष्फलम् । अतश्च अपूर्वाभावात् ) इतिकर्तव्यताऽभावः । कथम् ( इदानीं सूत्रे ) एकदेशशब्दः इति चेत्, साङ्गस्य ( प्रधानस्य ) वाचकः कृत्स्नशब्दः, प्रधानमात्रापेक्षया ( तु ) एकदेशशब्दः । ( इदं सावद्यं व्याख्यानमिति मत्वा व्याख्यानान्तरमाह– ) **अथवा** दृष्टार्था ( कर्मस्वरूपोत्पत्त्यर्था ) या पुरोडाशनिर्वृत्तिः ( निर्वृत्तिरूपा इतिकर्तव्यता ), तामपेक्ष्य एकदेशशब्दः । **कैश्चित्** पुनः ( अन्यथा ) एकदेशशब्दो वर्णितः । ( यद्यपि अलौकिकभाव्याभावेन ) कथम्भावाभावात् प्राकरणिकी इतिकर्तव्यता नास्ति ( तथापि ) आहवनीयादिवाक्यात् प्रापिता अस्ति, तामपेक्ष्य एकदेशशब्दः इति । **एतदपि अनुपपन्नम्**, अपूर्वप्रयुक्तत्वात् आहवनीयादीनाम् । न च अपूर्वमस्ति इत्युक्तम् । तस्मात् अग्निमुद्दिश्य अमावास्यायां पुरोडाशस्त्यक्तव्यः इत्येतावत् उपदिश्यते । कथं तर्हि ईदृशे ( निष्फले ) पुरुषप्रवृत्तिः ? ( उत्तरम्– ) प्रत्यवायानुत्पत्त्यर्था ( प्रवृत्तिः ), विहिताकरणाद्धि प्रत्यवायः स्मर्यते (' अकुर्वन् विहितं कर्म ... प्रायश्चित्तीयते नरः ' इति वचनात् ) पुरुषेण च हितप्राप्तिर्यथेष्यते अहितनिवृत्तिरपि तथेष्यते । यथा लोके उपानद्धारणादिका क्रिया कण्टकपरिहारार्था, एवमिहापि प्रत्यवायपरिहारार्था ( प्रवृत्तिः युक्तैव ) । ननु एवं अप्रत्यवायः फलं स्यात् । **उच्यते** । फलं तावत् ( सर्वत्र ) भावः ( एव ) । अप्रत्यवायश्च ( प्रत्यवायप्रागभावः, प्रागभावश्च ) अभावः ( न तु भवनकर्ता स्वयंसिद्धत्वात् । अतः– ) कथमसौ क्रियायाः ( भावनायाः ) फलं स्यात् । आगामिनी प्रत्यवायानुत्पत्तिः फलं ( स्यात् ) इति यदि उच्येत, **तन्न** । न ( हि ) अकरणमात्रात् प्रत्यवायः, किं तर्हि विहिताकरणात् । तत्र अयमेव विधिः प्रत्यवायानुत्पत्त्यर्थः, अस्य चाकरणात् प्रत्यवायः इति इतरेतराश्रयता ( प्राप्नोति ) तस्मात् प्रत्यवायानुत्पत्तिः फलम्, इति नैवंपरा चोदना । कथं तर्हि प्रत्यवायो भवति ? क्रियाया अकरणात् । अकरणं करणनिवृत्तिः । ( तेन ) अकरणात् दोषो यः, स करणे ( सति कारणनिवृत्त्या )



निवर्तते ( नोत्पद्यते ) । ननु (एवमपि प्रत्यवायाहेतुभूता) अकरणनिवृत्तिरेव ( करणस्य ) फलं स्यात् । उच्यते, आत्मव्यतिरेकेण क्रियायाः फलम् ( भवति ) । अकरणनिवृत्तिश्च करणमेव । स ( च ) क्रियायाः धर्मः ( सन् ) कथं फलं स्यात् । न च प्रत्यवायाभावः फलं इत्युक्तमेव । यदि च अप्रत्यवायः फलं स्यात्, ( ततः ) फलनिमित्तयोः (द्वयोरपि) एकत्राभावादिदोषः उक्तः ( प्राक् । अतो नित्यस्य कर्मणो निष्फलत्वेन अपूर्वाभावात् इतिकर्तव्यता नास्ति, इति हीनाङ्गस्य प्रयोगः– ) इति केचित् एवं ( अधिकरणसिद्धान्तम् ) वर्णयन्ति । ( एतदिदानीं दूषयितुमारभते– ) **तत्** ( एकदेशिमतम् ) **नोपपद्यते** । कथं भावनातो हि तिस्र आकाङ्क्षा उत्पद्यन्ते किं केन कथमिति । ( तत्र -), तन्निमित्ता चेतिकर्तव्यता । ( तत इति आनन्तर्यात् कथमाकाङ्क्षा प्रत्यवमृश्यते ) । सा च ( आकाङ्क्षा ) इह ( अपि नित्ये कर्मणि ) विद्यते । तस्मात् अस्ति इतिकर्तव्यता । यदि च अस्मिन् ( नित्ये ) यागेन ( किमाकाङ्क्षा ) पूर्यते, पशुकामादिष्वपि तत् ( ततः इत्यर्थः ) न साधनत्वेन स भविष्यति ( किन्तु साध्यत्वेनैव स्यात् यागः । ततश्च तत्रापि इतिकर्तव्यता न स्यात् । शङ्कते– ) तत्र ( कामवाक्येषु ) निमित्ताभावात् ( कर्म एव कर्तव्यतया विधीयते इति नेतिकर्तव्यता ) इति **चेत्, तन्न** । असत्यपि तस्मिन् ( निमित्ते ) किमित्याकाङ्क्षोत्पत्तेः यागेनैव ( च ) परिपूरणात् न फलान्तरम् ( चोदयति– ) । फलनिमित्तयोर्विरोधः इति चेत् । ( उत्तरम्– ) अविरोधः, भिन्नवाक्यत्वात् । ( एकवाक्यसमवायो हि फलनिमित्तयोर्विरुध्येत । वस्तुतस्तु नास्त्येव विरोधो भिन्नप्रकारत्वादनयोरित्याह– ) निमित्तं हि कर्म प्रयुङ्क्ते, न कामार्थतां व्यावर्तयति । ( तदेव व्यनक्ति– ) न हि कर्मणा निमित्तं जन्यते, येन फलोत्पत्तिर्न स्यात् । ( प्रत्युत– ) तस्मिन् निमित्ते, कर्म क्रियमाणं किम्प्रयोजनम् इति सुतरां फलाभिमुखं भवति ( अतश्च निमित्तबलादेव अपेक्ष्यमाणं फलं कथं तेन विरुध्येतेति ) । फलं न कामयते ( मोक्षार्थी ) इति **चेत्** । **उच्यते** । न हि ईदृशः पुरुषोऽस्ति, यः अवश्यकर्तव्ये, फलं न कामयते । मोक्षार्थी ( न कामयेत ) इति **चेत्, तन्न** । तेनापि अवश्यं पापक्षय एषितव्यः । तस्मिन् सति, मोक्षाभावात् । अमोक्षार्थिना अपि असौ एषितव्यः फलाय । इतरथा ( अप्रक्षीणे पापे ) फलाप्राप्तेः । तस्मात् नित्यानि कर्माणि तस्य ( पापक्षयस्य ) उपायत्वेन चोद्यमानानि इतिकर्तव्यतामपेक्षन्ते । वीतायां च ( स्वर्ग– ) फलेच्छायां कर्मणः इदमेव ( पापक्षयः ) फलम् । यदि च नित्ये श्रुत्यनुग्रहात् यागः कर्मभूतः ततः सर्वत्राविशिष्टः श्रुत्यनुग्रहः, इति सर्वत्र ( काम्येऽपि ), कस्मात् न भवति । (चोदयति–) फलपदानर्थक्यप्रसङ्गात्तु ( यागः कर्मभूतः ) न भविष्यति । ( निराकरोति– ) साधनत्वेन ( स्वर्गकामाधिकरणपूर्वपक्षन्यायेन ) तस्य उपनिपातादिति ( फलपदस्य द्रव्यपरत्वापातात् इति । किञ्च) यदि च क्रिया स्वशक्त्या ( स्वतः ) अन्यत् किञ्चिदुत्पादयति, ततः तदेव वेदेन च उच्यते । नहि अशकनीयम् ( वस्तु ) स ( वेदः ) उत्पाद्यत्वेन चोदयति, ज्योतिष्टोमस्य सकृत् प्रयोगे सर्वफलप्राप्तिरिति । **उच्यते** । पच्यादीनां क्रियाणां द्वौ धर्मौ दृष्टौ, एकस्मिन् प्रयोगे एकफलता नियतफलता च । तत्र ज्योतिष्टोमस्य फलचोदनाभिः ( सर्वेभ्यो ज्योतिष्टोमः इत्यादिभिः ) अनियतफलता विहिता । **एकस्मिन्** प्रयोगे ( तु ) एकफलता ( क्रियास्वभावत्वेन लोके दृष्टा ) केन वार्यते । **यदि** च फलं नास्ति ( ततः ' दर्शपूर्णमासाभ्यां यजेत ' इत्यत्र ) करणविभक्तीतरेतरयोगात्मनेपदानां ( करणविभक्तेः, इतरेतरयोगस्य द्वंद्वार्थस्य, आत्मनेपदस्य च) अभावप्रसङ्गः । (यदि च नैमित्तिके, कर्मभूतः एव धात्वर्थो न फलमपेक्षते, ततः ) ' भिन्ने जुहोति ' इति ( होमस्य ) निराकाङ्क्षत्वात्, क्रतुसंबन्धो न स्यात् । आकाङ्क्षोत्तरकालं हि क्रत्वर्थता, पुरुषार्थता वा । न च भवत्पक्षे ( भेदनहोमस्य प्रयोजनविषयिणी ) आकाङ्क्षाऽस्ति, निमित्ते श्रुतत्वात् । नहि आकाङ्क्षा जन्यते क्रतुना ( तस्मात् भेदनहोमस्य न क्रत्वर्थतासिद्धिः । किञ्च ) यदुक्तम् ( भवता ) फलनिमित्तयोः अनुपादानात् ( अनुपादेयत्वात् नैकत्र

समवायः संभवति ) इति । ( 'भिन्ने जुहोति' इति ) अनेन एतत्तुल्यम्, ( भेदनहोमेऽपि तुल्यं चोद्यमित्यर्थः । तेन ) यथैतत् क्रतुं प्रति उपादीयते निमित्तं च, एवमिदमपि ( अग्निहोत्रादि फलनिमित्तयोरुपादीयमानं न दुष्यति ) । यथा च त्वत्पक्षे पिण्डपितृयज्ञः ( अमावास्यामपराह्नं च प्रति उपादीयते ) एवमिदमपि ( अग्निहोत्रादि । तस्मात् उभयोपादानं न दोषः ) **भाष्यकारश्च** ( निमित्तसंयोगे ) फलमिच्छति 'प्रधानादिदमन्यत् फलम्' 'एकदेशाङ्ग– ( गुण– ) युक्तात् प्रधानात् फलं भविष्यति' इति वदन् । तथा पिण्डयज्ञे पुत्रकामेष्ट्यां च ( निमित्ते सत्यपि फलमिच्छति । विश्वजिदधिकरणे पिण्डपितृयज्ञस्य फलवत्त्वं दर्शितम् । पुत्रकामेष्टिरत्र जातेष्टिः ) । **सूत्रकारः** ( अपि) नित्ये इतिकर्तव्यतामिच्छति ( 'एकस्यापि प्रयोगे स्यात्' ( ६।३।१।५ ) इति वदन्, 'इष्ट्यावृत्तौ प्रयाजवदावर्तेतारम्भणीया' इत्यत्र च– ) प्रयाजवत् इति दृष्टान्तोपादानात् सिद्धवदङ्गत्वं दर्शयति । कर्तव्यतावचनश्च ( विधिशब्दश्च ) पुरुषार्थतां न व्यभिचरति । नहि फलमन्तरेण पुरुषः प्रवर्तते, केषुचित् साक्षात् ( दर्शपूर्णमासादिषु ), केषुचित् ( प्रयाजादिषु ) पारम्पर्येण, ( न तु क्वचिदपि निष्फलो विधिरस्ति ) । यदि च ( अश्रुते फले ) धात्वर्थः करणतां जह्यात्, ( ततः ) प्रयाजादीनामङ्गत्वं न स्यात् । कर्मभूतत्वात् ( प्रयाजादेः ) । नैतत् अपेक्षते, 'किं मया कर्तव्यम्' इति ( नहि कर्तव्यान्तरमपेक्षते समत्वात् ), अनपेक्षमाणश्च कथं इतिकर्तव्यतया ( क्रतुना ) संबध्येत ( तस्मान्नाङ्गत्वसिद्धिः ) । यदि च यत्र फलपदमस्ति, तत्रैव धात्वर्थः करणभूतः ( अन्यत्र तु कर्मभूतः स्यात्, ततः ) उत्पत्तिवाक्ये ( फलश्रवणाभावेन ) धात्वर्थस्य कर्मभूतत्वात्, स्वर्गस्य च प्रयोगवाक्ये ( कर्मत्वात् । द्वयोरपि– ) कर्मत्वेन ( समत्वात् ) संबन्धो नास्ति । एवं च ( फलवाक्ये ) कर्मान्तरत्वप्रसङ्गः । करणत्वे तु नैष दोषः ( भवति ) । तस्मात् यत्रयत्र विधायकः, तत्रतत्र ( धात्वर्थस्य ) करणता ( उपगन्तव्या ) । नित्येऽपि असौ ( विधिः ) विद्यते ( तस्मात् तत्रापि करणभूत एव धात्वर्थः इत्यस्त्येव फलम् । काम्यं नित्यं इति– ) व्यपदेशश्च ( क्रमेण ) कर्तव्यत्वात् अवश्यकर्तव्यत्वात् ( च उपपद्यते । तत्र अवश्यकर्तव्यं नित्यम्, अन्यच्च काम्यम् । फलार्थत्वे तु न विशेषः ) ।

**(सिद्धान्तं दर्शयति–)** एवं च साङ्गम् ( संपूर्णाङ्गम् ) यावज्जीवं न शक्नोति कश्चिदपि कर्तुं इतिकृत्वा 'यावत् शक्नुयात्' इति उपनिबध्यते । शक्तस्य ( सतः ) कामतः ( अङ्गे त्यज्यमाने ) वैगुण्यं स्यात् । काम्ये तु यदा ( संपूर्णाङ्गं कर्तुम् ) शक्नुयात् तदा प्रवर्तेत ।

**तदकर्मणि च दोषस्तस्मात् ततो विशेषः स्यात् प्रधानेनाभिसंबन्धात् । ३ ॥**

**भाष्यम्**— प्रधानातिक्रमे दोषः श्रूयते 'अप वा एष स्वर्गाल्लोकाच्छिद्यते, यो दर्शपूर्णमासयाजी सन् पौर्णमासीममावास्यां वाऽतिपातयेत्' इति प्रधानातिक्रमे दोषं ब्रुवन् तस्य नित्यतां दर्शयति ।

**कर्माभेदं तु जैमिनिः प्रयोगवचनैकत्वात् सर्वेषामुपदेशः स्यात् । ४ ॥**

**भाष्यम्**— यदुक्तम्, नास्ति भेदः इमान्यङ्गानि, इमानि प्रधानानीति । प्रयोगवचनैकत्वादिति जैमिनिराह स्म । सर्वेषामुपदेशकः 'पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेत' इति ।

**अर्थस्य व्यपवर्गित्वादेकस्यापि प्रयोगे स्याद् यथा क्रत्वन्तरेषु । ५ ॥**

**भाष्यम्**— एकाङ्गप्रयोगेऽपि स्यात्, विगुणादपि फलमित्यर्थः । कुतः ? अर्थस्य व्यपवर्गित्वात् । व्यपवृक्तमङ्गेभ्यः प्रधानम् । अग्निहोत्रसंज्ञकात् दर्शपूर्णमाससंज्ञकाच्च फलमिह भवति । तद्धि कर्तव्यतयोपदिश्यते । यत् पौर्णमास्यामुपदिष्टम्, सा पौर्णमासी, यदमावास्यायाम्, सा अमावास्या । 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति । तस्मादग्नये पुरोडाशोऽग्नीषोमाभ्यां च, आज्यं चाग्नीषोमादिभ्यः पौर्णमास्याम् । आग्नेयसांनाय्यादीनाममावास्यायाम् । यदुक्तम् 'पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेत' इति साङ्गस्य विधानात् साङ्गं दर्शपूर्णमासशब्देन अभिधीयते इति, नैतदेवम् । सिद्धे हि दर्शार्थे पूर्णमासार्थे च साङ्गं फले विधीयते । तस्मान्न साङ्गमग्निहोत्रपदवाच्यं दर्शपूर्णमासपदवाच्यम् ( च ) । यच्चाग्निहोत्रं तदिह चोद्यते कर्तव्यतया, यौ च दर्शपूर्णमासौ । तस्माद्विगुणमपि कर्तव्यमेव अग्निहोत्रं दर्शपूर्णमासौ च । यथा क्रत्वन्तरेषु – प्रकृतिविकृतिषु परस्य धर्माः परस्य न भवन्ति, एवं न कामसंयुक्तस्य धर्मा नित्यस्य भवितुमर्हन्ति ।

**विध्यपराधे च दर्शनात् समाप्तेः । ६ ॥**

**भाष्यम्**— विध्यपराधेषु च समाप्तिं दर्शयति । 'तदेव यादृक् तादृक् होतव्यम्' इति विगुणस्य समाप्तिं दर्शयति ।

**प्रायश्चित्तविधानाच्च । ७ ॥**

**भाष्यम्**— विध्यपराधे च प्रायश्चित्तानि विधीयन्ते, निमित्ते कर्माङ्गभूतानि । यथा, भिन्ने जुहोतीति । विगुणे निष्फले सति कस्याङ्गभूतैः प्रयोजनं स्यात् । तस्मात् विगुणानामपि प्रयोगः कर्तव्य इति ।

**टुप्**— 'प्रायश्चित्तविधानाच्च' ॥ येषां ( मते नैमित्तिकस्य ) इतिकर्तव्यता नास्ति, तेषां प्रायश्चित्तविधानं अत्यन्तमनुपपन्नम् । ( अस्मन्मते तु उपपन्नमित्याह– ) सेतिकर्तव्यताके तु नैमित्तिके ( सति ), निमित्ते ( भेदने ) संजाते वैगुण्यात् तत्परिहाराय अपरं होमाख्यमङ्गं उपजायते, तत् क्रियते एव । ( त्वत्पक्षे तु ) असत्याम् ( इतिकर्तव्यतायाम् ) भेदने उपजाते ( अपि ) वैगुण्यं नास्ति । तस्मात् प्रायश्चित्तदर्शनं सर्वथा अनुपपन्नमिति ।

**शा**— '**समुच्चितानामङ्गानां इत्थम्भावेन संग्रहः । सर्वाङ्गयुक्तमेवातः प्रधानं फलसाधनम् ॥**' अतो न हीनाङ्गस्य प्रयोगः । उच्यते । 'नैमित्तिकं नियोगेन कर्तव्यमवगम्यते । निमित्तेन ततोऽशक्यहानेनापि प्रयुज्यते ॥' तस्मात् यथाशक्तिप्रयोगेनैव अधिकारः ।

**सोम**— नित्ये यथाशक्त्यङ्गोपसंहारसमर्थस्य अधिकारः अस्मिन् पादे व्युत्पाद्यते । स च पूर्वपादद्वयोक्तकाम्य– नित्यनैमित्तिकाधिकारनिरूपणाधीननिरूपणः इति पादान्तरत्वं आनन्तर्यं च ।

**वि**— 'नित्ये सर्वाङ्गसंहारः, शक्त्या वा, ऽऽद्यः फलित्वतः ।, शक्त्या त्यागासंभवेन निमित्ते जीवने स्थिते ॥'

**भाट्ट**— नित्यनैमित्तिकानां कर्मणां काम्यवत् सर्वाङ्गोपसंहारेणैव प्रयोगः, एकादशे सर्वेषामङ्गानां साहित्येन क्रतूपकारजनकत्वस्य स्थापयिष्यमाणत्वात् ( ११।१।२ ) **तिर्यगधिकरणे** ( ६।१।२ ) यथाविनियोगं अधिकारकल्पनस्य स्थितत्वाच्च । न च एवं नित्येऽपि तथा कल्पने सर्वाङ्गोपसंहारसामर्थ्ये सति अनुष्ठानाभावात् निमित्तत्वव्याघातः, अवश्यानुष्ठापकत्वरूपस्य निमित्तत्वस्य कालाग्निविद्यादिभिः अवच्छेदवत्, शक्त्याऽपि अवच्छेदोपपत्तेः । अतश्च यथैव कालावच्छिन्नजीवनादेरेव निमित्तत्वात् अकालादौ निमित्ताभावादेव नैमित्तिकाकरणे न प्रत्यवायः, तथा शक्त्यभावेऽपि इति बोध्यम् । न च कदाऽपि सर्वाङ्गोपसंहारासामर्थ्यम्, काम्येऽपि तदापत्तेः । न वा सकृदेव सर्वाङ्गकरणसामर्थ्यं इति नियमे प्रमाणमस्ति, येन वीप्साऽऽद्यनुपपत्तिराशङ्क्येत, काम्यस्यापि आवृत्त्यनुपपत्तेः । किञ्च, निमित्तस्य अनुष्ठापकतया कालदेशादिवत् प्रयोगान्वयित्वात्, यथैव 'अप्सु अवभृथेन चरन्ति' इत्यादौ अपां देशत्वात् अङ्गप्रधानान्वयित्वम्, तथा निमित्तस्यापि । अतश्च अनेकेषु प्रधानेषु यथा न यथाशक्त्युपबन्धः, तदकरणस्य प्रत्यवायजनकत्वबोधनात्, एवमङ्गानामपि इति न तेषु यथाशक्त्युपबन्धः । अत एव तद्वदेव तृतीयानिर्देशोऽपि संगच्छते । प्रयोगान्वयितया च निमित्तश्रुतेः अङ्गविनियोगोत्तरकालीनत्वात् शक्त्यवच्छेदकल्पनेऽपि न दोषः । एवं सत्यपि यदि निमित्तस्य प्राधान्यं स्यात्, तदा तदनुरोधेन अङ्गेष्वेव शक्त्यवच्छेदः कल्प्येत, न त्वेतदस्ति । इति प्राप्ते, न निमित्तस्य अनुष्ठापकत्वम्, अपितु विधिबोधितस्यैव अनुष्ठानस्य आवश्यकताबोधकत्वमात्रम्, तद्बोधस्य च फलं नैमित्तिकाकरणस्य प्रत्यवायजनकत्वबोधः, अन्यथा चेतनप्रवृत्तेः आवश्यकत्वानुपपत्तेः । अतश्च यथैव काम्ये प्रवर्तनाऽऽक्षिप्तेष्टसाधनत्वं प्रधानांशे एव, न तु साङ्गे, तथैव निमित्ताक्षिप्तप्रत्यवायजनका-

करणप्रतियोगित्वं अपि प्रधाने एव न तु साङ्गे । अत एव निमित्तस्यापि विनियोगविधावेव अन्वयः । अत एव विनियोगोऽपि प्रवृत्तिजनकीभूतज्ञानविषयीभूतधर्मरूपः उभयसाधारण एव । अत एव अङ्गान्वयोऽपि प्रधानस्य एतदुत्तरकालीन एव, तस्य प्रधानगतफलवत्त्वज्ञानाधीनत्वात् ।

तत्र तु अयं विशेषः- यत् काम्ये विध्याक्षिप्तेष्टसाधनत्वज्ञानोत्तरमेव अङ्गविनियोगः, नित्ये तु विधिसह-कृतनिमित्ताक्षिप्त -प्रत्यवायजनकाकरणप्रतियोगित्वज्ञाने जातेऽपि नाङ्गान्वयः, अनपेक्षितत्वात् । अपितु तदुत्तरं प्रधानकरणकभावनायाः भाव्यापेक्षायां पूर्वकृतपापक्षयस्य भाव्यत्वे अवगते सः इति बोध्यम् । अत्र हि पापक्षयस्यैव भाव्यत्वं नित्यस्थले ' धर्मेण पापमपनुदति ' इत्यादिवाक्येभ्यः प्रतीयते । अत एव न **विश्वजिन्न्यायेन** स्वर्गकल्पनम्, न वा अपुरुषार्थस्यापि यागध्वंसस्यैव भाव्यत्वकल्पनम् । यागस्यैव वा तत्, तृतीयानिर्देशात्, समानपदश्रुतेः करणत्वेनापि उपपत्तेश्च । न च दर्शपूर्णमासादौ क्लृप्तानामेव स्वर्गादीनां नित्येऽपि भाव्यत्वोपपत्तौ ' धर्मेण ' इत्यस्य अन्यपरत्वं शङ्क्यम् । तथात्वे मुमुक्षोः स्वर्गादीनामनिष्टत्वेन, तदुत्पत्तौ शास्त्रस्य अहितसाधनानुज्ञापकत्वे अप्रामाण्यापत्त्या यावज्जीवादिवाक्यस्य अमुमुक्षुविषयतया संकोचापत्तेः । पापक्षयस्य तु सर्वाभिलषितत्वात् निमित्तस्यैव प्रयोजकतया, तस्य नैमित्तिकाप्रयोजकत्वेऽपि निमित्तप्रयुक्तनैमित्तिकानुषङ्गिकत्वे बाधकाभावः । न च उद्देश्यानेकत्वम्, तत्त्वेऽपि द्विकर्मकत्वाभावेन अवाक्यभेदात् । अतश्च पापक्षयभाव्यकत्वावगमोत्तरमेव अङ्गान्वयात् पूर्वावगतनिमित्तान्वयानुरोधेन अङ्गेष्वेव शक्त्यवच्छेदकल्पनम् ।

न च उत्पत्तिवाक्ये एव अङ्गान्वयस्य वक्ष्यमाणत्वात्, तत्र च इष्टसामान्यस्यैव भाव्यत्वात्, तदवगमोत्तरत्वेऽपि न निमित्तसंबन्धावगमोत्तरत्वं अङ्गान्वयस्य इति वाच्यम् । सामान्यगतविशेषापेक्षया अन्तरङ्गत्वेन प्रथमं कामयावज्जीववाक्यैकवाक्यतया, विशेषावगमोत्तरमेव अङ्गवाक्यैकवाक्यतया अङ्गान्वयाङ्गीकारेण, तत्रैव शक्त्यवच्छेदोपपत्तेः । अत एव कामे निमित्ते च यस्याधिकारिणः यावन्ति प्रमाणान्तरप्रमितानि अङ्गानि तस्य तावद्भिः सहितैः आग्नेयादेरुपकुर्यात् इति महावाक्यार्थकल्पनात्, काम्ये सर्वाङ्गसाहित्यम्, नित्ये च शक्त्यवच्छिन्नं इत्यर्थलाभः । अतश्च **यथैव** एकस्यैव काम्यवाक्यस्य यावज्जीववाक्यस्य च सोमयाज्यसोमयाजिरूपाधिकारिभेदेन प्रधानसाहित्यभेदेऽपि यस्याधिकारिणो यावन्ति प्रमाणान्तरप्रमितानि प्रधानानि, तस्य तावतां कामे निमित्ते च विधायकत्वम्, **तथा** अत्रापि इति न कोऽपि दोषः । अतः सिद्धं निमित्तश्रुत्यनुरोधेन यथाशक्ति अङ्गहीनेनापि प्रयोगः इति । अत एव विध्यपराधे 'तदेव यादृक् तादृक् होतव्यम्' इति विगुणसमाप्तिं विध्यपराधे प्रायश्चित्तं च दर्शयति ।

**मण्डन**-- ' यावच्छक्ति क्रिया नित्ये । '

**शंकर**-- ' अशक्त्या त्वङ्गहानं स्यात् । '

* **यथाशक्त्युपबन्धः** ( यथाशक्तिन्यायः ६।३।१।१-७ एव यथाशक्त्युपबन्धन्यायः ) । यत् कृतिसाध्यत्वेनानुष्ठेयतया प्रसक्तम्, तत्रैव यथाशक्त्युपबन्धः, न तु अननुष्ठेये कालादौ । अतश्च तद्वदेव अस्यापि न तन्न्यायविषयता । **भाट्ट**. ३।३।९. * न प्रयोगविधिविधेयतामात्रेण **यथाशक्त्युपबन्धः**, किंतु प्रयोगविधिना यत् कर्तव्यतया बोध्यते तत्रैव । कर्तव्यं हि यथाशक्ति कुर्यात् इति वक्तुं शक्यते न अकर्तव्यम् । ततश्च प्रयोगविधिना यदुपादीयते अनुष्ठाप्यते पुरुषकर्तव्यतया बोध्यते, तत्रैव यथाशक्त्युपबन्धात् कालस्य चातथात्वात् न तत्र यथाशक्त्युपबन्धः । **सोम**. ६।२।७. * ' युवं हि स्थः स्वर्पती ' इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात् ' एते असृग्रं ' इति बहुभ्यो यजमानेभ्यः ' वसन्ते वसन्ते ज्योतिषा यजेत ' इत्यादिना आख्यातेन उपादेयकर्तृविशेषणत्वेन उक्तस्यैकत्वस्य विवक्षायामपि नित्यत्वेन ज्योतिष्टोमे **यथाशक्त्युपबन्धस्य** वक्ष्यमाणत्वात् यद्येको न शक्नुयात् तदा द्विबहुयजमानकत्वप्राप्तेः प्रतिपद्विधानसंभवात् । इत्यादिः पूर्वपक्षः । **भाट्ट**. ३।३।९, * विशिष्टविधौ निमित्तान्वयात् पूर्वं भावनायामन्वितस्यापि द्रव्यस्य, विशेषणविधौ यागाङ्गता-



बोधदशायाम्, यागगतफलवत्त्वज्ञानार्थं कामयावज्जीववाक्याभ्यां एकवाक्यत्वाङ्गीकारेण निमित्तपापक्षयाद्यन्वयोत्तरमेव, द्रव्यस्य यागाङ्गतावोधेन प्रयाजादिवत् तत्रापि **यथाशक्त्युपबन्धोपपत्तेः** । ६।३।४, * चक्षुराद्यङ्गहीनः अप्रतिसमाधेयाङ्गवैकल्ये तु काम्ये नाधिक्रियते । नित्ये तु **यथाशक्तिन्यायात्** अधिक्रियते एव । ६।१।९. * ' युवं हि स्थः ' इति द्वयोः यजमानयोः प्रतिपदं कुर्यात् । ' एते असृग्रं ' इति बहुभ्यो यजमानेभ्यः । पाक्षिकेणासामर्थ्येन एकस्य यजमानस्य कदाचित् दक्षिणादिसंपादनपुरःसरं अशक्तौ सत्यां **यथाशक्तिन्यायानुसारेण** एकत्वबाधेन अपि अर्थात् प्राप्तस्य द्विबहुयजमानकत्वस्य प्रकृते ज्योतिष्टोमे संभव इति चेत्, न, निखिलसोमप्रकृतेर्ज्योतिष्टोमस्य एकेनैव कर्त्रा संबन्धात्, सोमेन यजेत इति उत्पत्तिविधौ, कर्तृरेकत्वस्य न बाधः । एकत्वस्य अननुष्ठेयतया अनुष्ठेयमात्रविषयकयथाशक्तिन्यायविषयताऽपि नास्ति । **कस्तूरि**. ३।३।९।१८-१९. * अग्नेरपि होमाधिकरणस्य न प्रतिनिधिः । तत्राहवनीयादेस्तावत् आधानविधिसिद्धत्वादेव, क्रतुप्रयोगविध्यविषयत्वात् तेषामधिकारिविशेषणत्वप्रतीतेः **यथाशक्तिन्यायाविषयत्वात्** एव न प्रतिनिध्याशङ्का । **भाट्ट**. ६।३।५, * नित्यत्वेऽपि ज्योतिष्टोमस्य नैकत्वे **यथाशक्तिन्यायविषयता**, उत्पत्त्यादिवाक्येषु समानाभिधानश्रुत्या भावनायामन्वितस्य तस्य (एकत्वस्य) अन्तरङ्गत्वेन अशक्तौ दक्षिणापरिमाणाद्यङ्गान्तरबाधेन अस्यैवानुग्राह्यत्वात् । ३।३।९.

* **यथाशक्तिप्रयोगे** क्रयलोपेऽपि नैकहायनीप्रयुक्तिः, होमस्तु आहवनीये निरधिकरणक एव वा । **भाट्ट**. ४।१।१०.

* **यथाशक्तिप्रयोगादौ** ( पशोः ) यूपाभावेऽपि स्वर्वर्थमेव वनगमनादिसिद्धिः । यूपच्छेदनादेस्तु तत्र निवृत्तिः । **भाट्ट**. ४।२।१.

* ' **यथाशिष्टम्** ' इति सूत्रांशः (५।१।११।१९) । यथा शिष्टं विहितं प्रकृतौ व्यूहकालत्वम्, तथा अत्रापि ( चातुर्मास्यसाकमेधीयानीकवत्यादीष्टिषु ) । यद्वा, यथा शिष्टं शेषाङ्गकलापः प्राकृतः तथा कालोऽपि । पूर्वपक्षः । सू. ५।१।११।१९.

☒ **यथाश्रुतीति चेत्** । १०।७।२०।७२ ॥

अग्नीषोमीये पशौ ' यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या ' इति श्रूयते । इदं श्रूयमाणं पञ्चावत्तं यथाश्रुति श्रुतिमनतिक्रम्य कार्यम् । वपायां पञ्चावत्तं श्रुतं नाङ्गेषु इति वपायामेव कार्यं नाङ्गेषु । इति पूर्वः पक्षः ।

**न, चोदनैकत्वात्** । ७३ ॥

अग्नीषोमीये पशौ वपायां श्रुतं पञ्चावत्तं वपायामेव स्यात् नाङ्गेषु इति पूर्वपक्षं निरस्य सिद्धान्तमाह । न वपायामेव पञ्चावत्तं किंतु अङ्गेष्वपि तत् । चोदनैकत्वात् । अङ्गयागानां वपायागस्य च ' अग्नीषोमीयं पशुमालभते ' इत्येकैव चोदना । तत्र वपायागेन चेत् पञ्चावत्तं संबध्यते, तदा अङ्गेष्वपि भवितुमर्हति । तस्मात् अङ्गेष्वपि पञ्चावत्तमेवेति सिद्धान्तः । चोदनाया एकत्वात् इति समासः । **के**.

☒ **यथाश्रुतीति चेत्** । ६।४।६।२२ ॥

दर्शपूर्णमासप्रकरणे ' यस्योभयं हविरार्तिमार्च्छेत्, ऐन्द्रं पञ्चशरावमोदनं निर्वपेत् ' इति श्रुतः पञ्चशरावः यथाश्रुति उभयश्रुतिमनतिक्रम्य स्यात् । उभयस्य सायंप्रातःकालीनस्य हविषः आर्तौ सत्यामेव, प्रायश्चित्तं पञ्चशरावः न तु एकहविरार्तौ । ' भिन्ने जुहोति ' इत्यत्र ' पुरोडाशौ क्षायतः ' इत्यत्र च न यथाश्रुति अर्थः स्वीकृतः कारणान्तरात् । 'उभयं हविः' इत्यत्र तु तथा कारणाभावात् यथाश्रुत्येव अर्थः स्वीकार्यः । तस्मात् उभयोर्हविषोरार्तौ एव प्रायश्चित्तं इति चेत् पूर्वपक्षी ब्रूयात् ।

**न, तल्लक्षणत्वादुपपातो हि कारणम्** । २३ ॥

' यस्योभयं हविरार्तिमार्छति, ऐन्द्रं पञ्चशरावमोदनं निर्वपेत् ' इत्यत्र सायंप्रातरुभयहविरार्तौ एव प्रायश्चित्तम्, नैकहविरार्तौ इति पूर्वपक्षं नञा निषिध्य सिद्धान्तमाह । न यथाश्रुति वाक्यार्थो ग्रहीतुं शक्यः । उभयत्वस्य तल्लक्षणत्वात् प्रायश्चित्तनिमित्तविशेषणत्वात् निमित्तस्वरूपान्तर्गतत्वाभावात् । उभयपदेन निमित्तं लक्षितम् ।

उभयत्वस्य निमित्तलक्षणत्वम् । तेन उभयत्वस्य न निमित्ततावच्छेदककोटिप्रविष्टत्वम् । हि यतः उपपातः हविषो विनाश एव निमित्तम् । तच्च हविः उभयं वा स्यादेकं वा स्यात् । तस्मात् एकस्मिन्नपि हविषि आर्तिं प्राप्ते पञ्चशरावः प्रायश्चित्तम् । के.

* **यथासंख्यक्रमः** ( क्रमयोर्विरोधे ) पौर्वापर्यप्रत्यासत्तिक्रमात् बलीयान् । **वा.** ३।३।७।१४ पृ. ८४०. * **यथासंख्यक्रमात्** दध्विमन्त्रः उपांशुयाजाङ्गं दर्शपूर्णमासयोः । **वि.** ३।३।९.

**यथासंख्यन्यायः ।** अयं ' यथासंख्यमनुदेशः समानाम् ' ( १।३।१० ) इति पाणिनीयसूत्रसिद्धः । यथा ' टाङसिङसामिनात्स्याः ' ( ७।१।१२ ) इत्यादिषु पाणिनीयसूत्रेषु टाङसिङसादीनुद्दिश्येनात्स्यप्रभृतयो विधीयन्ते, यथाक्रमं प्रथमः प्रथमेन, द्वितीयो द्वितीयेनेत्यन्वयं प्राप्नुवन्तीति, एवमन्यत्रापि बोध्यम् । **साहस्री.** १९९.

* यथासंख्यन्यायः ( यथासंख्यमनुदेशः समानाम् ) । विनापि अनुष्ठानदेशसाम्येन यावति प्रदेशे ब्राह्मणे प्रधानं पठ्यते, तावत्येव मन्त्रेषु मन्त्रः । तयोश्च अङ्गाङ्ग्यपेक्षावेलायां यथासंख्यन्यायेन समानदेशत्वात् बुद्धौ संनिधानं भवति । **वा.** ३।३।५।१२ पृ. ८१९.

* **यथासंख्यपाठः** पाठसादेश्यरूपक्रमस्य एकः प्रकारः ( क्रममध्ये, एकस्य ) । **बाल.** पृ. १२. * **यथासंख्यपाठात्** ' ऐन्द्राग्नमेकादशकपालं निर्वपेत् ' ' वैश्वानरं द्वादशकपालं निर्वपेत् ' इत्येवं क्रमविहितासु इष्टिषु, ' इन्द्राग्नी रोचना दिवः ' इत्यादीनां याज्यानुवाक्यायुगलानाम् , यथासंख्यं प्रथमायां प्रथमम् , द्वितीयायां द्वितीयं इत्येवं क्रमेण विनियोगः । **मीन्या.**

* 'यदाऽन्याँश्चमसानुन्नयन्ति अथैनं चमसमुन्नयति' अयं फलचमसः इज्याविकारः, न भक्षविकारः । भक्षस्तु स्यादेव फलचमसस्य । **भा.** ३।५।१९।४७–५१. * 'यदा एकस्मादपूर्वं तदेतरत् तदर्थम्' ( यदा वाक्यगतात् एकस्मादेव पदात् अपूर्वस्य ज्ञानं भवेत् , तदा इतरत् पदजातं तदर्थं अपूर्वबोधकपदसहायकं भवेत् इत्यर्थः– सु. पृ.२६८ ) इति च न्यायेन धात्वर्थो नामपदार्थानुग्रहार्थोऽध्यवसीयते । **वा.** २।२।११।२६ पृ. ५४९. * ' यदा क्रिया अनुष्ठातव्या विधीयते, तदा अर्थात् कारकव्यापारो गम्यते ' ( भा. ३।३।४।१३ पृ. ९२१ ) इति भाष्योक्तेन न्यायेन कर्तुरवाच्यतावधारणं भवति । **सु.** पृ. १४१६. * ' यदा क्रिया अनुष्ठातव्या विधीयते तदा अर्थात् कारकव्यापारो गम्यते ' । यश्चार्थाद् गम्यते न स श्रौतः, यश्च न श्रौतो न स वाक्याद् गम्यते । **भा.** ३।४।४।१३ पृ. ९२१. * ' **यदा त्वाद्यपरिस्पन्दात् प्रभृत्याफललाभतः । क्रिया पूर्वापरीभूता लक्ष्यते वर्तते तदा ॥** ' इति **न्यायेन** एकफलसाधनानेकक्रियावयवसमुदायस्य एकक्रियात्वम् । **सु.** पृ. ६६३. * यदा मुख्यव्रीह्यलाभेन नीवारैः संकल्पः कृतः, अन्तरा व्रीहीणां लाभः, तदा संकल्पं बाधित्वा, मुख्या व्रीहय एव ग्राह्याः न नीवाराः । **वि.** ६।३।१६.

* ' **यदि** – अपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या ' इति यदवत्तं तत् पञ्चसंख्यं कार्यं इत्येतद्विधिपरे वाक्ये वपाग्रहणमविवक्षितम् , वाक्यभेदप्रसङ्गात् इति दशमे ( १०।७।२०।७३ ) वक्ष्यति । **वा.** ३।१।७।१४ पृ. ७१३. * ' यदि अर्थकर्म, ततो विकल्पः, अथ प्रतिपत्तिः, ततः समुच्चयः ' इति पूर्व एव ( १२।४।४।८ ) अत्रापि ( १२।४।६।१० ) न्यायः । **के.** * ' यदि आतुरः स्यात् मनसा वाचा वा संन्यसेत् ' अयं यदिशब्दपरित्यागेन विधिः । **बाल.** पृ. २८. * ' यदि आलम्भनिर्वापौ विधीयेते, न प्राकृतौ तौ विहितौ, यदि न विधीयेते तत्र प्राकृतौ लक्ष्येते यौ आलम्भनिर्वापौ कर्तव्यौ ' इत्यनेन आलम्भनिर्वापाधिकरणभाष्योक्तेन न्यायेन ( २।३।५।१३ सूत्रे ) कर्तव्यतावाचिना प्रत्ययेन उपलक्षणीभूत्वा व्याघृत्याख्यविशेषणं कर्तव्यम् । **सु.** पृ. ११२३. * ' यदीष्ट्या यदि पशुना यदि सोमेन यजेत, तत्रैवास्य पूर्वोऽग्निश्चितः स्यात्तमपरमन्ववधाय यजेत ' इत्यत्र अग्निचित्कर्तृकसोमे लोकंपृणारूपगुणान्तरविधिरयमेव, अन्यः सर्वोऽपि अस्यार्थवादः । इष्टिपशुशब्दौ च सोमप्रयोगान्तर्गतेष्टिपशुमात्रपरौ, इति न क्वापि पुराणाग्निद्रव्यस्य पुनर्विनियोगः । **संकर्ष.** १।३।११ । अत्र च इष्टिपशुबन्धयोरेव पुराणद्रव्यविधिः पर्यवस्यति । वस्तुतस्तु उत्तरवेदिपुराणाग्निद्वयस्येव एक-



विंशतिलोकंपृणानामपि अग्निचित्कर्तृकसोमे समुच्चयः सोमानन्तर्गतेष्टिपशूनां तु एकविंशतिलोकंपृणाऽभाव इति अन्तरा चिन्ता । १।३।१२.

**यद्युद्गाता जघन्यः स्यात् पुनर्यज्ञे सर्ववेदसं दद्याद् यथेतरस्मिन् । ६।५।२०।५५॥**

ज्योतिष्टोमे प्रातःसवने ग्रहग्रहणानन्तरं बहिष्पवमानार्थं अध्वर्युः, उद्गाता, प्रस्तोता, प्रतिहर्ता, यजमानः, ब्रह्मा च पिपीलिकापङ्क्तिवत् अन्वारभ्य गच्छन्ति । तत्र दैवात् यदि उद्गातुः अध्वर्युणा सह अपच्छेदः नाम अन्वारम्भभङ्गः स्यात् , तदा आरब्धो यज्ञः अदक्षिणाक एव समापनीयः । समाप्य च स एव यागः पुनः कर्तव्यः । पूर्वयागे अदत्ता दक्षिणा अस्मिन् पुनर्यागे दातव्या । इति उद्गात्रपच्छेदे प्रायश्चित्तम् । अथ यदि प्रतिहर्तुः प्रस्तोत्रा साकं अपच्छेदः स्यात् , तदा आरब्धे एव प्रतिहर्त्रपच्छेदवति यागे सर्वस्वदक्षिणा देया इति प्रायश्चित्तम् । यत्र तु एकस्मिन्नेव प्रयोगे अपच्छेदद्वयं क्रमेण संजातम्, पूर्वं प्रतिहर्त्रपच्छेदः, अपरं उद्गात्रपच्छेदः, तत्र ' पौर्वापर्ये पूर्वदौर्बल्यम् ' ( ६।५।१९।५४ ) इति **न्यायेन** अपरापच्छेदनिमित्तकं अर्थात् उद्गात्रपच्छेदनिमित्तकं प्रायश्चित्तं कर्तव्यं भवति । तदुद्दिशति सूत्रकारः— यदि उद्गाता जघन्यः स्यात् यदि उद्गात्रा कृतोऽपच्छेदः पाश्चात्यः स्यात् , तदा आरब्धं यागं अदक्षिणं समाप्य पुनर्यागः कर्तव्यः, तस्मिन् पुनर्यज्ञे द्वादशशतरूपां दक्षिणां न दद्यात् किंतु सर्ववेदसं दद्यात् । यथा इतरस्मिन् । यथा प्रतिहर्त्रपच्छेदवति सर्वस्वं दीयते तथा अत्रापि सर्वस्वं देयम् । तथा सति पौर्वापर्यन्यायोऽपि अनुगृह्यते, निमित्तसमुच्चयप्राप्तप्रायश्चित्तसमुच्चयोऽपि अनुगृह्यते । न च विरोधः प्राप्नोति । तस्मादेतादृशस्थले एवं कर्तव्यम् । **के.**

* ' यद्यृक्तो यज्ञमार्तिमियात्, भूः स्वाहेति गार्हपत्ये जुहुयात् ' । अयं विहितातिक्रमनिमित्तकः, नैमित्तिकः दोषनिर्घातार्थः क्रत्वर्थः अधिकारविधिः । **बाल.** पृ. १४. * ' यदि ऋक्तो यज्ञमार्तिमियात्, भूः स्वाहेति जुहुयात् ' इत्यादिषु दोषनिर्घातार्थेषु प्रायश्चित्तेषु विकल्पः न तु समुच्चयः । **भा.** १२।३।५।१६. * ' यद्येकं यूपमुपस्पृशेत् , एष ते वायो इति ब्रूयात् ' ' यूपो वै यज्ञस्य दुरिष्टमामुञ्चते । यद्यूपमुपस्पृशेत् यज्ञस्य दुरिष्टमामुञ्चेत् । तस्माद्यूपो नोपस्पृश्यः ' इदं प्रायश्चित्त लौकिके यूपस्पर्शे, न तु उच्छ्रयणकालीने वैदिके । **वि.** ९।३।३. * ' यद्येकं यूपमुपस्पृशेत् एष ते वायो इति ब्रूयात् ' अयं निषिद्धाचरणनिमित्तकदोषनाशफलसंवलितपुरुषार्थाधिकारविधिः । **बाल.** पृ. १५. * ' यदि कामयेत वर्षुकः पर्जन्यः स्यात् इति, नीचैः सदो मिनुयात् ' इति वृष्टिफलं यजमानस्यैव । ' यजमानकामितां वृष्टिं पर्जन्यः संपादयतु ' इत्येव योऽध्वर्युः कामयते, स नीचैः मिनुयात् इति व्याख्येयम् । तादृशी तु कामना ऋत्विजाम् । क्वचित्तु ' एवंविदुद्गाताऽऽत्मने वा यजमानाय वा ' इत्यादौ ( बृह. ३।१।२८ ) वाचनिकं फलमृत्विजाम् । **वि.** ३।८।६. * ' यदि कामयेत वर्षुकः पर्जन्यः स्यात् , नीचैः सदो मिनुयात् ' अयं गुणस्य अपूर्वविधिः । **बाल.** पृ. २२, * ' यदि कामयेत वर्षुकः पर्जन्यः स्यात् , नीचैः सदो मिनुयात् ' इयं परस्मैपद-( रूपा ) विनियोक्त्री श्रुतिः । पृ. ४१, * ' यदि कृष्णसारङ्गं न विन्देत् अथो अपि लोहितसारङ्गः स्यात् ' ( शतपथे ) । अयं गुणप्रतिनिधिनियमविधिः । पृ. २३. * ' यदि च हेतुरवतिष्ठेत ' १।२।३।२० इति न्यायात् , शूर्पत्वैकार्थसमवायिनोऽन्नकरणावान्तरसामान्यस्य होमसाधनत्वहेतुत्वान्यथानुपपत्त्या अन्वयविधिः कल्प्यमानः शूर्पविषय एव कल्प्यते । **सु.** पृ. १२९३. * यस्मादयं देशाचारः अयं वा गृह्यादिग्रन्थः, अन्यथा नोपपद्यते यदि श्रुतिमूलकत्वं नास्ति इत्यनयोपपत्त्या मूलकल्पना । तस्मात् व्यवस्थितविषयैव साऽध्यवसातव्या । तथा चोक्तं ' यदि च हेतुरवतिष्ठेत निर्देशात् ' इति । **वा.** १।३।७।१५ पृ.२४४. * दर्व्यादेरपि होमसाधनत्वस्य हेत्वधिकरणपूर्वपक्षप्रयोजनस्य ' यदि च० ' इत्यनेन निरासः । **सु.** पृ. ९९२. * 'यदि जगत्सामा आग्रयणाग्रान् ' इति आग्रयणाग्रत्ववाक्यं सोमयागे गुणविधायकं न कर्मान्तरविधायकम् । **भा.** २।३।१।१–२.

**यदि तु ब्रह्मणस्तदूनं तद्विकारः स्यात् । १०।३।२०।७२ ॥**

अथवा अधिकरणान्तरस्य पूर्वपक्षसूत्रमिदम् । अक्षरार्थस्तु 'तथा च सोमचमसः' ( १०।३।१९।६८-७१ ) इत्यधिकरणे अस्मिन्नेव सूत्रे द्रष्टव्यः ।

**सर्वं वा पुरुषापनयात् तासां क्रतुप्रधानत्वात् । ७३ ॥**

अथवा अधिकरणान्तरस्य सिद्धान्तसूत्रमिदम् । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । अक्षरार्थस्तु 'तथा च सोमचमसः' इत्यधिकरणे द्रष्टव्यः । **के.**

**यदि तु वचनात् तेषां जपसंस्कारमर्थलुप्तं सेष्टि तदर्थत्वात् । १०।२।१८।५०॥**

अस्थ्नां अस्ति यज्ञाधिकार इति कृत्वाचिन्ता । तुशब्दः कृत्वाचिन्तामुद्धारयति । यदि वचनात् तेषां अस्थ्नां यज्ञः स्यात् , तदा तेषां जपसंस्कारं अर्थलुप्तं सत् निवर्तते । यत्र 'जपति' इति चोदना, ते मन्त्रा जपाः, संस्काराः 'केशश्मश्रु वपते' इत्येवमादयः, जपाश्च संस्काराश्च तेषां समाहारः जपसंस्कारं अर्थलोपान्न कर्तव्यम् । न तैः अस्थिभिः शक्यं जपितुम्, नापि केशश्मश्रु वप्तुम् । अशक्यं च चोदको न प्रापयति । किंच सेष्टि दीक्षणीयया इष्टया सहितं सेष्टि जपसंस्कारं लुप्येत । तदर्थत्वात् यजमानार्थत्वात् दीक्षायाः । दीक्षा च व्रतानि । नियमाश्च मानसं कर्म । न चास्थ्नां मनः अस्ति । तस्मात् अस्थियज्ञे जपाः संस्काराः इष्टिश्च निवर्तन्ते । इति **सिद्धान्तः । के.**

* 'यदि ब्राह्मणो यजेत, बार्हस्पत्यं मध्ये निधाय०' इत्यादिना गुणविशिष्टं कर्मान्तरं विधीयते अवेष्टिर्नाम । **वि.** २।३।२. * 'यदि ब्राह्मणो यजेत, बार्हस्पत्यं मध्ये निधाय, आहुतिमाहुतिं हुत्वा, तमभिघारयेत् । यदि राजन्य ऐन्द्रं यदि वैश्यो वैश्वदेवम्' अयं पुरस्तादनुपङ्गेण विधिः । **बाल.** पृ. २७. * "यदि यजमानः प्रवसेत्—'प्रजापतेर्विभान्नाम लोकः' इति ध्रुवायां यजमानभागमवधाय समिष्टयजुषा सह जुहुयात्" ( आपस्तम्बसूत्रम् ) अयं क्रियाप्रतिनिधिनियमविधिः । **बाल.** पृ. २३. * 'यदि रथंतरसामा' इति सयदिके वाक्ये चिन्तिते सयदिकत्वसाम्येन बुद्धिस्थानां 'यदि ब्राह्मणो यजेत' इत्यादिवाक्यानां पूर्वाधिकरणे निमित्तार्थत्वापवादेन प्रयोगविधित्वव्युत्पादनात्, इहापि ब्राह्मणादिसंयुक्तत्वसाम्येन बुद्धिस्थानां वसन्तादिवाक्यानां प्रयोगविधित्वव्युत्पादनात् अवान्तरसंगतिः । **सु.** पृ. ९१४. * 'यदि रथंतरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्' इत्यादिग्रहाग्रताविशेषः ज्योतिष्टोमस्यैव विधीयते, न तु रथंतरसाम-बृहत्सामशब्दाभ्यां च क्रत्वन्तरम्, किन्तु ज्योतिष्टोम एव अभिधीयते । रथन्तराधिकरणम् । **भा.** २।३।१।१-२. * 'यदि रथंतरसामा सोमः स्यात्, ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्' इत्यादि, अयं अन्यतरप्राप्तौ व्यवस्थया विधिः । अत्र पाठतः ऐन्द्रवायवाग्रतैव प्राप्ता । **बाल.** पृ. १८, * 'यदि रथंतरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्' इयं निमित्ततो वाचनिकी व्यवस्था श्रौती । पृ. १९ , * 'यदि सत्राय दीक्षितानां प्रमीयेत, योऽस्य नेदिष्ठः स्यात् तं तस्य स्थाने दीक्षयित्वा' अयं द्रव्यप्रतिनिधिनियमविधिः । पृ. २३. * 'यदि **सुसदृशमन्यल्लभ्यते, तत्र मिथ्या भवति विसदृशत्वान्मन्दसादृश्ययुक्तम्' इति न्यायः** । स्वल्पसमवाय्यन्तरङ्गद्रव्यसामान्ययुक्तसुसदृशप्रकृतिलाभसंभवे, शब्दमात्रसमवायिबहिरङ्गदेवता सामान्ययुक्तस्य कर्मणः मन्दसदृशत्वेन 'यदि सुसदृश०' इत्यनेन न्यायेन विसदृशत्वात् प्रकृतित्वकल्पनाशक्तिः । **सु.** पृ. १२८१. * 'यदि सोमविक्रयी प्रतिविवदेत, पृषतैनं वरत्राकाण्डेन अवक्षाणं नाशयेयुः, लकुटैर्घ्नन्तीत्येके, नित्यवदेके वधं समामनन्ति' अयं क्रत्वर्थः अभ्यनुज्ञाविधिः । **बाल.** पृ. १६.

* **यदिशब्दः** निमित्तत्वबोधकः । 'यदि रथंतरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्' इत्यत्र ऐन्द्रवायवाग्रत्वस्य रथंतरसाम सोमकत्वं निमित्तमित्युक्तम् । **वि.** ४।४।५. * **यदिशब्देन** विधिशक्तिप्रतिबन्धः, 'यदि सोममपहरेयुः' इत्यादौ । **वा.** २।१।६।३१.



* **यदिशब्दादिरहितस्य** निमित्तत्वादिप्रतीतिः न चास्ति । **वा.** ३।५।२०।५३.

* **यदिशब्दोपबन्धात्** निमित्तं प्रतीयते । **वा.** २।३।१।१.

* **यदिशब्दपरित्यागेन** विधिर्यथा–'यदि आतुरः स्यात् मनसा वाचा वा संन्यसेत्' इति । **बाल.** पृ. २८.

* **यदृच्छाशब्दानां** देवदत्तादीनां संकेतितार्थविशेषवाचित्वात् जातिशब्दत्वं नास्ति । **सु.** पृ. ३३१.

* **यमं** दण्डहस्तमालिखन्ति, कथयन्ति च । **भा.** ९।१।४।६.

* व्रीहि**यवौ** यागेषु निरपेक्षौ साधनम् । **भा.** १२।४।३।५. * **यवाः** व्रीहीणां प्रतिनिधिर्न भवन्ति, तयोर्वैकल्पिकत्वात् । **वि.** ६।३।१२. * 'फाल्गुनेऽन्यौषधीनां तु जायते पत्रशातनम् । मोदमानास्तु तिष्ठन्ति यवाः कणिशशालिनः ॥' **वा.** १।३।४।९ पृ. २१८. * **यवानां** नवानां भक्षणोत्तरं अग्न्याधाने कृते, तत उत्तरं यवाग्रयणं कर्तव्यमेव इति चेन्न, प्रागधिकाराभावात् । अग्न्याधानोत्तरं द्वितीये वर्षे निष्पन्नेषु तु यवेषु यवाग्रयणम्, व्रीह्यादिष्वप्येवम् । **संकर्ष.** ३।१।१३. * यवानां प्राकृतानां बाधः, सोमारौद्रादियागे श्रूयमाणैः शुक्लादिगुणविशिष्टव्रीहिभिः । १०।७।१९।६४-७१. * यत्तु तस्मिन्नेवापूर्वे समानकारकत्वेन उपकरिष्यति तस्य भविष्यन्त्येव धर्माः यथा **यवानाम्** । **वा.** ३।१।४।१० पृ. ६७०.

* **यवाग्रयण**– व्रीह्याग्रयणयोः भेदेन अनुष्ठानम् । **संकर्ष.** १।३।८. **मीको.** पृ. ८५२ 'आग्रयणं एकस्मिन्नपि संवत्सरे सस्यभेदेन०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **यवमतीभिः अद्भिः** प्रोक्षणं अञ्जनं परिव्याणमिति यूपधर्माः । **भा.** १२।२।१०।२६.

* '**यवमयः** चरुर्भवति' 'वाराही उपानहावुपमुञ्चते' । आर्याः यवशब्दं दीर्घशूकेषु प्रयुञ्जते वराहशब्दं च सूकरे । म्लेच्छास्तु यवशब्दं प्रियङ्गुषु वराहशब्दं च कृष्णशकुनौ ( काके ) । तत्र उभावर्थौ ग्राह्यौ इति चेत् , न । आर्यप्रसिद्धिरेव शास्त्रानुसारित्वात् ग्राह्या, न म्लेच्छानां शास्त्ररहितानां प्रसिद्धिः । शास्त्रं च 'यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति' इति । 'वराहं गावोऽनुधावन्ति' ( मैसं. १।६।३ ) । **वि.** १।३।५. * **यवमयस्य** मध्यमपुरोडाशस्य त्रैधातव्यायां नियमः । **भा.** १०।७।१६।५१-५७.

**यववराहाधिकरणम् ॥**

**तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात् । १।३।४।८ ॥**

**भाष्यम्**— 'यवमयश्चरुः' 'वाराही उपानहौ' 'वैतसे कटे प्राजापत्यान् संचिनोति' इति यववराहवेतसशब्दान् समामनन्ति । तत्र केचित् दीर्घशूकेषु यवशब्दं प्रयुञ्जते, केचित् प्रियङ्गुषु । वराहशब्दं केचित् सूकरे, केचित् कृष्णशकुनौ । वेतसशब्दं केचित् वञ्जुलके, केचित् जम्ब्वाम् । तत्रोभयथा पदार्थावगमात् विकल्पः ।

**वा**—'तेष्वदर्शनाद्विरोधस्य' इत्येवमुपक्रमं वा सूत्रम् । शब्दार्थविषयप्रयोगशिष्टाचारविप्रतिपत्तौ संदेहः । '**एकशब्दमनेकार्थं शिष्टैराचर्यते यदा । विगानेन तदा तत्र कोऽर्थः स्यात् पारमार्थिकः ॥**' यववराहवेतसशब्दाः प्रियङ्गुवायसजम्बूष्वपि किल क्वापि देशान्तरे प्रयुज्यन्ते । '**तेन तद्वचनत्वे हि संदेह उपजायते । अनिरूपिततत्त्वानां यावद्दृष्टानुसारिणाम् ॥ तत्राऽऽह, नैव संदेहः कर्तव्योऽत्र मनागपि । प्रयोगं प्रति तुल्यत्वात्सर्वलोकप्रयोगिणाम् ॥ यत्र देशे हि यः शब्दो यस्मिन्नर्थे प्रयुज्यते । शक्तिस्तद्गोचरा तस्य वाचिकाख्या प्रमीयते ॥ तस्याश्च सर्वगामित्वं तन्न्यायत्वात् प्रमीयते । नैकेषामेव सा ह्यस्ति केषांचिद्वा न विद्यते ॥** ( तस्मिन् सर्वगामित्वे न्यायो युक्तिर्यस्याः शक्तेः, सा तन्न्याया तद्भावः तन्न्यायत्वम् । न्यायमाह– नैकेषामेवेति । ) **ज्ञाताज्ञातविभागस्तु ज्ञातृभेदेऽवकल्पते । तस्माद्यैरपि न ज्ञाता यच्छब्दार्थस्य वाच्यता ॥ तैरप्यभ्युपगन्तव्या स्वप्रसिद्धिसमा हि सा ॥ न चाल्पत्वबहुत्वाभ्यां प्रयोक्तॄणां विशिष्यते । वाच्य-**

वाचकभावोऽयमक्षपादादिशब्दवत् ॥ बिभीतके-ऽक्षशब्दो हि यद्यप्यल्पैः प्रयुज्यते । तथापि वाचकस्तस्य ज्ञायते शकटाक्षवत् ॥ ' तथा चोक्तं शवतिर्गतिकर्मा कम्बोजेष्वेव दृष्टो विकारापन्नमार्याः प्रयुञ्जते शवमिति मृतशरीराभिधानादित्यादि । ("शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते ... विकारमस्य आर्येषु भाष्यते 'शवः' इति" इति निरुक्ते २।२ ) । बहव एव हि धातवो नामशब्दाश्च प्रतिदेशं अर्थभेदेषु व्यवस्थिता दृश्यन्ते तस्मात् समा इयं अभिधाने विप्रतिपत्तिः स्यात् । एवं च विकृतिषु केषांचिदर्थानां साधारणशब्दवाच्यत्वात् प्रकृताविव अविकृतप्रयोगादार्थे चोदकोऽनुग्रहीष्यते । 'तेष्वदर्शनाद्विरोधस्य' इत्यत्रैव चैतत् व्याख्येयम् । इतरत्र विप्रतिपत्त्यविरोधयोरघटमानत्वात् । तस्मादाचारविप्रतिपत्तेः समत्वात् विकल्पः । इति प्राप्तेऽभिधीयते ।

**शास्त्रस्था वा तन्निमित्तत्वात् । ९ ॥**

**भाष्यम्—** वाशब्दः पक्षं व्यावर्तयति । यवशब्दो यदि दीर्घशूकेषु, सादृश्यात् प्रियङ्गुषु भविष्यति, यदि प्रियङ्गुषु, सादृश्याद् यवेषु । किं सादृश्यम् ? पूर्वसस्ये क्षीणे भवन्ति दीर्घशूकाः प्रियङ्गवश्च एतत्तयोः सादृश्यम् । कः पुनरत्र निश्चयः ? यः शास्त्रस्थानां स शब्दार्थः । के शास्त्रस्थाः ? शिष्टाः । तेषामविच्छिन्ना स्मृतिः शब्देषु वेदेषु च । तेन शिष्टा निमित्तं श्रुतिस्मृत्यवधारणे । ते ह्येवं समामनन्ति यवमयेषु करम्भपात्रेषु विहितेषु वाक्यशेषं 'यत्रान्या ओषधयो म्लायन्ते, अथैते मोदमाना इवोत्तिष्ठन्ति' इति । दीर्घशूकान् यवान् दर्शयति वेदः । वेदे दर्शनाविच्छिन्नपारम्पर्यो दीर्घशूकेषु यवशब्द इति गम्यते । तस्मात् प्रियङ्गुषु गौणः । तस्मात् दीर्घशूकानां पुरोडाशः कर्तव्यः । 'तस्माद्वराहं गावोऽनुधावन्ति' इति सूकरे वराहशब्दं दर्शयति । 'अप्सुजो वेतसः' इति वञ्जुले वेतसशब्दम् । सूकरं हि गावोऽनुधावन्ति । वञ्जुलोऽप्सु जायते । जम्बूवृक्षः स्थले गिरिनदीषु वा ।

**वा—** '**शास्त्रस्था तन्निमित्तत्वात् प्रतिपत्तिर्बलीयसी । लौकिकी प्रतिपत्तिर्हि गौणत्वेनापि नीयते ॥ नानाविप्रतिपत्तौ हि न लोकस्येह सत्यता । या शास्त्रानुगुणा सैव प्रामाण्येनावधार्यते ॥ लौकिकत्वे समानेऽपि शास्त्रेणाभ्यधिका हि सा । शास्त्रस्थाः पुरुषा ये वा प्रतिपत्तिस्तदाश्रया ॥ प्रमाणत्वेन मन्तव्या सप्रत्ययतरा हि ते । शास्त्रार्थेष्वभियुक्तानां पुरुषाणां हि सर्वदा ॥ स्तोकेनाप्यन्यथात्वेन शास्त्रार्थो निष्फलो भवेत् । लौकिकस्त्वन्यथात्वेऽपि नार्थोऽतीव विरुध्यते ॥ रसवीर्यविपाकानां भेदाद्वैद्यैर्यवादयः । निर्धार्याः स्वार्थतत्त्वेन, धर्मसिद्ध्यैव याज्ञिकैः ॥ तस्माद्ये याज्ञिकैर्येषां वैद्यैर्वाऽर्था निरूपिताः । तेषां त एव शब्दानामर्था मुख्या हि नेतरे ॥ अनवस्थितशब्दार्थसंबन्धः सति संभवे । विकल्पश्चाष्टदोषत्वान्न कथंचन युज्यते ॥ अविप्लुतश्च शब्दार्थो यो वेदेषूपलभ्यते । तत्रत्यनिर्णयात् तस्माल्लोके भवति निर्णयः ॥** ' यवमतीभिरद्भिः औदुम्बर्याः प्रोक्षणे विधीयमाने वाक्यशेषोऽयं 'यत्रान्या ओषधयो म्लायन्तेऽथैते मोदमानास्तिष्ठन्ति' इति बह्वीषु शाखासु श्रूयते, भाष्यकारेण वारुणप्राघासिकयवमयकरम्भपात्रवाक्यशेषत्वेनोपलब्धो यः स मन्दप्रयोजनत्वात् तथा नामास्तु । '**फाल्गुनेऽन्यौषधीनां तु जायते पत्रशातनम् । मोदमानास्तु तिष्ठन्ति यवाः कणिशशालिनः ॥ प्रियङ्गवः शरत्पकास्तावद्गच्छन्ति हि क्षयम् । यदा वर्षासु मोदन्ते सम्यग्जाताः प्रियङ्गवः ॥ तदा नान्यौषधिम्लानिः सर्वासामेव मोदनात् ।**' एवं वराहवेतसशब्दा अपि शास्त्रस्थप्रयोगादेव निश्चीयन्ते । नत्वेतान्युदाहरणानि लोकप्रसिद्धैरेव व्यवस्थितत्वाद्युक्तानि । तथाहि '**नैवोच्यन्ते कचिद्देशे यवश्रुत्या प्रियङ्गवः । जम्बूं न वेतसं प्राहुर्वराहं नापि वायसम् ॥ अध्यारोप्य विचारेण किं मुधा खिद्यते मनः । संदिग्धेषु च सर्वेषु वाक्यशेषेण निर्णयम् ॥ वक्ष्यत्येव न तेनापि पृथक्कार्या विचारणा ।**' यद्यपि तत्राभिधेयसंदेहमनुदाहृत्य उपादानसंदेहनिर्णयोपायव्याख्यानं करिष्यति, यावद्वाक्यशेषमेव स निर्णयो नान्यत्र । अयं तु अभिधेयनिर्णयः एकत्र च कृतः, सर्वत्र च कृत एव भविष्यति इत्येवमपुनरुक्तत्व-



मापद्यते । '**तथापि न्यायतुल्यत्वाद्यथा घृतपरिग्रहः । वाक्यशेषात् तथैव स्यात् यवाद्यर्थविनिर्णयः ॥**' तत्सिद्धिसूत्रे च सारूप्यादीनां गौणवृत्तिनिमित्तानामनुक्रमणात् वेतससदृशजम्बूप्रत्ययसिद्धिरशब्दार्थत्वेऽपि विज्ञायते एवेति नेहोदाहृतेन कार्यम् ।

( **आर्यम्लेच्छप्रयोगविप्रतिपत्तिबलाबलम् ।** )

'**तस्मादन्यदुदाहृत्य विचार्यमिदमीदृशम् । यत्र विप्रतिपत्तिः स्यादार्यम्लेच्छप्रयोगजा ॥ तत्र किं तुल्यता युक्ता किमेकैव बलीयसी ।** ( पूर्वपक्षमाह— ) **समा विप्रतिपत्तिः स्याद् दृष्टार्थव्यवहारिणाम् । आर्यास्तावद्विशिष्येरन्नदृष्टार्थेषु कर्मसु । दृष्टार्थेषु तु तुल्यत्वमार्यम्लेच्छप्रयोगिणाम् ॥**' सर्वो हि शब्दः अर्थप्रत्यायनार्थं प्रयुज्यते । अर्थश्च संव्यवहारप्रसिद्ध्यर्थमभिधीयते ।

'**तत्र यस्य विशिष्टस्य म्लेच्छेष्वर्थान्तराभिधा । तत्रापि तस्य सामर्थ्यमनाद्येव प्रतीयते ॥ यथैव ह्यार्यगम्येऽर्थे संबन्धानादिता मतिः । म्लेच्छगम्ये तथैव स्यादविशिष्टं हि कारणम् ॥ न प्रयोगावधिस्तस्य म्लेच्छेष्वपि हि दृश्यते । अनाद्योरर्थशक्त्योश्च विशेषो गम्यतां कथम् ॥ यथा च म्लेच्छदेशेऽपि धूमोऽग्नेरवबोधकः । एवं स्वार्थे प्रयोगात् तैरिष्टः शब्दोऽपि वाचकः ॥ तस्मात् पील्वादिशब्दानां वृक्षहस्त्यादिबोधने । समा विप्रतिपत्तिः स्यादार्यम्लेच्छप्रयोगतः ॥**' इति प्राप्तेऽभिधीयते । शास्त्रस्था वेति पूर्ववदेव सकलसूत्रव्याख्या योजनीया । किंच, '**यथा साध्वनुरूपत्वात् प्रमादाशक्तिजेष्वपि । जायते वाचकभ्रान्तिस्तथैव म्लेच्छभाषिते ॥**' शब्दापभ्रंशवदेव गौणभ्रान्त्यादिप्रयोगनिमित्ता अर्थापभ्रंशा भवन्ति ते शास्त्रस्थैरेवाविप्लुतार्थक्रियानिमित्तपुण्यार्थिभिः शक्यन्ते साध्वसाधुकार्षापणमध्यादिव तत्परीक्षिभिर्विवेक्तुम् । अभियुक्तानभियुक्तज्ञानयोश्चाभियुक्तज्ञानं बलवदितरस्य सुलभापवादत्वात् । '**अतः शास्त्राभियुक्तत्वादार्यावर्तनिवासिनाम् । या मतिः सैव धर्माङ्गशब्दार्थत्वप्रमा मता ॥**' एतेन आर्यावर्तनिवासिमध्येऽपि '**अभियुक्ततरा येये बहुशास्त्रार्थवेदिनः । तेते यत्र प्रयुञ्जीरन् ससोऽर्थस्तत्त्वतो भवेत् ॥**'

( **स्मृत्याचारविरोधे बलाबलविचारः** ) '**स्मृत्याचारविरोधे वा साम्यवैषम्यसंशये । समा विप्रतिपत्तिः स्यान्मूलसाम्याद् द्वयोरपि ॥ यथैव श्रुतिमूलत्वात् स्मरणानां प्रमाणता । आचाराणां तथैवेति न विशेषो बलाबले ॥ यद्वाऽऽचारबलीयस्त्वं फलस्थत्वात् प्रतीयते । फलाद्वियुज्यमानं हि प्रमाणं दुर्बलीभवेत् ॥ श्रुतिराचारमूलं या फलस्था सोपलभ्यते । यावद्धि स्मरणं दृष्ट्वा श्रुतिरन्याऽनुमास्यते ॥ तावल्लब्धात्मकः पूर्वमाचारः प्रतितिष्ठति । प्रतिष्ठितस्य बाधश्च कीदृशः परिकल्प्यताम् ॥ तेनाऽऽचारबलीयस्त्वं समत्वं वेह युज्यते । स्मृतीनां वा बलीयस्त्वं शास्त्रस्था वेति वर्ण्यते ॥ उभयोः श्रुतिमूलत्वं न स्मृत्याचारयोः समम् ॥ सप्रत्ययप्रणीता हि स्मृतिः सोपनिबन्धना । तथा श्रुत्यनुमानं हि निर्विघ्नमुपजायते ॥ आचारात्तु स्मृतिं ज्ञात्वा श्रुतिर्विज्ञायते ततः । तेन दूरन्तरितं तस्य प्रामाण्यं विप्रकृष्यते ॥ न ह्येकैव श्रुतिः काचिदाचाराणां प्रवर्तिका । भिन्नाभिर्विप्रकीर्णत्वान्नास्मृताभिः प्रवर्तनम् ॥ नैकप्रपाठकेनैव ह्याचाराणां विधिस्थितिः । कचित्प्रकरणे कश्चित् कथंचिदुपलभ्यते ॥**' तद्यथाऽग्निप्रकरणे 'यत् ससदशवतीमुपदधात्यन्नमेवोभयतो दधाति, तस्मादुभाभ्यां हस्ताभ्यां परिगृह्य पुरुषोऽन्नमत्ति' इति । सत्यपि हेतुवन्निगदत्वे प्रसिद्धिरहिते हेत्वसंभवात् । 'विधायिष्यते तु वेदे वचनेन' इत्यनेन न्यायेन विध्यनुमानम् । न चैतन्नियोगतोऽर्थतः प्राप्तम्, येन 'तस्मात्प्रजा दश मासान् गर्भे धृत्वा, एकादशमनु प्रजायन्ते, तस्मादश्वतर्यः प्रजाः' इतिवत् स्वभावप्राप्तत्वेनार्थप्राप्तत्वेन वा 'तस्मादुत्तरे वयसि पुत्रान् पितोपजीवति' इतिवदनूद्येत इत्यतो न्यायात् पुरुषधर्मविधिः । एवम् 'अन्नमेव तद्दक्षिणतो दधाति, तस्माद्दक्षिणेन हस्तेन पुरुषोऽन्नमत्ति' इति । तथा 'दीक्षितो नयनं दक्षिणं प्रथममङ्क्ते, सव्यं हि मनुष्याः पूर्वमञ्जते विधृत्यै' इति । तथा यूपैकादशिन्यां 'द्वे द्वे रशने यूपमृच्छतः,

तस्मात् स्त्रियः पुंसोऽतिरिक्तास्तस्मादुतैको बह्वीर्जाया विन्दते, नैका बहून् पतीन्’ इति । तथा दर्शपूर्णमासप्रकरणे अग्नीषोमीयविधिसंबन्धलङ्घनेन त्वाष्ट्रवधनिमित्त– इन्द्रगतब्रह्महत्यातुरीयविभागप्रतिग्रहप्रस्तावागत–रजस्वलाव्रतानां भूमिशयनास्नानामांसभक्षणानभ्यङ्गानञ्जनाविलेखनाकर्तनादन्तधावनानखच्छेदनारज्जुसंसर्जनादीनां त्रिरात्रविषयाणां प्रकरणातिरिक्तस्त्रीधर्मत्वावधारणम् । ‘**एवं च विप्रकीर्णानामशक्यैकत्र संहृतिः । स्मृतिमेव दृढां मुक्त्वा तस्मादस्त्यन्तरा स्मृतिः ॥ तेनाऽऽचारः स्मृतिं यावदनुमातुं प्रवर्तते । स्मृतिर्लब्धश्रुतिस्तावद्धर्ममेवावधारयेत् ॥**’ तस्मादाचारेभ्यः स्मृतिर्बलीयसी सन्निबन्धनेति ।

(त्रिवृच्चर्वाश्ववालाधिकरणम) ‘**त्रिवृच्चर्वश्ववालादेर्लोकेऽन्योऽर्थः प्रतीयते । वेदे तदभियुक्तैश्च तस्मादन्यो विलक्षणः ॥ तत्र किं तुल्यकल्पत्वात् पदार्थे लोकवेदयोः । समा विप्रतिपत्तिः स्यादथवैका बलीयसी ॥ लोके तावत् त्रिवृच्छब्दस्त्रिगुणत्वस्य वाचकः । त्रिवृद्रज्जुस्त्रिवृद्ग्रन्थिर्वेदे तु नवके स्थितः ॥**’ त्रिवृद्बहिष्पवमानमित्युक्त्वा तृचत्रयमनुक्रान्तमिति स्तोत्रीयैर्नवकवचन एव त्रिवृच्छब्दो विज्ञायते । ‘**तथाऽयं चरुशब्दोऽपि लोके स्थालीनिबन्धनः । याज्ञिकानां च वेदे च प्रसिद्धस्त्वोदनं प्रति ॥**’– अनवस्रावितान्तरूष्मपक्वौदनवचनो हि याज्ञिकानां चरुशब्दः प्रसिद्धस्तथा वेदेऽपि ‘आदित्यः प्रायणीयः पयसि चरुः’ इति विहिते पश्चादुक्तात् ‘अदितिमोदनेन’ इति वचनाच्च ओदनवचनत्वं ज्ञातम् ।

एवं ‘आश्ववालः प्रस्तरः’ इत्यश्वजातीयवालमयः प्रस्तरो लोकप्रसिद्ध्या विज्ञायते, वैदिकवाक्यशेषात्तु काशेष्वश्ववालप्रसिद्धिः । एवं हि श्रूयते ‘यज्ञो वै देवेभ्योऽश्वो भूत्वाऽपाक्रामत्, सोऽपः प्राविशत् ।’ ‘स वालधौ गृहीतः स वालान्मुक्त्वा विवेश ह । ते वालाः काशतां प्राप्ताः कार्योऽतः प्रस्तरस्तु तैः ॥’

‘**ऐक्षव्यौ विधृती ये च ते इक्ष्ववयवात्मिके । लोके सिद्धे, तथा वेदे काशानामेव मूलके ॥ एवमादिषु सर्वेषु प्रतिपत्तिविपर्यये । प्रतिपत्तेः समानत्वाद्विकल्पो हि प्रसज्यते ॥**’ ननु च लोकप्रसिद्धेः धर्मं प्रत्यनङ्गत्वाद्वेदप्रसिद्धिरेव ज्यायसी । ‘**नैतदेवं पदार्थेषु नहि वेदो विशिष्यते । अदृष्टहेतुवाक्यार्थे लोकात् स ह्यतिरिच्यते ॥ तस्मादुभय्यपि त्वेषा प्रतिपत्तिः समा भवेत् । यदि वा पूर्वभावित्वाल्लौकिक्येव बलीयसी ॥**’ वेदनिरपेक्षा हि लोकप्रसिद्धिरात्मानं लभते, वैदिकी पुनर्लोकप्रसिद्धपदान्तरसामानाधिकरण्येन सिध्येत् । ‘**तत्र लोकाविरुद्धा या वैदिकी सैव गृह्यते । लोकसिद्धिं व्यतिक्रम्य साऽऽत्मानं नैव विन्दति ॥**’

‘तेष्वदर्शनाद्विरोधस्य’ इति च तेषु लौकिकेषु पदार्थेष्वदर्शनाद्विरोधस्यार्थवादानां चान्यपरत्वेन गुणवादप्रायत्वात् । आदित्ययूपयजमानप्रस्तरस्वर्गाहवनीयादिवचनवत् कथमपि प्ररोचनाशेषत्वात् संज्ञासंज्ञिसंबन्धकरणव्युत्पादनव्यापाररहितत्वाच्च, न पदार्थप्रतिपत्त्यङ्गत्वमध्यवसीयते । तदाश्रयणे च विधिविरोधप्रसङ्गात् तेष्वेव वा दर्शनाद्विरोधस्येत्यभिप्रायः । तथा शास्त्रस्थमन्वादिप्रसिद्धिरपि असत्पक्षानुगुणैव । यथाऽऽह ‘**कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् । त्रिवृता ग्रन्थिनैकेन**’ इति । तस्मात्समाऽपि तावद्भवतु । इति प्राप्तेऽभिधीयते, ‘**शास्त्रस्था प्रतिपत्तिर्या सैवात्र ज्यायसी भवेत् । धर्मस्य तन्निमित्तत्वात् ससाधनफलात्मनः ॥ अर्थवादकृताऽप्यर्थप्रतिपत्तिर्बलीयसी । तद्ग्राह्यत्वादृते नान्यत्तस्या ह्यस्ति प्रयोजनम् ॥ गौणो वा यदि वा मुख्यो वेदेनाऽऽश्रीयते हि यः । स धर्मसाधनत्वेन पदार्थोऽध्यवसीयते ॥ त्रिवृच्छब्दः प्रयुक्तो यः स्तोत्रीयानवकं प्रति । कस्तं शक्तस्ततोऽन्यत्र नेतुं जन्मशतैरपि ॥**’ तेन यत्र ‘त्रिवृदग्निष्टोमः’ इति श्रूयते तत्र तेनैवार्थेन भवितव्यम् । एवं स्तोमशब्दो यद्यपि ब्राह्मणस्तोम इत्यादिषु समुदायमात्रवचनत्वेन प्रसिद्धः तथापि ‘त्रिवृदेव स्तोमो भवति, पञ्चदशः स्तोमो भवति’ इति वेदे श्रवणात्, स्तुतेश्च मानं स्तोम इति याज्ञिकस्मरणात्, तथा ‘स्तोमे डविधिः पञ्चदशाद्यर्थः’ इति व्याकरणशास्त्रप्रसिद्धेः अवश्यमेव त्रिवृदादिषु लोकप्रसिद्धिरतिक्रमणीया । यत्तु मनुवचनं तदुभयाश्रवत्वात् सम-



त्वेनापि युज्यते । यद्वा तत्रापि नवतन्तुकमेव त्रिवृच्छब्दात् प्रत्येष्यते, तथा रशनात्रिवृत्त्वमपीति । यद्वा यथैवायं नवके दृष्टः तथाऽयं स्तोत्रीयागतेऽपीति यत्रैव तत्संभवस्तत्रैव तत्प्रसिद्ध्यनुपाती भवति । यत्र तु संख्येयान्तरविषयत्वम्, तत्र वैदिकोऽर्थो गौणो गृह्यतां लौकिको वा मुख्य इति तादृशे विषये मुख्यार्थत्वाल्लौकिकप्रसिद्धिरेव ग्रहीतव्येत्युत्तरसूत्रे वक्ष्यामः ‘चोदितं तु प्रतीयेताविरोधात्’ इति । तथा चरुशब्दोऽपि अन्याय्यानेकार्थाभिधानप्रतिबद्धशक्तित्वादेकत्र नियम्यमानो याज्ञिकवेदप्रसिद्धिभ्यामोदनविषय एव भवति । आश्ववालैक्षवीशब्दौ तु यदि तावत् वैदिकप्रयोगलब्धसमुदायप्रसिद्धित्वेन लौकिकीं अवयवप्रसिद्धिं जहीतः, ततः सिद्धमेव शास्त्रस्थप्रतिपत्तिबलीयस्त्वम् । अथापि श्येनजात्युपमित प्रसिद्धश्येनयागे गौणत्वद्वारा वाऽऽप्तप्रसिद्धिः ‘समानामितरच्छ्येनेन’ इत्यादिषु इव आश्रीयते, तथापि शास्त्रकल्पितत्वात् धर्मं प्रति बलीयस्त्वम् । ‘**अथापि शब्दगौणत्वं तथापि बलवत्तरम् । स्वतन्त्रस्य हि वेदस्य दृष्टं चेन्न निवार्यते ॥ गौणं लाक्षणिकं वाऽपि वाक्यभेदेन वा स्वयम् । वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत् ॥**’ न चात्र ‘संदिग्धेषु वाक्यशेषात्’ (१।४।१३।२४) इत्येतेन तुल्यार्थत्वं प्रतिपत्तिद्वयस्यापि असंदिग्धत्वात् । ‘**लौकिकी प्रतिपत्तिर्हि स्वार्थे निःसंशया स्थिता । वैदिक्यपि तथा स्वार्थे बाधतेऽतो विपर्ययात् ॥ तस्माच्छास्त्रस्थितैवैका प्रतिपत्तिर्बलीयसी । न समा मुक्तकाचारैर्विप्रकृष्टैः ससंकरैः ॥**’ इति ।

**शा**— आचारप्रसङ्गात् शब्दस्यार्थे प्रयोगरूपाचारविप्रतिपत्तौ बलाबलं चिन्त्यते । अत्र **भाष्ये** आर्यम्लेच्छविशेषानुपादानात् वाक्यशेषेण सिद्धान्तकथनात्, शिष्टाचारस्य च पूर्वप्रकृतत्वात् यत्र शिष्टानामेव मिथोऽभिधानविप्रतिपत्तिः केषांचित् वाक्यशेषानुगुणा, केषांचिदननुगुणा, तत्र तुल्यबलतामाशङ्क्य वाक्यशेषानुगुणायाः बलीयस्त्वं प्रतिपाद्यते इति लक्ष्यते । (तदयुक्तं) इति मत्वा **आचार्यैः** अन्यथाऽधिकरणं व्याख्यातम् । यत्र आर्यम्लेच्छयोः अभिधानविप्रतिपत्तिः, यथा पीलुशब्दं आर्याः वृक्षविशेषे प्रयुञ्जते, म्लेच्छास्तु हस्तिनि । तत्र चिन्त्यते– किं तुल्यबलत्वम्, उत आर्यप्रसिद्धिर्बलीयसी इति । तत्र ‘**लोकप्रसिद्धिगम्यत्वात् शब्दार्थस्योभयोरपि । समा विप्रतिपत्तिः स्यात् शास्त्रार्थे हि बलाबलम् ॥**’ इति प्राप्ते, ब्रूमः । ‘**प्रतिपादकतामात्रं म्लेच्छेष्वप्यवगम्यते । अविप्लुतस्तु शब्दार्थः शिष्टेष्वेवावधार्यते ॥**’ तस्मात् पील्वादिशब्दाः वृक्षाद्यर्थाभिधायिनः इति स्थितम् । भाष्यमपि आर्यम्लेच्छविगानाभिप्रायं व्याख्येयम् ।

(वर्णकं द्वितीयम्) **स्मृत्याचारविरोधे** वा । यत्र मन्वादिनिबन्धनानां अनिबन्धनानां चाचाराणां विरोधो मातुलदुहितृपरिणयनादिषु, तत्र किं तुल्यकक्षत्वम्, उत स्मृतीनां बलीयस्त्वं इति चिन्त्यते । तत्र ‘**बलाबलविशेषस्तु कक्षान्तरितकारितः । श्रुतिस्मृत्योरिह त्वेवं न द्वयोः श्रुतिमूलतः ॥**’ अत्रोच्यते । ‘**सप्रत्ययप्रणीता हि स्मृतिः सोपनिबन्धना । तस्यास्तेन बलीयस्त्वमाचारात् निर्निबन्धनात् ॥**’ (प्रत्ययशब्देन मन्वादीनां विप्रकीर्णवेदतदर्थानुभवः, इदानींतनापेक्षया मन्वादिषु विश्वासश्च विवक्षितः । इतस्ततो विप्रकीर्णत्व–परप्रकरणगतत्व–सिद्धवन्निर्देशकल्प्यत्वादिना तिरोहितान् विधीन् उपसंहृत्य तत्प्रतिपाद्यकर्मणां कर्तव्यत्वकथनं उपनिबन्धनम्, तद्युक्ता इत्यर्थः)।

(वर्णकान्तरं तृतीयम्) ‘त्रिवृत् बहिष्पवमानं’ ‘पयसि चरुः’ ‘आश्ववालः प्रस्तरः’ ‘ऐक्षव्यौ विधृती’ इत्यत्र किं लोकवाक्यशेषयोः तुल्यबलत्वं उत वाक्यशेषस्था प्रतीतिर्बलीयसी इति संशयः । तत्र ‘**पदार्थपदसंबन्धे तुल्यत्वं लोकवेदयोः । अदृष्टसाधनत्वे हि लोकाद् वेदोऽतिरिच्यते ॥**’ इति पूर्वः पक्षः । सिद्धान्तस्तु ‘**वाक्यैकत्वं विधिस्तुत्योर्विषयैक्यादृते नहि । तेनात्र वाक्यशेषस्था प्रतिपत्तिर्बलीयसी ॥**’ १।३।५.

**सोम**–– आचारप्रसङ्गात् **संगतिः** वार्तिककारपक्षाभिप्रायेण, भाष्यकारपक्षे तु बलाबलप्रसङ्गात् **संगति**र्बोध्या । प्रथमवर्णके **प्रयोजनं** पूर्वपक्षे हस्तिनोऽपि पीलुशब्दार्थत्वात् हस्तिवाचकत्वाभिप्रायेण पीलुशब्द-

प्रयोगस्य अपशब्दप्रयोगत्वाभावात् आहिताग्नेः अपशब्दप्रयोगनिमित्तं प्रायश्चित्तं न भवति, सिद्धान्ते तु भवति इति। **भवदेवस्तु** 'पलवौदुम्बरौ वैश्यस्य दण्डौ' इति **गौतमस्मृतौ** हस्तिभवास्थिदण्डेन सह पीलुवृक्षदण्डस्य विकल्पः पूर्वपक्षे, सिद्धान्ते तु पीलुवृक्षदण्ड एवेत्याह।

**वि**-- 'यवादिशब्दाः किं द्व्यर्था नो वा, ऽऽर्यम्लेच्छसाम्यतः। दीर्घशूकप्रियङ्ग्वाद्या द्वयेऽप्यर्था विकल्पिताः ॥, यत्रान्या इति शास्त्रस्था प्रसिद्धिस्तु बलीयसी। शास्त्रीयधर्मे तेनात्र प्रियङ्ग्वादि न गृह्यते ॥' **गुरुमतमाह**— 'यवाद्यर्थानिर्णयेन तद्वाक्यं न प्रमेति चेत्।, न शास्त्रस्य बलित्वेन तत्प्रसिद्ध्याऽर्थनिर्णयात् ॥'

**वार्तिकमतेन वर्णकान्तरमाह**— 'यो मातुलविवाहादौ शिष्टाचारः स मा न वा।, इतराचारवत् मात्वममात्वं स्मार्तबाधनात् ॥, स्मृतिमूलो हि सर्वत्र शिष्टाचारस्ततोऽत्र च। अनुमेया स्मृतिः स्मृत्या बाध्या प्रत्यक्षया तु सा ॥'

**वर्णकान्तरमाह**— 'लौकिको वाक्यगो वाऽर्थस्त्रिवृदादेः, समत्वतः। उभौ, विध्यर्थवादैकवाक्यत्वादस्त्विहान्तिमः ॥'

**भाट्ट**-- प्रयोगरूपाचारस्य यत्रार्यम्लेच्छयोः परस्परमर्थविप्रतिपत्तिः यथा पीलुशब्दस्य वृक्षविशेषे आर्याणाम्, अन्येषां हस्तिनि, तत्र तुल्यबलत्वम्, व्यवहारे आर्याणामिव म्लेच्छानामप्यभियुक्तत्वाविशेषात्। अबाध्यस्मरणस्योभयत्रापि समानत्वात्। इति **प्राप्ते, अभिधीयते।** शक्यताऽवच्छेदकभेदेन अनेकशक्तिकल्पनाप्रसङ्गात् एकत्रैव शक्तिः नोभयत्र। न च विनिगमनाविरहः, आर्यप्रसिद्धेरेव नियामकत्वात्। आर्या हि शब्दैकसमधिगम्यधर्माधर्मयोरविप्लुतिलिप्सया शब्दार्थतत्त्वं विविच्य परिपालयन्ति, न म्लेच्छाः। दृष्टार्थव्यवहारस्य यथाकथञ्चिदपि सिद्धेः। अतस्तत्प्रसिद्ध्या वृक्षविशेषे एव शक्तिः। गजप्रतीतिस्तु लक्षणया, शक्तिभ्रमाद्वा। यत्र तु नियामकाभावः, तत्रागत्या अक्षादिशब्देषु उभयत्रापि शक्तिः, आर्याणामेवोभयत्रापि प्रयोगात्। तत्रापि कदाचिद्वाक्यशेषस्य नियामकता। 'यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति' इत्यनेनैव यवशब्दस्य दीर्घशूकविशिष्टे शक्तिः, प्रियङ्गुषु तु लक्षणया प्रयोगः।

**एवं वा।** यत्र मातुलकन्यापरिणयनादौ स्मृत्याचारयोर्विरोधः तत्रोभयोरपि श्रुतिकल्पकत्वात् तुल्यबलत्वम्। इति **प्राप्ते,** स्मृतीनां सप्रत्ययप्रणीतत्वात् स्मृतिषु कर्तव्यतावाचिविधिप्रत्ययश्रवणाच्च बलीयस्त्वम्। आचारेषु तु आचरितॄणां जनानां मन्वाद्यपेक्षया तथा प्रत्ययितत्वाभावात् इतस्ततो विप्रकीर्णपरप्रकरणादिगतश्रुत्यवगमस्याशक्यत्वात्, परकीयाचारमात्रदर्शनेन कर्तव्यतावाचिविधिप्रत्ययस्यावश्यकल्पनीयत्वाच्च दौर्बल्यम्। अत एवेदानींतनाचारदर्शनेन श्रुतिद्रष्टुः स्मृतिकारस्य स्मृतिं तदुपदेशं वा कल्पयित्वा स्मृतिकल्पनम्, स्मृतीनां तु साक्षादेवेति विशेषः। अतश्च स्मृतिविरोधे आचारस्य यावत् श्रुतिदर्शनं स्मृतिदर्शनं वा अननुष्ठानम्।

**एवं वा।** त्रिवृच्चर्वश्ववालादिशब्देषु यत्र लोकवाक्यशेषयोरर्थविप्रतिपत्तिः, तत्र पदपदार्थसंबन्धे लोकाद्वेदस्याधिक्ये प्रमाणाभावात् तुल्यबलत्वम्। इति **प्राप्ते,** विषयैक्याभावे विधिस्तुत्योरेकवाक्यताऽनुपपत्तेः विधिवाक्यशेषस्यैव शक्तिग्राहकत्वमनुमन्यते। अतश्च लौकिकप्रमाणावगतेऽर्थे अनेकशक्तिकल्पनाभिया न शक्तिः, अपितु लक्षणादिनैव बोधः। अत एव यत्र वाक्यशेषो नास्ति, तत्रापि त्रिवृदादिपदार्थो वैदिकः एव ग्रहीतव्य इति वक्ष्यते। अतश्च त्रिवृच्छब्दस्य स्तोत्रगतऋङ्नवकं शक्यं न तु त्रैगुण्यम्। चरुशब्दस्य ओदनः, न तु स्थाली। अश्ववालशब्दस्य काशाः, नाश्वकेशाः। वाक्यशेषास्तु **कौस्तुभे** द्रष्टव्याः।

**मण्डन**-- 'आर्यप्रयोगो बलवान् यवादौ।'

**शंकर**-- 'यवाद्या दीर्घशूकाद्याः।' ७. 'पील्वाद्यर्थस्तथाऽऽर्यतः।' ८. 'स्मृत्याऽऽचारस्य बाधः स्यात्।' ९. 'त्रिवृच्चर्वादिचिन्तनम्।' १०.

* **यववराहाधिकरणम्।** तत्र केचित् दीर्घशूकेषु यवशब्दं प्रयुञ्जते, केचित् प्रियङ्गुषु। वराहशब्दं केचित् सूकरे, केचित् कृष्णशकुनौ। वेतसशब्दं केचित् वञ्जुलके, केचित् जम्ब्वाम्। तत्रोभयथा पदार्थावगमाद्विकल्पः (इत्येकः पक्षः)। यः शास्त्रस्थानां स शब्दार्थः। के शास्त्रस्थाः? शिष्टाः। तेषामविच्छिन्ना स्मृतिः शब्देषु वेदेषु च। तस्मात् दीर्घशूकानां पुरोडाशः कर्तव्यः। सूकरो वराहशब्दः। वञ्जुले वेतसशब्दः इति सिद्धान्तः। १।३।४।८–९. * **यववराहाधिकरणे** तु वाक्यशेषात् प्राक् संदेह एव, यवादिशब्दानां प्रियङ्ग्वादिषु सार्वत्रिकप्रसिद्धेरभावात्। न तु विपरीतनिश्चयः। **कु.** १।३। ५।८ पृ. ६६ वार्तिकमतेन वर्णकं ३. * यववराहाधिकरणे शास्त्रस्थप्रयोगबलेन लौकिकप्रयोगबाधः उक्तः। **सु.** पृ. २५९.

* अनेकशक्तिकल्पना–व्यवहारानुपपत्ति-विकल्पापत्ति –नियमभङ्गापत्तिश्चेति दोषचतुष्टयं **यववराहाधिकरणोक्तम्। कौ.** १।४।१३।२२ पृ. २७३. * एकस्यैव शब्दस्य वाचकत्वनियमात् एकस्यैव चार्थस्य वाच्यत्वनियमात् इति **यववराहाधिकरणोक्तः** वाच्यैकत्वनियमः दृष्टान्तत्वेन वीप्सया उक्तः। **सु.** पृ ३०९.

* यथैव सदृशानां प्रियङ्गुदीर्घशूकादीनां एकाभिधानेनैव इतरप्रतीतिसिद्धेः, यवादिशब्दानां अर्थैक्यं स्थितं तथैव संबन्धानामपि एकाभिधानेनैव इतरत्र प्रतीतिसिद्धेः अन्याय्या अनेकार्थता। इति **यववराहाधिकरणोक्तन्यायपरामर्शः। सु.** पृ. ३५६.

* **यववराहाधिकरणन्यायेन** लोकप्रसिद्धिः शास्त्रप्रसिद्ध्या बाध्या। **न्यायनि.** २।३।१७।४५ ब्रसू.

* **यववराहाधिकरणप्रयोजन**कथनपरमेव 'त्रिवृति संख्यात्वेन०' (१०।६।७।२२–२३) इत्यधिकरणम्। **कौ.** १।३।४।९.

* अर्थवादानामवयवार्थपरत्वाभावे **यववराहाधिकरणविरोधः। कु.** १।२।१।१८.

* **यववराहवेतसशब्दानां** लोकप्रसिद्धोऽर्थो ग्राह्यः उत शिष्टप्रसिद्धोऽर्थोऽथवा विकल्पः इति संदेहे, शिष्टप्रसिद्ध एवार्थो ग्राह्यः इति सिद्धान्तः। **भा.** १।३। ४।८–९..

* **यवविधिः** 'यवमयश्चरुर्भवति' इति। **वि.** १।३।९.

* **यवविध्यर्थवादः** 'यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति' इति। अयमर्थवादः 'यवमतीभिरद्भिरौदुम्बरीं प्रोक्षति' इत्यस्य विधेर्वाक्यशेषः बह्वीषु शाखासु उपलब्धः। भाष्ये तु वारुणप्राघासिकयवमयकरम्भपात्रविधिशेषत्वेनोदाहृतः ('यवमयेषु करम्भपात्रेषु विहितेषु वाक्यशेषं ...' इति भाष्यम्)। **कौ.**१।३।४।९ पृ. ५७.

* **यवव्रीह्योरेकस्मिन्** कर्मणि विकल्पः, एकार्थत्वात्। **भा.** १२।३।४।१०–१५.

* **यवव्रीह्यन्यतरनियमस्य चित्रेष्टौ** तण्डुलेषु बाधः। **भा.** १०।२।३१।७०.

* **यवशब्दः** वेदे दर्शनात् अविच्छिन्नपारंपर्यः दीर्घशूकेषु इति गम्यते। **भा.** १।३।४।९.

* **यवमध्या** गायत्री। पादेषु अक्षराणि ७।१०।७। उदा० 'स सुन्वे यो वसूनां' (**ऋसं.** ९।१०८।१३)। **के.** * यवमध्या त्रिष्टुप्। पादेषु अक्षराणि ८।८।१२। ८।८। उदा० 'सं मा तपन्त्यमितः' (**ऋसं.** १।१०५। ८)। **के.**

* **यवागूः** एकपरिमाणांस्तण्डुलान् षोडशपरिमाणे जले विपाच्य जायमानं द्रव्यम्। इदं राजन्यस्य यज्ञे व्रतम्। **के.** (भा. ४।३।४।८). * 'यवागूः राजन्यस्य' ज्योतिष्टोमे व्रतं क्रत्वर्थम्। **भा.** ४।३।४।८–९, ६।१। ७।२८, १०।४।१।१, १२।१।१४।३०. * **'यवाग्वा** जुहोति' इयं कर्मणि तृतीया कारकविभक्तिरूपा विनियोक्त्री श्रुतिः। **बाल.** पृ. ४४.

* **यवागूपाकस्य** पश्चात्त्वं अग्निहोत्रहोमस्य पूर्वत्वं च पाठात् प्राप्तम्, अर्थानुसारेण प्रयोजनानुसारेण बाध्यते। अर्थक्रमः पाठक्रमाद् बलवान् 'अग्निहोत्रं जुहोति यवागूं पचति'। **भा.** ५।४।१।१.

* **यशः।** 'भाग्ययशःश्रीकामानां पुनरादधीत'। **भा.** १०।३।५।३०.

* '**यष्टीः** प्रवेशय' यष्टिसहचरपुरुषान् इत्यर्थः गौणी वृत्तिः लक्षणा वा। **वा.** १।४।१२।२३ पृ. ३५४; **सु.** पृ. ४९४.

* यागः अपूर्वस्य दाता, पुरुषः प्रतिग्रहीता। भा. ३।७।२।६, * यागः कर्तव्यतया न चोद्यते, फलकामस्य तु तत्साधनोपायत्वेन (यागश्चोद्यते)। ३।१।३।४. * यागस्तु पूर्वापरीभूतः इतिकर्तव्यतां गृह्णाति न निष्पन्नरूपः। यदा धातुमात्रमिदं तदा नामार्थे वर्तते। टुप्. ११।१।२।१०, * यागः देवतामपेक्षते, देवताश्च यागमन्तरेण न संभवन्ति इति यागमपेक्षन्ते। तयोः संनिधानेन प्रमाणेन संबन्धो भवति। १०।४।२।३, * यागः देवतां आत्मसिद्ध्यर्थमपेक्षते। ऐन्द्रवायवादीन्यपि यागानपेक्षन्ते। तयोः द्वयोः साकाङ्क्षयोः एकाङ्गविकलयोः संबन्धो भवति। १०।४।२।३-४. * यागः देवतामुद्दिश्य द्रव्यत्यागः। होमस्तु त्यक्तस्य वह्नौ प्रक्षेपः। वि. ४।२।१२. * यागः देवतां विना न भवति, तेन सः देवतामाकाङ्क्षति। भा. १०।१।८।१८. * यागः नहि स्तुतशस्त्रयोरङ्गं भवति, फलवत्त्वात् यागस्य अफलत्वाच्चेतरयोः। भा. १०।५।१२।४९। यागस्य हि स्तोत्रशस्त्रे अङ्गभूते ग्रहग्रहणनिमित्ते। १०।५।१२।५०, * यागः नाम द्रव्यदेवताक्रियाणां समुदायः। ४।२।१२।२७. * यागः पूर्वनिर्वृत्तत्यागापेक्षया यथाश्रुतेतिकर्तव्यताकदेवतोद्देशरूपः प्रक्षेपवेलायामेव निर्वर्तते। तत्र तस्मिन्नेव क्षणे समस्तेन पुरोडाशेन यागः साध्यते। तत्साधनैकदेशश्च ह्यवदानम्, यागस्याङ्गेन प्रक्षेपेण संस्क्रियते, तदुपलक्षितादेव यागनिर्वृत्तेः प्राक् प्रक्षेपाद्निर्वृत्तयागावगमात् नाशादिषु अन्यद्रव्यागमनम्। सत्यपि होमस्य संस्कारकत्वे नाप्रयोजकत्वम्, निर्वृत्तयागभावित्वात्तु स्विष्टकृदादीनां स्फुटमेवाप्रयोजकत्वं भविष्यति। वा. ३।४।१४।४१ पृ. ९८३, * यागः प्रधानं प्रक्षेपः अङ्गम्। ३।४।१४।४१ पृ. ९८२, * यागः फलं प्रति उपादातुं शक्यते, न द्रव्यं प्रति, तत्संस्कारत्वप्रसङ्गात् तृतीयानिर्देशबाधाच्च। १।४।५।८. * यागः फले चोदितो भवति यदा, तदा धर्मान् आकाङ्क्षति। एतस्यामवस्थायां किं चोदकेन धर्माः उत नामधेयेन इति चिन्तायाम्, नामधेयेन धर्मप्राप्तिः। तच्च लक्षणया (आग्रयणाग्रनाख्य-) धर्मप्राप्तिं करोति। उपदेशेनैव गृह्णाति। अतिदेशाच्च उपदेशो बलवान् (श्रौतत्वात्)। टुप्. १०।२।२५।८५. * यागः फलोपभोगेन क्षीणे अधर्मे, अप्रतिबद्धः फलं दास्यति। यागफलस्य अधर्मः प्रतिबन्धः, अश्रेयस्करो हि सः। तस्मिन् सति न श्रेयो भवितुमर्हति। भा. ३।८।३।९. * यागः यथेष्टविनियोज्यत्वलक्षणस्वत्वनिवृत्तिरूपत्यागात्मकः। सु. पृ. १५३४. * यागः साधनं उपसर्जनम्, स्वर्गः प्रधानम्। वि. १।४।६. * यागो हि वृद्धव्यवहारात् देवतोद्देशविशिष्टद्रव्यत्यागरूपः। भाट्ट. ८।१।८. * देवतोद्देशेन स्वत्वत्यागमात्रं यागः। देवतोद्दिष्टत्यज्यमानस्वत्वद्रव्यप्रक्षेपो होमः। वा. ३।४।१४।४१ पृ. ९८१, * 'देवताद्रव्यकर्तृभ्यो नातिरिक्तमपेक्षते। यागः साधनमित्येवं साम्नानैव साध्यते॥' २।२।१२।२७ पृ. ५५३. * प्रत्यक्षदेवतासंबद्धो हि त्यागो यागः। भा. ९।४।१२।४७. * यस्तत्र यागः तस्य प्राधान्यम्, यस्तु प्रक्षेपः सोऽङ्गमेव। वा. ३।४।१४।४१ पृ. ९८२, * यो देवतोद्देशेन द्रव्यं त्यजति, तेन यागोऽनुष्ठितो भवति, न त्यागमात्रेण यागः कृतो भवति। ४।२।१२।२७. * यागाः प्रधानं अयागा विदेवनादयः अङ्गं राजसूये। भा. ४।४।१।२. * यागं विना द्रव्यदेवतासंयोगस्तु न कथंचित् सिध्यति। वा. २।२।६।१८ पृ. ५१६, * एकदेशेऽपि हूयमाने, सर्वमिदं द्रव्यं देवतोद्देशेन त्यज्यमानं यागं साधयति। ३।२।१०।४१. * यागात् अदृष्टमवश्यं कल्पनीयम्। मत्यं कल्पनीयम्। द्रव्यप्रतिपादनद्वारं तत्। भा. २।१।२।५. * 'तथा शब्दार्थसंबन्धस्मृतितत्त्वावधारणात्। प्रक्षेपाधिकृतामात्रात् यागात् होमस्य भिन्नता'॥ वा. ३।१।१।१ पृ. ६४९. * यागस्य अवदानादिप्रदानान्तेन अनुसमयः। भा. ५।२।४। ६. * यागस्य एकस्य द्वाभ्यामनुवाक्याभ्यां न प्रयोजनम्। भा. ३।१।१३।२३। पित्र्येष्टौ तु विधिबलात् कर्मैक्येऽपि अनुवाक्याद्वयम्। सु. पृ. १०६४. * यागस्यैव शक्तिरपूर्वमित्युच्यते। वा. ७।१।१।२, * यागस्य तावत् द्रव्यात्मकं निर्वर्तकं पुरुषं प्रति प्राधान्यं फलं प्रति गुणता, यश्च फलं प्रति गुणः स शक्यते फलस्य स्वामिनं पुरुषमपि प्रति सुतरां गुण इति वक्तुम्। तथा यस्य पुरुषं प्रति प्राधान्यं तस्य तदुपसर्जनं फलं प्रति सुतरां तत् इत्यपि शक्य-



निरूपणम्। ३।१।३।६ पृ. ६६४. * यागस्य न स्वरूपेण श्रेयःसाधनत्वं किंतु विहितत्वेन स्वरूपेण (विहितत्वविशिष्टस्वरूपेण)। सु. पृ. ३१. * यागस्य यागान्तरं रूपं न भवति। भा. २।२।३।६. * यागस्य रूपं – सर्वभावेन यागान्तराद् व्यवच्छिन्नो यागो निरूप्यते तदेव रूपम्। वा. २।२।४।९. * यागस्य स्वर्गाङ्गत्वम्। भाट्ट. ३।१।३. * शब्देन प्रत्यासन्नस्य यागस्य फलसाधनत्वात् प्राधान्यम्, देवतायाश्च गुणत्वं विज्ञायते। टुप्. ९।१।४।९.

**卐 यागानां दैक्षस्य चेतरेष्विति न्यायः। साहस्री ८६५.**

* यागानां प्रायेण दर्शपूर्णमासकालत्वम्। भा. ७।१।१।२. * यागे अङ्गहीनस्याप्यधिकारः। ६।१।९।४१. मीको. पृ. २८२ 'अधिकारः अग्निहोत्रादौ प्रतिसमाधेयाङ्गवैकल्यस्यापि' इत्यत्र द्रष्टव्यम्। * यागे दंपत्योः सहाधिकारः। ६।१।४।१७-१८. 'सहाधिकाराधिकरणम्' इत्यत्र द्रष्टव्यम्। * यागे निर्धनस्याप्यधिकारः। ६।१।८।३९-४०. मीको. पृ. २८५ 'अधिकारः कर्मसु द्रव्यरहितस्यापि' इत्यत्र अधिकरणं द्रष्टव्यम्। * यागे शूद्रस्यानधिकारः। ६।१।७।२५-३८. मीको. पृ. ५०४ 'अपशूद्राधिकरणम्' इत्यत्र द्रष्टव्यम्। * यागे स्वर्गकामस्याधिकारः। ६।१।१।१-३. 'स्वर्गकामाधिकरणम्' इत्यत्र द्रष्टव्यम्। * यागे हि द्रव्यं गुणभूतं चोद्यते। भा. १०।६।१७।६५. * यागेषु कर्तॄणां कर्मतारतम्येन भागतारतम्यं नास्ति। १०।७।७।२०-२१.

* यागाङ्गं कर्तृत्वादिना पुरुषः। भाट्ट. ३।१।३. * यागाङ्गं गुणः। वि. ३।१।३. * यागाङ्गं देशः। भाट्ट. ३।१।२.

* यागाभ्यासात्मकज्योतिष्टोमरूपनिष्पादनसामर्थ्यस्य शब्दैकसमधिगम्यत्वम्। सु. पृ. ८००.

* यागाभ्यासमात्रात् ग्रहभेदोपपत्तिः 'तद्भेदात् कर्मणोऽभ्यासः' (२।२।६।१९) इति न्यायात्। सु. पृ ९४८.

* यागाख्यस्य क्रियाविशेषस्य द्रव्यदेवतासंबन्धाविभागः। सु. पृ. ४६३.

* यागादौ विधिगतशब्देनैव देवताप्रकाशनं कार्यम्। १०।४।१२।२३-२४. 'विधिशब्दाधिकरणम्' इत्यत्र द्रष्टव्यम्। * यागादिषु मनुष्याणामेवाधिकारः, न तिरश्चां देवानामृषीणां वनस्पतीनां च। ६।१।२।४-५. मीको. पृ. १९५० 'तिर्यगधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्।

* यागादिकर्मणां स्वर्गादिफलसाधनता। स्वर्गकामाधिकरणम्। भा. ६।१।१।१-३.

* यागादिक्रियायां कार्यत्वान्वये नियोज्यान्वयो हेतुः। नियोज्यविशिष्टायामेव पाकादिक्रियायां कार्यत्वान्वयदर्शनात्। (इति गुरवः)। मणि. पृ. ८४.

* यागगतेन व्यापारेण गृहीतेन, आत्मसिद्ध्यर्थं नियमादृष्टद्वारभूतानि दृष्टानि अदृष्टानि च प्रयोजनानि गृह्यन्ते। तानि च निर्ज्ञातपरिमाणान्येव प्राप्नुवन्ति। तैश्चात्मसिद्ध्यर्थं पदार्थाः प्राप्यमाणाः स्वात्मनियता एव प्राप्यन्ते। वा. ३।८।१६।३१.

* यागचोदना लक्षणया भवति 'मारुतीं दक्षिणस्मिन् विहारे आसादयति' 'सौर्यं चरुं निर्वपेत्' 'सौम्यं बभ्रुमालभेत' इति। भा. ११।२.९।३९.

* यागत्वं प्रत्येकं समवेतम्, तद्वाचिना च धातुना एकैकस्य इतरानपेक्षस्य साधनशक्तिरवधार्यते। ननु समुदायवाचिनामविशेषितत्वात् धातुरपि समुदायलक्षणार्थ एव भवेत्। न, नाम्न एव धात्वधीनत्वेन प्रत्येकवृत्तित्वात्। तदुक्तं पौर्णमास्यधिकरणे (२।२।३)। वा. ३।२।६।१९ पृ. ७६७. * यागत्वं सिद्धस्य कर्तुः अनात्मलाभफलकव्यापारसामान्यम्। सु. पृ. ३४३.

* यागदेवतायै संकल्पिते द्रव्ये स्वत्वमलभमानो यजमानो न तेन ऋत्विजः क्रेतुं शक्नोति। वि. १०।२।९, * यागदेवतयोः विधिं विना न संबन्धः। १०।४।१४.

* यागद्रव्यं भक्षयितव्यं चोदकेन भवति। भा. ३।५।१९।४८.

* **यागद्रव्यशेषसंस्कारको** दृष्टः स्विष्टकृत् दर्शपूर्णमासयोः । **टुप्**. १०।७।३।११.

* **यागनामतया** उद्भिदादिशब्दानां प्रामाण्यम्, उद्भिद्, बलभिद्, विश्वजिदिति । उद्भिदधिकरणम् । १।४।१।१.

* **यागनामधेयं** आघारशब्दः, 'आघारमाघारयति'। एवं अग्निहोत्रशब्दोऽपि । तत्प्रख्यन्यायः । १।४।३।४. * यागनामधेयं गोशब्दः 'गवाभिचर्यमाणो यजेत' । तद्व्यपदेशन्यायः । १।४।४।५. * यागनामधेयं चातुर्मास्यप्रथमपर्वनामधेयं वैश्वदेवशब्दः । वैश्वदेवाधिकरणम् । १।४।१०।१३–१६. * यागनामधेयं चित्राशब्दः 'चित्रया यजेत पशुकामः' । चित्राऽधिकरणम् । १।४।२।२–३. * यागनामधेयं वाजपेयशब्दः । वाजपेयाधिकरणम् । १।४।५।६–८. * यागनामधेयं श्येनादिशब्दाः 'श्येनेनाभिचरन् यजेत' । तद्व्यपदेशन्यायः । १।४।४।५.

* **यागप्रक्षेपयोर्यौगपद्यम्** । अवदानादेः प्रक्षेपान्तस्य एकपदार्थत्वेन तावत्क्रियाक्षणव्याप्यस्य कालस्य ऐक्यात्, तन्मध्ये वषट्कारानन्तरमनुष्ठीयमानस्य, देवतोद्देशद्रव्यत्यागरूपस्य यागस्य, वषट्कारानन्तरजुह्ववरोपणाहवनीयोपरि निधानन्यक्करणव्यवहितेन प्रक्षेपेण सह अत्यन्तं कालैक्यायोगेऽपि यौगपद्योपपत्तिः । यदैव द्व्यवदानस्य आहवनीयनिक्षेपो द्विरवदानखण्डनेन प्रक्रम्यते, तदैव याज्यानुवाक्याभ्यां उद्देश्यदेवतास्मारणद्वारा समस्तपुरोडाशविषयदेवतोद्देशस्मारणं क्रियते । सु. पृ. १५३१, * वषट्कारोद्बोध्यसंस्कारजन्यस्मृतिव्यवधानात् यागस्यापि अत्यन्तानन्तर्यानुपपत्तेः, आहवनीयसमीपनयनक्षणे देवतोद्देशः, तदुपरिनिधानक्षणे द्रव्यत्यागः, तदनन्तरं प्रक्षेपः इति यागप्रक्षेपयोः अत्यन्तैकक्षणत्वाभावेऽपि, अत्यन्तानन्तर्योपपत्तेः, तन्मध्ये नाशाद्यसंभवाच्च न्यायविरोधाद्यनापत्तेः, 'अत्यन्तानन्तर्यें च जायमाना बुद्धिः प्रमाणं' इत्यादिव्यवहारदर्शनात् यौगपद्योपपत्तिः । पृ. १५३५.

* **यागभिन्ने** चयनादौ न स्वाहाकारयागः ( पञ्चमः प्रयाजः ) । **भाट्ट**. ४।१।७.

* **यागभेदो** न भवति द्रव्यभेदेऽपि । ६।३।३।११–१२.

* **यागयोग्यस्य** आज्यस्योपादानं आज्यग्रहणे प्रयोजनम् । **भा.** ११।४।१४।४४.

## 🕉 यागलक्षणम् ॥

**यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् । ४।२।१२।२७ ॥**

**भाष्यम्**— शेषविनियोग उक्तः । प्रधानलक्षणमुच्यते, किं तत्प्रधानं यस्यैते शेषा इति । उच्यते । यजति ददाति जुहोतीत्येवंलक्षणम् । अथ किंलक्षणको यजतिर्जुहोतिर्ददातिश्चेति । यजतिचोदना तावद्द्रव्यदेवताक्रियम् । द्रव्यं देवतामुद्दिश्य त्यज्यते, तस्य च क्रिया, यया क्रियया तयोः संबन्धो भवति । समुदाये समुदितेष्वेषु यजतिशब्दो भवति । लोके इष्टोऽनेन पशुपतिरिति । तेन मन्यामहे द्रव्यदेवताक्रियस्यार्थस्य यजतिशब्देन प्रत्यायनं क्रियते इति । लक्षणकर्मणि प्रयोजनं न वक्तव्यम् । ज्ञानमेवात्र प्रयोजनमिति ।

**टुप्**— समुदाये कृतार्थत्वादित्ययुक्तोऽयं ग्रन्थः । न हि यागशब्दो द्रव्यदेवताक्रियं त्रितयमपि ब्रवीति । किं तर्हि ? यजतिधातुवाच्यम् । समुदाये वाच्य एकस्य बहु वाच्यमित्यदृष्टकल्पना, समुदायश्च वाच्यत्वेनाप्रसिद्धः । जुहोतिरासेचनाधिक इत्येतदप्ययुक्तम् । पुरोडाशद्रव्यकेष्वपि जुहोतेर्विद्यमानत्वात् । मारुतान् जुहोत्येककपालान् जुहोतीति । उच्यते । न पदार्थलक्षणमिदम् । किं तर्हि ? 'यजेत स्वर्गकामः' इति साधनत्वेन यागस्य चोद्यमानस्य प्रयोगः कथ्यते । यो देवतोद्देशेन द्रव्यं त्यजति तेन यागोऽनुष्ठितो भवति न त्यागमात्रेण यागः कृतो भवतीति । तस्मात्प्रयोगकथनमेवैतत् । सूत्रकारश्च यजतिचोदनेत्याह । चोदनेति हि वाक्यमुच्यते । जुहोतिशब्दस्यापि फले चोदितस्य प्रयोगानुष्ठानमेव कथ्यते । आसेचनाधिक्यं च तत्र प्रायिकम् । ददातेरप्यनुष्ठानकथनमेवेति ।

**वि**-- 'अनिरूप्या निरूप्या वा यागहोमददातयः । त्यागादाद्यो यजिस्त्यागः प्रक्षेपो होम इष्यते ॥ आकाङ्क्षा यागशब्दस्य त्यागेनैव निवर्तते । यागस्योपरि होमस्य



विधेः क्षेपावसानता ॥ स्वीयं द्रव्यं परित्यज्य परकीयं यथा भवेत् । तथा संपादनं दानं त्यागेऽप्येषामियं भिदा ॥'

**भाट्ट** — प्रसङ्गात् यागादिपदार्था विध्यनुष्ठाप्याः के इति विचार्यन्ते । यत्र प्रक्षेपाङ्गको देवतोद्देशपूर्वको द्रव्यत्यागो विधीयते स यागपदार्थः । प्रयाजादिषु प्रक्षेपसिद्ध्यर्थमाद्यं विशेषणं तत्र यागाक्षेपेणैव प्रक्षेपसिद्धेः । शक्यतावच्छेदकं चोक्तविधत्यागत्वसमव्यापकं जातिरूपमखण्डोपाधिरूपं वा सामान्यमित्युक्तमेव । प्रक्षेपप्रधानक उक्तविधस्त्यागो होमपदार्थः । संप्रदानस्वत्वापादनपूर्वको द्रव्यत्यागो दानपदार्थः । उभयत्रापि शक्यतावच्छेदकं तत्तद्धर्मसमव्यापकं पूर्ववदेव सामान्यम् । एतत्सूत्रव्याख्यानान्तराणि गतार्थत्वान्न लिखितानि ।

**मण्डन**-- 'त्यागः श्रुतोद्देशयुतो यजिः स्यात् ।'

**शंकर**-- 'यागस्य लक्षणं प्रोक्तम् ।'

* **यागवचनः** स्वाहाकारशब्दो यथा समिदादयः । **भा.** १०।१।७।१४.

* **यागविधायकत्वं** नास्ति देवतासंयोगाभावे । अतः 'वत्समालभेत' इत्यत्र स्पर्शमात्रविधिः अग्निहोत्रदोहाधिकारे । **भा.** २।३।६।१६–१७.

* **यागविधिः** अत्र द्रव्यदेवतासंयोगात् 'वायव्यं श्वेतमालभेत', 'सौर्यं चरुं निर्वपेत्' । **भा.** २।३।५।१४.

* **यागविधिप्रकारश्चास्माभिः** अनागतावेक्षणन्यायेन आग्नेयाधिकरणे एव प्रदर्शितः । **कौ.** २।३।५।१४.

* **यागरूपं** द्रव्यदेवतम् । **सु.** पृ. ७६१.

* **यागशेषः** कर्ता । **भाट्ट.** ३।१।३, * यागशेषः कालः । ३।१।३.

* **यागशेषत्वं** द्रव्यस्य । **भाट्ट.** ३।१।३.

* **यागसाधनानि** । अवदानानि हवींषि यागसाधनानि न पश्वाकृतिः । **भा.** २।२।७।२१.

* **यागहोमौ** । 'फलवाक्ये यजेरेव संबन्धः श्रूयते स्फुटः । तत्संनिधौ समाम्नानात् जुहोतेरङ्गतेष्यते' ॥ **वा.** ३।४।१४।४१ पृ. ९८२, * 'अथवा नैव भिद्येते यागहोमौ परस्परम् । पूर्वापरौ हि सदृशौ तद्वागौ नरसिंहवत् ॥' ३।४।१४।४१ पृ. ९८३.

* **यागहोमादौ** त्यागांशः आरादुपकारकः । **भाट्ट.** ४।१।७.

* **याच्ञा** ज्योतिष्टोमे नित्या धनवतोऽपि । **वि.** ६।८।६.

## 🕉 याच्ञाक्रयणमविद्यमाने लोकवत् । ६।८।७।२६ ॥

ज्योतिष्टोमे 'द्वादश रात्रीर्दीक्षितो भृतिं वन्वीत' इति भृतेर्वननं नाम द्रव्यस्य याचनम्, 'सोमं क्रीणाति' इति सोमस्य च क्रयणं उक्तम् । याच्ञा च क्रयणं च अनयोः समाहारः याच्ञाक्रयणम्, स्वीये धने स्वीये च सोमे अविद्यमाने सति कर्तव्यम् । यः स्वयं धनवानेव तेन धनयाचनं न कर्तव्यम् । यस्य च स्वीये अरण्यभावे सोमः स्यात् तेन सोमक्रयणं न कर्तव्यम् । लोकवत् । लोके यथा दरिद्रो याचते, यस्य च यः पदार्थः स्वीयो न भवति स तं क्रीणाति तद्वत् । इति **पूर्वः पक्षः** ।

**नियतं वाऽर्थवत्त्वात् स्यात् । २७ ॥**

अविद्यमाने स्वीये धने सोमे च याचना क्रयश्च स्यात् इति पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्यन् **सिद्धान्तमाह** । याचना क्रयणं च नियतं नित्यं स्यात् । अर्थवत्त्वात् क्रत्वर्थत्वात् । तदकरणे क्रतोर्वैगुण्यं स्यात् । तस्मात् विद्यमानेऽपि कर्तव्यम् । **के.**

* **याजकवत्** गुणभूतः अध्यापकः । **रत्न.** ६।१।६।२४ वर्णकं २.

* **याजनाध्यापनादीनां** धनार्जनार्थं विधयो नियमार्थाः । अनेनैवोपायेन धनमर्जनीयं नान्येनेति । **वि.** ६।१।८.

* **याजनाध्यापनप्रतिग्रहाः** ब्राह्मणस्यैव वृत्त्युपायाः स्मृत्युक्ताः । **भा.** १२।४।१५।४३.

* **याजमानं** अध्वर्युपठ्यमानकरणमन्त्रोक्तं फलम् । याजमानफलकामना ऋत्विजा कर्तव्या । **वि.** ३।८।१४. * याजमानमिति समाख्यातानां कर्मणां पत्नीकर्तृकत्वाभावः । ६।१।६।२४. **मीको.** पृ. १४८९ 'केशश्मश्रु-

न्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । * याजमानं तपः उपवासरूपं ज्योतिष्टोमे, नार्त्विजम् । ३।८।३।९-११. मीको. पृ. १९४४ 'तपोऽधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * याजमानं प्रत्यगाशीर्मन्त्रोक्तं फलम् । वि. ३।८।१४, * याजमानं यागसमाप्तिरूपं फलमस्त्येव परंपरया, साक्षात्तु दर्शपूर्णमासयोः आघारकरणमन्त्रोक्तः संतापनाभावः । ३।८।१५, * याजमानं वृष्ट्यादिफलं ज्योतिष्टोमे सदसः नीचस्त्वेन निमानस्य, तादृशी कामना तु ऋत्विजाम् । क्वचित्तु वाचनिकं ऋत्विजां फलम् । ३।८।६. * याजमानाः 'आयुर्दा अग्नेऽसि, आयुर्मे देहि' इत्यादयः आशीर्मन्त्राः, नार्त्विजाः । ३।८।६।१५-१६. मीको. पृ. १०१२ 'आशीरधिकरणम्' इत्यत्र द्रष्टव्यम् । * याजमानाः गुणजन्यकामाः । ३।८।५।१३-१४. मीको. पृ. १४३५ 'काण्डाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् * 'याजमानास्तु तत्प्रधानात् कर्मवत्' ( ३।८।२।४ ) इत्यनेनाधिकरणेन समिदादयः, क्रत्वन्तरगताः स्तोत्रशस्त्रजपादयश्च पूर्वपक्षवादिनः पुरुषसंस्काराः याजमानाः स्युः । वा. ३।४।४।१३ पृ. ९४२, * 'याजमानास्तु०' इत्यनेनैव तत्कर्तृकता ( यजमानकर्तृकता सोमवमनस्य ) । ३।४।१३।३५ पृ. ९७३ । योग्यतालक्षणमृत्विक्त्वं अध्ययनश्रवणाभ्यां सिद्धं इति न पुनः साधनीयम् । वक्ष्यति च 'याजमानास्तु०' इत्यत्र न योग्यतैषां यजमानेन कर्तव्येति । ३।७।६।३३ पृ. १०९८. * 'याजमानास्तु तत्प्रधानत्वात् कर्मवत्' (३।८।२।४) इत्यनेन न्यायेन फलप्रतिग्रहणयोग्यत्वाधानार्थं तत् (अपूर्वं) आश्रितमेव विज्ञायते । वा. १।३।८।२७ पृ. २८४ । अत्र सुधा- क्रतुयुक्तपुरुषसंस्कारत्वसिद्धावपि ऋत्विजामपि संस्कारोपपत्तेः कथं यजमानसंस्कारत्वावधारणा इत्याशङ्क्य ( याजमानास्तु० इति ) न्यायान्तरमुक्तम् इति । पृ. ३२०. * अनृतोक्तिनिषेधादेस्तु क्रतुयुक्तपुरुषधर्मत्वे, 'याजमानास्तु०' इत्यनेन न्यायेन भोक्त्रंशपातित्वापत्तेः, साधनांशपातित्वाभावेन क्रतुसाधनभूतपुरुषभावात्, प्रकरणगम्यं क्रत्वङ्गत्वं विरुध्येत ( इत्याशङ्क्य ) । सु. पृ. १३९०, * कर्मयुक्तमनुष्याङ्गत्वे 'याजमानास्तु०' इत्यनेन न्यायेन याजमानत्वापत्तिः । पृ. १३४८. * याजमानाः वपनादिसंस्काराः ज्योतिष्टोमे । वपनाधिकरणम् । ३।८।२।३-८. * **याजमानस्य** आर्त्विज्येन बाधः क्वचित् ( यथा सत्रे ) । **वि.** १२।४।१५. * **याजमानानां** प्रयाजानुमन्त्रणमन्त्राणां न कश्चित् क्रमः दर्शपूर्णमासयोः । भा. ५।१।३।३. * **याजमाने** काण्डे पठितः मध्यवर्ती दधिमन्त्रः मध्यवर्तिनः उपांशुयाजस्याङ्गम् । वि. ३।३।५.

**याजमाने समाख्यानात् कर्माणि याजमानं स्युः । ३।८।९।१९ ॥**

दर्शपूर्णमासयोः एकत्र 'वत्सं चोपावसृजति, उखां चाधिश्रयति' इत्यादीनि सप्त द्वंद्वानि, अपरत्र च 'स्फ्यश्च कपालानि' इत्यादीनि पञ्च द्वंद्वानि इति द्वादश द्वंद्वानि आम्नातानि । तानि द्वंद्वरूपाणि कर्माणि याजमाने काण्डे समाख्यानात् आम्नातत्वात्, याजमानं स्युः कर्माणि । वेदाः प्रमाणं इतिवत् कर्माणि याजमानं इति प्रयोगः । कर्मणां याजमानत्वं इत्यर्थः । याजमानं इति विशेषसमाख्यानात् एतेषां कर्मणां याजमानत्वं इति पूर्वः पक्षः । याजमानं इत्यत्र याजमानानि इत्यपि पाठः कुतूहले ।

**अध्वर्युर्वा तदर्थो हि न्यायपूर्वं समाख्यानम् । २० ॥**

दर्शपूर्णमासयोः 'वत्सं चोपावसृजति' इत्यादीनि सप्त, 'स्फ्यश्च कपालानि' इत्यादीनि च पञ्च इति द्वादश द्वंद्वरूपाणि कर्माणि याजमानकाण्डे समाम्नातानि याजमानं इति विशेषसमाख्याया याजमानानि इति पूर्वसूत्रेण पूर्वपक्षे प्राप्ते, सिद्धान्तसूत्रमिदम् । अध्वर्युर्वा एतानि कर्माणि कुर्यात् न यजमानः । तदर्थो हि कर्मकरणार्थो हि यस्मात् अध्वर्युः परिक्रीतः । तस्मात् स एव कुर्यात् । याजमानसमाख्या यद्यपि विशेषसमाख्या तथापि सा न न्यायपूर्वा । आध्वर्यव इति समाख्यानं सामान्यमपि न्यायपूर्वं 'अङ्गगुणविरोधे च तादर्थ्यात्' इति न्यायानुगृहीतं इति प्रबलम् । यजमानस्तु 'इदं चेदं च संपादय' इति ब्रूयात्, केषुचिच्च पदार्थेषु तस्यानुमन्त्रणमपि भवति । तेन याजमानसमाख्या कृतार्था



भविष्यति । तस्मात् आध्वर्यवाणि द्वंद्वानि इति सिद्धान्तः ।

**अपूर्वं त्वपकृष्येत । २१ ॥**

दर्शपूर्णमासयोः यजमानकाण्डे 'वत्सं चोपावसृजति उखां चाधिश्रयति' इत्यादीनि द्वादश कर्माणि आम्नातानि । तानि याजमानानि यथा पोत्रीयं इति पोतुः कर्म, नेष्ट्रीयं इति नेष्टुः कर्म, तद्वत् इति पूर्वः पक्षः । तत्र दृष्टान्तनिरासार्थः तु- शब्दः । पोत्रीयं नेष्ट्रीयं इत्यादि तु अपूर्वं कर्म, विशेषसमाख्यानात्, न तत्र अध्वर्युः कर्ता स्यात् तत्र अध्वर्युः अपकृष्येत निवर्त्येत । द्वादशसु कर्मसु तु अध्वर्युरेव कर्ता परिक्रीतत्वात् । अत्र सुधा- 'यत्र न्यायावगताध्वर्युकर्तृत्वं अपोद्य अपूर्वं पोत्रीयादिसमाख्यानं भवति तत्राध्वर्युः अपकृष्येत इत्येवमर्थत्वेन स्पष्टत्वात् नेदं सूत्रं ( वार्तिककारेण ) व्याख्यातम्' इति । के.

**याजमाने समाख्यानात् कर्माणि याजमानं स्युः । ३।८।९।१९ ॥**

स्तो दर्शपूर्णमासौ । तत्र याजमाने कर्माण्याम्नातानि द्वादश द्वंद्वानि- 'वत्सं चोपावसृजति, उखां चाधिश्रयति, अव च हन्ति, दृषदुपले च समाहन्ति, अधि च वपते, कपालानि चोपदधाति, पुरोडाशं चाधिश्रयति आज्यं च, स्तम्बयजुश्च हरति, अभि च गृह्णाति, वेदिं च परिगृह्णाति, पत्नीं संनह्यति, प्रोक्षणीश्चासादयति, आज्यं चैवं एतानि वै द्वादश द्वन्द्वानि दर्शपूर्णमासयोः' इति । तत्र संदेहः किमेतान्यध्वर्योः कर्माणि, उत यजमानस्येति । इदानीं सामान्यसमाख्यया विशेषसमाख्याया बाधः प्रसङ्गात् प्रतिपाद्यते । अत्रायं पूर्वपक्षः—उखाधिश्रयणावहन्त्यादीनि द्वादशकर्मद्वन्द्वानि अध्वर्युवेदे याजमाने काण्डे समाम्नातानि । न च तानि ह्याम्नातमन्त्रेण तदुभाभ्यां कर्तुं शक्यन्ते । तत्र हि मन्त्रैकत्वेऽपि पाठद्वयं स्यात् (!) दानविधिसमर्पितस्य विधियोगतः सामर्थ्यं प्रयोगः । तयोश्च प्रयोगविधिपरिगृहीतत्वात् कर्तृद्वयं सावकाशम् । उखाधिश्रयणादिकर्मणां तु अनुष्ठानद्वयेन केनचित् समर्पितमिति सकृदेव प्रयोगवचनगृहीतानि सकृदेव कर्तव्यानि । न च द्वादशकर्मणां द्वन्द्वभूतानां स्वरूपमात्रेणाध्वर्युवेदाम्नानं द्वन्द्वरूपेण याजमानकाण्डे समाख्यातसामान्यरूपं द्वन्द्वं यजमानेन कर्तव्यम्, कर्माणि चाध्वर्युणेति संभवति, सामीप्यस्याकर्मत्वेन कर्तृभेदासंभवात् । तेनैतच्छ्रूयमाणानां कर्मणां न समाख्यासामान्येन कर्त्रन्तरप्रयुक्तिः । तेनैककर्तृत्वे सति अध्वर्युवेदसमाख्यातो याजमानकाण्डसमाख्याया विशेषरूपत्वेन बलीयस्त्वात् विशेषसमाख्यावशात् सामान्यसमाख्यां बाधित्वा यजमानेनैव कर्माणि कर्तव्यानि । आम्नानं चोत्पत्तिविनियोगाभ्यासेनैव उपपन्नमिति । **एवं प्राप्ते, अभिधीयते ।**

**अध्वर्युर्वा तदर्थो हि न्यायपूर्वं समाख्यानम् । २० ॥**

अयमभिप्रायः । भवेदेवं यदि कर्मणां विधानं याजमानकाण्डे भवेत् । किन्तु अध्वर्युवेदविहितानामेव कर्मणां द्वन्द्वतामात्रं याजमाने विधीयते, 'एतानि वै द्वादश द्वन्द्वानि दर्शपूर्णमासयोः' इति याजमानकाण्डे श्रवणात् । न तु द्वन्द्वतारूपगुणानुरोधेन कर्मणामपि प्रधानभूतानां याजमानत्वं संभवति । अङ्गगुणविरोधन्यायविरोधात् । तेन कर्मणामाध्वर्यवसमाख्यया अध्वर्युकर्तृकत्वात् तदनुरोधेन द्वन्द्वानामपि कर्मणामन्योन्यसामीप्यरूपमध्वर्युकर्तृकत्वमेव । याजमानकाण्डे तु द्वन्द्वताविधानं न्यायात्तु विस्तारेण याजमानस्य स्मारकमेवेति सिद्धम् ।

**प्रयोजनम्**-- पक्षोक्तम् । सूत्रं तु- अध्वर्युरेव द्वन्द्वेषु कर्मसु कर्ता कर्मार्थमेव तस्यानुवादकत्वात् याजमानसमाख्यानं तत्स्मृतिमात्रप्रयोजनं न्यायवशादिति । **तौता.**

* **याजमानार्त्विज्ययोः** आर्त्विज्यस्यैव बलवत्त्वम् । **वि.** १२।४।१५.

* **याजमानकाण्डं** याजुर्वेदिकम् । **वि.** ३।८।१०.

* **याजमानफलं** अन्वाधानकरणमन्त्रे श्रुतम् । **भा.** ३।८।५।१३.

* **याजमानमन्त्राणां** न परिसंख्या ज्योतिष्टोमे । **संकर्ष.** २।२।८. **मीको.** पृ. १८२६ 'ज्योतिष्टोमे

याजमानमन्त्राणां न परिसंख्या' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **याजमानविचारः** तृतीयाध्याये अष्टमे पादे । वि. प्रस्तावनाश्लोकः १५.

* **याजमानसंस्काराणां** रुक्मप्रतिमोकपूर्वता । ५।२।१२।२३. **मीको.** पृ. ४६ 'अग्निचयने रुक्मप्रतिमोचनादि दीक्षितसंस्कारेभ्यः परस्तात् कर्तव्यम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **याजयेत् ।** 'याजयेत्' इति विधिः, अविवक्षितप्रयोजकव्यापारं विवक्षितप्रयोज्यव्यापारं यथा विधत्ते तथा 'अध्यापयीत' इति विधिः अध्ययनं विधत्ते नाध्यापनम् । **रत्न.** ६।१।६।२८ वर्णकं २.

* **याजुर्वेदिकं** आधानम् । **भा.** ३।३।२।९ पृ. ८०९, * याजुर्वेदिकं ज्योतिष्टोमस्याम्नानं क्रियार्थम्, सामवेदिकं गुणार्थम्, न विपरीतम् । ३।३।३।१०. * **याजुर्वेदिकः** ज्योतिष्टोमः, इति तत्र उपांशुः स्वरः । **वि.** ३।३।३, * याजुर्वेदिकः वाजपेयः । ३।७।२३, * **याजुर्वेदिकाः** वपनादयः संस्कारा दीक्षितस्य यजमानस्य । ३।८।३.

* **याजुषानुक्रमण्याः** प्रामाण्यं कर्कानुसारिणः नाङ्गीकुर्वन्ति । येऽपि प्रामाण्यं मन्यन्ते देवयाज्ञिकादयः, तेऽपि यजुषामनियताक्षरत्वात् छन्दो न विद्यते इत्याहुः । तत्तात्पर्यं तु षडधिकशताक्षरपर्यन्तं छन्दांसि सन्त्येव यजुःष्वपि, तदधिकाक्षराणां तु यजुषां छन्दो नास्ति इति । **बाल.** पृ. ६७.

* **याजुषहौत्रकाः** वनस्पतियाज्यायामपि देवतोपलक्षणं अभ्युपगच्छन्ति । **संकर्ष.** २।४।२०.

* **याज्ञसेनीनामपि** 'एतद्वा ऋषीणां' इति वाक्येन अभ्यूषिकत्वविधानेन स्मृतितः प्राबल्यात् संनिहितत्वाच्च करणत्वम् । न च मन्त्राल्पत्वम्, दण्डकलितवदावृत्तिसंभवात् । कर्मभूयस्त्वाधिकरणन्यायेन, स्वस्थानविवृद्धेर्वा आवृत्त्याऽपि यदा कर्मणां अपूर्तिस्तदा तावन्मात्रार्थं दाशतयीत आगमः । **इति प्राप्ते,** 'त्रिवृदग्निष्टुत्' इत्यादाविव प्राकृतस्य सर्वस्यापि निवृत्तेरवश्यंभावात् सर्वसंख्यापर्याप्ताग्नेयलाभे तदपर्याप्तग्रहणायोगात् उक्तवाक्यशेषस्य स्तावकत्वेन प्राबल्याभावाच्च न दाशतयीस्थानां याज्ञसेनीभिः समुच्चयः । मूले तु पूर्वाधिकरणपूर्वपक्षावस्थायामयं कृत्वाचिन्तया विचारः इत्युक्तम् । तत् कृत्स्नस्य वा विकारः इत्येतत् सिद्धान्तसूत्रस्वारस्यविरोधात् उपेक्षितम् । **संकर्ष.** २।१।३३.

* **याज्ञसेनीमन्त्राः** समुच्चयेन वा स्वातन्त्र्येण वा सांवत्सरिके चयने न ग्राह्याः । **संकर्ष.** २।१।३२–३३.

* **याज्ञिकाः** केचित् आस्यस्पर्शं विनैव सोमभक्षणमाहुः । 'न सोमेनोच्छिष्टो भवति' इति स्मृतिस्तु पीतशेषपाननिषेधप्रतिप्रसवपरा इति ते मन्यन्ते । तत् वार्तिकविरुद्धं 'भुक्त्वा पात्रं यतिर्नित्यं क्षालयेन्मन्त्रपूर्वकम् । न दुष्येत च तत्पात्रं यज्ञेषु चमसो यथा ॥ चमसः सोमसंयोगाद्यथा वै मेध्य उच्यते । अपां तथैव संयोगान्नित्यो मेध्यः कमण्डलुः ॥' इति मन्वादिस्मरणविरुद्धं चेत्युपेक्ष्यम् । **कु.** ३।५।८।२२. * याज्ञिकाः तदेतन्न रोचयन्ते, अग्निष्टुति ऐन्द्या एव सुब्रह्मण्यायाः पाठम् । ऊहं कुर्वन्ति, 'अग्न आगच्छ, रोहिताश्व बृहद्भानो धूमकेतो जातवेदो विचर्षणे' इति । **भा.** ९।१।१५।४४. * याज्ञिकास्तु अग्निचयने श्येनाकृति नित्यां मन्यन्ते । तत् परिभाषामात्रम् । वस्तुतस्तु काम्यैव सा । **संकर्ष.** २।१।४०. * याज्ञिकास्तु अप्रतिसमाधेयाङ्गवैकल्यस्यापि आधानं नित्यं मन्यन्ते । **कु.** ६। १।१०।४२. * याज्ञिकास्तु असमवेतार्थकपदघटितमन्त्रस्य लोपमेव मन्यन्ते पिण्डपितृयज्ञादौ । तत् चिन्त्यम्, किन्तु पदमात्रस्यैव लोपः । **संकर्ष.** १।३।१६. * याज्ञिकास्तु 'प्राचीमाहरति' इति दिग्वादमाहुः, मीमांसकास्तु शालावादम् । **भाट्ट.** ४।२।२, * याज्ञिकास्तु राजस्वादेः अधिकारिविशेषणत्वमङ्गीकृत्य अनतिदेशं मन्यन्ते (स्वपतीष्ट्यादौ) । ८।१।४, * याज्ञिकास्तु सौमिकानेव धर्मान् पशुबन्धवत् अनुतिष्ठन्ति । उत्तरवेदिपरिमाणं परं शम्यामात्रं औपदेशिकं कुर्वन्ति । तन्मते 'प्रणयन्ति' इति बहुवचनमपि ब्रह्महोत्रादिसद्भावात् उपपद्यते । ७।३। ७. * याज्ञिकाः विद्वांसः शब्दैकगम्यधर्माधर्मव्यवहारिणः शब्दार्थविप्लवे तात्पर्यवन्तः । **वि.** १०।१।१०. * याज्ञिकाः संप्रदायानुसारेण व्याचक्षते । न्यायाविरोधे



संप्रदायात् वेदार्थावगमेऽपि, विरोधे न्यायावगम्यविधिशब्दशक्त्यनुसारेणैव याज्ञिकैरपि व्याख्येयम् । **सु.** पृ. १००७. * 'वेदादृतेऽपि कुर्वन्ति कल्पैः कर्माणि **याज्ञिकाः'** । **वा.** १।३।६।११ पृ. २३२. * **याज्ञिकैः** कैश्चित् पात्रात् उद्धृत्य सोमभक्षणमुक्तम्, तत् अत्रत्य-(३।५।६) भाष्यवार्तिकविरोधादुपेक्ष्यम् । **सोम.** ३। ५।६. * याज्ञिकैः विवेकमगृहीत्वा भक्षाः पुरुषसंस्कारा इत्युक्तम् । **वा.** ६।४।३।५. * **याज्ञिकानां** अग्न्यन्वाधानादिरूपे प्रथमपदार्थे दर्शपूर्णमासारम्भत्वप्रसिद्धिः । **भाट्ट.** ९।१।११, * याज्ञिकानां अहःशब्दः उपांशुग्रहाभ्यासादारभ्य हारियोजनयागाभ्यासपर्यन्ते प्रयोगे लक्षणया प्रसिद्धः । ९।१।९. * याज्ञिकानां गुणकामेषु द्वयी प्रतिपत्तिः । केषांचित् मीमांसकवदेव गुणात् फलम् । अपरेषां तु गुणः क्रत्वर्थः एव तद्वतस्तु क्रतोः फलान्तरसंबन्धः । **वा.** २।२।१२।२७ पृ. ५६१, * याज्ञिकानां व्यवहारेषु 'सोमः' इति 'ज्योतिष्टोमः' इति नामद्वयमुपलभामहे । २।२।६।१७ पृ. ५११.

* **याज्ञिकाचार**विरोधापत्तेरपि व्यतिरिक्तसदस्यनिरासो न युक्तः । **सु.** ३।७ पृ. ३९.

* **याज्ञिकप्रयोगरूपाचारप्रामाण्याक्षेपसमाधानार्थत्वेन** गुणविधिनामधेयविचारः । **कौ.** १।४।१।१ पृ. १५२.

* **याज्यः ।** ऋत्विग्याज्ययोश्च अव्यभिचारो धर्मः । **भा.** ११।४।२।५.

* अध्याप्य एव तु माणवकः प्रधानम्, **याज्यवत् ।** अध्यापकस्तु याजकवत् गुणभूतः । **रत्न.** ६।१।६।२४ वर्णकं २.

* **याज्या** देवतोपलक्षणार्था । **भा.** १२।३।१५। ३५, * याज्या पात्नीवतग्रहस्य 'एभिरग्ने सरथं याह्यर्वाङ्०' इति । ३।२।१५।३७, * याज्या प्रदानार्था । ५।१।२।२. * याज्या । यया इज्यते सा याज्या । **वा.** ३।२।५।१२ पृ. ७६०, * प्राग्यस्य यागत्वमवधारितं तस्य साधनं पश्चाच्चोद्यमानं **याज्या** इत्यवगम्यते । **वा.** ३।२।५।१२ पृ. ७६१. * **याज्यां** चानुवाक्यां चान्तरा न व्यपवदेत् यद्यवदेत् यज्ञं विच्छिन्द्यात् पुरोऽनूच्य यज्ञस्य संतत्यै । **संकर्ष.** ४।३।९. * तिष्ठन् **याज्या**मन्वाह । **भा.** १०।४।२०।४१. * **याज्यया** यजति । **संकर्ष.** ४।३।३. * '**याज्याया:** अधिवषट्करोति' इति याज्याधर्मः । **वा.** ३।२।५।१२ पृ. ७६०.

* **याज्यानुवाक्ये** आज्यभागयोः, 'वार्त्रघ्नी पौर्णमास्यामनूच्येते', 'वृधन्वती अमावास्यायाम्' । **वा.** २।२। ३।३ पृ. ४७५. * याज्यानुवाक्ये विपर्ययेणाम्नाते विपर्ययेण कर्तव्ये (पूर्वमनुवाक्या पश्चात् याज्या इति आर्थः क्रमः) । **भा.** ५।१।२।२. * **याज्यानुवाक्याः ।** ऐन्द्राग्नाः षड्यागाः काम्याः, याज्यानुवाक्यायुगले तु द्वे आम्नाते । तत्र आद्यत्रयस्य आद्यं युगलं अन्त्यत्रयस्य तु अन्त्यं युगलं इति स्वस्थानविवृद्धिः समं स्यादिति न्यायात् । **संकर्ष.** १२।२।३, * **याज्यानुवाक्ययोः** गायत्रीत्वपुरस्ताल्लक्ष्मत्वादिधर्माणां विकृतौ यथायथं समुच्चयः । ४।३। १२. * **याज्यानुवाक्यानां** काम्यानां काम्ययागाङ्गता । **वि.** ३।२।७.

**ॾ याज्यानुवाक्यासु तु विकल्पः स्याद्देवतोपलक्षणार्थत्वात् । १२।४।२।३ ॥**

ऐन्द्राबार्हस्पत्ये कर्मणि अनेकं याज्यानुवाक्यायुगलमाम्नातम् । तासु याज्यानुवाक्यासु याज्यानुवाक्यायुगलेषु विकल्पः स्यात् । देवतोपलक्षणार्थत्वात् देवताया उपलक्षणं– स्मारणं अर्थः– प्रयोजनं तासां याज्यानुवाक्यानाम् । तत्र एकेन युगलेन कृते अपरं व्यर्थम् । अपरं युगलं तु प्रयोगान्तरे भविष्यति । तस्मात् विकल्पः ।

**लिङ्गदर्शनाच्च । ४ ॥**

'ऊरू वै देवानां याज्यानुवाक्ये एकया प्रत्यागच्छति गमयत्यन्यया अथात्र तिस्रः कार्याः' इति पितृयज्ञे याज्यानुवाक्यात्रयविधानपरे वाक्ये तयोर्द्वित्वं उचितं दर्शयति । तस्माद्विकल्पः । याज्यानुवाक्ययोस्तु समुच्चय एव । **के.**

* **याज्यानुवाक्यादीनां** तानेन (एकश्रुत्या) प्रयोगः । **वि.** ५।२।८.

* **याज्यानुवाक्यादिमन्त्रपाठक्रमात्** आग्नेयस्य प्रथमानुष्ठानं पश्चाच्चोपांशुयाजोत्तरमग्नीषोमीयस्य, न तु ब्राह्मणपाठात् अग्नीषोमीयस्य प्रथमं पश्चादुपांशुयाजोत्तरमाग्नेयस्य दर्शपूर्णमासयोः । **भाट्ट.** ५।१।९.

* **याज्यानुवाक्याम्नानं** आध्वर्यवेऽपि क्वचिदस्त्येव हौत्ररूपेण । **वा.** २।२।४।१० पृ. ४९६.

* **याज्यानुवाक्याक्रमेण** चित्रायागीयचतुर्थपञ्चमयोः सारस्वतयोः स्त्रीयागस्य प्राथम्यावगमात्, मुख्ययागक्रमेण स्त्रीयागस्यैव प्रथमं निर्वापः । **वि.** ५।१।७.

* **याज्यानुवाक्याद्वयं** ‘ इन्द्रं स्तुहि वज्रिणं स्तोमपृष्ठं० ’ ‘ स्तुहि शूरं वज्रिणं सुप्रतीतं० ’ इति ‘ इन्द्राय वज्रिणे वृषभमालभेत ’ इत्यस्य पशुपुरोडाशस्य समाम्नातम् । **भा.** १०।१।९।२१.

* **याज्यानुवाक्यायुगल** ऐन्द्राबार्हस्पत्ये कर्मणि अनेकमाम्नातम् । तत्र विकल्पः, न समुच्चयः । एकस्मिन् प्रयोगे एकमेव युगलम् । द्वितीयं प्रयोगान्तरार्थं भवति । १२।४।२।३-४. **मीको.** पृ. १३२२ ‘ ऐन्द्राबार्हस्पत्ये कर्मणि० ’ इत्यत्र द्रष्टव्यम् । * **याज्यानुवाक्यायुगलानां** क्रमविनियुक्तानामपि उपांशुयाजे देवताकल्पकत्वं दृश्यते । **सु.** पृ. ४५७.

**याज्यापनये नापनीतो भक्षः प्रवरवत् । ३।५।१७।४४ ॥**

अस्ति ज्योतिष्टोमः । तत्र ऋतुयाजेषु श्रूयते ‘ यजमानस्य याज्या सोऽभिप्रेष्यति, होतरेतद्यजेति, स्वयं वा निषद्य यजति ’ इति । यदा स्वयं यजति, तदा संदेहः किमस्य भक्षोऽस्ति, नास्तीति । अत्रेयं विषयशुद्धिः, अस्ति ज्योतिष्टोमे ऋतुग्रहाभ्यासः । सन्ति च तत्र याज्याः । ताश्च यद्यपि समाख्यया होतृप्रयोज्या एव, तथाप्यत्र यजमानसदस्यानामेतत्प्रयोगार्थं वरणम् । होतुरपनीय चान्यैरपि ताः प्रयोक्तव्याः । तत्र यजमानयाज्यायां पक्षद्वयं विहितम्, होत्रे च प्रत्यर्पणं स्वयं वोच्चारणम् । यदा स्वयं समुच्चारयति तदा संदेहः किं वषट्कारो होत्रा कर्तव्यः, ततश्च तन्निमित्तभक्षणमपि होत्रैव कर्तव्यम्, उत यजमानेनैवेति ।

**पूर्वपक्षस्तु**—याज्या हि होतुः सकाशाद्वचनेनापनीता, न तु वषट्कारभक्षौ । न च याज्यापनयेनैव वषट्कारभक्षयोरप्यपनयः, तयोः याज्यातोऽर्थान्तरत्वात् । तेन यथा याज्यापनयेऽप्यर्थान्तरभूतं प्रवरशब्दाभिधेयं वरणं नापनीयते, तथा वषट्कारभक्षावपीति । अतो याज्यामात्रोच्चारणमितरत्त्विग्वद्यजमानेन कर्तव्यम् । वषट्कारस्तन्निमित्तं च भक्षणं होत्रैवेति । एवं **प्राप्ते, अभिधीयते ।**

**यष्टुर्वा कारणाऽऽगमात् । ४५ ॥**

अयमभिप्रायः भवेदेवं यदि याज्यापनये भक्षणकारणभूतो वषट्कारो नापनीयेत । तथाहि, नात्र ‘ यजमानस्य याज्या ’ इत्येतावन्मात्रं श्रूयते । किन्तु ‘ स्वयं निषद्य यजति’ इति । न च याज्योच्चारणमात्रेणेज्यते । किं तर्हि ? वषट्कारपर्यन्तेन तस्यैव हविःप्रदानार्थत्वात् । किञ्च ‘ अनवानं यजति ’ इति श्रूयते । अस्य चायमर्थः— याज्यां आरभ्य यावद्यागो न समाप्यते, तावत्पर्यन्तं विच्छेदो न कर्तव्यः । वषट्कारेण च यागः समाप्यते । तद्यदि याज्यां प्रयुज्य विरमेद्यजमानस्तदा प्रयत्नविच्छेदमेव कुर्यात् ! तस्मात् वषट्कारप्रयोगस्य यजमानकर्तव्यत्वात् तन्निमित्तमेव भक्षणमपि यजमानेनैव कर्तव्यम् । यच्च ‘ वरणवत् भक्षणमपि नापनीयते ’ इत्युक्तम्, तदयुक्तम् । यतो वरणं खलु होतुर्नापनीयते इत्युचितमेव, तस्य खलु अर्थात् होतरि प्रवृत्तत्वात् । अतो याज्यापनये सति भक्षणं यजमानेनैव कर्तव्यमिति सिद्धम् । **प्रयोजनम्**– पक्षोक्तम् । **सूत्रं** तु वषट्कारे भक्षणकारणस्य वषट्कारस्य यष्टुरागमनात् इति । **तौता.**

**याज्यापनये नापनीतो भक्षः प्रवरवत् । ३।५।१८।४४ ॥**

ज्योतिष्टोमे प्रातःसवने ऐन्द्राग्नग्रहप्रचारात् प्राक् ऋतुग्रहयागा भवन्ति । तत्र श्रूयते ‘ यजमानस्य याज्या, सोऽभिप्रेष्यति होतरेतद्यजेति, स्वयं वा निषद्य यजति ’ इति । ऋतुयाज्यासु अन्तिमा याज्या यजमानस्य भवति । परंतु यदि यजमानः स्वयं याज्यां पठितुं नेच्छेत् तदा स यजमानः होतारं अभिप्रेष्यति हे होतः त्वं एतद्यज, एतां याज्यां त्वं पठेति । यदि वा स्वयं पठितुमिच्छेत् तदा यजमानः निषद्य होतृस्थाने विधिना उपविश्य यजति याज्यां पठति इति श्रुत्यर्थः । एवं सति यदा यजमानः स्वयं याज्यां पठति तदा विचारः किं यदा होतुः सकाशात् याज्याया अपनयो भवति तदा भक्षोऽपि होतुः सकाशात् अपनीतो भवति न वेति । तत्र



पूर्वपक्षी सूत्रेण ब्रूते । याज्याऽपनये यजमानयाज्यायाः होतुः सकाशात् अपनये सति भक्षः होतुः सकाशात् अपनीतो न भवति । किन्तु होतर्येव अवतिष्ठते । प्रवरवत् । यथा याज्यायां होतुः सकाशात् अपनीतायामपि प्रवरो नापनीतो भवति तद्वत् । तथा च यजमानस्य स्वयं याज्यापाठपक्षे याज्यामात्रं यजमानेन पठनीयम्, वषट्कारः होत्रा पठनीयः, वषट्कारनिमित्तो भक्षश्च होत्रैव भक्षणीयः इति । याज्यापनयेन नापनीतः इति पाठे तु याज्यापनयेन भक्षः अपनीतो न भवति इत्येवार्थः ।

**यष्टुर्वा कारणाऽऽगमात् । ४५ ॥**

ज्योतिष्टोमे प्रातःसवने ऐन्द्राग्नग्रहप्रचारात् प्राक् ऋतुग्रहयागा भवन्ति । तत्र ऋतुयाज्यासु अन्त्या यजमानयाज्या । तां यजमानः स्वयं वा पठति ‘ होतरेतद्यज ’ इति होत्रे वा प्रयच्छति । तत्र यदा यजमानः स्वयं पठति तदा यजमानयाज्या होतुः सकाशात् अपनीता भवति । परंतु तदा सोमभक्षः होतुः सकाशात् अपनीतो न भवति, याज्यामात्रे यजमानेन पठितेऽपि वषट्कारश्च सोमभक्षश्च होत्रैव कर्तव्यौ इति यः पूर्वः पक्षः तन्निवृत्त्यर्थः वा-शब्दः । सिद्धान्तसूत्रमिदम् । याज्यायां होतुः सकाशादपनीतायां तदविनाभूतो वषट्कारोऽपि होतुः सकाशादपनीतो भवति, वषट्कारनिमित्तो भक्षोऽपि होतुः सकाशात् अपनीत एव भवति । तदेतदाह सूत्रम्– यष्टुः भक्ष इति । यो यष्टा वषट्काराविनाभूतयाज्यापाठकः तस्यैव भक्षोऽपि । कारणागमात् कारणस्य भक्षकारणस्य वषट्कारस्य होतुः सकाशात् यजमानं प्रति आगमात् आगमनात् । यजमानेन याज्यापाठे वषट्कारोऽपि यजमानेनैव पठनीयः भक्षोऽपि तेनैव भक्षणीयः इति सिद्धान्तः ।

**प्रवृत्तत्वात् प्रवरस्यानपायः । ४६ ॥**

पूर्वपक्षोक्तदृष्टान्तनिरासार्थं सिद्धान्तपक्षगतं सूत्रमिदम् । यथा प्रवरो नापनीयते होतुः सकाशात् तथा याज्यापनयेऽपि भक्षो नापनीयेत इति यदुक्तं पूर्वपक्षिणा, तन्न । प्रवरस्य प्रवृत्तत्वात् अनपायः न अपायः, न अपनयः । भक्षस्य तु प्रवृत्तत्वाभावात् अपनय एव । प्रवृत्तः प्रागेव प्रवृत्तः अतिक्रान्तः । तस्य ऋतुयाज्यापाठकाले कथं अपायः स्यात् ? तस्मात् भूतकालिकत्वात् प्रवरदृष्टान्तः अनुपयुक्तः । वस्तुतस्तु यजमानयाज्यायाः सकाशात् याज्यान्तरार्थं वरणस्य प्रवृत्तत्वात् न तस्य यजमानयाज्यापनयेन अपनयः संभवति इति सूत्रार्थः वार्तिकानुसारी । **के.**

* याज्यापनये भक्षस्याप्यपनयः ( यजमानस्य ) ऋतुयाजेषु ज्योतिष्टोमे । ३।५।१८।४४-४६.

* **याज्यार्धर्चान्तः** एकः वसाहोमे प्राजापत्यानां पशूनां एकप्रदानत्वात् वाजपेये । **भा.** ११।२।५।२४, * **याज्यार्धर्चान्ताः** भिन्नाः ऐकादशिनेषु । तत्र वसाहोमः तन्त्रं न । ११।२।६।२५, * **याज्यार्धर्चान्ते** ‘ वसां जुहोति ’ इति श्रुतं प्रकृतौ । सर्वयाज्यार्धर्चान्तेषु होमः ऐकादशिनेषु । ११।४।९।३१-३६.

* **याज्यादीनां** देवताबोधकानां क्रमादपि यागक्रमः । **भाट्ट.** ५।१।४.

* **याज्योत्तरमेव** वषट्कारः, न तु येयजामहोत्तरम् । **संकर्ष.** ४।३।४.

* **याज्यात्वं** त्यज्यमानहविर्द्रव्यदेवतोद्देशार्थविहितमन्त्रत्वम् । **वा.** ३।२।५।१२ पृ. ७६१. * देवतां यागकाले येन मन्त्रेण उद्दिशति तस्य **याज्यात्वम्** । **सु.** पृ. ११०१ । अभियुक्तप्रसिद्ध्या यागकालीनदेवतोद्देशार्थतया विहितस्य, अवयवप्रसिद्ध्या च यागार्थतया विहितस्य मन्त्रस्य याज्यात्वम् । यागार्थविहितमन्त्रत्वम् । पृ. ११०२. * ‘ निगदानां च याज्यात्वमाहत्य प्रतिषिध्यते ’ । **वा.** ३।२।५।१२ पृ. ७६२, * ‘ येन मन्त्रेण यागाङ्गं होता यजति देवताम् । प्रसिद्धेस्तस्य याज्यात्वं सूक्तवाको हि नेदृशः ॥ ’ ३।२।५।१२ पृ. ७६०, * होतृप्रवचनविहितेज्यमानद्रव्यसंबन्ध्युद्देशाङ्गभूतदेवताप्रकाशकमन्त्रत्वं याज्यात्वं याज्ञिकप्रसिद्ध्यवगतम् । ३।२।५।१२ पृ. ७६१ ( टिप्पण्याम् ), * ‘ होमाङ्गस्य च याज्यात्वं न कस्यचिदपीष्यते । निगदत्वाद्विशेषेण सूक्तवाके निषिध्यते ॥ ’ ३।२।५।१२ पृ. ७६१.

* **याज्यात्वप्रसिद्धिः** समिदादियाज्यासु अनृक्षु अपि । **वा.** ३।२।५।१२ पृ. ७६०.

* **याज्याधर्माः** आसीनत्वम् , अनवानत्वम् , वषट्कारान्तत्वम् , पुरोनुवाक्यापूर्वकत्वं इत्यादयः ( ' आसीनो यजति ' ' अनवानं यजति ' ' याज्याया अधिवषट्करोति ' ' पुरोनुवाक्यां च प्रथमं प्रयुङ्क्ते ' ) । **वा.** ३।२।५।१२ पृ. ७६०.

* **याज्यापाठः** तिष्ठता कार्यः, अनुवाक्यापाठस्तु आसीनेन कार्यः । ' तिष्ठन् याज्यामन्वाह, आसीनः पुरोनुवाक्याम् ' । **वि.** १०।४।२२. * **याज्यापाठे** यजमानेन स्वतःकृते वषट्कारनिमित्तको भक्षस्तस्य ऋतुयाजेषु ज्योतिष्टोमे । **भा.** ३।५।१८।४४–४६.

* **याज्यापुरोनुवाक्ययोस्तु** समुच्चय एव । समाख्यासामर्थ्यात् द्विरुपलक्षणसाध्यं कर्म भविष्यति । **भा.** १२।४।२।४.

* **याज्यापुरोनुवाक्यानुवचनं** दर्शपूर्णमासयोः संस्कारकर्म, न प्रधानकर्म । **भा.** १०।४।२०।३९–४१.

* **याज्यापुरोनुवाक्यादयः** ऋग्वेदे । **वि.** ३।३।६, * **याज्यापुरोनुवाक्यादीनां** यज्ञे प्रयोगे एकश्रुत्यैव पाठो न त्रैस्वर्येण । ९।२।८ वर्णकं ३.

* **याज्यावत्** । यथा याज्यामन्वाह पुरोनुवाक्यामन्वाह इति स्तुतिवचनं देवताप्रकाशनेन अर्थवत् , तद्वत् एतदपि स्तुतशस्त्रम् । **भा.** २।१।५।१३.

* **याज्यावषट्कारयोः** अनवानत्वम् । याज्यावषट्कारौ एकेनैव अनवानं पठनीयौ । अनवानत्वं मध्ये श्वासमकृत्वा पठनम् । **वि.** ३।५।१८. याज्यावषट्कारयोर्वाचनिकः समुच्चयः । **संकर्ष.** ४।३।११. * याज्यावषट्कारयोः ' संततमृचा वषट्कृत्यम् ' इति सांतत्यं नाम एकश्रुतिरूपस्वरसमानकत्वं विधीयते । इति प्राप्ते, संततपदेन अनवानत्वरूपसांतत्यमेव विधीयते, न ऐकश्रुत्यम् । **संकर्ष.** ४।३।३. * याज्यावषट्कारयोः समुच्चयः ' याज्याया अधिवषट्करोति ' इति । नानार्थत्वात् ( समुच्चयः ) । **भा.** १२।३।१५।३२.

**याज्यावषट्कारयोः समुच्चयः संतानं च ॥** ' याज्यया यजति ' ' वषट्कारेण प्रदीयते ' इति विधिभ्यामुभयोः प्रदानार्थत्वावगतेरेकार्थत्वाद् ऋग्जुषाणाधिकरणन्यायाद् विकल्पः, ततश्च ' संततमृचा वषट्कृत्यं ' इति विधावनवानसंतानयोर्विधानायोगादेकश्रुतिरूपः स्वरविशेष एव सान्तत्यम् । ' यज्ञकर्मण्यजपन्यूङ्खसामसु ' इति स्मृतेः । एकश्रुतित्वं च तदन्तर्गताक्षराणामेकजातीयस्वरकत्वम् । तच्च यथा याज्यायां तथैव वषट्कारे इत्यर्थः । ' उच्चैर्वषट् करोति ' इति श्रुत्या ' उच्चैस्तरां वा वषट्कारः ' इति स्मृत्या च विहितयोर्विकल्पकस्वरयोस्तु नैकश्रुत्या सह विरोधः । **इति प्राप्ते,** याज्यावषट्कारोभयोद्देशेन स्वरविधौ वाक्यभेदात्संतानस्यैवायं विधिः । न च विकल्पितयोः संतानासंभवः । एतद्बलादेव समुच्चयस्यापि लाभात् । कथमन्यथा ' याज्याया अधिवषट्करोति ' इति याज्यावषट्कारयोः क्रमविधानं संगच्छेत । एकश्रुतिस्तु ' समानवदृचा वषट्करोति ' इति वचनान्तरात्सेत्स्यति । **संकर्ष.** ४।३।३.

* **याज्याशब्दः** यत्र प्रयुक्तः, सैव याज्या । **वा.** ३।२।५।१२ पृ. ७६०.

* **याज्यासंप्रैषाधिकरणं** एव शास्त्रान्त्याधिकरणम् । **संकर्ष.** ४।४।१०.

* **यात्रा** । शक्रध्वजयात्रा, देवतायतनेषु यात्रा च सदाचारः । **वा.** १।३।३।७ पृ. २०५.

**यादृशं तादृशमेव साधयतीति न्यायः ॥ चौरान्वेषणे चौर एव प्रयोक्तव्यः इति न्यायः ॥** **साहस्री.** ६६१–६६२.

**यादृशं मुखं तादृशी चपेटिकेति न्यायः ।** तुल्यरूपपरिहारविवक्षायामस्य अवतार इति । **साहस्री.** १४७.

**यादृशो यक्षस्तादृशो बलिरिति न्यायः ।** तुल्यरूपोपहारविवक्षायामस्य प्रवृत्तिरिति । **साहस्री.** १४६. * ' यादृशो यक्षः० ' इति **न्यायेन** दुष्टपूर्वपक्षे दुष्टमप्युत्तरम् । **सु.** ९८७.

**यादृशी भावना यस्य सिद्धिर्भवति तादृशीति न्यायः ।** **साहस्री.** ८१०.



**यादृशी शीतला देवी तादृशं खरवाहनमिति न्यायः ।** अयं तुल्यस्वरूपविवक्षायामवतरतीति । **साहस्री.** १४५.

**यावत् तैलं तावद्व्याख्यानमिति न्यायः ।** **साहस्री.** ४०७.

* **' यावद्यावद्विवादाय मुक्तकं दीयते मनः । अनवस्थादिदोषेण तावत्तावद्विहन्यते ॥ '** इत्यनेन **न्यायेन** चिरनिम्नाततडागादिगतशैवालवत् शुष्कतर्कस्य अप्रतिष्ठितत्वेन निराकृतस्यापि पुनःपुनरुद्भवेन समापयितुमशक्यत्वात् । **सु.** पृ. ३५०.

**यावच्छिरस्तावती शिरोव्यथेति न्यायः ।** **साहस्री.** २७९.

**यावत्स्नानं तावत्पुण्यमिति न्यायः ।** **साहस्री.** ४०८.

* साङ्गं यावज्जीवं न शक्नोति कश्चिदपि कर्तुमिति कृत्वा **यावत्** शक्नुयात् इत्युपनिबध्यते । **वा.** ६।३।१।२.

* **यावन्ति** काम्यकर्माणि सौर्यचित्रादीन्यनुतिष्ठति तावत् फलं प्राप्नोति । **वि.** ११।१।३. * यावन्ति नानामन्त्राभ्युपधानानि, तावत्संख्यानामेव दाशतयीतः आनयनं नाधिकानाम् । ' गायत्रीषु स्तुवते ' इत्यादौ स्तोमपरिमितानामेव ऋचां आगमनस्य दृष्टत्वात् । आगमनस्य कार्यार्थत्वेन, कार्यसमाप्तौ अधिकानां प्रयोजनाभावात् । **इति प्राप्ते,** सर्वेषामपि आग्नेयानां ' यद्दर्पीणां ' इत्युद्देश्यकोटौ निवेशेन विनियोगात् सर्वेषामेवाङ्गत्वं ' सर्वे तु वेदसंयोगात् कारणादेकदेशस्य ' ( जैसू. ३।५।८) इति न्यायात् । **संकर्ष.** २।१।३४. * **' यावतोऽश्वान्** प्रतिगृह्णीयात् , तावतो वारुणांश्चतुष्कपालान् , निर्वपेत् ' अत्र वाक्यार्थस्य अन्यथात्वकल्पने ( प्रतिगृह्णीयात् – प्रतिग्राहयेत् इति ) व्यवधारणकल्पनादोषः । **वाल.** पृ. ४. * ' यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत् ' इत्यत्र प्रतिगृह्णीयादित्यस्य विहितदानलक्षणार्थत्वं निर्वपेदित्यस्य च यागविध्यर्थत्वं भेदोपादानात् युक्तम् । **सु.** पृ. ९२८. * ' यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणान् चतुष्कपालान् निर्वपेत् ' इति इष्टिः प्रतिग्रहीतुः दातुर्वा इति संशये, दातुरिति सिद्धान्तः । अश्वप्रतिग्रहेष्ट्यधिकरणम् । **मीको.** पृ. ७३६। ३।४।११।३०–३१. * ' यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणान् चतुष्कपालान् निर्वपेत् ' इति इष्टिः लौकिके अश्वप्रतिग्रहे वैदिके वेति संशये, वैदिके इति सिद्धान्तः । अश्वदानन्यायः । **मीको.** पृ. ७३० । ३।४।१०।२८–२९. * **यावत्यः** कुम्भ्यः स्युः, तावन्ति दारुपात्राणि उपक्लृप्तानि स्युः, तावन्तो ब्राह्मणाः दक्षिणत उपवीतिनः उपोत्तिष्ठेयुः अध्वर्योराहुतिमनुजुहुयुः । साकंप्रस्थायीये इदम् । **संकर्ष.** १।३।२.

* **यावदुक्तं** आशीः ब्रह्मचर्यं च तत्रैव पत्न्या अधिकारः । **भा.** ६।१।६।२४, * यावदुक्तं कर्तव्यं ( चातुर्मास्येषु ) गृहमेधीये, स्विष्टकृदादिप्रत्यक्षश्रुतम् । १०।७।१०।३४.

* **' यावज्जीवमग्निहोत्रं जुहुयात् '** अयं नियतनिमित्तकः नैमित्तिकपुरुषार्थाधिकारविधिः । **वाल.** पृ. १४. * ' यावज्जीवमग्निहोत्रं जुहोति ' इत्यत्र किं कर्मधर्मः अभ्यासः यावज्जीविकता, उत कर्तृधर्मो नियमश्चोद्यते यावज्जीविकता । किं जुहोतिरनुवादः, यावज्जीवं इति विधिः उत जुहोति इति विधिः यावज्जीवमिति अनुवादः इति विचारे, कर्तृधर्मो नियमश्चोद्यते जुहोति इति च विधिः इति निर्णयः । **भा.** २।४।१।१–७. * 'यावज्जीवमग्निहोत्रं जुहोति ' इति जीवनं निमित्तीकृत्य नित्योऽग्निहोत्रप्रयोगो विधीयते न तु काम्ये कालरूपगुणः । **वि.** २।४।१, * ' यावज्जीवं दर्शपूर्णमासाभ्यां यजेत ' इत्यनेन दर्शपूर्णमासकर्मणा सह निमित्तसंबन्धो विधीयते । २।३।१३. * यावज्जीवं यज्ञपात्राणां धारणनियमः । **भा.** ११।३।१३।३४–४२, ४५ । तत्र च अग्न्याधेयप्रभृति । ११।३।१३।४३–४४.

**यावज्जीवाधिकरणम् ।** यावज्जीविकाधिकरणम् । यावज्जीविकता कर्तृधर्मो न कर्मधर्मः ॥

**यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् । २।४।१।१ ॥**

**भाष्यम्** — बह्वृचब्राह्मणे श्रूयते ' यावज्जीवमग्निहोत्रं जुहोति ' इति । ' यावज्जीवं दर्शपूर्णमासाभ्यां यजेत ' इति । अत्र संदेहः, किं कर्मधर्मोऽभ्यासो यावज्जीविकता

उत कर्तृधर्मो नियमश्चोद्यते यावज्जीविकतेति । कथं कर्मधर्मोऽभ्यासः, कथं वा कर्तृधर्मो नियम इति । यदि जुहोतिरनुवादः, यावज्जीवमिति विधिस्ततः कर्मधर्मोऽभ्यासः । यदि विपरीतम्, ततः कर्तृधर्मो नियम इति । किं तावत्प्राप्तम् ? कर्मधर्मोऽभ्यासः । कुतः ? प्रकरणात् । यदीयं वचनव्यक्तिः, जुहोतियजतिशब्दावनुवादौ, यावज्जीवमिति च विधिस्ततः प्रकरणमनुगृह्यते । तस्मादभ्यासः । एवं कृत्वा सत्रसंस्तवो युक्तो भविष्यति । 'जरामर्यं वा एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ च' इति दीर्घकालसामान्यात् । तस्मादभ्यासः ।

**वा**— बह्वृचब्राह्मणेऽध्वर्युब्राह्मणे वा श्रूयते इति नातीवाभिनिवेष्टव्यम् । ननु कर्तृधर्मः कर्मधर्म इति शेषलक्षणविषयत्वादिह न संबध्यते । केचिदाहुः । पर्यवसिते लक्षणार्थे तदीयोऽपि विचारः प्रत्यासत्तेः क्रियमाणो न विरुध्यत इति । तत्त्वयुक्तम् । शाखान्तरे कर्मभेदविचारस्याद्याप्यपर्यवसानात् । अत एवं संबन्धनीयम् । यथैव भेदकारणानि कर्मस्वरूपभेदे व्याप्रियन्ते, तथैव प्रयोगभेदेऽपि । तदिह यावज्जीवगुणसंयुक्तानामग्निहोत्रादीनां किं प्रयोगा भिद्यन्ते, उतैक एवायं प्रयोगः काम्यः, स एव यावज्जीवकालपरिमित इति । तत्र यदि यावज्जीवकालः कर्मधर्मत्वेन विधीयते, ततः सायंप्रातर्वाक्यवशेन तत्कालसमापनमग्निहोत्रं न शक्नोति तावन्तं कालं पूरयितुमित्यर्थात् ज्योतिष्टोमवदभ्यस्तरूपमेव प्रयोगं प्रतिपत्स्यते । यदि पुनर्जीवनं निमित्तत्वेनोद्दिश्य कर्म विधीयते, ततो यावत्कर्तृभाविनि नियते निमित्ते विना कामसंबन्धेन चोद्यमानमकरणे दोषप्रसक्तेः अवश्यं पुरुषेण जीवता स्वार्थसिद्ध्यर्थमनर्थपरिहाराय वा कर्तव्यमिति कर्तृधर्मो नियमोऽनेन चोदितो भवतीति । तदा च सायंप्रातःकालयोर्जीवनस्य च संहतानां निमित्तत्वात् प्रतिदिवसं निमित्ते तत्पर्यवसितं कर्म पुनः पुनः क्रियते इति प्रयोगान्यत्वम् । तेन प्रयोगभेदाभेदावेव एतत्फलत्वात् भाष्यकारेणोपन्यस्तौ इति मन्तव्यम् । किं प्राप्तम् ? एकः प्रयोगोऽभ्यस्तरूपः कर्मधर्मो यावज्जीवकता कालोपदेशश्चायमिति । कुतः ? '**कर्मस्थो हि कथंभावस्तदङ्गमभिकाङ्क्षति । कालोपदेशपक्षे च तत्तथैवोपपद्यते ॥**' कालो ह्युद्दिश्यमानस्तन्निमित्तश्च अभ्यासः कर्माङ्गं भवति । ततश्च प्रकरणमनुगृह्यते । ननु च पुरुषधर्मत्वेऽपि तस्यैव कर्मणो जीवने विधानान्नैव प्रकरणं बाध्येत । सत्यमधिकारो न बाध्यते, कथंभावात्मकं पुनः प्रकरणं क्रतुधर्ममपेक्षमाणं पुरुषधर्मे विधीयमानेऽत्यन्तं बाधितं भवति । यद्यपि कालस्यापि निमित्तवदेवानुपादेयत्वात्तुल्या वचनव्यक्तिः, तथापि फलतः कालविधानं यागानुवादश्चेति विपरीतं कथ्यते । अथवा जीवनपरिमितकालद्वारेणाभ्यासश्चोदयिष्यते । स च कर्मोद्देशेन शक्यते एव विधातुमित्येवमुपदिश्यते । कर्तृधर्मपक्षे पुनर्न कथंचित् कर्मोद्देशः । एवं चैकप्रयोगत्वे सति दीर्घसत्रप्रयोगसंस्तव उपपन्नो भविष्यति । इतरथा पुनः प्रतिदिनं पर्यवसानान्न कथंचित् सत्रसारूप्यं भवेत् । तस्मात् कर्मधर्मोऽभ्यास इति ।

## कर्तुर्वा श्रुतिसंयोगात् । २ ॥

**भाष्यम्**— अत्र ब्रूमः, यावज्जीविकोऽभ्यासो न स्यात्, कर्तुर्धर्मो नियमश्चोद्यते इति । कुतः ? श्रुतिसंयोगात् । एवं श्रुतिपरिच्छिन्नोऽर्थो भविष्यति । इतरथा लक्षणा स्यात् । कथम् ? यावज्जीवनं तावता कालेन कुर्यादिति । तदेतत् प्रदोषपरिसमाप्तमग्निहोत्रमनभ्यस्य न शक्यते यावज्जीवनकालेन कर्तुम् । पौर्णमास्यमावास्यापरिसमाप्तौ च दर्शपूर्णमासौ । यद्युच्येत जीवनकालस्यैकदेशेऽपि कृतं तेन कालेन कृतं भवतीति । नैतदेवम् । अर्थप्राप्तं हि तत्र विधातव्यं शब्देन । जीवनपरिमितः कालो यस्तेन परिसमापयितव्यं शब्देन । जीवनपरिमितः कालो यस्तेन परिसमापयितव्यमित्यर्थादभ्यासः । स हि कर्तव्यतया श्रूयते । न चासौ जुहोतियजतिभ्यामुच्यते, लक्षणया तु गम्यते । यावज्जीवं जुहुयात्, यावज्जीवमभ्यस्येदिति । श्रुतिश्च प्रकरणाद्बलीयसी । यदि इयं वचनव्यक्तिरस्य वाक्यस्य, यावज्जीवमित्यनुवादः, जुहोति यजतीति च विधानं इत्येवं यजतिजुहोतिशब्दौ स्वार्थावेव भविष्यतः, यावज्जीवशब्दोऽपि जीवनवचन एव नाभ्यासलक्षणो भविष्यतीति जीवने निमित्ते कर्म विधीयते । जीवंश्चद्धोतव्यमिति । जीवनं निमित्तं न



कालः । नियतनिमित्तत्वान्नियतं कर्म । तेनोच्यते कर्तुर्धर्मो नियमश्चोद्यते इति ।

**वा**-- धर्म इत्यनुवर्तते । तेनैषा प्रतिज्ञा, कर्तृधर्मोऽयं चोद्यते इति । सोऽपि च नियमो न याथाकाम्यम् । कुतः ? '**यावज्जीवपदाख्यातश्रुतिवृत्तित्वसंभवः । मत्पक्षे भवतस्तत्र लक्षणावृत्तता भवेत् ॥**' इह हि यावज्जीवमिति यावत्कर्तृभाविजीवनं निमित्तभूतं श्रुत्यैव प्रतिपादितम् । जुहोतियजतीत्यपि धात्वर्थानुरक्तभावनामात्रवाची प्रत्ययांशः श्रौत एव । तदुभयमपि मत्पक्षेऽनुगृह्यते । भवत्पक्षे तु जीवनेन कालो लक्ष्येत । जुहोतियजतिभ्यामप्यभ्यासः । यत्र हि विधिः समाप्यते स चोदनार्थो भवति । भवतश्च जीवनधात्वर्थपरित्यागेन कालाभ्यासौ विधीयेते । तेन लक्षणापर्यवसायी विधिः प्राप्नोति । तत्रैतत् स्यात् । यावज्जीवमिति यावच्छब्दः श्रुत्यैव कालं ब्रवीति । तद्यथा, यावद्दोहं स्वपिति । युक्तमत्र कालग्रहणम् । वर्तमानापदेशो ह्ययम्, नात्र कान्चिन्निमित्तापेक्षा । तेन श्रुतिवृत्तं दोहनमतिक्रम्य कालो गृह्यते । यदि तु इहापि यावद्दोहं स्वप्यादासीत वेति विधीयेत, ततः केन वा दोहस्य निमित्तत्वं वार्येत । यावज्जीवचोदनायां तु न किंचिदतिक्रमकारणमस्ति । प्राणधारणक्रियाया एव निमित्तत्वोपपत्तेः । न च यावच्छब्दः कालवचनः क्वचित् प्रसिद्धः । क्रियामेव तु समाप्तिपर्यन्तत्वेन विशिनष्टि । क्रियाकालयोरभेदान्न लक्षणेति चेत् । अत्र वैशेषिकानपराजित्य परिहारायोपस्थातव्यम् । अपि च सत्यपि क्रियाणां कालत्वे काचिद्व्यवस्था विद्यते, यतो न सर्वासु कालप्रतिपत्तिर्लोकस्य । तत्र शेषाः क्रिया उपलक्षणीकृत्य चन्द्रादित्यपरिवर्तनक्रियासु कालव्यवहारो व्यवस्थितः । ता एवावान्तरक्रियापरिमाणेन प्रत्यासत्तेः अन्यक्रियापरिच्छेदार्थमुपादीयमानेनोपलक्ष्यन्ते । तथाहि, '**अनवस्थितमानत्वाद्गोदोहादिषु रूपतः । चिह्नं व्यवस्थयेच्छन्ति नित्यं सूर्यादिचेष्टितम् ॥**' कियता कालेन गौर्दुह्यते इत्युक्ते नियतान्येव मुहूर्तादीनि परिच्छेदकत्वेनोपादीयन्ते । तत्परिच्छेदश्च नाडिकालक्षणलवत्रुटिनिमेषादिभिर्व्यावहारिकक्रियाव्यतिरिक्तैरेव क्रियते । तदभ्यासवशेन तु व्यावहारिकाणामपि प्राथिकपरिमाणज्ञानात् परिच्छेदकत्वं भवति । न च जीवनं नाम निमेषादिवन्नियतपरिमाणम्, येन परिच्छेदकत्वसामर्थ्यात् कालत्वेनाऽऽश्रीयते । तस्माद्व्यतिरिक्तकाललक्षणा दुष्परिहरा । पुनश्चाभ्यासलक्षणा । कथम् ? '**न ह्येकेन प्रयोगेण जीवकालोऽवरुध्यते । विततेनापरिज्ञानादन्यथा वा वृथाश्रुतिः ॥**' अनभ्यस्तं प्रयुञ्जानो यदि तावद्विततं प्रयुङ्क्ते जीवनपरिमितस्य कालस्यान्तरा किंचित्कर्मावयवं यदाकदाचित्कुर्वाणस्ततो मरणस्यानिरूपितकालत्वात् यदि कथंचिदन्त्यायामवस्थायां समापयेत् न च म्रियेत, तदूने काले समापनात् अयथाचोदितापत्तिः । अथासमाप्य म्रियेत, तथाऽपि प्रक्रान्तासमापनं दोषः स्यात् । न च सर्वस्वारवद्वचनमस्ति, येन मृतेऽपि समाप्येत । सायंप्रातश्चोदनं च यावज्जीवकाम्यचोदनासमीपाम्नाते सत्यौ विना प्रमाणेन केवलकाम्यविषये कल्पनीये स्यातामस्मिन्पक्षे । यदि तु तदनुरोधेन सकृदेव प्रयुज्योभयं संभावितमिति मन्येत । यथा 'पौर्णमास्यां पौर्णमास्या यजेत' इति चोदिते तदेकदेशकरणेनापि शास्त्रार्थः संभाव्यते इति न व्याप्यते तथा जीवितपरिच्छिन्नकालैकदेशवर्तिनोः सायंप्रातःकालयोरनुष्ठानात् चोदनाद्वयमप्यनुष्ठितार्थं भविष्यतीति । तत्रोच्यते । '**पौर्णमास्यतिरिक्ताहर्व्यवच्छेदफला श्रुतिः । अव्याप्तावपि तत्र स्यान्न त्विहैवं प्रतीयते ॥**' यद्यपि तत्राल्पत्वात्कर्मणः पूर्वाह्णचोदनावशेन वा पौर्णमासी न व्याप्यते, न किंचित् दुष्यति । सर्वथा दिवसान्तराण्यतिक्रम्य पौर्णमास्यां तावत् कृतं कर्म तावन्मात्रं च शास्त्रेणोक्तम्, न व्याप्तिः । इतरत्र पुनर्जीवितव्यतिरिक्तकालासंभवात् व्यवच्छेद्यं न किंचिदस्तीति व्याप्तावसत्यां समस्तमेव वाक्यमनर्थकं स्यात् । सायंप्रातश्चोदनयोरपि जीवनकालान्तर्गतेः सिद्धत्वात् यावच्छब्दश्च समस्तजीवितावधिपरिग्रहार्थः एकदेशानुष्ठाने बाधितः स्यात् । अतः सायंप्रातश्चोदनाभिश्रेयमभ्यासमनाक्षिपन्ती न शक्नोति पुरुषं नियोक्तुमिति अपरिहार्या लक्षणा । ननु चार्थादभ्यासो जायमानः त्वत्पक्षवदेव न दोषं जनयेत् । तथाहि, '**सकृदेव श्रुतो होमः क्रियमाणः पुनःपुनः । न शब्दे भारमाधत्ते सामर्थ्यारोपितश्रमः ॥**' अथ योऽयं मम दोषः

स तत्रापि दोष एव, वक्तव्यो वा विशेषः । उच्यते । **'मम प्रतिदिनं सर्वश्चोदनार्थः समाप्यते । काम्यवच्च पृथक्केष्टा तव त्वन्ते समाप्यते ॥'** मम जीवनसहितसायंप्रातःकालोपजने हि सकलं कर्म कृत्वा निराकाङ्क्षे पुरुषे सति, पुनरपि तादृङ्निमित्तसंभवात् द्वितीयादिष्वहःस्वनुष्ठानम् । तत्र च प्रतिदिनं कर्मसमाप्तेर्नाभ्यास इति शक्यं वदितुम् । तद्यथा काम्ये यः फलभूमार्थी पुनःपुनः प्रयुङ्क्ते न तस्य अभ्यस्तरूपमेतत्कर्म इत्येवं बुद्धिर्जायते, तथाऽत्रेति । तव पुनर्जीवितपरिमितकालविधानात् कर्मणोऽपरिसमाप्तस्यैव ऐन्द्रवायवादिग्रहाभ्यासतुल्यमनुष्ठानम् । तच्चैतद्यावज्जीवचोदनाकृतमित्यापन्नमभ्यासविधानम् । ननु अर्थादभ्यास इति, सत्यमेतत्तेनैव तु लक्षणा अन्यथा श्रुतिरेव स्यात् । तदुभयतः श्रुत्यनुरोधेन प्रकरणं बाधित्वा जीवनमुद्दिश्य होमयागविधानात् कर्तृकर्मविधिरित्युपपन्नम् ।

**लिङ्गदर्शनाच्च, कर्मधर्मे हि प्रक्रमेण नियम्येत, तत्रानर्थकमन्यत् स्यात् । ३ ॥**

**भाष्यम्**-- लिङ्गं च भवति 'अपि ह वा एष स्वर्गाल्लोकाच्छिद्यते, यो दर्शपूर्णमासयाजी पौर्णमासीममावास्यां वाऽतिपातयेत्' इति । कथं लिङ्गम् ? कर्मधर्मे हि प्रक्रान्तं सत्रं यावज्जीवनकालेन परिसमाप्येत, न तत्र कालातिपातः स्यात् । तत्र चानर्थकमन्यत् स्यात् प्रायश्चित्तादि विधीयमानम् ।

**वा**— अतिपत्तिरिति स्वधर्मातिक्रमोऽभिधीयते । जीवनपरिमितश्च दर्शपूर्णमासयोः कालः । न च तदतिक्रमः कथंचिदपि संभवति । प्रक्रमेण हि कर्मकालं संस्पृशत् ( जीवनं ) अनतिक्रान्तमित्यभिधीयते । न च कश्चिदपि दर्शपूर्णमासयाजी सन् अप्रक्रममाण एव जीवनमतिलङ्घयति । नहि असौ दर्शपूर्णमासयाजी स्यात् । अथ स्वकालापरिसमापनं उच्येत, तथा मृतस्य तत् भवति, इत्यनर्थकमेव प्रायश्चित्तविधानम् । मत्पक्षे हि प्रतिमासं दर्शपूर्णमासप्रक्रमसमाप्त्योः जीवने निमित्ते विधानात् संभवत्यतिक्रमः, तदुत्तरकालश्च प्रायश्चित्तविषयत्वेन । ननु पूर्वपक्षेऽपि प्रतिमासमभ्यासाभ्युपगमात् तदतिक्रमनिमित्तप्रायश्चित्तविधानं भविष्यति । न शक्यमेवं वदितुम् । यत्र हि निमित्ते यत् चोदितम्, तेन तत्र भवितव्यम्, न यथेष्टम् । इह च पौर्णमास्यमावास्यातिपत्तिर्निमित्तत्वेन श्रुता, न चाभ्यासस्तच्छब्दवाच्यः । यथा न ग्रहाभ्यासः कश्चिज्ज्योतिष्टोमशब्दवाच्यः । तेन जीवितपरिमिताभ्यासंसंयुक्तयोरेव पौर्णमास्यमावास्याशब्दवाच्यत्वमिष्टम्, इति नावयवानामतिपातनं निमित्तं स्यात् । ननु च पौर्णमास्यमावास्याशब्देनात्र कालोऽभिधीयते, स चावयवविषय एवेत्यवयवातिक्रमो निमित्तं स्यात् । नैतदेवम् । अतिपातनं नाम अतिपद्यमानस्य भवति । न च कालस्यातिपन्नत्वं धर्मः, अनतिपत्तेरविधानात् । यस्य हि यावान् विषयोऽनतिक्रमणीयत्वेन चोदितस्तस्य तदतिलङ्घनमतिपत्तिरित्युच्यते । न च कालस्य कर्म अनतिक्रमणीयत्वेन चोदितम्, किं तर्हि, कर्मणः कालः । तस्य हि सोऽङ्गम्, न तस्य कर्म । तदेव च तत्सद्भावासद्भावयोः सगुणं निर्गुणं च भवति, न कालः । तदेव चानुष्ठानात्मकत्वादतिक्रमानतिक्रमौ प्रतिपद्यते, न कालः, तस्य स्वभावसिद्धत्वात् । तस्मात् यः पौर्णमासीं स्वं कालमभिपद्यमानामतिपातयेदित्यवधारणात् कर्मण एव निमित्तत्वम् । न च अवयवस्तच्छब्दवाच्य इत्युक्तम् ।

**व्यपवर्गं च दर्शयति कालश्चेत्कर्मभेदः स्यात् । ४ ॥**

**भाष्यम्**— व्यपवर्गस्य समापनस्य दर्शनं भवति 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति । यदि दर्शपूर्णमासाभ्यामिष्ट्वा सोमस्य कालोऽस्ति, व्यक्तं न यावज्जीवनकालेन तौ परिसमाप्येते । अथ जीवनं निमित्तम्, उपपद्यते कर्मभेदः । दर्शपूर्णमासौ परिसमाप्य सोमं कर्मान्तरं कुर्यादिति । अपिच, 'आहिताग्निर्वा एष योऽग्निहोत्रं जुहोति, न दर्शपूर्णमासौ यजेत, या आहुतिभाजो देवतास्ता अनुध्यायिनीः करोति' इत्यनुध्यायिनीवचनं भवति । नियतो य आहुतिभागस्तस्मिन् अदीयमाने अनुध्यायिनीवचनं भवति, यस्त्वनियत आहुतिभागो न तमनुध्यायन्ति इदं नो भविष्यतीति । नियतश्च भागो नियमपक्षे भवति, न काम्यपक्षे । कर्मधर्मे च काम्यमग्निहोत्रं च दर्शपूर्णमासौ च ।



तस्मान्नियमपक्षः । अपिच श्रूयते, 'जरामर्यं वा एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ च, जरया ह वा एताभ्यां निर्मुच्यते मृत्युना च' इति जरामरणनिर्मोचनावधारणवचनं च नियमपक्षे उपपद्यते । काम्यपक्षे हि अप्रयोगादपि मुच्येत ।

**वा**—दर्शपूर्णमासाविष्ट्वेति पूर्वेणैव न्यायेन अशेषाभ्यासनिर्वृत्त्युत्तरकालं सोमयागः स्यात् । न च मृतेनासौ कर्तुं शक्यः । अथ तु अस्ति सोमानुष्ठानकालः तत एकान्तेनैव दर्शपूर्णमासाभ्यां जीवितकालो नावरोद्धव्यः । स च कर्तृधर्मपक्षे कर्मप्रयोगभेदात् नावरुध्यते, नान्यथा । सूत्रमप्येवमस्ति चेत् दर्शपूर्णमासविनिर्मुक्तः सोमकालस्ततो यथोक्त एव कर्मप्रयोगभेदः स्यात् ।

कालश्चेत्कर्मभेदः स्यात् इत्यस्यापरा व्याख्या । यदि यावज्जीविकः कर्मधर्मकालश्चोद्येत, ततो दर्शपूर्णमासमध्ये एव सोमोऽन्यानि च कर्माणि कर्तव्यानि स्युः । ततश्च विततस्य कर्मणः कर्मान्तरेणाविच्छेदे सति दर्शपूर्णमासाविष्ट्वा इति बाध्येत । अथवा 'एष स्वर्गाल्लोकाच्छिद्यते एतद्यशश्छिद्यते' इत्येवमादिभिश्च निन्दितमनुष्ठीयेत । तस्मादपि न कालविधानमिति ।

मुक्तकान्यार्थदर्शनद्वयं पूर्वसूत्रगोचरभूतं दर्शयति । तद्यथा । आहिताग्निर्वा एष सन्निति दीक्षितस्य दानादौ निषिद्धे विध्यन्तरशेषभूतः परिवेदनसरूपार्थवादो भवति । एतावन्तं हि कालमसौ अग्निहोत्रादिदेवताभ्यो भागमदत्त्वा ता अनुध्यायिनीः करोति नायमस्मभ्यं ददातीत्येवं चिन्तायुक्ताः करोतीत्येतन्नियमपक्षे युज्यते । कालविधिपक्षे तु काम्यत्वादग्निहोत्रस्य यथेष्टप्रयोगे सति नियोगतो दातव्याभावादनुध्यायिनीवचनं नोपपद्यते । तस्मादपि नियमवचनम् । एतेन जरामर्यवचनविधानं व्याख्यातम् । काम्यत्वकल्पनायामप्रयोगादपि निर्मोके सति जरामरणनिर्मोकवचनवैयर्थ्यप्रसङ्गः ।

**अनित्यत्वात्तु नैवं स्यात् । ५ ॥**

**भाष्यम्** — तु शब्दोऽन्वाचये । इतश्च पश्यामः, कर्तुर्धर्मो नियमश्चोद्यते इति । यदि पूर्वस्य होमस्य गुणविधिर्भवेत् स एवैकः पूर्वोऽग्निहोत्रहोमः अनित्यः स्यात्, कामसंयोगेन श्रुतो नान्यः कश्चिन्नित्यः । तत्र लिङ्गं विरुध्येत । 'जरामर्यं वा एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ, जरया वा एताभ्यां निर्मुच्यते मृत्युना च' इति । कथं विरुध्यते ? जरामरणनिर्मोचनावधारणवचनं नियमपक्षे उपपद्यते । काम्यपक्षे अप्रयोगादपि मुच्येत ।

**वा**—यदेतन्मुक्तकमभिहितमेतदेव सूत्रारूढं करोति । नियमपक्षे ह्येतदेवं स्यात् । अनित्यत्वात्तु भवत्पक्षे नैवं स्यात् । अथवा यावज्जीवशब्देन काले गृह्यमाणे लक्षणादोष उक्तः, तमभ्युपेत्याभिधीयते, सत्यामपि लक्षणायामनित्यत्वान्नैवं स्यात् । तन्नाम कालोपलक्षणं युक्तम्, यन्नित्यं कियताऽपि कालेनाविनाभूतम्, 'यदहश्चन्द्रमा न दृश्यतेताममावास्यां विद्यात्' इत्यादिवत् । न च सर्वप्राणभृतामेव जीवनपरिसमाप्तिर्यतः कुतश्चित् व्यवस्थितस्वरूपा, यया कालो लक्ष्येत । तदेतदेवमापद्यते यदैवेदं भवति, ततश्चानित्यत्वान्निमित्तमेवैतदिति सिद्धम् । कथं तर्हि नियतनिमित्तत्वान्नित्यमित्युच्यते, यावच्छरीरभावित्वाभिप्रायमेतदित्यदोषः ।

**विरोधश्चापि पूर्ववत् । ६ ॥**

**भाष्यम्** — इतश्च पश्यामो न पूर्वाभ्यासो गुणश्चोद्यते इति । कुतः ? विरोधात् । विरोधो भवति । दर्शपूर्णमासविकाराः सौर्यादयः अपि यावज्जीवमभ्यसितव्या भवेयुः । सोऽनारभ्यार्थः प्रतिज्ञातः स्यात् । अतोऽपि पश्यामो नियम इति । सत्रसंस्तवश्च संततभावमुपपत्स्यते ।

**वा**— नियमः सन् पुरुषधर्मत्वान्नातिदिश्यते इति च वक्ष्यते ( ८।१।४ ) । कालः सन्नतिदिश्येत । ननु कालोऽपि द्वैयह्काल्यवत् सद्यःकालतया बाध्येत । नैतदेवम् । यावज्जीवं पौर्णमास्यमावास्ययोः सद्यः कुर्यादित्यवधारणप्रसङ्गात् ।

**कर्तुस्तु धर्मनियमात् कालशास्त्रं निमित्तं स्यात् । ७ ॥**

**भाष्यम्**-- यदि कर्तुर्धर्मो नियमश्चोद्येत, ततो जीवनं निमित्तम् । जीवने निमित्ते कर्म विधीयते । तत्र प्रयोगे परिसमाप्तं कर्म । तथा व्यपवर्गस्य दर्शनमवक्लृप्तं भवति । तस्मात् कर्तृधर्मो नियमश्चोद्यते इति सिद्धं भवति ।

**वा**— कर्तृधर्मपक्षे यदिदं त्वभिमतं यावज्जीवमिति कालशास्त्रम्, इदं निमित्तं भविष्यतीत्येतावत् सूत्रम्। यत्तु भाष्यकारेण व्यपवर्गदर्शनमुक्तं तद्यदि दर्शपूर्णमासाविष्ट्वा इत्येतदेवाभिप्रेतं ततः पुनरुक्तम्। अथान्यत्, तदप्यनुदाहृतत्वान्न ज्ञायते। तेनानन्तरालोचनयैवं योजयितव्यम्। त्वत्पक्षे विकृतीनामपवर्गः स्यात्। मत्पक्षे तु तासां व्यपवर्गदर्शनं सिद्धान्ते उपपत्स्यते। **अथवा** निगमनसूत्रमेतदिति व्याख्येयम्। **अथवा** सूत्रकारेण कर्तृधर्मो नियमोऽयमित्युक्तम्। यावज्जीवशब्दस्य तु का गतिरिति नाभिहितमत आह। एवं सति कालशास्त्रमेव निमित्तं स्यात्। **अथवा** अग्निहोत्रे दर्शपूर्णमासयोस्तावत् यावज्जीवग्रहणात् कर्तृधर्मनियमत्वं भवेत्। पशुसोमचातुर्मास्येषु तु कथम्? तदुच्यते। तत्रापि वीप्सायुक्तं कालशास्त्रमेव निमित्तं स्यात् 'वसन्तेवसन्ते ज्योतिषा' इत्यादि। न तावदेतत् काम्यस्योपदिश्यते। स हि यावदिच्छमङ्गत्वेनैव स्थितत्वान्नैवं वक्तुं शक्यते। अथापि नयमिकस्य सकृत् प्रयोगः स्यात्तत्रापि वीप्साऽनर्थिका भवेत्। न च वसन्तेयत्तावधारणाप्रमाणमस्ति। तस्माद्यावज्जीवं ये वसन्तास्तेष्विति विज्ञायते। सप्तम्यपि च 'भिन्ने जुहोति' इत्यादिवन्निमित्तार्था भविष्यति तेनोच्यते सर्वत्रैवंजातीयके कर्तृधर्मनियमावधारणात् कालशास्त्रं निमित्तशास्त्रं प्रत्येतव्यम्। एतेनैव पशुचातुर्मास्यादिष्वपि नैयमिकत्वसिद्धिः।

**शा**— 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति काम्यं प्रयोगं विधाय, आम्नायते—'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति। तत्र संशयः, योऽय यावज्जीविको धर्मो विधीयते, स किं अभ्यासः कर्मार्थः, उत नियमः पुरुषार्थः इति। **पूर्वपक्षे** काम्यस्यैव प्रयोगस्याभ्यासविधिः। **सिद्धान्ते।** योगान्तरं नित्य विधीयते इति भेदप्रसङ्गात् प्रयोगभेदाभेदचिन्ता। तत्र कर्माङ्गविधौ कर्मकथम्भावसंबन्धात् प्रकरणानुग्रहः, पुरुषार्थविधौ तु तदसंबन्धात् प्रकरणबाधः स्यात्। अतः अभ्यासविधिः 'यावज्जीवं यागमभ्यस्येत्' इति। **नैतद्युक्तम्।** 'यावज्जीवपदे काललक्षणैवं प्रसज्ज्यते। यजिना च तदभ्यासलक्षणा प्रक्रियावशात्॥' नहि प्रकरणवशेन श्रुतेर्लक्षणार्थता न्याय्या। त्वत्पक्षे च जीवनवाचिना तत्संबद्धः कालो लक्ष्यते। यजिना च यागाभ्यासः। न चैतन्न्याय्यम्। तस्मात् जीवने निमित्ते पुरुषस्य प्रत्यवायपरिहाराय दर्शपूर्णमासप्रयोगो विधीयते। जीवनं च यावद्विनिपातं नियतनिमित्तत्वात् नियमो विधीयते इति पुरुषार्थः।

**सोम**— अमिन् पादे प्रयोगभेदः प्राधान्येन प्रतिपाद्यते इति पादान्तरत्वम्। पूर्वपादे कर्मभेदे सहायत्वेन उक्तानुपादेयसमभिव्याहारेण प्रयोगभेदव्युत्पादनात् आनन्तर्यं च। **प्रयोजनं** पूर्वपक्षे दर्शपूर्णमासयोः फलकामनावत एव प्रयोगः, सोऽपि यावज्जीवमभ्यस्त एव कामाय कल्पते। सिद्धान्ते तु कामनारहितस्यापि। काम्यस्तु सकृत् कृत एव फलाय कल्पते इति। **सूत्रार्थस्तु**— यावज्जीविकोऽभ्यासः सन् कर्मार्थः प्रकरणात् इति। यावज्जीवं भवः यावज्जीविकः।

**वि**—'यावज्जीवं जुहोतीति' धर्मः कर्मणि पुंसि वा।, कालत्वात् कर्मधर्मोऽतः काम्य एकः प्रयुज्यताम्॥, न कालो जीवनं तेन निमित्तप्रविभागतः। काम्यः प्रयोगो भिन्नः स्याद् यावज्जीवप्रयोगतः॥'

**भाट्ट**—'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इत्यत्र काम्ये एव स्वर्गाद्यर्थे दर्शपूर्णमासकर्मणि जीवनपर्याप्तकालविधिः। न च पौर्णमास्यादिकालविरोधः। व्याप्यव्यापकभावेनामावास्यापराह्णादिवदुपपत्तेः। अत एव विनिगमनाविरहात् कालद्वयविधावपि प्रयोगद्वयविधिः। जीवनपर्याप्तकालविधिसामर्थ्यादेव च प्रतिपौर्णमास्यादि अर्थात् दर्शपूर्णमासावृत्तिः। अतश्च तावद्व्याप्यप्रयोगव्यासक्तव्याप्यप्रयोगादेव स्वर्गादिफलम्। इति **प्राप्ते,** काललक्षणापत्तेर्नायं कालविधिः। अतो धातुसंबन्धाधिकारविहितणमुल्प्रत्ययेन जीवनस्य कर्मसंबन्धावगतेः स्वावच्छिन्नकालकत्वादिरूपसंबन्धाश्रयणे च गुणभूतकालानुरोधेन प्रधानावृत्तेर्न्यायलभ्यत्वाभावेन यावच्छब्दार्थस्यापि विधेयत्वापत्तेर्लाघवान्निमित्तत्वमेव संबन्धः प्रतीयते। तदा हि प्रतिनिमित्तं नैमित्तिकावृत्तेर्न्यायलभ्यत्वात् यावच्छब्दार्थोऽनुवादः। निमित्तत्वं च स्वान्वयव्यतिरेकानुविधाय्यवश्यानुष्ठानत्वं यथा राहूपरागान्वय-



व्यतिरेकानुविधाय्यवश्यानुष्ठानं यस्य स्नानस्य तद्वत्त्वं राहूपरागे। अत्र च व्यतिरेकानुविधानस्य सर्वत्र प्रापकप्रमाणाभावादेव सिद्धेरन्वयानुविधाने एव विधेस्तात्पर्यम्। अतश्च निमित्तसत्त्वे नैमित्तिकस्यावश्यानुष्ठानबोधनात् अकरणे प्रत्यवायोऽनुमीयते। करणे च 'धर्मेण पापमपनुदति' इत्यादिवाक्यशेषात्, 'रात्रिसत्रन्यायेन' (८।३।८) पापक्षयः एवानुषङ्गिको नित्यनैमित्तिकस्थले फलम्। यत्र तु रथन्तरसामत्वादिनिमित्तसत्त्वे नैमित्तिकस्य पाठादेव प्राप्तिसंभवेनान्वयानुविधानस्य प्रमाणान्तरेण प्राप्तिः, तत्र व्यतिरेकानुविधाने एव विधेस्तात्पर्यम्। अत एव रथंतराभावे ऐन्द्रवायवाग्रत्वस्याभावः। अतश्च यावज्जीवपदे लाघवाद्यनुरोधेन जीवनस्य निमित्तत्वावगतेः तदनुरोधेन पापक्षयाथ विनियोगान्तरमेवेदमिति सिद्धम्।

**मण्डन**—'न विहित इति यावज्जीवकालोऽग्निहोत्रे।'

**शंकर**—'यावज्जीवे कर्मविधिः।'

* **यावज्जीवाधिकरणे** नियतनिमित्तकं नैमित्तकं कर्म उक्तं अग्निहोत्रादि। **बाल.** पृ. ८५. * यावज्जीवाधिकरणे यावज्जीविको नियमः सन् पुरुषार्थः, न तु अभ्यासः सन् क्रत्वर्थः इति स्थितम्। **सोम.** ८।१।१३, * जीवनस्य निमित्तत्वं **यावज्जीवाधिकरणे** उक्तम्। ६।२।७. * नित्यनैमित्तिकानां पापक्षयहेतुत्वं न्यायसुधाकृतः न संमतम्। यथोक्तं यावज्जीवाधिकरणे तेन—'सन्ध्योपासनमात्राद्धि सर्वपापक्षये सति। अग्निहोत्राद्यनुष्ठाने कः प्रवर्तेत बुद्धिमान्॥' इत्यादि। **भाट्टालंकारः** १२. * निमित्तस्य विनियोगान्वयित्वस्यैव यावज्जीवाधिकरणे स्थापितत्वेन अत्र (अभ्युदयेष्टौ चन्द्रस्य) प्रयोगान्वयिगुणाभावेन वाजिनवदेव तद्भेदानुपपत्तेः। इदं पूर्वपक्षे उक्तम्। **भाट्ट.** ६।५।१, * यथा नैमित्तिकस्थले पापक्षयभाव्यकत्वं तथा यावज्जीवाधिकरणे निरूपितम्। ६।१।१. 'वसन्तेवसन्ते ज्योतिष्टोमेन यजेत' इति ज्योतिष्टोमस्य नित्यप्रयोगविधिः। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति काम्यप्रयोगविधिः इति द्वितीयस्य चतुर्थे यावज्जीवाधिकरणे निरूपितम्। **कु.** ३।३।१४।१७.

* निमित्तद्वयस्थलेऽपि **यावज्जीवाधिकरणन्यायेन** निमित्तस्य फलद्वयाक्षेपकत्वात् वाक्यभेदापत्तिर्द्रष्टव्या। **भाट्ट.** ३।१।७.

* **यावज्जीवाधिकरणपूर्वपक्षन्यायेन** तावन्तं कालं (पञ्चदशवर्षपर्यन्तं) दर्शपूर्णमासावृत्तिरेव कर्माङ्गत्वेन विधीयते इति चेन्न। **कौ.** २।३।४।९.

* फलापेक्षायां **यावज्जीवाधिकरणवक्ष्यमाणरीत्या** पापक्षयाद्यर्थं विनियोगः कल्प्यते। **कौ.** २।३।१३।२६.

* **यावज्जीवाधिकरणसिद्धान्तन्यायेन** निमित्तपरत्वस्यैवोपपत्तेः नावृत्तेः कर्माङ्गत्वेन विधिः। **कौ.** २।३।४।९.

* **यावज्जीवादिप्रयोगविधेः** निमित्तश्रुत्यवगतावश्यकर्तव्यताऽनुरोधेन शक्यमात्राङ्गविषयतया संकोचकल्पना युक्ता। **सु.** पृ. ५३२.

* **यावज्जीवकर्मणां** अग्निहोत्रादीनां स्वकालमात्रकर्तव्यता। **वि.** ६।२।७, * यावज्जीवकर्मणामग्निहोत्रादीनां स्वकालावृत्त्या आवृत्तिः। ६।२।८.

* **यावज्जीवकालः** न प्रकृतेः शेषभूतः, कर्तृधर्मोऽसौ इत्युक्तं 'कर्तुर्वा श्रुतिसंयोगात्' (२।८।१।२) इत्यत्र। **भा.** १२।२।६।२०.

* **यावज्जीवदर्शपूर्णमासयोरारम्भणीयायाः** सकृदेवानुष्ठानम्। **बिन्दु.** ९।१।१०.

* **यावज्जीवपक्षोऽपि** चातुर्मास्येषु विज्ञायते। **संकर्ष.** ३।१।२०. **मीको.** पृ. १६९१ 'चातुर्मास्येषु पाञ्चसांवत्सरिकपक्षे०' इत्यत्र अधिकरणं द्रष्टव्यम्।

**यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात्। २।४।१।१॥**

बह्वृचब्राह्मणे श्रूयते—'यावज्जीवमग्निहोत्रं जुहोति' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति। तत्र संदेहः किं कर्मधर्माभ्यासो यावज्जीवकता, उत कर्तृधर्मनियमो वा यावज्जीविकेति। अस्यायमर्थः—'अग्निहोत्रं जुहोति' इत्युत्पन्नस्य 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति फले विनियोगः श्रूयते। पुनरपि 'यावज्जीवमग्निहोत्रं जुहोति'

इति श्रूयते । तत्र किं काम्ये एव प्रयोगे यावदुपबद्धजीवनावच्छिन्नः कालोऽङ्गतया विधीयते ? ततश्च 'सायं जुहोति' 'प्रातर्जुहोति' इत्यनेन विशेषित एक एव काम्यः प्रयोगो यावज्जीवमभ्यसितव्यः । अथ यावज्जीवं तदुद्देशेनान्य एव प्रयोगो नैमित्तको विधीयते । ततश्च 'सायं जुहोति' 'प्रातर्जुहोति' इत्येकवाक्यतावशात् सायं प्रातः समापनीयः उपात्तदुरितक्षयफलः, अक्रियानिमित्तप्रत्यवायपरिहारप्रयोजनो वा यथानिमित्तमनुष्ठेय इति । पूर्वत्र शब्दान्तरादिसहायोत्पत्तिविधिप्रमाणके कर्मभेदे पर्यवसिते सति इदानीं शब्दान्तरादिसहायप्रयोगविधिप्रमाणकः प्रयोगभेदो निरूप्यते । **न च** प्रयोगविधिव्यापारस्य चतुर्थाध्यायविषयत्वात् इहानिरूपणीयमिति **वाच्यम्** । यतोऽनुष्ठानगताङ्गपरिमाणादिविषयः प्रयुक्तिलक्षणो व्यापारस्तत्र निरूपणीयः, प्रयोगभेदविषयस्तु द्वितीयाध्यायविषय एवेति न विरोधः ।

**अत्रायं पूर्वपक्षिणोऽभिसंधिः** । जीवनावच्छिन्ने हि काले विधीयमाने प्रकृतस्य कर्मणः कथंभावाकाङ्क्षालक्षणं प्रकरणमनुगृह्यते, कालस्याङ्गत्वेन ग्रहणात् । दृष्टं च लक्षणयाऽपि यावच्छब्दोपबद्धस्य कालपरत्वं 'यावद्दोहं स्वपिति' इत्यादिषु । तदुक्तम् '**कर्मस्थो हि कथंभावस्तदङ्गमभिवाञ्छति । कालोपदेशपक्षे च तत्तथैवोपयुज्यते ॥**' इति (वा. पृ. ६२४) । एवं सति कल्पनालाघवं भवति । इतरथा प्रयोगान्तरमपूर्वान्तरं च कल्प्येत । न च यावज्जीवं दर्शपूर्णमासैकप्रयोगत्वे सति 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति विरोधः । अस्य साभिप्रायेणैव इष्ट्वेति ... । न चान्यतन्त्रमध्ये कथमन्यस्यानुष्ठानमिति । वचनबलादेवान्यप्रयोगमध्यानुष्ठानाविरोधात् । न च यावज्जीवपदस्य काललक्षणैव दोषः । सिद्धान्तेऽपि निमित्तत्वलक्षणाया अविशिष्टत्वात् । न च णमुला निमित्तत्वमभिधीयते, 'अभिक्रामं जुहोति' इत्यत्र व्यभिचारात् । नापि जुहोतेरभ्यासलक्षणादोषः, जीवनावच्छिन्नकालविधिसामर्थ्यादेवाभ्यासाक्षेपसिद्धेर्लक्षणावैयर्थ्यात् । न च काम्यत्वेन सर्वाङ्गोपसंहारासमर्थस्याधिकारात् यावज्जीवं च सर्वाङ्गोपसंहाराभावादशक्यार्थोपदेश इति वाच्यम् । अङ्गोपदेशवशेन उद्भूतशक्तेरेवाधिकारस्वीकारात् । तेन यावज्जीवं सायंप्रातरुद्भूतशक्तिरग्निहोत्रादिशास्त्रार्थः । तस्मात् यावज्जीवं काम्य एक एव साभ्यासोऽयमग्निहोत्रप्रयोगो दर्शपूर्णमासप्रयोगश्च, न तु प्रयोगान्तरं विधीयते इति । **एवं प्राप्ते, अभिधीयते ।**

**कर्तुर्वा श्रुतिसंयोगात् । २ ॥**

**अयमभिप्रायः**—भवेदेवं यदि कालविधौ यावज्जीवजुहोतिशब्दयोर्लक्षणावृत्तत्वं दोषो न भवेत् । तथाहि, न तावद्यावज्जीवशब्देन कालोऽभिधीयते, सामस्त्यविशिष्टजीवनमात्राभिधायित्वात् । नापि जुहोतिशब्देन अभ्यासः अभिधीयते, होमावच्छिन्नभावनामात्राभिधायित्वात् । नापि जीवनावच्छिन्नकालविधिसामर्थ्यादेवाभ्यासाक्षेपसिद्धिः, विकल्पासहत्वात् । स किमाक्षिप्यमाणः अशाब्दः, शाब्दो वा ? न तावदशाब्दः शास्त्रार्थो भवति । शाब्दत्वे च जुहोतेरतत्परत्वात् दुर्वारैव लक्षणेति । तेन स्वार्थपरित्यागेन यावज्जीवं जुहोतीत्याख्याताभ्यां कालाभ्यासावेव लक्षितौ विधातव्याविति विधावेव लक्षणा प्रसज्येत । 'यावद्दोहं स्वपिति' इत्यादिषु वर्तमानापदेशत्वेन यथाप्राप्तानुवादलक्षणेयं गत्यन्तरासंभवान्न दोषायेति । तेन यावत्क्रतुभाविजीवनमेव निमित्तभूतं यावज्जीवशब्देन प्रतिपाद्यते ।

ननु णमुला निमित्तत्वाभिधानात् निमित्तत्वपक्षेऽपि लक्षणादोषोऽभिहितः । नैतत् । श्रौतत्वात् निमित्तभावस्य । तथाहि, समानकर्तृकधात्वर्थसंबन्धे णमुलोऽनुशासनात् । यथा 'कारं संहरति' इति । जीवनक्रियाया होमक्रियासंबन्धस्तावदभिधानतः प्रतीयते । न च जीवनस्य होमसंबन्धः साध्यत्वेन, साध्यताप्रतिपादकश्रुत्याद्यभावात् । नापि साधनत्वेन, यावच्छब्दोपलब्धस्य जीवनस्य सामस्त्याभावेन साधनत्वासंभवात् । न चैकस्यैव काम्यप्रयोगस्य यावज्जीवमनभ्यस्यमानत्वात् पर्यायेणैव जीवनानां प्रत्यभ्यासमन्वयो भविष्यतीति वाच्यम् । तथा सति विधावेवाभ्यासलक्षणादोषस्य दुष्परिहरत्वात् । निमित्तस्य तु साध्यसाधनभावव्यतिरेकेण निमित्तत्वेनैवान्वयोपपत्तेः यावदुपबद्धस्य जीवनस्य निमित्तत्वमेव युक्तम् । तेन यद्यपि यावदुपबद्धस्य जीवनस्य जीवसमभिव्याहृतक्रियासंबन्धमात्रमभिहितम्, तथापि क्रियान्वयार्थत्वात्समुच्चारणस्य क्रियान्वयस्य च निमित्तताव्यतिरेकेणासंभवात् निमित्ततारूपसंबन्धविशेषप्रतिपादनार्थमेव पुनः समुच्चारणेऽध्ययनविधेस्तात्पर्यमुन्नीयते । तेन यथा 'गौर्गच्छति' इत्यत्र गवादिशब्दानामाकृत्यभिधानेऽपि अभिधानस्य क्रियासंबन्धार्थत्वात् क्रियासंबन्धस्य च व्यक्तिव्यतिरेकेणासंभवादभिधानस्य व्यक्तिपर्यन्तत्वाद्व्यक्तेरपि श्रौतत्वम्, तथा अत्रापि संबन्धमात्राभिधानस्य निमित्तपर्यन्तत्वान्निमित्तमपि श्रौतमेव । एतच्चाकृत्यधिकरणे विस्तरेण प्रतिपादितम् । कालस्य तु श्रुतिशब्दाभिधेयसामान्यव्यक्तिरूपत्वाभावात् अर्थान्तरत्वेन लक्षणविषयत्वमेवेति लक्षणादोषो दुष्परिहर एव । तथा जुहोतिशब्दे चाभ्यासलक्षणा प्रागुक्तवेति । निमित्तपक्षे तु प्रतिनिमित्तं कृत्स्नशास्त्रार्थसमाप्तेः प्रयोगभेदादभ्यासाभावेन नाभ्यासलक्षणादोषः । किं तर्हि ? द्वयोरेव श्रुतिवृत्तत्वमिति । तदुक्तम् । '**यावज्जीवपदाख्यातश्रुतिवृत्तत्वसंभवः । मत्पक्षे भवतस्त्वत्र लक्षणावृत्तता भवेत् ॥**' इति ( वा. पृ. ६२४ ) ।

तेन 'अभिक्रामं जुहोति' इत्यादिषु संबन्धान्तरप्रतिक्षेपकस्य यावच्छब्दोपबन्धस्याभावादिति साध्यसाधनलक्षणोऽपि संबन्धोऽविरुद्ध एव । ननु यावच्छब्दोपबन्धोऽपि णमुलो निमित्तार्थत्वं व्यभिचरत्येव । यथा 'यावज्जीवं भुङ्क्ष्व' इति । सत्यमेवम्, किन्तु विध्याख्यातसमभिव्याहृतस्य यावदुपबन्धस्य णमुलो निमित्तत्वाव्यभिचारस्योक्तत्वात् तथाभूतस्यैव निमित्तार्थत्वम् । तच्च निमित्तत्वं न धात्वर्थे, न च भावनायाम्, नापि फले, मानान्तरविरोधेन तेषु निमित्तत्वासंभवात् । निमित्ते सत्यपि तेषामनिष्पत्तेः । किन्तु विधेः शब्दव्यापारात्मनः कर्तव्यतायाश्च धात्वर्थसंबन्धे सति, तस्यैवावश्यकर्तव्यतावगमात् । न चैव सत्याहारविरोधादशक्यानुष्ठेयत्वम्, 'सायं जुहोति प्रातर्जुहोति' इति सायंप्रातःकालावच्छिन्नस्यैव जीवनस्यापेक्षावशेन निमित्तत्वाभ्युपगमात् । तदुक्तमाचार्येण । '**जीवनादेर्निमित्तस्य साम्यात् कालो विशेषकः । निमित्तार्थस्तत्र जातिकर्मणोऽवश्यकार्यता ॥**' इति ।

**तेनायं वाक्यार्थः**— सायं प्रातर्जीवनवानग्निहोत्रं जुहुयादेवेत्यवश्यकर्तव्यता होमस्य प्रतीयते । तदेवावश्यकर्तव्यं लोकेऽवगतम्, यस्याकरणे प्रत्यवायो भवति । तत्राप्यभावस्य भावोत्पत्तिहेतुत्वाभावात् तत्कालीनान्यक्रियाकरणस्यैव प्रत्यवायोत्पत्तिहेतुत्वम् । न च प्रत्यवायनिवृत्तिः फलम्, प्रागभावरूपत्वेन साध्यत्वाभावात् । किन्तु प्रयोजनमात्रं तु अत्र विध्यवरुद्धभावनायाः पुरुषसमीहितसाध्याकाङ्क्षायां बुभुक्षुमुमुक्षुसाधारणत्वात् नैमित्तिकविधेः उभयसाधारणमुपात्तदुरितक्षयरूपमङ्गीक्रियते ।

न चैवं साध्यभेदाद्भावनाभेद इति वाच्यम् । अग्निहोत्रस्य काम्यप्रयोगे स्वर्गः फलम्, इह दुरितक्षय इति । 'संनिधौ त्वविभागात्' इत्यनेन न्यायेनोत्पत्तिपरत्वाभावात् पुनःश्रुतेस्तु प्रयोगान्तरविधानेनैवार्थवत्त्वात् । ... ...स्यैवाग्निहोत्रस्य दर्शपूर्णमासयोश्चैकः काम्यप्रयोगः । अपरस्तु यावन्निमित्तमवश्यानुष्ठेयः । अत एव किञ्चिदङ्गहानेऽपि न वैगुण्यम् । यावज्जीवमवश्यं कर्तव्यं सर्वाङ्गोपेतं च इति विरोधेन किञ्चिदङ्गभावस्यापि विध्यनुमतत्वात् । तेन श्रुत्यनुरोधेन जीवननिमित्तः प्रयोगभेदोऽत्र विधीयते इति सिद्धम् ।

**प्रयोजनम्**— पूर्वपक्षे जीवनलक्षितकालस्याङ्गत्वेनाग्निहोत्रदर्शपूर्णमासविकृतावतिदेशः । सिद्धान्ते तन्नेति ।

**सूत्रं तु** — कर्तृधर्मः प्रयोगो विधीयते 'यावज्जीवं जुहोति' इति श्रुतिसंयोगात् श्रुतिवृत्तत्वादित्यर्थः ।

**तौता.**

**यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् । २।४।१।१ ॥**

'यावज्जीवमग्निहोत्रं जुहोति' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति श्रूयते । इयं यावज्जीविकता कर्मधर्मः अभ्यासः, जुहोतिरनुवादः, यावज्जीवमिति विधिः, प्रकरणात् । एवं सति प्रकरणमनुगृह्यते । इति **पूर्वपक्षः** ।

**कर्तुर्वा श्रुतिसंयोगात् । २ ॥**

'यावज्जीवमग्निहोत्रं जुहोति' इति यावज्जीविकः अभ्यासः कर्तुः धर्मः, न तु कर्मणो धर्मः । जीवने

निमित्ते नियमेन अग्निहोत्रहोमस्य भिन्नः प्रयोगः, पुरुषधर्मतया विधीयते। श्रुतिसंयोगात् यावज्जीवं इतिपदश्रुतेः समन्वयसंभवात्। यावच्छब्दो हि जीवनान्वयिसामस्त्यवाची, धातुश्च जीवनवाची। णमुल् स्वप्रकृत्यर्थस्य जीवनस्य यजत्यर्थे संबन्धमवगमयति। तत्र संबन्धविशेषजिज्ञासायां यावच्छब्दस्य तात्पर्यग्राहस्य सत्त्वात् निमित्तत्वरूपमेव आश्रीयते। कालविधिपरत्वे तु तद्वाक्यस्य यावज्जीवपदे काललक्षणा स्यात्। सा च श्रुत्यथ संभवति न युक्ता। तस्मात् यावज्जीविकोऽभ्यासः कर्तुर्धर्मः इति **सिद्धान्तः**।

**लिङ्गदर्शनाच्च कर्मधर्मे हि प्रक्रमेण नियम्येत तत्रानर्थकमन्यत् स्यात्। ३॥**

'यावज्जीवमग्निहोत्रं जुहोति' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति यावज्जीविकोऽभ्यासः कर्तुर्धर्मः इति सिद्धान्ते हेत्वन्तरमाह। 'अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन् अमावास्यां वा पौर्णमासीं वाऽतिपादयेत्' इति दर्शपूर्णमासयोः स्वकालातिक्रमे प्रायश्चित्तस्य पाथिकृतेष्टेः विधानरूपस्य लिङ्गस्य दर्शनात् यावज्जीविकोऽभ्यासः न कर्मधर्मः, किंतु कर्तुर्धर्मः। कथम्? कर्मधम हि यस्मात् काम्यप्रयोगस्य शेषतया यावज्जीवनकाले विधीयमाने प्रक्रमेण प्रक्रान्तेन यावज्जीवनकालेन काम्यप्रयोगो नियम्येत। यम उपरमे। समाप्येत। एवं च कर्मधर्मपक्षे यावज्जीवं अभ्यस्तस्य एकस्य प्रयोगस्य फलार्थतया मध्ये समाप्त्यभावेन जीवनदशायां न कोऽपि दर्शपूर्णमासाभ्यां इष्टवान् भवति, इति यावज्जीवनकालोत्तरमेव दर्शपूर्णयाजी इति वक्तव्यम्। तथाविधस्य च दर्शपूर्णमासयाजिनः तत्र तस्मिन् जीवने समाप्ते सति अन्यत् स्वकालातिक्रमप्रायश्चित्ततया पाथिकृतेष्टिविधानं अनर्थकं असंगतार्थकं स्यात्। तस्मात् अभ्यासः कर्तुर्धर्मः।

**व्यपवर्गं च दर्शयति कालश्चेत् कर्मभेदः स्यात्। ४॥**

यावज्जीविकोऽभ्यासः कर्तुर्धर्मः न कर्मणो धर्मः इति सिद्धान्ते हेत्वन्तरमाह। 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति सोमात् प्राक् दर्शपूर्णमासयोः व्यपवर्गं समाप्तिं दर्शयति। कालश्चेत् यदि हि यावज्जीवनकालः कर्मशेषः स्यात् तर्हि दर्शपूर्णमासप्रयोगस्य मध्ये एव सोमे कृते प्रक्रान्तस्य दर्शपूर्णमासकर्मणः भेदः नाशः स्यात्। कर्तृधर्मत्वे तु प्रतिमासं दर्शपूर्णमासप्रयोगस्य समाप्तत्वात् नायं दोषः स्यात्। **अथवा** कालश्चेत् दर्शपूर्णमासविनिर्मुक्तः सोमकालः ततो यथोक्त एव कर्मभेदः स्यात् कर्मप्रयोगभेदः स्यात्। इति।

**अनित्यत्वात्तु नैवं स्यात्। ५॥**

यदि च यावज्जीवनकालः कर्मधर्मः स्यात् तर्हि 'जरामर्यं वा एतत् सत्रं यदग्निहोत्रं यद्दर्शपूर्णमासौ, जरया ह वा एष एताभ्यां निर्मुच्यते मृत्युना च' इति वचनं एवं न स्यात्। कर्मधर्मे हि वचनमिदं विरुध्यते अनित्यत्वात्। काम्यप्रयोगधर्मे हि यावज्जीवनकाले विधीयमाने नित्यप्रयोगस्य अलाभात् काम्यप्रयोगस्य च अनित्यत्वात्, अवश्यानुष्ठेयत्वरूपजरामर्यत्ववचनविरोधः। तुशब्दः हेतुसमुच्चये। तस्मात् यावज्जीविकोऽभ्यासः कर्तुर्धर्मः।

**विरोधश्चापि पूर्ववत्। ६॥**

'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इत्यादिना यावज्जीवकालाभ्यासे कर्मधर्मतया विधीयमाने, स विकृतिष्वपि अतिदिश्येत। तथा सति वैमृधं प्रकृत्य 'यदि निर्वपेत् अन्वेव निर्वपेत्' इति वचनं व्यर्थं सत् विरुध्येत। 'प्रजापतिः पुरुषमसृजत' इत्युपक्रम्य तैत्तिरीयके अग्निहोत्रदर्शपूर्णमासपशुबन्धादीनां केषांचिदेव नित्यतया परिगणनं विरुध्येत। पूर्ववत् पूर्वसूत्रोक्तजरामर्यवादविरोधवत् विरोधः। **सिद्धान्ते** तु जीवनस्य निमित्तत्वेन निमित्तस्य चानङ्गतया अनतिदेशात् नासौ विरोधः।

**कर्तुस्तु धर्मनियमात् कालशास्त्रं निमित्तं स्यात्। ७॥**

यावज्जीविकोऽभ्यासः कर्तुः धर्मस्य नियमः। तस्मात् पूर्वपक्षाभिमतं यावज्जीवमिति कालशास्त्रं निमित्तं स्यात्। **अथवा** कर्तुः धर्मनियमात् उक्तेन न्यायेन कर्तृधर्मनियमे सिद्धे सति कालशास्त्रं कालशास्त्रतया भासमानं यावज्जीवपदं वस्तुतो निमित्तशास्त्रमेव स्यात्।



**अथवा**। ननु एवं अग्निहोत्रस्य दर्शपूर्णमासयोश्च नित्यत्वसिद्धावपि पशुचातुर्मास्यज्योतिष्टोमेषु का गतिः? तत्र यावज्जीववाक्याभावात् इत्यत आह– कर्तुः धर्मनियमात् काम्यप्रयोगादन्यस्य प्रयोगस्य ज्योतिष्टोमादौ पुरुषार्थतया नियमेन विधानात् 'वसन्तेवसन्ते ज्योतिषा यजेत' इति वीप्सायुक्तं कालशास्त्रं वसन्तस्य निमित्तार्थं निमित्ततावोधनार्थं स्यात्। इति सिद्धो ज्योतिष्टोमादेः नैमित्तिकः प्रयोगः। तस्मात् न काम्यप्रयोगस्य एकस्य यावज्जीवकालं अभ्यासो विधीयते, किंतु जीवने निमित्ते अग्निहोत्रादेः बहूनां प्रयोगाणां विधिः इति **सिद्धान्तः। के.**

* 'यावज्जीविकोऽभ्यासः०'। (२।४।१।१) इत्यत्र कालाभ्यासयोः अन्योन्यविधिहेतुत्वं व्याख्यातम्। **वा.** ३।२।३।६. * यावज्जीविको नियमः कर्तृधर्मः, स पुरुषार्थत्वात् नातिदिश्यते। **टुप्.** ८।१।१३।२०. * **यावज्जीविके** प्रयोगे एकदेशोपसंहारसमर्थोऽपि पुरुषोऽधिक्रियते। यथाशक्त्यधिकरणम्। ६।३।१।१–७.

* **यावन्निमित्तं** नैमित्तिकस्य अनुष्ठेयत्वम्। **सु.** पृ. ९६९.

**यावद्वचनं वाचकमिति न्यायः।** यथा– ग्रहणोत्पातभयोः षण्मासपर्यन्तं निषेधस्ततोऽपि यावद्द्रविणा भुक्त्वा न त्यक्तं तावत्यजेदित्युक्तं तत्रैवेति। अन्यत्रापि– यथा च धर्माऽधर्मयोर्मनुष्याधिकारत्वेन काशीखण्डे पिशाचमोचनाख्याने पिशाचस्यापि तत्स्नानात्पिशाचत्वनाशोक्तिर्निषादस्थपतीष्टिवत्प्रकृतन्यायेन तन्मात्रविषयतैवेति बोध्यमिति। **साहस्री.** ५७७. * यावद्वचनं वाचनिकं न तत्र न्यायः क्रमते। **भा.** ५।४।४।११, * यावद्वचनं वाचनिकं न सदृशमुपसंक्रामति। ५।३।४।१२, * यावद्वचनं वाचनिकं भवत्येव। ३।५।१८।४८, * यावद्वचनं वाचनिकम्, 'यावति वचनं तावत्येव तद् भवितुमर्हति'। १०।२।१७।४८.

* **यावच्छब्दो** व्याप्तिवाची। **सु.** पृ. ९३८.

**यावत्संपातमुषित्वेति न्यायः।** यावत्पुण्यफलानुभूतिनिर्णयस्तावत्पर्यन्तं स्वर्गभोगाननुभवन्ति मुकर्मिण इति। **साहस्री.** ५४२.

* **यावत्स्वं** सांनाय्ये उत्तरासु गोदोहनम्। ११।१।९।८७–५३. **मीको.** पृ. १०९८ 'उत्तरागोदोहाधिकरणम्' इत्यत्र द्रष्टव्यम्।

* **युक्तिगम्येऽर्थे** पुरुषविशेषस्य अनादरणीयत्वात् युक्तियुक्तं यद् वृत्तिकारादिभिः उक्तम्, तत् 'सूत्रकारानुपात्तत्वात् न ग्राह्यम्' इति असदाग्रहो न कार्यः। एवमेव वार्तिककाराद्युक्तमपि वृत्तिकारानुपात्तत्वमात्रेण अग्राह्यं न भवति। एवं सूत्रकारानुक्तस्यापि अर्थस्य वृत्तिकाराद्युक्तस्य ग्राह्यत्वम्। **सु.** पृ. ९३२.

* **युगादि**कालपरिमाणं ज्योतिःशास्त्रव्यवहारसिद्ध्यर्थं गणितविषयसंप्रदायोत्थानुमानपूर्वकम्। **सु.** पृ. १२८.

**युगपदेव विशेष्ये विशेषणं तत्रैव च विशेषणान्तरमिति न्यायः।** यथा– 'तरति शोकमात्मवित्' इत्यादौ प्राचीनतार्किकमतमाश्रित्याऽखिलपदार्थस्मरणात् प्रकृतन्यायेन सर्वपदार्थानामन्योन्यं क्रियाकर्मभावेनान्वयरूपः शाब्दबोधो भवतीति संक्षेपः। **साहस्री.** १८२.

* **युगपदधिकरणवचने** द्वंद्वो भवति। अधिकरणं शब्दप्रतिपाद्योऽर्थः, स यत्र अनेको युगपदेकेन पदेन बोध्यते तत्र द्वंद्वः तथा च धवखदिरौ इत्यत्र धवपदं लक्षणया खदिरसहितधवपरम्, इतरसहितधवपरं वा। इतरत्तु खदिरपदान्निर्णीयते। एवं खदिरपदमपि। सेयं युगपदधिकरणता। **भाट्ट.** ६।१।५.

* **युगपदधिकरणवचनता।** अधिकरणं द्रव्यं अभिधेयमिति यावत्। तस्य युगपदभिधानम्। **सोम.** ६।६।१. * **युगपदधिकरणवचनतायां** द्वन्द्वस्मृतेर्द्विवचनबहुवचनोपपत्तेश्च। 'प्रमित्रयोर्वरुणयोः' इति दर्शनात् यथैव खदिरौ च धवौ चेति निदर्शनं क्रियते। **भा.** ६।१।५।२२. * युगपदधिकरणवचनतायां द्वन्द्वस्मृतेः। यत्र द्वौ बहवो वा युगपदभिधातुं इष्यन्ते, तत्र द्वन्द्वसमासो भवति। **वा.** ६।१।६।२४ पृ. १३७२.

* **युगपदनेकामेध्यदर्शने** प्रत्यमेध्यं मन्त्रावृत्तिर्न कर्तव्या किंतु सकृदेव मन्त्रपाठः। **भा.** ११।४।१७।५०.

* **युगपदनेककपालभेदने** होमतन्त्रत्ववत् वारुणेष्टेस्तन्त्रत्वप्रसक्तिः ...। **भाट्ट.** ५।२।२.

* **युगपदपच्छेदे** अदक्षिणत्व–सर्वस्वदक्षिणत्वयोर्विकल्पः । **विन्दु.** ६।५।१९.

* **युगपद्विध्यनुवाददोषात्** देशाद्युद्देशेन विधीयमानानां कर्मणां स्वरूपानुवादकल्पनं अयुक्तम् । **वा.** २।३।१३।२६ पृ. ६१९.

* **युतसिद्धिः**- पृथगाश्रयाश्रयित्वं पृथग्गतिमत्त्वं च । **ऋजु.** पृ. १८८.

* **युधिष्ठिरस्य** कनीयोऽर्जितभ्रातृजायापरिणयनं आचार्यब्राह्मणवधार्थं अनृतभाषणं च (धर्मव्यतिक्रमः) । **वा.** १।३।३।७ पृ. २०४ । ' इदं सज्यं धनुः कृत्वा, सज्येनानेन सायकैः । अतीत्य लक्ष्यं यो वेद्धा स लभेत सुतामिमाम् ।। ' इति द्रुपदेन उद्घोषिते, तथाकृतवतेऽर्जुनाय द्रौपदी निवेदिता । तया च ' विद्धयेत य इमं लक्ष्यं तं वृणीष्व वरानने ' इति भ्रातृवचनात् लक्ष्यवेधानन्तरमेव अर्जुनो वृतः इति अपरिणयनेऽपि, वरणे जायात्वप्रक्रमात् अन्यस्य विशेषतो भ्रातुः कनीयसश्च जायायाः परिणयनात्, एको युधिष्ठिरस्य धर्मव्यतिक्रमः । तथा द्रोणो ब्राह्मणः । युधिष्ठिरादीनां धनुर्वेदाचार्यः अत्यक्तशस्त्रः, न हन्तुं शक्यः, अश्वत्थाम्नि च पुत्रे हते, शस्त्रं त्यक्ष्यति, इति मत्वा वध्यत्वाय शस्त्रं त्याजयितुं अश्वत्थामा हतः इत्यनृतं युधिष्ठिरेणोक्तं इत्यपरः । **सु.** पृ. १८६ । ' या चोक्ता पाण्डुपुत्राणामेकपत्नीविरुद्धता । साऽपि द्वैपायनेनैव व्युत्पाद्य प्रतिपादिता ।। यौवनस्थैव कृष्णा हि वेदिमध्यात् समुत्थिता । सा च श्रीः श्रीश्च भूयोभिर्भुज्यमाना न दुष्यति ।। ' अत एव चोक्तं ' इदं च तत्राद्भुतरूपमुत्तमं जगाद विप्रर्षिरतीतमानुषः । महानुभावा किल सा सुमध्यमा बभूव कन्यैव गतेऽगतेऽहनि ।। ' इति । नहि मानवीष्वेवमुपपद्यते । अत एव वासुदेवेन कर्ण उक्तः ।। ' षष्ठे च त्वामहनि द्रौपदी पर्युपस्थास्यति ' इति । इतरथा हि कथं प्रमाणभूतः सन्नेवं वदेत् । **अथवा** बह्व्यः एव ताः सदृशरूपा द्रौपद्यः एकत्वेनोपचरिता इति व्यवहारार्थापत्त्या गम्यते । 'यद्वा नार्यर्जुनस्यैव केवलस्य भविष्यति । साधारणा प्रसिद्धिस्तु निश्छिद्रत्वाय दर्शिता ।।' यथा युधिष्ठिरोपदेशात् सभामध्यमानीयमाना, सहसैव रजस्वलावेषं सपुत्रकस्य धृतराष्ट्रस्य अयश उत्पादयितुं आत्मानं प्रख्यापयितुं द्रौपदी कृतवती, तथैव केवलार्जुनभार्याया एव सत्याः श्रीत्वं च जनेनाविदितं परस्परं संघाताविशयं च भेदप्रयोगानवकाशार्थं दर्शयितुम्, साधारण्यप्रख्यापनं इत्येवमादिविकल्पैः सुपरिहरत्वात्, रागलोभकृतव्यवहारस्य च शिष्टैरेव धर्मत्वेन अपरिग्रहस्य उक्तत्वात् अनुपालम्भः । तथा च द्रोणवधाङ्गभूतानृतवादे ' प्रायश्चित्तं कामकृतेऽप्येके ' इति, एवमन्तेऽपि अश्वमेधः प्रायश्चित्तत्वेन कृत एवेति न तस्य सदाचारत्वाभ्युपगमः । **वा.** १।३।३।७ पृ. २०९.

* **' युनज्मि** ते पृथिवीं ज्योतिषा सह ' इति ध्रुवामभिमृशति । **भा.** १२।१।४।११, * ' **युनज्मि** वाचं सह दिवा सूर्येण ' इति जुह्वा अभिमन्त्रणे मन्त्रः । १२।१।४।११, * ' युनज्मि वायुमन्तरिक्षेण ते सह ' इति उपभृतोऽभिमर्शने मन्त्रः । १२।१।४।११ .

* **' युवा** सुवासाः ' इति यूपपरिव्याणे हौत्रो मन्त्रः । **संकर्ष.** १।४।१६ .

* **' युवं** हि स्थः स्वर्पती ' इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात् । ' एते असृग्रमिन्दवः ' इति बहुभ्यः यजमानेभ्यः । अयं कर्तृतः वाचनिकव्यवस्थाविधिः । **बाल.** पृ. २२. * ' युवं हि स्थः स्वर्पती ' इति प्रतिपद् विधीयमानैव वाक्येन द्वियजमानेन क्रतुना संबध्यते । तत्र च प्रकरणबाधो युक्तः । **टुप्.** १०।५।९।३७ पृ. १९६०. * ' युवं हि स्थः० ' इति मन्त्रस्य ज्योतिष्टोमे श्रुतस्य कुलाययागे प्रतिपत्त्वेनोत्कर्षः । **वि.** ३।३। १४ .

* **युष्मद्–अस्मदौ** । त्वंपदस्य तत्कालीनसंबोध्यत्वविशिष्टचैत्रादौ, अस्मत्पदस्य तत्कालीनस्वतन्त्रोच्चारयितृत्वविशिष्टचैत्रादौ शक्तिः । स्वातन्त्र्यं च अन्यबोधतात्पर्येण अनुच्चारयितृत्वम्, तेन अन्यतात्पर्येण उच्चारिते ' वाच्यस्त्वया मद्वचनात् स राजा ' इत्यादौ लक्षणया सीताप्रतीतिः, न कविप्रतीतिः, उच्चारयितृप्रतीतिर्वा । अत्रापि संबोध्यत्वादिकं न भासते भासते चेति ।



' वयं यामः ' इत्यत्र ' स च अहं च त्वं च वयं ' इत्याद्येकशेषात् अन्यतात्पर्यकेऽपि सर्वेषु आरोपितस्वातन्त्र्यप्रतीतिः । **मणि.** पृ. १६३.

* **युष्मत्पदार्थः** । संनिहितवाच्याभिमुख्यस्य युष्मदर्थत्वात् । **सु.** पृ. ११९९.

* **युष्मत्पदशक्यतावच्छेदकं** प्रकृतशाब्दबोधाश्रयत्वप्रकारकवक्तृभिन्नविशेष्यकवक्त्रिच्छा–विषयीभूतशाब्दज्ञानवत्त्वम्, प्रकृतशाब्दबोधनिष्ठविषयतानिरूपितवक्तृभिन्ननिष्ठवक्त्रिच्छाविषयतावत्त्वं वा । **रहस्य.** पृ. ५८.

* **यूथः** । भवति हि बहूनां एकवचनान्तः शब्दः समुदायापेक्षः । यथा यूथं वनं कुलं परिषत् इति । **भा.** २।२।३।३ पृ. ४८०. अपेक्षामात्रमेव समुदायस्य ब्रवीति, नाभिधेयत्वम् । यूथवनशब्दावपि यदा समुदायोपसर्जनसमुदायिवचनौ तदा साकल्येन दृष्टान्तौ । यदा तु समुदायमेव ब्रूतः, तदा तन्निमित्तैकवचनलाभमात्रेण दृष्टान्तत्वम् । **वा.**

**यूकाभिया कन्थाऽनाश्रयणन्यायः** । उक्तं च ' काव्ये शुभे विरचिते खलु नो खलेभ्यः कश्चिद्गुणो भवति यद्यपि संप्रतीह । कुर्यां तथापि सुजनार्थमिदं यतः किं यूकाभयेन परिधानविमोक्षणं स्यात् ।। ' इति । **साहस्री.** ३४९.

* **यूपः** अग्नीषोमीये पशौ बैल्वः ब्रह्मवर्चसकामेन कर्तव्यः । **भा.** ३।६।३।१०, * यूपः उपशयः नाम एकादशिन्याम् । तत्र जोषणादयः संस्कारा न क्रियन्ते । छेदनादयस्तु तूष्णीं क्रियन्ते, नात्र पशुर्बध्यते । दक्षिणतस्तु भूमौ उपशेते । ७।३।१३।३३–३४, * यूपः ऐकादशिनेषु प्रतिपशु भिन्नः । ८।१।८।१५. * यूपः खलेवाली नाम साद्यस्क्रेषु ; खले कृषीवलैर्बलीवर्दबन्धनाय निखातो मेढिः, स एव यूपत्वेन ग्राह्यः । **वि.** १०।१।५, * यूपः खलेवाली साद्यस्क्रे । तत्र छेदनद्वारलोपात् यूपाहुतिर्लुप्यते । १०।१।५, * यूपः खलेवाली साद्यस्क्रे । तत्र पर्यूहणं परिदृंहणं परिषेकः अञ्जनं प्रोक्षणं इत्यादयो धर्माः कर्तव्याः, सार्थकत्वात्, अविरुद्धत्वात्, अदृष्टार्थत्वाच्च । जोषण–तक्षण–उच्छ्रयणानि तु न कर्तव्यानि । १०।२।३२–३३, * यूपः खलेवाली साद्यस्क्रे, तत्र स्थाण्वाहुतिर्नास्ति, अयूपात्मकत्वात् यूपीयाव्रश्चनस्थाणोरभावात् । १०।१।६, * यूपः खलेवाली साद्यस्क्रे । स च न खादिर एव, किन्तु यत्किञ्चिद्वृक्षजन्यः । १०।२।३१. * यूपः खादिर एव वाजपेये । **भा.** १०।७।१६।५१, १२।३।४।१४, * यूपः खादिरः नित्यश्च नैमित्तिकश्च अग्नीषोमीये पशौ । ४।३।३।५–७, * यूपः खादिरः पालाशो रौहितको वा ज्योतिष्टोमे पशुत्रयार्थे तन्त्रम् । ११।३।३।३, * ' यूपः खादिरो वीर्यकामस्य ' इति फलविधिः । ४।३।१।१, * यूपः ' खादिरे बध्नाति, पालाशे बध्नाति, रोहितके बध्नाति ' एकार्थाः सन्तो विकल्पन्ते खादिरादयः । २।२।६।१७.

**यूपश्चाकर्मकालत्वात् । ११।३।३।३।।**

( ज्योतिष्टोमे पशुत्रयार्थं किं भिन्ना यूपाः उत एक एवेति विचारे ) सिद्धान्तमाह । यूपः तन्त्रेण पशुत्रयार्थं एक एव स्यात् । अकर्मकालत्वात् पशुकर्मणः काले नासौ भवति, ' दीक्षासु यूपं छिनत्ति, क्रीते वा राजनि ' इति अन्यस्मिन्नेव काले विधानात् । तस्मात् ज्योतिष्टोमे पशुत्रयार्थं यूप एक एव ।

**एकयूपं च दर्शयति । ४ ।।**

ज्योतिष्टोमे पशुत्रयार्थं एकयूपं एकमेव यूपं दर्शयति । सवनीये पशौ ' त्रिवृता यूपं परिवीय ' इति परिव्याणं विदधाति । यूपभेदे तु चोदकेनैव परिव्याणस्य प्राप्तत्वात् न विधातव्यम् । **के.**

* यूपः छेदनस्य प्रयोजकः, स्वरुस्तु अनुनिष्पादी । ' यूपस्य स्वरुं करोति ' । **वि.** ४।२।१. * यूपस्तन्त्रेण ज्योतिष्टोमे पशुत्रयार्थम् । अग्नीषोमीय–सवनीय–अनुबन्ध्याः पशवः । यूपन्यायः । ११।३।३।३–४ . * यूपः ' दृष्टादृष्टसंस्कारगणः ' इति सांप्रदायिकाः । अत एव खादिरस्य कदरः प्रतिनिधिः संभवति । **भाट्ट.** १०।१।५. * यूपः न केवलेन छेदनेन भवति, किंतु प्रोक्षणादिभिः सर्वैः संस्कारैर्भवति । 'यूपं छिनत्ति' इति तु छेदनग्रहणं च मुख्यत्वात् प्रदर्शनार्थम् । **भा.** ११।३।४।६ . * यूपः परिधिरूपः पशुमत्सु चातुर्मास्येषु ' परिधौ पशुं नियुञ्जीत ' । **वि.** ९।२।१२, १०।३।३. * यूपः

परिधिरूपः मध्यमः स्थविष्ठः परिधिः । ( आश्वलायनश्रौतसूत्रे ९।२।४ 'परिधौ पशुं नियुञ्जन्ति' इति सूत्रम् । 'दक्षिणे परिधौ, उत्तरे वा पशुनियोगः कर्तव्यो न मध्यमे उपचारविरोधात्' इति वृत्तिः )। ( के. ) * यूपः पशोः अन्तरङ्गः, संनिपातित्वात् । भा. १२।२। ११। २७, * यूपः पालाशो ब्रह्मवर्चसकामस्येति फलविधिः । ४।३।१।१, * यूपो बैल्वः अन्नाद्यकामस्येति फलविधिः । ४।३।१।१ . * 'यूपः सप्तदशारत्निः वाजपेये' इति यूपद्रव्यगतं सप्तदशारत्निशब्दोदितं ऊर्ध्वमानम् । वि. ३।१।९, * यूपः साद्यस्केषु शास्त्रीयसंस्काररहितो गृह्यते 'साद्यस्केषु उर्वरा वेदिः, खलेवाली यूपः' इत्याश्वलायनः ( मूले तु सूत्रे 'साद्यस्केषु उर्वरा वेदिः, खल उत्तरवेदिः, खलेवाली यूपः' इति पाठक्रमः । ९।७ ) तत्र च छेदनद्वारलोपात् यूपाहुतिर्लुप्यते । १०।१।५. * यूपः साधारणः सर्वपशूनां ज्योतिष्टोमे । भा. ११।३।५।९. * यूपः सौमापौष्णे पशौ 'औदुम्बरो यूपो भवति' इति उपदिष्ट औदुम्बर एव यूपः । न चोदकप्राप्तखादिरादिः । वि. १०।७।१८, * 'आदित्यो यूपः' अत्र आदित्यस्य तेजस्वित्वेन गुणेन, घृताक्तस्य यूपस्य स्तुतिः क्रियते । 'यजमानो यूपः' अत्रापि ( चक्षुर्गम्योर्ध्वत्वगुणेन, ) यजमानत्वेन यूपः स्तूयते । १।४।१५. * कर्मसंयोगात् काष्ठस्य यूपता । नहि लोके यूप इति संज्ञातः कश्चिद् वृक्षोऽस्ति । यत्र ते संस्काराः स यूपः । तस्मात्, औदुम्बरो यूपो भवतीति संस्कारनिमित्तः । भा. १०।४। २२।४६, * खादिरादीनां हि काष्ठानां संस्कारैर्यूपः क्रियते छेदनादिभिः । न तु अन्येषाम् । १०।२।३१। ७०, * 'बैल्वो वा खादिरो वा पालाशो वा ( वाजपेयात् ) अन्येषां यज्ञक्रतूनां यूपा भवन्ति' । १२।३।४।१४. * 'यजमानो यूपः' अत्र यजमानत्वेन यूपः स्तूयते । वि. १।४।१५. * यूपाः एकादश औपवसथ्येऽहन्येव संमीयेरन् प्रकृतिवत् इति पूर्वपक्षः । दैक्षपशव्यं मध्यस्थयूपस्य उच्छ्रयणे कृते तेन सह अन्येषां दशानां कृतेऽपि उच्छ्रयणे तत्संस्काराः परे द्यवि प्रधानकाले एव कर्तव्याः इति सिद्धान्तः । संकर्ष. १।४।१९. * 'यूपं अर्धं अन्तर्वेदि मिनोति, अर्धं बहिर्वेदि' इति देशलक्षणा, न तु अन्तर्वेदि इति यूपाङ्गभावेन ज्योतिष्टोमे अग्नीषोमीये पशौ । यूपवेदिन्यायः । ३।७।६। १३-१४. * 'यूपं छिनत्ति' इत्युत्पत्तिवेलायां 'खादिरे बध्नाति' इत्यादिविनियोगवेलायां च अनवगतमपि यूपत्वं यत् पशुबन्धार्थं खादिरादिः छेदनादिसंस्कृतः स यूपः इति विपरीतवचनव्यक्त्यालोचनया पश्चादवगम्यते । सु. पृ. ११०२-०३. * यूपं यजमानो नावसृजेत् अञ्जनादिपरिव्याणान्तम् । वि. ५।२।५. * 'आज्येन यूपमनक्ति' इत्यत्र आज्ये प्राकृताज्यधर्माः न कर्तव्याः ज्योतिष्टोमे अग्नीषोमीये पशौ । भा. ३।८। १६।३१, * 'त्रिवृता यूपं परिवीय' इति द्वितीयं परिव्याणं त्रिवृता विदधाति सवनीये पशौ । ११।३। ३।४, * 'दीक्षासु यूपं छिनत्ति क्रीते वा राजनि' । ११।३।३।३, * 'यूपायाज्यमानाय' इत्यत्र यूपशब्दे नोहः पाशुकचातुर्मास्येषु परिधौ यूपधर्मानुष्ठाने । ९।२। १३।४१-४३. * यूपादुन्मोचनादिः प्राणवियोगान्तः एकः पदार्थः पशौ । संकर्ष. १।१।४. * यूपस्य अग्नीषोमीयपशौ खादिरत्वं नित्यं काम्यं च । 'खादिरे बध्नाति' इति नित्यत्वम्, 'खादिरं वीर्यकामस्य यूपं कुर्वीत' इति काम्यत्वम् । भा. ४।३।३।५-७, * 'यूपस्यान्तिके अग्निं मथित्वा यूपाहुतिं जुहोति' अत्र मन्थनं विवक्षितम्, अविवक्षितमन्तिकम् । मन्थनं विधीयते नान्तिकम् । ११।२।७।२७, २९. * 'यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोति' तत्र यावता व्यवधानेन यूपाः दृष्टिगोचरा भवन्ति तावति देशे अग्निं संस्थाप्य, तत्रैकस्मिन्नेव देशे यूपैकादशिन्यां तन्त्रेण आहुतिः कर्तव्या । वि. ११।२।७. * यूपस्य खादिरस्य वाजपेये नियमः, पुनः श्रवणात् । भा. १०।७।१६।५१-५७. * यूपस्य पञ्चारत्नित्वादि परिमाणं उपरं वर्जयित्वा ज्ञेयम् । संकर्ष. १।४।८. 'यूपादौ पञ्चारत्नित्वादि परिमाणं०' इत्यत्र द्रष्टव्यम् । * यूपस्य पञ्चारत्नित्वादि परिमाणं उपरेण सहेति पूर्वपक्षः । खातादूर्ध्वमेवैतत् परिमाणं इति सिद्धान्तः । एवं औदुम्बर्यामपि । संकर्ष. १।४।८, * यूपस्य पञ्चारत्नित्वादि यजमानस्थैवारत्निर्ग्राह्यः, न यस्य कस्यचित् । 'यजमानेन संमितः' इति वचनान्तरैकवाक्यत्वात् । १।४।९., * यूपस्य परिमाणं एकादित्रयस्त्रिंशदरत्नयः विकल्पिताः । १।४।२६, * यूपस्य परिव्याणं ऐकादशिन्याम्, द्वाभ्यां द्वाभ्यां रशनाभ्यां एकादशकृत्वः अग्निष्ठः परिवीयेत । १।४।१२-१५, * यूपस्य परिव्याणम्, वैकृतद्वैरशन्ये एकां विहितस्थले परिवीय इतरा यथावकाशम्, इति प्राप्ते, युगपदुभाभ्यां परिव्याणं प्रकृतिवत् इति सिद्धान्तः । १।४।१४. * यूपस्य परिव्याणे, अध्वर्योः करणमन्त्रः 'परिवीरसि' इति । होतुः क्रियमाणानुवादी मन्त्रः 'युवा सुवासाः' इति ज्योतिष्टोमे अग्नीषोमीये पशौ । तौ च कुण्डपायिनामयने प्राप्तौ । भा. ३।८।१०।२१. * यूपस्य परिव्याणे, ऐकादशिन्यां 'परिवीरसि' इति आध्वर्यवमन्त्रस्यावृत्तिः । संकर्ष. १।४।१६. * यूपस्य पश्वङ्गत्वम् । वा. ३।७।६।१३ पृ. १०८३. * यूपस्य पश्वपूर्वप्रयुक्तत्वमेव, न तु ज्योतिष्टोमपरमापूर्वप्रयुक्तत्वम् । तेन ज्योतिष्टोमानङ्गभूतपशुषु उपाकरणादीनामूहः फलं अग्नीषोमीयधर्मातिदेशश्च । भाट्ट. ९।१।२ वर्णके २. * यूपस्य प्राकृतस्य, प्राकृतपशुनियोजनानुवादात् विहितेन परिधिना बाधः सौमिकचातुर्मास्येषु । भा. १०।३।३।१८-२२. * यूपस्य यूपयोः यूपानां वा लौकिके स्पर्शे प्रायश्चित्तं मन्त्रविशेषपाठः । यद्येकं यूपमुपस्पृशेत्, 'एष ते वायो' इति ब्रूयात्, यदि द्वौ 'एतौ ते वायू' इति, यदि बहून् 'एते ते वायवः' इति । भाट्ट. ९।३।३, * यूपस्य लौकिके स्पर्शे प्रायश्चित्तं न वैदिके अञ्जनोच्छ्रयणादिकालिके । 'एष ते वायो' इत्यादिमन्त्रपाठः प्रायश्चित्तम् । सूत्रभाष्यस्वारस्यात् यूपकार्यापवर्गोत्तरमेव क्रतोः बहिः प्रायश्चित्तमिदं पुरुषार्थम् । वार्तिकस्वारस्यात् तु क्रतुमध्यगतलौकिकस्पर्शेऽपि । 'यूपचित्याद्युपस्पर्शने स्नायात्' इति स्मृतिः । ९।३।३. * यूपस्य विशाखत्वं पशुनियोजनस्थाने एव कार्यार्थत्वात् । न तु अग्रभागे अदृष्टार्थत्वाभावात् । ( आपस्तम्बस्तु- 'विशाखो यूप इति यदूर्ध्वं रशनायास्तद्विशाखम्, यद्वा उपरि उभे शाखे अष्टाश्री सचषाले स्याताम्' इति ) । संकर्ष. १।४।४. * यूपस्य स्वरुस्तन्त्रं ज्योतिष्टोमे पशुत्रयस्य । भा. ११।३।५।८-१२. * 'यूपस्य स्वरुं करोति' इति । यूपस्येति अवयवलक्षणार्था षष्ठी । यूपावयवः स्वरुः । वा. ४।२।१।३.

## यूपानां अग्निष्ठभिन्नानां मानं सौत्येऽहनि ॥

ते च एकादश यूपाः औपवसथ्येऽहन्येव संमीयेरन् प्रकृतिवत् । इति प्राप्ते, अङ्गानां प्रधानकालत्वात् सद्यः सुत्यायामेव तेषां संमानम् । प्रकृतौ पशुत्रयस्य तन्त्रभूतो यूपोऽग्नीषोमीयपश्वर्थत्वेन पूर्वेद्युः संमितोऽप्यर्थवशेनान्ये यूपा परेद्युरेव संमातव्याः । औपभृताष्टगृहीतस्य प्रकृतावेकपात्रत्वेऽपि पशावर्थवशेनैव पात्रविभागदर्शनात् । अत एव 'अग्निष्ठमेतदहरुच्छ्रयेयुरग्निष्ठे हि तदहरालभ्यमानो भवति' इत्यादिना मध्यस्थयूपस्यैवोच्छ्रयणे दैक्षपश्वालम्भं हेतूकृत्य, तेन सहान्येषां दशानां कृतेऽप्युच्छ्रयणे, तत्तत्संस्काराणां परे द्यवि, प्रधानकाले एव करिष्यमाणतया 'तनुच्छ्रितानग्रा इव मुषित इवोत्तिष्ठेयुः' इति निन्दाऽऽम्नानं संगच्छते । संकर्ष. १।४।१७.

* यूपानां अञ्जनादिपरिव्याणान्तेनानुसमयः, वचनात् । भा. ५।२।५।९. * यूपानां भूयसां परिव्याणे, 'युवा सुवासाः' इति हौत्रमन्त्रस्य तन्त्रमेव नावृत्तिः । संकर्ष. १।४।१६. * यूपानां यत्र एकादशिनी, तत्र यूपाहुतिः तन्त्रेण कर्तव्या । वि. ११।२।७, * यूपे उपशयाख्ये परिव्याणादियूपधर्माणां नातिदेशः । भूमावेवासौ शेते । ७।३।१३.

## यूपे एकयूपं मिनोतीति संख्याविधिः ॥

साग्निचित्ये विकृतिक्रतौ श्रुतम् 'स्वर्गाय वा एष लोकाय चीयते यदग्निर्वज्र एकादशिनी यदग्नावेकादशिनीं मिनुयाद्वज्रेणैवैनं स्वर्गाल्लोकादन्तर्दध्याद्यन्न मिनुयात्स्वरुभिः पशून् व्यर्धयेदेकयूपं मिनोति, नैनं वज्रेण स्वर्गाल्लोकादन्तर्दधाति न स्वरुभिः पशून् व्यर्धयति' इति । अत्र प्रकृतितो यूपैकादशिन्या एकयूपस्य च पक्षतः प्राप्तौ यद्येकयूपो नियम्यते, तर्हि पाशुकजाघनीवाक्यन्यायेनैव इतरनिवृत्तिसिद्धेः, ऐकादशिनप्रतिषेधो व्यर्थः स्यात् । अतः पशुनियोजनाक्षिप्तकाष्ठसंमानस्यैकयूपमित्यनुवादः,

अनुवादे च गौणी न दोषः । प्रतिषेधश्च यूपसामान्यस्यैव । अप्राकृतो वा यूपो विधीयते इति न यूपशरीरघटकातिरिक्ता धर्मा भवन्ति । **इति प्राप्ते,** यदञ्जावित्यंशेन निषेधस्येव यत्र मिनुयादित्यंशेन विधेरपि प्रतीतेर्भावाभावयोश्चैकस्मिन् प्रयोगे असंभवात्तदुभयसमाधित्सयैव प्रवर्तमानो विधिस्तानेव यूपानुद्दिश्य संख्यामात्रं विकृतं विदधाति । ' एकां सामिधेनीमन्वाह ' इतिवत् । अत एव नैनमिति वाक्यद्वये नोभयसमाधिर्युज्यते । **संकर्ष.** १।८।१६.

* यूपे– एकयूपे एकादश पशवो यदा नियुज्यन्ते तदा एकस्यैव पशोः समञ्जनं पूर्वस्मिन् पक्षे, सर्वेषां सिद्धान्ते । **भा.** ४।४।१०।२८, * यूपे नियोजनं पशुधर्मः । ३।६।७।१८. * यूपे परिधिरूपे, ' परिधौ पशुं नियुञ्जीत ' इति गुणविधिरयं न कर्मान्तरम् । **वि.** १०। ३।३, * यूपे परिधिरूपे परिधिधर्माः अविरुद्धाः यूपधर्माश्च कर्तव्याः न केवलं परिधिधर्मा एव । १२।२। १०–११, * यूपे परिधिरूपे पशुनियोजनं पशुमत्सु चातुर्मास्येषु । ९।२।१२, * यूपे परिधिरूपे ' यूपायाज्यमानाय ' इत्याद्यञ्जनप्रैषे ' परिधयेऽज्यमानाय ' इत्यूहो न कर्तव्यः । ९।२।१३, * यूपे परिधिरूपे, स्वरूपविरुद्धाः तक्षणोच्छ्रायादयो न कर्तव्याः । अञ्जनादयश्च कर्तव्याः । ९।२।१३.

**यूपे विशाखेऽपि यूपधर्माः शाखयोर्भेदेन कार्याः ॥**

शाखायामेव नियोजनाम्नानात् खलेवालीवत् तस्या अयूपत्वान्न तत्र यूपधर्माः कर्तव्याः । **इति प्राप्ते,** धर्माणां पशुनियोजनरूपकार्यार्थत्वात् खलेवाल्या अपि स्वरूपाविघातकाञ्जनादीनामिष्टत्वाच्च भवन्त्येव धर्माः । **संकर्ष.** १।४।५.

**यूपे विशाखे ' दिवमग्रेण ' इत्यत्र ' दिवमग्राभ्यां ' इत्यूहः कार्यः ॥**

' दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिंसीः ' इति मन्त्रस्य द्युलेखनान्तरिक्षहिंसयोरसंभवेन असमवेतार्थत्वान्न विशाखे ऊहः । **इति प्राप्ते,** अग्रमध्यशब्दयोरसमवेतार्थत्वाभावाद् अग्राभ्यामित्यादिरूहः कार्य एव । **संकर्ष.** १।४।७.

**यूपे विशाखे नियोजनस्थानस्यैव भेदः ॥**

' मैत्रं श्वेतमालभेत वारुणं कृष्णमपां चौषधीनां च संधावन्नकामः ' इति प्रकृत्य श्रुते ' विशाखो यूपो भवति ' इति वाक्ये विशाखत्वस्य श्लक्ष्णाग्रत्वादिवद्दृष्टार्थत्वादग्रभागे द्वे शाखे यूपस्य संपाद्ये । **इति प्राप्ते,** वारुणप्रघासिकविहारद्वयवत् कार्यार्थत्वे संभवत्यदृष्टार्थत्वायोगात् पशुनियोजनस्थाने एव शाखावान् यूपः संपाद्यः । अत एव ' द्वे ह्येते देवते समृद्ध्यै ' इति वाक्यशेषे देवताभेदेन यूपद्वित्वानुग्रहोक्तिः कार्यार्थत्वे एव युज्यते । ' विशाखे यूपे त्रैता आलभ्यन्ते ' इत्येतद्वाक्यशेषे ' त्रैतानां प्रथममाश्विनं कामाय मध्यमः ' इत्यादिना शाखात्रये पशुबन्धनोक्तिरपि युज्यते । **संकर्ष.** १।४।४.

**यूपे विशाखता उपरादूर्ध्वं कतिपयाङ्गुलपरिमितभागे एव न तु नाभिदघ्नादूर्ध्वम् ॥**

रशनापरिव्याणार्थं नाभिदघ्नं स्थलमवशेष्य तदूर्ध्वमेव शाखाभेदः कार्यः । **इति प्राप्ते,** शाखास्वेव परिव्याणस्यावश्यकत्वात् उपराद्बहिः कतिपयाङ्गुलोर्ध्वमेव विशाखता । **संकर्ष.** १।४।६.

* यूपे स्थाण्वाहुतिः । अग्नीषोमीयपशुप्रकरणे ' स्थाण्वाहुतिं जुहोति ' ' वनस्पते शतवल्शो विरोह इत्याव्रश्चने जुहोति ' । यूपे वृक्णे सति अवशिष्टं वृक्षमूलं स्थाणुः तत्र आहुतिः । इयं यूपसंस्कारार्था स्थाण्वाहुतिः अयूपात्मिकायां खलेवाल्यां न भवति । **वि.** १०।१।६.

* **यूपाङ्गं** रशना ज्योतिष्टोमे । रशनाऽधिकरणम् । ४।४।९।२२–२४. * ' यूपाङ्गं वा तत्संस्कारात् ' ( ४।४।९।२३ ) । नहि एषा ( रशना ) साक्षात् पशुसंबन्धिनी, किं तर्हि ' यूपाङ्गं वा तत्संस्कारात् ' इति वक्ष्यति । **वा.** ३।६।१०।३१. * **यूपाङ्गस्य** परिव्याणस्य अपि छेदनकालिकस्य पशुकाले उत्कर्षः । **संकर्ष.** १।४।२१.

* **यूपाञ्जनं** अग्नीषोमीयपशौ ' आज्येन यूपमनक्ति ' आज्यमसंस्कृतमत्र, आज्यशब्दस्य जातिवाचकत्वात् । **वि.** १।४।८. * **यूपाञ्जने** आज्ये संस्कारा न क्रियन्ते । **टुप्.** १०।१।२।४ पृ. १८०४.



* **यूपाञ्जनाज्ये** पशुगते दर्शपूर्णमासगताज्यनाम्ना धर्माणां नातिदेशः । **भा.** ७।३।७।१८.

* **यूपाधिकरणम्** ( दीक्षासु यूपमात्रापकर्षः ) । ५।१।१८।२७. ' यूपकर्मन्यायः ' इत्यत्र द्रष्टव्यम् । * अग्नीषोमीयप्रणयनवत् प्रयोगभेदाभावात् अभिवासनविचारस्य **यूपाधिकरणेन** अगतार्थत्वं सूचितम् । **सोम.** ५।२।१६.

* **यूपावटबर्हिषि** दार्शिकबर्हिर्धर्माभावः । अतः दर्शपूर्णमासगतबर्हिर्धर्माणां नातिदेशः । **भा.** ३।८। १६।३१, * यूपावटबर्हिषि पशुगते, दर्शपूर्णमासगतबर्हिःशब्दः धर्मान्नातिदिशति । ७।३।७।१८, * यूपावटबर्हिषि प्राकृतबर्हिर्धर्माः न कर्तव्याः ज्योतिष्टोमे अग्नीषोमीये पशौ । ३।८।१६।३१. * यूपावटबर्हिषि प्रोक्षणस्य निवृत्तिः । **टुप्.** १०।१।३।५.

* **यूपावटस्तरणं** असंस्कृतेन बर्हिषा, ' बर्हिषा यूपावटमवस्तृणाति ' । अत्र बर्हिःशब्दो जातिवाची, न संस्कारवाची । तेन बर्हिःसंस्काराणां छेदनादीनां नात्र प्राप्तिः । **वि.** १।४।८, ३।८।१७–१८, ७।३।७.

* **यूपावटस्तरणन्यायः ।** यो यूपावटस्तरणन्यायः स इहापि । न तु अनेन न्यायेन यूपावटस्तरणे अध्वर्युः कर्ता न प्राप्नोति । **टुप्.** १०।२।१५।८४.

* **यूपावटस्तरणबर्हिः** दर्शपूर्णमासगतबर्हिषो न विकृतिः इति तद्धर्माणां नातिदेशः । **वि.** ७।३।७.

**यूपावटस्तरणबर्हिर्न्यायः ।** अग्नीषोमीये पशौ यूपावटस्तरणबर्हिः यूपाञ्जनाज्यं च लौकिकम् ॥

**निर्देशात्तु विकृतावपूर्वस्यानधिकारः । ३।८। १६।३१ ॥**

**भाष्यम्—** ज्योतिष्टोमे पशुरग्नीषोमीयः ' यो दीक्षितो यदग्नीषोमीयं पशुमालभते ' इति । तत्र श्रूयते ' बर्हिषा यूपावटमवस्तृणाति ' ' आज्येन यूपमनक्ति ' इति । तत्र संशयः, किं तयोराज्यबर्हिषोः आज्यबर्हिर्धर्माः प्राकृताः कर्तव्या उत नेति । किं प्राप्तम् ? कर्तव्या इति । कुतः ? वाक्यं हि बर्हिर्मात्रस्य आज्यमात्रस्य च धर्माणां विधायकम् । तदिहापि वाक्यं चोदकेन प्राप्तम् । न चैतत् बर्हिराज्यं निष्प्रयोजनम् । तस्मात् अत्र धर्माः क्रियेरन् इति । **एवं प्राप्ते, ब्रूमः ।** निर्देशात् विकृतावपूर्वस्यानधिकारः । निर्दिष्टा एते धर्माः प्रकृतौ, यत्र प्रधानस्योपकुर्वन्ति प्राकृतकार्ययोः आज्यबर्हिषोः, ये च प्रधानस्योपकारिणो धर्माः ते इहातिदिश्यन्ते । प्रधानं हि चोदकोऽपेक्षते न धर्मान् । प्रधानस्य हि चोदकेन सामान्यम् , न धर्माणाम् । अपि च, नान्यार्थं इति ज्ञातेन संनिहितेनापि एकवाक्यता भवति, अन्यसंबन्धोपपत्तौ सत्याम् । यथा भार्या राज्ञः, पुरुषो देवदत्तस्येति । किमङ्ग पुनर्विप्रकृष्टेन । निर्ज्ञातं खलु अङ्गत्वं प्रधानापेक्षायां भवति । केवलमिहातिदेशः क्रियते । पदार्थापेक्षायां अङ्गत्वमपि साधयितव्यं स्यात् । धर्माश्चापेक्ष्यमाणाः साधारणा भवेयुः । तथोहो नावकल्पेत । लिङ्गविशेषदर्शनाच्च व्यवतिष्ठेरन् धर्माः । तत्र दर्शनं नोपपद्यते, ' वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने' इति, तथा ' न पिता वर्धते, न माता, न नाभिः, प्राणो हि सः ' इति । तस्मात् यद्द्वारा प्रकृतौ कृताः, तद्द्वारैव विकृतौ, नान्यद्वारा । न च यूपावटस्तरणं प्रकृतावस्ति, यूपाञ्जनं वा । तस्मान्न तत्र प्राकृता धर्मा भवेयुः अपूर्वत्वात् ।

**वा —** यद्ययं अङ्गोपदेश एव अनुषङ्गेण साधारणः स्यात् , यदि च शास्त्राणि अतिदिश्येरन् ततः शास्त्रार्थः प्रकृतिवत् विकृतिष्वपि कल्प्यमानः सर्वार्थत्वेनावधार्यते, कार्यप्राप्तिपुरःसरस्तु धर्मातिदेश इष्टः । तत्र यागगतेन व्यापारेण गृहीतेन आत्मसिद्ध्यर्थं नियमादृष्टद्वारभूतानि दृष्टानि, अदृष्टानि च प्रयोजनानि गृह्यन्ते ; तानि च निर्ज्ञातपरिमाणान्येव प्राप्नुवन्ति । तैश्च आत्मसिद्ध्यर्थं पदार्थाः प्राप्यमाणाः स्वात्मनियता एव प्राप्यन्ते । न च यूपावटस्तरणं नाम बर्हिषः कार्यं प्रकृतौ विज्ञातम् , येन बर्हिः तद्धर्मा वा गृह्येरन् । यैस्तु वेदिस्तरणादिभिर्गृह्यन्ते न तेषां यूपावटस्तरणमन्तरेण किंचिन्नोपपद्यते इति न तदर्थं प्राप्यन्ते । तस्मादिह अपूर्वस्यानधिकार इति । शास्त्रातिदेशश्च नात्र ; शास्त्रापेक्षायां हि सर्वमभिनवं प्रकृतिवत् पुनः कल्पयितव्यं स्यात् । दूरस्थसंबन्धादि-

क्लेशश्च स्थित एव । शास्त्रातिदेशात् सामानविध्याच्च पशुधर्माणां मध्ये अग्नीषोमसंस्कारार्थः पशुपुरोडाशो देवतान्तरे न प्राप्नोति । तस्योहस्य च दर्शनं विरुध्येत । तस्मादुपकारातिदेश इति ।

**शा**— यस्मात् प्रकृतौ अङ्गप्रधानार्था बर्हिर्धर्माः, तस्मात् विकृतावपि यूपावटस्तरणबर्हिषि कर्तव्याः । इति प्राप्ते, सिद्धान्तसूत्रम् ' **तन्निर्देशात्तु विकृतावपूर्वस्यानधिकारः** ' इति । प्रकृतौ यत् बर्हिःकार्यं तत्प्रयुक्ता बर्हिर्धर्माः कार्यद्वारेण विकृतिं गच्छन्ति, न स्वरूपतः । तेन प्राकृतकार्यसाधने एव धर्माः विकृतौ कर्तव्याः । न च यूपावटस्तरणं प्राकृतबर्हिःकार्यम् । अतो न तत्साधने बर्हिर्धर्माः ।

**सोम**——अतिदेशविषयेयं चिन्ता प्रसङ्गात् **संगता** इत्याहुः । ( प्रथमसूत्रे ) प्रकृतौ अङ्गप्रधानार्थत्वमिह पूर्वपक्षहेतुः, प्रकरणाविशेषात् इति हेतुश्च प्रकृतौ अङ्गप्रधानार्थत्वेन अन्वितः । धर्माणां प्रकृतौ कार्यविशेषसाधनार्थत्वेन निर्देशात् अपूर्वस्य अप्रकृतकार्यस्य यूपावटस्तरणबर्हिर्यूपाञ्जनार्थाज्यादेः अनधिकारः धर्मसंबन्धाभावः इति द्वितीयसूत्रार्थः ।

**वि**— ' धर्माणां प्रकृतिस्थानां विकृतावतिदेशतः । प्राप्तिर्विशेषतो वा, ऽद्यो विशेषस्यानिरूपणात् ॥ , प्रकृतौ कार्यकृद्धर्मा विकृतौ स्युर्न चेतरे । यूपावटास्तृतिः कार्यं नहि प्राकृतबर्हिषः ॥ '

**भाट्ट**—— बर्हिर्धर्माणां प्रकृतौ अङ्गप्रधानसाधारण्यमुक्तम् ( ३।७।१ ) । अतश्च दैक्षपशावपि ' बर्हिषा यूपावटमवस्तृणाति ' इति विहिते यूपावटस्तरणबर्हिष्यपि दार्शिका बर्हिर्धर्मा भवेयुः । इति प्राप्ते, प्रकृतौ ' बर्हिषि हवींष्यासादयति ' इति वचनात्, अङ्गप्रधानसाधारणहविरासादनार्था एव बर्हिषि धर्माः, न कार्यमात्रार्थं इत्युत्तराधिकरणे वक्ष्यते । यद्यपि वा परिभोजनीयादिवत् प्राकृतकार्यमात्रार्थत्वं स्यात्, तथापि न अप्राकृतकार्ये यूपावटस्तरणार्थे बर्हिषि भवेयुः । उपकारगृह्यभावेनैव पदार्थानामतिदेशेन विकृतौ अप्राकृतकार्यकारित्वकल्पनानुपपत्तेः । न हि प्रकृतौ येन केनचित् संबन्धेन अपूर्वसंबन्धिबर्हिष्ट्वं उद्देश्यतावच्छेदकम्, येन अप्राकृतस्यापि तत्संबन्धात् धर्मग्राहकत्वं शङ्क्येत, संबन्धविशेषग्राहकप्रमाणबलेन तावद्विशेषाणामेव प्रवेशेन अनुपस्थितसामान्यस्य उद्देश्यतावच्छेदककोटौ अप्रवेशात् । न च तथापि यूपावटस्तरणभावनायाः धर्माकाङ्क्षायामेव फलचमसन्यायेन ( ३।५।१२ ) धर्मग्राहकत्वम्, लौकिकधर्मग्रहणेनापि आकाङ्क्षानिवृत्तौ, उपदेशातिदेशयोरभावात् । फलचमसे तु स्थानापत्त्या भक्षानुवादबलाच्च अतिदेशकल्पनमिति विशेषः ।

**मण्डन**—— ' यूपाञ्जनाज्ये न भवन्ति धर्माः । '

**शंकर**—— ' न यूपावटबर्हिषः । ' ( बर्हिर्धर्मः ) ।

* आतिथ्यायां बर्हिः पुनः संनह्य उत्तरवेदिसमीपे स्तीर्यते । तदा च संनहनहरणमन्त्रयोः अन्यकार्यत्वात् कार्यप्रयुक्तत्वाच्च न प्रसङ्गः । **यूपावटस्तरणबर्हिर्न्यायेन** इति भावः । **शा.** १२।१।२१. * विकृतिविशेषे कानिचित् अप्राकृतानि स्तोत्राणि विहितानि, तेषु च यूपावटस्तरणबर्हिर्न्यायेन न प्राकृतानां रथंतरादिसाम्नां ऋचां वा प्राप्तिः, प्राकृतस्तोत्रविशेषेष्वेव तेषां निबद्धत्वात् । **भाट्ट.** ९।२।७, * सारस्वते सत्रे ' अग्नये कामायाष्टाकपालं० ' इति । न च प्रकृतौ द्वादशाहे आर्त्विज्य एव यजमानविधेः तस्य चाङ्गमात्रविषयत्वात् कामेष्ट्याद्यङ्गेष्वपि तत्प्राप्त्यविरोधः इति वाच्यम्, प्राकृतऋत्विक्कर्तव्यपदार्थेषु यजमानकर्तृकत्वप्राप्तावपि यूपावटास्तरणबर्हिर्न्यायेन अप्राकृतकार्यापन्नायां कामेष्टौ तत्प्राप्त्यनुपपत्तेः । १०।२।१४.

**☞ यूपादौ अरत्न्यादिपरिमाणं यजमानगतमेव ॥**

पुरुषव्यक्तिभेदेनारत्नितारतम्याद् अनियमेन यस्य कस्याप्यरत्निर्ग्राह्यः प्रयोगप्राग्भावात् । इति प्राप्ते, ' यजमानेन संमितः ' इति वचनान्तरैकवाक्यतया तदीयारत्निभिः संमित इत्येव नियमनान्न तथा । **संकर्ष.** १।४।९.

**☞ यूपादौ पञ्चारत्नित्वादि परिमाणं उपरं वर्जयित्वा ज्ञेयम् ॥**

' पञ्चारत्निं यूपं वृश्चति ' ' यजमानसंमितौदुम्बरी भवति ' ' नाभिदघ्नं परिव्ययति ' इत्यादौ यावान्भागः



उपरान्तर्निखन्यते तावता सहैवैतानि परिमाणानि ' चतुर्हस्ता स्थूणा ' इत्यादिवाक्येषु तथा दर्शनात् । पुरुषस्य नाभिर्यथा मध्यभागस्तथा यूपमध्यभागस्य तेन बोधाच्च । इति प्राप्ते, खातादूर्ध्वमेवैतानि परिमाणानि । ' चतुर्हस्ता स्थूणा ' इत्यादिवाक्येषु तथा दर्शनात् पुरुषनियोजनादिकार्यार्थत्वात् । खातोपरिभाग एव नियोजनात् । परिव्याणदशायां खातस्याप्रकृतत्वेन स्वनाभिपरिमाणस्य तदूर्ध्वमेव संभवात् । एकविंशत्यरत्न्यादिपरिमाणान्तरपक्षे मध्यभागे परिमाणासंभवात् च । **संकर्ष.** १।४।८ .

* **यूपाहुतिः** अग्नीषोमीये पशौ, ' यूपस्यान्तिके अग्निं मथित्वा यूपाहुतिं जुहोति ' इति । **भा.** १०।१।५।९, ११।२।७।२६, * **यूपाहुतिः** एकादशिन्यां तन्त्रं अन्तिकदेशस्याविवक्षितत्वात् । १०।१।६।१०-११, * यूपाहुतिः यूपैकादशिन्यां तन्त्रम् । सा हि क्रियमाणा कस्यचिद्यूपस्यान्तिके भवति, सर्वसाधारणस्यान्तिकस्य दुर्लभत्वात् तदेकस्य कस्यचित् यूपस्यान्तिके क्रियमाणं सर्वयूपार्थं भवति । ११।३।११।२९, * यूपाहुतिः साद्यस्के खलेवाल्यां नास्ति । १०।१।५।९. * यूपमाप्तुं गमिष्यता पुरुषेण, स्रुवेण आहवनीये ' उरु विष्णो विक्रमस्व ' इत्यादिमन्त्रेणाहुतिर्होतव्या, सा **यूपाहुतिर्नाम** । ' यूपमच्छैष्यता होतव्यं ' ' उरु विष्णो विक्रमस्वेति स्रुवेणाहवनीये यूपाहुतिं जुहोति ' इति आपस्तम्बः । **वि.** १०।१।५. * ' यूपस्यान्तिके अग्निं मथित्वा **यूपाहुतिं** जुहोति ' । **भा.** ११।२।७।२६. * **यूपाहुतीनां** यूपैकादशिन्यां तन्त्रम् । ११।२।७।२७-३०. ' यूपैकादशिन्यां यूपाहुतीनां तन्त्रम् ' इत्यत्र द्रष्टव्यम् ।

**☞ यूपाहुतिन्यायः** । साद्यस्के खलेवाल्यां यूपाहुतिः न कर्तव्या ॥

**कर्म च द्रव्यसंयोगार्थमर्थाभावात् निवर्तेत तादर्थ्यं श्रुतिसंयोगात् । १०।१।५।९ ॥**

**भाष्यम्**—— तस्मिन्नेव ज्योतिष्टोमे पशुरग्नीषोमीयः । ' यो दीक्षितो यदग्नीषोमीयं पशुमालभते ' इति । तत्र इदमाम्नायते ' यूपमच्छैष्यता होतव्यम्, न हि दीक्षितस्याग्नौ जुहोति, आज्यं चारणिं चादाय, यूपस्यान्तिकेऽग्निं मथित्वा, यूपाहुतिं जुहोति ' इति । साद्यस्के श्रूयते ' खलेवाली यूपो भवति ' इति । तत्रैषोऽर्थः सांशयिकः, किं साद्यस्के खलेवाल्यां यूपाहुतिः कर्तव्या, नेति । किं प्राप्तम् ? कर्तव्या, विधेः प्रकरणान्तरे अतिदेशात् सर्वकर्म स्यात् इति ( १०।१।१।१ ) । **एवं प्राप्ते, ब्रूमः** । कर्म चैतत् द्रव्यसंयोगार्थं यूपे एवमादिभिः संस्कारैर्भविष्यतीति क्रियते । यूपं प्राप्तुमेष्यतः एतत् श्रूयते । तेनास्य संस्कारस्य श्रुतिसंयोगेन यूपार्थता । अच्छ-शब्दो हि आप्तुं इत्यस्यार्थे वर्तते । न चात्र यूपेन प्रयोजनम् । अयूपे हि खलेवाल्यां पशुः बध्यते । तस्मात् तत्र यूपकरणार्था यूपाहुत्यादयः संस्काराः, अर्थलोपान्निवर्तितुमर्हन्तीति । तस्मान्नास्ति खलेवाल्यां यूपाहुतिरिति ।

**शा**—— ' यूपमाच्छैष्यता होतव्यं ' इति पाठः ।

**सोम**—— आच्छ इत्येतत् आप्तुं इत्यर्थे वर्तते । एतिस्तु गमने । आरम्भणीयायां स्वविधिसमये प्रकृत्यङ्गत्वेन अक्लृप्तत्वात् अकर्तव्यत्वेऽपि यूपाहुतेः क्लृप्तत्वात् इह कर्तव्यत्वं इत्युत्थितेः **संगतिः** । **सूत्रार्थस्तु**— कर्म चेदं यूपाहुतिलक्षणं यूपसंस्कारार्थम् । तादर्थ्यं च ' यूपमाच्छैष्यता ' इति श्रुतिसंयोगात् छेदनार्थगमनद्वारेति लुप्तार्थत्वात् न कर्तव्यमिति ।

**वि**—— ' यूपाहुतिः खलेवाल्यां कार्या नो वा, ऽतिदेशतः । कार्या, होमश्छेदनार्थो नाच्छेद्यायां स युज्यते ॥ ' छेदनद्वारलोपादाहुतिर्न विद्यते ।

**भाट्ट**—— साद्यस्के ' खलेवाली यूपो भवति ' इति श्रुतम् । तत्र यदि तावत् दृष्टादृष्टसंस्कारगण एव यूपः यदि वा तज्जन्यमदृष्टान्तरम्, यदि वा तादृशविशिष्टं काष्ठं सर्वथा तस्य न खलेवाल्या अभेदान्वयः, बाधात् छेदनादिसर्वसंस्काराभावेन तादृशादृष्टस्य खलेवाल्यामुत्पत्तौ प्रमाणाभावाच्च । अतस्तत्र जघन्ये यूपपदे यूपकार्यपशुनियोजनं लक्षयित्वा तत्र अयूप एव खलेवाली विधीयते । तदिह कार्यप्रयुक्तानां अञ्जनादीनां यूपधर्माणां प्राप्तौ, किं यूपाहुतिः कार्या न वेति चिन्तायाम्, दृष्टार्थत्वाच्छेदनादीनां धर्माणां लोपेऽपि आरादुपकारकतया तस्याः पशुनियोजनद्वारा परमापूर्वार्थत्वात् अञ्जनादिवत् करणम् । न च ' यूपमच्छैष्यता होतव्यम् ' इति वचने अच्छशब्दस्य

प्राप्तुं इत्यर्थत्वावगतेः, गमनार्थकत्वाच्च इण्धातोः, यूपं प्राप्तुं यद्गमनं तदर्थत्वस्य लट्श्रुत्या अवगतेः गमनस्य च प्रकृतौ छेदनार्थत्वात् यूपाहुतेरपि प्रकृतौ छेदनोद्देश्यकगमनार्थत्वप्रतीतेः खलेवाल्यां छेदनाभावेन अर्थलोपात् यूपाहुतेः बाध इति **वाच्यम्** । गमनस्य आनुषङ्गिकच्छेदनजनकत्वेऽपि 'यूपमच्छेष्यता' इति यूपप्राप्तिमात्रफलकगमनार्थत्वस्यैव प्रतीतेः । प्रकृतेऽपि खलेवाल्या यूपस्थानापन्नत्वात् तत्प्राप्त्युद्देश्यकगमनसंभवेन छेदनाभावेऽपि यूपाहुतेरुपपत्तेः । न हि खलेवाल्यां तत्प्राप्तिनिमित्तकगमनाभावः, यत्र यवक्षेत्रे खलेवाली तत्र शालाकरणार्थं गमनावश्यकत्वेन, तस्यैव तत्प्राप्त्युद्देश्यकत्वात् । 'परिधौ पशुं नियुञ्जीत' इत्यत्र परिधिच्छेदनार्थं गमनस्य आवश्यकत्वेन तत्र यूपाहुतेः भवन्मते आपत्तेश्च । **इति प्राप्ते,** न यूपाहुतिः पशुनियोजनप्रयुक्ता, अपि तु 'यूपमच्छेष्यता' इति वचनात् यूपत्वोत्पादिका छेदनादिवत् । यूपत्वं हि न पार्थसारथेरिव दृष्टादृष्टसंस्कारगणः, समुदायस्य समुदाय्यनतिरिक्तत्वेन अनेकशक्तिकल्पनापत्तेः । अतो लाघवात् आहवनीयादिपदवदेव अदृष्टान्तरे, तद्विशिष्टकाष्ठे वा यूपत्वं इत्युक्तम्, तदपि दीक्षाकालकर्तव्यकतिपयच्छेदनादिधर्मजन्यमेव, न तु अञ्जनादिजन्यमपि । अत एव तेषां यूपस्वरूपे आनर्थक्यात् अग्निसंमार्गादिवत् अपूर्वसाधनत्वलक्षणया पशुनियोजनार्थत्वमेव इत्युक्तं नवमे (९।२।१२।४१–४३)।

अतो यूपाहुतिरपि 'यूपमच्छेष्यता' इति लट्श्रुत्या यूपप्राप्तिफलकगमनार्था यूपच्छेदनानुकूलगमनार्था वा सती यूपत्वोत्पादिकैव । अत एव यूपाहुतिः इति समाख्याऽपि उपपद्यते । खलेवाल्यां च छेदनादीनामर्थलोपेन बाधात् सर्वसंस्काररूपसामग्र्यभावेन यूपत्वानुत्पत्तेः अर्थलोपादेव न यूपाहुतिः । एवं परिधावपि ।

**मण्डन**— 'यूपाहुतिर्नास्ति खलस्य मेढौ ।'

**शंकर** — 'यूपाहुतिर्न साद्यस्क्रे ।'

* **यूपोच्छ्रयणे** आध्वर्यवहौत्रमन्त्रयोः समुच्चय एव न विकल्पः । 'कर्तव्यं', 'करोमि' इति स्मृतिप्रकारस्य उभयत्र भिन्नत्वेन कार्यैक्याभावात् । अध्वर्युमन्त्रः 'उद्दिवं स्तभान०' इत्यादि । होतृमन्त्राः 'उच्छ्रयस्व वनस्पते०' इत्यादयश्चत्वारः । वि. १२।३।१६.

* **यूपोत्पत्तिकालः** अग्नीषोमीयपशौ, 'दीक्षासु यूपं छिनत्ति, क्रीते वा राजनि' न तु पशुकाले यूपस्योत्पत्तिरत्र । अत एव आधानवत् सर्वपश्वर्थत्वं यूपस्य । वि. ११।३।३.

* **यूपोपस्पर्शने** लौकिके एव प्रायश्चित्तं न वैदिके । भा. ९।३।३।९.

* **यूपैकादशिनी** अग्नौ नैव चोद्यते । वाचःस्तोमादिषु तु यूपैकादशिन्यां अस्य नित्यानुवादत्वात् रथाक्षमात्राण्येव यूपान्तरालानि भविष्यन्ति । **भा.** २।४।२।२६. * यूपैकादशिनी अहर्गणे । प्रकृतौ सर्वपशुसाधारणस्य छेदनादेरन्यकालत्वेन संमानस्यापि छेदनकाले एव प्राप्तौ वचनात् पशुकाले तावन्मात्रस्योत्कर्षेऽपि न तन्त्रता विरुध्यते । विकृतावपि तथैवोत्कृष्टं संमानं तन्त्रमेव । **संकर्ष.** १।४।२०. * यूपैकादशिनी चतुर्विंशतिप्रक्रमवेद्यग्रदेशे रथाक्षमात्रान्तरालानां एकादशानां यूपानां मातुमशक्यत्वात् व्याममात्राणि पक्षपुच्छानि भवन्ति इति च पक्षयोर्व्याममात्रत्वविधानात् . . . । सु. पृ. ९८४. * यूपैकादशिनी यत्र विहिता तत्र रथाक्षमात्रान्तरालता । **वा.** २।४।२।२६. * यूपैकादशिनी वाचःस्तोमादौ अस्ति । **सु.** पृ. ९९८. * **यूपैकादशिन्यां** अग्निष्ठादितरे यूपाः दक्षिणा उदक् च मातव्याः न प्राक्संस्थता । **संकर्ष.** १।४।२२.

**यूपैकादशिन्यां अग्निष्ठरशने यूपरशनाश्च तन्त्रम् ॥**

अग्नीषोमीयरशनायाः अन्यकालत्वात् अहर्गणे तन्त्रेणोपकारकत्वेऽपि सवनीयकालात्तु (कालस्य) कर्मकालत्वात् प्रत्यहमावर्तेत । यूपस्य सकृत् पशुकाले निखातस्य पुनर्निखननासंभवेऽपि रशनाभिः प्रतिदिनमेकैकया परिव्याणसंभवात् । **इति प्राप्ते,** यूपाङ्गस्य परिव्याणस्यापि पूर्वाधिकरणन्यायेन छेदनकालिकस्य पशुकाले उत्कर्षेऽपि तन्त्रताऽनपायात् न रशनाभेदे प्रमाणमस्ति । तेन अग्निष्ठरशने पक्षयूपरशनाश्च तन्त्रेणैवोपकुर्वन्ति । **संकर्ष.** १।४।१९.



* यूपैकादशिन्यां अञ्जनादिपदार्थेषु प्राप्तेषु अञ्जनादिना परिव्याणान्तेन अनुसमयः, न तु अञ्जनादीनामेकैकेन । 'अञ्जनादि यजमानो यूपं नावसृजेत् आपरिव्याणात्' इति वचनात् । **भा.** ५।२।५।७–९. * यूपैकादशिन्यां अञ्जनादिपरिव्याणान्तानुसमयः कर्तव्यः । एकस्मिन् यूपे समुदायं कृत्वा द्वितीये यूपे समुदायः कर्तव्यः इति । **वि.** ५।२।५ .

**यूपैकादशिन्यामपि रशनाद्वयेन युगपत् परिव्याणम् ॥**

वैकृतद्वैरशन्येऽप्येकां विहितस्थले परिवीयेतरा यथाऽवकाशम् । **इति प्राप्ते,** युगपदुभाभ्यां परिव्याणं प्रकृतिवत् । **संकर्ष.** १।४।१४.

**यूपैकादशिन्यां उपराणां दैर्घ्येण साम्यम्, न तिर्यक्त्वेन ।**

'उपरसंमितां मिनुयात् पितृलोककामस्य, मध्येन संमितां रशनसंमितां च मनुष्यलोककामस्य, चषालसंमितामिन्द्रियकामस्य' इत्यादिभिर्वचनैः कामनाभेदेन एकादशानामुपरादीनां विधीयमानं साम्यं परस्परप्रायपाठात् एकविधमेव स्यात् । **इति प्राप्ते,** वचनसार्थक्याय प्रायपाठमनादृत्यापि, अन्योन्यविलक्षणमेव स्वीकार्यम् । यूपपरिमाणतुर्यांशेन दैर्घ्यमुपरस्य विहितमस्ति । यूपस्य तु एकादित्रयस्त्रिंशदरत्नयो विकल्पिताः । तेन तद्भेदेन उपराणां परिमाणवैषम्ये प्राप्ते दैर्घ्येण साम्यं फलाय विधीयते, न तिर्यक्त्वेन । अवटान्तर्निखेयो यूपाधोभाग उपरम् । तस्य हि 'अतृण्णमुपरं भवति' इति तक्षणनिषेधेन तदसंभवात् । मध्यभागस्य त्रिव्यामरशनावेष्टनपरिमितत्वेन दैर्घ्यतः ऐकरूप्यस्य सत्त्वादेव तस्य रशनया पृथुत्वेनैव साम्यविधिः । एवं चषालेऽपि । **संकर्ष.** १।४।२४.

* यूपैकादशिन्यां एकादशो यूपः उपशयो नाम, नासौ उच्छ्रीयते, किंतु स भूमावेव शेते दक्षिणतः । अमन्त्रकच्छेदनादिकिंचिद्यूपधर्मवत्त्वेन तत्र यूपशब्दो गौणः । **वि.** ७।३।१३ .

**यूपैकादशिन्यां एकादशपशुयोजनं कापेय्या पद्धत्या अहीनेषु उत्कृष्यते, इतरा पद्धतिस्तु प्रकृतौ ॥**

आग्नेयसारस्वतसौम्यपौष्णबार्हस्पत्यवैश्वदेवैन्द्रामारुत – ऐन्द्राग्नसावित्रवारुणान् एकादश पशून् विधाय 'यामिमां प्रजा आपद्य चरन्ति सा वा एषैकादशिनी' इत्युक्त्वा ततो व्यत्यस्तपशून् प्रक्रम्य 'आग्नेयमग्निष्ठेऽभिहित ऐन्द्रमैन्द्राग्नं सारस्वतं सौम्यं वैश्वदेवं पौष्णं मारुतं बार्हस्पत्यं वारुणं च' विधाय श्रुतं 'तामेतां कापेया विदुस्तामेतामतिरात्रचरम आलेत ?' इति । अत्रातिरात्रचरमशब्दोऽहीनपरः । तस्यान्यतरतोऽतिरात्रत्वात् । न तूभयतोऽतिरात्रसत्रपरः । द्विविधामेकादशिनीं प्रकृत्य, 'तामेताम्' इत्याम्नानात् उभयोरप्यहीन उत्कर्षः । **इति प्राप्ते,** यामिमामित्यनेन प्रकृतिगामितया बहुकर्तृकत्वेन पूर्वस्या निर्देशादुत्तरस्याश्च कापेयपदेन कतिपयसंमतत्वकथनेन, तामेतामित्यनेनापि संनिहिताया एव परामर्शात्कापेय्या एवाहीनेषूत्कर्षः । यत्तु कल्पसूत्रं 'आग्नेयमभित ऐन्द्रौ' इति, तदैन्द्राग्नोभयस्य नामैकादेशमेलनेन निर्देशकमित्यविरुद्धम् । **संकर्ष.** १।४।२५.

* यूपैकादशिन्यां चोदकप्राप्ता यूपाहुतिः ज्योतिष्टोमे तन्त्रम् । ११।२।७।२६–२९.

**यूपैकादशिन्यां दशमैकादशयोर्व्यत्ययः अग्निकोणे दशमः, ऐशानकोणे एकादशः इति ॥**

यूपेषूदगपवर्गत्वविधानाद्वेदेः आग्नेयकोणमारभ्य ईशानान्ता यूपा अग्निष्ठतरे दश संमातव्याः । यद्वा अग्निष्ठाधारदेशस्य मुख्यस्येतरेष्वसंभवेऽपि तत्समीपवर्तिदेशपरित्यागे मानाभावात्, तदासन्नदेशस्य प्रधानपशुक्रमेणोपस्थितस्याविरोधाय द्वितीयं यूपमग्निष्ठाद्दक्षिणतो मीत्वा, तृतीयमग्निष्ठादुत्तरतो मिनुयात् । एवं चतुर्थपञ्चमादियुगलानि दक्षिणोत्तरयोर्मातव्यानि । 'उदगपवर्गा यूपा भवन्ति' इति वचनस्यैवमप्युपपत्तेः । एतेन 'यदाग्नेयश्च बार्हस्पत्यश्च सौम्यमभितो भवतः' इति लिङ्गमप्युपपद्यते । **इति प्राप्ते,** 'दक्षिणापवर्गाः पशवो भवन्ति' इत्याहत्य विधानेनेशानाद्याग्नेयान्तक्रमेण पशुनियोजने सिद्धे, तदङ्गेषु यूपेष्वपि प्रधानसंनिकर्षलाभेन तथैव संमाने प्रसक्ते,

प्रवर्तमानः उदगपवर्गत्वविधिः संभवत्संनिकर्षाविरोधेनैव नेतव्यः । तथा च पशुक्रमेणैव नव यूपा मीत्वा, दशमस्य स्थानमतिक्रम्य, वेद्यग्निकोणे दशमं मीत्वा, तदुदग्भागे एकादशं मिनुयात् । एवं सति द्वयोरेवोत्तमोपोत्तमयोः क्रमोपरोधः स्यादिति **भाष्यकारः** । यद्यपि यूपसंमानोत्तरमेव पशुनियोजनप्रवृत्तेः, उदगपवर्गतामाग्नेयादीशानान्तक्रमेणैव यूपेषु कृत्वा, पशून् यूपक्रमेणैव नव नियुज्य, दशमैकादशयोर्व्यत्यासेन नियोजनमपि संभवति, तथापि 'दशमोऽग्निष्ठाद्' इत्यादिलिङ्गदर्शनानुगुण्यात्तथोक्तम् । तदिदं लिङ्गदर्शनं न्यायोपोद्बलितमेतद्विरुद्धवचनाद्बलीयः सत्प्रकृतौ निविशते, इतरत्तु विकृत्यर्थम् । आचार्यैस्तु वाचनिकत्वाविशेषाद्विकल्प एव प्रकृतौ स्वीकृतः । **संकर्ष.** १।४।२३.

◉ यूपैकादशिन्यां परिव्याणे 'युवा सुवासाः' इति हौत्रमन्त्रः तन्त्रम् । **संकर्ष.** १।४।१५. 'यूपमन्त्रः यूपैकादशिन्यां०' इत्यत्र द्रष्टव्यम् । ◉ यूपैकादशिन्यां यूपानामन्तरालं रथाक्षमात्रम्, न तु प्रमाणानियमः, नापि वेदिसंमितपरिमाणेन विकल्पः, तत्र वेदेरेव वर्धनीयत्वात् । **संकर्ष.** १।४।२३-२४.

❀ **यूपैकादशिन्यां यूपाहुतीनां तन्त्रम् ॥**

**अन्ते यूपाहुतिस्तद्वत् । ११।२।७।२६ ॥**

**भाष्यम्**— ज्योतिष्टोमे यूपैकादशिनी, 'एकादश यूपान् छिनत्ति' इत्याम्नाता । अस्ति तु प्रकृतावग्नीषोमीये पशौ यूपाहुतिः । सा किं भेदेन कर्तव्या, उत तन्त्रमिति । किं प्राप्तम् ? अन्ते यूपाहुतिस्तद्वत् । यद्वत् नानादेवत्येषु वसाहोमो भेदेन, तद्वदियमपि भेदेन कर्तव्येत्यर्थः । कुतः ? 'यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोति' इति श्रूयते । बहूनां च यूपानां भिन्नान्यन्तिकानि । यस्यैव यूपस्यान्तिके न हूयेत तस्यैव तेन गुणेन वर्जनं स्यात् । तस्माद्भेदेन कार्यम् ।

**इतरप्रतिषेधो वा । २७ ॥**

अथवा नैव भेदेन कर्तव्येति । किं तर्हि ? तन्त्रम् । कस्मात् ? इतरप्रतिषेधोऽयं आहवनीयप्रतिषेधो नान्तिकविधिः । कथं ज्ञायते ? आहवनीये जुहोतीत्युत्सर्गात्सर्वहोमेष्वाहवनीयः प्राप्तः । तत्र, अग्निं मथित्वेति वाच्यम् । तदपि मन्थनं प्राग्वंशे कर्मणः प्रवृत्तत्वात् प्राग्वंशे प्राप्तम् । तत्रेदमपि वक्तव्यं यूपस्यान्तिकेऽग्निं मथित्वेति । उभयस्मिंश्चापि विधीयमाने वाक्यभेदः । मन्थनस्य स्वार्थपरार्थवद्भावात् । तस्मादन्यतरदविवक्षितं मन्थनमन्तिकं वा । तत्र च मन्थनं विवक्षितमविवक्षितमन्तिकमिति ब्रूमः । कुतः ? मन्थनविधिपरत्वाद्वाक्यस्य । एवं ह्याह, 'यूपमाच्छेष्यता होतव्यं' न हि दीक्षितस्याग्नौ जुह्वतीति, दीक्षितस्याग्नौ होमे दोषं मन्यते इति । तत्परिहारार्थं कल्पान्तरमुक्तम्, वैष्णवीमनूच्याच्छेष्यतीति । तथाप्यहोमे दोषमिव मन्यमानः पुनराह, 'होतव्यमिति' पुरुषस्यैव जुहोत्यायतन इति । तदुभयमपि तत्र न शक्यमिति प्रतिषिध्य तृतीयं कल्पमाह । यूपस्यैवान्तिकेऽग्निं मथित्वा तथा होतव्यम् । तदुभयमपि शक्यम्, जुहोत्यथ न दीक्षितस्याग्नौ जुहोतीति ।

तत्र यदि यूपस्यान्तिके जुहोतीत्येतद्विवक्षितं न मन्थनम्, ततश्चाऽऽहवनीयमेव यूपस्यान्तिके नीत्वा होमः प्राप्नोति । आहवनीये जुहोतीति नियमात् । तत्र, न दीक्षितस्याग्नौ जुहोतीत्येतन्न संबध्यते । अथ तु, अग्निं मथित्वेत्येतद्विधीयते तत आहवनीयप्रतिषेधो भवति । अन्योऽयमाहवनीयाद्यो मथ्यते । तत्रैतत्समर्थितं भवति, जुहोति च, न चाऽऽहवनीये जुहोतीति । तस्मान्मन्थनं विधीयते, नान्तिकम् ।

**अनुवादमात्रमन्तिकस्य । २८ ॥**

कुतः प्राप्तेऽनुवादः । सौकर्यात् । सहाग्निना यूपान्वेषणं दुष्करम् । यूपान्तिके त्वग्निं मथित्वा सुकरो होमः । न्यायप्राप्तस्यानुवादः । एवं सति यद्यनन्तिके जुहोति, न दोषः । अथ कस्मात् मन्थनमात्रं कृत्वाऽऽहवनीय एव न हूयते । अदृष्टं कल्पितं भवति । तस्मात्तन्त्रं यूपाहुतिः ।

**अशक्यत्वाच्च देशानाम् । २९ ॥**

न चान्तिकदेशाः शक्याः शासितुम्, आपेक्षिकत्वादन्तिकस्य । अथ परमान्तिकं शिष्येत, तदा यूप उपदह्येत । तच्च प्रतिषिद्धम् । न च शक्यं परमान्तिकेऽग्निमन्थनं कर्तुम् । तस्मादप्यविवक्षितत्वमन्तिकस्य ।

**शा**— यूपाहुतिः यूपैकादशिन्यां भेदेन कर्तव्या उत तन्त्रेण इति संदेहे तदन्तिकदेशानां भेदात् वसाहोमवत्



आवृत्तिः । मैवम् । आपेक्षिके हि अन्तिकदेशे मन्थनं संभवति, तेन यं देशं प्राप्तः यूपसमीपं प्राप्तोऽस्मीति मन्यते, यत्र यूपो दृष्टिपथं आपद्यते, तत्र मथनं होमश्च, स च सर्वेषां एकदेशः संभवति इति अगृह्यमाणविशेषत्वात् तन्त्रम् ।

**सोम**— 'वसाहोमवत्' इत्यनेन **संगतिसूत्रार्थौ** सूचितौ ।

**वि**— 'यूपैकादशिनीयूपाहुतेर्भेदोऽथ तन्त्रता । समीपभेदादाद्योऽन्त्यः सामीप्यं दृष्टिगं यतः ॥'

**भाट्ट**— दैक्षे पशौ सन्ति यूपाहुतिपक्षाः । एकस्तावत् 'यूपमच्छेष्यता होतव्यम्' इत्यनेन यूपप्राप्तिसाधनगमनोद्देशेन, ततः पूर्वमेव गृहे आहवनीये होतव्यमिति । अपरस्तु 'न हि दीक्षितस्याग्नौ जुह्वति' इति । तत्र दोषोपन्यासपूर्वकं 'वैष्णवीमृचमनूच्याच्छेष्यति' इति होमाभावपक्षः उक्तः । अच्छेष्यति यूपं प्राप्तुं गच्छतीत्यर्थः । तृतीयस्तु 'गमनोत्तरं यूपदेशे यूपस्यान्तिके अग्निं मथित्वा जुहोति' इति होमपक्ष उक्तः । तत्र यूपैकादशिन्यामाद्ययोः पक्षयोस्तन्त्रेणैव होमक्रकृपाठौ । तृतीये तु अन्तिकरूपदेशभेदात् यूपाहुतिभेदः । **इति प्राप्ते**—

नात्रान्तिकदेशविधिः, प्राप्तकर्मानुवादेन देशस्य, मथनोत्तरकालस्य च विधाने वाक्यभेदात् । यूपाहुतेर्यूपप्राप्त्यर्थत्वेन अङ्गप्रधानयोरेकदेशत्वेनैव अन्तिकदेशस्य प्राप्तत्वाच्च ।

**वस्तुतस्तु**— अन्तिकदेशविध्यभावे मथनस्याहवनीयेन सह विकल्पेन गृह एव होमापत्तेर्गमनोत्तरत्वसिद्ध्यर्थमन्तिकदेशस्याप्यवश्यविधेयत्वात् । देशकालविशिष्टप्रयोगविधानेन च वाक्यभेदाभावादन्तिकविधानेऽपि परमान्तिकस्य दाहप्रसङ्गेनासंभवात्, यावता सामीप्येन यूपदेशमहं प्राप्तोऽस्मीति व्यवहारस्तावत एव सामीप्यस्यान्तिकपदेन विवक्षितत्वात् तस्य चैकत्वे तन्त्रत्वमेव । भेदे तु भेद इति ध्येयम् ।

**मण्डन**— 'यूपान्तिकाऽऽहुतिस्तन्त्रम् ।'

**शंकर**— 'अन्ते' यूपाहुतिस्तद्वत्' तन्त्रेणेत्यर्थः ।

◉ यूपैकादशिन्यां यूपोपराणां यावन्तस्तिर्यग्देशाः तावद्भागैर्वेदिर्वर्धनीया । **संकर्ष.** १।४।२४.

❀ **यूपैकादशिन्यां 'वेदिसंमितान् विमिनोति' इत्यस्य रथाक्षमानेन न विकल्पः ॥**

तुल्यन्यायेन 'वेदिसंमितान् विमिनोति' इति वचनान्तरस्याप्यन्तरालपरत्वावश्यंभावात् उभयोः परिमाणयोर्विकल्पः । **इति प्राप्ते,** यूपोपराणां यावन्तस्तिर्यग्देशास्तावद्भागैर्वेदिरभिवर्धनीयेत्यभिप्रायेण वचनान्तरस्योपपत्तेः विरोधाभावादविकल्पः । **संकर्ष.** १।४।२२.

❀ **यूपैकादशिन्यादौ अग्निष्ठभिन्ना यूपाः उदग्दक्षिणा मातव्याः ॥**

'अर्धमन्तर्वेद्यर्धं बहिर्वेदि' इति लक्षितस्य देशस्याग्निष्ठेन यूपेनाक्रान्तत्वादन्ये दश यूपा अनियमेन यत्र क्वापि निखेयाः । 'पुरस्तान्मिनोति' इति वचनाद्वा अग्निष्ठात्प्राग्देशे प्राक्संस्थक्रमेण संमातव्याः । **इति प्राप्ते,** उदग्दक्षिणाविस्तृताया वेदेः प्रान्तेऽपि लक्षितदेशस्यानपायात् 'तिरश्चीर्मिनोति' इत्याहत्यविधानाच्च अग्निष्ठोदग्दक्षिणपार्श्वयोरेव मातव्याः । सर्वेषामपि वेदिप्राग्भागवर्तित्वात् 'पुरस्तान्मिनोति' इत्यप्यविरुद्धम् । **संकर्ष.** १।४।२०.

❀ **यूपैकादशिन्यादौ रथाक्षमात्राणि यूपान्तरालानि ॥**

यूपानामन्तरालभागदशके समपरिमाणतायाः 'समं स्यात्' इति न्यायेन लाभेऽपि परिमाणविशेषे प्रमाणाभावादनियमे प्राप्ते, 'रथाक्षेण विमिमीते' इत्यस्यान्तरालपरतयैव सार्थक्यात् रथाक्षमात्राणि यूपान्तरालानि कार्याणीति । **संकर्ष.** १।४।२१.

◉ **यूपैकादशिनीगते** उपशये यूपनाम्ना यूपसंस्काराणां नातिदेशः । **भा.** ७।३।१३।३३-३४.

❀ **यूपैकादशिनीसंमानमुत्कृष्टं सत् तन्त्रमेव ।**

सेयं एकादशिनी येषां पूर्वेद्युरेव संमातव्यत्वेनाम्नाता, तेषामहर्गणेऽन्यकालत्वात् तन्त्रेणोपकारकत्वेऽपि सुत्याकालिकसंमानस्य प्रधानभेदात् प्रतीष्टयाहवनीयसंमार्जनवदावृत्तिः स्यात् । **इति प्राप्ते,** प्रकृतौ सर्वपशुसाधारणस्य छेदनादेरन्यकालत्वेन संमानस्यापि छेदनकाल एव प्राप्तौ, वचनात्पशुकाले तावन्मात्रस्योत्कर्षेऽपि

न तन्त्रता छेदनादेरिव विरुध्यते। विकृतावपि तथैवोत्कृष्टं संमानं तन्त्रमेव। **संकर्ष.** १।४।१८.

* **यूपकरणार्थाः** यूपाहुत्यादयः संस्काराः, अर्थलोपान्निवर्तितुमर्हन्ति खलेवाल्याम्। **भा.** १०।१।५।९.

卍 **यूपकर्मन्यायः।** अग्नीषोमीये पशौ दीक्षासु आकृष्यमाणं यूपच्छेदनं अग्नीषोमप्रणयनादीनि नापकर्षति॥

**असंयोगात्तु वैकृतं तदेव प्रतिकृष्येत। ५।१।१४।२७॥**

**भाष्यम्**— अस्ति दर्शपूर्णमासप्रकृतिके पशौ अग्नीषोमीये वैकृतं यूपकर्म। तत् प्रतिकृष्यते 'दीक्षासु यूपं छिनत्ति' इति। तत् प्रतिकृष्यमाणं अर्वाचीनान्यपि अग्नीषोमप्रणयनादीनि प्रतिकर्षति उत नेति संशये, प्रतिकर्षति संबन्धादिति। तथा **प्राप्ते, ब्रूमः।** विकृतौ अभ्यधिकं यत्, तत् प्रतिकृष्यमाणं ततोऽर्वाचीनान्यपि अग्नीषोमप्रणयनादीनि न प्रतिकृष्टुमर्हति। कथम्? असंयोगात्। पाशुकं यूपकर्म। ततः प्राचीनं सौमिकम्। न तयोः परस्परेण संबन्धः। न सौमिकः पदार्थः पाशुकस्योपकारकः पशोर्वा। यदि हि तयोरुपकारकः स्यात्, ततः तस्योपकुर्वतः क्रमोऽप्यस्य साहाय्यं कुर्वन् गुणभूतः स्यात्। न त्वेतदस्ति। तस्मान्नैषां परस्परेण क्रमे नियमः। अतो यूपमात्रं प्रतिकृष्यते। अपि च यूपमात्रं प्रतिकृष्य कृतार्थे शब्दे सौमिकानां स्वक्रमबाधो न भविष्यति इति।

टुप्— अग्नीषोमप्रणयनोत्तरकालं यूपस्य छेदनादयः पठ्यमानाः वचनेनापकृष्यमाणाः सौमिकान् नापकर्षन्ति। कुतः? भिन्नप्रयोगवचनपरिगृहीतत्वात्। अभिन्नप्रयोगवचनपरिगृहीतेषु हि क्रम आकाङ्क्ष्यते। क्रमाच्च पूर्वः पदार्थः उत्तरमुपस्थापयति। तस्मात् पूर्वः पदार्थः योऽपकृष्यते सोऽन्यानपकर्षति। पाठस्यात्रानङ्गत्वात्।

शा— यूपच्छेदनं दीक्षासु अपकृष्यमाणं प्रयाजवत् आघारादीन् अपकर्षति। इति प्राप्ते, उच्यते। '**सौमिकेन पदार्थेन पाशुकस्य न हि क्रमः। अङ्गं तदपकर्षेण सौमिको नापकृष्यते॥**' इति।

**सोम**— पूर्ववदिहापि पूर्वपदार्थस्य उत्तरपदार्थोपस्थापकत्वं पाठतः क्रमे सति बद्धक्रमत्वाविशेषात् इति प्रत्यवस्थानात् **संगतिः।**

**वि**— ज्योतिष्टोमे वैसर्जनहोमादूर्ध्वं प्राचीनवंशगतो वह्निः आग्नीध्रीये प्रणेतव्यः। सोमश्च प्राचीनवंशे पूर्वमवस्थापितः इदानीं हविर्धाने प्रणेतव्यः। तयोरुभयोः प्रणयनादूर्ध्वं यूपच्छेद आम्नातः। तदेतत् सर्वं सुत्यादिनात् प्राचीने औपवसथ्ये दिने प्राप्तम्। तत्र यूपच्छेदः दिनत्रयात् पूर्वं दीक्षाकाले अपकृष्टः। तस्मिन् अपकृष्टे प्रयाजन्यायेन (५।१।१२) तदन्ताङ्गसमूहस्य अपकर्षणात्, प्रणयनमपि अपकृष्यतां इति **पूर्वः पक्षः।**

'यूपच्छेदापकर्षः किं तदन्ते श्रुत एव वा। प्रयाजवत् तदन्तत्वान्नयनं चापकृष्यताम्॥ अग्नीषोमप्रणयनं सौमिकं पाशुकी छिदा। प्रयाजाघारवैषम्यात् श्रुतमात्रापकर्षणम्॥'

**भाट्ट**—सौमिकाग्नीषोमप्रणयनानन्तरं 'पश्वङ्गतया यूपं छिनत्ति' इत्युत्पन्नं यूपच्छेदनं 'दीक्षासु यूपं छिनत्ति' इत्यनेनापकृष्टं प्रयाजन्यायेन (५।१।१२) प्राचोऽपि पदार्थान् अग्नीषोमप्रणयनादीन् अपकर्षति। इति प्राप्ते, भिन्नप्रयोगविधिपरिगृहीतत्वेन अत्र पाठस्य क्रमानियामकत्वात् महाप्रयोगविध्यैक्येऽपि वा उत्पत्तिविधिवेलायां प्रयोज्यत्वानवगमेन क्रमानाकाङ्क्षत्वात् पाठस्य क्रमाकल्पकत्वेन बद्धक्रमत्वाभावात् दीक्षाकालविधिवाक्ये च प्रयोज्यत्वावगमेन तत्रैव क्रमापेक्षतया भिन्नप्रयोगविधिपरिगृहीतैरपि सोमाङ्गदीक्षाकालीनपदार्थैः पाठेन क्रमकल्पनात् तत्रैव सप्तहोतृहोमानन्तरं यूपच्छेदनमात्रं यूपोत्पादकधर्ममात्रं वा अपकृष्य कार्यम्। न तु तदन्तापकर्षः। एतेन यूपच्छेदनस्य दीक्षान्ते करणं इति केषांचिदुक्तं अपास्तम्। 'दीक्षासु यूपं छिनत्ति' इत्यस्य सप्तहोतृहोमानन्तरं पठितत्वात्।

**मण्डन**— 'यूप एवापकृष्यते।' १६.

**शंकर**— 'यूपे श्रुतापकर्षः स्यात्।' १८.

* **यूपकर्ममात्रं** दीक्षासु 'यूपं छिनत्ति' इति प्रतिकर्षविधानात् प्रतिकृष्यते, न तु अग्नीषोमीयप्रणयनादीनि। **भा.** ५।१।१४।२७.



* **यूपकार्यं** पशुनियोजनम्। **भा.** १२।२।११।२८. * **यूपकार्ये** विधीयमाना खलेवाली, तद्धर्मान् लभते। **टुप्.** ९।१।२।३ वर्णकं २ पृ. १६४७.

* **यूपगणे** सत्रातिरिक्ते अञ्जनादिपरिव्याणान्तकाण्डस्यानुसमयः, सत्रे तु येन केनापि यजमानेन धारणसंभवात् पदार्थानुसमय एव। **भाट्ट.** ५।२।५.

* **यूपचित्याद्युपस्पर्शने** स्नायात्। **टुप्.** ९।३।३।९.

* **यूपच्छेदः** अग्नीषोमप्रणयनोत्तरं पठितोऽपि, 'दीक्षासु यूपं छिनत्ति' इति विधानेन दीक्षाकालेऽपकृष्यते, परंतु अग्नीषोमप्रणयनस्य नापकर्षः। तस्य सोमाङ्गत्वात् यूपच्छेदस्य च पश्वङ्गत्वात् परस्परं क्रमानपेक्षत्वात् यूपच्छेदः पश्वङ्गम्। **वि.** ५।१।१४. * यूपच्छेदः 'वैष्णवीमनूच्य आच्छेत्स्यति' इति। **भा.** ११।२।७।२७. * **यूपच्छेदनस्य** पशुप्रयोगबहिर्भूतस्य दीक्षाकालस्य पश्वङ्गत्वमेव। **सु.** पृ. ११८४.

* **यूपतक्षणं** गुणकर्म, यतः यूपः उत्पाद्यः। **वि.** २।१।४.

* **यूपद्रव्यम्।** नहि उदुम्बरो यूपद्रव्यं प्रकृतौ संकीर्तितम्। धर्मनिमित्तस्तु अयं शब्दः उपपद्यते। **भा.** १०।४।२२।४३, * **यूपद्रव्याणां** खादिरादीनां विकल्पः, एककार्यार्थत्वात्। १२।३।४।१०–१५.

* **यूपद्वारा** सप्तदशारत्नितायाः पश्वङ्गता। **वि.** ३।१।९.

* **यूपधर्माः**— घृतेनाञ्जनम्, उच्छ्रयणम्, अवटस्य समूहनम्, यूपमूलस्य परि(वृं)हणम्, मध्ये रशनया परिव्याणं इति। अयं अञ्जनादिपरिव्याणान्तः समुदायः। **वि.** ५।२।५। जोषण–तक्षण–उच्छ्रयण–पर्यूहण–परिबृंहण–परिषेक–अञ्जन–प्रोक्षणादयः यूपधर्माः। १०।२।३२. * यूपधर्माः चातुर्मास्येषु परिधौ कार्याः। **भा.** ९।२।१२।४०। परंतु ये परिधित्वाविरोधिनस्त एव न विरुद्धाः 'यूपायाज्यमानाय' इति यूपशब्दस्य नोहः। ९।२।१३।४१–४३, * यूपधर्माः नानुष्ठेयाः परिधौ स्वधर्मविरोधे सति पाशुकचातुर्मास्येषु। १२।२।११।२७–२९. * यूपधर्माः विशाखे यूपे शाखयोर्भेदेन कार्याः। **संकर्ष.** १।४।५. **मीको.** पृ. ३२६० 'यूपे विशाखेऽपि०' इत्यत्र द्रष्टव्यम्। * परिधानार्थे च परिधौ **यूपधर्माः** बन्धने उपकुर्वन्ति। **भा.** ३।१।७।१४ पृ. ७१६. * **यूपधर्माणां** उपशये नातिदेशः। ७।३।१३।३३–३४. **मीको.** पृ. २४८ 'अतिदेशो न उपशये यूपसंस्काराणाम्' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **यूपनिखनने** 'अर्धमन्तर्वेदि अर्धं बहिर्वेदि' इति उपलक्षितदेशविशेषस्य विधानम्। ३।७।६।१३–१४. 'यूपवेदिन्यायः' इत्यत्र द्रष्टव्यम्।

卍 **यूपन्यायः।** यूपतन्त्राधिकरणम्। अग्निष्टोमे त्रयाणां पशूनां यूपस्तन्त्रम्॥

**यूपश्चाकर्मकालत्वात्। ११।३।३।३॥**

**भाष्यम्**— ज्योतिष्टोमे पशवः अग्नीषोमीयसवनीयानुबन्ध्याः, तेषां यूपः 'खादिरे बध्नाति' 'पालाशे बध्नाति' 'रौहितके बध्नाति' इति श्रुतः। तत्र विचार्यते, किं त्रयाणां पशुबन्धानां भेदेन यूपः, अथवा तन्त्रमिति। किं प्राप्तम्? भेदेनेति। किं कारणम्। अग्नीषोमीये तावत् प्रयोगवचनेन गृह्यते यूपः, उत्तरयोरपि चोदकेन प्राप्यते। कर्मविशेषावसायिनश्चोदकप्रयोगवचना भेदेन यूपं प्रापयन्ति। तस्माद्भेदः। **एवं प्राप्ते, उच्यते।** यूपश्च तन्त्रं भवेत्। कुतः? अकर्मकालत्वात्। नास्य पशुकर्मकाले उत्पत्तिः। किं तर्हि? पृथक्काले, 'दीक्षासु यूपं छिनत्ति, क्रीते वा राजनि' इति। तत्रोत्पद्यमानस्य न गृह्यते विशेषोऽस्मै पशुबन्धाय यूपोऽयमस्मै नेति। सर्वेभ्यश्च प्रयुज्यते। तस्मात् सर्वार्थो भवति।

**एकयूपं च दर्शयति। ४॥**

**भाष्यम्**— एकं यूपं त्रयाणामपि पशूनां साधारणं दर्शयति। सवनीये पशौ 'त्रिवृता यूपं परिवीय' इति त्रिवृता परिव्याणं विदधाति। यदि नाना यूपा भवेयुस्ततः पूर्वस्य यूपस्य यूपवर्गात् यूपान्तरे चोदकेनैव प्राप्ते त्रिवृता परिव्याणं न विधातव्यं भवेत्। अथ तन्त्रं यूपः, ततः संस्कारा अपि तन्त्रमित्यग्नीषोमीये एव परिवीतस्य कृतार्थत्वात् पुनः सवनीये परिव्याणं न प्राप्नोति। तद्विधातव्यं भवति। विधीयते च। तस्मादपि तन्त्रम्।

**शा**-- ज्योतिष्टोमे अग्नीषोमीये पशौ उपदिष्टो यूपः, सवनीयानुबन्ध्ययोस्तु अतिदिष्टः । स किं त्रयाणामपि पशूनां तन्त्रम्, उत प्रतिपशु भेदेन यूप इति । तदर्थमिदं विचार्यते, 'दीक्षासु यूपं छिनत्ति' इति किं अग्नीषोमीययूपस्यापकर्षः, उत सर्वयूपानामिति । तत्र '**यथैवाध्वरकल्पायामाद्यस्यैवापकर्षणम् । निर्वापस्य तथा यूपोऽप्याद्य एवापकृष्यते ॥ अग्नीषोमीयसंस्थायामतोऽसावपवृज्यते । भेदेन सवनीयादौ स्वकाले यूपसंग्रहः ॥ न तदस्त्यविशेषेण सर्वयूपापकर्षणात् । न चेहाध्वरकल्पावद् युक्तमाद्यापकर्षणम् ॥ प्रधानकालबाधोऽत्र तथैवाप्राप्तचोदना । आद्यापकर्षणेऽप्यस्ति तस्मात् सर्वापकर्षणम् ॥**' अध्वरकल्पायां हि प्रथमनिर्वापापकर्षे सति प्रधानकालबाधो नियमविधानं च लभ्यते, इति तस्यैवापकर्षः समाश्रितः । अत्र तु अग्नीषोमीययूपापकर्षेऽपि अस्ति प्रधानकालबाधः, अप्राप्तविधिश्च । तस्मात् अविशेषात् सर्वयूपापकर्षे सति अकर्मकालत्वात् अगृह्यमाणविशेषो यूपः सर्वेषां तन्त्रम् ।

**सोम**-- आधानवत् विशेषग्रहणाभावात् इह न तन्त्रत्वं इत्युत्थितेः **संगतिः** । सूत्रे तन्त्रमिति शेषः ।

**वि**--'अग्नीषोमीयमुख्येषु यूपो भिन्नोऽथ तन्त्रता ।, उपदेशातिदेशाभ्यां भिन्नो, नो कालभेदतः ॥'

**भाट्ट**-- ज्योतिष्टोमेऽग्नीषोमीये उपदिष्टो यूपः, सवनीयानुबन्ध्ययोस्त्वतिदिष्टः । स किं त्रयाणामपि तन्त्रं उत भेदेनेति चिन्तायाम्, 'दीक्षासु यूपं छिनत्ति' इत्यनेन विहितस्य दीक्षाकालस्य यूपच्छेदनोद्देशेन विधानादुद्देश्यस्य च प्रकृतिविकृतिसाधारण्येन ग्रहणे उपदेशातिदेशयोः क्रमिकत्वेन, जुहूवत् प्राप्तिकालवैषम्यापत्तेरग्नीषोमीययूपच्छेदनस्यैव दीक्षाकालविधिः, विशेषतश्चाध्वरकल्पान्यायेन ( ५।१।१० ) तस्यैवोपस्थितत्वात् तस्यैव दीक्षाकाले अपकर्ष इति तस्याग्नीषोमीयान्ते अपवर्गात् सवनीयादौ यूपान्तरकरणम् । **इति प्राप्ते**, दीक्षाकालत्वं न दैक्षापूर्वप्रयुक्तं तदुपस्थापकानुष्ठानसादेश्याभावात्, अपि तु प्रकरणात् ज्योतिष्टोमापूर्वप्रयुक्तं सत् तस्मिन् साक्षान्निवेशायोगात् तदीययूपे निविशते । तदीयत्वं च सर्वेषामविशिष्टमिति सर्वार्थत्वसिद्धिः । वस्तुतस्तु यूपोद्देशेन विहितस्य कालस्य द्विरुक्तत्वन्यायसहकृताव्यभिचरितक्रतुसंबन्धादेव दैक्षार्थत्वसंभवे वारणादिवत् ज्योतिष्टोमार्थत्वानुपपत्तेर्दैक्षे एवोपदेशेऽपि सवनीयादावतिदेशेन तत्प्राप्तिसंभवात् कालतन्त्रत्वादेव यूपतन्त्रत्वम् । अवश्यं हि सर्वत्रोपदेशवादिनाऽपि कालतन्त्रत्वादेव यूपतन्त्रत्वं वाच्यम्, अन्यथा एकस्मिन्नपि काले यूपत्रयापत्तेः । वायव्यादिपशौ तु परप्रयुक्तदीक्षाभावादेव काललोपः । यूपच्छेदनादिकं तु 'गुणलोपेऽपि मुख्यस्य क्रिया स्यात्' ( १०।२।२७।६४ ) इति न्यायात् कार्यमेव ।

**मण्डन**— 'तन्त्रं यूपः स्यात् पशूनां त्रयाणाम् ।'

**शंकर**-- 'सोमाङ्गपशुयूपैक्यम् ।'

* अहर्गणेषु उपसत्कालीनं सुब्रह्मण्याह्वानं प्रधानभेदाद् भिद्यते । इति चेन्न, पूर्वकालीनतया **यूपन्यायेन** तन्त्रत्वात् । **वि.** ११।३।१० .

* **यूपपदस्य**, तदर्थस्य च अलौकिकत्वेऽपि, प्रसिद्धपदसमभिव्याहारेण व्युत्पत्तिः संभवति । **वि.** १।३।१०.

* **यूपपरिध्युभयधर्माणामविरुद्धानां** परिधावनुष्ठानं पाशुकचातुर्मास्येषु । **भा.** १२।२।१०।२६ .

* **यूपपरिमाणतुर्यांशेन** दैर्घ्यमुपरस्य । **संकर्ष.** १।४।२६.

* **यूपपरिव्याणं** अध्वर्युणा क्रियमाणं होता 'युवा सुवासाः' इति मन्त्रेणानुवदति । **वि.** ३।८।११, * यूपपरिव्याणं 'परिवीरसि' इति मन्त्रेणाध्वर्युः करोति । ३।८।११, * यूपपरिव्याणं यूपधर्मो न पशुधर्मः । ३।८।११, ४।४।९, ५।२।५, * यूपपरिव्याणं रशनया यूपस्य वेष्टनम् । यूपपरिव्याणकरणमन्त्रः होत्रा पठनीयः कौण्डपायिनामयने अग्नीषोमीये पशौ । ३।८।११. * **यूपपरिव्याणे** कुण्डपायिनामयने आध्वर्यवं करणमन्त्रं होता कुर्यात् । हौत्रं तु कश्चिद् होतृपुरुषः कुर्यात् । बहिरङ्गो वा कश्चित् । **भा.** ३।८।१०।२१ । कुण्डपायिनामयने होतृपुरुषाणां त्रयाणामपि वचनात् कार्यान्तरव्यापृतत्वमेव । **टिप्पण्याम्.**



* **यूपपरिव्याणार्था** रशना, रशनाधर्माश्च श्रूयन्ते, ते सर्वार्थाः नाग्नीषोमीयार्थाः एव । ज्योतिष्टोमे अग्नीषोमीये पशौ । **भा.** ३।६।१०।३१.

* **यूपपादः** । **संकर्ष.** १।४.

* **यूपप्रतिनिधौ** ( स्वीकृते ) पशुनियोजने ( जाते ) खदिरलाभेऽपि, प्रतिनिधावेव नियोजनम् । **बिन्दु.** ६।३।१८।३७.

**यूपमन्त्रः यूपैकादशिन्यां 'युवा सुवासाः' इति हौत्रमन्त्रः तन्त्रम् ।**

'युवा सुवासाः' इति हौत्रो मन्त्रः एकादशवारं प्रयोक्तव्यः, प्रतिप्रधानं गुणावृत्तेः । **इति प्राप्ते**, क्रियमाणानुवादिमन्त्रस्यादृष्टार्थत्वेनागृह्यमाणविशेषत्वात्तन्त्रतैव । प्रतिप्रधानमिति न्यायस्तु 'परिवीरसि' इत्याध्वर्यवमन्त्रपरः । तस्य करणत्वेन दृष्टार्थत्वात् । **संकर्ष.** १।४।१५.

* **यूपमात्रस्य** अग्नीषोमीयसंबन्धिनः दीक्षासु प्रतिकर्षः न तु ततोऽर्वाचीनानामपि अग्नीषोमप्रणयनादीनां सौमिकानाम् । **भा.** ५।१।१४।२७.

* **यूपमानाङ्गं** अन्तर्वेदिबहिर्वेदिपदलक्षितदेशविशेषः । **भा.** ३।७।६।१३–१४.

**यूपरशनान्यायः** प्रायः शास्त्रीयोऽयं न्यायः । तथा च श्रुतिः— 'यदेकस्मिन् यूपे द्वे रशने परिव्ययति, तस्मादेको द्वे जाये विन्दते, यन्नैकां रशनां द्वयोर्यूपयोः परिव्ययति, तस्मान्नैका द्वौ पती विन्दते' इति ( तैसं. ६।६।४।२ ) । **साहस्री.** ९९५.

* **यूपविरोहणे** 'यस्य यूपो विरोहति स त्वाष्ट्रं पशुं साण्डं छागं लोमशं पिङ्गलं बभ्रुं बहुरूपमालभेत' इति कर्म, विकृतौ इव प्रकृतावपि । **संकर्ष.** १।३।१० .

**यूपविरोहणप्रायश्चित्तं प्रकृतावपि ॥**

'यस्य यूपो विरोहति ईश्वरः पराभवितोस्त्वाष्ट्रं पशुं साण्डं छागं लोमशं पिङ्गलं बभ्रुं बहुरूपमालभेत' इति विहितं छिन्नयूपेऽङ्कुररोहणनिमित्तकं कर्म विकृतावेव प्रवर्तते । तासां हि सुत्याविवृद्ध्या दीर्घततित्वात् । प्रकृतौ दीक्षाकाले छिन्नस्यानुच्छ्रितस्य यूपस्याल्पेन कालेन विरोहणासंभवात् । **इति प्राप्ते**, अनुच्छ्रितस्यापि यूपस्य विरोहणसंभवात् प्रकृतावप्यविरुद्धम् । संस्कारैकदेशयुक्तपलाशेऽपि यूपपदप्रयोगादवस्थाविशेषस्य निमित्तकोटौ अप्रवेशात् । **संकर्ष.** १।३।१० .

**यूपवेदिन्यायः** । पशौ यूपनिखनने अर्धमन्तर्वेदि अर्धं बहिर्वेदि इति उपलक्षितदेशविशेषस्य विधानम् ॥

**तथा यूपस्य वेदिः । ३।७।६।१३ ॥**

**भाष्यम्**-- अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति । तत्र यूपं प्रकृत्य श्रूयते 'वज्रो वै यूपो यदन्तर्वेदि मिनुयात्तन्निर्दहेत्, यद्बहिर्वेदि अनवरुद्धः स्यात् अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि अनवरुद्धो भवति न निर्दहति' इति । तत्र संदेहः, किमन्तर्वेदि इति यूपाङ्गभावेन वेदिरुपदिश्यते, उत अर्धमन्तर्वेदि, अर्धं बहिर्वेदि इति देशलक्षणार्थमुच्यते इति । कथं यूपाङ्गभावेन, कथं वा देशलक्षणेति । यदि यूपार्धस्य वेद्यन्तरस्य च संबन्धो विवक्षितः, एवं वेदिसंबद्धो यूपः कर्तव्यः, ततो यूपाङ्गभावेन । अथ यस्मिन् देशे मीयमानस्यार्धं वेद्यभ्यन्तरे, अर्धं च बहिः, स देश उपदिश्यते, ततो देशलक्षणा । किं प्राप्तम् ? तथा यूपस्य वेदिः । यथा दीक्षादक्षिणं प्रधानस्य, तथा यूपस्य वेदिः । तथा यूपो मातव्यः, तथा मीयमानस्यार्धं वेद्यभ्यन्तरे भवति । एवं वेदिश्रुतिरप्यनुग्रहीष्यते, इतरथा वेदिशब्दो लक्षयेद्देशम् । श्रुतिलक्षणाविशये श्रुतिर्न्याय्या, न लक्षणा । तस्मात् यूपाङ्गभावेन वेदिर्निर्दिश्यते ।

**वा**-- 'अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि' इति किमन्तर्वेद्येकदेशो यूपाङ्गत्वेन विधीयते, अथ बहिर्वेदिदेशमिश्रसंधिदेशमात्रं लक्षयतीति । ननु च पुरस्तात् ( चिकीर्षया च संयोगात् इत्यस्मिन्नधिकरणे ३।७।३।७ ) सर्वार्थत्वमवस्थाप्य इदानीमयुक्तो विचारः । स्थिते एतस्मिन्नधिकरणे तद्द्रष्टव्यम् । यदि हि वाक्यसंयोगात् यूपार्थता भवेत् कुतस्तदा कैमर्थ्यविचारावसरः । स्थिते पुनर्देशलक्षणार्थत्वे तदर्थत्वातदर्थत्वे युज्येते । किं प्राप्तम् ? प्रकरणं बाधित्वा यूपस्य वाक्यसंयोगाद्भवितुमर्हति । लक्षणा हीतरथा स्यात् । न चान्तर्वेदिशब्दस्य श्रौतोऽर्थो न समवैति यतो लक्षणां प्रतिपद्यते ।

तस्मात् 'इयति शक्ष्यामहे' इत्यपि सामान्यशास्त्रं यूपविषयमेवोपसंहृत्य वेदेः यूपार्थत्वं प्रतिपत्तव्यम्। अथवा पूर्वेणाधिकरणेन स्थिते साङ्गज्योतिष्टोमार्थत्वे किं यूपार्थत्वमप्यस्ति नास्तीति विचार्यते। ननु सर्वार्थत्वादेव सिद्धं यूपार्थत्वमिति न विचारणीयम्। न तेन सिद्धं यूपस्य पश्वङ्गत्वात्। ज्योतिष्टोमस्य हि साङ्गस्य वेदिर्न पशोः। ननु च पशुरपि स्वाङ्गभूताङ्गेभ्यो दास्यति। दद्यात् यदि तस्य स्वमहिम्ना वेदिर्भवेत्। प्रधानद्वारेण त्ववतरन्ती तत्स्वरूपमात्रे एवावतिष्ठते। प्राप्ते च वेदिकार्ये अतिदेशेन प्राप्नुवतीं दार्शपौर्णमासिकीं वेदिं निराकृत्य पश्वादिषु सौमिकी निविशते। सा प्राकृतेष्वेव वेदिकार्येषु विनियोक्तव्या। न चेदं यूपमानं प्राकृतं यतो वेदिं लभेत। तस्मादप्राप्तेर्यूपस्य लौकिक्यैव देशबुद्ध्या अन्तर्बहिर्वा माने प्राप्ते अनेन वचनेनार्धस्यान्तर्वेदिर्नियम्यते। इति प्राप्तेऽभिधीयते।

**देशमात्रं वाऽशिष्येणैकवाक्यत्वात्। १४॥**

**भाष्यम्**— देशमात्रं वा वेदिशब्देन लक्ष्यते, न वेदिर्यूपाङ्गम्। कुतः? अशिष्येणैकवाक्यत्वात्। 'अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि' इत्येतेनैकवाक्यता या, सा शासितव्येन यदि देशलक्षणा। अथ यूपाङ्गभावेन वेद्या निर्देशः, ततो न शासितव्यो बहिर्वेदिदेशो भवति। वेद्यां यूपस्याङ्गभावेन उपदिश्यमानायाम्, अर्धं बहिर्वेदीत्येतदुच्चार्यमाणं न कस्मिंश्चिदुपकारे वर्तते। अथ बहिर्वेदिदेशमपि यूपाङ्गभावेनोपदिशेत्, वाक्यं भिद्येत। तस्माद्यूपाङ्गभावेन वेद्या निर्देशे बहिर्वेदिशब्दः सर्वथा न शासितव्यः। यदि तु देशलक्षणा, ततो विशिष्टे देशे लक्ष्यमाणे अवश्यवक्तव्यो बहिर्वेदिशब्दो भवति। अनुच्यमाने, वेद्यभ्यन्तरे यस्मिन् कस्मिंश्च प्रदेशे यूपः इति गम्यते। अथ पुनर्बहिर्वेदिशब्दे श्रूयमाणे, यतरस्मिन् देशे मीयमानस्यार्धमन्तर्वेदि अर्धं बहिर्वेदि, स देशो लक्षयितुमिष्टो भवति। स च बहिर्वेदिशब्देन विना न शक्यते लक्षयितुमित्यवश्यं शासितव्यो भवति। तस्माद्देशलक्षणेति।

**वा**— उभाभ्यामन्तर्वेदिबहिर्वेदिशब्दाभ्यां मध्यदेशो लक्ष्यते नाङ्गाङ्गिभावो विधीयते। '**कुतः? कृतार्थसंयोगे देशकालोपलक्षणम्। सर्वेष्विष्टं, कृतार्थौ च वेदियूपाविहान्यतः॥**' अङ्गाङ्गिभावे हि यूपो वा वेद्यङ्गं भवेद्वेदिर्वा यूपाङ्गम्, न चैकमप्युपपद्यते, निराकाङ्क्षत्वाददृष्टकल्पनाद्वाक्यभेदप्रसङ्गाच्च। न तावत् पशुबन्धव्यापृतस्य यूपस्य वेदिं प्रति अपेक्षाऽस्ति। नापि कर्तृहविस्तदुपकरणधारणव्यापृताया वेदेः सहस्रभागांशसंबन्धिनि यूपे अपेक्षा। न चान्यतरस्य दृष्टोपकारित्वमवकल्पते। किं चार्धं बहिर्वेदीत्यशिष्यम्, विध्यनुवादत्वासंभवात् त्वत्पक्षे। मत्पक्षे तु द्वाभ्यां विना देशविशेषोपलक्षणासंभवादवश्यं शासितव्यमेतत्। कथं समस्तस्य यूपस्यान्तर्बहिर्वा माने प्राप्ते 'अर्धमन्तर्वेदि' इति नियम्यते, द्वितीयस्य अर्धस्य पुनरप्यनियमप्रसक्तौ 'अर्धं बहिर्वेदि' इत्यपि विधातव्यम्। ततश्चानेकार्थत्वाद्वाक्यभेदः, मिनोत्याख्यातानुषङ्गक्लेशश्च प्रसज्यते। पाक्षिकस्य च नित्यवदनुवादोऽनर्थकः कल्पयितव्यः। ननु चार्धस्यान्तर्वेदिसंबन्धे विहिते विध्यभावादर्धान्तरं बहिर्वेदि भविष्यति। भवेदेवम्, यदि नित्यमन्तर्वेदि बहिर्वेद्येव वा यूपमानं प्रसक्तं स्यात्। समस्तान्तर्वेदिप्रसङ्गे हि सति अर्धपुनर्वचनसामर्थ्यात् परिसंख्यायेतरस्य बहिर्मानं गम्येत। समस्तस्य वा बहिरेव प्रसङ्गे अर्धस्याविहितमिति तदवस्थमर्धान्तरमध्यवसीयेत। न त्वेतदुभयमप्यस्ति। अतश्चेदृशमवधारणमर्धमन्तर्वेद्येव न त्वर्धमेवान्तर्वेदीति। तथा सति चार्धान्तरमनियतत्वात् कदाचिदन्तरपि प्राप्नोतीति न बहिर्भावः सिध्यतीति। ननु च यदि समस्तमन्तर्वेदि मिनोति, ततोऽर्धमन्तर्वेदीत्येवं विधिर्नैव कुर्यात्। कथं न करोति, यदर्धं तत्तावत् नियमतोऽन्तर्मिनोति एतावच्च विहितं नेतरत् प्रतिषिद्धम्। तस्मादुभाभ्यां विशिष्ट एको देशोऽभिधीयते इत्येवमवाक्यभेदः।

**शा**— 'अर्धमन्तर्वेदि मिनोति अर्धं बहिर्वेदि' इत्यनेन यत्र मीयमानस्य यूपस्य अर्धमन्तर्वेदि भवति अर्धं च बहिर्वेदि, तत्र मिनुयात् इति लौकिक एव देशविशेषो विधीयते, न संस्कृतो वेदिदेशः।

**सोम**—**प्रयोजनं** उद्धननादिसंस्कृतवेदेः अङ्गत्वाभावात् तीव्रसुताख्ये उक्थ्ये ज्योतिष्टोमविकृतिभूते अग्निष्ठं यूपमारभ्य यूपैकादशिन्यां प्राचीनतया मीयमानायां तदङ्गतया यावद्यूपं वेद्युद्धननादिकं न कर्तव्यं सिद्धान्ते। पूर्वपक्षे तु संस्कृताया वेदेः यूपमानाङ्गत्वात् यावद्यूपं उद्धननादिकं कर्तव्यमिति। **सूत्रार्थस्तु** यथा दीक्षादक्षिणं वचनात् प्रधानार्थं तथा वेदिरपि वचनात् यूपार्था इति। एवं च पूर्ववत् प्रत्यवस्थानात् **संगतिर्बोध्या**।

**त्रि**— 'अन्तर्वेदि मिनोत्यर्धं यूपाङ्गमुत लक्षयेत्। देशं यूपाङ्गभावेन वेदिभागोऽत्र चोद्यते॥, बहिर्वेद्यर्धमित्येतद् वाक्यं भिद्येत तद्विधौ। मीयमानस्य यूपस्य तावान् देशोऽत्र लक्ष्यते॥'

**भाट्ट**— दर्शपूर्णमासयोः 'होतुः अन्तर्वेद्येकः पादो भवति बहिर्वेद्येकः' इति श्रुतम्। तथा सोमे अग्नीषोमीययूपमानं प्रकृत्य 'अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि' इति। तत्र अन्तर्वेदिदेशः एव तत्तदङ्गत्वेन विधीयते, उत अन्तर्वेदिबहिर्वेदिशब्दलक्षितदेशविशेषो वा इति चिन्तायाम्, लक्षणायां प्रमाणाभावात् अन्तर्वेदिदेश एव एकपादोद्देशेन यूपार्धोद्देशेन च विधीयते, तद्विधौ पादार्धान्तरयोर्बहिर्वेदिदेशः प्राप्त एवानूद्यते। इति **प्राप्ते**, आद्योदाहरणे तावद्धविरासादनार्थाया दार्शिक्या वेदेः एकपादोद्देशेन विधौ एकत्वस्योद्देश्यविशेषणस्याविवक्षाऽऽपत्तेः 'बहिर्वेद्येकः' इत्यस्यानुवादायोगात् विधाने वाक्यभेदापत्तेरगत्या देशविशेष एव लक्षणया हौत्रस्थानोद्देशेन विधीयते। **न च** देशविशेषलक्षणापेक्षया लाघवादन्तर्वेदित्वविशिष्टबहिर्वेदित्वमेव लक्षणया विधीयतामिति **वाच्यम्**, विशेष्यविशेषणभावे विनिगमनाविरहात्। द्वितीयोदाहरणेऽपि सौमिक्या वेदेर्देशत्वेनाङ्गप्रधानार्थत्वस्य स्थापितत्वात् (३।७।१) यूपार्धद्वयेऽपि वेदेः प्राप्तत्वादर्धोद्देशेन तद्विधाने परिसंख्यापत्तिः। न च अग्नीषोमीयादिरूपाङ्गाङ्गत्वेऽपि वेदेस्तदङ्गभूतयूपमानाङ्गत्वे प्रमाणाभावः, प्रयोगविधिना साङ्गानामेवाङ्गानां प्रयोगविधानात्। अन्यथा तदङ्गप्रयाजपशुपुरोडाशादिहविरासादनादौ वेद्यादेरनापत्तेः। न च वाक्येन वेदेर्यूपार्धाङ्गत्वेन विधानात् प्रकरणगम्यसर्वार्थत्वस्य बाधोपपत्तेः परिसंख्यात्वानापत्तिः, षट्त्रिंशत्प्रक्रमपरिमाणार्थवादस्य 'इति शक्ष्यामहे' इत्यस्यार्धमात्रार्थत्वे अनुपपद्यमानत्वेन सर्वार्थत्वबाधानुपपत्तेः। न चैवमपि फलतः परिसंख्यात्वात् त्रैदोष्यानापत्तिः, प्रापकप्रमाणप्रतिबन्धाभावेन शाब्दपरिसंख्यात्वापत्त्या त्रैदोष्यावश्यकत्वात्। अतो वरं देशविशेषलक्षणैव एका। **न च** अर्धोद्देशेन बहिर्वेदिमात्रविधानात्, अर्धान्तरे च अन्तर्वेदेरेव प्राप्तत्वेन अनुवादोपपत्तेर्न लक्षणाऽपीति **वाच्यम्**। अनुवादवैयर्थ्यभियैव लक्षणाङ्गीकारात्, **तथापि** अन्तर्वेदिपदे एव लक्षणाङ्गीकारे बहिर्वेदेरपि विधेयत्वेन वाक्यभेदापत्तेः। 'अर्धमन्तर्वेदि अर्धं बहिर्वेदि' इति पदैर्लक्षितदेशविशिष्टमानस्यैव यूपोद्देशेन विधानम्। **तत्प्रयोजनं** तु यूपैकादशिन्यां वेदेरविवृद्धिः। **वस्तुतस्तु** देशविशेषलक्षणायामपि सामान्यतः साङ्गे विहिताया वेदेरविरोधेन अर्धप्राप्त्युपपत्तेः यूपैकादशिन्यामपि तदर्थं वेदिविवृद्धिरावश्यिकी। अत एव 'यावद्यूपं वेदिमुद्धन्ति' इति कल्पसूत्रकारवचनमपि संगच्छते। अतोऽन्यत्प्रयोजनं मृग्यम्। देशविशेषलक्षणैव वा नाङ्गीकर्तव्या इति ध्येयम्।

**मण्डन**— 'वेदिर्यूपगुणो नहि।'

**शंकर**— 'वेदेर्यूपाङ्गता न च।'

* **यूपशब्दः** एकादशिनीगते उपशये संस्कारातिदेशको न भवति। **भा.** ७।३।१३।३३–३४. * यूपशब्दः कर्माविष्टकाष्ठवचनः। **वा.** १।२।२।२२ पृ. १३६. * यूपशब्दः जोषणादिक्रियानिमित्तः। स यत्र श्रूयते तत्र जोषणाद्याः क्रियाः प्राप्यन्ते। **भा.** ७।३।११।२८. * **यूपशब्दस्य** पश्चात् श्रुतत्वेन वाजपेयशब्दं प्रति गुणत्वमुपचर्यते। **सु.** पृ. १०४९. * यूपशब्दस्य शास्त्रीयच्छेदनादिक्रिया प्रवृत्तिनिमित्तम्। **वि.** ७।३।११. * **यूपशब्दे** तु (जोषणादि) क्रियानाशोत्तरं प्रयोगेऽपि तज्जन्यादृष्टविशिष्टकाष्ठवाचित्वात् न शुद्धजातिवाचित्वं इति युक्त एव तत्र संस्कारातिदेशः। **वस्तुतस्तु** यूपकार्ये स्वलेवालीविधानात् यूपशब्दस्य न संस्कारादिशक्तत्वम्। **भाट्ट.** ७।३।९.

* **यूपसंस्कारः** अयं 'अग्निष्ठे ऐकादशिना रशनाः परिवीय वासयति' इति वाक्योक्तः, इति पूर्वपक्षः। अग्निष्ठाधिकरणकेन परिव्याणकरणेन वासनेन रशनाः संस्कुर्यात् इति वाक्यार्थः तेन रशनासंस्कारोऽयम्। **संकर्ष.** १।४।१२, १७. * **यूपसंस्काराः**। तन्त्रं पशुसमुच्चये

ज्योतिष्टोमे । **भा.** ११।३।४।५–७, * यूपसंस्काराः प्रोक्षणं अञ्जनं उच्छ्रयणं परिव्याणं च । ११।३।४।५, * **यूपसंस्काराणां** यूपनाम्ना यूपैकादशिनीगते उपशये नातिदेशः । ७।३।१३।३३–३४.

* **यूपसंस्कारकर्म** खलेवाल्यां न कर्तव्यम् । **भा.** १०।१।६।१३.

* **यूपस्तुत्यर्थः** आदित्यशब्दः 'आदित्यो यूपः' इति । **वि.** १।४।१५, * यूपस्तुत्यर्थः यजमानशब्दः 'यजमानो यूपः' इति । १।४।१५.

* **यूपस्थापने** अग्नीषोमीयपशौ 'अर्धमन्तर्वेदि, अर्धं बहिर्वेदि' इति लौकिकदेश एव विधीयते न तु संस्कृतवेदिभागो विधीयते । **वि.** ३।७।६ .

* **यूपस्पर्शे** लौकिके अग्नीषोमीये पशौ यागसमाप्त्युत्तरं प्रायश्चित्तम् । ९।३।३।९. **मीको.** पृ. ११८ 'अग्नीषोमीये पशौ यागसमाप्त्युत्तरं०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

*'**यूपहस्तिनो** दानमाचरन्ति' इति स्मृतिः प्रमाणम्, इति प्राप्ते, अप्रमाणं स्मृतिः, (हेतुदर्शनात्) अत्रान्यन्मूलम् । लोभादाचरितवन्तः केचित्, तत एषा स्मृतिः । **भा.** १।३।२।४ । 'यूपहस्तिशब्देन यूपपरिव्याणशाटकं (उच्यते)' । **वा.** पृ. १८६.

* **यूपीयवृक्षधर्माः** 'समे जातमशाखाजं बहुपर्णशाखमप्रतिशुष्काग्रमसुषिरं' इत्यापस्तम्बः । **वि.** १०।२।३२.

* **येयजामहं** विपरिवर्तमानं अनूद्य, पर्युदासार्थो विधीयते । नानुयाजेषु इति । **अथवा** येयजामहः सामान्येन प्राप्यमाण एव अनुयाजवाक्येन विशेष्यते, अनुयाजवर्जं येयजामहं करोति इति । **टुप्.** १०।८।१।४. * **येयजामहस्य** नानुयाजेषु इति पर्युदासः । येयजामहन्यायः । १०।८।१।१–४. **मीको.** पृ. २४७४ 'पर्युदासन्यायः' इत्यत्र द्रष्टव्यम् ।

* '**योक्त्रेण** पत्नीं संनह्यति' दर्शपूर्णमासयोः । तत् ज्योतिष्टोमे सौमिकेन प्रसङ्गसिद्धम् । **भा.** १२।१।१३।२९.

* **योगः** अग्निचयने । 'अग्निं युनज्मि शवसा घृतेनेति जुहोति । अग्निमेवैतद्युनक्ति' इति मन्त्रेण होमो योगः । स च सर्वान्ते वार्तिककारमतेन, प्रधानान्ते भाष्यमतेन । **वि.** ११।३।९. * योगः क्लृप्तया रूढ्या बाध्यते । यथा रथकार इति । **बाल.** पृ. १४५. * योगः रूढिः । क्लृप्ताऽवयवार्थप्रत्यभिज्ञाने समुदायशक्तिकल्पनाऽयोगः । **सु.** पृ. १२००. * **योगेन** अक्लृप्ता रूढिः बाध्यते । यथा प्रोक्षणीशब्दे । **बाल.** पृ. १४५.

**योगाद्रूढिर्बलीयसीति न्यायः** । योगादित्यस्य यौगिकात्प्रकृतिप्रत्यययोगलभ्यार्थवाचकादित्यर्थः । रूढिस्तु प्रकृतिप्रत्ययार्थमनपेक्ष्य शाब्दबोधजनकशब्दात्मिका इति । **साहस्री.** ६५६.

* **योगजधर्म**प्रत्यासत्तिं तृतीयामाहुः **न्यायविदः** । तत् योगिषु मानाभावेन असुन्दरम् । न च इतिहासपुराणादि मानम्, तस्य अन्यतात्पर्यकत्वात् । **मणि.** पृ. २९.

* **योगजन्याणिमाद्यष्टगुणैश्वर्यफलानि** वर्णितानि । न तस्यार्थवादत्वम् । **वा.** १।३।८।२७ पृ. २८८.

* **योगरूढः** निर्मन्थ्यशब्दः, पङ्कजादिशब्दवत् । अग्निचयने 'निर्मन्थ्येनेष्टकाः पचन्ति' इति । **वि.** १।४।१०. * **योगरूढानां** पङ्कजादिशब्दानां विषयः पद्मत्वादिः अर्थः । **वा.** ३।४।४।१३ पृ. ९३३ टिप्पण्याम् ।

* **योगरूढत्वं** (पदस्य) समुदायशक्त्या अवयवशक्त्या च एकार्थप्रत्यायकत्वं पङ्कजं इत्यादौ । **मणि.** पृ. ७८.

* **योगविमोकौ** (होमविशेषौ) अग्निचयने प्रधानादौ प्रधानापवर्गे च, न तु सर्वादौ सर्वान्ते चेति । **भा.** ११।३।९।१८ । (योगविमोकौ प्रधानार्थौ इति प्रधानार्थे विमोकः इति भाष्यमतम् । अङ्गप्रधानार्थौ योगविमोकौ इति सर्वान्ते विमोकः इति वार्तिककारमतम्) । * योगविमोकौ द्वादशाहे अहर्गणे प्रत्यहं दर्शयति 'स वा अहरहर्युनक्ति अहरहर्विमुञ्चति' इति । **भा.** ११।३।९।२०. * योगविमोकौ सौमिकौ अङ्गप्रधानार्थौ । **रत्न.** ११।३।९।१८.



* **योगसिद्धिः** नाम पर्यायः 'पर्यायो योगसिद्धिः' । **भा.** ४।३।११।२८. * 'योगसिद्धिर्वाऽर्थस्योत्पत्त्ययो-(त्त्यसंयो) गित्वात्' (४।३।११।२८) । अत्र 'सर्वेभ्यो दर्शपूर्णमासौ' इत्यविशेषश्रुतेः, एकस्मिन् प्रयोगे सर्वफलोत्पत्तिं पूर्वपक्षयित्वा, अर्थस्य फललक्षणस्य उत्पत्त्या प्रयोगे सोपादानलक्षणयोगाभावात् (अनेन उत्पत्त्ययोगात् इति पाठः सूत्रे सिध्यति) अनुपादेयस्य चाविवक्षितसाहित्यत्वात्, सर्वशब्दस्य च प्रकृतग्राहित्वात्, प्रकृतानां च इष्टिसाध्यानां पशुग्रामादीनां अन्योन्यनिरपेक्षसाध्यत्वावगतेः, एकमेव फलं एकस्मिन् प्रयोगे भवति इति योगेन पर्यायेण फलसिद्धिः इति सिद्धान्तयिष्यते । **सु.** पृ. ८७३. * 'योगसिद्धिर्वाऽर्थस्योत्पत्त्ययोगित्वात्' (४।३।११।२८) वक्ष्यति यथा विकल्पेन एतानि (हीषादीनि) अस्य फलानि भवन्तीति । **वा.** २।२।१३।२८ पृ. ५६३.

**योगसिद्ध्यधिकरणम्** । दर्शपूर्णमासादीनां सर्वफलकत्वेऽपि प्रतिफलं पृथगनुष्ठानम् ॥

**तत्र सर्वेऽविशेषात् । ४।३।११।२७ ॥**

**भाष्यम्**–– एवंजातीयकेष्वेवोदाहरणेषु एतदुक्तम्, प्रधाने सर्वकामानां विधिरिति । इदमिदानीं संदिह्यते । किं सकृत्प्रयोगे सर्वे कामाः, उत पर्यायेणेति । किं प्राप्तम् ? सकृत्प्रयोगे सर्वे कामा इति । कथम् ? सर्वेषां कामानां दर्शपूर्णमासौ निमित्तम्, ज्योतिष्टोमश्चेति । निमित्तं चेत् सर्वेषां कामानाम्, कोऽत्र खलु कामो न भविष्यतीति । तस्मात् यौगपद्येन सर्वे कामा इति ।

**योगसिद्धिर्वाऽर्थस्योत्पत्त्यसंयोगित्वात् । २८ ॥**

**भाष्यम्**–– न चैतदस्ति सर्वे युगपत्कामा इति । पर्यायो योगसिद्धिः । पर्यायेण भवेयुः कामा इति । कुतः ? अर्थस्य उत्पत्त्यसंयोगित्वात् । अर्था इमे कामा नाम, न सर्वे एव युगपदुत्पद्यन्ते । असंभवो युगपदुत्पत्तेः सर्वेषाम्, विरोधात् । **अथवा**, उत्पत्त्यसंयोगित्वादिति । न कामानामेतदुत्पत्तिवचनम् । उत्पन्नानां लक्षणत्वेन वचनम् । ये सर्वे कामास्तेभ्यो दर्शपूर्णमासौ ज्योतिष्टोमश्चेति । न सर्वे कामाः कर्मणः श्रूयन्ते, ये सर्वे कामास्तेभ्यो हि कर्म विधीयते । तस्मान्न कामानां साहित्यं गम्यते इति ।

**टुप्**–– कामानामुद्दिश्यमानत्वात् इतरेतरयोगाविवक्षा । तदुद्देशेन ज्योतिष्टोमो विधीयमानः एकमेव फलमेकस्मिन् प्रयोगे साधयति । न तु यौगपद्येन सर्वाणि, अनुपादेयत्वात्तेषाम् । न चागृह्यमाणविशेषत्वम्, कामनया विशेषावगमात् । यदाऽपि कामना अनेकविषया उत्पन्ना तदाऽप्येकमेवोद्दिश्य कर्मानुष्ठातव्यम्, कर्मणस्तथा सामर्थ्यात् । **अथवा** कामोत्पत्तौ निमित्ते ज्योतिष्टोमो विधीयते । कामाश्च भेदेनैवोत्पद्यन्ते । अतो निमित्तभेदान्नैमित्तिकस्याप्यावृत्तिः ।

**शा**— किमेकस्मिन्नेव प्रयोगे सर्वे कामा भवन्ति, उत प्रयोगभेदेन इति संशये '**सर्वे युगपदेव स्युर्निमित्तस्याविशेषतः । यादृङ् निमित्तमेकस्य तादृगेवापरस्य हि ॥**' कामनावशात् विशेषः, यदेव यदा काम्यते तदेव तदा भवति, नान्यत्, इति **चेत्**, न, अनङ्गत्वात् । नहि कामना कर्मणः फलस्य वा अङ्गम्, येन तदभावे फलानुत्पत्तिः स्यात् । **ननु** उपादेयस्य कर्तुः विशेषणभूता कामना कर्माङ्गमेव, न कामिन उपादानम् । उद्दिश्य हि कामिनं कर्म उपदिश्यते इति षष्ठे वक्ष्यते । अत एव लिङ्गस्याविवक्षा ।

[ **प्राभाकरास्तु**, यद्यपि कर्मणि उपादेयस्य कर्तुः कामना न विशेषणम्, तथापि नियोज्यस्य विशेषणं कामना । नियोगश्च नियोज्यसमवायी, नियोज्यो नियोगं प्रति गुणभूतः । ततश्च नियोज्यविशेषणं कामनाऽपि नियोगाङ्गम्, इति कामनाविरहे तत्कामनियोज्यकत्वाभावात् नियोगस्य तत्फलसाधनत्वमेव न स्यात् । नहि नियोगस्य स्वयं फलापेक्षया स्वर्गादेर्नियोगफलत्वम्, किंतु तत्साधनत्वं विना तत्कामनियोज्यकत्वानुपपत्त्या स्वर्गादेर्नियोगफलत्वम् । ततश्च कामनाविरहे तत्फलकनियोगासिद्धेः सर्व( फल- )यौगपद्यं इत्याहुः । **तदयुक्तम्** । स्वर्गकामस्य नियोगं प्रति गुणत्वे तद्विशेषणलिङ्गविवक्षाऽऽपत्तेः । अतः कामनायाः तद्विशेषणत्वमादाय फलानामयौगपद्यं दुर्वचं इत्याह ] योऽपि कर्मणि अनुपादेयस्यापि कामिनः अपूर्वं प्रति गुणभूत-

त्वात् कामनाऽपि नियोगसिद्धौ अङ्गं इतीच्छति, तस्यापि ( प्राभाकरस्य ) लिङ्गविवक्षा दुर्वारैव । अत्र चायमपरो विशेषः, यदत्र फलकामो न श्रूयते, फलान्येव चतुर्थ्यन्तेन निर्दिश्य तादर्थ्येन कर्म विधीयते । कामोपबन्धस्तु फलत्वसूचनार्थः, न स्वयंतन्त्रम् । अपिच, ये युगपत् काम्यन्ते, तेषामनिवार्यैव युगपदुत्पत्तिः स्यात् । तस्मात् युगपत् स्युः । **एवं प्राप्ते, ब्रूमः । ' कामोद्देशेन कर्मैव साधनत्वेन चोद्यते । तेषां चोद्दिश्यमानानां साहित्यं न विवक्षितम् ॥ एकैकस्यैव कामस्य निरपेक्षस्य साधनम् । कर्मेदं चोद्यते तच्च सापेक्षत्वे विरुध्यते ॥** ' यादृशं हि कारणं यादृशकार्यस्य निरपेक्षस्य निष्पादकम्, तत् एकमेव युगपत् जनयति, यथा मृत्पिण्डो युगपत् एकमेव घटमुत्पादयति, नानेकम् । कामनावशाच्च विशेषः । विधिर्हि चेतनप्रवर्तनात्मकः समीहितस्यैव फलत्वमुपकल्पयति, न पश्वादिस्वरूपस्य । येष्वपि युगपत् कामना, तेष्वपि कर्मणो युगपदसमर्थत्वात् यदुद्दिश्य यदा प्रयुज्यते, तदेव तदा भवति, नान्यत् । **यथा** हि, एकफलानि कर्माणि यथाविधस्य फलस्य स्वर्गस्य पशोर्वा साधनत्वेन चोदितानि, युगपत् एकमेव तथाविधं फलं जनयन्ति, नानेकम्, इतरथा सकृदेव यावदिष्टफलं सिद्धं इति न काम्यमेकं कर्म पुनः प्रयुज्येत, इष्यते च पुनः प्रयोगः, **तथा** इहापि एकमेव युगपत् फलम् । न च साहित्येनैव अत्र कामानां फलत्वं नैकैकस्य इति **वाच्यम्** । साहित्यस्य अविवक्षितत्वात् इत्युक्तम् । अतः पर्यायेण कामः ।

**सोम—** प्रासङ्गिकी **संगतिः** । इह हि मुख्योऽपि ( सर्वेभ्यो ज्योतिष्टोमः इत्यादिः— ) सर्वशब्दः नोद्देश्यसमर्पकः, सापेक्षत्वात्, किंतु निरपेक्षत्वात् कामशब्द एव । ततश्च ग्रहत्ववत् सर्वत्वस्य उद्देश्यप्रतीतिपर्यवसानार्थत्वाभावात् उद्देश्यविशेषणत्वमेव, इति ग्रहैकत्ववत् अविवक्षितत्वात् न साहित्येन फलत्वमिति ।

**वि—** ' ज्योतिष्टोमश्च सर्वार्थः सर्वे सकृदनुष्ठितेः । दद्यात् पृथक्प्रयोगाद्वा, सकृत् तस्याविशेषतः ॥ , एकैकस्यानपेक्षस्य फलस्यैव हि साधनम् । चोदितं तेन कामास्ते पर्यायेण भवन्त्यमी ॥ ' तस्मात् प्रतिफलं पृथक् प्रयोगः ।

**भाट्ट—** एकस्मिन् प्रयोगे किं सर्वाणि फलान्युत्पद्यन्ते, उतैकमिति चिन्तायां सर्वत्वस्यैवोद्देश्यताऽवच्छेदकत्वेन कार्यताऽवच्छेदकत्वात् कारणेन च तदवच्छिन्नोत्पत्तिनियमात् सर्वाण्युत्पद्यन्ते । अस्तु वा तच्छब्दादाविव पुत्रत्वादिनैवोद्देश्यता, सर्वत्वं च तद्विशेषणत्वादविवक्षितम्, तथाप्येकस्मिन्नपि प्रयोगे कारणसत्त्वात् सकलकार्योत्पत्तौ बाधकाभावः । न ह्येकं कारणं कार्यद्वयं नोत्पादयति, एकस्मादपि घटादेः रूपरसक्रियाद्यनेकोत्पत्तिदर्शनात् । एककार्यताऽवच्छेदकावच्छिन्नोत्पत्तौ तदवच्छिन्नान्तरस्यानुत्पत्तिदर्शनात् पुत्राद्यन्तरं नोत्पद्यताम्, कार्यताऽवच्छेदकान्तरावच्छिन्नस्य तु पश्वादेर्युगपत् क्रमेण वा उत्पत्तौ न किञ्चिद्बाधकम् । न च सर्वेषां युगपत् सर्वस्य कामनाभावादनुत्पत्तिः, कामनायाः कर्माङ्गत्वे फलं प्रति जनकत्वे वा प्रमाणाभावेन तदभावेऽप्युत्पत्तौ बाधकाभावात् । प्रवृत्तिं प्रति परं फलेच्छायाः कारणत्वादन्यतमफलेच्छामात्रेणैव प्रवृत्तौ जातायां कारणसत्त्वेन सर्वकार्योत्पत्तौ न किंचिद्बाधकम् । अत एव विध्यवगतसमीहितसाधनत्वमपि अन्यतरफले एव समाहितत्वबोधनेनोपपन्नम् । न च सर्वफलोत्पत्तौ तेषां भोक्तव्यत्वेन मोक्षानुपपत्तिः इति **तन्त्रसारोक्तं** युक्तम्, ज्ञानेन तदपूर्वाणां नाशात् । **यदा** तु स्वर्गवाक्यवैयर्थ्यापत्तेः तस्यैव मुख्यफलत्वम्, अन्येषां तु ' एकैकस्मै कामाय ' इत्यर्थवादात् अन्ये कतवः एकैकस्मै, अयं तु नैकैकस्मै एव, किन्तु सर्वेभ्योऽपीत्यर्थावगतेरानुषङ्गिकत्वमिति तन्त्रसारोक्तमाश्रीयते, **तदा** तेषां कामनाभावेऽप्यायुरादिवदुत्पत्तौ न किंचिद्बाधकम् । **वस्तुतस्तु** स्वर्गवाक्यस्याभ्युदयशिरस्कत्वेनापि उपपत्तेरर्थवादस्य च साध्यसमुच्चायकत्ववत् मुख्यत्वसमुच्चायकत्वस्याप्युपपत्तेरिदं मतमुपेक्षितमिति पूर्वोक्तयुक्त्यैव सर्वोपपत्तिः । अस्तु वा अकाम्यमानस्यानुत्पत्तिः, तथापि यत्र द्वित्राणामेव फलानां कामना, तत्र तावतामुत्पत्तिः केन निवार्या । न चायमेव सिद्धान्त इति **तन्त्रसारोक्तं** युक्तम्, भाष्यादिष्वकथनेनापसिद्धान्तात् । अत एव यद्यप्यनुपस्थितत्वान्न पुत्रत्वादिकमुद्देश्यताऽवच्छेदकम्, सर्वशब्दस्य विशेष्यसाकाङ्क्षत्वान्न सर्वत्वमपि, अपि तु पूर्ववाक्ये कामशब्दोपादानात् तस्यैव सर्वनाम्ना सर्वशब्देन परामर्शात् कामनाविषयत्वमेवोद्देश्यताऽवच्छेदकम्, कार्यताऽवच्छेदकं चेत्याश्रीयते, तथापि यत्र समूहालम्बनात्मिका अनेकविषयिणी कामना, तत्र तावतामुत्पत्तिरनिवार्यैव, इति **प्राप्ते**, उक्तयुक्त्या प्रवृत्तिप्रयोजककामनाविषयत्वमेव उद्देश्यताऽवच्छेदकम् । अनुष्ठानोत्तर–भाविकामनाविषयत्वावच्छिन्नोत्पत्तिवारणाय प्रवृत्तिप्रयोजकतया क्लृप्ताया एव कामनाया उद्देश्यताऽवच्छेदककोटिप्रवेशार्थं प्रवृत्तिप्रयोजकेति कामनाविशेषणम् । ततश्चानुष्ठानोपक्रमे या कामना तद्विषयत्वावच्छिन्नस्यैकस्यैवोत्पत्तिर्नान्यस्य । न च समूहालम्बनस्थले विषयताया व्यासज्यवृत्तित्वादनेकोत्पत्तिप्रसङ्गः, समूहालम्बनज्ञाने इव समूहालम्बनेच्छायामपि प्रत्येकमेव विषयत्वस्यावश्यकत्वात्, इतरथा तादृशकारणात् समूहालम्बनात्मकयोरेव स्मृतियत्नयोरुत्पत्त्यापत्तेः । अत एव कार्यताऽवच्छेदकावच्छिन्नस्यैकस्यैव उत्पत्तिनियमात् एकमृदादिभ्यो घटान्तरानुत्पत्तिवत् फलान्तरस्याप्यनुत्पत्तिः इत्येकप्रयोगे एकमेव फलम् । निमित्तस्थले च तस्यैव प्रवृत्तिप्रयोजकत्वात् । पापक्षयकामनायास्तु तत्त्वाभावेन पापक्षयकामनायास्तु तत्त्वाभावेन पापक्षयस्योक्तविधकार्यताऽवच्छेदकावच्छिन्नत्वाभावात् युगपन्नित्यकाम्यप्रयोगे पापक्षयेण सह स्वर्गादिफलोत्पत्तावपि न क्षतिः । अत एव यत्र स्वातन्त्र्येण विविदिषापरमेश्वरप्रीत्याद्यर्थत्वेन तत्तद्विधिबलेन यज्ञाद्यनुष्ठानम्, तत्र कारणसत्त्वेन स्वर्गाद्युत्पत्तौ प्रसक्तायां ' त्यक्त्वा कर्मफलासङ्गं ' इत्यादिस्मृत्या फलान्तरद्वेषस्यापि तत्राङ्गत्वेन विधानात् इतरफलाभावविशिष्टविविदिषादेरेव वा ' अकामः सर्वकामो वा ' इत्यादिना फलत्वाभिधानान्न तदुत्पत्तिः । सार्वकाम्यवाक्येन पश्वाद्यन्यतरः ( कामः ) स्वर्गकामवाक्येन स्वर्गः, इति तु इष्टमेव । इदमपि स्वगवाक्यस्य प्रयोजनमित्यपि बोध्यम् । **प्रयोजनं** तत्तत्कामोल्लेखः ।

**मण्डन—** ' सर्वे कामाः सकृत् न स्युः । '

**शंकर—** ' प्रयोगैक्ये न तन्मतम् । ' ( तत् सर्वं फलम् । )



* **योगसिद्ध्यधिकरणे** ( ४।३।२१।२७–२८ ) पश्वादिफलं ऐहिकामुष्मिकत्वेन अनियतं इति प्रतिपादितम् । **बाल.** पृ. ८६.

* ' अर्थवादोपात्तफलकामो निर्वपेत् ' इत्येवं लाघवेन पूतत्वादीनां व्यासज्यवृत्तिफलत्वकल्पनेन प्रत्येकमुद्देश्यत्वाभावात् नात्र **योगसिद्ध्यधिकरणन्यायोऽपि** । (वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते०) । **कौ.** १।४।१२।२२. * **योगसिद्ध्यधिकरणन्यायेन** पर्यायेणैव फलप्राप्तिः न युगपत् । **श्राद्धमयूखः** पृ. ३७ (घारपुरे). * एकस्मिन्नेव प्रयोगे प्रतिप्रधानावृत्तिन्यायेन प्रत्येकं फलावश्यंभावात्, न **योगसिद्ध्यधिकरणन्यायेनापि** अत्र ( सत्रे ) फलस्यैक्यं शङ्कनीयम् । **सोम.** ६।२।१. * कर्तृभेदस्य भेदहेतोरभावेऽपि योगसिद्ध्यधिकरणन्यायेन फलभेदस्य भेदकत्वम् । **सु.** पृ. ९१२, * धात्वर्थफलस्य योगसिद्ध्यधिकरणन्यायेन आनन्तर्यनियमाभावः । पृ. ६८६. * ननु यद्यपि 'यदाहवनीये जुहोति' इत्यादौ आहवनीयादिपदवाच्यविशेषो न निर्धारितः, तथापि तादृशस्यैव विनियोगे अवगते तद्विशेषजिज्ञासायां 'नक्तं गार्हपत्यमादधाति' इत्यादिवाक्यैः प्रत्येकमेव आधानजन्यादृष्टविशिष्टाग्निवाचित्वे आहवनीयादिपदानामवगते उत्पत्तिवाक्यस्थ–( ' अग्नीनन्वादधाति ' इ. )अग्निशब्दस्यापि प्रत्येकमेव तल्लक्षकत्वावसायात् आधानस्यापि योगसिद्ध्यधिकरणन्यायेन प्रत्येकमेवोत्पादकत्वोपपत्तिः । **कौ.** ३।१।७।१४. * प्रयोगे तु विकल्पः योगसिद्ध्यधिकरणन्यायेन सिद्धः । **सु.** पृ. ५४७. * फलत्रयार्थमपि सौभरं योगसिद्ध्यधिकरणन्यायेन सकृदुच्चरितं एकस्मिन् प्रयोगे एकमेव फलं साधयति नेतरत् । **कौ.** २।२।१३।२८.

* ' सर्वेभ्यो दर्शपूर्णमासौ ' इत्यादौ पुत्रत्वपशुत्वाद्यनेकोद्देश्यतावच्छेदकदर्शनेन तदभावात् । नहि सर्वत्वमेव एकं उद्देश्यतावच्छेदकं सर्वत्वमेकमुपलक्षणीकृत्य तदादिवत् सर्वशब्दस्य पुत्रत्वपशुत्वादिनैव शक्तिग्रहात् तत्प्रकारेणैव उद्देश्यतावगतेः । अन्यथा सर्वत्वेन रूपेण एकफलत्वे **योगसिद्ध्यधिकरणविरोधापत्तेः** । **कौ.** ३।१।७।१३.

* 'वैश्वानरं द्वादशकपालं निर्वपेत्०' इत्यत्र 'गायत्र्यैवैनं' इत्याद्यार्थवादिकफलानां च, अष्टाकपालादिपदस्य नामधेयत्वाभावे लाघवेन एकस्यैव कामशब्दस्य कल्पनेन युगपदुत्पत्त्यभ्युपगमेन योगसिद्ध्यधिकरणविषयत्वानापत्तेः, तद्विषयत्वसिद्ध्यर्थं सर्वनामधेयार्थवत्त्वोपपत्तेः। तदा हि सर्वेषां नामधेयानां संकल्पादौ विकल्पेनार्थवत्त्वेऽपि यदा यन्नामधेयेन संकल्पः तदा तस्य पुत्रस्य तन्नामधेयावच्छिन्नादेव फलं पूतत्वादि जायते इत्यस्याप्यर्थस्य अवगमेन तत्तन्नामधेयपुरस्कारेण उपात्ते पूतत्वादौ प्रत्येकमेव कामशब्दकल्पनावसायात् **योगसिद्ध्यधिकरणविषयत्वोपपत्तिः**। ( पूर्वपक्षे आद्ये इदम् )। **कौ.** १।८।१२।१७.

* **योगसिद्धिन्यायः**। ४।३।११।२७–२८.

* **योगिनः** न सन्ति, मानाभावात्। न च इतिहासपुराणादि मानम्। तस्य अन्यतात्पर्यकत्वात्। **मणि.** पृ. २९.

**योग्यो योग्येन संबध्यते इति न्यायः।** यथा– दृश्यते हि लोकेऽन्योन्ययोग्यानामेव नरपशुपक्षिप्रभृतीनां मिथुनत्वादिसंबन्धः इति। **साहस्री.** २७७.

* **योग्यता**। आकाङ्क्षा– योग्यता– संनिधानानि अन्विताभिधाने प्रयोजकानि न शब्दोपात्तत्वमपि। **सोम.** ५।१।१ वर्णकं ३. * योग्यता च अन्वयप्रयोजकधर्मवत्त्वम्। अस्ति च 'पयसा सिञ्चति' इत्यत्र सेकान्वयप्रयोजकधर्मजलत्वस्य पयसि सत्त्वात् योग्यता, न तु 'वह्निना सिञ्चति' इत्यत्र।

केचित्तु बाधाभावो योग्यता। सा च तात्पर्यविषयीभूतपदार्थसंसर्गे अपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वाभावः। वर्तते चैतत् घटपदार्थसंसर्गे निष्ठत्वे कर्मत्वनिष्ठात्यन्ताभावप्रतियोगित्वाभावः।

अपरपदार्थनिष्ठात्यन्ताभावश्च प्रतियोगिव्यधिकरणो बोध्यः। तेन 'घटवत् भूतलं' इत्यत्र घटसंयोगे भूतलनिष्ठाभावप्रतियोगित्वेऽपि न क्षतिः।

एकपदार्थतावच्छेदके तात्पर्यविषयापरपदार्थनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावो वा योग्यता। तेन समुद्रजलनिष्ठाभावप्रतियोगितावच्छेदकत्वस्य सेककरणतात्वे सत्त्वेऽपि पयोऽन्तरस्य तात्पर्यविषयत्वात् न योग्यताहानिः। समुद्रजलाभिप्राये तु अयोग्यमेव।

एवं शक्ततावच्छेदकभेदेन एकपदबोध्ययोः पचतीत्यादौ कृतिवर्तमानत्वयोः योग्यता, पदार्थेऽपि स्थितौ क्वचित् संशयरूपस्य क्वचिन्निश्चयरूपस्य संभवात्।

अत्र च 'वह्निना सिञ्चति' इत्यादौ शाब्दबोधवारणाय योग्यता हेतुः। सा च न स्वरूपसती हेतुः, तद्भ्रमेण शाब्दबोधोदयात्। अतः तज्ज्ञानं हेतुः। तच्च संशयनिश्चयसाधारणम्। **न च** अत्यन्तान्योन्याभावगर्भयोग्यतयोः नैकरूपेण हेतुत्वं संभवति इति **वाच्यम्**। अयोग्यताग्रहविरोधित्वेन हेतुत्वात्।

'होतव्यमग्निहोत्रं न होतव्यं' इति, 'शब्दो नित्यो न वा' इति च वाक्यात् योग्यतासंशयादपि शाब्दबोधः इष्ट एव। यद्वा तदभावशाब्दसामग्र्याः तद्वत्ता शाब्दे प्रतिबन्धकत्वं कल्प्यते। अतस्तत्र पदार्थस्मृतिमात्रं न शाब्दबोधः इति दिक्।

वस्तुतस्तु न योग्यताज्ञानस्य कारणता, किंतु 'वह्निना सिञ्चति' इत्यादौ बोधादर्शनेन अयोग्यतानिश्चयः प्रतिबन्धकः। सा च अनुमित्यादिसाधारण्येनैव क्लृप्तप्रतिबन्धकीभूतबाधज्ञानत्वादिनैव शाब्दबोधेऽपि प्रतिबन्धकम्।

किंच योग्यतायाः सर्वत्र ऐक्यासंभवात् विशिष्य हेतुत्वे तत्तद्वाक्यजन्यशाब्दबोधाप्रसिद्ध्या हेतुत्वकल्पनं न संभवति। अतो न योग्यताज्ञानं कारणम्, किंतु अगृहीताप्रामाण्यकतद्धर्मितावच्छेदककतद्धर्मावच्छिन्नतदभावनिश्चयत्वेन प्रतिबन्धकता। तद्धर्मावच्छिन्नांशे दोषविशेषाजन्यतल्लौकिक– प्रत्यक्षानिश्चयान्याहार्येतरतद्धर्मितावच्छेदककतद्धर्मावच्छिन्नविशिष्टबुद्धित्वेन प्रतिबध्यता इति रीत्या अयोग्यतानिश्चयः प्रतिबन्धकः, तदभावः कारणं इत्याहुः।

**आलंकारिकास्तु** न शाब्दबोधे योग्यताज्ञानं हेतुः, नापि अयोग्यतानिश्चयः प्रतिबन्धकः। तत्सत्त्वेऽपि 'चन्द्रो मुखं' इत्यादिरूपकादिबोधोदयात्, 'एष वन्ध्यासुतो याति खपुष्पकृतशेखरः' इत्यादिश्लोकार्थशाब्दबोधेन चमत्कारातिशयानुभवाच्च।



**न च** तत्र पदार्थस्मरणमात्रम्, न शाब्दबोधः इति **वाच्यम्**। 'घटमानय' इत्यादावपि तथा वक्तुं शक्यतया शाब्दबोधमात्रोच्छेदापत्तिः। किंतु बाधनिश्चयस्य शाब्दभिन्नमेव प्रतिबध्यम्। **न चैवं** प्रवृत्त्याद्यापत्तिः। प्राक्तनबाधेन प्रामाण्यशङ्काया एव ( अप्रामाण्यनिश्चयस्य वा–के. ) जायमानज्ञाने जननात्, अप्रामाण्यशङ्काशून्यज्ञानस्य प्रवृत्तिं प्रति हेतुतया तदभावेन प्रवृत्त्यापादनासंभवात्। तदुक्तं **खण्डने** 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि' इति। **इत्याहुः**।

वस्तुतस्तु एवं सति अयोग्यवाक्योच्छेदापत्तिः। 'चन्द्रो मुखं' इत्यादिवाक्येन पामराणां बोधानुत्पादात्, आलंकारिकाणामेव बोधोदयाच्च ( मीमांसकानां नैव वा भवति ? –के. ) वासनाविशेष एव उत्तेजको वाच्यः। एवं च उत्तेजकाभावविशिष्ट-बाधनिश्चयाभावस्य, शाब्दबोधे हेतुत्वं युक्तं इति अयोग्यतानिश्चयस्य प्रतिबन्धकत्वं युक्तमुत्पश्यामः। **मणि.** पृ. ६६–६८. * योग्यता च सर्वत्रैव द्विप्रकारा दोषापनयेन, गुणान्तरोपजननेन वा भवति। तत्र संस्काराः गुणान्तरमुपजनयन्ति। तपश्च दोषनिर्घातं करोति। **वा.** ३।८।३।९ पृ. १११५. * योग्यता स्वार्थप्रतिपादने वाक्यस्य सहकारिणी। **वि.** १।१।७. * **योग्यतायाः** शाब्दबोधकारणत्वनिरासः। **भाट्ट.** ३।१।६.

* **योग्यताज्ञानं** न शाब्दबोधहेतुः, अपि तु अयोग्यतानिश्चयस्य प्रतिबन्धकतामात्रम्। **भाट्ट.** ३।१।६ पृ. १९०.

* **योग्यत्वं** अवान्तरप्रकरणं एकवाक्यत्वं च महाप्रकरणात् बलीयांसि विनियोजकानि। **वा.** ३।१।१४।२४.

**योग्यप्रयुक्तं साधनं कार्यसाधकमिति न्यायः।** यथा – नाहं कर्म करोमीत्यभिमानवन्मूढतमकृतत्वात्संन्यासस्य, तदपेक्षया परमेश्वरमाराध्याहं तरिष्यामीतीश्वरार्पणबुद्ध्या निरभिमानिना मुमुक्षुणा क्रियमाणत्वात् कर्म ज्यायः इति भावः। अत एवोक्तं भगवता 'नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः' इति। **साहस्री.** ५२८.

* '**योजनं** तच्चतुष्टयम्' क्रोशचतुष्टयम्। ('हस्तो वितस्तिद्वितयं दण्डो हस्तचतुष्टयम्। तत्सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयम्॥') **सु.** पृ. १२८.

**योजनप्रायायां कावेर्यां मल्लबन्धनन्यायः।** यथा कावेर्याख्यायां नद्यां योजनेन योजनबलेन प्रायायां मल्लस्य कैवर्तकस्य बन्धनं न युज्यते, तथा प्रकृतेऽपीत्यर्थः इति केचित्। अन्ये तु– मल्लो बाहुयुद्धकुशलस्तद्वदधोलम्बितवाससां कटौ बन्धनं यथा योजनप्रायायां तस्यामयुक्तं तथेत्याहुरिति। **साहस्री.** ५९.

* **योनेः** स्वायाः उत्तरायाश्च प्रग्रथनेन संपादितककुभोरेव बृहद्रथंतरयोर्गानं ज्योतिष्टोमे। **भा.** ९।२।६।२५–२८.

* **योनिग्रन्थः**। योनिः साम्नामाधारभूता प्रथमा ऋक्, तत्प्रतिपादको ग्रन्थः। अयमेव 'वेदसामग्रन्थः' इत्युच्यते 'छन्दोग्रन्थः' इति च। **वि.** ९।२।१ वर्णकं २.

* **योनिगतानां** स्तोभानां उत्तरयोर्ऋचोरतिदेशः। ९।२।१०।३३–३७. 'स्तोभाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **योनिसाम्नः** उत्तरावर्णवशेन उत्तरयोर्ऋचोर्गानम्। ९।२।९।३१–३२. 'सामोहन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **यौगपद्ये** अपच्छेदयोः अदाक्षिण्यसर्वस्वदाक्षिण्ययोर्विकल्पः। ६।५।१८।५१–५३. **मीको.** पृ. ४९७ 'अपच्छेदयौगपद्ये अदाक्षिण्य०' इत्यत्र अधिकरणं द्रष्टव्यम्। * यौगपद्येऽप्यपच्छेदयोः प्रायश्चित्तम्। ६।५।१७।४९–५०. **मीको.** पृ. ४९८ 'अपच्छेदयौगपद्येऽपि प्रायश्चित्तम्' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **यौगिकं** नामधेयं नातिदेशकम्। कथम् ? येनैव हि योगेन द्वादशाहे प्रायणीयशब्दः तेनैव गवामयनेऽपि। **टुप्.** ७।१।१।१२ पृ. १५३४. * **यौगिकानि** नामपदानि अनिरूढानि तेषां चिन्ता तत्प्रख्याधिकरणे। **वा.** १।४।३।४ पृ. ३३२, **सु.** पृ. ४३०. * यौगिकानि प्रायणीयादिपदानि न धर्मातिदेशायालं इति सप्तमे

( ७।३।२ ) वक्ष्यामः । रत्न. ५।३।९।२१–२५. * **यौगिको** निर्मन्थ्यशब्दः । **वि.** १।४।१०, * यौगिकः प्रोक्षणीशब्दः । १।४।९. * **यौगिकाः ।** अवयवार्थ-समन्वितव्यक्तिमात्रवचनाः यौगिकाः, न संनिहित-वचनाः । प्रमाणान्तरेण तु विशेष्यमाणाः तत्रैव व्याप्रियन्ते । यथा वैश्वदेव्यामिक्षा इति तद्धितः संनिहिता-मामिक्षामेव अभिधत्ते । **शा.** ३।२।८ पृ. २२०. * यौगिकाः शब्दाः प्रोक्षणीत्यादयः । वि. १।४।१०. * **यौगिकैः** ( पदैः ) न संबन्धोऽभिधीयते इत्युक्तम् । समाख्यान्यथानुपपत्त्याऽनुमीयते । **वा.** ३।३।७।१४ पृ. ८३४, * यौगिकैः शब्दैः द्रव्यमभिधीयते । ‘सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते । नहि संबन्धवाच्यत्वं संभवत्यतिगौरवात् ॥’ यदि एकहायन्यादिभिः शब्दैः संबन्धोऽभिधीयेत, ततो नोदाह्रियेरन् । न तु एतैः संबन्धोऽभिधीयते । कथम् ? अतिगौरवात् । इह हि संबन्धमात्रं वा अभिधेयं कल्प्येत, तद्विशेषो वा । यदि तावत् संबन्धमात्रम्, ततः सर्वयौगिकानां एकविषयोपनिपातात् पर्यायत्वप्रसङ्गः । अथ संबन्धविशेषः ततस्तस्य स्वतो विशेषाभावात् अवश्यं संबन्धिकृत एव भेदोऽभ्युपगन्तव्यः । संबन्ध्यपि च अनभिधीयमानो न शक्नोति अभिधीयमानं संबन्धं व्यवच्छेत्तुं इत्यवश्यं सोऽपि अभिधातव्यः । न चैकस्मिन् संबन्धिनि संबन्धोऽवस्थितः । न च तन्मात्रेण अन्यस्मात् व्यवच्छिन्नः प्रतीयते इति उभावपि ( अनुयोगिप्रतियोगिनौ ) अभिधातव्यौ । तत्र गोमान् इत्येकः संबन्धी गोशब्देनाभिधीयते । द्वितीयस्य न कश्चिदभिधाता दृश्यते । तेन मतुपा विशिष्टं संबन्धमभिदधता तद्वन्तं सन्तं संबन्धिनं एकमनुक्त्वा अभिधातुं ( संबन्धिद्वयविशिष्टं संबन्धं ) अशक्नुवता, नियोगतः सोऽप्यभिधातव्यः । ततश्च तमभिधाय संबन्धाभिधायां अतिगौरवं स्यात् । ३।१।६।१२ पृ. ६७५. * **यौगिकानां** अवयवार्थविशिष्टव्यक्तिमात्रवाचित्वेन, संनिहितवाचित्वे प्रमाणाभावात् । **भाट्ट.** ३।२।८. * यौगिकानां जातिवाचित्वाभावः । **सु.** पृ. ११००. * यौगिकानां द्रव्यवचनत्वं वार्तिके ( ३।१।६ ) साधितम् । **सोम.** ३।१।६. * **यौगिकानां** पदानां संनिहितमात्रवाचकत्वं आग्नेय्यधिकरणे निराकृतम् । ( पार्थसारथिना ) । **शा.** २।२।६. * यौगिकानां शब्दानां अवयवयोगवर्तीषु सर्वासु व्यक्तिषु साधारण्येन प्रवृत्तानां लक्षणभूत-प्रयोगव्यवस्थापक-धर्मानपेक्षात् प्रयोगमात्रात् व्यवस्थितविषयत्वावधारणाशक्तिः । **सु.** पृ. ११००. * यौगिकानां शब्दानां द्रव्यवाचकत्वेन संबन्धावाचकत्वात् । ( मीन्या. समाख्यानिरूपणावसरे ) ‘ सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते । न हि संबन्धवाचित्वं संभवत्यतिगौरवात् ॥ ’ **वा.** ३।१।६।१२ पृ. ६७५, * यौगिकानां शब्दानां संबन्धाभिधायित्वम् । ३।१।६।१२ पृ. ६७४. * यौगिकानां समभिव्याहारादिनैव संनिहितपरत्वम्, न स्वतः । **सोम.** ३।२।८ पृ. २२०. * **यौगिकी** एव समाख्या विनियोगे प्रमाणम् । **वा.** ३।३।६।१३ पृ. ८२०.

* **यौगिक-अयौगिकत्वम् ।** सकलश्च राजेतिशब्दः राज्ये अनुप्रविष्टः इति स **यौगिको** युक्तः, न तु राज्यशब्दो राजनि अनुस्यूतः सकल इति अयौगिकत्वम् । **वा.** २।३।२।३ पृ. ५८५.

* **यौगिकत्वं** ( पदस्य ) अवयवशक्त्या अर्थप्रत्यायकत्वं चित्रगुः इत्यादौ । **मणि.** पृ. ७८.

* **यौगिकनामातिदेशः ।** **बाल.** पृ. ११७–१९.

* **यौगिकरूढत्वं** ( पदस्य ) समुदायशक्त्या, अवयवशक्त्या च भिन्नार्थप्रत्यायकत्वं मण्डपः इत्यादौ । **मणि.** पृ. ७८.

* **यौगिकशब्दस्य** विनियोगहेतुत्वं अवसीयते । **सु.** पृ. ११९३, * **यौगिकशब्दानां** व्यक्तिवाचित्वम् । पृ. ११२२. * यौगिकशब्दानाम् । ‘सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते’ इति वार्तिकात् ( वा. पृ. ६७५ ) सर्वेषां कृत्तद्धितसमासरूपयौगिकशब्दानां द्रव्ये शक्तिमाहुः मीमांसकैकदेशिनः । अनिर्णीतशक्तिकैकदेश-यौगिकपदपरमिदं वार्तिकं इति परे । **मणि.** पृ. १४९. * यौगिकशब्दानां स्वावयवार्थान्वयार्हवस्तुवाचित्वम् । **सु.** पृ. ११२२.



* **यौगिकशब्दद्रव्यवचनतावादार्थः** ‘ अरुणान्यायः ’ इति भाष्पीयाधिकरणे **मीको.** पृ. ६०५ इत्यत्र द्रष्टव्यः ।

* **यौगिकश्रुतिजनिताविशेषप्रत्ययेन** संनिधिलक्षणलौकिकप्रकरणस्य बाध्यमानत्वम् । **वा.** ३।२।८।२१ पृ. ७७४.

* **यौधाजयं** साम बार्हते तृचे भवति पूर्वा बृहती ‘ पुनानः सोम धारयापो वसानो० ’ । उत्तरा विष्टारपङ्क्तिः ‘ दुहान ऊधर्दिव्यं० ’ । प्रग्रथनेन तिस्रो बृहत्यः । **भा.** ९।२।६।२५ वर्णकं २. * यौधाजयं साम माध्यंदिने गीयते । तदाधारश्च प्रगाथो बार्हतः । ‘ पुनानः सोम० ’ इति बृहती ‘ दुहान ऊधर्० ’ इति सतोबृहती । प्रग्रथनेन च तिस्रो बृहत्यो भवन्ति, तासु यौधाजयं गेयम् । **वि.** ९।२।६ वर्णकं २. * **यौधाजयस्य** **रौरवस्य** च साम्नोर्गानं बृहतीविष्टारपङ्क्त्योरेव प्रग्रथनेन संपादिते बार्हते तृचे कार्यं ज्योतिष्टोमे । ९।२।६।२५–२८ वर्णकं २. **मीको.** पृ. १८१९ ‘ ज्योतिष्टोमे बृहतीविष्टारपङ्क्त्योरेव० ’ इत्यत्र द्रष्टव्यम् ।

**[?] यौप्यस्तु विरोधे स्यात् मुख्यानन्तर्यात् । १२।२।११।२७ ॥**

पशुमत्सु चातुर्मास्येषु ‘ परिधौ पशुं नियुञ्जन्ति ’ इति श्रुतम् । अस्मिन् परिधौ परिधिधर्मा यूपधर्माश्च प्राप्ताः । तत्र विरोधे सति यौप्यः यूपधर्मः स्यात् कर्तव्यः मुख्यानन्तर्यात् । मुख्यः पशुः तस्यानन्तरो यूपः, संनिपातित्वात् । परिधिस्तु बहिरङ्गः । तस्मात् धर्मविरोधे परिधौ यूपधर्मः तक्षणं उच्छ्रयणं निखननं इति कर्तव्यः स्यात् इति पूर्वः पक्षः ।

**इतरो वा तस्य तत्र विधानात् । २८ ॥**

चातुर्मास्येषु पशुकेषु ‘ परिधौ पशुं नियुञ्जन्ति ’ इति श्रुतम् । तेन परिधिरेव यूपार्थे भवति । तत्र परिधौ विरोधस्थले यूपधर्माः कर्तव्याः इति **पूर्वपक्षे सति** सिद्धान्तसूत्रम् । वा-शब्दः पूर्वपक्षव्यावृत्त्यर्थः । इतरः परिधित्वेन साक्षं अविरोधी एव यूपधर्मः कर्तव्यः, तस्य यूपकार्यस्य, तत्र परिधौ विधानात् ‘ परिधौ पशुं नियुञ्जन्ति ’ इति । तस्मात् तत्र तक्षणं उच्छ्रयणं निखननं च न कर्तव्यम् ।

**उभयोश्चाङ्गसंयोगः । २९ ॥**

पशुमत्सु चातुर्मास्येषु ‘ परिधौ पशुं नियुञ्जन्ति ’ इति श्रुतम् । तत्र परिधिधर्मा यूपधर्माश्च कर्तव्याः । धर्मविरोधे तु परिधिधर्म एव कर्तव्यो न यूपधर्मः तक्षणादिः । यतः उभयोः पक्षयोः अङ्गेनैव धर्मस्य संबन्धो न प्रधानेन । ततश्च नात्र अन्तरङ्गबहिरङ्गभावस्योपयोगः । तस्मात् धर्मविरोधे परिधिधर्म एव कर्तव्यो न यूपधर्म इति सिद्धान्तः । **के.**

---

## र

**[?] रक्तपटन्यायः ।** यदा तु निराकाङ्क्षेऽपि वाक्ये आकाङ्क्षामुत्थाप्य एकवाक्यता क्रियते, तदा रक्तपटन्यायप्रवृत्तिः । यथा पटोऽस्तीति वाक्यस्य निराकाङ्क्षस्यापि कीदृशः इत्याकाङ्क्षामुत्थाप्य ‘ रक्तः ’ इत्यनेनैकवाक्यता क्रियते, तथा प्रकृतीनां दर्शपूर्णमासादीनां स्वप्रकरणस्थाङ्गैः निवृत्तोपकाराकाङ्क्षाणामनारभ्याधीताङ्गैः विकृतीनां चातिदिष्टाङ्गैः परिपूर्णानां शरमयादिभिः सहोत्थिताकाङ्क्षाविरहेऽप्युत्थापिताकाङ्क्षयान्वयः, इत्येवं विषयेऽस्य प्रचारः । **साहस्री.** ५०१.

* **रक्षोभीतिनिरासकामः** ‘ अग्नये रक्षोघ्नेऽष्टाकपालं निर्वपेत् ’ ‘ अमावास्यायां निशि यजेत ’ इति । निशीष्टिन्यायः । **मीको.** पृ. २३८५ । **भा.** १२।२।५।१४.

* ‘ **रक्षोहणो** वलगहनो वैष्णवान् खनामि ’ इति उपरवमन्त्रः प्रत्युपरवं आवर्तते ज्योतिष्टोमे । ‘ उपरवन्यायः ’ **मीको.** पृ. ११६० । **भा.** ११।४।१९।५२–५३.

* **रक्षितवन्तौ** आज्यभागौ स्वस्त्ययन्यां इष्टौ ‘ अग्ने रक्षाणो अंहसः० ’ ‘ त्वं नः सोम विश्वतः० ’ इति । **आश्वश्रौ.** २।१०।५.

* **रजस्वलाव्रतानां** भूमिशयन-अस्नान-अमांसभक्षण-अनभ्यङ्ग-अनञ्जन- अविलेपन-अकर्तन-अदन्त-

धावन-अनस्वच्छेदन-अरज्जुसंसर्जनादीनां त्रिरात्रविषयाणां दर्शपूर्णमासप्रकरणातिरिक्तस्त्रीधर्मत्वम् । **वा.** १।३।४।९ पृ. २२१.

* **रज्जू** द्वे प्रेङ्खबन्धनक्षमे महाव्रते ; दार्भ्ये त्रिगुणे स्याताम् । पञ्च व्यायामे । सव्यावृता एका दक्षिणावृता चान्या । ताभ्यां प्रेङ्खच्छिद्रेषु कुर्यात् दक्षिणावृतया दक्षिणतः, सव्यावृतया उत्तरतः, द्विगुणे प्रोते कुर्यात् रज्ज्वोः अन्ताश्च वीवधान्तयोः त्रिः प्रदक्षिणं पर्यस्य ऊर्ध्वग्रन्थि निष्टर्क्यं बध्नाति । **ऐआ.** ५।१।३ **( सायणभाष्यम् ).**

**रज्जुसर्पन्यायः** । यथा रज्जोरज्ञानतायाः सर्पात्मना भानम्, ज्ञातायास्तु स्वरूपेण, तथा ब्रह्मणोऽनवबुद्धस्य सप्रपञ्चत्वेन, बुद्धस्य च निष्प्रपञ्चत्वेन भानं न मानान्तरविरुद्धमित्यर्थः । **साहस्री.** १६४.

* **रत्नपरीक्षायाम्** । 'यथा रत्नपरीक्षायां साध्वसाधुत्वलक्षणम् । तथा व्याकरणात्सिद्धं साधुशब्दनिरूपणम् ॥ ' **वा.** १।३।८।२७ पृ. २८२.

* **रत्निनां** हवींषि राजसूये इष्टिविकृतिः । **तैसं.** १।८।९. इत्यत्र एकादश हवींषि उक्तानि. **तैब्रा.** १।७।३ इत्यत्र 'द्वादशैतानि हवींषि भवन्ति' इत्युक्तम्, 'त्रयोदश रत्निनां हवींषि ' इति **सत्याषाढः** ( १३।४।१ ) । **वि.** १०।१।१, * रत्निनां हविःषु मैत्राबार्हस्पत्ये ' स्वयंकृता वेदिर्भवति, स्वयंदिनं बर्हिः, स्वयंकृत इध्मः ' ( तैसं. १।८।९ ) इति । तत्र लुप्तोपकाराणां अङ्गानां अननुष्ठानं अलुप्तोपकाराणां तु अनुष्ठानम्, उद्धननादीनि न कर्तव्यानि, बर्हिःस्तरणादीनि कर्तव्यानि । १०।१।१.

* ' **रथः** गच्छति ' इति वाक्यार्थविचारः **मीको.** पृ. १००० ' आर्थी भावना ' इति **बिन्दौ, मीन्या.** प्रघट्टके च द्रष्टव्यः । * वाजपेये ' यजुर्युक्तं **रथम**ध्वर्यवे ददाति, ऋग्भिर्युक्तं होत्रे, सामभिर्युक्तमुद्गात्रे'। **भा.** १०। ३।२१।७५, * **रथेन** यजुर्युक्तेन वाजपेये विहितेन, अध्वर्योर्दास्यादिभागान्तरस्य न निवृत्तिः । १०।३।२१। ७४–७५.

* **रथाक्षमात्राणि** अन्तरालानि यूपैकादशिन्यादौ । **संकर्ष.** १।४।२१. **मीको.** पृ. ३२६७ ' यूपैकादशिन्यादौ रथाक्षमात्राणि यूपान्तरालानि ' इत्यत्र द्रष्टव्यम् ।

* **रथाक्षमात्रान्तरालता** च यत्रैकादशिनी विहिता तत्र भविष्यति । **वा.** २।४।२।२६.

* ' **रथघोषेण** माहेन्द्रस्य स्तोत्रमुपाकरोति ' इत्यत्र समाहारद्वंद्वः पूर्वपक्षे, तत्पुरुषः सिद्धान्ते । **बाल.** पृ. १४३.

**रथघोषाधिकरणम्** । वाजपेये माहेन्द्रस्तोत्रोपाकरणसाधनतया विहितेन रथदुन्दुभिघोषेण प्राकृतदर्भमन्त्रयोर्बाधः ॥

**प्रकृतिलिङ्गासंयोगात्कर्मसंस्कारं विकृतावधिकं स्यात् । १०।४।१।१ ॥**

**भाष्यम्**— एवं वा। अस्ति वाजपेयः, ' शरदि वाजपेयेन स्वाराज्यकामो यजेत ' इति। तत्र श्रूयते ' रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति, दुन्दुभिघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति ' इति । अस्ति च प्रकृतौ ' उपावर्तध्वमिति दर्भाभ्यां स्तोत्रमुपाकरोति ' इति । तदिह चोदकेन प्राप्तम् । तत्र संशयः किं रथघोषेण दुन्दुभिघोषेण ( च ) यो नादः, स मन्त्रस्य निवर्तकः, यत् द्रव्यं तत् दर्भयोः, उतोभयमुभयस्य निवर्तकमिति । किं प्राप्तम् ? शब्दत्वेन सामान्येन नादो मन्त्रस्य निवर्तकः, द्रव्यत्वेन द्रव्यं दर्भयोः । ननु तत्पुरुषनिर्देशोऽयम् । तेन परार्थेन रथस्य घोषविशेषणत्वेनोच्चारणम्, न स्वकार्येण निर्देशः । अत्रोच्यते। द्वंद्वनिर्देशोऽपीदृशो भवति । तत्रायमप्यर्थः, न रथः परार्थं उच्चरिष्यते । श्रुतिर्हि तथा हीयेत, लक्षणा च स्यात् । चोदनालिङ्गसंयोगश्च बाध्येत । तस्मात् घोषो मन्त्रस्य निवर्तकः, द्रव्यं दर्भयोरिति ।

**टुप्**— ' रथघोषेण ' इति रथो दर्भयोर्निवर्तकः, घोषो मन्त्रस्य । कुतः ? एवम् ( रथश्च घोषश्च इति द्वन्द्वसमासपक्षे ) स्वार्थो रथशब्दो भविष्यति । इतरथा ( रथस्य घोषः इति षष्ठीतत्पुरुषपक्षे ) परविशेषणं इति लक्षणां ब्रवीति, श्रुतिः स्वार्थः । रथशब्दो रथमेव ब्रवीति, घोषशब्दोऽपि घोषमेव। तत्पुरुषे तु रथः परार्थे उच्चार्येत । तस्मात् द्वंद्वोऽयम्। ननु द्वन्द्वे द्विवचनं प्राप्नोति। उच्यते।



' सर्वो द्वंद्वो विभाषया एकवत् भवति ' इत्येकवचनं ( द्वंद्वे ) भवत्येव ।

**चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत, प्रकृतिसंनिधानात् । २ ॥**

**भाष्यम्**-- एवं प्राप्ते, ब्रूमः । चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत । उभयस्य चोदनालिङ्गसंयोगो नैकैकस्य । रथघोषेणेति श्रूयते, न रथेन घोषेण चेति । रथविशिष्टो घोषो लक्षणं स्तोत्रोपाकरणस्य । प्रकृतौ दर्भौ लक्षणम्, मन्त्रश्च । नन्विदानीमेवोक्तं द्वंद्वनिर्देशो भविष्यतीति । नैतदेवम् । द्विवचनं हि तथा स्यात् । एकवचनेन च निर्देशः । तेनैको लक्षणम्, स च घोषः । तेन हि समभिव्याहारस्तृतीयायाः । ननु समुदायेन समभिव्याहारो भविष्यति । नहि, समुदायस्याशब्दार्थत्वात् । अथ समुदायो निर्दिश्येत, ततोऽभ्युपगतमुभयस्य निवर्तकमिति । ननु मन्त्रो वाचक एव, उपावर्तध्वमिति । नेत्युच्यते । उपावर्तनमात्रस्याभिधायको मन्त्रः । न चोपावर्तनमात्रं स्तोत्रोपाकरणम् । अथापि अभिधानं स्यात्, तथापि तस्य निवर्तकः । लक्षणेनोपाकर्तव्यमिति प्रत्यक्षा श्रुतिः । अभिधानेनोपाकर्तव्यमिति चोदकः । श्रुतिश्च चोदकाद्बलीयसी । तस्मादुभयस्य निवर्तको रथघोषो दुन्दुभिघोषश्चेति । किं भविष्यति प्रयोजनम् । यदि रथो न घोषविशेषणम्, अरथविशिष्टोऽपि घोषः स्तोत्रोपाकरणं लक्षयेदिति ।

**टुप्**— ( सिद्धान्तमाह– ) एवं तर्हि ( यदि समाहारसमासोऽयम्, ततः ) तत्पुरुषादपि पापीयान् अयं समासः प्राप्नोति । कथम् ? अत्र ( समाहारसमासे ) धवखदिरयोर्यः समाहारः, स प्रधानभूतः, तं प्रति धवखदिरौ अत्यन्तं गुणभूतौ उच्चार्येते । स च समुदायः ( चशब्दो हेतौ । अनेकार्थसमुदायो हि समाहारः । अतोऽसौ ) न केनचित् शब्देनोच्यते । तत्र द्वावपि रथघोषौ परार्थौ भवेताम् । तस्मात् तत्पुरुष एव शेषात् । प्रयोजनम्, यदि रथो घोषविशेषणम्, एवं नियमो भवति ( रथस्यैव घोषः, नान्यस्य )। ननु पूर्वपक्षेऽपि नियम एव ( स्यात् ) । ( अरुणावत् ऐककर्म्यात् ) । उच्यते । असाधारणगुणवचनोऽयं शब्द एव ( रथघोषमात्र एव ) उपपद्यते । अरुणगुणस्तु साधारणोऽपि भवति । तत्र वाक्येन ( एकहायनी– ) द्रव्यनियमो भवति ।

**शा**-- वाजपेये श्रूयते ' रथघोषेण माहेन्द्रस्तोत्रमुपाकरोति ' इति । प्रकृतौ ' उपावर्तध्वम् ' इति मन्त्रेण दर्भाभ्यां स्तोत्रोपाकरणम् । तदिह, किं रथः दर्भयोर्निवर्तकः, घोषश्च मन्त्रस्य उत रथस्य घोषः उभयोर्निवर्तकः इति संशयः । तदर्थं च किं अयं समाहारद्वन्द्वो रथेन घोषेण च इति किंवा षष्ठीतत्पुरुषः । तत्र षष्ठीसमासपक्षे पूर्वपदस्य लक्षणा स्यात् । अतः समाहारद्वन्द्वः । तेन रथो घोषश्च द्वयं उपाकरणसाधनम् । तत्र रथो द्रव्यत्वसामान्यात् दर्भयोर्निवर्तकः, घोषस्तु मन्त्रस्य शब्दत्वसामान्यात् । एवं च न अवश्यं रथस्यैव घोष आदर्तव्यः । घोषस्य अविशेषणात् येन केनचिदपि घोषेण कार्यसिद्धेः । **इति प्राप्ते, ब्रूमः** । इतरेतरयोगद्वन्द्वे पदद्वयमपि श्रुतिवृत्तं स्यात् तथा तु रथघोषाभ्यामिति द्विवचनं स्यात् । समाहाराश्रयणे तु द्वे अपि पदे लक्षणार्थे स्याताम्, तत्पूर्वपदमात्रे लक्षणावृत्तिमङ्गीकृत्य षष्ठीसमासाश्रयणम् । तस्मात् रथस्य घोषः उपाकरणस्य साधनम्, स च प्राकृतं साधनं मन्त्रदर्भौ निवर्तयति ।

**सोम**— यदि कार्ये विधानात् शरैः कुशबाधः, तर्हि रथस्यापि दर्भकार्ये विधानात् तद्बाधकत्वं स्यात् इत्युत्थितेः **संगतिः** ।

**वि**— ' रथदुन्दुभितद्घोषौ किं बर्हिर्मन्त्रयोः क्रमात् । बाधकावुत तद्घोष एक एव हि बाधकः ॥ , रथघोषेत्ययं द्वन्द्वस्तेनैतौ बाधकौ, न तत् । घोषाभ्यामिति वा घोषे लक्षणा वा प्रसज्यते । पूर्वपक्षेऽन्यदीयोऽपि शब्दोऽत्रास्तु रथे सति । राद्धान्ते रथदुन्दुभ्योरेव घोषः प्रयोजकः ॥ '

**भाट्ट**— एवं वा । वाजपेये ' रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति ' इति श्रुतम् । तत्र अतिदेशप्रवृत्तेः पूर्वप्रवृत्तेनानेन रथघोषकरणकमुपाकरणमेव माहेन्द्रोद्देशेन विधीयते । प्राकृतोपाकरणस्य च स्तोत्रद्वारकत्वमेव क्लृप्तमिति नान्यद्वारकत्वप्रसङ्गः । अस्तु वा पदत्रयेण लक्षणया माहेन्द्रस्तोत्रापूर्वसाधनीभूतोपाकरणानुवादेन रथघोषमात्र-

विधिः, प्रकृतौ च आज्ञादानाख्योपाकरणे दर्भौ 'उपावर्तध्वम्' इति मन्त्रश्च साधनम्। तदत्रौपदेशिकेन रथघोषेणातिदेशिकस्य बाधे अवश्यंभाविनि, किं रथो द्रव्यत्वसामान्यात् दर्भयोर्निवर्तकः, घोषश्च शब्दत्वसामान्यात् मन्त्रस्य, किं वा रथस्य घोष एव द्वयोर्निवर्तकः, इति **चिन्तायाम्**, पूर्वपदे लक्षणाप्रसङ्गेन तत्पुरुषसमासानुपपत्तेर्द्वंद्व एवायम्। **न च** द्वंद्वेऽपि इतरेतरयोगद्वंद्वाश्रयणे द्विवचनापत्तेरेकवचनानुरोधेन समाहारद्वंद्वो वाच्यः। तत्र च बहुव्रीहिवत् समाहारे पदद्वयस्य लक्षणापत्तेर्वरं तत्पुरुषाङ्गीकरणमेवेति **वाच्यम्**। समाहारद्वंद्वेऽपि पदद्वये लक्षणानङ्गीकारात्। नहि 'पाणिपादं वादय (क्षालय)' इत्यादौ समाहारो नाम विशेष्यतया कश्चित् प्रतीयते, अन्यथा पाणिपादयोः समाहारविशेषणत्वे वादन (क्षालन) कर्मत्वानुपपत्तेः। अत एव एकविध एव द्वन्द्वः। तत्र च 'सर्वो द्वंद्वो विभाषयैकवद्भवति' इति वचनेनैकवचनं वैकल्पिकम्। अत एव, एकवचनान्तद्वंद्वे 'समाहारद्वंद्वः' इति संज्ञाकरणमपि परिभाषामात्रमेव। अतश्च द्वंद्वे कस्यापि लक्षणीयत्वाभावात् तत्पुरुषापेक्षया तस्य प्रबलत्वमेव। यदि परमेकवचनस्य द्वित्वादौ लक्षणा उद्भाव्येत तथापि तस्या जघन्यैकवचननिष्ठत्वात् पाशाधिकरणन्यायेन अदोषतया तत्पुरुषापेक्षया प्रबलत्वमेव। न चोभयविधाने वाक्यभेदः, द्वंद्वेन परस्परसहितयोरेव करणत्वविधानात्। न च तथापि इतरेतरयोगद्वंद्वे परस्परसाहित्यांशे पदद्वयलक्षणाया आवश्यकत्वात् कथं तत्स्वीकारः, तत्र तस्य धवखदिरसंसर्गविधयाऽपि बाधोपपत्तौ लक्षणायां प्रमाणाभावात्। धवस्य हि स्वसहितखदिरवृत्तित्वसंसर्गेण कर्मत्वेऽन्वयः, खदिरस्यापि तत्सहितधववृत्तित्वसंबन्धेनेति क्व लक्षणा। अतश्च रथो दर्भनिवर्तकः घोषश्च मन्त्रनिवर्तक इति सिद्धम्। एवं च घोषो नावश्यं रथस्यैवेति प्रयोजनम्। **न च** द्वंद्वेन तयोः परस्परसाहित्यावगतेः अरुणैकहायनीन्यायेन परस्परनियमात् कथं न घोषो रथस्यैवेति **वाच्यम्**। यादृशोपपदद्वयसमभिव्याहारे हि आगोपालाङ्गनं तदर्थयोः यादृशोऽन्वयोऽवगम्यते तादृशस्यैव तदर्थयोरन्यान्वयव्युत्पत्तौ पार्ष्ठिकबोधविषयत्वम्। अत एव अरुणैकहायनीस्थले परिच्छेद्यपरिच्छेदकभावः एव पार्ष्ठिकबोधविषयः। 'अग्नये कृत्तिकाभ्यः' इत्यादौ समुच्चयः एव। अत एव 'पाणिपादं पश्य' इत्यादौ सिद्धान्ते द्वंद्वे इतरेतरयोगस्य परस्परसापेक्ष्येण एकान्वयरूपस्य शाब्दबोधे एव भासमानत्वात् नैव कश्चित् पार्ष्ठिकान्वयः, न वा निरूप्यनिरूपकभावस्य बोधविषयता। अतो यस्यकस्यचिद्घोषः एव मन्त्रनिवर्तकः। **इति प्राप्ते**, नायं द्वंद्वः, स हि न तावदितरेतरयोगः, तथात्वे द्विवचनापत्तेः। नापि समाहारद्वंद्वः, तस्य वाचकपदाभावेन पदद्वयस्यापि समाहारे लक्षणाऽऽपत्तेः। **न च** इतरेतरयोगद्वंद्वः एव 'सर्वो द्वंद्वो विभाषयैकवद्भवति' इत्यनेन वचनेन एकवचनस्य वैकल्पिकत्वमात्रविधानात् समाहारद्वंद्वे प्रमाणाभाव इति **वाच्यम्**। 'द्वंद्वैकवद्भावो न पठितव्यो भवति समाहारैकत्वादेव तत्सिद्धेः' इति महाभाष्यस्यैव ज्ञापकविधया प्रमाणत्वात्। इदं हि भाष्यम् 'सर्वो द्वंद्वः' इत्यस्य प्रत्याख्यानार्थं सत् समाहारस्य एकवचनान्तद्वंद्वसमासेऽभिधानं गमयति। अतश्च अनुशासनबलादेव समाहारस्य समुदायापरपर्यायस्य पदद्वये लक्षणा बहुव्रीहिवत्। न च तत्र क्रियान्वयानुपपत्तिः, 'पाणिपादं पश्य' इत्यादौ तदुपपत्तेः। 'पाणिपादं वादय (क्षालय)' इत्यादौ तु समाहारे एव सामानाधिकरण्येन अन्वयः समाह्रियमाणयोर्वा पुनर्लक्षणेति ध्येयम्। अतश्च समाहारद्वंद्वस्यात्यन्तजघन्यत्वात् वरमेकलक्षणाङ्गीकारेण तत्पुरुषाश्रयणात् रथस्यैव घोषः। **वस्तुतस्तु** यद्यपि इतरेतरयोगद्वंद्वे एव एकवचनस्य वैकल्पिकता, न तु क्वापि द्वंद्वे समाहारस्य भानमित्याश्रीयते तथापि प्रकृते न द्वंद्वः, एकवचनस्य द्वित्वादौ लक्षणायाः द्वंद्वपक्षेऽपि तुल्यत्वात्। न च जघन्यवृत्तित्वात् तस्या अदोषत्वम्, घोषस्य निरूपकसापेक्षत्वेन अपेक्षितविधानलाभाय मुख्यलक्षणापादकतत्पुरुषस्यैवाश्रयणीयत्वात्। यदा हि श्रौतार्थत्यागोऽपि अपेक्षितविधानलाभाय प्रयाजशेषादावङ्गीकृतः, तदा किमु वक्तव्यमुभयतो लक्षणासत्त्वे अपेक्षितविधानानुग्रहः इति। किञ्च इतरेतरयोगद्वंद्वेऽपि साहित्यलक्षणायाः पदद्वयेऽपि आवश्यकत्वात् तत्पुरुषः एव युक्तः। न च तस्य संसर्गविधया भानम्, तथात्वे



अनुशासनवैयर्थ्यापत्तेः। इतरथा कर्मत्वादीनामपि तत्त्वेन बोधापत्तेः। अतश्च रथस्य घोषः उभयोर्दर्भमन्त्रयोर्निवर्तकः। **न च** शब्दत्वसामान्यात् मन्त्रस्यैव निवर्तकोऽस्त्विति **वाच्यम्**। सादृश्यस्य हि नियामकापेक्षायामेव नियामकता, प्रकृते चोपकरणसंबन्ध्याज्ञाज्ञापनरूपकार्यजनकत्वेन विहितो रथघोषो यथैवार्थाभिधानद्वारा ज्ञापकस्य मन्त्रस्य निवर्तकः, तथैव करपल्लववत् ज्ञापकस्य दर्भस्यापि निवर्तकः ज्ञापनरूपस्य कार्यस्य औपदेशिकजनकलाभे जनकान्तरातिदेशस्यैव अकल्पनात्। अत एव 'धेनुर्दक्षिणा' इत्यादावपि न सादृश्यस्य नियामकता। तस्माद्रथस्य घोषेणोभयोर्बाधः।

**मण्डन**—'दर्भमन्त्रार्थयोर्घोषः।' बाधकः। ३.

**शंकर**—'रथघोषात् मन्त्रदर्भौ।' बाध्यौ। ३.

* यत्तु कैश्चित् बहुव्रीहौ अन्यपदार्थे निरूढलक्षणायाम्, पङ्कजपदेऽपि पद्मांशे निरूढलक्षणापत्तेः योगरूढिप्रवादोच्छेदापातात् बहुव्रीहावपि तद्वदेव अन्यपदार्थे शक्तिः इत्युपपादितम् (अरुणान्यायेन), तत् पङ्कजपदप्रतिबन्द्या शक्त्यङ्गीकारे समाहारद्वन्द्वेऽपि समाहारे शक्त्यङ्गीकारापत्तौ **रथघोषाधिकरणसिद्धान्तानुपपत्तिप्रसङ्गात्** उपेक्षितम्। **कौ.** ३।१।६।१२.

* **रथमुखे** 'भुवनस्य पते' इत्यादयः दशाहुतयः स्युः। **संकर्ष.** २।४।२८. **मीको.** पृ. ३०६१ "भुवनस्य पते' इत्यादयो दशाहुतयः रथमुखे स्युः" इत्यत्र द्रष्टव्यम्।

**रथवडवान्यायः।** यथा– रथे नियुक्ते वडवे, ते मिलित्वैव रथं वहतः, वियुक्ते तु न शक्नुतो वोढुम्, परस्परस्नेहातिशयात्कुरुतश्च हेषणं तथा प्रकृतेऽपि। **साहस्री.** ३९३.

* **रथवत्** (सूत्रस्थमेतत्पदम्)। यथा 'यजुर्युक्तं रथमध्वर्यवे ददाति' इति रथस्य वाक्यान्तरेण प्राप्तत्वात् अव्यवधानाच्च अध्वर्युभागे नियमः (एवमिहापि)। **भा.** १०।७।४।१३.

* **रथकारः** अत्रैवर्णिकः त्रैवर्णिको वा इति मतभेदः। तत्र किंचित् त्रैवर्णिकेभ्यो भिन्नं जात्यन्तरम्, न तु शूद्राः न वैश्याः न क्षत्रियाः। **भा.** ६।१।१२।४४-५०.

* रथकारः 'माहिष्येण करण्यां तु रथकारः प्रजायते'। क्षत्रियात् वैश्यायां जातो माहिष्यः—माहिषो वा उच्यते। 'माहिषोऽर्या-क्षत्रिययोः' इत्यमरः। 'शूद्राविशोस्तु करणः' इत्यमरः। वैश्यात् शूद्रायां करणः, करणी। **वि.** ६।१।१२. * रथकारः सौधन्वनापरपर्यायः वर्णविशेषः। रूढेः प्राबल्यात् 'रथं करोति' इति योगस्य दौर्बल्यात् न द्विजातिः। 'वर्षासु रथकारोऽग्नीनादधीत'। **मीन्या.** * **रथकारस्यापि** आर्षेयवरणमस्ति। **संकर्ष.** ३।४।६. **मीको.** पृ. २३८८ 'निषादरथकारयोरपि आर्षेयवरणमस्ति' इत्यत्र द्रष्टव्यम्। * रथकारस्य आधानमात्रेऽधिकारेऽपि नोत्तरकर्मसु अधिकारः, विद्याऽभावात्। तदाधानं च नाग्निसंस्कारार्थं किन्तु लौकिकाग्निगुणकं स्वर्गफलं स्वतन्त्रमेव प्रधानकर्म। ('निषादरथकारयोराधानादग्निहोत्रं दर्शपूर्णमासौ च नियम्येते' इति सत्याषाढश्रौतसूत्रम्। ३।१।१५)। **मीन्या.** * रथकारस्य ऋभोः सौधन्वनस्य नाम अत्रैवर्णिकस्य आधाने अधिकारः। ६।१।१२।४४–५०. * रथकारस्य संकीर्णजातिविशेषस्य आधानकालो वर्षर्तुः। **वि.** ६।१।१२.

**रथकाराधिकरणम्।** रथकाराधानाधिकरणम्। रथकारस्य सौधन्वनापरपर्यायस्य आधाने अधिकारः॥

**वचनाद् रथकारस्याऽऽधानेऽस्य सर्वशेषत्वात्। ६।१।१२।४४॥**

**भाष्यम्**— आधाने श्रूयते। 'वर्षासु रथकार आदधीत' इति। तत्र संदेहः किं त्रैवर्णिकानां अन्यतमो रथकारः, आहोस्वित् अत्रैवर्णिक इति। किं प्राप्तम्? रथकारस्य अत्रैवर्णिकस्य आधानमेतत्। कुतः? वचनात्। वचनमिदं भवति 'वर्षासु रथकार आदधीत' इति। नहि वचनस्य किंचिदलभ्यं नाम। सर्वशेषश्च अत्रैवर्णिक आधाने। ब्राह्मणराजन्यविशां उक्तमाधानम्। परिशेषात् अत्रैवर्णिको रथकारः स्यात्।

**न्याय्यो वा कर्मसंयोगाच्छूद्रस्य प्रतिषिद्धत्वात्। ४५॥**

**भाष्यम्**— न्याय्यो वा स्यात् त्रैवर्णिको रथकारः रथकर्मणा विशेषेणोच्यते। शूद्रो हि असमर्थत्वात् प्रतिषिद्धः। तस्मात् त्रैवर्णिको रथकारः स्यात्।

**अकर्मत्वात्तु नैवं स्यात् । ४६ ॥**

**भाष्यम्**— नास्ति त्रैवर्णिको रथकारः । प्रतिषिद्धं हि तस्य शिल्पोपजीवित्वम् । अत्रैवर्णिकस्तु अस्ति । तस्मात् वचनप्रामाण्यात् स आधास्यति ।

**आनर्थक्यं च संयोगात् । ४७ ॥**

**भाष्यम्**— ब्राह्मणादिषु वसन्तादयो नियताः । तान् प्रति वर्षा उच्यमाना अपि असंबन्धादानर्थक्यं प्राप्नुयुः । तस्मात् अत्रैवर्णिको रथकार इति ।

**गुणार्थेनेति चेत् । ४८ ॥**

**भाष्यम्**— एवं चेत् पश्यसि, नास्ति त्रैवर्णिको रथकारः, प्रतिषिद्धत्वात् शिल्पोपजीवित्वस्येति । गुणार्थेन कश्चित् भविष्यति रथकारः । आपदि जीवनं चैतस्य । वाक्येन तस्य इदमाधानं विज्ञायते ।

**उक्तमनिमित्तत्वम् । ४९ ॥**

**भाष्यम्**— उक्तमेतदस्माभिः, न निमित्तार्थानि एतानि श्रवणानीति ( २।३।३।४ ) । किमतो यदि न निमित्तार्थानि ? एतदतो भवति, प्रापकाणीति । प्रापितत्वात् तेषामाधानस्य, पुनः प्रापणमनर्थकम् । तेन यस्याप्राप्तं तस्य भविष्यतीति । **अथोच्येत** एतदेकं निमित्तार्थं भविष्यतीति । नैतदेवमवकल्पते । वसन्तादिसंयुक्तं तत्, कथमिव वर्षाभिः संबध्येत । अपिच प्रापकपक्षे आधानं विधीयते श्रुत्या । निमित्तपक्षे पुनः वर्षा विधातव्या वाक्येन । श्रुतिश्च वाक्याद्बलीयसी इति । तस्मात् अत्रैवर्णिकस्येदमाधानमिति ।

**सौधन्वनास्तु हीनत्वान्मन्त्रवर्णात् प्रतीयेरन् । ५० ॥**

**भाष्यम्**-- न तु सर्व एव अत्रैवर्णिको रथकारः । सौधन्वना इत्येष जातिवचनः शब्दः । ( कुतः ? ) सौधन्वना नाम जातिरभिधीयते । हीनास्तु किंचित् त्रैवर्णिकेभ्यो जात्यन्तरम्, न तु शूद्राः, न वैश्याः, न क्षत्रियाः । तेषामिदमाधानम् । कथमवगम्यते ? प्रसिद्धेर्मन्त्रवर्णाच्च । मन्त्रवर्णो हि भवति ' सौधन्वना ऋभवः सूरचक्षसः ' इति । ' ऋभूणां त्वा ' इति रथकारस्य आधानमन्त्रः । तस्मात् सौधन्वना ऋभव इति । ऋभवश्च रथकाराः । अपिच ' नेमिं नयन्ति ऋभवो यथा ' इति ये नेमिं नयन्ति ते ऋभव इत्युच्यन्ते । रथकाराश्च नेमिं नयन्ति । तस्मात् अत्रैवर्णिकानां अशूद्राणां एतदाधानमिति ।

**शा**--- रूढिबलेन योगबाधात् वचनबलाच्च, अविदुषोऽपि अधिकारप्रतीतेरविघातात्, ' ऋभूणां त्वा ' इति च मन्त्रवर्णात् ऋभुसौधन्वनपर्यायस्य अवान्तरवर्णस्य रथकारस्य इदमाधानं विधीयते ।

**सोम**-- अध्यापैयवत् अविदुषोऽपि असामर्थ्यादनधिकारः इति प्रत्यवस्थानात् **संगतिः** । नहि प्राभाकरवत् अस्माभिः रथकारस्य क्रत्वधिकारोऽङ्गीक्रियते । तस्मात् अग्निगुणकं अर्थकर्म इदमाधानम् । तत्र विश्वजिन्न्यायेन कल्प्यं फलम् । **सूत्रार्थस्तु**— वचनात् रथकारस्येदमाधानम्, तथा अस्याधानस्य सर्वत्रैवर्णिकाधानापेक्षया परिशिष्टत्वात् अत्रैवर्णिकरथकारस्येदम् ।

**वि**-- ' विप्रादिरेव रथकृदन्यो वा, ऽऽद्योऽस्तु योगतः ।, रूढेर्वर्णान्तरं तस्याऽऽधाने वर्षर्तुरुच्यते ॥ ' वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः, शूद्रायां वैश्यादुत्पन्ना करणी, तस्यां करण्यां माहिष्यादुत्पन्नो रथकारः । तथा च याज्ञवल्क्यः ' माहिष्येण करण्यां तु रथकारः प्रजायते ' इति । तस्य च रथकारस्य आधानकालो वर्षर्तुः ।

**भाट्ट**-- त्रयाणां वर्णानामाधानं विधाय ' वर्षासु रथकार आदधीत ' इति श्रुतम् । तत्र विद्याक्षेपशक्तिकल्पने गौरवापत्तेः, ब्राह्मणादीनामेव रथकरणे निमित्ते आधानोद्देशेन वर्षाविधिः । **इति प्राप्ते**, रथकारशब्दस्य प्रसिद्धिबलेन सौधन्वनापरपर्याये जातिविशेषे रूढत्वात्, तस्यैवायं कालविशिष्टाधानविधिः । **न च** तत्रापि योगेनैवोपपत्तौ रूढिकल्पनायां प्रमाणाभावः । रथमकुर्वत्यपि सौधन्वने प्रयोगेण तद्बाधात् । **न च** प्रोक्षणीशब्दवत् ( १।४।९।११ ) योग्यतामात्रेण तदुपपत्तिः, योग्ये ब्राह्मणादौ अप्रयोगेण रूढिकल्पनाया आवश्यकत्वात् । रथकरणयोग्यतावच्छेदकमनुष्यत्वस्य कादाचित्कत्वाभावेन निमित्तत्वानुपपत्तेः रथकारपदवैयर्थ्यप्रसङ्गाच्च । अतः प्रसिद्धिबलात् सौधन्वन एव रथकारः । सुधन्वा च ' व्रात्यात्तु जायते वैश्यात् सुधन्वाऽऽचार्य एव च ' इत्यादिना उक्तः त्रैवर्णिकात् किंचिन्न्यूनः वेदानधिकृतो जातिविशेषः, न तु शूद्रः । यद्यपि च रथकारपदं 'माहिष्येण करण्यां तु रथकारः प्रजायते ' ( याज्ञ.१।९५ ) ' माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात् ' ' शूद्रायां करणो वैश्यात् ' इत्यनेनोक्तेऽपि रूढम् । तथापि ' ऋभूणां त्वा देवानां व्रतपते व्रतेनादधामीति रथकारस्यादध्यात् ' इति वाचनिके मन्त्रे ऋभुशब्दप्रयोगात् तस्य च ' सौधन्वना ऋभवः ' इति मन्त्रान्तरे सामानाधिकरण्यनिर्देशात् सौधन्वन एव अत्र रथकारपदेनाभिधीयते । अतश्च तस्य अविद्यत्वात् विद्यापेक्षं तावन्मात्रविषयं अङ्गीकृत्यापि कर्तृकालोभयविशिष्टाधानान्तरमेव विधीयते । सर्वाधानेषु च प्रकरणात् साधारण्येनैव धर्मविधानम् । यद्यपि च विद्याभावादस्य उत्तरक्रतुषु नाधिकारः स्यात्, तथापि आधानमात्रं अरणिमथितलौकिकाग्निगुणकं कल्प्यस्वर्गफलकं सधर्मकमनुष्ठेयम् । एवं च आहवनीयादेरनुपयोगात् अभावेन तदुद्देशेन विहितानां ' नक्तं गार्हपत्यमादधाति ' इत्यादीनां धर्माणां लोपेऽपि एकस्मिन्नेव कुण्डे स्थण्डिले वा त्रिषु वा तेषु अग्न्याधानं इतराङ्गयुक्तं कार्यं इति **तन्त्ररत्नाभिप्रायः । मम तु प्रतिभाति**– नास्याधानस्य अर्थकर्मत्वं प्रमाणाभावात्, अग्निं इति द्वितीयान्तपदे लक्षणादेरावश्यकत्वे रथकारपदे योगाङ्गीकारस्यैव न्याय्यत्वाच्च, अपितु आहवनीयाद्युत्पादकत्वमेव । न च तेषामनुपयोगः, अविद्वत्तया क्रत्वधिकाराभावेन तत्रानुपयोगेऽपि ' आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इति वचनविहिते दाहे उपयोगसंभवात् । न ह्ययं दाहः कर्मोपयुक्ताहिताग्निशरीरप्रतिपत्त्यर्थः, येन कर्माभावेन अभावः शङ्क्येत । तथात्वे आहिताग्निपदेन आधानस्यैव उपस्थितेः तदङ्गत्वस्यैवापत्तौ क्रत्वङ्गत्वानापत्तेः । **न चेष्टापत्तिः** । तथात्वे प्रतिपत्तिं विना आधानफलाहवनीयादेः अनिष्पत्त्यापत्तेः । अतः फलश्रवणात् अर्थकर्मैवेदं इति युक्तस्तत्र आहवनीयादेरुपयोगः । पवमानेष्ट्यङ्गभूतपात्रसत्त्वाच्च, यज्ञपात्रसमुच्चयेऽपि न क्षतिः । अत एव पवमानेष्ट्युत्तरं प्राक् क्रतुभ्यो मरणे अग्निभिः पात्रैश्च दाहः, पवमानेष्टिभ्यः पूर्वं मरणे तु उक्तवचनबलात् अग्निभिरेव दाहः ।

( अग्न्याधेयं वर्षासु रथकारस्य ऋभु – सौधन्वनापरपर्यायस्य इत्यधिकरणार्थसंक्षेपः ) । **के.**

**मण्डन** — ' त्रिवर्णो रथकृन्नहि । '

**शंकर**-- ' रथकारस्य चाहितौ । ' अधिकारः ।

* **रथकाराधिकरणे** तु प्रकरणबाधाप्रसक्तेः रूढिर्न त्यज्यते । अहीनपदस्य रूढतैव नास्ति, येन रथकाराधिकरणविरोधः शङ्क्येत । **भाट्ट.** ३।३।८ **(टिप्पणी).** * रथकाराधिकरणे समुदायप्रसिद्धेः अवयवप्रसिद्धितो बलीयस्त्वम् ( उक्तम् ) । **सु.** ४६६, **साहस्री.** २३५.

ꕤ **रथकाराधिकरणन्यायः ।** यथा– ' रथकारोऽग्नीनादधीत ' इत्यत्र रथकारपदस्य सत्त्वात् संदेहः, ' रथं करोति ' इति व्युत्पत्त्या रथकारः कश्चन ब्राह्मणो रथकारपदबोध्यः प्रकृतवाक्यजन्यमहावाक्यार्थबोधविषयो ग्राह्यः, उत रूढः संकरजातीय इति । अपूर्वा या अग्न्याधानोपयोगिनी विद्या, तस्या अकल्पनानुरोधेन द्विज एव रथकारपदबोध्य इति **पूर्वपक्षः ।** ' माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात् । शूद्रायां करणो वैश्याद्विन्नास्वेष विधिः स्मृतः ॥ माहिष्येण करण्यान्तु रथकारः प्रजायते ॥ ' इति मनुना करण्यां माहिष्येणोत्पन्नस्य रूढिरियं रथकार इति प्रदर्शितमिति पूर्वोक्तप्रतिबध्यप्रतिबन्धकभावेन तस्यैव ग्रहणम् । तदन्यथानुपपत्त्याऽग्न्याधानोपयोगिविद्यायाः अध्ययनस्यापि कल्पनमिति **सिद्धान्तितमिति** । किञ्चित्प्रकाशितार्थोऽप्ययं स्वरूपप्रदर्शनार्थं पुनरुक्त इति बोध्यम् । **साहस्री.** २३६.

* **रथकाराधिकरणन्यायेनापि** रूढ्यर्थे तात्पर्यमेव बोध्यते, न तु रूढिजोपस्थितेः योगार्थबोधे प्रतिबन्धकत्वम्, मानाभावात् । **(भूतिः** पृ. ३१५). * यद्यपि पिकनेमादिशब्दे म्लेच्छप्रसिद्धिः समुदायप्रसिद्धिरूपा, क्लृप्ता च निगमादिप्रसिद्धिस्तु अवयवप्रसिद्धिरूपा कल्प्या च । अत एव **रथकाराधिकरणन्यायेन** क्लृप्तकल्पनान्यायेन च म्लेच्छप्रसिद्धेरेव बलीयस्त्वं भवेत् तथापि निगमादिवैयर्थ्यापत्तेः आनर्थक्यप्रतिहतन्यायेन म्लेच्छप्रसिद्धेरेव दौर्बल्यं अभ्युपगन्तुं युक्तम् । इति पूर्वपक्षः । **कौ.** १।३।५।१०.

* **रथकारादिवाक्ये** ( वर्षासु रथकार आदधीत ) सौधन्वनापरपर्यायऋभुरूपजात्यन्तरग्रहणमेव सिद्धान्तयिष्यते ( यौगिकरूढपदाङ्गीकारेण ) । **मणि.** पृ. ७९.

* **रथकाराधानं** अदृष्टार्थम् । **भाट्ट.** ५।४।३.

* **रथकारशब्दस्य** रथकारिणि अवयवप्रसिद्धिसंभवात् ‘ माहिष्येण करिण्यां च रथकारः प्रजायते ’ इति स्मृतेश्च अनुलोमविशेषे ‘ सौधन्वनास्तु हीनत्वान्मन्त्रवर्णात् प्रतीयेरन् ’ इत्यनेन वा न्यायेन ( ६।१।५० ) ‘ ऋभूणां त्वा देवानां व्रतपतेर्व्रतेनादधामीति रथकारस्यादध्यात् ’ इत्याधानमन्त्रवर्णात् ‘ सौधन्वना ऋभवः ’ इति च सौधन्वनशब्दसमानाधिकरणस्य ऋभुशब्दस्य ‘ तं नेमिमृभवो यथा ’ इति मन्त्रवर्णात् रथकारविषयत्वप्रसिद्धेः ‘ व्रात्यात्तु जायते वैश्यात् सुधन्वाचार्य एव च । मारुषश्च विजन्मा च मैत्रः सात्वत एव च ॥ ’ इति सात्वताद्यपरपर्याये सौधन्वनाख्ये जातिविशेषे, समुदायप्रसिद्धिसंभवात् ‘ रथकार आदधीत ’ इत्यत्र समुदायप्रसिद्धिबलीयस्त्वाभिधानं युक्तम् । **सु.** पृ. ४६७.

* ‘ **रथंतरं** उत्तरयोर्गायति ’ इत्यत्रोत्तरावर्णवशेन गानम् । **बिन्दु.** ९।२।८. * रथंतरं पवमाने करोति विश्वजिति सर्वपृष्ठे । **भा.** १०।६।५।१४, * रथंतरं पृष्ठं बहिष्पवमाने विश्वजिति सर्वपृष्ठे । ७।३।३।८. * रथंतरं साम ‘ अभि त्वा शूर नोनुमः ० ’ इत्यस्यां ऋचि गातव्यम् । ‘ अभि त्वा शूर ’ इति बृहती योनिः, ‘ न त्वावां अन्यो० ’ इति सतोबृहती, तयोः प्रग्रथनेन ऋक्त्रयं भवति तत्र रथंतरं गातव्यम् । **वि.** ९।२।६, * रथंतरं साम ‘ अभि त्वा शूर नोनुमः० ’ इत्यस्यां योनौ उत्पन्नम् । २।३।१, * रथंतरं साम ‘ अभि त्वा शूर नोनुमः ’ इति ऋचि गीयते । परंतु ‘ कवतीषु रथंतरं गायति ’ इति विधिना ‘ कया नश्चित्र आ भुवत् ’ इत्यादिषु कवतीषु ऋक्षु गीयते । ७।२।१, * रथंतरं साम ‘ अभि त्वा शूर नोनुमः० ’ इति तृचे गीयते । १।४।३, * रथंतरं साम एकच्छन्दस्कं न भवति । उत्तराग्रन्थे तदाधारस्य पाठात् ( उत्तरा ६८०–८१ ) तत्र प्रथमा बृहती, द्वितीया च सतोबृहती । द्वयोरेव च प्रग्रथनेन ऋक्त्रित्वं संपाद्यते । तदानीं उत्तरे ककुभौ भवतः । न तु तत्र दाशतयीस्थे उत्पत्तिककुभौ समानेतव्ये । ९।२।६, * रथंतरं साम । ‘ कवतीषु रथंतरं गायति ’ । स्वरादिविशेषानुपूर्वीमात्रस्वरूपं ऋगक्षरव्यतिरिक्तं यद् गानम्, तस्यैव रथंतरशब्दार्थस्य अतिदेशः, न तु ऋचः अतिदेशः । ७।२।१, * रथंतरं साम ज्योतिष्टोमे पृष्ठस्तोत्रे बृहता सह विकल्पितम् । ७।३।३, * रथंतरं साम ज्योतिष्टोमे माध्यंदिने सवने पृष्ठस्तोत्रेषु प्रथमम् । ९।२।६ वर्णकं २, * रथंतरं साम विश्वजिति षडहात् प्राप्तम् । ७।३।३, * रथंतरं साम षडहे प्रथमदिने पृष्ठनिष्पादकम् । ७।३।३. * नहि कण्वरथंतरावयवो **रथंतरं** इति निश्चीयते । **वा.** २।२।८।२२ पृ. ५३१.

* **रथंतरस्य** बृहतश्च धर्माणां अविरुद्धानां समुच्चयो वैश्यस्तोमे कण्वरथंतरे । ९।२।१६।४७. **मीको.** पृ. १३५१ ‘ कण्वरथन्तरे अविरुद्धानां० ’ इत्यत्र द्रष्टव्यम् । * **रथंतरस्य** बृहतश्च धर्माणां व्यवस्थया तत्तत्सामगानकालेऽनुष्ठानम् । ९।२।१५।४५–४६. **मीको.** पृ. २९७७ ‘बृहद्रथंतरधर्माणां व्यवस्थया०’ इत्यत्र द्रष्टव्यम् । * रथंतरस्य बृहतश्च स्वयोन्युत्तराप्रग्रथनेन संपादितयोः ककुभोरेव गानं ज्योतिष्टोमे । ९।२।६।२५–२८. **मीको.** पृ. १८२२ ‘ ज्योतिष्टोमे बृहद्रथंतरयोः० ’ इत्यत्र द्रष्टव्यम् । * रथंतरस्य योनिः बृहती, ‘अभि त्वा शूर० ’ इति । उत्तरा पङ्क्तिः ‘ न त्वावां अन्यो० ’ इति । **भा.** ९।२।६।२५. * रथंतरस्य साम्नो योनिः ‘अभि त्वा शूर० ’ (योनिः २३३, उत्तरा ६८०) इति ऋक् । **वि.** १०।४।२४.

* **रथंतरे** गीयमाने ‘ अभि त्वा शूर ... ईशानमस्य जगतः स्वर्दृशम् ’ इति स्वर्दृक्शब्दोच्चारणकाले एव वीक्षणम्, इतरभागोच्चारणकाले तु संमीलनं कर्तव्यं इति **पूर्वपक्षः** । स्वर्दृशं इति शब्दोच्चारणात् प्रागेव संमीलनम्, न तु सर्वस्मिंस्तृचे संमीलनम्, इति सिद्धान्तः । **वि.** १०।६।२. * ‘ रथंतरे प्रस्तूयमाने संमीलयेत्, बृहति समुद्रं मनसा ध्यायेत् ’ अयं धर्मतः वाचनिकव्यवस्थाविधिः श्रौतः । **बाल.** पृ. १९. * ‘ रथंतरे प्रस्तूयमाने संमीलयेत् । ( उद्गाता ) स्वर्दृशं प्रति वीक्षेत ’ । अत्र स्वर्दृशं प्रति वीक्षणं कालार्थः संयोगः । न तु स्वर्दृक्शब्दवीक्षणयोः अङ्गप्रयोजनसंबन्धः । प्रस्तावकाले यच्चक्षुः संमीलितं तत् स्वर्दृक्शब्दोच्चारणकाले उन्मीलयेत् । **भा.** १०।६।२।३. * ‘ रथंतरे प्रस्तूयमाने संमीलयेत्,



स्वर्दृशं प्रति वीक्षेत ’ । स्वर्दृक्शब्दोच्चारणावधि संमीलयेत् इत्यर्थः । इदमेकं वाक्यम् । स्वर्दृशं प्रति तु वीक्षेत न संमीलयेत् इत्यर्थः । स्वर्दृक्शब्दोच्चारणवीक्षणयोस्तु नाङ्गाङ्गिभावः । ‘ अभि त्वा ’ इत्यारभ्य ‘ अस्य जगतः ’ इत्यस्योच्चारणपर्यन्तं संमीलनं कार्यम्, ‘ स्वर्दृशं ’ इत्युच्चार्यमाणे तु वीक्षेत न संमीलयेत् । उत्तरयोस्तु ऋचोर्नास्त्येव संमीलनम् । **वि.** १०।६।२.

**रथंतराधिकरणम्** ( प्रथमम् ) । ज्योतिष्टोमे ‘ ऐन्द्रवायवाग्रान् ग्रहान् गृह्णाति ’ इत्यादिना ग्रहाग्रता गुणविधिः ॥

## गुणस्तु क्रतुसंयोगात् कर्मान्तरं प्रयोजयेत्, संयोगस्याशेषभूतत्वात् । २।३।१।१ ॥

**भाष्यम्**— अस्ति ज्योतिष्टोमः ‘ ज्योतिष्टोमेन स्वर्गकामो यजेत ’ इति । तं प्रकृत्य श्रूयते ‘ यदि रथंतरसामा सोमः स्यात्, ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्, यदि जगत्सामा आग्रयणाग्रान् ’ इति । तत्र संदिह्यते किं ग्रहाग्रताविशेषो ज्योतिष्टोमस्य विधीयते, उत कर्मान्तरस्य रथंतरसाम्नो बृहत्साम्नश्चेति । यदि रथंतरसामग्रहणेन बृहत्सामग्रहणेन च ज्योतिष्टोमोऽभिधीयते ततस्तस्य ग्रहाग्रताविशेषः । अथ नाभिधीयते, ततः कर्मान्तरस्येति । किं तावत्प्राप्तम् ? प्रकरणात् ज्योतिष्टोमस्य । इति **प्राप्ते**, उच्यते । गुणस्तु क्रतुसंयोगादिति । तुशब्दः पक्षं व्यावर्तयति । नैतदस्ति ज्योतिष्टोमस्य इति । कुतः ? क्रतुसंयोगात् । कथं तर्हि ? कर्मान्तरस्येति । ननु ज्योतिष्टोमक्रतोरेवैष एवंजातीयको वादः, रथंतरसामा बृहत्सामेति । नेति ब्रूमः । यदि न कृत्स्नक्रतुसंयोगो भवेत् ज्योतिष्टोमस्य वादः । कृत्स्नक्रतुसंयोगस्तु एषः । कथं कृत्स्नक्रतुसंयोगो भवति, कथं वा न कृत्स्नक्रतुसंयोग इति ? यदि रथंतरसत्ता वा, बृहत्सत्ता वा निमित्तं ग्रहाग्रताविशेषस्य, ततो न कृत्स्नक्रतुसंयोगः । रथंतरं बृहद्वा यदि सामास्ति, ततः ऐन्द्रवायवाग्रता शुक्राग्रता चेति, ततो ज्योतिष्टोमस्य गुणविधिः । अथ रथंतरसामसत्ता बृहत्सामसत्ता वा न निमित्तम्, ततः कृत्स्नक्रतुसंयोगः । यदि रथंतरसामेति कोऽर्थः ? अयमर्थः, यदि रथंतरसाम अस्य विशेषणं क्रतोरिति । कुत एतत् ? समासपदसामर्थ्यात् । समर्थानां हि पदानां समासो भवति । सामर्थ्यं च भवति विशेषणविशेष्यभावे । असाधारणं च भवति विशेषणम् । तत्रायमर्थः, यदि रथंतरमेव साम, बृहदेव वा, नान्यदिति । ज्योतिष्टोमस्य च बहूनि सामानि गायत्रादीनि । तस्मान्न ज्योतिष्टोमस्य वाचकौ एतौ शब्दाविति । तेन यद्यपि प्रकरणात् ज्योतिष्टोमस्य गुणविधिरिति गम्यते, तथापि तत् बाधित्वा वाक्येन रथंतरसाम्नो बृहत्साम्नश्च भवितुमर्हति । ननु यथा ज्योतिष्टोमो न रथंतरसामा, एवमन्योऽपि न रथंतरसामा कश्चिदस्ति । उच्यते । कर्मान्तरं रथंतरसामकं कल्पयिष्यति एतद्वाक्यम्, यदि रथंतरसामा सोमः स्यात्, इति । ननु नास्त्यत्र विधायकः शब्दः । उच्यते । अस्ति य एष स्यात् इति । **आह** । नैष विधातुं शक्नोति, यदिशब्दसंबन्धात् । विद्यमानस्य निमित्तार्थेन एवंजातीयकः शब्दो भवति, न विधानार्थेनेति । **अत्र ब्रूमः** । यदेतत्, सयदिकं वाक्यम्, यदि रथंतरसामा सोमः स्यादिति, अत्रावान्तरवाक्यमस्ति, रथंतरसामा सोमः स्यादिति । यदवान्तरवाक्यं तस्य अन्योऽर्थः, अन्यश्च सयदिकस्य । सयदिको न शक्नोति विधातुम् । यत्, अवान्तरवाक्यं तत् विधास्यति । न च रथंतरसाम्नो बृहत्साम्नो वा भावो निमित्तत्वेन श्रूयमाणोऽपि अर्थवान् भवति । तस्मादविवक्षितो यदिसंबन्धः । तस्मिंश्च अविवक्षिते पदद्वयमिदं रथंतरसामा सोमः, स्यादिति शक्नोति रथंतरसामानं क्रतुं विधातुम्, यदीत्यनर्थकम् । अथवा, यदि रोचेतेत्यध्याहारः । अथवा, यथैतद्भवति ‘ पयसा प्राष्टिकं भुञ्जीत, यदि शालिं भुञ्जीत, तत्र दधि उपसिञ्चेत् ’ इति । एवंजातीयकेन वाक्येन शालिभोजनं विहितं भवति, एवमत्रापि विहितं द्रष्टव्यम् । यदि रथंतरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयादिति । कथं पुनः शालिभोजनं तेन वाक्येन विहितं भवतीति । उच्यते । व्यत्यासेन संबन्धः कल्प्येत, यदि दध्युपसेचनमिच्छेत् शालिं भुञ्जीतेति । **ननु** न खलु, इच्छतेः परां लिङ्विभक्तिं उपलभामहे, सिञ्चतेर्हि तां परां समामनन्ति इति । सिञ्चतेः खलु

सा परा समुच्चरन्ती कर्मेरर्थं गमयति, कामप्रवेदने हि तां मन्यामहे इति ('कामप्रवेदनेऽकच्चिति' पा० ३।३।१५३ स्वाभिप्रायाविष्करणे गम्यमाने लिङ् स्यात्, न तु कच्चिति)। एवमिहापि यदि ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् इति, ग्रहीतुमिच्छेत् इत्यर्थः। ततो रथंतरसामानं क्रतुं कुर्यादिति। **ननु** एवं सति इच्छामात्रं भवेत्, न ग्रहाग्रताविशेषविधानम्। **उच्यते**। यथा अस्मिन् लौकिके वाक्ये 'यदि दध्युपसेचनमिच्छेत्, शालिं भुञ्जीत' इति दध्युपसेचनसंकीर्तनात् दध्युपसिक्तं शालिं भुञ्जीत इति तेन एकवाक्यत्वात् गम्यते, एवमत्रापि ग्रहाग्रताविशेषसंकीर्तनात् तेन एकवाक्यत्वात् ग्रहाग्रताविशिष्टो रथंतरसामा गम्यते। **अथवा** अत्र 'हेतुहेतुमतोर्लिङ्'(पा० ३।३।१५६) रथंतरसामा सोमः ऐन्द्रवायवाग्राणां ग्रहाणां हेतुः कर्तव्यः इति। तस्मात् कृत्स्नक्रतुसंयोगात् गुणः कर्मान्तरं प्रयोजयेत्। एवं कृत्स्नक्रतुसंयोगः अर्थवान् भविष्यति! अपि च पूर्वेण निमित्तेन भवितव्यम्, परेण नैमित्तिकेन। कथम्? सति हि निमित्ते नैमित्तिकं भवितुमर्हति, नासति। यच्च भविष्यत्, तन्न सत्, भविष्यच्च रथंतरसाम, तत् कथं पूर्वकालस्य ग्रहाग्रताविशेषस्य निमित्तं भविष्यतीति। अपि च निःसंदिग्धं जगत्सामा कर्मान्तरम्, तत्सामान्यात् इतरदपि कर्मान्तरमिति गम्यते। तस्मान्न ज्योतिष्टोमस्य गुणविधानमिति।

**वा**— ज्योतिष्टोमे प्रथमं बृहद्रथंतरे वैकल्पिके पृष्ठसाधनत्वेन चोदिते। ततः पुनः श्रूयते 'यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्' 'यदि बृहत्सामा शुक्राग्रान्' इति। तत्र सगुणं कर्म श्रूयमाणं संदिह्यते किं कर्मान्तरं ज्योतिष्टोमात् उत तस्यैव ग्रहाग्रताविशेषविधानं प्रति, रथंतरावच्छिन्नस्य निमित्तार्थं श्रवणमिति। तत एतत्सिद्ध्यर्थमिदं विचारयितव्यं किमयं कृत्स्नक्रतुसंयोगो रथंतरस्य, अथ सत्तामात्रसंयोगः इति। तत्सिद्ध्यर्थमपि एतच्चिन्तनीयं किं क्रतुविशिष्टं रथंतरम्, उत रथंतरविशिष्टः क्रतुरिहाश्रीयते। **ननु** च यदिशब्दोपबन्धात् इह निमित्तं प्रतीयते, तस्य च उद्दिश्यमानत्वात् विशेषणविशेष्यभावो नावकल्पेत। भवेन्निमितार्थत्वमेतस्य यदि यादृगयं प्रत्येष्यते, तादृशस्य कुतश्चित् प्राप्तिर्विज्ञायेत। अप्राप्तिपक्षे तु बलात् विधानमापद्यते। निमित्तत्वमपि च यादृशस्येह श्रूयते, यदि तादृशो ज्योतिष्टोमः, ततस्तस्यैव गुणार्थत्वेन श्रवणमिति संगंस्यते। यदि तु तादृङ् न भवति, ततः तादृशत्वमापाद्य निमित्तीकर्तव्यः। यत्संबन्धाच्च प्राङ्निमित्तत्वमेव नोपजायते, भवति तत् निमित्तस्यापि विशेषणम्, यथा आर्त्यधिकरणे वक्ष्यते (भाष्ये) 'मृष्यामहे हविषा विशेषणम्' इति। तस्मान्न विशिष्टानुवाददोष इति। किं तावत् प्राप्तम्? प्रकरणात् रथंतरसामत्वस्य बृहत्सामत्वस्य च वचनान्तरेण प्राप्तेः, यदिशब्देन च प्राप्त्यपेक्षत्वनिमित्तत्वप्रतीतेः, ग्रहाग्रताविशेषस्य च प्रयोगवचनेन ग्रहणात्, बलीयसा च विरोधिना गुणान्तरेण अनवरोधात्, 'तत्संनिधेर्गुणार्थेन पुनःश्रुतिः' इत्यकर्मान्तरत्वम्। एवं सिद्धान्तं प्राप्तं तुशब्देन व्यावर्त्य सौत्रः पूर्वपक्षः परिगृह्यते कर्मान्तरमिति। कुतः? '**समासः सति सामर्थ्ये तच्चापीष्टं विशेषणे। विशेषणं व्यवच्छेत्तृ ज्योतिष्टोमे च नास्ति तत्॥**' 'गुणश्चापूर्वसंयोगे' इति पूर्वकर्मासंबद्धो गुणो भेदक इत्युक्तम्। इह च बहुव्रीह्यर्थसद्भावस्य यदिशब्दोपबन्धेन निमित्तत्वं गम्यते न रथंतरसत्तायाः, उपसर्जनत्वात्। न च क्रतुविशिष्टं रथंतरमिह प्रतीयते, येन तदेव निमित्तं कल्प्येत। न च तत् क्रतुना अवच्छेत्तुं शक्यते, अन्यत्रापि विद्यमानत्वात्। एवं हि तदवच्छिद्यते, यदि रथंतरमस्यैव सामेति, न तु एवं संभवति। तस्मादवश्यमेवं कर्तव्यम्, यदि रथंतरमेव अस्य सामेति। न च एवमात्मकत्वं ज्योतिष्टोमस्य अन्यस्य वा अवगतम्, यन्निमित्तं भवेत्। अतो निमित्तप्रतीतिं परित्यज्य तदन्यथाऽनुपपत्त्यैव केवलरथंतरसामककर्मान्तरविधिः अध्यवसीयते। शक्यं हि तदपूर्वे कर्तुम्। न च रथंतरसत्तामात्रं विशेषणम्, अव्यापकत्वात्। न विशेषणादृते सामर्थ्यम्। न च सामर्थ्येन विना समासोऽवकल्पते। दृश्यते वा असौ (समासः) अत्र, इति पूर्वस्यात्र अप्रत्यभिज्ञानम्। **अथ** कस्मात् स एव केवलरथंतरसामकः पक्षे न क्रियते? न शक्यमेवं कर्तुम्। साक्षात् विहितस्तोत्रसंबन्धिसामान्तरविरोधात्। इदं हि क्रतुसंबन्धेन श्रुतम् 'आनर्थक्यात्तदङ्गेषु' इत्यनेन न्यायेन स्तोत्रेष्ववतरति, गायत्र्यादीनि तु स्तोत्रेषु साक्षात् विधीयन्ते तस्मात् बलवन्ति। क्रत्वन्तरे तु प्रत्यक्षशिष्टं रथंतरं तेभ्यश्चोदकप्राप्तेभ्यो बलवत्तरं भवतीत्यदोषः। एवं च अन्यपदार्थविधानात् तत्प्रधानो बहुव्रीहिरनुग्रहीष्यते। अन्यथा हि उपसर्जनपरत्वं लोहितोष्णीषादिवाक्यवत् अगत्या परिगृह्येत। यदि च ग्रहाग्रताविधानेन सह एतदेकं वाक्यम्, ततस्तच्चापि रथंतरविधानं च, अनेकत्वादपूर्वभावनाविधिनैव निस्तीर्यते। सोमः स्यादिति च आनन्तर्यात् तत्कर्तव्यतैव विज्ञायते, रथंतरसामत्वकर्तव्यता तु व्यवहितकल्पनयैव स्यात्। सोमशब्देन च प्रकृतिलिङ्गेन ज्योतिष्टोमप्रकृतिरेवायं भविष्यति। तस्मात् कर्मविधिः। इदमेव भाष्यकारो दर्शयति—'यदि रथंतरसामेत्यस्य कोऽर्थः?' इत्यादिना। ग्रहाग्रताविशेषश्च अस्य एव क्रतोः वाक्येन अवान्तरप्रकरणेन वा भविष्यति।

यद्यपि महावाक्येषु अवान्तरवाक्यानि अप्रमाणम्, तथापि अर्थासंभवात् अविवक्षिते महावाक्ये अवान्तरवाक्याश्रयणात् विधिशक्तेः अबाधः। (यदिशब्द-) परित्यागात् वरं अध्याहृत्य पूरणम्, इति मत्वा 'अथवा यदि रोचेत' इति दर्शयति। तत्कर्तव्यताऽऽक्षिप्तायाश्च रुचेः प्रमाणवानेव अध्याहारः, इति न स्वमनीषिकामात्रं अभिहितम्। अध्याहारादपि स्वपदवृत्तिरेव व्यवहितकल्पनया लघीयसी धर्ममात्रबाधात् इति मत्वा 'यदि शालिं भुञ्जीत' इत्युदाहृत्य पक्षान्तरं कल्पयति। परस्तु दृष्टान्तस्यैव असिद्धेः 'कथं पुनः' इति पृच्छति। ''व्यत्ययेन संबन्धः' (कल्प्येत यदि दध्युपसेचनं इत्यादि भाष्यम्) 'कामप्रवेदने हि' लिङ् इच्छां प्रत्याययति इति सिद्धान्तविवरणम्। तत्र एष वाक्यार्थो भवति 'यदि ऐन्द्रवायवाग्रान् ग्रहान् ग्रहीतुमिच्छेत्, रथंतरसामानं क्रतुं कुर्यादिति।' ततश्च यदिशब्दरहितम् 'सोमः स्यात्' इति पदद्वयं विधायकम्। 'ग्रहान् गृह्णीयात्' इत्येतत्तु यद्यपि अविधायकम्, तथापि इच्छार्थत्वात् 'यो हि यदिच्छति, स तत् करोति' इत्येवं विधिफलं लप्स्यते। **अथवा** इच्छामात्रयुक्तं उपात्तं ग्रहाग्रत्वं 'स्यात्' इति एषैव लिङ् विधास्यति। विनैव व्यवहितकल्पनयाऽपि अयं पक्षो भवन् बलवत्तरः इति मन्वानः 'अथवा हेतुहेतुमतोर्लिङ्' इत्युपन्यस्यति। तत्र 'सोमः स्यात्' इति हेतौ लिङ्, 'गृह्णीयात्' इति विधावेव। तेन एतदुक्तं भवति, रथंतरसाम सोमहेतुकान् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् इति। न च अक्रियमाणोऽसौ हेतुत्वं प्रतिपद्यते, इति अर्थात् विहितो भविष्यति इति। **अथवा** हेतुमति 'गृह्णीयात्' इति लिङ्। 'सोमः स्यात्' इति विधौ अनुक्तमपि च सोमस्य हेतुत्वं हेतुमदाक्षेपात् संनिधेश्च भविष्यति। तत्रापि एषोऽर्थः 'ग्रहाग्रताविशेषकारणभूतः सोमयागः कर्तव्यः' इति। '**यदिशब्दपरित्यागो, रूढ्यध्याहारकल्पना।, व्यवधानेन संबन्धो, हेतुहेतुमतोश्च लिङ्॥**' इति पक्षविकल्पसंग्रहश्लोकः। सर्वं चैतत् **अवेष्ट्यधिकरणसिद्धान्ते** एव उपयोक्ष्यते इति अत्र प्रपञ्चितम्। '**निष्पन्नेन निमित्तेन निष्पाद्यं प्रतिभूयते। न रथंतरसत्ता च निष्पन्ना क्रतुसत्त्ववत्॥**' प्रातःसवने हि ग्रहाग्रता भवति, माध्यंदिने रथंतरम्, न चानिष्पन्नस्य निमित्तता युक्ता। कारणपर्यायत्वात् निमित्तशब्दस्य, मम तु नैव किंचित् निमित्तम्। अथवा क्रतुः। स च आदित एव विद्यते। जगत्सामा च न ज्योतिष्टोमः, इति 'जगत्साम्नि सामाभावात्' इति वक्ष्यते। अतश्च 'तत्सामान्यादितरेषु तथात्वम्' इति कर्मान्तरत्वमिति।

**एकस्य तु लिङ्गभेदात् प्रयोजनार्थमुच्येतैकत्वं, गुणवाक्यत्वात्। २॥**

**भाष्यम्**— तुशब्दात् पक्षः अन्यथा भवति। नैतदस्ति यदुक्तं क्रत्वन्तरमिति। कथं तर्हि? ज्योतिष्टोमस्यैव ग्रहाग्रताविशेष इति। कुतः? प्रकरणसामर्थ्यात्। नन्वेतदुक्तं वाक्यसामर्थ्यात् क्रत्वन्तरस्य रथंतरसाम्नो बृहत्साम्नश्चेति। परिहृतमेतत् ज्योतिष्टोम एव रथंतरसामा बृहत्सामा चेति। पुनर्दूषितं अनेकसामत्वात् ज्योतिष्टोमस्य, विशेषणं रथंतरेण बृहता वा न प्रकल्पते इति। तदुच्यते। प्रकल्पते विशेषणम्। बृहद्रथंतरयोर्वैकल्पिकत्वात्।

भवति स प्रयोगो यत्र रथंतरं नास्ति। भवति च स प्रयोगः, विद्यमानरथंतरसामकः। तदेतद्रथंतरं सत्तयैव असाधारणत्वात् विशेषकम्। तस्मात् ज्योतिष्टोम एव रथंतरसामा बृहत्सामा चेति। अथ यदुक्तं पूर्वेण निमित्तेन भवितव्यम्, उत्तरेण नैमित्तिकेनेति। नैतन्नियोगतः। भवति हि भविष्यदपि निमित्तं यथा वर्षिष्यति इति कृषिगृहकर्मानुष्ठानम्। अपि च तत् दृष्टम्, इदं च वाचनिकं निमित्तम्, तत् यथावचनं भवितुमर्हति। 'स्यात्' इति चेयं लिङ् त्रिष्वपि कालेषु भवति। तस्मात् भविष्यदपि निमित्तम्। यत्तु जगत्सामा इति कर्मान्तरम्, तत्सामान्यात् रथंतरसामाऽपि कर्मान्तरमिति, (उच्यते) जगत्साम, असंभवात् कर्मान्तरं संभवति। रथंतरसाम्नो बृहत्साम्नश्च ज्योतिष्टोमस्य अभिधानम्। तस्मान्न कर्मान्तरमिति।

**वा**— पूर्वोक्तैरेव हेतुभिर्ज्योतिष्टोमस्य गुणविधिरयं न कर्मान्तरम्। एकस्यैव हि तेन लिङ्गेन रथंतरसामत्वेन बृहत्सामत्वेन च ग्रहाग्रताविधिप्रयोजनार्थमुच्चारणं क्रियते। गुणवाक्यत्वाच्च अकर्मान्तरप्रत्यये सति एकत्वं विज्ञायते। अथवा रथंतरादिविधानात् ज्योतिष्टोमस्य गुणवाक्यैः एवमात्मकत्वं चोदितमिति नार्थान्तरत्वं प्रतीयते। ततश्च कर्मैकत्वम्। यत्तु विशेषणाभावात् सामान्तरसापेक्षविशेषणत्वाद्वा रथंतरसामेति समासो नावकल्पते इति। तत्र ब्रूमः। **'इष्यते पाक्षिकं वस्तु सत्तयैव विशेषणम्। विग्रहे यद्विशेष्यत्वं तस्य चेह निमित्तता॥'** यदि हि रथंतरं नित्यं ज्योतिष्टोमे अन्यसहितं वा स्यात्, ततो न व्यवच्छिन्द्यादपि। यतस्तु अरथंतरोऽपि ज्योतिष्टोमप्रयोगः अस्त्येव। ततः तद्व्यवच्छेदमुखेन अस्ति विशेषणफलम्। यदि च एवकारं विना विशेषणबुद्धिर्न भवति, तत एवमसौ दर्शयितव्यो 'यदि रथंतरं साम अस्य अस्त्येव' इति। बहुव्रीहेश्च मत्वर्थवर्तित्वात् मतुपश्च अस्तित्वयोगविषयत्वात् न एवकारस्य अश्रुतसत्तासंबन्धकल्पना। यद्वा 'यदि रथंतरं सामैव अस्य भवति' इति तत्र कोऽर्थः एवशब्दस्य। तद्धि रथंतरं यद्यपि सर्वदा साम, तथापि यदा क्रतौ न भवति, तदा तं प्रति सामकार्यासत्त्वात् असामैव इति। सत्तापक्षे रथंतरं सामेति वक्ष्यते। अवश्यं च क्रत्वपेक्षमेवैतत्सामत्वं वक्तव्यम्, रथंतरस्वरूपे सामत्वस्य नित्यं पौनरुक्त्यात्। न च रथंतरस्य सापेक्षत्वं ज्योतिष्टोमे, येन समासो न स्यात्। द्वंद्वनिर्दिष्टेषु हि एकस्तोत्रविषयेषु च एतद्भवति। केवलेषु तु भिन्नस्तोत्रविषयसाधनेषु प्रत्येकनिरपेक्षमेव साधनत्वमिति सामर्थ्यं न विहन्यते। यद्वा पौनरुक्त्यादेव सामशब्दः तत्साध्यस्तोत्रलक्षणार्थः सन् रथंतरपर्युपस्थापितं पृष्ठं लक्षयति। अथवा बृहद्रथंतरयोः अवान्तरप्रकरणात् अवान्तरकार्ययोगाच्च विरोधिनोः स्पर्धमानयोः यथाऽवस्थितानुवादसारूप्यात् सामान्तराणि अनपेक्ष्य परस्परावच्छेदेनैव विशेषणत्वसिद्धिः। तेनोपपन्नं रथंतरविशिष्टस्य क्रतोर्निमित्तत्वम्। **अथवा** अस्तु रथंतरं क्रतुविशिष्टं निमित्तमिति। ननु च तदेव न प्रतीयते। **उच्यते**। सत्यं न प्रतीयते, किन्तु यदा समस्तक्रतुसंयोगाभावात् रथंतरविशिष्टः क्रतुर्न गृहीतः, तदा विगृह्यमाणे समासे यो विपरीतो विशेषणविशेष्यभावः प्रतीयते, रथंतरमस्य सामेति स ग्रहीष्यते। षष्ठ्यन्तत्वाच्च क्रतुर्विशेषणमेव समासाभिव्यङ्ग्यविशेष्यत्वमभावात् तथा विवक्षिष्यते। यद्यपि च क्रत्वन्तरेष्वपि वस्तुस्वरूपेण रथंतरमस्ति, तथापि अत्र तावद्विद्यते, तावन्मात्रेण च विशेषणत्वोपपत्तिः। स्ववाक्ये च असाधारणत्वं विशेषणकारणं न वस्तुलक्षणम्, मा भूत् नीलमुत्पलं', 'देवदत्तस्य गौः' इत्येवमादीनां विशेषणत्वोच्छेदः। तथाहि, **'न लोके देवदत्तस्य गोसंबन्धोऽस्ति केवलम्। उत्पलस्य च नीलत्वं तस्यैवोच्येत येन तत्॥'** यदि च वस्तुत एव असाधारणत्वं भवेत् नैव शब्देन विशेषणमुपादीयेत। न हि अत्र विशेषणफलमस्ति 'अग्निरुष्णः' इति। तस्मात् अवश्यं वाक्यगतमेव असाधारणत्वमाश्रयितव्यम्। अस्ति च अत्रापि तत्, ज्योतिष्टोमगतस्यैव रथंतरस्य निमित्तत्वेन इष्टत्वात्। प्रथमतरप्रतीतं च रथंतरं निमित्तत्वेन उत्सृज्य, न निमित्तान्तरकल्पनायां प्रमाणं विद्यते। तस्मात् उभयथा अपि अदोषात् निमित्तम्, इति न यदिशब्दपरित्यागादीनामाश्रयणं युक्तम्। न च कामप्रवेदनहेतुमत्प्रतीतिस्तावत् भवति, यावत् निमित्त-



त्वमेव न प्रतीतम्। तत्संभवे च नाप्रतीतग्रहणं युक्तम्। भूतभविष्यद्वर्तमानानां च अनियमेन लोके वेदे च निमित्तत्वं दृष्टम्, इति रथंतरभविष्यत्वमचोद्यम्। अपि च यत् एकान्तेन अवधारितम्, तत् निष्पन्नमेव। ज्योतिष्टोमप्रक्रमे च अवधारितमेकान्तेन रथंतरं प्रयोज्येत, इति सर्ववैकल्पिकानां क्रतुप्रक्रमे एव अवधारणात् अवश्यमृत्विग्यजमानैः 'एवमिदं कर्तव्यम्' इत्यवधार्य प्रवर्तितव्यम्, तद्वशेन प्रयोगकौशलाभ्यासादिसिद्धेः। न च निमित्तं नैमित्तिकस्य रूपसंनिधानेन उपकरोति, कथं तर्हि? ज्ञायमानत्वेन। तस्मात् अप्रयुक्तमपि संकल्पितत्वात् रथंतरं निमित्तम्। यदा तु एकदेशस्थेनापि तेन विशेषितः क्रतुः निमित्तम्, तदा असौ वर्तते एवेति अविरोधः। न च लिङः कालविशेषसंबन्धेन उत्पत्तिः, येन अन्यतरविषयमेव निमित्तं ब्रूयात्। सर्वथा हि शक्यं दर्शयितुम् 'यदि रथंतरसामा सोमः भूतो भवति भविष्यति च' इति। तत्र इह अर्थवशेन एवं विज्ञायते 'यदि रथंतरं भविष्यति' इति। यत्तु जगत्साम सामान्यतो दृष्टमुक्तम्, तदयुक्तम्, तस्य एवंजातीयकेषु अप्रमाणत्वात्। अथवा प्रकरणे द्वित्वबहुत्वयुक्तप्रतिपद्विधानादिव जगत्सामत्वासंभवात् तत् इति वैषम्यम्। अपि च तत्रापि नैव अपूर्वकर्मोत्पत्तिः, किं तर्हि? अप्रकृतस्य विषुवतो निमित्तत्वेन ग्रहणम्। तस्मात् निमित्तार्थानि सर्वाणि श्रवणानीति।

**शा**— किं ज्योतिष्टोमात् कर्मान्तरं रथंतरसामा बृहत्सामा इति विधीयते, किंवा ज्योतिष्टोमः एव रथंतरेण बृहता वा अवच्छिन्नो ग्रहाग्रताविशेषं प्रति निमित्तत्वेन अनुकीर्त्यते इति। तदर्थमिदं चिन्त्यते किमयं कृत्स्नक्रतुसंयोगो रथंतरादेः, उत अकृत्स्नक्रतुसंयोगः इति। तदर्थमपि किं रथंतरविशिष्टः क्रतुः इह निमित्तम्, उत क्रतुविशिष्टं रथंतरमिति। **'तत्रान्यार्थप्रधानत्वाद् बहुव्रीहेर्निमित्तता। रथंतरविशिष्टस्य क्रतोरेवावगम्यते॥ विशेषणं व्यवच्छेत्तृ विशेष्यव्यापि चोच्यते। ज्योतिष्टोमे च नान्येषां व्यवच्छेदस्य संभवः॥ रथंतरेण कृत्स्नस्य क्रतोर्व्याप्तिश्च नैव हि। सन्त्यन्यान्यपि सामानि गायत्रादीनि तत्र हि॥'** तस्मात् रथंतरसामत्वं गुणः कर्मान्तरं कल्पयति इति पूर्वः पक्षः। न कर्मान्तरमिति सिद्धान्तः।

**सोम**— पूर्वस्मिन् पादे कर्मभेदः प्रतिपादितः। अस्मिन् पादे तदपवादः प्राधान्येन प्रतिपाद्यते इति पादान्तरत्वं आनन्तर्यं च (**संगतिः** विज्ञेया)। **प्रयोजनम्**— कर्मान्तरत्वे तस्य फलवदफलन्यायेन ज्योतिष्टोमाङ्गत्वात् ज्योतिष्टोमाङ्गत्वेन केवलरथंतरसामकं कर्मान्तरमनुष्ठेयम्। **सिद्धान्ते तु** नैमित्तिकाग्रतामात्रानुष्ठाम्। 'यदि बृहत्सामा' इतिवाक्यविहितशुक्राग्रतायाः प्रकृतौ निवेशानिवेशादिकं च द्रष्टव्यम्। **सूत्रार्थस्तु**— रथंतरसामेति सामसंयोगस्य अशेषे कृत्स्नक्रतौ भूतत्वात् रथंतरसामेति शब्दस्य अपूर्वक्रतुसंयोगात् रथंतरसामादिर्गुणः कर्मान्तरमाक्षिपेत् इति।

**वि**— 'रथंतरं साम सोमे भवेत् तद्वद् बृहज्जगत्। ऐन्द्रवायवशुक्राग्राग्रयणाश्च ग्रहाः श्रुताः॥ रथंतरादिसंयुक्तमन्यत् कर्माथवा गुणः।, गायत्रादियुतात् पूर्वादन्यद्व्यावृत्तितो गुणैः॥, सोमशब्दप्रकरणे ज्योतिष्टोमसमर्पके। ग्रहाग्रत्वं गुणस्तत्र व्यावृत्तिस्तु परस्परम्॥' आग्रयणाग्रत्ववाक्यं न कर्मान्तरविधायकम्, किंतु अन्येन विहिते सोमयागे यत्र जगत्साम संभवति तत्र गुणविधायकम्, इत्येतावन्मात्रमत्र प्रतिपाद्यम्।

**भाट्ट**— ज्योतिष्टोमे 'यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्' इति श्रुतम्। तत्र यदिशब्दोपात्तस्य निमित्तत्वस्य न तावत् रथन्तरे बृहति वा अन्वयः, तस्य विशेषणत्वेन वृत्त्यनर्हत्वात्। नाप्यन्यपदार्थे, तस्य कादाचित्कत्वाभावात्। नापि विशिष्टे ज्योतिष्टोमे, सामान्तराणामपि नियतत्वेन बृहद्रथन्तरयोरन्ययोगव्यावृत्त्या विशेषणत्वासंभवात्, ज्योतिष्टोमत्वावच्छेदेन अयोगस्यापि व्यावर्तयितुमशक्यत्वाच्च। अतः समासार्थस्य केवलरथंतरसामकत्वस्य प्रकृते कर्मणि ग्रहाग्रतानिमित्तत्वेन निवेशायोगात् उभयविशिष्टं कर्मान्तरमेव विधीयते। यदिशब्दस्तु अविवक्षितार्थः। **इति प्राप्ते**, बृहद्रथंतरयोर्ज्योतिष्टोमे पाक्षिकत्वात् स्वायोगव्यावृत्त्या परस्परायोगव्यावृत्त्या वा विशेषणत्वोपपत्तिः। न च ज्योतिष्टोमत्वावच्छेदेन तदभावः,

स्वावान्तरकार्यपृष्ठस्तोत्रत्वावच्छेदेन तदुपपत्तेः । अन्यथा तवापि साक्षाद्यागे प्रोक्षणावघातादौ तदसंभवावश्यम्भावात् । अतो युक्तैव रथन्तरयुक्तस्य क्रतोर्निमित्तता । **वस्तुतस्तु** न क्रतोर्निमित्तान्तर्भावः, प्रयोजनाभावात् । प्रकरणावगतक्रत्वङ्गत्वबलेन अन्यपदार्थसंबन्धस्य अनुवादत्वात् अन्यथा ज्योतिष्टोमरूपान्यपदार्थस्य विकृतावभावेन शुक्राग्रतादेरनापत्तेः । अतो लक्षणयाऽपि रथंतरमेव निमित्तम्, नैमित्तिकं तु अग्रताविशेषः प्रकृतापूर्वसाधनीभूतग्रहोद्देशेन विधीयते । न च पाठादेव ऐन्द्रवायवाग्रत्वनियमस्य प्राप्तेः तद्विधिवैयर्थ्यम्, ततः पूर्वमेव नैमित्तिकतया विधानात् । तत्प्रयोजनं च निमित्ताभावे प्रकृतौ विकृतौ च लोपः । यद्यपि च सर्वत्र निमित्तस्य स्वसत्त्वे नैमित्तिकावश्यकत्वमात्रं प्रमेयम्, तथापि तस्यात्र पाठादेव सिद्धेः तदभावे तदभाव एव प्रमेयं बोध्यम् । तस्मान्न कर्मान्तरविधिः ।

**मण्डन**— ‘ ज्योतिष्टोमे ग्रहाग्रत्वम् । ’

**शंकर**— ‘ बृहत्सामाद्यभिन्नत्वम् । ’ बृहत्सामादिः ज्योतिष्टोमः एव, न कर्मान्तरं इत्यर्थः ।

**Ⓢ रथंतराधिकरणम्** ( द्वितीयम् ) । रथंतरादिशब्दानां गीतिविशेषवाचित्वम् ॥

**साम्नोऽभिधानशब्देन प्रवृत्तिः स्याद्यथाशिष्टम् । ७।२।१।१ ॥**

**भाष्यम्**— इदं श्रूयते, ‘ रथंतरमुत्तरयोर्गायति ’ ‘ कवतीषु रथंतरं गायति ’ इत्येवमादीनि समाम्नायन्ते । तत्र चिन्ता, किमिह अतिदिश्यते इति । **ननु** यत् रथंतरादिभिः शब्दैरुच्यते तदतिदिश्यते । **बाढम्** । तदेव तु न ज्ञायते किमेभिः शब्दैः उच्यते इति । ननु सिद्धमेतत् ‘ गीतिषु सामाख्या ’ ( २।१।११।३६ ) इति । तथासिद्धस्य आक्षेपः करिष्यते । स एव तु निर्णयो भविष्यति । यदि स एव निर्णयः, किमर्थं आक्षेपः ? दाढर्यार्थः, स्थूणानिखननवत् । तत्र किं प्राप्तम् ? तदुच्यते । सस्तोभस्वरकालाभ्यासविकारायां हिंकार–प्रणव–प्रस्ताव–उद्गीथ–प्रतिहार–उपद्रव–निधनवत्यां ऋचि सामशब्दः अभियुक्तैरुपचर्यते । तस्मात् सैवोच्यते । **ननु** गीतौ सत्यां भावात् गानाख्यस्य संस्कारकर्मणो वाचका एते शब्दाः इत्युक्तम् । तदेव इदमुक्तं आक्षिप्यते । नेमे संस्कारस्य वाचकाः । किं कारणम् ? अकर्मकाले प्रयोगात् । अकर्मकाले साम प्रयुज्यते । न च संस्कारकर्माणि प्रोक्षण–अवेक्षण–पर्यग्निकरणादीनि अकर्मकाले प्रयुज्यन्ते, प्रयोजनाभावात् । अथ तु मन्त्रा एते, ततः अन्वहं ‘ स्वाध्यायोऽध्येतव्यः ’ इति नियमात् अकर्मकाले प्रयोगो युज्यते । तस्मात् ऋचां नामानि । किंच संज्ञाभेदात् । संज्ञाभेदश्च भवति रथंतरं बृहत् इत्येवमादिः । स एकत्वात् संस्कारकर्मणः अनर्थकः । एकेनैव हि तदा पर्याप्तम्, यथा गीतिरिति । अथ ऋचां नामानि, ततः तासां भेदात् संज्ञापृथक्त्वं युक्तम् । **अपि** च यदि गानं रथंतरम्, गानं च बृहत्, इदं रथंतरं इदं बृहत् इति पृथक्त्वेन संज्ञानिवेशो नोपपद्यते । ऋङ्नामत्वे तु उपपद्यते । **किंच** विकारपृथक्त्वात् । प्रतिसाम च विकारपृथक्त्वात् । प्रतिसाम च विकारपृथक्त्वं दृश्यते । तदेकत्वात् गानस्य अनुपपन्नम् । संस्कारभेदे हि विकारपृथक्त्वं दृष्टम् । तद्यथा अवहन्तेस्तण्डुलीभावः, पिषेश्चूर्णनम् । न तु एकस्य तण्डुलीभावश्चूर्णनं च । अथ ऋङ्नामान्येतानि, तत ऋचां भेदात् विकारपृथक्त्वं युज्यते । तस्मात् ऋङ्नामानीति । तत उत्तरं पटति । साम्नः अभिधानशब्देन प्रवृत्तिः स्यात् यथाशिष्टमिति । साम्नः अभिधानशब्देन यथाशिष्टं प्रवृत्तिः स्यात् । यत् शिष्टं प्रवक्तृभिः शिष्येभ्यः । किंच शिष्टम् ? स्तोभादिविशिष्टा ऋक् साम । सा प्रवर्तेत । किं कारणम् ? तस्या रथंतरादि नामधेयमिति ।

**शब्दैस्त्वर्थविधित्वादर्थान्तरेऽप्रवृत्तिः स्यात् पृथग्भावात् क्रियाया ह्यभिसंबन्धः । २ ॥**

**भाष्यम्**— तुशब्दः पक्षनिवृत्तौ । न तु एवं स्यात् ऋचः प्रवृत्तिरिति । कथम् ? इह ‘ कवतीषु रथंतरं गायति ’ इति कवतीनां वा कार्ये अभिवत्यः अतिदिश्येरन्, कवतीनां वा उपरि आधेयभावेन । तत्र कार्ये तावत् अतिदेशो न घटते । कुतः ? शब्दैरर्थविधित्वात् । शब्दानां अर्थविधानं कार्यम् । न च कवतीषु रथंतरं गायति इति कवतीभिः योऽर्थोऽभिधीयते, तं अभिवत्यः शक्नुवन्ति वक्तुम् । तस्मान्न कार्यातिदेशः । आधेयत्वेऽपि न संभवति, पृथग्भावात् । नहि शब्दः शब्दे समवैति, पृथगेवावतिष्ठते अभि त्वा, कया नः इति । क्रियाया हि गानक्रियायाः शब्देन अभिसंबन्धो भवेत्, न शब्दस्य । तस्मात् आधेयत्वेनापि नातिदेशः । अतो नायं ऋचः प्रदेश इति ।



**स्वार्थे वा स्यात् प्रयोजनं क्रियायास्तदङ्गभावेनोपदिश्येरन् । ३ ॥**

**भाष्यम्**— स्वार्थे वा प्रवर्तमाना अभिवत्यः कवतीनां अङ्गभावेन उपदिश्येरन् । कथं पुनः ‘ कवतीषु गायति ’ इति अङ्गभावः शक्य उपदेष्टुम् ? शक्यः । यथा ‘ येन कर्मणेर्त्सेत् तत्र जयान् जुहुयात् ’ इति । किं पुनः प्रयोजनं कवतीनां अभिवत्यो निर्वर्तयन्तीति । उच्यते । प्रयोजनमदृष्टं कल्प्यम् । कुतः ? क्रियायाः । यस्मात् क्रिया श्रूयते, कवतीषु रथंतरं गायतीति । यथा प्रयाजादीनां प्रयोजनं क्रियायाः । उच्यते । अयमेव अस्मिन् पक्षे दोषः, यत् प्रयोजनं क्रियायाः कल्पयितव्यम् । तस्मादयमपि पक्षो दुश्लिष्टः ।

**शब्दमात्रमिति चेत् । ४ ॥**

**भाष्यम्**— इति चेत् पश्यसि कवत्यङ्गभावेन अभिवतीनामुपदेशो दुःश्लिष्टः इति । तेन तर्हि शब्दमात्रं प्रदिश्यताम्, रथंतरशब्दं कवतीषु प्रयुञ्जीत, कवतीः रथंतरशब्देन अभिलपेत् इति । किं कारणम् ? शब्दे उच्चरिते तत्र तावन्मुख्या प्रतिपत्तिः । शब्दे कार्यस्यासंभवात् अर्थे कार्यं विज्ञायते, यथा गामानय इति । इह तु शब्दे एव कार्यं संभवति, नार्थे । अतोऽत्र शब्दं विज्ञास्यामः ।

**नौत्पत्तिकत्वात् । ५ ॥**

**भाष्यम्**— पूर्वस्मादेष वादः पापीयान् । कस्मात् ? औत्पत्तिकत्वात् । औत्पत्तिको हि नामिनाम्नोः संबन्धः । यः शब्दो यस्मिन्नर्थे औत्पत्तिकेन संबन्धेन प्रसिद्धो न स ततोऽन्यं प्रत्याययितुं शक्नोति । न हि गोशब्देन अश्वोऽभिधातुं शक्यते ।

**शास्त्रं चैवमनर्थकं स्यात् । ६ ॥**

**भाष्यम्**— एवं च सति अतिदेशशास्त्रमनर्थकं स्यात् । अशक्यार्थत्वात् । तस्मान्न शब्दस्यापि प्रदेशो युक्तः । वृत्तिकारस्तु मेने ‘ गानशास्त्रं औक्थिक्यं अनर्थकं स्यात् ’ इति । तस्यायमभिप्रायः, सत्यां गतौ नैतावान् प्रयासः शिष्टानामफलोऽभ्युपगन्तुं न्याय्य इति ।

**स्वरस्येति चेत् । ७ ॥**

**भाष्यम्**— इति चेत् पश्यसि, नाम्नोऽतिदेशः अयुक्त इति । तेन तर्हि स्वरस्यातिदेशो भवतु । स्वरः सामशब्देन लोके अभिधीयते सुसामा देवदत्त इति– सुस्वरो देवदत्त इति । स्वरः, घोषः, नादः इति समानार्थाः । स सामशब्देनोच्यते । साम च रथंतरम्, तस्मात् तस्य अतिदेशः ।

**नार्थाभावाच्छ्रुतेरसंबन्धः । ८ ॥**

**भाष्यम्**— नैतदेवम्, स्वरस्यातिदेश इति । कुतः ? अर्थाभावात् । अर्थस्य अभिवतीस्वरस्य कवतीषु अभावात् । ननु असन्नेवासौ अतिदेशेन भाव्यते । उच्यते । भावयितुमपि न शक्यते । नहि अभिवत्यक्षराणां अभिव्यञ्जको नादः कवतीषु भावयितुं शक्यः । यदि भाव्येत न कवत्यो भवेयुः । न चेत् भाव्यते, न भूतः । ‘ कवतीषु रथंतरं गायति ’ इत्येतस्याः श्रुतेः पदानां परस्परेण अभिसंबन्धो न स्यात् । तस्मान्न स्वरस्यातिदेशः ।

**स्वरस्तूत्पत्तिषु स्यान्मात्रावर्णाविभक्तत्वात् । ९ ॥**

**भाष्यम्**— तुशब्दः पक्षान्तरपरिग्रहे । यदि अभिवतीस्वरस्य कवतीषु प्रदेशो नोपपद्यते, अनुवादो भवतु कवतीषु रथंतरं गायतीति । कथम् ? तदुच्यते । इह ‘ कवतीषु रथंतरं गायति’ इत्यस्य वाक्यस्य द्वे वचनव्यक्ती भवतः । कवतीषु यद्रथंतरम्, तत् गायति इत्येका । रथंतरं यत्, तत् कवतीषु गायति इत्यपरा । तयोरेषा द्वितीया रथंतरं यत्, तत् कवतीषु गायतीति । सा स्वरस्य सामत्वे न संभवतीत्युक्तम् । न हि अभिवतीस्वरः कवतीषु समावेशयितुं शक्य इति । पूर्वा तु संभवति, कवतीषु यद्रथंतरं तत् गायति इति । ननु साऽपि न संभवति, न हि कवतीषु रथंतरमस्ति । अतः परमुच्यते, स्वरस्तु उत्पत्तिषु स्यात् । स्वरस्तु अभिवतीस्वरः कवतीनां उत्पत्तिषु उच्चारणेषु स्यात् । कथम् ? मात्रावर्णाविभक्तत्वात् । बहवो मात्रा वर्णाश्च अभिवतीनां

कवतीनां च अविभक्ता अभिवतीष्वपि विद्यन्ते कवतीष्वपि । सोऽसौ अभिवतीस्वरः कवतीषु साधारणवर्णसमवेतो विद्यते । तस्यानुवादोऽयं घटते, कवतीषु रथंतरं गायतीति । तस्मात् स्वरस्यानुवादः ।

**लिङ्गदर्शनाच्च । १० ॥**

**भाष्यम्**— लिङ्गं च दृश्यते एतस्मिन्नर्थे, अस्ति रथंतरं उत्तरयोरिति । किं तत् लिङ्गं भवति ? एवमाह, 'रथंतरमुत्तरयोर्न पश्यामि' इति विश्वामित्रस्तपस्तेपे, 'बृहदुत्तरयोर्न पश्यामि ' इति वसिष्ठः इति । यच्च विद्यमानं न दृश्यते तद्दर्शनाय यत्नः क्रियते, यथा घटं न पश्यामीति प्रदीपं करोति, न शशविषाणं न पश्यामीति । तस्मादस्ति उत्तरयोः रथंतरं बृहच्च । तयोरनुवादः इति ।

**अश्रुतेस्तु विकारस्योत्तरासु यथाश्रुति । ११ ॥**

**भाष्यम्**— तुशब्दः पक्षं व्यावर्तयति । नैतदेवं स्वरस्यानुवाद इति । कुतः ? एवं सति उत्तरासु विकारो न कश्चित् श्रुतो भवति । तदा उत्तरा यथाश्रुताः प्रयोक्तव्याः । यथा स्वाध्यायकाले श्रुताः । तत्र 'रथंतरमुत्तरयोर्गायति ' इत्येतदनुवादमात्रं अप्रवृत्तिविशेषकरं अनर्थकमेव आपद्यते । अतो न स्वरस्यानुवादो युक्तः ।

**शब्दानां चासामञ्जस्यम् । १२ ॥**

**भाष्यम्**— रथंतरादीनां च सामशब्दानां असामञ्जस्यं स्यात् ' रथंतरमुत्तरयोः, बृहदुत्तरयोः ' इति । कथम् ? तदुच्यते । अयं रथंतरशब्दो बृहच्छब्दो वा स्वरस्य सामशब्दत्वे स्वरसमुदाये आनुपूर्व्या अवस्थिते स्वरविशेषे प्रयुक्तः । स एकदेशे भिन्नानुपूर्व्ये च असमञ्जसो भवति । तस्माच्चैतत् युक्तम्, स्वरस्य सामशब्दः, तस्य चानुवाद इति । अत्राह, एवं भवता सर्वे पक्षा निरुद्धाः, ततः किं अप्रवृत्तिरेवेति । उच्यते । ऋच एव प्रदेशो भवतु । ननु उक्तं न शक्या ऋच ऋगन्तरे प्रदेष्टुं इति । बाढम्, देशलक्षणा भविष्यति । ' कवतीषु रथंतरं गायति ' इत्युच्यते, न च शक्यते कवतीषु रथंतरं गातुम्, तत्र देशलक्षणा भवति, कवतीदेशे इति । यथा अग्नौ तिष्ठति, कूपे तिष्ठति इति । धर्मलक्षणा वा स्यात् । रथंतरधर्मा वा कवतीषु रथंतरशब्देन अतिदिश्यन्ते । यथा ' रथंतरं प्रस्तूयमाने पृथिवीं मनसा ध्यायेत् ' इत्येवमादयः । यथा आचार्ये प्रोषिते आचार्यानी भवतामाचार्यः इति आचार्यशुश्रूषा आचार्यान्यामतिदिश्यते ।

**अपितु कर्मशब्दः स्याद्भावोऽर्थः प्रसिद्धग्रहणत्वाद् विकारो ह्यविशिष्टोऽन्यैः । १३ ॥**

**भाष्यम्**-- अपितु नैवं स्यात् ऋचः सामशब्दः तस्याश्च प्रदेशः इति, तथा देशलक्षणा धर्मलक्षणा वा आश्रयणीया । अगतिश्चैषा यत् लक्षणापरिग्रहः । किं तर्हि ? कर्मशब्दः स्यात् । रथंतरादिः गानाख्यस्य संस्कारकर्मणो वाचकः । कुतः ? उक्तो न्यायः ' गीतिषु सामाख्या ' ( २।१।११।३६ ) इत्यत्र । तत्र गीतिविशिष्टायां ऋचि एष शब्दो दृष्टः । न चागृहीतविशेषणा विशेष्ये बुद्धिरुत्पद्यते । तस्मात् विशेषणं तावत् अभिधीयते । विशेषणप्रत्ययाच्च सहचरिते विशिष्टे प्रत्ययः । अतो नास्ति ऋचः शब्देन संस्पर्शः इति । तेनैव न्यायेन गीतिनामधेयं इति ब्रूमः । **किंच** प्रसिद्धग्रहणत्वात् । अयं च गायतीति शब्दो गानक्रियायां प्रसिद्धः । का पुनरसौ ? शब्दस्य उच्चारणविशेषः, गायति गानं करोति इति । तद्ग्रहणश्च रथंतरादिशब्दः तद्वचनः इत्यर्थः । तेन समुच्चारणात् द्वितीयासामर्थ्याच्च । यथा आसारितकं गायतीति, वर्धमानकं गायति इति । **ननु** शब्दवचनेनापि समुच्चारणं भवति, गाथां गायति, ऋचं गायति इति । **सत्यम्** । विपरिणम्य तु शब्दम्, गानेन ऋचं संस्करोति इति । यथानिपतितेन अर्थेन न संबध्यते गानं करोति ऋचमिति । तस्मात् गीतिवचनः । इतश्च गीतिवचनः । कुतः ? विकारो हि अविशिष्टः अन्यैः । विकारश्चात्र ऋग्ग्रन्थस्य दृश्यते । ह्रस्वानामक्षराणां दीर्घता, दीर्घाणां च ह्रस्वत्वम् । विवृतानां संवृतत्वम्, संवृतानां विवृतत्वम् । सः अविशिष्टः अन्यैः संस्कारकर्मभिः । यथा अवहन्तिना व्रीहीणां तण्डुलीभावः, पिषिणा तण्डुलानां पिष्टीभावः । तस्मात् शब्दानां संस्कारो गानाख्यो रथंतरादिभिः शब्दैरुच्यते । तस्यायं प्रदेशः 'रथंतरमुत्तरयोर्गायति' इत्येवमादिः ।

**अद्रव्यं चापि दृश्यते । १४ ॥**

**भाष्यम्**-- अपि च अद्रव्यं साम दृश्यते । द्रव्य-



शब्दः छन्दोगैः ऋक्षु आचरितः । अद्रव्यं अनृचं इत्यर्थः । अनृचं साम दृश्यते ' प्रजापतेर्हृदयं अनृचं गायति ' इति । प्रजापतिहृदयं नाम साम । तत् अनृचि उत्पन्नम् । यदि ऋचि सामशब्दः , कथं प्रजापतिहृदयं अनृचं स्यात् । अथ गीतौ एव सामशब्दः , ततो विनापि ऋचा गीतिर्भवति । तत्रैतदुपपद्यते ' प्रजापतेर्हृदयं अनृचं गायति ' इति । तस्मादपि गीतिः साम ।

**तस्य च क्रिया ग्रहणार्था नानाऽर्थेषु विरूपित्वादर्थो ह्यासां न लौकिको विधानात् । १५ ॥**

**भाष्यम्**— ननु उक्तं संस्कारकर्मत्वे अनर्थकः अकर्मकाले प्रयोग इति । तत्र ब्रूमः— तस्य क्रिया अकर्मकाले ग्रहणार्था शिक्षितुं अभ्यसितुं च । नानार्थेषु नानाभूतेषु अर्थेषु, भिन्नेषु इत्यर्थः । विरूपित्वात् । आश्रयभेदात् विविधरूपं यद्गानं भवति, तत् प्रत्यृचं शिक्षितव्यं अभ्यसितव्यं च प्रयोगप्रादुर्भावाय । भूमिरथिकवत् । तद्यथा भूमिरथिकः भूमौ रथमालिख्य योग्यतां ( अभ्यासं ) करोति । सा तस्य प्रयोगकाले सौकर्यमुत्पादयति । अर्थो ह्यासां रथंतरादिसंज्ञानां न लौकिके व्यवहारे सिद्धः । यथा अवहन्त्यादीनाम् । कुतः ? विधानात् । विधीयते हि असौ शिष्योपाध्यायसंबन्धेन, एवंरूपं रथंतरं भवति इति । न लौकिको विज्ञायते । तस्मान्न परिचोदनैषा अकर्मकाले प्रयोगादिति ।

**तस्मिन् संज्ञाविशेषाः स्युर्विकारपृथक्त्वात् । १६ ॥**

**भाष्यम्**-- अथ यदुक्तं संज्ञापृथक्त्वात् इति, तत्रोच्यते— तस्मिन् एकस्मिन्नपि गानाख्ये संस्कारे संज्ञाविशेषा भवेयुः । कुतः ? विकारपृथक्त्वात् । तुल्येऽपि गानत्वे गानविशेषो भवति, गानविशेषाच्च संज्ञापृथक्त्वम् । यथा आसारितकं वर्धमानकगीतिः । अन्यथालक्षणा आसारितकगीतिः, अन्यथालक्षणा वर्धमानकगीतिः । एवमिहापि अन्यथालक्षणा रथंतरगीतिः, अन्यथालक्षणा बृहद्गीतिः । तस्मात् संज्ञापृथक्त्वम् ।

**योनिशस्याश्च तुल्यवदितराभिर्विधीयन्ते । १७ ॥**

**भाष्यम्**-- योनिश्चासौ शस्या च योनिशस्या । योनिशस्याश्च ऋचः, तुल्यवत् इतराभिः अयोनिशस्याभिः विधीयन्ते ' याम्याः शंसति, शिपिविष्टवतीः शंसति, रथंतरस्य योनिमनुशंसति, बृहतो योनिमनुशंसति' इति । का तत्र तुल्यता ? शंसतिशब्देन विधानम् । इह एतौ स्तौतिशंसतिशब्दौ समानेऽपि स्तुत्यर्थत्वे व्यवस्थितविषयौ । प्रगीतेषु मन्त्रवाक्येषु स्तौतिशब्दः, अप्रगीतेषु शंसतिशब्दः । यथा ' प्रउगं शंसति ', ' निष्केवल्यं शंसति ' इति । ' आज्यैः स्तुवते ' ' पृष्ठैः स्तुवते ' इति । अतः शंसतिशब्देन विधानात् अप्रगीतां ऋचं रथंतरस्य योनिं दर्शयति । यदि च गीतिः रथंतरम्, ततस्तस्य अप्रगीता ऋक् योनिः । अन्यथा अयं व्यपदेशो नोपपद्यते ' रथंतरस्य योनिं ' इति । तस्मात् गीतिषु सामाख्या ।

**अयोनौ चापि दृश्यतेऽतथायोनि । १८ ॥**

**भाष्यम्**— अयोनौ च साम दृश्यते । स्थाल्यां सक्तु अवधीयते इत्याहुः यत् बृहत् गायत्रीषु क्रियते अपि चैनां रुजति, न चास्यां संभवतीति । बृहतो बृहती योनिः, तस्य गायत्रीषु प्राप्तिर्नास्ति, यदि ऋचः सामशब्दः । अथ नु गीतेः, ततः सा बृहद्गीतिः । गायत्रीषु वचनात् प्राप्ता । तस्या अयं अनुवादो घटते ' यत् गायत्रीषु क्रियते ' इति । अतथायोनि च साम दर्शयति । यादृशी यस्य योनिः ततोऽन्यादृशो ' यो वै विच्छन्दसि सामोहति स ऋचं संशृणाति, साम वा विलिशति, साम संशृणाति, ऋचं विलिशति ' इति । यतरत् वसीयः तस्य विलेशः । यतरत् वर्षीयः तस्य संशरः । तच्च गीतौ एव साम्नि युज्यते, न ऋचि । ऊहतिशब्दश्च गीतावेव समर्थो न ऋचि । ऋक् चेत् सैव यथाम्नायं पठ्यते । तत्र नास्ति ऊहप्रसङ्गः । तस्मादपि गीतौ सामशब्दः ।

**ऐकार्थ्ये नास्ति वैरूप्यमिति चेत् । १९ ॥**

**भाष्यम्**--यदुक्तं तस्य क्रिया ग्रहणार्था इति । तत्र परिचोद्यते । ऐकार्थ्ये नास्ति वैरूप्यं इति । रथंतरगीतेः बृहद्गीतिः अर्थान्तरम् । तेन रथंतरगीतौ गृहीतायां बृहद्गीतिः अगृहीता भवति इति युक्तो रथंतरे गृहीते

बृहतः शिक्षार्थे अकर्मकाले प्रयोगः । रथंतरगीतेस्तु एक एवार्थः । तस्य योन्यां प्रयोगे शिक्षिते पुनः उत्तरासु न शिक्षितव्यम् । तासु अकर्मकाले प्रयोगः संस्कारकर्मत्वेन युक्तो भवति । तस्मान्न संस्कारस्य सामशब्द इति । स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति ।

**स्यादर्थान्तरेष्वनिष्पत्तेर्यथा पाके । २० ॥**

**भाष्यम्**—स्यात् वैरूप्यम् । कुत एतत् ? अर्थान्तरेषु अनिष्पत्तेः । ऋगन्तरेषु आश्रयभेदात् भिद्यते । यथा पाके । यथा एक एवायमर्थः पाको नाम । तस्य अर्थान्तरे वैरूप्यं भवति । अन्यथालक्षण ओदनस्य पाकः, अन्यथालक्षणो गुडस्य । येन ओदनपाको गृहीतः नासौ अशिक्षित्वा गुडं पक्तुं जानाति । तस्मात् तस्यापि अकर्मकाले प्रयोग उपपद्यते ।

**शब्दानां च सामञ्जस्यम् । २१ ॥**

**भाष्यम्**— एवं च सामशब्दानां ऋक्शब्दानां च सामञ्जस्यं भवति । कवतीषु रथंतरं गायति इति । कवतीशब्दः ऋच एव वक्ष्यति, रथंतरशब्दश्च साम । इतरथा कवतीशब्दे वा देशलक्षणा स्यात्, रथंतरशब्दे वा धर्मलक्षणा । तस्मात् गीतौ सामशब्दः इति ।

**शा**— ' कवतीषु रथंतरं गायति ' इत्यत्र अनेन रथंतरशब्देन किं कवतीषु अतिदिश्यते इति परिज्ञानार्थं रथंतरादिशब्दाः किं गीतिविशिष्टानां ' अभि त्वा शूर नोनुमः ' इत्यादीनां वाचकाः उत गीतिमात्रस्य इति चिन्त्यते । द्वितीये तु मन्त्रलक्षणं कुर्वता ' गीतिः साम ' इति एतावदुक्तम्, न तु उपपादितम् । इह तु अतिदेशविषयसिद्ध्यर्थं गीतिविषयत्वमेव न्यायेन दृढीक्रियते । तत्र गीतिविशिष्टायां ऋचि प्रयोगात् ऋग्वचनत्वम् । विशिष्टवचनत्वे विशेषणीभूतगीत्यभिधानस्य आवश्यकत्वात् तदभिधाने च तत एव तदविनाभूतायां ऋचि प्रतिपत्तिसिद्धेः, अभिधानशक्तिकल्पनानुपपत्तेः गीतिमात्रमेषां अभिधेयम् । अतः अभिवत्यां यो गीतिविशेषः, तस्य कवत्यादिषु अतिदेशः ।

**सोम**— गीतिवचनत्वविचारस्य अतिदेशार्थत्वेन तन्मुखेन अतिदेशस्यैव विचार्यत्वात् **अध्यायसंगतिः ।** ऋक्स्वरूपं पुरस्कृत्य आयीभावादेः प्रयोगः । ततः तत्प्रयोगकाले आयीभावादिप्रकृतिभूताः मन्त्रवर्णाः स्मृत्युपारूढाः । ततः सर्ववर्णप्रत्यभिज्ञाबलात् युक्तं ऋगेकत्वम् । अन्यथा आयीभावप्रयोगकाले स्मृत्यभावे साम्नो ऋगक्षराभिव्यञ्जकत्वाभावे अदृष्टार्थता स्यात् । नागृहीतविशेषणान्यायेन गीतिमात्रवचनत्वमेव इति सिद्धान्तः । **सूत्रार्थस्तु**— साम्नः अभिधायकेन रथंतरादिशब्देन यथाशिष्टं अध्यापकैः शिष्येभ्यः यत् अनुशिष्यते गीतिविशिष्टमन्त्ररूपं तत् अनतिक्रम्य प्रवृत्तिः व्यवहारः स्यादिति ।

**वि**— ' अतिदेश्यं विनिश्चेतुं कवतीषु रथंतरम् । गायतीत्यृग् गानयुक्ता शब्दार्थो गानमेव वा ॥ इति चिन्ता, गानयुक्ता त्वभित्वेत्यृक् प्रसिद्धितः ।, लाघवादतिदेशस्य योग्यत्वाच्चान्तिमो भवेत् ॥ '

**भाट्ट**— प्रकृतौ ज्योतिष्टोमे अभीवत्यामुत्पन्नं रथंतरं विकृतिविशेषे अविवाक्यादौ कवतीषु कर्तव्यत्वेन श्रूयते ' कवतीषु रथंतरं गायति ' इत्यादिना । तथा ' यद्योन्यां गायति, तदुत्तरयोर्गायति ' इति च श्रुतम् । तत्र रथंतरादिशब्दानां गीतिविशेषविशिष्टायां ऋचि प्रयोगात् विशिष्टवाचकत्वे प्राप्ते, आकृत्यधिकरणन्यायेनैव गीतिविशेषमात्रं विजातीयगीतित्वमात्रं वा वाच्यम् । एवं सामशब्दस्यापि गीतिमात्रं गीतित्वमात्रं वा वाच्यम्, न तु गीतिः तद्विशिष्टा वा ऋक् । तस्याव्यक्तिन्यायेन अरुणापद इव सति मुख्यार्थबाधे लक्षणया बोधोपपत्तेः । आकृत्यधिकरणस्यैव तु ( १।३।१० ) प्रयोजनकथनार्थानि सूत्राणि । यदि हि ऋग्वाचित्वं भवेत्, तदा ऋचि ऋगतिदेशासंभवात्, कवतीशब्दः कार्यलक्षणार्थः । तत्कार्ये अर्थप्रकाशनं लक्षणादिना अभीवत्या कुर्यात् इति कवतीकार्ये ऋगन्तरस्यातिदेशः । देशलक्षणार्थो वा कवतीदेशे अभिवती पठेत् इति, जघन्यं रथंतरपदं वा तद्धर्मलक्षणार्थं सत् तद्धर्मातिदेशार्थं कवतीषु संमीलनादीन् रथंतरधर्मान् कुर्यात् इत्यर्थः । अन्ये तु भाष्यस्थाः पक्षाः असंभवदुक्तिकत्वात् न लिखिताः । **सिद्धान्ते** तु लक्षणायां प्रमाणाभावात् ऋचः इह बोधस्यैव अभावेन गीतिमात्रस्यैव कवतीषु अतिदेशः इति प्रयोजनम् । प्रसङ्गात् आकृत्यधिकरणसिद्धस्यैव गीतिवाचित्वस्य



उपोद्बलकानि कानिचिल्लिङ्गदर्शनसूत्राणि इति द्रष्टव्यम् । **न च** ' यद्योन्यां गायति ' इत्यादौ योनिसंबन्धित्वेन रूपेण विधेयत्वात् अतिदेशलक्षणोपपत्तौ अपि ' कवतीषु रथंतरं गायति ' इत्यादौ रथंतरत्वस्यैव विधेयतावच्छेदकत्वात् अतिदेशत्वानुपपत्तिः इति **वाच्यम्** । तत्रापि धर्मग्राहकक्लृप्तोपकारलाभार्थं अभिवतीसंबन्धित्वस्यैव विधेयतावच्छेदकत्वात् । **वस्तुतस्तु** गृहमेधीये आज्यभागविधेः अतिदेशत्वाभाववत् अस्यापि अतिदेशत्वाभावे न काचित् क्षतिः । लाघवेन अभिवतीषु येन रूपेण उपकारकत्वं तेनैव कवतीषु उपकारकत्वस्वीकारेण ऊहोपपत्तेः ।

**मण्डन**— ' गीतिरेवातिदिश्येत । '

**शंकर**— ' गीतिः साम तु नर्क् मता । ' न ऋक् मता ।

* **रथंतराधिकरणे** अवेष्ट्यधिकरणस्य आपवादिकी संगतिः । **कौ.** २।३।२।३. * रथंतराधिकरणे विश्वजिदादिवत् संवादो विरोधाभावेन निमित्ताभावात् न नैमित्तिका धर्माः इति कौस्तुभे निरूपितम् । अतश्च तत्रानियता ग्रहाग्रता, अनियता च या काचित् प्रतिपत् । **भाट्ट.** १०।५।१६.

* सौर्यस्य भाष्यकारीयक एव **रथंतराधिकरणन्यायेन** आग्नेयद्वयविकारत्वात् मन्त्रद्वयप्राप्त्या अभिमर्शने निरपेक्षसाधनयोः समुच्चयासंभवेन विकल्पादव्यवस्था सिध्यति । **सोम.** ८।१।१५.

* **रथंतरादिगीतीनां** नित्यताङ्गीकारः । **मणि.** पृ. १७०.

* **रथंतरादिशब्दाः** सामशब्दश्च गीतिवाचकाः । ९।२।१।१–२. ' सामशब्दो रथंतरादिशब्दाश्च गीतिवाचकाः ' इत्यत्र द्रष्टव्यम् । * **रथंतरादिशब्दस्य** गायतिवाच्यत्वेन प्रसिद्धगानवाचित्वम् । **सु. पृ.** ८६२. * **रथंतरादिशब्दानां** गीतिविशेषवाचित्वम् । रथंतराधिकरणम् । ७।२।१।१–२१.

**卐 रथंतरादिसाम्नां तृचे गानम् ॥**

**एकर्चस्थानि यज्ञे स्युः स्वाध्यायवत् । १०।६। १।१ ॥**

**भाष्यम्**— सामान्युदाहरणम्, रथंतरं बृहद् वैरूपं वैराजं शाक्वरं रैवतमिति । तत्र संशयः किमेकस्यामृचि गानं कर्तव्यमुत तृचे इति । किं प्राप्तम् ? एकर्चस्थानि यज्ञे स्युः । एकस्यामृचि गातव्यानि । एवं स्वाध्याये गीतानि । यथा स्वाध्याये गीतानि, तथा कर्मणि गातव्यानि । कर्मणि स्वाध्याये चावैलक्षण्यं न्याय्यम् । कर्माणि कर्तुं स्वाध्यायमभ्यस्यन्ति । अतो यथाऽभ्यस्तं तत्र प्रयोक्तव्यम् । तस्मादेकस्यामृचि गीयेरन् । एकर्चोत्पत्तीन्युदाहरणम्, न तृचोत्पत्तीनि । यथाऽऽह, सिमा–संतनि – यतय–एवागपत्य–शाक्वरवर्णमिति ।

**तृचे वा लिङ्गदर्शनात् । २ ॥**

**भाष्यम्**— न चैतदेवम्, एकस्यामेव गातव्यानीति । कुतः ? लिङ्गदर्शनात् । लिङ्गं भवति । एवमाह, अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौति, द्व्यक्षरेणोत्तरयोरिति । न ह्येकस्यामृचि प्रथमोत्तरासंबन्धो भवति । तस्मात्तृचे गातव्यानीति । अथेदमपरं लिङ्गम् ' ऋक् सामोवाच, मिथुनी संभवावेति । सोऽब्रवीत्, न वै त्वं ममालमसि जायात्वे वेदो मे महिमेति । ते द्वे भूत्वोचतुः, सोऽब्रवीन्नैव वां ममालं स्थो जायात्वे वेदो मे महिमेति । तास्तिस्रो भूत्वोचुः, सोऽब्रवीत्संभवामेति । तस्मादेकं साम तृचे क्रियते स्तोत्रीयम् ' इति ।

आह । लिङ्गमिदम्, प्राप्तिरुच्यतामिति । तदभिधीयते । कृत्स्नेऽपि ऋग्वेदे न प्रथमा नाम काचित् ऋगस्ति, तथा उत्तरे इति । व्यवस्थाकृतं प्रथमात्वम्, उत्तरात्वमिति प्रथमाया ऋचोऽष्टाक्षरेण प्रस्तोतव्यम्, द्व्यक्षरेण चोत्तरयोरिति । तस्मिन् वचने सति ऋचस्त्रित्वमापद्यते । तथा यद्यप्यनुवादसरूपोऽयं शब्दः, तस्मादेकं साम तृचे क्रियते स्तोत्रीयमिति, तथापि ऋक् सामोवाच–इति पुरस्तादर्थवादप्ररोचनया विदधातीति गम्यते । तदुक्तं वचनानि त्वपूर्वत्वादिति ।

**शा**— सन्ति ज्योतिष्टोमे रथंतरादीनि स्तोत्रीयाणि सामानि, तानि किं एकैकस्यां ऋचि गेयानि, उत तृचे इति संशये स्वाध्यायवेलायां एकस्यां ऋचि गीतत्वात् तदवैलक्षण्याय यज्ञे अपि एकस्यां भवेयुः, ' एकं साम तृचे क्रियते ' इति वर्तमाननिर्देशरूपं न विधिक्षममित्ये-

तावान् पूर्वः पक्षः। 'ऋक्सामोवाच' इत्याद्यर्थवाद-विभावितविधिशक्तेः 'एकं साम तृचे क्रियते' इति वचनात् तृचे गातव्यानीति सिद्धान्तः।

**सोम**— स्वाध्यायप्राप्तैकर्चस्थत्वबाधो विध्यन्तरात् इति पादान्तरता। यद्वा सामविषये बाधः प्राधान्येन अत्र चिन्त्यते इति पादान्तरता, पूर्वत्र वचनबलात् 'सुपर्णोऽसि गायत्रच्छन्दाः' इति अयथास्वाध्यायत्वे अपि इह यथास्वाध्यायस्थमेव इत्युत्थानात् पादावान्तर**संगतिश्च** इत्याहुः। **वस्तुतस्तु** एकाहाहर्गणात्मकसोमयागविषयो बाधोऽत्र व्युत्पाद्यते इति पादान्तरत्वं बोध्यम्। **सूत्रे** रथंतरादीन् उद्दिश्य इति अध्याहारः।

**भाट्ट**— योन्यामेकस्यामेवोत्पन्नानि सामानि तस्यामेव कर्मकाले गेयानि, स्वाध्यायकाले तथैवाभ्यस्तत्वात्, सामविशेषे तृचोत्पत्तिवैयर्थ्यापत्तेश्च, 'एकं साम' इत्यादेस्तद्विषयकत्वेनानुवादोपपत्तेश्च। **इति प्राप्ते**। 'ऋक् सामोवाच, मिथुनी संभवावेति। सोऽब्रवीत्, न वै त्वं ममालं जायात्वे, वेदो मम महिमेति। ते द्वे भूत्वोचतुः। सोऽब्रवीत् न वै वां ममालं स्थो जायात्व इति। तास्तिस्रो भूत्वोचुः। सोऽब्रवीत् संभवामेति। तस्मादेकं साम तृचे क्रियते स्तोत्रीयम्' इत्यर्थवादोपष्टब्धेन विधिना तृचे सामविधिप्रतीतेस्तृच एव गानम्। दर्शितश्चास्य वाक्यार्थो नवमे।

अत एव 'अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौति, द्व्यक्षरेणोत्तरयोः। यद्योन्यां गायति तदुत्तरयोः' इत्यप्याञ्जस्येनोपपद्यते। सामविशेषे तृचोत्पत्तिस्तु मन्त्रत्वसिद्ध्यर्थेति न विरोधः। सिद्धोऽप्ययमर्थः शिष्यहितार्थं पुनरिहोच्यते।

**मण्डन**— 'तृचे गेयं भवेत् साम।'

**शंकर**— 'तृचे स्तोत्राङ्गसामानि।'

* **रथंतरादिसाम्नां** षाडहिकानां मध्ये विश्वजिति नैरूपस्यैव होतुः पृष्ठस्तोत्रे निवेशः। १०।६।५।१३–१४ 'विश्वजिति षाडहिकरथंतरादिसाम्नां॰' इत्यत्र द्रष्टव्यम्।

* **रथंतराधारप्रग्रथनम्**। 'न वै बृहद्रथंतरमेकच्छन्दः, यत् तयोः पूर्वा बृहती ककुभावुत्तरे'। अत्र ऋक्त्रयमुक्तम्। एका प्रथमा बृहती उत्तरे द्वे ककुभौ इति। मूलतस्तु उत्तराग्रन्थे ऋग्द्वयात्मकमेव सूक्तं रथंतराधारभूतं विद्यते। परंतु द्वयोः प्रग्रथनेन ऋक्त्रयं संपद्यते। तद्यथा— 'अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः। ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः॥ १॥' (बृहती ८।८।१२।८ अक्षरपादाः), 'ईशानमिन्द्र तस्थुषो न त्वावाँ अन्यो दिव्यो न पार्थिवः। न जातो न जनिष्यते॥ २॥' (ककुप् ८।१२।८ इत्यक्षरपादाः), 'न जातो न जनिष्यते अश्वावन्तो मघवन्निन्द्र वाजिनः। गव्यन्तस्त्वा हवामहे॥ ३॥' (ककुप्) इति मूलभूते द्वे एव ऋचौ, तत्र प्रथमा बृहती निर्दिष्टैव। द्वितीया सतोबृहती तु 'न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते। अश्वावन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे॥ २॥' इति। वि ९।२।६ वर्णकं १.

* **रथंतरगानं** प्रागाथिकम्। काकुभः प्रगाथः। बृहतीपङ्क्त्योः ककुप्कारं प्रग्रथनम्। **भा.** ९।२।६।२५.

**※ रथंतरगाने 'स्वर्दृशं प्रति वीक्षेत' इति वीक्षणे स्वर्दृक्पदपाठकालस्य विधानम्॥**

**स्वर्दृशं प्रति वीक्षणं कालमात्रं परार्थत्वात्। १०।६।२।३॥**

**भाष्यम्**— 'ईश्वरं वै रथंतरमुद्गातुश्चक्षुः प्रमथितोः, रथंतरे प्रस्तूयमाने संमीलेत्, स्वर्दृशं प्रति वीक्षेत'। अत्र संशयः किं स्वर्दृशं प्रति वीक्षणमङ्गप्रयोजनसंबन्धः, उत कालार्थः संयोग इति। तत एतावत् तावन्नः परीक्ष्यम्, किं रथंतरे प्रस्तूयमाने संमीलेदित्यस्य शेषः स्वर्दृशं प्रति वीक्षेतेति, उत स्वर्दृशमित्येवमादि पृथग्वाक्यमिति। किं प्राप्तम्? अङ्गप्रयोजनसंबन्ध इति, पृथग्वाक्यमिति। कुतः? भेदेनावगमात्। भिन्नमिदमुपलभ्यते, स्वर्दृशं प्रति वीक्षेतेति। ननु अभिन्नमपि लक्ष्यते, रथंतरे प्रस्तूयमाने संमीलेदिति विधाय स्वर्दृशं प्रति वीक्षेतेत्यनुवदतीति। उच्यते। उभयावगतौ भेदो ग्रहीतव्यः। स भेदो गृह्यमाणो न तेन विरुध्यते। अन्यतरगतिस्तु विध्यनुवादयोर्विरोधात्। तत्र विधिर्न्याय्योऽपूर्वत्वात्। वादमात्रं ह्यनर्थकम्। विध्यवगमाच्च। विधिश्चावगम्यते वीक्षेतेति। श्रुतिश्चैवमनुगृह्यते, स्वर्दृशं प्रति वीक्षेतेति



स्वर्दृक्शब्दं प्रति वीक्षणार्थो विधीयते। स्वर्दृक्शब्देन सह वीक्षणस्य साक्षात्संबन्धः। इतरथा स्वर्दृक्शब्दः कालं लक्षयेत्। श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या। तस्मादङ्गप्रयोजनसंबन्धः।

**अथवा**, स्वर्दृशं प्रति वीक्षेतेत्येवमङ्गप्रयोजनसंबन्धः। स्वर्दृक्शब्दो वीक्षणस्य साधनमिति। तथा लिङ्गमप्यनुगृहीतं भवति। स्वर्दृक्शब्दश्रवणाद्वाक्यमपि। तस्मादङ्गप्रयोजनसंबन्ध एवेति।

**एवं प्राप्ते, ब्रूमः**। स्वर्दृशं प्रति वीक्षणं कालमात्रं स्यात्परार्थत्वात्। **नैतदेवम्**, अङ्गप्रयोजनसंबन्ध इति। किं तर्हि? स्वर्दृक्शब्देन वीक्षणस्य कालार्थः संबन्धः स्यात्। कुतः? परार्थत्वात् साम्नः। रथंतरं पृष्ठं भवतीति पृष्ठस्तुतौ हि साम विनियुज्यते। तच्च साम पदानां स्तुतिं निर्वर्तयतां संश्लेषादिभिर्विशेषैः स्तुतिपदाक्षराण्युपदर्शयत्स्तुतिमभिनिर्वर्तयतीत्युच्यते। एवं चेत् साम्नि स्तुतौ विनियुज्यमाने यानि तानि परस्परसव्यपेक्षाणि ऋक्पदानि स्तुतौ विनियुक्तानि भवन्ति। अतः स्वर्दृक्शब्दस्य तन्मध्यपाठात् स्तुतौ विनियोग उक्तो भवतीति। अतः परार्थत्वादिह कालार्थः संयोग इत्यध्यवसीयते।

ननु मन्त्रे समाम्नानमात्रम्, रथंतरोपदेशाच्च पदोपदेशमानुमानिकं बाधित्वा एतद्वाक्यं प्रत्यक्षमङ्गप्रयोजनसंबन्धमेव प्रकल्पयेदिति। उच्यते। तद्धि बाधकं भवति। यद्बाधमानमप्रयोजनं भवति। न चैतद्बाधमानमनर्थकम्, क्रियासु कालपरिच्छेदेनार्थवत्त्वात्। मन्त्रे समाम्नानसामर्थ्यात् सामोपदेशाच्च स्तुतिसंबन्धः साक्षात्। वाक्यात् क्रियाकारकसंबन्धः। उभयोः प्रमाणावगतत्वादुभयसंबन्धो न विरुध्यते इति यद्युच्येत। **तन्न**। यो हि मन्त्रवाक्याद्व्यवच्छिन्नस्य क्रियाकारकसंबन्धमवगच्छति, नासौ सकृदुच्चरितस्य स्तुतिसंबन्धमप्यवगच्छति। यद्यवगच्छेत्, पुनरुच्चारयेत्, नान्यथा। तस्मात् तस्यामेव श्रुतौ क्रियासंबन्धे कारकसंबन्धो न स्तुतिसंबन्धे, कारकविशेषणाभावात्। तदेवं मन्त्राम्नानस्य सामोपदेशवाक्यस्य स्वर्दृशं प्रति वीक्षेतेत्यस्याविरोधे साधिते कालार्थः संयोगः इति। अत उच्यते कालार्थः संयोग इति।

**अथ यदुक्तम्**, भेदाभेदयोर्भेदो ग्रहीतव्यः। विध्यनुवादयोर्विधिर्न्याय्यान्। विधिप्रत्ययदर्शनाच्च एवमेव अवगम्यते इति। **अत्र ब्रूमः**। सत्यम्, विध्यनुवादयोर्विधिर्न्याय्यान्, अपूर्वार्थप्रकल्पकत्वादिति। यदि तु प्रमाणान्तरप्राप्तिर्नावगम्यते। यत्र तु पदान्तरादर्थाद्वा प्राप्तिरवगम्यतेऽर्थस्य, तत्र प्रमाणान्तरप्रतीतत्वात् शब्दः उच्चरन् अनुवाद इत्यवगम्यते। अत्र च स्वार्थप्रवृत्त्या पुरुषस्य दर्शनमस्ति। नापश्यन् पुरुषः क्रियासु व्यापारमुपगन्तुमुत्सहते इत्यर्थप्राप्ते विधिप्रत्ययोऽप्यनुवाद इत्यवगम्यते। ननु रथंतरे प्रस्तूयमाने संमीलेदिति प्रत्यक्षवाक्यमर्थप्राप्तं पुरुषस्य दर्शनं बाधेत। यथा प्रजापतिव्रतानि पौरुषेयीं स्वेच्छाप्रवृत्तिं वचनसामर्थ्यान्निरुन्धन्ति, तद्वदिति। नेत्यवगम्यते। कथम्? क्रियाप्रारम्भसंबन्धात्। रथंतरे प्रस्तूयमाने इत्युच्यते। तदतीते प्रस्तावे वचनार्थस्य कृतार्थत्वादर्थप्राप्तं न वारयितुमर्हति।

**अथ यदुक्तम्**, स्वर्दृक्शब्दवीक्षणयोर्वाक्येन संबन्ध इति। वाक्यार्थत्वाद् दृशिप्रयोगाच्च लिङ्गाद्दर्शनक्रियासामर्थ्यमस्तीति। **अत्र ब्रूमः**। प्रतिशब्दः कर्मप्रवचनीयत्वात् स्वर्दृक्शब्दस्य लक्षणतामाचष्टे श्रुत्यैव। श्रुतिश्च लिङ्गवाक्ययोर्बाधिका समधिगतैव। अथवा, नात्र वाक्यं बाध्येत। वाक्यं हि संबन्धप्रत्यायकम्। यथासंभवमनेकविधः संबन्धो वाक्यात् गम्यते। क्वचित् क्रियाकारकसंबन्धः, क्वचित् विशेषणविशेष्यसंबन्धः, क्वचित् लक्ष्यलक्षणसंबन्धः, इत्येवंप्रकाराः संबन्धविशेषा इति। तत्रेह लक्ष्यलक्षणसंबन्धः प्रयोजनप्रयुक्त इति गृह्यते एव संबन्धविशेष इति न वाक्यं बाध्यते। यथा लोके, वृक्षं प्रति विद्योतते, इति न विद्योतनस्य वृक्षस्य च साध्यसाधनभावो गम्यते इति। अन्यतः प्रवृत्तस्य विद्योतनस्य वृक्षश्चिह्नभावायोपादीयते इति। तद्वत् इहापि पुरुषार्थतया प्रवृत्तस्य दर्शनस्य स्वर्दृक्शब्दो लक्षणतया उपादीयते इति न वाक्यानर्थक्यम्। न हि लक्ष्यलक्षणयोः अनुच्चार्यमाणयोः संबन्धोऽवगम्यते इति।

यदपि दृशिप्रयोगात् लिङ्गानुग्रह इति। तदपि न समर्थमिवेप्सितस्यार्थस्य पश्यामः। स्वार्थो हि दृशिः प्रयुज्यमानो दर्शनमवगमयेत्, न परार्थः। स्वर्दृक्शब्दे

तु सोपपदो दृशिः कर्तृत्वे गुणभूतोऽवगम्यते। कर्ता तु प्रधानभूतः। न च कर्ता प्रत्याय्यमानो वीक्षणलिङ्गत्वेन कल्प्यते, दृशेरत्यन्तपारतन्त्र्यात्। कर्त्रभिधानश्च सन्नयं नैव वीक्षतिना सामञ्जस्येन संबन्धमुपैति। यदि तावदयमर्थ उपदिश्यते, स्वर्दृशं वीक्षेतेति। कोऽसौ स्वर्दृग्, यं प्रति वीक्षणमुपदिष्टमित्यविजानन्तो नैव क्रियामध्यवस्येम। अथायमर्थः, स्वर्दृशा वीक्षणं निर्वर्तयेदिति। तथाप्यप्रज्ञानात् स एव दोषः। तदेवंप्रकारे संबन्ध आञ्जस्येन अभ्युपगम्यमाने न लिङ्गं न च वाक्यमनुगृह्यते। लक्षणसंबन्धे तु वीक्षणस्य, एतदुच्चारणकाले वीक्षेतेति भवति कयाचिद् युक्त्या संबन्धः। स्तुतिसंबन्धश्च कर्त्रभिधानस्यापि सतो न विरुध्यते। सामानाधिकरण्यादीशानेन विशेषणविशेष्यभावसंबन्धमभ्युपैति, ईशानं स्वर्दृशं तस्थुष इति। अतो वदामः, स्तुत्यर्थस्य सतः, स्वर्दृशं प्रति वीक्षेतेत्यत्र कालार्थः संबन्ध इति।

किं भवति प्रयोजनम्। अङ्गाङ्गिसंबन्धे सति यदा, रथंतरमुत्तरयोर्गायतीत्यतिदेशः, तदैतदुपतिष्ठते, रथंतरे प्रस्तूयमाने संमीलेदिति। उत्तरयोस्तु स्वर्दृक्शब्दाभावाद्दर्शनानियमः पूर्वपक्षे। सिद्धान्ते तु लक्षणसंबन्धे सति तावति भागे कालाहानात्, स्वर्दृशं प्रति वीक्षेतेति नियमः सिद्धो भवति।

**शा**— 'रथंतरे प्रस्तूयमाने संमीलयेत्' इति विधाय श्रूयते 'स्वर्दृशं प्रति वीक्षेत' इति। अत्र संदेहः, किं स्वर्दृक्शब्दस्य वीक्षणस्य च कालार्थः संयोगः, उत अङ्गाङ्गिसंबन्धः इति। तत्र कालार्थत्वे स्वर्दृक्शब्दस्य लक्षणाप्रसङ्गात् अङ्गाङ्गिसंबंध एव न्याय्यः, स्वर्दृक्शब्दो वा वीक्षणाङ्गम्, स्वर्दृक्शब्दं समुच्चारयन् वीक्षेत नान्यथा इति, वीक्षणं वा स्वर्दृक्शब्दस्य अङ्गं वीक्षमाणः स्वर्दृक्शब्दं उच्चारयेत् नान्यथा। इति प्राप्ते, ब्रूमः।

**'अनपेक्षितसंबन्धात् वाक्यभेदप्रसङ्गतः। न युक्तोऽङ्गाङ्गिसंबन्धः तस्मात्कालार्थता वरम्॥'**

**सोम**— पूर्ववत् इहापि निरर्थकानुवादाऽयोगात् वीक्षणविधिरेव वाच्यः इत्युत्थितेः **संगतिः**। **सूत्रार्थस्तु**—स्वर्दृक्शब्दस्य स्त्युत्यर्थत्वात् वीक्षणकालोपलक्षणमात्रमिति।

**वि**— 'स्वर्दृक्शब्दे वीक्षणे च किं स्यादङ्गाङ्गिताऽथवा। मीलनावधिताऽऽद्योऽस्तु भिन्नवाक्येन तद्विधेः॥ प्रतिशब्देनावधिर्हि द्योत्यो वाक्यं न भिद्यते। सत्येवं मीलनस्यापि विधिर्नोत्तरयोर्भवेत्॥'

**भाट्ट**— 'रथंतरे प्रस्तूयमाने संमीलयेत्' इति विधाय, 'स्वर्दृशं प्रति वीक्षेत' इति श्रुतम्। तत्र रथंतरयोनिभूतायामृचि 'ईशानमस्य जगतः स्वर्दृशम्' इति श्रुतस्य स्वर्दृक्छब्दस्य किं वीक्षणेन अङ्गाङ्गिसंबन्धः, उत कालार्थः संयोगः, इति चिन्तायाम्, रथंतरसमाप्त्यवधिकस्य संमीलनस्यावध्यन्तरापेक्षाभावात्, द्वितीयया निर्णीतप्रयोजनस्य स्वर्दृक्छब्दस्याङ्गत्वेन वीक्षणमेव धात्वर्थो विधीयते। यत्तु स्वर्दृक्छब्द एव स्मारकतया वीक्षणाङ्गत्वेन विधीयते इति पूर्वपक्षान्तरं मूले कृतं तत् मन्त्रे ईशानादिपदैकवाक्यतया श्रुतस्य स्वर्दृक्छब्दस्य स्तोत्राङ्गत्वेन निर्ज्ञातप्रयोजनस्य रागप्राप्तवीक्षणाङ्गत्वायोगात् वीक्षणस्यापि स्मारकपदविशिष्टस्यारादुपकारकतया विधौ गौरवाद्यापत्तेरुपेक्षितम्। अतश्च स्वर्दृक्पदकाले वीक्षणं आद्यन्तयोः संमीलनम्। इति प्राप्ते, अदृष्टार्थस्य वीक्षणस्य मध्ये विधौ गौरवापत्तेः प्रतिशब्दयोगेन च अस्या द्वितीयायाः कर्मप्रवचनीयनिमित्तत्वेन कर्मत्वार्थकत्वाभावात् प्रतिशब्दानर्थक्यापत्तेश्च कालार्थ एवायं संयोगः। प्रतिशब्देन कालस्य सूचितत्वाच्च न तल्लक्षणा अपि। अत एव रागप्राप्तवीक्षणानुवादेन कालविधाने कृते अर्थान्निमीलनस्यायं विधि( अवधि )रिति संपद्यते।

वस्तुतस्तु एकवाक्यतालाभाय अयं निमीलनविधेरर्थवाद एव। तेन च आर्थवादिकावधिकल्पना। अत एव निमीलनवाक्ये एव स्वर्दृक्पदावधीतिपदकल्पना वृतादिपदवदिति ध्येयम्।

प्रयोजनं पूर्वपक्षे स्पष्टम्। उत्तरयोश्च रथंतरावृत्तौ संमीलनस्याप्यावृत्तेर्यावदुत्तरासमाप्ति संमीलनं पूर्वपक्षे। **सिद्धान्ते** तु उत्तरयोः स्वर्दृक्पदाभावेऽपि तत्पदाभिव्यञ्जकरथंतरभागावधिकमेव संमीलनम्, अत एव विधेयसामर्थ्यानुरोधेन संमीलनविधौ रथंतरपदेन लक्षणया तदवधिकपूर्वभागस्यैवोद्देश्यतेत्यपि ध्येयम्।



इदं तत्रतत्र गतार्थमपि निमीलनस्योत्तरासु बाधोपयोगितया शिष्यहितार्थमुक्तम्।

**मण्डन**— 'कालार्थे स्वर्दृगुच्यते।'

**शंकर**— 'कालार्थः स्वर्दृगन्वयः।'

* **रथंतरगीतिः** ऋगक्षराणि संस्कुर्वती पृष्ठस्य प्रकृतौ साधनभावेन अवगता, एवं बृहद्गीतिरपि। टुप्. १०।४।२३।४४.

* **रथंतरधर्माः** 'नोच्चैर्गेयम्' 'न बलवद्गेयम्' 'रथंतरे प्रस्तूयमाने संमीलयेत्' 'स्वर्दृशं प्रति वीक्षेत' इत्येवमादयः। भा. ९।२।१५।४७, * रथंतरधर्माः शूरादिकायां स्तुतौ निबद्धा रथंतरे प्रस्तूयमाने भवेयुः न बृहति। ९।२।१५।४७.

* **रथंतरनिमित्तकं** ऐन्द्रवायवाग्रत्वं ज्योतिष्टोमे। वि. १०।५।२३.

* **रथंतरपृष्ठस्य**। 'उपवतीं रथंतरपृष्ठस्य प्रतिपदं कुर्यात्' इति उपवती प्रतिपत्। भा. १०।५।१६।५९.

* **रथंतर-बृहतोः** एकस्मिन् कर्मणि विकल्पः, एकार्थत्वात्। भा. १२।३।४।१०-१५, * रथंतर-बृहतोः प्रत्यहमेकैकस्यैवानुष्ठानं गवामयनगतपृष्ठ्यषडहे। १०।६।३।४-५. * रथंतरबृहतोः संसवे, गोसवे, अपचितौ च पृष्ठस्तोत्रे एव ( होतुः ) समुच्चित्य निवेशः। १०।६।८।२४-२६

* **रथंतरबृहदुभयसामके** क्रतौ ( संसवे, गोसवे, अपचितौ ) रथंतरादिधर्माणां प्रकृतिवद् व्यवस्था। भा. ९।२।१७।४९-५०.

* **रथंतरशब्दार्थः** गानविशेष एव, न तु ऋगक्षराणि। वि. ७।२।१.

* **रथंतरसामा सोमः** माध्यंदिनसवने पृष्ठस्तोत्रे रथंतरनामकं साम यस्य सोमयागस्य स सोमः रथंतरसामा। एवं बृहत्सामा सोमः। वि. १०।५।१५.

* **रथंतरसामता** ज्योतिष्टोमे पृष्ठार्था। भा. १०।६।६।१६.

* **रथंतरसामत्वे** ज्योतिष्टोमे पृष्ठस्तोत्रे ऐन्द्रवायवाग्रत्वम्। वि. २।३।१.

* **रथंतरसामबृहत्सामशब्दाभ्यां** ( यदि रथंतरसामा यदि बृहत्सामा इति ) ज्योतिष्टोम एव अभिधीयते। भा. २।३।१।१-२.

* **रथसप्तम्यां** सूर्यपूजादि, सदाचारः। वा. १।३।३।७ पृ. २०५.

**रथ्यादीपन्यायः**। यथा— रथ्यायां प्राक् पश्चाच्च नीयमानस्य दीपस्याऽग्रे दीपप्रभा यस्मिन् प्रदेशे गच्छति तस्मिन्नेव प्रदेशे क्षणान्तरे दीपोऽपि गच्छत्येवंविधविवक्षा यत्र तत्रायं प्रवर्तते। **साहस्री.** ५६५.

* **रलयोः** समानवृत्तित्वम्। पर्यङ्कः पल्यङ्कः, रोमाणि लोमानि, अङ्गुरिः अङ्गुलिः इति। भा. ९।४।३।२२.

**रशना च लिङ्गदर्शनात्।८।६।१०।३१॥**

अग्निष्टोमे पशुबन्धनार्था रशना श्रूयते। 'त्रिवृत् भवति, दर्भमयी भवति, प्रपिष्टानां कर्तव्या' इति रशनाधर्माश्च श्रुताः। सेयं रशना, तद्धर्माश्च अग्नीषोमीयसवनीयोभयसाधारणी उत अग्नीषोमीयार्था एवेति संशये प्रकरणात् – अग्नीषोमीयप्रकरणपाठात् अग्नीषोमीयार्था एवेति उत्सूत्रे पूर्वपक्षे सर्वार्था इति सिद्धान्तप्रतिपादनार्थं सूत्रमेतत्। पञ्चदशसूत्रस्थं 'सर्वार्थे' इति पदं स्रोतोवदेव अनुवृत्तं सत् रशनापदसामानाधिकरण्याय स्त्रीलिङ्गत्वेन विपरिणम्य संबध्यते। रशना च ग्रहधर्मवत् सर्वार्था। चशब्दः पूर्वदृष्टान्तार्थः। सर्वार्थत्वं लिङ्गदर्शनात्। अग्नीषोमीयप्रकरणे तावत् 'त्रिवृद्भवति' इत्युक्तमेव। पुनः 'त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति' इति सवनीयपरिव्याणे रशनां त्रिवृत्त्वं च दर्शयति। तच्च सर्वार्थत्वे एवोपपद्यते। तस्मात् रशना तद्धर्माश्च सर्वार्थाः। **के.**

**रशना च लिङ्गदर्शनात्। ३।६।१०।३१॥**

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः— 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति। तत्र रशना श्रूयते, रशनाधर्माश्च 'त्रिवृद्भवति, दर्भमयी भवति, प्रविष्टान्ता (प्रपिष्टानां) कर्तव्या' इति। तत्र संदेहः किमेते धर्मा अग्नीषोमीयरशनायाः सवनीयरशनायाश्च साधारणाः, उत अग्नीषोमीयार्था एव इति। प्रकरणक्रमयोः विरोधाविरोधौ निरूप्य इदानीं श्रुतिक्रमयोः विरोधाविरोधौ

निरूप्येते। अत्र यद्यपि साक्षान्न रशना श्रूयते, किन्तु 'यूपं परिव्ययति' इति यूपपरिव्याणादेव लभ्यते, तथापि दर्भमय्यादिशब्दानां यौगिकत्वेन परिव्याणाक्षिप्तरशनाविशेषवचनत्वात् भाष्ये रशना श्रूयते इत्युक्तम्। यूपपरिव्याणं 'यूपं परिव्ययति' इत्यनेन यथा अग्नीषोमीये विधीयते, तथा 'आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययति' इत्यनेन सवनीयेऽपि विहितम्। तेन यूपपरिव्याणाक्षेपादेव उभयत्रैव रशनायाः प्राप्तत्वात् रशनाधर्माः श्रूयमाणाः किमग्नीषोमीयरशनार्था एव उत अग्नीषोमीयसवनीयरशनार्था इति भवति संदेहः।

अत्रायं **पूर्वपक्षः**— अग्नीषोमीयस्य क्रमे चतुर्दश्यां रशनाधर्मा दर्भमय्यादयः श्रूयन्ते न सवनीयस्य। तेन पशुधर्मवत् अग्नीषोमीययूपपरिव्याणार्था एव रशनाधर्माः। ननु श्रुत्या रशनामात्रार्थाः प्रतीयन्ते। श्रुतिश्च वाक्यात् बलीयसी। सत्यम्। किन्तु यूपस्वरूपसंबन्धः आनर्थक्यात् अपूर्वसाधनलक्षणया श्रुत्या विनियोगो वक्तव्यः। तेन यथा श्रुत्या प्रकरणसहायभूतया बर्हिर्धर्माः प्रकरणवर्तिबर्हिर्मात्रार्थाः, एवं श्रुतिसाधारण्येऽपि न पिण्डपितृयज्ञबर्हिरर्थाः तथा रशनाधर्मा अपि क्रमसहायया श्रुत्या क्रमोपस्थिताग्नीषोमीययूपपरिव्याणरशनार्था एवेति। **एवं प्राप्ते, अभिधीयते**। भवेदेवं यद्यग्नीषोमीयक्रमश्रुतस्य 'यूपं परिव्ययति' इति परिव्याणस्य व्रीहिप्रोक्षणवत् यूपद्वारेण प्रधानापूर्वनिर्वृत्तावुपयोगो भवेत्। किन्तु यूपस्य अलौकिकत्वेन अनिर्ज्ञातोपायपरिमाणस्य साधनापेक्षायां 'यूपं परिव्ययति' इति द्वितीयाश्रुत्या यूपनिर्वृत्त्युपयोगित्वेनैव परिव्याणस्य यूपाङ्गत्वं विज्ञायते। एवं सवनीयेऽपि 'उपनिष्क्रम्य यूपं परिव्ययति' इति द्वितीयाश्रुत्या यूपाङ्गतया परिव्याणं श्रूयमाणं साधारणस्य यूपस्याग्नीषोमीय एव निष्पन्नत्वात्। यद्यपि न यूपस्वरूपनिर्वृत्त्युपयुक्तम्, तथापि स्वरूपे कार्ये चोपयोग्यङ्गं भवतीति न्यायेन यूपकार्यपशुनियोजनोपयुक्तदार्ढ्यातिशयजननेनैवाङ्गं भवति। एतच्च यूपाङ्गं परिव्याणरशनात्वाविशेषात् उभयरशनासाधारणा एव भवन्ति। न चैवं सति अग्नीषोमीययूपस्यैव क्रमेण संनिधापितत्वात् क्रमसहायया श्रुत्या तत्परिव्याणरशनार्था एव विज्ञायन्ते। प्रकरणसहाययैव श्रुत्या बर्हिर्धर्मा दर्शपूर्णमासीयबर्हिरर्था इति वाच्यम्। यतो य एव ह्यग्नीषोमीयस्य यूपः, स एव सवनीयस्यापि। तेन अग्नीषोमीययूपपरिव्याणरशनासंबन्धित्वेन विधीयमाना धर्माः सवनीये यूपपरिव्याणरशनासंबन्धेनापि विहिता भवन्ति। पिण्डपितृयज्ञबर्हिषो न दर्शपूर्णमासबर्हिर्भ्योऽन्यत्वाद्युक्तम्। यत्त्वसाधारणा धर्मा इति तथापि सवनीयोत्पत्तिवाक्ये 'त्रिवृता यूपं परिवीय' इत्यनुवादो रशनाधर्मसाधारण्याद्विनाऽनुपपद्यमानो लिङ्गं भवति। तेन लिङ्गदर्शनादपि साधारणा रशनाधर्मा इति सिद्धम्।

**प्रयोजनम्**— पूर्वपक्षे सवनीयरशनाया दर्भमयादिनियमः। सिद्धान्तेऽग्नीषोमीय एव दर्भमयादिधर्मनियम इति। **सूत्रं** तु-रशनेति रशनाधर्मोपलक्षणार्थम्। तेनायमर्थः, यद्वत् ग्रहधर्माः सवनत्रयवर्तिग्रहसाधारणाः, तद्वत् रशनाधर्मा अपि साधारणाः। लिङ्गदर्शनं चोक्तमेवेति। **तौता.**

* 'रशना च लिङ्गदर्शनात्' इत्यत्र सिद्धान्तवादिना उभयोः परिव्याणयोः साधारणी रशना इति परिहारो वक्तव्यः। **वा.** ३।६।७।२२ पृ. १०४९. * 'रशना च लिङ्गदर्शनात्'। (अष्टादशात् सूत्रात् तुल्य-शब्दोऽनुवर्तते) रशना च अग्नीषोमीयसवनीययोः पश्वोः तुल्या। लिङ्गस्य दर्शनात्। एवमाह 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति' इति सवनीयपरिव्याणे रशनां दर्शयति। सा यदि साधारणी तत एतद्दर्शनमवकल्पते। **भा.** ३।६।१०।३१. * रशना तद्धर्माश्चाग्नीषोमीयपशुगताः, सर्वेषु पशुषु अतिदिश्यन्ते। ३।६।१०।३१. * रशना तद्धर्माश्च क्रमात् अग्नीषोमीयाङ्गम्। **इति प्राप्ते,** श्रुत्या यूपाङ्गं इति सिध्यति। 'उच्यते रशनाधर्माः दर्भमय्यादयः क्रमात्। अग्नीषोमीयशेषाः स्युः, श्रुत्या यूपाङ्गतां गताः॥ एतद्यूपपरिव्याणशेषो हि रशना श्रुता। सह धर्मैर्न सा याति क्रमेण पशुशेषताम्॥' श्रुतिः क्रमात् बलवती। **वा.** ३।३।७।१४ पृ. ८३६. * रशना तद्धर्माश्च यूपधर्मा एव, न पशुधर्माः, 'त्रिवृता यूपं



परिवीय' इति तृतीयाश्रुत्या वाक्येन च। **वि.** ३।६।१०. * रशना (द्वितीया) न पशुबन्धनार्था किंतु यूपसंस्कारार्था। ४।४।९।२३-२४. * रशना यूपपरिव्याणार्था, त्रिवृत् प्रपिष्टदर्भमयी। **भा.** ३।६।१०।३१. * **रशनाः**। अग्निष्ठरशने (द्वे) पक्षयूपरशनाश्च, अहर्गणे तन्त्रेण एव उपकुर्वन्ति। **संकर्ष.** १।४।२१. * रशनाः ऐकादशिनाः 'अग्निष्ठे परिवीय वासयति' इति रशनासंस्कारविशेषः। **संकर्ष.** १।४।१२. **मीको.** पृ. ७८ ''अग्निष्ठे रशना वासयति' इति रशनासंस्कारः'' इत्यत्र द्रष्टव्यम्। * **रशनया** यूपपरिव्याणं (यूपपरिवेष्टनं) 'परिवीरसि' इत्यादिमन्त्रेण अध्वर्युः करोति। **वि.** ३।८।११. * **रशनायाः** यूपाङ्गत्वं ज्योतिष्टोमे। ४।४।९।२२-२४. * रशनायाः यूपार्थायाः भवति समुच्चयः। **वा.** ४।४।९।२२ पृ. १२७९. * साग्निकक्रतौ एकयूपे एकादशपशूनां नियोजने यूपसंस्कारार्थाया **रशनायाः** भेदहेत्वभावात् द्वैरशन्यमेव। **भा.** ४।४।९। २२-२४.

## रशनाधिकरणम्।

अग्नीषोमीये पशौ रशनाधर्माः अग्नीषोमीय-सवनीयोभयसाधारणाः॥

**रशना च लिङ्गदर्शनात्। ३।६।१०।३१॥**

**भाष्यम्**— अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति। तत्र रशना श्रूयते रशनाधर्माश्च 'त्रिवृद् भवति, दर्भमयी भवति, प्रपिष्टानां कर्तव्या च' इति। तत्र संदेहः किमेते धर्माः अग्नीषोमीयरशनायाः सवनीयरशनायाश्च साधारणाः उत अग्नीषोमीयरशनाया एवेति। किं प्राप्तम्? प्रकरणात् अग्नीषोमीयरशनायाः इति। **एवं प्राप्ते, ब्रूमः**। उभयोः साधारणा इति। कुतः? लिङ्गदर्शनात्। लिङ्गं भवति। एवमाह 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति' इति सवनीयपरिव्याणे रशनां दर्शयति। सा यदि साधारणी, तत एतद्दर्शनमवकल्पते। यदि अग्नीषोमीयायाः, ततः अप्राकृतात् सवनीयपरिव्याणात् निवर्तेत। सवनीये च परिव्याणान्तरं अप्राकृतम्, यत्र त्रिवृत्त्वं दृश्यते। कथम्? 'स वै आश्विनं ग्रहं गृहीत्वा उपनिष्क्रम्य यूपं परिव्ययति' इति। तत्र यदि न साधारणी रशना, वाससा परिव्याणं प्राप्नोति। रशनां तु दर्शयति। तस्मात् साधारणी रशना। तत्साधारण्याच्च तद्धर्मा अपि साधारणाः। तदेतल्लिङ्गात् रशनासाधारण्यम्। कोऽत्र खलु न्यायः इति? उच्यते। प्रकरणादग्नीषोमीयस्य, वाक्यात् यूपमात्रस्येति।

**वा**— अग्नीषोमीये यूपपरिव्याणमाम्नाय पुनः सवनीये 'स आश्विनं ग्रहं गृहीत्वा' इत्याम्नातम्, तच्च निर्गुणपुनःश्रवणात् कर्मान्तरम्। उभयोश्च केनचित् द्रव्येण भवितव्यम्। यच्च परिव्याणद्रव्यम्, सा रशना लोके वेदे च प्रसिद्धा। तेन उभयत्र तादर्थ्यादेव रशना प्राप्ता। सा च किंमयी किंधर्मा च इत्यपेक्षिते अग्नीषोमीयस्य स्थानानुमिते प्रकरणे 'त्रिवृत् दर्भमयी प्रपिष्टानां कर्तव्या' इत्याम्नानात् विशेषः प्रतीयते, न सवनीयपरिव्याणस्य। तस्मात् इतरपशुधर्मवदेव रशनेतिकर्तव्यता अग्नीषोमीयार्थैवेति। **तथा प्राप्ते**, लिङ्गदर्शनात् साधारणी इत्याह। नहि सवनीयोत्पत्तिवाक्ये त्रिवृत्त्वानुवादो रशनाधर्मसाधारण्याद्विना उपपद्यते। का प्राप्तिरिति चेत्तामाह— वाक्यसंयोगात् रशनामात्रस्य, स्थानादग्नीषोमीयस्य। वाक्यं च तस्मात् बलवत्तरं इति। **ननु** 'न तद्वाक्यं हि तदर्थत्वात्' (३।७।१।८) इत्युत्तरं वक्ष्यति। तेन अग्नीषोमीयापूर्वप्रयुक्तत्वात् व्यवस्था स्यादिति। **नैतदेवम्**। न ह्येषा साक्षात् पशुसंबन्धिनी। किं तर्हि 'यूपाङ्गं वा तत्संस्कारात्' (४।४।९।२३) इति वक्ष्यति। तेन ईदृशमेकवाक्यत्वमेतत्। यूपपरिव्याणसाधारणसाधनस्य एते धर्मा इति। तथा च अग्नीषोमीयस्थं एतद् यूपपरिव्याणमेव च यूपैकत्वात् सवनीयस्थं यूपपरिव्याणम्। द्वयमपि च अपूर्वसाधनमिह प्रतीयते, न तु दर्शपूर्णमासबर्हिरिव पिण्डपितृयज्ञे भविष्यति। तस्मात् बर्हिर्धर्मवैषम्यात् साधारणा रशनाधर्माः।

**शा**— रशनाधर्माः क्रमात् अग्नीषोमीयार्थाः। **इति प्राप्ते, ब्रूमः**। (श्लोकौ) '**श्रुत्यैतद्यूपसंबन्धिपरिव्याणाङ्गतां गताः। नाग्नीषोमीयधर्माः स्युस्तावत्तैवार्थवत्त्वतः॥ सवनीयपरिव्याणमप्येतद् यूपसंगतम्। तस्मात्तत्रापि रशना सहधर्मैः प्रपत्स्यते॥**' इति।

**सोम**— पूर्ववत् क्रमबाधकस्य प्रकरणस्याभावात् रशनाधर्माणां अग्नीषोमीयार्थत्वं इत्युत्थितेः **संगतिः** । एकादशे ( ११।३।३।३–४ ) यूपस्य सौमिकपशुत्रये तन्त्रताया वक्ष्यमाणत्वात्, सवनीयपरिव्याणमपि अग्नीषोमीयसंनिधियूपसंगतं भवति । **सूत्रार्थस्तु**– सधर्मा रशना च परिव्याणद्वयस्यापि साधारणी । ‘ त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति ’ इति सवनीयोत्पत्तिवाक्ये त्रिवृत्त्वधर्मयुक्तरशनानुवादरूपलिङ्गदर्शनात् इति ।

**वि**— ‘ एकत्रैवोत सर्वत्र रशनावेष्टनादयः । , अग्नीषोमीय एवैते क्रमा, ल्लिङ्गादितोऽन्तिमः ॥ ’

**भाट्ट**— पशुनियोजनाङ्गत्वेन विनियुक्तस्य यूपस्य अनुष्ठानसादेश्यात् अग्नीषोमीयापूर्वसाधनीभूतपशुनियोजनार्थत्वम्, अतिदेशात्तु सवनीयानुबन्ध्यार्थत्वम् । एवं तदुत्पादकानां छेदनादिसंस्काराणामपि । यद्यपि च यूपस्वरूपे आनर्थक्याभावः, तथापि अनुवादस्य संनिहितगामित्वादेव अग्नीषोमीये निवेशः । विकृतौ तु अभिक्रमणवत् गमनम् । तेषां तु भेदेनानुष्ठाने प्राप्ते दीक्षाकालस्यापि उपदेशातिदेशाभ्यां विहितस्य एकत्वात् तन्त्रेणानुष्ठानात् एकस्या एव यूपव्यक्तेः सर्वोपकारकत्वं एकादशे ( ११।३।३ ) वक्ष्यते । ये च परिव्याणादयः उत्पन्नयूपसंस्कारकाः तेषामेव अनुष्ठानसादेश्यातिदेशाभ्यां प्रकृतिविकृत्यङ्गत्वम् । यूपस्वरूपस्य तद्–व्यतिरेकेणापि उत्पन्नत्वात् । यूपव्यक्तेरेकत्वात्तु गृह्यमाणविशेषत्वेऽपि आतिथ्याद्यर्थबर्हिःप्रोक्षणन्यायेन ( १२।१।१९ ) प्रसङ्गेन कार्यसिद्धेः नावृत्तिः । न चैवं तन्न्यायेनैव अग्निपात्रसंमार्गादेः दार्शपूर्णमासिकस्यापि विकृतौ प्रसङ्गापत्तिः । व्रीहिप्रोक्षणादिवत् यत्कार्यकूटोद्देशेन यद्व्यक्तेरुत्पत्तिः तत्कार्यकूटाङ्गभूततद्व्यक्तिगतसंस्कारजन्यादृष्टं प्रति तत्कार्यान्तिमकार्यत्वेन नाशकत्वस्य क्लृप्तत्वेन तदनापत्तेः । नहि अत्र अग्निपात्रादेः यत्कार्यकूटोद्देशेन उत्पत्तिः तत्कार्यकूटाङ्गं संस्कारः, संमार्गस्य ज्योतिष्टोमाद्यनङ्गत्वात् । अतः तद्व्यक्तिजन्यादृष्टत्वावच्छिन्नं प्रति तत्प्रतियोगीयफलीभूतान्तिमकार्यत्वेन नाशकता इति विशिष्यकार्यकारणभावेनैव तत्प्रतियोगिवृत्त्यन्तिमफलेन नाशः इति वैषम्यम् । एवं च परिव्याणरशनातद्धर्मादयः औपवसथ्येऽहनि अनुष्ठीयमाना अपि, उपदेशातिदेशाभ्यां त्रितयोपकारकाः । सवनीये च ‘आश्विनं ग्रहं गृहीत्वा उपनिष्क्रम्य यूपं परिव्ययति ’ इति विधिना अभ्यासात् परिव्याणान्तरं विहितम्, आश्विनोत्तरकालस्य पाठात्, उपनिष्क्रमणस्य चार्थादेव प्राप्तेः । तच्च प्रकरणात् सवनीयस्यैवाङ्गम् । तदपि च न प्राकृतकार्यापन्नम्, प्राकाशदानवत् विधिवैयर्थ्यापत्तेः । अत एव तत्कार्यमदृष्टं यूपदार्ढ्यं वा इत्यन्यदेतत् । तदिह रशना तद्धर्माश्च त्रिवृत्त्वदर्भमयीत्वादयो नाप्राकृतकार्यापन्ने परिव्याणान्तरे यूपावटबर्हिरास्तरणे इव भवन्ति । **इति प्राप्ते,** उत्पत्तिवाक्ये त्रिवृत्त्वानुवादरूपतात्पर्यग्राहकवशात् लाघवाच्च प्रकृतापूर्वसाधनीभूतयूपपरिव्याणत्वमेव उद्देश्यतावच्छेदकं न तु विजातीययूपपरिव्याणत्वम् । तथात्वे उत्पत्तिवाक्ये त्रिवृत्त्वस्याप्राप्तत्वेन विधाने गौरवापत्तेः । अतः उद्देश्यतावच्छेदकरूपसत्त्वात् तत्रापि रशनातद्धर्माः । व्याख्यातॄणां तु संगतिलोमेन यूपतच्छेदनपरिव्याणरशनातद्धर्माणां सर्वेषां उपदेशेनैव त्रितयसाधारण्यं अङ्गीकृत्य सवनीयपरिव्याणान्तरे उपदेशेनैव तत्प्राप्तिं व्याचक्षाणानां आशयं न विद्मः ।

**मण्डन**— ‘ पशुत्रयार्था रशना सधर्मा । ’

**शंकर**— ‘ रशनायूपयोस्तथा । ’ सर्वार्थत्वम् ।

**☗ रशनाधिकरणम् । रशना यूपाङ्गम् ॥**

**पश्वङ्गं रशना स्यात्, तदागमे विधानात् । ४।४।९।२२ ॥**

**भाष्यम्**— ज्योतिष्टोमे श्रूयते ‘ आश्विनं ग्रहं गृहीत्वा, त्रिवृता यूपं परिवीय, आग्नेयं सवनीयं पशुमुपाकरोति ’ इति । तत्र संशयः किं पश्वङ्गं रशना, उत यूपाङ्गमिति । किं प्राप्तम् ? पश्वङ्गम् । कुतः ? तदागमे विधानात् । पश्वागमे हि विधीयते । पशुना अस्याः संबन्धः उत्पत्तिवाक्ये श्रूयते, ‘ परिव्याणं कृत्वोपाकरोति पशुम्, नान्यथा ’ इति । एवं श्रुतिर्भवति । कालवचने लक्षणा स्यात् । परिव्याणेन कालो लक्ष्येतेति ।

**टुप्**— ‘ त्रिवृता यूपं परिवीय ’ इत्यनेन परिव्याणं विधीयते, वाक्यान्तरेण प्राप्तत्वात् । परिव्याणं आग्नेयस्य काललक्षणार्थमुच्चार्यते इति चेत् । तन्न । लक्षणाभयादेव । किं तर्हि ? आग्नेयरशनयोः संबन्धोऽनेन क्रियते, तत्र च प्रयोजनवत्त्वात् । आग्नेयस्य रशना तदर्था । तस्य हि सा अनपक्रमणद्वारेण उपकरोति । ननु पशोः अन्या अनपक्रमणार्थे विद्यते एव । उच्यते । यथा यूपार्थाया रशनाया भवति समुच्चयः, एवमिहापीति । ननु द्वितीयानिर्दिष्टत्वात् यूपस्य रशना तदर्थेति । उच्यते । इतरत्रापि आग्नेयमिति द्वितीया विद्यते एव । अथवा परिव्याणस्य यूपमिति द्वितीया तादर्थ्यमाह, न रशनायाः । आह । परिव्याणार्थत्वात् रशनाऽपि यूपार्था । उच्यते । रशनायाः पश्वनपक्रमणेन प्रयोजनवत्त्वात् परिव्याणं भाव्यमानमपि तदर्थम्, सामर्थ्यं परिव्याणेन जन्यते रशनायाः । ननु परिव्याणमपि यूपतादर्थ्येन अर्थवत् रशना तदर्थेति । उच्यते । संप्रधार्यमेतत् । यदि वा परिव्याणार्था रशना यूपार्था, अथवा विपरीतं तादर्थ्यम् । परिव्याणं पश्वर्थम्, यूपश्च परिव्याणस्य आधारतां प्रतिपद्यमानः पश्वर्थः । तत्र किं युक्तमिति । रशना पश्वनपक्रमणेन प्रयोजनवती । परिव्याणमपि तदर्थम् । यूपोऽपि आधारतां प्रतिपद्यमानो रशनार्थतां प्रतिपत्स्यते । असौ यूपे या द्वितीया, सा सप्तम्यर्थे लक्षयिष्यति । आधारतां च प्रतिपद्यमानस्य तादर्थ्यं प्रसङ्गाद्भविष्यति ।

**यूपाङ्गं वा, तत्संस्कारात् । २३ ॥**

**भाष्यम्**— ज्योतिष्टोमे प्रत्यक्षो हि यूपस्य संस्कारः । रशना हि यां च यावतीं च द्रढिम्नो मात्रां यूपस्य संजनयति, द्रढिम्ना च प्रयोजनं यूपस्य । तस्माद्यूपस्यैव द्रढिम्ने रशना स्यात् । द्वितीया च विभक्तिः तत्प्राधान्ये एव भवति । रशनायां च तृतीया । तृतीया च गुणत्वे तस्याः । तस्माद्यूपाङ्गम् । यत्तु तदागमे विधानादित्युक्तम्, तत्परिहर्तव्यम् । उच्यते । तदागमे विधानं वाक्यात्, द्वितीया च विभक्तिः श्रुतिः प्रत्यक्षं च, वाक्यं बाधेयातामिति । यत्तु लक्षणेति, श्रुत्यसंभवे लक्षणाऽपि न्याय्यैव ।

**टुप्**— ‘ त्रिवृता यूपं परिवीय ’ इति ईप्सिततमत्वात् यूपस्य, तदर्थैव रशना । न तु परिव्याणस्य ( यूपार्थत्वात् ) यूपपरा द्वितीया ( विभक्तिः, परिव्याणस्य तादर्थ्यं प्रतिपादयति, न रशनायाः ) । तच्च ( परिव्याणं अर्थप्राप्तं ) अनूद्यते । ( पशुमुपाकरोति इत्यत्र ) पशौ अपि द्वितीया उपाकरणस्य ( पश्वर्थत्वं प्रतिपादयति ) न रशनायाः । न च अर्थाक्षिप्तोपाकरणेन रशना ( तस्य साधनत्वेन प्राप्नोति ) । परिव्याणेन तु रशना आक्षिप्यते । तत्र यदि वा अनेन विहितं तत्रानूद्यते, तेन वा ( विहितं ) अत्र ( अनूद्यते इत्यत्र- ) नाभिनिवेशः । सर्वथा यूपार्था रशना । एकयूपे एकादश पशवो नियोज्याः इति (तत्र) प्रतिपशु रशना कार्या यथा पूर्वपक्षः । सिद्धान्ते द्वैरशन्यमेव इत्येतत् प्रयोजनं ( भाष्योक्तं एकदेशिनः अन्यथा पूर्वपक्षं मन्यमानाः ) नेच्छन्ति । ( कथं ? ) पश्वर्थाऽपि ( सती रशना ) असंनिपत्योपकारित्वात् ( संनिपत्योप० ? ) ( साधारणे ) यूपे क्रियमाणा ( सर्वेषां पशूनां ) एकैव उपकरिष्यति । यथा प्रयाजाः सकृत् कृताः ( सर्वेषामाग्नेयादीनामुपकुर्वन्ति ) । अतः पक्षद्वयेऽपि द्वैरशन्यम् ।

( एवं हि ते वर्णयन्ति । पूर्वपक्षेऽपि न परिव्याणं रशनार्थं किंतु रशनैव परिव्याणार्था । परिव्याणं तु न यूपाङ्गं किंतु ( परिवीय इति– ) क्त्वाप्रत्ययेन पशूपाकरणार्थम्, तद्द्वारेण च पश्वर्थम् । अतो रशनाऽपि तद्द्वारेण यूपे क्रियमाणाऽपि पश्वर्था इति **पूर्वः पक्षः** । **सिद्धान्तस्तु,** श्रुत्या यूपार्थमेव परिव्याणम्, न वाक्येन उपाकरणाङ्गम् । इति ) ।

( प्रयोजननिराकरणं समाधत्ते– ) एतदप्ययुक्तम् । पश्वर्थाऽपि सती ( रशना ) अनपक्रमणं कुर्वती पशोः संनिपत्योपकरोति । यथा यूपे द्वितीया रशना समुच्चीयते ( सिद्धान्ते ), एवं पशावपि समुच्चेष्यते ( पूर्वपक्षे द्वाभ्यां रशनाभ्यां पशुर्बध्यते ) । तस्मात् युक्तमेवेदं प्रयोजनम् ।

**अर्थवादश्च तदर्थवत् । २४ ॥**

**भाष्यम्**— एवं च मन्त्रार्थवादोऽर्थवान् भविष्यति । ‘ युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः । तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥ ’ इति । तस्माद्यूपाङ्गं रशनेति । किं प्रयोजनं चिन्तायाः । अग्नौ श्रूयते ‘ एकयूपे एकादश पशवो नियोज्याः ’ इति । प्रतिपशु रशना कार्या यदि पूर्वः

पक्षः । सिद्धान्ते द्वैरशन्यमेव । श्लोकमप्युदाहरन्ति **'पश्वङ्गं रशना चेद्यद्येकस्मिन् बहून् नियुञ्जीत । प्रतिपशु रशना कार्या यूपे चेद् द्वैरशन्यं स्यात् ॥'** इति ।

**शा-- 'यूपार्था सत्यदृष्टार्था, दृष्टार्था पशुबन्धनी । अनपक्रमणात्, तेन पश्वङ्गं रशना भवेत् ॥'** एवं प्राते, ब्रूमः । **'यद्यदृष्टार्थता यूपे स्यादेवं क्लिष्टकल्पना । यूपार्था सत्यपि ( सती अपि ) त्वेषा दृष्टार्था दार्ढ्यजन्मनः ॥ परिव्याणं हि यूपार्थं द्वितीयातोऽवगम्यते । रशना च परिव्याणशेषभूता तृतीयया ॥ सर्वं तद् विपरीतं स्यात् पश्वर्था रशना यदि । यूपार्था रशना तस्माद् भवेत् न पशुबन्धनी ॥'**

**सोम--** पितृयज्ञस्य दर्शाङ्गत्वे कालवाचकशब्दबाधवत्, इह कस्यचित् बाधाभावात् पश्वङ्गं रशना इति प्रत्यवस्थानात् **संगतिः । सूत्रार्थस्तु--**पश्वङ्गं रशना स्यात् पश्वागमे विधानात्, वाक्ये पशुसंबन्धमागमस्य विधानात् इति यावत् इति ।

**वि--** 'रज्जुर्द्वितीया पश्वर्था यूपार्था वा, ऽन्वयात् पशौ । पश्वर्था, त्रिवृता यूपं परिवीयेति यूपगा ॥'

**भाट्ट--** सवनीयस्य संनिधौ 'आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययति' इति श्रुतेन वचनेन पशुत्रयसाधारणयूपपरिव्याणापेक्षया, यूपपरिव्याणान्तरं सवनीयाङ्गतया प्रकरणान्तरन्यायेन ( २।३।११ ) अभ्यासाद्वा यूपदार्ढ्यप्रयोजनकं विधीयते । आश्विनोत्तरकालता उपनिष्क्रमणं च पाठादर्थाच्च प्राप्तमनूद्यते इत्युक्तमेव । अतश्च 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति' इत्युत्पत्तिवाक्ये पुनः श्रुतं परिव्याणं न यूपसंस्कारार्थम्, वैयर्थ्यापत्तेः । किंतु यूपमिति द्वितीया सप्तम्यर्थे । 'परिवीय' इत्यस्य कर्माकाङ्क्षायां 'पशुं' इत्यस्यानुषङ्गः, तथा च त्रिवृत्करणकयूपाधिकरणकपशुसंस्कारकपरिव्याणोत्तरकालविशिष्टयागविधानात् पश्वर्थमेव परिव्याणं पश्वनपक्रमणार्थम् । इति प्राप्ते, द्वितीयया परिव्याणस्य दृष्टविधयैव यूपार्थत्वे संभवति, लक्षणानुषङ्गयोः प्रमाणाभावः । न च वैयर्थ्यम्, रशनाधर्माणां दर्भमयीत्वादीनां एतत्परिव्याणसाधारण्यसिद्ध्यर्थं अनुवादत्वस्य तृतीये ( ३।६।१० ) साधितत्वात् । अन्यथा रशनाधर्माणामौपवसथ्येऽहनि अनुष्ठीयमानयूपपरिव्याणाङ्गत्वस्यैव अनुष्ठानसादेश्यादापत्तौ अप्राकृतकार्यकाय तत्परिव्याणार्थत्वासिद्धेः । सति त्वस्मिन् त्रिवृत्करणकयूपपरिव्याणानुवादे तद्बलेनैव प्रकृतयागीययूपव्यक्तिसंबन्धिपरिव्याणमात्रस्यैव उद्देश्यत्वावगमात् साधारण्यसिद्धिः । अस्तु वा निर्वपतिवदेव प्रकृतिलिङ्गसादृश्येन प्राकृतपरिव्याणातिदेशसिद्ध्यर्थमस्मिन् परिव्याणे त्रिवृत्त्वानुवादः । सर्वथा न परिव्याणान्तरं पशुसंस्कारार्थम् । **प्रयोजनं** यूपे द्वैरशन्यसत्त्वेऽपि पशावपि द्वैरशन्यं पूर्वपक्षे प्रकृतौ विकृतौ च । सिद्धान्ते नेति ।

**मण्डन--** 'यूपगुणो रशना त्रिवृदिष्टा ।'

**शंकर--** 'यूपाङ्गं रशना परा ।' परा द्वितीया ।

* **रशनाधिकरणन्यायः**, 'वाक्यं प्रकरणात् बलीयः' इति । ३।६।१०।३१.

* **रशनाऽऽदाने** करणमन्त्रः-- 'इमामगृभ्णन् रशनामृतस्य' इति । अग्निचयने रथे योजनार्थं अश्वरशनाया आदानं अत्र रशनाऽऽदानम् ) । **वि.** १२।३।१०.

* **रशनाद्वयं** ऐकादशिनेषु पशुषु । 'द्वे द्वे रशने आदाय, द्वाभ्यां द्वाभ्यां रशनाभ्यामेकैकं यूपं परिव्ययति' इति रशनाद्वयं सुत्याकालीनत्वं च इति लिङ्गद्वयेन सवनीयपशोर्विध्यन्तः ऐकादशिनेष्वतिदिश्यते । **वि.** ८।१।७, * रशनाद्वयं सवनीयपशावपि ज्योतिष्टोमे । रशनाभ्यां च परिव्याणं पृथक् पृथक् । ८।४।९. * **रशनाद्वयेन** युगपत्परिव्याणं यूपैकादशिन्यामपि । **संकर्ष.** १।४।१४. **मीको.** पृ. ३२६५ 'यूपैकादशिन्यामपि रशनाद्वयेन युगपत् परिव्याणम्' इत्यत्र द्रष्टव्यम् ।

* **रशनाधर्माः** 'त्रिवृद्भवति, दर्भमयी भवति, प्रपिष्टानां कर्तव्या' इति । **भा.** ३।६।१०।३१, * रशनाधर्माः सर्वपश्वर्थाः, न तु अग्नीषोमीयार्था एव ज्योतिष्टोमे अग्नीषोमीये पशौ । ३।६।१०।३१. * **रशनाधर्माणां** दर्भमयीत्वादीनां एतत्परिव्याणसाधारण्यसिद्ध्यर्थमनुवादत्वं तृतीये साधितम् । **भाट्ट.** ३।६।१०.



* **रशनापरिव्याणं** विशाखे यूपे शाखयोरेव । **संकर्ष.** १।४।६.

* **रश्मितृणादिन्यायः** । यथाऽऽदित्यरश्मयः स्वभावतस्तृणादेर्भासका अपि, सूर्यकान्तमण्यारूढास्तदाहका भवन्ति, तथा प्रकृतेऽपि । **साहस्री.** ४०२. * रश्मितृणादिन्यायः । रश्मितृणयोः स्वभावतो विरोधाभावेऽपि सूर्यकान्तस्थरश्मिभिः तृणं दाह्यते । इति औपाधिको विरोधः । **के.**

* **रसः** मधुरः स्निग्धः शीतो गुरुश्च इति । अत्र मधुररसस्य गुणत्वात् गुणान्तरैः शीतादिभिः संबन्धो नावकल्पते इति एतत्प्रतिपादितं द्रव्यं संबध्यते । न च कथंचिदपि रसशब्दस्य द्रव्यवचनत्वम् । **वा.** ३।४।४।१३ पृ. ९४० .

* **रसभोजनं** ( मध्वशनं ) गवामयनादौ पृष्ठ्यषडहावृत्तौ सर्वषडहान्ते सकृदेव, न तु प्रतिषडहान्तम् । १०।६।१०।२९-३०. **मीको.** पृ. १५५४ 'गवामयनादौ पृष्ठ्यषडहावृत्तौ०' इत्यत्र द्रष्टव्यम् । * **रसभोजनस्य** ( मध्वशनादेः ) गवामयने विजातीयषडहव्यवधानेन पृष्ठ्यषडहावृत्तौ आवृत्तिः कर्तव्या । १०।६।११।३१. **मीको.** पृ. १५५३ 'गवामयने विजातीयषडहव्यवधानेन०' इत्यत्र द्रष्टव्यम् ।

* '**रसवीर्यविपाकानां** भेदात् वैद्यैर्यवादयः । निर्धार्याः स्वार्थतत्त्वेन, धर्मसिद्ध्यैव याज्ञिकैः ॥ तस्माद् ये याज्ञिकैर्येषां वैद्यैर्वाऽर्था निरूपिताः । तेषां त एव शब्दानां अर्था मुख्या हि नेतरे ॥' **वा.** १।३।४।९ पृ. २१७.

* **रसनं** इन्द्रियं रसमात्राभिव्यञ्जकतया रसवत्त्वानुमानेन अप्-प्रकृतिकम् । **मणि.** पृ. १९.

* **रसायनं** नायुर्हेतुः, किंतु आरोग्यपुष्ट्यादिहेतुः । रसायनं दीर्घायुर्हेतुरिति केचित् । **वि.** ६।७।१३. * न **रसायनानां** एतावत् सामर्थ्यं दृष्टम्, येन सहस्रसंवत्सरं जीवेयुः । एतानि हि अग्नेर्वर्धकानि, वलीपलितस्य नाशकानि स्वरवर्णप्रसादकानि, मेधाजननानि । नैतावदायुषो दातॄणि दृश्यन्ते । **भा.** ६।७।१३।३३.

* **रसायनादेः** वैद्यके अधिकायुर्हेतुत्वमङ्गीक्रियते । इति चेत्, श्रुतिविरोधात् तत्कीर्तनमर्थवादमात्रम् । **सोम.** ६।७।१३.

* **रसायनवैगुण्येन** इन्द्रियहीनत्वाख्यो दोषः संभवति । **सु.** पृ. १५०७.

* **रसालाशब्दः** रूढोऽपि न जातिवचनः । किंतु 'सिता-चतुर्जातमधूषणाढ्यं दधिप्रघृष्टं सरसं रसाला' इति उपाधिपुरस्कारेण द्रव्यवचनः । **बाल.** पृ. १७२.

* **राक्षोघ्नन्यायः** । प्रयोगान्तरवैषम्यात् सौर्यादौ सा ( आरम्भणीया ) कर्तव्या । न यावज्जीवकालः प्रकृत्यङ्गम् कर्तृधर्मत्वेन द्वितीये ( २।४।१ ) निर्णीतत्वात् । अतो न उक्तराक्षोघ्नन्यायः अत्र प्रसरति । **वि.** १२।२।२६.

* **राक्षोघ्नीष्टिः** निशियज्ञः । 'अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेत्, यो रक्षोभ्यो बिभीयात्' । इति विधाय 'अमावास्यायां निशि यजेत' इत्याम्नातम् । अस्याः दर्शतन्त्रमध्यपातित्वात् व्रतोपायन- अग्निप्रणयन- वेद्युद्धननाद्यङ्गजाते प्रसङ्गसिद्धिः । यानि तु इध्माबर्हिःप्रभृतीनि अशक्यप्रसङ्गानि तानि तु आवर्तन्ते एव । **वि.** १२।२।५. * राक्षोघ्नीष्टिः मथ्यमानाग्न्यनुत्पत्तिनिमित्तवती । **सु.** पृ. ८९५.

* **रागः** प्रीतिः । **सु.** पृ. १३५. * नहीच्छामात्रं **रागः**, अपितु चित्तमलम्, आत्मनो दर्शनावरणम्, अभूतगुणाभिनन्दनं रागमाचक्षते । **कणिका.** पृ. ११३. * **रागाः** मुद्गाढक्यादिरसाः क्वाथ्यगृहीताः शर्करादियुक्ताः । ( हेमाद्रिः ) । **बाल.** पृ. १६८.

* **रागाक्षिप्तप्रवृत्तित्वात्** पुरुषाणां फलत एव प्रवृत्तिसिद्धिः । **ऋजु.** पृ. २९.

* '**रागद्वेषमदोन्मादप्रमादालस्यलुब्धताः** । क्व वा नोत्प्रेक्षितुं शक्याः स्मृत्यप्रामाण्यहेतवः' ॥ **वा.** १।३।२।३ पृ. १७१ .

* **रागप्राप्तं** न विधीयते, वाग्विसर्गवत् । **वि.** ११।३।७ .

* **रागप्राप्तपुरुषार्थमात्रविषयकः** क्रत्वर्थः श्रौतो निषेधो यथा- 'रुच्युपायमांसभक्षादिपुरुषार्थमपि श्रितः ।

प्रतिषेधः क्तोरङ्गमिष्टः प्रकरणाश्रयात् ॥ ' इति व्याकरणाधिकरणे । बाल. पृ. ३२, * रागप्राप्तपुरुषार्थमात्रविषयकः पुरुषार्थः श्रौतनिषेधो यथा ' न हिंस्यात् सर्वा भूतानि ' । यथा वा ' न कलञ्जं भक्षयेत् ', ' तस्माद्यूपो नोपस्पृश्यः ' इति । पृ. ३३, * रागप्राप्तपुरुषार्थमात्रविषयकः पुरुषार्थः स्मृतिकल्प्यः प्रतिषेधो यथा– सुरानिषेधः मानवः ' सुरा वै मलमन्नानां पाप्मा च मलमुच्यते । तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥ ' पृ. ३१.

* **रागसिद्धत्वात्** स्वर्गादिफलं न विधेयम् । **वि.** ४।१।२ वर्णकं २.

* **राजा** कः ? राज्यं कुर्वन्तः सर्वत्रैवर्णिका राजानः । तच्च राज्यं जनपदपरिपालनं नाम सर्वलोकप्रसिद्धम् ( पूर्वपक्षः ) । **वा.** २।३।२।३ पृ. ५७८. * राजा कः ? राज्यं यस्य कर्म स राजा । किं पुनः राजकर्म ( राज्यं ) । जनपदपुरपरिरक्षणे ततश्च कण्टकोद्धरणे राज्यशब्दं आर्यावर्तनिवासिनः प्रयुञ्जते । ननु जनपदपुरपरिरक्षणवृत्तिं अनुपजीवत्यपि क्षत्रिये राजशब्दं आन्ध्राः ( द्रविडाः ) प्रयुञ्जते प्रयोक्तारः । ( सत्यं तथापि ) प्रयुञ्जते च तद्युक्ते ( राज्ययुक्ते ) राजशब्दं अक्षत्रियेऽपि । इति **पूर्वपक्षे** । जातिनिमित्तो राजशब्दः । यदि तावज्जातिशब्दो राजेति ततः तत्कर्मत्वात् जनपदपरिपालने राज्यशब्दो भविष्यति, तेन आर्यावर्तनिवासिनां प्रयोगो न विरोत्स्यते । अथ यदि राज्यशब्दः परिपालने नित्यसंबद्धो भविष्यति ततस्तस्य कर्ता इति राजशब्दः क्षत्रियजातौ तन्निमित्तो भविष्यति । तत्र आन्ध्राणां प्रयोगो न विरोत्स्यते । न राज्यस्य कर्ता राजा । ननु यो यो जनपदपुरपरिरक्षणं करोति तं तु लोको राजशब्देनाभिवदति । उच्यते । योगात् लोकः प्रयुङ्क्ते । परिपालने राज्यशब्दः प्रसिद्धः इति तद्योगादपि ब्राह्मणवैश्ययोः राजशब्दः प्रयुज्यते ।

को नु खलु निर्णयः ? राजजातीयस्य कर्म इत्यतः परिपालनं राज्यशब्देनोच्यते इति । तस्माद्राज्ञः कर्म राज्यम्, न राज्यस्य कर्ता राजा इति । **भा.** २।३।२।३, * राजा पत्तिगणकः इति । पत्तिगणको राज्ञः कार्यं साधयति । सः, राजशब्दे उच्चरिते प्रतीयते । १।४।१२।२३–१ पृ. ३६०. * राजा प्रजा रक्षेत् ' चाटतस्करदुर्वृत्तमहासाहसिकादिभिः । पीड्यमानाः प्रजा रक्षेत् कायस्थैश्च विशेषतः ॥' **सु.** पृ. ९०४. * राजा प्रमगन्दो नाम । **भा.** १।२।४।३१–९, * ' राजा राजसूयेन स्वाराज्यकामो यजेत ' इत्यस्य प्रकरणे अवेष्टौ ' यदि ब्राह्मणः, यदि राजन्यः, यदि वैश्यः ' इति अत्र ब्राह्मणादीनां इदं कर्मान्तरं विधीयते अवेष्टिर्नाम, न तु ब्राह्मणादीनां निमित्तार्थेन श्रवणम्, कर्मान्तरमिदं न गुणविधिः । राजशब्दः क्षत्रियस्य एव वाचकः न तु ब्राह्मणादीनां राज्यकर्तॄणामपि । २।३।२।३, * राजा सार्वभौमः । य इदानीं सार्वभौमः स तर्हि ( पृथिवीगोलकं ) दास्यति । सोऽपि नेति **ब्रूमः** । कुतः ? यावता भूमिभागेन ( भोगेन ) सार्वभौमो भूमेरीष्टे, तावताऽन्योऽपि । न तत्र कश्चिद्विशेषः । सार्वभौमस्य त्वेतदधिकं यदसौ पृथिव्यां संभूतानां व्रीह्यादीनां रक्षणेन निर्विष्टस्य कस्यचिद्भागस्येष्टे, न भूमेः । तन्निविष्टाश्च ये मनुष्याः तैरन्यत् सर्वप्राणिनां धारणचंक्रमणादि यत् भूमिकृतं तत्रेशित्वं प्रति न कश्चिद् विशेषः । तस्मात् न भूमिः देया । ६।७।२।३. * प्रथमं जातिनिमित्तो **राजा,** ततः तत्संबन्धात् पालनं राज्यम्, तत्संबन्धादपि ब्राह्मणादिषु स्थानापत्त्या वा अनुमानेन वा राजशब्दः । **वा.** ३।५।८।२६ पृ. १००३, * **'राजानं** अभिषेचयेत् ' । न च भाविसंज्ञाविज्ञानं ( राजा इति ) भूतत्वेनैव उपपद्यमानत्वात् । अगत्या हि सा अन्यत्र आश्रीयते । २।३।२।३ पृ. ५८२. * **राज्ञः** ( क्षत्रियस्य ) गृहे ऐन्द्र एकादशकपालश्चरुः । राजसूये । **भा.** ११।२।३।१३. * राज्ञः दुष्टशिक्षा–शिष्टपरिपालनाभ्यामीशितृत्वं स्मृत्यभिप्रेतम् । **वि.** ६।७।२, * राज्ञः महाभूमिः गोपथराजमार्गजलाशयादिसहिता न स्वम्, सर्वप्राणिसाधारणं हि तत् । ६।७।२. * **एकस्य राज्ञः** एक एव पुरोहितः उपादेयत्वेन श्रूयते, ' पुरोहितं करोति ' इति एकत्वं विवक्षितम् । ( अतः ) न द्वौ । **भा.**६।६।२।१३. * **राज्ञां** अर्थदण्डो नैमित्तिकी परिपालनवृत्तिः । **वा.** ३।१।६।१२ पृ. ६९७, * ' अपराधे निमित्ते हि शतसंख्याविशेषिता । तदनुष्ठात्रपादाना **राज्ञां** वृत्तिर्विधीयते ॥ ' ३।१।६।१२ पृ. ६९७.



**राजानुसृतविवाहप्रवृत्तभृत्यन्यायः** । यथा भृत्यस्य विवाहप्रवृत्तौ हि राज्ञाऽप्यनुगम्यते इति प्रसिद्धम् । **साहस्री.** ३३७.

* **राजोपेताः** ब्राह्मणाः ये क्षत्रियवृत्तिमाश्रिताः । तेषामपि स्वजातीयमेव आर्षेयवरणम् । **संकर्ष.** ३।४।७, * **राजोपेतानां** ब्राह्मणोपेतानां वा प्रच्युतस्वकर्मणामपि न जातिनाशः । ३।४।७.

* **राजैकपुत्रक्रीडा** । यदि च समुदायत्वमापन्नौ, ततः पुनः प्रत्येकं संबन्धः इति( चेत् तदा )राजैकपुत्रक्रीडा आपद्यते । (एकपुत्रस्य अत्यन्तं प्रियत्वेन पितृभ्यामनिवारणात्, राजपुत्रत्वेन चान्यैरपि अनिवारणात् अत्यन्तान्याय्या यथा, तथेयमपि । टिप्पणी) । **भा.** २।१।१६।४८ पृ. ४५५, **सु.** ६९३.

* **राजकर्म** किं पुनः ? जनपदपुररक्षणे ततश्चोद्धरणे( कण्टकानां )राज्यशब्दं आर्यावर्तवासिनः प्रयुञ्जते । **भा.** २।३।२।३.

* **राजकुले** सेवा क्रियते, कर्षणं हि भूमौ । **वा.** ३।४।९।२६.

* **राजजातिविशिष्टः** कर्ता राजसूयसाधनं विधीयते, राजसूयो वा तदर्थत्वेन । राजजातिर्न साध्या नापि साधनम् । एवं न स्वर्गः । तस्मात् स्वर्गेच्छाविशिष्टः कर्ता कर्मसंबन्धी । स्वर्गशब्दः पुरुषविशेषणत्वेनोपक्षीणत्वात् नान्येन संबन्धमर्हति, यथा राजजाति० । **वा.** ६।१।१।१ पृ. १३४५, * **राजजातिविशिष्टेन** यथा राजसूयः कार्यः न अतद्विशिष्टेन, तथा स्वर्गेच्छाविशिष्टेन यागः कार्यः, नातद्विशिष्टेन । ६।१।१।१ पृ. १३४७.

* **राजपुत्रापराधवत्** । **श्लोवा.** । राजपुत्रस्यापराधे दण्डोऽल्पो भवति । **रत्नाकरः** संबन्धाक्षेपे ९६.

**राजपुत्रव्याधन्यायः** । यथा कश्चिद्राजपुत्रः स्वमातृसपत्न्या कयाचित्कचिन्निक्षितो व्याधवंशं प्राप्तः । तेन च पुत्रत्वेन पालितः सः, व्याधमेवात्मानं मन्यते स्म, पश्चात्कथंचिद्राजपुत्रनिश्चयवतां मन्त्रिणामुपदेशाद्राजानमात्मानं मत्वा पैतृकसिंहासने प्रतिष्ठां प्रापेति । **साहस्री.** ३५७.

**राजपुरप्रवेशन्यायः** । यथाऽत्र क्रमेणैव बहूनां पुरुषाणां प्रवेशो भवति न युगपत् । तथा– यथा विशृङ्खलतया राजपुरप्रवेशे राजपुररक्षकैस्ताडनादिकं क्रियते, इति भिया श्रेणीभूततया तत्पुरप्रवेशः, एवं सुशृङ्खलतया यत्र कार्यकारणस्य विवक्षा तत्रास्य प्रवृत्तिः । **साहस्री.** १८५.

* **राजपुरप्रवेशन्यायेन** शाब्दबोधे पदार्थानामन्वयबोधः । यत्र खण्डवाक्यार्थबोधोत्तरं महावाक्यार्थबोधः, यत्र वा ' दण्डी, कुण्डली, छत्री, चैत्रः ' इत्यादौ विशिष्टस्य वैशिष्ट्यबोधे तात्पर्यं तत्र । **मणि.** पृ. ७०.

* **राजपुरुषः** इति तत्पुरुषे पूर्वपदे लक्षणा । इति मणिः । राजपदेन राजसंबन्धी लक्ष्यते इति **पक्षधरः** । राजपदेन संबन्ध एव लक्ष्यते इति **अन्ये** । **मणि.** पृ. १५१. * राजपुरुषः । राजपुरुष इत्यादिष्विव कदाचित् अङ्गाङ्गिभावो विपरीतः स्यात् । तथाहि ' विशेषणतया राजा, पुरुषस्योपसर्जनम् । अर्थयोः शेषशेषित्वे, तस्यैवेष्टा प्रधानता ॥ ' ...... राजपुरुषादिष्वपि शब्दार्थवृत्त्या राजादीनां गुणत्वमेव प्राप्तम्, प्रमाणान्तरवशेन तु विपरीतं कल्प्यते । तच्च सक्त्वधिकरणे दर्शितम् ( २।१।४।१२ ) न चैतावता शब्दार्थत्वं भवतीत्युक्तमेव । यश्च वस्तुतोऽपि तत्र राज्ञो गुणत्वांशः, तमेवोपादाय शब्दः प्रवर्तते । अस्ति चासौ । कथम् ? ' बिभ्राणः पुरुषं राजा गुणत्वं तावदृच्छति । स्वामित्वं भजते पश्चाद् विवक्षा तु यथारुचि ॥ ' तत्र यदा राजविशिष्टः पुरुषो विवक्षितः तदा शब्दार्थानुगुण्यात् एकान्तेन वस्तुगतमपि उपकारकत्वं विवक्षितव्यम् । यदा पुनः उपकार्यत्वं विवक्ष्यते तदा तस्य विशेष्यलक्षणापत्तेः राजाज्ञाकरत्वेन उपकारकभूताः पुरुषाः विशेषणं भवन्ति इति पुरुषराजशब्द एव प्रयोक्तव्यः । प्रयोगद्वयस्य विद्यमानस्य तावत् व्यवस्थाहेतौ अर्थद्वये संभवति किमिति वक्ष्यमाणक्रियोपयोगापेक्षया विवक्षाभेदमात्रेण क्लिष्टां व्यवस्थामाश्रयिष्यामहे । तेन भूतं निमित्तमालोच्य, शब्दे

प्रयुज्यमाने राजपुरुष इत्यत्र उपकारांशकृतं शेषत्वमेव विवक्षितमिति गम्यते। यत्रापि गोगर्भदासादिस्वामिनि अत्यन्ताविद्यमानमेव शेषत्वम्, तत्रापि उपकारकृत्वसंभवात् उपचरितमिति द्रष्टव्यम्। **वा.** ३।४।४।१२ पृ. ९०३, ९०४–९०५. * राजपुरुषः राजा चासौ पुरुषः इत्येव विग्रहः। राज्ञः पुरुषः इति व्याख्यातॄणां विग्रहप्रवर्तनं तु अर्थविसृष्टिकरणार्थम्। **सोम.** ६।१।१३. * 'राजपुरुषः शोभनः' इत्यत्र शेषभूतस्यापि पुरुषस्य विशेष्यस्य शोभनपदाऽपेक्षस्यापि समासो भवति। **रत्नाकरः.** पृ. ३४७. * **राजपुरुषे** राज्ञः पुरुषोपसर्जनीभूतस्य पदान्तरेण विशेषणं न भवति। नहि भवति ऋद्धस्य राजपुरुष इति। ( नह्युपसर्जनं पदं पदान्तरेण संबध्यते राजपुरुषवत् – **बृहती.** )। **ऋजु.** पृ. ७०.

* '**राजपुरोहितौ** सायुज्यकामौ यजेयाताम्' कुलाययज्ञे राजपुरोहितयोः सहाधिकारो भिन्नकल्पयोरपि। द्वितीयप्रयाजविषये तु, उभयोः समप्रधानत्वेन नाराशंस–तनूनपातौ विकल्प्येते। **वि.** ६।६।२. * '**राजपुरोहितौ** सायुज्यकामौ यजेयाताम्' यागे चैतत् कर्तृद्वित्वं श्रूयते। **भा.** १०।२।१३।४१, * 'एतेन ( कुलायेन नाम यागेन ) **राजपुरोहितौ** सायुज्यकामौ यजेयाताम्' इति अत्र द्वौ यजमानौ। ३।३।९।१७.

* **राजशब्दः** क्षत्रियजातौ रूढः, न तु राज्ययोगः तस्य प्रवृत्तिनिमित्तम्। प्रत्युत राज्यशब्दस्य राजयोगः प्रवृत्तिनिमित्तम्। राज्ञः कर्म राज्यं इति राजसूयाधिकारः क्षत्रियस्य सतः राज्यकर्तुरेव नेतरस्य। **वि.** २।३।२. * राजशब्दः क्षत्रियजातेरेव वाचकः, न तु ब्राह्मणादीनां राज्यकर्तॄणामपि। **भा.** २।३।२।३. * राजशब्दः क्षत्रियवचन एव, न यौगिकः। नच अनभिषिक्ते जनपदपरिपालनव्यापृतेऽपि आयुक्तके। पराधीनेष्वपि केषुचित् पृथ्वीश्वराभिषिक्तेषु माण्डलिकेष्वपि प्रयोगदर्शनात्। दृष्टश्च अनभिषिक्तेऽपि, अपालयति च जनपदम्, क्षत्रिये राजशब्दप्रयोगः। तद्वत्यपि वा अन्यजातीये अनभिधानं द्राविडानाम्। तस्मादपि न त्रैवर्णिको राजा। **वा.** २।३।२।३ पृ. ५८२–५८३. * 'राजानमभिषेचयेत्' इति **राजशब्देन** राजशब्दवाच्यतया प्रसिद्धस्य क्षत्रियस्यैव अभिषेकविधानात् विधिवेलायामेव राजशब्दसंयोगात् राजशब्दार्थस्य उद्देश्यत्वेन प्राक् प्रसिद्ध्यपेक्षत्वात् म्लेच्छप्रसिद्धेरपि आदरणीयतया जातिवाचित्वावगतेः अभिषेकनिमित्तत्वं न संभवति। **सु.** पृ. ९०२–०३, * **राजशब्दस्य,** जनपदस्य सर्वतो रक्षणे, चौरादीनां च जनपदपुरेभ्यो निष्कासने च रूढिः। पृ. ८९९.

* **राजशब्दार्थविचारः** 'अवेष्ट्यधिकरणे' २।३।२ **मीको.** पृ. ७१८ भाष्ये वार्तिके च द्रष्टव्यः।

* **राजशब्दप्रयोगः** राज्यरहितेऽपि क्षत्रिये जातिनिमित्तत्वेन। **सु.** पृ. ९००.

* **राजशब्दवाच्यः** साधुपालनासाधुनिग्रहकारी मनुपाणिन्यादिभिः अवधारितः। **सु.** पृ. ८९९.

* **राजतसौवर्ण**ग्रहाभ्यामश्वमेधोपदिष्टाभ्यां अतिदिष्टैन्द्रवायवादिग्रहाणां समुच्चयः। १०।४।२।३–५. **मीको.** पृ. १६४८ 'ग्रहसमुच्चयन्यायः' इत्यत्र द्रष्टव्यम्।

* **राजन्यः** ग्रीष्मे अग्निमादधीत। **भा.** ६।१।७। २६, ११।३।२।२, * एकादशसु प्रक्रमेषु **राजन्यः** अग्निमादधीत। ६।१।७।२८. * 'ऐन्द्रो राजन्यः' इत्यर्थवादेन राजन्यः ऐन्द्रत्वेन स्तूयते। **वि.** १।४।१४. * सत्यपि सामर्थ्ये वि**प्रराजन्यौ** न वैश्यस्तोमं कुरुतः। **वा.** ३।३।७।१४ पृ. ८४३. * **राजन्यं** ग्रीष्मे उपनयीत। **भा.** ६।१।७।३३. * 'राजन्यं जिनाति' अयागरूपं राजसूयाङ्गमेतत्। न प्रधानम्। अस्य राजन्यजयस्य अभिषेचनीययागे अपकर्षेणानुष्ठानेऽपि महाप्रकरणात् राजसूयाङ्गत्वमेव न तु अभिषेचनीयाङ्गत्वम्। **वि.** ४।४।२. * **राजन्यस्य** अग्निष्टोमे षोडशी गृह्यते। **भा.** १०।५।९।३४, * राजन्यस्य अग्निष्टोमे षोडशी सस्तुतशस्त्रः एवमुक्थ्ये। १०।५।१२।४९–५२, * राजन्यस्यैव राजसूयः। न च तत्र क्रतौ ब्राह्मणवैश्यौ स्तः 'राजा राजसूयेन' इति वचनात्। ११।४।३।१०. * राजन्यस्य ज्योतिष्टोमे फलचमसः इज्याविकारः ( भक्षसंबन्धस्तु हविष्ट्वात् लभ्यतैव ) न भक्षविकारमात्रम्। ३।५।१९।४७–५१. * राजन्यस्य ज्योतिष्टोमे फलचमसः। न सोमचमसः। **भा.** ३।६।१३।३६, * राजन्यस्य



ज्योतिष्टोमे ब्रह्मसाम पार्थुरश्मम्। नैमित्तिकमेव तत्, न नित्यम्। ४।३।२।४. * राजन्यस्य ज्योतिष्टोमे यवागूर्व्रतं क्रत्वर्थम्। ४।३।४।८–९. * राजन्यस्य दीक्षितस्य यवागूः व्रतम् ( भोजनद्रव्यम् )। ज्योतिष्टोमे। **वि.** ४।३।४, १०।४।१, * राजन्यस्य द्रव्यार्जने जयादिकमुपायः। उपायान्तरात्तु प्रत्यवायः। ४।१।२ वर्णकं ४. * राजन्यस्य नित्याग्निष्टोमसंस्थायाः लोप एव। राजन्यस्य अग्निष्टोमे स्तुतशस्त्रसहितस्य षोडशिनो विधानात्। तत्र अग्निष्टोमशस्त्रोत्तरं षोडशी एव कर्तव्यः। स एवात्यग्निष्टोम इत्युच्यते। एवं उक्थ्यसंस्थायामपि। तत्रापि राजन्यस्य षोडशिनो विधानात्, उक्थ्यसंस्थालोप एव सिध्यति। माऽस्तु वा काम्योक्थ्यसंस्थाया निवृत्तिः। **भाट्ट.** १०।५।१२. * राजन्यस्य पार्थुरश्मं ब्रह्मसाम सत्रे। **भा.** ६।६।३।१७, * राजन्यस्य वीर्यसंस्तवः फलेन संबन्धोऽनूद्यते। ६।६।२।१४, * **राजन्यानां** नाराशंसो द्वितीयः प्रयाजः। ६।६।१।१. * राजन्यानां सत्राधिकारो नास्ति। **वि.** ६।६।२.

* **राजन्यकर्तृका** अवेष्टिः। 'यदि राजन्यः ( यजेत ) ऐन्द्रं मध्ये निधाय आहुतिमाहुतिं हुत्वाऽभिघारयेत्' इति। **भा.** ११।४।३।८.

* **राजन्यचमसं** ब्राह्मणा एव प्रसर्पेयुः न राजन्याः राजसूये दशपेये। ३।५।२०।५२–५३.

* **राजन्यचमसभक्षणं** ब्राह्मणानामेव राजसूये दशपेये। ३।५।२०।५२–५३. **मीको.** पृ. २०८० 'दशपेयन्यायः' इत्यत्र द्रष्टव्यम्।

* **राजन्यवैश्ययोः** आर्त्विज्यं प्रतिषिद्धम्। **भा.** ६।६।३।१८. * राजन्यवैश्ययोः ऋत्विक्त्वं नास्ति किंतु ब्राह्मणानामेव। १२।४।१५।४२–४७. **मीको.** पृ. २८४ 'अधिकारः आर्त्विज्ये ब्राह्मणस्यैव' इत्यत्र द्रष्टव्यम्। * राजन्यवैश्ययोः ज्योतिष्टोमे न्यग्रोधफलचमसः, न तु सोमभक्षः। स च सोमविकारः। **वि.** ३।५।१९, * राजन्यवैश्ययोः विहिते फलचमसे यागद्रव्यसंस्कारविधयः 'क्रीणाति, अभिषुणोति' इत्यादयः न प्रवर्तन्ते, परंतु चोदकेनातिदिश्यन्ते। ३।६।१३. * राजन्यवैश्ययोः सांनाय्यभक्षः प्रतिषिद्धः। 'न राजन्यो न वैश्यो वा सांनाय्यं पिबेत् असोमपीथो ह्येषः'। **भा.** १२।४।१५।४५, * **राजन्यवैश्यानां** ज्योतिष्टोमे फलचमसो विधीयते 'स यदि राजन्यं वैश्यं वा याजयेत्०' इत्यादिना। १२।४।१५।४४. * राजन्यवैश्यानां प्रवरवरणे मनुवत् कल्पः इति **पूर्वपक्षः**। त्र्यार्षेय–मनुवत्कल्पौ त्रैवर्णिकानां तुल्यतया विकल्पितौ इति **सिद्धान्तः। संकर्ष.** ३।४।५.

* **राजन्यशब्दः** पर्याय एव हि राजशब्दस्य। **वा.** २।३।२।३ पृ. ५८३.

* **राजन्यस्तुत्यर्थः** ऐन्द्रशब्दः 'ऐन्द्रो राजन्यः'। **वि.** १।४।१४.

**राजसं तामसं चैव दूरतः परिवर्जयेदिति न्यायः। साहस्री.** १०२.

* **राजसूयः** क्षत्रियमात्राधिकारः। **सु.** पृ. ८९७. * राजसूयः बहुयागात्मकः। **वि.** ३।३।१०. * राजसूयः। राजा तत्र सूयते, राज्ञो वा यज्ञः राजसूयः। **भा.** ४।४।१।१. * राजजातिविशिष्टेन **राजसूयः** कार्यो नातद्विशिष्टेन। **वा.** ६।१।१।१ पृ. १३४७. * '**राजसूयेन** स्वाराज्यकामो यजेत' इति। अत्र अनुमत्यादीनामिष्टीनाम्, पवित्रादीनां सोमानाम्, केषांचित् होमानां च समुदितानां एकं फलं श्रूयते। **भा.** ११।२।३।१२. * '**राजसूयाय** ह्येनां उत्पुनाति', 'राजसूयेनेजानः सर्वमायुरेति' इदं संदंशेन विकृतौ महाप्रकरणम्। **बाल.** पृ. ९. * **राजसूयात्** भिन्नतन्त्रता ब्राह्मणादिकर्तृकाया अवेष्टेः। ११।४।३।९–१२. **मीको.** पृ. ७१३ 'अवेष्टिः ब्राह्मणादिकर्तृकायाः०' इत्यत्र द्रष्टव्यम्। * **राजसूयस्य** कृत्स्नस्यैव विदेवनादयः अङ्गम्, न तु अभिषेचनीयस्याङ्गम्। 'पष्ठौहीं दीव्यति, राजन्यं जिनाति, शौनःशेपमाख्यापयति, अभिषिच्यते' इत्यादयः। विदेवनाधिकरणम्। ४।४।२।३–४. * **राजसूये** अङ्गानां तन्त्रं न। ११।२।३।१३–१९. **मीको.** पृ. १०७० 'इष्टि-

राजसूयाधिकरणम्' इत्यत्र द्रष्टव्यम्। * राजसूये अनुमत्यादीनि यागरूपाणि, विदेवनादीनि च अयागरूपाणि इति सर्वाण्येव न फलवन्ति समप्रधानानि पुरुषार्थानि, किंतु अयागरूपाणि क्रत्वर्थानि। यागरूपाण्येव तु प्रधानानि। ४।४।१।१-२. * राजसूये अनुमत्यादयः इष्टयः, पवित्रादयः सोमाः, होमाः सर्वं प्रधानम्। **भा.** ११।२।३।१२. * राजसूये अनुमत्यादयः इष्टयो विहिताः, तासु आरम्भद्वारस्य लोपात् आरम्भणीया न कर्तव्या। **वि.** १०।१।३. * राजसूये अन्त्ये एव हविष्कृत्काले वाग्विसर्गः। सू. ११।३।७।१४. * राजसूये अभिषेकात् प्राक् विदेवनादयः। **भा.** ५।२।१०।२१. * राजसूये अभिषेचनीयाख्ये सोमयागे चोदकप्राप्तप्राकृताङ्गानुष्ठानोत्तरं विदेवन-शौनःशेपाख्यानादिकं कर्तव्यम्। इति चेन्न। अभिषेचनीयमध्ये 'माहेन्द्रस्तोत्रं प्रत्यभिषिञ्चते' इत्यभिषेकस्यापकर्षः, ततश्च अभिषेकात् प्राक्तनानां विदेवनादीनामप्यपकर्षः कर्तव्यः। **वि.** ५।२।१०. * राजसूये अभिषेचनीयदशपेययोर्भिन्नतन्त्रता। ११।२।१४।५७-६२. **मीको.** पृ. ५६३ 'अभिषेचनीयदशपेययोर्भिन्नं तन्त्रम्' इत्यत्र द्रष्टव्यम्। * राजसूये अवेष्टिः। तत्र 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिं हुत्वा तमभिघारयेत्। यदि राजन्यः ऐन्द्रं यदि वैश्यो वैश्वदेवं' इति। तत्र ब्राह्मणवैश्ययोरपि राज्ययोगात् राजशब्दार्थत्वेन इदं संभवति इति **पूर्वपक्षः**। क्षत्रियकर्तृकः एव राजसूयः। अवेष्टिस्तु ब्राह्मणादिकर्तृकं विशिष्टगुणकं कर्मान्तरमेव विधीयते इति **सिद्धान्तः**। तथा च अवेष्टिर्द्विधा राजसूयाङ्गभूता, स्वतन्त्रा चेति। तत्रेयं स्वतन्त्रेति ज्ञातव्यम्। **वि.** २।३।२. * राजसूये अवेष्टिषु अङ्गानि पृथक् कर्तव्यानि, तन्त्रं न। **भा.** ११।४।३।८-१०. * राजसूये **इष्टयः** १ 'अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति' २ 'नैर्ऋतमेककपालम्' ३ 'आदित्यं चरुं निर्वपति' ४ 'आग्नावैष्णवमेकादशकपालं' इत्यादयः। **पशवः** – 'आदित्यां मह्लां गर्भिणीमालभते', 'मारुतीं पृश्निम्', 'पष्ठौहीमश्विभ्याम्' इत्यादयः। **सोमाः**:- अभिषेचनीयः, दशपेयः इत्यादयः। **होमाः**:- 'वल्मीकवपायां होमः' इत्यादयो दर्विहोमाः। एते सर्वे यागरूपाः प्रधानम्। अयागरूपाः, 'प्र-(प) श्रौहीं दीव्यति', 'अक्षैर्दीव्यति', 'राजन्यं जिनाति', 'शौनःशेपमाख्यापयति' इत्यादयः, एतानि तु अङ्गानि। **वि.** ४।४।१. * राजसूये इष्टिपशुसोमदर्विहोमाः प्रधानभूताः। तत्र इष्ट्यर्थं आरम्भणीया न कर्तव्या। (यतः) अग्निष्टोमं प्रथममाहरन्ति। **भा.** १०।१।३।५. * राजसूये 'उत्तरे त्रिसंयुक्ते सोमापौष्णे एकादशकपाले ऐन्द्रापौष्णश्चरुः, श्यामो दक्षिणा' इति। तत्र पौष्णं पेषणं द्विदेवत्ये न कर्तव्यं किंतु केवलपूषदेवताके चरौ एव। ३।३।१५।३९-४६. * राजसूये किं विदेवनादीनामन्ते प्रयोगः उताभिषेकात् पूर्वं इति संदेहे अभिषेकात् पूर्वमिति निर्णयः। **भा.** ५।२।१०।२१, * राजसूये 'त्रिसंयुक्ते द्वे' इत्यादीनां अनुक्तदेशकालानां प्रधानानां अङ्गानि अनुष्ठेयानि न तन्त्रम्। ११।४।१।१-३. * राजसूये दशपेये नाम यागे दश चमसाः प्रत्येकं दशभिर्दशभिः पीयन्ते। तत्र यजमानस्य चमसो दशभिः पेयः, स च राजन्यैरेव दशभिः इति **पूर्वपक्षः**। राजन्यस्य सोमभक्ष एव नास्ति यजमानस्यापि। दशचमसपातॄन् शतसंख्याकान् उद्दिश्य 'शतं ब्राह्मणाः पिबन्ति' इति ब्राह्मण्यं विहितं, तथा च इतरचमसवत् यजमानचमसोऽपि ब्राह्मणैरेव दशभिः पेयः इति **सिद्धान्तः**। **वि.** ३।५।२०. * राजसूये दशपेये 'प्राकाशौ अध्वर्यवे ददाति' इमौ प्राकाशौ अध्वर्युभागस्यैव निवर्तकौ न तु कृत्स्नस्य क्रतुदाक्षिण्यस्य। १०।३।१७।६३-६४. * राजसूये दशपेयाभिषेचनीयौ द्वौ सोमयागौ। 'सह सोमौ क्रीणात्यभिषेचनीयदशपेययोः'। तत्र क्रयात् पूर्वभाविनां दशपेयाङ्गानां अपकर्षात् तन्त्रं इति **पूर्वपक्षः**। नास्ति तन्त्रम्, संसृपाख्याभ्यो दशभ्य इष्टिभ्य ऊर्ध्वमपराह्णे दशपेयस्योपक्रमः। ताभ्यः प्राचीने अत्यन्तव्यवहिते काले अभिषेचनीयः। 'सद्यो दीक्षयन्ति, सद्यः सोमं क्रीणन्ति' इति दशपेये सद्यस्काल्त्वं च। 'सह सोमौ क्रीणाति' इति तु क्रयार्थोपसंवादस्य केवलं साहित्यम्। ततश्च नास्ति तन्त्रम्। **वि.** ११।२।१४. * राजसूये दिशामवेष्टयः- 'आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा। ऐन्द्रमेकादशकपाल-



मृषभो दक्षिणा। वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा। मैत्रावरुणीमामिक्षां वशा दक्षिणा। बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणा' इति। तासु अङ्गानां तन्त्रेणानुष्ठानं इति **पूर्वपक्षः**। बहिष्प्रयोगे तन्त्रम्, अन्तःप्रयोगे भेदः इति सिद्धान्तः। **वि.** ११।४।३, * राजसूये देवनादिकं कृत्स्नराजसूयाङ्गम्, न तु अभिषेचनीयाख्यसोमयागमात्राङ्गम्। अनुष्ठानं तु अभिषेचनीयगतमाहेन्द्रस्तोत्रकाले। ४।४।२. * राजसूये देशभेदः 'बार्हस्पत्यश्चरुर्ब्रह्मणो गृहे, ऐन्द्र एकादशकपालो राज्ञो गृहे, आदित्यश्चरुर्महिष्या गृहे' इत्यादिः। **भा.** ११।२।३।१३. * राजसूये नानाबीजेष्टिः 'अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाम्, सोमाय वनस्पतये श्यामाकं चरुम्' इत्यादि। तत्रावघातार्थं अजिनास्तरणम्, उपरि उलूखलस्थापनम्, तत्र बीजावापः, अवघातः, शूर्पेण परावपनम्, कणेभ्यस्तण्डुलानां विवेचनं इति सर्वे मिलित्वा एकोऽवघातो नाम पदार्थः। तत्र प्रतिबीजं कृष्णाजिनास्तरणादितण्डुलनिष्पत्त्यन्तस्य समुदायस्यानुसमयः कर्तव्यः। तथा च एकं कृष्णाजिनम्, एकमुलूखलं इत्यादि। **वि.** ५।२।७. * राजसूये नानाबीजेष्टिः। तस्यामवहननं समन्त्रकं चोदकेन प्राप्यते। तत्र प्रतिबीजं मन्त्रस्यावृत्तिः। **भा.** ११।४।१३।४३. * राजसूये नानाबीजेष्टौ अन्त्यबीजसंबन्धिहविष्कृदाह्वानकाले एव वाग्विसर्गः। ११।३।७।१७. **मीको.** पृ. २३१३ 'नानाबीजेष्टौ अन्त्यबीज०' इत्यत्र द्रष्टव्यम्। * राजसूये नैर्ऋते चरौ तुषविमोकसाधनेषु नखेषु उलूखलमुसलधर्मः प्रोक्षणं कर्तव्यम्। **वि.** ९।२।१२. * राजसूये परस्परविलक्षणानां इष्टि-पशुसोमानां बहूनां समप्राधान्यम्। **वि.** ४।४।११. * राजसूये 'पुरस्तादुपसदां सौम्येन प्रचरन्ति' इति सौम्यस्य कालार्थः संयोगः। सौम्यः स्वाराज्यफलप्रयुक्त एव पाठक्रमात् पूर्वपठितकर्मानन्तरकर्तव्यत्वेन प्राप्तः, अतिदेशप्राप्तोपसत्पूर्वं विधीयते। **भाट्ट.** ४।४।३. * राजसूये पूर्वत्रिसंयुक्तगतवैष्णवत्रिकपाले सौमिकातिथ्येष्टिगतवैष्णवशब्दो धर्मान् नातिदिशति। **भा.** ७।३।६।१७.

**ॐ राजसूये पृथक्दक्षिणायुक्तानामाग्नावैष्णवादीनां भेदेन अङ्गानामनुष्ठानम्॥**

**चोदनैकत्वाद्राजसूयेऽनुक्तदेशकालानां समवायात् तन्त्रमङ्गानि। ११।४।१।१॥**

**भाष्यम्**— राजसूये यान्यनुक्तदेशकालानि, प्रधानानि यथा त्रिसंयुक्ते द्वे, एवमादि चिन्त्यते। किं तत्राङ्गानां तन्त्रभावः, उत भेदः इति। किं प्राप्तम्? राजसूयेऽनुक्तदेशकालानां प्रधानानां तन्त्रमङ्गानि। कुतः? समवायात्। फलनिर्वर्तने तेषां समवायः। समेत्यैतानि फलं साधयन्ति, नैकशः। कथं ज्ञायते? चोदनैकत्वात्। राजसूयेनेत्येकवचनान्तेन शब्देन तानि प्रधानान्युक्त्वा फलसंबन्धः कृतः। तस्मात् समुदायः फलवान्। यच्च फलवत् तच्चिकीर्षितम्। तदर्थेतिकर्तव्यता। इतिकर्तव्यता चाङ्गानि। तस्मात्तन्त्रम्।

**प्रतिदक्षिणं वा कर्तृसंबन्धादिष्टिवदङ्गभूतत्वात् समुदायो हि तन्निर्वृत्त्या तदेकत्वादेकशब्दोपदेशः स्यात्। २॥**

**भाष्यम्**— न चैतदेवं तन्त्रमङ्गानीति। किं तर्हि? भेदेन। कुतः? प्रतिदक्षिणं कर्तृसंबन्धात्। एतेषु कर्मसु दक्षिणाभेदः श्रूयते। 'आग्नावैष्णव एकादशकपालः, ऐन्द्रावैष्णवश्चरुः, वैष्णवस्त्रिकपालो वामनो दक्षिणा। सोमापौष्ण एकादशकपालः, ऐन्द्रापौष्णश्चरुः, पौष्णश्चरुः, श्यामो दक्षिणा' इति। दक्षिणाभेदात् प्रतिदक्षिणं कर्तृसंबन्धो भवति। वामनक्रीताः पूर्वस्य त्रिसंयुक्तस्य कर्तारः। अनङ्गं ते उत्तरस्य त्रिसंयुक्तस्य। श्यामपरिक्रीताः उत्तरस्य त्रिसंयुक्तस्य कर्तारः। तेऽप्यनङ्गं पूर्वस्य। अतः कर्तृभेदादङ्गभेदः। इष्टिवत्। तद्यथा पौर्णमासकालान्यङ्गानि कालभेदान्न दर्शस्योपकुर्वन्ति। एवमिहापि कर्तृभेदान्न परस्परस्य। तस्माद्भेदेन कर्तव्यानीति। यत्तु चोदनैकत्वादुत्तरस्यापि समुदायो विवक्षितः इति। उच्यते। समुदायो हि तन्निर्वृत्त्या। समुदायः फलनिष्पत्त्या विवक्षितः। तदेकत्वात् फलैकत्वात् सहवचनम्, न प्रयोगैकत्वात्, इष्टिवत्। तद्यथा दर्शपूर्णमासयोः प्रयोगभेदेऽपि फलैकत्वात् समासवचनं 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति।

**तथा चान्यार्थदर्शनम् । ३ ॥**

**भाष्यम्**— अन्यार्थोऽप्येतमर्थं दर्शयति । पूर्वं त्रिसंयुक्तं उत्तरं त्रिसंयुक्तमिति । तत्र भेदे हि पौर्वापर्यं स्यात् । नन्वेकतन्त्रत्वेऽपि प्रधानापेक्षं पौर्वापर्यं भवेत् । नैवमेतत् । वाक्यशेषेण तु विज्ञायते, साङ्गयोः प्रधानयोरेतत्पौर्वापर्यमिति । एवं ह्याह यत्पूर्वं त्रिसंयुक्तं वीरजननं तत्, यदुत्तरं त्रिसंयुक्तं पशुजननं तदिति । फलसंबन्धश्च साङ्गयोर्भवति, न केवलयोः । तस्माद्दर्शनमेवैतत् ।

**शा**— ' **देशकालफलाभेदादङ्गानां तन्त्रता भवेत् । कर्तृभेदोऽपि नैवास्ति दक्षिणामात्रभेदतः ॥ उच्यते दक्षिणाभेदात् कर्तृत्वमपि भिद्यते । तदानतानां कर्तृत्वादानतेश्च पृथक्त्वतः ॥'** तस्मात् प्रतिदक्षिणं तन्त्रभेदः ।

**सोम—सूत्रार्थस्तु**— राजसूये अनुक्तदेशकालानां कर्मणां ' राजसूयेन यजति ' इति चोदनैकत्वेन युगपत् प्रयोज्यत्वात् तन्त्रमङ्गानि इति ।

**वि**— ' सौमापौष्णादिके तन्त्रमङ्गानामुत भिन्नता ।, तन्त्रं फलैक्यतो, मैवं दक्षिणाकर्तृभेदतः ॥'

**भाट्ट**—सर्वत्रैकफलसाधनानामनेकेषां कर्मणां फले साहित्यावगमेऽपि देशकालकर्तृभेदे प्रयोगभेदात् अङ्गावृत्तिरित्युक्तम् । तदिह यत्र देशादिभेदो नाम्नातः, दक्षिणाभेदमात्रं श्रुतम्, यथा राजसूये ' आग्नावैष्णवमेकादशकपालं निर्वपति वामनो दक्षिणा, सोमापौष्णं चरुं निर्वपति श्यामो दक्षिणा ' इत्यादौ तत्र किं दक्षिणाभेदात् कर्तृभेदस्ततश्च प्रयोगभेदादावृत्तिः, किं वा नेति चिन्तायाम्, सत्यपि दक्षिणाभेदे, कर्तृभेदे प्रमाणाभावः । न ह्यत्र अधिष्ठानभेदस्तत्रापीष्टः तदैक्यस्य उत्तराधिकरणे स्थापयिष्यमाणत्वात् । कर्तृत्वभेदस्तु न दक्षिणाभेदव्यापकः, प्रमाणाभावात्, दर्शपूर्णमासे च अन्वाहार्यदक्षिणावृत्तावपि कर्तृभेदाभावाच्च । 'दर्शपूर्णमासयोश्चत्वार ऋत्विजः ' इत्यनेन षण्णां सहितानामेको व्यापकः कर्तृप्रयोगः ' समे दर्शपूर्णमासाभ्यां यजेत' इत्यत्र दैशिकप्रयोग इव विधीयते । अतश्च सत्यपि कालिकप्रयोगभेदे कर्तृप्रयोगस्यैकत्वात् कर्तृत्वैक्यावगमः । वस्तुतस्तु नात्र दक्षिणाभेदोऽपि, द्वादशाहवदेकफलसाधनत्वेनैकप्रयोगत्वावगमे वामनश्यामयोर्मिलितयोरेव दक्षिणात्वात् । अत एव ' अन्वहं द्वादशशतं ददाति ' इत्यनेन प्रत्यहं विभज्य दानेऽपि न तत्र दक्षिणाभेद इत्युक्तम् । अतश्च तत्तत्प्रधानाङ्गत्वेन व्यवस्थितयोरपि वामनश्यामयोरेकप्रयोगत्वात् मिलितयोरेव दक्षिणात्वम् । आवश्यकश्चायं न्यायो ब्राह्मणकर्तृकावेष्टिप्रयोगे, व्रीहिश्यामाकाग्रयणयोः समानतन्त्रत्वे च । **इति प्राप्ते**, दक्षिणायाः कर्तृसंस्कारकतया तद्वदेव प्रयोगान्वयित्वात् युक्तं तद्भेदाक्षेपकत्वम् । न ह्यन्यथा तत्तत्प्रधानानां व्यवस्थितदक्षिणाम्नानं कथमपि संगच्छते । न चात्र द्वादशाहवत् मिलितयोर्दक्षिणात्वम्, प्रत्येकं दक्षिणापदश्रवणेन भेदावगतेः । द्वादशाहे तु प्रत्येकदक्षिणापदाश्रवणात् तदैक्यमिति विशेषः । न च दर्शे पूर्णमासे च दक्षिणाभेदसत्त्वेऽपि कर्तृत्वभेदाभावः, आध्वर्यवादिसमाख्यया तेषां तेषां कर्तृणां प्रतियागं भेदेनैव विहिततया ' दर्शपूर्णमासयोश्चत्वार ऋत्विजः ' इत्यस्य ' सोमे सप्तदशर्त्विजः ' इत्येतद्विध्यन्तरैकवाक्यतया तदर्थवादत्वेन कर्तृप्रयोगविधायकत्वाभावात् । अत एव दर्शे पूर्णमासे च पृथग्वरणानुष्ठानं **याज्ञिकानाम्** । एवं च– दक्षिणायाः कर्तृत्वभेदद्वारा प्रयोगभेदावश्यकत्वे राजसूयान्तर्गतावेष्ट्यादौ प्रयोगभेदिकाया अपि तस्या अन्वाग्रपलकब्राह्मणादिकर्तृकावेष्ट्यादिप्रयोगे दक्षिणापेक्षायां सति संभवे तत्तत्प्रधानाङ्गत्वेनावगतायास्तस्या एवोपस्थितत्वात् आग्नेयीन्यायेन ग्रहणम्, न तु अन्तःक्रतुप्रयोगे बाधिताया अन्वाहार्यदक्षिणायाः, इति वक्ष्यते । अस्तु वा तत्रापि सा । सर्वथा दक्षिणाभेदे प्रयोगभेद इति सिद्धम् ।

**मण्डन**– ' भृतिभेदे तन्त्रभेदः । '

**शंकर**– ' कर्तुर्दक्षिणया भेदः । '

* राजसूये प्रक्रमे ये कर्तारः, ते एव आसमाप्तेः इति न नियमः दक्षिणाभेदात् इति पक्षः । कर्त्रैक्येऽपि दक्षिणारूपधर्मभेदः संभवति । पूर्वकर्तार एव वामनेन क्रीताः आग्नावैष्णवादिकं त्रिकं कुर्युः । अयुतेन क्रीताः अभिषेचनीयं इति धर्मभेदः । तथा च राजसूयस्यैकत्वात् कर्त्रैक्यनियमः । **वि.** ११।४।२, * राजसूये ब्राह्मणवैश्ययोरनधिकारः । ११।४।३. * राजसूये ' यः कामयेत राष्ट्रमस्य प्रजायै स्यादिति, तस्यौपासने प्रतिहितमालभ्य जुहुयात् ' इति औपासनाग्निरुपयुज्यते । **भा.** १२।२।१।४. * राजसूये यागायागरूपाणि सर्वाण्येव न स्वाराज्यफलेन फलवन्ति किंतु यागा एव स्वाराज्यफलेन फलवन्तः । **सोम.** ४।४।१, * राजसूये यागायागरूपाणि कर्माणि सर्वाण्येव न समप्रधानानि किंतु यागा एव प्रधानं अयागास्तु अङ्गम् । ४।४।१, * राजसूये यागरूपाण्येव अनुमत्यादीनि कर्माणि कर्मप्रयोगारम्भे ' अस्मै फलाय इमानि कर्माणि करिष्ये ' इति फलोद्देशेन संकल्प्यानि न तु अयागरूपाणि । ४।४।१. * राजसूये रत्निनां हवींषि दर्शपूर्णमासविकृतिरूपाणि । तेषु मैत्राबार्हस्पत्ये हविषि ' स्वयंकृता वेदिर्भवति, स्वयंदितं बर्हिः, स्वयंकृत इध्मः ' इति । तथा च प्रकृतौ सप्रयोजनानामुद्धननादीनां विकृतौ प्रयोजनं लुप्यते । बर्हिस्तरणहविरासादनादयः वेदिधर्मा विकृतावपि अलुप्तार्थाः । तस्मात् उद्धननादीनि नानुष्ठेयानि । बर्हिरास्तरणादीनि त्वनुष्ठेयानि । लुप्तोपकाराणां अननुष्ठानम्, अलुप्तोपकाराणां तु अनुष्ठानम् । **वि.** १०।१।१, * राजसूये ' वल्मीकवपायामुत्सृज्य जुहोति' इति श्रूयते । अनारभ्य 'यदाहवनीये जुहति तेन सोऽस्याभीष्टः प्रीतः' इति । अत्र आहवनीयवल्मीकवपयोः विकल्प इति **पक्षः** । वल्मीकवपया आहवनीयस्य बाधः इति **सिद्धान्तः** । १०।८।८. * राजसूये विदेवनादीनामभिषेकात् प्रागपकर्षः । ५।२।१०।२१. ' विदेवनादीनामभिषेकात् प्रागपकर्षः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * राजसूये विशेषविहितया वल्मीकवपया सामान्यविहिताहवनीयस्य बाधः । **भा.** १०।८।८।१६. * राजसूये संसृपः नाम इष्टयो दश । संसृपां हवींषि इति **भाट्ट.**, संसृपायां हवींषि इति **शा.**, संसृपाख्याभ्यः इति विस्तरः । **वि.** ११।२।१४, * राजसूये संसृत् (प्) शब्दवाच्यानि आग्नेयाष्टाकपालादीनि दश हवींषि आम्नातानि । तत्र ' पुरस्तादुपसदां सौम्येन प्रचरन्ति, अन्तरा त्वाष्ट्रेण, उपरिष्टाद्वैष्णवेन ' इति अष्टम–नवम–दशमहविर्विषये उक्तम् । अनेन वाक्येन उपसदां आदिमध्यावसानेषु सौम्यादीनां त्रयाणामनुष्ठानं विहितम्, तथापि सौम्यादयः नोपसदामङ्गानि किंतु प्रधानान्येव । कालविशेषसंबन्धपरं तु तद्वाक्यम् । ४।४।३, * राजसूये सर्वारम्भार्थोऽग्निष्टोमः ' अग्निष्टोममग्रे ज्योतिष्टोममाहरति ' । यथा दर्शपूर्णमासारम्भार्था आरम्भणीया तद्वत् राजसूये अग्निष्टोमः । १०।१।३. * राजसूये ' सोमापौष्ण एकादशकपालः, ऐन्द्रापौष्णश्चरुः, पौष्णचरुः, श्यामो दक्षिणा ' इत्येकं त्रिकम् । ' आग्नावैष्णव एकादशकपालः, ऐन्द्रावैष्णवश्चरुः, वैष्णवस्त्रिकपालः, वामनो दक्षिणा ' इत्यन्यत् त्रिकम् । एतयोस्त्रिकयोः तन्त्रेणानुष्ठानं इति पक्षः । दक्षिणाभेदेन कर्तृभेदात् अङ्गभेदः इति **सिद्धान्तः** । **वि.** ११।४।१. ' सोमापौष्ण एकादशकपालः, ऐन्द्रापौष्णश्चरुः, पौष्णश्चरुः, श्यामो दक्षिणा' । ' आग्नावैष्णव एकादशकपालः, ऐन्द्रावैष्णवश्चरुः, वैष्णवस्त्रिकपालः, वामनो दक्षिणा ' इति **विस्तरे** पाठः । द्वितीयस्त्रिकः आदौ, प्रथमः त्रिकः पश्चात् इति त्रिकद्वयस्य वैपरीत्येन पाठो **भाष्ये** । ' आग्नावैष्णवमेकादशकपालं निर्वपति वामनो दक्षिणा ' । ' सौमापौष्णं चरुं निर्वपति श्यामो दक्षिणा ' इति एतादृशः एतावांश्च पाठः **शास्त्रदीपिकायाम्** । ' वामनानतैर्हि पूर्वं कर्म कर्तव्यम्, श्यामानतैरुत्तरम् ' इति च तत्र स्पष्टीकरणम् । शास्त्रदीपिकावदेव वाक्यपाठो **भाट्टदीपिकायाम्** । **तैत्तिरीयसंहितायां** तु १।८।८ इत्यत्रैवं पाठः ' आग्नावैष्णवमेकादशकपालं निर्वपति, ऐन्द्रावैष्णवमेकादशकपालम्, वैष्णवं त्रिकपालं वामनो वही दक्षिणा... सोमापौष्णं चरुं निर्वपति, ऐन्द्रापौष्णं चरुम्, पौष्णं चरुम्, श्यामो दक्षिणा ' इति । परंतु **तै.संहितायां** त्रिहविष्काणि त्रीणि कर्माण्युक्तानि, तथा चात्र न त्रिकद्वयं किंतु त्रिकत्रयम्, तत्र आग्नावैष्णवादित्रिकं प्रथमम्, ' अग्नीषोमीयमेकादशकपालं निर्वपति, इन्द्रासोमीयमेकादशकपालम्, सौम्यं चरुम्, बभ्रुर्दक्षिणा ' इति द्वितीयं त्रिकं सोमापौष्णादि तृतीयं त्रिकं इति विशेषः । इति अत्र विषये भूयो वैचित्र्यम् । * राजसूये सौमापौष्णादिचरौ द्विदैवत्ये न पेषणं किंतु पूषैकदेवत्ये एव । **वि.** ३।३।२०. * राजसूये सौम्यश्चरुः नोपसदामङ्गं ' पुरस्ता-

दुपसदां सौम्येन प्रचरन्ति ' इति तु कालार्थः संयोग इति फलार्थः सौम्यः । **भा.** ४।४।३।५–६.

* **राजसयाङ्गं** विदेवनादयः प्रकरणबलात् । **वि.** ३।३।१०.

* **राजसूयान्तर्गत**– अनुमत्यादीष्टौ अन्वारम्भणीयाया बाधः । १०।१।३।५. **मीको.** पृ. ९७७ ' आरम्भणीयायाः राजसूयगतानुमत्यादीष्टौ बाधः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **राजसूयान्तर्गताभिषेचनीये** अयुतं दक्षिणा । **वि.** ११।४।२.

* **राजसूयान्तर्गतदशपेये** यजमानचमसेषु ब्राह्मणा एव भक्षकाः । **भा.** ३।५।२०।५२–५३.

* **राजसूयादौ** तत्तद्व्याप्यप्रयोगानुसारेणाङ्गानामावृत्तिः ।११।२।३।१३–१९.

**राजसूयोपक्रमे वृतानामेव ऋत्विजां समाप्तिपर्यन्तता ॥**

**अनियमः स्यादिति चेत् । ११।४।२।४ ॥**

**भाष्यम्**— तत्रैव विचार्यते, किमुपक्रमे ये कर्तारः ते एवाऽऽन्तादुत अनियमः, ते वाऽन्ये वेति । किं प्राप्तम् ? अनियमः स्यादिति चेत् । इति चेत्पश्यसि, प्रतिदक्षिणं कर्तृसंबन्ध इति अनियमः । पवित्रदक्षिणाभिर्ये परिक्रीताः पवित्रार्थास्ते भवन्ति । पवित्रान्ते तेषामपवर्गः । उत्तरे कर्मणि यथाकामी, ते वाऽन्ये वा स्युः । तस्मात् अनियमः ।

**टुप्**— पवित्रस्य दक्षिणाम्नानात् पवित्रस्य ये कर्तारः ते पवित्रार्थमुपादीयन्ते । ते द्वितीयस्य सोमस्य नाङ्गम् । कथम् ? अनियमेन कर्तृणामुपादाने प्राप्ते वचनान्नियम्यते । तच्च नियमवचनं यस्यैवार्थेनोपादत्ते तस्यैव तेऽङ्गम् । द्वितीयस्य पुनरसौ उपादाननियमो न भवति । यथाऽन्ये पदार्था भेदेन क्रियन्ते, एवं वरणमपि भेदेन प्राप्नोति । तत्र यदि वा त एव वरीतव्याः, अथवाऽन्ये । एवं ऐष्टिकेष्वपि भेदेनैव ।

**नोपदिष्टत्वात् । ५ ॥**

**भाष्यम्**— नैतदेवं युक्तम्, अनियम इति । किं तर्हि ? य एव प्रक्रमे त एवाऽऽन्तात् स्युः । कस्मात् ? उपदिष्टत्वात् । आदावेव वरणकाले यजमानेन तेषामुपदिष्टम्, अनेन मां राजसूयसंज्ञकेन कर्मसमुदायेन याजयत इति । वरणं च प्राक् कर्मप्रवृत्तेः । तदगृह्यमाणविशेषत्वात् तन्त्रम् । तेनाऽऽनताः सर्वार्था भवन्ति । आह । यदि समुदायमुद्दिश्य व्रियन्ते तत एवम् । अथ पुनरवयवं पवित्रमुद्दिश्य ततो न सर्वार्थाः, तदर्था एव भवन्ति । किं पुनरत्र युक्तम् ? समुदायमुद्दिश्येति । तथा सत्यविघ्नेन कर्तुः कर्म निर्वर्तते । इतरथा पवित्रान्ते, उत्तरस्मिन् कर्मणि त एव कामतो न संप्रवर्तेरन् । अन्ये च कर्तारो नोपपद्येरन् । कर्मविघ्नः स्यात् । लाघवापत्तिश्च । एवं च सति लाघवं भवति । इतरथा प्रतिकर्मोपादानं तद्गुरुः स्यात् । ऋत्विग्याज्ययोश्चाव्यभिचारो धर्मः । तस्मात्समुदायमुद्दिश्य व्रियन्ते । तथा च तन्त्रम् ।

**टुप्**— स्वाराज्यकामस्य राजसूयसंज्ञको याग उपायत्वेन चोद्यते । स उपाये प्रवर्तमानः आदावेव ऋत्विजो वृणीते, राजसूयसंज्ञकेन यागेन याजयतेति । तच्चागृह्यमाणविशेषत्वात्सर्वेषां कृतं भवतीति । अपि च समुदायमुद्दिश्य व्रियमाणेषु यो यत्काले निर्ज्ञातः स तत्काल एव करिष्यते । अनियमेनोपादाने पूर्ववृता नेच्छेयुरपि । कदाचिदन्ये न लभ्येरन् । तत्र योऽसौ काल उपदिष्टः स बाध्यते । ततः कर्मवैगुण्यात् फलाभावो भवेत् । तस्मान्न प्रतिकर्म वरणं कर्तव्यमिति । अयुक्तमिदं व्याख्यानम् । यः कर्माणि जानाति, तस्य राजसूयेनाधिकारः । स एवं जानाति, ऐष्टिकं वरणमिष्टिष्वेवोपकरोति, न सौमिकेषु । यच्च सौमिकं वरणं न तदैष्टिकेष्विति । यथा आदावाधाने कृते कश्चिदेवं वरणं कुर्यात्, अहं कर्माणि करिष्ये, तत्र मे भवन्त ऋत्विजो भवतेति । यथैतदप्रमाणकम्, एवमिदमपि । न कश्चिदनयोर्विशेषः । न च पवित्रस्याङ्गं सोम इष्टिर्वा, येन प्रासङ्गिकेन वरणेन निवृत्तिः । यथा दीक्षणीयादीनां ज्यौतिष्टोमिकेन वरणेन । यदप्युच्यते समुदायमुद्दिश्य व्रियन्ते इति । तदयुक्तम् । न हि समुदायः फले चोद्यते । येन तदर्थं वरणं स्यात् । कतरो वा शब्दः समुदायवाचकः ? राजसूयशब्दः इति चेत् । तन्न । सोमपश्विष्टिदर्विहोमाः



निरपेक्षा उत्पन्नाः । ते निरपेक्षा एव प्रयोजनमपेक्षन्ते । तेषामपेक्षमाणानां संनिधावरूपः शब्दः श्रूयमाणो रूपवतः फले विदधाति । ये फले विधीयन्ते तेषामितिकर्तव्यता । अयं च वरणनियमः इतिकर्तव्यतांशेन गृह्यते । तस्माद्यथाऽन्येतिकर्तव्यता भेदेन क्रियन्ते, एवं वरणमपि भेदेन कर्तव्यम् । न कश्चिद्विशेषः । तस्मादेकैकस्य भेदेन वरणम् । यदि समुदायमुद्दिश्य वरणं तन्त्रेणेष्यते ततोऽन्याऽपीतिकर्तव्यता कस्मात्तन्त्रेणैव न क्रियते । कस्तव वरणे पक्षपातः । तस्मात् यदेतद्वरणं वैदिकं नैवेदं चिन्त्यते । किंतु योऽयं लौकिकोऽभ्युपायः स चिन्त्यते । पूर्वपक्षवादी — अनियमेन लौकिकमभ्युपायमिच्छति । सिद्धान्तवादी तु लौकिकमप्युपायमादावेव नियमेनेच्छति ।

**प्रयोजनैकत्वात् । ६ ॥**

**भाष्यम्**-- एकं च प्रयोजनं अवयवदक्षिणानामपि समुदायसंपत्तिः । न ह्यवयवेन केवलेन कृतेन कश्चिदर्थः । अवयवैः समुदायः संपादयितव्य इत्यवयवैः परिक्रीयन्ते । तेषां समुदायसंपत्तौ कृतार्थत्वम् । तस्मात्त एव कर्तार आन्तात्स्युः ॥

**विशेषार्था पुनःश्रुतिः । ७ ॥**

**भाष्यम्**-- आह । यदि समुदायसंपत्त्यै, अवयवशः परिक्रयः, सकृदेव कर्तव्यः, किं पुनरावृत्त्या इति । उच्यते-- उभयथा परिक्रये प्राप्त सकृद्वा प्रत्यवयवं वा, परिक्रयविशेषो नियम्यते, प्रत्यवयवं कर्तव्यः । द्रव्यसंख्यानियमेन च वामनो दक्षिणा, अयुतमभिषेचनीये ददातीत्येवं क्रियमाणमभ्युदयकारि भवतीति ।

**शा**-- किं सर्वकर्मणां ऋत्विग्वरणं तन्त्रम् ? उत भेदेन ? ( इति संशये ) दक्षिणाभेदेन प्रयोगाणां भिन्नत्वात् अङ्गभूतस्य वरणस्यापि भेदः । ( **इति प्राप्ते** ) सर्वस्य राजसूयस्य एकफलत्वात् युगपत्सर्वचिकीर्षा, चिकीर्षितार्थे च सहायवरणम्, तस्मादगृह्यमाणविशेषत्वात् सर्वकर्मणां राजसूयावयवभूतानां तन्त्रं वरणम्, इति उपक्रमवृताः एव आन्तात् कर्तारः ।

**सोम**— पूर्वाधिकरणोक्तभेदस्य एतदधिकरणे वक्ष्यमाणाभेदस्य च विषयभेदात् ( **संगतिः** ) ।

**वि**-- ' राजसूये प्रक्रमस्थकर्तारो नियता न किम् । नियता वा दक्षिणानां भेदादनियता अमी ॥ अनेकसमुदायात्मराजसूयाय ते वृताः । आदौ तेन नियम्यन्ते विशेषे दक्षिणाभिदा ॥ '

**भाट्ट**-- तदेवं दक्षिणाभेदात् कर्तृत्वभेदेन प्रयोगभेद इत्युक्तम् । इदानीं तदधिष्ठानभूताः पुरुषाः किं भिन्ना उत त एवेति चिन्त्यते । तदिह यत्रैकफलसाधनानां प्रयोगैक्यमेव प्रमाणावगतं तत्र पुरुषैक्यं तावदविवादमेव । यत्रापि चातुर्मास्यराजसूयादौ तद्भेदग्राहकं प्रमाणं तत्रेतराङ्गभेदवत् पुरुषभेदोऽपि स्यात् । **इति प्राप्ते**, कतिपयप्रधानप्रयोगे उपात्तानां तेषां त्यागे प्रयोगान्तरे अन्येषामप्राप्तौ कर्मविक्षेपापत्तेस्तेषामेव सर्वादौ लौकिकसंवित्करणेनान्तादुपादानम्, न तु यथाश्रुतभाष्यस्वारस्यात् सर्वादौ तन्त्रेण वैदिकं वरणम्, प्रयाजादीनामिव वरणस्यापि तन्त्रत्वे प्रमाणाभावात् । अत एव यत्र न कर्मविक्षेपाशङ्का तत्रान्योपादाने न क्षतिः । न चैवं लौकिकसंवित्करणेनैव सर्वप्रयोगेषु तेषां कर्तृत्वनिश्चयापत्तौ तत्तत्प्रयोगारम्भेषु पुनर्वैदिकवरणवैयर्थ्यम्, संविद्भङ्गेन कादाचित्काकरणशङ्काव्यावृत्त्यर्थत्वात् । अत एव लौकिकोपायसाध्यसंविद्भङ्गे, स्मार्तं पुरुषार्थप्रायश्चित्तम् । वैदिकवरणसाध्यसंविद्भङ्गे क्रत्वर्थं श्रौतमित्यपि ध्येयम् । तस्मात्सति संभवे त एवेति सिद्धम् ।

**मण्डन** — ' नर्त्विग्भेदो नृपक्रतौ ।' ( नृपक्रतौ राजसूये ) ।

**शंकर**— ' राजसूये तु तन्त्रता ।'

* **राजसूयकर्तारः** प्रथमवृताः एव आन्तात् स्युः इति भाष्यमतम् । तथा च भाष्यमते तन्त्रम् । सति संभवे त एव कर्तारः इति वार्तिककारमतम् । **भा.** ११।४।२।४–७.

* **राजसूयगतः** सौम्यश्चरुः राजसूयविकृतौ न कर्तव्यः । **भाट्ट.** ४।४।३. * **राजसूयगते** दशपेये ( अश्वमेधे इति भाष्यम् ) विहिताभ्यां प्राकाशाभ्यां प्राकृताध्वर्युभागमात्रस्य बाधः । १०।३।१७।६३–६४. **मीको.** पृ. २८३६ ' प्राकाशन्यायः ' इत्यत्र द्रष्टव्यम् ।

* **राजसूयगताग्नावैष्णवादीनां** पृथग्दक्षिणायुक्तानां अङ्गानि भेदेन कर्तव्यानि, न तन्त्रम् । भा. ११।४।१। १–३.

* **राजसूयगतवैष्णव:** त्रिकपाल:, आतिथ्येष्टिगतवैष्णवनवकपालश्च, अनयोर्नास्ति प्रकृतिविकारभाव: । न चातिदेशोऽस्ति धर्माणाम् । **वि.** ७।३।६. ***राजसूयगतवैष्णवे** आतिथ्यावैष्णवधर्माणां नातिदेश: । ७।३।६।१८. 'वैष्णवन्याय:' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* ब्राह्मणादिवाक्येषु एतच्छब्दाभावेन तदपेक्षया **राजसूयचोदनाया:** दौर्बल्याभावात् तदुक्तक्षत्रियकर्तृकता न बाधितुं शक्या । **सु.** पृ. ९१०.

**राजसूयन्याय:** । राजसूयशब्दवाच्यानां यागानामेव फलार्थत्वम् ॥

**प्रकरणशब्दसामान्याच्चोदनानामनङ्गत्वम् । ४।४।१।१॥**

**भाष्यम्**— सन्ति अनुमत्यादीनि ऐष्टिकानि कर्माणि, मह्यादय: पशव:, पवित्रादय: सोमा:, वल्मीकवपायां होम: इत्येवमादीनि दार्विहोमिकानि । तथा 'पष्ठौहीं दीव्यति', 'राजन्यं जिनाति', 'शौन:शेपमाख्यापयति', 'अभिषिच्यते' इति । एतेषां संनिधौ श्रूयते 'राजसूयेन स्वाराज्यकामो यजेत' इति । स एष रूपवतां संनिधौ अरूप: शब्द: श्रूयमाण: समुदायवाचक: समधिगत: । तत्र संदेह:, किं सर्वेषामनुमत्यादीनां समुदायस्य राजसूयशब्दो वाचक: उत केषांचित् वाचक:, केषांचिन्नेति । किं प्राप्तम् ? सर्वेषां वाचक इति । कुत: ? प्रकरणशब्दसामान्यात् । प्रकरणशब्द: सर्वेषां समान: राजसूयेन इति । राजा तत्र सूयते, तस्मात् राजसूय:, राज्ञो वा यज्ञ: राजसूय: । तत्प्रकरणसंनिधाने सति विशेषाभावे च सर्वेषां वाचको भवितुमर्हति । यश्च राजसूयशब्दित:, तत: फलं भवति । तस्मात् सर्वाणि प्रधानानीति ।

**टुप्**— प्रकरणे 'पष्ठौहीं दीव्यति' इत्येवमादय: उत्पद्यमाना: एव कैमर्थ्याभिलाषिण:, तेषां रूपवतां संनिधौ अरूप: शिष्यमाण: राजसूयशब्द: प्रकृताभिधेयक: । प्रकृतत्वाविशेषाच्च नावगम्यते विशेष: 'इमे उपात्ता नेमे' इति । तस्मात् ये तदभिधेया: तेषामनेन स्वाराज्यं फलं कल्प्यते न तु अप्राप्तं उत्पत्तौ फलं विधीयते । किं तर्हि ? प्राप्तमेव नियम्यते । **ननु** यागसामानाधिकरण्यात् यागेभ्य एव फलम् । **उच्यते** । राजसूयशब्द: प्रकृतमात्राभिधायी विशेषे स्थाप्यमानो बाध्यते । यागशब्दस्य तु नैव बाध: । मुख्यश्च राजसूयशब्द:, जघन्यो यजि: । अनेन तावत् तृतीयान्तेन फलकरणमुच्यते । प्रकृताश्च फलाकाङ्क्षिण: इति तदभिधायित्वम् । तस्मात् राजसूयशब्दवाच्यं फले विधीयते, यागशब्दोऽनुवाद: प्रत्ययार्थत्वेन च अवश्यं उच्चारयितव्य: । आनन्तर्याच्च राजसूयस्वाराज्ययोरेव संबन्धो युक्त: । राजसूयशब्दो राज्ञ: सव: इत्येवमङ्गीकृत्य प्रवृत्त: । राजा चास्मिन् प्रकरणे श्रूयते । तस्मात् सूयतिरपि छत्रिन्यायेन सर्वत्र प्रवर्तते । अथ अव्युत्पन्न:, अश्वकर्णन्यायेन, नतरां विशेषे ।

**अपिवाऽङ्गमनिज्या: स्युस्ततो विशिष्टत्वात् । २ ॥**

**भाष्यम्**— अपिवेति पक्षव्यावृत्ति: । या अनिज्या: ता अङ्गम्, यथा विदेवनादय: । राजसूयसंज्ञकेन यागेन स्वाराज्यं कुर्यात् इत्युच्यमाने यागेनैव स्वाराज्यं साध्यते, नायागेन । अयागाश्च विदेवनादय: । तस्मादङ्गं भवेयु: इज्यानां फलवतीनां श्रूयमाणा इति ।

**टुप्**— यजेतेति भावनावचनो यस्य पर: श्रुत:, तस्यैव श्रुत्या करणतामाह । इतरस्य वाक्येन ब्रूयात् । नामपदं च आख्यातानुसारित्वात् यत्र आख्यातं तत्र वर्तते । आख्यातं यागं ब्रवीति । तस्मात् प्रकृता यागा: फले विधीयन्ते । इतरेषां कैमर्थ्याभिलाषित्वं क्रतूपकारेण निवर्त्स्यति ।

**शा**— '**सर्वेषां प्रकृतत्वेन फलापेक्षितया तथा । राजसूयपदस्यापि समानत्वात्फलान्वय: ॥**' इति प्राप्ते, उच्यते । '**धात्वर्थानां फलैर्योगो न नाम्नामिति हि स्थितम् । यजिश्च यागमेवाह यजेस्तेन फलान्वय: ॥ राजसूयपदं चापि यज्यैकाधिकरण्यत: । यागानामेव तेनात्र यागानां स्यात् प्रधानता ॥**'



**सोम**— पूर्वस्मिन् पादे फलप्रयुक्ति: विचारिता, इदानीं फलप्रयुक्त्यपवाद: प्राधान्येन विचार्यते इति पादान्तरत्वम्, आनन्तर्यं च (**संगति:**)। **सूत्रार्थस्तु**–प्रकरणे श्रूयमाण: राजसूयशब्द: प्रकरणशब्द:, तस्य साधारण्यात् चोद्यमानानां अनङ्गत्वं सर्वेषां समप्राधान्यमिति ।

**वि**— 'राजसूयेऽनुमत्यादि देवनादि च ते उभे । मुख्ये उतैकमुख्यत्वं, स्यादाद्य: प्रक्रियैक्यत: ॥ यागानां राजसूयत्वात् अङ्गित्वं फलवत्त्वत: । देवनाद्यफलं यत् तत् अङ्गं फलवतो यजे: ॥'

**भाट्ट**— राजसूयप्रकरणे इष्टिपशुसोमयागा: अयागाश्च होमविदेवनादय: सर्वे फलाकाङ्क्षा अपि श्रुता: न स्वाराज्येन फलेन संबध्यन्ते, भावार्थाधिकरणन्यायेन यजेरेव फलभावनाकरणत्वात् अयागानां तदङ्गत्वोपपत्ते: । राजसूयपदस्य यजिसामानाधिकरण्येन तन्मात्रनामत्वाच्च । न च राजा सोम: सूयते अभिषूयते अस्मिन् इति व्युत्पत्त्या राजसूयशब्दस्य सोमयागमात्रवाचित्वात्, तेषामेव फलसंबन्धोऽस्तु इति **वाच्यम्** । राज्ञा क्षत्रियेण सूयते निष्पाद्यते इति व्युत्पत्त्या सर्वेष्वपि उपपन्नत्वेन यजिसंकोचे प्रमाणाभावात् । अत एव राजा क्षत्रिय: सुनोति स्नाति यत्र इति व्युत्पत्त्या अभिषेचनीयस्यैव तत् माहेन्द्रस्तोत्रकालाभिषेकवत्त्वसंबन्धेन राजसूयपदप्रसिद्धे:, तस्यैव फलसंबन्ध: इत्यपि अपास्तम् । उक्तव्युत्पत्त्या सर्वपरत्वसंभवे यजिसंकोचे प्रमाणाभावात् । अत: सर्वे यागा एव फलप्रयुक्ता इति विदेवनादीनां तद्विकृतौ अतिदेश: ।

**मण्डन**— 'राजमखस्य यजीतरदङ्गम् ।'

**शंकर**— 'राजसूये यजे: फलम् ।'

* एकस्मिन्नेव धानायागे गुणसंबन्ध:, फलसंबन्धश्चेति वाक्यभेद: । न च **राजसूयन्याय:** (११।४।२) एकादशे हि सर्वेषां द्रव्यदेवताप्रयाजादीनां उत्पत्तौ अन्वय: देशकालकर्त्रादीनां च प्रयोगान्वयो वक्ष्यते । **कौ.** १।४।३।३ पृ. १८३. * 'दध्नेन्द्रियकामस्य जुहुयात्' अत्र द्वितीयस्तु पूर्वपक्ष:– नात्र राजसूयन्याय:, कर्तुर्हि योगान्वयित्वात् फलस्य च विनियोगान्वयित्वात् उत्पन्नस्यापि कर्मण: प्रयोगविधौ फलविशिष्टविनियोगस्य कर्तुश्च वैशिष्ट्योपपत्ते: । प्रकृते तु दध्न: उत्पत्त्यन्वयित्वेन प्राप्तोत्पत्त्यनुवादेन गुणविधि:, फलविशिष्टविनियोगविधिश्च इति वैशिष्ट्याभावात् वाक्यभेद: । **भाट्ट.** २।२।११. * अत्र ('एतस्यैव रेवतीषु वारवन्तीय० ह्येतेन यजेत' इत्यत्र ) गुणस्य कालादिरूपत्वात् **राजसूयन्यायेन** प्रयोगविशेषणत्वम्, ( इत्येक: पक्ष: द्वितीयस्तु– ) नात्र राजसूयन्याय: प्रयोगस्य वायव्यवाक्येनैव प्राप्तत्वात्, फलान्तरश्रवणेऽपि च विविदिपावाक्यवत् विनियोगमात्रकरणेन प्रयोगान्तरस्याऽविधा- ( स्यापि विधा- ) नोपपत्ति: । **कौ.** २।२।१२।२६ पृ. २८०. * 'एतस्यैव रेवतीषु' अत्र आद्य: पूर्वपक्ष: राजसूयन्यायेन स्वकारकविशिष्टाग्निष्टोमस्तोत्रभावनाविशिष्टक्त्वाप्रत्ययार्थभूत-कालकर्त्रादिरूप– प्रयोगान्वयिगुणसत्त्वेन विनियोगविशिष्टप्रयोगविधिसंभवात् । द्वितीयस्तु पक्ष: नात्र राजसूयन्याय:, प्रयोगस्य अग्निष्टोमस्तोत्रोत्तरकालत्वस्य च वायव्यावाक्येनैव प्राप्ततया तदनुवादेन रेवतीविधि: फलोद्देशेन अग्निष्टुद्विधिश्च इति वाक्यभेदात् । **भाट्ट.** २।२।१२. * 'तस्य वायव्यासु एकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो ह्येतेन यजेत' इति वाक्येन राजसूयन्यायेन वायव्यमन्त्र-एकविंशस्तोमविशिष्टाग्निष्टोमस्तोत्रभावनोत्तरकालतादिविशिष्टो यागप्रयोग: फलोद्देशेन विधीयते । **कौ.** २।२।१२।२६ पृ. २७८. * 'दर्शपूर्णमासयो:' राजसूयन्यायेन नाम्न: संकोचकत्वानुपपत्ते: प्रकरणात् सर्वेषामेव यागानां फलसंबन्ध: । **भाट्ट.** २।२।३, * स्वर्गवाक्ये ('ज्योतिष्टोमेन स्वर्गकामो यजेत') राजसूयन्यायेन इष्टिपशुयागानामेव फलसंबन्धापत्तौ यागान्तरविधाने प्रमाणाभावात् ( सोमेन यजेत, ज्योतिष्टोमेन स्वर्गकामो यजेत इ. )। २।२।१.

* 'दध्नेन्द्रियकामस्य' इत्यत्र दधिरूपद्रव्यस्य उत्पत्तौ अन्वयेन **राजसूयन्यायाविषयत्वात्** वाक्यभेदावश्यंभावेन गुणाद् भेद एव । **कौ.** २।२।११।२५ पृ. २७४.

* **राजसूयपदं** अप्रसिद्धार्थत्वेन आख्यातपरतन्त्रं

'राजसूयेन यजेत'। **मीन्या.** * राजसूयपदं अव्युत्पन्नं अश्वकर्णादिशब्दवत् इति सांप्रदायिकाः। **मीन्या.**

* **राजसूयप्रकरणे** 'अक्षैर्दीव्यति, राजन्यं जिनाति' इति देवनादीनां अभिषेचनीयप्रयोगान्तःपातित्वात् अभिषेचनीयाङ्गत्वम्, इति **पूर्वः पक्षः**। संनिधेः, अवान्तरप्रकरणाद्वा महाप्रकरणस्य प्रबलत्वात् राजसूयाङ्गत्वमेव देवनादीनाम्, अनुष्ठानं तु अभिषेचनीयगतमाहेन्द्रस्तोत्रकाले इति विशेषः। **वि.** ३।३।१०, ४।४।२.

* **राजसूयवत्** राजसूये यथा यजिना (यागैः) फलसंबन्धः तथा दर्शपूर्णमासयोः प्रयाजादिसाधारण्येनास्तु फलसंबन्धः इति पूर्वपक्षः। **भाट्ट.** ४।४।११, * राजसूयवत् राजसूये सर्वेषां यागानां यथा फलसंबन्धः प्राधान्यं च तथा ज्योतिष्टोमेऽपि प्रायणीयादीनां सर्वेषां फलसंबन्धात् सर्वेषां प्राधान्यम्। पूर्वपक्षः। ४।४।१२.

* प्राप्तानामपि कर्मणां राजकर्तृत्वविशिष्टानां फलोद्देशेन **राजसूयवाक्ये** विधानात् प्राप्तकर्मानुवादेन गुणसंबन्धे फलसंबन्धे चापि न वाक्यभेदः। **भाट्ट.** २।२।११.

* **राजसयशब्दः** इष्टि–पशु–सोम–दर्विहोमरूपाणामनेकेषां प्रधानानां संघस्य नामधेयम्। **वि.** १०।१।३, * राजसूयशब्दः यागनामधेयम्, अप्रसिद्धार्थत्वे सति यागसामान्याधिकरण्यात्। ४।४।१, * राजसूयशब्दः 'राजा स्वाराज्यकामो राजसूयेन यजेत' इत्यत्र राजसंबन्धात् प्रवर्तमानो राजकर्तृकाणां एकप्रकरणपठितानां सर्वेषां यागानां नामधेयं भवति। ४।४।११.

* **राजसूयशब्दवाच्यानां** यागानामेव फलार्थत्वं न तु अनिज्याभूतानां विदेवनादीनाम्। ४।४।१।१–२.

* **राजसूयसंकल्पे** एव सौम्यचर्वादेः परिगणनं (संसृपामारम्भे वा) न तु उपसत्संकल्पे। **सोम.** ४।४।३

* **राजसूयसंज्ञको** यागः स्वाराज्यकामस्य उपायत्वेन चोद्यते। 'राजसूयेन स्वाराज्यकामो यजेत' इति। **टुप्.** ११।४।२५.

* **राज्यं** चत्वारोऽपि वर्णाः कुर्वाणा दृश्यन्ते। तस्मात् सर्वे राजानः। ननु च क्षत्रियसंबन्धेन राज्यं विहितम्, अन्यायेन इतरौ कुर्वाणौ न राजानौ स्याताम्। नैष दोषः, सर्वथा तावत् राज्यकरणात् ताभ्यामपि राजत्वं लब्धम्। **वा.** २।३।२।३ पृ. ५८०, * जनपदरक्षणं हि असाधारणं राजकर्म तेन तत् **राज्यं** इत्युच्यते। २।३।२।३ पृ. ५८६, * राज्ञः कर्म राज्यम्, न तु अर्थापत्त्या राज्यस्य कर्ता राजा इति कल्पनीयम्, देशान्तरे विज्ञातत्वाद्राज्ञः (द्रविडेषु)। २।३।२।३ पृ. ५८५.

* **राज्यशब्दः**। नित्ययोरेव शब्दार्थयोः नित्य एव संबन्धे शाश्वतः प्रतीयमाने, साधुत्वप्रतिपत्तिवेलायां राजशब्दमन्वाख्याय राजशब्दोऽन्वाख्यायमानो यौगिकः तन्निमित्तश्चोच्यमानोऽपि नित्यनिमित्तत्वात् न आदिमत्त्वं प्रतिपद्यते। **वा.** ३।७।१९।४० पृ. ११०५. * **राज्यशब्दं** जनपदपुरपरिरक्षणे, ततश्चोद्धरणे (कण्टकानां) आर्यावर्तनिवासिनः प्रयुञ्जते। राज्ञः कर्म राज्यं इति च अभियुक्ता उपदिशन्ति। **भा.** २।३।२।३. * **राज्यशब्दस्यापि** नहि आदिमती प्रवृत्तिः इत्युक्तं (२।३।२) इत्यत्र। **वा.** ३।३।६।१३ पृ. ८२१.

* **राज्यशब्दाभिधेयं** परिपालनादि कर्म क्षत्रियस्य इति मन्वादयः स्मरन्ति। **वा.** २।३।२।३ पृ.५८४.

**'रात्रौ दीपशिखाकान्तिर्न भानावुदिते सति' इति न्यायः।** यथा सूर्योदये दीपशिखा न शोभते, तथा गुणवत्तरसंनिधाने गुणवान्नाद्रियते इत्यर्थविवक्षायामस्य प्रचार इति। **साहस्री.** ७९८.

* **रात्रीज्याधिकरणम्।** पौर्णमास्याः द्र्यहकालत्वे पूर्वेद्युरुपवासः, परेद्युर्यागः। परेद्युरपि रात्रौ एव यागः इति पूर्वपक्षः। दिवसे एव इति सिद्धान्तः। **संकर्ष.** ३।१।३.

* **रात्रिपर्यायेषु** ग्रहचमसानां समुच्चय एव न विकल्पः। **संकर्ष.** ३।३।१६.

* **रात्रिविषये** एकदेशवचनं 'द्विरात्रेण यजेत, त्रिरात्रेण यजेत, चतूरात्रेण यजेत, पञ्चरात्रेण यजेत, षड्रात्रेण यजेत, सप्तरात्रेण यजेत, अष्टरात्रेण यजेत, नवरात्रेण यजेत, दशरात्रेण यजेत, एकादशरात्रेण यजेत' इति। समस्तग्रहणं यथा– 'द्वादशाहेन प्रजाकामं याजयेत्' इति। **भा.** १०।५।१।१.



* **रात्रिशब्दः** अहोरात्रवचनः, अहःशब्दोऽपि। द्विरात्रादयो अहीनाः। द्वादशाहः। **भा.** ८।१।१०।१७. * रात्रिशब्दः द्विरात्रादिपदान्तर्गतः षष्टिघटिकात्मकदिनपरः। **वि.** ८।१।१०, * रात्रिशब्दः 'सत्रं' इत्यस्मिन्नर्थे समुदायप्राधान्येन, 'त्रयोदशरात्रः' इत्येकवचनान्तेन प्रयुज्यते। क्वचित्तु प्रत्येकं रात्रिव्यक्तिप्राधान्येन 'य एता विंशतिं रात्रीरपश्यन्' इति बहुवचनान्तोऽपि प्रयुज्यते। ४।३।८.

* **रात्रिसत्रं** नाम न कश्चित् सत्रविशेषः, किंतु त्रयोदशरात्रचतुर्दशरात्रादीनि यानि सत्राणि तान्येव रात्रिसत्रशब्देन व्यपदिश्यन्ते। **वि.** ४।३।८. * **रात्रिसत्रे** आर्थवादिकं प्रतिष्ठादिरूपं फलं ज्ञेयम्, न तत्र स्वर्गः कल्पनीयः। 'प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्ति, ब्रह्मवर्चस्विनोऽन्नादा भवन्ति य एता उपयन्ति' इत्यर्थवादः। ४।३।८।१७–१९. * रात्रिसत्रे यथा वाक्यशेषेणार्थवादेन श्रुता प्रतिष्ठा फलत्वेन कल्पिता (तथा अत्रापि)। **वि.** ३।४।१२.

**रात्रिसत्रन्यायः।** यत्र विधिवाक्ये फलं न श्रूयते, तत्र अर्थवादवाक्योक्तं फलमतिदिश्यते इत्यर्थवादातिदेशः, अयमेव रात्रिसत्रन्यायस्य विषयः। अत एव रात्रिसत्राधिकरणे 'प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्ति' इत्यत्र विध्युद्देशे फलाश्रवणात् फलमन्तरेण च विधिश्रुतेरनुपपत्तेरवश्यं फले कल्पयितव्ये 'आर्थवादिकं प्रतिष्ठाख्यं फलम्' इत्युक्तमिति दिक्। **साहस्री.** ८५८.

**रात्रिसत्रन्यायः॥**

**क्रतौ फलार्थवादमङ्गवत्कार्ष्णाजिनिः। ४।३।८।१७॥**

**भाष्यम्––** रात्रीः प्रकृत्य श्रूयते 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति। ब्रह्मवर्चस्विनोऽन्नादा भवन्ति, य एता उपयन्ति' इति। तत्र संदेहः किं ते फलार्थवादा उत फलविधय इति। किं प्राप्तम्? फलार्थवादा इति कार्ष्णाजिनिर्मेने। कुतः? फलार्थवादसरूपा एते शब्दा इति। किं सारूप्यम्? विधिविभक्तेः अभावः। अङ्गवत्। यथा 'यस्य खादिरः स्रुवो भवति स छन्दसामेव रसेनावद्यति' इत्येवमादिषु।

**टुप्––** रात्रीणां विधीयमानानामर्थवादोऽयम्, भवितव्यं च कर्मणः फलेन, तस्मात् स्वर्गः फलमिति। विधिविभक्तेरभाव इति कामशब्दाभाव इत्यर्थः। अथवा साध्यसाधनसंबन्धाभाव इति।

**फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात्। १८॥**

**भाष्यम्––** आत्रेयः पुनराचार्यः एवंजातीयकेभ्यः फलमस्तीति मेने, न फलार्थवाद इति। कुतः? अश्रुतफलत्वेऽपि अमीषां फलचोदनया वाक्यशेषभूतया भवितव्यम्। तस्मात् अन्या व्यवहिता सती, अव्यवहिता कल्पनीया। इयं त्वव्यवहिता क्लृप्तैव। प्रतिष्ठया ब्रह्मवर्चसत्तया च समभिव्याहार आसां प्रत्यक्षः। विधिविभक्तिमात्रमन्यतोऽपेक्ष्यम्। आह। कथं केवलं विधिविभक्तिमात्रमन्यतो भविष्यति। यदनेन प्रतिष्ठादिना धात्वर्थेन संभन्त्स्यते इति। उच्यते। सह धात्वर्थेन भविष्यति, न केवलम्। तस्मात् अदोषः। अथवा रात्रीणां या विधायिका विभक्तिः, सा इममपि प्रतिष्ठादिविशेषं विधास्यति प्रयोगवचनेन। स्तुतिर्वा सह प्रतिष्ठादिभिर्विधात्री भविष्यतीति।

**टुप––** कर्मणः फलेन भवितव्यम्। तत्र किं स्वर्गपदमध्याहृत्य तेन सहैकवाक्यता, उत प्रतिष्ठापदैकदेशं विपरिणम्य प्रतिष्ठादेः फलत्वम्। संनिधानस्य क्लृप्तत्वात् प्रतिष्ठादेरेवैकवाक्यता कल्प्या। स्वर्गाध्याहारे हि संनिधानमेकवाक्यता चोभयं कल्प्यम्। तत्र गौरवम्। 'विधिविभक्तिमात्रमन्यतोऽपेक्ष्यमिति' साधनसङ्गतय एवमादिग्रन्थः। पूर्वेण प्रतिष्ठादि साधितं साध्यम्। उत्तरेण तु 'उपयन्ति' इति वर्तमानापदेशात् लिङध्याह्रियते साधनत्वप्रतिपत्तये। 'आह–कथं केवलं विधिविभक्तिमात्रमन्यतो भविष्यति, यदनेन प्रतिष्ठादिना धात्वर्थेन संभन्त्स्यते इति। प्रतिष्ठादि'इत्यनेन उपयन्तीत्ययं धात्वर्थो लक्ष्यते। एवं परिचोदित आह–यत्साध्यसाधनसंबन्धं समर्थं कर्तुं तत्सहैव धातुनाऽध्याहरिष्यामः, उपेयुरिति। अथवा रात्रीणां य उत्पत्तिप्रयोगवचनः स यथा इतिकर्तव्यता-

संबन्धमपेक्षते तथा स एव साध्यसाधनसंबन्धं करिष्यति। यथा 'एकस्मै कामायान्ये यज्ञक्रतव आह्रियन्ते। सर्वेभ्यो ज्योतिष्टोमः' इत्येतस्मात् वाक्यात् लिङोऽभावेऽपि ज्योतिष्टोमः सर्वकामानां साधनं भवति। तथाहि, उत्पत्तौ या लिङ् सा साधनत्वेन ज्योतिष्टोमं विधास्यति, एवमिहापि। अथवाऽर्थवादोऽविनाभावाद्विधिं लक्षयति। स लक्षितः साध्यसाधनसंबन्धं प्रतिपादयिष्यति। तस्मादर्थवादेभ्यो विधिः। विपरिवर्तमानाश्च त एव फलतां प्रतिपत्स्यन्ते। तस्मात् 'स स्वर्गः स्यात्' इत्यस्यायमपवादः।

**अङ्गेषु स्तुतिः परार्थत्वात्। १९॥**

**भाष्यम्—** अथ यदुक्तं यथा 'यस्य खादिरः स्रुवो भवति' इत्येवमादिषु फलश्रुतिरर्थवादो भवति, एवमिहापि स्यादिति। युक्तं तत्र फलार्थवादः। फलविध्यसंभवात्, फलार्थवादसंभवाच्च। तदुक्तं 'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्' इति।

शा— '**अपापश्लोकवत्तत्र वर्तमानापदेशतः। फलविध्यसमर्थत्वात्तद्वदेवार्थवादता॥ अनादिष्टफलत्वेन तस्मात्स्वर्गफलार्थता। निर्देशात्तु प्रतिष्ठैव फलत्वेन विनम्यते॥ जुह्वन्नैव कर्मैतन्निराकाङ्क्षं फलं प्रति। कल्पनीयं फलं तत्र विनामोध्याहृतेर्वरम्॥**' (विनामः विपरिणाम इत्यर्थः)।

**सोम—** **सूत्रार्थस्तु—** क्रतौ रात्रिसत्रादिके फलश्रुतिं पर्णतादावङ्ग इव फलार्थवादं कार्ष्णाजिनिराचार्यो मन्यते इति।

**वि—** 'स्वर्गाय वा प्रतिष्ठायै रात्रिसत्रमिहाऽऽदिमः। पूर्ववत्स्यात्प्रतिष्ठा च श्रुता तेनाश्रुताद्वरम्॥'

**भाट्ट—** 'ज्योतिर्गौरायुः' इत्यादिवाक्योत्पादितानि सौत्यानि कर्माणि विधाय 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इति श्रुतम्। तत्र रात्रिसत्रादौ पूर्ववत् स्वर्गकल्पने स्वर्गोपस्थितिः तद्वाचकपदोपस्थितिः कामपदान्ततत्कल्पना चेति गौरवापत्तेः, लाघवात् श्रुतप्रतिष्ठादेरेव भाव्यत्वकल्पनम्। तत्र त्वियं व्यवस्था यत्र श्रुतानामेव पदानां लक्षणया फलपरत्वसंभवः, यथा उदाहृतवाक्ये तिप्रत्ययस्य लडर्थकत्वं कल्पयित्वा भविष्यत्कालवृत्तित्वेन साध्यत्वावगतौ प्रतिष्ठादिस्वाभाव्यादीप्सितत्वसिद्ध्या भाव्यत्वम्, धातोरेव वा सन्नन्तत्वं परिकल्प्य इच्छाविषयत्वावगतौ स्वर्गादिवदेव साध्यत्वावगतिः। तत्र प्राथमिकफलापेक्षायां श्रुतवाक्यस्यैव लक्षणया फलपरत्वे प्रमिते पश्चात् स्तुत्यपेक्षायामप्रातबललब्धविधेरेव स्तावकत्वम्। यत्र तु श्रुतेष्वर्थवादपदेषु न स्तावकत्वकल्पनं विना फलपरत्वमात्रेणोपपत्तिः 'यदष्टाकपालो भवति गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति' इत्यादौ, तत्र तेषां स्तावकत्वमेव। फलापेक्षायां तु उपस्थितपदसमानजातीयपदान्तरस्यैव कामपदयुक्तस्य कल्पनेति सर्वदा न स्वर्गप्रयुक्तत्वम्।

**मण्डन—** 'रात्रिसत्रे फलं स्तुतौ।'

**शंकर—** 'फलं रात्रिष्वर्थवादात्।'

* **रात्रिसत्रन्यायेन** अर्थवादावगतानि पूतत्वादीनि (वैश्वानरेष्टौ) प्रवृत्तिजनकानि स्युः। सु. पृ. ४९०, * रात्रिसत्रन्यायेन अर्थवादत्वेनोपयुक्तानां पूतत्वादिफलवचनानां परावर्त्य फलपरत्वकल्पनेऽपि अष्टत्वादीन् प्रति फलं नास्ति। पृ. ४९१. * रात्रिसत्रन्यायेन वाक्यशेषमन्त्रवर्णाद्यवगता देवतातृप्तिरेव द्वारमिति कल्पयितुं युक्तम्, न त्वत्यन्ताप्रतीतापूर्वकल्पनम् (पूर्वपक्षे)। **शा.** ९।१।४. * एतेन— 'तृप्त एवैनमिन्द्रः प्रजया पशुभिश्च तर्पयति' इत्यर्थवादोपात्तस्य देवताप्रसादस्यैव **रात्रिसत्रन्यायेन** द्वारत्वोपपत्तेः, न अनुपस्थितापूर्वकल्पनं युक्तं—इति वेदान्तिमतमपि प्रत्युक्तम्। ततोऽपि उपस्थिततरध्वंसद्वारकत्वेनैव नैराकाङ्क्ष्ये रात्रिसत्रन्यायावतारः। **कौ.** २।१।३।६ पृ. ४७. * 'घर्मेण पापमपनुदति' इत्यादिवाक्यशेषात् रात्रिसत्रन्यायेन पापक्षय एव नित्यनैमित्तिकस्थले फलम्। **भाट्ट.** २।४।९. * 'नैवारश्चरुर्भवति'—'चरुमुपदधाति' तत्र पूर्वपक्षे नैवारवाक्ये चरुरूपस्य द्रव्यस्य, आथर्वादिक्याश्च बृहस्पतिदेवतायाः रात्रिसत्रन्यायेन विधेयत्वम्। **कौ.** २।३।७।१८ पृ. ५२. * 'ब्रह्म वेद ब्रह्मैव भवति' इति सिद्धवदर्थवादादवगतस्यापि ब्रह्मभवनस्य, नियोज्यविशेषाकाङ्क्षायां ब्रह्मबुभूषोर्नियोज्यविशेषस्य रात्रिसत्रन्यायेन प्रतिलम्भः। **भामती.** १।१।४ वर्णकं १. * 'यदष्टाकपालो भवति, गायत्र्यैवैनं पुनाति' अत्र फलापेक्षायां रात्रिसत्रन्यायेन पूतत्वादिकं फलत्वेन कल्प्यते। **कौ.** १।४।१२।२१. * लिङ्गविरोधिना प्रकरणेन पारार्थ्यनिर्णानाद्वाक्तेः फलसमर्पकता रात्रिसत्रन्यायेन पूर्वपक्षयितुं शक्या। **सु.** पृ. १४६५. * 'वैश्वानरं द्वादशकपालं०' इत्यत्र अष्टाकपालादिपदस्य नामधेयत्वाभावे, 'गायत्र्यैवैनं' इत्याद्यर्थवादत्वस्याङ्गीकारात्, तस्य च रात्रिसत्रन्यायेन फलपरत्वाभ्युपगमः। पूर्वपक्षे आद्ये। **कौ.** १।४।१२।१७. * सत्यां फलाकाङ्क्षायां 'शतेन यातयात्' इत्यादिवाक्यशेषेण रात्रिसत्रन्यायेन फललाभः अपगोरणादेः। **कु.** ३।४।१०।२३. * 'स्वाध्यायोऽध्येतव्यः' इति स्वाध्यायाध्ययनेन भावयेत् किमिति तत्र विश्वजिद्वत्फलं न कल्प्यते। न च 'रात्रिसत्रन्यायेन' अर्थवादतः फलम्। भवितव्यं च फलेन। तस्मात् स्वाध्यायाध्ययनेन यदवबोध्यते तदत्र फलम्। **टुप्.** ५।१।४।६.

* **रात्रिसत्रन्यायाशयः।** 'क्रतौ फलार्थवादमङ्गवत् कार्ष्णाजिनिः' (४।३।८।१७) इति पूर्वपक्षसूत्रे, विषयत्वेनोक्ते क्रतौ 'प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्ति' इत्यर्थवादावगतमेव फलमात्रेयो मन्यते। तस्य क्रियया सह गुणगुणिसंबन्धनिर्देशेन क्लृप्तसामान्यसंबन्धत्वात् इति वक्ष्यति। **सु.** पृ. १४८१.

* **रात्रिसत्रप्रतिष्ठावत्।** न च फलापेक्षायां अन्यार्थमभ्युपात्तस्योपस्थितत्वात् रात्रिसत्रप्रतिष्ठावत् तद्वाचकपदान्तरकल्पनया पौर्णमासीमात्रार्थत्वं वैमृधस्येति वाच्यम्। (पूर्वपक्षः)। **भाट्ट.** ४।३।११.

* **रात्रिसत्रस्थले** (४।३।८।१७-१९) प्रकरणान्तरेण फलाकाङ्क्षाया अशान्तेः, अगत्या स्तुतिसमर्पकस्यैवार्थवादस्य फलसमर्पकत्वम्। **सोम.** १।२।२.

* **'रामरावणयोः युद्धं रामरावणयोरिव'।** अनन्यत्वेन सुतरां स्तुतिर्भवति अनन्यसंभविचरितत्वात्। भवति हि लोके काल्पनिकं अवस्थादिगतभेदमाश्रित्य एवमपि स्तुतिः। संभवति भेदे न युक्ता। **वा.** १।४।४।५ पृ. ३३६.

* **रामवत्** क्रतुप्रयोगः भीष्मस्य अपत्नीकस्य धर्मव्यतिक्रमः। **वा.** १।३।३।७ पृ. २०४। **सुधा**—रामवत् इत्यनेन तस्यापि पत्नीत्यागेन एकाकिनः क्रतुप्रयोगात् धर्मव्यतिक्रमः सूचितः। पृ. १८५। (**अत्रोत्तरम्**—) रामस्य स्नेहवशात् अपत्यकृतपित्रानृण्यस्य यागसिद्धिः, हिरण्मयसीताकरणं च लोकापवादभिया त्यक्तसीतागतानृशंस्याभावाशङ्कानिवृत्त्यर्थम्। **वा.** पृ. २०८। **सुधा**— रामेण सीतास्नेहात् भार्यान्तरागमनव्रतग्रहणात्। साक्षादपत्याभ्यां कुशलवाभ्यां कृतपित्रानृण्यो रामः। ननु रामस्य धर्मार्थदारान्तरसद्भावे 'यज्ञेयज्ञे प्रकुरुते सीतां पत्नीं हिरण्मयीम्' इति हिरण्मयीसीताकरणमनर्थकं स्यादित्याशङ्क्याह—हिरण्मयीति। अपवादभीत्या त्यक्ता या सीता तद्गतं तद्विषयं यदानृशंस्यं अनैष्ठुर्यं तदभावाशङ्कानिवृत्त्यर्थमित्यर्थः। 'रावणापहारदूषितां सीतां रामो भजते' इति लोकापवादभयमात्रेण असौ त्यक्ता, न सीताया दुष्टत्वात्, नापि रामस्य सीतायां नैष्ठुर्यात् इति द्योतयितुं लोकापवादभीतिं प्रति त्यागस्य नित्यसापेक्षत्वदर्शनाय त्यक्तशब्दस्य सीताशब्देन सह सापेक्षसमासः कृतः। पृ. १९२.

* '**रायोवाजीयं** वैश्यस्य ब्रह्मसाम कुर्यात्' इति ज्योतिष्टोमे नैमित्तिकमेव न नित्यम्। **भा.** ४।३।२।४, * 'रायोवाजीयं वैश्यस्य ब्रह्मसाम' द्वादशाहे। ६।६।३।१७.

* **राष्ट्रभृतः** नाम होमा दर्विहोमाः। **वि.** ८।४।४. [एते होमाः अनेकफलार्थं विहिताः यथा—(तैसं. ३।४।८) अधिदेवने, अभिचरतः, आत्मोत्कर्षार्थम्, उन्मादपरिहाराय, ओजस्कामस्य, ग्रामकामस्य ज्येष्ठबन्धोरपभूतस्य सतः इत्यादि]। * **राष्ट्रभृतां** अग्निप्रकरणे उत्पन्नानां उद्वाहे उपदेशः 'राष्ट्रभृतो जुहोति' इति। **भा.** ७।१।१।१२, * राष्ट्रभृतां उद्वाहकर्मसु वचनादतिदेशः। ८।४।५।२८.

* **राष्ट्रभृद्धोमाः** अनारभ्यश्रुताः वैदिककर्माङ्गम्। **वि.** ३।४।१३, * राष्ट्रभृद्धोमाः 'ऋताषाडृतधामाग्निर्गन्धर्वः' (तैसं. ३।४।७) इत्यादिभिर्मन्त्रैः क्रियमाणा होमाः। ते च वैदिकेष्वेव कर्मसु, न लौकिकेषु कृष्यादिषु। ३।४।१३.

**राष्ट्रभृद्धोमेषु ' ताभ्यः स्वाहा ' इत्येव द्वितीयोद्वितीयो मन्त्रः ॥**

' ऋताषाड् ऋतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्मक्षत्रं पातु, ता इदं ब्रह्मक्षत्रं पान्तु तस्मै स्वाहा ताभ्यः स्वाहा ' इति मन्त्रे स्त्रीपुंसलिङ्गकपदानां व्यतिषक्तानां यथार्थं विनिष्कृष्य मन्त्रद्वयीकृत्य ( 'ऋताषाड् ऋतधामा गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा ' इति प्रथमो मन्त्रः । ' ता इदं ब्रह्म क्षत्रं पान्तु ताभ्यः स्वाहा ' इति द्वितीयः इति ) होमद्वये विनियोगः । ' या ते अग्ने ' इति मन्त्रत्रये ' तनूः ' इत्यंशस्य सकृदाम्नातस्यापि आवृत्त्या विनिष्कर्षदर्शनात् । ' नमो रुद्रेभ्यो ये पृथिव्यां येऽन्तरिक्षे ये दिवि ' इति मन्त्रस्य होमे विनियोगे पृथिव्यन्तरिक्षद्युपदानां अन्नवातवर्षपदैः व्यतिषक्तानामपि विभजनदर्शनात् । **इति प्राप्ते**, स्वाहापदस्य सकृदाम्नानानाम्नानाम्यां मन्त्रान्तरयोराकाङ्क्षावशेन होमसंख्यावशेन च तत्रतत्र विनिष्कर्षेऽपि द्विराम्नातस्वाहाकतया ' ताभ्यः स्वाहा ' इति मन्त्रस्य निराकाङ्क्षतया च तावानेव भिन्नो मन्त्रः । तच्छब्दबलेन ' ता इदं ' इत्यादेरपकर्षे तत्तच्छब्दवशेन सर्वाशस्यापकर्षापत्त्या ' तस्मै ताभ्यः स्वाहा ' इति पाठेनैव तादृशमन्त्रद्वयसिद्ध्या स्वाहाकारान्तरवैयर्थ्यापत्त्यैव तावन्मात्रस्य भिन्नमन्त्रत्वानुमानात् । ( केचिद्याज्ञिकास्तु नैतदोचयन्ते ) । **संकर्ष.** २।४।२६.

**रासभरुतन्यायः ।** यथा गर्दभशब्दः आदावत्युच्चैरुपश्रूयते, पश्चात् मन्दतां प्राप्नुवन् क्रमेण परिक्षीयते, तथा नीचप्रीतिरपि पुरा वृद्धिं प्राप्य पश्चात्क्रमेण क्षीयते इति भावः । **साहस्री.** ३३०.

**राहोः शिर इति न्यायः ।** अयं न्यायो भाष्यप्रदीपभाष्यप्रदीपोद्योतयोः कैयटनागोजिभट्टाभ्यामुदाहृतः । अत्र कैयटः—' यथा राहोः शिरः इत्येकस्मिन्नपि वस्तुनि शब्दार्थभेदाद्भेदव्यवहारः, एवमिहापि व्याकरणशब्देन शास्त्रस्य व्याकृतिक्रियायां करणरूपत्वमुच्यते । सूत्रशब्देन तु समुदायरूपतेति भेदव्यवहार उपपद्यते ' इति । अत्र शब्दार्थभेदादिति प्रतीकमादाय नागेशः—' अनेकावस्थायुक्तं शिरो राहुशब्दार्थः, यत्किञ्चिदेकावस्थायुक्तं शिरःशब्दार्थः, तादृशराहुशब्दार्थस्य तादृशशिरःपदार्थोऽवयवः ' इति षष्ठ्यर्थोपपत्तिरिति भावः । **साहस्री.** ४६०.

* **रुक्कामः** ' अग्नये वैश्वानराय द्वादशकपालं निर्वपेत् ' । **भा.** ३।२।७।२०.

* **रुक्कामेष्टिः**— तेजस्कामेष्टिः– आग्नेयेष्टिः इत्येकैव । ' आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः ' इति । रुक्कामः तेजस्कामः । **वि.** २।३।१२.

* **रुक्मधारणं** अग्निचयने । कण्ठे धृतः सन् उरसि लम्बमानः सौवर्ण आभरणविशेषो रुक्मं नाम । उखास्थितोऽग्निः शिक्येऽवस्थापितः, कण्ठे धार्यमाणः उरःप्रदेशं यथा न दहेत् तथा व्यवधायकत्वेन यद्धारणं तत् रुक्मधारणम् । तच्च वपनादिसंस्कारोत्तरं कार्यम् । **वि.** ५।२।१२, * रुक्मधारणं अग्निचयने दीक्षणीयादेरूर्ध्वमाम्नातम् । दीक्षणीयानन्तरभाविनश्च वपनादयः संस्काराः चोदकप्राप्ताः । तत्र आदौ संस्काराः पश्चात् रुक्मधारणं कार्यम् । ५।२।१२.

* **रुक्मप्रतिमोचनं** चयने उख्याग्नेः शिक्ये आसज्य कण्ठे धारणे क्रियमाणे उरःप्रदेशदाहाभावाय व्यवधानार्थम् ' रुक्ममन्तरं प्रतिमुञ्चते ' इति विहितं एकविंशतिनिर्बाधसौवर्णाभरणविशेषधारणं रुक्मप्रतिमोचनशब्दार्थः । **सोम.** ५।२।११.

* **रुक्मप्रतिमोचनादि** अग्निचयने दीक्षितसंस्कारेभ्यः परस्तात् कर्तव्यम् । ५।२।१२।२३. **मीको.** पृ. ४६ 'अग्निचयने रुक्मप्रतिमोचनादि०' इत्यत्र द्रष्टव्यम् ।

* **रुक्मिणीपरिणयनं** सुभद्रापरिणयेन व्याख्यातम् । **वा.** १।३।३।७ पृ. २१०.

* **रुचिः**— उत्कटा इच्छा । **सोम.** १।२।१ पृ. ७.

* **रुद्रः** अग्निः । 'त्वमग्ने रुद्रो असुरो महो दिवः' इत्यादौ अग्नौ प्रयोगदर्शनात् ' रुद्रो वा एष यदग्निः ' इति चार्थवाददर्शनात्, ' रुद्रमग्निं द्विजाः प्राहुः ' इति च आरण्यके पर्वणि कुमारसंभवोपाख्याने दर्शनात् । **सु.** पृ. ५६–५७. * रुद्रः इति रोदननिमित्तस्य शब्दस्य दर्शनात् ' यदरोदीत्तत् ' इत्युच्यते । **भा.** १।२।१।१०.

* ' **रुद्रायैकां** गां दद्यात् ' इत्यादौ यथा– गवानुवादेन



संख्यामात्रविधिः, एवं ' चतुरो मुष्टीन् निर्वपति ' इत्यत्र मुष्ट्यनुवादेन संख्याया विधानं संख्यानुवादेन मुष्टेर्वा विधानं इति पूर्वः पक्षः । **सोम.** ५।२।२.

* **रुद्र–शब्दः** रोदितेः रोदनार्थत्वात्, रक्प्रत्ययस्य च कर्त्रर्थत्वात्, रोदनकर्तृवाची व्याकरणादवगम्यते । **सु.** पृ. ५६.

* **रूढः** शब्दः – कुशलः, प्रवीणः, अश्वकर्णः, अपरिमितः । **भा.** ६।७।१०।२२.

* **रूढत्वं** (पदस्य) समुदायशक्त्या अर्थप्रत्यायकत्वम् । यथा ' घटः ' इत्यादौ । **मणि.** पृ. ७८.

* **रूढिः** अक्लृप्ता योगेन बाध्यते । यथा प्रोक्षणीशब्दे । **बाल.** पृ. १४५.

**रूढिर्योगमपहरतीति न्यायः ।** यथा– यत्राऽन्यत्रातिप्रसक्तादवयवार्थालोचने सव्यपेक्षाच्च योगात्समुदायशक्तेः प्राबल्यं विवक्ष्यते, तत्रायं प्रवर्तते । यथा गौरित्यादावन्यत्राऽतिप्रसक्तप्रकृतप्रत्ययार्थालोचनसव्यपेक्षा–गमनकर्तृत्वादिरूपयोगार्थत्यागेन रूढ्या सास्नालाङ्गूलककुदखुरविषाणादिमती व्यक्तिर्गृह्यते, तथा– ' वर्षासु रथकारोऽग्नीनादधीत ' इत्यत्र रथकारशब्देन जात्यवेश्योत्पन्नो वर्णविशेष उच्यते, न तु रथं करोतीति व्युत्पत्त्या द्विजातिरिति संक्षेपः । रूढिस्तु– स्वरूपेण, जात्या, गुणेन वा निर्देशार्हे वस्तुनि संज्ञासंज्ञिसंकेते प्रवर्तते । यथा–डित्थः , डवित्थः , गौः शुक्ल इति । ' डित्थः काष्ठमयो हस्ती डवित्थस्तन्मयो मृगः ' इति । योगस्तु प्रकृतिप्रत्यययोगलभ्यार्थवाचके– यौगिक इत्यपरपर्यायशब्दे । यथा– आदितेयादिशब्दा यौगिका इति । अत्राऽदित्या अपत्यमिति ' कृदिकारादक्तिनः ' इति ङीपन्तात् ' स्त्रीभ्यो ढक् ' इति ढक्प्रत्ययेन केवलं योगार्थ एवेति । **साहस्री.** २३३.

* ' रूढिर्योगमपहरति ' इति **न्यायात्** एक एव उद्गाता तेन च बहुवचनोपपत्तये प्रत्यासन्ना उपलक्ष्यन्ते । **वि.** ३।५।८. * रूढिः योगाद्बलवती, योगस्यावयवार्थालोचनसव्यपेक्षत्वात् । **मीन्या.** * रूढिः योगाच्छीघ्रबुद्धिहेतुः । **चि.** ३।३।१३. * **रूढ्या** क्लृप्तया योगो बाध्यते, यथा रथकारः । **बाल.** पृ. १४५.

* **रूढि–योग–विचारः ।** क्लृप्तावयवार्थप्रत्यभिज्ञाने समुदायशक्तिकल्पनाऽयोगः । **सु.** पृ. १२००.

* **रूढिशब्दानां** सर्वत्र जातिवचनत्वम् । **वा.** ३।१।६।१२ पृ. ६७४.

* **रूढिशब्दलक्षणायाः** समाख्यायाः विनियोजकत्वं नाभ्युपगम्यते । **सु.** पृ. ११९३.

* **रूढिसादृश्यहेतुकस्य** उपस्थापनस्य आतिदेशिकधर्मान्वियासमर्थता । **सु.** पृ. १२०२.

* ' **रूपं** वाऽशेषभूतत्वात् ' । (७।३।११।२९) इति ( जाघनी ) यथाकथंचिदुत्पन्ना येनकेनचिदुपादाय शक्या अनुष्ठातुम् । **वा.** ३।३।१०।२३, ' रूपं वा० ' इत्याहवनीयादिस्वरूपं अतिदिश्यते न इष्टयः । ३।६।६।१७. * ' रूपं वाऽशेषभूतत्वात् ... ' यथा कर्मजे अनसि वाससि वा अनोवासोरूपमेव प्राप्यते न तदुत्पादकं कर्म, अनोवासःशब्दयोः संस्कारनिमित्तत्वाभावेन कर्मणः अशेषत्वात् ( शेषत्वाभावात् ) तथा आहवनीयादिशब्दानां संस्कारजनकस्य आधानस्य अग्निहोत्राद्यशेषतया आहवनीयादिश्रुत्या कर्मजेऽपि आहवनीयादौ विहिते, जन्यं आहवनीयादिरूपमेव आप्यते नोत्पादकमाधानम् । इति न्यायसाम्यम् । **सु.** पृ. ९१७, * केवलेनापि स्रुवेण द्रवावदानोपपत्तेः आयसस्य अनुग्राहकत्वकल्पनाऽयोगात् स्वधितेश्च **'रूपं वा०' इत्यनेन न्यायेन** वासोवत् लोकसिद्धस्य चोपादेयत्वात् कोटरकरणेन ( स्वधितौ ) सामर्थ्याधीनकल्पनानुपपत्तेः, सामर्थ्यात् व्यवस्थितविषयत्वकल्पना युक्ता । पृ. ५३०. * तेषां तु ( अग्निहोत्रादिकर्मणां ) ' रूपं वा० ' इत्यनेनैव न्यायेन आहवनीयादिग्रहणमात्रपर्यवसानात् न कश्चिदपि आधानाङ्गत्वप्रतिपादने हेतुरस्ति । **वा.** २।३।३।४ पृ. ५९०. * ' **रूपादुत्तरकाले हि विनियोगप्रयोजने** ' **इत्यनेन न्यायेन** अदृष्टप्रयोजनभेदाभेदयोर्मन्त्रभेदाभेदपूर्वकत्ववत् कर्मभेदाभेदपूर्वकत्वावगतेः, नापूर्वैक्येन एकार्थेऽपि एकवाक्यकल्पना युक्ता । **सु.** पृ. ७०५. * ' रूपात् प्रायात् ' ( १।२।१।११ ) इति अर्थवादनिमित्तं कथितम् । **वा.** १।४।१२।२३–१ पृ. ३५४ । यथासंभवं गुणवादनिमित्तत्वाभिधानम् ।

सु. पृ. ४९२, रूपप्रायेति वक्तव्ये विभक्तिनिर्देशः प्रदेशविशेषज्ञापनार्थः । पृ. ४९३.

* **‘ रूपाभेदेऽपि** हिंसादेर्भेदः अज्ञानज्ञकारितः’ । रूपभेदाभावेऽपि चोदिताचोदितत्वाद्युपाधिभेदसद्भावात् ‘ रूपा० ’ इति न्यायेन निमित्तत्वव्यवस्था युक्ता । **सु.** पृ. १५०३.

* न च **रूपादिप्रत्ययेन** न द्रव्यं प्रत्याच्यते । गम्यते हि धूमादिनेव अग्निः, अविनाभावाद् द्रव्यम् । **वा.** ३।१।६।१२ पृ. ६८४.

* **रूपग्रहणशक्तिः** चक्षुषो न विरुध्यते सामान्यमनित्यत्वमगृह्णतोऽपि । **वा.** ३।४।४।१३ पृ. ९४०.

* **रूपतः** विशेषग्रहणं – ( द्रव्यदेवताख्यरूपतः ) पृषदाज्यद्रव्यकैरनुयाजैः केवलाज्यद्रव्यकाणामनूयाजानां पौरोडाशिकानां प्रसङ्गसिद्धौ । **बाल.** पृ. १४७.

* **रूपभेदात्** द्रव्यदेवतालक्षणात् आमिक्षावाजिनयागयोर्भेदः । **भा.** २।२।९।२३.

* **रूपरसादिशब्दाः** केवलगुणवचनाः । यदा तेषां द्रव्येषु प्रयोगः, तदा न मत्वर्थीयेन विना प्रवर्तन्ते । **वा.** ३।१।६।१२ पृ. ६८१.

* **रूपवतां संनिधौ** अरूपः शिष्यमाणः प्रकृतग्राहकः । **टुप्.** ७।१।१।३.

* **०रूपशब्दाविभागाच्च०** (६।३।३।१२) । नहि कर्मणां रूपमुपलभामहे इत्ययुक्तं ‘ रूप० ’ इत्यत्र प्रत्यक्षोपलब्ध्यमिधानात् । **वा.** २।१।२।५ पृ. ४००.

☒ **रूपसामान्यन्यायः** । तद्यथा– तानेव शाटकानाच्छादयामो ये मथुरायाम्, तानेव शालीन् भुञ्ज्महे ये मगधेषु, तदेवेदं भवतः कार्षापणं यन्मथुरायां गृहीतमित्यादि । अन्यस्मिँश्चान्यस्मिँश्च रूपसामान्यात्तदेवेदमिति भवतीति ‘ अइउण् ’ इति सूत्रमहाभाष्ये उक्तः । **साहस्री.** ६०२.

* **‘ रूपस्पर्शादयो** येऽपि महाभूतगुणाः स्थिताः । प्रत्येकमात्मनां तेऽपि देहाः संभोगहेतवः ॥ ’ **वा.** ३।१ ७।१३ पृ. ७०२–०३.

☒ **रेखागवयन्यायः** । यथा केनचित् ग्रामीणेन पृष्टो वन्यो हि कीदृशो गवय इति । स तं लिखित्वा दर्शयामास, अयं गवयो भवतीति । स च ऋजुबुद्धित्वात् रेखागवयमेव गवयं मेने । पश्चाद्वने गत्वा गवयं दृष्ट्वा रेखायाः तद्बुद्धिं तत्याजेति लौकिकी गाथा । तथा ‘ एष पुरुषः ’ इत्यादिश्रुतेः पूर्वोक्तकार्यानभिज्ञोऽनात्मानमेवात्मतया जानीते, श्रीसद्गुरुशास्त्रोपदेशेन आत्मनि ज्ञाते तदात्मबुद्धिमपवदतीति । **साहस्री.** ४८.

* रेखागवयन्यायः ( अयमेव लेखागवयन्यायः ) । रेखागवयन्यायेन अनुशासनाय कल्पिते प्रक्रियावाक्ये एव विभक्तिलोपः इति समासे लुप्तविभक्तेरेवाभावान्न तस्याः संबन्धोपस्थापकत्वम् । **सोम.** ६।१।१३.

* **रेवतीषु वारवन्तीयम्** । भावनावच्छेदकधात्वर्थान्वयं विना रेवतीवारवन्तीयान्वयस्य भावनाविशेषणत्वायोगात् साम्नश्च यागसाधनत्वाशक्तेः, प्रधानभूतयागाख्यधात्वर्थान्वयायोगात् ‘ रेवतीषु वारवन्तीयं यागसाधनं कृत्वा ’ इति यागस्य क्त्वाशब्दोक्तभावनावच्छेदकत्वानुपपत्तेः, तदवच्छेदकधात्वर्थापेक्षायां वारवन्तीयस्य अतिदेशतः अग्निष्टोमस्तोत्रभावनाविशेषणत्वावगतेः, वारवन्तीयान्वितानां रेवतीनामपि तद्विशेषणत्वावगमात् रेवत्याधारस्य वारवन्तीयस्यापि अग्निष्टोमसामत्वानुवादोपपत्तिः । सु. पृ. ८६०–६१.

☒ **रेवत्यधिकरणम्** । रेवतीवारवन्तीयाधिकरणम् । वारवन्तीयाधिकरणम् ॥

**समेषु कर्मयुक्तं स्यात् । २।२।१२।२७ ॥**

**भाष्यम्—** ‘ त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेतेति । एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत ’ इति । अत्रायमर्थः सांशयिकः किं तस्यैवाग्निष्टुतोऽग्निष्टोमस्य गुणाद्वारवन्तीयात् पशवः फलम् । एतेन यजेतेत्यनुवादः । अथ किम् । एतेन यजेतेति कर्मान्तरमिति । किं प्राप्तम् ? न कर्मान्तरं गुणात्फलमिति ; कुतः ? एतेन यजेतेति विदितस्य एतद्वचनम्, नाविदितस्य । अतो न विध्यन्तरम् । पशुकाम एवं यजेतेत्युच्यते, न यजेतेति । कथं कृत्वा ? वारवन्तीयं कृत्वेति ! अपिच एतस्यैवेति विस्पष्टमकर्मान्तरवचनम् । तस्मात् गुणात् फलमित्येवं प्राप्तम् । एवं प्राप्ते,



ब्रूमः । समेष्वेवंजातीयकेषु भिन्नवाक्येषु कर्मयुक्तं फलं भवेत् । एतस्यैव रेवतीषु वारवन्तीयं कृत्वेति । नह्येतस्य रेवत्यः सन्ति, यासु अस्य वारवन्तीयं भवेत् । तत्र रेवत्यो भवन्ति, तासु च वारवन्तीयं विधीयेतेति वाक्यं भिद्येत । अथोच्येत–अस्य पूर्वा रेवतीरुपादाय तासु च वारवन्तीयं कृत्वा, एतेन येजेतेत्यनुवदतीति । तथाऽग्निष्टोमसामेति नावकल्प्येत ! अथ अग्निष्टोमसामकार्ये भवति इत्युच्यते । एतस्यैवेत्येतदविवक्षितं स्यात् । उभयस्मिन् विवक्ष्यमाणे भिद्येत वाक्यम् । तस्मात् कर्मान्तरम् । अथ कर्मान्तरे कथमवाक्यभेदः ? रेवतीषु ऋक्षु वारवन्तीयं साम कृत्वा पशुकामो यजेतेत्यपूर्वो यागः सर्वैर्विशेषणैर्विशिष्टो विधीयते । तेन एकार्थत्वम्, विभागे च साकाङ्क्षत्वमित्येकवाक्यत्वमुपपद्यते । ननु अर्थभेदो यागश्चैवं ह्यपूर्वः कर्तव्यः । रेवतीषु वारवन्तीयमपूर्वमिति । **नेति ब्रूमः** । निर्वृत्तवारवन्तीयरेवतीगुणको यागो विधीयते, न वारवन्तीयनिर्वृत्तिः ।

अर्थात् रेवतीषु वारवन्तीयमभिनिर्वर्त्स्यति । शक्यते च तन्निर्वर्तयितुम् । **उच्यते** । रेवतीनां वारवन्तीयस्य च संबन्धो न विहितः स्यात् । तत्र च रेवतीषु अन्यान्यपि सामानि भवेयुः । वारवन्तीयं चान्यास्वपि ऋक्षु । **नैष दोषः** । कृत्वेत्यभिनिर्वृत्तः संबन्धो यागाय उच्यते तेन संबन्धो गम्यते । द्वावप्येतावर्थौ कृत्वेत्येष शब्दः शक्नोति वदितुं अभिनिर्वृत्तिं पूर्वकालतां च । यथा ‘ शोणमानय ’ इति रक्तगुणसंबद्धोऽश्वः शब्देनैवाऽऽनयतौ विधीयते इति न वाक्यभेदो भवति, एवमत्रापि द्रष्टव्यम् । **ननु** एवमपि बहवोऽर्था रेवत्यो वारवन्तीयं तत्संबन्धो यागः पशुकामश्चेति । **नैष दोषः** । बहवः श्रूयन्ते । एकोऽत्र विधीयते यागो विशिष्टः । ननु रेवत्योऽपि विधीयन्ते वारवन्तीयमपि । यदि न विधीयेरन् नैव तद्विशिष्टो यागः प्रतीयेत । न ह्यविधाय विशेषणं शक्यते विशिष्टो विधातुम् । तस्मात् बहुषु विधीयमानेषु नैकार्थ्यम् । अत्रोच्यते । अर्थ इति प्रयोजनमभिधीयते । यावन्ति पदान्येकं प्रयोजनमभिनिर्वर्तयन्ति, तावन्त्येकं वाक्यम् । न चात्र बहूनि प्रयोजनानि । न ह्यत्र अनेकस्य अभिप्रेतस्य अनेकं पदं विधायकमस्ति । रेवतीष्विति नैतत्केवलं रेवतीनां विधायकम् । रेवतीषु वारवन्तीयमित्यत्रापि पदद्वये वारवन्तीयशब्दो द्वितीयान्तः । नास्मात् संबन्धोऽभिप्रेतो गम्यते । प्रातिपदिकार्थेऽस्य व्यतिरेकात् । कृत्वेत्यपि करोतिर्न संबन्धमात्रे पर्यवसितः परप्रयोजनसंबन्धमाह । एवं विशिष्टस्तु यजतिर्न परार्थः । तदेकमेषां पदार्थानां प्रयोजनम् । तस्मात् एकवाक्यत्वम् । गुणे पुनः फले प्रकल्प्यमानेऽग्निष्टोमसाम्नः कार्ये वारवन्तीयम् । एतस्य च यदग्निष्टोमसामेति वाक्यभेदः स्यात् । अथोच्येत, रेवत्यादिसर्वविशेषणविशिष्टो याग एतस्याग्निष्टुतो विधीयेत । तथाऽपि पशुकामसंबन्धात् भिद्येत वाक्यम् । अथ एवमुच्येत । रेवतीषु कृतेन वारवन्तीयेन पशुकामो यजेतेति । नैवं शक्यम् । ऋगन्तरप्रमाणाद्विशेषहानाद्वैगुण्यं स्यात् । ननु इदानीमेवोक्तं शक्यते हि रेवतीषु वारवन्तीयं कर्तुमिति । सति वचने शक्यम् । असति वचने न वारवन्तीयग्रहणेन गृह्यन्ते । वचनं तर्हि भविष्यति । पशुकामो रेवतीषु वारवन्तीयमभिनिवर्तयेत् । ततो यजेतेति यजतिरनुवादः । यदि वचनं रेवतीषु वारवन्तीयसंबन्धस्य, सिद्धं कर्मान्तरम्, नाग्निष्टुतो गुणविधिः । ननु ततो यजेतेति यागानुवादात् यागेनास्याङ्गप्रयोजनसंबन्धो भविष्यति । नैवं शक्यम् । यागं प्रत्यङ्गभावे विधीयमाने पशुकामं प्रत्यसंबन्धः । उभयसंबन्धे वाक्यं भिद्येत । अथ यागसंबन्धोऽनुवादः प्रकरणेन चाङ्गता । नेदमुपपन्नम् । प्रकरणाद्धि वाक्यं बलवत्तरम् । तस्मात् कर्मान्तरं यागगुणकं वा रेवतीषु वारवन्तीयम्, तद्गुणको वा यागः । तत्र यागपशुकामयोः संबन्धस्य विधात्रीं यजतेरुपरितनीं विभक्तिमुपलभामहे लिङम् । न तु रेवतीवारवन्तीयसंबन्धस्य विधायकं साक्षात् किंचिदुपलभ्यते । तस्मात् सर्वविशेषणविशिष्टो यागः पशुकामस्य विधीयते इति सिद्धम् । अथ पुनर्विशिष्टे यागे विधीयमाने तद्रेवतीषु वारवन्तीयं कथमग्निष्टोमसाम भवतीति । **उच्यते** । वचनादग्निष्टोमसाम्नः कार्ये भविष्यतीति । किमिव हि वचनं न कुर्यात् । नास्ति वचनस्यातिभारः । अथ यदुक्तमेतस्यैवेति । अनन्तरापेक्षं वचनमिति । तत्रापि अविरोधादेतद्धर्मक-

स्येति लक्षणाशब्दो भविष्यति । तस्मान्न गुणात् फलं कर्मान्तरमेवंधर्मकमिति सिद्धं समेष्वेवंजातीयकेषु कर्मयुक्तं फलमिति ।

टुप्०— इदानीं अस्यापवादार्थं उत्तरमधिकरणमारभ्यते । तत्र विषयं तावद्दर्शयति— 'त्रिवृदग्निष्टुदग्निष्टोमः' । 'तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेत' इत्येतमग्निष्टुतं प्रकृत्य 'वारवन्तीयमग्निष्टोमसाम कार्यम्' इति च गुणं विधाय पुनर्ब्रवीति 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' इति । तत्रापि पूर्ववदेव संदेहः किं गुणविशिष्टो यागः पूर्वस्मात् व्यतिरिक्तश्चोद्यते, किं वा पूर्वस्यैव गुणादिन्द्रियवत् पशवः फलमिति । किं तावत्प्राप्तम् ? समस्तेनैव पूर्वाधिकरणेन गुणात् फलमिति । तथाहि— '**रेवतीवारवन्तीयसंबन्धव्यापृते विधौ । श्रूयते फलमत्रापि यागोऽतो न विधीयते ॥ रेवतीवारवन्तीयसंबन्धं च करिष्यति । विनैव प्रत्ययावृत्त्या कृत्वाशब्दः पृथक्श्रुतिः ॥**' यस्तु रेवतीवारवन्तीयसंबन्धोत्पत्तिविधानात् तस्य च फलं प्रति विधानात् प्रत्ययावृत्तिलक्षणो वाक्यभेद आशङ्क्यते, सोऽपि न आशङ्कितव्यः, स्वयमेव वेदेन तत्फलस्योपात्तत्वात् । रेवतीषु वारवन्तीयं कृत्वेति निष्पादिते हि संबन्धे यजेः परेण लिङा फलसंबन्धः केवलः कर्तव्यः । तेन न आवृत्तिदोषो भविष्यति । तत्रापि आधारनिर्देशात् रेवतीनां परार्थता प्राधान्यात् वारवन्तीयं फलं प्रति विधीयते । गुणोपादानवशेन धात्वर्थादुत्तारितो विधायकः फलाय गुणं विदधद्यदन्यत्राज्ञातशेषत्वं विधत्ते । रेवत्यश्च सप्तमीनिर्देशात् वारवन्तीयशेषभूतत्वात् प्रयोजनान्तरमनपेक्षमाणा न फलेन संबध्यन्ते । तद्गुणकं तु वारवन्तीयं द्वितीयानिर्देशादवगतप्राधान्यं करोत्यभिहितां भावनां प्रति धात्वर्थस्थानीयं प्रतीयमानं प्रयोजनापेक्षत्वात् फलवत्तां प्रतिपद्यते । अथवा उभयतिरस्कारेणापि संबन्धादेव फलमिति वक्तव्यम् । एवं च सति विपरिवृत्तिप्राप्तो यजिः प्रकृतार्थावलम्बी वा एतच्छब्दः, तस्माच्च यजिसमानाधिकरणात् परा षष्ठी फलवता गुणेन सह प्रकरणात् प्राप्तमाश्रयाश्रयिसंबन्धं वदन्ती, प्रमाणाभावाच्च आश्रयान्तरासंबन्धात् तन्निवृत्तिरूपप्रवृत्त एवकारः, पूर्वोच्चरितेन वचनान्तरेण च प्राप्तमग्निष्टोमसामसंबन्धविशिष्टं वारवन्तीयमित्यादि सर्वमकर्मान्तरत्वात् नित्यप्राप्तमनूद्यमानं न प्रत्ययमायासयिष्यति । कर्मान्तरपक्षे तु सर्वमप्राप्तत्वाद्विधातव्यम् । न च तल्लभ्यते । कुतः ? '**एकशक्तिः स्वभावेन सर्वदैव विधायकः । अल्पार्थविधिसंतुष्टो नानेकार्थविधिक्षमः ॥**' तेन कृत्वाशब्देन रेवतीनां वारवन्तीयसंबन्धमात्रम्, लिङा च फलसंबन्धमात्रं विधीयते इति ज्यायान् गुणविधिपक्षः । सर्वे चैतेऽनुवादा यद्यप्यनुवादेनैव तन्मूलत्वात् प्रदर्शिता भवन्तीति न भाष्यकारेण प्रत्येकमुपवर्णिताः । तस्मान्न कर्मान्तरम् । इति **प्राप्ते, अभिधीयते ।**

'**आश्रयत्वेन गृह्णाति यो गुणः प्रकृतां क्रियाम् । तत्संबन्धानुवादत्वात्तत्र भेदो न गम्यते ॥**'

इदं तावद्वाक्यमेतस्यैव रेवतीष्वित्यादि यजिमत् श्रूयते । स च यजिः यादृक् अत्र श्रूयते तादृक् यदि कुतश्चित् प्राप्तस्ततः शक्यमकर्मान्तरत्वमध्यवसातुम् । तद्यथा— दधिहोमसंबन्धलाभात् इन्द्रियकामवाक्ये, श्रुतफलसंबन्धमात्रे वाक्येन विधीयमाने प्रकरणादेवाऽऽश्रयापेक्षायां लब्धो होमसंबन्ध इत्यनूद्यते । शक्नोति हि दधि साक्षादेव होमं निर्वर्तयितुं न तु रेवतीगुणकं वारवन्तीयं यागनिर्वृत्तिसमर्थमद्रव्यदेवतात्मकत्वात् । तथाहि, '**देवताद्रव्यकर्तृभ्यो नातिरिक्तमपेक्षते । यागः साधनमित्येवं साम्ना नैवैष साध्यते ॥**' तस्मात्प्रकरणवशेन बुद्धावुपढौकमानोऽपि यागः सामाश्रयत्वमयोग्यत्वादप्रतिपद्यमानो न रेवतीवारवन्तीयवाक्ये शक्योऽनुवदितुम्, प्राप्तिप्रमाणाभावात् । यत्तु वारवन्तीयस्य साध्यत्वेन आश्रयत्वप्रतिपत्तिक्षमं स्तोत्रं न तस्य प्रकरणम् । आतिदेशिकत्वादग्निष्टुति स्तोत्राणाम् । आह च— '**स्तोत्रसाधनभूतत्वं साम्नो योग्यतया स्थितम् । स्तोत्रं च प्रकृतं नास्तीत्याश्रयो न प्रतीयते ॥**' **अथोच्येत** यथाऽनेन शक्यते यागः कर्तुं तथा कुर्वदाश्रयिष्यति । यथा च शक्नोति याग आश्रयत्वं प्रतिपत्तुं तथा प्रतिपत्स्यते । सर्वाङ्ग्यातसहकारिशक्त्यनुसारेण अवगमात् । 'आनर्थक्यात्तदङ्गेषु' इत्यनेन



न्यायेन अङ्गभूतस्तोत्रद्वारेण आश्रयाश्रयिसंबन्धः सेत्स्यतीति । **तदनुपपन्नम्** । उक्तं ह्येतत् । '**तन्नामाङ्गेषु कल्प्येत यदङ्गत्वेन चोदितम् । प्राधान्यावस्थितं यत्तु तदङ्गं नोपसर्पति ॥**' 'सप्तदशारत्निर्वाजपेयस्य यूपः' इति सप्तदशारत्नित्वं गुणत्वेन चोद्यमानं साक्षात् वाजपेयस्यासंभवात् यथा शक्नोति तथोपकरिष्यतीत्यध्यवसानात् तदङ्गपशुयूपाङ्गत्वेनावधार्यते । यदि तथैव वारवन्तीयमपि यागाङ्गत्वेन चोद्येत ततस्तत्रासंभवात् तदङ्गानि स्तोत्राण्युपसर्पेत् । इदं पुनः फले विहितं गुणभूतां क्रियामाश्रयत्वेनापेक्षमाणं यदि योग्यां लभते ततो गृह्णाति । अथ न लभते ततो वाक्यादर्थान्तरत्वं प्रतिपद्यते । न च एतदन्यथाऽनर्थकं भवति । कर्मान्तरविधाने सुतरामर्थवत्त्वात् । अत्यन्तभेदाच्च यागस्तोत्रयोः न स्तोत्रे साधिते यागः साधित इति शक्यं वक्तुम् । तत्र यथैव क्रत्वन्तरे श्रुतम्, क्रत्वन्तरे क्रियेत तादृगेव एतत्स्यात् । वाजपेयस्येति तु सामान्यसंबन्धमात्रवाचिनी षष्ठी पारम्पर्याद्यागेऽप्यविरुद्धेति वैषम्यम् । यद्यपि स्तोत्रद्वारेण क्रतोराश्रयत्वं स्यात् तथापि सर्वस्तोत्रेषु प्रसज्यमानेष्वग्निष्टोमसामेत्यनर्थकं भवेत् । तत्र अग्निष्टोमसाम्नि वाक्येनैव आश्रये कल्प्यमाने वाक्यभेदः, पुनरपि च वाक्येन अग्निष्टोमसाममात्रसंबन्धेऽवगम्यमाने यद्येतस्यैवेति विशेष्यते ततोऽपि वाक्यभेदः । एतस्यैवेति च पूर्वे संबन्धे तथैव सर्वतदीयस्तोत्रसंबन्धापत्तेरग्निष्टोमसामेति विशेषणात् स एव वाक्यभेदः । ऋक्सामसंबन्धकरणकृतं चातिगौरवं स्थितमेव । ननु चास्मिन् अग्निष्टुत्याश्रयत्वेन लब्धे पूर्वविधिनैव शेषमवाप्स्यते । वारवन्तीयं हि क्रतुमाश्रयत्तत्र स्थाने स्थितं साधयत् दृष्टं न ततोऽन्यत्र भविष्यति । क्रतुरपि च तत्रान्यस्तोत्रगामित्वेनापेक्षिष्यते । प्रकृतक्रत्वग्निष्टोमसामसंबन्धि वारवन्तीयातिक्रमकारणाभावाच्च न क्रत्वन्तरस्तोत्रान्तरसंबन्धाशङ्का । **नैतदेवम् ।** यदि हि वारवन्तीयाग्निष्टोमसामविधिवाक्यं रेवतीवाक्येन अपेक्ष्येत तत एवं विज्ञायेत । न तु तदपेक्षाऽस्ति । गुणादिवाक्यानां परस्परसंबन्धाभावादित्युक्तं प्राक् । पूर्वसंबन्धविलक्षणश्चायं क्रतोः वारवन्तीयेन संबन्धो न तत्कल्पितस्थानविषयत्वं प्रतिपत्स्यते । कर्माङ्गभूतस्य हि तस्यैतत्क्रत्वग्निष्टोमसामत्वं विज्ञातम् । इदानीं पुरुषार्थभूतत्वात् वेदस्तावन्न तदेव स्थानं कल्पयति । सामान्यतो दृष्टकल्पनायाश्चैवंजातीयकेष्वप्रमाणत्वमुक्तम् । आह च । '**फलाय विहितं साम स्वतन्त्रं रूपमात्रतः । वेदस्वाध्यायमेवैकमुत्पत्त्यर्थमपेक्षते ॥**' यदि वारवन्तीयमग्निष्टुत्येव प्रथममुत्पाद्येत ततो गत्यन्तराभावादनुक्तमपि तद्विषयं विज्ञायेत । इदं पुनः समाम्नायमात्राधीनोत्पत्ति तत एव गृहीत्वा फलाय चोद्यते । तत्र क्रत्वन्तरस्तोत्रान्तरैः एतत्क्रत्वग्निष्टोमसाम्नो न कश्चिद्विशेषः । यदि च वारवन्तीयसंस्कारः कश्चित् विधीयेत, ततः कथंचिद्व्रीहिप्रोक्षणादिष्विव प्रकृतप्रत्ययो भवेत् । न चैवमस्ति । तस्मान्नाग्निष्टोमसामसंबन्धसिद्धिः । ननु च पुरुषार्थमपि सदेतत्क्रतुमसाधयन्न शक्नोति पुरुषार्थं भवितुमिति प्रासङ्गिक्यां क्रतुसिद्धौ पूर्वक्लृप्तं स्थानं लभ्यते । यथेज्यार्थे दधिपयसी प्रणीताधर्मानुपलभेते । तत्रैव एतद्भवति यत्र गुणभूता धर्मा भवन्ति । न चेहाग्निष्टोमसामत्वं नाम वारवन्तीयस्य गुणः । प्रकरणग्रहणे हि सति गुणत्वमपि स्यात् । तदेव तु अद्याप्यसिद्धावस्थम् । यदि तु केनचित् प्रकारेणाग्निष्टोमसामसंबन्धोऽवगम्यते, ततस्तद्धर्मान् तस्य प्रणीताधर्मवन्नैव कश्चित् वारयिष्यति । तस्मात् नैषोऽपि परिहारो भवतीत्यपूर्वकर्मविधिनैव एकवाक्यत्वमुपपादनीयम् । तथा सति हि यद्यपि सर्वमप्राप्तं तथाऽपि विशिष्टविधिना शक्यं विधातुम् । किं पुनर्यदा निकायित्वात् पूर्वाग्निष्टुद्धर्मेषु अत्रादिश्यमानेषु बह्वेव प्राप्तम् । एतच्छब्दस्तावत् धर्मलक्षणया अनुवादो भविष्यति । न चानुवादे लक्षणादोषः । प्रस्तूयमानकर्मवचनत्वेन वा 'अथैष ज्योतिः' इत्यादिवत् मुख्यरूपेणैव वर्तिष्यते । तदा वारवन्तीयं क्रत्वर्थभूतमतिदेशेनैव प्राप्नोतीति तदप्यनुवदिष्यते । कृत्वाशब्दकल्पितरेवतीवारवन्तीयसंबन्धविशिष्टयागमात्रविधानात्तु लाघवं विधेः । ननु अग्निष्टोमसाम्नो रेवतीवारवन्तीयसंबन्धो यागश्चात्र विधीयते इत्यन्यैर्विशिष्टविधिभिर्वैषम्यं विधायकस्य स्यात् । तथाहि । '**नैकप्रयत्नसाध्यत्वं क्रियान्तरविशेषणे । तेन क्रियां विधायान्यस्तत्र कार्यः पुनर्विधिः ॥**' यानि एकक्रियाविशेषणानि भवन्ति तानि तया विधीयमानया

अर्थादाक्षिप्यमाणानि न विधायकव्यापारं भिन्दन्ति । क्रियान्तरविशेषणे पुनर्विधीयमाने, तया क्रियया संबन्धरहितया अनाक्षिप्यमाणे अवश्यं विधायकस्य आवृत्तिरेष्टव्येति वाक्यभेदः प्राप्नोत्येव । नैष दोषः । '**कृत्वाशब्दार्थमेवैकं गृह्णीते भावनोत्तरा । सोऽपि स्वगोचरप्राप्तं ग्रहीष्यति विशेषणम् ॥ नवेन क्रतुना पश्चाहक्सामग्रहणे कृते । क्लृप्तस्थानेन साम्नैव रेवतीस्थानकल्पना ॥**' रेवतीवारवन्तीयसंबन्धं निष्पाद्योत्तरभावनापेक्षोऽवस्थितः स्वविशेषणविशिष्टः कृत्वाशब्दार्थः क्रतुना गृह्यते । अतश्च स्वविशेषणाक्षेप एव क्रतोः । स तु तत्संबन्धं साक्षादनुपजीवन् गुणभूतत्वादङ्गेषु निक्षिपन् अतिदेशविज्ञातस्थानवारन्तीयवशेन रेवतीरपि तद्विषयाः कल्पयति । तेन यद्यप्यत्र वाक्ये अग्निष्टोमसाम न विधीयते तथापि क्रतुविशेषणमपि तत्र संक्रामतीत्यदोषः । अतश्च प्रकृतयागसंबन्धस्त्वत्पक्षे वारवन्तीयस्य नास्ति । पश्य । '**आत्मना ह्यक्रियारूपैर्गुणैराश्रीयते क्रिया । वारवन्तीयगीतेस्तु क्रियया किं प्रयोजनम् ॥**' दधिगोदोहनादीनि क्रियया विना करणत्वमलभमानानि तामपेक्षन्ते । वारवन्तीयं पुनर्गायतिधातुवाच्यक्रियात्मकत्वात् विनैव क्रियान्तरेण यागवत्फलभवनसमर्थमित्यनपेक्षत्वात् यागेनासंबध्यमानं स्वतन्त्रमेव रेवतीषु गीयमानमग्निष्टुत्प्रयोगाद्बहिरेव फलं साधयेत् । ततश्च एतस्यैवेति च अग्निष्टोमसामेति च कृत्वाशब्दश्च यजेतेति च सर्वमसंबद्धं स्यात् । तस्मात् यागात् फलम् । स च पूर्वविलक्षणविशेषणविशिष्टत्वात् कर्मान्तरम् । 'समेष्विति' अयोग्यत्वात् यागगुणयोराश्रयाश्रयिसंबन्धानपेक्षत्वाभिप्रायम् । क्रियात्मकत्वाद्वा क्रियान्तरानपेक्षत्वमुच्यते । 'भिन्नवाक्येष्विति ।' पक्षद्वयेऽपि गुणफलसंबन्धस्य यागान्तरविधानस्य वा अर्थान्तरत्वात् सेत्स्यत्येव लक्षणतो वाक्यभेदे पूर्वक्रतुसंबन्धे भवत्येव किंचिदेव वाक्यरूपम् । क्रत्वन्तरसंबन्धे तु अत्यन्तभेद इत्यभिप्रायः । 'न ह्येतस्य रेवत्यः सन्ति' — आनन्तर्यात्तावदेषा वचनव्यक्तिः प्रतिभाति, एतस्य या रेवत्यस्तासु वारवन्तीयं कृत्वेति । तत्र यद्यपि प्रकरणलभ्यत्वात् एतस्येति विशिष्टानुवादो न वाक्यं भिनत्ति, तथाऽपि रेवतीस्वरूपकर्तव्यतैव तावदप्राप्तेति नानूद्यते । तत्र रेवत्यः प्रयोक्तव्याः, तासु च वारवन्तीयमित्येको वाक्यभेदः, एतच्छब्दवैयर्थ्यं च । अथ तु एतच्छब्दानुग्रहार्थमेतस्य रेवत्यः कर्तव्याः, तासु च वारवन्तीयम्, तच्च फलायेति विधीयते यजिश्चानूद्यते इति, तथाऽपि अर्थत्रयनिमित्तवाक्यभेदाभ्युपगमेन अग्निष्टोमसामसंबन्धो विधातुमनुवदितुं वा अशक्यत्वात् उभयथाऽपि नावकल्पते । अथ सोऽपि विधीयेत, तथा सति पूर्वस्मात् विध्यपगमात् अग्निष्टोमसाममात्रप्रसङ्गादेतस्यैवेत्यनर्थकम्, विधीयमाने वाक्यभेद इत्येका ग्रन्थयोजना । अथवा— यथाक्रमावस्थित एवैतच्छब्दो रेवतीविशेषणं स तथाभूत एवाभ्युपगम्यते । ततश्चैवं वचनं व्यज्यते—एतस्य या रेवत्यस्तासु वारवन्तीयमग्निष्टोमसाम कृत्वेति । तत्तु कस्य क्रतोरित्यविशेषणादेतच्छब्दस्य च रेवतीविशेषणत्वेन उपक्षीणत्वादेतस्य अग्निष्टोमसामेति न लभ्यते । तद्विवक्षायां वा पुनरपि वाक्यभेदः । इहैव सर्वाः पूर्वपक्षवचनव्यक्तीः निराकृत्य, सिद्धान्ते कथमवाक्यभेद इति प्रष्टव्ये पूर्वपक्षवादी विस्मितः पृच्छति । तथा नाम संप्रति विहिते सति अनेन आकाश एवेयन्तो वाक्यभेदा इन्द्रजालवदेव दर्शिताः । ततः पृच्छामि तावदेतस्य कथमवाक्यभेद इति । सिद्धान्तवादी त्वप्राप्तकर्म विधीयते । विशिष्टविधानोपपत्तौ सत्यामेकार्थत्वादित्याह । नन्वर्थभेद इति—क्त्वान्ताख्यातोपात्तभावनाद्वयैकवाक्यत्वासंभवाभिप्रायेण । 'नेति ब्रूमः' इति— गुणभूतैकभावनाविशिष्टप्रधानभूतभावनान्तरविधानाभिप्रायम् । रेवतीनां 'वारवन्तीयस्य च संबन्धो न विहितः स्यादिति'— विशेषणविशेषणानामविधेयत्वाल्लिङा तावन्न विधीयते । कृत्वाशब्दश्च नैव विधौ स्मर्यते । तेन यद्यपि संबद्धा भावनाऽभिधीयते, तथापि विध्यधीनप्रवृत्तित्वात् पुरुषः सतीमपि तामसतीमिव प्रतिपद्यते । तेन यागभावनामात्रविशेषणत्वात् रेवतीवारवन्तीययोस्तदबहिर्भावमात्रेण प्रयोक्तव्ययोरन्योन्यनियमप्रमाणाभावात् एकस्तोत्रविषयत्वे तदेकदेशनियमे चासति रेवतीषु ऋक्ष्वन्यान्यपि गायत्रामहीयवादीनि सामानि प्राप्नुवन्ति । सामापि वारवन्तीयमन्या-



स्वावापभूतासु गायत्रीबृहत्यनुष्टुप्सु प्राप्नोति । तत्र रेवतीषु वारवन्तीयमिति संबन्धप्रतीतिर्व्यर्था स्यात् । अतो वारवन्तीयमेव यथावधृतस्थानमुद्दिश्य रेवत्यो विहिता इति । नैष दोषः । '**विधित्वं यद्यपि श्रुत्या न कृत्वेति ब्रवीत्ययम् । तथाऽप्येवंविधे तस्य विधित्वं फलमिष्यते ॥**' सर्वत्रैव यत्रेदं कृत्वेदं कुर्यादिति श्रूयते तत्र यदि तावत्त्वान्तधातुवाच्या क्रियाऽन्यत एव प्राप्ता ततो निमित्तार्थं श्रवणं भवति । अथ तु न प्राप्ता तत उत्तरस्याः करणं पूर्वनिर्वृत्त्युत्तरकालत्वेन विहितं तामननुष्ठाय यथा कर्तुं न शक्यते इत्यर्थादवश्यं कर्तव्या सती विहितवद्विज्ञास्यते । न चेह रेवतीवारवन्तीयसंबन्धः प्राग्विधेः कुतश्चित्प्राप्तः, येन निमित्ततया आश्रीयेत । तस्मात् अनुष्ठेय एव विज्ञायते । यदि तर्हि अनुष्ठेयत्वेन संबन्ध उपपन्नः कथमुत्तरयाऽनुष्ठेयत्वोपात्तयैव सह संबध्यते । तदर्थमाह— द्वावप्येतावर्थौ कृत्वेत्येष शब्दः शक्नोति वदितुमिति । कथमेकेनानेकार्थावगतिरिति चेदत आह—दृष्टा हि क्वचिदियमपि गतिः । यथा शोणमानयेति । प्रमाणान्तरप्राप्तेऽप्यानयतौ रक्तोऽश्वः चोद्यमानो न रक्ताश्वशब्दाभ्यामिवाभिहितो वाक्यभेदं जनयति । तथाऽत्र त्वाशब्दोपात्ता निर्वृत्तिः पूर्वकालत्वं चेति । अथवा । '**तत्रैव न विधीयेत विशेषणविशेषणम् । यत्र द्रव्याङ्गभूतं तन्न कर्माङ्गं प्रतीयते ॥**' 'तत्रैकत्वमयज्ञाङ्गभूतमर्थस्य गुणभूतत्वात्' इति द्रव्यविशेषणानां विध्यसंस्पर्शो वक्ष्यते । रेवतीवारवन्तीयसंबन्धस्तु करोतेर्विशेषणम् । सामान्यभूतत्वाच्च करोत्यर्थस्तद्रहितो नानुष्ठेयत्वं प्रतिपद्यते । तेन मृष्यामहे हविषा विशेषणमिति न्यायजिभावनाविशेषणस्य करोत्यर्थस्यावश्यं रेवतीवारवन्तीयसंबन्धविशिष्टताऽभ्युपगन्तव्या । तथा च क्रियाविशेषणानामपि प्रयाजादीनां विशेषणानि द्रव्यदेवतादीनि दर्शपूर्णमासादिषूपयोक्ष्यन्ते । तस्मात् निष्पन्नसंबन्धविशेषितायां भावनायां ऋक्सामयोर्नियमः सेत्स्यति । कृत्वाशब्दश्चात्र प्रतिपत्तिक्रमनिर्वृत्त्यर्थ एव द्रष्टव्यो नानुष्ठाननिर्वृत्त्यर्थः । अग्निष्टोमसाम्नः प्राग्यागादप्रयोगात् । अतो नैवं विज्ञायते रेवतीषु वारवन्तीयं प्रयुज्य यष्टव्यमिति । किं तर्हि ? एवं करिष्यामीति परिकल्प्य यागः प्रक्रमितव्य इति । 'नन्वेवमपीति' । यावदभिधेयं विधिकल्पनादनेकार्थत्वात् नैकवाक्यत्वमिति मन्यते । नैष दोषः इति । न तावदभिधेयनानात्वेनानेकार्थत्वं भवतीत्युक्तम् । अथ प्रयोजनभूतविधेयनानात्वमेव मन्येथाः । तत्रोच्यते । '**श्रूयन्ते बहवोऽत्रार्था एक एव विधीयते । विशिष्टा भावना सा च याग इत्युपलक्षिता ॥**' 'ननु रेवत्योऽपि विधीयन्ते' इति । यदि श्रुतमात्रानुपात्येवानेकार्थत्वं भवेत्तत एव परिहारः स्यात् । एते तु सर्वे विधीयमानत्वात्प्रयोजनभूतास्तस्मादनेकार्थत्वमस्त्येवेति । उच्यते । '**विधेयमात्रमप्यत्र नार्थ इत्यभिधीयते । प्रधानविधियुक्तोऽर्थः स चैकोऽत्र विधीयते ॥**' तदाह— 'न ह्यत्रानेकस्य' प्रयोजनत्वेन 'अभिप्रेतस्यानेकं पदं' विधायकमिति । तथा ह्यवान्तरकर्मत्वात्तत्क्रियाणां न प्राग्यजिभावनातः पर्यवसानम् । विशिष्टविध्युत्तरकालं तु न किंचिदपेक्ष्यते । तस्मात्सिद्धमेकार्थत्वादेकवाक्यत्वम् । गुणविधित्वे चोक्ता वाक्यभेदाः । 'अथोच्येत' इति । एतच्छब्दसमर्थनार्थम् । सिद्धेऽपि कर्मान्तरत्वे कर्मयुक्तफलपक्षात्पक्षान्तरमिति निराक्रियते । तत्रैषा वचनव्यक्तिः— रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा, एतस्याङ्गत्वेन यजेतेति । किमेवं भविष्यति ? प्रकरणं तावन्न बाधिष्यते । एतस्यैवेति च प्रकृतग्राहि समीपस्थितसंबन्धिपदमनुग्रहीष्यते । तत्रोच्यते । न, पशुकामपदानर्थक्यप्रसङ्गात् । तदुपरित्यागे वाक्यभेदप्रसङ्गः । न ह्येकस्य क्रतुं फलं च प्रति युगपद्विधानमवकल्पते । 'अथैवमुच्येत रेवतीषु कृतेनेति' । प्रथमोपन्यस्तमेव पक्षं दोषान्तराभिधित्सया पुनरुपन्यस्यतीति केचित् । अथवा नैवम् । कथं तर्हि, गुणकामेषु याज्ञिकानां द्वयी प्रतिपत्तिः ? केषांचिन्मीमांसकवदेव गुणात्फलम् । अपरेषां तु गुणः क्रत्वर्थ एव तद्वतस्तु क्रतोः फलान्तरसंबन्धः । अत्रैषा वचनव्यक्तिः । नित्यं तावदनेन ब्रह्मवर्चसकामो यजेत । यदि तु पशुकामः स्यात्ततोऽनेनैव रेवत्यादिविशिष्टेनेति । तथा सति च '**प्रत्ययः संनिकृष्टार्थविधिं तावत्करिष्यति । न चान्यपर उत्पत्ति विधानाच्च विशिष्टता ॥**' यागं हि फले विदधत्प्रत्ययो न विप्रकृष्यते । न चानुत्पत्तिपरः सन् उत्पत्तिमपि कल्पयिष्यति ।

अनेकार्थविधानं च यथैवोत्पत्तिविधौ कर्मविधाननिमित्तं लभ्यते, तथा फलविधावपि फलोद्देशेन कर्मविधानादित्येवं मन्यमानो वदति– 'अथ रेवतीषु कृतेन वारवन्तीयेन पशुकामो यजेतेति'। स्तोत्रद्वारेण यागसाधनत्वोपपत्तेः करणतृतीयैवैषा। अथवा इत्थंभूतलक्षणा। अनेनैव इत्थंभूतेन पशुकामो यजेतेति। तत्रोत्तरम्। नैवं शक्यम्। ऋगन्तरप्रगाणाद्विशेषहानाद्वैगुण्यमिति। यदि तदेवेदं कर्म ततस्तस्य वायव्यास्वग्निष्टोमसाम विहितं तदृगन्तरे रेवत्याख्ये गीयमानं पूर्वविहितवायव्याख्यविशेषहानाद्विगुणं भवेत्। नन्विदानीमेवाऽऽत्मीये पक्षे भवतैव तत्र रेवतीषु ऋक्ष्वन्यान्यपि सामानि प्राप्नुवन्त्येवं पर्यनुयुक्ते नाभिहितम्। नैष दोषः। कृत्वेति निर्वृत्तः संबन्धो यागायोच्यते। द्वावेतावर्थौ कृत्वेत्येष शब्दः शक्नोति वदितुमिति। सिद्धान्तवादी त्वपूर्वकर्मविधौ अनेकार्थविधानं शक्यं नान्यत्रेति मन्यमान आह– 'सति वचने' मत्पक्षे शक्यम्, भवत्पक्षे त्वसति वारवन्तीयग्रहणमात्रेण लभ्यमानासु रेवतीष्वशक्यमिति। परः पुनराह– 'वचनं तर्हि भविष्यतीति'। तेनैवाभिप्रायेण। फले विशिष्टकर्मविधानात् कृत्वाशब्दस्य चाविधायकत्वात्। यजिरनुवादः–इति च सत्यपि फलं प्रति विधान उत्पत्त्यविधानाभिप्रायेण। सिद्धान्तवादी स्वाभिप्रेतानेकार्थविध्यन्यथानुपपत्तिफलं कथयति– 'यदि वचनं' सिद्धं तर्हि कर्मान्तरं न पूर्वस्यैवाभिष्टुतो गुणविधानमिति। 'ननु ततो यजेतेति यागानुवादात्' इति वचनेनानिराकृतत्वात् अत्रापि स्वपक्षमेव बलीयांसं मन्यते। 'नैवं शक्यमिति' सिद्धान्तविवरणम्। यदि हि रेवतीगुणकं वारवन्तीयं यागं प्रति गुणत्वेन विधीयते, ततोऽवश्यं स उद्देष्टव्यः। ततश्च उद्दिश्यमानत्वादेव फलपदं न तेन गुणेन वा संबध्यते इत्यनर्थकमेव स्यात्संबध्यमानं वा वाक्यं भिन्द्यात्। गुणविशिष्टकर्मविधाने वा अप्रत्यभिज्ञायमानत्वादेकान्तेन कर्मान्तरत्वम्। न च यत्पशुकामो यजेतेत्यप्राप्तत्वादनुवादः संभवति। एतेन रेवतीवारवन्तीयविधिं प्रत्यस्य निमित्तत्वं प्रयुक्तम्। अतश्च न वारवन्तीयं केनचित् बलवत्तरेण प्रमाणेन रेवतीभिः संबद्धमिति विशेषहानाद्विगुणं भवेत्। अथ 'यागसंबन्धोऽनुवादः' इति। गुणादेव फले सति प्रकरणादवगतं यागाङ्गत्वमस्मिन्वाक्येऽनुवदिष्यते इति। कः पुनराश्रयाश्रयिसंबन्धात्पूर्वनिराकृतादस्य विशेषो येनोपन्यस्यते। स उच्यते। तत्र हि 'आनर्थक्यात्तदङ्गेषु' इत्येतन्निराकृतम्। अङ्गत्वज्ञाने तु तत्संभवादग्निष्टोमसामसंबन्धः सुलभ इत्यभिप्रायः। तन्निराकरोति '–प्रकरणाद्धि वाक्यं बलवत्तरमिति'। आश्रयाश्रयिसंबन्धो हि फलसंबन्धानुगुणत्वात्संभवन्गृह्यते। स तु न संभवतीत्युक्तम्। अङ्गाङ्गिसंबन्धस्तु क्रतुकथंभावग्रहणात्स्यात्। तच्च नास्ति। 'असंयुक्तं प्रकरणात्' इति वक्ष्यति। संयुक्तं चैतत्फलेन। तस्मादविरोधाद् गुणफलविशिष्टकर्मान्तरविधानम्। तदेतत् स्यात्। सत्यपि कर्मान्तरत्वे तदनुगृहीताद्गुणादेव फलमिति। तद्विकल्प्य भावार्थाधिकरणन्यायेन प्रत्ययसंनिकर्षेण यागफलसंबन्धावगमात् निराकरोति। तस्मात् कर्मविधिः। 'अथ पुनर्विशिष्टे यागे विधीयमाने' क्रियान्तरस्य अग्निष्टोमसाम्नो विशेषणेन कथं संबन्ध इति। तत्रोत्तरं वचनादिति। प्रागुक्तन्यायेन आतिदेशिकं वचनं द्रष्टव्यम्। 'अग्निष्टोमसाम्नः कार्यं' इति। न किंचिदग्निष्टोमाख्यं सामावस्थितं विद्यते, यस्य वारवन्तीयं कार्यापन्नमिति कल्प्यते। तेन प्राकृतयज्ञायज्ञीयकार्यापन्नमभिप्रायेणोक्तम्। अथवाऽग्निष्टोमसाम्न इति स्तोत्रस्यैव कार्ये तादर्थ्येन वर्तिष्यते इत्यर्थः। तस्मात्समेषु कर्मयुक्तं फलं स्यादिति सिद्धम्।

**शा**— 'तत्र पूर्ववदत्राऽपि गुणमात्रं विधीयते। फलाय न तु यागस्य विधानं विधिगौरवात् ॥ सामाश्रयत्वं यागस्य साक्षाद्यद्यप्यसंभवि। तथापि स्तोत्रनिर्वृत्तिद्वारा तदुपपद्यते ॥ प्रकृतं कर्म गृह्णाति फलाय, विहितो गुणः। यत्र, तत्र गुणात्कामो यागः साम्ना न साध्यते ॥' अतः रेवतीवारवन्तीयसाधनकाग्निष्टोमस्तोत्रसमानकर्तृकत्वविशिष्टः प्रकृत एव यागः फलाय विधातुं शक्यते।

**सोम**— पूर्वापवादात् संगतिः इति। सूत्रार्थस्तु– समेषु क्रियात्वाविशेषात् आश्रयानपेक्षतया तत्तुल्येषु गुणेषु श्रुतेषु कर्मयुक्तं फलं स्यात् न गुणयुक्तमिति।

**वि**— 'उक्त्वाऽग्निष्टुतमेतस्य वारवन्तीयसाम हि। रेवतीष्वृक्षु कृत्वेति श्रुतं पशुफलाप्तये ॥ रेवत्यादिर्गुणः



कर्म पृथग्वा पूर्ववद्गुणः। रेवतीवारवन्तीयसंबन्धाख्यः पशुप्रदः ॥ साम्नोऽत्र फलकर्मभ्यां संबन्धे वाक्यभिन्नता। तेनोक्तगुणसंयुक्तमन्यत्कर्मोच्यते फले ॥'

**भाट्ट**— 'त्रिवृदग्निष्टुदग्निष्टोमः' इत्यनेन विहितस्य अग्निष्टुद्यागस्य फलसंबन्धे 'तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो ह्येतेन यजेत' इत्यनेन कृते पश्चादाम्नातं 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' इति। तत्रापि पूर्ववदाद्यः **पूर्वपक्षः**– राजसूयन्यायेन स्वकारकविशिष्टाग्निष्टोमस्तोत्रभावनाविशिष्टक्त्वाप्रत्ययार्थभूतकालकर्त्रादिरूप– प्रयोगान्वयिगुणसत्त्वेन विनियोगविशिष्टप्रयोगविधिसंभवात्। इष्यते ह्ययमेव प्रकारो वायव्यावाक्ये सिद्धान्तिनाऽपि। **द्वितीयस्तु**– नात्र राजसूयन्यायः, प्रयोगस्याग्निष्टोमस्तोत्रोत्तरकालत्वस्य च वायव्यावाक्येनैव प्राप्ततया तदनुवादेन रेवतीविधिः फलोद्देशेनाग्निष्टुद्विधिश्चेति वाक्यभेदात्। वायव्यावाक्ये ह्यतिदेशेन संभवत्प्राप्तिकमप्यग्निष्टोमस्तोत्रोत्तरकालतादि ततः पूर्वप्रवृत्त्यङ्गीकारेण प्रयोगविशेषणतया विहितम्। न त्वत्र वायव्यावाक्यस्यापि कृत्स्नत्वेन अस्य पूर्वप्रवृत्त्यङ्गीकारानुपपत्तेः। न च विनिगमनाविरहः, प्राथम्यस्यैव नियामकत्वात्। अतो लाघवात् गुण एव रेवत्यधिकरणकवारवन्तीयाख्यः रेवत्याख्य एव वा अप्राप्तत्वात् फलोद्देशेन विधीयते। 'वारवन्तीयमग्निष्टोमसाम कार्यं' इति प्राकरणिकवाक्येन वारवन्तीयस्यापि प्राप्तत्वात्। न चान्यपक्षे तृतीयान्तेनैतच्छब्देन विलिङ्गसंख्यत्वात् रेवतीमात्रनिर्देशानुपपत्तिः। तेन रेवतीविशिष्टवारवन्तीयनिर्देशेऽपि दाक्षायणयज्ञन्यायेनाप्राप्तरेवतीमात्रस्यैव फलसंबन्धोपपत्तेः। अतो दध्यादिन्यायेन गुणफलसंबन्ध एव युक्तः।

**सिद्धान्तस्तु**– नात्राश्रयलाभः शक्यते वक्तुम्। यागस्य तावत् प्रकृतत्वेऽपि 'अग्निष्टोमसाम' इत्यनुवादानुपपत्तेः न साक्षादाश्रयत्वम्। अग्निष्टोमस्तोत्रद्वारा यागस्यैव वा साक्षादाश्रयत्वं तु अग्निष्टोमस्तोत्रस्यातिदेशतः स्तोत्रान्तरसाधारण्येन उपस्थितत्वादनाशङ्क्यम्। न च वायव्यावाक्येन तस्यौपदेशिकी विशिष्योपस्थितिः। आतिदेशिककॢप्त्याद्यसंभवे औपदेशिकतद्बाधस्यान्याय्यत्वेन विशिष्योपस्थितेराश्रयत्वासाधकत्वात्। न च साम्नो गायतिधातुवाच्यत्वेन क्रियारूपत्वादाश्रयालाभेऽपि न क्षतिः। साम्नो ऋगन्यात्मकस्वरसमाहाररूपत्वेन वाक्यशेषादौ प्रसिद्धस्य सिद्धरूपतया धातुवाच्यत्वस्याप्रयोजकत्वात्। अन्यथा– सौभरस्यापि स्तोत्राश्रयत्वानुपपत्तेः, वारवन्तीयसाम्नः आश्रयानपेक्षणे 'अग्निष्टोमसाम' इत्याद्यनुवादानुपपत्तेश्च। अतः साम्न आश्रयसापेक्षत्वात् तावत्प्रकरणेन आश्रयलाभः। न च 'वारवन्तीयमग्निष्टोमसाम कार्यम्' इति प्राकरणिकेन वाक्येनैव गौरवभिया अङ्गत्वानभिधानात् आश्रयसमर्पणमिति वाच्यम्। साम्नो गुणत्वपक्षे तल्लाभोपपत्तावपि रेवतीमात्रस्य गुणत्वे तदयोगात्। साम्नो गुणत्वं तु विधेः प्राप्तरेवतीमात्रसंक्रमादेवासंभवि। फलपदाभावे हि विधिर्द्विषये अप्राप्ततया व्याप्रियते, तस्यैव प्रयोजनाकाङ्क्षया फलसंबन्धः यथा गोदोहनादेः। तदत्र पशुपदाभावे वारवन्तीयस्य प्राकरणिकवाक्येनैव प्राप्तत्वात् विधिरप्राप्तरेवतीमात्रविषयः संपद्यत इति तस्यैव फलसंबन्धो वाच्यः। न चास्याश्रयः केनापि प्रकारेण लब्धुं शक्यः। न च प्रकारान्तरेणालाभेऽपि अनेनैव वाक्येन आश्रयविशिष्टगुणविधानाद्वा तल्लाभोपपत्तिः। फलप्रयोजनत्वात् लाघवेनाश्रयतासंबन्धेनैव वैशिष्ट्याङ्गीकाराच्च न गुणाङ्गतापत्तिरिति वाच्यम्। आश्रयस्य गुणान्वयाद्युत्पत्तेः। कर्मत्वातिरिक्तस्याश्रयत्वस्य दुर्वचत्वेन भावनायाः फलाश्रयरूपोभयकर्मत्वाङ्गीकारे एककर्मकत्वभङ्गापत्तेश्च। न च कृत्वाशब्दोक्तायामाश्रयस्याग्निष्टोमस्तोत्रस्य कर्मत्वात् तदुत्तरकालताविशिष्टगुणभावनाया आख्यातोपात्तायाः पशुकर्मत्वान्नैकस्या भावनाया द्विकर्मकत्वापत्तिरिति वाच्यम्। गुणभावनाया अवच्छेदकीभूतधात्वर्थापेक्षायां यागस्यावच्छेदकत्वाङ्गीकारे रेवतीनां यागकरणत्वापत्त्या स्तोत्रं प्रति करणत्वानापत्तेः। स्तोत्रस्यैवावच्छेदकत्वाङ्गीकारे तु धात्वर्थद्वयावच्छिन्नभावनाद्वयाभावात् क्त्वाप्रत्ययानुपपत्तिः। न च रेवतीविशिष्ट–अग्निष्टोमस्तोत्रभावनोत्तरकालविशिष्टरेवतीकरणकयागाश्रयकभावनैव फलोद्देशेन विधीयतामिति वाच्यम्। आख्यातोपात्तभावनाया द्विकर्मकत्वापत्तेस्तदवस्थत्वात्। न च प्रकरणाद्यागस्य आश्रयत्वोपपत्तेः न द्विकर्मकत्वम्।

तथात्वेऽपि तृतीयान्तैतच्छब्दस्य धातुपारार्थ्यभयेन यागपरामर्शित्वस्यैवोपपत्तौ रेवत्यादिपरामर्शकत्व एव प्रमाणाभावात् । अतः तदपेक्षया लघुभूतकर्मान्तरविधानमेव ज्यायः । तदा हि निकायित्वेनाग्निष्टुद्यागविकारत्वात् वारवन्तीयं प्राप्तमेवानूद्यते केवलं रेवतीविशिष्टस्तोत्रभावनोत्तरकालविशिष्टरेवतीकरणकयागान्तरभावनैव फलोद्देशेन विधीयते । षष्ठ्यन्तैतच्छब्दः प्रकृतिविकारभावानुवादकः । तृतीयान्तैतच्छब्दः प्रस्तोष्यमाणकर्मवचनो न दुष्यति । उत्तरकाललक्षणो गुणश्च प्रयोगान्वयित्वात् अचेष्टिवद्यद्यपि तद्भेदमेवापादयेत् । तथाऽपि कालस्यात्र संभवप्राप्तिकतया वाक्यभेदपरिहारार्थं विधेयत्वेऽपि तात्पर्यगत्या यागे परंपरासंबन्धेन विधेयस्य रेवत्याख्यस्य गुणस्य उत्पत्त्यन्वयित्वात् कर्मभेदबोधकत्वाविघातः ।

**मण्डन**– ' मिन्ने यजौ फलविधिः सह रेवतीभिः । '

**शंकर**– ' कर्मान्यद्रेवतीश्रुतौ । '

* **रेवत्यधिकरणस्य** ( २।२।१२।२७ ) अपवादः सौभराधिकरणं ( २।२।१३।२८–२९ ) । **कौ.** २।२। १२।२७, * इन्द्रियकामाधिकरण – ( २।२।११ ) **रेवत्यधिकरणयोरपवादः** सौभराधिकरणम् । २।२।१३।२७ पृ. २९४. * **रेवत्यधिकरणे** वारवन्तीयस्य रेवतीसंबन्धे, अग्निष्टोमसंबन्धे, फलसंबन्धे च विधीयमाने वाक्यभेदात् भावनोपसर्जनं भावनान्तरं विधीयते इत्युक्तम् । **मीन्या.** * विशिष्टविधेः, विशेष्यविशेषणोभयपरत्वे, वाक्यभेदापत्त्या विशिष्टमात्रपरस्य, विशेषणांशेऽपि प्रामाण्यमिष्यते एव इति **रेवत्यधिकरणे** वक्ष्यते । **कु.** १।१।८।३२.

* **न चैवं** प्रकरणाभावे तासां ( सामिधेनीनां ) आश्रयत्वानुपपत्तेः कथं काम्यवाक्ये तदाश्रितस्य गुणस्य फलार्थत्वेन विधानोपपत्तिरिति **वाच्यम्** । आश्रयालाभेन तत्रानुवचनान्तरस्यैव संख्यादिविशिष्टस्य **रेवत्यधिकरणन्यायेन** गुणात् भिन्नस्य, फले विध्यङ्गीकारात् । **कौ.** ३।१।११।२१ पृ. २०१, * ' हीष् इति वृष्टिकामाय निधनं कुर्यात् ' ( अत्र ) निधनानुवादोपपत्तेः रेवत्यधिकरणन्यायेन हीषादिविशिष्टनिधनान्तरविध्याशङ्कानुपपत्तेः । २।२।१३।२७ पृ. २९५.

* **सौभरे**–' हीष् इति वृष्टिकामाय निधनं कुर्यात्० ' इति । रेवत्यधिकरणन्यायेन हीषादिविशिष्टनिधनान्तरं फलार्थं विधीयते । यदि तु प्रकरणात् इह सौभरस्याश्रयतया अन्वयसंभवात् रेवत्यधिकरणनयासंभवः, तदा इन्द्रियकामाधिकरणनयेन सौभरसंबन्धिनिधनसंबन्धिहीषादेः कामसंयोग आस्ताम् । इति पूर्वपक्षः । **कस्तूरि.** २।२। १३।२७–२८.

* **रेवत्यधिकरणसिद्धान्तः** ' वाक्यभेदप्रसङ्गेन प्रकृते अग्निष्टुति फलाय गुणविध्यसंभवात्, गुणविशिष्टकर्मान्तरविधिः ' इति । **सोम.** ६।२।२.

* **रेवतीवारवन्तीयान्वयेन** विशेषितायां कृत्वाशब्दोक्तायां भावनायां ऋक्सामयोर्नियमः । **सु.** पृ. ८६७, * **रेवतीवारवन्तीयान्वयस्य** विधेययागभावनाविशेषणान्तर्भावाभ्युपगमेन लिङैव विधेयत्वम् । पृ. ८६६, * द्वयस्य अविशेषितस्यापि स्वरूपमात्रेण विशेषणत्वोपपत्तेः तद्विशेषणस्यानन्तर्भावात् अविधेयत्वेऽपि करोत्यर्थस्याविशेषितस्य निरूपणाशक्तेः विशेषणत्वायोगात् विधेयविशेषणान्तर्गतत्वात् **रेवतीवारवन्तीयान्वयस्य** विशेषणविशेषणत्वेऽपि विधेयता युक्ता । पृ. ८६६.

* **रेवतीवारवन्तीयादिवाक्येन** विशिष्टं कर्म विधीयते । **वा.** ३।१।११।२१ पृ. ७३५.

* **रेवतीवारवन्तीयतत्संबन्धयागपशुक्रियाणां** यजमानव्यापारयागभावनान्तरव्यापारव्यवसायात् ततः प्राक् विधेरपर्यवसानापत्तेः, नानेकस्य प्राधान्येन विधिः संभवति । **सु.** पृ. ८६८.

* योऽपि अदाभ्यवाक्ये ( ' योऽदाभ्यं गृहीत्वा सोमाय यजते ' ) यजतिः, सोऽपि **रेवतीवारवन्तीयपूर्वपक्षन्यायेन** संक्रान्तविधिशक्तिना प्रत्ययेन विधीयते । **वा.** २।३।९।२० पृ. ६१०.

* **रैवतं** अच्छावाकसाम विश्वजिति सर्वपृष्ठे । **भा.** १०।६।५।१४, * रैवतं ब्राह्मणाच्छंसिनः साम पृष्ठं



विश्वजिति । ७।३।३।८. * रैवतं साम षडहे षष्ठेऽहनि पृष्ठनिष्पादकं विश्वजिति च षडहात् प्राप्तम् । **वि.** ७।३।३.

* **रोगाः** । नियतकाला अपि रोगा भवन्ति । यथा तृतीयकाश्चातुर्थकाश्चेति । **भा.** ६।१।२।५. * **रोगेण** अङ्गविकलस्यापि, औषधादिना वैकल्ये परिहृते अधिकारोऽस्त्येव । **वि.** ६।१।९.

* **रोगद्रवात्** अशृतं श्रपकौदनः रौद्रम् । **भा.** ३।४।३।११.

* ' **रोगी** हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा । ' विवाहे वर्ज्यः । अयं क्रत्वर्थः व्यक्तिविषयकः स्मृतिकल्प्यः प्रतिषेधः । **बाल.** पृ. ३१.

**रोगिन्यायः** । यथा रोगिनाशे रोगस्याऽपि नाशस्तथा प्रकृतेऽपि । **साहस्री.** ३१५.

* **रोदनम्** । इष्टवियोगेन अभिघातेन वा यत् बाष्पनिर्मोचनम्, तत् रोदनमित्युच्यते । न च तदिच्छातो भवति । **भा.** १।२।१।१ पृ. १०६. * **रोदनस्य** मङ्गलाचारशास्त्रविरोधः । **सु.** पृ. ४.

* चिरवृत्तेष्टवियोगध्यानादिना **रोदनादिशक्यता०** । **सु.** पृ. ४.

* **रोहिणी** शशाङ्कस्य । **वा.** ३।४।१।९.

* **रोहिणिकाशब्दस्य** गोत्वैकार्थसमवायिरक्तावान्तरजातिवाचिता । **सु.** पृ. १४१०.

* ' **रोहितके** बध्नाति, खादिरे बध्नाति, पालाशे बध्नाति ' । एकार्थाः सन्तो विकल्प्यन्ते खादिरादयः । **भा.** २।२।६।१७.

* **रौद्रः** चरुः रौद्रेष्टिः । ' वास्तुमयं रौद्रं चरुं निर्वपेत् ' इति प्रकृत्य ' एतया निषादस्थपतिं याजयेत् ' इत्युक्तम् । अस्मिन् रौद्रयागे निषादजातीयधनिकस्य अधिकारोऽस्ति । **वि.** ६।१।१३. * **रौद्रे** गावीधुके **चरौ** चयने समाप्ते, उपधेये इष्टकाधर्मा न कर्तव्याः । **संकर्ष.** २।१।१०.

* **रौद्रेष्टिः** ' एतया निषादस्थपतिं याजयेत् ' इति वाक्येन निषादस्थपतेर्विहिता । सा लौकिकेऽग्नौ ( लौकिकेषु अग्निषु—इति भाष्यम् ) । **वि.** ६।८।३. * **रौद्रेष्ट्यां** निषादस्य अधिकारः । ६।१।१३।५१ –५२. **मीको.** पृ. २३९१ ' निषादस्थपतिन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**रौमकभाषा** । **वा.** १।३।५।१० पृ. २२६. ( यदा द्राविडादिभाषायां ईदृशी स्वच्छन्दकल्पना तदा पारसी–बर्बर–यवन–रौमकादिभाषासु किं विकल्प्य किं प्रतिपत्स्यन्ते इति न विद्मः । )

* **रौरवं** साम बार्हते तृचे भवति । ' पुनानः सोम धारयापो वसानो० ' इति बृहती । उत्तरा विष्टारपङ्क्तिः ' दुहान ऊधर्दिव्यं० ' । प्रग्रथनेन तिस्रो बृहत्यः । **भा.** ९।२।६।२५ वर्णकं २.

* ' **रौरवयौधाजये** बार्हते तृचे भवतः ' इति श्रूयते । उत्तराग्रन्थे तु रौरवयौधाजययोराधारः एकः प्रगाथः । तत्र च प्रथमा ' पुनानः सोम० ' इति बृहती ' दुहान ऊधर्० ' इति द्वितीया सतोबृहती । तत्र प्रग्रथनविशेषेण द्वे बृहत्यौ उत्तरे निष्पादितव्ये, न तु अन्यतः उत्पत्तिबृहत्यौ आनेतव्ये । **वि** ९।२।६ वर्णकं २, * रौरवयौधाजये सामनी माध्यंदिने सवने गीयेते । ९।२।६ वर्णकं २.

* **रौरवयौधाजयसाम्नोः** गानं बृहतीविष्टारपङ्क्त्योरेव प्रग्रथनेन संपादिते बार्हते तृचे कार्यं ज्योतिष्टोमे । ९।२।६।२५–२८ वर्णकं २. **मीको.** पृ. १८१९ ' ज्योतिष्टोमे बृहतीविष्टारपङ्क्त्योरेव०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **रौहितकः** । खादिरः पालाशो रौहितको वा यूपः तन्त्रम्, ज्योतिष्टोमे पशुत्रयार्थम् । **भा.** ११। ३।३।३.

## ल

* **लकारेषु** सर्वत्र शक्ततावच्छेदकं तत्तल्लकारत्वम् । वक्ष्यमाणरीत्या वा तत्तदादेशविशेषत्वं बोध्यम् । सर्वथा तदर्थस्य भावनायामेव अन्वयः इति सिद्धम् । **रहस्य.** पृ. ४४.

* **लकारार्थाः ।** लिङ्लोट्तव्यपञ्चमलकाराणां विधिर्वाच्यः । तेषामेव नञ्युक्तानां निषेधः । लङ्लुङ्लिटां भूतकालः । लृट्लुटोर्भविष्यत्कालः । लटो वर्तमानकालः । क्रियातिपत्तिर्लृङ्वाच्या । आशीरादीनामपि लिङादिवाच्यत्वम् । **सु.** पृ. ५६०.

* **लक्षणम् ।** इतरव्यावृत्त्या बोधकः आकारः लक्षणम् । **वि.** ३।१।२, * लक्षणम् । सजातीयविजातीयव्यावर्तकः लक्ष्यगतः कश्चित् लोकप्रसिद्धः आकारः लक्षणम् । १।१।२. * लक्षणं अनुपलब्धेः– अभावोऽपि प्रमाणाभावो नास्तीत्यस्यार्थस्य असंनिकृष्टस्य । **भा.** १।१।५।५ पृ. ३९, ( **मीको.** पृ. ३८६ ‘ अनुपलब्धि’शब्दे द्रष्टव्यम् । ). * लक्षणं अनुमानस्य–अनुमानं ज्ञातसंबन्धस्य एकदेशदर्शनात् एकदेशान्तरे असंनिकृष्टेऽर्थे बुद्धिः । **भा.** १।१।५।५ पृ. ३६. ( **मीको.** पृ. ३९२ अनुमानशब्दे च सविस्तरं द्रष्टव्यम्) । * लक्षणं अर्थापत्तेः । अर्थापत्तिरपि दृष्टः श्रुतो वाऽर्थः अन्यथा नोपपद्यते इत्यर्थकल्पना । यथा जीवति देवदत्ते गृहाभावदर्शनेन बहिर्भावस्य अदृष्टस्य कल्पना । **भा.** १।१।५।५ पृ. ३८. ( **मीको.** पृ. ६६३ अर्थापत्तिशब्दे च सविस्तरं द्रष्टव्यम् । ) * लक्षणं अहीनस्य — ‘ यजतिचोदनादहीनत्वं स्वामिनां चास्थितपरिमाणत्वात् ’ १०।६।१६।६१ इति सूत्रे द्रष्टव्यम् । * लक्षणं आख्यातस्य– ‘ येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्यातानि० ’ २।१।१।४ इति सूत्रे द्रष्टव्यम् । * लक्षणं उपमानस्य— उपमानमपि सादृश्यं असंनिकृष्टेऽर्थे बुद्धिमुत्पादयति । यथा गवयदर्शनं गोस्मरणस्य । **भा.** १।१।५।५ पृ. ३७. * लक्षणं ऋचः – ‘ तेषामृक् यत्रार्थवशेन पादव्यवस्था ’ २।१।१०।३५ इति सूत्रे द्रष्टव्यम् । * लक्षणं एकवाक्यत्वस्य– ‘ अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ’ २।१।१४।४६ इति सूत्रे द्रष्टव्यम् । * लक्षणं कर्मणः– यत् आश्रयं देशान्तरं प्रापयति, तत् कर्म इत्युच्यते । **भा.** २।१।२।५ पृ. ४००. * लक्षणं क्रत्वर्थस्य– श्रुत्यादिभिर्यत् असंयुक्तं फलवता च क्रतुना प्रकरणेन गृह्यते तत् क्रत्वर्थम् । **वा.** ५।१।१।१ पृ. १२८७. * लक्षणं क्रत्वर्थपुरुषार्थयोः ‘ यस्मिन् प्रीतिः पुरुषस्य० ’ ४।१।२।२ इति सूत्रे द्रष्टव्यम् । * लक्षणं गुणकर्मणः– ‘ यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत, तस्य द्रव्यप्रधानत्वात् ’ २।१।३।८ इति सूत्रे द्रष्टव्यम् । * लक्षणं दानस्य– ददातिरुत्सर्गपूर्वकः परस्वत्वेन संबन्धः । **भा.** ४।२।१३।२८. * लक्षणं धर्मस्य ‘चोदनालक्षणोऽर्थो धर्मः’ १।१।२।२ इति सूत्रे द्रष्टव्यम् । अर्थत्वे सति चोदनागम्यत्वम्, चैत्यवन्दनादौ घटादौ च अतिव्याप्तिनिरासार्थं चोदनागम्यत्वं इति । श्येनादौ अतिव्याप्तिनिरासार्थं अर्थत्वे सति इति । **वि.** १।१।२. * लक्षणं नाम्नः ‘ नामलक्षणम् ’ इति बिन्दौ ( **मीको.** पृ. २३२४ ) ‘ येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि० ’ २।१।१।३ इति सूत्रे च द्रष्टव्यम् । * लक्षणं निगदस्य– निगदाधिकरणे २।१।१३ ‘ निगदो वा चतुर्थं० ’ इति सूत्रे द्रष्टव्यम् । निगदा नाम प्रायशः परसंबोधनार्था मन्त्राः । **कौ.** २।१।१३।३९ पृ. ११५ * लक्षणं प्रत्यक्षस्य–‘ सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षम् ’ १।१।४।४ इति सूत्रे, ‘ प्रत्यक्षं प्रमाणं ’ इति बिन्दौ च ( **मीको.** पृ. २७४१ ) द्रष्टव्यम् । * लक्षणं प्रधानकर्मणः– ‘यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि, द्रव्यस्य गुणभूतत्वात्’ २।१।३।७ इति सूत्रे द्रष्टव्यम् । * लक्षणं प्रैषस्य— प्राप्ते प्रवर्तनम् । ‘प्रवर्तनस्मृतिः प्राप्ते प्रैष इत्यभिधीयते’ । **वा.** २।१।१।१ पृ. ३८२. * लक्षणं ब्राह्मणस्य– ‘ शेषे ब्राह्मणशब्दः ’ २।१।८।३३ इति सूत्रे द्रष्टव्यम् । * लक्षणं मन्त्रस्य– ‘ तच्चोदकेषु मन्त्राख्या ’ २।१।७।३२ इति सूत्रे द्रष्टव्यम् । * लक्षणं यजुषः– ‘ शेषे यजुःशब्दः ’ २।१।१२।३७ इति सूत्रे द्रष्टव्यम् । * लक्षणं यागस्य– ‘ यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् ’ ४।२।१२।२७ इति सूत्रे द्रष्टव्यम् । * लक्षणं लक्षणस्य– तन्नाम लक्षणमुच्यते येन तद्व्यतिरिक्तेभ्यः तस्य स्वरूपं व्यावृत्ताकारं निरूप्यते । **वा.** २।१।१।१ पृ. ३७०, * लक्षणं विधेः– अप्राप्तप्रेषणम् । ‘ अप्राप्तप्रेषणं सर्वं विधित्वं प्रतिपद्यते ’ । २।१।१।१ पृ. ३८२. * लक्षणं विशेषातिदेशस्य– ‘ अथ विशेषलक्षणम् ’ ८।१।१।१ इति सूत्रे द्रष्टव्यम् । * लक्षणं शास्त्रस्य– शास्त्रं शब्दविज्ञानात् असंनिकृष्टेऽर्थे विज्ञानम् । **भा.** १।१।५।५ पृ. ३७ ‘शास्त्रस्य लक्षणं ’ इति बिन्दौ च द्रष्टव्यम् । * लक्षणं शेषत्वस्य– परार्थत्वम् । ‘ शेषः परार्थत्वात् ’ ३।१।२।२ इति सूत्रे उक्तम् । * लक्षणं सकर्मकाकर्मकयोः– ‘ साक्षादव्यभिचारेण धात्वर्थो यत्र कर्मभाक् । सकर्मकः स धातुः स्यात्, पारंपर्ये त्वकर्मकः ॥ ’ पचिगम्यादयः, आसनशयनादयः । **वा.** २।१।१।१ पृ. ३८५. * लक्षणं सत्रस्य– ‘ द्वादशाहस्य सत्रत्वमासनोपायिचोदनेन यजमानबहुत्वेन च सत्रशब्दाभिसंयोगात् ’ १०।६।१६।६० इति सूत्रे उक्तम् । * लक्षणं सत्रस्य– आसनचोदनावत्त्वं उपायिचोदनावत्त्वं यजमानबहुत्वं वा । **भा.** १०।६।१६।६०. * लक्षणं साम्नः– ‘ गीतिषु सामाख्या ’ २।१।११।३६. इति सूत्रे द्रष्टव्यम् । * लक्षणं स्तोभस्य– ‘ अधिकं च विवर्णं च० ’ ( ९।२।१०।३९ ) इति सूत्रे द्रष्टव्यम् । * लक्षणं होमस्य– ‘ तदुक्ते श्रवणात् जुहोतिरासेचनाधिकः स्यात्’ ४।२।१३।२८ । तदुक्ते यजतिना उक्तेऽर्थे, जुहोतेः श्रवणात् आसेचनाधिकः यजत्यर्थः जुहोतिः स्यात् । * ‘ ज्ञातं च लक्षणं सर्वं लक्ष्यं लक्षयितुं क्षमम् ’ । **वा.** ३।१।२।२ पृ. ६५७. * न शक्यं पृष्ठाकोटेन तत्रतत्रोपदेष्टुमिति लक्षणमुक्तम् । ‘ ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः । ( ऋषयोऽपि हि लक्ष्याणां– इति वार्तिके ) लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ॥ ’ **भा.** २।१।७।३२. * ‘ निराकाङ्क्षी भवेल्लक्ष्यं येन तन्नाम लक्षणम् ’ । **वा.** १।३।८।२४ पृ. २६२. * लक्ष्यते येन तत् लक्षणम्, धूमो लक्षणमग्नेः इति हि वदन्ति । **भा.** १।१।२।२ पृ. १२. * ‘सर्वथा लक्षणं नाम यद्व्यवच्छेदकारणम्’ । **वा.** ३।२।१।१ पृ. ७४६. * **लक्षणेन** लक्ष्ये वस्तुनि संभावनाबुद्धिर्जायते । **वि.** १।१।२. * लक्षणेन लघीयसी प्रतिपत्तिः । **भा.** २।१।७।३२. * **सर्वलक्षणेषु** प्रतीतिमात्रौपयिकत्वादनुष्ठानानङ्गत्वम् । यथा ‘ योऽयं शुक्लवासाः दृश्यते तमानय ’ इत्यादिषु वासःप्रभृतीनाम् । **वा.** ३।१।७।१४ पृ. ७२३.

**लक्षणाश्रया लक्ष्यस्य व्यवस्था न्याय्येति न्यायः । साहस्री.** ६८४.

* **लक्षणोपयोगः** पूर्वाचार्यैर्दर्शितः– ‘ ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः । लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ॥ ’ इति । **वि.** २।१।७.

* **लक्षणकर्मणि** प्रयोजनं प्रसिद्धत्वात् न वक्तव्यम् । लघीयसी प्रतिपत्तिर्लक्षणेन । **भा.** २।१।७।३२, लक्षणकर्मणः प्रयोजनं न वक्तव्यम् । ज्ञानमेवात्र प्रयोजनमिति । ४।२।१२।२७, लक्षणकर्मणः प्रयोजनं न वक्तव्यम् । लक्षणकर्मणो हि तदेव प्रयोजनं यत् लक्षितो भविष्यतीति । ९।२।११।३९.

* **लक्षणक्रियानाम** ज्ञानक्रिया । **सोम.** ३।२।५.

* **लक्षणत्वं** उदासीनस्य न संभवति । **सोम.** ६।५।३. * लक्षणत्वं व्यापिनो धर्मस्य अन्यतो व्यावर्तकत्वम् । **सु.** पृ. १०८०.

**लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति न्यायः ।** लक्ष्यते ज्ञायते पदार्थोऽनेन ‘ लक्ष दर्शनाङ्कनयोः ’ करणे ल्युट् । लक्षणमसाधारणो धर्मः । तद्द्विविधम्– इतरभेदानुमापकं व्यवहारप्रयोजकं चेति नैयायिकाः । सजातीयविजातीयव्यावर्तको लक्ष्यवस्तुगतः कश्चिल्लोके वेदे वा प्रसिद्धो धर्मो लक्षणमिति मीमांसकाः । प्रमाता येनार्थं प्रमिणोति तत्प्रमाणम् । तेन लक्ष्ये वस्तुनि संभावनायां जातायां प्रमातुमुद्युक्तः प्रमाणेन तदवगच्छति । तथा च– यथा गन्धवत्त्वादिलक्षणेन प्रत्यक्षादिप्रमाणेन च पृथिव्यादिसिद्धिस्तथा यत्र विवक्षा तत्रास्य प्रवृत्तिरिति । एवं च अग्नीन्द्रादित्येश्वरवादे तत्तद्वक्ताः

सर्गादिहेतुत्वरूपेश्वरलक्षणं श्रुत्यादिप्रमाणं च तत्र तत्र दर्शयन्तः ईश्वरत्वं साधयन्तीति । **साहस्री.** ७२.

* **लक्षणशब्दः** मीमांसाशास्त्रे प्रमाणाध्याययोर्दृष्टः 'चोदनालक्षणोऽर्थो धर्मः', 'अथातः शेषलक्षणम्' इति । **बाल.** पृ. १. * लक्षणशब्दः, सजातीयविजातीयार्थान्तरव्यावृत्तासाधारणधर्मप्रतिपादकः रूढ्या । **सु.** पृ. ५३६.

* **लक्षणा** अदृष्टकल्पनायाः ज्यायसी । **भा.** ९।१।२।३, ९।१।१५।४३, **टुप्.** १०।८।१।४, **सु.** पृ. ५४६. ( लक्षणाविषयको विचारः प्राधान्येन **मीको.** पृ. २२२९ 'द्वितीयार्थः' ( भाट्टरहस्यगता ) इति बिन्दौ द्रष्टव्यः ) । * लक्षणा– अपरा पदवृत्तिः । सादृश्यान्यशक्यसंबन्धेन अशक्योपस्थितिर्लक्षणा ।

स्वशक्यसंबन्धवत्त्वं लक्षणा । तस्याश्च पदनिष्ठत्वं स्वाश्रयसंबन्धिवाचकत्वसंबन्धेन । यथा 'गङ्गायां घोषः' इत्यादौ गङ्गापदशक्यप्रवाहसंबन्धो लक्षणा । तज्ज्ञानकार्यतावच्छेदकं च गङ्गासंबन्धवत्तीरत्वप्रकारकतीरविशेष्यकशाब्दत्वम् । गङ्गासंबन्धस्य संबन्धत्वेन भानं संयोगत्वादिना वा 'गङ्गासंबन्धितीरे घोषः' 'गङ्गासंयुक्ततीरे घोषः' इत्युभयविधानुभवात् । एवं 'सिंहो देवदत्तः' इत्यत्रापि परंपरासंबन्धेन 'सिंहसंबन्धी देवदत्तः' इति बोधे लक्षणैव । 'अभिधेयाविनाभूते' इत्यस्यापि अभिधेयसंबन्धेन यत्र प्रकारः तत्र वृत्तिर्लक्षणा इत्यर्थः ।

न चैवं तीरत्वमात्रप्रकारको बोधः कथं स्यादिति वाच्यम् । नदीतीरे समुद्रतीरे वा इति संदेहापत्त्या तादृशबोधस्य अलीकत्वात् ।

न चैवं सर्वत्र गङ्गासंबन्धिनी इति बोधात् अजहल्लक्षणापत्तिः । शक्यलक्ष्योभयस्य क्रियान्वयित्वे अजहल्लक्षणाङ्गीकारात् इति **संप्रदायः ।**

वस्तुतो गङ्गापदात् तीरत्वमात्रप्रकारको बोधः । तीरत्वनिष्ठ–प्रकारतानिरूपित-विशेष्यतासंबन्धेन गङ्गापदजन्यशाब्दे, समवायेन गङ्गासंयोगवत्त्वज्ञानस्य हेतुत्वकल्पनया न संशयाद्यापत्तिः इति युक्तम् ।

सा च लक्षणा द्वेधा । अजहत्स्वार्था जहत्स्वार्था च । स्वशक्यार्थ–विशेष्यकान्वयबोधप्रयोजिका अजहत्स्वार्था । यथा 'यष्टीः प्रवेशय:' इत्यादौ । अत्र शक्यार्थस्यापि क्रियान्वयात् । इयमेव उपादानलक्षणा इत्यालंकारिकाः ।

स्वशक्यार्थाविशेष्यकान्वयप्रयोजिका जहत्स्वार्था 'गङ्गायां घोषः' इत्यादौ ।

लक्षितलक्षणाऽपि अत्रैवान्तर्भूता । स्ववाच्यपदघटकवर्णद्वयघटितपदवाच्यत्वरूपसंबन्धस्यैव द्विरेफादिपदे लक्षितलक्षणात्वात् । एतेन, द्विरेफपदेन भ्रमरपदं लक्ष्यते । तेन शक्त्या भ्रमरबोधः इत्यपास्तम् । द्विरेफपदोत्तरविभक्त्यर्थस्य अनन्वयापत्तेः ।

'तत्त्वमसि' इत्यादौ जहदजहल्लक्षणा च तृतीया इति **वेदान्तिनः ।**

लक्ष्यतावच्छेदके न लक्षणा इति **प्राञ्चः** । गोत्वविशिष्टशाब्दे गोत्वविशिष्टशक्तिग्रहस्य हेतुत्ववत् तद्विशिष्टशाब्दे तद्विशिष्टवृत्तिज्ञानस्य हेतुत्वात् तत्रापि लक्षणा युक्ता इति **नव्याः** ।

लक्षणाबीजं शक्यार्थान्वयानुपपत्तिः, न तु तात्पर्यानुपपत्तिः, वेदे तदसंभवात् । 'यष्टीः प्रवेशय' इत्यादौ तु प्रवेशनपदस्य भोजनप्रयोजनकप्रवेशनपरत्वग्रहात् अन्वयानुपपत्तिरेव । **वस्तुतः** मुख्यार्थानुपपत्तिज्ञानं मुख्यार्थबोधे प्रतिबन्धकं न लक्ष्यार्थबोधकारणम् ।

लाक्षणिकस्थले गङ्गापदेन तीरपदस्मृतिः, तेन तीरस्मृतिः इति **प्राञ्चः । तन्न** । गङ्गापदात् तीरानुपस्थितौ तत्र विभक्त्यर्थान्वयो न स्यात् । अतः तीरोपस्थापकत्वेऽपि नानुभावकत्वम्, तीरान्वयबोधे तीरान्वयप्रतियोगिशक्तपदज्ञानत्वेन हेतुताङ्गीकरणात् । शक्तपदान्तरादेव तीरान्वयानुभवस्य युक्तत्वात् । सर्वलाक्षणिकस्थले तु न बोध इति दिक् । **मणि.** पृ. ७५–७६. * लक्षणाऽपि च या दृष्टपूर्वा तस्यामेव शीघ्रतरबुद्धिर्भवति । **वा.** ३।३।१।३ पृ. ८०७. * लक्षणाऽपि शब्दवृत्तिप्रकार एव । **सु.** पृ. ७२७. * लक्षणाऽपि हि प्रवृत्तिविशेषकरत्वात् अर्थवती । यथा 'अग्नौ तिष्ठति', 'अवटे तिष्ठति' इति । **भा.** ११।२।१५।६४, * लक्षणाऽपि हि लौकिकी । १।२।२।२२, २।२।३।६. * लक्षणा च लौकिकी सत्यां गतौ अयुक्ता । **टुप्.** ६।५।२।११. * लक्षणा च श्रुत्या



बाध्येत । **भा.** १०।८।८।१६ पृ. २०७३. * लक्षणा च पदार्थधर्मो न पदधर्मः । तदुक्तम् 'तेन तल्लक्षितव्यक्तेः क्रियासंबन्धचोदना' इति । तच्छब्देन आकृतिः परामृश्यते ।

तथा न्यायसुधाकृताऽपि अर्थवादाधिकरणे लिङः प्रवर्तनासामान्ये शक्तिमुपपाद्य प्रवर्तनासामान्यस्य वाच्यत्वे अवगते तद्विशेषाकाङ्क्षायां प्रैषादीनां पुरुषधर्माणां वेदेऽनुपपत्तेः तद्विलक्षणं विशेषान्तरं अभिधेयेन सामान्येन विधिप्रेरणानियोगाख्यं लक्ष्यते इति । अत्र वाच्यप्रवर्तनासामान्यधर्म एव लक्षणा इत्युक्तं न शब्दधर्मे इति । **बाल.** पृ. ७४. * लक्षणा निर्निमित्ता नावकल्पते । **वा.** ३।५।८।२५ पृ. १००२. * लक्षणा प्रत्यक्षा सा अदृष्टकल्पनाया ज्यायसी । **भा.** ९।१।२।३. * लक्षणा बोध्यसंबन्धः, न तु शक्यसंबन्धः । **मणि.** पृ. ८२. * लक्षणा लक्षितलक्षणापेक्षया बलवती । **टुप्.** ९।१।२।३ वर्णकं २ पृ. १६४६. * लक्षणा । लाक्षणिकगङ्गादिपदस्यापि अनुभावकत्वस्वीकारात् तत्रापि साकाङ्क्षत्वम् । यदि च लाक्षणिकस्य नानुभावकत्वम्, तदा तीरोपस्थापक-पदव्यतिरेकप्रयुक्तान्वयाननुभावकत्वरूपाकाङ्क्षा अत्रापि अङ्गीकार्या । यत्र सर्वाणि पदानि लाक्षणिकानि तादृशवाक्यात् न बोधः इति **केचित्** । **मणि.** पृ. ६५–६६. * अदृष्टार्थात् दृष्टार्था **लक्षणा** लघीयसी । **भा.** ११।१।९।४९, * अनुवादे हि लक्षणा न्याय्या न विधौ । ४।४।८।१९. * 'अभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्यते ।' **वा.** १।४।१२।२३ पृ. ३५४. * असंभवे हि लक्षणा आश्रीयते । **भा.** १०।६।१७।६७. * असाधारण्येन हि लक्षणा भवति । **टुप्.** ६।१।५।२३ पृ. १३६९. * न च श्रुतिसंभवे लक्षणा न्याय्या । **भा.** ९।२।१५।४७. * न ह्यसति विरोधे लक्षणा युक्ता । **वा.** २।२।७।२१ पृ. ५२६. * निरूढलक्षणा शक्तितुल्या । **भाट्ट.** ७।३।१. * निरूढलक्षणया अनिरूढलक्षणा बाध्यते । उदाहरणं मृग्यम् । **बाल.** पृ. १४३, * न्यूनस्य अधिकार्थविषयत्वकल्पने लक्षणा, अत्रोदाहरणम् 'सोमेन यजेत' इत्यादौ मत्वर्थलक्षणा । पृ. ३. * प्रमाणान्तरानुसारित्वात् अनुवादे प्रसज्यमानाऽपि लक्षणा न दोषः । **सु.** पृ. ४१३. * भूतभविष्यतोर्भूते लक्षणा । भविष्यति नास्ति लक्षणा । **टुप्.** ४।१।११।२६. * ( लक्षणा ) मत्वर्थलक्षणा श्रुत्या ( अभिधया ) बाध्यते । **बाल.** पृ. १४१. * मन्त्रलिङ्गविरोधात् अगत्या विधावपि लक्षणा स्वीकार्या । उत्तिष्ठन्नन्वाह 'अग्नीदग्नीन् विहर' इत्यादौ । **सोम.** ३।२।४. * मुख्यार्थोपपत्तौ सादृश्यलक्षणानुपपत्तेः । **वा.** २।३।१३।२६ पृ. ६२०. * वचनानर्थक्यात् वरं पदमात्रस्य लक्षणा । **सोम.** ७।३।८. * वरं लक्षणा कल्पिता । लौकिकी हि लक्षणा हठः अप्रसिद्धकल्पना । **भा.** १।४।१।२, * वरं लक्षणा, न एकवाक्यस्यानेकार्थत्वम् । अनेकार्थत्वे अगमकत्वम् । लक्षणा तु गमिका, लौकिकत्वात् । ११।२।१।२. * वाक्यस्य वाक्यार्थे लक्षणा । 'घटमानय' इत्यादिवाक्ये घटानयनसामान्यबोधेऽपि तद्विशेषबोधस्य लक्षणां विना अनुपपत्तेः । बोध्यसंबन्धस्यैव लक्षणात्वम् । **मणि.** पृ. ८२–८३. * विवक्षितार्थापेक्षया न्यूनत्वाभ्युपगमे लक्षणा । यथा – 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इत्यत्र विवक्षितोऽर्थः उत्तरकालविशिष्टबृहस्पतिसवान्तराङ्गकत्वं वाजपेयस्य । तदपेक्षया न्यूनोऽर्थः प्रसिद्धयैव बृहस्पतिसवस्य वाजपेयोत्तरत्वम्, तदभ्युपगमे वाजपेयश्रुतौ काललक्षणा इति । **बाल.** पृ. ३. * व्यवधानाल्लक्षणाऽपि ज्यायसी । प्रत्यक्षं हि लक्षणायाम्, परोक्षं व्यवधाने वाक्यम् । **भा.** १०।२।३१।७०, * श्रुतिश्च बलीयसी न लक्षणा । ३।३।१२।३३, * श्रुत्यसंभवे लक्षणाऽपि न्याय्यैव । ४।४।९।२३. * श्रुतिलक्षणाविशये च श्रुतिः न्याय्या न लक्षणा । **भा.** १।४।१।२, २।२।१३।२८, ३।२।९।२५, ३।७।६।१३, ६।१।१३।५१, ९।१।६।२१, ९।२।८।३१ वर्णकं २, ९।४।२।२०, १०।४।१६।३३. * साक्षात् स्वावयवद्वारकत्वसाधारण्येन स्वनिष्ठशक्त्या स्वप्रतिपाद्यसंबन्ध एव लक्षणा, न तु साक्षादेव स्वनिष्ठशक्त्या स्वप्रतिपाद्यत्वसंबन्धः गौरवात् । **कु.** १।२।१।७. * 'निरूढाः **लक्षणाः** काश्चित् सामर्थ्यादभिधानवत् । क्रियन्ते सांप्रतं काश्चित् काश्चिन्नैव त्वशक्तितः ॥' इह केषुचिदर्थेषु अभिधानवदेव लक्षणा-

शक्तिरपि अनादिकालप्रवृत्तत्वेन निरूढा:, यथा शुक्लादिषु । केषुचित्त् क्रियते, यथा रथाङ्गनामा चक्रवाक इति । केषुचित् पुनः कर्तुमपि न शक्यते यथा शब्दस्पर्शरूपरसगन्धेषु । **वा.** ३।१।६।१२ पृ. ६८३. * **लक्षणया** अनुवाद उपपद्यते । विदितस्य स भवति । **भा.** ११।१।१०।६४, * लक्षणयाऽपि कल्प्यमानः साधुभवति यदा आञ्जस्येन शब्दार्थो नावकल्पते तदा, यथा अग्नौ तिष्ठति, अवटे तिष्ठति, = अग्निसमीपे, अवटसमीपे तिष्ठति इति भवति संव्यवहारः । लक्षणाऽपि हि लौकिक्येवेति । २।२।३।६, * लक्षणयाऽपि तावत् कर्मैकवाक्यता संभवति । ४।४।८। १९, * लक्षणयाऽपि विधानं भवति, यथा लोके ' अमी पिष्टपिण्डाः सिंहाः क्रियन्ताम् ' इति । वेदेऽपि, ' पृष्ठैरुपतिष्ठते ' इति । न च तत्र सिंहशब्दः प्रतिकृतिवचनो दृष्टः, इत्यन्यत्रापि प्रतिकृतिवचनो विज्ञायते । पृष्ठशब्दो वा पृष्ठसाधनमन्त्रवचनः । न च लक्षणया प्रयोगे शब्दार्थः परिच्छिद्यते । यत्कारणम्, स्वार्थे एव वर्तमानोऽर्थान्तरं लक्षयति, स्वार्थं जहन्नैव लक्षयेत् । ८।३।६।२८. * लक्षणयाऽपि शब्दार्थो भवति । ४।२।२।७. * लक्षणया गौणी बाध्यते । यथोक्तं तद्व्यपदेशाधिकरणे पूर्वपक्षे । वत्यर्थोपादानेन कर्मणि प्रवृत्तौ अत्यन्तविप्रकृष्टा गौणता स्यात् इति । **वाल.** पृ. १४१, * लक्षणया मुख्यवृत्तिः क्वचित् बाध्यते 'व्रीहीनवहन्ति' इत्यत्र ( व्रीहिपदेन यवादीनामपि ग्रहणात् ) आनर्थक्यप्रतिहतानां इतिरीत्या । पृ. १४५, * लक्षणया लक्षितलक्षणा बाध्यते, यथोक्तं नवमे ' यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयात् ' इत्यादिः । ( अत्र ) स्वरयोर्नियमः न लक्षितलक्षणया ज्योतिष्टोमापूर्वार्थः किंतु लक्षणया दीक्षापूर्वार्थ एवेति । पृ. १४९. * लक्षणया सर्वत्रैव लिङ्गसंख्ये प्रवर्तेते । **टुप्.** १२।१। १।१. * नहि श्रुत्या उपयुक्तानां **लक्षणया** उपयोगान्तरं युज्यते । **वा.** ३।३।९।१८ पृ. ८६६. * प्रथमं अनुग्रहीतव्यं विरोधाभावात् । पश्चात्तनं तु विरोधात् लक्षणया कल्पनीयम् । **भा.** ३।४।११।३१. * लिङादियुक्तलौकिकवाक्यस्य लक्षणया आनयनादिरूपकार्यान्वितबोधकत्वं इति प्राभाकराः । **मणि.** पृ. ८२. * श्रुत्यभावे लक्षणयाऽपि व्यवहारो भवति । यथा ' अग्नौ तिष्ठति ', ' अवटे तिष्ठति ' इति । **भा.** ६।६।२।१५. * **लक्षणायाः** अध्याहारापेक्षया लघुत्वम् । **मणि.** पृ. ११०. * लक्षणायाः अनुमितवाक्ये अभावः । **संकर्ष.** ३।३।४. * लक्षणायाः श्रुतिर्बलीयसी । **भा.** १।४।१३।२४, ३।६।३।१०, ९।१।९।३३, ९।३। २।३, १०।८।१४।३५, **टुप्.** १०।१।१।२. * सति तात्पर्यग्रहे तदनुपपत्त्या **लक्षणायाः** अपि न्याय्यत्वात् । **संकर्ष.** २।१।५. * **लक्षणानां** मध्ये लक्षणया लक्षितलक्षणा बाध्यते, अजहत्स्वार्थया जहत्स्वार्था, निरूढलक्षणया अनिरूढलक्षणा, एकलक्षणया अनेकलक्षणा, अल्पलक्षणया बहुलक्षणा, क्लृप्तया अक्लृप्ता, कार्यलक्षणया धर्मलक्षणा च बाध्यते । अत्रोदाहरणानि ' बाधभेदनिरूपणं ' इति बिन्दौ बालप्रघट्टके द्रष्टव्यानि ( **मीको.** पृ. २९६६ ) । **वाल.** पृ. १४२–१४३. * **लक्षणायां** अपि अर्थवत्ता भवत्येव । **भा.** १।२।२।२२, * लक्षणायां च शब्दो बाध्येत तच्चायुक्तम् । १०।१।१।२. * लक्षणायां शक्यसंबन्धमात्रापेक्षा, गौण्यां शक्यसंबन्धिगुणसंबन्धापेक्षा, तेन लक्षणा प्रबला । **वाल.** पृ. १४१. * लक्षणायां सत्यामपि स्वशक्याश्रयवाचकपदवृत्तित्वसंबन्धेनैव लक्षणात् । **भाट्ट.** ९।३।१२. * अर्थवादावगतविषये विधौ ऋगादिशब्दानां अनुवादकत्वात् **लक्षणायामप्यदोषः** । **वा.** ३।३।१।२ पृ. ८०७, * **लक्षणासु** परशब्दार्थः प्रयोजनम् । १।२।३।२५ पृ. १४१, * लक्षणासु शास्त्रेणान्वाख्यानं न क्रियते । ३।१।६।१२ पृ. ६८१.

* विना कारणेन **लक्षणाऽनाश्रयणात्**, विरुपष्टे हि परशब्दसामानाधिकरण्ये सति अनन्यथासंभवे च जघन्यवृत्तिः शब्दो भवति । **वा.** २।२।५।१७ पृ. ५१२.

* **लक्षणार्थः** असति श्रुत्यर्थे ग्राह्यः । **भा.** ७।३।२।५.

* **लक्षणाश्रयणं** अर्थवादगतमेव युक्तम्, अर्थवादानां नित्यं प्रमाणान्तरावगतार्थविषयत्वात् । न विधिगतम् । **वा.** ३।४।११।३० पृ. ९६४, * लक्षणाश्रयणं सर्वत्रैव आनर्थक्यप्रसङ्गनिमित्तम्, अन्यथा मुख्यार्थोपपत्तेः । २।१।४।१२ पृ. ४११, * न चैकत्र **लक्षणाश्रयणं** इति सर्वत्रैव सा आश्रयितव्या इति । २।३।१०।२३ पृ. ६१२.

* **लक्षणातः** वाक्यभेदः अतिदुष्टः, लक्षणायाः पददोषत्वात् वाक्यभेदस्य च वाक्यदोषत्वात् । **मीन्या.** * लक्षणातः श्रुतिर्न्याय्या । **भा.** १२।२।५।१४.

* **लक्षणादोषः** । अधिकस्य सतः न्यूनत्वे यथा ' चतुरवत्तं जुहोति ' इति । अत्र जुहोतेः देवतोद्देशत्यागविशिष्टप्रक्षेपवचनस्य आग्नेयादिचोदनयैव इतरयोः अंशयोः ( देवतोद्देशत्यागरूपयोः ) प्राप्तेः, प्रक्षेपमात्रपरत्वेन न्यूनत्वे लक्षणा । **बाल.** पृ. ४. * लक्षणादोषः अनुवादे नास्ति । **वा.** २।२।१२।२७ पृ. ५५५.

* **लक्षणापरिग्रहः** अगतिकगतिः । **भा.** ७।२।१। १३.

* **लक्षणाप्रयोगे** न शब्दार्थशङ्का भवति । **भा.** ११।१।८।४२.

* ' श्रूयमाणस्य वाक्यस्य न्यूनाधिकविकल्पने । **लक्षणावाक्यभेदादिदोषो नानुमिते** ह्यसौ ॥ ' **वा.** १।४।२।३ पृ. ३२९.

* ( **क्षौमे वसानौ** ) अत्रापि य एकशेषः ' पुमान् स्त्रिया ' इति असावपि **लक्षणाशब्दः** एव । **भा.** ३।३। ९।१९, * श्रुत्युपादाने अदृष्टं कल्पयितव्यं इति लक्षणाशब्दः परिकल्प्यते । यथा काशिकेषु शालयो भुज्यन्ते ( तण्डुलाः ) गावः ( पयः ) पीयन्ते इति । **भा.** ९।१। १२।३९.

* **लक्षणासिद्धिः** तात्पर्यात् । **शा.** १।२।१ पृ. ६.

* **लक्षितलक्षणा** मत्वर्थलक्षणातो दुर्बलतरा । **वा.** १।४।३।१ पृ. ३२७, **सु.** पृ. ४१३. * लक्षितलक्षणा लक्षणया बाध्यते । **बाल.** पृ. १४२. * रथंतरसामनि अध्यवसीयमाने ऋचा पदं लक्ष्यते, पदेन साम । सैषा **लक्षितलक्षणा** । **भा.** १०।५।१५।५८ वर्णकं १, * शब्दः अर्थप्रत्यायनार्थमुच्चारितः । स चार्थः पुनः शब्दं प्रत्याययेत इति लक्षितलक्षणा हि तथा स्यात् । १०।४।१२।२३. * **लक्षितलक्षणया** द्विरेफपदेन भ्रमरपदं लक्ष्यते, तेन शक्त्या भ्रमरबोधः इति **केचित्** । **मणि.** पृ. ७६. * दीक्षणीया आत्मीयमपूर्वं लक्षयति, तेन धर्माणां संबन्धः । अस्मिन् पक्षे लक्षणा । यदा तु दीक्षणीयापूर्वं परमापूर्वं लक्षयति तदा **लक्षितलक्षणया** धर्माणां संबन्धः । **टुप्.** ९।१।२।३ वर्णकं २.

* **लक्षितलक्षणापेक्षया** लक्षणा बलवती । **टुप्.** ९।१।२।३ वर्णकं २ पृ. १६४६.

* **लक्ष्यानपायन्यायः** । **मीको.** पृ. ११६४ 'उपलक्षणापायेऽपि उपलक्ष्यानपायः' इतिन्याये द्रष्टव्यम् । * लक्ष्यानपायन्यायः । उपलक्ष्यानपायन्यायः । लक्षणापायेऽपि लक्ष्यस्य नापायः । यथा ' नागवेलायामागन्तव्यम्, शङ्खवेलायामागन्तव्यम्, पटहवेलायामागन्तव्यं इति । यस्मिन् ग्रामे न नागाः, न शङ्खाः, न पटहस्तस्मिन्नपि स एव कालः, तत्र ह्यागमनं क्रियते ' । इति १०।८। १८।७० सूत्रे भाष्यम् । ग्रामे नागादिरूपस्य काललक्षणस्याभावेऽपि कालस्य लक्ष्यस्यापायो न भवति तद्वत् । **के.** न्यायनाम तु **रसायने** पृ. २२ .

* **लक्ष्यार्थता** न न्याय्या, मुख्यार्थता च न्याय्या । **भा.** ३।२।९।२६.

**लक्ष्याश्रयेण तु लक्षणव्यवस्थापनं गत्यन्तराभावादिति न्यायः । साहस्री.** ६८५.

* **लक्ष्यलक्षणयोः** अनुच्चार्यमाणयोः संबन्धः नहि अवगम्यते । **भा.** १०।६।२।३ पृ. १९८७.

* **लक्ष्यलक्षणभावः** ज्ञाप्यज्ञापकभावात्मकः । **सोम.** ३।२।५.

* **लक्ष्यतावच्छेदके** न लक्षणा इति **प्राञ्चः** । तद्विशिष्टशब्दे तद्विशिष्टवृत्तिज्ञानस्य हेतुत्वात् तत्रापि लक्षणा युक्ता इति **नव्याः** । **मणि.** पृ. ७६ .

* ' **लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता** ' इति वार्तिके लक्ष्यमाणशब्दस्य लक्षणामूलप्रतीतिविषयत्वार्थकत्वेन उपपत्तिः । **सोम.** १।४।१६।२६.

* **लङ्** । लङर्थस्तु अनद्यतनभूतत्वम् । 'अपचत्' इत्यत्र ' भूते ' इत्यनुवृत्तौ ( पा. ३।२।८४ ) ' अनद्यतने लङ् ' ( पा. ३।२।१११ ) इति सूत्रात् । **रहस्य.** ४४, **मणि.** पृ. ११७.

ऋ 'लघयन्खलु तेजसा जगन्न महानिच्छति भूतिमन्यतः' इति न्यायः। इति भारविः। **साहस्री.** ९६७.

* **लघूपाये** उपात्ते, गुरूपाश्रयणानुपपत्तावपि आनर्थक्यपरिहाराय उपात्तेऽपि लघौ गुरोराश्रयणम्। **सु.** पृ. ५०–५१.

* **लट्**। लटो वर्तमानत्वे शक्तिः। 'वर्तमाने लट्' (पा. ३।२।१२३) इत्यनुशासनात्। तच्च वर्तमानत्वं लट्प्रयोगाधिकरणकालसंबन्धित्वम्, लट्शब्दप्रयोगाधिकरणकालोपाधिवृत्तित्वं वा, अतीतभविष्यत्कालातिरिक्तकालसंबन्धित्वं वा। एवं च तत्क्रियाप्रयोगप्रयोज्यशाब्दाधिकरणतत्तत्काल एव वर्तमानकालः। तत्तत्कालकृतिषु वर्तमानत्वव्यवहारः। अननुगतस्यापि शब्दैक्यमात्रेणैव अनुगम इति। यथा तदादिसर्वनामार्थः अननुगत एव। बुद्धिस्थत्वेन अनुगमे बुद्धेरपि अननुगमः तद्बुद्धेरप्यननुगम इति। एवं यत्र न प्रयोगाधिकरणकालः तत्रापि लिप्यादिजन्यप्रयोगज्ञानसत्त्वात् तत्कालज्ञानं अभ्याहतम्।

**परे** तु वर्तमानत्वादिकं क्वचिदुत्पत्तौ, क्वचिदेकदेशे, क्वचित् कृतौ, क्वचिदाश्रयत्वे, क्वचिदभावे अन्वेति। तेन 'आदिपर्वणि युधिष्ठिरोऽस्ति' 'इह कुमाराः क्रीडन्ति' 'पचति' 'जानाति' 'क्वास्ति देवदत्तः' इत्यादिः प्रयोगः। 'ईश्वरो जानाति' इत्यादौ वर्तमानत्वं अनन्वयि। 'दैवतैः स्थीयते' इति प्रत्ययार्थैकत्ववत् आहार्यशाब्दबोधो वा। संग्रहश्च– 'अप्रवृत्तौ, परश्चैव वृत्तौ विरत एव च, । नित्यः प्रवृत्तः, सामीप्ये, वर्तमानश्चतुर्विधः ॥' इति। अस्यार्थः। लडथा वर्तमानत्वं प्रवृत्त्यभावे अन्वेति, यथा 'मांसं न भुङ्क्ते' मांसभोजने निवृत्त इति। 'इह कुमाराः क्रीडन्ति' इत्यत्र क्रियाया धारावाहिकत्वे। 'तिष्ठन्ति पर्वताः' इत्यादौ क्रियायाः नित्यप्रवृत्तत्वे। तच्च बहुकालव्यापित्वम्। सामीप्ये तु 'कदा त्वमागमिष्यसि गमिष्यसि वा' इति पृष्टे 'एष आगच्छामि, गच्छामि वा' इति उत्तरे बोध्यम्। अत्र सर्वत्र शक्तिर्लक्षणा वा। तथा मन्यतेः उत्तमपुरुषैकवचनस्य प्रहासे शक्तिः। अतादृशत्वेन जानतः तादृशत्वकथनं प्रहासः। तथा पुरापदयोगे भविष्यदर्थे लटः।

प्रहासादिकं व्यञ्जनागम्यं इत्यालंकारिकाः। **मणि.** पृ. ११५–११६.

* लट्। 'वर्तमाने लट्' (पा. ३।२।१२३) इति सूत्रात् 'पचति' इत्यत्र वर्तमानत्वं लडर्थः। तच्च लडुच्चारणकालाभिन्नकालकत्वम्। तच्च कालिकवृत्तित्वसंबन्धेन कृतावेव अन्वेति विक्लत्युपधायककृतिकूटान्तर्गतयत्किंचित्कृतेः तदुच्चारणकालीनत्वात्। अत्र सर्वत्र कृतिशब्दो भावनापरः। तेन 'जानाति' इत्यादौ आश्रयत्वस्य वर्तमानत्वान्न क्षतिः। 'नश्यति' इत्यादौ च धातुना नाशस्यैवोक्तिः। प्रत्ययेन च प्रतियोगित्वस्य लक्षणा। वर्तमानकालस्य परं अनुभवानुरोधेन स्ववृत्त्युत्पत्तिकनाशीयत्वसंबन्धेन प्रतियोगित्वे एव अन्वयः। तथा च घटवृत्ति नाशप्रतियोगित्वं वर्तमानकालोत्पत्तिकनाशीयत्वसंबन्धेन वर्तमानत्ववत् इत्येव अस्मन्मते शाब्दबोधः। **रहस्य.** पृ. ३९–४०.

तत्तत्क्षणेष्वेव लटः शक्तिः। न तु लडुच्चारणस्य शक्यतावच्छेदककोटिप्रवेशः। तस्य तदादौ बुद्धिस्थत्वस्येव शक्तिग्रहोपलक्षणत्वात्। अथवा लडादेः लट्त्वादिकमेव शक्यतावच्छेदकम्। तदवच्छिन्नस्य च कालिकसंबन्धेन प्रकृतशाब्दबोधोपधायकस्ववृत्तित्वं कृतौ संबन्धः। कृतेः आख्यातत्वेन रूपेण लड्बोध्यत्वात्। तेन मैत्रीयप्रयोगकालीनकृतिध्वंसकाले न चैत्रलट्प्रयोगापत्तिः। **रहस्य.** पृ. ४२–४३.

ऋ **लपोरशङ्खन्यायः**। अयं श्लोकबद्धः। यथा– 'शङ्खिनी काञ्चनं दद्यादहं शङ्खो लपोरकः। वदामि बहुवाक्यानि न ददामि कपर्दिकाम् ॥' इति। लपतीति लपोरकः। 'लप व्यक्तायां वाचि'। **साहस्री.** ९३८.

* **लभेः** प्राप्तौ स्मरणात्। **सु.** पृ. ६०.

* '**लभ्यमाने** फले दृष्टे नादृष्टपरिकल्पना'। अध्ययनविधिना न स्वर्गाद्यर्थं अध्ययनं विधीयते 'लभ्य० कल्पना' इति **न्यायेन** दृष्टफलसंभवे अदृष्टफलस्य अन्याय्यत्वात्। **वैद्यनाथः** १।१।१.



* **लवने** प्रयोजनं वेदिस्तरणयोग्यस्य बर्हिष उपसादनम्। **भा.** ११।४।१४।४४.

* **लवनादेः** प्रकृतावपि न सर्वार्थता। **भा.** ३।८। १७।३२, **वा.** पृ. ११३५.

* **लवनप्रकाशकमन्त्रस्य** मुख्ये बर्हिषि विनियोगः। **भा.** ३।२।१।१–२.

* **लवनमन्त्रस्य** दर्भलवने प्रतिलवनं आवृत्तिः दर्शपूर्णमासयोः। **भा.** ११।४।१४।४४–४५.

* **लशुनं** न भक्षयितव्यम्। **भा.** ६।२।५।१९.

* **लाक्षणिकानि** सर्वाणि पदानि यत्र, तद्वाक्यं मूकमेव। **मणि.** पृ. ७३. * **लाक्षणिकं** अर्थं वेद आश्रयति। 'सोमेन यजेत' इत्यत्र मत्वर्थलक्षणा। **बाल.** पृ. ११४. * **लाक्षणिकस्य** पदस्य शक्तपदस्मृतिहेतुसंस्कारोद्बोधकतया स्वार्थोपस्थितिद्वारा शाब्दबोधकरणता। **मणि.** पृ. ७३.

* **लाक्षणिकपदस्य** अनुभावकत्वाभावात् तत्स्मृतशक्तपदस्यैव शाब्दबोधहेतुत्वं इति केचित्। लाक्षणिकस्यापि अनुभावकत्वं युक्तम्। **मणि.** पृ. ७३.

* **लाक्षणिकशब्दप्रवृत्तिः**, तात्पर्यावधारणं विना न युक्ता। **सु.** पृ. ७३७.

ऋ **लाक्षारसावसिक्तकार्पासबीजन्यायः**। यथा लाक्षारसावसिक्तकार्पासबीजानां अङ्कुरादिपारंपर्येण कार्पासादौ रक्तिमनियम इति। यथोक्तम्– 'यस्मिन्नेव हि संताने ह्याहिता कर्मवासना। फलं तत्रैव बध्नाति कार्पासे रक्तता यथा ॥' इत्यादि सर्वदर्शनसंग्रहे आर्हतनये। **साहस्री.** ७००.

* **लाक्षारसोपसिक्तात्** बीजपूरकुसुमात् तद्रूपं जायमानं फलं तद्वासितमित्युच्यते। **रत्नाकरः.** पृ. २६२.

* **लाघवं** अपि निश्चयकारणम्। **सु.** पृ. २२.

* लाघवमपि प्राधान्यविरोधित्वे अप्रयोजकम्। **मणि.** पृ. ११४.

* **लाघवन्यायः** (अत्रमेव आग्नेयीन्यायः ३।२।८। २१–२४)। लाघवाख्यन्यायस्य नियामकता युक्ता। स हि प्रकृतितः एकपशुनिष्पन्नैकादशावदानगणं एकं प्रापयति। यद्यपि क्वचिद्बहुत्वस्य विशिष्टेऽप्यन्वयो दृष्टचरो भवेत् तथापि विशेष्यमात्रेऽपि अन्वयदर्शनात् उभयथाव्युत्पत्तिसत्त्वे, पूर्वोक्तविधया अत्रोभयथाप्युपपत्तौ लाघवस्यैव नियामकत्वात् युक्तं एकयागकल्पनम्। **कौ.** २।२। ७।२० पृ. २३८, * द्रव्यदेवतासंबन्धस्य एकत्वे **लाघवन्यायस्य** एव नियामकत्वात् युक्तं यागैकत्वम्। २।२। ७।२० पृ. २४०. * सवनीयपश्वादिषु आतिदेशिकपात्राणां आधानवेलायामेवोपात्तत्वेन लाघवन्यायस्याप्यभावात् नात्र प्रसङ्गसिद्धिः। **भाट्ट.** १२।१।४.

ऋ **लाङ्गलं जीवनमिति न्यायः**। लाङ्गलं हलं जीवनस्य निमित्तमिति गम्यते। **साहस्री.** १९२.

* **लिखितपाठेनापि** अध्ययनं अर्थज्ञानं च संभवति तथापि न तदपूर्वजनकं इति व्यर्थम्। **वि.** १।१।१.

* **लिङ्** प्रतिषेधे श्रौतो यथा– न चतुस्त्रिंशदिति ब्रूयात्। **बाल.** पृ. ४०. * लिङ् विधात्री श्रुतिः। **वा.** ३।१।७।१३ पृ. ७००. * लिङ् विधौ स्मार्तो यथा– मनुः 'अग्निहोत्रं तु जुहुयादाद्यन्ते द्युनिशोः सदा।' (मस्मृ.)। **बाल.** पृ. ४०. * लिङ् शब्दभावनावाचको लिङ्त्वेन। वि. २।१।१ वर्णकं २. * **लिङा** तावत् धात्वर्थविधानं स्वपदेनोपात्तत्वात् श्रौतम्। **वा.** २।३।३। ४ पृ. ५९३. * **लिङः** प्रवर्तनायां शक्तिग्रहः न्यायसुधायां अन्यथा उक्तः। बुभुक्षितस्य बालस्य रोदनेन स्तनपाने प्रवर्तनां ज्ञात्वा स्तनदाने माता प्रवर्तते। तदा असौ तस्या मातुः प्रवृत्तेः कारणं जिज्ञासमानः कारणान्तरानुपलब्ध्या स्वप्रवर्तनायां कारणत्वं प्रकल्प्य, गामानय इति वाक्यश्रवणानन्तरं प्रयोज्यप्रवृत्तिं दृष्ट्वा मातृप्रवृत्तिदृष्टान्तेन तस्यामपि प्रवर्तनाज्ञानस्य कारणत्वमनुमाय तत्कारणजिज्ञासायां लिङादिशब्दश्रवणानन्तर्यात् तस्यैव अन्वयव्यतिरेकाभ्यां प्रवर्तनाभिधानशक्तिं कल्पयति इति। **बाल.** पृ. ७६.

* **लिङर्थः** इष्टसाधनत्वं इति मतम्। लिङर्थेष्टसाधनताप्रकारको धात्वर्थविशेष्यको बोधः इति च मतम्। **मीन्या.** * लिङर्थः प्रवर्तना इति केचित्। इष्टसाधनत्वं इत्यन्ये। **मीन्या.** * लिङर्थः। विध्यादिकं लिङर्थः। 'विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्' (पा.

३।३।१६१ ) इति सूत्रात् । भृत्यादेर्निकृष्टस्य प्रवर्तनं प्रेरणं विधिः । निमन्त्रणं आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम् । आमन्त्रणं कामचारानुज्ञा । अधीष्टं सत्कारपुरःसरं प्रवर्तनम् । अत्र तत्त्वेन न शक्तिः । नानाशक्तिकल्पनापत्तेः । किंतु एतच्चतुष्टयवृत्तिप्रवर्तनात्वेन । प्रवर्तनात्वं च परनिष्ठप्रवृत्तिजनकज्ञानविषयप्रवर्तकधर्मत्वम् ।

एतेन इष्टसाधनत्व–कृतिसाध्यत्वबलवदनिष्टाननुबन्धित्वानां प्रवर्तनात्वाभावेन विध्यर्थत्वं वदन्तः परास्ताः ।

**मण्डनस्तु**— यागादौ कृतिसाध्यताज्ञानस्य लोकत एव सिद्धेः अन्यलभ्यत्वात् न तत्र लिङः शक्तिः । बलवदनिष्टाननुबन्धित्वज्ञानं च द्वेषाभावजननेन अन्यथासिद्धत्वात् न प्रवृत्तौ हेतुः । अत एव आस्तिककामुकस्य नरकसाधनताज्ञानदशायां प्रवृत्तिर्निराबाधा । अतः इष्टसाधनत्वमेव प्रवर्तना इत्याह ।

कार्यं लिङर्थं इति **गुरवः** ।

इष्टसाधनत्वादीनां आक्षेपतो लाभात् पदार्थान्तरं प्रवर्तना, तत्र लिङः शक्तिः इति **भट्टाः** ।

अर्थभावनाभिधाऽनुकूला शक्तिरेव प्रवर्तना इति **पितृचरणाः** ।

कार्यकारणभावश्च लिङर्थः 'हेतुहेतुमतोर्लिङ्' (पा. ३।३।१५६ ) इति सूत्रात् । यथा 'यो ब्राह्मणायावगुरेत् तं शतेन यातयात्' इति । **मणि.** पृ. ११७–११८. * विध्युपरक्ता भावना लिङर्थः इति **भट्टसिद्धान्तः** । विधिः प्रवर्तना, तदुपरक्ता तद्विशिष्टा अर्थभावना लिङ्प्रतिपाद्या इति तदर्थः । **मणि.** पृ. ९३. * **लिङर्थस्य** निवारणरूपस्य उक्तेन संबन्धेन आख्यातार्थकृतौ अन्वयः । नञ्पदं तु स्वार्थस्याभावस्य प्रतियोगितासंसर्गेण आख्यातार्थकृतौ अन्वयानुवादकं सत् लिङाद्यर्थतात्पर्यग्राहकम् । **रहस्य.** पृ. १९. * '**लिङर्थे** लेट्' ( पा. ३।४।७) इतिपञ्चमलकारस्य विधौ स्मरणेऽपि वर्तमानापदेशसंदिग्धत्वात् निर्णयसापेक्षता **सु.** पृ. ४८.

* **लिङादिः** एव वेदे प्रवर्तकः पुरुषाभावात् । **बाल.** पृ. ७५. * **लिङादयः** । प्रथमं हि लिङादयः कार्यं बोधयन्ति । तच्चानुष्ठापकम् । अप्रयोजकत्वं तु वाक्यान्तरपर्यालोचनया अवगम्यम् । **ऋजु.** पृ.३२, * संनिहिते अधिकारविधौ वाक्यान्तरगता **लिङादयश्च** अनुवादका एव । पृ. ३२, * **लिङादिभिः** फलसाधनतानिबन्धना कार्यतैव अभिधीयते । पृ. ९७. * **लिङादेरेव** प्रवर्तकत्वम् । कथं अज्ञातपूर्वेण प्रवर्तयितुर्धर्मेण अव्युत्पन्नो बालः, प्रथमं लिङादेः संबन्धं गृह्णाति इति चेत्, पश्य । यदा बुभुक्षितस्य बालस्य रोदनेन स्तनदानप्रवर्तनां ज्ञात्वा स्तनदाने माता प्रवर्तते, तदा असौ तस्या मातुः प्रवृत्तेः कारणं जिज्ञासमानः कारणान्तरानुपलब्ध्या स्वप्रवर्तनायां कारणत्वं प्रकल्प्य 'गामानय' इत्यादिवाक्यश्रवणानन्तरं प्रयोज्यवृद्धप्रवृत्तिं दृष्ट्वा मातृप्रवृत्तिदृष्टान्तेन तस्यामपि प्रवर्तनाज्ञानकारणकत्वं अनुमाय तत्कारणजिज्ञासायां लिङादिशब्दश्रवणानन्तर्यात् तस्यैव अन्वयव्यतिरेकाभ्यां प्रवर्तनाभिधानशक्तिं कल्पयन् केन वार्यते । तत्र च प्रैषादीनां विशेषाणां व्यभिचारित्वेन अवाच्यत्वात् सर्वानुयायिनः प्रवर्तनासामान्यस्य वाच्यत्वे अवगते तद्विशेषाकाङ्क्षायां प्रैषादीनां पुरुषधर्माणां वेदे अनुपपत्तेः तद्विलक्षणं विशेषान्तरं अभिधेयेन सामान्येन विधि–प्रेरणा–नियोगाख्यं लक्ष्यते । अतो गृहीतसंबन्धतया लिङादिवाच्येन प्रवर्तनासामान्येन तद्विशेषस्य प्रेरणाख्यस्य लक्षणया अवगतिसंभवात् संबन्धाग्रहणं अदोषः । तस्य च प्रवर्तनासामान्यविशेषत्वेन हेतुना प्रैषादिदृष्टान्तेन प्रवर्तयितृधर्मत्वानुमानात्, वेदे च पुरुषाभावात्, भावनादेश्च प्रवृत्तिविषयत्वेन तदानीमसत्त्वात् प्रवर्तकत्वानुपपत्तेः । पारिशेष्यात् लिङादेरेव प्रवर्तकत्वावधारणात् तदीयत्वसिद्धेः न लिङादिशब्दस्वरूपाभिधानापत्तिः । प्रवृत्तिविषयत्वस्य च श्रेयःसाधनत्वाक्षेपकत्वेन लिङादेः पुरुषार्थौपयिकत्वेन अनुविधेयत्वात् प्रवर्तकत्वाव्याहतिः । **सु.** पृ. ३०, यथैव च श्रेयःसाधनत्वाकल्पने प्रवर्तकत्वानिर्वाहात् तन्निर्वाहाय श्रेयःसाधनत्वं कल्प्यते, तथैव स्वरूपेण यागादेः श्रेयःसाधनत्वे सति इच्छयैव प्रवृत्तिसिद्धेः लिङादीनां प्रवर्तकत्वानिर्वाहात् विहितस्वरूपेण श्रेयःसाधनत्वं कल्पयिष्यते । तथा च लोकेऽपि स्वाम्याज्ञामन्तरेण स्वेच्छया गवानयनादौ कृतेऽपि न तत्फलं वेतनं लभ्यते । तस्मात् प्रवर्तकान्तरासंभवेऽपि प्रेरणाज्ञापनेन लिङादेः वेदे प्रवर्तकत्वं सिद्धम् । **सु.** पृ. ३०—३१. * लिङादेः कार्याभिधायकत्वं अपौरुषेये वेदे अवसीयते । **ऋजु.** पृ. ३५. * लिङादेः बलवदनिष्टाननुबन्धित्वे, कृतिसाध्यत्वे, इष्टसाधनत्वे च प्रत्येकं शक्तिः । इति तार्किकाः । तत्खण्डनं 'विध्यर्थः ( रहस्यगः )' इति **बिन्दौ** द्रष्टव्यम् । * **लिङादीनां** विधायकानां प्रयोज्यगतचैतन्यद्वारेण प्रयोजकता । **वा.** १।२।१।७ पृ. ११४.



* **लिङाद्यर्थः** लोके पुरुषाशयः । वेदे च तदभावात् लिङादिनिष्ठ एव कश्चिद्धर्मः । वाच्यतावच्छेदकं च उभयसाधारणं व्यापारत्वम् । न तु प्रवृत्तिनिवृत्तिप्रयोजकत्वमपि, तस्य अन्यलभ्यत्वात् । तत्र नञः अभावे आख्यातार्थप्रवृत्तिप्रयोजकत्वम्, तत्सत्त्वे तु तदर्थप्रवृत्त्यभावप्रयोजकत्वं संसर्गः इति विशेषः । प्रयोजकत्वं चात्र प्रवृत्तितदभावकारणीभूतेष्टानिष्टसाधनताज्ञानजनकज्ञानविषयत्वम् । अभावकारणता च योगक्षेमसाधारणी । तत्त्वं च प्रवृत्तिसामग्रीविघटकत्वं इत्यन्यत्र विस्तरः ।

स च लिङाद्यर्थः विधिवाक्ये प्रवर्तना–प्रेरणा-विध्यपरपर्यायः । निषेधवाक्ये निवर्तना–निवारणा–निषेध–प्रतिषेधापरपर्यायः । इयं च द्विविधाऽपि शाब्दी भावना । तस्याश्च भाव्ये यथायोगं प्रवृत्तिनिवृत्ती । शब्दभावनाज्ञानं करणम् । करणत्वं चात्र भावनाभाव्यनिष्पादकत्वम् । इतिकर्तव्यता च यथायोगं स्तुतिनिन्दे । स्तुतिनिन्दाज्ञानस्य हि प्रवृत्तिनिवृत्तिप्रयोजकसहकारित्वं रुच्यरुच्युत्पादनद्वारा लोकसिद्धम् । स्तुतिनिन्दापदवाच्ये प्राशस्त्याप्राशस्त्यापरपर्याये बलवदनिष्टाननुबन्धित्वानुबन्धित्वयोग्यस्वरूपे । ते च यथायोगं विधिनिषेधापेक्षितत्वात् तत्तत्समभिव्याहृतार्थवादैर्लक्षणया प्रतिपाद्येते । **भाट्ट.** १।२।१. * उपनिषदादिप्रमाणगम्यमीश्वरमङ्गीकृत्य तदिच्छैव तत्तदाकारिका वेदे **लिङाद्यर्थः** तात्पर्यरूपा च । **रहस्य.** पृ. १५, * प्रवर्तना–प्रेरणा–विधि–अपरपर्याया भावना नञ्रहितवाक्ये लिङाद्यर्थः । पृ. १९.

* **लिङादिप्रत्ययाः** प्रवर्तनायां विहिताः । प्रवर्तयितुर्व्यापारः प्रेरणाख्यः प्रवर्तना । आचार्यो हि 'गामानयतु देवदत्तः' इति वदति । ततो गामानयन् देवदत्तो ब्रवीति 'आचार्यप्रेरितोऽहं गामानयामि' इति । स च प्रेरणाख्यो व्यापारः नियोजयितृपुरुषनिष्ठः अभिप्रायविशेषे लोके । वेदे तु अनीश्वरवादे लिङादिनिष्ठः धर्मविशेषः कल्प्यः । सेश्वरवादे तु ईश्वरेच्छैव प्रवर्तना । सा च लिङादिशब्दनिष्ठत्वाद्वा ततः प्राधान्येन गम्यमानत्वाद्वा शब्दभावना इत्युच्यते । तया च किं केन कथं इत्यंशत्रयवती पुरुषप्रवृत्तिर्भाव्यते । सेयं प्रवृत्तिः शब्दभावनाभाव्यत्वात् फलोत्पादनव्यापारात्मकत्वाच्च अर्थभावना इत्युच्यते फलभावना इति च । इमां च अर्थभावनां प्रति गृहीतशक्तिकलिङादितो ज्ञाता शब्दभावना प्रयोजिका । ततश्च लिङादिशक्तिग्रहः शब्दभावनाज्ञानद्वारा शब्दभावनाभाव्यार्थभावनानिर्वर्तकत्वात् शब्दभावनां प्रति करणम् । इष्टसाधनताज्ञानमपि करणम्, तस्य शब्दभावनाभाव्यप्रवृत्तिं प्रति कारणत्वात् । अर्थवादलब्धप्राशस्त्यं तु तत्र अङ्गत्वेन अन्वेति । तथाहि, लोके इष्टसाधनादन्यत्र, प्रेक्षावतः प्रवृत्तेरभावात् इष्टतृप्तिसाधनेऽपि विषसंसृष्टान्नभक्षणे प्रवृत्तेरभावात् अनिष्टाननुबन्धीष्टसाधनतामपि अर्थात् विधिप्रत्ययो गमयति तज्ज्ञानस्य प्रवर्तकत्वात् । सर्वस्यापि लौकिकवैदिककर्मणः किंचिदायासाधायकस्य कष्टात्मकस्य अनिष्टसाधनताया अपि सत्त्वात्, प्रवृत्तिनिवृत्त्योः औदासीन्यापत्तेः बलवत्त्वेन अनिष्टं विशेषणीयम् । बलवदनिष्टाननुबन्धीष्टसाधनताज्ञानं प्रवर्तकमिति । भोजनाद्यायासस्य च अनिष्टस्य इष्टतृप्त्याद्यपेक्षया न बलवत्त्वम् । तृप्त्यादिफलोत्कर्षस्य तत्र अनुभवसिद्धत्वात् । **कु.** १।२।१।७.

* **लिङादियुक्तवाक्यश्रवणानन्तरं** तद्भावभाविनीं प्रयोज्यवृद्धस्य प्रतिपत्तिं प्रवृत्त्या अनुमाय पार्श्वस्थः प्रवृत्तिहेतुभूतोऽर्थः अनेन अस्माच्छब्दात् प्रतीतः इति कल्पयति । प्रवृत्तिहेतुभावश्च कार्यावगतेर्दृष्टः । सर्वो हि तावत् ममेदं कार्यं इति नावबुध्यते, तावन्न प्रवर्तते ।

ननु अपेक्षितोपायावगमात् प्रवृत्तिः । मैवम् । अपेक्षितोपायोऽपि यावत् कार्यतया नावसीयते तावन्न प्रवर्तते ।

ननु अपेक्षितोपायतैव कार्यता । न । कार्यता कृतिसाध्यता, उपायता तु साधनता । अन्या हि साधनता

अन्या साध्यता। किंतु लोके श्रेयःसाधनतया कार्यावगमः। तेन च रूपेण कार्याभिधायका लिङादयः। यदि परं पौरुषेये वाक्ये सापेक्षकार्यावबोधकत्वम्, प्रमाणान्तरावगम्या च श्रेयःसाधनभूतायाः क्रियाया एव कार्यता। तेन लोके क्रियैव कार्यतया शब्देनाभिधीयते। वेदे तु स्वर्गकामपदपर्यालोचनया स्वर्गसाधनानुगुणकालान्तरस्थायिकार्याभिधानसामर्थ्यं अवधार्यते। न च तत् प्रमाणान्तरावगम्यं इति कार्यार्थतैव अनपेक्षत्वम्। न च प्रमाणान्तरावगम्यमाना कार्यार्थतैव प्रतीयमाना त्यागमर्हति। अनपेक्षितार्थाभिधायकत्वेऽपि लोके सापेक्षत्वोपपत्तेः।

ननु एवं तर्हि वृद्धव्यवहारप्रसिद्धार्थग्रहणं वेदे न स्यात्। मैवम्। व्यवहारप्रसिद्ध एवार्थः। स तु प्रमाणान्तरनिरपेक्षः इति स्थितम्। **ऋजु.** पृ. ३५-३६.

* **लिङादिरूपशब्दधर्मत्वात्** शब्दभावनेत्युच्यते, स एव विधिः, नियोगः, प्रेरणा च। **बाल.** पृ.७५.

* **लिङादिवैदिकशब्दनिष्ठव्यापारस्य** इच्छारूपत्वे न काचित् क्षतिः। **रहस्य.** पृ. १५.

* **लिङादिशब्दस्तावत्** प्रमाणान्तराविषयं कार्यं अर्थं अवबोधयति। शब्दान्तराण्यपि च कार्यस्यानन्यार्थत्वात् तत्परानेव स्वार्थान् अभिदधति। तदन्वयिनश्च तेऽप्यर्थाः प्रमाणान्तरस्य विषयभूताः। तेन अर्थस्वभावालोचनया परं न सापेक्षता। **ऋजु.** पृ. ३५.

* **लिङ्त्वं** नियतत्वेन विना नास्ति। **सु.** पृ.२५२.

* **लिङ्-लोट्-तव्य** - पञ्चमलकाराणां विधिसामर्थ्यम्। **वा.** ३।१।७।१४ पृ. ७००.

* **लिङ्विधिः** श्रौतो यथा- 'ज्योतिष्टोमेन स्वर्गकामो यजेत'। **बाल.** पृ. ३०.

* **लिङ्गं** अकारणं असति न्याये। **भा.** ७।४।२।७. * **लिङ्गं** अतिदेशे प्रमाणम्। **मणि.** पृ. १३. * **लिङ्गं** 'अर्थाभिधानसामर्थ्यात् मन्त्रेषु शेषभावः स्यात्' (३।२।१।१) इत्यत्र सामर्थ्यशब्दात् मन्त्रविनियोगविशेषकारणत्वेन सूत्रितम्। **सु.** पृ. ११९१. * **लिङ्गमवगम्य** पश्चात् लिङ्ग्यनुमानेन भवितव्यम्। न तु लिङ्गावगमसमये एव लिङ्ग्यवगमः। **शा.** १।१।५ पृ. ७८. * **लिङ्गमेव** व्याप्यत्वेन दृष्टं सपक्षे, व्यापकस्य अन्यत्र साध्यभूतस्य गमकत्वसंभावनया गृह्यमाणं कारणम्। **वा.** २।२।११।२५ पृ. ५८४, * **लिङ्गं** केवलं मन्त्रगतमेव अवगन्तव्यम्। सामर्थ्यं तु सर्ववस्तुविषयं अवगन्तव्यम्। ३।३।७।१४ पृ. ८४१. * **लिङ्गं** क्रमं समाख्यां च शक्नोति बाधितुम्। **भा.** ३।२।७।२०. * **लिङ्गं** क्रमात् बलवत्। **वा.** ३।३।७।१४ पृ. ८३६. * **लिङ्गं** चोदनागतं अन्तरङ्गं भवति। **भा.** ८।२।६।३१, * **लिङ्गं** चोदनागतं प्रापकम्, मन्त्रगतं प्राप्तस्य द्योतकम्। ८।१।१६।३१. * **लिङ्गं** द्विविधं शब्दसामर्थ्यं अर्थसामर्थ्यं चेति। **बाल.** पृ. ९. * **लिङ्गं** द्विविधं शब्दगतं अर्थगतं च। द्विरात्रत्रिरात्रादिगणेषु द्वादशाहिको विध्यन्तः प्रवर्तते। तत्र शब्दगतं लिङ्गं अहःशब्दो रात्रिशब्दश्च। अहःशब्दोऽपि अहोरात्रवचनः रात्रिशब्दोऽपि। अर्थगतं लिङ्गं गणत्वम्, गण एव संघातधर्मैर्गणमनुग्रहीतुं समर्थः। **भा.** ८।१।१०।१७. * **लिङ्गं** द्विविधम्, सामान्यसंबन्धबोधकप्रमाणान्तरसापेक्षं तदनपेक्षं च। 'बर्हिर्देवसदनं दामि' इति मन्त्रस्य लवनाङ्गत्वं इति प्रथमोदाहरणम्। अर्थज्ञानस्य कर्मानुष्ठानाङ्गत्व द्वितीयम्। **मीन्या.** * **लिङ्गं** द्विविधं लौकिकं शास्त्रीयं च इत्यादिविचारः **मीको.** पृ. २८५२ 'प्रातिपदिकार्थः' इति बिन्दौ द्रष्टव्यः। * **लिङ्गं** धर्माङ्गताबोधकं प्रमाणम्। **मणि.** पृ. १३. * **लिङ्गम्।** न च सकलस्य प्रपञ्चस्य सत्त्वरजस्तमोगुणात्मकत्वमाश्रित्य शाब्दिकैः सत्त्वरजस्तमोगुणानां तत्परिणामभूतशब्दस्पर्शरूपरसगन्धानां च आविर्भावः पुंलिङ्गम्, तेषां तिरोभावः स्त्रीलिङ्गम्, तेषां साम्यं नपुंसकम्। इदं च लिङ्गत्रयं सर्वेषामपि वस्तूनामस्ति, तथापि केनचित् शब्देन किंचित् लिङ्गमभिव्यज्यते इत्युक्तत्वात् वृक्षादावपि पुंलिङ्गादेर्विद्यमानत्वात् वृक्षादौ अपि पुंलिङ्गादेः विद्यमानत्वात् इदं अयुक्तं इति वाच्यम्। लोकप्रसिद्ध्यनुसारेण 'स्तनकेशवती स्त्री स्यात् लोमशः पुरुषः स्मृतः। उभयोरन्तरं यत्तत् तदभावे नपुंसकम्॥' इति स्तनकेशादेर्वा, 'हस्तिन्यां वडवायां च स्त्रीतिबुद्धेः समन्वयः। अतस्तां जातिमिच्छन्ति' इति स्तनकेशाद्यभिव्यङ्ग्यजातिविशेषस्य वा लिङ्गत्वात् आविर्भावादेस्तु



शाब्दिकैः शब्दानुशासनाय लिङ्गत्वेन परिभाषणमात्रं इति न तस्य लोकव्यवहारगम्यशब्दार्थत्वसंभवः, इति नात्र तादृशस्य लिङ्गस्य विचार्यत्वमिति न दोषः। अत एव 'संस्थानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः।' इति शाब्दिकैरेव तिरोभावाविर्भावलक्षणस्य लिङ्गस्य पारिभाषिकत्वं स्पष्टमुक्तम्। **सोम.** ४।१।७ पृ. ३५४. * **लिङ्गं** (स्त्री. पुं. न.) न प्रकृत्यर्थः किन्तु प्रत्ययार्थः। **वि.** ६।१।३. * **लिङ्गं** न शब्दार्थः, न प्रातिपदिकार्थः, न प्रत्ययार्थः, न टाबादीनां नापि सुब्विकाराणां किन्तु शब्दानुशासनमात्रं इति **पूर्वः पक्षः**। सिंहः सिंही इति लिङ्गमपि क्वचित् टाबादीनां सुब्विकाराणां च, क्वचिच्च तिसृचतस्रादिप्रातिपदिकविकाराणां अपि वाच्यम्। अतश्च तत् क्वचित् 'पशुना' इत्यादौ, संख्यावत् क्वचिच्च प्रातिपदिकार्थत्वेनैव विवक्षितम्। यत्र तु बाधः तत्र साधुत्वार्थं तच्छब्दप्रयोगः। **भाट्ट.** ४।१।६. * **लिङ्गं** नाम मन्त्राणां अर्थप्रत्यायनसामर्थ्यम्। तच्च मुख्ये गौणे च केनचित् प्रकारेण विद्यते। **वा.** ३।२।१।१ पृ. ७४५-४६.

* **लिङ्गं निरूप्यते।** सामर्थ्यं लिङ्गं इति प्राञ्चः। तदुक्तं 'सामर्थ्यं सर्वभावानां लिङ्गमित्यभिधीयते' इति।

**नव्यास्तु** अङ्गत्वघटकीभूतोद्देश्यताकृतिकारकत्वयोः अन्यतरवाचकपदकल्पनाऽनुकूला क्लृप्तपदार्थनिष्ठयोग्यता लिङ्गम्। यथा 'स्रुवेणावद्यति' इत्यत्र 'द्रवद्रव्यं' इत्युद्देश्यतावाचि-पदकल्पनाऽनुकूल- स्रुवकरणकावदाननिष्ठयोग्यता लिङ्गम्। यथा वा 'अध्वर्युं वृणीते' इत्यादिसंस्कारविध्यन्यथाऽनुपपत्त्या वृतेनाध्वर्युणा 'यत् शक्नुयात् तत् कुर्यात्' इति संस्कार्यविनियोगकल्पनास्थले करणत्ववाचितृतीयाद्यन्तपदकल्पनाऽनुकूलक्लृप्तसंस्कारनिष्ठयोग्यता। 'बर्हिर्देवसदनं दामि' इत्यादिमन्त्रेष्वपि 'अनेन मन्त्रेण बर्हिर्लवनं प्रकाशयेत्' इत्यादिस्वप्रतिपाद्यार्थवृत्त्युद्देश्यतास्वप्रवृत्तिकरणतादिवाचकपदकल्पनाऽनुकूलयोग्यता लिङ्गम्। तच्च तत्तत्पदरूपश्रुतिकल्पनाद्वारा तत्तत्पदार्थं प्रति तत्तत्पदार्थस्य अङ्गत्वे प्रमाणमित्याहुः। मृदादौ घटाद्यनुकूलायाः, यागादौ स्वर्गाद्यनुकूलायाश्च योग्यतायाः वारणाय अनुकूलान्तम्। तत्र कृतिकारकत्वपदं श्रुतिलक्षणे इव कृत्यन्वितकर्तृत्वाद्यन्यतमपरम्। 'स्रुवेणावद्यति' इत्यत्र उद्देश्यतावाचकपदस्यैव कल्पनेन स्रुवकरणकावदाननिष्ठयोग्यतायाः कर्तृत्वाद्यन्यतमवाचकपदकल्पनाऽनुकूलत्वाभावात् अव्याप्तिः, अतः परोद्देश्यतानिवेशः। कृतिकारकत्वादिनिवेशे प्रयोजनं तु यत्र संस्कारविध्यन्यथाऽनुपपत्त्या संस्कार्यस्य क्लृप्तशेषिवाक्ये एव तृतीयाद्यन्तपदकल्पनया विनियोगः, न तु उद्देश्यविधेयवाचकपदघटितसमस्तवाक्यकल्पनम्, यथा 'यदि सोमं न विन्देत पूतीकानभिषुणुयात्' इत्यादौ पूतीकानां अभिषवसंस्कार्यत्वान्यथाऽनुपपत्त्या 'सोमेन यजेत' इत्युत्पत्तिवाक्ये एव 'सोमाभावे पूतीकैः' इति तृतीयाद्यन्तपदकल्पनम्, तत्र संस्कारनिष्ठयोग्यतायां उद्देश्यतावाचकपदकल्पनाऽनुकूलत्वाभावेन अव्याप्तिवारणम्। विकृतिनिष्ठप्रकृतिसादृश्ये 'प्रकृतिसंबन्धिभिः अङ्गैः विकृतिमुपकुर्यात्' इति उद्देश्यताकृतिकारकताऽन्यतरवाचकपदकल्पनाऽनुकूलत्वात् अतिव्याप्तिवारणाय योग्यतेति। अत्र पूर्वोक्तन्यायेन उद्देश्यताकर्तृत्वाद्यन्यतमान्यतरत्वस्य गुरुत्वात् कर्तृत्वकर्मत्वकरणत्वसंप्रदानत्वापादानत्वाधिकरणत्वान्यतमवाचकपदकल्पनाऽनुकूलयोग्यता इत्यत्रैव प्रकृतलक्षणतात्पर्यम्। **अथ** 'सोमेन यजेत' इत्यादिविशिष्टविध्यन्यथाऽनुपपत्तिप्रसूतविशेषणविधिकल्पनाऽनुकूलयोग्यतायां अतिप्रसक्तिः दुर्वारा, नहि सोमादौ लैङ्गिकमङ्गत्वं केनापि व्यवह्रियते। इति **चेन्न**। यतः सोमाद्यङ्गत्वस्य लिङ्गप्रमाणकत्वेऽपि सोमादिपदे मत्वर्थलक्षणापक्षे सोमे वाक्यीयमङ्गत्वम्। सोमकरणत्वस्य परंपरया भावनाऽन्वयवादिनां नव्यानां मते तु 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायेन वाक्यीयाङ्गत्वस्य श्रौताङ्गत्वस्यैव वा व्यवहारः, न तु लैङ्गिकाङ्गत्वस्य, 'यद्यपि अन्यदेवत्यः पशुः, आग्नेय्येव मनोता कार्या' इत्यादौ ब्राह्मणवाक्यस्यापि लिङ्गतः प्राबल्यावगमात् इति। 'प्रयाजशेषेण हवींष्यभिघारयति' इत्यत्र हविरुद्देशेन प्रयाजशेषकरणकाभिघारणविधिमभ्युपेत्य आर्थिकविधिना प्रयाजशेषोद्देशेन अभिघारणरूपप्रतिपत्तिमभ्युपगच्छतां नये, आर्थिकविधिकल्पनाऽनुकूलयोग्यतायां अतिव्याप्तिस्तु तत्र लैङ्गिकाङ्गत्वे इष्टापत्त्यैव अनाशङ्क्या। न च तत्र

प्रयाजशेषीयप्रतिपत्त्याकाङ्क्षयैव प्रतिपत्तिविधेः कल्पनात् तस्य लिङ्गकल्प्यत्वाभावेन लैङ्गिकत्वाभावः, अभिघारणनिष्ठयोग्यतया विधिकल्पनायां आकाङ्क्षायाः सहकारित्वेन लिङ्गस्यैव तत्र अभिघारणनिष्ठप्रयाजशेषाङ्गतायां प्रमाणत्वात्। तत्र आकाङ्क्षायाः प्रमाणत्वे अङ्गत्वप्रमाणविभागव्याकोपात् पाके समर्थस्यापि देवदत्तस्य पाकाकाङ्क्षाऽभावे पाके विनियोगादर्शनेन आकाङ्क्षां विना लिङ्गस्य क्वापि अविनियोजकत्वात् सर्वत्र आकाङ्क्षाया एव अङ्गत्वप्रमाणत्वापत्तौ लिङ्गप्रामाण्यानापत्तेश्च ।

अथ श्रुतविधिना प्रयाजशेषकरणकाभिघारणस्य हविरुद्देशेन विधौ अभिघारणे प्रयाजशेषस्य विनियुक्तत्वेन प्रतिपत्त्याकाङ्क्षाया अभावात् आर्थिकविधिकल्पनाऽनुपपत्तिः। न च यथा 'उत्तरार्धात् स्विष्टकृते समवद्यति' इत्यत्र उत्तरार्धस्य अपादानतया गुणत्वेन विनियुक्तस्यापि आर्थिकविधिकल्पनया प्रतिपाद्यत्वं तथा इहापि इति वाच्यम्। तत्र त्यागांशं प्रति विनियुक्तस्यापि उत्तरार्धस्य प्रक्षेपांशीयप्रयोजनाकाङ्क्षया आर्थिकविधिकल्पनया प्रक्षेपांशं प्रति प्रतिपाद्यत्वोपपत्तावपि प्रकृते अंशभेदाभावेन तदनुपपत्तेः। एतेन (यथा) 'मैत्रावरुणाय दण्डं प्रयच्छति' इत्यत्र दण्डकरणकदानस्य मैत्रावरुणोद्देशेन विधिः इति सिद्धान्ते दीक्षितदण्डस्य दीक्षाभिव्यञ्जकालम्बनोपयुक्तस्य दानेऽपि विनियोगासंभवात् श्रुतविधेः दण्डान्तरप्रयोजकशक्तिकल्पनागौरवपरिहाराय आर्थिकदानप्रतिपत्तिकल्पनया दण्डस्य दानप्रतिपाद्यत्वम्। प्रतिपत्तेश्च कार्यसंकोचकत्वस्य कृष्णविषाणास्थले क्लृप्तत्वात् कार्यसंकोचेन दीक्षितदण्डविषयत्वसिद्धिः इति नव्यैरुक्तम्। तथा इह अभिघारणे विनियुक्तस्य श्रुतविधेः धारणाक्षेपशक्तिकल्पनागौरवपरिहाराय उत्थाप्यप्रतिपत्त्याकाङ्क्षया आर्थिकप्रतिपत्तिविधिं कल्पयित्वा प्रतिपाद्यत्वमस्तु 'दोषो नानुमिते त्वसौ' इति न्यायेन आर्थिके प्रतिपत्तिविधौ धारणप्रयोजकत्वशक्तिकल्पनस्य अदोषत्वात् इति निरस्तम्। तत्र समर्पणमात्रेणैव मैत्रावरुणोपकारसिद्धेः त्यागांशेन दण्डप्रतिपत्त्यर्थतायाः नव्यैरेव उक्तत्वात् प्रकृते तद्रीतेरसंभवात्। किंच प्रयाजशेषविशिष्टाभिघारणविधौ विशेषणविधेः आवश्यकत्वात् तस्यैव धारणाक्षेपशक्तिकल्पनोपपत्तौ न श्रुतविधौ तत्कल्पनयुक्तगौरवावकाशः। मैत्रावरुणाय इत्यत्र तु न विशेषणविधिकल्पनं लघीयः इति वैषम्यम्। तैत्तिरीयशाखायां 'यत् दीक्षितदण्डं प्रयच्छति' इति प्रतिपत्तिविधेः श्रुतत्वेन तत्र तदकल्पनाच्च। इति चेन्न। श्रुतविधौ प्रयाजशेषकरणत्वस्य भावनायामन्वयेऽपि यागार्थताबोधस्य उत्तरकालीनविशेषणविध्यधीनत्वात् ततः पूर्वं प्रयाजशेषीयप्रतिपत्त्याकाङ्क्षाया अनिवृत्तेः विशेषणविधेरिव प्रतिपत्तिविधेरपि प्रतिपत्त्याकाङ्क्षासहकृतलिङ्गरूपसामग्रीसत्त्वेन कल्पनोपपत्तेः। न च एवं विशेषणविधेरपि कल्प्यत्वाविशेषेण विनिगमनाविरहात् धारणाक्षेपशक्तिकल्पनाऽऽपत्तेः दैक्षे हृदयाद्यभिघारणार्थम्, वाजपेये प्राजापत्यवपाऽभिघारणार्थं च शेषस्य धारणीयत्वापत्तिः। तथा च प्रतिपत्तेरेव धारणप्रयोजकत्वोपगमेन संनिहितहविःषु च शेषसमापनोक्तिः चतुर्थोक्ता (प्रयाजशेषाभिघारणन्याये ४।१।१४ भाट्ट.) विरुध्येत इति वाच्यम्। कालान्तरीयहविरभिघारणार्थं पात्रान्तरोत्पादनगौरवस्यैव विनिगमकत्वेन प्रतिपत्तिविधेरेव धारणाक्षेपशक्तिकल्पनेन अविरोध इत्याशयेन नव्यमतभव्यतासंभवात्।

इदं च लिङ्गं द्विविधम्। सामान्यसंबन्धबोधकप्रमाणसापेक्षम्, तदनपेक्षं चेति। स्वप्रमेयोद्देश्यताऽवच्छेदकव्यापकधर्मावच्छिन्ननिरूपितस्वप्रमेयाङ्गतान्निष्ठसंबन्धबोधकप्रमाणसापेक्षत्वं सामान्यसंबन्धबोधकप्रमाणसापेक्षत्वम्। अस्ति चेदं 'बर्हिर्देवसदनं दामि' इत्यादिमन्त्रलिङ्गे। अत्र मन्त्रलिङ्गकल्प्यश्रुतौ न लवनत्वेन लवनस्य उद्देश्यता, विनाऽपि मन्त्रं प्रकारान्तरेण स्मृत्वा (स्मृत्या) लवनसंभवेन आनर्थक्यात्, अपि तु अपूर्वीयलवनत्वेन। न च तेन रूपेण मन्त्रात् बोधः संभवति, तस्य लवनत्वमात्रेण बोधकत्वात्। न च अपूर्वीयलवनत्वेन बोधं विना 'अनेन मन्त्रेण अपूर्वीयलवनं प्रकाशयेत्' इति निरुक्तोद्देश्यताऽवच्छेदकावच्छिन्नवाचकपदघटितश्रुतिकल्पनं संभवति। अतः अपूर्वीयलवनत्वेन बोधार्थं प्रकरणादिरूपप्रमाणान्तरमपेक्षणीयम्। तत्र दर्शपूर्णमासप्रकरणे अस्य मन्त्रस्य पाठात् 'दर्शपूर्णमाससंबन्धि किंचित् अनेन प्रकाशयेत्' इत्यवगते 'किं तत्' इत्यपेक्षायां 'लवनं' इति मन्त्रलिङ्गतः अवगम्यते। अतो मन्त्रलिङ्गप्रमेयदर्शपूर्णमासापूर्वसंबन्धिलवनत्वव्यापकदर्शपूर्णमासापूर्वसंबन्धित्वावच्छिन्ननिरूपित–मन्त्रनिष्ठसंबन्धबोधकप्रमाणसापेक्षत्वात् अस्य लिङ्गस्य सामान्यसंबन्धबोधकप्रमाणसापेक्षत्वम्। एवं पूषानुमन्त्रणमन्त्रे यागानुमन्त्रणमिति समाख्यया 'यागसामान्यापूर्वसंबन्धि किंचित् अनेन मन्त्रेण प्रकाशयेत्' इत्यवगते 'किं तत्' इति अपेक्षायां 'पूषा' इति मन्त्रलिङ्गादवगम्यते। अतो लिङ्गप्रमेयपूषनिष्ठविजातीययागापूर्वसाधनत्व–रूपोद्देश्यताऽवच्छेदक–व्यापकयागसामान्यापूर्वसाधनत्वावच्छिन्ननिरूपितमन्त्रनिष्ठ–संबन्धबोधकसमाख्यापेक्षत्वात् लिङ्गस्य निरुक्तप्रमाणसापेक्षत्वम्। यत्र तु उद्देश्यस्वरूपे आनर्थक्याभावेन अपूर्वसाधनत्वादिबोधार्थं न प्रकरणाद्यपेक्षा यथा अर्थज्ञानस्य सामर्थ्यात् कर्मानुष्ठानाङ्गत्वे, तत्र लिङ्गस्य सामान्यसंबन्धबोधकप्रमाणानपेक्षत्वम्।

लिङ्गस्य च अशब्दत्वेन अविधायकत्वात् विहितत्वघटितनिरुक्ताङ्गत्वे साक्षात्प्रमाणत्वासंभवेन विधायकश्रुतिकल्पनाऽन्तरितप्रामाण्यस्य अनन्तरितप्रामाण्यश्रुतितो दौर्बल्यम्। अत एव 'कदाचन स्तरीरसि' इति इन्द्रप्रकाशिकायाः ऋचः यावत् लिङ्गात् इन्द्रोपस्थानार्थत्वं कल्प्यते, तावत् 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इति श्रुत्या गार्हपत्योपस्थानार्थत्वं ऐन्द्यधिकरणे (३।२।२) निरूपितम्। न च उपक्रमस्थतद्धितश्रुत्या इन्द्राङ्गत्वावगमात् न गार्हपत्योपस्थानाङ्गत्वं इति वाच्यम्। लाघवात् त्यज्यमानद्रव्योद्देश्यत्व–समनियताखण्डोपाधिरूपदेवतात्वशक्तस्य तद्धितस्य प्राधान्येन प्रतिपाद्यत्वरूपसखण्डोपाधिरूपदेवतात्वे लक्षणाऽङ्गीकारेण प्रकृते तद्धितस्य श्रुतित्वाभावात् इन्द्रोद्देशेन विधौ एकप्रसरताभङ्गापत्तेश्च, चयनप्रकरणपठितेन 'ऐन्द्या' इति वचनेन चयनानुपयोगीन्द्रप्रकाशकत्वेन विधानानुपपत्तेश्च। गार्हपत्यस्य तु साधनत्वेन चयनासंबन्धित्वेऽपि चयनसंस्कार्यत्वोपपत्तिः। अतश्च शक्त्या उप-( शक्त्युप- ) स्थितेन्द्रप्रकाशकत्वमादाय 'ऐन्द्या' इति संज्ञामुपपाद्य गौणसामर्थ्यसहकृततृतीयाश्रुत्या गार्हपत्यप्रकाशकत्वमेव अस्या ऋचः इति ध्येयम्। मुख्यसामर्थ्यरूपलिङ्गविरोधिगौणसामर्थ्यस्य श्रुतिसहायत्वेऽपि न स्वतो विनियोजकत्वम्। अत एव दर्शपूर्णमासप्रकरणपठितस्य 'बर्हिर्देवसदनं दामि' इति मन्त्रस्य शक्त्या बर्हिर्लवनाङ्गत्वम्, न तु गौण्या उलपराजिलवनाङ्गत्वं इत्युक्तं तृतीये (लिङ्गाधिकरणे ३।२।१)। इति लिङ्गनिरूपणम्। **मुरारि. पृ.** ११७१–७५.

* लिङ्गं प्रकरणं वा अनुग्रहीतव्यं इति न तत्परिच्छिन्ने प्रवृत्तिर्भवति। यदवगम्यते 'एतत् फलवत्' इति तत्र प्रवर्तते। **भा.** ३।२।८।२१ पृ. ७७८. * लिङ्गं प्रकरणात् बलवत्। **वा.** ३।३।७।१४ पृ. ८३६. * लिङ्गं प्रकरणाद् बलवत्। पूषानुमन्त्रणमन्त्रस्य प्रकरणात् प्राप्तं दर्शपूर्णमासार्थत्वं लैङ्गिकेन पूषाङ्गत्वेन बाध्यते। **मीन्या.** * लिङ्गं प्रमाणं भवति, (यत्र) प्रकरणवतोऽर्थस्य संनिधाने यमर्थमामनन्ति, 'स तस्य साधनभूतः' इत्येव गम्यते। कथं खलु उपकरिष्यति इति संदिह्यमाने सामर्थ्यात् परिनिश्चयः। यत्रायं समर्थः तत्र शक्यो विनियोक्तुमिति। **भा.** ३।३।७।१४ पृ. ८४३. * लिङ्गं प्रमाणान्तरसिद्धसामान्यसंबन्धस्य पदार्थस्य विनियोजकम्। **मीन्या.** * लिङ्गं मन्त्रेषु वचनसामर्थ्यं 'बर्हिर्देवसदनं दामि' इति विनियोगकारणमुक्तम्। **भा.** ३।३।४।११. * लिङ्गं मन्त्रविनियोजकम्, मुख्ये एवार्थे विनियोजकं न गौणे। 'बर्हिर्देवसदनं दामि' इति मन्त्रः कुशलवनाङ्गं न उलपराजि–लवनाङ्गम्। **मीन्या.** * लिङ्गं वाक्यात् बलवत् तेन 'स्योनं ते०' इति मन्त्रार्धयोः क्रमेण सदने सादने चाङ्गत्वं दर्शपूर्णमासयोः। **भा.** ३।३।७।१४, **वि.** ३।३।८. * लिङ्गं वाक्यात् बलवत्। वाक्यस्य लिङ्गं श्रुतिं च कल्पयित्वा विनियोजकत्वात् लिङ्गस्य च श्रुतिमात्रकल्पनेन विनियोजकत्वात्। 'स्योनं ते सदनं०' इति पूर्वार्धस्य लिङ्गात् सदनाङ्गत्वं न तु वाक्यात् सादनाङ्गत्वम्। **मीन्या.** * लिङ्गं विनियोगविषयत्वरूपं सामर्थ्यम्। **सु.** **पृ.** ११११. * लिङ्गं विलम्बितत्वात् श्रुत्यपेक्षया दुर्बलम्। **वि.** १०।८।८. * लिङ्गं विवक्षितं 'वसन्ते प्रातराग्नेयीं कृष्णग्रीवामालभते' इत्यादौ 'गर्भिण्यो

भवन्ति ' इति विशेषविधानात् । ' अश्वः ऋषभो वृष्णिर्बस्तः पुरुषः ' इत्यत्र च पुंस्त्वलिङ्गं विवक्षितम् । ' मुष्करा भवन्ति ' इति विशेषविधानात् । भा. ४।१।६।१७, * लिङ्गं विशिष्टार्थाभिधानसामर्थ्यम् । ३।३।७।१४ पृ. ८२४, * लिङ्गं वैदिकं अन्यार्थदर्शनरूपं अनन्यथासिद्धं ( प्रत्यक्षं ) स्मृत्यनुमितश्रुत्यपेक्षया प्रबलम् । कौ. ३।३।७।१४ पृ. ३६७. * लिङ्गं वैदिकं स्मृतेर्बलवत् । वा. ३।३।७।१४ पृ. ८४१. * ' लिङ्गं संघातधर्मः स्यात्तदर्थापत्तेर्द्रव्यवत् ' । ( ७।४।३।१६ ) इति सूत्रेण अहःसंघातात्मकस्य गवामयनस्य अहःसंघातात्मकद्वादशाहकार्यापन्नत्वेन नीवारादौ व्रीहिधर्मवत् तदीयद्वादशोपसत्त्व- एकादशिनीविहारप्राप्तेः लिङ्गद्वयोपपत्तिः इति परमतमुक्तमत्र । सु. पृ. ७३१. * लिङ्गं समाख्याया बलवत् । वा. ३।३।७।१४ पृ. ८३७. * लिङ्गं समाख्यानाद् बलवत् । भक्षानुवाके पठितानां ' भक्षेहि ' 'नृचक्षसम् ' ' हिन्व मे ' इत्यादिवाक्यानां समाख्याप्राप्तभक्षणाङ्गत्वं लिङ्गावगतैः ग्रहण— अवेक्षण—सम्यग्जरणाङ्गत्वैर्बाध्यते ।

काम्ययाज्यानुवाक्याकाण्डे आग्निवारुणीष्टियाज्यानुवाक्यानन्तरं सोमारौद्रीष्टियाज्यानुवाक्यातः पूर्वपठितानां मनोर्ऋचां क्रमावगतसोमारौद्यङ्गत्वानां समाख्याप्राप्तं याज्यात्वादि लैङ्गिकेन सामिधेनीत्वेन बाध्यते । भाट्टालंकारः. * लिङ्गं सामर्थ्यम् । भा. ३।३।७।१४, ६।५।९।३२, टुप्. ९।१।३।४. * लिङ्गम् , स्त्रीत्वादिविभागो हि प्राणिव्यतिरिक्तेऽर्थे शब्दानुकरणमात्रेण विज्ञायते, पश्वादिषु तु अर्थरूपेण । वा. १।४।२।३ पृ. ३२८. * लिङ्गं स्थानात् बलवत् । ' उपहूतः , उपह्वयस्व ' इति क्रमेण पठितयोर्मन्त्रयोः निर्ज्ञातक्रमकानुज्ञापनानुज्ञे प्रति यथाक्रमं प्रसक्तमङ्गत्वं विपर्ययविनियोगं कुर्वता लिङ्गेन बाध्यते । भाट्टालंकारः. * लिङ्गं हि प्रकरणाद् बलीयः । आह । विरोधे सति लिङ्गेन प्रकरणं बाध्येत, न चैतयोर्विरोधः । भा. ३।२।८।२१ पृ. ७७५ । अत्र लिङ्गशब्देन देवतासंबन्धात् यौगिकी श्रुतिरभिधीयते न सामर्थ्यमात्रम् । वा. * ' इन्द्रो यातोऽसितस्य राजा ' इत्यादेः गुणाभिधानार्थस्य पदसमुदायस्य गुण्याकाङ्क्षस्य निराकाङ्क्षीकरणसामर्थ्यात्मकं लिङ्गं वाक्यस्य उपोद्बलकमस्ति । सु. पृ. ६६२. * नात्र लिङ्गं वचनमिव विभक्त्यर्थः किंतु प्रातिपदिकार्थो लिङ्गमित्युक्तम् ( ९।१।९।३३ ) ( ' प्रातिपदिकविशेषणं हि स्त्रीशब्दः० ' इत्यादिना भाष्यकारेण ) । टुप्. ९।१।१६ । ४५ पृ. १६९२. * पूर्वपदानामुत्तरैः पदैर्यथार्थमभिसंबन्धः लिङ्गम् । भा. ३।४।११।३१ , ' सामर्थ्यं कर्मणस्तावदेकं लिङ्गं विवक्षितम् । अपरं वाक्यसामर्थ्यं पौर्वापर्यनिरीक्षणात् ॥ ' वा. ३।४।११।३१ पृ. ९६५. * यद् बुद्धौ संनिहितं तत् लिङ्गमित्युक्तम् । भा. ८।१।१७।३३–३४. * यच्छब्दस्योक्तिसामर्थ्यं तल्लिङ्गम् । वा. ३।३।७।१४ पृ. ८२४. * ' सामर्थ्यं सर्वभावानां लिङ्गमित्यभिधीयते ' । मीन्या. * सामान्यसंबन्धे सति अवगते लिङ्गमवकाशं लभते । टुप्. १०।४।२१।४२. * **लिङ्गेन** अङ्गत्वम् – 'बर्हिर्देवसदनं दामि ' इति मन्त्रस्य लवनाङ्गत्वम् । स हि मन्त्रः लवनं प्रकाशयितुं समर्थः । प्रकरणात्तु दर्शपूर्णमाससामान्यसंबन्धोऽवगतः । पूषानुमन्त्रणमन्त्राणां यागानुमन्त्रणसमाख्यया यागसामान्यसंबन्धेऽवगते सामर्थ्यात् पूषयागसंबन्धोऽवगम्यते । मीन्या. * लिङ्गेन क्रमबाधः । ' मुष्टी करोति ' ' वाचं यच्छति ' इति ज्योतिष्टोमे श्रुतम् । अनन्तरमेव च ' दीक्षितमावेदयति ' इति श्रुतम् । तत्र क्रमेण मुष्टीकरणादेर्दीक्षाङ्गत्वम् , लिङ्गेन तु मनस एकाग्रस्य सर्वकर्मसु योग्यत्वरूपेण सर्वकर्माङ्गत्वं सिध्यति । वि. ३।१।१४. * लिङ्गेन तत्र ( सूक्तवाके ) प्रकरणं बाधितम् । भा. ३।२।६।१९ पृ. ७६९.

**ॐ लिङ्गेन द्रव्यनिर्देशे सर्वप्रत्ययः स्याल्लिङ्गस्य सर्वगामित्वादाग्नेयवत् । १०।६।१९।७३ ॥**

' मनोर्ऋचः सामिधेन्यो भवन्ति ' इति मनुलिङ्गेन द्रव्यस्य ऋग्रूपस्य निर्देशे कृते सति लिङ्गस्य मनुसंबन्धस्य सर्वगामित्वात् सर्वास्वेव मानवीषु ऋक्षु विद्यमानत्वात् सर्वप्रत्ययः सर्वासां दाशतयीगतानां मानवीनामृचां ( ५९ ) प्रत्ययः प्रत्यभिज्ञा स्यात् । सर्वा एव मानव्यः ऋचः सामिधेन्यः कार्या इत्यर्थः , न सप्तदशैव । आग्नेयवत् । ' आग्नेयैः सूक्तैः संवत्सरमुपदधान आसीत '



इति यावन्ति आग्नेयानि सूक्तानि दाशतयानि तैः सर्वैः इष्टका उपधीयन्ते तद्वत् । इति पूर्वः पक्षः ।

**यावदर्थं वाऽर्थशेषत्वादल्पेन परिमाणं स्यात् तस्मिंश्च लिङ्गसामर्थ्यम् । ७४ ॥**

' मनोर्ऋचः सामिधेन्यो भवन्ति ' इति न दाशतयीगताः सर्वा एव मानव्य ऋचो ग्राह्याः किंतु अर्थशेषत्वात् अग्निसमिन्धनरूपकार्यशेषत्वात् यावदर्थं अपेक्षानुसारेण पञ्चदश सप्तदशैव वेति अल्पेन परिमाणं स्यात् । अल्पा एव मानव्य ऋचो ग्राह्याः न सर्वा इत्यर्थः । तस्मिन् च अल्पपरिमाणे ऋक्समुदाये लिङ्गस्य मनुसंबन्धरूपस्य सामर्थ्यं समर्थत्वं संबन्धः अस्त्येव । सप्तदशऋचोऽपि मानव्य एव न अमानव्यः । इति लिङ्गसंबन्धः समानः । तस्मात् यावदर्थमेव ग्राह्याः, न सर्वाः ( ५९ ) इति सिद्धान्तः ।

**आग्नेये कृत्स्नविधिः । ७५ ॥**

पूर्वपक्षप्रदर्शितस्य आग्नेयदृष्टान्तस्य ( १०।६।१९।७३ ) वैधर्म्यं दर्शयति सिद्धान्ती । आग्नेये दृष्टान्ते कृत्स्नविधिः कृत्स्नानां सूक्तानां विधिः युक्तः । आग्नेयैः सूक्तैः इत्युक्तत्वात् । सामिधेनीनां तु परिमितत्वात् न सर्वासामेव मानवीनामृचां ग्रहणं युक्तम् ।

**ऋजीषस्य प्रधानत्वादहर्गणे सर्वस्य प्रतिपत्तिः स्यात् । ७६ ॥**

ननु यथा अहर्गणे 'ऋजीषमप्सु प्रास्यति' इति सर्वेषामह्नां यदृजीषं तत्सर्वं अविशेषात् प्रास्यते तथा सर्वासां मानवीनां ऋचां सामिधेनीत्वेन ग्रहणं स्यात् इति चेत्, तत्राह सिद्धान्ती । ऋजीषस्य निष्पीडितरसस्य सोमशेषस्य प्रधानत्वात् अहर्गणे सर्वस्यैव प्रतिपत्तिः अवभृथे अप्सु प्रासनं स्यात् । मानवीषु सामिधेनीषु तु अग्निसमिन्धनरूपकार्यशेषत्वात् न सर्वासां ग्रहणं इति **सिद्धान्तः** । के. * लिङ्गेन ये मन्त्रा विनियुज्यन्ते ते यादृशा एव निर्ज्ञातास्तादृशा एव कर्मणि प्रयोक्तव्याः, तत्र ब्राह्मणस्य व्यापार एव नास्ति । टुप्. १२।३।८।२१. * लिङ्गेन ये संयुक्ताः ते अपूर्वार्था न संभवन्ति इति मन्यमानस्य पूर्वपक्षः ' फलदेवतयोश्च ' इत्यत्र ( ९।१।३।८ ) । रत्न. ९।१।२।२. * लिङ्गेन लिङ्गं बाध्यते यथा–'स्योनं ते सदनं कृणोमि' इति मन्त्रे उभयोरर्थयोः कर्मसमवेतस्वस्वार्थप्रकाशनसामर्थ्येन ' तस्मिन् सीद ' इत्येकवाक्यतोपगमसामर्थ्यात्मकं लिङ्गम् । बाल. पृ. १३५. * लिङ्गेन वाक्यं अर्थविप्रकर्षात् बाध्यते । वा. ३।८।१०।२१ पृ. ११२६. * लिङ्गेन विध्यन्तनियमो भवतीत्युक्तम् । भा. ८।१।२।२, ८।१।१६।२८, * लिङ्गेन श्रुतिन बाधितव्या । ७।३।१४।३६. * लिङ्गेन श्रुतिबाधो यथा – ' स्रुवेणावद्यति ' ' स्वधितिनावद्यति ' इति स्रुवादिः एकः शेषः श्रुत्या द्रवावदाने इतरावदाने वाऽनेकत्र शेषिणि प्राप्तः, लिङ्गेन द्रवावदाने एव नियमनात् शेष्यन्तरे बाध्यते । तथा एकस्मिन् शेषिणि द्रवावदानादौ श्रुत्यैव स्रुवः, करणान्तरं चानेकः शेषः प्राप्तः तत्रालिङ्गेन स्रुवमेव नियच्छता करणान्तरं श्रौतमपि बाध्यते । बाल. पृ. १४५. * सर्वो ह्यनारभ्यवादो वाक्यसंयोगेन अङ्गं विधत्ते, लिङ्गेन वा केनचिदव्यभिचारिणा । वा. ३।४।८।२४ पृ. ९५४. * **लिङ्गात्** एतावदवगम्यते, ' समर्थमेतत् इममर्थमभिनिर्वर्तयितुम् ' इति । भा. ३।३।७।१४ पृ. ८४२, * लिङ्गात् सविचिकित्सो भवति प्रत्ययः, निर्विचिकित्सः श्रुतेः । ३।३।७।१४ पृ. ८४२, * लिङ्गात् केवलात् लिङ्गक्रमसमाख्यानसमुदायो बलवान् । ३।२।७।२०, * लिङ्गात् प्रकरणं दुर्बलम् । ९।२।१८।५३. * लिङ्गात् प्रत्यक्षादपि आनुमानिकी श्रुतिः बलवती । वा. ३।३।७।१४ पृ. ८४१. * लिङ्गात् श्रुतिर्बलवती । भा. ३।३।७।१४ पृ. ८२३, ९।१।११।३७, * लिङ्गात् समाख्यासापेक्षात् समाख्या बलवती । ३।२।७।२०. * **लिङ्गस्य** अर्थविप्रकर्षः एषः, प्रथमं तावत् लिङ्गज्ञानम् , ततः सामर्थ्यात् शब्देन अयमर्थोऽभिहितो भवति । भा. ३।३।७।१४ पृ. ८४५–४६. * लिङ्गस्य अर्थविप्रकर्षः ऐन्द्रीविनियोगं प्रति श्रुतिलिङ्गयोः सह प्रस्थितयोः यदा श्रुतेर्विनियोजकानि अक्षराणि दृश्यन्ते, तदा लिङ्गे स्मरणसमर्थानि, ततो यावत् तेषां प्रकरणाम्नानान्यथानुपपत्त्या विनियोजकानि कल्पयितुमारभ्यन्ते तावदितरैः प्रत्यक्षैर्विनियोगः प्रत्यायितः । तस्मिंश्च प्रतीते मन्त्रोऽपि प्रकरणिनं प्रति निराकाङ्क्षी-

भूतः । प्रकरणी अपि मन्त्रं प्रति । तथा सति प्रकरणाम्नानस्य अन्यथाप्युपपद्यमानत्वात् न इन्द्राभिधानश्रुतिकल्पनायां अर्थापत्तिः प्रभवति, न च श्रुतिमन्तरेण विनियोगः सिध्यति । तस्मात् श्रुतिर्बलीयसी । **वा.** ३।३।७।१४ पृ. ८३०. * लिङ्गस्य ऊहः यथा– 'वस्वसि, रुद्रासि ' इति एकहायन्याम् । साण्डे च ' वसुरसि, रुद्रोऽसि' इति । **बाल.** पृ. १२६. * लिङ्गस्य टाबादिप्रत्ययार्थः ( भवति ) । **सु.** पृ. ७३९. * लिङ्गस्य दुर्बलप्रमाणोपजीवित्वम् ( अयं अधिकरणार्थः ) । **भा.** ३।२।७।२०. * लिङ्गस्य पदमात्रे पर्यवसानायोगात् वाक्यविनियोगपर्यन्तत्वम् । **सु.** पृ. ११९२. * लिङ्गस्य प्राप्तिः अनन्यथासंभवः इत्यादि । **वा.** ३।३।७।१४ पृ. ८४४. * लिङ्गस्य वाक्येन बाधः । **बाल.** पृ. १४६. * लिङ्गस्य वाक्यात् बलीयस्त्वम् । तथा च भक्षानुवाके (३।२।३।२५–२६) दर्शितम् । **वा.** ३।३।७।१४ पृ. ८३२, * लिङ्गस्य विनियोगसामर्थ्यात्मकस्य केवलपदप्रयोगाभावात् पदान्तरसंनिधेः अवश्यंभावित्वात् वाक्यं अन्तर्गतप्रायमेव । ३।३।४।११ पृ. ८१७, * लिङ्गस्य श्रुतिमात्रानुमानान्तरितः श्रुत्यर्थः । वाक्यस्य पुनः लिङ्गश्रुत्यनुमानव्यवहितः । ३।३।७।१४ पृ. ८३१. * लिङ्गस्य श्रुतिवाक्यप्रकरणैर्विरोधः । इडोपाह्वानमन्त्रे ' य इमं यज्ञमवान् ये च यज्ञपतिं वर्धान्' इत्यंशः पृथक् कर्तव्यः अभिवृद्धयर्थे जपे विनियोक्तव्यश्च इति **पक्षः** । श्रुत्या, एकवाक्यत्वेन, इडाप्रकरणेन च लिङ्गस्य बाधात् तथा कर्तुं न शक्यते । इति सिद्धान्तः । **वि.** ९।१।१४. * लिङ्गस्य श्रुतिविरोधात् क्वचित् बाधेऽपि न सर्वत्र बाधो युक्तः । **सु.** ३।८।१।२ पृ. ५४, * लिङ्गस्य सामर्थ्यात्मकत्वं सामर्थ्यस्य च संदिग्धार्थनिर्णयमात्रे व्यापाराभिधानम् । पृ. १११७. * **लिङ्गानां** नानुमानविधया निश्चायकत्वं किंतु विध्यन्ताधिकरणोक्तरीत्या (७।४।२) उपमानविधया । **सोम.** ८।१।१. * **लिङ्गयोः** विरोधे अर्थाभिधानशक्तिरूपं लिङ्गम्, परस्परैकवाक्यतागमनसामर्थ्यात्मकात् लिङ्गात् बलीयः । **वा.** ३।३।७।१४ पृ. ८४०. * लिङ्गयोः विरोधे मन्त्राणां गौणसामर्थ्येन गौणार्थाङ्गत्वे प्रसक्ते, मुख्यसामर्थ्येन मुख्यार्थाङ्गत्वम् । शेषानेकत्वे तु एकस्मिन् शेषिणि गौणमुख्यसामर्थ्येन मन्त्रद्वयमुदाहार्यम् । **कौ.** ३।३।७।१४ पृ. ३५७.

* **लिङ्गातिदेशात्** नामातिदेशः प्रबलः, शीघ्रबुद्धिहेतुत्वात् । लिङ्गातिदेशश्च परंपरातिदेशात् प्रबलः । **वि.** १२।१।६ .

* **लिङ्गानुमिता** श्रुतिः आकाङ्क्षावशेन क्रियाप्रकारानमात्रविनियोगायैव ज्ञायते । **वा.** १।२।४।३५ पृ. १५३ .

**लिङ्गाधिकरणम् ।** पशौ पुंस्त्वादि लिङ्गं विवक्षितम् ॥

**तथा च लिङ्गम् । ४।१।६।१७ ॥**

**भाष्यम्**— अधिकरणान्तरं वा । तथा च लिङ्गमिति । संख्याधिकरणं लिङ्गाधिकरणे अतिदिश्यते । लिङ्गमविवक्षितम्, श्रुत्या वाक्यस्य बाधितत्वात् । न च विवक्षितमिव श्रूयते इति भवति लिङ्गम् । ' स्त्री गौः सोमक्रयणी ' इति स्त्रीवचनात् सोमक्रयणी इत्यविवक्षितमेव लिङ्गं प्रतीयते । ननु कथं ' मृगीमानय ' इति न मृग आनीयते ? नैवम् । अशब्दं तु तत् । ' पूर्वो धावति ' इति यथा । लिङ्गं विवक्षितम्, वाक्यार्थस्य श्रुत्या अप्रतिषिद्धत्वात् । तथा च लिङ्गं ' गर्भिण्यो भवन्ति ' इति । तथा च ' मुष्करा भवन्ति ' इति । यदुक्तं ' स्त्री गौः सोमक्रयणी ' इति । तत्र स्त्री इत्यविवक्षितम् । तथा ' प्रजापतये पुरुषान् हस्तिन आलभते ' इति पुरुषग्रहणमविवक्षितम् । विस्पष्टो हि न्यायः उक्तो लिङ्गविवक्षायाम् । तस्मात् विवक्षितं लिङ्गमिति ।

**शा**—— लिङ्गं तु अलिङ्गे विपरीतलिङ्गे वृक्षादौ मक्षिकादौ च शब्दप्रयोगात् अशब्दार्थ इति अविवक्षितत्वाशङ्का । सिंहः सिंही इत्यादौ अनन्यथासिद्धलिङ्गप्रतीतिः शब्दस्य वाचकत्वं कल्पयति इति शब्दार्थत्वात् संख्यावत् लिङ्गं विवक्षितम् ।

**वि**— ' न पुंलिङ्गे विवक्षा वा विवक्षा, ऽनुपयोगतः । आद्यो, ऽनुष्ठित्यपेक्षत्वात् संख्यावत् तद् विवक्ष्यताम् ॥ '



**भाट्ट**—— भवतु संख्या शब्दार्थत्वात् विवक्षिता । लिङ्गं तु उपादेयगतमपि अशब्दार्थत्वादविवक्षितम् । नहि तत् प्रातिपदिकार्थः, सिंहादिपदात् तदप्रतीतेः, तस्य लिङ्गत्रयसाधारण्येन लिङ्गविशेषव्यभिचाराच्च । नापि प्रत्ययार्थः व्यभिचारादेव । नापि टाबादीनाम्, सुब्विकाराणां ' तस्माच्छसो नः पुंसि ' इत्यादीनाम्, विलिङ्गे वृक्षादौ विपरीतलिङ्गे मक्षिकादौ च प्रयोगेण व्यभिचारादेव । अतः शब्दानुशासनमात्रमेवेदम्, न लिङ्गं नाम कस्यचित् शब्दस्य अर्थः, इति अविवक्षितम् । **इति प्राप्ते,** सिंहः सिंही इत्यादौ अनन्यथासिद्धलिङ्गप्रतीतेः लिङ्गमपि क्वचित् टाबादीनां सुब्विकाराणां च क्वचिच्च तिसृत्रतलादिप्रातिपदिकविकाराणां वाच्यम् । अतश्च तत् क्वचित् संख्यावत् क्वचिच्च प्रातिपदिकार्थत्वेनैव विवक्षितम् । यत्र तु बाधः तत्र साधुत्वार्थं तच्छब्दप्रयोगः ।

**मण्डन**— ' पशोर्लिङ्गं विवक्ष्यते । '

**शंकर**-- ' लिङ्गमप्येवमिष्यते । ' एवं संख्यावत् ।

* **लिङ्गाधिकरणम्** ( लिङ्गेन बर्हिर्लवनमन्त्रस्य मुख्ये विनियोगः ) । ३।२।१।१–२. **मीको.** पृ. २९१३ ' बर्हिन्यायः ' इत्यत्र द्रष्टव्यम् ।

* **लिङ्गानुसारेण** भक्षानुवाकस्य ग्रहणादौ विभज्य विनियोगो ज्योतिष्टोमे । वि. ३।२।९.

* ' **लिङ्गाभावाच्च** नित्यस्य ' ( १।३।८।१८ ) । श्यामादिचिह्नविशेषवाच्युपपदानुमानाशङ्कानिरासार्थं एतत् सूत्रम् । नित्यस्य व्यवस्थिताचारात् नियतस्य कर्तुः उपलक्षणभूतस्य लिङ्गस्य अभावात् ( कर्तुः उपलक्षणभूतं यत् लिङ्गं तस्य अभावात् ) तद्वाच्युपपदानुमानानुपपत्तेः सर्वधर्मता । **सु.** पृ. २५१.

* **लिङ्गादिभिः** प्रत्यक्षः आनुमानिकानां श्रुत्यादीनां बाधः– यथा कृष्णलेषु सामर्थ्येन ब्रीहीनवहन्ति इत्यतिदेशानुमितश्रुतेः । **बाल.** पृ. १४६, **वा.** ३।३।७।१४ पृ. ८४१. * **लिङ्गादेः** श्रुतिमकल्पयित्वा स्वातन्त्र्येण प्रामाण्यं नास्ति । **वा.** १।२।४।३४. * **लिङ्गादीनां** श्रुत्यादिभिर्बाधयोग्यता । वि. ३।३।१२. * 'प्रमाणत्वाप्रमाणत्वे **लिङ्गादीनां** व्यवस्थिते । पूर्वैः सह विरुद्धत्वाविरुद्धत्वनिबन्धने ॥ ' **वा.** १।३।२।३ पृ. १८०.

* **लिङ्गादिप्रभवा** अर्थवादप्रभवा च स्मृतिः श्रुतिप्रभवया स्मृत्या बाध्यते । अप्राप्तबाधः । **वा.** ३।३।७।१४ पृ. ८६० .

* ' **लिङ्गोपदेशश्च तदर्थवत्** ' । ( १।२।४ ) तेषां मन्त्राणां अर्थः यथा अस्ति तथा लिङ्गोपदेशो भवति इति सूत्रव्याख्यानम् । **सु.** पृ. ११२ .

* **लिङ्गक्रमयोः** उपदेशप्रमाणत्वात् अत्यन्तानर्थक्यप्रसङ्गाच्च चोदकात् प्राबल्यम् । **सोम.** १०।७।१५ . * लिङ्गक्रमयोः विरोधः स्तुतशस्त्राधिकरणे दर्शितः ' अर्थेन त्वपकृष्येत ' इति । स्थितोदाहरणमपि यथा अभ्यनुज्ञापनाभ्यनुज्ञयोः प्रज्ञातक्रमयोः ' उपहूत उपह्वयस्व ' इत्येवं मन्त्रौ आम्नातौ । तौ देशसामान्यात् तथैव अङ्गतया प्राप्नुतः ' उपहूतः ' इत्यनुज्ञापने ' उपह्वयस्व ' इत्यनुज्ञायाम् । न तु तथा सामर्थ्यमस्ति इति विपरीतं शेषत्वम् । यावद्धि स्थानेन प्रकरणमुत्पाद्य एकवाक्यत्वं कल्प्यते तावल्लिङ्गेन श्रुतिं कल्पयित्वा साधितो विनियोगः इत्यकल्पितलिङ्गश्रुतिपदस्यैव क्रमस्य बाधः । तथा परिव्याणकरणक्रियमाणानुवादिनोः ' परिवीरसि ' ' युवा सुवासाः ' इति वा अग्नीषोमीयपरिव्याणाङ्गत्वे प्राप्ते लिङ्गात्सवनीयार्थद्वितीयपरिव्याणाङ्गत्वमपि । कथं न मनोताग्नीषोमीयक्रमबाधनसमर्थेन लिङ्गेन आग्नेयसवनीयपशुयागाङ्ग इति चेत् । न । ' वचनात्त्वयथार्थमैद्री स्यात् ' इतिवत् बलवत्तरश्रुतिकृतविनियोगकल्पितलक्षणाद्वारेण अग्नीषोमीयाङ्गत्वात् । एवं हि आह ' यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्या ' इति । अनया हि श्रुत्या लिङ्गेन उत्कृष्यमाणा मनोता वारिता । द्विदेवत्येऽपि एकदेवत्यैव न केवलाग्निदेवत्यत्वेन अग्नीषोमीयाद् उत्तारणीयेत्यर्थः । यद्वा एवकारं स्वस्थानादपनीय यथाक्रमं कार्या एव इत्यत्र संयोजना कार्या इति अवधार्यते । **वा.** ३।३।७।१४ पृ. ८३६-८३७. * लिङ्गक्रमयोर्विरोधे ' उपहूतः उपह्वयस्व ' इत्यनयोः यथाक्रमं पाठात् प्रश्नप्रतिवचनशेषत्वे क्रमेण अवगते लिङ्गात् वैपरीत्यम् । एवं क्रमान्तरविरोधेऽपि द्रष्टव्यम् । शेषानेकत्वे तु अन्यदेवत्यविकृतिसंनिधौ

अन्यदेवत्यानुमन्त्रणस्य आम्नातस्य तद्देवत्यानुमन्त्रणेन बाधः। **कौ.** ३।३।७।१८ पृ. ३६०.

* '**लिङ्गक्रमसमाख्यानात्** काम्ययुक्तं समाम्नानम्' इत्यत्र इन्द्रादीनां कर्मणो बहिरपि सद्भावः प्रतिपादितः। **कु.** ३।३।१८।२९.

**लिङ्गक्रमसमाख्यानात् काम्ययुक्तं समाम्नानम्। ३।२।७।२०॥**

इह काम्ययाज्यानुवाक्याकाण्डमुदाहरणम्। 'इन्द्राग्नी रोचना दिवः' 'प्रचर्षणिभ्यः' 'इन्द्राग्नी नवतिं पुरः' 'श्नथद्वृत्रम्' इत्याद्या ऋचः। ब्राह्मणे च काम्या इष्टयः श्रूयन्ते— 'ऐन्द्राग्नमेकादशकपालं निर्वपेद्यस्य सजाता वियायुः' 'ऐन्द्राग्नमेकादशकपालं निर्वपेद् भ्रातृव्यवान्' 'अग्नये वैश्वानराय द्वादशकपालं निर्वपेद्रुक्कामः' 'अग्नये वैश्वानराय द्वादशकपालं निर्वपेत् सपत्नमभिप्रोक्ष्यन्' इत्येवमादयः। तदेता याज्यानुवाक्याः प्रति संदेहः, किं यावत्किञ्चिदैन्द्राग्नं कर्म तत्र सर्वत्रानेन ऐन्द्राग्नेन न याज्यानुवाक्यायुगलेन भवितव्यम्, उत एतस्यामेव ऐन्द्राग्न्यामिष्टौ काम्यायामिति। एवं वैश्वानर्यौ याज्यानुवाक्याः। एवं सर्वत्रोत्सर्गापवादाभ्यां लिङ्गस्य विनियोजकत्वं निरूप्य इदानीं लिङ्गस्यैव विनियोजकत्वमुत प्रमाणान्तरसापेक्षस्येति तद्गत एव विशेषश्चिन्त्यते।

अत्रायं **पूर्वपक्षः**— यत्रयत्र येनैव क्रमेण ऐन्द्राग्नादीनि कर्माणि समाम्नातानि तेनैव क्रमेण तद्देवत्यानि काम्यसमाख्यायुक्तानि याज्यापुरोनुवाक्यायुगलानि अपि श्रूयन्ते। तथा च सति क्रमेण समाख्यया च तदङ्गत्वेनैव याज्यानुवाक्याविनियोगो युक्तः। तथापि लिङ्गस्य क्रमात् समाख्यातश्च बलीयस्त्वात् इन्द्राग्न्यादिप्रकाशनसामर्थ्यात्मकेन लिङ्गेन क्रमसमाख्ययोर्बाधितत्वात् इन्द्राग्न्यादिदेवताककर्ममात्राङ्गत्वमेव याज्यानुवाक्यानां युक्तमिति। **एवं प्राप्ते, अभिधीयते।** भवेदेवं यदि सामान्यसंबन्धनिरपेक्षं लिङ्गं विनियोजकं भवेत्। अग्न्यादिप्रकाशनसामर्थ्यं हि लिङ्गम्। न चाग्न्यादिस्वरूपे विनियोगः संभवति, वैयर्थ्यप्रसङ्गात्। संभवति तु तेषां यागापूर्वीयरूपे। न च सामान्यसंबन्धमन्तरेण यागापूर्वीयत्वं लभ्यते। तेन यत्र सामान्यसंबन्धापादकं वाक्यं प्रकरणं वा समस्ति, तत्र तदपेक्षस्यैव लिङ्गस्य विनियोजकत्वम्। अत्र तु वाक्यप्रकरणयोरभावाद्यदि क्रमसमाख्यापेक्षा न भवेत्, तदा लिङ्गस्य विनियोजकत्वमेव न स्यात्। तेनात्र क्रमेण याज्यानुवाक्यानामैन्द्राग्न्यादिकाम्येष्टिभिः सामान्यसंबन्धो वक्तव्यः। तत्र किं कुर्वतोऽस्याङ्गत्वमिति विशेषापेक्षायां स्वाभिधेयसमवेतार्थप्रकाशने विनियुज्यते। यत्र पुनः क्रमेण सामान्यसंबन्धे जातेऽप्यपेक्षा, कार्यद्वयसाधारणं हि लिङ्गं संदिग्धत्वात् केवलं न विनियोगसमर्थम्, तत्र विनिगमनासिद्ध्यर्थं समाख्याऽप्याश्रीयते। यथा केवलाग्निदेवत्यस्य कर्मणः क्रम आग्नेयी ऋक् पठ्यते। तस्याश्च लिङ्गेन कार्यद्वयमवगम्यते समिध्यमानाग्निप्रकाशनं इज्यमानाग्निप्रकाशनं च। तत्र यदि याज्यासमाख्या नाश्रीयेत, तदा प्राथम्यात् समिध्यमानाग्निप्रकाशनार्थत्वमेव स्यात्। याज्यासमाख्यया तु इज्यते अनया इतीज्यमानदेवताप्रकाशनसामर्थ्यं मन्त्रस्य कल्प्यते। यद्यपि अभिधानसामर्थ्यं न देवतार्थं, किन्तु यागसमन्वयिसाधारणाग्निस्वरूपमात्रे। तथाहि, समाख्याकल्पितयागविषयसामर्थ्यानुरोधेन इज्यमानदेवताप्रकाशन एव लिङ्गेन विनियुज्यते। तदुक्तम्—

'**नासति क्रतुसंबन्धे सामर्थ्यं विनियोजकम्।**
**येन च क्रतुसंबन्धस्तेन काम्यार्थता स्फुटा॥**' इति

( वा. पृ. ७७१ )। अतः सर्वत्र सामान्यसंबन्धपूर्वक एव लिङ्गविनियोग इति। **प्रयोजनम्**–पक्षोक्तम्। **सूत्रं तु**– लिङ्गक्रमसमाख्याभिः काम्येष्टिसंबद्धमेव मन्त्रसमाम्नानं न सर्वत्र यातीत्यर्थः। **तौता.**

**लिङ्गक्रमसमाख्यानात् काम्ययुक्तं समाम्नानम्। ३।२।७।२० ॥**

'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' 'ऐन्द्राग्नमेकादशकपालं निर्वपेद् यस्य सजाता वीयुः' इत्याद्याः काम्येष्टयो विहिताः। एवं काम्ययाज्यानुवाक्याकाण्डे 'इन्द्राग्नी रोचना दिवः० श्नथद्वृत्रं०' इति ऐन्द्राग्नं याज्यापुरोनुवाक्यायुगलं चाम्नातम्। तत्र किं यावत् किञ्चित् ऐन्द्राग्नं कर्म तत्र सर्वत्र अनेनैव याज्यानुवाक्यायुगलेन ऐन्द्राग्नेन भवितव्यं उत उक्तायां प्रथमायामेव ऐन्द्राग्नेष्टौ इदं युगलं अन्यत्र तु अन्यत् इति



विचारे, येन क्रमेण ऐन्द्राग्नादीनि कर्माणि आम्नातानि तेनैव क्रमेण तद्देवत्यानि काम्यसमाख्यायुक्तानि याज्यापुरोनुवाक्यायुगलानि। तानि किं क्रममुल्लङ्घ्य तद्देवत्याकर्ममात्रार्थानि लिङ्गात् भवन्ति उत केनचित् प्रकारेण तास्वेव काम्यासु इष्टिषु यथाक्रमं विनियुज्यन्ते इति विचारे। **सिद्धान्तमाह**। लिङ्गक्रमसमाख्यानात् लिङ्गानुगृहीतात् क्रमात्, लिङ्गानुगृहीताच्च समाख्यानात् समाम्नानं काम्ययाज्यानुवाक्यामन्त्रकाण्डसमाम्नानं काम्ययुक्तं काम्येष्वेव यागेषु अङ्गतया संयुक्तं स्यात्। तस्मात् काम्येष्टिष्वेव विनियोगः।

"अथ किमर्थमुभयमुपदिश्यते लिङ्गक्रमात् इति, समाख्यानात् इति च? अस्ति तत्र पाथिकृतीयं व्रातपतीयं च कर्म। सामिधेनीकार्यमप्यस्ति, याज्यानुवाक्याकार्यमपि। यदि लिङ्गक्रमात् इत्येतावदेवोच्येत सामिधेनीकार्येऽपि लिङ्गेन तासां विनियोगः स्यात्। अथ किमर्थं लिङ्गक्रमौ व्यपदिश्येते सर्वा याज्यानुवाक्याकार्ये एव विनियुज्येरन् सामिधेनीषु विनियोगो न स्यात्। अथ पुनः समाख्यानात् लिङ्गक्रमाच्च निवृत्ते याज्यानुवाक्याकार्ये सामिधेनीषु विनियोगः सिद्धो भवति। यथा आग्निवारुण्या इष्टेः क्रमे अतीते सोमारौद्रीणामनागते मनोऋचः ताः सामिधेनीषु धाय्या इत्युच्यन्ते। तथा 'पृथुपाजास्तं सबाधः' इति द्वे धाय्ये कल्प्येते। तस्मादुभयं व्यपदेष्टव्यमिति" इति भाष्यम्। **के.**

* 'अग्निरुक्थे पुरोहितः' ( ऋसं ८।२७।१ ) इत्यादीनां मनोऋचां 'पृथुपाजाः' ऋसं. ( ३।२७।५ ) 'तं सबाधः' ( ऋसं. ३।२७।६ ) इति पृथुपाजवत्योश्च याज्यासमाख्यां बाधित्वा लिङ्गेन सामिधेनीकार्ये विनियोग इति '**लिङ्गक्रमसमाख्यानात्**' इत्यत्रोक्तम्। **सु.** १२३१. * अर्थप्रकाशनसामर्थ्यरूपलिङ्गात् स्वप्रकाश्यार्थमात्रे शेषत्वं मन्त्रस्य भवति न तु तद्द्वारा क्रतुशेषत्वमपि क्रतूपस्थित्यभावेन अर्थप्रकाशनसामर्थ्यमात्रात् क्रतुशेषत्वासिद्धेः। अतः क्रतुना द्वारविशेषमनन्तर्भाव्य सामान्यतः शेषशेषिभावे सिद्धे किं द्वारं क्रतुशेषत्वं निर्वहतीति द्वारापेक्षायां मन्त्रप्रकाश्यार्थलक्षणद्वारा शेषत्वमात्रे लिङ्गं प्रमाणमिति 'लिङ्गक्रमसमाख्यानात्' इत्यधिकरणे निरूपितम्। **सोम.** १०।५।८.

* 'उभा वामिन्द्राग्नी' इत्यादीनां 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्' इत्यादौ यत्र क्रमसमाख्याभ्यां सामान्यसंबन्धः सिद्धः, तत्रैव विनियोगो न तु इन्द्राग्निसंबद्धकर्ममात्रे, सामान्यसंबन्धस्य तत्राभावात् इत्येवं **लिङ्गक्रमाधिकरणोक्तम्। सोम.** १।३।१–२.

**लिङ्गक्रमसमाख्यानाधिकरणम्।** काम्ययाज्याऽनुवाक्याकाण्डोक्तानां मन्त्राणां काम्येष्टिष्वेव विनियोगः॥

**लिङ्गक्रमसमाख्यानात्काम्ययुक्तं समाम्नानम्। ३।२।७।२०॥**

**भाष्यम्**— इह काम्ययाज्यानुवाक्याकाण्डमुदाहरणम्। 'इन्द्राग्नी रोचना दिवः, प्रचर्षणिभ्यः' 'इन्द्राग्नी नवतिं पुरः, श्नथद्वृत्रं' इत्येवमाद्या ऋचः। अपरा अपि काम्या इष्टयः। 'ऐन्द्राग्नमेकादशकपालं निर्वपेद्यस्य सजाता वियायुः' 'ऐन्द्राग्नमेकादशकपालं निर्वपेद् भ्रातृव्यवान्' 'अग्नये वैश्वानराय द्वादशकपालं निर्वपेत् रुक्कामः' 'अग्नये वैश्वानराय द्वादशकपालं निर्वपेत् सपत्नमभिद्रोष्यन्' इत्येवमाद्याः। तदेता याज्यानुवाक्याः प्रति संदेहः, किं यावत्किंचिदैन्द्राग्नं कर्म तत्र सर्वत्रानेनैन्द्राग्नेन याज्यानुवाक्यायुगलेन भवितव्यम्, उतैतस्यामेवैन्द्राग्न्यामिष्टौ काम्यायामिति। एवं वैश्वानरीययोर्याज्यानुवाक्ययोः, एवं सर्वत्र। किं तावत्प्राप्तम्? यावत्किंचिदैन्द्राग्नं वैश्वानरीयमग्नीषोमीयं जातवेदसं च, सर्वत्रैता याज्यानुवाक्या भवेयुः। कुतः? लिङ्गात्। ननु क्रमसमाख्याने विशेषके भविष्यतः। सत्यम्। तथापि क्रमं समाख्यां च शक्नोति लिङ्गं बाधितुमिति। **एवं प्राप्ते, ब्रूमः।** लिङ्गक्रमसमाख्यानात् तावेव काम्यास्वेता याज्यानुवाक्या इति गम्यते। य एव हि लिङ्गक्रमः एषां कर्मणाम्, स एवाऽऽसां याज्यानुवाक्यानाम्। तेन तासामेव ताः शेषभूता इति। ननु लिङ्गं बलवत्तरमित्युक्तम्। सत्यमेतत्। इह तु समाख्या बलीयसी। नह्येताः समाख्यानादृते एषां काम्यानां कर्मणां प्राप्नुवन्ति, न भिन्नदेशानां कर्मणाम्। कुतः? समाख्यामन्तरेण

आसामृचां याज्यानुवाक्यात्वमेव न विज्ञायते, कुतो भिन्नदेशानां कर्मणां याज्यानुवाक्या भविष्यन्तीति । या चैषां समाख्या, सा काम्यानामेव याज्यानुवाक्यात्वमाचष्टे, न सर्वेषाम् । यदि समाख्या नाऽऽद्रियते याज्यानुवाक्यात्वमेवैषां न भवति । यद्याद्रियते तदा काम्यानामेव । एवं हि तत्समाख्यायते काम्ययाज्यानुवाक्याकाण्डमिति ।

अथ किमर्थमुभयमुपदिश्यते लिङ्गक्रमादिति समाख्यानादिति च । अस्ति तत्र पाथिकृतीयं व्रातपतीयं च कर्म । सामिधेनीकार्यमप्यस्ति, याज्यानुवाक्याकार्यमपि । यदि लिङ्गक्रमादित्येतावदेवोच्येत, सामिधेनीकार्येऽपि लिङ्गेन तासां विनियोगः स्यात् । अथ किमर्थं लिङ्गक्रमौ व्यपदिश्येते । सर्वा याज्यानुवाक्याकार्य एव विनियुज्येरन्, सामिधेनीषु विनियोगो न स्यात् । अथ पुनः समाख्यानाल्लिङ्गक्रमाच्च निर्वृत्ते याज्यानुवाक्याकार्ये, सामिधेनीषु विनियोगः सिद्धो भवति । यथा, आग्निवारुण्या इष्टेः क्रमेऽतीते सोमारौद्रीणामनागते मनोर्ऋचः ताः सामिधेनीषु धाय्या इत्युच्यन्ते । तथा, 'पृथुपाजास्त्वं सबाधो' इति द्वे धाय्ये कल्प्येते । तस्मादुभयं व्यपदेष्टव्यमिति ।

**वा**— येन क्रमेणैन्द्राग्नादीनि काम्यानि कर्माण्याम्नातानि, तेनैव क्रमेण तद्देवत्यानि काम्यसमाख्यायुक्तानि याज्यापुरोनुवाक्यायुगलानि । तानि किं क्रममुल्लङ्घ्य तद्देवत्यकर्ममात्रार्थानि लिङ्गाद्भवन्ति, उत केनचित्प्रकारेण तास्वेव काम्यास्विष्टिषु यथाक्रमं विनियुज्यन्ते इति । उदाहरणबहुत्वं हि सूत्रोपात्तविशेषणविषयप्रकल्पनार्थम् । तत्र लिङ्गात् सर्वार्थत्वे प्राप्तेऽभिधीयते, '**नासति क्रतुसंबन्धे सामर्थ्यं विनियोजकम् । येन च क्रतुसंबन्धस्तेन काम्यार्थता स्फुटा ॥**' लिङ्गं हि देवतासंबन्धं कुर्यात् । न च तत्स्वरूपप्रयुक्तत्वे फलमस्ति । यज्ञसंबन्धिता तदनुरक्तदेवतासंबन्धिता वा नैतावता वाक्यप्रकरणादिरहितेन शक्योपादातुम् । न च ज्ञायते क्वांशे विनियोग इति । तेनावश्यं समाख्या तावदाश्रयणीया । तया हि यज्ञसंबन्धः कार्यविशेषश्च सिध्यति । इज्यतेऽनयेति यागसंबन्धः । तस्याश्च हविःप्रदानार्थत्वात् कार्यविशेषोऽप्यवधृतः । ततश्च केन यज्ञेन संबन्ध इति लिङ्गात्तद्देवत्येनेति विज्ञायते । नन्वेवमपीष्टं न सिध्यत्येव । कथं न सिध्यति ? यदा काम्यं याज्याकाण्डमित्येतावत्या समाख्यया काम्येष्टिविषयत्वं नियतम् । अपि च, यद्यपि समाख्या यज्ञमात्रसंबन्धं कुर्यात्तथापि बलीयसा क्रमेण बाध्येतैव । तस्मात् काम्येष्टियुक्तमेवैतत्समाम्नानमिति । 'किमर्थमुभयं' सूत्रितमिति । क्रमानुगृहीतेन लिङ्गेनैव काम्येष्टिविषयत्वसिद्धेः । अथवा काम्यं याज्याकाण्डमित्येतावतैव सर्वं सिद्धमिति मन्यते । तत्राभिधीयते । सत्यम्, ऐन्द्राग्नादिषु लिङ्गक्रममात्रेणापि सिध्येत्, ऋचां याज्यानुवाक्यात्वादन्यत्राविनियोगात् । यानि त्वाग्नेयादीनि कर्माणि 'अग्नये व्रतपतये' इत्येवमादिचोदितानि तत्र स्थानद्वयमृचामग्निप्रकाशने सामिधेनीत्वं याज्यानुवाक्यात्वं च । सातदश्याम्नानाच्च अस्ति सामिधेनीनां द्वे ऋचौ प्रति अपेक्षा । तत्र यदि याज्यासमाख्या विनियोजिका नाऽऽश्रीयेत, ततः सामिधेनीष्वपि लिङ्गक्रमावुपपद्येते इति । प्रथमातिक्रमे कारणाभावात् तत्रैव विनियोगः प्राप्नोति । समाख्यया तु तन्निवर्तितं भवति । तेन तर्हि तन्मात्रमेवास्तु नार्थो लिङ्गक्रमाभ्यामिति । तदुच्यते । यद्यत्रेष्टिपरिमिता एवात्यन्तं तद्देवत्याश्चाम्नायेरन् तत एतदेवं स्यात् । इह त्वन्यदेवत्यस्य स्वानुरूपयाज्यानुवाक्यापूरितस्य कर्मणः क्रमे या आग्नेय्य ऋचः पठ्यन्ते, ताः समाख्यया केवलया विनियुज्यमाना याज्याकार्ये विनियुज्येरन् । न चास्ति संभवः, विलिङ्गत्वादन्याभ्यां तल्लिङ्गाभ्यां बाधितत्वात् । तेनाविनियोग एव स्यात् । लिङ्गक्रमाश्रयणे पुनः समाख्यायां निवृत्तव्यापारायां ताभ्यां विनियोगे सति सामिधेनीषु प्रयोगः सिद्धो भवति । तं विषयं दर्शयति– 'आग्निवारुण्या इष्टेः' याज्यापुरोनुवाक्ये पठित्वा सौमारौद्रीणामिष्टीनां याज्यापुरोनुवाक्यास्वनागतासु मनोर्ऋचः पठ्यन्ते । ताः सामिधेनीषु धाय्या भवन्तीति । तथा पृथुपाजवत्यावपि द्रष्टव्ये । तत्रापि पूर्वस्याः सामिधेनीक्रममतिक्रम्य याज्यापुरोनुवाक्योत्तरकालपाठादुत्तरेष्टिविषयत्वं विज्ञायते । यदि च क्रमो नाऽऽश्रीयेत ततो लिङ्गसमाख्यामात्रेण प्रथममैन्द्राग्नयुगलं द्वितीयस्यामैन्द्राग्न्यां विनियुज्येत, द्वितीयं च प्रथमा-



याम् । क्रमे तु सति समाख्यातः पूर्वतरं तेन क्रतुसंबन्धकरणात् तत्संनिरुद्धमेव लिङ्गं श्रुतिं कल्पयतीत्यक्रमविनियोगः परिहृतो भवति । तस्मात् सम्यक् सूत्रितमिति ।

**शा**— मन्त्रकाण्डे संदेहः, किं यत्रयत्र सामर्थ्यमस्ति, तत्रतत्र सर्वत्र विनियोक्तव्या मन्त्राः क्रमसमाख्ये बाधित्वा, उत तद्वशेन काम्येष्टिष्वेवेति । तदर्थं च किं लिङ्गमपि श्रुत्यादिवत् निरपेक्षमेव विनियोजकम्, उत क्रतुसंबन्धबोधकप्रमाणमन्यदपि अपेक्ष्य व्यापारविशेषमात्रे प्रामाण्यमिति । तत्र '**लिङ्गस्याप्यनपेक्षस्य मन्यन्ते विनियोक्तृताम् । तद्बलीयः क्रमाख्याभ्यामिति सर्वार्थता भवेत् ॥**' स्वाध्यायविध्यध्यापितस्य तावत् मन्त्रस्य अवश्यं प्रयोजनेन भवितव्यम् । तत्र मन्त्रस्वरूपादेव 'दृष्टस्यार्थस्य प्रकाशकोऽयम्, अतोऽत्र विनियोक्तव्यः' इति बुद्धिरुत्पद्यते । न च निष्प्रयोजनस्य प्रकाशनमर्थवत् इति तद्द्वारेण तत्संबन्धिकर्मापूर्वार्थत्वमपि तत एव गम्यते, किमत्र प्रमाणान्तरेण । तच्च क्रमसमाख्याभ्यां प्रबलम् । इति तद्बाधेन लिङ्गात् सर्वार्थत्वम् । इति प्राप्ते, ब्रूमः । '**सत्यं प्रयोजनापेक्षा मन्त्रस्यास्ति, तथापि तु । नैवं सामर्थ्यमात्रेण विनियोगोऽस्य (मन्त्रस्य)संभवी ॥**' नहि अपेक्षितमपि प्रयोजनं प्रमाणमन्तरेण लब्धुं शक्यम् । न च सामर्थ्यमात्रेण प्रयोजनं किंचित् समर्थ्यते । अग्न्यादिस्वरूपमात्रप्रतिपादनं सामर्थ्यादवगम्यते । न च तावन्मात्रप्रकाशने फलमस्ति । कर्मापूर्वसाधनरूपप्रकाशनार्थता तु न कर्मसंबन्धप्रमाणमन्यदन्तरेण सामर्थ्यमात्रात् सिध्यति । 'पूषा प्रपिष्टभागः' इत्यत्र तु भागशब्दस्य यागवचनत्वात् ( यागलक्षकत्वात् ) क्रतुसंबन्धसिद्धिः इति वक्ष्यामः (३।३।१५) । न चाग्निसूर्यादीनां स्रुवादिवत् क्रत्वव्यभिचारः, येन क्रतुरुपस्थाप्येत । लोकेऽपि तत्सद्भावात् इन्द्रादीनामपि मन्त्रार्थवादेतिहासादिभिः कर्मणोऽन्यत्रापि प्रतीतेः ( मन्त्रार्थवादादिषु स्वर्गाधीश्वरत्व–लोकपालत्वासुरजेतृत्वादिना प्रतिपाद्यमानत्वेन इन्द्रादीनामपि कर्मणो बहिरपि संभवावगमात् लोके संभवोऽस्ति इत्यर्थः ) । तस्मात् क्रतुसंबन्धप्रमाणमन्यदपेक्षितव्यम् । न च मन्त्रकाण्डस्य क्रमसमाख्याभ्यामन्यत् प्रमाणमस्ति । ते च काम्येष्टिष्वेव, इति तत्रैव विनियोगः, न कर्मान्तरेषु । न च कर्मान्तरेषु स्मरणापेक्षया एषां मन्त्राणां तत्र विनियोगः, तेषामुपायान्तरेणापि स्मृतिसिद्धेः एकान्ततो मन्त्रानपेक्षणात् । यत्र तु एकान्ततः, तत्र भवत्येव सामर्थ्यमात्रादपि तादर्थ्यम्, यथा अर्थज्ञानस्य अनुष्ठानाङ्गत्वम् । नहि तत् विना अनुष्ठानं सिध्यति । यथा च आत्मज्ञानस्य सांपरायिकफलकर्मानुष्ठानौपयिकत्वम् । इत्येकान्ताभावात् न कर्मान्तरेषु विनियोगः । क्रमसमाख्याबलात्तु काम्येष्टिष्वेव यथाक्रमं यथासमाख्यं च याज्याऽनुवाक्यात्वेन विनियोगः । संभवतामसंभवतामपि तास्वेव सामिधेन्यादौ क्रमसहितेन लिङ्गेन विनियोगः । ( असंभवश्च क्वचित् प्रधानदेवताप्रकाशकत्वाभावात् । यथा सोमारौद्रेष्टिक्रमे आम्नातानां मानवीनामृचां प्रधानदेवताप्रकाशनसामर्थ्येऽपि बहुत्वात्, क्वचिदसंभवो यथा 'अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेत्' इत्येतदिष्टिक्रमे आम्नातानां 'कृणुष्व पाजः' इत्यादीनाम् ) ।

**कौ**-- पूर्वं श्रुतेर्जघन्यप्रमाणापेक्षत्वे निरूपिते लिङ्गस्यापि इह तन्निरूपणात् प्रासङ्गिकी अनन्तरा **संगतिः** ।

**सोम — सूत्रार्थस्तु**-- तत्तदिष्टिलिङ्गानुसारिक्रमात् समाख्यानाच्च काम्येष्ट्यङ्गं इन्द्राग्नीत्यादिकाण्डाम्नानमिति ।

**वि**-- 'ऐन्द्राग्नादीष्टयः काम्या याज्या अप्युदिताः क्रमात् । काण्डयोस्ताः यथालिङ्गं संचार्या नियमोऽथवा ॥, लिङ्गं क्रमसमाख्याभ्यां प्रबलं तद्वशादमूः । अकाम्यास्वपि संचार्या याज्याः सर्वत्र का क्षतिः ॥, समाख्यानात् काण्डयोगः क्रमादिष्टिषु योजनम् । अपेक्षते देवमात्रं शक्तिः काम्यैकगास्ततः ॥'

**भाट्ट**—काम्येष्टिकाण्डे इन्द्राग्न्यादिदेवत्याः काम्येष्टयः समाम्नाताः तेनैव क्रमेण मन्त्रकाण्डे तत्तल्लिङ्गा एव काम्ययाज्यानुवाक्याकाण्डमित्येवं समाख्याता याज्यानुवाक्यामन्त्राः समाम्नाताः । ते लिङ्गादिन्द्राग्न्यादिदेवत्यकर्ममात्राङ्गम्, न तु दुर्बलक्रमसमाख्यानुरोधेन काम्येष्टिमात्राङ्गम् । न च सामान्यसंबन्धबोधकप्रमाणाभावे लिङ्गमात्रेण विनियोगायोगः मन्त्रगतप्रयोजनाकाङ्क्षासहकृतलिङ्गेन सामान्यसंबन्धबोधकप्रमाणाभावे अपि इन्द्राग्न्यादिदेवता-

 लिङ्गक्रमसमाख्यानाधिकरणम्

प्रकाशने मन्त्रविनियोगोपपत्तेः । न च इन्द्राग्निस्वरूपे आनर्थक्यादपूर्वसाधनत्वलक्षणार्थं क्रमाद्यपेक्षेति वाच्यम् । इन्द्राग्न्यादिदेवतानां जुहूवत् क्रत्वव्यभिचारित्वेन लक्षणोपपत्तेः । व्यभिचारित्वेऽपि वा लौकिकस्याग्न्यादेर्वैयर्थ्यादेव निवारणोपपत्तौ परिशेषादेवापूर्वीयत्वोपस्थितेः । अतो लिङ्गमात्रेण क्रमसमाख्ययोर्बाधात् सर्वार्थत्वम् । इति प्राप्ते, आकाङ्क्षाऽभावे योग्यतारूपस्य लिङ्गस्य विनियोजकत्वानुपपत्तेर्मन्त्रगतप्रयोजनाकाङ्क्षायाश्च सर्वमन्त्राणां वाचस्तोमे विनियोगेन निराकाङ्क्षतया अभावान्न लिङ्गमात्रात् सर्वार्थत्वोपपत्तिः । अतश्च वाक्यप्रकरणक्रमादिना सामान्यसंबन्धबोधकप्रमाणेन तत्तदाकाङ्क्षोत्थापनात् तत्तत्क्रतुसंबन्धेऽवगते द्वारविशेषः एव लिङ्गादवगम्यते । न च वाचस्तोमीयवाक्येन प्रकरणादिबाधः, मन्त्रविशेषविषयाणां तेषां मन्त्रपाठकालोत्पन्नमन्त्रप्रयोजनाकाङ्क्षावेलायामनुपस्थितेन तेन वाक्येन बाधायोगात् । न चैवं प्रबलेन विनियुक्तस्यापि दुर्बलेन विनियोगे उत्कृष्टस्यापि पूषानुमन्त्रणमन्त्रस्य प्रकरणेन गौणेऽर्थे विनियोगापत्तिः, प्रमाणद्वयस्याप्येकविषयत्वात् मन्त्रप्रयोजनाकाङ्क्षावेलायां प्रबलप्रमाणस्योपस्थितत्वाच्च बाधकत्वोपपत्तेः । अतश्च प्रकृते बाधायोगात् क्रमसमाख्यानुरोधात् काम्येष्टिविषयत्वमेव मन्त्राणाम् । न चान्यत्राकाङ्क्षोत्थापकं किंचिदस्ति अव्यभिचरितक्रतुसंबन्धादेराकाङ्क्षोत्थापकत्वे प्रमाणाभावात् । वस्तुतस्तु नात्राव्यभिचारोऽपि । जुह्वादीनां हि न तत्त्वेनान्यत्र कारणतेति तस्या युक्तः क्रतुना अव्यभिचरितः संबन्धः । देवतारूपस्याग्न्यादिशब्दस्य तु आनुपूर्वीविशिष्टवर्णत्वेन क्रतुं प्रतीव स्वार्थप्रतिपादनं प्रत्यपि कारणत्वान्नाव्यभिचरितः क्रतुसंबन्ध इति वैषम्यम् । अतश्च व्यभिचारात्, अव्यभिचारेऽपि वा आकाङ्क्षोत्थापकत्वानुपपत्तेर्नान्यत्र विनियोगः । अत एव स्वारसिकी आकाङ्क्षा यत्र न निवर्तते यथा अर्थज्ञाने उपनिषज्जन्यात्मज्ञाने वा, तत्राकाङ्क्षोत्थापनप्रयोजनाभावात् सामान्यसंबन्धबोधकप्रमाणं विनाऽपि भवत्येव लिङ्गमात्राद्विनियोगः । प्रकृते तु स्वारसिकाकाङ्क्षानिवृत्तेराकाङ्क्षोत्थापकसामान्यसंबन्धबोधकप्रमाणापेक्षेति वैषम्यम् । न चैवं प्रबलक्रममात्रेणैव तदुपपत्तेः समाख्यावैयर्थ्यम्, यत्र सातदद्यवत् अग्निदेवत्यकर्मक्रमे आग्नेयमन्त्रद्वयाम्नानं तत्र प्रथमातिक्रमे कारणाभावात् क्रमाविरोधाच्च सामिधेनीषु निवेशे प्राप्ते समाख्यया याज्यानुवाक्याकार्ये निवेशः । सामिधेनीषु तु अन्यासामागमः । न चैवं क्रमोपन्यासवैयर्थ्यम्, यत्रान्यदेवत्यपूर्वेष्टियाज्याम्नानानन्तरमुत्तरेष्टियाज्यातः पूर्वमाग्नेय्य ऋचः पठिताः, तत्र तत्तल्लिङ्गकमन्त्रेण याज्याकार्ये निवेशासंभवात् समाख्याबाधेऽपि क्रममात्रेणोत्तरेष्टिसामिधेनीकार्ये निवेशः तत्सामिधेनीस्थानपठितत्वात् । अतः सिद्धं काम्येष्टिष्वेव विनियोग इति ।

**मण्डन**— 'काम्ये समाख्यानबलेन याज्या ।'

**शंकर**— 'मानान्तरे (सति) प्रमा लिङ्गम् ।' प्रमा प्रमाणम् । ८.

* **लिङ्गत्रयम्** । '**नक्षत्रं तारका तिष्यो दारा इत्येवमादिषु । नैकत्रार्थे विरुद्धत्वात् लिङ्गानेकत्वसंभवः ॥**' अर्थधर्मत्वे हि तस्यैकत्वात् न विरुद्धलिङ्गसमावेशो घटते इति । श्लोवा. शून्यवादे ५८ । अत्रोच्यते– '**तारकादिमतौ तथा । स्त्रीत्वाद्यन्यत्र दृष्टं स्यात्, कथंचिद्वेह संभवेत् ॥ २१२ ॥ शब्दमात्रप्रतीत्या वा, दृष्टैर्वा कैश्चिदिङ्गनात् । संस्त्यानप्रसवस्थानैर्यथा पातञ्जले मते ॥ २१३ ॥ तेन लिङ्गत्रयस्यात्र सद्भावः स्यात् प्रमाणवत् । अपेक्षाभेदतश्चात्र विरोधोऽपि न विद्यते ॥' २१४ ॥** प्राणिधर्मत्वात् लिङ्गत्रयं अन्यत्र विद्यमानमेव अत्र नक्षत्रादिशब्देषु भ्रान्त्यैव अवगम्यते । कथं पुनरसति बाधके भ्रान्तित्वम्? सत्यम्, यदि बाधो न स्यात् । पदप्रयोगवेलायां अवगतमपि अप्राणिषु लिङ्गं प्रत्यक्षाद्यनुपलब्ध्या बाध्यते एवेति । मतान्तरमाह– कथंचिदिति । प्रमाणान्तरमाह– दृष्टैरिति । इङ्गनं कल्पनम् । ये प्रायः स्त्रीत्वादिभिः सहचारिणो धर्मा दृष्टाः, तैरिहापि लिङ्गत्रयं कल्प्यते । तच्छब्दप्रयोग एवात्र कल्पनमित्युच्यते । स्त्रीत्वादिषु संस्त्यान–प्रसव–स्थानाख्यगुणविवक्षायां स्त्रीलिङ्गादिवचनः शब्दः अप्राणिषु नक्षत्रादिषु गौणः प्रयुज्यते । संस्त्यानं रजोबाहुल्यं स्त्रीधर्मः, प्रसवः सत्त्वबाहुल्यं पुंधर्मः, स्थानं तमोबाहुल्यं नपुंसकधर्मः । श्लोवा. शून्यवादे २१२–२१४.



* **लिङ्गत्वं** अनन्यगतिकानां अन्यार्थदर्शनानां अभिधास्यते । **वा.** ३।३।७।१४ पृ. ८४१.

* **लिङ्गदर्शनाच्च । ३।४।१३।४०॥**

सोमभक्षणस्य पुरोडाशादिभक्षणवत् ऋत्विक्षु अवशिष्टकर्मानुष्ठानसामर्थ्याधानाशक्तेः तद्वैगुण्येऽपि च दक्षिणालाभाख्यफलाविघातात् स्वामिन एव पानात् प्रधानफलभोक्तृत्वशक्त्याधानाख्या समृद्धिः तद्वैगुण्याच्च भोक्तृत्वशक्तिनाशाख्या व्यृद्धिः । तस्मात् तस्यैव वमने इष्टिः । **सु.** पृ. १५१४.

* **लिङ्गप्रकरणाभ्यां** क्रमबाधः । यथा– दर्शपूर्णमासप्रकरणे 'हस्ताववनेनिक्ते' 'उलपराजिं स्तृणाति'। अत्र क्रमेण आस्तरणमात्रस्याङ्गं हस्तावनेजनम्, लिङ्गप्रकरणाभ्यां तु हस्तावनेजनं सर्वशेषः । **वि.** ३।१।१४.

* **लिङ्गप्रकरणविरोधे** पूषानुमन्त्रणानि उदाहर्तव्यानि । शेष्यनेकत्वे इदम् । शेषानेकत्वे तु निर्वापादिषु लिङ्गेन 'देवस्य त्वा' इत्यादिना प्रकरणप्राप्तमन्त्रान्तरबाधः । **वा.** ३।३।७।१४ पृ. ८३९. * लिङ्गप्रकरणविरोधे शेष्यनेकत्वं पूषानुमन्त्रणमन्त्रस्य प्रकरणेन दर्शपूर्णमासयोर्विनियोगे प्राप्ते समाख्यासहकृतलिङ्गात् पूषदेवत्यकर्माङ्गत्वम् । इदमुदाहरणं च सिद्धरूपत्वात् मन्त्रस्य अधिकाराख्यप्रकरणविरोधे ज्ञेयम् । मुख्यप्रकरणविरोधे तु अन्यदूह्यम् । शेषानेकत्वे तु पूषानुमन्त्रणमन्त्रे प्रकरणात् आग्नेये प्राप्ते मुख्यलिङ्गकेन अनुमन्त्रणेन बाधः । **कौ.** ३।३।७।१४ पृ. ३६०.

* **लिङ्गबलेन** आकाशश्रुतेरन्यथानयनं 'आकाशस्तल्लिङ्गात्' इत्यत्र । **पराक्रमः.** ६ २।१–२. * लिङ्गबलेन सूक्तवाकमन्त्रः दर्शे पूर्णमासे च विभज्य विनियोक्तव्यः । **वि.** ३।२।६.

* **लिङ्गबाधः** प्रकरणवशेन न युक्तः । **टुप्.** ९।१।३।४.

* **लिङ्गमात्रस्य** ऊहः यथा– 'वस्व्यसि रुद्रासि' इति एकहायन्याम्, साण्डे च 'वसुरसि रुद्रोऽसि' इति । **बाल.** पृ. १२६.

* **लिङ्गवचनयोरेव** ऊहः क्वचित्– यथा 'प्रास्मा अग्निं भरत' इत्यत्र अस्मै इति पदं पुंलिङ्गैकवचनम् (प्रकृतौ)। '**मह्ना आलभेत**' इत्यादिषु (विकृतौ) 'प्राभ्यः' इत्येवं स्त्रीलिङ्गबहुवचनरूपेण 'प्राभ्योऽग्निं भरत' इति ऊहः । **बाल.** पृ. १२७.

* 'स्वर्गकामः' इत्यत्र **लिङ्गवत्** संख्याया अपि उद्देश्यविशेषणत्वेन अविवक्षितत्वम् । **सोम.** ६।१।४.

* **लिङ्गवाक्ययोः** लिङ्गं बलीयः । कुतः ? अर्थविप्रकर्षात् । यत् 'स्योनं ते' इत्यस्य प्रत्यक्षं सदनकर्मणः अभिधानसामर्थ्यं तन्मुख्यम्, 'तस्मिन् सीद' इत्यस्य पुनः पूर्वेण सह एकवाक्यतामुपगतस्य भवति जघन्यम् । तदत्र पूर्वस्य मन्त्रस्याभिधानसामर्थ्यात् उपस्तरणे विनियोगः उक्तो भवति इति संनिकृष्टो लिङ्गस्य श्रुत्यर्थः । उत्तरस्य तु उपजनिते अभिधानसामर्थ्ये ततः श्रुत्यर्थः इति लिङ्गान्तरितः विप्रकृष्टो भवति इति । **भा.** ३।३।७।१४ पृ. ८४९–५०. * लिङ्गवाक्ययोर्विरोधे शेषानेकत्वे 'स्योनादेरपि शेषत्वं वाक्येन सदनं प्रति । सीदेत्यस्यैव लिङ्गेन तेनायं पूर्वबाधनः ॥' **वा.** ३।३।७।१४ पृ. ८३८. * लिङ्गवाक्ययोः– समुदायावयवविनियोगाय वाक्यसामर्थ्ययोः सहप्रस्थितयोः असमर्थविनियोगासंभवात् यावत् वाक्येन पूर्वो भागः उत्तरार्थाभिधानसमर्थः, (स्योनं ते सदनं ०) उत्तरो वा पूर्वसमर्थः (तस्मिन् सीद०) इत्यनुमीयते, तावत् प्रत्येकभागवर्तिना सामर्थ्येन पूर्वस्यापि स्वार्थे परस्यापि स्वार्थे श्रुतिरनुमिता । ततश्च यावत् इतरत्र विनियोजकश्रुत्यनुमानाय प्रयत्यते तावदिह विनियोगे सिद्धे निराकाङ्क्षत्वात् प्रकरणाम्नानस्य न कश्चिदपि हेतुः श्रुत्यनुमाने इत्यनुपजातमूलो विनियोगो बाध्यते । मन्त्रस्यापि हि पूर्वस्य पूर्वत्रार्थे शीघ्रं विनियोगः उत्तरस्य चिरेण । तथोत्तरोत्तरस्य शीघ्रं पूर्वस्य तत्र चिरेण । शीघ्रविनियुक्तश्च मन्त्रः चिरविनियोगं नाद्रियते । तथा अर्थोऽपि प्रथमावगतमन्त्रावरुद्धो नेतरं गृह्णाति । स्वप्राधान्ये च संभवति न परोपसर्जनत्वं प्रतिपद्यते । तस्मात् लिङ्गं बलीयः इति भित्त्वा वाक्यं विनियोग इति । **वा.** ३।३।७।१४ पृ. ८३२.

*** लिङ्गवाक्यप्रकरणस्थानसमाख्यानां विचारः।**

**'सर्वभावगता शक्तिर्लिङ्गमित्यभिधीयते ।**
**वाक्यं तु पदसंघातमात्रमित्युदितं पुरा ॥ १ ॥**
**इतिकर्तव्यताकाङ्क्षा प्रक्रिया द्विविधा च सा ।**
**पाठानुष्ठानसादेश्यभेदेन द्विविधः क्रमः ॥ २ ॥**
**समाख्या यौगिकी संज्ञा लौकिकी वैदिकी तथा ।**
**विनियोजकमेतावदिति भाष्यविदो विदुः ॥' ३ ॥**

तत्र बर्हिर्मन्त्रस्य प्रकरणसापेक्षेण लिङ्गेन अपूर्वसाधनविशेषबर्हिर्लवने विनियोगः। दृष्टार्थेष्वेव अङ्गेषु लिङ्गस्य विनियोजकत्वं नादृष्टार्थेषु। श्रुतिवच्च अत्रापि प्रकरणापेक्षा साधनविशेषाङ्गत्वसिद्धये भवति। अयं चापरो विशेषः यदत्र विनियुज्यमानस्य मन्त्रस्य लिङ्गविनियोगात् प्रागेव केनापि प्रमाणेन क्रतुसंबन्धोऽपेक्षितः। तदभावे लिङ्गविनियोग एव न संभवतीति लिङ्गक्रमसमाख्यानादित्यत्र प्रतिपादितम्। वाक्यविनियोगस्तु श्रुतिविनियोगावसरे एव विवेककथनार्थं प्रपञ्चितः। मन्त्रेष्वपि यानि समवेतार्थाभिधायिभ्यतिरिक्तानि सवित्रादिपदानि तेषां वाक्येनैव निर्वापादिषु विनियोगः। प्रकरणविनियोगस्तु प्रयाजादीनाम्। किं पुनः प्रकरणं इतिकर्तव्यताकाङ्क्षा। कस्य पुनरितिकर्तव्यताकाङ्क्षा। भावनाया इति कर्मण्यारम्भभाव्यत्वादिति भाष्यकारो वक्ष्यति। भावना हि प्रतिलब्धभाव्यसंबन्धा तत्सिद्ध्यर्थं करणमपेक्षते। तत्र प्रत्यासत्त्या प्रकृत्यर्थः संबध्यते 'यागेन स्वर्गं भावयेत्' इति। ततः कथमितीतिकर्तव्याकाङ्क्षा भवति। तेन भाव्यसिद्ध्यर्थं भावनया संबध्यमानमितिकर्तव्यताजातं भाव्यप्रयुक्तमुच्यते। न तु स्वरूपेण भाव्यं इतिकर्तव्यतया संबन्धुं अर्हति। न हि भवत्यपूर्वं कथमिति। भवति तु भावयेत् कथमिति। ननु 'स्वर्गं भावयेत्' इति ब्रूयुः भावना च फलस्य उच्यते इत्येवमादिभिस्तत्र तत्र भाष्यकारेण फलस्य भाव्यत्वाभिधानात् भाव्यप्रयुक्तमितिकर्तव्यताजातं फलप्रयुक्तं स्यात्, नापूर्वप्रयुक्तम्। उच्यते। सत्यं फलमेव प्रथमं भाव्यतया संबध्यते तत्तु कालान्तरभावित्वात् क्षणभङ्गुरेण यागेन साक्षात् न भावयितुं शक्यते इत्यपूर्वद्वारेणेत्युपबध्यते 'यागेनापूर्वं कृत्वा स्वर्गं कुर्यात्' इति। न चैतावता यागस्य करणत्वहानिः। तुषपक्वा भवन्तीतिवदुपपत्तेरिति सप्तमाद्ये भाष्यकारेणैवोक्तम्। एवं चापूर्वे कृते तत एव फलं सिध्यतीत्यवधारणात् फलकर्तव्यताऽपूर्वे संक्रामन्तीतिकर्तव्यतामपेक्षते 'कथमनेन यागेनापूर्वं कर्तव्यम्' इति। तत्र इत्थंभावेन प्रयाजादयः संबध्यन्ते। तेन भाव्यप्रयुक्तमप्यान्तरालिकभाव्येऽपूर्वे वाङ्नियमवत् दीक्षणीयापूर्वे पर्यवस्यति। एतच्च उपरिष्टाद्विस्पष्टं वक्ष्यामः। तेन अपूर्वभावनया प्रयाजादयः संबध्यन्ते। प्रयाजभावना हि भाव्यमपेक्षते, फलभावना चेत्थंभावम्। अतस्तयोः आकाङ्क्षासंनिधियोग्यत्वैः एकवाक्यता प्रयाजभावनोपेता दर्शपूर्णमासभावना अपूर्वं साधयतीति। तेन विशिष्टस्य साधनत्वं विशेषणेन उपकारजनने घटते नान्यथेति विशेषणस्य प्रयाजस्योपकारकत्वं कल्प्यते। तत्रापि च करणोपकारकत्वेनैव तदुपकारकत्वं संभवतीति करणोपकारकत्वं भावनाङ्गत्वेनावगतानां प्रयाजादीनां तादर्थ्यनिर्वाहाय पश्चात् कल्प्यते। आह च। 'एकभावनयोपात्तास्त्रयोऽप्यंशाः परस्परम्। उपकार्योपकारित्वं पश्चादनुभवन्ति ते॥' इति। एवं च उभयोरप्याकाङ्क्षोपरमः।

ननु प्रयाजभावना भाव्यं अपेक्षते फलभावना च करणोपकारमित्याकाङ्क्षावशात् प्रथममेव प्रयाजभावना करणोपकारेणैव संबध्यते न तु तादर्थ्येनैव क्रतुना तेन प्रकरणमुपकार्योपकारकभावे प्रमाणं न तु तादर्थ्ये इति। बालिशभाषितमेतत्। न ह्याकाङ्क्षा स्वयमेव प्रमाणम्। शब्दस्तु प्रमाणम्, आकाङ्क्षया त्वेतावद्भवति नायं शब्दो निरपेक्षः किन्तु अन्येन सहैव पर्यवस्यतीति तत्र यद्यन्यो योग्यः संनिहितो भवति ततस्तेनैव सहैकवाक्यभावं भजते। अथ न संनिहितः ततोऽध्याहृत्य योग्यं तेन सह पर्यवस्यति। तदिह 'समिधो यजति' इत्यस्य साकाङ्क्षस्य संनिधौ न क्रतूपकारः संनिहितः तच्छब्दस्य अश्रवणात्। तत्र यदि दर्शपूर्णमासाभ्यां श्रुताभ्यां एकवाक्यतायामाकाङ्क्षा पर्यवस्येत् ततोऽध्याहृतेन उपकारेण स्यात् एकवाक्यता। यथोक्तेन तु मार्गेण दर्शपूर्णमासैकवाक्यतायां आकाङ्क्षापर्यवसानं उभयोः भवति। अपेक्षितोऽपि प्रथममुपकारो न केनचिदपि सम-



र्पितः येन प्रयाजवाक्येनैकवाक्यतयाऽन्वियात्। तेन दर्शपूर्णमासप्रयाजवाक्ययोः एकवाक्यतायां गुणप्रधानभावेन निष्पन्नायां पश्चादपेक्षितोपकारनिर्वृत्तिः। आह च। दर्शपूर्णमासयोः उपकारमपेक्षमाणयोः प्रयाजादिषु वा उपकार्यमपेक्षमाणेष्वनिष्पन्नावस्थ एवोपकारे प्रकरणात् तावत् तादर्थ्यं प्रतीयते। तदन्यथानुपपत्तेः करणोपकारः कल्प्यते। तेन उपकारापेक्षामात्रमिह तादर्थ्यप्रमाणानुमाने व्याप्रियते। नोपकारादेव शेषित्वं तादर्थ्यं वेति। अत एव पदार्थपूर्वकः प्रकृतावुपकार इति तन्त्रज्ञाः। विनियुक्तेषु पदार्थेषु कल्पिते चोपकारे विकृतिरपेक्षावशात् प्रथमं उपकारमेव गृह्णातीति तत्रोपकारपूर्वकत्वम्। तदेवं प्रकरणं प्रयाजादीनां विनियोजकम्। तच्च द्विविधं महाप्रकरणमवान्तरप्रकरणं चेति। तत्र फलभावनायाः प्रकरणं महाप्रकरणम्। तदन्तराले यदङ्गभावनायाः प्रकरणं तदवान्तरप्रकरणम्। तच्चाभिक्रमणादीनां प्रयाजादिषु विनियोजकम्। भवति हि अङ्गभावनानामपि अवान्तरापूर्वसिद्ध्यर्थं कथंभावाकाङ्क्षा। अन्यथा वाङ्नियमस्य दीक्षणीयापूर्वप्रयुक्तिर्न स्यात्।

कश्चित्त्वाह। नावान्तरप्रकरणं नाम प्रमाणं संभवति, प्रमेयासंभवात्। प्रतिलब्धभाव्यसंबन्धा हि भावना कथंभावमपेक्षते। तत्र यावदेकाङ्गभावना प्रयोजनापेक्षा प्रकरणेन फलभावनाङ्गं भवति तावदितराऽपि प्रधानभावनयैव संबध्यते इति सर्वेषां प्रधानभावनान्वितानां नान्योन्याङ्गाङ्गिभावः संभवतीति नावान्तरप्रकरणविनियोज्याङ्गसंभवः। अभिक्रमणं तु वाक्येनैव प्रयाजादिषु विधीयते इति तदङ्गं नावान्तरप्रकरणादिति। स नूनं वार्तिके 'परप्रकरणस्थानामङ्गं श्रुत्यादिभिस्त्रिभिः। ज्ञाते पुनश्च तेनैव संदंशेन तदिष्यते॥' इत्यस्मिन् अश्रुतपूर्वी। यत्र ह्यङ्गोद्देशेनैव श्रुत्यादिभिः किञ्चित् विनियुज्यते तत्र अवश्यमङ्गस्य कथंभावापेक्षोत्थापयितव्या। सा च यदि परस्तादपि किंचित्तदुद्देशेनैव विधीयते तावदनुवर्तत एव। तयोः संयुक्तयोरङ्गयोर्मध्ये यदङ्गं असंयुक्तं विहितं तत्तदाकाङ्क्षानुवृत्तेः संनिधिविशेषाच्च तेनैव संबध्यते।

योऽप्यङ्गापूर्वाणामननुष्ठेयत्वान्न स्वारसिकीं कथंभावाकाङ्क्षामिच्छति तेनापि कारणान्तरसमुत्था सा अभ्युपेतव्यैव। अन्यथा दीक्षणीयादिषु अतिदेशानवकल्पनात्। तेन प्रयाजाद्युद्देशेन श्रुत्यादिभिः किंचिदङ्गमुक्त्वा मध्ये किंचिदसंयुक्तं विधाय पुनरन्ते प्रयाजाद्युद्देशेन अङ्गे विहिते मध्यस्थस्य असंयुक्तस्याङ्गस्य अवान्तरप्रकरणात् प्रयाजाद्यङ्गता भवति।

यस्त्वेतन्न मृष्यति तस्य सामिधेनीनां निविद्भिर्व्यवधानाभावेन सत्यपि संनिधाने बलीयसा प्रकरणेन उपवीतस्य प्रधानाङ्गत्वसिद्धेः निविद्भिः सामिधेनीनां विच्छेदप्रतिपादनमनर्थकं स्यात्। अथोच्येत उपव्ययत इत्येकपदश्रवणादन्विताभिधानसिद्ध्यर्थमर्थान्तरापेक्षायां संनिहिताभिः सामिधेनीभिरन्विताभिधानं भवति संनिधानाभावे तु गत्यन्तराभावात् प्रकृतेन प्रधानेनान्वयः संपद्यते इति। तदयुक्तम्। प्रकृतिप्रत्ययार्थयोरेव मिथस्तत्सिद्धेः प्रत्ययेन हि प्रधानापूर्वमनूद्य तदङ्गत्वेन उपव्यानं विधीयते, तद्धि कर्तृसंस्कारत्वात् प्रधानापूर्वविषयमवघातादिवदनुप्रविशति। स्तुतिपदानि च 'निवीतं मनुष्याणाम्' इत्येवमादीनि सन्ति यैरुपव्यानमन्वितमभिधीयते इति नान्विताभिधानसिद्ध्यर्थमर्थान्तरापेक्षा। तस्मात् अङ्गानामपि भवत्येव कथमिति प्रकारविशेषाकाङ्क्षा तदाह भगवान् भाष्यकारः। 'भवति हि सामिधेनीरनुब्रूयात् कथमिति विशेषाकाङ्क्षवचनमिति' कश्चैष न्यायो यत्कार्यरूपत्वे सत्यपि निरधिकाराणां अपूर्वाणां स्वरसतः कथंभावापेक्षा नास्ति साधिकाराणां तु विद्यते इति कार्यत्वं हि तदपेक्षायां निमित्तं साधिकारं निरधिकारमिति तु विशेषमात्रं तस्मात् अस्त्येवाङ्गेऽङ्गस्याप्यपेक्षा। यद्येवं कथं तर्हि प्रयाजादिषु अव्यक्तचोदितेषु सौमिकधर्मानतिदेशः कथं वा दीक्षणीयादिषु ऐष्टिकधर्मातिदेशः। यथा तत्तथा श्रूयताम्। स्वारसिकी हि निरधिकाराणामाकाङ्क्षा नास्ति, कारणान्तरसमुत्था तु नापह्नोतुं शक्यते। तत्र दीक्षणीयादिषु प्रयाजादिदर्शनेन इतिकर्तव्यताकाङ्क्षा कल्प्यते तस्यां च सत्यामतिदेशसिद्धिः। प्रयाजादिषु तु न किंचिदाकाङ्क्षोत्थापकमस्ति इति नातिदेश इति। अत्राभिधीयते। इदमत्र विकल्पनीयं कि येन प्रयाजादिनाऽऽकाङ्क्षा कल्प्यते तेन तदेव प्रति सा कल्प्यते उत तद्दर्शनादेव तावदविशेषेण इतिकर्तव्यताकाङ्क्षा कल्प्यते इति। यदि

तावत् पूर्वः कल्पः ततो दैक्षस्य पशोरङ्गत्वेन स्वाभाविकाकाङ्क्षाविरहिणः प्रयाजादिदर्शनेन दर्शपूर्णमासविध्यन्ताकाङ्क्षैव कल्प्यते इति न विकृतित्वं सिद्धं कृत्वा तत्प्रकृतिविशेषविचारो घटते । यदा तावत् स्वरूपमात्रमालोच्यते तदा निराकाङ्क्षत्वात् न प्रकृतिविशेषचिन्ता । यदा तु प्रयाजादिदर्शनेन विकृतित्वं कल्प्यते तदा प्रकृतिविशेषस्यैव निर्णीतत्वान्न चिन्तावसरः । न च 'पशौ च लिङ्गदर्शनात्' इत्यत्र पशोः अपूर्वत्वनिराकरणेन पूर्ववत्त्वमेव लिङ्गदर्शनेन साध्यते किमत्र कुतश्चिद्धर्मा अतिदिश्यन्ते उत नेत्येतावदेव विचार्यते इति वाच्यम्, अष्टमे विशेषातिदेशचिन्ताधिकारात् । न चासौ समाप्ता येन दर्विहोमवत् पूर्ववदपूर्वचिन्ता क्रियेत तस्मात् विशेषातिदेश एव चिन्त्यते । तथा च भाष्यकारो विशेषातिदेशविचारमेव दर्शयति । पशौ किं दार्शपौर्णमासिको विध्यन्त उत सौमिक इति । सिद्धान्तेऽपि लिङ्गस्य प्रापकत्वमाक्षिप्य चोदनासामान्यादित्याह स च सामान्येन विकृतित्वे सिद्धेऽवकल्पते नान्यथा । अथैतद्दोषपरिहाराय लिङ्गदर्शनेन तावदितिकर्तव्यतामात्राकाङ्क्षा कल्प्यते ततः चोदनासामान्यादतिदेश इति तर्हि प्रयाजादिषु अभिक्रमणाख्यलिङ्गोपदेशसामर्थ्यात् आकाङ्क्षापरिकल्पनात् अव्यक्तत्वेन सौमिकविध्यन्तप्रसङ्ग इति समानः पर्यनुयोगः ।

तदेतदावाभ्यामेवं परिहर्तव्यं न प्रयाजादीनामव्यक्तत्वं यस्य हि तद्धितेन चतुर्थ्या मन्त्रवर्णेन वा देवता नास्ति तदव्यक्तम् । प्रयाजादीनां तु मन्त्रवर्णादिभिर्देवतासंगतेः नाव्यक्तत्वमिति । यदि तु यस्योत्पत्तिवाक्ये देवता नास्ति, तदव्यक्तं तत उपांशुयाजस्याप्यव्यक्तत्वप्रसङ्गः । तस्य हि तद्वच्च देवतायां स्यादिति विचार्य 'विष्णुर्वा स्याद्धौत्राम्नानात्' इति मन्त्रवर्णात् देवतासंगतिं वक्ष्यति । ज्योतिष्टोमस्यापि तर्हि 'ऐन्द्रवायवं गृह्णाति' इति तद्धितेनैव देवताऽभिधानात् नाव्यक्तत्वं स्यात् । न यागे देवता तद्धितेन विधीयते किन्तु ग्रहणे तस्माददोषः । किंच असंभवादपि न प्रयाजादिषु सौमिकधर्मातिदेशः, दर्शपूर्णमासयोर्हि साङ्गयोः पूर्वेद्युरुपक्रम्यापरेद्युः समापनं श्रुतं तत्रापि परिस्तरणादि हस्तावनेजनादि च तन्त्रं अपरेद्युरेवोपक्रम्य समापनीयम् । तत्र यदि प्रयाजादिषु सौमिकविध्यन्तो दीक्षणीयादिः औदवसानीयान्तः प्रत्येकं अतिदिश्येत ततः तस्मिन् प्रत्येकमनुष्ठीयमाने प्रधानस्य कालोत्कर्षः स्यात् । न च तन्त्रेण प्रसङ्गेन वा सकृदनुष्ठानसंभवः । कालभेदात् तन्त्रमध्ये विधानाभावाच्च पूर्वं हि प्रयाजाः प्रधानादनुष्ठीयन्ते पश्चादनुयाजाः । ततोऽपि सूक्तवाकादिव्यवहिताः पत्नीसंयाजाः । न चैवं सति तन्त्रं भवति दीक्षणीयादिषु इव ऐष्टिकविध्यन्तस्य । न च यावच्छक्ति कानिचिदङ्गानि विहाय कानिचिदनुतिष्ठेतेति विशेषापरिज्ञानात् शक्यतेऽभिधातुम् । तस्मात् अनतिदेशः प्रयाजादिषु सौमिकविध्यन्तस्य, तस्मात् अस्त्येवावान्तरप्रकरणम् । कथं तर्हि विदेवनादीनां अभिषेचनीयाङ्गत्वं नेष्यते । चोदकप्राप्तैरेव धर्मैराकाङ्क्षापरिपूरणेन अभिषेचनीयस्य प्रागेव पर्यवसानात् । विकृतयो हि क्लृप्तोपकाराकाङ्क्षाः प्रथमं प्राकृतैरेव समीपस्थमङ्गं विहाय संबध्यन्ते इति गृहमेधीयाधिकरणे भाष्यकारो वक्ष्यति । एवं निर्ज्ञातपर्यवसानस्यापि विकारस्य समीपस्थाङ्गवशादपर्यवसानं कल्पयितव्यं ततश्च क्रमो भवति । विकृतिष्वपि यत् प्राकृताङ्गमध्ये पठितं यथा आमनहोमस्तस्य प्रकरणेन ग्रहणम् । विदेवनादीनामपि तर्हि प्राकृताङ्गमध्ये माहेन्द्रस्तोत्रकाले अनुष्ठीयमानानां प्रकरणेन अभिषेचनीयाङ्गत्वप्रसङ्गः । न तत्रैषामुत्पत्तिः अन्यत्र उत्पन्नानां प्रकरणावगतराजसूयाङ्गभावानामपकर्षः स्तोत्रकाले विहित इति नाभिषेचनीयाङ्गत्वम् । राजसूयभावनायास्तु पवित्रादारभ्य क्षत्रस्य धृतिपर्यन्तो यागगणः स्ववाक्यस्थेन यजिना तन्त्रेणोपादाय करणत्वेन समर्पित इति यत्पवित्रस्य प्राकृतमङ्गं यच्च क्षत्रस्य धृतेः तत्सर्वं राजसूयस्य प्राकृतमङ्गं तन्मध्यवर्त्तीनि विदेवनादीनि भवन्ति प्रकरणस्य गोचरः । तस्मात् अवान्तरप्रकरणाभ्युपगमेऽपि न कश्चिद्दोष इति ।

द्विविधं प्रकरणम् । तच्च भावनार्थानामेवारादुपकारिणां केवलं विनियोजकं न द्रव्यादीनां नापि संनिपातिनाम् । तेषां हि यथायथं श्रुत्यादिभिरेव विनियोगः प्रकरणं तु सहायमात्रम् । मन्त्राणामपि न स्वरूपेण प्रकरणग्रहणं तज्जन्यस्य तु वाक्यार्थप्रत्ययस्य क्रियारूपस्य तदपि लिङ्ग-



साहित्येनेति मन्त्राधिकरणे वाक्यार्थप्रत्ययस्त्वकृतार्थ इत्यादिना दर्शितम् ।

**'संविदन्ति तु ये कार्यमपूर्वं वाक्यगोचरम् ।**
**न दर्शाद्यङ्गता तेषां प्रयाजादेः प्रसिध्यति ॥'**
४ ॥ कार्यभूतं प्रधानं अपूर्वं लिङाद्यभिधेयं उपसर्जनीभूतसकलेतरपदार्थकं वाक्येन प्रतिपाद्यते इति ये मन्यन्ते तेषां मते प्रयाजादीनां दर्शाद्यङ्गता न स्यात् कथम् ।
**'आकाङ्क्षति प्रधानं हि न प्रधानान्तरान्वयम् ।**
**अङ्गापूर्वस्य येन स्यात्प्रधानापूर्वसंगतिः ॥' ५ ॥**
न कार्यमन्यार्थं भवतीति न्यायात् प्रयाजापूर्वं स्वप्रधानभूतं न प्रयोजनान्तरमपेक्षते । अनपेक्षं च संनिहितेनापि दर्शपूर्णमासापूर्वेण संगन्तुं नार्हति ।

यत्त्वत्र केनचिदुच्यते साधिकारापूर्वसंनिधिसमाम्नातानि प्रयाजादिवाक्यानि न प्रागिवापूर्वान्तरमवगमयन्ति अवघातादिवत् अनुवादकत्वसंभवात् । किन्तु यागस्वरूपमेव स्वकारकविशिष्टमुपस्थापयन्ति । तच्च अनन्यनिष्ठत्वयं चाप्रयोजनीभूतं प्रयोजनरूपाधिकारविध्यन्वययोग्यमित्यधिकारवाक्यगत एव लिङ्शब्दस्तेन गुणभूतेनान्वितं स्वार्थमभिधत्ते तेषां च तदङ्गत्वं करणोपकारद्वारं स च संभूय सर्वैरङ्गैर्जन्यते । न च क्षणविशरारूणां तेषां स्वरूपेण संभवः संभवतीत्यवान्तरव्यापाररूपाणामपूर्वाणामवश्याश्रयणीयत्वात् । योऽसौ लिङ्शब्दः प्रागनूद्यमानार्थतया शङ्कितः स इदानीं अपूर्वान्तरग्राहकग्रहणापादितप्रधानापूर्वेदमर्थ्ययागविषयतया विहतप्राधान्यमधिकाराङ्गत्वेनैव अभिधत्ते न स्वप्रधानं विषयविनियोगविरोधात् । एतदेवापूर्वमभिप्रेत्य भाष्यकारेणोक्तं 'न चाविहितमङ्गं भवति' इति विधिशून्यानां कर्मणां भङ्गुरत्वात् नाङ्गत्वं संभवतीत्यर्थः । ननु एवं सति यस्तु पुरुषप्रयत्नः सोऽनुवाद इत्यपि भाष्यमस्ति संनिपातिनि नैमित्तिके जञ्जभ्यमानमन्त्रवचने तदुक्तं तत्र हि कारकद्वारेणैव अङ्गत्वं विनाऽप्यपूर्वान्तरात् संभवतीत्यनुवाद एव लिङ्शब्दः तत्सिद्धं प्रयाजादीनामङ्गत्वमिति । '**तदेतत्प्रक्रियामात्रं श्रद्धालुभ्योऽभिरोचते । प्रमाणपरतन्त्रेभ्यो नैतद्रोचितुमर्हति ॥' ६ ॥** तथा च
**'स्वप्रधानं श्रुतं कार्यं तद्बाधे विनिश्चिते ।**
**वाक्यान्तरेण संबन्धो न बाधे नापि संशये ॥७॥**
**द्वयोः सद्भावसंदेहात्प्रकृतौ यजमानयोः । मा युवं हि स्थ इत्येषा प्रतिपत्प्रकृतिं गमत् ॥'** ८॥ साधिकारवाक्येषु तावत् अमी लिङादयो विदितनिरपेक्षकार्याभिधानशक्तयो न समिदादिवाक्येषु अन्यनिष्ठं कार्यमभिधातुमीशते । लक्षणयाऽभिदधतीति चेत् । न लक्षणायां प्रमाणमस्ति । विनियुक्तविषयत्वं प्रमाणमिति चेत्, न, मिथ्याविनियोगस्यैवासंभावनीयत्वात् । न खलु स्वपदावगतप्रधानकार्यबाधेन ग्राहकग्रहणसंभवः । प्रत्यभिज्ञाशङ्कया न द्रागिवापूर्वान्तरं प्रतीयते इति चेत् । एतदेव तर्हि प्रथमं निरूपयितव्यं अनेन तावत्कार्यमभिधीयते तत्किं प्रकृतमेवाधिकारापूर्वं उत अन्यदिति, तत्र यदि कारकद्वारेण तद्विषयानुप्रवेशं संभावयेत् ततः प्रत्यभिज्ञानसामर्थ्यात् विषयस्य विनियोगमवघातवदनुमन्यते । अथ तु प्रयत्नेन मृगयमाणो न तद्विषयानुप्रवेशद्वारं पश्यति ततः प्रत्यभिज्ञाबाधेन नियोगान्तरमेव प्रधानभूतं समिद्यागविषयमध्यवस्यति । इतरथा श्रुतिबाधप्रसङ्गात् परिहृत्य हि श्रुतिबाधं च ग्राहको गृह्णाति न तद्बाधेनापि विरोधाशङ्कायाम् । अत्र च श्रुत्या प्रथमं तावद् ग्राहकस्य विरोधः शङ्क्यते । विषयानुप्रवेशसंभवे श्रुतिग्राहकयोरविरोधः असंभवे तु श्रुत्या ग्राहकस्य विरोधः स्यात्, लक्षणाप्रसङ्गात् । न चैवं विरोधे शङ्क्यमाने ग्राहको ग्रहीतुमीष्टे मा ग्राहिष्ट ज्योतिष्टोमो यजमानद्वयसंयुक्तां 'युवं हि स्थः' इत्येतां प्रतिपदं तत्रापि हि प्रथमं तावदस्त्येव संदेहः । किं कथंचित्प्रकृतावेव यजमानद्वयं संभवति ततश्चाविरोधः श्रुतिप्रकरणयोः । अथवा असंभवात् विरोध इति तदेवं सति यदि 'समिधो यजति' इत्यत्र प्रधानापूर्वशङ्कया विरोधस्यानिश्चयात् प्रकृतसंबन्ध एव भवति तस्मिंश्च सति तद्बलेनैव लिङ्शब्दस्य लक्षणाश्रयणमित्युच्यते, ततो यजमानद्वित्वसंभवाशङ्कया श्रुतिविरोधस्यानिश्चयात् ग्रहणे प्रतिपदः संजाते तद्बलेनैव द्वित्वश्रुतेः लक्षणयैकत्वप्रतिपादकत्वं पत्न्यभिप्रायत्वं वा प्रसज्येत ।

विरोध एव तत्र निश्चितो न शङ्कामात्रमिति चेत् । कथं तर्हि अधिकरणारम्भः । न हि निर्णीते न्यायेन

विचारः संभवति । सत्यपि संदेहे पश्चात् विरोधनिर्णयः प्रतिपदीव समिद्यागेऽपि भवति । यदि मन्येत न समिदादिषु प्रथमं संदेहः । किं तर्हि संनिधानात् प्रकृतापूर्वमेवेदमिति भ्रान्तिर्भवति ततश्चाविरोधात् ग्राहकग्रहणमिति । तथापि पश्चाद्विरोधदर्शनेन तत् व्यावर्तते यथा पूर्वपक्षन्यायेन निश्चिते प्रतिपदः प्रकरणग्रहणे सिद्धान्तन्यायेन श्रुतिविरोधप्रतिभासे सति तादर्थ्यं व्यावर्तते । किञ्च यदि नियोगान्तरमवघातादिवदप्रतिपन्नं ततः तद्वाक्यगामिनामवहन्त्यादिशब्दानां इव प्रयाजादिवाक्यगतानामपि यज्यादिशब्दानां प्रधानापूर्वान्वितस्वार्थाभिधायकत्वं किं नाभ्युपगम्यते । एषा हि तत्र युक्तिः । यद्येषां प्रधानापूर्वान्वितस्वार्थाभिधायित्वं स्यात् । तथा सति उत्पत्तावेवान्यतिरश्चीनतयाऽवगतस्य नियोगान्तरविषयता न स्यात् । कार्यद्वये संबन्धानुपपत्तेः । न ह्येकं वस्तु युगपत् कार्यद्वयसंबन्धि प्रत्येतुं शक्यमिति । इदं च प्रतीते नियोगान्तरे शक्यमभिधातुं नाप्रतीते । तेन यदि नियोगान्तरमप्रतिपन्नं ततो विरोधाभावाद्यजिशब्दस्य समिद्वाक्यगतस्य प्रधानापूर्वान्वितस्वार्थाभिधायित्वं अवहन्त्यादिवत् स्यात् । अथ प्रतिपन्नं ततः श्रुतिविरोधे ग्राहकग्रहणानुपपत्तिरिति सेयं उभयतःपाशा रज्जुरिति । अथ प्रथममप्रतिपन्ने अपूर्वान्तरे यजेरवाधिकारापूर्वान्वितस्वार्थाभिधायित्वमवगतमपि पश्चात् नियोगान्तरावगत्या बाध्यते ततो ग्राहकग्रहणमपि श्रुतिविरोधात् बाधितव्यम् । तस्मान्न कथंचिदपि प्रयाजादीनामङ्गत्वं संभवति । यदपि च न चाविहितमङ्गं भवतीत्येतदनृतवदनप्रतिषेधं अधिकृत्य अभिहितम् । आरादुपकारकविषयकानुवादाभिधानं तु जञ्जभ्यमानमन्त्रवचनाधिकारात् संनिपातिविषयमिति तत्तावन्मात्रालोचनेनोक्तम् । अन्यथा कथं तदुत्सर्गे कर्माणीत्यत्रारादुपकारकमेवाभिप्रेत्य पुरुषप्रयत्नोऽनुवाद इति वदत्येव भाष्यकार इति नैवं व्याख्यातुं शक्यते । कथं तर्हि व्याख्येयं विनियोगाभिप्रायं विध्यभिधानमितरच्च प्रयोगाभिप्रायं इत्येवमेतत् व्याख्येयम् । न ह्यसति विधौ समिदादीनां अङ्गत्वं सिध्यति । ननु प्रकरणेनैवान्तरेणापि विधिं श्रुत्येव समिदादीनां सोमादीनामिवाङ्गत्वं सिध्यति । यथा 'सोमेन यजेत' इति यजिविध्यतिरेकेण सोमस्य विध्यभावेऽपि तृतीयया विनियुक्तस्य प्रधानविधिनैव विधानम् । एवं प्रयाजादीनामपि प्रकरणेन दर्शपूर्णमासयोर्विनियोगे सति विशिष्टप्रधानविधेरेव विशेषणभूतानां प्रयाजादीनां विधिसिद्धेः नार्थः पृथग्विधानेन इति चेत् । सत्यं विशिष्टविधिः विशेषणमास्कन्दति विशेषणत्वमेव तु नर्ते विधानात् सिध्यति । सिध्यति प्रकरणेनेति चेत् । न, तस्यैव विध्यधीनत्वात् । साकाङ्क्षस्य हि साकाङ्क्षे विनियोगः प्रकरणार्थः न च विधिविधुराणामङ्गानां प्रयोजनापेक्षा अस्ति समानपदोपनीतं धात्वर्थमेव भाव्यं समासाद्य भावनायाः परितुष्टत्वात् । विध्युपहिता तु न तावन्मात्रेण परितुष्यतीति भवति प्रयोजनापेक्षा । सत्यां च तस्यां प्रकरणेन दर्शपूर्णमासयोर्विनियोगादङ्गत्वं प्रयाजादीनां सिध्यति तस्मादङ्गत्वसिद्धयर्थमेव समिदादिषु विधिना भवितव्यमिति । एवमङ्गभूतेषु तेषु विशिष्टप्रधानविधिनैव प्रयोगसिद्धेः तस्मिन्नंशे अङ्गविधिरनुवादोऽभिधीयते । तस्मात् उभयमुपपन्नमिति सर्वमनवदातम् । तत्प्रकरणमेव प्रयाजादीनां विनियोजकमिति ।

क्रमस्तु देशसामान्यलक्षणः, स च द्विविधः पाठसादेश्यमनुष्ठानसादेश्यमिति । पूर्वं तावत् यत्राङ्गाङ्गिनोः समानदेशे पाठः, यथा दब्धिमन्त्रस्योपांशुयाजस्य च उत्तरमपि यत्र समानमनुष्ठानं शेषशेषिणोर्भवति यथा दैक्षस्य पशोः पशुधर्माणां च । द्विविधेनापि सादेश्येन दब्धिमन्त्रस्य पशुधर्माणां चोपांशुयाजेऽग्नीषोमीये च विनियोगो भवति ।

**समाख्या** नाम यौगिकी संज्ञा । सा च लौकिकी वैदिकी च । यथा होतृचमस इति यथाऽऽध्वर्यवमिति । तथा चमसभक्षणे होतुः, पदार्थकरणे चाध्वर्योर्विनियोग इति ।

यस्तु विधिव्यापारं उपादानाभिधानं सप्तमं प्रमाणं विनियोगे मन्यते तस्योत्तरं विनियोजकमेतावदिति । न खलु उपादानं नाम शेषप्रमाणं संभवति, प्रमेयासंभवात् । यदप्युच्यते तत्कृतं च प्रोक्षणादेः क्रत्वर्थत्वमिति । तदप्ययुक्तं श्रुत्यैवापूर्वसाधनरूपे विनियोगात् । एतदेव हि तत्साधनरूपशेषत्वं यत् तद्द्वारेण पूर्वशेषत्वम् । तथाऽपि कथं क्रत्वर्थत्वं उच्यते । व्रीहीणां तण्डुलपिष्टपुरोडाशादियागप्रणालिकया अपूर्वसाधनत्वम् । तथाविधांश्चोद्दिश्य विधीयमानं प्रोक्षणं कुर्वस्य द्वारद्वारिभावावस्थितस्याङ्गं भवति । कथं चोपादानेन क्रत्वर्थत्वं प्रोक्षणादेः ? यदि मतं नियोगैदमर्थ्ये तावद् ग्राहकग्रहणेनैव प्रोक्षणादेरवगतं तच्च करणतया न संभवति पारिशेष्यात् करणोपकारकत्वेनैव तादर्थ्यं निर्वहतीति नियोग एव तदन्वितः प्रतिपन्नस्तस्य करणोपकारकतां कल्पयन् करणैदमर्थ्यमाक्षिपतीति । यद्येवं प्रकरणमेवेदमभिधानान्तरेणोक्तम् । तस्यापि ह्येतदेव रूपं भवत्पक्षे प्रयाजादीनां ग्राहकग्रहणापादितापूर्वैदमर्थ्यनिर्वाहार्थं करणतदसंभवात् करणोपकारद्वारकल्पनमिति उपकारस्वरूपमेव प्राकरणिकम् । तज्जनकत्वं तु प्रयाजादीनामपि औपादानिकमेवेति चेत् । तर्हि प्रयाजादेः विनियोगः प्राकरणिकः स्यात् । न हि प्रकरणकल्पितोपकारजननमात्रेण प्रकरणविनियोगः सिध्यति । सर्वेषामेव संनिपातिनामनारभ्याधीतानां च अङ्गानां तज्जनकत्वेन प्रकरणविनियोगप्रसङ्गात् । अतः प्राकरणिकमेव प्रोक्षणादेरङ्गत्वम् । ननु असंयुक्तं प्रकरणेन विनियुज्यते, संयुक्तं च प्रोक्षणमिति । नैष दोषः । संयुक्तानामपि द्वारापेक्षत्वात् तन्निबन्धनत्वाच्च करणोपकारद्वारपरिकल्पनस्य प्रयाजादिष्विव । तदेवं प्रमाणशरीराविशेषेऽपि संयुक्तानां द्वारपरिकल्पकमुपादानम् । असंयुक्तानां च प्रकरणमिति समयमात्रम् । पश्वेकत्वादीनामपि श्रुत्यैव विनियोगो ज्योतिष्टोमादीनामपि फलार्थत्वं वाक्यादिभिरिति प्रागेव चर्चितम् । तस्मादुक्तान्येवाङ्गत्वे प्रमाणानीति । **रत्नमाला.** ( अङ्गनिर्णयपरिच्छेदः ) ।

* **लिङ्गवाक्यविरोधाधिकरणम्** । अत्र भाष्यकृता मन्त्रस्य एकवाक्यतोपगमनसामर्थ्यरूपं शब्दसामर्थ्यरूपलिङ्गं व्यवहृतं पूर्वलिङ्गबाध्यता च अस्योक्ता । **बाल.**पृ. ९.

* **लिङ्गवाक्यविरोधोदाहरणे** 'स्योनं ते सदनं०' इत्यत्र यदा दृश्यमानैकवाक्यत्वयोमन्त्रयोः पृथक् पृथक् प्रकाशयितव्यावर्थौ कर्मसमवेतौ दृश्येते तदा उभयोरपि भेदेन प्रकाशकापेक्षणात् प्रकाशकयोश्च प्रकाश्यापेक्षणात् विनियोगाय प्रस्थिते सति यस्य यत्र क्लृप्तं सामर्थ्यं स तत्र शीघ्रतरं प्राप्नुवन् नान्यत्र एकवाक्यतया नेतुं शक्यते, नापि अन्येभ्यस्तत्रागच्छद्भ्यः सोऽवकाशं ददाति । **वा.** ३।३।७।१४ पृ. ८३२.

* **लिङ्गविनियोगः** इदानीं प्रस्तूयते तृतीयस्य द्वितीये पादे । **वा.** ३।२।१।१ पृ. ७४५, * लिङ्गविनियोगः तृतीयस्य द्वितीये उपवर्णितः । ३।३।१।१ पृ. ८०३.

* **लिङ्गविनियोगाधिकरणम्** । ३।२।१।१–२. **मीको.** पृ. २९१३ 'बर्हिर्न्यायः' इत्यत्र द्रष्टव्यम् ।

* **लिङ्गविनियोज्यत्वं** नास्ति वैदिकस्य मन्त्रव्यतिरिक्तस्य शब्दस्य । **सु.** पृ. १२०९ .

* **लिङ्गविनियोज्यमन्त्रप्रकाश्यस्य** यज्ञपतिप्रथनस्य पुरोडाशप्रथनफलत्वं निराकृतं मन्त्राधिकरणे भाष्ये । **पराक्रमः** . ४८।१.

**लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशायनः । ६।१।३।६ ॥**

'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादौ लिङ्गविशेषस्य पुंलिङ्गरूपस्य निर्देशात् पुंयुक्तं यजमानत्वं ऐतिशायनः इतिशस्य युवापत्यं आचार्यः मेने । पुंस एव कर्माधिकारो न स्त्रियाः इति ऐतिशायनस्य मतम् । इति **पूर्वः पक्षः** ।

**तदुक्तित्वाच्च दोषश्रुतिरविज्ञाते । ७ ॥**

पुंस एव कर्माधिकारो न स्त्रियाः इति पूर्वपक्षे हेत्वन्तरार्थं सूत्रम् । तदुक्तित्वात्, पुंस्त्वस्य उक्तेः, पुंस्त्वस्य विवक्षितत्वादित्यर्थः । पुंस्त्वस्य विवक्षितत्वादेव अविज्ञाते गर्भे हते दोषश्रुतिः उपपद्यते । पुंस्त्वस्य अविवक्षितत्वे तु नोपपद्येत । 'गर्भेणाविज्ञातेन हतेन भ्रूणहा भवति' इति श्रुतिः । पुंस्त्वेन विशिष्य अनिर्धारिते गर्भे हते सति हन्ता भ्रूणहा भवति । भ्रूणो यज्ञः । पुमांश्च यज्ञकर्ता । पुंसो वधे यज्ञनाश एव भवति इति अविज्ञातगर्भहन्तुः भ्रूणहत्यादोषः श्रूयते । यदि स्त्रिया अपि यज्ञाधिकारः स्यात् तदा स्त्रीगर्भे हतेऽपि भ्रूणहत्या स्यात् । तत्र अविज्ञातग्रहणमनर्थकं स्यात् । तस्मात् 'स्वर्गकामः' इत्यत्र पुंस्त्वं विवक्षितम् । पुंस एव च कर्माधिकारः । इति **पूर्वः पक्षः** ।

**जातिं तु बादरायणोऽविशेषात्, तस्मात् स्त्र्यपि प्रतीयेत, जात्यर्थस्य अविशिष्टत्वात् । ८ ॥**

पुंस एव यज्ञाधिकारो न स्त्रियाः इति पूर्वपक्षं सूत्राभ्यां प्राप्तं तुशब्देन निरस्यन् सिद्धान्तमाह । बादरायणः आचार्यः जातिं कर्मणि अधिकृतां मन्यते स्म । अविशेषात् मनुष्यत्वजातेः पुंसीव स्त्रियामपि विशेषाभावात् । तस्मात् स्वर्गकामपदेन पुमानिव स्त्री अपि प्रतीयेत । जातेः मनुष्यत्वजातेः अर्थः अभिलष्यमाणः स्वर्गः स्वर्गेच्छा वा । तस्य जात्यर्थस्य पुंसीव स्त्रियामपि अविशिष्टत्वात् स्वर्गकामनायाः उभयोरविशिष्टत्वात् च स्त्री अपि प्रतीयेत । तस्मात् स्त्रिया अपि कर्माधिकारः इति **सिद्धान्तः ।**

**चोदितत्वाद्यथाश्रुति । ९॥**

'तदुक्तित्वाच्च दोषश्रुतिरविज्ञाते' इति सूत्रोक्तस्य हेतोर्निरासार्थं सूत्रम् । चोदितत्वात् स्त्रीपुंससाधारण्येन कर्मणां विहितत्वात् यथाश्रुति स्वर्गकामपदानुसारेण स्त्रीत्वेन पुंस्त्वेन वा अविज्ञाते गर्भे हते यज्ञाधिकृतस्त्रीपुंसवधात् भ्रूणहत्या भवति इति अनुवादः निन्दातिशयार्थः । 'गर्भो न हन्तव्यः' इति बोध्यते । तस्मात् स्त्री अपि कर्माधिकारिणी । इति कुतूहलानुसारी सूत्रार्थः ।

अथ **भाष्यानुसारी** । ननु 'पशुमालभेत' इत्यत्र यथा पुंस्त्वं एकत्वं च विवक्ष्यते तथा 'स्वर्गकामो यजेत' इत्यत्रापि पुंस्त्वं विवक्षितं स्यात् इति चेत्, उच्यते 'पशुं' इत्यत्र यथाश्रुति श्रुतिमनतिक्रम्य पुंस्त्वादि विवक्ष्येत चोदितत्वात् उपादेयत्वेन विहितत्वात् । प्रकृते तु मनुष्यत्वजातेः स्वर्गकामनायाश्च पुंसीव स्त्रियामपि अविशिष्टत्वात् स्वर्गकामः इत्यत्र पुंस्त्वं विवक्षितुं न शक्यते । अविज्ञातगर्भहननदोषश्रुतिस्तु प्रशंसार्थोऽनुवादः इति उत्सूत्रमेव पूर्वपक्षनिरासः । इति ।

**वृत्तौ** तु 'विभक्त्येति चेन्न' ६।१।३।८ इति **पूर्वपक्षिणः** शङ्कासूत्रम् । 'पशुना यजेत' इत्यत्र तृतीयया यथा एकत्वस्य पुंस्त्वस्य च विवक्षितत्वं तथा स्वर्गकामपदेऽपि पुंस्त्वं विवक्षणीयं इति । तत्रोत्तरं सिद्धान्तिनः 'चोदितत्वाद्यथाश्रुति' इति । अक्षरार्थस्तु भाष्यवदेव । इति ।

**द्रव्यवत्त्वात्तु पुंसां स्याद् द्रव्यसंयुक्तं, क्रयविक्रयाभ्यामद्रव्यत्वं स्त्रीणां, द्रव्यैः समानयोगित्वात् । १० ॥**

कर्मणां द्रव्यसाध्यत्वात् स्त्रीणां च द्रव्यशून्यत्वात् न तासां कर्माधिकारः, इति पुनः पूर्वपक्षोपन्यासार्थं सूत्रम् । तुशब्दः सिद्धान्तपक्षं व्यावर्तयति । स्त्रीणां नास्ति कर्म । कर्म हि द्रव्यसंयुक्तं श्रूयते 'व्रीहिभिर्यजेत' 'तस्य द्वादशशतं दक्षिणा' इत्यादि । पुंसां च द्रव्यवत्त्वम् । पुंसां द्रव्यवत्त्वात् द्रव्यसंयुक्तं कर्म पुंसामेव स्यात् । स्त्रीणां तु अद्रव्यत्वं द्रव्यशून्यत्वम् । तस्मात् न तासां कर्म । स्त्रीणां द्रव्यशून्यत्वं तु क्रयविक्रयाभ्यां हेतुभ्यां सिध्यति । स्त्रियो हि पित्रा विक्रीयन्ते भर्त्रा च क्रीयन्ते । विक्रीतत्वाच्च पितृधनानामनीशिन्यः, क्रीतत्वाच्च भर्तृधनानाम् । विक्रयश्च श्रूयते 'शतमतिरथं दुहितृमते दद्यात् (भर्ता)' 'आर्षे (विवाहे) गोमिथुनं (दुहितृमते दद्यात्)' इति । यथा च वस्त्रादिद्रव्याणि क्रयविक्रयसंयुक्तानि तथा स्त्रियोऽपि द्रव्यैः समानयोगिन्यः । वस्त्रादिद्रव्याणामिव स्त्रीणामपि क्रयविक्रयाभ्यां समानो योगः । तथा च स्त्रीणां क्रयविक्रयविषयत्वात्, द्रव्यैः समानयोगित्वाच्च अद्रव्यत्वम् । अद्रव्यत्वाच्च स्त्रीणां न कर्म । किंतु पुंसामेव । इति **पूर्वःपक्षः ।**

**तथा चान्यार्थदर्शनम् । ११ ॥**

क्रयविक्रयविषयत्वात् स्त्रीणां द्रव्यशून्यत्वेन न तासां कर्म इति पूर्वपक्षे लिङ्गप्रतिपादनार्थं सूत्रम् । 'या पत्या क्रीता सती अन्यैश्चरति' इत्यत्र अन्यार्थे अर्थवादे क्रीतत्वस्य दर्शनं स्त्रीणां क्रयविषयत्वे लिङ्गम् । क्रयविषयत्वाच्च अद्रव्यत्वम्, अद्रव्यत्वाच्च स्त्रीणां न कर्म ।

**तादर्थ्यात् कर्मतादर्थ्यम् । १२ ॥**

स्त्रीणामद्रव्यत्वात् न कर्माधिकारः इति पूर्वपक्षे शङ्कानिरासार्थं सूत्रम् । तत्र शङ्का इत्थम् । ननु स्त्रीणां द्रव्यशून्यत्वं नास्ति, भक्तोत्सर्पणेन वा कर्तनादिना वा यत् धनं तया उपार्ज्यते तेन तस्याः द्रव्यवत्त्वम्, द्रव्यवत्त्वाच्च कर्माधिकारः इति । अत्राह **पूर्वपक्षी** । भर्त्रा क्रीतत्वात् स्त्रीणां तादर्थ्यं भर्त्रर्थत्वम् । तादर्थ्यात् स्त्रीणां कर्तनादिकर्मणोऽपि तादर्थ्यं भर्त्रर्थत्वम् । स्त्रीभिः कर्तनादिना यत् द्रव्यं लप्स्यते तदपि भर्तुरेव । अत एव 'भार्या दासश्च पुत्रश्च निर्धनाः सर्व एव ते । यत्ते समधिगच्छन्ति यस्य ते तस्य तद् धनम् ॥' इति स्मृतिः संगच्छते । तस्मात् स्त्रीणामद्रव्यत्वान्न कर्माधिकारः इति **पूर्वपक्षः ।**

**फलोत्साहाविशेषात्तु । १३ ॥**

स्त्रीणां द्रव्यशून्यत्वात् न कर्माधिकारः इति सूत्रैः **पूर्वपक्षे प्राप्ते, सिद्धान्तमाह ।** तुशब्दः स्त्रीणां द्रव्यशून्यत्वपक्षं वारयति । न स्त्रीणां निर्धनत्वम् । द्रव्यसंयुक्ताः स्त्रियः, ततश्च कर्माधिकारिण्यः, फलोत्साहाविशेषात् । फलविषयकं उत्साहः फलोत्साहः फलेच्छा । पुंस इव स्त्रिया अपि फलोत्साहस्य अविशेषात् वैलक्षण्याभावात् । तस्मात् स्त्री फलार्थिनी सती स्मृतिमप्रमाणीकृत्य द्रव्यं परिगृह्णीयात् यजेत चेति ।

**अर्थेन च समवेतत्वात् । १४ ॥**

स्त्रीणामपि क्रत्वधिकारः इति सिद्धान्तः । न च धनशून्यत्वेन तासां क्रत्वधिकाराभावः शङ्क्यः । तासां अर्थेन धनेन समवायात् संबन्धात् । तासां धनवत्त्वादित्यर्थः । कन्यादानकाले तथा संवादः क्रियते 'धर्मे चार्थे च कामे च नातिचरितव्या' इति ।

**क्रयस्य धर्ममात्रत्वम् । १५ ॥**

दशमसूत्रे यदुक्तम् 'क्रयविक्रयाभ्यामद्रव्यत्वं स्त्रीणाम्' इति तत्र सिद्धान्ती उत्तरमाह । क्रयस्य धर्ममात्रत्वं ज्ञेयम् । धर्ममात्रोऽयं क्रयः न वास्तविकः । क्रयो हि उच्चनीचपण्यो भवति । नियतं तु इदं दानं 'शतमतिरथं' शोभनामशोभनां च कन्यां प्रति । विक्रयमपि स्मार्तं श्रुतिविरुद्धत्वात् नानुमन्यन्ते । तस्मान्नैतौ क्रयविक्रयौ ।

**स्ववत्तामपि दर्शयति । १६ ॥**

स्त्रीणां न कर्माधिकारः अद्रव्यत्वात् इति पूर्वपक्षे उत्तरमाह सिद्धान्ती । स्त्री द्रव्यवती न अद्रव्या । यतः श्रुतिरेव स्त्रियाः स्ववत्तामपि दर्शयति न केवलं क्रयविक्रयाभावम् । 'पत्नी वै पारिणय्यस्येष्टे' इति पारिणय्यं नाम गृहगताः पीठपिठरादयः पदार्थाः । तेषां स्वामिनी पत्नी इति श्रुत्यर्थः । 'जाघन्या पत्नीः संयाजयन्ति । भसद्वीर्या हि पत्नयः । भसदा वा एताः परगृहाणामैश्वर्यमवरुन्धते' इति च । दर्शादौ पत्नीसंयाजेषु पशुजाघनी द्रव्यम् । कुतः ? पत्नीनां वीर्यं भसत् योनिरेव । तया भसदा योन्या स्त्रियः पतिगृहेषु ऐश्वर्यं लभन्ते इत्यर्थः । तस्मात् द्रव्यवत्यः स्त्रियः । द्रव्यवत्त्वात् तासां कर्मण्यधिकारः इति सिद्धान्तः ।

**क्रीतत्वात्तु भक्त्या स्वामित्वमुच्यते । १९ ॥**

पत्नी अपि द्रव्यवती इति सिद्धान्ते उक्ते पुनः शङ्का । तुशब्दः सिद्धान्तव्यावृत्त्यर्थः । न स्ववत्ता द्रव्यवत्ता स्त्रीणाम् । पत्या क्रीतत्वात् 'शतमतिरथं दुहितृमते दद्यात्' इति श्रुत्युक्तस्य अतिरथशतदानस्य दृष्टार्थत्वात् । यत्तु 'पत्नी हि पारिणय्यस्येष्टे' इति श्रुत्या पारिणय्यस्य गृहगतस्य पीठोलूखलादेः पदार्थजातस्य यत् स्वामित्वमुच्यते तत् भक्त्या । गौणमित्यर्थः । तस्मान्नास्ति स्त्रीणां द्रव्यवत्त्वं ततश्च न कर्माधिकार इति ।

**फलार्थित्वातु स्वामित्वेनाभिसंबन्धः । २० ॥**

स्त्रीणां धनस्वामित्वं गौणं न मुख्यं इति पूर्वपक्षिणः शङ्कां तुशब्देन निरस्यन् उत्तरमाह सिद्धान्ती । 'उपहूतोऽयं यजमान उत्तरस्यां देवयज्यायामुपहूतो, भूयसि हविष्करण इदं मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूतः' इति मन्त्रेण स्त्रिया अपि फलार्थित्वमुक्तम् । कर्मफलमर्थयते इति फलार्थिनी स्त्री । फलार्थित्वाच्च 'पत्नी हि पारिणय्यस्येष्टे' इति श्रुतौ पत्न्याः स्वामित्वेन मुख्येनैव अभिसंबन्धः । पत्न्याः स्वामित्वं न गौणं किंतु मुख्यमेव । तस्मात् धनवती स्त्री ।

**फलवत्तां च दर्शयति । २१ ॥**

पुंस इव स्त्रिया अपि कर्माधिकारः इति सिद्धान्ते हेत्वन्तरमाह । 'सं पत्नी पत्या सुकृतेन गच्छतां, यज्ञस्य युक्तौ धुर्यावभूताम् । संजानानौ विजहितामरातीर्दिवि ज्योतिरजरमारभेताम् ॥' इति श्रुतिः पत्युरिव पत्न्या अपि फलवत्तां दर्शयति । तस्मात् पुमान् पत्नी च उभौ कर्मणि अधिकृतौ इति **सिद्धान्तः । के.**

* ' **लिङ्गविशेषनिर्देशात्** समानेष्वप्राप्ता सारस्वती स्त्रीत्वात् ' ( ९।१।१६।४५. ) । अयं च न्यायोऽन्यत्राप्यभिहितः । पुंलिङ्गं न मेष्या संबध्यते ( अस्मै ) स्त्रीत्वात् इति । **टुप्.** ८।१।१९।४०.

**लिङ्गविशेषनिर्देशात् समानविधानेष्वनैन्द्राणाममन्त्रत्वम् । ३।२।११।२८ ॥**

एष एव मन्त्र उदाहरणम् । इह च प्रदानानि ऐन्द्राणि अनैन्द्राणि च विद्यन्ते । तेषां भक्षणान्यपि सन्ति । तत्र संदेहः किं ऐन्द्रेषु अनैन्द्रेषु च मन्त्रः, उत ऐन्द्रेष्वेव मन्त्रः, अनैन्द्राणाममन्त्रकं भक्षणमिति । लिङ्गसमाख्याभ्यां भक्षणशेषभूतो मन्त्रः इति तावन्निरूपितम् । इन्द्राद्यनेकदेवताभ्यः तस्य सोमरसप्रदानस्य शेषभक्षणान्यपि प्रतिप्रधानमभ्यसनीयानि इत्यपि स्थितम् । तत्र किं ऐन्द्रप्रदानशेषभूतभक्षण एवायं मन्त्रोऽङ्गम्, उत ऐन्द्रानैन्द्रभक्षणाङ्गं इति इदानीं प्रसङ्गात् चिन्त्यते । तत्रायं पूर्वपक्षिणोऽभिसंधिः— तत्र खलु मन्त्रे 'सोमस्य प्रातःसवनस्येन्द्रपीतस्य भक्षयामि' इति श्रूयते । तत्र प्रातःसवनस्य यः सोमः तस्याहं भक्षयामीति तावद्वैयधिकरण्यं व्यवस्थितम् । इन्द्रपीतस्येति पदस्य तु किं सोमसमानाधिकरण्यम्, उत सवनसामानाधिकरण्यं इति संदेहे सवनसामानाधिकरण्यम् । इन्द्रेण पीतः सोमो यस्मिन् सवने तदिन्द्रपीतं सवनमिति । (?) . . . रसो यः सोमं चानेकपदविक्षिप्तत्वादिन्द्रेण पीत इति तृतीयान्ततत्पुरुषसमासात् दुर्बलः । तेन समासबलीयस्त्वात् प्राधान्याच्च सोमस्य तस्यैवेन्द्रपीतपदेनाभिधानम् । न चानैन्द्रः सोमः इन्द्रपीतशब्देनाभिधातुं शक्यते इति लिङ्गेन ऐन्द्रप्रदानशेषभूतसोमभक्षण एवायं मन्त्रो विनियुज्यते । न च अनैन्द्रेषु ऊहेन प्रयोग इति वक्तव्यम्, प्रकृतावूहासंभवात् । तेन इन्द्रपीतस्येति लिङ्गविशेषनिर्देशात् समानविधानेषु प्रकृतिविकारभावरहितेषु प्रदानेषु अनैन्द्राणाममन्त्रत्वमिति । एवमुपक्रम्य **पूर्वपक्षान्तरमभिधीयते**—

**यथादेवतं वा तत्प्रकृतित्वं हि दर्शयति । २९ ॥**

अस्यायमभिप्रायः— यद्यपि अनैन्द्रेषु मन्त्रोऽयमसमवेतार्थः, तथापि ऊहेनैव तेषु प्रयोक्तव्यः । कर्मैकत्वेऽपि प्रदानानां भिन्नानां प्रकृतिविकारभावोपपत्तेः । तथाहि, उपदिष्टधर्मो हि सर्वः प्रकृतिर्भवेत् । अनुपदिष्टधर्मश्च साकाङ्क्षा विकृतिः । इह च 'इन्द्राय त्वा वसुमते' इति मन्त्रेण सोमग्रहणमानयोः ऐन्द्रप्रदानार्थत्वमेवावगम्यते । यत्र सोमस्तद्धर्मोऽपि तत्रैव इत्यनैन्द्राणां प्रदानानां सोमधर्मवत्त्वम्, इतराणि तु साकाङ्क्षाण्यतिदेशेन गृह्णन्ति । चोदनासामान्यात्तद्विकारत्वेन धर्मप्राप्तौ सत्यां यथादेवतमूहेनैव मन्त्रप्रयोग इति । ननु 'सोमेन यजेत' इत्युत्पत्तेः सर्वैन्द्रवायवादिग्रहणसाधारणत्वात् सोमप्राप्तेरनैन्द्रेष्वपि सोमः तद्द्वारेण सोमधर्मश्च प्राप्त एव । अतः प्रकृतिविकारत्वासंभवेनोहाभावादमन्त्रकमेवानैन्द्राणां ग्रहणं मानं च भविष्यति । मैवम् । साधनभूतमन्त्रवशादेव सामान्यश्रुतस्यापि सोमस्य नियमोपपत्तेः, विद्यारूपसाधनवशादिव तत्साध्यभूतस्य अग्निहोत्रादेः त्रैवर्णिकनियतत्वमिति । तेन अनैन्द्रेष्वतिदेशादेव सोमधर्मप्राप्तिर्वक्तव्या । तथा च सति यथादेवतमूहेनैव मन्त्रप्रयोगः । 'तत्प्रकृतित्वं हि दर्शयति' इत्यनेन सूत्रावयवेन लिङ्गदर्शनमुक्तम् । तच्च भाष्यवार्तिकयोरेव सुव्यक्तमिति ।

**छन्दःप्रतिषेधस्तु सर्वगामित्वात् । ३९ ॥**

स्थितादुत्तरमुच्यते । नैतदस्ति यदुक्तं ऊहेन मन्त्रवद्भक्षणं कर्तव्यमिति । द्वेधा हि पूर्वपक्षितं अमन्त्रकं भक्षणं ऊहेन वा । तत्र ऊहपूर्वपक्षाभ्युपगमेनैव पञ्च विचारान् परिसमाप्य इदानीं ऊहपूर्वपक्षमेव निराचष्टे । अयमत्र सिद्धान्तिनोऽभिसंधिः । प्रकृतिविकारभावे हि सत्यूहो भवति । न च एकस्यैव ज्योतिष्टोमस्य प्रकृतिविकारभावः संभवति । न च ग्रहणाभ्यासाः पृथक् कर्माणि, येन तेषां प्रकृतिविकारभावो भवेत् । न च तेषां मध्ये केषाञ्चिदेव सोमसमत्वं अन्येषां च प्रकृतिविकारभावः संभवति । सर्वेषामेव यागद्वारेण युगपत् सर्वधर्मत्वात् । तदुक्तम् '**तुल्यप्रकरणा ह्येषा ज्योतिष्टोमक्रियेष्यते । प्रकृतिर्विकृतिश्चेष्टा न चात्मैवात्मनः कचित् ॥**' इति ( वा. पृ. ७९८ ) । ननु 'इन्द्राय वसुमते त्वा गृह्णामि' इति मन्त्रस्य ग्रहणद्वारेण इन्द्रप्रदानार्थत्वात् तद्वशेन ऐन्द्रप्रदान एव सोमधर्मनियमः, आहवनीयसंबन्धवशेनेव त्रैवर्णिकस्य अग्निहोत्रादिनियम इत्युक्तम् । मैवम् । भवतु अनारभ्योत्पन्नस्य आहवनीयस्य 'यदाहवनीये जुहोति' इत्यनेन अनारभ्यवादेन सर्वहोमार्थस्य त्रैवर्णिकमात्रसंबन्धस्य होमनियामकत्वम्, आहवनीयव्यतिरेकेण होमासंभवात् तस्य च त्रैवर्णिकमात्रव्यवस्थितत्वात् । न च अस्य तद्वत् सोमार्थत्वम्, येन मन्त्रेण विना अन्यः सोमो ग्रहीतुमेव न शक्यते, किन्तु लिङ्गप्रकरणाभ्यां ऐन्द्रसोमार्थत्वमेव मन्त्रस्य । तेन ऐन्द्र एव सोमो मन्त्रेण गृह्यते । इतरेषां च अमन्त्रकं ग्रहणमिति प्रथम एव पूर्वपक्षः साधीयानिति ।



**सूत्रं तु**— पूर्वोक्तलिङ्गदर्शनसमाधानार्थत्वाच्च भाष्यवार्तिकयोः सुव्यक्तमिति ।

**सर्वेषां त्वैकमन्त्र्यमैतिशायनस्य भक्तिपानत्वात् सवनाधिकारो हि । ४४ ॥**

यदुक्तमनैन्द्राणां अमन्त्रकं भक्षणमिति, नैतत्, सर्वेषां समन्त्रकमिति । यथासमाम्नातश्च मन्त्रः स्यात् । एवं तावत् तृतीयातत्पुरुषसमासाश्रयणेन इन्द्रपदसामानाधिकरण्यं इति कृत्वा ऐन्द्राणां समन्त्रकं भक्षणं अनैन्द्राणां अमन्त्रकमिति प्रथमपूर्वपक्षनिरासेन पारमार्थिकः सिद्धान्तोऽभिधीयते । अयमभिप्रायः । भवेदेवं यदि इन्द्रपीतस्येति पदं तृतीयासमासेन सोमसमानाधिकरणं भवेत् । किं तर्हि ? बहुव्रीहिसमासाश्रयणेन सवनसमानाधिकरणमिदम् । इन्द्रेण पीतः सोमो यस्मिन् सवने तद्भवति इन्द्रपीतं सवनम् । तस्य सवनस्य यः संबन्धी सोमः सोऽनिन्द्रपीतोऽपि शक्यत एव इन्द्रपीतस्येति व्यपदेष्टुं इत्यविकृत एव मन्त्रः सर्वः शेषभक्षणे प्रयोक्तव्यः । तदुक्तम्-- '**इन्द्रेण यस्मिन् सवने पीतः सोमो निरूप्यते । तस्य योऽन्योऽपि संबन्धी स एवं व्यपदिश्यते ॥**' इति ( वा. पृ. ८०२ ) । ननु बहुव्रीहिसमासस्य अनेकपदविवक्षितत्वात् तृतीयासमासात् दुर्बलत्वमित्युक्तम् । तत्कथं सवनसमानाधिकरणमिति । उच्यते । इन्द्रपीतस्य सोमस्येति षष्ठ्यन्तस्य भक्षणक्रियासंबन्धानुपपत्तेः अन्यभक्षणोपदेशाच्च इन्द्रपीतस्य सोमस्य अवयवं भक्षयामि इत्यवयवपदं अवश्यमत्राध्याहर्तव्यम् । न च भक्षणीयो विद्यमानः शेषः इन्द्रेण पीतः, इन्द्राय वा दत्तः । तेन विद्यमानत्वात् शेषो नेन्द्रपीतशब्दार्थः । न च इन्द्रोद्देशत्यक्तस्य भागस्य इन्द्रपीतत्वात् विद्यमानस्य च तदेकदेशत्वात् अविद्यमान एव इन्द्रपीतशब्देन अभिधीयते इति वाच्यम् । यतः संबन्धसामान्ये सोमस्येति षष्ठी । न च अविद्यमानस्य संबन्धोऽत्र उपलक्षणत्वेन आश्रयणीयः । न विद्यमानसंबन्धे संभवति भूतपूर्वसंबन्धाश्रयणम् ।

किञ्च यद्यसौ कृत्स्न एवैकेन भक्ष्यते (?) इन्द्रपीतावयवत्वात् । न हि कपालावयवो घटावयवो भवति । तेन औपचारिक एवायं तदवयवव्यपदेशः । न च मुख्ये संभवति औपचारिकाश्रयणं युक्तम् । यदा त्विन्द्रेण पीतं यस्मिन् सवने तस्य सवनस्य यः सोमः इति व्युत्पत्त्या विद्यमानशेष एवाभिधीयते, तदा तदवयवभक्षणे सति नातीतसंबन्धोपलक्षणत्वम् । नाप्यनवयवे अवयवशब्द इति बहुव्रीहिसमास एव युक्तः । ननु बहुव्रीहिसमासेऽपि मुख्यपीतशब्देन इन्द्रोद्देशेन त्यागो लक्षणीयः, तदत्र इन्द्रोद्देशेन ग्रहणमेव लक्ष्यताम् । तथा च सति विद्यमानस्यापि शेषस्य इन्द्रोद्देशेन गृहीतत्वात् न पूर्वोक्तदोषप्रसङ्ग इति । मैवम् । लक्षितलक्षणादोषात् । तथाहि, पानेन त्यागो लक्षणीयः । त्यागेन च तदुद्देशेन ग्रहणम् । बहुव्रीहिपक्षे तु त्यागमात्रलक्षणम् । किञ्च, अपेक्षावशात् प्रकरणाविशेषाच्च एतदेवोचितम् । तथाहि, धर्मप्रदानान्येव शेषभक्षणे तत्प्रकाशकं मन्त्रमपेक्षन्ते । प्रकरणं च ज्योतिष्टोमस्य अविशिष्टमेव । बहुव्रीहिसमासाश्रयणेन सर्वेषामेव समन्त्रकं भक्षणमिति सिद्धम् ।

**प्रयोजनम्**- पक्षोक्तम् । **सूत्रं तु**- ऐन्द्राणां ग्रहाणां सर्वेषां चैकमन्त्र्यमिति ऐतिशायनस्य आचार्यस्य मतम् । यतः सवननिर्देशोऽयं इन्द्रपीतस्येति । अन्यथापीत एव गौणः पीतशब्दप्रयोगः संप्रसज्येतेति । **तौता.**

**लिङ्गविशेषनिर्देशात् समानविधानेष्वनैन्द्राणाममन्त्रत्वम् । ३।२।११।२८ ॥**

ज्योतिष्टोमे सोमप्रदानानि ऐन्द्राणि अनैन्द्राणि च विद्यन्ते । काश्चित् सोमाहुतयः इन्द्रदेवताकाः, काश्चिच्च इन्द्रभिन्नदेवताकाः । तेषां च सर्वेषामपि भक्षणानि सन्ति । तानि च भक्षमन्त्रेण क्रियन्ते । तत्र समानविधानेषु तुल्यप्रमाणप्रापिताङ्गकलापेषु अत एव प्रकृतिविकारभावरहितेषु ऐन्द्रानैन्द्रग्रहयागेषु मध्ये अनैन्द्राणां ऐन्द्रभिन्नानां मैत्रा-

वरुणादिग्रहयागानां संबन्धिनि भक्षणे अमन्त्रत्वं भक्षमन्त्ररहितत्वं स्यात्। लिङ्गविशेषनिर्देशात् भक्षमन्त्रे इन्द्रपीतस्य इति सोमविशेषणस्य निर्देशात्। तस्य च अनैन्द्रेषु अनन्वयात्। इत्येकः **पूर्वपक्षः**। इदं सूत्रं एकादशाधिकरणस्थम्। एतस्मात् उत्तरं सूत्रं एतदधिकरणशेषभूतं 'छन्दःप्रतिषेधस्तु । ३।२।११।२९' इति स्यात्। मध्ये तु अन्तरागर्भिण्यधिकरणानि भवन्ति। इति शेयम्।

**यथादेवतं वा, तत्प्रकृतित्वं हि दर्शयति।२९॥**

वाशब्दः पक्षान्तरं सूचयति। ऐन्द्रानैन्द्रसोमग्रहयागेषु अनैन्द्राणां सोमग्रहाणां भक्षणं अमन्त्रकं कर्तव्यं इति प्रथमः पूर्वपक्षः पूर्वमुक्तः। **अथ द्वितीयं पूर्वपक्षमाह।** अनैन्द्राणां अमन्त्रकं भक्षणं न किंतु मित्रावरुणपीतस्य इतिरीत्या ऊहेन समन्त्रकत्वं स्यात्। यथादेवतं देवतां अनतिक्रम्य ऊहः कर्तव्यः। हि यस्मात् तत्प्रकृतित्वं ऐन्द्रप्रदानप्रकृतिकत्वं अनैन्द्रप्रदानानां दर्शयति। तस्मात् ऊहेन समन्त्रकत्वं इति **द्वितीयः पूर्वपक्षः।**

**छन्दःप्रतिषेधस्तु सर्वगामित्वात्। ३९ ॥**

ज्योतिष्टोमे ऐन्द्रानैन्द्रसोमग्रहयागेषु मध्ये अनैन्द्राणां ग्रहयागेषु भक्षमन्त्रः मित्रावरुणपीतस्य इतिरीत्या ऊहेन प्रवर्तते इति द्वितीयः पूर्वपक्षः पूर्वमुक्तः। तं पक्षं अनैन्द्राणां भक्षणं अमन्त्रकं इति वदन् प्रथमपूर्वपक्षी तुशब्देन व्यावर्तयन् पुनः प्रथमपक्षमाह। यः खलु षोडशिनि अतिरात्रे च पितृदेवत्ये 'तृतीयस्य सवनस्य जगतीछन्दसः' इति मन्त्रे 'अनुष्टुप्छन्दसः इतिभक्षमन्त्रं संनमति' इति छन्दःप्रतिषेधः अनुष्टुप्छन्दःपदोहरूपः जगतीछन्दःपदप्रतिषेधः ऊहपक्षसाधकतया अभिमतः स तु अनैन्द्रेषु ऊहाभावेऽपि उपपन्नः। अप्राप्तस्यैव अनुष्टुप्छन्दःपदविशिष्टोहस्य तत्र विधानोपपत्तेः। अतः अभिषवादीनां धर्माणां सर्वगामित्वात् ऐन्द्रानैन्द्रसाधारणत्वात् प्रकृतिविकारभावाभावेन अनैन्द्रेषु अनूहात् अमन्त्रकमेव भक्षणं इति पुनः **प्रथमः पूर्वपक्षः।**

**सर्वेषां वैकमन्त्र्यमैतिशायनस्य भक्तिपानत्वात् सवनाधिकारो हि। ४४ ॥**

ज्योतिष्टोमे ऐन्द्रानैन्द्रसोमग्रहभक्षेषु मध्ये अनैन्द्राणां भक्षणं अमन्त्रकं इति यदुक्तं तत् व्यावर्तयति वाशब्दः। सर्वेषां ऐन्द्राणां अनैन्द्राणां च यागानां ऐकमन्त्र्यं एकरूपः अविकृतः यो भक्षमन्त्रः तद्वत्त्वमेव। न अमन्त्रकत्वम्, नापि यथादेवतमूहः। तदेतत् ऐतिशायनस्य महर्षेः अनुमतम्। हि यस्मात् इन्द्रपीतशब्दः सवनाधिकारः, इन्द्रेण पीतं यस्मिन्, पीतमस्य अस्तीति पीतः इन्द्रः पीतो यस्मिन् सवने इत्येवं बहुव्रीहिः सन् गायत्रच्छन्दसः इत्यादिवत् सवनबोधकः। अन्यथा इन्द्रेण पीत इति तृतीयातत्पुरुषस्वीकारे भक्तिपानत्वात् भक्तिपानत्वप्रसङ्गात् भक्तिः लक्षणा पाने यत्र तस्मात् पानस्य भाक्तत्वप्रसङ्गादित्यर्थः। तस्मात् अनैन्द्राणां ऐन्द्राणां च सोमग्रहाणां भक्षणं अविकृतमन्त्रवदेव, न अमन्त्रकत्वं नापि यथादेवतमूहः **इति सिद्धान्तः। के.**

* **लिङ्गविशेषनिर्देशात् समानविधानेष्वनैन्द्राणाममन्त्रत्वम्।** ३।२।११।२८ ॥ लिङ्गविशेषनिर्देशात् अनैन्द्राणाममन्त्रत्वं इत्येतावत् सूत्रं अन्यपदार्थप्रधानबहुव्रीह्यपेक्षया स्वपदार्थे प्राधान्यात् तत्पुरुषस्य बलीयस्त्वप्रतीतेः विशेषतश्च अस्य व्यधिकरणत्वेन बहुव्रीहित्वायोगात्। (इन्द्रेण पीतं यस्मिन् इति) इन्द्रपीतस्य इति इन्द्रलिङ्गनिर्देशात् अनैन्द्रसोमभक्षणानां लिङ्गविनियोज्यमन्त्राविषयता इत्येवं पूर्वपक्षार्थम्। 'समानविधानेषु अनैन्द्राणाममन्त्रत्वम्' इत्येतावत्तु आवृत्तैकदेशं ऐन्द्राणां च प्रदानानां धर्मग्राह्यैकज्योतिष्टोमावयवत्वेन समानविधाने प्रकृतिविकारभावाभावेन ऊहायोगात् अनैन्द्रसोमभक्षणानां शून्यता इत्येवं पूर्वपक्षप्रयोजनोक्त्यर्थम्। **सु. पृ. ११८१.**

**॥ लिङ्गविशेषनिर्देशात् समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वात। ९।१।१७।४५॥**

ज्योतिष्टोमे क्रतुपशवः समाम्नाताः। 'आग्नेयः पशुरग्निष्टोम आलब्धव्यः, ऐन्द्राग्नः पशुरुक्थ्ये द्वितीयः, ऐन्द्रो वृष्णिः षोडशिनि तृतीयः, सारस्वती मेष्यतिरात्रे चतुर्थी' इति। चत्वारोऽपि एते पशवः समानविधाना इति **एकः पक्षः**, अग्नीषोमीये पशौ एव धर्मविधानं इतरेषु तु चोदकेन प्राप्तिः इति **अन्यः पक्षः**। अग्नीषोमीये च अस्ति अध्रिगुप्रैषः। तत्र 'उपनयत मेध्या दुर आशा-



माना मेधपतिभ्यो मेधम्' इति पठ्यते। तत्र समानविधानपक्षे (सामानविध्यपक्षे) चिन्त्यते किं अध्रिगुवचनं सारस्वत्यां मेष्यां कर्तव्यं न वेति। तत्र नेति सिद्धान्तमाह। क्रतुपशुषु समानविधानेषु सत्सु सारस्वती मेषी अध्रिगुवचनं अप्राप्ता। सारस्वत्यां अध्रिगुवचनं न भवतीत्यर्थः। लिङ्गविशेषनिर्देशात्। अध्रिगुप्रैषे 'प्रास्मै अग्निं भरत' इति पुंलिङ्गेन लिङ्गविशेषस्य पुंलिङ्गस्य निर्देशात् सारस्वत्याश्च स्त्रीत्वात्। न च पुंवचनः शब्दः स्त्रियमभिवदितुं समर्थः। तस्मात् सारस्वत्यां अध्रिगुप्रैषस्य न प्रवृत्तिः इति।

**पश्वभिधानाद्वा तद्धि चोदनाभूतं पुंविषयं पुनः पशुत्वम्। ४६ ॥**

सारस्वत्यां मेष्यां अध्रिगुवचनं न कर्तव्यं इति सिद्धान्ते उक्ते पूर्वपक्षी आह। वाशब्दः पक्षं व्यावर्तयति। अध्रिगुप्रैषे पुंलिङ्गनिर्देशात् सारस्वत्याश्च स्त्रीत्वात् नाध्रिगुवचनस्य तस्यां प्रवृत्तिः इति यदुक्तम्, तन्न। तथाहि 'प्रास्मै अग्निं भरत' इति इदंशब्दः पश्वभिधानं पशोरभिधानं पशुसामान्यस्य पशुत्वस्याभिधानं वाचकम्। हि यस्मात् तत् पशुत्वं चोदनाभूतम्। क्रतुपशुविधिवाक्ये पशुशब्देनैव आग्नेयादीनां निर्देशात् पशुत्वमेव चोदनायां संबद्धम्, पशुत्वं च पुनः पुंविषयमपि पशुत्ववाचकः पशुशब्दः क्वचित् पुंविषयोऽपि सन् सारस्वत्यां मेष्यां स्त्रियामपि प्रवर्तितुमर्हति। यथा मनुष्यशब्देन पुमानपि उच्यते योषिदपि तद्वत्। तस्मात् 'प्रास्मै अग्निं भरत' इति पशुवाचि अस्मै इति पदं सारस्वत्यामपि प्रवर्तितुमर्हत्वात् अध्रिगुप्रैषः सारस्वत्यामपि प्रवर्तेत इति **पूर्वः पक्षः।**

**विशेषो वा तदर्थनिर्देशात्। ४७ ॥**

सारस्वत्यां मेष्यां अध्रिगुवचनं प्रवर्तते 'प्रास्मै अग्निं भरत' इति इदंशब्दस्य पशुनिर्देशकस्य पुंसीव स्त्रियामपि प्रवर्तितुमर्हत्वात् इति यदुक्तं पूर्वपक्षिणा तद्व्यावृत्त्यर्थो वाशब्दः। यद्यपि अस्मै इति प्रातिपदिकं पुंसि स्त्रियां च समानं तथापि स्मैप्रत्ययेन तदर्थनिर्देशात् तदर्थस्य प्रातिपदिकार्थविशेषस्य निर्देशात् पुंरूपः विशेष एव निर्देष्टुं शक्यते न स्त्रीरूपः, स्त्रीरूपार्थनिर्देशस्तु स्यैशब्देन निर्देशार्हः। तस्मात् पुंरूपः पशुविशेष एव अस्मै इति पदेन निर्दिष्टत्वात् सारस्वत्यां अध्रिगुप्रैषस्य न प्रवृत्तिः। इति **प्रथमः सिद्धान्तपक्षः** एव युक्तः।

**पशुत्वं चैकशब्द्यात्। ४८ ॥**

'प्रास्मै अग्निं भरत' इति पुंविशेषस्य निर्देशात् सारस्वत्यां मेष्यां अध्रिगुवचनं न प्रवर्तेत इति यदुक्तं तद्व्यावर्तयति पूर्वपक्षी। चाशब्दो व्यावर्तनार्थ एव। पुंपशौ स्त्रीपशौ वा पशुत्वं सामान्यं एकमेव तद्वाचकश्च अस्मैशब्दः इति पुंपशोः स्त्रीपशोश्च ऐकशब्द्यं भवति अस्मै इति। तेन च पशुत्वं सामान्यमेवोच्यते। तच्च स्त्रीपशावपि अविशिष्टं इति सारस्वत्यामपि अध्रिगुवचनं युज्यते इति।

**यथोक्तं वा संनिधानात्। ४९ ॥**

'प्रास्मै अग्निं भरत' इति पशुसामान्यवाची अस्मै शब्दः सारस्वत्यां मेष्यां स्त्रियामपि अविकारेण प्रवर्तेत इति पूर्वपक्षोक्तं व्यावर्तयितुं वाशब्दः। स्यैशब्दभिन्नेन पुंवाचिना स्मैशब्देन उक्तं यत् पुंपशुत्वं तदनतिक्रम्य यथोक्तमेव स्यात् अध्रिगुवचनं पुंपशावेव न मेष्याम्। तस्मात् प्रथमसूत्रे यदुक्तं अध्रिगुवचनमप्राप्ता सारस्वतीति तदनतिक्रम्य यथोक्तमेव स्यात् संनिधानात्। संनिहितवचनः सर्वनामशब्दः। 'प्रास्मै अग्निं भरत' इत्यस्य संनिहितश्च अग्नीषोमीयः पुंपशुरेव। तत्प्रकरणे हि अध्रिगुः पठितः। तस्मात् पशुधर्माः साधारणाः इति समानविधित्वपक्षे सारस्वत्यां मेष्यां अध्रिगुवचनं न कर्तव्यं पशुधर्मा अग्नीषोमीयपश्वर्था एवेति सिद्धान्तपक्षे तु सारस्वत्यामपि अध्रिगुवचनं ऊहेन स्यात् 'प्रास्या अग्निं भरत' इति। **के.**

* **लिङ्गशब्दः** गम्यगमकसंबन्धे सति प्रवर्तते। लिङ्ग्यते अनेन इति हि क्रियायोगनिमित्तो लिङ्गशब्दः इति न संबन्धिशब्दत्वेनोच्यते तथापि तु क्रियागतकारकान्तरापेक्षां न मुञ्चति। **वा.** १।३।७।१८ पृ. २८९.

* **लिङ्गशब्दस्य** सामर्थ्ये मीमांसकानां प्रसिद्धत्वात्। **सु.** पृ.११३.

* **लिङ्गसंख्यं** क्रियायां प्रधानभूतस्य अविवक्षितम्। यत् क्रियार्थे प्रातिपदिकमुपादीयते तस्य यल्लिङ्गसंख्यं

तद्विवक्षितं क्रियाङ्गत्वात् । **टुप्**. १०।३।१७।६३ पृ. १८९८, * **लिङ्गसंख्ये** सर्वत्रैव लक्षणया प्रवर्तेते । १२।१।१।१ पृ. २२१७.

* **लिङ्गसंख्यावाचिन्याः** सुपः प्रातिपदिकपरत्व-स्मृतिः । **सु.** पृ. ९५८.

* **लिङ्गसमवायः** गौण्याः वृत्तेः अन्यतमो हेतुः । ' प्राणभृत उपदधाति ' इत्यत्र लिङ्गवतामल्पत्वात् तत्सम-वायमात्रेण शब्दप्रवृत्तिः । यद्यपि आद्यमन्त्र एव प्राण-शब्दभृत् नान्यं, तथापि प्राणभृत्– अप्राणभृत्– सम-वायः अत्र गृह्यते । **शा.** १।४।१८.

**लिङ्गसमवायः ।** ( लिङ्गसमवाया इति गुणा-श्रयाः ) । **१।४।१२।२३–६ ॥**

' प्राणभृत उपदधाति ' इति श्रूयते । अग्निचयने उपधेयाः काश्चिदिष्टकाः प्राणभृतः नाम । तत्करण-मन्त्रेषु **' अयं पुरोभुवस्तस्य प्राणो भौवायनः '** इति प्राणशब्दः पठितः । द्वितीय-तृतीय-दशमभिन्नेषु मन्त्रेषु तु प्राणशब्दो नास्ति । तथापि द्वितीयतृतीयदशमेषु मन्त्रेषु प्राणशब्दवत्त्वात् तत्सहचरिताः सर्वे मन्त्राः तदुप-धेया इष्टकाश्च प्राणभृच्छब्देन बोध्यन्ते । तथाच प्राणभृच्छब्दः इष्टकासमुदाये गौणः । गुणश्चात्र लिङ्ग-समवायः लिङ्गसंबन्धः । अत्र पञ्चाशत् मन्त्राः । **' तत्सिद्धि–जाति–सारूप्य–प्रशंसा – भूम – लिङ्ग-समवाया इति गुणाश्रयाः '** इति एकं सूत्रम् । भाष्यकारैस्तु व्याख्यासौकर्यार्थं भित्त्वा उपन्यस्तम् । तत्सिद्ध्यादयः लिङ्गसमवायान्ताः षट् गुणाश्रयाः गौण्या वृत्त्याः निमित्तानि । इति सूत्रार्थः । तत्र अस्मिन्नधिकरणे लिङ्गसमवायः गौणीनिमित्तमुक्तम् । **के.**

* लिङ्गसमवायः । श्रीभागवते ' श्यालः स्वस्रोरथा-ग्रहीत् ' इत्यत्र स्वसृपदं स्वसृतत्पत्योः **लिङ्गसमवायेन गौणं** इत्येव व्याख्यातं श्रीधराचार्यैः । **कौ.** १।४।१८।२८.

**लिङ्गसमवायन्यायः ।** प्राणभृदादिशब्दैः प्राणा-दिलिङ्गसंबन्धात् तन्मन्त्रैरुपधेया इष्टका गृह्यन्ते ॥

**लिङ्गसमवाया इति गुणाश्रयाः । १।४।१२। २३–६ ॥**

**भाष्यम्**— ' प्राणभृत उपदधाति ', ' अज्यानी-रुपदधाति ' इति । विधित्वे प्राणभृन्मन्त्रकासु उपधीय-मानासु विलिङ्गानां मन्त्राणामानर्थक्यम् । तस्मादनुवादः । लिङ्गसमवायात् परशब्दः परत्र वर्तते । यथा ' छत्रिणो गच्छन्ति ' इत्येकेनापि छत्रिणा सर्वे लक्ष्यन्ते । न चायं प्राणभृच्छब्दः सृष्टिशब्दश्च जहत्स्वार्थे मन्त्रगणं लक्षयेत्, यद्गणे च सृष्टिप्राणभृच्छब्दौ समवेतौ तावपि परिगृह्येते । यथा छत्रिशब्देन सार्थलक्षणार्थेन सोऽपि छत्री गृह्यते इति ।

**वा**— सृष्टिवदेव प्राणभृदादिषु चोद्यपरिहारौ । अल्पै-रेव लिङ्गैः भूयसां अनेकलिङ्गानां लक्षणं इत्युदाहरण-भेदः । स्वार्थापरित्यागाच्च उभयत्र लक्षणस्यापि ग्रहणं उपादीयमानत्वादिति । आह च, **' यत्र लक्षणमुद्दिश्य लक्ष्ये कार्यं नियुज्यते । तन्मात्रग्रहणं तस्मिन्नुपा-दाने द्वयोरपि ॥ '**

**शा**— ' प्राणभृत उपदधाति ' इत्यत्रापि पूर्ववदेव मन्त्रोपादानं अर्थवादार्थं विध्यर्थं वा इति विवेक्तव्यम् । ( गौण्या वृत्तेः ) निमित्तान्तरकथनार्थं तु सूत्रान्तरम् । पूर्वत्र हि भूम्ना शब्दप्रयोगः, इह तु लिङ्गवतां अल्प-त्वात् तत्समवायमात्रेण शब्दप्रवृत्तिः । प्राणभृद्गणे हि प्राणभृत्समवायोऽस्ति, प्राणभृदप्राणभृद्गणेऽपि प्राणभृत्सम-वायोऽस्ति, इत्यनेन सादृश्येन प्राणभृच्छब्दः ।

**वि**— ' सृष्टिवत् प्राणभृत् तत्र, सादृश्यं लिङ्ग-भूमतः । अत्रैकमन्त्रगो लिङ्गसमवायो विशिष्यते ॥ ' ' रेतसि एव प्राणान् दधाति ' इत्यस्य अर्थवादस्योप-पत्तये प्राणभृच्छब्देन मन्त्रानुवादः । पूर्वत्र द्वितीयादि-मन्त्रेषु सृष्टिलिङ्गानां बाहुल्यम् । इह तु प्रथममन्त्रे एव प्राणभल्लिङ्गमाम्नायते ' अयं पुरोभुवस्तस्य प्राणो भौवा-यनः ' इति । एकस्यैव मन्त्रस्य प्राणभृत्त्वेऽपि ' छत्रिणो गच्छन्ति ' इतिवत् तत्सहचरिताः सर्वे मन्त्राः प्राणभृ-च्छब्देन लक्ष्यन्ते ।

**भाट्ट**— ' प्राणभृत उपदधाति ' इत्यादौ अल्पत्वं निमित्तम् ।

**मण्डन**— ' प्राणभृत् प्राणभृद्योगात् । '

**शंकर**— ' सा लिङ्गसमवायाच्च । ' सा वृत्तिः ।



* ' पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ' इत्यत्र पितृशब्दः **लिङ्गसमवायन्यायात्** पित्रपितृसमुदायपरः । **श्राद्ध-मयूखः** पृ. ९ वारपुरेसंपादितः.

* **लिङ्गसमवायमूलकगौण्या**, इतरा गौणी बाध्यते । **बाल.** पृ. १४३.

* **लिङ्गसमवायमूलिका** गौणी, भूमभूलकगौण्या बाध्यते । **बाल.** पृ. १४३.

* **लिङ्गसमाख्याभ्यां** भक्षार्थतानुवाकस्य ( ३।२।९। २५–२६ ) इत्यधिकरणे ' अश्विनोस्त्वा बाहुभ्यां॰ ' इत्यादयः ग्रहणावेक्षणसम्यग्जरणप्रकाशका मन्त्राः प्रकरणेन विनियुक्ताः ग्रहणादीनां अनुष्ठानयोग्यानां स्वाङ्गत्वसिद्ध्यै विधिं कल्पयन्ति इत्युक्तम् । **बाल.** पृ. ६४.

* **लिङ्गसमाख्याविरोधे** भक्षानुवाके ग्रहणादि-वाक्यानि समाख्यानात् भक्षाङ्गत्वेन संबन्धसामान्यादि-कल्पनया भक्षाङ्गत्वविनियोगाय प्रस्थितानि, लिङ्गेन ग्रहणावेक्षणसम्यग्जरणेषु विनियुज्यन्ते इति स्थितम् । याज्यासमाख्याबाधेन च मनोर्ऋचां पृथुपाजवत्योश्च लिङ्गेन सामिधेनीत्वेन विनियोगः इत्युक्तम् । ( शेष्यने-कत्वे इदम् ) । **वा.** ३।३।७।१४ पृ. ८३७, ( शेषानेकत्वे तु ) समाख्यया मनोर्ऋचां सोमारौद्रीयेषु याज्यानुवाक्या-त्वेन प्राप्तानां सोमरुद्रलिङ्गाभिः याज्यानुवाक्याभिर्बाधः । पृ. ८३९. * लिङ्गसमाख्याविरोधे ( शेष्यनेकत्वे ) मनोर्ऋचः पृथुपाजवत्योश्च क्रमसहकृतयाज्यासमाख्यया सोमारौद्रयागे याज्यात्वे प्रसक्ते अग्निप्रकाशनलिङ्गात् क्रमसहकृतात् तदीये सामिधेनीकार्ये निवेशः । शेषानेकत्वे तु मनोर्ऋचामेव सोमारौद्रयागे याज्यात्वप्रसक्तौ तद्देवत्य-याज्यानुवाक्याभ्यां लिङ्गप्राप्ताभ्यां बाधः । **कौ.** ३।३।७। १४ पृ. ३६०–६१.

**लिङ्गसमाख्यानाभ्यां भक्षार्थताऽनुवाकस्य । ३।२।९।२५ ॥**

ज्योतिष्टोमे सोमशेषभक्षणे ' भक्षेहि माऽऽविश ' इत्यादिः महान् मन्त्रः विनियुक्तः । तत्रापि ' भक्षेहि ' इत्यारभ्य ' सुप्रजास्त्वाय ' इत्यन्तः, ' वसुमद्गणस्य ' इत्यादिः ' उपहूतो भक्षयामि ' इत्यन्तश्च भागः भक्षण-प्रकाशकः । ' एहि वसो ' इत्यारभ्य ' बाहुभ्यां सध्यासं ' इत्यन्तो भागः ग्रहणप्रकाशकः । ' नृचक्षसं त्वा देव सोम सुचक्षा अवख्येषं ' इति भागः अवेक्षणं प्रकाश-यति । ' हिन्व मे गात्रा ' इत्यादिः 'मा मेऽवाङ् नाभि-मति गाः ' इत्यन्तः सम्यग् जरणं प्रकाशयति । अस्य सर्वस्यापि मन्त्रस्य भक्षानुवाकः इति समाख्या । सोऽयं सर्वोऽनुवाकः किं भक्षणे विनियोक्तव्यः उत कश्चित् कश्चित् भागः अन्यत्रापि ग्रहणादौ प्रयोक्तव्य इति विचारे **पूर्वपक्षमाह** । लिङ्गसमाख्यानाभ्यां लिङ्गात् समा-ख्यानाच्च सर्वस्यापि अनुवाकस्य भक्षार्थता अवगम्यते । तस्मात् सर्वोऽनुवाको भक्षणे विनियोक्तव्यः ।

**तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदित-त्वात् । २६ ॥**

ज्योतिष्टोमे सोमशेषभक्षणे भक्षानुवाको नाम मन्त्र-समुदायो विनियुक्तः । स सर्वोऽपि सोमभक्षणे एव विनियोक्तव्यः इति पूर्वपक्षे सूत्रेण प्राप्ते सिद्धान्त उच्यते । तस्य भक्षानुवाकस्य अपकर्षः ग्रहणादौ विभज्य विनि-योगः कर्तव्यः । रूपोपदेशाभ्यां रूपात् मुख्यसामर्थ्यरूपात्, उपदेशात् सामान्यसंबन्धबोधकात् प्रमाणाच्च । अर्थस्य चोदितत्वात्, यावता विना विधेयोऽर्थो न सिध्यति तावतोऽर्थस्य चोदनापरिगृहीतत्वेन ग्रहणमवेक्षण च विना अन्यूनानतिरेकेण भक्षयितृभिः सहभक्षणानुपपत्त्या ग्रहणा-देरपि भक्षयतिचोदनाचोदिततया अपूर्वसाधने तत्र विनि-योगसंभवेन वैयर्थ्याभावात् इत्यर्थः । **के.**

' तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वात् ' । ३।२।९।२५ ॥

लिङ्विनियोगाधिकारात् उपदेशस्य च सम्यग्जरणे-ऽपि क्लेशोपपाद्यत्वात् उपदेशग्रहणस्य अभ्युच्चयमात्रा-र्थत्वप्रतीतेः भक्षानुवाकस्य अवयवानां केषांचित् लिङ्गेन भक्षादपकर्षः इति ' तस्य रूपादपकर्षः ' इत्य-स्यार्थः । भक्षविध्यन्यथाऽनुपपत्तिकल्पितविधिना ' एहि वसो ' इत्यादिवाक्यार्थस्य ग्रहणादेश्चोदितत्वात् अपूर्व-साधनत्वेन अपूर्वसाधनीभूतं मन्त्रं प्रति द्वारत्वोपपत्तेः मन्त्रप्रकाश्यता युक्ता इति ' अर्थस्य चोदितत्वात् ' इत्यस्यार्थः । भक्षणस्य स्तुत्यर्थग्रहणादिवैशिष्ट्याप्रकाशने श्रुतेः अचोदितत्वेन अदृष्टार्थत्वापत्तेः दृष्टसंभवे च

अदृष्टार्थत्वायोगात् एकवाक्यतोपगमनसामर्थ्यस्य श्रुतिकल्पकत्वानुपपत्तेः क्वचिन्न्यायेन च कृत्स्नस्य भक्षार्थत्वाभावेऽपि भक्षानुवाकसमाख्योपपत्तेः ग्रहणाद्यभिधानसामर्थ्यस्यापि समाख्याविरोधाभावात् श्रुतिकल्पकता युक्ता इति ग्रहणार्थस्यैव अनुष्ठेयत्वेन प्रकाश्यतया अपेक्षितत्वात् तददृष्टार्थत्वोपपत्तेः अनपेक्षितभक्षस्तुत्यर्थत्वे सति अदृष्टार्थत्वापत्तेः इति 'अर्थस्य चोदितत्वात्' इतिसूत्रावयवस्य आवृत्त्या व्याख्याऽन्तरम् । सु. ११३७–१२३९.

**लिङ्गसमाख्यानाभ्यां भक्षार्थतानुवाकस्य । ३।२।९।२५ ॥**

भक्षमन्त्रः श्रूयते– 'भक्षेहि माऽऽविश दीर्घायुत्वाय शन्तनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वाय, एहि वसो पुरोवसो प्रियो मे हृदोऽस्यश्विनोस्त्वा बाहुभ्यां सध्यासम्, नृचक्षसं त्वा देव सोम सुचक्षा अव ख्येषम्, हिन्व मे गात्रा हरिवो गणान्मे मा वि तीतृषः, शिवो मे सप्तर्षीनुपतिष्ठस्व मा मेऽवाङ्नाभिमति गाः, मन्द्राभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु, वसुमद्गणस्य रुद्रवद्गणस्य आदित्यवद्गणस्य सोम देव ते मतिविदः प्रातःसवनस्य, माध्यन्दिनस्य सवनस्य, तृतीयस्य सवनस्य गायत्रच्छन्दसस्त्रिष्टुप्छन्दसो जगतीच्छन्दसोऽग्निष्टुत इन्द्रपीतस्य नराशंसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि' (तैसं. ३।२।५) इत्येवमादि । तत्र संदेहः कृत्स्न एवानुवाको भक्षणे विनियोजनीयः, उत कश्चिदस्य अवयवोऽन्यत्रापि इति । लिङ्गस्य विनियोजकत्वं सामान्यसंबन्धसापेक्षमिति प्रतिपादनप्रसङ्गेन श्रुतेरपि सामान्यसंबन्धसापेक्षविनियोजकत्वमिति प्रतिपाद्येदानीं लिङ्गगत एव विशेषः किं साक्षादचोदितेषु अर्थाक्षिप्तेषु लिङ्गस्य विनियोजकत्वं न वेति निरूप्यते ।

अत्रायं पूर्वपक्षः, यद्यपि 'भक्षेहि' इत्युपक्रमस्य 'सध्यासम्' इत्यन्तस्य ग्रहणार्थत्वम्, 'नृचक्षसम्' इत्युपक्रमस्य 'अवख्येषम्' इत्यन्तस्य अवेक्षणार्थत्वम्, 'हिन्व मे गात्रा' इत्युपक्रमस्य 'मा मेऽवाङ्नाभिमति गाः' इत्यन्तस्य सम्यग् जरणार्थत्वम्, 'मन्द्राभिभूतिः' इत्युपक्रमस्य 'भक्षयामि' इत्यन्तस्य भक्षणार्थत्वं प्रतीयते, तथापि सोमरसभक्षणस्यैव विहितत्वात् लिङ्गस्य विहितविषयमन्त्रविनियोजकत्वात् ग्रहण–अवेक्षण–सम्यग्जरणानां च भक्षणाक्षेपलब्धत्वेन लैङ्गिकविनियोगायोग्यत्वात् कृत्स्न एवायं मन्त्रो भक्षणे विनियुज्यते । किञ्च उपक्रमे 'भक्षेहि' इति श्रूयते । उपसंहारे च 'भक्षयामि' इति । तेन उपक्रमोपसंहारयोः भक्षणकीर्तनात् वैश्वानरवाक्यवत् कृत्स्नस्यैव अनुवाकस्य एकवाक्यत्वात् भक्षानुवाकसमाख्यानाच्च कृत्स्नस्यैव भक्षणार्थत्वम् । किञ्च ग्रहणादीनामर्थतो लोकदृष्ट्या प्राप्तत्वात् लौकिक्येवेतिकर्तव्यता युक्ता । तेन लौकिकपदेनापि तत्प्रकाशनसिद्धेर्न वैदिकमन्त्रापेक्षा । तेन ग्रहणावेक्षणसम्यग्जरणादिपदानामपि विशिष्टभक्षणप्रकाशनार्थत्वमेव । अतश्च एकवाक्यता, एकोपक्रमोपसंहारगतभक्षणकीर्तनलिङ्गात् भक्षानुवाकसमाख्यानाच्च कृत्स्न एव मन्त्रो भक्षणार्थ इति । एवं प्राप्ते, अभिधीयते—

**तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वात् । २६ ॥**

अयमभिप्रायः– भवेदेवं यदि अर्थप्राप्तविषये लैङ्गिकविनियोगो मन्त्रस्य न भवेत् । तथाहि यद्यप्यत्र ग्रहणादयो न विधीयन्ते, तथापि भक्षणस्य ग्रहणादिना विना असंभवात् भक्षणविध्याक्षिप्तमेव ग्रहणमवेक्षणं च अवश्यानुष्ठेयम् । सम्यग्जरणं च भक्षणस्यैव प्रतिपत्तिरूपस्य द्रव्यभक्षणपर्यन्तस्य विधानात् भक्षणविधिविहितमेव यत्नान्तरसाध्यत्वात् पृथगनुष्ठेयम् । तेषां च अस्मृतानां अनुष्ठानासंभवात् तेषामपि वैदिकभक्षणविध्यर्थमवश्यानुष्ठेयत्वेनास्ति स्मृतिहेतुवैदिकोपायापेक्षा । शक्नोति च भक्षेत्ययं मन्त्रो ग्रहणादीन् प्रकाशयितुम् । तेन सूक्तवाकवत् यथालिङ्गं ग्रहणादिषु विभज्यैव मन्त्रः प्रयोक्तव्य इति ।

यत्तु उपक्रमोपसंहारयोः भक्षणकीर्तनादेकवाक्यत्वात् कृत्स्नस्यैव भक्षणार्थत्वमित्युक्तम् । तदयुक्तम् । विप्रकृष्टत्वात् । तथाहि उपक्रमोपसंहारैकरूप्यादेकवाक्यत्वम्, तदनुरोधाच्चासमर्थस्य वाक्यस्य लाक्षणिकसामर्थ्यरूपं लिङ्गं कल्पनीयम्, ततोऽपि श्रुतिरिति विप्रकर्षः । ग्रहणाद्यभिधानसामर्थ्यात् साक्षादेव श्रुतिकल्पनमिति संनिकर्षाद्यभिधानसामर्थ्यादेव विभज्य विनियोग इति ।



समाख्या च लिङ्गात् दुर्बला लौकिकी च एकदेशद्वारेणाप्युपपन्नेति न किञ्चिदनुपपन्नम् ।

**प्रयोजनम्**— पक्षोक्तम् । **सूत्रं तु**—तस्य मन्त्रस्य भागशो भक्षादपकर्षरूपात् लिङ्गात् ग्रहणादेरुपदिष्टत्वाच्च कथमश्रुतस्योपदिष्टत्वम् । तत्राह अर्थस्य भक्षणाक्षेपस्य चोदितत्वादिति । **तौता.**

**लिङ्गसमाख्यानाधिकरणम् ।** भक्षाधिकरणम् । ज्योतिष्टोमे भक्षानुवाकस्य यथालिङ्गं विभज्य भक्षणादौ विनियोगः ॥

**लिङ्गसमाख्यानाभ्यां भक्षार्थताऽनुवाकस्य । ३।२।९।२५ ॥**

**भाष्यम्**— भक्षमन्त्रः श्रूयते 'भक्षेहि माऽऽविश दीर्घायुत्वाय शंतनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वाय । एहि वसो पुरोवसो प्रियो मे हृदोऽस्यश्विनोस्त्वा बाहुभ्यां सध्यासम् । नृचक्षसं त्वा देव सोम सुचक्षा अव ख्येषम् । हिन्व मे गात्रा हरिवो गणान्मे मा वि तीतृषः । शिवो मे सप्तर्षीनुप तिष्ठस्व मा मेऽवाङ्नाभिमति गाः । मन्द्राभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु । वसुमद्गणस्य रुद्रवद्गणस्य आदित्यवद्गणस्य सोम देव ते मतिविदः प्रातःसवनस्य माध्यंदिनस्य सवनस्य तृतीयसवनस्य गायत्रच्छन्दसस्त्रिष्टुप्छन्दसो जगतीछन्दसोऽग्निष्टुत इन्द्रपीतस्य नराशंसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि' इत्येवमादिः । तत्र संदेहः किं कृत्स्न एषोऽनुवाको भक्षणे विनियोजनीयः, उत कश्चिदस्य अवयवः अन्यत्रापीति । किं प्राप्तम् ? लिङ्गसमाख्यानाभ्यां भक्षार्थता अनुवाकस्य । सर्वोऽनुवाको भक्षणे विनियोजनीयः । कुतः ? भक्षयामीत्येष शब्दो व्यक्तं भक्षणे विनियोजनीयः, भक्षणमेष शक्नोति वदितुं नान्यत् किंचित् । अन्यानि चास्य पदानि भक्षणविशेषणवचनान्येव । यत्रयत्र भक्षयामीति तत्रतत्र प्रयुज्यन्ते । ननु 'एहि वसो' इत्येवमादि 'सध्यासम्' इत्येवमन्तं ग्रहणार्थं स्वेन पदसमूहेन परस्पराकाङ्क्षिणा एकार्थं विभिन्नं भक्षणवाक्यात् । 'नृचक्षसम्' इत्येवमादि, 'अवख्येषम्' इत्येवमन्तं अवेक्षणवचनम् । 'हिन्व मे गात्रा हरिवः' इत्येवमादि च 'मा मेऽवाङ्नाभिमति गाः' इत्येवमन्तं सम्यग्जरणार्थम् । तद्बहुत्वादर्थानां बहूनि वाक्यानि । कथमेतत् शक्यं वदितुं सर्वमिदमेकं वाक्यं भक्षणे विनियुज्यते इति । उच्यते । सर्वाण्येतानि भक्षणविशेषणानीत्युक्तम् । आह । एवमपि भिद्येत वाक्यम्, विशेषणविशेष्याणां युगपद्वचनासंभवात् । उच्यते । न विशेषणानि विवक्षिष्यामः । विशेषणैः ग्रहणावेक्षणादिभिः विशिष्ट एकोऽर्थो विवक्ष्यते । नैवं सम्यक् भवति । विशेषणवचनानां अविवक्षितस्वार्थवचनता, भक्षणविशेषणपरता चेति लक्षणया तु गम्यते । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या न लक्षणा । तस्मान्नैकं वाक्यमिति । अत्रोच्यते । यद्यपि अमी ग्रहणादयो बहवोऽर्था गम्यन्ते न तु सर्वे ईप्सिता इति । भक्षणमेवैकं प्रत्याययितव्यम् । तद्धि श्रुतम् । विशेषणान्यश्रुतानि । न तैः प्रतीतैः प्रयोजनम् । प्रयोजनं च यावतः पदसमूहस्यैकम्, तावदेकं वाक्यम् । तस्मात् विशिष्टभक्षणार्थमेतदेकं वाक्यमिति भक्षणं विनियोक्तव्यम् । समाख्यानं च भवति भक्षानुवाक इति । कृत्स्नश्चानुवाको नावयवः । ननु च समाख्या लौकिकः शब्दः, कथं वैदिकमङ्गं निर्वक्ष्यतीति । यद्यपि लौकिकः तथापि अनादिः तस्यानुवाकेन संबन्धः । किमतो यद्येवम् ? एतदतो भवति । भक्षणसमभिव्याहृतमनुवाकं ब्रूते । समभिव्याहारश्च सति संबन्धे भवति । यथा पाचको लावक इति । समभिव्याहारात् संबन्धमनुमास्यामहे । आह । नानुमानगम्यः एवंजातीयकेषु अङ्गभावः । विधानादेव अवगम्यते नान्यथा । न च समाख्या विधात्री । अत्रोच्यते । समाख्या संबन्धिनौ बुद्धौ संनिधिमुपनेष्यति, प्रयोगवचनो विधास्यतीति । तस्मात् कृत्स्नोऽनुवाको भक्षणे विनियोक्तव्यः इति ।

**वा**— समस्तानुवाकोदाहरणं कानि पदानि क्व समर्थानीति वक्ष्यमाणविषयविवेकार्थम् । अत्र सूक्तवाकवदेव प्रातःसवनादिशब्दाः, तत्सामानाधिकरण्यसंस्तुताश्च वसुमद्गणादयो गायत्रच्छन्दःप्रभृतयः इन्द्रपीतादयश्च क्रमेण यथासवनं निष्कृष्य प्रयोक्तव्याः । इदं तु विचार्यते किं समस्तोऽनुवाको भक्षणे एव विनियोक्तव्यः, उत ग्रहणावेक्षणसम्यग्जरणेष्वपि यथालिङ्गमिति । तत्र भक्षस्य

चोदितत्वात् भक्षयामिपदस्य च तत्प्रकाशनसामर्थ्यात्, आद्यन्तपदसंदंशगृहीतेतरपदानां अनन्यगामित्वात् 'ततश्चावचनं तेषामितरार्थं प्रयुज्यते' (९।१।२१।३७) इतिवत् ग्रहणादीनामपि चोदितभक्षविशेषणत्वेन एकप्रधानार्थानां एकवाक्यत्वात् तत्रैव विनियोगः इत्युक्ते, परिचोदना। 'भक्षेहि माऽऽविश' इत्यस्य भक्षणेऽप्युपपत्तिः। 'एहि वसो' इत्यादेस्तु 'सध्यासम्' इत्येवमन्तस्य ग्रहणार्थत्वम्। यद्यपि 'षधि हिंसायाम्' इति पाठात् सध्यासमित्यस्य ग्रहणार्थता न विस्पष्टा, तथापि बाहुकरणकत्वात् निर्वपतिवत् ग्रहणप्रतीतिः। अस्ति चानेकार्थत्वं धातूनाम्। ग्रहणकृतैव वा हिंसा विवक्ष्येतेत्यदोषः। तथा 'नृचक्षसम्' इत्यादेरवेक्षणार्थत्वम्। यद्यपि 'चक्षिङ् व्यक्तायां वाचि' इति स्मर्यते तथाऽपि प्रयोगेषु प्रकाशनमात्रार्थता गम्यते। तेन नृषु यः ख्यातः, स नृचक्षाः, तं अवख्येषमिति 'चक्षिङः ख्याञ्' इत्यत्र ख्येञ् इत्युपसंख्यायते। तेनावेक्षणार्थत्वम्। 'हिन्व मे गात्राणि' इति सम्यक्परिणतः शक्नोति गात्राणि प्रीणयितुम्, नाभेश्चाधस्तादगन्तुमिति सम्यग्जरणार्थता। तस्मात् लिङ्गविरोधात् अयुक्तमेकवाक्यत्वमिति। **तदुच्यते।** सर्वाण्येतानि भक्षणस्य प्रागूर्ध्वं च वर्तमानानि विशेषणं भवन्ति। तेन विशिष्टभक्षप्रकाशने अर्थात् विशेषणाक्षेपात् एकार्थत्वाविरोधः। यद्यपि च ग्रहणादीनां स्वप्राधान्यापरित्यागात् श्रौतत्वाच्च भेदेन प्रकाशनं युक्तम्, तथापि अचोदितप्रकाशने न किंचित् फलमस्तीति चोदितशेषत्वमेव युक्ततरम्। तदुक्तं निर्वापमन्त्रे। तस्मात् लिङ्गमविरुद्धम्। तथा च समाख्या अनुग्रहीष्यते। तत्र **चोदयन्ति**। सा नाम समाख्या विनियोक्त्री युक्ता, या वेदे एव पठ्यते। भक्षानुवाकसमाख्या तु असमाम्नानात् कथं विनियोक्ष्यते इति। तदुच्यते।

'**लौकिकं वैदिकं वाऽपि प्रमाणं दोषवर्जितम्। सर्वमाश्रीयते स्वार्थे न चास्मिन् दोषसंभवः॥**' यथैव वेदस्य वक्तृदोषरहितत्वात् प्रामाण्यम्, एवं लौकिकस्यापि पदस्य अनादित्वाविशेषात्। न चात्र अन्धपरम्परान्यायः। अभिधानाभिधेययोः सर्वप्रत्यक्षत्वात्। न हि अग्निहोत्रस्वर्गादिसाध्यसाधनभाववत् अनुवाकस्य अप्रत्यक्षत्वम्। अतो भक्षानुवाकशब्दवाच्योऽयं इत्येतत् तावत् प्रमाणम्। अतश्च प्रकरणे पठ्यमानमनुवाकमालोच्य समाख्या हृदयमागच्छति। सा च भक्ष्यस्यानुवाक इत्येवं विगृह्यमाणो भक्षसंबन्धः(द्धः) इत्येवं मनसि निधापयति। ततश्चोभयोर्बुद्धावुपप्लवमानयोरपेक्षावशेन तदेव संबन्धसामान्यं विशेषसंबन्धो भवति। भक्षोऽपि हि स्मारकमपेक्षते। अनुवाकोऽपि प्रकाश्यम्। अस्ति चोभयोरपि योग्यत्वमिति। तथावस्थितयोः प्रकाश्यप्रकाशकयोः प्रयोगवचनेन विधानम्। तेनापि भक्षार्थत्वमिति।

**तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वात्। २६॥**

**भाष्यम्**— नैतदेवं कृत्स्नोऽनुवाको भक्षणे विनियुज्यते इति। रूपात् ग्रहणवाक्यं ग्रहणे विनियुज्येत, एहीत्येवमादि सध्यासमित्येवमन्तम्। नृचक्षसमित्येवमादि च, अवख्येषमित्येवमन्तं दर्शने। कुतः? मुख्यार्थमेवं तद्वाक्यं भवति। इतरथा लक्षणाऽर्थता स्यात्। मुख्यार्थता च न्याय्या, न लक्ष्यार्थता। उच्यते। विशेषणानाममिधाने न किञ्चिदस्ति प्रयोजनमित्युक्तम्। अत्रोच्यते। नैवैतानि विशेषणानि। पृथगेवैतानि ग्रहणादीनि स्वैः स्वैर्वाक्यैरुच्यन्ते इति। कुतः? अस्ति हि तैः प्रयोजनम्। चोदितानि हि तानि। कानिचित्तु पृथग्वाक्यैः, कानिचिदर्थप्राप्तानि। तान्यवश्यं प्रकाशयितव्यानि। तानि प्रकाशयिष्यन्ति एतानि वाक्यानि। रूपं चैषां तत्प्रकाशनसामर्थ्यम्। अतो नानाऽर्थत्वात् नैकं वाक्यमुच्यते। ननु भक्षणवाक्यशेषीभवितुमपि एषां रूपमिति। उच्यते। बाढमस्ति रूपम्। न तु तद्विशेषणान्येतानि कल्प्यन्ते। कस्य हेतोः? अदृष्टार्थानि तथा भवन्ति। उक्तैरनुक्तैर्वा विशेषणैस्तावानेव सोऽर्थः। इतरथा ग्रहणादीनि प्रकाशयिष्यन्ति। तथा दृष्टार्थानि भविष्यन्ति। तस्माद्रूपोपदेशाभ्यां अपकर्षो भवेत् केषांचिदत्रेति।

**वा**— परिचोदनोक्तेनैव मार्गेण अपकर्षः कर्तव्यः। श्रुतिप्राधान्यानुग्रहात्। ग्रहणादिवच्च रूपेण सामर्थ्या(त्प्रकरणेन)त्मकेन लिङ्गेन वाक्यस्य बाधितत्वात्। ननु भक्षणैकवाक्यत्वमपि लिङ्गकृतमेव। सत्यम्। तथापि



श्रुतिविप्रकर्षाद्दौर्बल्यम्। ग्रहणाद्यभिधानसामर्थ्येन हि श्रुतिमनुमाय शीघ्रं विनियोगः क्रियते। इतरेण पुनरेकवाक्यता। ततो लक्षणाद्वारेण भक्षं प्रति सामर्थ्यम्, ततः श्रुत्यनुमानमिति विप्रकर्षः। तेन भक्षस्य प्रशास्त्रन्तरेण मन्त्रादिना अवरुद्धत्वात् एतेषामपि च स्वयमन्यत्राप्रवृत्तेः अपकर्षः। ननु अर्थप्राप्तानां प्रकाशनं निष्प्रयोजनम्। कथं निष्प्रयोजनम्। यदा तानि अप्यप्रकाशितानि नैव शक्यन्ते अनुष्ठातुम्। तन्नाम अर्थप्राप्तं न प्रकाश्यते, यदेवमेव विना प्रयत्नेन निष्पद्यते। ग्रहणादीनि तु सर्वाणि पृथक्प्रयत्नसाध्यानि तान्यस्मृतानि न शक्यन्ते कर्तुमिति अवश्यं स्मर्तव्यानि। भक्षविधिरपि तानि अचोदयित्वा न शक्नोति स्वार्थमनुष्ठापयितुमिति तान्यपि चोदयति। अतो मन्त्रस्वरूपात्तेषां चोपदेशात् सम्यग्जरणतन्मन्त्रयोश्च उपदेशादेव अपकर्षः, अर्थस्यैव चोदितत्वात्। तेन यद्यपि अनुदाहृतत्वात् प्रत्यक्षोपदेशोऽत्र न शक्यो वक्तुं तथापि अदोषः। सम्यग्जरणं तु वमनविरेचनयोः ('वि वा एष इन्द्रियेण वीर्येणर्ध्यते यः सोमं वमिति। तस्मात्सोमेन्द्रं चरुं निर्वपेत्सोमवामिनः' इत्यादिना) प्रायश्चित्ताम्नानात् प्रत्यक्षोपदिष्टमेव द्रष्टव्यम्।

**शा**— '**सर्वस्य भक्षणाङ्गत्वं ग्रहणादेरचोदनात्। अक्रत्वर्थो न मन्त्रस्य द्वारीभवितुमर्हति॥ भक्षानुवाकसंज्ञा च भक्षणाङ्गत्वबोधिनी। सामर्थ्यं चास्ति मन्त्रस्य भक्षणे तद्विशेषणात्॥**' तस्मात् सर्वानुवाको भक्षणाङ्गमेकं वाक्यम्। इति प्राप्ते, ब्रूमः। '**ग्रहणादौ विभागेन विनियोगोऽस्य लिङ्गतः। वाक्यसंज्ञे हि नेशाते कर्तुं लिङ्गस्य बाधनम्॥ ग्रहणादि च शास्त्रेण साक्षाद् यद्यप्यचोदितम्। तथापि चोदितार्थेन कर्तव्यत्वात् प्रकाश्यते॥**' तस्मात् विभज्य विनियोगः।

**सोम**— पूर्वत्र सामान्यसंबन्धबोधकप्रकरणेन श्रुतिस्वारस्यभङ्गवत्, इहापि सामान्यसंबन्धबोधकसमाख्यया लिङ्गस्वारस्यभङ्ग आश्रयणीयः इति प्रत्यवस्थानात् **संगतिः।** सूत्रे लिङ्गशब्दः विशिष्टभक्षणसामर्थ्यपरः।

**वि**— 'भक्षेहीत्यनुवाकोऽयं सर्वो भक्षणयोग्युत (गी उ)। ग्रहणादौ यथालिङ्गं विभज्य व्यवतिष्ठते॥, अविधेर्ग्रहणादीनां भक्षणे निखिलस्तु सः।, अर्थाक्षिप्तेषु तेष्वेव यथालिङ्गं विभज्यते॥' (तैसंसा. ३।२।९ स्थितः पाठो गृहीतोऽत्र)।

**भाट्ट**— सोमे 'भक्षेहि माऽऽविश' इत्यादिभक्षानुवाक इत्येवं समाख्यातो मन्त्रः श्रुतः। तत्र यस्तावदस्यांशो भक्षणमेव प्रतिपादयति स तत्रैव विनियुज्यते। ग्रहणावेक्षणसम्यग्जरणप्रतिपादकानां त्वंशानां किं ग्रहणादावेव विनियोगः अथवा भक्षणमन्त्रैकवाक्यतया भक्षणे एव इति चिन्तायाम्, ग्रहणादेरविहितत्वेन अपूर्वप्रत्यङ्गत्ववत् जनकत्वस्यापि अभावात्, ग्रहणस्य अर्थात् भक्षसाधकत्वेन पक्षप्राप्तावपि 'बाहुभ्यां सध्यासम्' इत्यनेनोक्तस्य बाहुद्वयकरणकस्य ग्रहणस्य कथमप्यप्राप्तेः, अवेक्षणस्य च भक्षाजनकत्वेनैव अप्राप्तेः, सम्यग्जरणस्य तदनुकूलव्यापारस्य वा भक्षोत्तरभावितया भक्षाजनकत्वेन तेषामपूर्वप्रयोजकत्वस्यापि अभावात् ग्रहणाद्यर्थत्वे आनर्थक्यापत्तेः, भक्षमन्त्रैकवाक्यतया भक्षार्थत्वमेवैषाम्। एवं च समाख्याऽपि उपपन्ना भवति। **इति प्राप्ते**, ग्रहणादिप्रत्यक्षविध्यभावेऽपि समाख्यासहकृतावान्तरप्रकरणेन भक्षसंबन्धे तत्तन्मन्त्राणामवगते लिङ्गबलेन मान्त्रवर्णिकग्रहणादिविधिकल्पनया तत्प्राप्त्युपपत्तेः तदर्थत्वेनैव मन्त्रविनियोगोपपत्तौ, न स्वतो निराकाङ्क्षयोर्द्वयोः आख्यातपदयोः कथंचिदेकवाक्यतां परिकल्प्य गौण्या भक्षार्थत्वकल्पनम्, शक्त्यैव वा भक्षविशेषणत्वेन ग्रहणादिप्रकाशकत्वकल्पनमुपपत्तिमत्। न चैवमपि सम्यग्जरणस्य कृत्यसाध्यत्वान्न विधिसंभवः, सम्यग्जरणानुकूलव्यापारस्य आसनविशेषस्यैव अनुष्ठेयस्य विधेयत्वात्। वमनविरेकनिमित्तप्रायश्चित्ताम्नानाच्च सम्यग्जरणपर्यन्तमेव भक्षणे प्रतिपत्तिरिति तस्य भक्षोपयोगिता।

**मण्डन**— 'सध्यासमन्त्रो ग्रहणस्य मन्त्रः।'

**शंकर**— 'भक्षमन्त्रे विभागः स्यात्।' १०.

**छ लिङ्गसाधारण्यात् विकल्पः स्यात्। ८।१।१६।२७॥**

सौर्ये कर्मणि दार्शपौर्णमासिको विध्यन्त इत्युक्तम्। दर्शपूर्णमासयोस्तु अनेकानि प्रधानानि। तत्र कस्य

विध्यन्तः सौर्ये स्यात् इति विचारे विकल्पः स्यात् इति पूर्वः पक्षः । कुतः ? लिङ्गसाधारण्यात् । 'प्रयाजे प्रयाजे कृष्णलं जुहोति ' इति प्रयाजवत्त्वस्य लिङ्गस्य सर्वप्रधानसाधारण्यात् । न च समुच्चयः । तस्मात् विकल्पः ।

**ऐकार्थ्याद्वा नियम्येत पूर्ववत्त्वाद्विकारो हि । २८ ॥**

सौर्ये कर्मणि दार्शपौर्णमासिकप्रधानेषु कस्यचित् विध्यन्तः विकल्पेन स्यात् इति पूर्वपक्षे सूत्रेण प्राप्ते वाशब्देन निरस्य सिद्धान्तमाह । न विकल्पः किन्तु नियम्येत । नियमेन कस्यचिदेकस्यैव प्रधानस्य स्यात् । स च विध्यन्तः आग्नेयस्यैव स्यात् । ऐकार्थ्यात् एकार्थत्वात् एकदेवतत्वात् इत्यर्थः । आग्नेयः एकदेवत्यः सौर्योऽपि । हि यस्मात् सौर्यः विकारः पूर्ववत्त्वात् पूर्वाभिहितविध्यन्तवत्त्वात् । स च पूर्वो विध्यन्तः आग्नेयस्य ।

**अश्रुतत्वान्नेति चेत् । २९ ॥**

सौर्ये यागे दार्शपौर्णमासिकाग्नेयस्यैव विध्यन्तो ग्राह्यः एकदेवतत्वसामान्यात् इति सिद्धान्तिना उक्ते पूर्वपक्षिणः शङ्का । एकदेवतत्वस्य अश्रुतत्वात् श्रुतत्वाभावात् न आग्नेयस्यैव विध्यन्तो ग्रहीतुं शक्यते । सौर्यः इत्यत्र सूर्यो देवता अस्य इति वा सूर्यौ सूर्या वा देवता अस्य इति न ज्ञायते । तथा च न नियमः । इति चेत् ।

**स्याल्लिङ्गभावात् । ३० ॥**

सौर्ये यागे आग्नेयस्यैव विध्यन्त इत्यत्र न नियमः, सौर्यशब्दे सूर्यः सूर्यौ सूर्या वा देवता अस्येति संख्यानियमाभावात् इति पूर्वपक्षिशङ्कायामुत्तरमिदम् । स्यात् एकत्वसंख्यानियमः सौर्ये एकत्वलिङ्गस्य भावात् विद्यमानत्वात् । सौर्ये तावत् ' अमुमेवादित्यं स्वेन भागधेयेनोपधावति स एवैनं ब्रह्मवर्चसं गमयति ' इति एकत्वलिङ्गं स्पष्टं तद्वाक्यशेषे । आग्नेये च ' अङ्गिरसो वा इत उत्तमाः सुवर्गं लोकमायन् ते यज्ञवास्तु अभ्यायन् ' इत्यादि ' यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति अग्निमेव स्वेन भागधेयेन समर्धयति ' इति एकत्वलिङ्गम् । एवं च एकत्वलिङ्गस्य विद्यमानत्वात् सूर्यो देवता अस्य इत्येव विग्रहः, एवं अग्निर्देवता अस्य इति विग्रहः । तस्मात् आग्नेयस्यैव विध्यन्तः सौर्ये इति सिद्धान्तः । इदं चोदनागतं लिङ्गं प्रापकम् ।

**तथा चान्यार्थदर्शनम् । ३१ ॥**

सौर्ये आग्नेयस्यैव विध्यन्तः एकदेवतत्वात् इति सिद्धान्ते चोदनागतं लिङ्गं पूर्वमुक्तं अत्र मन्त्रगतं लिङ्गमुच्यते । तथा च सूर्यदेवताया अग्निदेवतायाश्चैकत्वे अन्यार्थदर्शनं नाम लिङ्गं भवति । ' अग्निमूर्धा दिवः ' इत्यनुवाक्यायां एकत्वं आग्नेये, ' उदु त्यं जातवेदसं ' इति सौर्ये । इदं मन्त्रगतं लिङ्गं प्राप्तस्य द्योतकम् । तस्मात् सौर्ये आग्नेयस्यैव विध्यन्त इति **सिद्धान्तः । के.**

* **लिट्** । अनद्यतनपरोक्षभूतत्वं लिडर्थः । ' भूते ' ( पा. ३।२।८४ ) ' अनद्यतने० ' (पा. ३।२।१११) इत्यनुवृत्तौ ' परोक्षे लिट् ' ( पा. ३।२।११५ ) इति पाणिनीयसूत्रात् । वर्तमानाहोरात्रवृत्तिप्रागभावध्वंसान्यतराप्रतियोगुत्पत्तिकत्वं अद्यतनत्वम् । तद्भिन्नत्वं अनद्यतनत्वम् । भूतत्वं वर्तमानध्वंसप्रतियोगित्वम् । साक्षात्करोमि इत्येतादृशविषयताशालिज्ञानाविषयत्वं परोक्षत्वम् । तच्च क्रियानिष्ठम्, क्रियाविशिष्टकारकनिष्ठं वा । क्रियायाश्च पिण्डीभूतायाः तादृशप्रतीतिविषयत्वासंभवेऽपि अवयवशस्तत्संभवात् । अत एव ' पश्य मृगो धावति ' इत्यत्र धावनस्य धावनाश्रयकारकस्य वा तादृशज्ञानविषयत्वात् न लिट्प्रयोगः । ' व्याततेने किरणावलीम् ' इति भूतत्वारोपेण उपपादनीयम् । **मणि. पृ. ११६.**

* लिट् । लिडर्थोऽपि भूतानद्यतनत्वविशिष्टपारोक्ष्यरूपः भावनायामेव अन्वेति । तत्र भूतत्वं लिडुच्चारणकालीनध्वंसप्रतियोगिक्षणवत्त्वम् । तच्च कालिकसंबन्धेन कृतौ एव अन्वेति । इदं च अन्तिमकृतावेव । तेन अनेकदिनसाध्यपाकस्थलेऽपि आद्यकृतिध्वंसकाले न पपाच इति लिट्प्रयोगः । लिडुच्चारणकालीनध्वंसप्रतियोगित्वं वा । तदपि स्वरूपसंबन्धेन अन्तिमकृतौ अन्वेति । लिडुच्चारणकाल एव लिडर्थः । लिडेव वा पूर्ववत् । तस्य च स्ववृत्तिध्वंसप्रतियोगित्वादिसंबन्धेन तस्यामन्वयः । ननाश इत्यादौ भूतत्वान्वयः पूर्ववत् । अनद्यतनत्वं लिडुच्चारणदिनभिन्नदिनवृत्तित्वम् । परोक्षत्वं च प्रयोक्तृवृत्तिसाक्षात्करोमीत्येतादृशविषयताशालिज्ञानाविषयत्वम् ।



इदं द्वयमपि कृतौ अन्वेति । परं तु आद्यं साक्षात्संबन्धेन, द्वितीयं तु स्वसंबन्धिधात्वर्थावच्छिन्नत्वसंबन्धेन । चैत्रवृत्तिकृतेः प्रयोक्तृसाक्षात्काराविषयत्वेन तस्यां तदभावबोधस्य व्यर्थत्वात् । बुध्यतां वा स्वकृतौ प्रसिद्धस्य साक्षात्कारविषयत्वस्य तस्यामभावः । उत्तमपुरुषेऽपि अनवधानेन पारोक्ष्यं द्रष्टव्यम् । शक्तिस्तु अर्थत्रये प्रत्येकम् । विशेषणविशेष्यभावे विनिगमनाविरहात् । अत एव उक्तदिनस्य उक्तलक्षणेऽपि न विशेषणता । विनिगमनाविरहात् । **रहस्य. पृ. ४३.**

* **लिप्सासूत्रम्** । ४।१।२।२ ॥ **मीको. पृ.** १५०२ ' क्रत्वर्थपुरुषार्थलक्षणम् ' इत्यत्र द्रष्टव्यम् ।

* **लिप्सासूत्रोक्त-( ४।१।२।२ )न्यायेन** फलप्राप्तेरविधेयत्वात् ' यागेन स्वर्गं प्राप्नुयात् ' इत्यर्थवर्णनमनुपपन्नमित्याह— 'रागप्राप्ता फलप्राप्तिः ' । **सोम.** ६।२।२ पृ. ४६१.

* **लुङ्** । भूतसामान्यं लुङर्थः । 'भूते' ( पा. ३।२।८४ ) इत्यधिकारे ' लुङ् ' ( ३।२।११० ) इति सूत्रात् । यथा ' घटोऽभूत् ' इति । **मणि. पृ. ११८.**

* लुङ् । लुङर्थस्तु ' अपाक्षीत् ' इत्यत्र भूतत्वमात्रम् । **रहस्य. पृ. ४४.**

* **लुट्**— अनद्यतनभविष्यत्वं लुडर्थः 'भविष्यति०' ( पा. ३।३।३ ) इत्यनुवृत्तौ ' अनद्यतने लुट् ' ( पा. ३।३।१५ ) इति पाणिनीयसूत्रात् । यथा ' श्वो भविता' इति । **मणि. पृ. ११७.**

* **लुडर्थस्तु** पक्ता इत्यादौ अनद्यतनत्वविशिष्टभावित्वम् । तच्च लुडुच्चारणकालीनप्रागभावप्रतियोगिक्षणवत्त्वादिकं पूर्ववत् आद्यकृतौ एव अन्वेति । **रहस्य.** पृ. ४३.

* **लुट्प्रत्ययः** अनद्यतने एव भविष्यति काले भवति । **टुप्.** १।१।१०।३५ वर्णकं २ पृ. १६७०.

* **लुप्तार्थप्रतिप्रसवविधिः**– ' पूषा प्रपिष्टभागः ' इति तार्तीयः, दाशमिकश्च ' कृष्णलचरौ घृते श्रपयति ' इति । **बाल.** पृ. १५–१६.

* **लुप्तोपकाराणामननुष्ठानं** अलुप्तोपकाराणां तु अनुष्ठानम् । **वि.** १०।१।१.

* **लूतातन्तुन्यायः** । लूता कीटविशेषः । स यथा स्वदेहात् तन्तून् निर्माति संहरति च स्वदेहे, तथा च तस्याः स्वतस्तन्तुनिर्माणे स्वतो निमित्तकारणत्वरूपकर्तृत्वम् , स्वदेहापेक्षयोपादानकारणत्वं च, एवं ब्रह्मणो जगतां स्वतः कर्तृत्वम्, स्वशक्तिमायाद्वारोपादानत्वं च । एवं च जगत् स्वशक्त्या निर्माति, स्वशक्तौ संहरति चेत्येवं विवक्षायामस्य प्रवृत्तिरिति । **साहस्री.** ५०२.

* **लृङ्** । अनिष्पन्नयोः क्रिययोः हेतुहेतुमद्भावो लृङर्थः । ' लिङ्निमित्ते लृङ् क्रियातिपत्तौ ' ( पा. ३।३।१३९ ) इति सूत्रात् । लिङो निमित्तं हेतुहेतुमद्भावः । यथा ' सुवृष्टिश्चेदभविष्यत् सुभिक्षमपि अभविष्यत् ' ' यदि घटोऽभविष्यत् तदा अद्रक्ष्यत् ' इति । **मणि.** पृ. ११८. * लृङ् । लृङर्थस्तु हेतुहेतुमद्भावविशिष्टक्रियातिपत्तिः । यथा ' यदि सुवृष्टिरभविष्यत् तदा सुभिक्षमभविष्यत् ' इत्यत्र वृष्टिसुभिक्षयोः हेतुहेतुमद्भावात् । उभयोरनिष्पत्त्या च क्रियाऽतिपत्तिः । अयं भूते भाविनि च । ' दृष्टो मया भवतः पुत्रः अन्नार्थे चङ्क्रममाणः, दृष्टश्चापरो द्विजो ब्राह्मणार्थी, यदि तेन स दृष्टोऽभविष्यत् ततोऽभोक्ष्यत न तु भुक्तवान् ' इत्यादौ भूतेऽपि प्रयोगदर्शनात् । अनयोश्चार्थयोः साक्षादेव स्वरूपसंबन्धेन भावनान्वयः । **रहस्य.** पृ. ४४.

* **लृट्** । ' आग्नावैष्णवमेकादशकपालं निर्वपेत् दर्शपूर्णमासावारप्स्यमानः ' इति क्रियार्थायां क्रियायां उपपदे अनुशिष्टेन लृटा श्रुत्यैव आरम्भाङ्गत्वादिष्टेः विनियोक्त्री श्रुतिर्लृट् इति **भट्टसोमेश्वरमते । पार्थसारथिमते** तु नेयं श्रुतिः । यत्तु नवमे ( ९।१।१०।३३ ) ' आग्नावैष्णवमेकादशकपालं निर्वपेत् दर्शपूर्णमासावारप्स्यमानः ' इति आरम्भणीयाविधौ ' लृट्प्रत्ययोऽपि श्रुत्यैव तादर्थ्यस्याभिधायकः ' इति सिद्धान्ते मिश्रैरुक्तं तत् परमतमेव । अत एव ' आग्नावैष्णवमेकादशकपालं निर्वपेत् दीक्षिष्यमाणः ' इति लृट्श्रुतावेव ( सत्यां ) पञ्चमे (५।३।११।२९–३१ ) मिश्रैः वाक्यीयो विनियोगः उक्तः ' निरपेक्षेण वाक्येन दीक्षार्थेष्टिर्विधीयते ' इति । ( तत्रैव परस्तात् सद्य एव ' दीक्षिष्यमाण इति लृट् क्रियार्थायां क्रियायामुपपदे विधीयते । तेन दीक्षार्थत्वमिष्टेः' इत्यस्यु-

क्तम्। के. )। तन्त्ररत्नेऽपि 'परेणावेदनात्' इत्यधिकरणे पञ्चमे ( ५।३।११।२९–३१ ) उक्तम्। आग्नावैष्णवो वाक्येन दीक्षिष्यमाणपदसमभिव्याहारेण दीक्षार्थः इति। 'सोमेन यक्ष्यमाणोऽग्निमादधीत' इत्यत्रापि वाक्यीयमेव आधानोत्तरकालस्य सोमाङ्गत्वं लृटः अश्रुतित्वादेव। यदपि अत्र तन्त्ररत्नं 'यक्ष्यमाण इति च दीक्षिष्यमाण इतिवत् क्रियार्थायां क्रियायां उपपदे लृट्प्रत्ययः सोमेन यष्टुं इत्यर्थे' इति तदपि क्रियान्तरयोगे एव लृटः साधुत्वोक्तिद्वारा वाक्यीयविनियोगोपपादनार्थमेवेति संक्षेपः। **बाल.** पृ. ४७. * लृट्। भविष्यत्सामान्यं लृटोऽर्थः। यथा 'अद्य श्वो वा वटो भविष्यति' इति। एवं च 'दर्शपूर्णमासौ आरप्स्यमानोऽन्वारम्भणीयां निर्वपेत्' 'सोमेन यक्ष्यमाणः आदधीत' इत्यादौ लृडादेशशानचः साधारण्येऽपि 'लृट् शेषे च' ( पा. ३।३।१३ ) इति सूत्रेण वाक्यसार्थक्याय च अद्यतनभविष्यत्परत्वम्। **मणि.** पृ. ११७. * लृट्। लृडर्थोऽपि पश्यतीत्यादौ अद्यतनानद्यतनसाधारणं भविष्यत्त्वसामान्यं तत्रैव ( भावनायामेवान्वेति )। **रहस्य.** पृ. ४३. * लृट्। समानेऽहनि लृट् उत्पद्यते इत्येतन्न युज्यते। भविष्यत्कालसामान्ये लृट् उत्पद्यते। ननु लुटा अनद्यतनकालोत्पन्नेन अयं बाध्यते। नैतद्युक्तम्। यदि लुट् अनद्यतने विधीयमानो लृटमबाधमान आत्मानं न प्रतिलभते ततो बाधेतापि। अयमबाधमानोऽपि आत्मानं लभते, तस्मान्न बाधते। तस्मात् लृट् अनद्यतने अद्यतने च भविष्यति काले भवति। लुट्प्रत्ययस्तु अनद्यतने एव। **टुप्.** ९।१।११।३५ पृ. १६७९.

* **लृट्विनियोक्त्री** श्रुतिः सोमेश्वरमते यथा— 'आग्नावैष्णवमेकादशकपालं निर्वपेत् दर्शपूर्णमासावारप्स्यमानः'। **बाल.** पृ. ४६.

* **लेखागवयन्यायः।** सुशब्द–अपशब्दविवेचनोपायस्य प्रकृतिप्रत्ययविभागकल्पनस्य अपारमार्थिकस्यैव लेखागवयन्यायेन व्याकरणशास्त्रे व्युत्पादनाभ्युपगमः। **कु.** ३।४।८।१९ पृ. ३६१.

* लेट्। 'लिङर्थे लेट्' ( पा. ३।४।७ ) इति सूत्रात् विध्यादयः आशीश्च लेडर्थः। यथा भवाति पताति इति। अयं तु छन्दोमात्रगोचरः। **मणि.** पृ. ११७. * लेट्। लेटः पञ्चमत्वं द्वेधा ज्ञेयम्। अच्प्रत्याहारे यद्यपि एकारः षष्ठः तथापि लकारानुबन्धकस्य लकारस्याभावात् अजनुबन्धकेषु लकारेषु एकारानुबन्धकस्य लेटः पञ्चमत्वं लकारानुबन्धभूतेषु अक्षरेषु एकारस्य पञ्चमत्वात्। **यद्वा** 'धातुसंबन्धे प्रत्ययाः' इति तृतीये धात्वधिकारे 'क्रियासमभिहारे लोट्' इति लोट् विहितः। ततः 'छन्दसि लुङ्लङ्लिटः' इति लकारत्रयं विहितम्। ततः 'लिङर्थे लेट्' इति लेट् विहितः। अतः तृतीयधात्वधिकारे लकारचतुष्टयादुत्तरं विहितत्वात् पञ्चमलकारोऽयम्। दृष्टश्च विधानापेक्षः पूरणप्रत्ययः 'अथ षष्ठीं चितिं चिनुते' इत्यत्र। तदेतत् पञ्चमे प्रतिपादितमिति। **बाल.** पृ. ४०. * लेट् ( पञ्चमलकारः ) विधात्री श्रुतिः। **वा.** ३।१।७।१३ पृ. ७००. * लेट् वेदे एव। तदर्थो लिङर्थ एव 'समिधो यजति' इत्यादौ। **रहस्य.** पृ. ४४. * लेट् शब्दभावनावाचकः लेट्त्वेन। **वि.** २।१।१ वर्णकं २.

* **लोकः**। न च लोकः एवंविधेषु अर्थेषु ( वैदिके कर्मणि ) प्रमाणम्। **भा.** ३।३।७।१४ पृ. ८५७, * लोकः हि शब्दार्थावगमे प्रमाणम्। न च लोके द्वयोरर्थयोः बहुवचनान्त एकवचनान्तो वा प्रवर्तमानो दृश्यते। ९।३।४।१३. * प्रतीतमात्रव्यवहारी हि **लोकः** अभिधानलक्षणाविवेकं अकुर्वन् उदासीनावस्थः सामान्यविशेषबाधादि-( व्यवस्था ) सिद्धयथ परीक्षकैर्विवेकं क्रियमाणं न नानुमन्यते। **वा.** ३।१।६।१२ पृ. ६८३. * **लोकस्य** संकीर्णव्यवहारित्वात् साध्वसाधुत्वनिर्णायकत्वं न युक्तम्। **सु.** पृ. २६१. * प्रत्ययोत्पादमात्रेण कृतार्थस्य **लोकस्य** अभिधेय–गम्यमान–द्योत्य–विषयरूपार्थचतुष्टयविवेकानादरः ( गोत्वादिः अभिधेयोऽर्थः, गम्यमानोऽर्थो व्यक्तिः, उपसर्गाणां द्योत्योऽर्थः, गमनादिस्तिष्ठतीत्यादिधात्वर्थः, योगरूढानां पङ्कजादिशब्दानां विषयः पद्मत्वादिः इति )। **वा.** ३।८।४।१३ पृ. ९३३, * **लोके** अपि



अदृष्टार्थाः संस्काराः आचाराद्गम्यन्ते यथा ग्रामान्तरादागतानां शान्त्यर्थं अग्निलवणदध्यक्षताप्रभृतेः शिरस उपरि भ्रामणं शुचिदेशप्रतिष्ठापनं च। न चास्यानुपपत्तिः, आचारप्रामाण्यात्। २।१।४।१२ पृ. ४१२, * लोकेऽपि च यत् प्रधानं राजप्रभृति क्वचिन्नीयते, तत् आत्मना अविनाभूतानि अमात्यादीन्यङ्गान्यपि अशेषाणि आक्षिपति। यदा तु कश्चित् भृत्यानां क्वचित् गच्छति, तदा तदसंबन्धीनि भृत्यान्तराणि पदमपि न चलन्ति। तत्रावश्यं प्रयत्नान्तरमास्थेयम्, न च तदेकव्यापारसाध्यम्। २।२।३।६ पृ. ४८६. * लोकेऽपि रोगिणः स्वामिनः औषधाद्यानयन एव भृत्यो भृतिदानेन परिक्रीयते। न तु तदौषधं भृत्यः सेवते। तस्मात् इतरक्रियर्त्विजाम्, संस्कारस्तु यजमानस्य। **वि.** ३।८।३. * लोके अर्थकृता विवक्षा भवति वेदे तु शब्दकृता। **टुप्.** ९।१।४।९ पृ. १६५४. * लोके अर्थलक्षणः संव्यवहारः। येन येनार्थः संमृष्टेन, उक्तोऽनुक्तो वा, स संमृज्येतैव। **भा.** ३।१।८।१६. * 'लोके कर्मार्थलक्षणम्' ( ११।१।४।२६ ) इति अशब्दार्थेनापि व्यवहारः। **वा.** १।४।९।१२ पृ. ३४५। 'सर्वं हि दधिदानादि लोके कर्मार्थलक्षणम्। तद्वशात् क्रियमाणे तु न चिन्त्ये श्रुतिलक्षणे ॥' १।३।९।३० पृ. २९०. * 'लोके कर्मार्थलक्षणम्' इति न्यायेन विवक्षितार्थस्य तात्पर्यादेव सिद्धिः। **कौ.** १।३।९।३० पृ. १३७. * 'लोके कर्मार्थलक्षणम्'। यच्च लोकवत् इति, ( ११।१।४।२३ इत्यत्र यः पूर्वपक्षः उक्तः तत्रोच्यते ) लोके कर्म अर्थप्रधानम्। कार्यवशात् सकृदपि उक्तः असकृदाहरति, असकृदपि उक्तः सकृदाहरति नाहरति वा। ( इति उत्तरः पक्षः )। **भा.** ११।१।४।२६, * लोके कर्म अर्थलक्षणम्, शब्दलक्षणं पुनर्वेदे। ३।१।८।१७.

**लोके कर्माणि वेदवत् ततोऽधिपुरुषज्ञानम्। ६।२।४।१७ ॥**

गृहकर्म, शकटकर्म, रथकर्म इति लोके कर्माणि लौकिकानि कर्माणि वेदवत् वेदोक्तकर्मवत् आरभ्य समापनीयानि, न मध्ये त्यक्तव्यानि। कुतः ? ततोऽधिपुरुषज्ञानं पुरुषज्ञानं गृहकर्मादिविषयकं पुरुषनिष्ठं ज्ञानं ततोऽधि तक्षवेदात् तक्षशास्त्रात् भवति। तदपि शास्त्रीयं कर्म। तदपि आरभ्य समापनीयमेव इति **पूर्वः पक्षः**।

अधिपुरुषज्ञानं ततः। पुरुषं अधिकरोति इति व्युत्पत्त्या लौकिकं गृहादि कर्म अधिपुरुषमुच्यते। तस्य ज्ञानं शिल्पशास्त्रात् भवति इति **कुतूहलम्**।

**अपराधेऽपि च तैः शास्त्रम्। १८ ॥**

गृहकर्म रथकर्म इत्यादीनां लौकिकानां कर्मणां यथा तक्षशास्त्रं ज्ञापकं तथा अपराधेऽपि तेषु कर्मसु कस्मिंश्चित् अपराधे जाते तैः तक्षाचार्यैः शास्त्रं आम्नायते 'आरे भग्ने इन्द्रबाहुर्वद्धव्यः, पायसं च ब्राह्मणो भोजयितव्यः' इति। यथा गृहादिकर्मज्ञापकं शास्त्रं तथा अपराधे प्रायश्चित्तज्ञापकमपि तक्षशास्त्रं विद्यते एव। तस्मादपि लौकिकमपि कर्म आरभ्य समापनीयमेव इति पूर्वपक्षसाधकं हेत्वन्तरमुक्तम्। हेत्वन्तरसमुच्चयार्थश्चकारः। अपिशब्दो दृष्टान्तार्थः।

आरे भग्ने। आरः अर एव रथचक्रावयवः प्रसिद्धः।

**अशास्त्रा तूपसंप्राप्तिः, शास्त्रं स्यान्न प्रकल्पकं, तस्मादर्थेन गम्येताप्राप्ते वा शास्त्रमर्थवत्। १९ ॥**

लौकिकानि गृहशकटरथादिकर्माणि आरब्धानि सन्ति समापयितव्यान्येव इति पूर्वपक्षे सिद्धान्तसूत्रमिदम्। तु–शब्दः पूर्वपक्षव्यावृत्त्यर्थः। गृहशकटादिकर्मणां या उपसंप्राप्तिः तक्षशास्त्रद्वारा ज्ञानं भवति सा अशास्त्रा। नास्ति वैदिकं शास्त्रं तत्र मूलम्। न च तक्षस्मृत्या वेदानुमानं भविष्यतीति वाच्यम्। शास्त्रं स्यान्न प्रकल्पकं तक्षस्मृत्या प्रोक्ताया गृहादिरचनायाश्च रमणीयतायाश्च वेदरूपं शास्त्रं न प्रकल्पकम्। तक्षस्मृत्या वेदानुमानं कर्तुं न शक्यते इत्यर्थः। यतः, तस्मादर्थेन गम्येत तक्षशास्त्रात् रचनादि च रमणीयतादि च अर्थेन लोकसिद्धेन प्रयोजनेनैव गम्येत नात्र वेदापेक्षा। तस्मात् तक्षशास्त्रात् न वेदमूलकत्वानुमानम्। लोकतः अप्राप्ते तु शास्त्रं आम्नायः अर्थवत् अर्थवान् सफलः। प्रमाणान्तरेण प्राप्तेऽपि तदर्थविधायकस्य आम्नायस्य आनर्थक्यापत्तिः। तस्मात् लौकिककर्मणां समाप्तिनियमो नास्ति। वाशब्दः अविवक्षितः।

**सुबोधिन्यनुसारेण** तु अयं सूत्रार्थः-- उपसंप्राप्तिः गृहनिर्माणादिप्राप्तिः अशास्त्रा निर्मूला । शास्त्रं न प्रकल्पकं स्वमूलवेदानुमापकं नेत्यर्थः । अर्थेन स्वरक्षणादिप्रयोजनेन गम्येत ज्ञातव्यः । अप्राप्ते गृहनिर्माणादिकौशल्यशून्ये पुरुषे शास्त्रं अर्थवत् सफलम् । स्वबुद्ध्या कर्तुमक्षमः शास्त्रं दृष्ट्वा कुर्यादित्यर्थः । इति । [कर्म आरब्धं समापनीयमेव इति भाष्योत्प्रेक्षितं एकदेशिमतं न रमणीयम् । कामशब्दस्य विध्यपेक्षितफलपरत्वे संभवति अनपेक्षितनिमित्तपरत्वस्य अन्याय्यत्वात् । फलकामे निमित्ते यागस्य सुखदुःखभावनात्मकस्य कष्टात्मकस्य कर्तव्यत्वोपदेशानुपपत्त्या ततः फलान्तरकल्पनापत्तेश्च । ततश्च फलार्थिनः कर्मविधानात् प्रक्रान्ते कर्मणि वीतरागस्य न समापननियमः । कु. ६।३।४।१९.] **के.**

* लोके क्रियाकर्तुः दानं भृतिरूपं दृष्टम् । **वृ.** * लोके 'गां आनय' इत्यादिप्रयोगे पदपदार्थयोरेव संगतिर्गृह्यते । वाक्यं तु आकाङ्क्षा–योग्यता–संनिधि–वशात् स्वार्थं प्रतिपादयति । **वि.** १।१।७. * लोके यथा ग्रामान्तरादागतानां पुरुषाणां पर्यग्निकरणेन अदृष्ट उपकारः क्रियते इत्युच्यते, लोके च नानुपपत्तिः । **भा.** २।१।४।१२, * लोके येष्वर्थेषु प्रसिद्धानि पदानि, तानि सति संभवे तदर्थान्येव सूत्रेषु इत्यवगन्तव्यम् । नाध्याहारादिभिरेषां परिकल्पनीयोऽर्थः परिभाषितव्यो वा । १।१।१।१, * लोके विदितपूर्वा अर्था उच्यन्ते बहुक्षीरादयः ( इयं गौः क्रेतव्या बहुक्षीरा० ) । तेषां विज्ञानमेव न प्रयोजनम् । अतः प्रशंसा गम्यते । अविदितवादे न श्रद्दधीरन् पूर्ववचनादिव । विदितत्वादेव च प्रोच्यन्ते । १।२।२।२१. * लोके हि पुत्राणां पितृधने समविभागो दृष्टः । **वि.** १०।३।१३. * लोकश्च इत्थमपि व्यवहरमाणो दृश्यते । न च **लोके** पर्यनुयोगावकाशोऽस्ति, अनादित्वात् । **ऋजु.** पृ. ९१.

* '**लोकावगतसामर्थ्यः** शब्दो वेदेऽपि बोधकः' इति न्यायेन व्युत्पत्त्यनुसारी वेदार्थो वर्णनीयः । **वि.** १।१।२ ( गुरुमते ).

* **लोकप्रसिद्धिः** नाम प्रमाणं प्रत्यक्षान्तर्गतमेव । **मणि.** ६२.

* **लोकप्रसिद्धिप्रतीक्षे** वेदे यत्र एकदेशेऽपि जातिनिमित्तता लभ्यते न तत्र पुनर्निमित्तान्तरशक्तिकल्पना संभवति । **वा.** १।८।७।१० पृ. ३४३.

* **लोकप्रसिद्धिविपरीतान्योन्यसंबन्धसंख्याकारक**मात्रवाचित्वापत्तिपरिहारार्थं विशेषणविशेष्यता उचिता इति न्यायः । 'भावनातः प्राप्तत्वात्०' इति न्याये **मीको.** पृ. ३०३० इत्यत्र द्रष्टव्यम् । **सु.** पृ. १४२६.

* **लोकवत्** । यथा इयं **गौः** क्रेतव्या देवदत्तीया, एषा हि बहुक्षीरा, स्थ्यपत्या, अनष्टप्रजा चेति । क्रेतव्या इत्यप्युक्त गुणाभिधानात् प्रवर्तन्तेतरां क्रेतारः । बहुक्षीरा इति च गुणाभिधानमवगम्यते । तद्वत् 'औदुम्बरो यूपो भवति, ऊर्जोऽवरुद्ध्यै' इत्यादौ वेदेऽपि भविष्यति । **भा.** १।२।२।२०, * लोकवत् । यथा 'मत्स्यान् न पयसा समश्नीयात्' इति । यद्यपि सगुणा मत्स्या भवन्ति तथापि पयसा सह न समश्यन्ते । १०।७।१५।६६. * लोकवत् । यथा लोके एकस्मिन्नर्थे बहुवचनं न प्रयुज्यते । ११।४।१९।५२, * लोकवत् । यथा लोके काष्ठवाहप्रभृतिभ्यो यद्दीयते, तत्र काष्ठवाहाः स्वामिना सह पणन्ते । तेभ्यः स्वामी विभज्य निर्दिशति, इदं तुभ्यमिदं तुभ्यं इति । १०।३।१२।५१, * लोकवत् । यथा लोके 'शतं देवदत्तयज्ञदत्तयोर्दीयताम्' इत्युक्ते समासार्थो विधीयते, यदेतत् शतं तत् एतयोः दीयतामिति । द्वन्द्वश्रुतिविधानसामर्थ्यात् शतं विभज्यते । १०।६।४।८, * लोकवत् । लोकेऽपि पय एव घनीभावयितुं दध्युपादीयते । कथम् ? दध्यभावे अन्येन अम्लेनापि काञ्जिकादिना क्रियते, तत्रापि च आमिक्षाशब्दो भवति । ८।२।४।२२, * लोकवत् । लोकेऽपि हि काष्ठवाहप्रभृतिभ्यो यद्दीयते, तदसंकीर्तितेऽपि परिक्रये आनमनार्थमेव भवति । १०।२।८।२३, * लोकवत् । 'शतमाभ्यां दीयताम्' इति एकजातीयानां शतं न भिन्नजातीयानाम् । १०।३।११।४४.

* **लोकवाक्यशेषयोर्विरोधे** बलाबलम् । **वा.** १।३।८।९ पृ. २२१–२२४. इदं **मीको.** पृ. १९७३ 'त्रिवृच्चर्वाश्ववालाधिकरणं' इति बिन्दौ द्रष्टव्यम् ।



- **लोकवेदाधिकरणम्** । उत्सूत्रम् । १ । ३ । ९ । ३० **वर्णकं १ ॥**

**भाष्यम्**— 'अथ गौः इत्येवमादयः शब्दाः किं आकृतेः प्रमाणं उत व्यक्तेः इति संदेहः । उच्यते । इदं तावत् परीक्ष्यताम्, किं य एव लौकिकाः शब्दाः त एव वैदिकाः उत अन्ये इति । यदा त एव तदापि किं त एवैषामर्थाः ये लोके उतान्ये इति संशयः । तत्रान्ये लौकिकाः शब्दाः अन्ये वैदिकाः, अन्ये चैषामर्थाः इति ब्रूमः । कुतः ? व्यपदेशभेदात् रूपभेदाच्च । इमे लौकिकाः इमे वैदिकाः इति व्यपदेशभेदः । 'अग्निर्वृत्राणि जङ्घनत्' इति अन्यदिदं रूपं लौकिकादग्निशब्दात् । शब्दान्यत्वाच्च न त एवार्थाः । अपि च समामनन्ति 'उत्ताना वै देवगवा वहन्ति' इति । ये देवानां गावः ते उत्ताना वहन्ति इत्युक्ते गम्यत एव, ये उत्ताना वहन्ति ते गोशब्देनोच्यन्ते इति । तस्मादन्यो वैदिकगोशब्दस्य अर्थः । तथा 'देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थम्' इति हिरण्यपर्णो वै देववनस्पतिर्वेदे । 'एतद्वै दैव्यं मधु यद् घृतम्' इति वेदे घृते मधुशब्दः । तस्मात् अमीषामन्ये अर्थाः । **इति प्राप्ते, ब्रूमः ।** य एव **लौकिकाः** शब्दाः त एव वैदिकाः, त एवैषां अर्थाः इति । कुतः ? प्रयोगचोदनाभावात् । एवं प्रयोगचोदना संभवति, यदि त एव शब्दाः त एवार्थाः । इतरथा शब्दान्यत्वे अर्थो न प्रतीयेत । तस्मादेकशब्दत्वमिति । उच्यते । प्रयोजनमिदम् । हेतुर्व्यपदिश्यतामिति । ततो हेतुरुच्यते अविभागादिति । न तेषामेषां च विभागमुपलभामहे । अत एव एकशब्दत्वं तांश्च तांश्च अर्थानवगच्छामः, अतो नान्यत्वं च वदामः ।

यच्चोक्तं 'ये उत्ताना वहन्ति ते देवगवाः, यद् घृतं तन्मधु, यो हिरण्यपर्णः स वनस्पतिः' इति । नास्ति वचनं यत् उत्तानानां वहतां गोत्वं ब्रूयात् । ये गावस्ते उत्ताना वहन्ति इत्येवं तत् । यदि च अनेन वचनेन गोत्वं विधीयते, उत्ताना वहन्ति इत्यनुवादः स्यात् । न चोत्ताना वहन्तः प्रसिद्धाः केचित् । ते नियोगतो विधातव्याः । तेषु विधीयमानेषु न शक्यं गोत्वं विधातुम् । भिद्यते हि तथा वाक्यम् । यदि चान्ये वैदिकाः, ततः उत्तानादीनामर्थो न गम्येत, तत्र नतरां शक्येत अविज्ञातलक्षणं गोत्वं विज्ञातुम् । न च उत्तानवहनवचनमपि अनर्थकम्, स्तुत्यर्थेन अर्थवत् भविष्यतीति । एवं घृतस्य मधुत्वम्, हिरण्यपर्णता च वनस्पतेः । तस्मात् त एव शब्दा अर्थाश्च ।

**वा**-- इह नाम-आख्यात-उपसर्ग-निपातानां मध्यात् नामानि परिगृह्यन्ते । तेषामपि जाति–गुण–क्रिया–द्रव्य–यदृच्छा–सर्वनाम– शब्दानां मध्यात् जातिशब्दाश्रिन्यन्ते । तेषामप्येकं गोशब्दमुदाहृत्य विचार्यते किं पुनरयं आकृतेर्वाचकः अथ व्यक्तेः इति । ततः '**एतत् सांन्यासिकं कृत्वा वक्ष्यमाणं तु, सांप्रतम् । उपायफलसिद्ध्यर्थमिदं तावद्विचार्यते ॥**' [ वक्ष्यमाणं आकृत्यर्थकत्वं सांन्यासिकं निक्षेपत्वेन स्वमनस्येव गुप्तत्वेन कृत्वा, सांप्रतं आदौ, उपायसिद्ध्यर्थं फलसिद्ध्यर्थं च अन्यत् विचार्यते इत्यर्थः । सुधायां तु 'वक्ष्यमाणं पूर्वपक्षादि सांन्यासिकं त्यागार्हं कृत्वा संप्रति इदं तावत् विचार्यते इत्यन्वयः । त्यागार्थात् संन्यासप्रातिपदिकात् 'तदर्हति' ( पा० ५।१।६३ ) इत्यस्मिन्नर्थे ( लब्धुं योग्यो भवति इत्यर्थे इति सिद्धान्तकौमुदी ) ठगुत्पत्तेः सांन्यासिकपदव्युत्पत्तिः । इत्युक्तम् ] किं ये एव **लौकिकाः** शब्दाः ते एव वैदिकाः ते एव चैषामर्थाः उतान्ये इति । आह '**किं लोकवेदशब्दानामेकत्वप्रतिपादने । प्रयोजनं, यतः पूर्वं तावत् तत् प्रतिपाद्यते ॥**' उच्यते– '**फलमस्य विचारस्य वैदिकेषु भविष्यति । लोके च निर्णयोपायस्तेनैकत्वाय यत्यते ॥**' यदि शब्दार्थानामनन्यत्वं लोकवेदयोर्भवेत्, तत एतस्या व्यक्त्याकृत्यभिधानचिन्ताया वृद्धव्यवहारस्य अनेकप्रयोगानुसरणद्वारेण अभिधेयानभिधेयत्वनिर्णयः शक्यते कर्तुम् । '**प्रयोजनं तु लोकस्य न किंचिदपि सिध्यति । आकृतिव्यक्तिवाच्यत्वपरमार्थनिरूपणात् ॥**' संमूर्छितानेकार्थसंनिधाने हि शब्दः प्रयुक्तः कियत्यपि अर्थजाते प्रत्ययं करोति । तेन च अविविक्ताभिधेयगम्यमानांशेनापि समस्तधर्मोपेतेन कार्यसिद्धौ क्रियमाणायां प्रयुक्तः । ' **यद्युच्यमानया**

कार्यं यदि वा जातिगम्यया । समस्तं क्रियते व्यक्त्या को विवेकधियो गुणः ॥' यदि उच्येत इहापि वेदवत् सामान्यविशेषलक्षणबाधसिद्धिरेव प्रयोजनमिति । तदुच्यते– " सर्वं हि दधिदानादि 'लोके कर्मार्थलक्षणम्' ( ११।१।४।२६ ) । तद्वशात् क्रियमाणे तु न चिन्त्ये श्रुतिलक्षणे ॥ तेन लोके विचारोऽयं जायते निष्प्रयोजनः । स्यात् प्रयोजनवान् वेदे ज्ञानोपायस्तु दुर्लभः ॥ तेन शब्दार्थभिन्नत्वे व्यक्त्याकृतिविचारणा । वाच्यावाच्यविवेकाय न कर्तव्या कथंचन ॥ अभेदे सति लोकस्थैः कृतः शब्दार्थनिर्णयः । तस्मिन्ननुपयुक्तोऽपि फलं वेदेषु दास्यति ॥" तेन लौकिकवैदिकशब्दार्थैकत्वे सति आकृत्यधिकरणं उपपत्तिमत्त्वात् प्रयोजनवत्त्वाच्च आरब्धव्यम् । भेदपक्षे तु अनारम्भ्यं इत्यवधृत्य भेदपक्षस्तावत् प्रतिपाद्यते । नियतानियतस्वर-च्छान्दसप्रकृतिप्रत्ययलोपागमवर्णविकार–सदसद्भावकृतरूपभेदात् अध्यायानध्याय–उपनीतानुपनीत– त्रैवर्णिकचातुर्वर्ण्यप्रयोज्याप्रयोज्यत्व–गुरुशुश्रूषाराधितगुरुसंप्रदाय–यदृच्छाप्रयुक्तवाक्यतदर्थान्यत्ववत् यदि पदपदार्थान्यत्वं लोकवेदयोः ततो लौकिकानामेव व्यवहारोपनिपातात् अर्थवत्ता । वेदे तु आनर्थक्यात् न चोदनालक्षणो धर्मः । स्वरेण रूपभेदं मन्यते । अध्यायानध्यायतया वृत्रहननाद्यर्थयोगेन च अविदग्धवाक्यवत् उत्तानवहनवाक्यभङ्गः । सर्वेषां च वैदिकानां अन्यत्वात् न ततोऽपि पौर्वापर्येणार्थावगतिः । ग्राह्यत्वादिधर्मभेदनियतानियतपदवाक्यरचनाद्वारा व्यपदेशरूपभेदाभ्यां सर्वशब्दानां अर्थानां लौकिकानां वैदिकानां च भेदः । इति प्राप्ते, अभिधीयते । 'प्रयोगचोदनाऽभावादेकत्वं तेषु गम्यते । तस्मात् सिद्धिः फलत्वाच्चेदविभागाद् भविष्यति ॥' भेदे सति अपूर्वात् सर्ववैदिकपदानां अनवगतसंबन्धेन अर्थशून्यत्वात् क्रियाकारकसंसर्गात्मकप्रयोगचोदनानां अभाव एव स्यात् । 'एकत्वे सति सद्भावादिति वा हेतुवर्णना । अर्थैकत्वं प्रधानत्वाद् वस्त्वभेदोऽथवोच्यते ॥' शब्दार्थैकत्वं इति वक्तव्ये अर्थैकत्ववचनं फलादेव शब्दैकत्वोक्तिसिद्धिं मत्वा एवमुक्तम् । अथवा वस्तुमात्रपर्यायत्वात् उभयसाधारण्याभिप्रायेणैव अर्थैकत्वोक्तिः । प्रयोगचोदनाऽभावप्रसङ्गः परपक्षे स्वपक्षे वा तद्भावसिद्धिः वेदवादिनैव सह विवादे अवकल्पते नान्येन इत्यत आह– 'प्रयोजनमिदं' तत्प्रमाणमभिधीयतां इति । तदुच्यते । प्रत्यभिज्ञारूपप्रत्ययाविभागात्, ज्ञायमानोभयप्रमेयरूपाविभागाद्वा, वाक्यतत्समूहमात्रनिबन्धनापन्नपदवर्णविषयत्वव्यपदेशाविभागाद्वा, तथा उच्चारयितॄणां स्थानकरणप्रयत्नाविभागाद्वा, लक्षणविदां बहुतरानुगमनाविभागात् इति हेत्वर्थविकल्पाः । 'प्रत्यक्षप्रत्यभिज्ञानाच्छब्दैकत्वं प्रतिष्ठितम् । एकशब्दोत्थितज्ञानग्राह्यत्वाच्चैकवाक्यता ॥ यथाश्रुतगवादीनां याऽपि वाच्यान्तरे श्रुतिः । अर्थैकत्वाविरोधेन गुणमात्रान्यता परा ॥ यथा हि वामना गावो नराश्चिपिटनासिकाः । कर्णप्रावरणाश्चान्ये नरार्थत्वाच्च न च्युताः ॥ एवं सत्येव गोत्वादौ धर्मो यदि विलक्षणः । नैतावताऽर्थभेदोऽस्ति विशेषानभिधानतः ॥' न च या एव देवानां गावः ता एव अवश्यं सर्वत्र वैदिकस्य गोशब्दस्य वाच्या भवन्ति । मनुष्यगवीषु दक्षिणादिसाधनेषु सुतरां प्रयुज्यमानत्वात् । 'एवं हिरण्यपर्णत्वं मेरौ यदि वनस्पतेः । देवलोके, ततः शब्दः किमर्थान्तरवाच्ययम् ॥ यच्चैतद् घृतमस्माकं देवानां मध्विदं यदि । रसवीर्यादिभिस्तत्र न शब्दार्थोऽन्यथा भवेत् ॥ न च सर्वाप्रसिद्धत्वे गम्येतैकोऽपि कश्चन । तेनासिद्धरसिद्धानां नास्त्यन्यत्वनिरूपणम् ॥' अतः अवश्यमेतेषामेव गवादीनां देवसंबद्धानां उत्तानवहनप्रतिपादनं इति वक्तव्यम् । अथवा भूमिष्ठानामेव सतां केनापि गुणवादेन पृथिवीगोलकत्रैलोक्यभ्रमणादिना वा पुराणोक्तेन दृष्टिवशात् यथैव वयं उपरि देवान् पश्यामः, एवमधोदेशस्य उपरिवर्तनात् अयमपि लोको देवैरुपरि दृश्यते इति उत्तानवहनदृष्टिः । तस्मात् लोकवेदयोः अभिन्नाः शब्दार्था इति सिद्धम् ।

शा–– आकृत्यधिकरणोपोद्घाततया लोकवेदयोः पदपदार्थानां अन्यत्वानन्यत्वे विचार्येते । तत्र सिद्धान्तः 'प्रत्यक्षप्रत्यभिज्ञानाद् वर्णैकत्वं प्रतिष्ठितम् ।



वर्णात्मकं पदं तच्च तदभेदान्न भिद्यते ॥' तस्मात् सिद्धमेकत्वं लोकवेदयोः पदपदार्थानाम् ।

**सोम**–– लोकवेदाधिकरणस्य आकृत्यधिकरणोपोद्घातत्वात् संगतिः ।

**वि**–– 'लोके पदपदार्थौ यौ न तौ वेदेऽथवाऽत्र तौ ।, रूपभेदात् पदं भिन्नमुत्तानादिभिदा स्फुटा ॥, वर्णैकत्वात् पदैकत्वं काचित्का रूपभिन्नता । प्रायिकेण पदैक्येन तदर्थैक्यं तथाविधम् ॥'

**भाट्ट**—— वाचकशब्दप्रसङ्गात् वाच्यं किं घटत्वादिजातिः उत व्यक्तिः इति चिन्ता । तदर्थं च लोकवेदयोः शब्दानामन्यत्वं उत न इति चिन्तनीयम् । अन्यत्वे हि उपायाभावेन वैदिकशब्दशक्तिग्रहस्यापि असंभवात् नाद्या चिन्ता आरम्भणीया । एकत्वे तु लोकवृद्धव्यवहारानुसारेण गृहीता शक्तिः वेदेऽपि फलिष्यति इति युक्ता आद्या चिन्ता ।

तत्र वर्णाभेदेऽपि स्वर–च्छान्दसवर्णागमलोपविकार–अध्यायानध्यायादिधर्मभेदात् सरो रस इत्यादिपदयोरिव लोकवेदयोः पदानामन्यत्वम् । इति प्राप्ते, यत्र अर्थभेदप्रतीत्यनुगुणधर्मभेदः तत्र पदभेदः यथा सरो रस इत्यादौ क्रमात्, 'ब्रह्म ब्राह्मण' इति न्यूनातिरिक्तत्वात्, 'स्थूलपृषती' इत्यत्र कर्मधारयबहुव्रीह्योः स्वरात् अन्तोदात्त–आद्युदात्तत्वरूपात्, 'पचते दक्षिणां देहि, भोजनार्थं पचते' इत्यत्र व्यधिकरणपदसंनिधिरूपात् वाक्यात्, 'यातः पुनरायाति, यातो देवदत्तयज्ञदत्तौ' इत्यत्र समानाधिकरणपदसंनिधिरूपया श्रुत्या, अश्वः इति अगमः इत्यर्थे व्याकरणस्मृत्या तदभिज्ञस्य पदभेदानुभवात् । यत्र तु नार्थभेदप्रतीतिः तत्र सत्यपि धर्मभेदे दृढतरप्रत्यभिज्ञाबलेन एकत्वावधारणात् न पदान्यत्वं लोकवेदयोः इति युक्ता आद्या चिन्ता ।

**मण्डन**—— 'लोके च वेदे च न शब्दभेदः ।'

**शंकर**—— 'अर्थैक्यं लोकवेदयोः ।' १८.

* वाचकप्रसङ्गात् वाच्यांशनिर्धारणाय प्रवर्तिष्यमाणाकृत्यधिकरणोपोद्घातत्वेन लौकिकानां वैदिकानां च शब्दानां तदर्थानां चानन्यत्वं निर्णेतुं **लोकवेदाधिकरणं** आरभ्यते । कु. १।३।१०।२९. * **लोकवेदाधिकरणे** कात्यायनादिप्रतिपादितस्य 'व्यक्तिरेव वाच्या' इति पक्षस्य प्रसक्तं प्रामाण्यं अपोद्यते । **कौ.** १।३।९।३० पृ. १३५.

* आकृत्यधिकरणपूर्वपक्षपरमपि सूत्रं ( प्रयोगचोदनाभावार्थैकत्वमविभागात्' १।३।९।३० ) **लोकवेदाधिकरणसिद्धान्ते**ऽपि योज्यम् । **कौ.** १।३।९।३०.

* **लोकवेदसिद्ध**शब्दप्रयोगोत्तरकालप्रणीतं व्याकरणम् । **वा.** १।३।८।२४ पृ. २७४.

* **लोकव्यवहारवेलायां** संस्काराणामभावः ( बर्हिराज्यादिषु ) । **वा.** १।४।७।१० पृ. ३४३.

* 'वेदेनापि च संस्कारात् प्रागेव च्छेदनादिकात् । तद्विधौ जातिशब्दत्वमाश्रितं **लोकसंमतम्** ॥' **वा.** १।४।७।१० पृ. ३४३.

* **लोकंपृणा** इष्टका 'लोकं पृण छिद्रं पृण' इत्यनेन मन्त्रेण उपधीयमानेष्टका । **वि.** ५।३।८. * **लोकंपृणाभिः** एकविंशत्या पुनश्चितिः अग्निचित एव केवलसोमयागे गुणविधिः । **संकर्ष.** १।३।१३. * **लोकंपृणायाः** चयने आवृत्तौ, तन्मन्त्रस्यापि आवृत्तिः । **भा.** ११।४।१२।४२, * लोकंपृणायाः प्राक्, चित्रिण्यादयः इष्टकाः मध्यमायां चितौ उपधेयाः । ५।३।८।२०.

* **लोकंपृणामन्त्रेण** उपधानम्, सूददोहसा च अभिमन्त्रणम्, न तु द्वाभ्यां मिलित्वा उपधानम् । **संकर्ष.** २।१।४१. **मीको.** पृ. ४६ 'अग्निचयने लोकंपृणमन्त्रेण०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **लोकायतं** नास्तिकशास्त्रम्, तत्र तिष्ठन्ति इति लोकायतस्थाः चार्वाकाः धर्मनाशकयुक्तिजालसंपन्नाः । **सु.** पृ. १३६.

* **लोट्** प्रतिषेधे श्रौतो यथा– उदाहरणं मृग्यम् । **बाल.** पृ. ४०. * लोट् विधात्री श्रुतिः । **वा.** ३।१।७।१३ पृ. ७००. * लोट् विधौ श्रौतो यथा– 'एकधास्य त्वचमाच्छयतात्' इति । अयं च मन्त्रगतोऽपि लोट् विधौ ज्ञेयः, एकेन प्रकारेण त्वगाच्छेदस्याप्राप्तेः । **बाल.** पृ. ३९. * लोट् शब्दभावनावाचको लोट्त्वेन । **वि.** २।१।१ वर्णक २. * प्राप्तकाले **लोटं** वक्ष्यामः । सत्यां विवक्षायां युष्मदादिषु मध्यमादयः । यदा तव प्राप्तः काल इति विवक्ष्यते, तदा युष्मद्येव मध्यमो नास्मदि

शेषे वा । यदा खलु क्रियायाः प्रातः काल इत्येतावत् विवक्ष्यते न तत्र मम वेति, न तदा युष्मदादीनामनुरोधेन मध्यमादयो भवितुमर्हन्ति इति पूर्वपक्षे । भा. ३।८। ११।२२.

* **लोडर्थः** अपि लिङर्थ एव । प्रैषादयः कृत्यप्रत्ययार्थाश्च ' प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ' ( पा. ३।३। १३६ ) इति सूत्रे चकारेण लोटोऽपि अनुकर्षणात् । **रहस्य.** पृ. ४४. * विध्यादयः आशीश्च **लोडर्थः** । ' लोट् च ' ( पा. ३।३।१६२ ) ' आशिषि लिङ्लोटौ ' ( पा. ३।३।१७३ ) इति पाणिनीयसूत्रात् । यथा ' मा भवतु ' ' भवतात् ' इति । ' तुह्योस्तातङ्ङाशिष्यन्यतरस्यां ' ( पा. ७।१।३५ ) इति सूत्रेण आशिषि तातङ्विधानात् । **मणि.** पृ. ११७.

* **लोपः** अभिघारणस्य शतकृष्णलचरौ । १०।२। २।३–१३. **मीको.** पृ. १४७६ ' कृष्णलचरौ उपस्तरणाभिघारणयोर्बाधः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * लोपः आधानादीनां संस्काराणां भ्राष्ट्रादिकाम्येऽग्नौ चयने । १२।४।९।२८–२९. **मीको.** पृ. ४८ ' अग्निचयने श्रुतस्य० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * लोपः उपस्तरणस्य शतकृष्णलचरौ । १०।२।२।३–१३. **मीको.** पृ. १४७६ ' कृष्णलचरौ उपस्तरणाभिघारणयोर्बाधः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * लोपः गुणकामानां काम्यकर्मादीनां अस्थियज्ञस्य मृताधिकारित्वपक्षे । १०।२।२०। ५२. **मीको.** पृ. ७६० ( ३ ) ' अस्थियज्ञस्य मृताधिकारित्वपक्षे गुणकामानां नानुष्ठानम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * लोपः जपानां वपनादिसंस्काराणां दीक्षणीयेष्टेश्च अस्थियज्ञस्य मृताधिकारित्वपक्षे । १० । २ । १८ । ५०. **मीको.** पृ. ७६० (४) 'अस्थियज्ञस्य मृताधिकारित्वजप– संस्कार– इष्टीनां लोपः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * लोपः न क्रत्वर्थानां अस्थियज्ञस्य मृताधिकारित्वपक्षे । १०।२।१९।५१. **मीको.** पृ. ७६० ( ३ ) ' अस्थियज्ञस्य मृताधिकारित्वपक्षे क्रत्वर्थानां अनुष्ठानम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * लोपः निरसनस्य लोहितस्याभावे नाशे वा । प्रायश्चित्तं तु लोपनिमित्तं भवत्येव अग्नीषोमीये पशौ । शकृल्लोहिताधिकरणम् । ४।१।१२। २७. * लोपः शेषकार्यस्य, शेषकार्यार्थमवत्तस्य द्रव्यस्य नाशे । ६।४।२।३. **मीको.** पृ. २०७३ ' दर्शपूर्णमासादौ स्विष्टकृदादि० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * लोपः संप्रवेधस्य, शकृतः अभावे नाशे वा । प्रायश्चित्तं तु लोपनिमित्तं भवत्येव अग्नीषोमीये पशौ । शकृल्लोहिताधिकरणम् । ४।१।१२।२७. * लोपः सूक्तवाकान्तर्गतायुरादिफलप्रकाशकभागस्य अस्थियज्ञस्य मृताधिकारित्वपक्षे । १०।२।२१।५३–५५. **मीको.** पृ. ७६० ( ५ ) ' अस्थियज्ञस्य मृताधिकारित्वपक्षे सूक्तवाकान्तर्गता० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * लोपः स्विष्टकृद्यागस्य, एककपालस्य सर्वहोमे ( कृते ) आज्येन समापनमपि नास्ति । **भाट्ट.** ४।१।१७. **मीको.** पृ. १०१५ ' आश्रयिन्यायः ' इत्यत्र द्रष्टव्यम् । * लोपः होतृकामनया अनुष्ठीयमानानां गुणकामानां अस्थियज्ञस्य मृताधिकारित्वपक्षे । १०।२।२२।५६–५७. **मीको.** पृ. ७६० ( ६ ) ' अस्थियज्ञस्य मृताधिकारित्वपक्षे होतृकामनया० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **लोभेन** यथा पुरुषः प्रवर्तते नहि तथा विधिशतेनापि । **वा.** ३।४।१०।२८ पृ. ९६०, * **लोभात्** पतितयाजनमङ्गीकृत्य यो याजयिष्यति, तदपेक्षं ' ब्रह्महा अश्वमेधेन यजेत ' इति विधानम् । न तु तद्विधानान्यथानुपपत्त्या याजनं इतरेषामपि विहितमिति कल्प्यते । ३।४।१०।२८ पृ. ९६०. * लोभात् वास आदित्समाना औदुम्बरीं कृत्स्नां वेष्टितवन्तः केचित्, तस्मृतेर्बीजम् । **भा.** १।३।२।४ पृ. १८६.

* **लोभमूलिका** स्मृतिर्न प्रमाणम् । **भा.** १।३। २।४.

**लोष्टप्रस्तरन्यायः ।** लोष्टो मृत्पिण्डः । प्रस्तरः पाषाणः । यत्र लघुतरवस्त्वपेक्षया गुरुतरवस्तुनस्तत्त्वं ज्ञायते, तत्रास्य प्रवृत्तिः । अन्ये तु– यत्र गुरुलघुवस्तुनोरल्पान्तरविवक्षा, तत्रास्य प्रवृत्तिरिति । **साहस्री.** ६७५.

**लोष्टप्रस्तारन्यायः ।** लोष्टस्य मृत्तिकापिण्डस्य प्रस्तारो विस्तार इति यावत् । अयं यथा मृत्पिण्डस्य कुलाले नानावैचित्र्यं घटशरावप्रतिकृतिप्रभृतिरूपं रच-



यत्येवं विवक्षायां प्रवर्तते । अत एव लोष्टप्रस्तारन्यायेनाऽनन्तवैचित्र्यमुक्तमित्युक्तं दुर्गादासेन । **साहस्री.** ६७४.

**लोष्टलगुडन्यायः ।** यथा लोष्टस्योपमर्दको लगुडस्तयोपमर्द्योपमर्दकयोः साचिव्यविवक्षायां अस्य प्रवृत्तिरिति । लोष्टो मृत्पिण्डः, लगुडो दण्डः । **साहस्री.** ५०३.

**लोहाग्निन्यायः ।** अयं परस्परधर्माध्यासतादात्म्याध्यासयोर्विवक्षायां प्रवर्तते । **साहस्री.** ३७४.

**लोहचुम्बकन्यायः ।** यथा चुम्बकमणिर्निष्क्रियोऽपि संनिधिमात्रेण स्वयमप्रवर्तमानोऽपि लोहमाकृष्य प्रवर्तयति, तत्क्रियाहेतुश्च भवति, तथा पुरुषः प्रधानं प्रवर्तयतीति सांख्याः । **साहस्री.** १८०.

* ' **लोहितोष्णीषा** ऋत्विजः प्रचरन्ति ' इति निर्ज्ञाते लोहितोष्णीषविधानार्थं तत्पदमुच्चार्यते । अत्र उपसर्जनीभूतोऽर्थो विधित्सितः प्रधानीभूतश्च अनुवादः । **भा.** ३।१।६।१२ पृ. ६८७, * ' लोहितोष्णीषाः प्रचरन्ति ' अत्र लोहितोष्णीषत्वं प्रचारायोपदिश्यते । ११।१।१।१.

**लोहितोष्णीषाधिकरणम् ।** लोहितोष्णीषन्यायः । श्येने लोहितोष्णीषत्वादिकं सर्वेषामेव ऋत्विजां नोद्गातॄणामेव ॥

**गुणत्वाच्च वेदेन न व्यवस्था स्यात् । ३।८।४। १२ ॥**

**भाष्यम्—** एवं वा । श्येने श्रूयते ' लोहितोष्णीषा लोहितवसना ऋत्विजः प्रचरन्ति ' इति । तथा वाजपेये श्रूयते ' हिरण्यमालिन ऋत्विजः प्रचरन्ति ' इति । तत्र संदेहः किं श्येने उद्गातृभिर्लोहितोष्णीषता कर्तव्या, वाजपेये चाध्वर्युभिर्हिरण्यमालित्वम्, उत उभयमपि सर्वैर्त्विजामिति । किं तावत् प्राप्तम् ? समाख्यानात् श्येने उद्गातृभिः वाजपेयेऽध्वर्युभिरिति । **एवं प्राप्ते, ब्रूमः** । गुणत्वाच्च वेदेन न व्यवस्था स्यात् । गुणो लोहितोष्णीषता हिरण्यमालित्वं च । पुरुषः प्रधानम् । अतो लोहितमुष्णीषं हिरण्यमाला च पुरुषविशेषणत्वेन श्रूयते, न कर्तव्यतया । तस्मात् पुरुषप्राधान्यम् । किमतो यद्येवम्, पुरुषाणां प्रधानभावे समाख्या न नियामिका इत्येतदुक्तम् ( तपोऽधिकरणे १२ सूत्रे ) । अपि च गुणत्वश्रवणात् सर्वपुरुषाणामेतद्विधानमिति गम्यते । प्रधानसंनिधौ हि गुणः शिष्यमाणः प्रतिप्रधानमुपदिष्टो भवति । तत्र वचनेन प्राप्तं कथं समाख्यया विद्यमानयाऽपि नियन्तुं शक्येत । तस्मात् उभयत्र सर्वर्त्विग्भिः एवंजातीयको धर्मः क्रियेतेति ।

**वा––** ' गुणत्वे तस्य निर्देशः ' ( ३।८।२।६ ) इत्यनेन गतार्थं ( प्रकृतद्वादशसूत्रस्य प्रथमं भाष्यव्याख्यानं ) इत्यन्यथा व्याचष्टे । ये संस्काराः सन्तो वचनादृत्विजां जातास्ते किं समाख्यया नियम्यन्ते नेति । लोहितोष्णीषादयो हि औद्गात्रादिषु पठ्यमानाः सत्यपि संस्कारत्वे वचनादृत्विजां क्रियमाणाः समाख्याविषयतां प्रतिपद्यन्ते । इति प्राप्ते, ब्रूमः । **' संस्कारत्वाद्दतिक्रान्ते समाख्यागोचरे सति । वचनेनर्त्विजां येन तेनैवान्येष्वपि स्थिताः ॥ '** ऋत्विगुद्देशेन ह्येते विधीयमानाः प्रतिप्रधानावृत्तिन्यायात् सर्वेषां भवन्तो न शक्याः समाख्यया बाधितुम् । तस्मादिह न व्यवस्था स्यादिति ।

**सोम––** अस्तु अत्र समाख्यया व्यवस्था इति प्रत्यवस्थानात् **संगतिः । सूत्रार्थस्तु–** संस्काराणां ऋत्विगपेक्षया गुणत्वात् तत्तद्वेदसमाख्यया न व्यवस्था स्यात् इति ।

**वि–** ' हिरण्यमालिताऽऽद्यास्तु संस्कारा वचनान्मताः । ऋत्विजां ते यथाऽऽख्यानं कर्तव्या निखिलैरुत ॥, आद्य आख्यावशात्, मैवं सर्वसंनिधिपाठतः । प्रतिमुख्यं गुणावृत्तेः कर्तव्या निखिलैरपि ॥ ' ५.

**भाट्ट––** ये ऋत्विक्संस्काराः हिरण्यमालित्वादयः तत्तद्वेदपठितास्ते समाख्यानादध्वर्य्वादिना कर्तव्याः, बहुत्वस्योद्देश्यगतत्वेनाविवक्षितत्वात् । अथाप्यनुवादापेक्षा, तदा तत्पुरुषैः कार्याः । **इति प्राप्ते,** अनियतकर्तृप्राप्तौ समाख्यया लाघवेनापेक्षितनियममात्रकरणात्, प्रकृते च संस्कार्यस्य प्रतिप्रधानावृत्तिन्यायेन सर्वस्यैव नियतप्राप्ततया नियमानपेक्षत्वात् न समाख्यायास्तन्नियामकत्वम् । कर्त्रन्तरपरिसंख्यापकत्वं तु वैरूप्यापत्तेरयुक्तम् । **यदि** तु समाख्यायाः तत्तत्पदार्थवाचिन्याः भेदेनास्याः हिरण्यमालित्वविधिन्याः परिसंख्यापकत्वमेवेत्याशङ्क्येत, **तथापि** समाख्यया वचनस्य संकोचायोगादेव सर्वविषयत्वनिश्चयः ।

मण्डन— 'हिरण्यमाला सकलर्त्विगङ्गम् ।' ५.
शंकर— 'सर्वर्त्विजां हेममाला ।' ७.

* **लोहितोष्णीषादिवत्** । यथा श्येने अतिदेशप्राप्तकऽत्विजः अनूद्य लोहितोष्णीषादिरूपगुणमात्रविधानं तथा आख्यातलक्षितकर्तृत्वेन पुरुषस्य प्राप्तत्वात् पुरुषस्यानुवादः स्वर्गमात्रं साध्यत्वेन विधीयते । **वृ.** ६।१।१।१. * लोहितोष्णीषादिवत् स्वर्गकामादिशब्दाः क्रियासंबन्धानुवादेन लोहितोष्णीषादिवत् विशेषणपराः । **रत्न.** ६।१।१।१.

* **लोहितोष्णीषत्वादिभिः** श्येने उपदिष्टैः आतिदेशिकस्योपवीतस्य न बाधः, किंतु समुच्चयः । **भा.** १०।४।१।१–२.

* **लोहितनिसरनं** पश्वालम्भस्य न प्रयोजकं किन्तु प्रतिपत्तिः अग्नीषोमीये पशौ । **वि.** ४।१।१२.

* **लोहितशकृतोः** पशुप्रयोजकत्वं नास्ति अग्नीषोमीये पशौ । **भा.** ४।१।१२।२७.

* '**लौकायतिकमूर्खाणां** नैवान्यत् कर्म विद्यते । यावत्किञ्चिददृष्टार्थं तत् दृष्टार्थं हि कुर्वते ॥ वैदिकान्यपि कर्माणि दृष्टार्थान्येव ते विदुः । अल्पेनापि निमित्तेन विरोधं योजयन्ति च ॥ तेभ्यश्चेत् प्रसरो नाम दत्तो मीमांसकैः क्वचित् । न च कंचन मुञ्चेयुर्धर्ममार्गं हि ते तदा ॥ प्रसरं न लभन्ते हि यावत् क्वचन मर्कटाः । नाभिद्रवन्ति ते तावत् पिशाचा वा स्वगोचरे ॥ कचिद्दत्तेऽवकाशे हि स्वोत्प्रेक्षालब्धधामभिः । जीवितुं लभते कस्तैः तन्मार्गपतितः स्वयम् ॥ तस्माल्लोकायतस्थानां धर्मनाशनशालिनाम् । एवं मीमांसकैः कार्यं न मनोरथपूरणम् ॥ यच्चाऽऽदौ श्रद्धया सिद्धं पुनर्न्यायेन साधितम् । आज्ञासिद्धप्रमाणत्वं पुराणादिचतुष्टयम् ॥ तत्तथैवानुमन्तव्यं कर्तव्यं नान्तरा श्लथम् । सर्वं श्लथयतः सीदेद् दुर्नद्धशकटादिवत् ॥ पक्षो योऽङ्गीकृतो येन तमत्रस्यन् स निर्वहेत् । हारयेदन्तरा त्रस्यन् भीतोपद्रवकारिभिः ॥' **वा.** १।३।२।३ पृ. १७१.

* **लौकिकं** कर्म अवश्यं समापनीयं इति नास्ति नियमः । **वि.** ६।२।४. * लौकिकं वचनं प्रमाणान्तरसापेक्षम् । पुरुषाणां हि वाक्यप्रयोगः प्रतीतार्थप्रत्यायनार्थः । स च प्रतीताव्यभिचारी इति प्रमाणान्तरप्रतीतिपर्युपस्थापकेन तेन भवितव्यम् । तथा च प्रतीत्युपस्थापकत्वात् अनुमानतैव गम्यते । तेन विपर्ययोऽपि अनुमानस्यैव, न शब्दस्येति । यत् पुरुषेण वाक्यं प्रयुज्यते तत् प्रतीतार्थप्रतिपादनाय । न च प्रमाणान्तरं विना प्रतीतिरस्ति । तस्मात् प्रमाणान्तरसापेक्षं लौकिकं वचनमिति । **ऋजु.** पृ. २२. * लौकिकं वस्तु 'यथेष्टविनियोगं तु सर्वार्थं वस्तु लौकिकम्' । **वा.** २।१।१६।४८ पृ.४५३. * लौकिकं सोमपानं यत् सप्तरात्रेषु दशरात्रेषु च धातुसाम्यार्थमासेव्यमाने सोमे (सोमरसे) । **भा.** ३।४।१२।३२. * **लौकिकानि** अपि यानि कृषि–घृतपान–अध्ययनप्रभृतीनि कर्माणि कालान्तरफलत्वेन इष्यन्ते । तेषामपि स्वरूपावस्थानासंभवात् संस्कारैरेव तिष्ठद्भिर्व्यवहारसिद्धिः । ते तु अवैदिकत्वात् संस्काराः न अपूर्वशब्दाभिधेयत्वेन प्रसिद्धाः । **वा** २।१।२।५ पृ. ३९५. * लौकिकान्येव प्रत्यक्षानुमानोपमानाभावाख्यानि प्रमाणानि । **वाल.** पृ. ८. * लौकिकानि कर्माणि अष्टकादीनि स्मार्तानि । **भा.** ८।४।२।२, * लौकिकानि कर्माणि पार्वणस्थालीपाकादीनि । तेषामायतनं औपासनोऽग्निः । तस्मान्न तान्याहवनीये प्रसज्येरन् । **भा.** १२।२।१।१–३. * लौकिकानि प्रमाणानि प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्ध्याख्यानि षट् । **मणि.** पृ. १३. * लौकिकानि वचनानि उपपन्नार्थानि अनुपपन्नार्थानि च दृश्यन्ते– यथा देवदत्त गामभ्याज इत्येवमादीनि, दश दाडिमानि षडपूपा इत्येवमादीनि च । **भा.** १।१।५।५ पृ. ४७. * लौकिकानि वाक्यानि भवन्तो विदांकुर्वन्तु, तद्यथा– इयं गौः क्रेतव्या, देवदत्तीया, एषा हि बहुक्षीरा, रव्यपत्या अनष्टप्रजा चेति । १।२।२।२०. * **लौकिकः** अग्निः लौकिककार्येष्विव वैदिककार्येष्वपि शेषभावं भजते, सर्वकार्यसमर्थत्वात् । अग्निचयने इष्टकापाकः लौकिके निर्मन्थ्ये यथा । **वि.** ७।३।७, १२. * लौकिकः अप्राप्तबाधः (२५) पञ्चविंशतिविधः ; प्रत्यक्षेण अनुमानादीनि पञ्च बाध्यन्ते इति ते पञ्च बाधाः । प्रत्यक्षव्यतिरिक्तानां मध्ये यदेव प्रथमं प्रवृत्तं तेन उत्तरस्य उत्पत्तिप्रतिबन्धः क्रियते तेन अनुमानकृताः ४ + उपमानकृताः ४ + शब्दकृताः ४ + अर्थापत्तिकृताः ४ + अनुपलब्धिकृताः ४, सर्वेषां मेलनेन (२५) पञ्चविंशतिविधः भवति अप्राप्तबाधः । **के.** * लौकिकः अश्वादिप्रतिग्रहः अकर्माङ्गभूतदानाश्रयपुरुषार्थत्वाभिमतः । **वा.** ३।४।१०।२८ पृ. ९५७. * लौकिकः अश्वप्रतिग्रहः लोके भिक्षमाणो वा अभिक्षमाणो वा यत्राश्वं लभते सः । **भा.** ३।४।१०।२८, * लौकिकः कर्तव्यतोपायः, यथा पार्वणस्थालीपाके अष्टकाचरौ आग्रहायणे कर्मणि इति । ७।४।२।२. * लौकिकः नित्यः प्राप्तबाधः षड्विधः । प्रत्यक्ष–अनुमान– शब्द– उपमान – अर्थापत्ति– अभावैः तदाभासानां बाधः इति । **बाल.** पृ. १३१. * लौकिकः प्रयोगः शब्दार्थपरिच्छेदे हेतुः न वैदिकः । **भा.** २।१।४।१२. * लौकिकः शब्दः अपि प्रमाणम् । **बाल.** पृ. ८. * **लौकिकाः** अर्थाः अविप्रगीताः विप्रगीतेभ्यः प्रत्ययिततरा भवन्ति । **भा.** २।३।२।३ पृ. ५८१. * लौकिकाः हि जायादिषु नानुपलब्धिमात्रेण 'नास्ति' इत्यवगच्छन्ति, पुनर्दर्शने विश्वासदर्शनात् । **बृहती.** पृ. २४९. * 'य एव **लौकिकाः** शब्दास्त एव वैदिकाः, त एवामीषामर्था इति (लोकवेदाधिकरणे स्थितम्) । **वा.** १।४।७।१० पृ. ३४३, * **लौकिकस्य** अपि पदस्य अनादित्वाविशेषात् प्रामाण्यम् । ३।२।९।२५ पृ. ७८४. * लौकिकस्य (स्मार्तस्य) विधेः (वेदे) अभावात् विध्यन्त एव नास्ति, कुतस्तत्कल्पना । **भा.** ७।४।२।१०, * **लौकिकानां** (स्मार्तानां) तावदाचारगृहीता दर्विः 'न्यग्बिलया मूलदण्डया दर्व्या जुहोति' इति । ८।४।४।६, * लौकिकानां स्थालीपाकादीनां स्मार्तानाम्, वैदिकस्य च वास्तुहोमस्य दर्विहोमशब्दो नामधेयम् । ८।४।२।२–३. * **लौकिकेऽग्नौ** अवकीर्णिपशुः । ६।८।४।२२. **मीको.** पृ. ६७६ 'अवकीर्णिपश्वधिकरणम्' इत्यत्र द्रष्टव्यम् । * लौकिकेऽग्नौ उपनयनहोमः । ६।८।२।११–१९. **मीको.** पृ. ११४७ 'उपनयनहोमाधिकरणम्' इत्यत्र द्रष्टव्यम् । * लौकिकेऽग्नौ चतुर्होतृमन्त्रैर्होमः । **वि.** ३।८।९.



**लौकिके दोषसंयोगादपवृक्ते हि चोद्यते निमित्तेन प्रकृतौ स्यादभागित्वात् । ९।३।३।९॥**

अग्नीषोमीये पशौ 'यद्येकं यूपमुपस्पृशेत् एष ते वायो इति ब्रूयात्, यदि द्वौ एतौ ते वायू इति, यदि बहून् एते ते वायवः इति' इत्याम्नायते । इदं प्रायश्चित्तं लौकिके वैदिके वा यूपोपस्पर्शने उत वैदिके एव अथवा लौकिके एवेति विचारे सिद्धान्तमाह । लौकिके एव यूपोपस्पर्शने इदं प्रायश्चित्तं भवितुमर्हति, न वैदिके । लौकिके एव दोषसंयोगात् । यूपस्य हि अञ्जनं उच्छ्रयणं च कर्तव्यमुक्तं नान्तरीयकश्च तत्र स्पर्शः । तस्मात् लौकिके एव दोषस्य संबन्धः । तस्मात् तत्रैव निमित्तेन स्पर्शनेन प्रायश्चित्तं चोद्यते अपवृक्ते समाप्ते कर्मणि सति । प्रकृतौ वैदिके यूपोपस्पर्शने प्रतिषेधस्य अभागित्वात् असंभवेन अप्राप्तत्वात् । तस्मात् कर्मसमाप्त्युत्तरकालं लौकिके स्पर्शे प्रायश्चित्तं इति **सिद्धान्तः** । **के.**

* लौकिके पुनर्धातुसाम्याद्यर्थं क्रियमाणे (सोमपाने) (जाते च वमने) न किञ्चिद् दुष्यति । वमनायैव हि तं पिबन्ति लोके । **भा.** ३।४।१२।३३. * लौकिके प्रत्यक्षानुमानावगते दृष्टफले कर्मणि असमाप्य त्यक्तेऽपि न दोषः । यदा तु प्रत्यक्षानुमानाभ्यां असमापने दोषप्रसङ्गस्तदा तत्समापनीयमेवेति ताभ्यामेव सिध्यति । **वि.** ६।२।४. * लौकिके यूपोपस्पर्शने प्रायश्चित्तं न वैदिके । **भा.** ९।३।३।९, * लौकिके हि (अग्नौ) पाके मांसप्रसङ्गो न वैदिके (अग्नौ) शामित्रे मांसपाकः । १२।२।१।२. * **लौकिकेषु** अग्निषु निषादस्थपतीष्टिः । ६।८।३।२०–२१. **मीको.** पृ. २३८९ 'निषादस्थपतीष्टिः लौकिकेष्वग्निषु स्यात्, न संस्कृतेषु' इत्यत्र द्रष्टव्यम् ।

**लौकिकेषु यथाकामी संस्कारार्थालोपात् । ११।३।१२।३५॥**

ममादिः देशः, ऋत्विजः, स्रुगादीनि च पात्राणि इत्येतेषु लौकिकेषु पदार्थेषु यथाकामी यथा कामयते तथा स्यात्, प्रतिप्रयोगं अन्येऽन्ये उपादातव्याः तेते एव वा ग्रहितव्याः इति । कुतो यथाकामता ? संस्कारार्थालोपात् संस्कारश्च अर्थः प्रयोगश्च तयोः लोपाभावात् । न कश्चित् पूर्वस्मिन् प्रयोगे कर्त्रादीनां संस्कारः कृतः,

योऽन्योपादाने लुप्येत । नापि अर्थलोपः, अन्यैरपि हि शक्यते प्रयोगः कर्तुम् । तस्मादनियमः इति सिद्धान्तः। **के.**

* ननु च सत्यपि बाधकज्ञाने **लौकिकेषु** वाक्येषु शब्दादेव ज्ञानमुत्पद्यते निमित्तभावात्, 'अङ्गुल्यग्रे हस्तियूथशतं' इति । तत् अद्धाऽपरिहृतैव अर्थासंस्पर्शिताशङ्का । **नैवम्** । अनभिज्ञो भवान् बाध्यबाधकभावस्य । अङ्गुल्यग्रे हस्तियूथशतमिति, प्रमाणान्तरदर्शनमत्र बाध्यते, न पुनः हस्तियूथशतमिति । **बृहती.** पृ. २१. * **लौकिकी** ( स्मार्ता ) इतिकर्तव्यता आचारात् औपासने कर्तव्या । **शा.** ७।४।१. * लौकिकी इतिकर्तव्यता पार्वणस्थालीपाके, अष्टकाचरौ, आग्रहायणे कर्मणि । **भा.** ७।४।२।२. * 'लौकिकी प्रतिपत्तिर्हि गौणत्वेनापि नीयते । नानाविप्रतिपत्तौ हि न लोकस्येह सत्यता । लौकिकस्त्वन्यथात्वेऽपि नार्थोऽतीव विरुध्यते ॥' **वा.** १।३।४।९ पृ. २१७. * लौकिकी वैदिकी च इति श्रुतार्थापत्तिरपि द्विविधा । **बाल.** पृ. ८, * लौकिकी वैदिकी च इति समाख्या द्विविधा । पृ. १२.

* **लौकिकाग्नेः** उपनिधानं गर्गत्रिरात्रे आज्यदोहस्तोत्रकाले । ७।३।१२।३०–३२. **मीको.** पृ. १५४३ 'गर्गत्रिरात्रे आज्यदोहस्तोत्रकाले०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **लौकिकोपायसंपादितसुवर्णव्रीह्यादीनां** क्रतुषु विनियोगः । **वि.** ३।६।५.

* **लौकिककर्मणः** आरब्धस्यापि समाप्तिर्न नियता । ६।२।४।१७–१९. **मीको.** पृ. १८५० 'तक्षाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * **लौकिककर्मणां** गार्हपत्याद्यग्निषु नानुष्ठानम् । **भा.** १२।२।१।१–७. 'विहाराधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **लौकिककर्माङ्गानां** इयत्ता प्रत्यक्षेण निश्चीयते, वैदिककर्माङ्गानां तु श्रुत्या । **वि.** ८।१।३ वर्णकं ३.

* **लौकिकयूपस्पर्शे** पुरुषार्थतया प्रायश्चित्तविधानम् । ९।३।३।९. **मीको.** पृ. ११८ 'अग्नीषोमीये पशौ यागसमाप्त्युत्तरं०' इत्यत्र द्रष्टव्यम् ।

* **लौकिकवाक्यानां** प्रमाणान्तरापेक्षत्वात् प्रमाणान्तरवशेन अर्थप्रत्यायकत्वम् । **ऋजु.** पृ. ३२ .

* '**लौकिकसाधारण्येनाकारेण** शब्दसमर्पिते एवापूर्वीयपदार्थे संस्कारकर्मान्वयबोधने सति तदनन्तरं तस्यापूर्वीयत्वावगतौ अर्थात् संस्कारस्य अपूर्वीयविषयत्वपर्यवसानं' इत्ययं न्यायः 'तप्ते पयसि दध्यानयति' इत्यत्राङ्गीकरणीयः । **रसायनम्** पृ. १५० .

* **ल्यप्**—क्त्वादेशः विनियोक्त्री श्रुतिः **सोमेश्वरमतेन** यथा– 'तस्या धारमाधार्य' इत्यादि । **बाल.** पृ. ४५.

* **ल्यबादेः** एककर्तृकत्व–पूर्वकालत्वबोधकत्वेऽपि अङ्गाङ्गिभावबोधकता न सिध्यति । निमित्तनैमित्तिकभावेनापि एककर्तृकत्वादेरुपपत्तेः । यथा 'सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन्' इत्यत्र । **वि.** १०।२।१२ .

## व

* **वंशानुक्रमणं** ब्राह्मणक्षत्रियजातिगोत्रज्ञानार्थं दर्शनस्मरणमूलम् । **वा.** १।३।१।२ पृ. १६७.

* **वक्तॄणां** परप्रत्ययनार्थो वाक्यप्रयोगः । **वा.** २।१।१४।४६ पृ. ४४४.

* **वक्तृक्रमविपर्ययेण** श्रोतृक्रमः पदार्थवाक्यार्थज्ञाने । सर्वत्र हि वक्तृक्रमविपर्ययेण श्रोतुः क्रमो भवति । स हि प्रथमं तावत् किञ्चित् विशेष्यं विवक्षति ततस्तस्य केनचित् विशेषणेन विना अभिधातुमशक्तेः विशेषणविवक्षां करोति ततः शब्दोच्चारणम् । श्रोता पुनः प्रथमं तावत् शब्दं शृणोति, ततो विशेषणम् , ततो विशेष्यम् , ततः तदुपपत्त्यर्थानि वस्त्वन्तराणि प्रपद्यते । तेन यद्यपि वक्त्रा पूर्वं संबन्ध आलोचितः तथापि श्रोता पश्चादेवैनं ग्रहीष्यति । **वा.** ३।१।६।१२ पृ. ६७६.

* **वक्तृज्ञानानुमानम्** । संप्रति पौरुषेयवाक्यानां वक्तृज्ञानानुमानव्यवधानेनैव अर्थप्रतिपादकत्वं इति प्रतिपाद्यते । व्युत्पन्नशब्दश्रवणमात्रात् अर्थप्रतीतिः किमिति



जायते इति चेन्न, व्युत्पन्नशब्दोच्चारणेऽपि वक्तुरभिप्रायानिश्चयेऽर्थाभिधानादर्शनात् तात्पर्यज्ञानमपि सामग्रीत्वेन कल्प्यते । तात्पर्यज्ञानं च इममर्थमवगम्यैतत्प्रतिपादनायेदं वाक्यमुच्चारितं इत्यनुसंधानम् । अतश्च प्रमाणान्तरान्तर्भावः ।

**ननु** अस्तु वाक्यमात्रादनभिधानम्, आप्तवाक्यस्य दोषरहितस्यार्थावबोधकत्वं किमिति नाश्रीयते ? **नैवम्**, आशयादिदोषराहित्यमेवाप्तत्वं तथाभूतस्यापि अन्यपरप्रयोगो दृश्यते, यथा– 'विषं भुङ्क्ष्व' इत्यादौ भोजननिवृत्तिपरं वाक्ये । अतः प्रमाणान्तरेणावगते तात्पर्येऽर्थनिश्चयः तात्पर्यनिश्चयात् अर्थनिश्चयः, तात्पर्यनिश्चयश्च वक्तृज्ञानानुमानद्वारेणैव भवतीति आप्तवाक्यस्यैव लिङ्गत्वमुपपन्नम्, विषभक्षणवाक्येऽपि योग्यार्थज्ञानपूर्वकत्वाव्यभिचारात् ।

**ननु** कथं ज्ञानमनुमीयते ? न तावत् ज्ञानमात्रस्यानुमानम्, ज्ञानमात्रविशेषनिश्चयाभावादेव अनुमानवैयर्थ्यं स्यात्, न तावत् विशिष्टज्ञानानुमानम्, अर्थेनैव ज्ञानस्य विशेषः नान्येन, अतोऽर्थनिश्चयेन विशिष्टज्ञानानुमानं निश्चयं च अनुमानवैयर्थ्यमेवेति कथं वक्तृज्ञानानुमानम् ? **नैवम्**, वाक्यश्रवणे सति अभिधानात् प्रागेव पदैः पदार्थाः स्मर्यन्ते, स्मृतानां च पदार्थानां एवमन्वेतुं योग्यं नैवं इति विमर्शः संजायते, अतो न्यायसंपादितेन विमर्शेन विशिष्टोऽर्थो बुद्धिस्थः, तेनैव विशिष्टज्ञानानुमानम् । **ननु** विमर्शो नाम कीदृशः ? स च प्रमाणमप्रमाणं वेति अपि न विद्मः । **उच्यते**—विमर्शस्तावत् अभिधानात् प्रागेव भवद्भिरप्यङ्गीकृतः, इतरथा अभिहितैः पदार्थैः विशिष्टोऽर्थो ज्ञातुं न शक्यते, पदार्थानामनेकार्थसाधारणत्वात् कस्य विशिष्टार्थस्य गमका भवेयुः ? आकाङ्क्षासंनिधियोग्यतायुक्तार्थस्य गमका इति **चेत्** , तर्हि स एव विमर्शशब्दार्थो युष्माभिरप्यङ्गीकृतः । स च प्रमाणेतिकर्तव्यतारूपः न प्रमाणमात्रम्, न च स्मृतिमात्रं वा, विमर्शानङ्गीकारे च प्रत्यधिकरणं पूर्वपक्षसिद्धान्तवचनव्यक्तिविमर्शो न स्यात् ।

**केचित्तु** विसंवादशङ्कया तिरोहितत्वादर्थनिश्चयो न जायते । 'पुंवाक्ये तु विसंवादशङ्कया सा तिरोहिता' इत्युक्तत्वादित्याहुः । **तदयुक्तम्** , अभिधानसामग्रीसंभवे सति संशयस्याप्रतिबन्धकत्वात् । इतरथा फलनिर्णयसद्भावेऽपि प्रतिबन्धकत्वप्रसङ्गः, अनुमाननिश्चये च प्रसङ्गस्तुल्यः । अतः सामग्र्यभावादेवानभिधानम् ।

**ननु** एवं व्यवहारावसितशक्तिबाधः, पौरुषेयवाक्येभ्यो हि व्युत्पत्तिः , वाक्यं च नाभिधायकम् , लिङ्गमेवेत्युक्तम् । **नैवम्** , शक्तिविषये व्यभिचाराशङ्का । लिङ्गेन च उत्तरकालेऽर्थनिश्चयश्च । अतो वक्तृज्ञानानुमानद्वारेणैव अर्थनिश्चय इति सिद्धम् । **प्रवि.** पृ. ७–११.

**वक्रिणि बहवो गुणा इति न्यायः** । अत्र वक्रिणि अनृजौ इत्यर्थः । यथा वक्रेन्दुः शिवेन शिरसा धार्यते, लोकैश्च नमस्यते इति सर्वत्र ज्ञेयमिति । **साहस्री.** ८८३.

* **वङ्क्रिः** वक्रं पार्श्वास्थि । ताश्च अश्वस्य एकस्मिन् पार्श्वे सप्तदश, एवमितरपार्श्वे । इतरेषां पशूनां तु त्रयोदशत्रयोदश एकैकस्मिन् पार्श्वे । **वि.** ९।४।१–२. * **वङ्क्रयः** अश्वस्य चतुस्त्रिंशत् । **भा.** ९।४।२।१७, * **वङ्क्रयः** गोमृगस्य षड्विंशतिः । अयं अश्वमेधे सवनीयः पशुस्तृतीयः । ९।४।२।१७, * **वङ्क्रयः** तूपरस्य षड्विंशतिः । अयं अश्वमेधे सवनीयः पशुः द्वितीयः । ९।४।२।१७, * **वङ्क्रिभिः** गणिताभिर्दृष्टं प्रयोजनम्, कृत्स्नं पार्श्वमुद्धरिष्यत इति । ९।४।१।७.

* **वङ्क्रीयत्ताप्रकाशनार्थं** अश्वमेधे अध्रिगुप्रैषे अश्वतूपरगोमृगाणामर्थे वैशेषिकमन्त्राकरणपक्षे 'षडशीतिरेषां वङ्क्रयः' इति समासवचनम् । ९।४।२।१७–२१. **मीको.** पृ. ७४१ 'अश्वमेधे अध्रिगुप्रैषे अश्ववङ्क्रीयत्ताप्रकाशनार्थं०' इत्यत्र अधिकरणं द्रष्टव्यम् । * वङ्क्रीयत्ताप्रकाशनार्थं अध्रिगुप्रैषे पशुगणे समस्य संख्यावचनं कार्यं 'द्विपञ्चाशदस्य वङ्क्रयः' इत्यादि । ९।४।१।१–१६. **मीको.** पृ. ३४६ 'अध्रिगुप्रैषे पशुगणे०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वचसैव** कारयति इत्यादिवत् । न च प्रथमावगतप्रयोजकव्यापारार्थत्वमेव 'वचसैव कारयति' इत्यादिवत्, तर्हि अस्तु इति वाच्यम् । **भाट्ट.** ५।३।११.

* वचनं अतिदेशे प्रमाणम् । मणि. पृ. १३. * वचनं नः प्रमाणम् । अतः ' वचनात् ' तृतीयसवने षोडशिग्रहणम्। भा. १०।५।११।४४. * वचनं न्यायात् बलीयः । सर्वपृष्ठे पण्णां पृष्ठानां देशाऽव्यवस्था वचनात्, न तु न्यायात् प्रकृताविव । वि. १०।६।५. * वचनं लौकिकं ' नद्यास्तीरे फलानि सन्ति ' इति, तत् तथ्यमपि भवति वितथमपि भवतीति । भा. १।१।२।२ पृ. १३ । यत्तु लौकिकं वचनं तच्चेत् प्रत्ययितात् पुरुषात् इन्द्रियविषयं वा, अवितथमेव तत् । अथ अप्रत्ययितात् अनिन्द्रियविषयं वा तावत् पुरुषबुद्धिप्रभवमप्रमाणं अशक्यं हि तत् पुरुषेण ज्ञातुं ऋते वचनात् । १।१।२।२ पृ. १५, * वचनं लौकिकं वैदिकं च । पौरुषेयं अपौरुषेयं चेत्यर्थः । तत्र पौरुषेयाद् वचनात् ' एवमयं पुरुषो वेद ' इति भवति प्रत्ययः न 'एवमयमर्थः' इति । विप्रलब्ते हि खल्वपि कश्चित् पुरुषकृतात् वचनात् प्रत्ययः । न तु वेदवचनस्य मिथ्यात्वे किंचन प्रमाणमस्ति । १।१।२। २ पृ. १६-१७, * असति अवकाशे वचनं बाधकं भवति । ३।५।७।२२, * किमिव वचनं न कुर्यात् । नास्ति वचनस्यातिभारः । २।२।१३।२७, ३।२।२।३, ५।४।४।१०, ६।६।२।१२, १०।४।२१।४२, १०।५। २५।८६, ११।४।४।१३, १२।४।७।२१, * न च शक्यते परशब्देन परो वदितुम्, किमत्र वचनं करिष्यति । ३।२।२।८, * न्यायपूर्वकं हि वचनं साधकं भवति । ७।४।२।५, * प्रत्यक्षविरुद्धं वचनं न प्रमाणं भवति । यथा अम्बुनि मज्जन्त्यलाबूनि, शिलाः प्लवन्ते, पावकः शीत इति । ४।३।५।१०. * वचनानि प्रमाणानि । ' वेदेनैवाभ्यनुज्ञाता येषामेव प्रवक्तृता । नित्यानामभिधेयानां मन्वन्तरयुगादिषु ॥ तेषां विपरिवर्तेषु कुर्वतां धर्मसंहिताः । वचनानि प्रमाणानि नान्येषां ( बौद्धादीनां ) इति निश्चयः ॥ ' तथा च प्रायश्चित्तदानकाले यो वाक्यमात्मीयम्, अन्यकविकृतं वा श्लोकम्, सूत्रं वा उच्चार्य मानवादिप्रायश्चित्तं दद्यात्, न कश्चिदपि धर्मार्थे प्रतिपद्येत । वा. १।३।३।७ पृ २०२. * वचनेन अङ्गप्रधानयोर्भिन्नकालकत्वाद्यधिकरणम् । ११।३।१।१. मीको. पृ. १७७ ' अङ्गप्रधानयोः वचनबलात् भिन्नदेशकालकर्तृकत्वमपि ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**ङ्क वचनादननुज्ञातभक्षणम् । ३।५।१३।४०॥**

अथ एकपात्रे सोमोऽनेकेन भक्ष्यते । किं तत्र अनुज्ञाप्य अननुज्ञाप्य वा भक्षयितव्यम्, उत अनुज्ञाप्यैवेति । अयं च संदेहो भाष्यकारेण 'तस्मात्सोमो नानुपहूतेन पेयः ' इत्यस्य वचनस्य विषयप्रदर्शनार्थं प्रदर्शितः, न तु विचारार्थम् । प्रत्यक्षे वचने सति संदेहाभावात् । तेन सूत्रमिदं वचनगतस्य उपहूतपदस्य अनुज्ञारूपार्थकथनार्थं उत्तरविचारविषयप्रदर्शनार्थं चेति बोध्यम् । तौता.

**ङ्क वचनादनुज्ञातभक्षणम् । ३।५।१४।४०॥**

ज्योतिष्टोमे सोमभक्षः यदा एकपात्रे अनेकैः क्रमेण क्रियते तदा किं भक्षयिता अन्यान् अनुज्ञाप्य भक्षयेत् अनुज्ञां अगृहीत्वैव वा भक्षयेत् इति संदेहे लाघवात् अनियमे प्राप्ते सिद्धान्तः उच्यते । एकपात्रे इति पदं षट्त्रिंशसूत्रादनुवर्तते । एकपात्रे भक्षणे कर्तव्ये अनुज्ञातस्यैव सोमस्य भक्षणं कर्तव्यं न तु अनुज्ञाशून्यस्य । कुतः ? ' तस्मात् सोमो नानुपहूतेन पेयः ' इति वचनात् । उपह्वानं च अनुज्ञापनम् । के.

* वचनादन्यकालत्वं कृतं सर्वार्थानामपि सतां अङ्गानाम् । यथा 'आग्निमारुताद् ऊर्ध्वं अनुयाजैश्चरन्ति ' इति । भा. ११।३।४।६, * वचनात् अन्यदेशकालकर्तृकत्वमङ्गानाम् । ११।३।१।१. * ' वचनात् ' इत्युक्ते प्राप्तोत्येव कार्येऽर्थे वचनस्य स्वातन्त्र्यम् । अतः पुरुषपरंपरायामपि न प्रमाणान्तरगोचरो धर्मः इति सिद्धम् । बृहती. पृ. २३.

**ङ्क वचनादिष्टिपूर्वत्वम् । ५।४।३।५ ॥**

आधानं कृत्वा ततः पूर्वं दर्शपूर्णमासेष्टिर्वा कर्तव्या ततः सोमः, अथवा आधानं कृत्वा ततः पूर्वं सोमः कर्तव्यः ततो दर्शपूर्णमासौ इति इष्टिपूर्वत्वं सोमपूर्वत्वं वेति विचारे पूर्वपक्षमाह । आधानस्य इष्टिपूर्वत्वं स्यात्, ' दर्शपूर्णमासाविष्ट्वा सोमेन यजेत ' इति वचनात् । के.

**ङ्क वचनाच्चान्याय्यमभावे तत्सामान्येन प्रतिनिधिरभावादितरस्य । ६।३।१३।३१ ॥**

ज्योतिष्टोमे, अभावे सोमस्य अभावे अलाभे, अन्याय्यं च अन्याय्यमपि सुसदृशत्वाभावात् संवादयितुमयोग्यमपि पूतीकद्रव्यं ' यदि सोमं न विन्देत पूतीकानभिषुणुयात् ' इति वचनात् प्रतिनिधिः स्यात् । तत्सामान्येन सुसदृशत्वाभावेऽपि मन्दसदृशत्वरूपेण तत्सामान्येन सोमसादृश्येन हेतुना पूतीकद्रव्यं प्रतिनिधिः स्यात् । इतरस्य मुख्यस्य सोमस्य अभावात् यागस्य च अवश्यकर्तव्यत्वात् । के.



**ङ्क वचनात्त्वयथार्थमैन्द्री स्यात् । ३।२।२।३ ॥**

अग्नौ श्रूयते— ' निवेशनः संगमनो वसूनामित्यैन्द्या गार्हपत्यमुपतिष्ठते ' इति । तत्र संदेहः किं इन्द्रस्योपस्थानम्, उत गार्हपत्यस्य इति । इदानीं पूर्वाधिकरणापवादः क्रियते । अत्र ' निवेशनः संगमनो वसूनाम् ' इति मन्त्रेण इन्द्रस्य देवराजस्य वसुनिवेशनसंगमनकर्तृत्वेन यथा इन्द्रोऽभिधातुं शक्यते, तथा ' ध्रुवोऽध्वरश्च सोमश्च विष्णुश्चैवानिलोऽनलः ' इति ह्येवं वसुरूपस्याग्नेः ' वसूनां पावकश्चास्मि ' इति श्रुत्वकीर्तनात् वसुनिवेशनसंगमनकर्तृत्वेन अग्निरप्यभिधातुं शक्यते एव । तथापि ' ऐन्द्या ' इति तद्धितश्रुत्या इन्द्रस्यैव प्राधान्येनाभिधानं वेदानुमतमिति मत्वेदमुदाहृतम् । अत एव वार्तिके स्फुटोदाहरणप्रतिपादकेन्द्रपदवानेव मन्त्रोऽत्र शाखान्तरे पठ्यते इति निर्दिशितः— 'कदाचन स्तरीरसि नेन्द्र सश्चसि' इति । अत्रायं पूर्वपक्षिणोऽभिसंधिः । यद्यप्यस्य मन्त्रस्य श्रुत्या गार्हपत्यसंबन्धः प्रतीयते । श्रुतिश्च लिङ्गात् बलीयसी, तथापि अग्नेरिव सेकेऽशक्तस्य श्रुतिशतेनापि विनियोक्तुमशक्यत्वात् न गार्हपत्येऽस्य विनियोगः संभवति । यतो नानेन इन्द्राभिधायकेन मन्त्रेण कथञ्चिदपि गार्हपत्यो ऽभिधातुं शक्यते । न चाभिधानं विना प्रकारान्तरेण अस्य मन्त्रस्य गार्हपत्यशेषत्वमनेन वाक्येन प्रतिपाद्यते इति वाच्यम् । उपतिष्ठते इत्यात्मनेपदविरोधात् । ' उपान्मन्त्रकरणे ' ( पा. १। ३।२५ ) इत्युपपूर्वात् तिष्ठतेर्मन्त्रकरणेऽर्थे आत्मनेपदं विधीयते । कथं गार्हपत्यमिति द्वितीयेति चेत्, उच्यते । वचनं तावद्देशविधानार्थमेव । द्वितीया च सक्तुवदविवक्षितेप्सितार्था कारकसामान्यलक्षणद्वारेणाधिकरणमाचष्टे । तेनायमर्थः— गार्हपत्यदेशे स्थित्वा ऐन्द्या इन्द्रोपस्थानं कर्तव्यमिति । एवं प्राप्ते, अभिधीयते । भवेदेवं यदि प्रत्यक्षश्रुतिविरोधेऽपि मन्त्राणां मुख्यार्थत्वमुपपद्येत तथाहि अवश्यं तावदत्र एकस्यामुख्यार्थत्वं वक्तव्यम् । तत्र किं मन्त्रानुरोधेन ब्राह्मणवाक्यगतगार्हपत्यपदे वृत्त्यन्तरमाश्रीयताम्, ब्राह्मणानुरोधेन वा मन्त्रगतेन्द्रपदे, तत्र ब्राह्मणस्याप्राप्तविधित्वेन स्वतन्त्रत्वात् प्रथमप्रवृत्तेश्चानन्यप्रमाणकेऽर्थे गौणत्वमयुक्तम् । मन्त्रस्य तु ब्राह्मणविहितार्थप्रतिपादकत्वेन तत्परतन्त्रप्रवृत्तेः ब्राह्मणप्रतिपादितार्थानुरोधेन गौणत्वमेव युक्तम् । तदुक्तम्— '**गौणत्वं यत्र नाम स्यात्कचिद् ब्राह्मणमन्त्रयोः । तत्रानुवादरूपत्वान्मन्त्राणां गौणतेष्यते ॥**' इति (वा. पृ.७५३)। तेन मन्त्रगत एवेन्द्रशब्दो यज्ञसाधनत्वगुणयोगाद्गार्हपत्यं प्रकाशयति । अथवा ' इदि परमैश्वर्ये ' इति धातोरयं इन्द्रशब्दो व्युत्पन्नः । अग्नेश्च यद्यपि परमैश्वर्यं नास्ति, तथापि स्वकार्ये तावत् दाहपाकादौ ऐश्वर्यमस्ति । तेन ऐश्वर्यगुणयोगाद्वा अयमिन्द्रशब्दो गार्हपत्ये गौणः । तदुक्तम्— ' **स्यादग्नेर्गौणमिन्द्रत्वं यज्ञसंबन्धकारितम् । इन्दत्यर्थानुसाराद्वा स्वकार्ये सोऽपि हीश्वरः ॥** ' इति ( वा. पृ. ७५५ ) । तस्मात् इन्द्रशब्द एव गार्हपत्ये गौण इति सिद्धम् । यत्तु बलाबलाधिकरणेनैव गतत्वात् इदं अनर्थकमिति केचित् चोदयन्ति । तदयुक्तम् । श्रुतिलिङ्गबलाबलनिर्वाहस्यैव तदधिकरणाधीनत्वात् । तथाहि श्रुतिविरोधे गौणानामपि मन्त्राणां मन्त्रत्वं भवतीत्येतदधिकरणसिद्धं भवति यदा, तदा तत्र श्रुतेर्बलवत्त्वं भवितुमर्हति, इतरथा अशक्यार्थे विनियोगासंभवात् ' आनर्थक्यप्रतिहतानां विपरीतं बलाबलम् ' इति न्यायेन श्रुतिरेवान्यथा नीयेतेति न किञ्चिदनुपपन्नमिति ।

**प्रयोजनम्—** पक्षोक्तम् । **सूत्रं तु—** वचनादैन्द्री अयथार्था गौणार्थेत्यर्थः । **तौता.**

**ङ्क वचनात् त्वयथार्थमैन्द्री स्यात् । ३।२।२। ३ ॥**

' कदाचन स्तरीरसि इत्यैन्द्या गार्हपत्यमुपतिष्ठते ' इति श्रूयते । अनया किं इन्द्रस्योपस्थानं कर्तव्यं लिङ्गात् उत तृतीयाश्रुत्या गार्हपत्योपस्थानं इति विचारे **सिद्धान्तमाह** । वचनात् ' ऐन्द्या गार्हपत्यमुपतिष्ठते '

इति वचनात् तृतीयाश्रुतिघटितात् ऐन्द्री इन्द्रपदघटिता ऋक् अयथार्थं यथार्थं मुख्यार्थं अतिक्रम्य गौणार्थशेषभूता स्यात्। लिङ्गात् श्रुतेर्बलीयस्त्वात्। तुशब्दः पक्षान्तरव्यावृत्त्यर्थः।

**गुणाद्वाऽप्यभिधानं स्यात् संबन्धस्याशास्त्रहेतुत्वात्। ४ ॥**

ननु ऐन्द्या ऋचा गार्हपत्योपस्थानं 'अग्निना सिञ्चति' इत्यादिवत् अशक्यार्थविधानमनुपपन्नं इति चेत्, तत्राह। वाऽपि अपिवा इतिशब्दः शङ्कानिवृत्तौ। न अशक्यार्थविधानम्। यतः गुणात् अभिधानं स्यात्। हविःश्रपणेशितृत्वगुणयोगात् इन्द्रशब्देन गार्हपत्याभिधानं संभवति। संबन्धस्य वाच्यवाचकभावस्य अनादितया अशास्त्रहेतुत्वात् शास्त्रकार्यत्वासंभवात्। लोकसिद्धगौणवृत्त्याऽपि उपपत्तेः। तस्मात् ऐन्द्या ऋचः गार्हपत्योपस्थाने विनियोगः इति सिद्धान्तः। **के.**

* 'वचनात्त्वयथार्थमैन्द्री स्यात्' इत्यधिकरणे 'गुणाद्वाऽप्यभिधानं०' इति गुणसूत्रेण मन्त्रगतेन्द्रशब्दः हविःश्रपणेशितृत्वादिगुणयोगेन गार्हपत्यं अभिधत्ते इत्येवं गौणसामर्थ्येन श्रौतविनियोगनिर्वाहस्योक्तत्वात्। इदमेव ऐन्द्यधिकरणम्। **कु.** ३।३।७।१३. * 'वचनात् त्वयथार्थमैन्द्री स्यात्' (३।२।२।३) इति न्यायः। अयमेव ऐन्द्रीन्यायः। ननु 'यदग्नये च' इति वाक्ये अग्निर्देवता न विधीयते, तदा वचनस्य झटिति प्रवृत्तेः केवलप्रजापतिरेव देवता स्यात्। एवं च 'अग्निर्ज्योतिः' इति मन्त्रस्य वचनविनियुक्तस्य 'वचनात् त्वयथार्थ०' इति न्यायेन गौण्या प्रजापतिप्रकाशकत्वमेव स्यात् इत्यग्नेः देवतात्वं मन्त्रवर्णतो न लब्धुं शक्यं इति चेत्। **सोम.** १।४।४ पृ. ६६, * 'वचनात् त्वयथार्थ०' इति न्यायेन गौणेऽर्थे विनियोगः 'अग्नीदग्नीन्०' 'व्रतं कृणुत' इति मन्त्रयोः। ३।२।४. * 'वचनात्त्वयथार्थमैन्द्री स्यात्' इति यत् सिद्धवत् गार्हपत्यार्थत्वाङ्गीकारेण उक्तम्, तत् इह स्थापयिष्यमाणश्रुतिबलीयस्त्वाभिप्रायेण। **वा.** ३।३।७।१४ पृ. ८२४, * 'वचनात् त्वयथार्थमैन्द्री स्यात्' (३।२।२।३) इति विनियोगदर्शनादेवानुमीयते शक्तिः इत्युक्तम्।३।३।७।१४ पृ. ८३१, 'वचनात्त्वयथार्थ०' इतिवत् बलवत्तरश्रुतिकृतविनियोगकल्पितलक्षणाद्वारेण। पृ. ८३७. * 'वचनात्त्वयथार्थमैन्द्री स्यात्' (३।२।२।३) इतिसूत्रेण 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इतिश्रुतिबलेन ऐन्द्र्या गार्हपत्योपस्थानाङ्गत्वं विहितम्। श्रुत्याऽपि अशक्तविनियोगासंभवात् कथं इन्द्रशब्देन गार्हपत्याभिधानम्? इत्यपेक्षायां गुणयोगेन इति पूर्वावयवेन ('गुणाद्वाऽप्यभिधानं स्यात्' इत्यनेन) उक्तम्। ननु इन्द्रशब्दस्य गार्हपत्याभिधानशक्तिप्रदर्शनार्थमेव एतद्वचनं कस्मान्न भवति इत्याशङ्क्य, शब्दार्थसंबन्धस्य वृद्धव्यवहारावसेयत्वेन शास्त्रहेतुकत्वाभावात् इति 'संबन्धस्य अशास्त्रहेतुत्वात्' इत्यनेनोक्तम्। **सु.** पृ. ३७३. * 'वचनात् त्वयथार्थमैन्द्री स्यात्' (३।२।२।३)। 'वचनान्वयथार्थमैन्द्री स्यात्' (अन्यथा पाठोऽयम्) इति तार्तीयीकाधिकरणन्यायेन वाचनिकविनियोगबलेन (अग्निसूर्यप्रकाशनसमर्थयोरपि मन्त्रयोः) प्रजापतिलिङ्गकतयोपपत्तिः। पूर्वपक्षोऽयम्। **कु.** १।४।४।४ पृ. ९२.

**፳ वचनात्तु द्विसंयोगस्तस्मादेकस्य पाणिवत्। ६।६।२।१२ ॥**

कुलायं नाम यागं प्रकृत्य उक्तं 'एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति। तुशब्दः एवकारार्थः। वचनात्तु राजपुरोहितौ इति वचनादेव एकस्य राज्ञः द्विसंयोगः पुरोहिताभ्यां द्वाभ्यां संयोगः स्यात्। यद्यपि व्यवहारे एकस्य राज्ञः पुरोहितद्वयं न संभवति तथापि वचनात् एकस्य द्विसंयोगः पुरोहितद्वयसंयोगः स्यात्। पाणिवत्। दक्षिणाचारेण कर्तव्यं इति नियमात् सव्यहस्तो न प्राप्नोति, तथापि 'अञ्जलिना जुहोति' इति वचनात् एकस्य सव्यदक्षिणौ द्वौ पाणी भवतः तद्वत्। पाणी इव पाणिवत्। तथा च राजपुरोहितौ इत्यत्र पुरोहितश्च पुरोहितश्च पुरोहितौ, राज्ञः पुरोहितौ राजपुरोहितौ इति समासः। कुलाययागे एकस्य राज्ञः द्वयोः पुरोहितयोः अधिकारः इति **पूर्वः पक्षः**। तस्मात् इति सूत्रस्थं पदं तु क्वापि नान्वेति। न च केनापि व्याख्यातम्। सर्वत्र पाठात्तु गृहीतमस्माभिः।



**अर्थाभावात्तु नैवं स्यात्। १३ ॥**

'राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति कुलाययागे एकस्य राज्ञः द्वौ पुरोहितौ अधिकृतौ इति पूर्वपक्षं सूत्रेण प्राप्तं निरस्यति। एवं एकस्य राज्ञः पुरोहितौ द्वौ इति तु न स्यात्। अर्थाभावात् द्वयोः पुरोहितयोः प्रयोजनाभावात्। तस्मात् पुरोहितश्च पुरोहितश्च पुरोहितौ, राज्ञः पुरोहितौ इति न समासः।

ननु राज्ञः पुरोहितः राजपुरोहितः। राजपुरोहितश्च राजपुरोहितश्च राजपुरोहितौ इति समासोऽस्तु। तेन च द्वयोः राज्ञोः यौ द्वौ पुरोहितौ, तयोः कुलाययागः इति पक्षोऽस्तु इति चेत्, तत्राह। 'अर्थाभावात्तु नैवं स्यात्' एवं तु एवमपि न स्यात्। अर्थाभावात्। अत्र पक्षे राजशब्दस्य अर्थाभावः प्रयोजनाभावः। पुरोहितौ यजेयातां इत्युक्त्या सिद्धेः।

ननु राजानौ च तौ पुरोहितौ च इति समासेन राजानौ सन्तौ यौ पुरोहितौ तयोः कुलाये अधिकारः इति चेत्, न। ब्राह्मणस्यैव पुरोहितत्वेन वरणस्य श्रवणात्। राज्ञः पुरोहितत्वरूपस्य अर्थस्य अभावात् एवमपि न स्यात्।

तस्मात् राजा च पुरोहितश्च राजपुरोहितौ इति द्वन्द्व एव समासः स्वीकर्तव्यः। एको राजा, एकः तत्पुरोहितः इति द्वयोः कुलाययागे सहाधिकारः इति **सिद्धान्तः।**

**अर्थानां च विभक्तत्वान्न तच्छ्रुतेन संबन्धः। १४ ॥**

'राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इत्यत्र एकस्य राज्ञः द्वौ पुरोहितौ, द्वयोः राज्ञोः द्वौ पुरोहितौ, राजरूपौ पुरोहितौ, इति च पक्षत्रयमपि न संभवतीत्याह। कुलायवाक्यशेषे तच्छ्रुतेन तयोः ब्राह्मणराजन्ययोः श्रुतेन फलेन संबन्धो न स्यात्। द्वयोरपि ब्राह्मणत्वात् क्षत्रियत्वाद्वा। अर्थानां च विभक्तत्वात्, 'तेजः संस्तवो ब्राह्मणस्य, वीर्यसंस्तवो राजन्यस्य' इति हि अर्थानां तेजोवीर्यरूपाणां गुणानां विभक्तत्वं श्रूयते। तच्च राजा च पुरोहितश्च इति सिद्धान्तपक्षे एव युज्यते। तस्मात् राजा च पुरोहितश्च तयोः कुलाये सहाधिकारः। इति **सिद्धान्तः।**

**पाणेः प्रत्यङ्गभावादसंबन्धः प्रतीयेत। १५ ॥**

'राजपुरोहितौ यजेयाताम्' इत्यत्र एकस्य राज्ञः द्वौ पुरोहितौ कुलाययागे सहाधिकृतौ इति पूर्वपक्षे 'पाणिवत्' इति (६।६।२।१२) सूत्रे दृष्टान्त उक्तस्तं विघटयति सिद्धान्ती। 'अञ्जलिना जुहोति' इत्यत्र एकस्य पुरुषस्य सव्यदक्षिणौ द्वौ पाणी (भवतः) इति यदुक्तं तद्युक्तमेव। पाणेः प्रत्यङ्गभावात्। अञ्जलौ कर्तव्ये दक्षिणस्य पाणेः सव्यः पाणिः प्रत्यङ्गभूतः। दक्षिणः पाणिः अङ्गभूतः, सव्यस्तु तस्य प्रत्यङ्गभूतः। अन्यथा हि असंबन्ध एव प्रतीयेत, अञ्जलिसंबन्धप्रत्यय एव न स्यात्। नहि एकेन हस्तेन अञ्जलिर्भवति, नापि पुरुषद्वयस्य द्वाभ्यां दक्षिणहस्ताभ्यां अञ्जलिर्भवति। इति युक्तं तत्र एकस्य पुरुषस्य हस्तद्वयग्रहणम्। राजपुरोहितौ इत्यत्र तु एकस्य राज्ञः पुरोहितद्वयग्रहणे प्रयोजनाभाव उक्तः। तस्मात् राजा च पुरोहितश्च इति द्वौ कुलाययागे सहाधिकारिणौ इति **सिद्धान्तः। के.**

**፳ वचनात्तु परिव्याणान्तमञ्जनादि स्यात्। ५।२।५।१७ ॥**

अग्निष्टोमे अग्नीषोमीये पशौ यूपस्य अञ्जनाद्याः परिव्याणान्ताः पदार्थाः श्रूयन्ते। ते यूपैकादशिन्यां चोदकेन प्राप्ताः। तत्र किं अञ्जनादीनां एकैकेन अनुसमयः उत अञ्जनादिना परिव्याणान्तेन धर्मकाण्डेन अनुसमयः इति विचारे सिद्धान्तमाह। यूपैकादशिन्यां अञ्जनादि परिव्याणान्तं गुणकाण्डं प्रतियूपं अनुसमेतव्यम्। वचनात् 'अञ्जनादि यूपं नावसृजेत् आ परिव्याणात्' इत्येतस्मात् परिव्याणान्तस्य एकपदार्थत्वावसायात् इति। तस्मात् परिव्याणान्तेन अनुसमय इति सिद्धान्तः।

**कारणाद्वाऽनवसर्गः स्याद् यथा पात्रविवृद्धिः। ८ ॥**

यूपैकादशिन्यां अञ्जनादिपरिव्याणान्तेन अनुसमयः 'अञ्जनादि यजमानो यूपं नावसृजेत् आ परिव्याणात्' इति वचनात् इति सिद्धान्ते उक्ते **पूर्वपक्षमाह**। वाशब्दः पक्षविपरिवृत्तौ। योऽयं अनवसर्गः अवसर्गाभावः

अपच्छेदाभावः अन्वारम्भः उक्तः सः कारणात् स्यात् अध्वर्योः साहाय्यार्थः स्यात् । यूपान्तरं उच्छ्रयितव्ये सति अवसृजेत् उच्छ्रयणेन कारणेन । न तु तेन परिव्याणान्तता सिध्यति । यथा पशौ 'पृषदाज्येन अनुयाजान् यजति' इति पृषदाज्यधारणार्थं पात्रस्य विवृद्धिर्भवति पात्रभेदो भवति अर्थात् तथा प्रकृतेऽपि अर्थात् अनवसर्गः न तु असौ नियामकः ।

**वृत्तौ** तु कारणात् अध्वर्योः सहायापेक्षारूपकारणात् अवसर्गः यजमानातिरिक्तकल्पना स्यात् । यजमानकार्ये अन्वारम्भे अन्यः कल्प्यः स्यात् इति व्याख्यातम् । अवसर्गः इत्येव च पाठो गृहीतः । **कुतूहलेऽपि** पदार्थानुसमयभङ्गात् कारणात् अत्र अवसर्गः स्यात् इति व्याख्यातम् । परंतु 'अवसर्गः अन्वारम्भः स्यात्' इति तत्र लेखः । स च न युज्यते । अवसर्गः अवसर्जनं त्यागः अपच्छेदः इत्यर्थः । अन्वारम्भस्तु अनवसर्गः ।

**न वा शब्दकृतत्वान्न्यायमात्रमितरदर्थात् पात्रविवृद्धिः । ९ ॥**

यूपैकादशिन्यां अञ्जनादिपरिव्याणान्तेन गुणकाण्डेन अनुसमयः इति सिद्धान्ते उक्ते पूर्वपक्षिणा 'कारणाद्वाऽनवसर्गः ०' इति सूत्रेण कृतां शङ्कां सिद्धान्ती निरस्यति । वाशब्दो निराससूचकः । न पदार्थानुसमयः किन्तु परिव्याणान्तेन पदार्थकाण्डेन अनुसमयः स्यात् । अनवसर्गः अन्वारम्भस्तु न कारणात् किंतु शब्दकृतत्वात् 'यूपं नावसृजेत आ यूपपरिव्याणात्' इति वचनादेव । शक्नोति हि ऋतेऽपि यजमानात् अध्वर्युः यूपमुच्छ्रयितुम् । इतरत् यूपसहत्वप्रापकं प्रयोगवचनं तु न्यायमात्रम् । प्रयोगवचनात् चोदको बलवान् । पशौ पृषदाज्यपात्रविवृद्धिस्तु अर्थात् उपभृतः आज्यग्रहणे व्यापृतत्वात् पृषदाज्यधारणानुपपत्तेः । के.

* 'वचनात्तु समुच्चयः' ( ३।६।१६।४५ ) इति सिद्धान्तेऽपि दर्शनमेव अगत्या वचनीकृत्य समुच्चयं वक्ष्यति । वा. ३।६।१६।४२ पृ. १०६४. * वचनात् यातयामविधानात् । 'कुशा दर्व्यादयो मन्त्रा ब्राह्मणाश्च बहुश्रुताः । न ते निर्माल्यतां यान्ति विनियोज्याः पुनः पुनः ॥' इति स्मृतेः । ( वा. ३।२।८।२४ ) । सु. पृ. ११२१.

§ **वचनाद्रथकारस्याऽऽधानेऽस्य सर्वशेषत्वात् । ६।१।१२।४४ ॥**

रथकारस्य त्रैवर्णिकभिन्नस्य जातिविशेषस्य आधाने अग्न्याधेये अधिकारः प्रत्येतव्यः, 'वर्षासु रथकार आदधीत' इति वचनात् । अस्य रथकारकर्तृकाधानस्य सर्वशेषत्वात् सर्वेषां त्रैवर्णिकानां आधानेभ्यः अवशिष्टत्वात् । अथवा अस्य रथकारस्य सर्वेभ्यः त्रैवर्णिकेभ्यः अवशिष्टत्वात् । इति **पूर्वपक्षः** । अत्र रथकारः अत्रैवर्णिक एव इति पूर्वपक्षांशः । त्रैवर्णिकेभ्यः किंचित् हीनः न तु सर्वथा अत्रैवर्णिकः इति तु सिद्धान्तो भविष्यति ।

**न्याय्यो वा कर्मसंयोगाच्छूद्रस्य प्रतिषिद्धत्वात् । ४५ ॥**

'वर्षासु रथकार आदधीत' इति आधानाधिकारी रथकारः अत्रैवर्णिकः इति पक्षे सूत्रेण प्राप्ते कश्चिदाह । न्याय्यः न्यायादनपेतः कर्माधिकारन्यायसंपन्नः त्रैवर्णिकः एव रथकारः स्यात् । न अत्रैवर्णिकः इति वाशब्दार्थः । त्रैवर्णिकस्यापि रथकारशब्दस्तु कर्मसंयोगात् रथनिर्माणरूपकर्मणा संयोगात् स्यात् । शूद्रस्य तु कर्मसु प्रतिषिद्धत्वात् न शूद्रो रथकारः । तस्मात् त्रैवर्णिकः कदाचित् रथकर्मकर्ता रथकारः स्यात् । तस्य वर्षासु आधानं इति कश्चित् ।

'न्याय्यो वा स्यात्' इति पाठः कुतूहले । नीयते इति न्यायः । कर्मणि घञ् । रथकर्मसंयोगं प्रवृत्तिनिमित्तं आश्रित्य रथकारशब्दः अत्र त्रैवर्णिकेष्वेव नेतव्यः इति तदर्थः । शेषं समानम् ।

**अकर्मत्वात्तु नैवं स्यात् । ४६ ॥**

पूर्वसूत्रोक्तपक्षनिरासार्थः तुशब्दः । 'वर्षासु रथकार आदधीत' इत्युक्तो रथकारः एवं त्रैवर्णिकः न स्यात् । अकर्मत्वात् त्रैवर्णिकस्य शिल्पकर्मशून्यत्वात्, 'न जीवेयुर्द्विजाः शिल्पैः' इति निषेधात् ।

**आनर्थक्यं च संयोगात् । ४७ ॥**

'वर्षासु रथकार आदधीत' इत्युक्तो रथकारः त्रैवर्णिकभिन्नः इति पक्षे युक्त्यन्तरप्रतिपादनार्थं सूत्रम् । चकारः हेत्वन्तरसूचनार्थः । ब्राह्मणादीनां वसन्तादिभिः संयोगात् । यदि त्रैवर्णिको रथकारः स्यात् तस्य वर्षाकालोक्तेः आनर्थक्यं स्यात् । तस्मात् रथकारः त्रैवर्णिकभिन्नः ।



**गुणार्थेनेति चेत् । ४८ ॥**

'वर्षासु रथकार आदधीत' इत्युक्तो रथकारः त्रैवर्णिकभिन्नः त्रैवर्णिकानां शिल्पनिषेधात् इति यदुक्तं तत्राह । यद्यपि जीवनार्थं द्विजानां शिल्पं निषिद्धं तथापि गुणार्थेन गुणाधिक्याय नानाविधज्ञानार्जनार्थेन त्रैवर्णिकोऽपि रथं कुर्यात् । आपदि जीवनार्थमपि द्विजस्य रथकरणं स्यात् । तस्मात् रथकारः न त्रैवर्णिकभिन्न एव । इति चेत् कश्चित् ब्रूयात् ।

**उक्तमनिमित्तत्वम् । ४९ ॥**

'वर्षासु रथकार आदधीत' इति रथकारस्य त्रैवर्णिकस्यैव सतः रथकरणनिमित्तेन वर्षासु आधानं तस्य विधीयते इति केनचिदुक्ते उत्तरमाह सिद्धान्ती । 'वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः' इति श्रवणानि न निमित्तार्थानि किंतु प्रापकाणि इति 'चातुर्वर्ण्यमविशेषात्' ( ६।१।७।२५-२८ ) इत्यधिकरणे उक्तम् । उक्तं अनिमित्तत्वं तेषां श्रवणानाम् । तेन 'वर्षासु रथकार आदधीत' इति श्रवणं वस्याप्राप्तमाधानं तस्यैव प्रापकम् । तस्मात् अत्रैवर्णिकस्य रथकारस्येदमाधानम् ।

**सौधन्वनास्तु हीनत्वान्मन्त्रवर्णात् प्रतीयेरन् । ५० ॥**

'वर्षासु रथकार आदधीत' इत्युक्तो रथकारो नाम कः स्यात् ? इत्यत्र सिद्धान्तमाह । तुशब्दः पूर्वोक्तपक्षद्वयनिरासार्थः । अत्रत्यरथकारशब्देन सौधन्वना नाम जातिविशेषो ग्राह्यः । तस्य त्रैवर्णिकेभ्यः किंचित् हीनत्वात् अन्ते निवेशः । मन्त्रवर्णात्तु रथकारशब्देन सौधन्वना एव प्रतीयेरन् । 'ऋभूणां त्वा देवानां व्रतपते व्रतेनादधामि' इति रथकारस्य आधानमन्त्रः । 'नेमिं नयन्ति ऋभवो यथा' इति मन्त्रे ये नेमिं नयन्ति ते ऋभवः इत्युक्तम् । 'सौधन्वना ऋभवः सूरचक्षसः' इति मन्त्रे च सौधन्वनापरपर्याया ऋभवः इति बोधितम् । तस्मात् अत्रैवर्णिकस्य शूद्रभिन्नस्य एतदाधानमिति **सिद्धान्तः** । के.

* 'वचनाद्रथकारस्याधानस्य ( नेऽस्य) सर्वशेषात् ।' ६।१।१२।४४ ॥ 'वर्षासु रथकार आदधीत' इति किं अवयवप्रसिद्ध्या त्रैवर्णिकानामन्यतमो रथकारशब्देनोच्यते समुदायप्रसिद्ध्या वा अन्यो जातिशब्दः इति संदेहे अवयवप्रसिद्ध्या रथकारिणि त्रैवर्णिके रथकारशब्दसंभवात् अपशूद्राधिकरण-(६।१।७।२५ )प्रतिषिद्धस्य अत्रैवर्णिकस्याधिकारो न युक्तः । इति **प्राप्ते**, समुदायप्रसिद्ध्या अवयवप्रसिद्धिबाधात् वचनबलेन अत्रैवर्णिकस्यैवाधिकारः इति वक्ष्यते ।

तत्र समुदायप्रसिद्धेः अवयवप्रसिद्धितो बलीयस्त्वं व्युत्पादितम् । अन्यत एव तु समुदायप्रसिद्धिबलीयस्त्वसिद्धौ न्यायेन प्रतिषिद्धस्यापि अत्रैवर्णिकस्यैव वचनबलेन अधिकारनिश्चयात् संदेहाभावेन रथकाराधिकरणारम्भो न युज्येत । न चान्यत्र क्वचित् समुदायप्रसिद्धिबलीयस्त्वव्युत्पादनं दृश्यते । न च तद्व्युत्पादनं विना पारिशेष्यमात्रेण अत्रैवर्णिकस्य अधिकारसिद्धिः । त्रैवर्णिकस्यापि अवयवार्थयोगेन रथकारशब्दवाच्यत्वसंभवे वसन्तादिवाक्यैः तस्याधानप्राप्तावपि रथकारित्वेन निमित्तेन वर्षाकालाधानार्थतया वचनोपपत्तौ अविदुषः अत्रैवर्णिकस्य अधिकारकल्पनाऽनुपपत्तेः । अत एव वचनात् इति मुख्यं हेतुं व्याख्याय आधानस्य असर्वशेषत्वात् इत्यनेन आधानसंबन्धितया सर्वेभ्यः ब्राह्मणराजन्यवैश्येभ्यः प्राप्तेभ्यः अत्रैवर्णिकस्य परिशिष्टत्वात् अयमाधानविधिः इत्येवमुक्तो हेतुः 'सर्वशेषश्च अत्रैवर्णिकः आधाने' इति भाष्ये चशब्दप्रयोगात् उपचयोपपत्तित्वेन व्याख्यातः । सु. पृ. ४६६. * 'अतिरात्रमेके प्रथममाहरन्ति' इति **वचनादेव** अतिरात्रसंस्थाकज्योतिष्टोमस्य प्रथममनुष्ठानम् । **भाट्ट. ५।३।१३. * वचनस्य** कार्ये अर्थे स्वातन्त्र्यम् । **बृहती** पृ. २३. * नास्ति वचनस्य अतिभारः । **भा.** ३।२।२।३, ३।२।६।१९, ३।५।५।१८, ३।७।५।११, ४।३।१६।२८, ५।३।४।१०, ५।४।५।१७, १०।१।१।१, * नहि वचनस्य किंचिदलभ्यं नाम । ६।१।१२।४४,

* **वचने** प्रत्यक्षे सति न आनुमानिकम् । १।२।४।३४. * प्रत्यक्ष**वचने** सति सामर्थ्ये अप्रापकम् । **वा.** २।३।३।४. पृ. ५८९.

* **वचनातिदेशः** इत्यत्र वचनं द्विविधं प्रत्यक्षश्रुतं आनुमानिकं चेति । **बाल.** पृ. ११८.

* **वचनानर्थक्यात्** वरं पदमात्रस्य लक्षणा । **सोम.** ७।३।८.

* **वचनतः** भृतिः ( त्रिभिः प्रकारैः भृतिर्भवति, व्यापारतः फलतो वचनतः इति )। आशितंभवाया: आधिक्यं वचनस्य विषयः। आशितंभवं यद् द्रव्यं सा भृतिः, सा दक्षिणा । ततोऽधिकं दक्षिणात्वे सिद्धे वचनप्रामाण्यात् भवति । विकृतौ ऋतपेये वचनप्रामाण्यात् अल्पत्वलकरणमपि दक्षिणायाः स्थाने विधीयते सोमचमसः। **भा.** १०।३।११।४५.

* **वचनप्रामाण्यात्** प्रतिषेधो विधिं बाधित्वा भविष्यति । विधिरपि प्रतिषेधम् । नान्या गतिरस्ति इति पक्षे मिथ्याप्रत्ययः कल्पयिष्यते । तदा विधिः यदा न प्रतिषेधः । तदा प्रतिषेधो यदा न विधिरिति । **भा.** १०।८।३।६.

* **वचनमात्रस्य** ऊहो यथा–'छागस्य वपाया मेदस' इति प्रकृतौ । प्राजापत्येषु तु ' छागानां वपानां मेदसां ' इति । **बाल.** पृ. १२७.

* **वचनविभक्त्यो**र्विभक्तिः प्रधानम् , कारकवाचित्वात् । वचनं तु गुणः, कारकसंख्याभिधायित्वात् । **वि.** ९।३।५.

* **वचनव्यक्तिः** । अन्या हि वचनव्यक्तिः विधीयमानस्य, अन्या गुणेन संबध्यमानस्य । अज्ञातवत् ज्ञाप्यते विधीयमानोऽर्थः, ज्ञातवदनूद्यते गुणसंबन्धार्थम् । न च सकृदुच्चार्यमाणः ज्ञातवत् अज्ञातवच्च भवितुमर्हति । **भा.** ३।१।६।१२ पृ. ६५०.

* **वचनशतेनापि** अशक्यविनियोगायोगः । **सु.** पृ. १०८९. * **वचनशतेनापि** नहि इन्द्रशब्दः शक्यो गार्हपत्याभिधानसमर्थः कर्तुम् । **वा.** ३।२।२।४ पृ. ७५४. * न **वचनशतेनापि** शक्यमेतत् । इन्द्रशब्देन अग्निं प्रत्याययेदिति ब्रुवन् विहन्येत । यथा अग्निना सिञ्चेत्, उदकेन दीपयेदिति । **भा.** ३।२।२।४, * नहि **वचनशतेनापि** अनारभ्योऽर्थः शक्यते विधातुम् । यो हि ब्रूयात् ' उदकेन दग्धव्यम्, अग्निना क्लेदयितव्यम् ' इति किं स वचनप्रयोजनसामञ्जस्यमश्नुवीत । ३।१।६।१२ पृ. ६९१.

* **वचाभक्षणादिक्रियाफलं** मेधादिप्राप्तिः । **सु.** पृ. ५९.

**वज्रलेपन्यायः** । अयं वस्तुनः सुदृढसुस्थिरत्वविवक्षायां प्रवर्तते । **साहस्री.** ७७५.

* **वज्रिणी** नाम इष्टकाः अग्निशेषः, न तु चितिशेषः । तेन ताः सकृदुपधातव्याः न तु प्रतिचिति । ग्रहेष्टकाधिकरणम् । **भा.** ५।३।६।१५–१६, * **वज्रिणी** नाम इष्टकाः अप्रकरणे समाम्नाताः । तासामपि अग्न्यर्थत्वात् अखण्डत्वम्, अकृष्णत्वम् , भस्मसंयोगः, इति धर्माः कर्तव्याः प्रकरणात् वाक्यस्य बलवत्त्वात् । ३।६।१२।३५, * **वज्रिणीनां** इष्टकानां मध्यमचितौ उपधानम् । ५।३।७।१७–१९, तच्च प्राक् लोकंपृणायाः स्यात् । ५।३।८।२०.

* **वञ्जुलः** अप्सु जायते । ' अप्सुजो वेतसः ' इति वञ्जुले वेतसशब्दं दर्शयति । **भा.** १।३।४।९.

**वटे यक्षन्यायः** । यदि वक्तृपरम्परोपदेशस्य मूलभूतोऽनुभवो नास्ति तदा सोऽप्येतादृशः, सत्त्वे तु विलक्षण इति बोध्यम् । इममेवैतिह्यप्रमाणविशेषतया वदन्तीति केचित् । **साहस्री.** २५.

* ' **वत्सः** प्रथमजो दक्षिणा ' आग्रयणे । सः अन्वाहार्यधर्मकः स्यात् । **भा.** १०।३।७।३५ । परंतु वत्से पाको न कार्यः । १०।३।८।३६ । तत्र अभिघारणमपि न स्यात् । १०।३।१०।३८. * **वत्साः** ( वत्सगोत्राः ) पञ्चावत्तिनः । **वि.** १०।७।२०. * ' **वत्सं** आलभेत ' अत्र साक्षाद्विनियुक्तदोहाङ्गगोद्रव्योपकारकतया वत्सस्य आलम्भसंस्कार्यत्वम् , तेन आलभनं साक्षाद् विनियुक्तोपकारकभाव्युपयोगद्रव्यसंस्कारार्थं दृष्टार्थं संनिपत्योपकारकं क्रत्वर्थं प्रवृत्तिरूपं वैदिकं कर्म इदं च पशुसोमाधिकरणे भवदेवः । **बाल.** पृ. ८२. * ' वत्समालभेत ' इति अग्निहोत्रे धेनुदोहाधिकारे श्रूयते । तत्र वत्सस्पर्शमात्रविधिरयं न यागविधिः । वत्सालम्भाधिकरणम् । २।३।६।१६–१७. * **वत्सेन** बर्हिषा च उपलक्षितस्य कालस्य विधानं व्रतार्थं दर्शपूर्णमासयोः । ६।४।१२।३४–४०. * **वत्से** अन्वाहार्यस्थानापन्नेऽपि अभिघारणं नानुष्ठेयमाग्रयणे । १०।३।१०।३८. **मीको.** पृ. ८५५ ' आग्रयणे वासोवत्सयोः अन्वाहार्यस्थानापन्नयोरपि अभिघारणस्य बाधः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * वत्से अन्वाहार्यस्थानापन्नेऽपि पाकाननुष्ठानमाग्रयणे । १०।३।८।३६. **मीको.** पृ. ८५३ ' आग्रयणे अन्वाहार्यस्थानापन्नेऽपि वत्से पाकस्य बाधः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * वत्से आग्रयणदक्षिणारूपे प्राकृतान्वाहार्यधर्मानुष्ठानम् । १०।३।७।३५. **मीको.** पृ. ८५५ ' आग्रयणे दक्षिणारूपयोर्वासोवत्सयोः प्राकृतान्वाहार्यधर्माः कर्तव्याः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वत्साधिकरणम्** । २।३।६।१६–१७ । इदमेव वत्सालम्भाधिकरणम् ।

* **वत्सापाकरणमेव** शाखाच्छेदनादेः प्रयोजकं न कपालोपधानम् । ४।२।३।८–९. **मीको.** पृ. ११७४ ' उपवेषाधिकरणम् ' इत्यत्र द्रष्टव्यम् । * वत्सापाकरणं दोहधर्मः । स च सायंप्रातरुभयदोहार्थः । **वि.** ३।६।८, * वत्सापाकरणं पलाशशाखाछेदनस्य प्रयोजकम् , न तु प्रस्तरेण सह प्रवृत्तिः प्रयोजिका । ५।१।१ प्रस्तावे, * वत्सापाकरणं शाखया ' यत् पलाशशाखया वत्सानपाकरोति ' ' शाखया वत्सानपाकरोति ' । ४।२।२, ३, * वत्सापाकरणं सांनाय्यदोहनसाधनम् , तदङ्गं च पलाशशाखाऽऽहरणम् । ४।३।१०.

* **वत्सापाकरणकालेन** व्रतसंयोगो दर्शे असंनयत्पक्षेऽपि । ६।८।१३।४१–४३. **मीको.** पृ. २०२२ ' दर्शे वत्सापाकरणकालेन व्रतसंयोगः असंनयत्पक्षेऽपि ' इत्यत्र अधिकरणं द्रष्टव्यम् । * **वत्सापाकरणकालस्य** संनयदसंनयदुभयसाधारणता । **वि.** ६।४।१३. * **वत्सापाकरणकाले** व्रतमुपेयात् दर्शे । ६।४।१२।३४–४०. **मीको.** पृ. २०६० ' दर्शपूर्णमासयोः व्रते वत्साद्युपलक्षितकालस्य विधानम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वत्सापाकरणदोहनादयः** सांनाय्यधर्माः । **वि.** ५।४।२.

**वत्सालम्भाधिकरणम्** । वत्साधिकरणम् । अग्निहोत्रदोहाधिकारस्थो वत्सालम्भः स्पर्शमात्ररूपः संस्कारः ॥

**विशये प्रायदर्शनात् । २।३।६।१६॥**

**भाष्यम्**— किमिहोदाहरणम् । न तावत् सूत्रेणैव परिगृहीतम्, यथा ' अवेष्टौ यज्ञसंयोगात् क्रतुप्रधानमुच्यते ' ( २।३।२।३ ) इति । नापि च साध्यं प्रतिज्ञातं यथा ' अयनेषु चोदनान्तरम् ' ( २।३।४।५ ) इति । केवलं विशये संशये प्रायदर्शनं हेतुः इति निर्दिश्यते । कस्यायं हेतुः इति न विजानीमः । प्रकृतं यजिमदेतत् कर्म इति तदपि न संबध्यमानमिव पश्यामः । तदेतदगमकं सूत्रमेव तावत् अनर्थकम् । अथ काऽत्र प्रतिज्ञा, कश्च संदेह इति वक्तव्यम् । वृत्तिकारवचनात् प्रतिज्ञां संशयं चावगच्छामः । अत्र भगवानाचार्यः इदमुदाहृत्य ' वत्समालभेत वत्सनिकान्ता हि पशवः ' इति । इमं संशयमुपन्यस्यति स्म, किं यजिमदभिधान एव आलभतिः, उत आलम्भमात्रवचनः इति । उपपद्यते चैतदुदाहरणं संशयश्च । तत्र च पूर्वपक्षं प्रतिजानीते स्म, यजिमदभिधान इति । इदं तु प्रत्युदाहरणसूत्रं पूर्वस्याधिकरणस्य । नात्र पूर्वपक्षेण अतीव प्रयोजनम् । तथापि पुरुषाणां उच्चावचबुद्धिविशेषानालोच्य भवति मन्दानां सामान्यतो दृष्टेनापि आशङ्का । साऽपि निवर्तनीया । न हि मन्दविषेण वृश्चिकेनापि दष्टो म्रियेत, न जातुचित् कदाऽपि तत्र चिकित्सा नाऽऽदरेण कर्तव्या भवेत् । अतस्तां निवर्तयितुं पूर्वपक्षमुपन्यस्यति स्म । आलभतिः अस्माभिः प्राणिसंयुक्तो यजिमदभिधानो दृष्टः, अयमपि आलभतिः प्राणिसंयुक्त एव, तेन अयमपि यजिमद्वचन एवेति भवति कस्यचिदाशङ्का । **अथवा** यजिमदभिधानो दृष्ट आलभतिः प्राणिसंयुक्तः, तस्यायमनुवादो वत्सविधानार्थः । तथा च फलं न कल्पयितव्यं भविष्यतीति । **एवं प्राप्ते, ब्रूमः** । अस्मिन् संशये आलम्भमात्रं संस्कारः । कुतः ? प्रायदर्शनात् । यत्र अन्यान्यपि संस्कारकर्माणि प्रायभूतानि इत्युच्यन्ते । तत्र एतदपि

श्रूयते । प्रायादपि चार्थनिश्चयो भवति । यथा अग्न्यप्राये लिखितः, अग्न्य इति गम्यते । **ननु** लिङ्गं प्रायदर्शनम्, कथमनेन सिद्धिरिति । **उच्यते** । यथा प्रायदर्शनेन सिध्यति तथा वर्णयितव्यम् । कथं च प्रायदर्शनं हेतुः ? न्यायतः प्राप्तौ सत्याम् । कः पुनर्न्यायः ? देवतासंबन्धाभावात् न यागवचनः । दृष्टार्थत्वाच्च वत्स आलभ्यमानो ( स्पृश्यमानो ) गां प्रस्नावयिष्यतीति । तस्मादेवं न्यायप्राप्ते प्रायदर्शनं द्योतकं भवति । तस्मादालम्भमात्रं संस्कारः ( स्पर्शमात्रम् ) ।

**वा— 'सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्तिके । सूत्रं योनिरिहार्थानां सर्वं सूत्रे प्रतिष्ठितम् ।।'** इति ये वदन्ति तान् प्रति उच्यते । न किंचित् साधनं अप्रदर्शितविषयं स्वार्थं साधयति । सूत्रकारेण च इह हेतुमात्रमुपात्तम् । न च अर्थप्रकरणादिभिरपि उदाहरणप्रतिज्ञासंशयहेतूनां अन्यतममुपलभ्यते । तस्मात् अगमके सूत्रे सति अवश्यं दोषप्रतिसमाधानार्थं वृत्तिकारादिभिर्यतितव्यम् । सत्येव संभवे अध्याहारादिवर्जनमुक्तम् (शास्त्रादौ भाष्ये) । सर्वथा शिष्यप्रज्ञासंस्कारे सूत्रकारादीनां प्रवर्तमानानां येनैव तदनुगुणं यत् कृतं तदेव ग्रहीतव्यम्, नासद्ग्रहः कर्तव्यः । इदं सूत्रकारेण नोपात्तम्, इदं वृत्तिकारेण एतत्प्रदर्शनार्थं एतद् वर्णयन्ति । तदिह भगवान् उपवर्षः किल अग्निहोत्रे धेनुदोहाधिकारे श्रुतमिदं वाक्यं उदाहृतवान् 'वत्समालभेत' इति । तत्र च पूर्ववदेव त्रेधा संशयमुपन्यस्तवान् । किं प्राकृत एव आलम्भे वत्सो विधीयते, तथा आलम्भमात्रं अथवा यजतिमदेतत् कर्मेति । तत्र विशेषणाभावात् प्राकृतप्रत्ययो नास्ति इति पूर्वाधिकरणसिद्धमेव इति नोपन्यस्तम् ( भाष्ये ) । तेनैवानुक्रमेण यजिमदभिधानबुद्धौ प्रसक्तायां अपवादोऽयं क्रियते । तत्र भोक्तृसंयोगप्रत्युदाहरणत्वात् गतप्रायोऽपि पूर्वपक्षः श्रोतृबुद्धिवैचित्र्यात् क्रियते । यो नाम तार्किकवासनया सामान्यतोदृष्टेन वेदार्थमुन्निनीषेत् तस्य तन्निवृत्तिः अप्रदर्शिताशङ्का न शक्या कर्तुं इति प्रदर्श्यते । तत्र केषांचित् पूर्वाधिकरणे एव आलभतिः यजतिपर्यायत्वेन प्रसिद्धः, अन्येषां यज्यनुमापकत्वेन, तदुभयं अत्रापि तथैव मन्यन्ते । तत्र अपूर्वयागविधानम्, प्राप्ते वा वत्सविधानं इति **पूर्वपक्षे द्वैतम्** । **सिद्धान्तस्तु** द्रव्यदेवतासंबन्धान्यथानुपपत्त्या पूर्वमस्माभिः यजिः कल्पितः नादृष्टपूर्वशक्त्यालभत्यभिधानेन व्यभिचार्यनुमानाभासेन वा । न चेह असौ अस्ति इति यावदुक्तता । तथा च दोहनादिसंस्कारकर्मप्रायदर्शनमुपपद्यते । दृष्टार्थत्वं च गोप्रस्नवनहेतुत्वात् ।

**अर्थवादोपपत्तेश्च । १७ ॥**

**भाष्यम्—** अर्थवादश्च भवति 'वत्सनिकान्ता हि पशवः' इति ( नितरां कान्तः प्रियः, वत्सः निकान्तः येषां ते वत्सनिकान्ताः ) । यस्मात् वत्सप्रियाः पशवः, तस्मात् वत्स आलब्धव्य इति । यदि गां प्रस्नावयितुं आलभ्यते तत्र एतद्वचनमवकल्पते । अथ संज्ञपयितुं तत्र एवंजातीयकं वचनं नोपपद्येत । तस्मादपि आलम्भमात्रं संस्कार इति सिद्धम् ।

**वा—** 'वत्सनिकान्ता हि' इति प्रस्नावनार्थं च वत्सोपचारस्पर्शनविधौ हेतुवन्निगदोऽर्थवाद उपपद्यते । मारणार्थत्वे तु आलभ्यमाने वत्सप्रियत्वं पशूनामुच्यमानं असंबद्धमेव स्यात् । यस्मादसौ मातुः प्रियो वत्सः, तस्मात् संज्ञपनार्थमालब्धव्य इत्यसंबद्धमेव स्यात् । इतरत्र पुनः वत्सप्रिया माता पुत्रे चाटुकरणात् तेन वा कृतचाटुना संयुज्यमाना स्नेहात् प्रस्नविष्यति इत्युपपद्यते । तस्मादपि प्रयोजनवत्संस्कारभूतालम्भमात्रविधानं एतत् इति सिद्धम् ।

**शा—** अग्निहोत्रदोहाधिकारे 'वत्समालभेत' इति श्रुतम् । तत्र असत्यपि देवतासंयोगे प्राणिद्रव्यकालम्भत्वसामान्यात् अत्रापि यागविधिं मन्यते । तस्योत्तरम्, आलम्भो नाम स्पर्शमात्रं न तस्य यागमन्तरेण अनुपपत्तिः । लोकेऽपि च दृष्टत्वात् । अतोऽत्र आलम्भमात्रं वत्ससंस्कारो विधीयते ।

**सोम—** अत्र पूर्वपक्षस्यातिमन्दत्वेन प्रत्युदाहरणमात्रत्वम् । **प्रयोजनं** पूर्वपक्षे अग्निहोत्राङ्गतया कश्चित् पशुयागः अनुष्ठेयः । **सिद्धान्ते** तु वत्सचाटुकरणम् । **सूत्रार्थस्तु—** यागविधिः संस्कारविधिर्वा इति संशये यावदुक्तं संस्कारमात्रमेव विधेयम्, दोहनादिसंस्कारप्रायपाठात् इति ।



**वि—** 'वत्सालम्भो यजिः स्पर्शो वा, वायव्यादिवद् यजिः ।, स्पर्शः स्याद् देवराहित्यात् संस्कारः प्रायपाठतः ।।'

**भाट्ट—** यत्र तु न देवताश्रवणं तत्र न यागकल्पना, अपितु संस्कारमात्रविधानम् । यथा अग्निहोत्रे 'वत्समालभेत' इत्यत्र आलम्भमात्रं वत्ससंस्कारकत्वेन विधीयते । आलभतेः स्पर्शमात्रवाचित्वात् ।

**मण्डन—** 'वत्सालम्भो यजिर्नहि ।'

**शंकर—** 'वत्सालम्भो यजिर्न तु ।'

* वत्सालम्भाधिकरणं ( २।३।६।१६–१७ ) 'ईषालम्भाधिकरणस्य' (२।३।५।१२–१५ ) अपवादः । **कौ.** २।३।६।१६, * वत्सालम्भाधिकरणम् । वत्साख्यगुणस्य अनिश्चितविधेयताकस्य भेदप्रयोजकत्वम्, संस्कारविधिप्रायपाठः इति च ( न्यायशरीरम् ) । २।३।६।१७.

**वत्सक्षीरन्यायः ।** यथा वत्सविवृद्ध्यर्थं अचेतनं क्षीरं प्रवर्तते, तथा अचेतनाऽपि प्रकृतिः पुरुषमोक्षणाय प्रवर्तते इति सांख्याः । उक्तं च— 'वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य । पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ।।' इति । **साहस्री.** ७२९.

* **वत्सजानुतादि** वेदस्य ( दर्भमयसंमार्गसाधनस्य ) पुरुषार्थमेव । **भा.** ४।१।२।२ वर्णकं २.

* **वत्सत्वं** गोत्वैकार्थसमवायिनी बाल्यावान्तरजातिः । **सु.** पृ. १४११.

* **वत्सत्वक्** वासश्चेत्यनयोः समुच्चयः, न विकल्पेनापि वाससो बाधः, अष्टरात्रे । वत्सत्वक् उपरिवाससः कार्यं भविष्यति, वासस्तु अधोवाससः । **भा.** १२।३।१।१–२, * वत्सत्वक् विश्वजिति एकाहे परिधानार्थमाम्नाता 'अवभृथादुदेत्य वत्सत्वचं परिधत्ते' इति । १२।३।१।१.

* **वत्सत्वगहतवाससोः** समुच्चयः अष्टरात्रगते विश्वजिति । १२।३।१।१–२. **मीको.** पृ. ७५१ 'अष्टरात्रगते विश्वजिति वत्सत्वगहतवाससोः समुच्चयः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वत्सनिकान्ताः ।** वत्सः नितरां कान्तः प्रियो येषां तादृशाः पशवः । **के.**

* **वत्सरूपदक्षिणया** आग्रयणगतया प्राकृतान्वाहार्यदक्षिणायाः बाधः । **भा.** १०।३।६।३४.

* **वत्सशब्दः** गोवयोविशेषवचनः । **वा.** ३।४।४।१३ पृ. ९२०.

**वत्ससंयोगे व्रतचोदना स्यात् । ६।४।१२।३४ ॥**

दर्शपूर्णमासयोः 'बर्हिषा वै पौर्णमासे व्रतमुपयन्ति, वत्सैरमावास्यायाम्' इति श्रुतम् । तत्र वत्सेन संयोगः श्रुतः । तस्मिन् वत्ससंयोगे बर्हिःसंयोगे च श्रुते सति व्रतचोदना बर्हिर्वत्ससाधनकव्रतविधिः स्यात् । औपवसथ्येऽहनि रात्रौ बर्हिषः वत्सस्य च भक्षणं कर्तव्यं इति **पूर्वः पक्षः** ।

**कालो वोत्पन्नसंयोगाद् यथोक्तस्य । ३५ ॥**

वाशब्देन प्रथमं पूर्वपक्षं निषिध्य द्वितीयं पक्षमाह । 'बर्हिषा वै पौर्णमासे व्रतमुपयन्ति वत्सैरमावास्यायाम्' इत्यत्र यथोक्तस्य 'अमाषममांसं बहुसर्पिष्कं व्रतं व्रतयति' इति वचनान्तरेण प्राप्तस्य व्रतस्य कालो विधीयते व्रतस्य प्राप्तत्वात् कालस्य चाप्राप्तत्वात् । न तु बर्हिर्वत्ससाधनकव्रतविधिरयम् । उत्पन्नसंयोगात् । उत्पन्नस्य विहितस्य व्रतस्य संयोगोऽयम्, न तु उत्पत्तिसंयोगः । उत्पन्नसंयोगात् यथोक्तस्य व्रतस्य कालोऽयं विधीयते इति । व्रतं व्रतयति भक्षणीयं भक्षयति इत्यर्थः । तथा च बर्हिराहरणकाले पौर्णमासे व्रतभक्षणम्, वत्सापाकरणकाले तु अमावास्यायां व्रतभक्षणं इत्यर्थः ।

**अर्थापरिमाणाच्च ।३६॥**

'बर्हिषा वै पौर्णमासे व्रतमुपयन्ति, वत्सैरमावास्यायाम्' इति वाक्ये व्रतभक्षणे बर्हिराहरणकालः वत्सापाकरणकालश्च विधीयते इति द्वितीयपक्षवादी पक्षान्तरे दोषमाह । बर्हिषा व्रतमुपयन्ति, वत्सेन व्रतमुपयन्ति इति विधाने स्वीकृते अर्थस्य अपरिमाणात् अर्थपरिमाणाभावात् अर्थपरिच्छेदाभावात् निश्चितार्थज्ञानाभावप्रसङ्गादित्यर्थः । किं वत्सोऽत्र व्रतयितव्यः, किं वत्सेन हस्तस्थानीयेन व्रतयितव्यम्, उत वत्सं संनिधाय अन्यदेव किंचित् व्रतयितव्यं इति नैव व्यवतिष्ठते शास्त्रार्थः । वत्ससाधनकं व्रतं कुर्यात् इत्युक्तम्, कथं

इत्येतत्त अनिश्चितम् । तस्मात् अपि कालार्थः संयोगः । इति **द्वितीयः पूर्वपक्षः** ।

**वत्सस्तु श्रुतिसंयोगात् तदङ्गं स्यात् । ३७ ॥**

'बर्हिषा वै पौर्णमासे व्रतमुपैति वत्सैरमावास्यायाम्' इत्यत्र व्रतभक्षणे वत्सः बर्हिश्च तदङ्गं व्रताङ्गं स्यात् । अन्यतः प्राप्ते व्रते अङ्गतया बर्हिः वत्सश्च विधीयते । श्रुतिसंयोगात् 'बर्हिषा वत्सैः उपयन्ति' इति । काले तु लक्षणा स्यात् । तस्मात् बर्हिः वत्सश्च व्रताङ्गतया विधीयते इति **तृतीयः पक्षः** । तुशब्दो द्वितीयपक्षव्यावर्तकः ।

**कालस्तु स्यादचोदना । ३८ ॥**

'बर्हिषा वै पौर्णमासे व्रतमुपयन्ति वत्सैरमावास्यायाम्' इत्यत्र न बर्हिर्वत्ससाधनकस्य व्रतस्य विधिः, नापि कालस्य विधिः, नापि बर्हिषो वत्सस्य वा व्रताङ्गतया विधिः, किंतु बर्हिराहरणस्य वत्सापाकरणस्य च कालः निर्दिश्यते इति **सिद्धान्तः** । इतरपक्षनिराकरणार्थः तुशब्दः । कालनिर्देशस्तु अचोदना न चोदना । कालो न विधीयते किंतु अनूद्यते । अयमेव द्वितीयपक्षाद्विशेषः । काल एव स्यात् परंतु अचोदना इति । अचोदनात् इति **कुतूहलपाठः** । कालस्य चोदनाभावात् इत्यर्थः ।

**अनर्थकश्च कर्मसंयोगे । ३९ ॥**

'बर्हिषा वै पौर्णमासे व्रतमुपयन्ति, वत्सैरमावास्यायाम्' इत्यत्र कर्मसंयोगे बर्हिषो वत्सस्य च व्रतकर्मणा संयोगे स्वीकृते बर्हिः वत्सश्च अनर्थक एव स्यात् । तत्र बर्हिस्तावत् दंपत्योः अभक्षणीयमेव । 'अमाषममांसं व्रतं व्रतयति' इति च मांसनिषेधात् वत्सोऽपि अभक्षणीय एव । तस्मात् वत्सादिविधिः अयुक्तः । तस्मात् बर्हिराहरणकालस्य वत्सापाकरणकालस्य चानुवाद एवायम् ।

**अवचनाच्च स्वशब्दस्य । ४० ॥**

'वत्सैरमावास्यायां व्रतमुपयन्ति' इत्यनेन वत्सापाकरणकाले दंपत्योर्व्रतभोजनं इति सिद्धान्तः । पूर्वपक्षी तु वत्सेन व्रतं इति वत्सं विशस्य श्रपितेन तन्मांसेन भोजनं इति मन्यते । तत्र, स्वशब्दस्य तादृशार्थबोधकस्य शब्दस्य अवचनात् वचनाभावात् । न हि तादृशं वचनं विद्यते । तस्मात् कालानुवाद एवायं इति **सिद्धान्तः** । **के.**

𝕏 **वदतो व्याघातन्यायः** । यथा– जिह्वा मे नास्ति, मम माता वन्ध्येत्यादौ प्रसरतीति सर्वदर्शनसंग्रहे बौद्धनयेऽभिहितः इति । **साहस्री**. ६९३.

𝕏 **वध्यघातकन्यायः** । यथा भुजङ्गादिभूषितां वनभूमिं दृष्ट्वा भुजङ्गभुगादेरभावोऽवगम्यते, तथा प्रकृतेऽपि । **साहस्री**. ३८०.

𝕏 **'वध्यतांवध्यतां बालो नाऽनेनाऽर्थोऽस्ति जीवता । स्वपक्षहानिकर्तृत्वाद्यः कुलाङ्गारतां गतः ॥'** इति न्यायः । एवं च सत्सनातनपितृपैतामहादिचरितसद्धर्मपरिभ्रष्टः पुत्रोऽपि वध्य एवेति भावः । **साहस्री**. १३३.

* **वध्र्यश्वानां** नाराशंसो द्वितीयः प्रयाजः । **वा.** १।३।७।१७ पृ. २४८.

* **वनम्** । एकदेशावस्थिता वृक्षा एव वनशब्देन चोद्यन्ते । **सु.** पृ. १०. * वनम् । भवति हि बहूनां एकवचनान्तः शब्दः समुदायापेक्षः, यथा यूथं वनं कुलं परिषदिति । **भा.** २।२।३।३ पृ. ४८० । अपेक्षामात्रमेव समुदायस्य ब्रवीति नाभिधेयत्वम् । यूथवनशब्दावपि यदा समुदायोपसर्जनसमुदायिवचनौ तदा साकल्येन दृष्टान्तौ । यदा तु समुदायमेव ब्रूतः तदा तन्निमित्तैकवचनलाभमात्रेण दृष्टान्तत्वम् । **वा.** पृ. ४८०.

* **वनवादः । भाष्यम्**— असत्यपि अर्थान्तरे एवंजातीयको भवति प्रत्ययः– पङ्क्तिः, यूथम्, वनम्, इति यथा इति **चेत्, न** । असंबद्धमिदं वचनमुपन्यस्तम् । किमसति वने वनप्रत्ययो भवतीति । प्रत्यक्षमेवाक्षिप्यते वृक्षा अपि न सन्तीति । ... न च वृक्षव्यतिरिक्तं वनम् । यस्मान्नोपलभ्यते अतो वनं नास्तीत्यवगम्यते । यदि वने अन्येन हेतुना सद्भावविपरीतः प्रत्यय उत्पद्यते मिथ्यैव वनप्रत्यय इति । ततो वनं नास्तीत्यवगच्छामः । ... अथ वनादिषु नैव विपर्येति, न ते न सन्तीति । तस्मादसंबन्धः पङ्क्तिवनोपन्यासः । **भा.** १।१।५।५ पृ. ५०–५२ । **बाल**– वनवादे वनादिवत् परमाण्वादिपुञ्जात्मक एव अवयवी नार्थान्तरं इत्या-



शङ्का । तस्य अप्रत्यक्षत्वेन व्यवहारानुपयोगित्वात् संगतिग्रहाद्यसंभवेन तन्मूलकवेदाप्रामाण्यावहा इति तत्प्रामाण्यसिद्ध्यर्थमेव वनादिदृष्टान्तवैषम्योपपादनेन निरस्ता ।

* **वनवादः**–– ( 'सास्नादिविशिष्टा आकृतिः' इति भाष्यं आक्षिपति– ) '**सास्नादिभिर्विशिष्टत्वमाकृतेरुच्यते कथम् । यदाऽवयविसंबन्धि गोत्वं नावयवे स्थितम् ॥**' १ ॥ ( समाधत्ते– ) '**एकावयविसंबन्धस्तेषां गोत्वेन विद्यते । तेनाऽसाधारणत्वात्ते स्युर्गोत्वस्योपलक्षणम् ॥**' (गोशब्दाभिधेयां जातिमुपलक्षयितुं सास्नाद्युपादानम् । अस्ति हि तेषामेकावयविसंबन्धो जात्यन्तरेभ्योऽसाधारण्यं गोत्वेन, अतः ते शक्नुवन्ति तदुपलक्षयितुमिति ) २ ॥ ( किं पुनरुपलक्षणोपादाने प्रयोजनम् ? अत आह–) '**पिण्डे सत्तादिजातीनां बह्वीनां समवेतता । ताभ्यो विशिष्यते गोत्वं सास्नादिभिरसंशयम् ॥**' ३ ॥ ( काश्यपीयास्तु सास्नालाङ्गूलादि गोत्वे लिङ्गमिति पठन्तो व्यञ्जकत्वमेव सास्नादीनां मन्यन्ते, केचित्तु यथाश्रुतेन भाष्येण विशेषणत्वम्, तदुभयमयुक्तम्, इत्याह– ) '**न चैते व्यञ्जकास्तस्य गुणवद्वा विशेषणम् ।** (कारणमाह- ) **तथाहि नाऽगृहीतेषु तेषु स्याद्गोत्वबोधनम् ॥**' ( गृह्यते च दूरस्थैः अगृहीतेष्वपि तेषु गोत्वम्, अतो नेमे नीलादिवत् द्रव्यस्य गोत्वस्य विशेषणम् ) ४ ॥ ( सास्नादिसामान्याऽपेक्षत्वे च गोत्वस्य तेषामपि व्यञ्जकभूतसामान्यान्तराऽपेक्षणात् अनवस्था इत्याह– ) '**तेषां च व्यञ्जकैः स्वैः स्यात् पुनर्ग्रहणकल्पना । तथा सत्यनवस्था स्यात् न स्याद्गोत्वावधारणम् ॥**' ५ ॥ ( इतश्च न तेषां व्यञ्जकत्वमित्याह– ) '**सर्वेषु च गृहीतेषु सास्नादिषु भवेन्मतिः । गोत्वे, न चैषु सर्वेषु युगपद्बुद्धिसंभवः ॥**' ६ ॥ ( तस्मात् यथा सत्तामात्राऽवस्थितैरेव अवयवैरवयविनि महत्त्वं बोध्यते तथा अवयविस्वरूपे तत्समवेते च गोत्वादौ ग्रहणम् । न तु तद्ग्रहणापेक्षम् । अन्यथा परमाणुग्रहणाऽपेक्षं अवयविग्रहणं स्यादित्याह– ) '**तस्मात् सद्भावमात्रेण महत्त्वादौ यथैव धीः । क्रियतेऽवयवैः पिण्डे तथा जातिगुणादिषु ॥**' ७ ॥ ( चोदयति– ) '**यद्येवमगृहीतेषु तेषु किं सा न जायते ।** ( यद्यपि सर्वे अवयवा न गृह्यन्ते, केचित् तावत् दूरस्थैरपि गृह्यन्ते, तदनभिव्यङ्ग्यत्वे कंचिदप्यवयवं अगृहीत्वा गोत्वधीर्जायेत इति । परिहरति– ) **तद्देशव्यतिरेकेण ग्राह्यं येन न विद्यते ॥**' ८ ॥ ( तदेव विवृणोति– ) '**गृह्यमाणे तु गोत्वादौ नान्तरीयकहेतुकः । सास्नादेः कस्यचिद्बोधः तद्देशत्वेन जायते ॥**' ( समानदेशानि हि अवयवाऽवयवितत्सामान्यानि, तेन गृह्यमाणे गोत्वे तत्तुल्योपलम्भयोग्यस्य कस्यचिदवयवस्य तत्सामान्यस्य वा नान्तरीयकं ग्रहणं भवति ) ९ ॥ ( यद्वा न व्यवच्छेदमात्रेण उपलक्षणपरोऽयं विशेषणशब्दः, किंतु यथाश्रुतोऽपि शक्यते व्याख्यातुमित्याह– ) '**तदनत्यन्तभेदाद्वा तद्विशिष्टेति कीर्त्यते ।** ( 'न प्रत्यक्षा सती साध्या भवितुमर्हति, रुचकः, स्वस्तिकः, वर्धमानकः इति हि प्रत्यक्षं दृश्यते' इति **भाष्यार्थमाह**– ) **बाधः परानुमानस्य न प्रत्यक्षेति बोध्यते ॥**' ( यत्परैः ननु आकृतिः साध्या अस्ति वा न वा इत्यनेन आकृत्यभावे अनुमानमन्तर्णीतम्, तस्य अनेन प्रत्यक्षविरोधः अभिधीयते इति ) १० ॥

( किं पुनस्तदनुमानम् ? तत् दर्शयति– ) '**परेषां साधनं ह्यत्र नाकृतिः पिण्डतः पृथक् । तद्धीहानावविज्ञानात्पङ्क्तियूथवनादिवत् ॥**' ( पिण्डव्यतिरिक्ता नाकृतिः, तद्धाने तद्बुद्ध्यभावात् । यद्ग्रहे च यद्बुद्धिर्न भवति तत्ततो व्यतिरिक्तमपि न भवति मृगादिभ्य इव यूथम्, वृक्षेभ्य इव वनमित्यर्थः ) ११ ॥ ( किं पुनः स्वयं साधनमनभिधाय दूषणमेवोच्यते ? अत आह– ) '**सर्वत्र लोकसिद्धत्वान्न वाच्यं साधनं स्वयम् । निषेधतां परेषां तु विरोधं लोकतो वदेत् ॥**' ( लोकप्रसिद्धपदार्थव्यवहारिणामस्माकं न कश्चिदपि पदार्थः साधयितव्यः, प्रसिद्धं तु तर्काभासैरपह्नुवानेभ्यः लोकप्रसिद्धप्रत्यक्षेण विरोध एव वक्तव्य इति ) १२॥ ( चोदयति– ) '**विसंवादो न दृश्येत यदि प्रत्यक्षताऽऽकृतेः ।** ( परिहरति– ) **प्रमाणेऽपि**

विसंवादात्तार्किकेषु कुतो न्वियम् ॥' १३ ॥ (सर्वप्राणिप्रसिद्धेऽपि प्रत्यक्षादिप्रमाणे अस्त्येव तार्किकाणां विसंवादः, तद्यथा निरालम्बनवादिना प्रत्यक्षगम्यरूपादेरपह्नवात् । अतः कुतस्तदीयविसंवादस्याऽऽदरणम् ? अनादरणीय एव स इति । तदेव दर्शयति–) 'रूपादावपि तेषां हि प्रत्यक्षत्वेन संमते । विवादो, (महाजनस्य तु नास्त्येव जातौ विप्रतिपत्तिरित्याह–) नैव लोकस्तु जातौ विप्रतिपद्यते ॥' १४ ॥ (कथमवगम्यते इत्याह–) 'व्यवहारा हि दृश्यन्ते सामान्यार्थनिबन्धनाः । दधितक्रादिदानादौ कौण्डिन्यब्राह्मणादिषु ॥' १५ ॥ (विशेषेण हि सामान्यस्य बाधमाश्रयन्तो ब्राह्मणशब्दस्य सामान्यवाचित्वं मन्यन्ते, केचिच्च रुचकाद्युदाहरणात् आकृतिं संस्थानं मन्यन्ते तदेव सामान्यमिति मन्वानाः, तान्प्रत्याह–) 'आकृतिर्जातिरेवाऽत्र संस्थानं न प्रकल्प्यते । (कारणमाह) न हि वाय्वग्निशब्दादौ किंचित्संस्थानमिष्यते ॥' (नानासंस्थानपरिणामेषु वाय्वादिषु अस्ति वायुत्वादिप्रत्यभिज्ञा, या संस्थानव्यतिरेकं जातेः साधयति) १६ ॥ (शाबलेयादौ च प्रतिपिण्डं भिन्नं संस्थानम्, तत्कथं सामान्यं स्यात् ? आह–) 'अन्यदन्यच्च संस्थानं प्रतिपिण्डं प्रतीयते । (इतश्च न तत्सामान्यमित्याह–) संयोगात्मकतायां तु विभागेषु विनश्यति ॥' १७ ॥ (शङ्कते) 'अथ संस्थानसामान्यं (निराकरोति–) अश्वादावपि तत्समम् । (अथ सत्ता अवान्तरसामान्यमुच्यते, न तद् गोत्वजातेरस्तीत्याह–) न गोत्वेन विना ह्येतद् व्यवच्छिन्नं प्रतीयते ॥' १८ ॥ (चित्रेऽपि मनुष्यगवादिसंस्थानसद्भावात्तत्रापि गोत्वादिप्रतीतिः स्यात् इत्याह–) 'सर्वप्रतिकृतीनां च संस्थाने सत्यपीदृशे । न गोत्वादिमतिर्दृष्टा, (उपसंहरति–) तस्माज्जातिः पृथक् ततः ॥' (संस्थानात् पृथग्भूता जातिरेव आकृतिः) १९ ॥ (इदं च जातिपरत्वं आकृतिशब्दस्य उपक्रमेऽप्युक्तम्, इदानीमुपपादितम्, भाष्यकारोऽपि आकृत्यधिकरणे दर्शयिष्यति 'द्रव्यगुणकर्मणां सामान्यमात्रं आकृतिः' इति । न हि गुणकर्मसु संस्थानं संभवति इति । रुचकाद्युदाहरणमपि संस्थानाऽतिरिक्तसामान्याऽभिप्रायमेवेत्याह–) 'रुचकादिषु सामान्यं रुचकत्वाद्युदाहृतम् । (त्र्यानुगतसुवर्णत्वाभिप्रायं वा इदमित्याह–) भिन्नेषु चैषु सामान्यं सुवर्णत्वं प्रतीयते ॥' २० ॥ (एवं च संस्थानाभिप्रायत्वं दूरापास्तम्, न हि भिन्नेषु रुचकादिसंस्थानेषु अनुवर्तमानं सुवर्णत्वं संस्थानं भवति । सुवर्णत्वमेव रुचकत्वादिविशेषाऽनुगतमुपपादयति– ) 'वर्धमानकभङ्गे च रुचकः क्रियते यदा । तदा पूर्वाऽर्थिनः शोकः प्रीतिश्चाप्युत्तराऽर्थिनः ॥२१॥ हेमार्थिनस्तु माध्यस्थं तस्माद्वस्तु त्रयात्मकम् । (त्रयात्मकं उत्पत्तिस्थितिविनाशधर्मात्मकमित्यर्थः । तदेवोपपादयति–) नोत्पादस्थितिभङ्गानामभावे स्यान्मतित्रयम् ॥ २२ ॥ न नाशेन विना शोको नोत्पादेन विना सुखम् । स्थित्या विना न माध्यस्थं (यतश्च संस्थानस्य उत्पत्तिनाशयोरपि न सामान्यस्यापि नाशोत्पत्ती, न च हेत्वन्तरं तस्य विनाशकमुत्पादकं वाऽस्ति, अत एव नित्यताऽपि सामान्यस्य सिद्धेत्याह–) तेन सामान्यनित्यता ॥' २३ ॥ (इतश्च सामान्यं संस्थानमित्याह–) 'मुद्गमाषतिलादौ च यत्र भेदो न लक्ष्यते । तत्रैकबुद्धिनिर्ग्राह्या जातिरिन्द्रियगोचरः ॥' (संहतस्वापितेषु मुद्गादिषु संस्थानभेदमनुपलक्षयन्तोऽपि दूरस्थाः पुरुषाः मुद्गत्वादिकमेव एकबुद्धिगोचरमिन्द्रियेण बुध्यन्ते इति) २४ ॥ (इतश्च प्रत्यक्षं सामान्यमित्याह–) 'आराद्दृष्टे च पुरुषे संदेहो ब्राह्मणादिषु । न स्याद्यदि न गृह्येत सामान्यं चक्षुरादिना ॥' (वस्तुमात्रनिबन्धनो हि संदेहो न ब्राह्मणादिष्वेवावतिष्ठेत, अतो गोत्वादिभ्यो व्यावृत्तं ब्राह्मणादिषु च अनुवृत्तं नरत्वं नाम सामान्यम्, यत्प्रत्यक्षवतां अयं संदेहः) २५ ॥ (यदि प्रत्यक्षा जातिः किमिति तर्हि नरत्वादिवत् ब्राह्मणत्वादिकमपि सहसैव न गम्यते ?) 'तस्योपलक्षणं चापि कश्चित् केनचिदिष्यते । रूपादीनां विशेषेण देशकालाद्यपेक्षया ॥ २६ ॥ सुवर्णं व्यज्यते रूपात्ताम्रत्वादेरसंशयम् । तैलाद् घृतं विलीनं च गन्धेन च रसेन च ॥ २७ ॥



भस्मप्रच्छादितो वह्निः स्पर्शनेनोपलभ्यते । अश्वत्वादौ च दूरस्थे निश्चयो जायते स्वनैः ॥ २८ ॥ संस्थानेन घटत्वादि ब्राह्मणत्वादि योनितः । कचिदाचारतश्चापि सम्यग्राज्ञाऽनुपालितात् ॥' २९ ॥ (योनितो मातापितृसंबन्धात्, यथा च मातापितृज्ञानाऽपेक्षं ब्राह्मण्यादेः प्रत्यक्षत्वं तथा अर्थवादाधिकरणे (१।२।१) स्वयमेव वक्ष्यति । कचिच्च देशे सम्यक् राज्ञा अनुपालितादपि आचाराद् ब्राह्मण्यादिनिर्णयः स च देशापेक्षः, यस्तु वसन्ताऽऽधानादिना ब्राह्मण्यादिनिश्चयः स कालापेक्षः, सर्वत्र रूपाद्यपेक्षैरिन्द्रियैरेव सुवर्णत्वादिनिश्चयः, अपरोक्षाभासादिति । किं पुनरियं जातिः प्रत्येकं पिण्डेषु वर्तते, व्यासज्य वा, न तावदेका प्रत्येकं अनेकत्र युगपदलं वर्तितुम्, व्यासज्यवृत्तिर्नाम परस्परसापेक्षेषु वृत्तिः, सा कथमतीताऽनागतवर्तमानेषु अनन्तेषु पिण्डेषु संभवेत् ? प्रत्येकं च गोबुद्धिर्न स्यादत आह–) 'प्रत्येकसमवेतत्वं दृष्टत्वान्न विरोत्स्यते । (दृश्यते हि प्रतिपिण्डं जातिः 'इयं गौः, इयमपि' इति । न चैतावता एकत्वहानिरित्याह–) तथा सत्यपि नानात्वं नैकबुद्धेर्भविष्यति ॥' ३० ॥ (किमियं विभुः प्रादेशिकी वा, तथा सावयवा निरवयवा वा इति बुभुत्सायामाह–) 'विभुत्वाऽवयवाऽभावौ प्रतिपाद्यौ च शब्दवत् ॥' ३१ ॥ (एतदेव दृष्टान्तेन उपपादयति–) 'यथा च व्यक्तिरेकैव दृश्यमाना पुनः पुनः । कालभेदेऽप्यभिन्नैव जातिर्भिन्नाऽऽश्रया सती ॥' ३२ ॥ (यदपरं पृष्टम्, किं कार्त्स्न्येन सा एका एकत्र वर्तते भूतकण्ठगुणवत् स्रक्सूत्रवत् वा अवयवश इति, सोऽयं प्रश्नोऽनवसर एव जातावित्याह–) 'कार्त्स्न्याऽवयवशो वृत्तिः प्रष्टुं जातौ न युज्यते । (कथमित्याह–) न हि भेदविनिर्मुक्ते कार्त्स्न्यभागविकल्पनम् ॥' ३३ ॥ (यत्र हि स्वरूपतोऽवयवशो वा भेदः तत्रैतद्युक्तम्, भेदापेक्षो हि कृत्स्नशब्दः, तदिदं द्वयमपि अनवयवायामेकस्यां जातौ अनवसरमेवेति । यदि न द्वेधाऽपि वर्तते, कथं तर्हि वर्तते अत आह–) 'तस्माद्व्यक्तिषु जातीनां वृत्तिरस्तीति गम्यते । विशेषाऽवसराऽभावात्तन्मात्रैवावतिष्ठते ॥' ३४ ॥ (वृत्तिरेवात्र प्रमाणवती, न विशेष इति । कथं पुनः स्रक्सूत्रादिषु दृष्टो विशेषो जातौ नाङ्गीक्रियते ? अत आह–) 'या चावयवशो वृत्तिः स्रक्सूत्रादिषु दृश्यते । भूतकण्ठगुणादेश्च प्रतिपिण्डं समाश्रितः ॥ ३५ ॥ तत्रावयवयोगित्वमविभुत्वं च कारणम् । आकृतेस्तदभावेन न प्रसक्तमदो द्वयम् ॥' ३६ ॥ (कण्ठगुणः कण्ठभूषणं हारादि, प्रतिपिण्डं समाश्रितः कार्त्स्न्यम्, एकत्र वृत्तस्याऽन्यत्रावृत्तिः, सा च अविभूनां हारादीनाम्, जातिस्तु विभुः, सा एकत्राऽविकलाऽपि वृत्ता अन्यत्रापि अविकला आश्रयान्तराऽनपेक्षैव वर्तते, तथा दर्शनात्, इदमेव हि विभुत्वमिति । ननु द्वैविध्यख्याता वृत्तिः व्यापकनिवृत्त्या जातेर्निवर्तेत, अत आह–) 'न च द्वैविध्यमेवेति वृत्तेरस्ति नियामकम् । त्रिविधाऽपि हि दृष्टत्वात्संभवेद् द्विविधा यथा ॥' ३७ ॥ (व्याप्तिरेवाऽत्र नास्ति, प्रकारान्तरस्यापि प्रत्यक्षेण जातौ दृष्टत्वात् द्वैविध्यवदेव तस्य संभवः । अथ जातेरन्यत्र प्रकारान्तरं न दृष्टं इति चेत्, तत्तुल्यं स्रगादिष्वपीत्याह–) 'इतरत्र न दृष्टं चेत् स्रगादिष्वपि तत्समम् । नैव ह्यन्योन्यतुल्यत्वं तयोनाप्यनया सह ॥' ३८ ॥ (न चैकत्र दृष्टस्य अन्यत्राऽदर्शनात् अभावो भवति, अनैकान्तिकत्वादित्याह–) 'न ह्यन्यस्मिन्नदृष्टत्वाद्वह्नेरौष्ण्यं प्रणश्यति । (स्यादप्यत्र निदर्शनाकाङ्क्षा, यद्यनुमानगम्येयं वृत्तिः स्यात्, न त्वेतदस्तीत्याह–) न चानुमानगम्येयं वाच्छेयेन निदर्शनम् ॥' ३९ ॥ (सा तु प्रत्यक्षगम्या । नन्वात्मीयेन असाधारणरूपेण प्रत्यक्षदृष्टाया वृत्तेर्वृत्त्यन्तररूपादर्शनेन निराकरणं युक्तम्, तस्मादस्याप्यविशेषादित्याह–) 'स्वरूपतश्च दृष्टाया वृत्तेर्न पररूपतः । निराक्रियोपपद्येत तद्विशेषमपश्यताम् ॥' ४० ॥ (ततश्च अयुक्तमिदमित्याह–) 'अङ्गाङ्गाऽसंभवाच्चापि या प्रधाननिराक्रिया । साऽयुक्तैवा, ऽनुमानेन प्रत्यक्षज्ञानबाधनात् ॥' ४१ ॥ (जातेरङ्गे वृत्तिस्तदङ्गं च कार्त्स्न्यादिप्रकारः तदसंभवात् यज्जातिनिराकरणं तन्न युक्तमिति । उपसंहरति–) 'तस्मादसंभवो यस्य तन्मात्रस्यैव बाधनम् । युक्तं न

तावताऽन्योऽपि संभवन् बाधमर्हति ॥' ४२ ॥ ( एवं स्वमतेन व्यक्तिदेशमेव सामान्यमाश्रित्य दूषणं समाहितम् , यदा तु वैशेषिकपक्षेण सर्वगतत्वं जातेस्तदाऽप्यदोष इत्याह– ) 'तेन वैशेषिकोक्ताऽपि जातिः सर्वगता सती । व्यज्यते यत्र पिण्डेन वर्णवत्तत्र गृह्यते ॥' ४३ ॥ ( येनैव दर्शनबलेन प्रकारान्तरं वृत्तेराश्रितम् , तेनैव सर्वगताया अपि जातेः केषुचित्पिण्डेषु प्रत्येकसमवायवृत्त्या अभिव्यक्तिं कार्त्स्न्यभागविकल्पशून्यामाश्रित्य क्वचित् ग्रहणं समर्थ्यते इति । एवमुपपादितां जातिं प्रयोगेण दर्शयति– ) 'तस्मात्पिण्डेषु गोबुद्धिरेकगोत्वनिबन्धना । गवाभासैकरूप्याभ्यामेकगोपिण्डबुद्धिवत् ॥' ४४ ॥ ( एकालम्बनत्वमेव साध्यम्, गोत्वग्रहणं चानुवादः , गवाभासत्वात् एकरूपत्वात् इति च हेतुद्वयम् , यत् खलु गवाभासमेकरूपं वा ज्ञानं तत् एकालम्बनम्, यथा एकपिण्डे गोबुद्धिरिति । प्रयोगान्तरमाह– ) 'न शावलेयाद्गोबुद्धिस्ततोऽन्यालम्बनाऽपि वा । तदभावेऽपि सद्भावाद् घटे पार्थिवबुद्धिवत् ॥' ४५ ॥ ( प्रत्येकसमवायेऽपि प्रयोगमाह– ) 'प्रत्येकसमवेताऽर्थविषया वाऽपि गोमतिः । प्रत्येकं कृत्स्नबुद्धित्वात् प्रत्येकव्यक्तिबुद्धिवत् ॥' ४६ ॥ ( तथा सत्यपि नानात्वं नेत्यत्र प्रयोगमाह– ) 'प्रत्येकसमवेताऽपि जातिरेकैकबुद्धितः । नञ्युक्तेष्विव वाक्येषु ब्राह्मणादिनिवर्तनम् ॥' ४७ ॥ ( यच्च सादृश्यरूपत्वं सामान्ये निराकृतम् , तत्रापि प्रयोगमाह– ) 'न च सादृश्यविषया गोधीस्तादृरूप्यजन्मतः । प्रामाण्ये सति यद्बुद्धि प्रत्यभिज्ञैकवस्तुनि ॥' ४८॥ ( गोबुद्धिः धर्मिणी, सदृशः अस्याः न विषयः इति साध्यो धर्मः, तदेवेदमित्येवंरूपोत्पत्तेरिति हेतुः, प्रामाण्ये सति इति च विशेषणम्–अबाधितरूपत्वे सतीति यावत् । यत्र यत्र अबाधितरूपा–तदेवेदम्–इत्येवंरूपोत्पत्तिः तत्र तत्र न सदृशो विषयो भवति यथा एकवस्तुप्रत्यभिज्ञायां इति दृष्टान्तः । 'व्यामोह इति चेत् , न असति प्रत्ययविपर्यासे व्यामोह इति शक्यते वक्तुम्' इति भाष्यार्थमाह– ) 'नैकरूपमतिर्गोत्वे मिथ्या वक्तुं च शक्यते । नात्र कारणदोषोऽस्ति बाधकप्रत्ययोऽपि वा ॥' ४९ ॥ ( असत्यर्थान्तरे एवंजातीयके भवति प्रत्ययः पङ्क्तिर्यूथं वनमिति यथेति चेत् इति चोद्यस्य उत्तरभाष्यम् 'असम्बद्धमिदं वचनमुपन्यस्तम्' इति, तदाक्षिपति– ) 'यदा व्यक्त्यतिरेकेण ग्राह्यत्वादन्यताऽऽकृतेः । वनवन्नास्त्यनैकान्तात्तत्राऽसंबद्धता कथम् ॥' ५० ॥ ( यत्खलु व्यक्त्यतिरेकेण ग्रहणं जातिसद्भावे साधनं सिद्धान्तिनोक्तं तस्य अनैकान्तिकत्वमतो नोच्यते, वनस्य वृक्षव्यतिरेकेण गृह्यमाणस्याप्यसत्त्वात् , तत्कथं असंबद्धत्वमिति । समाधत्ते– ) 'साधनं चेन्मयोच्येत युज्येत व्यभिचारिता । दूषणत्वधिया त्वेतदसंबद्धत्वमुच्यते ॥' ५१ ॥ ( नह्यस्माभिः साधनमुक्तम् , किंतु प्रत्ययविरोधाख्यं दूषणम् , तस्य व्यभिचारोपन्यासोऽसंबद्ध एव, न हि प्रत्यक्षमव्यभिचाराऽपेक्षमिति । कस्य पुनरिदं दूषणम् ? अत आह– ) 'नास्तित्वहेतोरुक्तैषा प्रत्यक्षेण विरुद्धता । ( कः पुनरसौ ? ) परस्य साधनं ह्यत्र यत्तत्पूर्वमुदाहृतम् ॥' ५२ ॥ ( अथ वनबुद्धिवज्जातिबुद्धेरपि प्रत्यक्षाभासत्वान्न तद्विरोधो हेतुदूषणमित्युच्यते, अत आह– ) 'प्रत्यक्षाऽऽभासता चात्र नैवास्ति वनबुद्धिवत् । ( कथमित्याह– ) कस्यचिन्न हि मिथ्यात्वात्सर्वं मिथ्येत्यसंगतिः ॥' ५३ ॥ ( ततश्च पुनरप्यसंगतिः असंबद्धत्वमिति । अत्रैव दृष्टान्तमाह– ) 'यथा वनादिबुद्धीनां मिथ्यात्वान्न रसादिधीः । मिथ्यैवं जातिबुद्धिः स्याद्विशेषो वाऽभिधीयताम् ॥' ५४ ॥ ( ननु एवमपि वनबुद्धेर्जातिबुद्धेश्च विशेषो वक्तव्यः, येन प्रामाण्याऽप्रामाण्ये व्यवतिष्ठेते, तत्राह– ) 'वृक्षेभ्यो व्यतिरेकेण वने यैकमतिर्भवेत् । दूरत्वदोषात्तत्र स्यादाकृतौ तु न विद्यते ॥' ५५ ॥ ( 'दोषसद्भावे न विशेष इति कथमवगम्यते, दूरत्वदोषादित्यत आह–) 'संनिकृष्टस्य वृक्षेषु बुद्ध्येकत्वं निवर्तते । ( जातिबुद्धिस्तु न कथं निवर्तते इत्याह– ) केनचित्तु प्रकारेण जातिबुद्धिर्न नश्यति ॥' ५६ ॥ (ननु वनमध्यस्थस्यापि वनमित्येकरूपा वनशब्दात् बुद्धिरुपजायते, तस्याः कथं दूरत्वादिदोषेण प्रामाण्यं निराक्रियते ?



तदभावेऽपि चाप्रामाण्ये जातिबुद्धिरपि तथा स्यादित्यत आह– ) 'यैकत्वधीर्विना शब्दात्सैवं तावन्निराकृता । वनशब्दाऽनुरक्ता तु मध्यस्थस्यापि जायते ॥ ५७ ॥ मिथ्यात्वकल्पना त्वस्याः प्रत्यक्षादेरसंभवात् । जातिः सर्वप्रमाणैस्तु तद्रूपैवावगम्यते ॥' ५८ ॥ ( या तावत् दूरस्थस्येन्द्रियजन्या वृक्षातिरिक्तैकवनावभासिनी बुद्धिः सा उक्तेन प्रकारेण निराकृता, या तु वनशब्दजन्यैकबुद्धिः सा सत्यं मध्यस्थस्यापि जायते, तस्यास्तु प्रत्यक्षादिमूलाऽभावात् मिथ्यात्वम् , जातिबुद्धिस्तु प्रत्यक्षादिसद्भावात् न मिथ्या । ननु किं मूलान्तरेण, शब्द एव मूलं भविष्यति अत आह– ) 'प्रमाणान्तरदृष्टे च पदमर्थे प्रयुज्यते । तस्माद् दृष्टे प्रयुक्तस्य मिथ्यात्वं स्याद्वनादिषु ॥' ५९ ॥ ( न हि पदं स्वातन्त्र्येण प्रमाणम् , प्रमाणान्तरदृष्टानुवादमात्रत्वात् , अतस्तदभावे तस्य मिथ्यात्वमिति । केचित्तु वनैकत्वं वनशब्दैकगम्यं सत्यमेव, अतो न तद्दृष्टान्तेन जातेः मिथ्यात्वमित्याहुः, तदुपन्यस्यति–) 'केचिन्नित्यं वनैकत्वं शब्दगम्यं समाश्रिताः । ( न च प्रमाणान्तरसंगत्यभावान्मिथ्यात्वम् , रसादीनां श्रोत्रादिसंगत्यभावात् मिथ्यात्वप्रसङ्गादित्याह– ) अन्यैः संगत्यभावेऽपि सत्यं तत्स्याद्रसादिवत् ॥' ६० ॥ (ननु प्रमाणान्तरसंगत्या विना न पदस्य स्वातन्त्र्येण प्रामाण्यं संभवति, इन्द्रियादिवत् , अतो मिथ्यात्वं स्यादत आह– ) 'मिथ्यात्वं यदसंगत्या तदज्ञाने प्रसज्यते । ज्ञायमानस्य दोषस्तु न तु कश्चिदसंगतेः ॥' ६१ ॥ (यदेतदसंगतार्थस्य पदस्याप्रामाण्यं न तद्वाचनिकम् , किंतु अनवगतार्थे पदस्य संबन्धग्रहणासंभवात् अगृहीतसंबन्धादपि ज्ञानं जायते, ततस्तस्य स्वतःप्रामाण्यात् न असंगत्या किंचिद् दुष्यति, जायते च वनशब्दादेकवनज्ञानमिति न मिथ्यात्वमिति । नन्वेवं प्रमाणान्तरावगतविषयं पदमिति सिद्धान्तहानिः स्यादत आह– ) 'प्रमाणान्तरगम्येऽर्थे पदं नित्यं प्रयुज्यते । धर्मोऽयं न च सर्वेषां पदानामभ्युपेयते ॥' ६२ ॥ ( नायं सिद्धान्तः सार्वत्रिकः क्वचिदपोह्यतापीति । वनशब्दो वा कथमगृहीतसंबन्धोऽर्थं प्रत्याययति, तथा सति प्रथमश्रवणेऽपि प्रत्याययेत् , तस्मात् अयुक्तोऽयं पक्ष इति मत्वा पक्षान्तरमाह– ) 'अस्त्येव संगतिश्चात्र वृक्षा हि बहवो वनम् । ते प्रमाणान्तराज्ज्ञाताः ( एकवचनाऽभिधेयेषु एकत्वसंख्या घटादिवस्त्वन्तरेषु ज्ञाता) संख्या चैषाऽन्यवस्तुनि ॥' ६३ ॥ ( शङ्कते– ) 'नानेकस्यैकशब्द्यं चेत् ( न हि सकृदुच्चरितेन प्रातिपदिकेन अनेकेषां अभिधानं संभवतीति । परिहरति– ) एकशेषवदिष्यताम् । ( ये हि अनेकार्था अक्षादिशब्दाः ते कृतैकशेषा युगपदपि बहूनर्थानभिदधत्येवेति । पुनः शङ्कते– ) तत्र संख्याविवृद्धिश्चेत् ( अनेकार्थवचनाद् द्विवचनं बहुवचनं वा दृष्टमेकशेषे, तत्कथं एकवचनं वनशब्दात् ? परिहरति– ) अस्तु तन्मात्रवर्जनम् ॥' ६४॥ ( एकत्वाऽभिधाय्येकवचनम् , इह तदसंभवात्तद्वर्जनं ग्रहाद्येकवचनवत् प्रातिपदिकप्रयोगासंभवात् साधुत्वमात्रार्थं भविष्यति, यद्वा वृक्षेष्वप्येकत्वम् अस्त्येव इत्याह– ) 'तस्मात् सामान्यदृष्टेन सिद्धैकत्वस्य संगतिः । (तस्मादेकवचनाल्लिङ्गादेव सामान्यतोदृष्टेन वृक्षेष्वप्येकत्वसंगतिः सिध्यति, एकार्थवचनादेकवचनं दृष्टम् , वनशब्दादपि एकवचनं दृश्यते, अतस्तदभिधेयेऽस्त्येकत्वम् । न च वाच्यम् , केवलेन सामान्यदृष्टेन अर्थसिद्धिरिति, सूर्यगत्यादिषु दर्शनादित्याह– ) तेनान्याऽनवगम्यापि संख्या स्यात् सूर्ययानवत् ॥' ६५ ॥ ( तेन–सामान्यदृष्टेन इत्यर्थः । न त्विदं युक्तम् , न हि वृक्षेषु एकत्वं शक्यमनुमातुम् , प्रत्यक्षविरोधात् , अतः पक्षान्तरमाह– ) 'केचिद्बहुत्वसामान्यमाहुर्वृक्षस्थितं वनम् । ( यथेष्टं चात्र विशेषणविशेष्यत्वम् , वृक्षाश्रयं वा बहुत्वं बह्वाश्रयं वा वृक्षत्वमिति । तस्य च एकत्वमस्ति इति एकवचनोपपत्तिरित्याह– ) तत्र चैकत्वमस्त्येव ( यद्वा अस्त्येव वृक्षेष्वेकदेशस्थेषु वनत्वमित्येकवचनोपपत्तिरित्याह– ) वनत्वं वाऽपि विद्यते ॥' ६६ ॥ (नन्वेकाश्रयमन्तरेण कथं वनशब्दसामान्यमत आह– ) 'विनाऽप्येकाश्रयत्वेन यथैवावयवी तथा । ( ननु संयुक्तेषु अवयवेषु संभवति अवयवी, वृक्षेषु असंयुक्तेषु कथं वनत्वं नाम सामान्यं वर्तेत, अत आह– ) असंयुक्तैरभिव्यक्तिर्दृष्टत्वान्न विरोत्स्यते ॥' ६७ ॥ ( किं पुनः प्रमाणं वनत्वसामान्यसद्भावे ? अत आह– ) 'अन्य-

त्रापि च तद्बुद्धेः सामान्यं तद्भविष्यति । ( अस्ति हि सर्वेषु वनेषु वनं वनमिति प्रत्यभिज्ञा । दृष्टा च असंयुक्तेषु अपि बहुषु सामान्यस्य वृत्तिरित्याह– ) यथा च भ्रमणत्वादिभङ्गिष्ववयवेष्वपि ॥ ६८ ॥ व्यक्तं नानाश्रयत्वेऽपि गृह्यते वनता तथा । ( भङ्गिष्वयुगपद्भूतेष्वपि तत्सामान्यमभिव्यज्यते किमुत अभङ्गिष्विति । यस्तु मन्यते, एकदेशस्थबहुवृक्षोपाधिकृतैवेयं वनमिति बुद्धिः अतो निष्प्रमाणकं वनत्वमिति, तं प्रति पक्षान्तरमाह– ) यद्वैककार्यहेतुत्वादेकगोशब्दवद्वनम् ॥' ६९ ॥ ( यथा ह्येकमर्थप्रतिपत्तिलक्षणं कार्यं संहत्य कुर्वन्तो गकारादयो वर्णाः संघातवाचिना गोपदेन अभिधीयन्ते, संघातत्वाच्चैकवचनं पदमिति, तथा वृक्षाः संहत्य स्वविषयकमेकं ज्ञानाख्यं कार्यं कुर्वन्तः संघातवाचिना वनशब्देनैकवचनान्तेन अभिधीयन्ते, एककार्यहेतुत्वं च उपलक्षणार्थम्, एककार्यकरणेन एकदेशकालावस्थानेन वा समुदायमापन्नाः समुदायवचनेन वनादिशब्देन एकवचनान्तेन अभिधीयन्ते, अस्ति हि समुदायिषु एकोपाधिवशीकृतेषु एकबुद्ध्यपारूढेषु समुदायो नाम व्यासज्यवर्ती गुणविशेष इति । युक्तं चैतदित्याह– ) 'नित्यं ये व्यस्तविज्ञाता वृक्षा नेष्टा हि ते वनम् । ( ये व्यस्तविज्ञाता अनेकज्ञानहेतवः, नाऽप्येकस्मिन् देशे काले वा अवस्थिताः ते वनमिति नोच्यन्ते । पक्षान्तरमाह– ) यद्वा लक्षणयैकत्वं देशकालक्रियादिभिः ॥ ७० ॥ द्रव्यैकत्वाद्विनाऽपीष्टं पङ्क्तियूथवनादिषु । ( पूर्वं समुदायवचनत्वमाश्रित्य तदेकत्वादेकवचनं समर्थितम्, इदानीं समुदायिवचनमङ्गीकृत्य तेषां बहुत्वेऽपि यदेषां समुदायोत्पत्तिकारणं देशकालक्रियादिकं तल्लक्षितं तदेकत्वादेकं वनमित्युच्यते, तेनाऽन्तरेण द्रव्यैकत्वं लक्षणयैकवचनोपपत्तिः । आदिशब्देन वृक्षत्वसामान्योपादानमिति । तदेवं वनस्य सत्यत्वात् तद्दृष्टान्तेन आकृतेः मिथ्यात्वमित्युक्तम् । यदि परमेवमुच्येत, वनबुद्धिवत् गोबुद्धिरपि पिण्डसमुदायालम्बना भवतु, किं जात्या ? इति, तत्राह – ) वृक्षाणां समुदाये च वनधीर्जायते यथा ॥ ७१ ॥ नैवं गोसमुदायेऽपि गोत्वधीरुपजायते । यादृशी वृक्षधीस्तत्र गोत्वधीरपि तादृशी ॥ ७२ ॥ वनवन्नापृथक् सिद्धेः समुदायत्वकल्पना । ( वनबुद्धिर्हि अपृथग्भूतेषु वृक्षेषु सिध्यन्ती युक्तं समुदायालम्बना भवति, गोबुद्धिस्तु नैवमिति । अथ सास्नादिसमुदायालम्बना इत्युच्यते, अत आह– ) न च सास्नादिसंघातस्तद्बुद्ध्यालम्बनं भवेत् ॥' ७३ ॥ ( कारणमाह– ) 'क्षीणेषु पिण्डबुद्ध्यैषु तत्सामान्ये हि गोत्वधीः । ( सास्नादयो हि समुदिताः पिण्डबुद्धिमेव जनयन्ति, गोबुद्धिस्त्वनेकपिण्डाऽनुवृत्तं सामान्यमेवालम्बते इति । तेन यद्यवश्यं समुदायालम्बनत्वं वक्तव्यम्, अतः पिण्डबुद्धिमेवाश्रित्य अवयव्येव अपह्नूयताम्, सामान्यं त्वनेकसमुदायानुगतं ततो व्यतिरिच्यते एवेत्याह– ) तेनाऽवयव्यभावेऽपि सामान्यं व्यतिरिच्यते ॥' ७४ ॥ ( परमार्थतस्तु अवयव्यपह्नवनमपि न संभवतीत्याह– ) 'पूर्वोक्तादेव तु न्यायात्सिद्धेदत्रावयव्यपि । ( यथैव भिन्नेषु एकबुद्धिसद्भावात् सामान्यं सिध्यति तथा अवयवेषु भिन्नेषु 'देवदत्तोऽयम्, घटोऽयम्' इत्येकद्रव्यावभासादस्त्येवावयवेभ्यो भिन्नोऽवयवीति । किमत्यन्तभिन्नोऽवयवी ? नेत्याह – ) तस्याप्यत्यन्तभिन्नत्वं न स्यादवयवैः सह ॥' ७५ ॥ ( कस्मात् ? ) 'व्यक्तिभ्यो जातिवच्चैष न निकृष्टः प्रतीयते । ( तन्तव एव हि संयोगविशेषवशेन एकद्रव्यत्वमापन्नाः 'पटोऽयं' इत्येकाकारया बुद्ध्या गृह्यन्ते, अतोऽवस्थामात्रादेवाऽवयवेभ्योऽवयविनो भेदो न त्वत्यन्तभेदः । ये च एकान्तिकं भेदमभेदं वा अवयविनः समाश्रयन्ते तैरेवायं अनेकान्तवादः साधित इत्याह– ) कैश्चिदव्यतिरिक्तत्वं कैश्चिच्च व्यतिरिक्तता ॥ ७६ ॥ दूषिता साधिता वाऽपि न च तत्र बलाबलम् । कदाचिन्निश्चितं कैश्चित्तस्मान्मध्यस्थता वरम् ॥' ७७ ॥ ( उभयोक्तयुक्तिबलादेवोभयसिद्धिः । यतश्च अन्यत्वमनन्यत्वं च द्वयं सदसत्तया न शक्यं दर्शयितुम्, अतश्चित्रवदनेकरूपत्वादैकरूप्याऽभ्युपगमो मृषेत्याह– ) 'ततोऽन्याऽनन्यते तस्य स्तो नस्तश्चेति कीर्त्यते । तस्माच्चित्रवदेवास्य मृषा स्यादेकरूपता ॥' ७८ ॥ ( ननु एवं अन्याऽनन्यत्ववादिनां अन्यतमस्य अनवधारणात् स्थाणुर्वा पुरुषो वेतिवत्संदेहात् न किंचि-



दप्यन्याऽनन्यत्वादिकं बाधितं किं सिध्येदत आह– ) 'वस्त्वनेकत्ववादाच्च न संदिग्धाऽप्रमाणता । ज्ञानं संदिह्यते यत्र तत्र न स्यात्प्रमाणता ॥ ७९ ॥ इहाऽनैकान्तिकं वस्त्वित्येवं ज्ञानं सुनिश्चितम् । ( वस्तुविषयो हि अस्माकं अनेकान्तवादो नैकाकारं वस्त्विति, यत्र तु ज्ञानमेवाऽवस्तुरूपं अनेकं अवभासते 'किमयं स्थाणुः किं वा पुरुषः' इति, तत्र संशयात् अप्रामाण्यं भवति, इह तु अनेकरूपमेव वस्त्विति निर्णयात् कुतोऽप्रामाण्यमिति । यत्तु अभेदवादिभिरुक्तम्, यदा ह्येकैकशस्तन्त्वादयोऽवयवा बुद्ध्या निष्कृष्यन्ते तदा अवयवी नाम न कश्चित्प्रतीयते, तस्मात् न अस्य अवयवेभ्यो भेद इति, तदयुक्तम्, भेदपक्षेऽपि इयमवयवेषु निष्कृष्टेषु अवयविप्रतीतिरुपपन्नैव, संयुक्ताऽनेकावयवव्यासङ्गी ह्यसौ, तेषु निष्कृष्यमाणेषु तस्यापि विनाशो बुद्धिस्थो भवति, तदाह– ) निष्कृष्याऽवयवान् बुद्ध्या याऽवयव्यप्रतीतता ॥ ८० ॥ बुद्धिस्थत्वाद्विनाशस्य सौक्ष्म्यस्यापि युज्यते । ( वृत्तिविकल्पं परिहरति– ) वृत्तिश्चाऽवयवेष्वस्य व्यासज्यैव प्रतीयते ॥' ८१ ॥ ( सापेक्षेषु अनेकेषु वृत्तिः व्यासज्यवृत्तिरिति । यदपि विकल्पान्तरं किं कार्त्स्न्येन एकैकत्र वृत्तिः किंवा अवयवश इति, तत् जातिवदेव अत्रापि अनवकाशमेव, 'न हि भेदविनिर्मुक्तकार्त्स्न्यभागविकल्पनम्' इति ह्युक्तं ( श्लोवा. वनवादः श्लो. ३३ ), न ह्यवयविनोऽप्यवयवेषु वर्तितुं अवयवान्तराणि सन्ति, तदाह– ) 'ततः कार्त्स्न्यादिसंप्रश्नः प्रत्याख्येयोऽत्र जातिवत् । ( पुनर्जातिप्रतीतिमेवोपसंक्रम्य सास्नादिसमुदायालम्बनत्वे दोषमाह– ) सास्नादिगुणहेतुश्चेन्नान्यस्मिन् गोत्वधीर्भवेत् ॥' ८२ ॥ ( कारणमाह ) 'भिन्न एव हि सास्नादिः पिण्डात् पिण्डान्तरे यतः । ( अथ सास्नादित्वाद्यवयवसामान्यानां यः समुदायः तदालम्बनमेवेयम्, अतोऽन्यत्रापि भवतीत्युच्यते, तत्राह – ) न चावयवसामान्यं परेषामुपपद्यते ॥' ८३ ॥ ( उपसंहरति– ) 'तस्मात् सास्नादितोऽन्येन गोत्वधीरुपजायते । ( वनबुद्धिरपि तर्हि वनान्तरेष्वपि संभवन्ती न समुदायालम्बना स्यादत आह– ) वनान्तरेषु या बुद्धिर्वनमित्युपजायते ॥ ८४ ॥ तस्यास्तदेव वृक्षत्वं ग्राह्यं बह्वाश्रयं विदुः । ( अस्ति हि अस्माकं वृक्षत्वं बहुत्वसामान्यं समुदायसामान्यं च, अतः सर्वेषु वनेषु वृक्षगतबहुत्वोपाधिकृता वृक्षसमुदायकृता वा वनबुद्धिर्युक्तेति । स्यादप्येवं वृक्षस्थितबहुत्वाभिधाने बह्वाश्रयं वृक्षत्वाभिधाने तत्समुदायाऽभिधाने च वनमित्येकवचनम्, यदा हि वृक्षाः( हि ) बहवो वनमिति पक्षः तदा किं अनुपपन्नमेव एकवचनम्, नेत्याह– ) एकत्वेऽप्याकृतेर्यद्वद्बहुत्वं व्यक्त्यपेक्षया ॥ ८५ ॥ बहुत्वे हि तथा व्यक्तेरेकत्वं जात्यपेक्षया । ( यथा हि जातेर्व्यक्त्यात्मना बहुत्वम्, एवं व्यक्तीनामप्यस्ति जात्यात्मना एकत्वम्, जातिग्रहणं देशादीनामपि उपलक्षणार्थमिति । भवत्वेवम्, बहुवचनमपि तु स्वसंख्यावशेन किमिति न भवति, ततश्चैकस्मिन्नपि वृक्षसमुदाये 'वनानि' इत्यपि प्रयोगः स्यादत आह– ) एकानेकाभिधाने च शब्दा नियतशक्तयः ॥' ८६ ॥ ( नियतशक्तयो हि शब्दाः, केचिदेकत्वेनैवाऽवच्छिन्नमर्थं वदन्ति, केचित्तु बहुत्वेनैव, केचिदुभयथा अपि प्रयोगभेदेन वदन्तीति, तत्रोदाहरणानि दर्शयति– ) केचिद्व्यक्तिं त्वसंख्याकां गमयन्त्यम्बरादिषु । एको व्रीहिः सुनिष्पन्न इति जातिं स्वसंख्यया ॥ ८७ ॥ पत्नीसंनहनादौ तु व्यक्तिमाकृतिसंख्यया । कपिञ्जलादिजातेस्तु प्रतीतिर्व्यक्तिसंख्यया ॥ ८८ ॥ व्यक्तिजाती वदन्त्यन्ये द्रव्याऽवयवसंख्यया । अस्मानिति यथैकस्मिन् पाशानदितिरित्यपि ॥' ८९ ॥ ( व्रीहिशब्दश्च अन्येषामपि जातिशब्दानां वृक्षादीनामुपलक्षणार्थः, पत्नीशब्दोऽपि औपाधिको यज्ञस्वामिन्यां प्रवर्तमानो व्यक्तिवचनः, स च आकृतिसंख्यया व्यक्तिमवच्छिनत्ति, 'पत्नीः संनह्य' इति अस्मिन्मन्त्रे द्वयोर्बहुत्वैकवचनस्यैव प्रयोगात् आकृतिसंख्यावाचिना शब्देन प्रवृत्तिनिमित्तं यज्ञस्वामित्वमेवोच्यते, न हि पत्नीत्वं नाम आकृतिरस्ति । 'अस्मान्' इति व्यक्तिमवयवसंख्यया, 'अदितिः पाशान्' इत्यत्र मन्त्रे जातिवचनः पाशशब्दः एकस्मिन् पाशे बहुवचनान्तः प्रयुज्यमानो जातिं द्रव्याऽवयवसंख्यया वक्ति । यद्यपि चायं

प्रयोगसमवेतपाशव्यक्तिपरः न तु कपिञ्जलत्वजातिमात्रपरः, तथापि जात्यभिधायीति कृत्वा जातिं द्रव्याऽवयवसंख्यया वक्तीत्युक्तमिति । ये चैते व्रीह्यादिशब्दाः ते प्रयोगभेदेन यथारुचि संख्यान्तरं भजन्ते इत्याह–) '**तत्र व्रीह्यादिशब्दानां संख्यायोगो यथारुचि ।** ( वनदारादिशब्दास्तु व्यवस्थितसंख्यावचना इत्याह– ) **वनदारादिशब्दास्तु प्रवर्तन्ते व्यवस्थया ॥** ' ९० ॥ ( एतदेव दृष्टान्तेन उपपादयति– ) '**जङ्गमे स्थावरे चार्थे यथा यूथवनादयः ।** ( कीदृशी पुनर्दारादिशब्दानां व्यवस्था ? तां दर्शयति–) **तत्र व्यक्तौ च जातौ च दारादिश्चेत्प्रयुज्यते ॥९१॥ व्यक्तेरवयवानां च संख्यामादाय वर्तते ।** ( दारशब्दो हि सर्वदा बहुवचनान्तः सन् यदा एकव्यक्त्यभिप्रायेण प्रयुज्यते तदा अवयवसंख्यया व्यक्तेर्भेदमाचष्टे, यदा तु अविवक्षितव्यक्तिभेदो दारमात्रपरः तदा व्यक्तिभेद इति । वनशब्दस्य तु एकसंख्यैव व्यवस्थितेत्याह– ) **वनशब्दः पुनर्व्यक्तीर्जातिसंख्याविशेषिताः ॥ ९२ ॥ वक्तीत्याहाऽथ वा जातिं बहुव्यक्तिसमाश्रयाम् ।** ( जातिग्रहणं बहुत्वदेशसमुदायानां उपलक्षणार्थम् । यस्तु भिन्नेषु वनेषु वनानीति प्रयोगः स देशबहुत्वं जातौ उपचर्य क्रियते, द्रव्यसमुदायवचनत्वे लक्षितदेशाद्यभिप्रायत्वे वा वनस्य तद्भेदादेव युक्तं बहुवचनमिति । वनन्यायमेव पङ्क्तौ अतिदिशति– ) **एवं पङ्क्त्यादिशब्दानां संयोगादि विशेषणम् ॥ ९३ ॥ सर्वेषां किंचिदस्तीति न निरालम्बनैकधीः ।** ( संयुक्तेषु परिगृहीतचितितिविशेषेषु पङ्क्तिबुद्धिरिति तादृगुपाध्येकत्वात् पङ्क्त्योरेकपङ्क्तिबुद्धिरिति । उक्तमेवार्थं संक्षिप्य भाष्यारूढं करोति–) **तुल्यं प्रत्यक्षयाऽऽकृत्या वने यत्तदसद्यदि ॥९४॥ वृक्षास्तत्र तया तुल्या इति शून्यत्ववादिता ।** ( सोऽयं ' किमसति वने ' इत्यादेः ' महायानिकः पक्षः ' इत्यन्तस्य भाष्यस्य अर्थः । ' यदि वनेऽन्येन हेतुना ' इत्यादेः ' वैषम्यम् ' इत्यन्तस्य भाष्यस्य अर्थमाह– ) **प्रत्यक्षाभासगम्यत्वात् वृक्षेभ्योऽन्यत्तु यद्वनम् ॥ ९५ ॥ नाऽऽकृत्या सह तस्यास्ति स्पर्द्धा प्रत्यक्षगम्यया ।** ('अथ किमाकृतिसद्भाववादी' इत्यादेः ' नास्तीत्यवगम्यते ' इत्यन्तस्य भाष्यस्य अर्थमाह– ) **अथाऽऽकृत्या वनं तुल्यं सद्भावेन प्रसज्यते । जातिपक्षविमोकेन वनसिद्धान्तदूषणम् ॥** ' ९६ ॥ ( पूर्वं वृक्षातिरिक्तस्य वनस्य बाधकप्रत्ययात् असत्त्वमुपपाद्य पुनरपि वनादिषु नैव प्रत्ययविपर्यास इत्यादिना भाष्येण सत्त्वमुपगतम् , तस्याऽभिप्रायमाह– ) ' **इति निगदितमेतल्लोकसिद्धैः पदार्थैर्व्यवहृतिरिह शास्त्रे न स्वतन्त्राऽभ्युपेतैः । भवति च जनदृष्ट्या जातिपङ्क्त्यादिभेदो यदि तु न घटतेऽसौ नैव बाधोऽस्ति कश्चित् ॥** ' ९७ ॥ ( त्रिलोकप्रसिद्धपदार्थव्यवहारिणो मीमांसकाः; नैषां पृथिव्यादिवत् स्वतन्त्राभ्युपेताः पदार्थाः सन्ति, न च वनादयो भवन्ति लोकदृष्टाः । जातेः पङ्क्त्यादीनां च सत्यमिथ्यात्वरूपो विशेष इति ' पूर्वं यदि वनेऽन्येन ' इत्यादिना उक्तम् । यदि तु नायं विशेषो घटते इति कश्चिदभिनिविशेत तं प्रति इदं भाष्यं ' अथ वनादिषु ' इति वनस्य सद्भावेऽपि न काचिदस्माकं क्षतिरिति । ) । **श्लोवा.** १–९७ वनवादः.

**वनव्याघ्रन्यायः** । अत्र वनव्याघ्रयोः परस्परवियुक्तयोः शबरेण प्रधर्षणीयता भवति । संयुक्तयोस्तु परस्परसाहाय्यमाचरतोः दुर्धर्षता भवति तथा प्रकृतेऽपि । ( अतः रक्ष्यरक्षकभावे अयं न्यायः ) । **साहस्री.** ३९१.

* **वनस्पतिः** स्विष्टकृद्विकारः इति संकर्षे ( २।४।२१ ) वक्ष्यते । **भा.** १०।४।१६।३२, * **वनस्पतयो नाम** अचेतनाः । 'वनस्पतयः सत्रमासत ' इत्येवमादयोऽपि नानुपपन्नाः । स्तुतयो ह्येताः सत्रस्य । वनस्पतयो नाम अचेतना इदं सत्रमुपासितवन्तः किं पुनर्विद्वांसो ब्राह्मणाः। १।१।८।३२, * 'वनस्पतिं पृषदाज्येन यजति ' । पशौ । १०।४।१६।३२, * **वनस्पतेः** अभिधानानि वृक्षः पादपो द्रुमः नगः इति । १०।४।१६।३२. * ' पुरुषमृगश्चन्द्रमसे गोधा कालका दार्वाघाटस्ते **वनस्पतीनाम्** ' इयं संप्रदाने षष्ठी कारकविभक्तिरूपा विनियोक्त्री श्रुतिः । **बाल.** पृ. ४५.

* **वनस्पतियागस्य** स्विष्टकृद्यागः प्रकृतिः । **वि.** १०।४।१८.



**वनस्पतियागे नोपस्तरणाभिघारणे ॥**

वनस्पतीज्यां प्रकृत्य ' सकृदुपहृतेन यजति ' इति श्रुतेन सकृद्गृहीतेन तदीयोपस्तरणाभिघारणनिवृत्तिः । स्विष्टकृद्विकारत्वेनैव सकृद् गृहीतलाभात् । इति **प्राप्ते,** संसर्गरूपकार्यस्य अभावादेव तन्निवृत्तौ पञ्चावत्तिनां हविर्द्विरवदानस्य प्राप्तौ तदर्थोऽयं निषेधः । ' पृषदाज्याचतुर् ० ' इति शाखान्तरीयवचनात्तु हविषः एव चतुर्गृहीतपक्षेऽपि संस्कारनिवृत्तिः । **संकर्ष.** २।२।१०.

* वनस्पतियागे निगमेषु विधिगतवनस्पतिशब्देनैव देवताया अभिधानं ज्योतिष्टोमे । १०।४।१६।३२–३३. **मीको.** पृ. ३८९ ' अनुबन्ध्यावनस्पतियागयोर्निगमेषु० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**वनस्पतियागयाज्यायां न देवतोपलक्षणम् ॥**

पशौ वनस्पतियागस्य स्विष्टकृद्विकारत्वात् दार्शिकस्विष्टकृद्याज्यायां इष्टदेवतोपलक्षणनिगमानामुपलम्भात् वानस्पत्ययाज्यायामपि ते स्युः । इति **प्राप्ते,** वानस्पत्यप्रैषनिगदे तासां सकृदुपलक्षितत्वेन पुनरुपलक्षणे मानाभावान्न स्युः । अत्रोपलक्षितत्वादेव च पाशुकस्विष्टकृद्याज्यायामपि नोपलक्षणीयाः । याजुषहौत्रकास्तु वनस्पतियाज्यायामपि पुनरुपलक्षणमभ्युपगच्छन्ति । **संकर्ष.** २।४।२०.

* **वनिष्ठुः** अग्नीधे इडाभक्षविकारः पशौ । **भा.** १०।७।५।१७. * वनिष्ठुः । पशौ इडायां ' वनिष्ठुरग्नीधे ' अनेन वनिष्ठुना अग्नीधः इतरेडाभागबाधः । अयं च इडापात्रे हृदयादिवत् प्रास्यते । **वि.** १०।७।५. * वनिष्ठुः वपासंनिहितः तत्सदृशो मांसविशेषः । धूर्तस्वामी तु स्थविरान्त्रविशेष इत्याह । **सोम.** १०।७।५. * ' वनिष्ठुमस्य मा राविष्टोरूकं मन्यमानाः ' ( तैब्रा. ३।६।६।३) इति मन्त्रः निषेधविधिसरूपः । **बाल.** पृ. ६५.

**वनिष्ठु–अधिकरणम्** । वनिष्ठुना अग्नीधः प्राकृतकृत्स्नेडाभक्षस्य निवृत्तिः अग्नीषोमीये पशौ । अग्नीषोमीये पशौ वनिष्ठुः अग्नीधः इडाभक्षविकारः ॥

**अग्नीधश्च वनिष्ठुरध्यूध्नीवत् । १०।७।५।१७॥**

**भाष्यम्—** तत्रैव अग्नीषोमीये पशौ श्रूयते ' वनिष्ठुमग्नीधे ' इति । तत्राधिकरणप्रदेशः । तत्र यः संशयः स इहापि । किं वनिष्ठुः अग्नीधे विकारो भक्षस्य उत तस्य भागनियम इति । ततः स एव पूर्वपक्षः । अपूर्वत्वात् विधीयते । तस्माद्विकार इति । तस्य तदेवोत्तरम् । वचनान्तरेण प्राप्तत्वात् भागनियम इति । ततस्तदेवोच्यते । ' अनस्थिभिरिडां वर्धयन्ति ' इति अनुपात्तत्वात् अप्राप्तो वनिष्ठुर्विधीयते इति । अत्राह, ननु वनिष्ठुरपि तत्र संकीर्तनात् प्राप्त एवेति । अत्रोच्यते । ' वनिष्ठुं प्रास्यति ' इत्येतावत्तत्र । तेन इडायां प्रासनमात्रं तस्य विधीयते इडासंस्कारार्थेन, नासाविडा, न तस्य भक्षशब्दसंयोगः । तस्मात् प्रासनमात्रम्, न तस्य भक्षे प्राप्तिः । पूर्वस्मिन् वचने न ( च ? ) ( वचनेन इति तृतीयान्तं पाठान्तरम् ) चतुर्थीसंबन्धः, तस्यैतत् अग्नीधः ( धे इति क्वचित् ) इति । चतुर्थीसंबन्धेन भक्षणं विधीयते । तस्मात् पूर्वेणाधिकरणेन अतुल्याशङ्कायां तुल्यता सूत्रेणातिदिश्यते । सर्वेष्वेवाधिकरणप्रदेशेषु अतुल्याशङ्का निवर्त्यते ।

**शा—** ' वनिष्ठुमग्नीधे हरन्ति ' तत्रापि पूर्ववदेव संशयपूर्वोत्तरपक्षाः । विशेषाशङ्का तु वनिष्ठोः इडायां प्रासनवचनादस्ति प्राप्तिरिति । सत्यमस्ति प्रासनं तत्तु इडासंस्कारार्थं उपस्तरणादिवत् । अतो नास्य इडात्वम् । न च भक्षसंयोगोऽस्य, भक्षयितुं प्रास्यतीति । न चतुर्थीनिर्देशः प्रासनविधावस्ति । तस्मात् अप्राप्तो वनिष्ठुः । ' अग्नीधे वनिष्ठुं ' इति चतुर्थ्या अग्नीत्संप्रदानके हरणे विधीयते इति प्राकृतस्य इडाभक्षस्य विकारः ।

**सोम—** वनिष्ठुः वपासंनिहितः तत्सदृशो मांसविशेषः । धूर्तस्वामी तु स्थविरान्त्रविशेष इत्याह । तन्त्ररत्ने तु ' अग्नीधो हरति ' इति षष्ठ्यन्तपाठमाश्रित्य षष्ठ्या चतुर्थी लभ्यते इत्याह ।

**वि—** ' वनिष्ठुरपि तद्वत् स्यात् प्राप्तिः प्रासनतो यदि । इडासंस्कार एवायं भक्षो विक्रियते ततः ॥ '

**भाट्ट—** तत्रैव ' वनिष्ठुमग्नीधे हरन्ति ' इति श्रुतो वनिष्ठुरपि तस्यैडाभक्षविकारः । यद्यपि च 'तस्यै वनिष्ठुं' इत्यनेन वनिष्ठोः इडायां प्रासनं विहितं तथापि न तस्य इडात्वम् , न वा तत्प्रासनं वर्धनवत् भक्षार्थम्, अपि तु

' तस्यै इडायै वनिष्टुम् ' इति श्रवणात् उपस्तरणादिवत् इडासंस्कारार्थत्वमेव । अतश्च तस्य भक्षार्थत्वे प्रमाणाभावात् अप्राप्तमेव वनिष्टुसंस्कारार्थं अग्नीत्संप्रदानकं प्राकृतं हरणं इति तस्यापि प्राकृतेडाभक्षनिवृत्तिः । अत एव वनिष्ठौ प्राकृतषडवत्तादिधर्मप्राप्तिः इत्यपि बोध्यम् ।

**मण्डन**—— ' वनिष्टुरग्नीदशनं विकुर्यात् । '

**शंकर**—— ' वनिष्टुरपि बाधकः । '

**वनिष्ठुसंनिधानादुरूकेण वपाऽभिधानम् । ९।४।३।२२॥**

अध्रिगुप्रैषे ' वनिष्टुमस्य मा राविष्ट उरूकं मन्यमानाः ' इति पठ्यते । तत्र उरूकं उलूकं उलूकसदृशं मन्यमानाः वनिष्टुं मा राविष्ट छिन्नं कुरुत इति वा अर्थः किंवा उरूकं वपां मन्यमानाः वनिष्टुं मा राविष्ट इत्यर्थः इति विचारे **सिद्धान्तमाह** । उरूकेण उरूकशब्देन वपाऽभिधानं वपाया अभिधानं स्यात् । वनिष्टुसंनिधानात् वपालवनकाले व्यामोहेन वनिष्ठोरपि लवनं प्रसज्येत तदनेन निषिध्यते । वनिष्ठोर्लवनं तु पश्चात् भविष्यति । तस्मात् उरूकशब्दस्य वपा इत्यर्थः । उरुशब्दस्तावत् विस्तीर्णवचनो दृष्टः । तद्यथा उरु राजाङ्गणम् , उरु तैलिकाङ्गणं इति । कशशब्दो मेदसि प्रसिद्धः, यथा कशवाहिनो रथाः मेदवाहिन इति गम्यते । तस्यैकदेशः कशब्दः समुदायप्रत्ययमादधाति । मेदस्विनी तस्य वपा । न विस्तीर्णं मेदो मन्यमानेन तत्संनिकृष्टो वनिष्टुर्लवितव्यः इत्यर्थः । इति वपावचनता सिद्धा भवति । **के.**

* 'वनिष्टुसंनिधानादुरूकेण वपाभिधानम् ।' (९।४।३।२२ ) इत्यधिकरणे वनिष्ठोर्लवनं प्रतिषिध्यते इति पूर्वपक्षः कृतः । सिद्धान्ते च न तावत् वनिष्ठोः लवितव्यस्य सतो लवनं शक्यं प्रतिषेद्धुं इति निरस्तम् । **बाल.** पृ. ६५.

* **वपनं** केशश्मश्रुणोः यजमानसंस्कारो ज्योतिष्टोमे प्रधानार्थः । **भा.** ३।७।२।६. * वपनम् । नानाबीजानामावपनं कृष्टे अग्निक्षेत्रे क्रियते अग्निचयने तत्र प्रकरणस्था ये केचिच्चतुर्दश मन्त्रा ग्राह्याः न त्वादित एव । ( ' या ओषधीः ० ' इत्यादय इति **भाष्ये** । ' या जाता ओषधयः ० ' इत्यादय इति **शास्त्रदीपिकायाम्** ) । **वि.** १०।५।५. * **वपनस्य** ज्योतिष्टोमे ' केशश्मश्रु वपते ' इत्यस्य ' मृता वा एषा त्वक् ' इत्यादिः फलश्रुतिः फलार्थवादः न तु फलविधिः । ४।३।१।१-३. **मीको.** पृ. २४६९ ' पर्णमयीन्यायः ' द्रष्टव्यः । * **वपने** केशश्मश्रुवपनेऽपि नित्यं नापितकर्तृत्वं इति नाध्वर्योः क्षुरग्रहणापत्तिः । **वा.** ३।८।२।४ पृ. ११११. * वपने क्षुरेण त्रिर्वपति इति त्रित्वं समुदायः तेन समुदायानुसमयस्तत्र । **भा.** ५।२।३।४-५.

**वपनाधिकरणम्** । ज्योतिष्टोमे वपनादिसंस्काराः याजमानाः, वचनविशेषात्तु ऋत्विजामपि । फलिसंस्काराधिकरणम् ॥

**संस्कारास्तु पुरुषसामर्थ्ये यथावेदं कर्मवद् व्यवतिष्ठेरन् । ३।८।२।३ ॥**

**भाष्यम्**——ज्योतिष्टोमे श्रूयते ' केशश्मश्रु वपते, दतो धावते, नखानि निकृन्तते, स्नाति' इति । तत्र संदेहः किमेवंजातीयका अध्वर्युणा कर्तव्याः, उत यजमानेनेति । किं प्राप्तम् ? अध्वर्युणा कर्तव्याः संस्कारा यथावेदं व्यवतिष्ठेरन् समाख्यानात्पुरुषेण कर्मवत् । यथा अन्ये पदार्था यस्मिन् वेदे आम्नाताः, तत्समाख्यातेन पुरुषेण क्रियन्ते, एवमेतेऽपीति ।

**वा**— कर्तृत्वमेव एतैर्विना विगुणमिति यथासमाख्यं संस्काराः ।

**याजमानास्तु तत्प्रधानत्वात् , कर्मवत् । ४ ॥**

**भाष्यम्**—यजमानेन वा कर्तव्याः । कुतः ? पुरुषप्रधानत्वात् । कथं पुरुषप्राधान्यम् ? कर्त्रभिप्रायं क्रियाफलं गम्यते, तस्मात् पुरुषस्य कर्मकरणसामर्थ्यमुपजनयन्ति । न च कश्चियेन कर्मकरणेन सामर्थ्यमुपजन्यते, तदर्थं पुरुषान् क्रीणातीति । ईप्सितेभ्यः पदार्थेभ्यः क्रीणाति । येन यस्य सामर्थ्यं भवति, तत्तेनैव कर्तव्यम् । कर्मवत् । यथा प्रधानकर्माणि पुरुषार्थानि यजमानस्य भवन्ति, एवमेतदपीति ।

**वा**— पुरुषप्रधानत्वादेषां याजमानता । गुणभूते हि कर्तरि अपेक्षिते, समाख्या **नियामिका** भवति । प्रधानत्वं च यजमानस्य असंदिग्धमवधारितम् । न चैते



कर्तृत्वसंजननार्थाः, तैर्विनाऽपि सिद्धे कर्तृत्वे फलमात्रानुत्पादात् । ऋत्विक्फलं च दक्षिणालाभात्मकं विनाऽपि तैरुपलभ्यते, न तु याजमानम् । तस्मात् यथैव प्रधानानि पुरुषार्थत्वात् यजमानकर्तृकाणि भवन्ति, एवमेतेऽपीति । यथाप्राप्तरूपाणामेव चैषां यजमानगामित्वम्, इति न दन्तधावनं अध्वर्युणा गृहीत्वा यजमानस्य दन्ताः क्षालयितव्याः । केशश्मश्रुवपनेऽपि नित्यं नापितकर्तृत्वमिति नाध्वर्योः क्षुरग्रहणापत्तिः ।

**व्यपदेशाच्च । ५ ॥**

**भाष्यम्**—— परस्मैपदव्यपदेशश्च भवति ' तमभ्यनक्ति ' ' शरेषीकयाऽनक्ति ' इति च । अन्यो यजमानस्य अञ्जनमभ्यञ्जनं ( च ) करोतीति गम्यते ।

**वा**—— अध्वर्युव्यापारे च ' अभ्यनक्ति ' इति परस्मैपदेन निर्देशात् ' अभ्यङ्क्ते ' इत्यात्मनेपदयुक्तो विधिर्यजमानस्येति गम्यते ।

**गुणत्वे तस्य निर्देशः । ६ ॥**

**भाष्यम्**—— यदुक्तं समाख्यानात् यथावेदमिति । नैतदेवम् । गुणत्वे तस्य निर्देशः । तत्र वयं समाख्यां नियामिकां इच्छामः, यत्र कर्मणः प्राधान्यम् । यदर्थं क्रेतव्याः पुरुषाः प्राप्ताः, तत्र समाख्यया नियमः । कल्प्यो हि संबन्धो वपनादिभिः पुरुषाणां अदृष्टार्थत्वात् । क्लृप्त आरादुपकारकैः । न च क्लृप्ते उपपद्यमाने कल्प्यः शक्यः कल्पयितुम् । तस्मान्न पुरुषप्राधान्ये समाख्या नियामिका स्यात् ।

**वा**— यत्तु इतरकर्मवत् समाख्यया नियम्यते इति । तत्र समाख्या नियामिका भवति, यत्र कर्तुरपेक्षा । क्व चासौ, यदर्थः परिक्रयः । स च कर्तुः क्वचित् गुणत्वमापादयितुं क्रियते , न संस्काराय । ( ' कल्प्यो हि ' इत्यादि भाष्यं उक्तव्यवस्थोपपादनार्थत्वेन अवतारणपूर्वं व्याचष्टे– सु. ) तद्दर्शयति कल्पनीयो हि वपनादिभिः सह विनैवापेक्षया संबन्धः, इतरैः पुनः क्लृप्तोऽपेक्षणादिति ।

**चोदनां प्रति भावाच्च । ७ ॥**

**भाष्यम्**— चोदनेत्यपूर्वं ब्रूमः । अपूर्वं प्रति संस्कारा विधीयन्ते । ते ह्यसंभवात् द्रव्येषु कल्प्यन्ते । संनिकृष्टद्रव्याभावे च विप्रकृष्टेषु भवेयुः । यदा तु संनिकृष्टे द्रव्ये संभवन्ति , तदा न विप्रकृष्टेषु प्रयोक्तव्याः, कृतार्थत्वात् । तस्माद्याजमाना इति ।

**वा**— प्रधानापूर्वाश्रयत्वाच्च यजमानस्य संस्काराः संनिकृष्टाः सुत्यमपूर्वेण ग्रहीष्यन्ते । तत्सिद्ध्यर्थत्वाद्वा तत्रैव कर्तव्या इति ।

**अतुल्यत्वादसमानविधानाः स्युः । ८ ॥**

**भाष्यम्**— इदं पदोत्तरं सूत्रम् । अथ कस्मान्न समानविधाना भवन्ति, अविशेषविधानाद्धि पुरुषमात्रस्य प्राप्नुवन्ति । तदुच्यते । नैतत् समानं सर्वपुरुषाणां विधानम् । कुतः । अतुल्यत्वात् । अतुल्या एते एतद्विधानं प्रति । का अतुल्यता ? यत् यजमानस्य विहिताः, न ऋत्विजाम् । कथं यजमानस्य विहिता इत्यवगम्यते ? अर्थात् ' स्वयं प्रयोगे स्यात् ' (३।७।८।१८) इति । नन्वविशेषात् ऋत्विजामपि विहिताः । प्रयोजनाभावात् अविहिता इति पश्यामः । कथं प्रयोजनाभावः ? ऋत्विग्भिः क्रियमाणाः, न यजमानेन कृता न कारिताः । अतदर्थत्वात् परिक्रयस्य । स्वयंकृताश्च नार्थिन उपकुर्वन्ति । तस्मादप्रयोजनाः । अत ऋत्विजामविहिताः । एतदतुल्यत्वम् । तस्मान्न समानविधाना इति ।

**वा**— अनेन च न्यायेन यजमानस्य समाख्यया चर्त्विजां भवन्तु, विरोधाभावात् । न च संस्कारत्वात् प्रतिप्रधानमावर्तमाना दोक्ष्यन्तीति चोदिते वदति । नैतद्युक्तम् । सर्वं हि यजमानेन स्वयं कर्तव्यं परिक्रयेण वा कारयितव्यम् । तद्यदि संस्कारान् अध्वर्य्वादयः कुर्युः ते परिक्रयस्य अयोग्यत्वेन असाध्यत्वान्न कारिता नापि कृता इति अकर्माङ्गमेव स्युः । तस्मान्न ऋत्विग्यजमानानामेते समानविधाना इति ।

**शा**——पुरुषसंस्काराः केशश्मश्रुवपनादयः किं आध्वर्यवाः उत याजमाना एव इति समाख्यानात् आध्वर्यवत्वे प्राप्ते, ब्रूमः । संस्काराः संस्कृतस्य कार्ययोग्यतां आधातुं क्रियन्ते न कश्चिद्योग्यताजननार्थं कर्तारं परिक्रीणीते, स्वयमेव योग्यत्वात् , स तस्य कार्यं प्रति गुणभावेन परिक्रीणीते, तेन गुणतयैव परिक्रीतानां कर्तॄणां प्राप्तेः यथाप्राप्तानामेव च समाख्यया व्यवस्थानात् यत्रैव पुरुषाणां

गुणभावः तत्रैव समाख्यानियमः । संस्कारास्तु याजमानाः वचनात् ऋत्विजामपि भवन्ति 'हिरण्यमालिनः ऋत्विजः' इतिवत् ।

**सोम**—पूर्ववैषम्येण प्रत्यवस्थानात् सगतिः । **सूत्रार्थस्तु**– संस्काराः कर्मवत् तत्तद्भेदसमाख्यया व्यवतिष्ठेरन्, तेषां कर्तृपुरुषसामर्थ्यजनने उपयोगादिति ।

**वि**—– 'संस्कारा वपनाद्याः किमध्वर्योः स्वामिनोऽथवा ।, अध्वर्योस्तत्र शक्तत्वात् तद्भेदोक्तेश्च तस्य ते ॥, संस्कारैर्योग्यतां प्राप्य स्वकार्ये कर्तुमृत्विजः । क्रीणात्यतः क्रिया तेषां संस्क्रिया यजमानगा ॥'

**भाट्ट**-– वपनादयः फलिसंस्काराः समाख्यानात् अध्वर्युकर्तृकाः । तेन अध्वर्युणा क्षुरं दण्डकाष्ठं जलं च गृहीत्वा यजमानस्य केशवपनादि दन्तधावनं स्नानं च करणीयं अञ्जनाभ्यञ्जनवत् । **इति प्राप्ते**, 'वपते' इत्यात्मनेपदात् वपनफलाश्रयस्य यजमानस्यैव तत्कर्तृत्वं प्रतीयते । अस्ति च तस्यापि छेदनाख्यवपनाधारत्वेन 'स्थाली पचति' इतिवत् तत्कर्तृत्वम्, तदादायैव 'तस्मात् केशान् वपाम्यहम्' इति प्रयोगः । यस्तु 'नापितो वपति' इत्यादिप्रयोगः, स छेदनानुकूलक्षुरक्रियाकर्तृत्वमादाय । तत्प्रयोजककर्तृत्वमादायैव 'नापितो यजमानं वापयति' इत्यादिप्रयोगः । अतश्च 'वपते' इत्यात्मनेपदस्थले आधारत्वमादायैव कर्तृत्वोपपत्तौ क्षुरग्रहणकर्तृत्वेऽपि तात्पर्यकल्पने प्रमाणाभावः । तेन अर्थाक्षिप्तस्य तस्य यजमानकर्तृकत्वनियमे एव प्रमाणाभावे, अध्वर्युकर्तृकत्वनियमस्य कः प्रसङ्गः इति नापितकर्तृकमपि तत् । सोमे तु 'प्रवपति देवथूः' इति परस्मैपदप्रयोगात् अध्वर्युकर्तृकगोदानवपनोत्तरं 'नापिताय क्षुरं प्रयच्छति' इति विधानात् तत्कर्तृकमेव तत् । एवमन्यत्रापि आत्मनेपदयुक्ते द्रष्टव्यम् । अत एव यत्र 'तमभ्यनक्ति' 'शरेषीकयाऽनक्ति' 'दण्डेन दीक्षयति' इत्यादौ परस्मैपदनिर्देशः अधिकः श्रुतः, तत्र सत्यपि आधारत्वमादाय आत्मनेपदोपपत्त्या यजमानकर्तृकत्वे, व्यापारान्तरस्यापि विधेयत्वात् अध्वर्युकर्तृकत्वमिष्टमेव । स्नाने तु स्वनिष्ठव्यापार एव, स्नातीति परस्मैपदस्यापि प्रयोगात् अन्यकर्तृके च स्नापयतीत्येव प्रयोगात्, यजमाननिष्ठव्यापारस्यैव विधेयत्वेन अन्यकर्तृकव्यापारस्य अविधेयत्वेन नाध्वर्युनियमः । न त्वत्र परस्मैपदात् अन्यकर्तृकत्वनियमः, स्नाधातोः स्वरितेत्त्वाद्यभावेन तदभावात् । अतः फलिसंस्काराः स्वामिकर्तृका एव । कर्तृसंस्कारास्तु हिरण्यमालित्वादयः सामान्यविहिताः सर्वेषामेव । विशिष्य विहितास्तु तेषामेवेति न तत्रापि समाख्यया नियमः, तस्याः नियामकमात्रत्वेन प्रापकत्वाभावादिति वक्ष्यते ।

**मण्डन**— 'स्यात् स्वामिनिष्ठं वपनादि कर्म ।'

**शंकर** — 'पुंसंस्कारा याजमानाः ।' ३. 'वचनादृत्विजामपि ।' ४.

* **वपनार्थानां** आधूननार्थानां च चयनप्रकरणपठितमन्त्राणां श्रुतसंख्यासंपत्तये अनियमेनोपादानम् । **भा**. १०।५।५।१८.

* **वपनादयः** यजमानसंस्काराः प्रधानोपकारकाः नाङ्गोपकारकाः । **वि**. ३।७।२, * वपनादयः संस्काराः यजमानस्यैव । वचनात्तु हिरण्यमालिनो ऋत्विजः सर्वे वाजपेये, लोहितोष्णीषत्वं श्येने सर्वेषां ऋत्विजाम् । ३।८।५, * वपनादयः संस्काराः यजमानगतमालिन्यमपनीय यागयोग्यतामुत्पादयितुं क्रियन्ते । ३।८।३, * वपनादयः संस्काराः यजुर्वेदे समाम्नाताः । ३।८।३.

* **वपनादिसंस्काराणां** लोपोऽस्थियज्ञस्य मृताधिकारित्वपक्षे । १०।२।१८।५०. **मीको**. पृ. ७६० (४) 'अस्थियज्ञस्य मृताधिकारित्वपक्षे जप– संस्कार– इष्टीनां लोपः' इत्यत्र द्रष्टव्यम् ।

* **वपनादिसंस्कारकृतोपकारश्चादृष्टः** । स च यजमानस्य दृष्टे कर्तृत्वाकारे नास्ति किंतु भोक्तृत्वाकारे अदृष्ट एव । **वि**. ३।७।२.

* **वपननखनिकृन्तनयोः** निर्ज्ञातनापितकर्तृकत्वेन कर्त्रन्तरानाकाङ्क्षा । **सु**. ३।८ पृ. ५४.

* **वपननिषेधः** आधाने– अपूर्वकर्मगत– संनिपत्योपकारक– अदृष्टार्थक्रियानिषेधः । **बाल**. पृ. ३६.

* **वपनपयोव्रततपसां** अग्नीषोमीयादिविकारेषु अगमनं सिद्धान्ते । **वा**. ३।७।२।६ पृ. १०७८.



* अञ्जन– अभ्यञ्जन– **वपनपावनानां** बहुयजमानकेषु अहीनेषु त्रित्वादिविशिष्टेन एकैकेन पदार्थेन पदार्थानुसमयो यजमानेषु । **सोम**. ५।२।२.

* **वपा** सर्वप्रदाना । **भा**. १०।७।८।२३,* यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव **वपा** कार्या । १०।७।१९।६४, * **वपया** प्रातःसवने चरन्ति अग्निष्टोमे पशोः सवनीयस्य । ११।२।३।१४. * 'वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने सवने, अङ्गैस्तृतीयसवने' इति वचनं पशुमन्ति त्रीणि सवनानि कर्तव्यानि इति (बोधयति) । **टुप्**. १२।२।१२।३२. * 'वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने, अङ्गैस्तृतीयसवने' इति सवनीयपशोरेकत्वेऽपि कालभेदेन विधानम् । **वि**. ११।२।३. * **वपायाः** श्रपणं आहवनीये विहितम्, तस्यायं प्रतिषेधः योऽयं मांसपाकप्रतिषेधः वैदिकेऽग्नौ । **भा**. १२।२।१।६. * **वपानां** वाजपेयवपानां प्रयाजशेषेणाभिघारणं नास्ति । ४।१।१४।३३–३९. **मीको**. पृ. २७८५ 'प्रयाजशेषाभिघारणन्यायः' इत्यत्र द्रष्टव्यम् । * **वपायां** प्राकृतावदानधर्मस्य नातिदेशः । **संकर्ष**. २।२।१६. **मीको**. पृ. ६९३ 'अवदानं प्राकृतं एककपाले०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वपाभिधानं** अध्रिगुप्रैषगतेनोरूकशब्देन । ९।४।३।२२. **मीको**. पृ. ३४४ 'अध्रिगुप्रैषगतेन उरूकशब्देन वपाभिधानम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वपोत्खननस्य** आत्मरक्षणशास्त्रविरोधः । **सु**. पृ. ४.

* **वपाप्रचारादूर्ध्वं** पशुपुरोडाशस्य कालः । **भा**. १२।१।१।१, १२।३।२।५.

* **वपावत्** हृदयाद्यङ्गेष्वपि पञ्चावत्तत्वमत्र ज्योतिष्टोमे अग्नीषोमीये पशौ । १०।७।२०।७२–७३. **मीको**. पृ. १२० 'अग्नीषोमीये पशौ वपायामिव सर्वेष्वङ्गेषु पञ्चावत्तत्वम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वपाश्रपणं** प्रतिप्रस्थाता करोति । **वि**. १०।७।८. * **वपाश्रपणी** तन्त्रं एकादशिनेषु पशुषु । ११।४।९।३८–३९. **मीको**. पृ. १३०६ 'एकादशिनेषु पशुषु कुम्भीशूलवपाश्रपणीनां तन्त्रम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * वपाश्रपणी तन्त्रं न नानाजातीयेषु पशुषु, यथा सौत्रामण्याम् । ११।४।१०।४०–४१. **मीको**. पृ. १९३६ 'तन्त्रं न कुम्भीशूलवपाश्रपणीनां०' इत्यत्र अधिकरणं द्रष्टव्यम् । * वपाश्रपणी तन्त्रं वाजपेये सप्तदशसु प्राजापत्यपशुषु । ११।४।८।३३. **मीको**. पृ. १९३५ 'तन्त्रं कुम्भीशूलवपाश्रपणीनां०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वपाश्रपणी-कुम्भीशूलानां** वाजपेये प्राजापत्यपशुषु अङ्गादिश्रपणार्थं तन्त्रम् । ११।४।८।३०.

**वमनाधिकरणम्** । वैदिकसोमवमने सोमेन्द्रश्चरुः प्रायश्चित्तम् ॥

**पानव्यापच्च तद्वत् । ३।४।१२।३२ ॥**

**भाष्यम्**— इदं समामनन्ति 'सोमेन्द्रं चरुं निर्वपेच्छ्यामाकं सोमवामिनः' इति । तत्र संदेहः, लौकिकस्य सोमपानस्य वमने सोमेन्द्रश्चरुः उत वैदिकस्येति । किं लौकिकं सोमपानम्, किंच वैदिकम् ? उच्यते । वैदिकं सोमपानं ज्योतिष्टोमे तद्विकृतिषु च । लौकिकं सोमपानं यत् सप्तरात्रेषु दशरात्रेषु च धातुसाम्यार्थं आसेव्यमाने सोमे । किं तावत् प्राप्तम् ? पानव्यापच्च तद्वत् । लौकिके वमने इष्टिर्भवितुमर्हति, न वैदिके । तद्वदिति **पूर्वः पक्षः** प्रतिनिर्दिष्टः । यथा तत्र दोषसंयोगेन श्रवणात् लौकिके अश्वप्रतिग्रहे इत्युक्तम्, एवमिहापि दोषसंयोगेन श्रवणं भवति 'इन्द्रियेण वा एष वीर्येण व्यृध्यते, यः सोमं वमति' इति । लोके धातुसाम्यार्थमासेविते वमनेन विनष्टे धातुसाम्यव्यापदा इन्द्रियेण व्यृद्धिरुपपद्यते । शास्त्राद्धि वैदिके न दोषः स्यात् । तत्र शेषः पातव्यः इति शब्दाच्चोदिते निर्वृत्ते नास्ति दोषः । यद्यपि वम्यते, तथापि पानक्रिया तत्र निर्वर्तिता, कृतो वचनार्थ इति न दोषः स्यात् । तस्मात् लौकिकस्य सोमपानस्य व्यापदि सोमेन्द्रः स्यात् ।

**वा**—– अयमपि अनारभ्यवाद एव । 'सोमेन्द्रं चरुं निर्वपेत् यः सोमं वमति' इति । तत्रापि पूर्ववदेव अधिकरणद्वयमपि विचार्यते । लौकिकसोमपाने रसायनाद्यर्थं कृते वमनेन व्यापन्ने सोमेन्द्रयागः, उत वैदिके, उत उभयत्रापि । तत्र तद्वत् इत्यनेन सामान्यपक्षः

'दोषात् त्विष्टिर्लौकिके स्यात्' इत्ययं चातिदिश्यते। अथवा अधिकरणद्वयमपि सिद्धान्तरूपेण अधिकरणद्वयेऽपि अतिदिश्यते। केनचिद्विशेषेण पूर्वपक्षरचना। तत्रेह तावत् वैदिकेन पानेन द्रव्यप्रतिपादनस्य कृतत्वात् न कदाचित् भ्रेषे पुनः प्रतिसमाधानापेक्षाऽस्ति इत्यनर्थकं इष्टिविधानम्। लौकिके तु वमनेन व्यापन्ने रसायनगुणाभावात् इन्द्रियेण वीर्येण च व्यृद्धिः संभाव्यते। न जलोदरवत् अत्यन्तासंभावना। तत्संयोगे च श्रूयमाणा इष्टिः तत्समाध्यर्थैव विज्ञायते। तस्मात् तत्र स्यादिति।

**दोषात्तु वैदिके स्याद्र्थाद्धि लौकिके न दोषः स्यात्। ३३॥**

**भाष्यम्**— वैदिकस्य पानस्य व्यापदि भवितुमर्हति, न लौकिकस्य। कस्मात्? दोषात्। दोषसंबन्धोऽत्र श्रूयते 'इन्द्रियेण वा एष वीर्येण व्यृध्यते' इति। लौकिके पुनः धातुसाम्यार्थं क्रियमाणे न किंचित् दुष्यति। वमनायैव हि तं पिबन्ति लोके। अथापि अयमर्थवादः, तथापि फलकल्पनापरिहाराय वैदिके एव इति कल्पना न्याय्या।

**वा**— तैरेव वैदिकत्वसामान्यादिभिः (हेतुभिः) वैदिके भवति इति कस्मान्नोच्यते? न हि वमने वैदिकत्वं संभवति, अचोदितत्वात्। अतो य एव दोषो लौकिकगामित्वे हेतुः स एव इह वैदिकविषयत्वे स्यात्, तथाहि, '**सम्यग्जरणरूपान्ता प्रतिपत्तिर्विधीयते। तद्व्यापदि प्रधानस्य न भवेत् पूर्ववत् फलम्॥**' न च तावत् लौकिकपानव्यापदि दोषोऽस्ति, वमनार्थमेव पानात्। अथापि भवति, तथापि वैद्यकेनैव तस्य प्रतिसमाधानं इति न वैदिकोपायापेक्षा। वैदिके तु पाने सम्यग्जरणपाठात् जरणान्ता प्रतिपत्तिरवधारिता। सा च वमनेन व्यापद्यते। ततश्च प्रधानफलवैगुण्याशङ्कायां तत्समाधानार्था इष्टिर्विज्ञायते। अथ तु अयं फलार्थवादः, ततः सुतरां फलकल्पनाभयात् लौकिकान्निवृत्तिर्गम्यते। वैदिके तु वमनेन पानं प्रत्यायितम् (प्रत्यवायितम्), तेन क्रतुस्थस्य इष्टिरङ्गं इति सुकरः संबन्धः।

**शा**-- '**तत्राविशेषादुभयोर्दोषाद्वा लौकिके भवेत्। दोषो ह्यत्रास्ति वमनाद् व्यृद्धिरिन्द्रियवीर्ययोः॥**' एवं प्राप्ते, ब्रूमः। '**लोके हि वमनायैव पानाद् दोषो न विद्यते। सम्यग्जरणपर्यन्तं वेदे पानं विधीयते॥ वेदे तु क्रतुवैगुण्यात् समाधित्सोपजायते। अपेक्षितार्थता तत्र प्रायश्चित्तविधेर्भवेत्॥ अपेक्षितविधिर्ज्यायाननपेक्षितचोदनात्। तेन क्रत्वङ्गमेवेष्टिः फलं चैवं न कल्प्यते॥**' ३।४।१६.

सोम--**सूत्रार्थस्तु**-सोमपानस्य व्यापत्तिरपि अश्वप्रतिग्रहेष्ट्यधिकरणपूर्वपक्षवत् लौकिकी एव निमित्तमिति।

के--**दृष्टान्तसंगतिरत्र।**

वि-- 'सोमवामिचरुर्लोके वेदे वेन्द्रियसंक्षयः। दृष्टदोषो लौकिकेऽतो वमने विहितश्चरुः॥, अदोषो वमनायैव लोके पानं श्रुतौ पुनः। जरणाय ततो वान्तिदोषशान्त्यै भवेच्चरुः'॥

**भाट्ट**— अनारभ्यैव 'वि वा एष इन्द्रियेण वीर्येणर्ध्यते (सोमपीथेनर्ध्यते) यः सोमं वमिति, यः सोमवामी स्यात् तस्मा एतं सोमेन्द्रं श्यामाकं चरुं निर्वपेत्' इति श्रुता इष्टिरपि वैदिकस्यैव सोमस्य वमने भवेत्, न तु लौकिकस्य। वैरूप्यगौरवादिभयेन जयादिहोमवदेव उभयार्थत्वस्य तावदनुपपत्तेः। न च अश्वप्रतिग्रहेष्टिवत् दोषनिर्घातार्थत्वकल्पनया लौकिकमात्रविषयत्वशङ्का, वमनजन्यस्य आर्थवादिकस्य इन्द्रियवीर्यनाशाख्यव्यृद्धिरूपस्य दोषस्य वैदिकसोमवमनेऽपि जायमानत्वात्; तन्निर्घातार्थत्वस्य प्रत्यक्षबाधितत्वाच्च। वैद्यके वमनार्थतयैव सोमपानविधानात्, तस्य इन्द्रियादिनाशकत्वानुपपत्तेश्च। अतः इन्द्रियवीर्यव्यृद्धिपदेन लक्षणया क्रतुवैगुण्यस्यैव उपादानात् तन्निर्घातार्थत्वमेव अस्या इष्टेः युक्तम्। जायते च 'मा मेऽवाङ् नाभिं अति गाः' इत्यादिमन्त्रवर्णात् सम्यग्जरणान्तस्यैव भक्षणस्य शेषप्रतिपत्त्यर्थत्वावगतेः वमने क्रतुवैगुण्यम्। अतश्च अश्वदानवत् वमनस्य वैधत्वाभावेऽपि इष्टेः अग्निमत्क्रतुविशेषाङ्गत्वं अविरुद्धम्। १६.

**मण्डन**--'वेदोक्तपाने वमने चरुः स्यात्।'

**शंकर**--'कर्माङ्गवमने यजिः।'



* **वमनेष्टिः** (३।४।१२।३२-३३) 'सोमेन्द्रं चरुं निर्वपेत् यः सोमं वमिति' इति यच्छब्देन इष्टिवमनयोः समानकर्तृकत्वनिर्देशात् यजमानवमने एवेष्टिः। **सु.** पृ. १५१२, * वमनेष्टिः। सौमेन्द्रं कर्म वमनोपस्थापितकर्माङ्गतां अनुभवदेव सोमवामिन उपकरोति, यजमानस्यैव च तथा उपकर्तुं शक्नोति नर्त्विजम्, ततश्च यजमानार्थत्वेन सौमेन्द्रस्य कर्मणः यजमानकर्तृकत्वात् तस्य च वमनसमानकर्तृकत्वनिर्देशात् (निर्वपेत् यः सोमं वमिति) यजमानवमने एव सौमेन्द्रं कर्म। पृ. १५१३,
* **वमनेष्ट्यां** वैदिकसोमवमननिमित्तकत्वं अर्थवादप्रामाण्याधीनम्। पृ. ६६.

* **वमनविरेचनयोः** (सोमस्य) प्रायश्चित्ताम्नानम्। **वा.** ३।२।९।२६ पृ. ७८५.

**वरमद्य कपोतः श्वो मयूरादिति न्यायः।** न्यायोऽयं संदिग्धबहुमूल्यवस्त्वपेक्षया अल्पमूल्यवस्तुवरत्वविषये प्रवर्तते। **साहस्री.** ६७७.

**वरं सांशयिकान्निष्कादसांशयिकः कार्षापण इति न्यायः।** सुवर्णानामष्टाधिकशतात्मकनिष्कादसांशयिकः कार्षापणो वरम्। कार्षापणं नाम राजतपरिमितरूपकस्य 'रुपैया' इति ख्यातस्येति। न्यायोऽयं संदिग्धबहुमूल्यवस्त्वपेक्षया अल्पमूल्यवस्तुवरत्वविषये प्रवर्तते। **साहस्री.** ६७६.

* **वरः** नाम—'गौर्वै वरोऽतिवरः, अन्यो धेनुर्वरोऽतिवरः, अन्योऽनड्वान् वरोऽतिवरः' इत्यापस्तम्बाचार्योक्तो वरशब्दार्थो द्रष्टव्यः। **सोम.** ३।८।१.

**वरगोष्ठीन्यायः।** गोष्ठी गावोऽनेका वाचस्तिष्ठन्त्यत्र 'गोष्ठी सभा' इत्यमरः। अन्योन्यवार्तालापस्थानविशेष इति। वरलाभाय गोष्ठी वरगोष्ठी। तया यथा वरवधूबन्धूनामैकमत्ये विवाहादिरूपमेकं कार्यं निष्पाद्यते तथा प्रकृतेऽपि। **साहस्री.** २०.

**वरघाताय कन्यावरणमिति न्यायः॥ न हि वरघाताय कन्यामुद्वाहयन्तीति न्यायः॥** द्वाविमौ समानविषयकौ समानार्थकौ स्पष्टौ हि अनिष्टान्तरपातादिसंभावनायां अभीष्टहेत्वपि वस्तु न वरणीयमित्येवं तात्पर्ये प्रवर्तेते। **साहस्री.** १५३,१५४.

* **वरदानस्य** अध्वर्युकर्मता अग्निचयने स्वयमातृण्णोपधाने। 'य एतां इष्टकामुपदध्यात्, स त्रीन् वरान् दद्यात्' इति। **वि.** ३।८।२.

* **वरकाः** नाम धान्यं अयज्ञियं तत्र प्रतिनिधातव्यम्। **भा.** ६।३।६।२०.

* **वरणं** अत्यन्ताप्रवृत्तानां प्रवर्तनार्थमभ्यर्थनम्। **वा.** ३।७।९।२४, * वरणं आधानवत् कर्मौपयिकान् तान् (ऋत्विजः) उत्पादयत् दृष्टार्थं भविष्यति। ३।७।१६।३३ पृ. १०९७. * वरणम्। 'ऋतुप्रैषादिभिर्वृणीते' इति येषां शाखायां वचनम्, तेषां तैरेव मन्त्रैर्वरणम्। **संकर्ष.** ३।४।११. **मीको.** पृ. १२४३ "ऋतुप्रैषादिभिर्वृणीते' इति येषां०" इत्यत्र अधिकरणं द्रष्टव्यम्।

**वरणमृत्विजामानमनार्थत्वात् सत्रे न स्यात् स्वकर्मत्वात्। १०।२।१०।३५॥**

द्वादशाहादौ सत्रे ऋत्विजां वरणं न स्यात्। पूर्णमासादौ वरणस्य आनमनार्थत्वात् सत्रे च स्वकर्मत्वात् आर्त्विज्यस्य। सत्रे सर्वे यजमानाः सर्वे ऋत्विजः इति सत्रकर्म सर्वेषां स्वकर्मैव भवति न परकीयम्। पूर्णमासादौ तु ऋत्विजां न स्वकर्म इति तत्र वरणं आनमनार्थं इति युक्तम्। तस्मात् सत्रे वरणं नास्ति इति सिद्धान्तः। **के.**
* 'वरणमृत्विजामानमनार्थत्वात्०' (१०।२।१०।३५)। अध्वर्य्वादयो दीक्षावाक्ये अनूद्यन्ते इति वरणभरणे कर्तव्ये स्याताम्, तत्र 'वरणमृत्विजां०' इति विरुध्यते। **वा.** ३।७।१६।३३ पृ. १०९८.
* 'वरणमृत्विजामानमनार्थत्वात्०' १०।२।१०।३४। सत्रे ऋत्विजां स्वकर्मत्वेन वरणस्य आत्मार्थत्वापत्तेः आत्मनि च प्रार्थनाख्यवरणायोगात् सत्रे वरणं नास्ति। **सु.** ३।७ पृ. ३५. * वरणमृत्विजां किं अवयवमुद्दिश्य समुदायमुद्दिश्येति। किं पुनरत्र युक्तं समुदायमुद्दिश्येति। तथा सति अविघ्नेन कर्तुः कर्म निर्वर्तते। **भा.** ११।८।२।५। यदप्युच्यते समुदायमुद्दिश्य वरणमिति, तदयुक्तम्। वरणमपि भेदेन कर्तव्यम्। एकैकस्य भेदेन वरणम्। **टुप्.** * वरणं ऋत्विजां प्रकृतौ (ज्योतिष्टोमे) आनमनार्थं दृष्टप्रयोजनम्। **भा.** १०।२।१०।३४, **संकर्ष.** २।३।१. * वरणं

ऋत्विक्शब्दवाच्यक्रतुयजनाभिमुख्यसिद्ध्यै विधीयते । **सु.** ३।७ पृ. ३५. * वरणं च प्राक् कर्मप्रवृत्तेः । तत् अगृह्यमाणविशेषत्वात् तन्त्रम् । तेन आनताः सर्वार्था भवन्ति । राजसूये । ( इति भाष्यमतम् ) । वार्तिकमतं तु वरणं वैदिकं प्रतिकर्म पृथक् कर्तव्यम् , लौकिकं तु वरणं तन्त्रे स्यात् इति । **भा.** ११।४।२।५. * वरणं चिकीर्षुर्यजमानः वरणीयेभ्यो ब्राह्मणेभ्यः सोमं ब्रूयात् । 'तेभ्यः सोमं प्राह' इत्यापस्तम्बः । सोमाभिधानप्रकारश्चात्र कल्पे दर्शितः 'ज्योतिष्टोमेनाग्निष्टोमसंस्थेन रथंतरपृष्ठेन गवां द्वादशशतदक्षिणेनाहं यक्ष्ये, तत्र त्वमुद्गाता भव' इत्यादिः । **वि.** १०।२।११. * वरणं तन्त्रेणैकमेव शक्यं कर्तुं याज्यासहस्रार्थमपि अदृष्टार्थे च । **वा.** ३।५।१८।४६ पृ. १०१६. * वरणं नाम सत्कारपुरःसरं 'अग्निर्होता०' इत्यादिमन्त्रेण ब्राह्मणप्रार्थना । वरणकाले च यजमानेन ब्राह्मणेभ्यः सोमाभिधानं कर्तव्यम् । **वि.** १०।२।११. * वरणं निरूढपशुबन्धे होतृमैत्रावरुणयोर्द्वयोः । **संकर्ष.** ३।४।१३. **मीको.** पृ. २३७१ 'निरूढपशुबन्धे होतृमैत्रावरुणयोर्द्वयोर्वरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * वरणं प्रकृतौ किं धर्ममात्रं उत परिक्रयार्थं इति नः परीक्ष्यम् । मन्त्रवत्, नियमवच्च इति कृत्वा धर्ममात्रमिति । न । प्रकृतौ आनमनार्थं वरणं दृष्टप्रयोजनं इति न शक्यं अदृष्टं कल्पयितुम् । ( नियमादृष्टं तु भविष्यतीति ) । **भा.** १०।२।१०।३४. * वरणं प्रार्थनात्मकम् । **सु.** ३।७ पृ. ३६. * वरणं भविष्यद्दानसूचनेनोत्साहजननार्थम् । अत एव वरणकाले 'कच्चित् कल्याण्यो दक्षिणाः' इति ऋत्विजां प्रश्नः । वरणं सत्रे लुप्यते दानवत् । **वि.** १०।२।१०, * वरणं महापितृयज्ञे चोदकप्राप्तम् 'नार्षेयं वृणीते न होतारं' इति निषिद्धम् । तत्र वरणव्यतिरिक्तमङ्गजातमनुष्ठेयं इति पर्युदासः । १०।८।१. * वरणं वषट्कर्तॄणामेव अग्नीषोमीये पशौ 'सप्त वृणीते' इत्यनेनोक्तम् । **संकर्ष.** ३।४।९. **मीको.** पृ. १२३ "अग्नीषोमीये पशौ 'सप्त वृणीते' इति वषट्कर्तॄणामेव वरणम्" इत्यत्र अधिकरणं द्रष्टव्यम् । * वरणं वषट्कर्तॄणां सप्तानामपि लौकिक्या वाचा, अग्नीषोमीये पशौ । **संकर्ष.** ३।४।१०. **मीको.** पृ. १२३ 'अग्नीषोमीये पशौ सप्तानामपि वरणं लौकिक्या वाचा' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**वरणं सत्रे नास्ति ॥**

**'वरणमृत्विजामानमनार्थत्वात् सत्रे न स्यात् स्वकर्मत्वात् । १०।२।१०।३४॥**

**भाष्यम्**— सन्ति द्वादशाहप्रभृतीनि सत्राणि 'द्वादशाहमृद्धिकामा उपेयुः' इत्येवमादीनि । अस्ति च प्रकृतौ ज्योतिष्टोमे वरणं 'अग्निर्मे होता स मे होता, होतस्त्वं मे होताऽसि इति होतारम्' इत्येवमादि इति । तत् सत्रेषु संदिह्यते किं कर्तव्यम् , नेति । तत एतावन्नः परीक्ष्यं किं प्रकृतौ धर्ममात्रं वरणं उत परिक्रयार्थमिति । यदि धर्ममात्रं प्रकृतौ, सत्रेषु कर्तव्यम् । अथ परिक्रयार्थम्, न कर्तव्यमिति । किं प्राप्तम् ? मन्त्रवत् नियमवच्च इति कृत्वा धर्ममात्रम् । तस्मात् सत्रेषु कर्तव्यमिति । **एवं प्राप्ते, ब्रूमः** । वरणमृत्विजां सत्रेषु न स्यात् । न कर्तव्यमिति । स्वार्थं हि तेषां कर्म । न च कश्चिदात्मानं वृणीते । प्रकृतौ च आनमनार्थं वरणं दृष्टप्रयोजनं इति न शक्यमदृष्टं कल्पयितुम् । तस्मात् सत्रेषु वरणं न स्यात् इति ।

( 'अग्निर्मे होता, आदित्यो मेऽध्वर्युः । चन्द्रमा मे ब्रह्मा, पर्जन्यो म उद्गाता, आकाशो मे सदस्यः, आपो मे होत्राशंसिनः, रश्मयो मे चमसाध्वर्यवः' इति षड्विंशब्राह्मणे । **के.** )

**शा**— ज्योतिष्टोमे वरणं ऋत्विजामाम्नातं 'अग्निर्होता स मे होता' इत्यादि । तत् सत्रेषु कर्तव्यं नेति संशये चोदकानुग्रहाय कर्तव्यं ऋत्विक्त्वार्थं च इदं प्रकृतौ, तच्च सत्रेऽपि यजमानेषु आधातव्यम् 'ये यजमानास्त ऋत्विजः' इति वचनात् । अतो लुप्तार्थत्वात् कर्तव्यं वरणम् । नैवम् । आनत्यर्थं तत्प्रकृतौ कृतम् । न च अत्र यजमानैः वरणेन आनमितव्यम् , अतोऽर्थलोपादकर्तव्यम्, ऋत्विक्त्वमपि यागकर्तृत्वम्, तच्च प्रकृतौ वरणविधानात् तद्द्वारेण आनतानामेव । सत्रेषु तु वरणस्य अर्थलोपात् निवृत्तवरणानामेव न विगुणं ऋत्विक्त्वम् । अध्वर्य्वादित्वं च भविष्यति । यदि तु कर्मकरवचनः



अयं ऋत्विक्शब्दः ततो वरणेन अपि यजमानेषु अशक्यमाधातुम् । ते हि स्वार्थं कुर्वाणा न कर्मकरा भवन्ति । तेन अनृत्विग्भिरेव सत्रं कर्तव्यमिति वरणनिवृत्तिः ।

**सोम**— यथा शेषभक्षणमलुप्तार्थत्वात् कर्तव्यं तथा वरणमपि इत्युत्थितेः **संगतिः । सूत्रार्थस्तु**— सत्रे वरणं न स्यात् तस्य ऋत्विगानत्यर्थत्वात्, स्वार्थकर्मत्वात् सत्रस्य । तत्र यजमानानां स्वयमेव आनतत्वादिति ।

**वि**— 'ऋत्विजां वरणं सत्रे कार्यं नो वा, ऽत्र सोमवत् । कार्यं, मैवं स्वकर्मत्वात् क्रयार्था प्रकृतौ वृतिः ॥' इति ।

**भाट्ट**— परिक्रयणवत् वरणमपि ऋत्विगानत्यर्थत्वात् सत्रे न कार्यमेव । नहि तददृष्टरूपऋत्विक्संपत्त्यर्थम्, ऋत्विक्त्वस्य अदृष्टरूपत्वे प्रमाणाभावस्य तृतीये साधितत्वात् ( ३।७।९ ) । न वा ऋतुयाज्यावरणवत् स्वतन्त्रादृष्टार्थम् , प्रमाणाभावात् । सिद्धमपि नैवमादि बाधलक्षणे शिष्यहितार्थं कथ्यते इति विवेकः ।

**मण्डन**— 'न सत्रे वरणं भवेत् ।'

**शंकर**— 'सत्रे वरणबाधनम् ।'

* वरणं सोमार्थं औपवसथ्येऽहनि एव, न तु सुत्याकाले उत्कर्षः । **संकर्ष.** ३।४।१४. 'सोमार्थं वरणं औपवसथ्येऽहनि' इत्यत्र अधिकरणं द्रष्टव्यम् । * वरणं सौमिकं 'यदवृतो वषट् कुर्यात् भ्रातृव्यमेव यज्ञस्याशीर्गच्छेत्' इति यज्ञसंयोगात् अग्नियोगतुल्यन्यायतया केवलप्रधानार्थं भवति, ततश्च सोमाङ्गभूते अवभृथे अतिदेशप्राप्तं होतृवरणं 'न होतारं वृणीते' इत्यनेन पर्युदस्यते । सौमिकस्य वरणस्य अङ्गप्रधानार्थत्वे तु औपदेशिकेन आतिदेशिकस्य बाधेनैव अप्राप्तत्वात् पर्युदासानुपपत्तिः । यद्यपि च अवभृथः अपूर्वः तथापि आज्यभागाद्यर्थतया प्रसक्तस्य होतृवरणस्य पर्युदासो नैवानुपपन्नः । **भाट्ट.** ११।३।९. * वरणं होतुः ज्योतिष्टोमे ऐष्टिकेषु कर्मसु कर्तव्यम् । १२।१।१८।३६–४२. 'होतृवरणं दार्शिकं ज्योतिष्टोमे' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वरणान्यपि** च यावच्छ्रुति भिद्यन्ते 'एकस्यैवं पुनः श्रुतिः' ( २।२।२।२ ) 'गुणश्चापूर्वसंयोगे' (२।२।९।२४ ) इत्येवम् । **वा.** ३।७।९।२४ पृ. १०९०.

* **वरणकाले** आदावेव यजमानेन तेषामुपदिष्टं 'अनेन मां राजसूयसंज्ञकेन कर्मसमुदायेन याजयत' इति । वरणं च प्राक् कर्मप्रवृत्तेः । ( इति भाष्यमतम् । वार्तिककारस्तु नैतन्मन्यते ) । **भा.** ११।४।२।५.

**वरणधर्मः ऊर्ध्वज्ञुत्वादिः होतुरेव न सर्वेषामृत्विजाम् ॥**

'आसीनमूर्ध्वज्ञुं होतारं वृणीते' इत्यत्र विधीयमानमूर्ध्वजान्वासनमृत्विक्संस्कारद्वारा प्रकरणधर्मः । वरणस्यैव वाऽयं धर्मः । होतृपदं च वहनसाधनत्वादृत्विक्परम् । तेन सर्वेषां व्रियमाणानामूर्ध्वजान्वासनम् । **इति प्राप्ते,** 'होतारं वृणीते' इति वाक्यान्तरेणैकवाक्यतयोर्ध्वजान्वासनविशिष्टहोतृवरणविधानाच्च सर्वर्त्विग्वरणधर्मः । **संकर्ष.** ४।२।५.

* **वरणवादः । संकर्ष.** ३।४।१–१४.

* **वरणविधयः**– 'ब्रह्माणं वृणीते, होतारं वृणीते, उद्गातारं वृणीते, अध्वर्युं वृणीते' इति । **भा.** ३।७।९।२४, 'चमसाध्वर्यून् वृणीते' । ३।७।१०।२५, 'शमितारमुपनयीत' । ३।७।१३।२८.

**वराटकान्वेषणे प्रवृत्तश्चिन्तामणिं लब्धवानिति न्यायः** । यथा– काश्यां स्वर्गादिकमुद्दिश्य यागाद्यनुष्ठाता अपि अकस्मान्मरणे प्राप्ते मोक्षमेव लभते, एतादृशविषयेऽस्य प्रवृत्तिरिति । **साहस्री.** ७८७.

* **वराहशब्देन** आर्यप्रसिद्ध्या सूकर एव ग्राह्यो न म्लेच्छप्रसिद्ध्या कृष्णशकुनिः । यववराहाधिकरणम् । १।३।४।८–९.

* **वरुणं** पाशहस्तमालिखन्ति कथयन्ति च । **भा.** ९।१।४।६.

* '**वरुणगृहीतः**' इति स उच्यते जलोदरेण यो गृहीतो भवति, यस्योदरं जलवृद्ध्या श्वयति । जलोदरमित्येव लोके तत् प्रसिद्धम् । **भा.** ३।४।१०।२९.

* **वरुणग्रहः** जलोदरं व्याधिः । **पराक्रमः.** ४।१.

* **वरुणग्रहवचनस्य** शब्दस्य जलोदरवाचित्वेन लोके प्रसिद्धत्वात् यस्य जलवृद्ध्या उदरं श्वयति वर्धते स वरुणाख्येन जलरोगेण गृहीतत्वात् वरुणगृहीत इत्युच्यते । सु. पृ. १४९३.

* **वरुणदेवता** जलोदररोगप्रदा । वि. ३।४।१५.

* **वरुणपाशो** नाम जलोदररोगः । वि. ३।४।१५.

* **वरुणप्रघासाः** द्वितीयं पर्व चातुर्मास्येषु । वि. ७।१।३. **वरुणप्रघासैः** वर्षासु यजेत(चातुर्मास्ये)। भा. ११।२।३।१३. * **वरुणप्रघासानां** एकश्चायं प्रयोगः, एककालत्वात्, समानोपक्रमोपसंहाराच्च । भा. ११।२।१०।४५. * वरुणप्रघासानां प्रावृषि अनुष्टाने ' सकृदुपस्तीर्य द्विरभिघारयेत् ' इति विधिः । संकर्ष. ३।१।२२. मीको. पृ. १६९३ 'चातुर्मास्येषु यदि प्रावृषि यजेत०' इत्यत्र अधिकरणं द्रष्टव्यम् । * **वरुणप्रघासेषु** अग्निमन्थनादिपुनर्विधानं दक्षिणवैहारिकस्य मारुत्याख्यस्यार्थे । भा. ७।१।३।२१. * वरुणप्रघासेषु अध्वर्युप्रतिप्रस्थात्रोः विहारभेदेनानुष्ठाने तत्तदङ्गेषु निर्वापादिषु पृथङ्मन्त्रपाठः, न तु तन्त्रम् । वि. १२।१।९.

**☸ वरुणप्रघासेषु अध्वर्युभिन्नानां कर्तॄणां तन्त्रम् ॥**

**कर्तृभेदस्तथेति चेत् । ११।२।१०।४४ ॥**

**भाष्यम्**— तत्रैव चिन्त्यते, किं कर्तारो भेदेन उत तन्त्रमिति । किं प्राप्तम् ? कर्तृभेदस्तथा, यथा अङ्गभेदः । अष्टानां हविषां साङ्गानां कर्तृभिरुत्तरे विहारे प्रचरितव्यम् । इतरैर्दक्षिणे । एवं यथादेशं साङ्गानि प्रधानानि कृतानि भवन्ति । तेन उत्तरवैहारिकाः कर्तारो गृह्यमाणविशेषा दक्षिणे विहारे नोपकुर्वन्ति । तस्मात् कर्त्रन्तरैर्भवितव्यम् ।

**न समवायात् । ४५ ॥**

**भाष्यम्**-- नैतदेवम्, अङ्गवत्कर्तृभेद इति । किं तर्हि ? तन्त्रेण कर्तारः स्युः । कुतः ? समवायात् । वचनेन हि कर्तारः समवयन्त्यत्र, चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विज इति । समुदायसंबन्धेऽपि सति अवयवा एव कर्तृभिः संबध्यन्ते । वरुणप्रघासानां च तदवयवत्वात् पञ्चभिरभिसंबन्धोऽभ्युपगम्यते । एकश्चायं वरुणप्रघासानां प्रयोगः एककालत्वात्, समानोपक्रमोपसंहाराच्च । तत् यावद्वचनं तावदेवात्र भेदेन कर्तव्यम्, नान्यदपि । न च कर्तॄणां भेद उक्तः । तस्मात् तन्त्रेण भवन्तीति । तत्रैतत् स्यात् । प्रधानभेद उक्तेऽनुक्तोऽप्यङ्गानां भेदोऽभ्युपगम्यते । कुतः ? अङ्गानां प्रधानगामित्वात् । यथैव हि प्रयाजादीनां मारुत्या भेदात् भेदेन क्रिया, एवमङ्गभूतत्वात् कर्तॄणां प्रयाजादिवत् कस्मान्न भेदोऽध्यवसीयते इति ।

तत्रोच्यते । अङ्गत्वाविशेषेऽपि सत्यन्यथाजातीयोऽन्यस्य अङ्गस्य उपकारोऽन्यथाजातीयोऽन्यस्य । प्रयाजादीनि अदृष्टेनोपकारसंबन्धेन उपकुर्वन्ति । बर्हिरादीनि यागद्रव्यधारणेन । अपराणि अधिकरणसंस्कारद्वारेण । तानि यागदेशाधिकरणभेदात् भिद्यन्ते । कर्तारस्तु क्रियानिर्वृत्त्या उपकुर्वन्ति । तेन ते देशभेदेऽपि सति प्राकृतोपकारप्रत्यभिज्ञानात्तन्त्रेण क्रियानिर्वृत्तिं शक्नुवन्ति कर्तुमिति न भिद्यन्ते । कः पुनः प्राकृत उपकार इति । होता तावदग्रतो गार्हपत्यस्य पश्चादाहवनीयादवस्थितो याज्यानुवाक्यावचनेन संबोधयन् यागस्य कर्तेत्युच्यते । शक्नोति तद्देशावस्थित एव सामीप्यात्तन्त्रेण क्रमप्राप्तं यागं कुर्वाणमध्वर्युवत् प्रतिप्रस्थातारमपि संबोधयितुमिति । अतो न भिद्यते । तथाऽऽग्नीध्रः समानत्वादुत्करदेशस्य तत्रावस्थित एव प्रत्याश्रावणेनोभौ कर्तारावनुग्रहीतुम् । अतोऽसावपि न भिद्यते । तथा ब्रह्मा दक्षिणतोऽवस्थित उभयोराहवनीययोः समानत्वाद् देशस्य य एवोत्तरस्य दक्षिणः स एव दक्षिणस्य दक्षिण इति तत्रावस्थितः कृताकृतप्रत्यवेक्षणेन अनुज्ञावचनेन च शक्नोत्युभावनुग्रहीतुम् । अतस्तस्याप्यभेदः । अध्वर्युप्रतिप्रस्थात्रोस्तु वचनाद्भेद उक्त एवेत्यदोषः । तस्मान्न कर्त्रन्तरैर्भवितव्यम् ।

**लिङ्गदर्शनाच्च । ४६ ॥**

**भाष्यम्**-- लिङ्गं चैतमर्थं दर्शयति । ' प्रवयसमृषभं दक्षिणां ददाति ' इति दक्षिणैक्यमाह । तदेककर्तृत्वेन उपपद्यते । अन्यत्र दक्षिणाभावान्न याजयेयुः । ननु अन्वाहार्येण याजयिष्यन्ति । न ज्ञायते कान्वाहार्यः, कर्षभ इति । विशेषाग्रहणादुभयत्रर्षभः । उपादेयत्वेन



चोदितस्यैकत्वं विवक्षितम् । तस्मात् दक्षिणैक्यम् । तथा च तन्त्रं कर्तारः ।

**वेदिसंयोगादिति चेत् । ४७ ॥**

**भाष्यम्**— अथोच्येत वेदिसंयोगो होतुः श्रूयते ' अन्तर्वेद्यन्यः पादो होतुर्भवति, बहिर्वेद्यन्यः ' इति । एकश्च होतुः पाद उभयत्रोपकर्तुमसमर्थः । तस्मात् कर्तृभेदः ।

**न देशमात्रत्वात् । ४८ ॥**

**भाष्यम्**— नैतदेवम् । कस्मात् ? देशमात्रत्वात् । नात्र होतुः पादो वेदेरुपकारार्थत्वेनोपदिश्यते ! किं तर्हि ? देशमात्रमेतद्विधीयते । तस्मिन् देशे होत्रा स्थातव्यम्, यत्र अस्यैकः पादोऽन्तर्वेदि भवति बहिर्वेद्यन्य इति । कुतः ? एकवाक्यत्वात् । एकमिदं वाक्यं युक्तम्, संनिध्यनुग्रहादेकार्थत्वाच्च । यदि च होतुः पादो वेद्यङ्गत्वेनोपदिश्येत, एकस्मिन्नन्तर्वेदिनिहिते कृतः श्रुत्यर्थ इति द्वितीयस्यानियमः स्यात् । सोऽपि विधातव्यो बहिर्वेद्यन्य इति । कथं पुनरेकोऽन्तर्वेदीत्युक्ते द्वितीयोऽपि तत्र प्रसज्येत, अप्रतिषिद्धत्वात् । यदि द्वयोरन्तर्वेद्यन्यतः प्राप्तिः स्यात्तत एकस्य वचनं द्वितीयनिवृत्त्यर्थम् । न चास्ति प्राप्तिः । तस्मादस्ति प्रसङ्गः । तथा च वाक्यभेदः । अथ तु देशविशेषविधानार्थमेतत्ततस्तदेताभ्यां उभाभ्यां संभूय क्रियत इत्येकार्थत्वात् एकवाक्यत्वमुपपन्नम् । तस्मान्न होतृपादो वेदेरुपकारकः । अतो नोभयत्र विधेयः ।

**शा**— कर्तृषु इदानीं तन्त्रावापौ चिन्त्येते । तत्र अध्वर्युप्रतिप्रस्थातारौ वचनादेव विहारद्वये व्यवस्थितौ । ब्रह्मा होता आग्नीध्रश्च किं विहारयोर्भेदेन उत तन्त्रमिति । तत्र देशभेदेन प्रयोगयोर्भिन्नत्वात् प्रयोगाङ्गभूतानां कर्तॄणामपि भेदः स्यात् । **नैवम्** । असत्यपि भेदे तैरेव उभयत्रापि कार्यसिद्धेः । दर्शिता च कार्यसिद्धिः भाष्ये वचनाच्च ' चातुर्मास्यानां पञ्चर्त्विजः ' इति । विहारद्वयाभिप्रायं हि इदं पञ्चर्त्विग्वचनम् । न हि एकैकस्मिन् विहारे पञ्च पञ्च सन्ति । वचनादेव विहारद्वये अध्वर्युप्रतिप्रस्थात्रोः व्यवस्थितत्वात् । तस्मात् तन्त्रं ब्रह्मादयः ।

**सोम**-- पूर्वाधिकरणे देशभेदव्यवस्थापनेन सिद्धं भेदप्रयोगभेदं उपजीव्य एतदधिकरणप्रवृत्तेः **संगतिः** ।

**वि**-- ' कर्तृभेदो न वा तत्र भेदः स्यादङ्गभेदवत् । पञ्चर्त्विग्वचनान्मैवं द्वयोरुक्त्या व्यवस्थितिः ॥ '

**भाट्ट**-- तत्रैव अध्वर्युप्रतिप्रस्थातारौ वचनात् व्यवस्थितौ । ब्रह्मा होता आग्नीध्रश्च किं भेदेन उत तन्त्रेणेति चिन्तायां देशभेदात् तत्तद्देशकर्तव्यपदार्थप्रयोगभेदावगतेः प्रयोगाङ्गकर्तॄणां भेदः इति प्राप्ते, सत्यपि प्रयोगभेदे तैरेव कर्तृभिः प्रसङ्गात् कार्यसिद्धेः तत्कर्तव्यपदार्थानामावृत्तौ प्रमाणाभावान्न भेदेन ब्रह्मादयः । न ह्यत्र यदेवाध्वर्युरितियद्वचनमस्ति, अतश्च बह्वनुरोधेन अष्टानां तन्त्रित्वावगतेः सत्यपि विरोधे तैरुत्तरविहारे एव पदार्थाः कर्तव्याः । अत एवोभयत्रोत्करदेशसत्त्वेऽपि नाग्नीध्रकर्तृकप्रत्याश्रावणादीनां भेदेनानुष्ठानं न वा तदर्थमाग्नीध्रभेदः, बह्वनुरोधेन उत्तरविहारसंबन्ध्युत्कर एव तेनैवाग्नीध्रेण कृतैरेव प्रत्याश्रावणादिभिरुपकारसिद्धेः ।

आवश्यकी चेयं रीतिः अन्तर्वेदिकर्तव्ययाजमानपदार्थेषु । न हि तेषां देशभेदादावृत्तिरिष्टा, देशसंस्कारकत्वाभावेनावृत्तौ प्रमाणाभावात् । सकृत्कृतैरेव कार्यसिद्धेश्च । अत एव यत्राग्निसंमार्गादौ प्रसङ्गाभावस्तत्रावृत्तिरिष्टैव । न च तदर्थमाग्नीध्रभेदः शङ्क्यः । ' चातुर्मास्यानां पञ्चर्त्विजः ' इति वचनेन तद्बाधात् । ब्रह्मकर्तव्यपदार्थेषु तु नैव कश्चिद्विरोधः । विहारद्वयदक्षिणभागस्थितेन एकेनैव ब्रह्मणा तन्त्रेण उभयोपकारकपदार्थकरणोपपत्तेः । एवं होतृपदार्थेष्वपि । न च तस्य ' अन्तर्वेद्यन्यः पादो भवति बहिर्वेद्यन्यः ' इति वचनेन वेदिदेशस्य अङ्गत्वावगतेः कथं तत्राविरोध इति वाच्यं ' अर्धमन्तर्वेदि मिनोति ' इतिवत् देशविशेषलक्षणया गार्हपत्यपुरोभागस्यैव तत्र विधेयत्वात् । अस्तु वा कथञ्चित्तत्र विरोधस्तथाऽपि प्रसङ्गादेव कार्यसिद्धेर्न पदार्थावृत्तिः कर्तृभेदो वा ।

**मण्डन**— ' न तयोः कर्तृभिन्नता । ' तयोः दक्षिणोत्तरविहारयोः ।

**शंकर**-- ' कर्तृतन्त्रं तयोर्मतम् । '

* वरुणप्रघासेषु अवभृथं अर्थकर्म प्रधानमित्यर्थः । न प्रतिपत्तिः, नापि वारुण्यामिक्षांशस्य विप्रकर्षः । वि.

११।२।१५. * वरुणप्रघासेषु अवभृथे प्रधानाङ्गयोः देशभेदः ‘ अप्स्ववभृथेन चरन्ति ’ इति वचनात् । भा. ११।३।११. * वरुणप्रघासेषु अवभृथधर्मकर्मान्तरस्य विधानम् । ११।२।१५।६३–६६ . मीको. पृ. ७०३ ‘ अवभृथधर्मककर्मान्तरस्य वरुणप्रघासेषु विधानम् ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * वरुणप्रघासेषु अवभृथशब्दः सौमिकावभृथधर्मानतिदिशन् तद्धर्मसंयुक्तं कर्मान्तरं विधत्ते । वि. ७।३।४, * वरुणप्रघासेष्वाग्नेयादीनां मारुत्या भेदेनानुष्ठानम् । ११।२।९।३५–४२ . * वरुणप्रघासेषु आमिक्षा मारुती वारुणी च । भा. ११।२।१५।६३ . * वरुणप्रघासेषु उत्तरे विहारे ‘ अध्वर्युरष्टौ हवींषि आसादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन ’ इयं देशतः वाचनिकी व्यवस्था श्रौती । बाल. पृ. १८. * वरुणप्रघासेषु उत्तरवेदिरस्ति ‘ उपात्र वपन्ति ’ इत्यनारभ्य श्रुतेन वाक्येन उत्तरवेद्यां अग्नेरुपवापस्य विहितत्वात् । वि. ७।३।९. * वरुणप्रघासेषु औत्तरवैहारिकाणि अङ्गानि मारुत्या नोपकुर्वन्ति देशभेदात् कर्तृभेदाच्च । भा. ११।३।११।२४ , * वरुणप्रघासेषु ‘ काय एककपालः ’ ( कः देवता अस्य इति कायः ) चातुर्मास्येषु । ७।१।४।२२ , * वरुणप्रघासेषु काये एककपाले चातुर्मास्यवैश्वदेविकद्यावापृथिव्यैककपालविध्यन्तस्यातिदेशः नाम्ना । ७।३।१०।२६.

**वरुणप्रघासेषु दक्षिणविहारे क्रियमाणमारुत्यर्थं पृथगङ्गानुष्ठानम् ॥**

**दक्षिणेऽग्नौ वरुणप्रघासेषु देशभेदात् सर्वं विक्रियते । ११।२।९।३५ ॥**

**भाष्यम्—** वरुणप्रघासेषु विहारपृथक्त्वमाम्नातं ‘ पृथगग्नी प्रणयतः , पृथग्वेदी कुरुतः ’ इति । तत्र श्रूयते ‘ अष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन् ’ इति । इह विचार्यते किं भेदेन दक्षिणविहारेऽङ्गानि कर्तव्यानि, अथवा यान्येव उत्तरे कृतानि तान्येव इतरत्राप्युपकुर्वन्तीति । किं प्राप्तम् ? भेदेनाङ्गानि कर्तव्यानि । कुतः ? देशभेदात् । देशो हि भिद्यते, दक्षिण उत्तर इति । यानि उत्तरे विहारे प्रधानानि तेषां तद्देशान्येव अङ्गानि उपकुर्वन्ति, अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन् , तस्मात्स्यादेकदेशत्वमिति । नान्यदेशाया मारुत्याः । तस्मात् तदर्थं दक्षिणे विहारे भेदेन कर्तव्यानीति ।

**अचोदनेति चेत् । ३६ ॥**

**भाष्यम्—** एवं चेत्पश्यसि देशभेदादङ्गानां पृथक् क्रियेति । नैतद्युक्तम् । यत्कारणम्, अचोदनाऽत्र मारुत्याः । यत्र यागः फलं प्रति चोद्यते तत्राङ्गानि गृह्णाति । न चेह मारुत्याः फलं प्रति चोदना । क्व तर्हि ‘ चातुर्मास्यैः स्वर्गकामो यजेत ’ इति । न चेदिह कर्म चोद्यते, अङ्गानां प्राप्तिरेव नास्ति, कुतो भेदस्तन्त्रता वा ।

**स्यात्पौर्णमासीवत् । ३७ ॥**

**भाष्यम्—** स्यादङ्गानां प्राप्तिः । पौर्णमासीवत् । तद्यथा ‘ पौर्णमास्यां पौर्णमास्या यजेत ’ इति न तावत्कर्म फलं प्रति चोद्यते । अन्यत्रैव तच्चोदितम् , ‘ दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ’ इति । अथ च साङ्गप्रधानं पौर्णमास्यां क्रियते इति । एवमिहापि भविष्यति ।

**प्रयोगचोदनेति चेत् । ३८ ॥**

**भाष्यम्—** अथ उच्येत, प्रयोगस्तत्र पौर्णमास्यां चोद्यते यजेतेत्याख्यातेन । प्रयोगश्च अङ्गप्रधानानां विवक्षितः । प्रयोगाङ्गं च कालः । तस्मात्तत्र साङ्ग प्रधानं पौर्णमास्यां क्रियते इति ।

**तथेह । ३९ ॥**

**भाष्यम्—** तत्र ब्रूमः । इहापि मारुत्याः प्रयोगश्चोद्यते ‘ आसादयति ’ इत्यनेनाऽऽख्यातेन । यथा च कालः प्रयोगाङ्गमेवं देशोऽपि । तस्मात् मारुत्यपि साङ्गा दक्षिणविहारे कर्तव्या । ननु नाऽऽसादयतिशब्देन याग उच्यते । कथं तस्य प्रयोगं वक्ष्यति ? आह । यागार्थमेतदासादनम् , यथा प्रकृतौ । तथा दृष्टार्थं भवति । इतरथा अदृष्टोऽर्थः कल्पयितव्यः स्यात् । यागार्थे चेत्तत्र यागोऽवश्यं कार्यः । सैषा लक्षणया यागचोदना भवति । यथा ‘ सौर्यं चरुं निर्वपेत् , सौम्यं बभ्रुमालभेत ’ इति । तस्मात् इहापि मारुत्याः प्रयोगश्चोद्यते । तथा च प्राप्तानामङ्गानां भेदेन क्रिया ।

**आसादनमिति चेत् । ४० ॥**



**भाष्यम्—** आह । न आसादयतिशब्देन याग उच्यते । किं तर्हि ? आसादनम् । ननु लक्षणया यागं वक्ष्यति । न श्रुतिमुत्सृज्य लक्षणाऽऽश्रयणीया । आसादनस्य दृष्टार्थत्वेन आश्रयिष्यते । आश्रीयेत, यद्यासादनं दृष्टार्थं संभवति । यदि दक्षिणेऽग्नौ मारुत्या होमः सिद्धः स्यात्तत्समीपे नयनं दृष्टार्थं भवेत् । स त्वसिद्धः । प्रकृतौ त्वेकत्वादाहवनीयस्य तत्रैव सिद्धो होमः । अतस्तत्संनिकर्षे नयनं दृष्टार्थं संभवति । न त्विह तथा । न चेद् दृष्टार्थता युज्यते श्रुत्यर्थ एव ग्राह्यः । तस्मादासादनमासादयतिशब्देनोच्यते न यागः ।

**नोत्तरेणैकवाक्यत्वात् । ४१ ॥**

**भाष्यम्—** नैतददृष्टार्थं आसादनम् । कुतः ? उत्तरेणैकवाक्यत्वात् । ‘ अष्टावुत्तरे विहारे हवींष्यासादयति ’ इत्यनेनोत्तरविहारसंबद्धेन यदसंचयेन ‘ मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन् ’ इत्येतस्यैकवाक्यत्वादेवं ज्ञायते, यथा नाऽऽसादनमदृष्टार्थमिति । कथं कृत्वा ? आहवनीयद्वये अव्यवस्थया हविषां होमः प्राप्तः । तदनुविधानादासादनमपि तथैव प्राप्तम् । तत्र व्यवस्थामात्रमनेन क्रियते । यथाप्राप्तस्य च व्यवस्था । होमाय च प्राप्तं नादृष्टाय । तस्मात् होमार्थमासादनम् । अपर आह । एकस्मिन् वाक्ये एक एवायमासादयतिशब्दः उभयोर्विहारयोरासादनमाह । उत्तरस्मिंश्च व्यक्तं तद्धोमार्थम् । एकस्मिंश्चोच्चारणे दक्षिणे होमार्थं न भविष्यतीत्येतन्नोपपद्यते । तस्मादुभयत्र होमार्थम् । अथोच्येत, आसादनमेवेदं विधीयते । यत्र दृष्टार्थं भवति, तत्र दृष्टार्थम् । यत्र न संभवति तत्रादृष्टार्थमिति । तच्च न । विध्यनुवादयोः यौगपद्यप्रसङ्गात् । यत्र दृष्टार्थं तत्र अनूद्यते, प्रकृतितः प्राप्तत्वात् । यत्रादृष्टार्थं तत्र विधीयते । तदुभयं युगपन्न संभवति । तस्मादयुक्तमेतत् । अथ होमार्थत्वे सति कस्माद्यागचोदना कल्पते, नाऽऽसादनमात्रमेवेति । आह । होमश्चान्यत्रेति । मैवम् । आसादनं हि होमार्थं भवति । नान्यत्र आसाद्यमानमन्यत्र होमार्थं भविष्यति ।

**अवाच्यत्वात् । ४२ ॥**

**भाष्यम्—** अपि च– न च होमार्थमासादनं वक्तव्यम्, सति होमे प्रकृतित एव प्राप्नोति । यागस्तु वक्तव्यः । स च सति होमे शक्यते लक्षणयाऽनेन वक्तुम् । तस्मादत्रापि आसादयतिशब्देन पौर्णमासीवत् यागस्य प्रयोग उच्यते । तथा च तन्त्रभेदः ।

**आम्नायवचनं तद्वत् । ४३ ॥**

**भाष्यम्—** वैदिकवचनं तद्वद् युक्तं भविष्यति यद्वन्न्यायोऽपदिष्टः ‘ यदेवाध्वर्युः करोति तत्प्रतिप्रस्थाता करोति ’ इति । तथा ‘ यस्मिन्नेव होमस्तस्मिन् ब्रूते देवतायजनम् ’ इति दक्षिणेऽपि विहारे देवतायागं दर्शयति । तद्यागार्थं आसादयतिशब्दो युज्यते । तस्मादप्येवम् ।

**शा—** वरुणप्रघासेषु विहारद्वयम् , द्वयोरपि आहवनीयः विभज्य स्थापितः । तत्र श्रूयते ‘ अष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन् ’ इति । तत्र विचार्यते किं नवानां अपि हविषां तन्त्रमङ्गानि उत आग्नेयादीनां अष्टानां मारुत्याश्चामिक्षाया भेदेन अङ्गानि कर्तव्यानि इति । **‘ सत्यं न तन्त्रमङ्गानि देशभेदात्तथापि तु । न पृथक् स्यादनुष्ठानं प्रसङ्गात् कार्यसिद्धितः ॥’** अत्रोच्यते– **‘तन्त्रेऽन्यस्य समारब्धे यत्राऽन्यस्य विधिः श्रुतः । तत्र प्रसङ्गो न त्वत्र युगपत्सर्वचोदनात् ॥ ’** तस्मात् उभयत्र अङ्गानां आवृत्तिः ।

**सोम—** पूर्वत्र अङ्गप्रधानानां एकदेशत्ववत् इह नवानामपि हविषां एकदेशत्वम्, ततश्च तन्त्रत्वमित्युत्थितेः **संगतिः ।**

**त्रि—** ‘ मारुत्याः सार्धमष्टाभिरङ्गैस्तन्त्रं भिदाऽथ वा । प्रयोगैकत्वतस्तन्त्रं भेदो देशस्य भेदतः ॥ ’

**भाट्ट—** चातुर्मास्येषु वरुणप्रघासपर्वणि विहारद्वये आहवनीयद्वयं श्रुतम् । तत्र नव हवींषि विहितानि । तत्रेदं वचनं ‘ अष्टावध्वर्युरुत्तरे हवींष्यासादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन् ’ इति । तत्र किं नवानामपि हविषां देशैक्यात् तन्त्रेणाङ्गानि ? उत तद्भेदात् भेदेन ? इति चिन्तायाम् , आसादनमात्रे देशभेदश्रवणेऽपि यागेषु तद्भेदश्रवणाभावात् ‘ प्रावृषि वरुणप्रघासैर्यजेत’ इत्येकप्रयोगविधिपरिगृहीतानां नवानामपि यागानां विकल्पेन एकस्मिन्नेव कस्मिंश्चिद्विहारे अनुष्ठानात् देश-

भेदाभावेन तन्त्रेणाङ्गानि । न चात्र प्राकृत एवासादने देशभेदश्रवणात् तस्य होमार्थाहवनीयप्रत्यासत्त्यर्थत्वेन दृष्टार्थत्वात् होमेऽपि देशभेदप्रतीतेस्तात्पर्यगत्या तत्तद्यागानां तत्तद्देशीयप्रयोगविधित्वस्यैवावगमात् तद्भेदेनाङ्गभेद इति वाच्यम्, प्राप्तासादनानुवादेन देशकर्त्राद्यनेकगुणविधाने वाक्यभेदात् । संख्याविशिष्टहविषामासादनविशेषणे विशिष्टोद्देशेन वाक्यभेदाच्च । अतश्च तत्र देशकर्तृविशिष्टासादनान्तरमेव मारुत्युद्देशेनोत्तरवाक्ये विधीयते, पूर्ववाक्ये च तद्भिन्नहविषां लक्षणयोद्देश्यत्वमङ्गीकृत्य देशमात्रविशिष्टासादनान्तरम्, अध्वर्योः समाख्याबलेनैव प्राप्त्युपपत्तेः । अतश्च अप्राकृतकार्ययोरेव आसादनयोर्देशभेदेन विधानात् नानयोर्यागप्रयोगविधित्वम् ।

अस्तु वा प्राकृतकार्ये एवासादनान्तरविधानम्, प्राकृतासादनस्यैव वा अतिदेशतः पूर्वप्रवृत्त्या विधानम्, तथाऽपि न यागप्रयोगविधित्वम्, आसादनमात्रे एव देशविधानोपपत्तौ यागलक्षणायां प्रमाणाभावात् । अस्तु वा याग एव देशविधानं तथापि ‘ ता उपांशु कर्तव्याः ’ इतिवद्द्वितीयानिर्देशात् प्रधानमात्र एवायं देशादिविधिः न तु साङ्ग इति नाङ्गावृत्तौ प्रमाणमस्ति । इति प्राप्ते,

सत्यमत्र वाक्यद्वयेऽपि त्वदुक्तरीत्यैव विशिष्टासादनविधानम्, तस्य च त्वदुक्तरीत्यैव प्राकृतकार्यापन्नत्वं प्राकृतत्वमेव वा तथापि प्रकृतौ तदासादनस्य तद्वृत्तियागसिद्ध्यर्थत्वात् तस्य विहारान्तरे करणे अप्राकृतकार्यत्वापत्तेस्तात्पर्यगत्या अस्य यागप्रयोगविधायित्वमेव । आसादयतिश्च निर्वपतिवत् तत्तद्यागोपलक्षणम् । एवं च नवानामपि विहारद्वयविकल्पोऽन्यतरवैयर्थ्यं च नाश्रितं भवति, अव्यवस्थया प्राप्तानां व्यवस्थामात्रकरणात् लाघवं च । ‘ अष्टौ हवींषि ’ ‘ मारुतीम् ’ इति च शक्यार्थकर्मीभूतानुवादः सन् तत्तद्यागलक्षणातात्पर्यग्राहकः ।

अतश्च ‘ आसादयति ’ इत्यत्र द्वितीयाश्रवणाभावात् ‘ सायं जुहोति ’ इतिवत् तत्तद्यागकरणकसाङ्गभावनाप्रयोगस्यैव देशादिविशिष्टस्य विधेयत्वावगतेर्युक्तैवाङ्गावृत्तिः । अङ्गप्रधानयोर्वैदेश्यापत्त्याऽपि चात्र साङ्गप्रयोगविध्यवश्यंभावः ।

न चैवमपि सकृत्कृतैरेवाङ्गैरुपकारस्य सिद्धेस्तेनैव प्रसङ्गात् यागान्तरस्योपकारोपपत्तेरावृत्तौ प्रमाणाभावः । उपकारलाभे च तदर्थमङ्गानाक्षेपात् विहितदेशाद्यभावेऽपि प्रसङ्गस्य वक्ष्यमाणत्वादिति **वाच्यम्**, तन्त्रमध्यपाठाद्यभावेन कस्य तन्त्रित्वं कुत्र प्रसङ्ग इत्यत्र नियामकाभावेन प्रसङ्गानुपपत्तेः ।

न च ‘ बहूनां स्यात्सधर्मत्वम् ’ इति न्यायेनानेकेषु देशाद्यबाध एव अष्टानां तन्त्रित्वतात्पर्यग्राहक इति **वाच्यम्** । तथात्वेऽपि यत्र साम्यं यथा सर्वतोमुखादौ चतुर्दिक्षु चतुर्षु विहारेषु चतुर्भिरध्वर्य्वादिभिः क्रियमाणे तत्र विनिगमनाविरहेण तन्त्रित्वनियमाभावे प्रसङ्गासंभवेन देशकर्त्रादिभेदेनाङ्गावृत्तेरावश्यकत्वात् ।

प्रकृते तु यद्यपि बह्वनुरोधेन मारुत्यां प्रसङ्गः प्राप्नोति । तथापि ‘ यदेवाध्वर्युः करोति तदेव प्रतिप्रस्थाता करोति ’ इति वचनेन प्रसङ्गाभावप्रतीतेर्देशकर्तृविशिष्टमारुतीप्रयोगविधेः मारुतीप्रक्षेपाद्यङ्गमात्रे संकोचापत्तेश्चावृत्तिरिति ध्येयम् ।

**मण्डन**-- ‘ विहारयोस्तन्त्रभेदः । ’ ( भेद एव न तन्त्रम् ) ।

**शंकर**-- ‘ विहारयोः अङ्गावृत्तिः । ’

**वरुणप्रघासेषु दक्षिणविहारे प्रतिप्रस्थात्रा मन्त्राः अध्वर्योः पृथगुच्चारणीयाः ॥**

**मन्त्राश्च, संनिपातित्वात् । १२।१।९।१८ ॥**

**भाष्यम्**— वरुणप्रघासेषु विहारपृथक्त्वे सति ये मन्त्राः संनिपातिनः, यथा आज्यग्रहणे प्रोक्षणेऽभिमर्शने । तेषां किं तन्त्रेण प्रयोगः, अथवा भेदेन इति । तन्त्रावापचिन्तेयम्, न प्रसङ्गचिन्ता । तत्र प्रयोगवचनानुग्रहाय तन्त्रभावे **प्राप्ते, उच्यते** । मन्त्राश्च आज्यग्रहणादयो भेदेन कर्तव्याः । कुतः ? संनिपातित्वात् । संनिपत्योपकारिण एते मन्त्रा उपस्थितं कर्माभिदधति । पृथक्कर्मणि अध्वर्युप्रतिप्रस्थातारौ उपतिष्ठेते । तस्मात् पृथक् प्रयोक्तव्याः । अपि च करणानां मन्त्रान्तेन कर्मादिसंपातं वक्ष्यति, ‘मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्मादिसंनिपातः स्यात्सर्वस्य वचनार्थत्वात् ’ इति । तथा सति



येन कर्मणा संनिपतितो मन्त्रस्तदर्थोऽसौ इति गृह्यते विशेषः । तस्मादप्यावृत्तिः ।

**शा** — वरुणप्रघासेषु दक्षिणोत्तरविहारयोः निर्वापादिमन्त्राः किं तन्त्रेण अध्वर्युणा प्रतिप्रस्थात्रा वा अन्यतरेण वक्तव्याः, उत उभाभ्यामपि भेदेन इति संशये अन्यतरेणापि उच्यमानाः शक्नुवन्ति उभयोः स्मृतिं कर्तुं इति मन्यते । निर्वपामीत्यादेः आत्माभिवादित्वात् न तन्त्रता संभवति, इति उभयोः पृथक्पृथक् प्रयोगः । सकृदसकृदनुष्ठानप्रसङ्गात् तन्त्रावापचिन्ताऽपि इयं अत्र कृता ।

**सोम**-- पूर्ववदिह न कार्यसिद्धिः इत्युत्थितेः **संगतिः । सूत्रार्थस्तु**--- निर्वपणादिमन्त्राः भेदेन प्रयोक्तव्याः, तेषां करणमन्त्रतया कर्मादिसंनिपातित्वात्, उभयोश्च कर्त्रोः प्रयोगशैघ्र्यमान्द्यसंभवेन एकेन प्रयुक्तस्य इतरकर्तृककर्मादिसंनिपातासंभवात् इति ।

**वि**-- ‘ विहारभेदे निर्वापमन्त्रादेस्तन्त्रता न वा ।, तन्त्रं द्वयोः स्मृतेः सिद्धे, रुत्तमोक्त्या पृथग् भवेत् ॥ ’

**भाट्ट**— वरुणप्रघासेषु दक्षिणोत्तरविहारयोर्देशभेदात् कर्तृभेदाच्च पदार्थानां न तन्त्रता इति स्थितम् । तत्र च प्रयाजादिविषये भूयोऽनुग्रहस्य न्याय्यत्वात् मारुत्यां न्यायप्राप्तः प्रसङ्गः ‘ यदेवाध्वर्युः करोति, तत् प्रतिप्रस्थाता करोति ’ इति वचनेन बाध्यते इत्यप्युक्तमेव । अतस्ते तावत् पृथगेव कर्तव्याः । मन्त्रास्तु ये अर्थस्मरणार्थाः ते अध्वर्युणा तावत् पठनीयाः । ततश्च तेन मन्त्रान्ते पदार्थे कृते पश्चात् प्रतिप्रस्थात्रा स्वपदार्थे क्रियमाणे अध्वर्यु–प्रतिप्रस्थातृकर्तव्यपदार्थयोः क्रमविधानात् प्रतिप्रस्थातृकर्तृकपदार्थस्य अध्वर्युकर्तृकपदार्थेनैव उपस्थितिसिद्धेर्मन्त्रकार्यस्य प्रसङ्गसिद्ध्या न मन्त्राणां प्रतिप्रस्थात्रा पृथक्पाठः । **इति प्राप्ते**, निर्वपामीत्यादिमन्त्रेषु आत्माभिवादितया आत्मकर्तृकनिर्वापस्मृतेरेव कार्योपयोगितया तादृश्याश्चान्यतः अलाभात् न प्रसङ्गः । वस्तुतस्तु ‘ यदेवाध्वर्युः करोति ’ इत्यनेन न क्रमविधिः, प्रसङ्गाभावमात्रफलकतया पदार्थकरणमात्रविधानात्, कर्तृभेदेन पाठक्रमस्यापि अनियामकत्वाच्च । अतो युगपदेव द्वाभ्यां समन्त्रकाः पदार्थाः कर्तव्याः इति क्व प्रसङ्गावकाशः ।

**मण्डन**— ‘ पाठः पृथक् स्यात् खलु संनिपातिनाम् । ’

**शंकर**— ‘ विहारयोर्न मन्त्रैक्यम् । ’ १०.

* वरुणप्रघासेषु ‘ द्वयोः प्रणयन्ति ’ इति पुनर्विहितमग्निप्रणयनं अपूर्वम् । न प्राकृतं नापि सौमिकं परंतु अतिदेशप्राप्तं प्राकृतं कृत्वा पुनः अपूर्वं विहितं अग्निप्रणयनं कर्तव्यम् । वि. ७।३।९ वर्णकं २ ( वार्तिकमतम् ), * ‘ वरुणप्रघासेषु ‘ द्वयोः प्रणयन्ति ’ इति पुनर्विहितमग्निप्रणयनं न तु वैश्वदेवशुनासीरीययोः । पुनर्विधानं च उत्तरवेद्यां अग्निनिधानगुणविधानार्थम् । ७।३।९, * वरुणप्रघासेषु नव हवींषि विहितानि । तेषु मारुतीमामिक्षां प्रतिप्रस्थाता दक्षिणे विहारे अनुतिष्ठति । इतराण्यष्टौ च अध्वर्युरुत्तरे विहारे अनुतिष्ठति । उभयोरपि विहारयोरङ्गानां भेदेनानुष्ठानम्, न तन्त्रम् । ११।२।९.

**वरुणप्रघासेषु पत्नीसंयाजानां द्विरावृत्तिः ॥**

**एकाग्नित्वादपरेषु तन्त्रं स्यात् । ११।२।११। ४९ ॥**

**भाष्यम्**--इदमपरं तत्रैव चिन्त्यते । किं आपराग्निका होमास्तन्त्रं कार्याः उत भेदेनेति । किं प्राप्तम् ? तन्त्रमिति । कुतः ? एकाग्नित्वात् । पौर्वाग्निकानामग्निभेदात् भेद उक्तः । इह स हेतुर्नास्ति । एकाग्नित्वादेतेषाम् । तस्मादेते तन्त्रं भवेयुः ।

**नाना वा कर्तृभेदात् । ५० ॥**

**भाष्यम्**— नाना भवेयुः । कुतः ? कर्तृभेदात् । मारुत्या यान्यङ्गानि तानि प्रतिप्रस्थात्रा कार्याणि । इतराणि अध्वर्युणा । तन्त्रभावेऽन्यतरेषां कर्तृकृतं वैगुण्यं स्यात् । तस्मात् भेदः ।

**शा**— ये पुनः आपराग्निका होमाः पत्नीसंयाजादयः तेषु तन्त्रं आवापो वा इति संदेहे पौर्वाग्निकवत् देशभेदाभावात् तन्त्रत्वं स्यात् । असत्यपि देशभेदे कर्तृभेदात् भेदः, प्रतिप्रस्थातृकर्तृका हि मारुत्या उपकुर्वन्ति अध्वर्युकर्तृकास्त्वितरेषां तस्माद्भेदः ।

**वि**-- ‘ तत्रैव पत्नीसंयाजादौ तन्त्रं भिन्नताऽथवा । तन्त्रमग्न्यैक्यतो, मैवं कर्तृभेदानिवारणात् ॥ ’

**भाट्ट**— तत्रैवापराग्निकाः पत्नीसंयाजादयो देशाभेदात्तन्त्रम् । **इति प्राप्ते,** देशभेदवत्कर्तृभेदस्यापि प्रयोगभेदप्रयोजकत्वात् तदनुरोधेन तत्राप्यावृत्तिः । **न च** देशभेदादेवाङ्गावृत्तौ सिद्धायां तत्र कर्त्रन्तरापेक्षणे प्रतिप्रस्थातृमात्रविधानान्न कर्तृभेदस्य स्वातन्त्र्येण प्रयोगभेदाक्षेपकत्वमिति **वाच्यम्**, वैपरीत्यस्यापि वक्तुं शक्यत्वेन विनिगमनाविरहेणोभाभ्यामपि कर्तृदेशाभ्यां स्वविशिष्टप्रयोगविधिबलेन प्रयोगभेदाक्षेपोपपत्तेः । अतश्च पत्नीसंयाजादिषु देशभेदाभावेऽपि कर्तृभेदादेवावृत्तिः ।

**वस्तुतस्तु** देशकर्तृविशिष्टैकप्रयोगविधानेऽपि पार्ष्ठिकपरस्परान्वयवशेन तत्तद्देशीयतत्तत्कर्तृकपदार्थानामेव प्रयोगविध्यापत्तेर्होत्रादिकर्तृकपदार्थानां तत्तद्देशाप्राप्तिवत् अतद्देशीयानामप्यापराग्निकानां प्रतिप्रस्थातृकर्तृकत्वानापत्तेर्नानेन पत्नीसंयाजादिषु प्रतिप्रस्थातृकर्तृकत्वम् । न हि मारुतीयागे प्रतिप्रस्थातृकर्तृकत्वम्, येनाङ्गप्रधानयोरेककर्तृकत्वात् पत्नीसंयाजेष्वपि तत्प्राप्तिराशङ्क्येत । मारुतीयागस्य यजमानकर्तृकत्वेन प्रतिप्रस्थातृकर्तृकत्वाभावात् । किन्तु 'यदेवाध्वर्युः करोति' इत्यनेन पत्नीसंयाजेषु तत्प्राप्तिः । अत्र हि यत्पदार्थे यागाङ्गकाङ्गभूते अध्वर्युः कर्ता तत्पदार्थस्य मारुतीयागाङ्गत्वे प्रतिप्रस्थातृकर्तृकत्वं विधीयते । अतश्चापराग्निकानामप्यावृत्तिः ।

**मण्डन**-- 'आपराग्निकभेदः स्यात् ।' आपराग्निकानां होमानां भेदः भेदेन अनुष्ठानं स्यात्– न तन्त्रेण इत्यर्थः ।

**शंकर**-- 'आपराग्निकभेदोऽत्र ।'

* वरुणप्रघासेषु प्राजहितादेव औत्तरवेदिकस्य प्रणयनम् । **संकर्ष.** ३।२।२२. * वरुणप्रघासेषु ब्रह्मादीनां न भेदः । **भाट्ट.** ११।२।९. * वरुणप्रघासेषु मारुत्याः भेदे प्रयाजादीनां भेदेन क्रिया । **भा.** ११।२।१०।४५. * वरुणप्रघासेषु यवपिष्टमयं मेषं वारुण्यामिक्षायामवदधाति । तस्य आमिक्षासंयुक्तस्य मेषस्य सर्वस्यैव होमः । वि. ११।२।१५, * वरुणप्रघासेषु वारुणी आमिक्षा । तत्र 'वारुण्या निष्कासेन तुषैश्चावभृथमभ्यवयन्ति' । अत्र प्रयोगप्रकारः– वरुणप्रघासेषु नव हवींषि । तेष्वष्टमं हविः वारुण्यामिक्षा । नवमं हविः 'काय एककपालः' । वारुण्यामिक्षायां यवपिष्टनिर्मितं मेषमवदधाति, तत आमिक्षासंयुक्तं मेषं सर्वमवदाय हुत्वा, तत एककपालेन प्रचर्य, भाण्डलिप्तेन वारुण्यामिक्षाया निष्कासेन यवतुषैश्च अवभृथमनुतिष्ठन्ति इति । ११।२।१५, * वरुणप्रघासेषु 'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति' इति विहिते कर्मान्तरे अतिदेशप्राप्तो वारुण एककपालः पुरोडाशः तुषनिष्कासाभ्यां बाध्यते । अतिदेशात् उपदेशः प्रबलः । ७।३।५. * वरुणप्रघासेषु विहारद्वये सति पत्नीसंयाजानां तन्त्रं न, कर्तृभेदात् । ११।२।११।४९–५०. * वरुणप्रघासेषु विहारद्वये होतृ-आग्नीध्र-ब्रह्मणां तन्त्रम् । अध्वर्युप्रतिप्रस्थात्रोस्तु वचनाद्भेदः । ११।२।१०।४४–४८. * वरुणप्रघासेषु विहारपृथक्त्वे आज्यग्रहणे, प्रोक्षणे, अभिमर्शने, संनिपातिनो मन्त्राः अध्वर्युप्रतिप्रस्थातृभ्यां भेदेन कर्तव्याः । **भा.** १२।१।९।१८. * वरुणप्रघासेषु विहारभेदेऽपि गार्हपत्यस्यैकत्वात् पत्नीसंयाजादीनां तन्त्रं इति **पूर्वपक्षः।** अध्वर्युः प्रतिप्रस्थाता च एकस्मिन्नेव गार्हपत्ये पृथक्पृथक् पत्नीसंयाजान् जुहुयातामिति **सिद्धान्तः ।** वि. ११।२।११. * वरुणप्रघासेषु वैश्वदेवे च अग्निमन्थनम् । **भा.** ७।१।३।१७. * वरुणप्रघासेषु वैश्वदेवपर्वस्थसार्थवादाङ्गविधीनां 'एतद्ब्राह्मणान्येव पञ्च हवींषि, यद्ब्राह्मणानीतराणि' इत्यनेनातिदेशः, न तु अर्थवादमात्रस्य । वि. ७।१।३. * वरुणप्रघासेषु 'शमीमय्यो हिरण्मय्यो वा स्रुचो भवन्ति'। वि. ७।१।५. * वरुणप्रघासेषु शमीमय्यः हिरण्मय्यो वा स्रुचः संमार्ष्टव्याः । संमार्गाधिकरणम् । २।१।४।९–१२. * वरुणप्रघासेषु शालामुखीयो नास्तीति पूर्वपक्षः, अस्तीति सिद्धान्तः । तत्र तु आपस्तम्बमते नास्ति बोधायनमते अस्तीति व्यवस्था । **संकर्ष.** ३।२।२८. **मीको.** पृ. २४९३ 'पशौ वरुणप्रघासेषु च शालामुखीयोऽस्ति' इत्यत्र द्रष्टव्यम् । * वरुणप्रघासेषु 'शूर्पेण जुहोति' इति न शूर्पप्रयुक्तो धर्मः किंत्वपूर्वप्रयुक्तः । ९।१।५।११–१९. **मीको.** पृ. २१७२ 'द्रव्यसंख्यासमुदायन्यायः' इत्यत्र द्रष्टव्यम् ।

* **वरुणप्रघासावभृथे** अवभृथनाम्ना सौमिकावभृथधर्माणामतिदेशः । ७।३।४।१३–१६. **मीको.** पृ. २१६ 'अतिदेशः वरुणप्रघासावभृथे०' इत्यत्र अधिकरणं



द्रष्टव्यम् । * वरुणप्रघासावभृथे तुषाः वारुण्यामिक्षानिष्कासश्च द्रव्यं न पुरोडाशः । ७।३।५।१७. **मीको.** पृ. २३९५ 'निष्कासावभृथन्यायः' इत्यत्र द्रष्टव्यम् ।

* **वरुणप्रघासैककपालस्य** वैशेषिका धर्माः 'हिरण्मय्यः स्रुचो भवन्ति शमीमय्यो वा' इत्येवमादयः । **भा.** ७।१।५।२३.

* **वरुणप्रघासगतैककपालधर्माणां** साकमेधीयैककपाले अतिदेशः । ७।१।५।२३. **मीको.** पृ. २२९ 'अतिदेशः साकमेधीयैककपाले०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वरुणप्रघासपञ्चसंचरेषु** वैश्वदेविकसार्थवादविधिकाण्डस्य अतिदेशः । ७।१।३।१७–२१. **मीको.** पृ. २१४ 'अतिदेशः वरुणप्रघासगतपञ्चसंचरेषु०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वरुणप्रघाससाकमेधयोः** चातुर्मास्यगतयोः अग्निप्रणयनं अपूर्वमेव न दार्शपौर्णमासिकं न वा सौमिकम् । प्रणयनाधिकरणम् । (**वा.**) ७।३।८।१९–२५.

* **वरुणप्रघाससार्थवाद**विधिकाण्डस्य साकमेधीयैन्द्राग्नैककपालयोरतिदेशः । ७।१।४।२२. **मीको.** पृ. २३० 'अतिदेशः साकमेधीयैन्द्राग्नैककपालयोः' इत्यत्र द्रष्टव्यम् ।

☞ **वर्चोन्यायः** । करणमन्त्रप्रकाश्यं फलं याजमानम् ॥

**ऋत्विक्फलं करणेष्वर्थवत्त्वात् । ३।८।१३।२५॥**

**भाष्यम्**— दर्शपूर्णमासयोरामनन्ति 'ममाग्ने वर्चो विहवेष्वस्त्विति पूर्वमग्निं परिगृह्णाति' इति । तत्र संदेहः, किं ऋत्विक्फलमाशासितव्यम्, अग्ने वर्चो विहवेष्वस्त्विति, उत यजमानस्येति । किं प्राप्तम् ? अध्वर्योरेवेति । कुतः ? एवं श्रुतिरादृता भविष्यति, इतरथा लक्षणा स्यात्, आत्मना यजमानं लक्षयेत् । तस्मादृत्विक्फलमाशासितव्यमिति । कोऽर्थः ? अनया समिधा धार्यमाणेऽग्नौ यागः संभविष्यति, तत्र विहवेषु स्पर्धास्थानेषु, अहं वर्चस्वी भविष्यामीत्यध्वर्योर्वचनम् । एवमुत्साही भविष्यतीति ।

**वा**--यथैव अकरणेषु यत् फलं तत् प्रकरणस्थं कीर्त्यते नान्यत्कल्प्यते, तथा 'ममाग्ने वर्चो विहवेष्वस्तु' इत्यादिष्वपि । ते तु यजमानेनैव प्रयुज्यन्ते, तस्यैव च फलमित्यविरुद्धाः । करणाः पुनरेकान्तेन कर्मसमानकर्तृकत्वादाध्वर्यवाः । तैर्यदि अध्वर्युणा प्रयुज्यमानैः यजमानस्य फलमभिधीयेत, ततो ममेत्यभिधानं निरुध्येत । कीदृशं त्वध्वर्योः फलमनूद्यते इति, तद्भावभावित्वमात्रेण सुप्रचरितृत्वयशः । तच्च तस्योत्साहं करिष्यतीति निरूपयति ।

**स्वामिनो वा तदर्थत्वात् । २६ ॥**

**भाष्यम्**-- यजमानस्य वा वचनम्, तदर्थत्वात् कर्मणः । यजमानार्थं हीदं कर्म साङ्गम्, उपग्रहविशेषात् । साङ्गस्यास्य प्रयोजनं यजमानस्य फलनिष्पत्तिर्नाध्वर्योः सुप्रचरितुरपि यशः । किमतो यद्येवम्, फलसंकीर्तनात् अफलकर्तव्यता गम्यते । तदेतत् अग्न्यन्वाधानं यजमानस्य फलसंकीर्तने क्रियमाणे अनेन मन्त्रेण फलसंबन्धात् प्रकाशितं कृतं भवति, नाध्वर्युयशः-कीर्तनेन । तस्माद्यजमानफलमाशासितव्यमिति । अथ कस्मान्न याजमान एव मन्त्रो भवतीति ? उच्यते । अग्न्यन्वाधानं समाख्यया आध्वर्यवम् । तच्चैवंगुणो मन्त्रः करोत्याध्वर्यवः । स उच्यतेऽनेन मन्त्रेणेति । तस्मादाध्वर्यवो मन्त्रः । 'मम वर्चोऽस्तु' इत्यपि, यजमानस्य वर्चो ममेति व्यपदिशति लक्षणया । यथा राजनि जयं वर्तमानं सैनिका अस्माकमिति व्यपदिशन्त्येवम् ।

**वा**—नैवेदमकरणवत् ('आयुर्दा अग्ने' 'अगन्म सुवः सुवरगन्म' इत्यादयो ये, इतिकरणाद्यविनियुक्ता मन्त्रास्तद्वत्) उत्साहार्थं फलं संकीर्त्यते । किं तर्हि ? मन्त्रवर्णात् नित्याङ्गाश्रयं फलमवकल्पते । कथम् ? व्यतिरिक्तक्रियासाधनत्वेन हि मन्त्रश्चोदितः तां वा तत्संबन्धि वा किंचित्प्रकाशयन्नङ्गभावं गच्छति । तस्मादिह यद्यध्वर्युयशः संकीर्त्यते नैतेन सकलेन मन्त्रेणाग्न्यन्वाधानं साधितं स्यात् । नहि तत्प्रकाशनमग्न्यन्वाधानेन अपेक्षितम् । यद्यपि तावत् प्रधानफलं प्रकाशयेत् तथाऽपि न संबध्येत, किमुत कर्मकालानौपयिकानुनिष्पादिवाह्यऋत्विग्यशःप्रकाशनेन । तस्मात् सूक्तवाकन्यायेनैव

( ३।२।९ ) चोदितमन्त्रकरणत्वान्यथानुपपत्त्या अग्न्यन्वाधानस्य फलमेतत् कल्प्यते । यास्त्वाशिषः ताः साक्षात्प्रधानाङ्गमिति तत्फलप्रकाशनेनैवाङ्गं भवन्ति । यदि पृथक्फलं साधयेयुः ततः संयुक्तत्वात् ( 'असंयुक्तं प्रकरणादितिकर्तव्यताऽर्थित्वात् ' । ३।३।४।११ । इति प्रकरणाधिकरणोक्तन्यायेन लिङ्गादिविनियुक्तेषु प्रकरणविनियोज्यत्वासंभवात् ) नैव प्रकरणेन क्रत्वङ्गभावं गच्छेयुरिति वैषम्यम् । आह । सत्यपि पृथक्फलत्वे ममशब्देनाध्वर्युर्गृह्यते इति व्यपदेशन्यायेन ( ३।८।९।१४ ) आध्वर्यवमेव प्राप्नोति । उच्यते । लिङ्गेनाऽऽध्वर्यवत्वं प्राप्नोति आत्मनेपदश्रुत्या याजमानत्वम् । अथ उभयानुग्रहार्थं कस्मात्कर्मापि याजमानमेव न भवति । तथा सति हि ममशब्दः आत्मनेपदं चोभयमपि न विरोत्स्यते इति । नैतदस्ति । यदि ह्येतत् मन्त्रपूर्वकं कर्म भवेत्तत एवं नियम्येत । प्रथमं तु एतदुत्पद्यमानं केवलक्रत्वर्थत्वप्रतीतेरविरुद्धाध्वर्युसंबन्धं समाख्यानात् प्रतिपद्यते । मन्त्रमात्रं याजमानमिति चेन्न, कर्मणा आकृष्यमाणस्य तत्समानकर्तृकत्वनियमात् । फलमपि तद्वाकृष्येत । आकृष्येत, यद्यात्मनेपदेन न प्रतिबध्येत । तत्र आत्मनेपदस्य बाधासंभवाद्गौणत्वप्रकारानुपपत्तेश्च मन्त्रगत एव ममशब्दोऽध्याहारेण वा पूर्यते, गौणो वा भवति, मदीयस्य यजमानस्य मद्रूपस्यैव वा यजमानस्य वर्चो विहवेष्वस्त्विति । तस्माद्यजमानफलमेतदिति । ये च ( कल्पसूत्रकाराः ) यजमानकर्तृकमेवाग्न्यन्वाधानं पक्षे वदन्ति, तेषामित एव मन्त्रवर्णात् भ्रान्तिः । अथ तु किंचिद्वचनमुपन्यस्यन्ति, तथाऽपि किं कर्मविकल्पवत् फलमध्वर्युयजमानयोर्विकल्पते किं वा फलं नित्यमेव याजमानमिति विचारः ।

**लिङ्गदर्शनाच्च । २७ ॥**

**भाष्यम्**— लिङ्गमप्यमुमर्थं दर्शयति । एवं ह्याह 'यां वै कांचन ऋत्विज आशिषमाशासते यजमानस्यैव सा ' इत्याशिषो यजमानार्थकतां दर्शयति । तस्मादपि ब्रूमो यजमानफलमाशासितव्यमिति । पक्षोक्तमेव प्रयोजनमिति ।

**वा**— सर्वाशिषामृत्विक्प्रयोज्यानां यजमानसंबन्धानुवाद एवमवकल्पिष्यते ।

**शा**—— अकरणभूताः प्रत्यगाशिषो मन्त्राः लिङ्गात् याजमाना इत्युक्तम् ( ३।८।६।१५–१६ ) । ये तु करणमन्त्राः ' ममाग्ने वर्चो विहवेष्वस्तु ' इत्यादयः, ते प्रत्यगाशिषोऽपि क्रियाकर्त्रा अध्वर्युणैव वक्तव्याः । नहि अन्येनोच्यमाना अध्वर्योः क्रियां प्रकाशयन्ति । न च मन्त्रवशेन प्रधानभूतक्रियायामध्वर्युबाधो युक्तः । तेन मन्त्रस्तावत् आध्वर्यव एव । तद्गतं च वर्चःप्रभृति सूक्तवाकगतायुरादिवत् फलं इति स्थिते ( क्रियां तत्संबन्धिनं वा प्रकाशयतो मन्त्रस्य करणत्वं भवति, इति मन्त्रस्य करणत्वनिर्वाहार्थं तत्प्रकाश्यवर्चःप्रभृतेः फलत्वम् । न च ' इन्धानाः ' इत्यन्वाधानक्रियाप्रकाशकत्वात् तत्संबन्ध्यग्निप्रकाशकत्वाच्च अस्य करणत्वमुपपद्यते इति **वाच्यम्** । कृत्स्नस्य मन्त्रस्य करणत्वान्यथाऽनुपपत्त्या तत्प्रकाश्यवर्चःप्रभृतेरपि फलत्वावश्यंभावात्, अन्यथा सूक्तवाकस्यापि अग्न्यादिदेवताप्रकाशकत्वमात्रेण करणत्वोपपत्तौ तद्गतायुरादेः फलत्वं न स्यात् ), किं तत् फलं अध्वर्योः, उत यजमानस्येति । ' मम ' इति लिङ्गात् अध्वर्योः । **इति प्राप्ते**, प्रधानवाक्यगतात्मनेपदश्रुत्या साङ्गप्रधानभावनाविषयाङ्गफलानां अपि यजमानगामित्वं युक्तम्, इति तद्विरुद्धं लिङ्गं न ऋत्विग्गामित्वं बोधयितुमलम् । अतः ' मम ' इति यजमानव्यतिरेकजनिता ( यजमानसंबन्धप्रयुक्ता ) षष्ठी मम यो यजमानः, तस्य वर्चः इति । यजमान एव वा उपचारात् ममेति निर्दिश्यते । अतस्तस्यैव फलम् ।

**सोम**—— प्रयोजनं अनुष्ठानसमये मन्त्रात् फलं ऋत्विग्गततया ज्ञातव्यं पूर्वपक्षे । सिद्धान्ते तु यजमानगततया इति । **सूत्रार्थस्तु** – करणमन्त्रेषु ऋत्विक्फलं प्रकाश्यम्, मन्त्राणां मुख्यार्थप्रकाशकत्वादिति ।

**वि**—— ' ममाग्न इति कस्यात्र फलं, लिङ्गेन वक्तृगम् । , श्रुत्या स्वामिनि न क्रीते लिङ्गं तत्रोपचर्यताम् ॥' तत्र यजमाने ममेति लिङ्गं उपचर्यताम् ।

**भाट्ट**—— य इतिकरणेन तृतीयया वा विनियुक्ताः करणमन्त्राः, तेषां मान्त्रवर्णिकक्रियाजन्यफलकत्वम्, न तु



' आयुर्दा अग्ने ' इत्यादिवत् प्रधानफलानुवादकत्वमित्युक्तं **कौस्तुभे** । तदत्र ' ममाग्ने वर्चो विहवेष्विति पूर्वमग्निं परिगृह्णाति ' इत्यादौ अग्न्यन्वाधानक्रिया तावदाध्वर्यवी, मन्त्रलिङ्गवशेन प्रधानभूतक्रियायां समाख्याप्राप्तकर्तृबाधानुपपत्तेः । न च याजमानेन मन्त्रेण अध्वर्युगतक्रियाप्रकाशनम्, ' वयं त्वेन्धानाः ' इति मन्त्रलिङ्गेन क्रियासमानकर्तृकत्वस्य मन्त्रे प्रतीतेः । अतश्च मन्त्रक्रिययोरुभयोरपि आध्वर्यवत्वात् फलमपि वर्चःप्रभृति तद्गतमेव, अन्यथा ' ममाग्ने ' इति ' मह्यं नमन्तां ' इत्यादिमन्त्रलिङ्गविरोधापत्तेः । **न च** साङ्गप्रधानविधायिफलवाक्यगतात्मनेपदानुरोधेन अङ्गफलानामपि स्वर्गकामकर्तृकत्वावगतेः यजमानगामित्वमिति **वाच्यम्** । श्रुतस्यापि आत्मनेपदस्य सावकाशतया तेन कल्पितस्यापि लैङ्गिकस्याध्वर्युवृत्तित्वस्य बाधानुपपत्तेः । न च आत्मनेपदार्थस्यैतद्विषये बाधे विधेरग्न्यन्वाधानविषये अनुष्ठापकत्वस्यापि बाधापत्तिः, प्रमाणाभावात् । अतोऽग्निसंस्कारार्थानुष्ठापितक्रियाजन्यानुषङ्गिकफलस्य क्रत्वनुपयोगिनोऽपि आध्वर्यवत्वेऽपि न काचित् क्षतिः । **इति प्राप्ते**, ' यां कांचन यज्ञे ऋत्विज आशिषमाशासते यजमानस्यैव सा' इत्यनन्यथासिद्धलिङ्गानुगृहीतात्मनेपदश्रुत्या यजमानगामित्वावगतेः एतल्लिङ्गबलादेव च यत्र न आत्मनेपदश्रवणं यथा 'जुहुयात्' इत्यादौ, तत्रापि यजमानगामित्वम् । अतश्च तदनुरोधेन ' मम ' इति मम यजमानस्य इत्येवं व्याख्येयम् । ' मह्यं ' इत्यादौ तु अस्मच्छब्देन यजमान एवोपचारादभिधीयते इति न दोषः । **प्रयोजनं** सत्रे अग्न्यन्वाधानाभावात् ऊहानूहरूपप्रयोजनासंभवेऽपि अर्थानुसंधानविशेषरूपं द्रष्टव्यम् ।

**मण्डन**— ' वर्चःपदे स्वामिफलप्रकाशः । '

**शंकर**—— ' करणे स्वामिगं फलम् । ' १६.

* **वर्चोन्यायः** ( वि. ३।८।१४ ) पूर्वोक्तवर्चोन्यायेन संतापाभावोऽपि यजमानस्यैव, न त्वध्वर्योः इति चेत्, मैवम् । अध्वर्यौ असंतप्ते सति अविघ्नेन स्वामिनः कर्म समाप्येत । तस्मात् अध्वर्युगतोऽपि संतापाभावः यजमानस्यैव फलम् । वि. ३।८।१५. * वर्चोन्यायः । ( ३।८।१३।२५–२७ ) ' ममाग्ने वर्चः ' इति अन्वाधानकरणमन्त्रस्य प्रत्यगाशीष्ट्वेन याजमानतौचित्येऽपि तत्प्रतिपाद्यफलस्य अन्वाधानकर्त्रा अध्वर्युणैव प्रयोक्तव्यम् । **परिमल.** ३।४।१३।४४ ब्रसू .

* **वर्णः** गकारादिः न प्रत्येकं व्यक्तिभेदभिन्नः । भेदधीस्तु व्यञ्जकध्वनिभेदात् । ' विशेषबुद्धिसद्भावो भवेद् व्यञ्जकभेदतः ।२३॥ यथैव तव ( वैयाकरणस्य ) गत्वादि गम्यमानं द्रुतादिभिः । विशेषैरपि नानेकं, एवं वर्णोऽपि नो ( अस्माकं मीमांसकानां ) भवेत् । २४ ॥ त्वयाऽपि व्यञ्जकव्यक्तिभेदाद् भेदोऽभ्युपेयते । ममापि व्यञ्जकैर्नादैर्भेदबुद्धिर्भविष्यति ॥ ' २५ ॥ **श्लोवा.** **स्फोटवादे.** * **वर्णाः** अनित्या इति **वैयाकरणादयः**, नित्या इति **मीमांसकाः । मणि.** पृ. ७३. * वर्णाः क्रमविशेषपरिगृहीता एव अर्थप्रतीतिहेतवः । **ऋजु.** पृ. १२१. * वर्णाः गकारादयो नित्याः । उच्चारणप्रयत्नस्तु व्यञ्जकः । वि. १।१।६. * वर्णाः गकारादयः सावयवा इत्यार्हतमतनिराकरणम् ' स्फोटवादः ' इति बिन्दौ **शास्त्रदीपिकाप्रघट्टके** द्रष्टव्यम् । * वर्णाः गीत्या न निवर्तन्ते, अनुल्यकार्यत्वात् । **टुप्.** ९।१।१८।५५, * वर्णाः गीत्या संस्क्रियन्ते । ९।१।१८।५४. * वर्णाः । द्रुतोऽयं मध्यमोऽयं विलम्बितोऽयं इत्यादिभेदप्रत्ययदृष्टान्तेन अन्यधर्माध्यासनिबन्धनत्वं भावनाभेदप्रत्ययस्य मिथ्यात्वे हेतुरभिप्रेतः, सोऽसिद्धः । ध्वनिधर्मा हि त्रिचतुष्पञ्चमात्रत्वरूपा द्रुतादिवृत्तयः । ' तस्मादुच्चारणं तेषां मात्राकालं प्रतीयते । द्विमात्रं वा त्रिमात्रं वा न वर्णो मात्रिकः स्वयम् ॥ ' इति शब्दे मात्रानिषेधात् तत्कल्पनानुपपत्तेः वस्तुतः असत्त्वात् अध्यासेन प्रतीयन्ते । **सु.** पृ. ७०७. * वर्णाः प्रत्येकं नित्याः, व्यक्तिशः अभिन्नाश्चेत्युक्तम् । **वि.** १।३।१० वर्णकं २. * **वर्णस्य** द्रुतादिभेदोपाधिको भेदः । **सु.** पृ. ७१४. * **वर्णानां** अर्थप्रत्यायकत्वोपपत्तिः । ' स्फोटवादः ' इति **बिन्दौ** शास्त्रदीपिकायां द्रष्टव्यम् । * वर्णानां त्रयाणामपि आधाने इष्टिपूर्वत्वसोमपूर्वत्वविकल्पः । ५।४।४।१०–१४. * वर्णानां द्रव्यत्वसिद्धिः । **मणि.** पृ. १७०. * वर्णानां नित्यत्वात्, एकार्थावच्छेदकस्य पदस्यापि वर्णरूपतया नित्यत्वात्, वर्णपदद्वारा वेदस्य

कारणसापेक्षत्वं नास्तीति नित्यत्वमेव । वि. १।१।७.

* वर्णानां प्रयत्नाभिव्यङ्ग्यत्वस्य अङ्गीकारः । **मणि.** पृ. १६८, * वर्णानां व्यापकानामपि तत्तद्ध्वनिभिः तत्तद्देशाभिव्यक्तानां स्वसामीप्योन्मुखादिक्रमेण ग्रहणमुपपन्नम् । पृ. १७०. * **वर्णेषु** एकार्थावच्छेदोपाधिना पदैक्यबुद्धिः । **वि.** १।१।६.

* **वर्णत्रयस्याप्यधिकारः** अध्वरकल्पादिषु श्रुतसामिधेनीसातदद्व्यासु विकृतिषु । ६।६।७।३६–३९. **मीको.** पृ. २८३. 'अधिकारः अध्वरकल्पादिषु०' इत्यत्र अधिकरणं द्रष्टव्यम् । * वर्णत्रयस्यापि मनुना पैष्टीपानं ( सुराविशेषः ) निषिद्धम् । **सु.** पृ. १९५.

* तुल्यशिरःपाण्याद्याकारेषु अपि संकीर्णलोकदृष्टिग्राह्येषु ब्राह्मणादिषु मातापितृसंबन्धस्मरणादेव **वर्णविवेकावधारणं** भवति । **वा.** १।३।८।२७ पृ. २८०.

* **वर्णव्यक्तयः** प्रध्वंसिन्य इति केषांचिन्मतम् । **वा.** १।३।८।२४ पृ. २७१.

* **वर्णव्यक्तिसंस्कारः** एतेन प्रत्युक्तः । **वा.** १।३।८।२४ पृ. २७०.

* **वर्णसंकरः** । न च भर्तृव्यतिरेककृतेन वर्णसंकरः अपराधेन जायते । दृश्यते हि अपराधिनीनामपि स्वभर्तृनिमित्तः प्रसवः । तदपराधनिमित्तस्तु तासां अशुभफलोपभोगो भवेत् । न तु अपत्यानां वर्णसंकरः । न च नियोगतः वर्णान्तरैरेव सह प्रमादः । सवर्णेन च उत्पादितस्य नैव वर्णान्तरत्वापत्तिः । संकरजातानामपि च पुनः उत्कर्षापकर्षाभ्यां सप्तमे पञ्चमे वा अन्यतरवर्णापत्तिः स्मर्यते । **वा.** १।२।१।२ पृ. १०९, * वर्णसंकरः । 'माता भस्त्रा पितुः पुत्रः' इति स्मर्तॄणां दर्शनं जनयितुश्च नानाजातित्वोपपत्तिः तेन वर्णसंकरः । १।२। १।१३ पृ. १२८.

* **वर्णसमूहः** । न ह्येकस्मिन् वर्णसमूहे जातिद्वयं समवेतम् । **वा.** ३।३।१।१ पृ. ८०४.

* **वर्णस्फोटः** 'वाक्यार्थे शक्तिः लक्षणा वा' इति **बिन्दौ** द्रष्टव्यः ।

* **वर्णस्वरूपप्रयुक्ता** न गीतिः किंतु स्तोत्रस्वरूपप्रयुक्ता । **टुप्.** ९।१।१८।५५ पृ. १६९८.

* **वर्तमानः** कालः । एतावानेव चात्र वर्तमानः कालो यदच्युतिः कर्मसंकल्पात् प्रभृति आ सर्वान्त्यफलावयवोपभोगात् । **वा.** २।१।२।५ पृ. ३९५.

* न हि **वर्तमानकालः** कश्चिदस्ति यस्यायं प्रतिनिर्देशः । **भा.** १।२।३।२६ । वर्तमानक्रियस्य असंभवात् । **वा.**

* **वर्तमानता** । 'यदि इतरप्रतियोगिता वर्तमानता, न नित्येषु सा' । **वि.** पृ. ६२ । **अत्र न्यायकणिका**— या खलु अनागतता कारणद्वारेण उपमृद्य भवति, या च अतीततया स्वनाशककारणद्वारेण उपमृद्यते सा वर्तमानता । न चेयं नित्येषु संभवति प्रागभावप्रध्वंसाभावाविनाभावितया नित्यत्वविरोधिनीत्वात् इत्यर्थः । तदेतत् पारिभाषिकं वर्तमानत्वं न लोकसिद्धम् । अस्ति हि प्रागभावप्रध्वंसाभावरहितेष्वपि आकाशादिषु वर्तमानतानिसर्गानुभवो लौकिकानां 'विद्यते व्योम' 'आकाशोऽस्ति' इत्यादिप्रयोगदर्शनात् । न च भाक्तः प्रयोगः, विशेषाभावात् । न खलु 'आत्माऽस्ति' 'विज्ञानमस्ति' इति विशेषोऽवगम्यते । अविशेषेऽपि च एकस्य भाक्तत्वकल्पने तदतिरिक्तस्यापि भाक्तत्वप्रसङ्गः इति । पृ. ६२.

* **वर्तमानत्वं** 'लट्' इति **बिन्दौ मणिग्रन्थे** द्रष्टव्यम् ।

* **वर्तमानत्वादिकमपि** भावनान्वयि । **मणि.** पृ. ११३.

* **वर्तमानक्रियत्वस्य गौणत्वे** 'देवदत्तः पचति योऽधुना भुङ्क्ते' इति दृष्टान्तो दातव्यः । **सु.** पृ. ९०.

* 'वर्त्मनि जुहोति' अनेन आहवनीयनिवृत्तिः । **संकर्ष.** २।४।१४. **मीको** पृ. १०२१ "आहवनीयापवादः 'पदे जुहोति' 'वर्त्मनि जुहोति' इति" इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वर्त्मादिना** विशेषविहितेन ज्योतिष्टोमादौ आहवनीयस्य सामान्यविहितस्य बाधः । १०।८।८।१६. **मीको.** पृ. १८३९ 'ज्योतिष्टोमादौ वर्त्मादिना०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वर्त्महोमः** वर्त्मन्येव ज्योतिष्टोमे । **भा.** १०।८।८।१६.



* **वर्धमाना** गायत्री । पादेषु अक्षराणि ६।७।८। उदा० 'ईशाना वार्याणां' ( **ऋसं.** १०।९।५ ) ।

* **वर्षणेन** अभिवृष्टस्य मन्त्रः 'उन्दतीरोजो धत्त' इति । यदा संतानेन अभिवृष्यते तदा आदौ सकृन्मन्त्रः, न तु पुनः पुनः अवान्तरवर्षणेऽपि ज्योतिष्टोमे । ११।४। १७।५०. **मीको.** पृ. १८२७ 'ज्योतिष्टोमे रात्रिगतकृत्स्ननिद्रार्थ०' इत्यत्र द्रष्टव्यम् ।

* '**वर्षति** न धावेत्' इति अग्निचिद्व्रतम् । यागोत्तरमेतत् । **वि.** ५।३।१०.

* **वल्मीकवपया** राजसूये विशेषविहितया ( 'राजसूये वल्मीकवपामुपगृह्य जुहुयादिति' ) आहवनीयस्य सामान्यविहितस्य बाधः । १०।८।८।१६. **मीको.** पृ. १८३९ 'ज्योतिष्टोमादौ वर्त्मादिना०' इत्यत्र द्रष्टव्यम् ।

* **वल्मीकवपाहोमः** राजसूये वल्मीकवपायामेव । **भा.** १०।८।८।१६.

* **वशा** दक्षिणा चतुर्थ्यामवेष्टौ राजसूये । **भाट्ट.** ११।४।३. * वशा वन्ध्या । **वि.** ९।३।१३.

* **वशावद् वाऽगुणार्थं स्यात्** । ( २।१।५।१५ ) । पूर्वपक्षशङ्कानिरासार्थं सूत्रम् । यथा वशात्वगुणविशिष्टस्यापि अजाद्रव्यस्य अगुणार्थं शुद्धाजाप्रकाशनार्थं अभिधानं स्यात् इति अकारप्रश्लेषेण सूत्रव्याख्या । वाशब्देन गुणस्य देवतात्वे अनन्तर्गतिः सूचिता इति केचित् । अन्तर्गतिस्तु भाष्यकारसंमता । **सु.** पृ. ६४२.

卐 **वषट् ते विष्णो इति वषट्शब्दः न होमार्थः ॥**

'वषट् ते विष्णवास आकृणोमि' इत्यत्र पदान्तरैः स्वाहाकृतशब्दवत् समासाभावेन स्वतन्त्रतया प्रदानार्थत्वे **प्राप्ते**, आकृणोमीत्यत्र तदन्वयेन अस्वातन्त्र्याविशेषान्न तथात्वम् । **संकर्ष.** २।४।१९.

* वषट् भक्षहेतुः होतुः । **वि.** ३।५।११.

* **वषट्कर्ता** होता । **वि.** ३।५।१०, * '**वषट्कर्तुः प्रथमभक्षः**' अत्र प्राथम्यमात्रं विधीयते इति **चेन्न**, प्राथम्यविशिष्टभक्षणस्य समस्तपदेन विधानात् । ३।५।१०. * 'वषट्कर्तुः प्रथमभक्षः' अत्र भक्षप्राथम्ययोः विधाने वाक्यभेदः । अयं अधिकार्थस्य न्यूनार्थकत्वे वाक्यभेदः । **बाल.** पृ. ४. * 'वषट्कर्तुः प्रथमभक्षः' इत्यत्र श्रौतः क्रमः । **सोम.** ५।१।१ वर्णकं ३. * 'वषट्कर्तुः प्रथमभक्षः' एवं श्रूयते । भक्षणस्य अप्राप्तत्वात् न प्राथम्यविधानार्थं एष शब्दः, प्राथम्यविशिष्टं भक्षणमेव विदधाति इति । **भा.** ३।५।१०। ३१ । **वा**– 'समासार्थाद् विनिष्कृष्य नैकांशोऽनूद्यते यतः । व्यङ्गवत् तेन सर्वोऽयमपूर्वोऽर्थो विधीयते ॥' यथैव 'व्यङ्गैः स्विष्टकृतं यजति' इत्यत्र नाङ्गानि अनूद्य त्रित्वं विधीयते, किं तर्हि ? पूर्वनिष्पन्नः समासार्थो विधेयो भवति, तथेहापि परिपूर्णस्य पदस्य पदान्तरयोगात् एकदेशनिष्कर्षे च सामर्थ्याभावात् अवाक्यमेव अनुवदितुं यो वषट्कर्तुर्भक्ष इति । नहि प्राक् समासात् भक्षस्य वषट्कर्तृसंबन्धो युक्तः । सापेक्षत्वे सति समासानुपपत्तेः । ननु च 'भवति वै प्रधानस्य सापेक्षस्यापि समासः' इति सत्यपि वषट्कर्तृसंबन्धे समासः अवकल्प्यते । भवेदेतदेवं यदि भक्ष एवैकः सापेक्षः स्यात् । इह तु प्राथम्यमपि वषट्कर्तृसंबन्धित्वात् सापेक्षम् । न हि प्राथम्यस्य भक्षो निमित्तम् । किं तर्हि ? वषट्कर्तृत्वम्, अतो वषट्कर्तुः प्रथमः इत्येवं संबन्ध आपद्यते । ततश्च विस्पष्टं असामञ्जस्यं स्यात् । यो वषट्कर्तुर्भक्ष इति च अनूद्यमाने विशिष्टानुवाददोषः, भक्षमात्रेण वषट्कर्तुरनाक्षेपात् । वषट्कर्तृत्वस्य च क्रियान्तरेष्वपि अनैकान्त्यात् । अन्यतरानुवादे तु सर्वभक्षाणां प्राथम्यं विधीयेत सर्ववषट्कर्तृव्यापाराणां च । तच्चाशक्यं कर्तुम् । अतो वषट्कर्तृप्राथम्यविशिष्टापूर्वभक्षविधानमेतत् । तयोश्च परस्परनियमात् अत्यन्तसमानविषयत्वम् । अतो यावति विषये वषट्कारः तावत्येव प्रथमभक्षः । पृ. १००७. * वषट्कर्तुः भक्षप्राथम्यस्य प्रतिपादनम् । ३।५।१३। ३६–३९.

* **वषट्कर्तृमात्रे** होतृशब्दः । 'होतुश्चित् पूर्वे हविरद्यमाशत' इत्येतस्मात् होतुरेव केवलस्य प्रथमं भक्षभ्रान्तिः, तस्यापि एतेन सूत्रद्वयेन ( ३।५।१३।३८–३९ ) वषट्कारमात्रे होतृशब्दः इति प्रतिपादितं भवति । **वा.** ३।५।१३।३९.

* **वषट्कारोऽपि** पृथक् सोमभक्षकारणम् । ३।५।१०।३१. **मीको.** पृ. १८२७ 'ज्योतिष्टोमे वषट्कारोऽपि पृथक् सोमभक्षकारणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**वषट्कारश्च कर्तृवत् । ३।२।१६।३८ ॥**

अस्त्यत्र वषट्कारदेवता 'सोमस्याग्ने वीहीत्यनुवषट्करोति' इति । तत्र संदेहः किं अनुवषट्कारदेवतोपलक्षणीया नेति । अत्रापि स एव न्यायः केनचिद्विशेषेण उदाहरणान्तरेऽतिदिश्यते । अत्रायं **पूर्वपक्षिणोऽभिसंधिः** । भवतु त्रयस्त्रिंशतो देवतानां देवतात्वाभावात् अनुपलक्षणम् । इह तु 'सोमस्याग्ने वीहि' इत्यस्य होममन्त्रस्य करणत्वेनानुवषट्कारे विनियोगात् अग्नेश्चोदनया मन्त्रवर्णाच्चानुवषट्कारदेवतात्वमैकान्तमेव । तस्मात् अनुवषट्कारशेषभूतसोमभक्षणे अग्निरप्युपलक्षणीय एवेति । **एवं प्राप्ते, अभिधीयते** । भवेदेवं यदि द्रोणकलशादनुवषट्कारदेवतार्थं सोमो गृह्यते । किं तर्हि ? प्रधानदेवतार्थेन । अनुवषट्कारो हि प्रतिपत्तिकर्म, तेन हि प्रधानदेवतार्थमाहुतमेव द्रव्यं प्रतिपाद्यते । अतो यथा पूर्वतः पाता अध्वर्युर्होता वा इतरपानान्तरेण प्रतिपत्तिकर्मसंबन्धित्वेन नोपलक्ष्यते, तथानुवषट्कारदेवताऽपि । तदा ह्युपलक्ष्येत यदि च प्रकृतौ ऐन्द्रप्रतिपत्तिसंबन्धिन उपलक्षणं कृतं भवेत् । न नैवमस्ति । तदुक्तम्– '**यथा पश्चात्तनः पाता पूर्वपात्रुपलक्षणम् । अप्राकृतं न कुर्वीत तथैनामपि देवताम् ॥**' इति (**वा.** पृ. ७९७) । तेन त्वष्टृवत् त्रयस्त्रिंशद्वत् अनुवषट्कारदेवताऽप्यग्निर्नोपलक्षणीय एवेति ।

**प्रयोजनम्**– न वक्तव्यमेव । **सूत्रं तु**– पानकर्तृवदनुवषट्कारदेवताऽपि नोपलक्षणीयेति । **तौता.**

**वषट्कारश्च कर्तृवत् । ३।२।१६।३८ ॥**

अस्य सूत्रस्य **केवलानन्दीया वृत्तिः मीको.** पृ. ४२६ 'अनुवषट्कारश्च कर्तृवत्' इत्यत्र द्रष्टव्या ।

* **वषट्कारश्च (अनुवषट्कारश्च) कर्तृवत् ।** ३।२।१६।३८ । वषट्कारश्च नैवं स्यात् पानकर्तृवत् वषट्कारशब्देन अनुवषट्कारदेवतायाः लक्षितलक्षणोक्तायाः प्रतिपत्तिकर्माङ्गत्वेन प्राकृतकार्यापत्त्यभावात् प्रकृतदेवतासंस्कारभूतस्य उपलक्षणस्य अतिदेशतोऽप्राप्तेः इत्येवं उपलक्षणनिरासार्थं नैवं इति पूर्वसूत्रादनुषक्तम् । **सु.** पृ. ११५५. * वषट्कारः चमसभक्षणे कारणं तच्च होतुः । **वि.** ३।५।१०. * वषट्कारः प्रदानार्थः । **भा.** १२।३।१५।३५. * वषट्कारः यावति विषये तावत्येव प्रथमभक्षः । **वा.** ३।५।१०।३१. * वषट्कारः षष्ठेऽहनि ऋतुयाजेषु होत्रादिभिः ऋक्शिरस्कप्रैषमन्त्रोत्तरं कर्तव्यः, न तु केवलप्रैषमन्त्रोत्तरम् । **ऐब्रा.** २२।४. * तन्त्रे च सौमिके **वषट्कारः** निर्दिष्टः । **भा.** ८।४।५।११, * भक्षस्य कारणं वषट्कारः । ३।५।१८।४५. * यदा याज्यावषट्कारयोः समुच्चयः तदा याज्योर्ध्वं वषट्कारः । यदा विकल्पः तदा 'ये यजामहे' इत्यव्यवहितोत्तरत्वं वषट्कारस्येति **पूर्वपक्षः** । याज्यावषट्कारयोः विकल्पो नास्त्येव याज्योत्तरमेव च वषट्कारः । **संकर्ष.** ४।३।४. * **वषट्कारेण** यागः क्रियते न याज्यामात्रेण, अनवानता च यष्टव्यम् । **भा.** ३।५।१८।४५. * वषट्कारेण हविःप्रदानार्थत्वात् इज्यते न केवलया याज्यया । **वा.** ३।५।१८।४५.

**वषट्काराच्च भक्षयेत् । ३।५।९।३१ ॥**

अथ किं समाख्यैव भक्षणे कारणम् ? नेति ब्रूमः । वषट्काराच्च भक्षयेत् । वषट्कारश्च भक्षणनिमित्तम् । कथम् ? एवं हि श्रूयते 'वषट्कर्तुः प्रथमभक्षः' इति । अत्र प्राप्तभक्षणानुवादेन प्राथम्यमात्रं विधीयते, अथवा वषट्कारनिमित्तकं प्राथम्यविशिष्टं भक्षणान्तरमिति । अत्रायं **पूर्वपक्षिणोऽभिसंधिः** । सर्वत्र विशिष्टविधिगौरवभयेनोपपदसंक्रान्तो विधिर्धात्वर्थस्य विलम्बिनीमपि यथाकथञ्चित्प्राप्तिमपेक्षते । अस्ति च होतुर्वषट्कर्तृत्वात् 'प्रैतु होतुश्चमसः' इति समाख्यया स्वचमसे भक्षणप्राप्तिः । अतस्तत्रैव समाख्याप्राप्तभक्षणानुवादेन वषट्कारनिमित्तकं प्राथम्यमात्रं विधीयते । तेन वषट्कर्तव्यनिमित्तकं भक्षणं कर्तव्यमिति । **एवं प्राप्ते, अभिधीयते** । भवेदेवं यद्यत्र समासान्निष्कृष्य च भक्षणमनुवदितुं शक्यते । तथाहि, न तावदत्र भक्षणमात्रानुवादेन प्राथम्यं विधीयते, अन्यत्रापि प्रसङ्गात् । किं तर्हि ? वषट्कर्तुर्यो भक्ष इति वषट्कर्तृसंबन्धिभक्षणानुवादेन । तथा सति वषट्कर्तृसंबन्ध-



सापेक्षस्य भक्षणस्य प्राथम्येन सह न समासः संभवति, असमर्थत्वात् । अथ प्राथम्येन भक्षणस्य प्राधान्याच्च 'भवति वै प्रधानस्य सापेक्षस्य समासः' इत्यनुशासनात् वषट्कर्तृसंबन्धसापेक्षमपि भक्षणं प्रथमपदेन समस्यते इत्युच्यते, तथापि प्राथम्यं तावत् भक्षणगुणभूतम्, तदपि वषट्कारनिमित्तकत्वात् वषट्कर्तृभक्षणस्य प्राथम्यं न निमित्तान्तरेण । किं तर्हि ? वषट्कारेणैव । तेन वषट्कर्तुरिति संबन्धात् गुणभूतस्यापि प्राथम्यस्य सापेक्षत्वात् स्पष्ट एव समासदोष इति । भक्षणप्राथम्ययोः निष्कृष्यानुवदितुं विधातुं वाऽशक्यत्वात् वषट्कर्तुः प्राथम्यविशिष्टमपूर्वमेव भक्षणं विधीयते इति । ननु 'एकं साम तृचे क्रियते स्तोत्रीयम्' इति समासापेक्षं समासस्थामपि ऋचमनूद्य त्रित्वविधानं दृष्टम्, तथा प्राथम्यविधानं भविष्यति । नैतत् । तत्रापि समासार्थस्यैव विधानात्, किन्तु ऋचां सामान्यभिचारेणैव प्राप्तत्वात् त्रित्वस्य चाप्राप्तत्वात् त्रित्वपरो विधिरित्युच्यते । इह तु यावद्वषट्कारं भक्षणस्याप्राप्तत्वात् समासार्थ एव विधेस्तात्पर्याद्भक्षणमेव विशिष्टं विधीयते । तेन वषट्कारनिमित्तकं भक्षणं होत्रा सर्वत्र कृत्वा समाख्यानिमित्तकं भक्षणं चमसे कर्तव्यम् । न तु तस्यैव प्राथम्यमिति सिद्धम् ।

**प्रयोजनम्**– पक्षोक्तम् । **सूत्रं तु**– न केवलं समाख्यया वषट्कर्ता स्वचमसे एव भक्षयेत्, किन्तु वषट्कारनिमित्तकं पात्रान्तरेष्वपि भक्षयेदिति । **तौता.**

**वषट्काराच्च भक्षयेत् । ३।५।१०।३१ ॥**

सिद्धान्तसूत्रम् । सप्तमेऽधिकरणे सोमभक्षनिमित्तं समाख्या इत्युक्तम् । तत्रैव निमित्तान्तरप्रतिपादनार्थमिदं सूत्रम् । निमित्तान्तरसमुच्चयार्थश्चकारः । यथा समाख्यया भक्षयेत् तथा वषट्कारादपि भक्षयेत् सोमम् । विधित्वात् इति पदं पूर्वसूत्रादनुवर्तते । 'वषट्कर्तुः प्रथमभक्षः' इति प्राथम्यविशिष्टभक्षणस्य विधायकेन विधिवाक्येन वषट्कारस्य भक्षनिमित्तत्वमुक्तं भवति । तस्मात् यो यं ग्रहचमसं वषट् करोति स तं भक्षयेत् प्रथमम् । ततो यथायथं समाख्याभक्षं भक्षयेत् । **के.**

* 'वषट्काराच्च भक्षयेत्' । (३।५।१०।३१) इत्यधिकरणे 'वषट्कर्तुः प्रथमभक्षः' इत्यत्र समासवशेन प्राथम्यभक्षयोः एकोपस्थितिविषयत्वात् प्रथमभक्षशब्दे एकदेशेन भक्षमनूद्य एकदेशेन प्राथम्यं न विधातुं शक्यते इति वक्ष्यते । **कु.** ३।१।६।१२. * **वषट्कारस्य** 'वषट् ते विष्णवास आकृणोमि०' इत्यत्र वर्तमानस्य आकृणोमि इत्यनेनान्वयेन अस्वातन्त्र्यात् न प्रदानार्थता । **संकर्ष.** २।४।१९, * **याज्यावषट्कारयोः** समुच्चय एव न विकल्पः । ४।३।३.

**वषट्कारे प्राणापाननिमेषाणां प्रतिशाखमुपसंहारः ॥**

क्वचिच्छाखायां 'वषट्कृत्यापान्यान्निमिषेदपानेन एव प्राणं दधाति निमेषेण चक्षुः' इति श्रुतम्, 'वषट्कृत्य प्राण्यादथापान्यादथ निमिषेत्' इति तु शाखान्तरे । तत्र शाखाभेदेन केषांचिद्विधिद्वयं केषांचिद्विधित्रयमेतत् । **इति प्राप्ते,** अपाननार्थवादस्यापाननविध्युत्तरमेव युक्तेऽपि पाठे अपाननिमेषविध्योरुत्तरमर्थवादद्वयश्रवणेन वषट्कृत्येत्यस्य निमेषविधावप्यनुषङ्गप्रतीतेः अपाननिमेषयोर्वषट्काराव्यवहितोत्तरकाल एव प्राप्तौ शाखान्तरे वषट्कारोत्तरं प्राणनस्यैकस्यैव विधिः इतरयोः क्रमार्थमनुवादः । **संकर्ष.** ४।३।७.

* वषट्कारे 'यं कामयेत प्रमायुकः स्यात्' इति यजमानमरणकामस्य होतुर्विधिरयम् इति **पूर्वपक्षः** । स्वर्गकामस्य विधेरर्थवादोऽयं इति सिद्धान्तः । **संकर्ष.** ४।३।५.

**वषट्कारे 'यं कामयेत प्रमायुकः स्यात्' इति स्वर्गकामविधेरर्थवादः ॥**

वषट्कारमेव प्रकृत्याम्नायते 'यं कामयेत प्रमायुकः स्यादिति नीचैस्तरां तस्य याज्याया वषट् कुर्यात्' इत्यस्यान्ते 'उच्चैः क्रौञ्चमिव वषट् कुर्यात्स्वर्गकामस्य' इति श्रुतौ द्वावपि काम्यविधी कुर्यादिति लिङ्श्रुतेरविशेषात् । दीर्घरोगसंतप्तस्य प्रत्याख्यातभिषक्क्रियस्य मरणकामनाया अपि संभवात् । अन्यथा तादृशस्यात्महननविधेः स्मृतिषु वैयर्थ्यापत्तेः । सर्वस्वारादिश्रौतकर्मस्वपि मरणकामाधिकारिकतादर्शनात् । पुरुषाभिप्रायाणां विचित्रत्वात् । वस्तुतस्तु यः प्रमायुकः स्यादित्याद्युक्त्या होतृगत एवैष कामः प्रतीयते । स च द्वेष्ये यजमाने

संभवत्येव । अत एव 'ऋत्विगाचार्यौ नातिचरितव्यौ' इति स्मृतिरपि दृष्टार्था सती युज्यते । न चादधीत इत्युपग्रहविशेषविरोधः । 'यस्मिन् जात एतामिष्टिं निर्वपति पूत एव सः' इति श्रुत्येव क्वचिदपवादस्यापि संभवात् । अत एव प्रउगशस्त्रे 'सप्तदेवताः शंसति' इति सप्तानां तृचानां शंसनं होतुर्विधाय, 'स-यजमानस्य पापभद्रमाद्रियेतेति ह स्माह योऽस्य होता स्यात्' इत्यत्रैव 'एनं यथा कामयेत तथा कुर्यात्' इत्युपक्रम्य 'यं कामयेत प्राणेनैनं व्यर्धयानीति वायव्यमस्य लुब्धं शंसेदृचं वा पदं वातीयात्' इत्यादिना तृचभेदेन तत्तद्गतपदादिलोपेन यजमानस्य प्राणादिसप्तकव्यृद्धिः होतृकाम्यमाना प्रतिपादितोपपद्यते । तस्मात्प्रधानफलमङ्गफलं वा यजमान-तदितरसाधारणं यथावचनं स्वीकार्यम् । प्रकृते च होतृपदाश्रवणेऽप्यैतरेयब्राह्मणे प्रउगसजातीयस्यैव वाक्यस्य श्रवणाद्धोतुरेवायं काम्यो विधिः । इति प्राप्ते, अनवधिकदुःखरूपस्य मरणस्य सर्वथाऽनिष्टत्वेन तदधिकतदेकजन्यफलान्तराभावेन तस्य नान्तरीयकत्वाभावाच्च सर्वस्वारमरणादौ साधनान्तरकथनाच्चाविचिकित्स्यरोगवतां मरणविधेरभ्यनुज्ञामात्रत्वाच्च न यजमानस्य कामः संभवतीति स्वर्गकामविधेरयमर्थवाद एव । जर्तिलवाक्यादाविव विधिप्रत्ययस्याविधायकत्वात् । 'विषं भुङ्क्ष्व मा चास्य सद्मनि भुङ्क्थाः' इति लौकिकवाक्येऽपि पूर्वविधेरुत्तरविध्युपपादकतया एकवाक्यतादर्शनात् । नापि होतुः कामः अनन्यथासिद्धापवाददर्शनात् । प्रउगशस्त्रेऽपि 'यमु कामयेत सर्वैरेनमङ्गैः सर्वेणात्मना समर्धयानीत्येतदेवास्य यथापूर्वमृजुक्लृप्तं शंसेत्' इति विधेरर्थवादत्वेनैव सप्तवाक्यानामुपपत्तेः । **संकर्ष.** ४।३।५.

* **वषट्कारोत्तरं** प्राणनस्य एकस्यैव विधिः अपानननिमेषणयोः क्रमार्थमनुवादः । **संकर्ष.** ४।३।७.

* **वषट्कारनिमित्तं** भक्षणं पूर्वं कृत्वा भूयः समाख्याभक्षः कर्तव्यः । **वा.** ३।५।१०।११. * **वषट्कारनिमित्ताः** होमाभिषवनिमित्ताश्च शेषभक्षाः ज्योतिष्टोमे । ते न परिक्रयार्थाः किंतु संस्कारार्थाः । **भा.** १०।२।९।२९-३०.

* **वषट्कारपादः** । **संकर्ष.** ४।३।१-२२.

* **वषट्कारभक्षः** स्वयं याज्यापाठे यजमानस्य ज्योतिष्टोमे ऋतुयाजेषु । ३।५।१८।४४-४६. **मीको.** पृ. १२४३ 'ऋतुयाजेषु स्वयं याज्यापाठे०' इत्यत्र द्रष्टव्यम् ।

* होमान्तरेषु अनारभ्यविहितयोः **वषट्कारस्वाहाकारयोः** विकल्पः सुस्थितो भवति । **वि.** १०।८।१०.

* **वसतीवरीपर्यन्तानि** पूर्वाणि अङ्गानि द्वादशाहे अस्वकालत्वात् अगृह्यमाणविशेषाणि तन्त्रम् । अवभृथादीनि उत्तराणि अङ्गानि दीक्षाविसर्गार्थत्वात् तन्त्रम् । **भा.** ११।४।५।२०.

* **वसनम्** । वस्यते परिधीयते इति वसनम् । 'लोहितवसनाः ऋत्विजः प्रचरन्ति' इत्यत्र वसन् शब्दो न वस्त्रजातिवचनः किंतु परिधानवचनः । **बाल.** पृ. १६७.

* '**वसन्ताय** कपिञ्जलानालभते' अयं मन्त्रगताख्यातस्यैव लेट्त्वकल्पनात् मन्त्रकल्प्यः विधिः । **बाल.** पृ. १२. * '**वसन्ते** ज्योतिषा यजेत' इति निमित्तार्था श्रुतिः, वाक्यान्तरेण ज्योतिष्टोमस्य कालसंबन्धस्य विहितत्वात् । **कणिका.** पृ. ३६५. * 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिना वसन्तादिकालविशिष्टमाधानं विधीयते । २।३।३।४. **मीको.** पृ. ९३० 'आधानाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * 'वसन्ते ब्राह्मणोऽग्नीन् आदधीत' इत्यादौ ब्राह्मणादीनां आधानं विधीयते, न तु ब्राह्मणादिश्रवणं निमित्तार्थम् । ब्राह्मण आदधीत इत्यन्वयः न तु ब्राह्मणो वसन्ते इति । **भा.** २।३।३।४. * 'वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः, वर्षासु रथकार आदध्यात्' अयं कालतः वाचनिकव्यवस्थाविधिः श्रौतः । **बाल.** पृ. १८. * 'वसन्ते ब्राह्मणमुपनयीत' इत्यादिना वसन्तादिकालविशिष्टस्य उपनयनस्य विधिः । **वि.** २।३।३. * 'यदि **वसन्ते** यजेत, द्विरुपस्तृणीयात्, सकृदभिघारयेत्' । **भा.** १०।४।२५।५६.

* **वसन्तादिश्रुतिभिः** प्राप्तेः, न कामश्रुतयः आधानाक्षेपसमर्था इति आहिताग्नीनेव अधिकुर्वन्ति । **वा.** ३।२।८।२२ पृ. ७७९.



* **वसन्तोत्सवः** फाल्गुनपौर्णमास्युत्तरप्रतिपदि सदाचारः । **वा.** १।३।३।७ पृ. २०५, **सु.** पृ. १८७. * वसन्तोत्सवः होलाकापरपर्यायः उत्सवः प्राच्यैः क्रियते । **वि.** १।३।८.

* **वसन्तोत्सवाद्याचाराणां** प्रामाण्यम् । **भाट्ट.** १।३।३ वर्णकं ३.

* **वसाः** शेषभूताः । तासां प्रतिपत्तिर्होमः । **भा.** ११।४।९।३४, * '**वसां** याज्यार्धर्चान्ते जुहोति' इति प्रकृतौ सर्वयाज्यार्धर्चान्तेषु होमः ऐकादशिनेषु । ११।४।९।३१-३६.

**वसाहोमस्तन्त्रमेकदेवतेषु स्यात् प्रदानस्यैककालत्वात् । ११।२।५।२५॥**

एकदेवतेषु प्राजापत्यादिषु पशुषु प्रधानप्रदानस्य एकत्वेन एककालत्वात् एकस्मिन् याज्यार्धर्चान्ते वसाहोमः कर्तव्यः इति वसानां होमः तन्त्रं स्यात् । इति सिद्धान्तः । **के.**

* वसाहोमः प्रतिपत्तिकर्म । **वि.** ११।४।१०. * वसाहोमानां भिन्नदेवताके पशुगणे तन्त्रभेदः । ११।२।६।२६. **मीको.** पृ. १३०८ 'ऐकादशिनपशुवसाहोमानां तन्त्रभेदः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**वसाहोमन्यायः ।** वसाहोमानां एकदेवताकपशुगणे तन्त्रम् ॥

**वसाहोमस्तन्त्रमेकदेवतेषु स्यात् प्रदानस्यैककालत्वात् । ११।२।५।२५ ॥**

**भाष्यम्**—एकदेवताः पशव उदाहरणं 'सप्तदश प्राजापत्यान् पशूनालभते' इति । अस्ति तु प्रकृतावग्नीषोमीयपशौ वसाहोमः कर्तव्यः 'याज्यार्धर्चान्ते वसां जुहोति' इति । स इह चोदकेन प्राप्यते । तत्र चिन्त्यते किं भेदेन वसाहोमः कर्तव्यः, अथवा तन्त्रमिति । किं प्राप्तम् ? वसाहोमस्तन्त्रमेकदेवतेषु स्यात् प्रदानस्यैककालत्वात् । वसाहोमः खल्वेकदेवतेषु तन्त्रं स्यात् । कुतः ? प्रदानस्यैककालभावात् । एककालं तेषां प्रदानं 'वैश्वदेवीं कृत्वा प्रचरन्ति' इति । देवता चैका प्रजापतिः । अतस्तेषामेकप्रदानत्वम् । प्रदानस्य एकत्वादेकः सर्वेषां साधारणो याज्यार्धर्चान्तः । तत्र क्रियमाणस्य होमस्यैदमर्थ्यं प्रति न गृह्यते विशेषः । तस्मात्तन्त्रम् ( याज्यायाः प्रथमस्याः अर्धर्चस्यान्ते वसायाः होमः । सर्वयाज्यान्ते च अङ्गहोमः ) ।

**शा**— अग्नीषोमीयपशौ 'याज्यार्धर्चान्ते वसाहोमं जुहोति' इति श्रुतो वसाहोमः चोदकपरंपरया प्राजापत्येषु पशुषु प्राप्तः तन्त्रं आवापो वा इति संदेहे सहश्रपणात्, वसाया एकत्वात्, एकदेवतत्वाच्च याज्यार्धर्चान्तस्य एकत्वात् तन्त्रम्, सकृत् कर्तव्यः इति स्पष्टमेव शिष्यहितार्थमेवमुक्तम् ।

**सोम**— पूर्ववत् ( अध्वरकल्पायां अङ्गानामिव ) आवृत्तिः इत्युत्थितेः **संगतिः ।** रसात्मको द्रवद्रव्यविशेषो वसा । प्रदानस्य एककालत्वात् प्रधानयाज्याया एकत्वात् अर्धर्चोऽपि एक एव इति **सूत्राशयः ।**

**वि**—'प्राजापत्यवसानां किं भेदस्तन्त्रमुत, ऽग्रिमः । पशुभेदाद्, देवपाककालैक्याच्छक्तितोऽन्तिमः ॥'

**भाट्ट**— दैक्षे पशुयागे 'याज्यार्धर्चान्ते वसाहोमं जुहोति' इति श्रुतो वसाहोमश्चोदकपरम्परया प्राजापत्याद्येकदेवताकपशुगणे प्राप्तो याज्यार्धर्चान्तस्य एकत्वादेकदेवताकत्वेन च सहप्रदानात् सहश्रपणेन वसाया एकत्वाच्च तन्त्रेणैव भवतीति शिष्यहितार्थमुक्तम् ।

**मण्डन**— 'देवतैक्ये वसा तन्त्रम् ।'

**शंकर**— 'वसाहोमैक्यं पशुषु ।'

* **वसिष्ठस्य** पुत्रशोकार्तस्य जलप्रवेशात्मत्यागसाहसम् । **वा.** १।३।२।७ पृ. २०३ । वसिष्ठपुत्रे शक्तिनामके राक्षसैर्भक्षिते तच्छोकान्मर्तुकामो जलं प्रवेष्टुमारेभे । **सु.** पृ. १८५ । **उत्तरम्**— 'वसिष्ठस्यापि यत्पुत्रशोकव्यामोहचेष्टितम् । तस्याप्यन्यनिमित्तत्वान्नैव धर्मत्वसंशयः ॥' कामक्रोधलोभमोहशोकादिहेतुत्वेनोपलभ्यते स यथाविधिप्रतिषेधं वर्तिष्यते । **वा.** १।३।२।७ पृ. २०८ । वसिष्ठाचारस्य पुत्रशोकजनितव्यामोहनिमित्तत्वाख्यानात् धर्मबुद्ध्या क्रियमाणत्वाभावात् सदाचारत्वाभावनिश्चयः । **सु.** पृ. १९१. * वसिष्ठस्य यथा अरुन्धती । **वा.** ३।४।१।९. * **वसिष्ठानां** न सत्राधिकारः । **भा.** ६।६।४।२६, * वसिष्ठानां नाराशंसो द्वितीयः प्रयाजः । ६।६।१।१.

* **वसिष्ठादीनां** सत्राधिकारो नास्ति विश्वामित्रसमानकल्पत्वाभावात् । वि. ६।६।४.

* **वसवः** अष्टौ– ' धरो ध्रुवस्तथा सोम आपश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥ ' सु. पृ. १०८६.

* **वसोर्धारा** नानाकर्म । बहून्येतानि कर्माणि । तेषां तु अनुपरमेण क्रियासंतानो भवति । द्वादश द्वादशानि जुहोति इत्युक्तम् । तत्रापि मन्त्रान्ते एव कर्मादिसंनिपातः । **भा.** १२।३।११।२६–२७. * **वसोधारायां** मन्त्रान्ते कर्मादिसंनिपातः अग्निचयने । १२।३।११।२६–२७. **मीको.** पृ. ४७ ' अग्निचयने वसोर्धारायां मन्त्रान्ते कर्मादिसंनिपातः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वस्तु** एकमपि लक्षणतः ( उपादेयोद्देश्यगतत्वरूपलक्षणभेदात् ) क्वचिदेव विवक्ष्यते न सर्वत्र । कथमेकस्य युगपत् उद्दिश्यमानोपादीयमानत्वं इति चेत् । अपेक्षाहेतुभेदात् ईदृशान्यपि भवन्ति इत्युक्तम् ( स्तुतशस्त्राधिकरणे ' आचार्यो मातुलश्चेति द्रव्यैकत्वेऽपि सिध्यति । अपेक्षाहेतुभेदेन व्यवहारः पृथक्तया ॥ ' इत्यादिना । ) । **वा.** ३।२।६।१९ पृ. ७६७. * वस्तु त्रयात्मकम् । ' वर्धमानकभङ्गे च रुचकः क्रियते यदा । तदा पूर्वार्थिनः शोकः प्रीतिश्चाप्युत्तरार्थिनः ॥ हेमार्थिनस्तु माध्यस्थं तस्माद् वस्तु त्रयात्मकम् ॥ ' ( त्रयात्मकं उत्पत्तिस्थितिविनाशधर्मात्मकम् । **रत्नाकरः**) । **श्लोवा. वनवादे** २१–२२.

⧖ **वस्तूनि मानान्यपेक्षन्ते न प्रयोजनानीति न्यायः** । श्रुत्यादिमानसिद्धवस्तुनः प्रयोजनाभावापराधेन निरसनमशक्यमिति विवक्षायामस्य प्रवृत्तिरिति । **साहस्री**. ३६४.

* **वस्तुनः** एकस्य अनेककार्योत्पादनशक्तेः अनेकत्र दर्शनम् । **सु.** पृ. ८४३.

* **वस्तुजातं** त्रिविधम्, संप्रतिपन्नचेतनकर्तृकं यथा घटादि । संप्रतिपन्नचेतनाकर्तृकं व्योमादि । विप्रतिपन्नचेतनकर्तृकं महीरुहाङ्कुरादि । **मणि.** पृ. ४५.

⧖ **वस्तुशक्तिन्यायः** । यत्र पदार्थशक्तेः प्राबल्यं विवक्ष्यते, तत्रायं प्रवर्तते । तद्यथा– ' जले तैलं खले गुह्यं पात्रे दानं मनागपि । प्राज्ञे शास्त्रं स्वयं याति विस्तारं वस्तुशक्तितः ॥ ' इति । **साहस्री**. ५५२.

* **वस्तुशब्दः** न भावविकारवाची, भावविकाररहितेष्वपि नित्येषु आकाशादिषु वस्तुत्वप्रतीतेः । **सु.** पृ. ३४८.

* **वस्त्रम्** । निर्णेजकधौतगर्दभारूढवस्त्रपरिधानं उदीच्यानां दाक्षिणात्यानां च अनाचारः । **वा.** १।३।३।७ पृ. २०४. * वस्त्रं पूर्वदिने प्रावरणाय उपयुक्तमपि त्याज्यं न भवति । शिष्टाः प्रक्षाल्य दिनान्तरे पुनः गृह्णन्ति । **वि.** ११।३।१२.

* **वहतिः** शब्दः प्रापणे सिद्धः । **भा.** १।१।८।३१.

⧖ **वह्निधूमन्यायः** । यथोत्पत्तिप्रतीतिरूपद्वारभेदाद्वह्निधूमयोरितरेतरापेक्षत्वं न विरुध्यते, तथा प्रकृतेऽपि । किञ्च, यथा धूमरूपकार्यदर्शनात् कारणरूपवह्नेरनुमानम्, तथा यत्र कार्यलिङ्गेन कारणानुमानम्, तत्रास्य प्रवृत्तिरिति । **साहस्री**. ३९७.

⧖ **वह्निन्यायः** । यथा ह्येकस्याग्नेर्दाहकत्वं पाचकत्वं प्रकाशकत्वम्, तथा प्रकृतेऽपि । **साहस्री**. १७६.

⧖ **वह्निविस्फुलिङ्गन्यायः** । यथा वह्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति, एवमेवैतस्मादात्मनः सर्वे एते आत्मानो व्युच्चरन्तीति विषयेऽस्य प्रचारः । **साहस्री**. ९२७.

* **वाऽपि** । वाऽपीति विपर्यासेन प्रयुङ्क्ते अपिवेत्यर्थः । **भा.** ७।३।१।२.

* **वा– शब्देन** विधिशक्तिप्रतिबन्धः । **भाट्ट.** १०।८।४. * वा– शब्देन संशयो निवर्त्यते । **भा.** ३।३।८।१५ । ' सिद्धान्तेनोपक्रमं वाशब्देन व्यावर्त्य ' इति । **वा.**

* **वाक्यं** अपि क्रिययैव संबध्नीयात् । **वा.** १।२।४।३१–१ पृ. १४६. * वाक्यमपि ' कल्प्यात् क्लृप्तं बलीयः ' इति न्यायसहकृतं प्रकरणात् बलीयः । **भा.** ४।३।४।८–९, * वाक्यं ' अरुणया क्रीणाति ' इति विनियोगकारणं उक्तम् । ३।३।४।११. * वाक्यं



अर्थविप्रकर्षात् लिङ्गेन बाध्यते । **वा.** ३।८।१०।२१ पृ. ११२६. * वाक्यं आकाङ्क्षा–योग्यता–संनिधिवशात् स्वार्थं प्रतिपादयति । **वि.** १।१।७. * वाक्यमेव अर्थप्रतिपादकम् । न केवलं पदं क्वचिदर्थप्रतीतिं जनयति वृद्धव्यवहारे तथा व्युत्पत्तिविरहात्, अन्वितस्वार्थाभिधानतयैव व्युत्पत्तेः । अर्थान्तरापेक्षत्वाच्चान्वयस्य पदान्तरादृते तदनवगतेः । पदान्तरापेक्षत्वे च सिद्धं वाक्यस्यैव प्रतिपादकत्वम्, न केवलस्य पदस्य । **ऋजु.** पृ. १०३. * वाक्यं कर्तृकर्मक्रियापदसमूहः । **सु.** पृ. ६९५. * वाक्यं क्रमात् बलवत् । **वा.** ३।३।७।१४ पृ. ८३७. * वाक्यं क्रियाप्रधानं एकार्थं एकप्रयोजनम् । **कणिका.** पृ. ४३३. * वाक्यं द्वाभ्यामपि समाख्याप्रकरणाभ्यां बलीयः । **भा.** ५।२।५।२३. * वाक्यं ( विनियोजकं प्रमाणं ) द्विविधं महावाक्यं चावान्तरवाक्यं चेति । **बाल.** पृ. ९. * वाक्यं धर्माङ्गताबोधकं प्रमाणम् । **मणि.** पृ. १३. * वाक्यं नाम अङ्गत्वघटकीभूतपरोद्देश्यताकृतिकारकताऽन्यतरपदार्थकल्पनानुकूलः श्रुतपदसंनिधिः । अस्ति चेदं ' धेनुर्दक्षिणा ' ' उच्चैर्ऋचा क्रियते ' 'प्रयाजशेषेण' इत्यादौ । अत्र च कल्पनाशब्देन कर्मत्वकरणत्वादिविषयकसंसर्गविधया लक्षणादिसाधारण्येन शक्तिजन्यपदार्थोपस्थितिभिन्नबोधमात्रं विवक्षितम् । तेन ' धेनुर्दक्षिणा ' इत्यादौ संसर्गविधया भासमानकरणताके नाव्याप्तिः । **वस्तुतस्तु**— सुबन्तयोः परस्परान्वयस्याव्युत्पन्नत्वादवश्यकल्प्यभावनान्वयानुरोधेन धेनुरिति प्रथमया करणत्वलक्षणा, दक्षिणापदेन तत्कार्यवृत्तिकर्मत्वलक्षणा । कल्पनापदेन लक्षणाजन्योपस्थितिरेवाभिप्रेता । ' उच्चैः ' इत्यादौ लुप्तविभक्त्यर्थस्य करणत्वस्य प्रातिपदिकेनैव लक्षणान्नाव्याप्तिः । अथवा ' उच्चैः ' इत्यादौ करणत्वस्य संसर्गविधयैव भानोपपत्तेः कल्पनापदेनोभयं विवक्षितम् । ' प्रयाजशेषेण ' इत्यादौ तृतीयया कर्मत्वस्य, धातुना करणत्वस्य लक्षणात् कल्पना स्फुटैव । श्रुतपदसंनिधेश्च योग्यताज्ञानं विना कर्मत्वादिकल्पकत्वानुपपत्तेर्योग्यतारूपलिङ्गानुमापकत्वम् । श्रुतस्यैव पदस्य कर्मत्वादिलक्षकत्वाङ्गीकारेण तद्वाचकपदरूपश्रुतिकल्पकत्वाभावेऽपि श्रुतपदस्य तत्तात्पर्यकत्वरूपधर्मवैशिष्ट्यरूपेण कल्पनात् श्रुतिकल्पकत्वोपपत्तिः । अतश्च वाक्यं लिङ्गं श्रुतिं च कल्पयित्वा अङ्गत्वे प्रमाणम् । **भाट्ट.** ३।३।१.

* **वाक्यं निरूप्यते** । पदसमभिव्याहारो वाक्यं यथा ' धेनुर्दक्षिणा ' ' उच्चैर्ऋचा क्रियते ' इत्यादौ । ' ऐन्द्या गार्हपत्यमुपतिष्ठते' इत्यादिश्रुतिस्थले पदसमभिव्याहाररूपवाक्यसत्त्वेऽपि ' प्राधान्येन व्यपदेशा भवन्ति ' इति न्यायेन श्रौताङ्गत्वस्यैव व्यवहारः, न तु वाक्यीयाङ्गत्वस्य इति **प्राञ्चः** । **नव्यास्तु** अङ्गत्वघटकीभूतपरोद्देश्यताकृतिकारकत्वान्यतरपदार्थकल्पनानुकूलः श्रुतपदसंनिधिः । कल्पनाशब्देन च सांसर्गिकविषयताशालिशाब्दबोधलक्षणाजन्यशाब्दबोधान्यतरत् विवक्षितम् । अतः संसर्गविधया भासमानकरणताकस्य ' धेनुर्दक्षिणा ' ' उच्चैर्ऋचा क्रियते ' इत्यादेः लक्षणया भासमानकर्मत्वस्य ' प्रयाजशेषेण हवींष्यभिघारयति' 'सक्तून् जुहोति ' इत्यादेश्च संग्रहः । श्रुतिघटितपदसंनिधेः अङ्गत्वघटकीभूतपरोद्देश्यताकृतिकारकत्वान्यतरनिरूपित–सांसर्गिकविषयताशालिशाब्दबोधलक्षणाजन्य–शाब्दबोधान्यतररूप– निरुक्तकल्पनाऽनुकूलत्वाभावात् नातिव्याप्तिः **इत्याहुः** । पूर्ववत् अङ्गत्वैकदेशबोधप्रयोजकत्वेन अङ्गत्वप्रमाणत्वसूचनाय अङ्गत्वघटकीभूतेति, न तु अङ्गत्वघटकत्वस्य लक्षणे निवेशः, प्रयोजनाभावात् । परोद्देश्यताकृतिकारकत्वपदेन च कर्तृत्वकर्मत्वकरणत्वसंप्रदानत्वापादानत्वाधिकरणत्वान्यतमं विवक्षितम् । संसर्गमर्यादया भासमानकरणताके लिङ्गकल्पितवाक्ये अतिव्याप्तिवारणाय श्रुतेति । कर्तृत्वाद्यन्यतमशक्तिज्ञानाजन्यकर्तृत्वाद्यन्यतम-शाब्दबोधप्रयोजकपदसमभिव्याहारो वाक्यं इति तु न्यायः । ' नीलो घटः ' इत्यादिसमभिव्याहारवारणाय प्रयोजकान्तम् । श्रुतिस्थलीयपदसमभिव्याहारवारणाय अजन्यान्तं शाब्दबोधविशेषणम् । ' धेनुर्दक्षिणा ' इत्यादिपदसमभिव्याहारप्रयोज्यशाब्दबोधस्य धेन्वादिशक्तिज्ञानजन्यत्वात् प्रथमतः कर्तृत्वाद्यन्यतमेति । ' नीलो घटः ' इत्यादिपदसमभिव्याहारवारणाय द्वितीयं कर्तृत्वाद्यन्यतमेति । निरुक्तशाब्दबोधप्रयोजकत्वं निरुक्तशाब्दबोधानुकूलाकाङ्क्षायोग्यतादिमत्त्वम् । तेन कारणत्वादौ अगृहीततृतीयादिशक्तिकस्य विपरीतव्युत्पन्नस्य 'व्रीहिभि-

यंजेत' इत्यादिश्रुतिस्थलीयपदसमभिव्याहारात् कर्तृत्वाद्यन्यतमसंसर्गकव्रीह्यादिप्रकारकयागादिविशेष्यक– शाब्दबोधेऽपि नातिव्याप्तिः इति ध्येयम् ।

**ननु** एवं 'औदुम्बरो यूपो भवति' इत्यादौ वाक्योदाहरणत्वापत्तौ औदुम्बरतायाः वाक्यीययूपाङ्गत्वमुपेक्ष्य 'पशूनाप्नोति' इति द्वितीयाश्रुतिप्रमाणकपश्वङ्गत्वस्यैव उचितत्वात् औदुम्बराधिकरणसाधितयूपाङ्गत्वविरोधः । अत एव संनिध्यनुग्रहादपि न वाक्यीययूपाङ्गत्वाङ्गीकारः इति **चेन्न ।** यूपकर्तृकभवनाक्षिप्तायां भावनायां यूपेतरस्य कर्मत्वेन अन्वेतुमयोग्यत्वात्, आश्रयालाभेन च श्रौतपश्वङ्गत्वायोगात् तत्र वाक्यीययूपाङ्गत्वस्वीकारात् । न च 'सोमापौष्णं त्रैतमालभेत पशुकामः' इति प्रकृतस्य त्रिवर्ष– (त्रिवर्ण-) पशुसाध्यस्य यागस्य औदुम्बराश्रयत्वं संभवति । न च स्वसाधनद्रव्यपरिच्छेदद्वारकाश्रयत्वासंभवेऽपि अतिदेशप्राप्त– पशुनियोजनाङ्ग– यूपपरिच्छेदद्वारकाश्रयत्वसंभवः, यूपस्येव जुह्वादीनां अतिदेशप्राप्तत्वेन तत्परिच्छेदस्यापि द्वारताऽऽपत्तौ यूपानुवादानुपपत्तेः । अत एव आतिदेशिकपशुनियोजनं यूपद्वारा आश्रयः इत्यपि न । **अथ** 'यद्यपि चतुरवत्ती यजमानः, पञ्चावत्तैव वपा कार्या' इत्यत्र (यथा) अवदानानुवादेन पञ्चत्वविधिमङ्गीकृत्य हृदयाद्यवदानेऽपि पञ्चत्वसिद्धिः सिद्धान्तिता दशमे (भाट्ट. १०।७।१८, २० भा.), वपापदं अवयुत्यानुवादः, उपलक्षणं वा सत् सर्वानुवादः । तथा अत्रापि यूपपदमवयुत्यानुवादः, उपलक्षणं वा स्यात् **इति चेन्न ।** तत्र हि हृदयादिषु पञ्चावदानाभावे चतुरवदानघटकद्व्यवदानस्य अतिदेशादेव प्राप्तेः 'एकादश वै पशोरवदानानि, तानि द्विर्द्विरवद्यति' इत्यस्य वैयर्थ्यापत्त्या अवदानस्य निरुक्तानुवादत्वस्वीकारः । तदा हि अवदानमात्रोद्देशेन पञ्चत्वविधौ हृदयाद्यवदानेष्वपि पञ्चत्वप्राप्तेः हविषः त्र्यवदानप्राप्तौ द्व्यवदानविधिः तद्व्यावर्तकत्वेन सार्थकः । न च हृदयादिष्वपि जामदग्न्यादीनां पञ्चावदानस्य अतिदेशादेव प्राप्तेः तेषां हविषः त्र्यवदानप्राप्तौ द्व्यवदानविधिः सार्थकः इति नव्योक्तं युक्तं इति **वाच्यम्** । तथापि विधेः पाक्षिकफलत्वमुपेक्ष्य वपापदस्य एकस्यैव पाक्षिकानुवादत्वौचित्यात् । प्रकृते तु न कस्यापि वैयर्थ्यादिकम्, इति किमिति यूपपदस्य पाक्षिकानुवादत्वाङ्गीकारः ।

इदं च प्राचीनाभ्युपेतवाक्यार्थानुसारेणोक्तम् । **वस्तुतस्तु** अवदानोद्देशेन पञ्चत्वविधौ हृदयादिवाक्यैः हृदयाद्येकादशेतराङ्गेषु अवदानस्य परिसंख्यातत्वात् वपायामवदानस्यैव अभावे पञ्चत्वप्रसक्त्यभावात् वपाऽनुवादानुपपत्तेः एकप्रसरताभङ्गापत्तेश्च नायं वाक्यार्थः समञ्जसः । किंतु पञ्चत्वविशिष्टावदानान्तरस्य अतिदेशतः पूर्वप्रवृत्त्या पञ्चत्वविशिष्टप्राकृतावदानस्य वा वपोद्देशेन विधिः, तस्यैवोपस्थितत्वात् । हृदयादिवाक्ये हृदयाद्युद्देशेन विधिः इति हृदयादिषु तदङ्गपञ्चत्वप्राप्तिः इति नव्यमताश्रयणे न वपापदस्य अवयुत्यानुवादत्वादिप्रसक्तिः । परंतु नव्यमते अवदानविधिसमकालप्रवृत्तानां हृदयाद्यवदानविधीनां तदुत्तरप्रवृत्तौ द्व्यवदानविधिपाक्षिकफलकत्वापत्त्यतिरिक्तप्रबलप्रमाणं न पश्यामः । **किंच** पञ्चत्वविशिष्टावदानान्तरस्य वपोद्देशेन विधौ अवदानोद्देशेन पञ्चत्वविशेषणविधिकल्पनायां अवदानस्वरूपे आनर्थक्यप्राप्तौ वपाभ्यासापूर्वसाधनत्वलक्षणायाः आवश्यकत्वात् हृदयाद्यवदानेषु कथं पञ्चत्वप्राप्तिः ? नहि अभ्यासविशेषधर्मस्य अभ्यासान्तरे प्राप्तिः संभवति, उपदेशस्य अभ्यासविशेषविषयत्वात्, अतिदेशस्य अभ्यासयोः प्रकृतिविकारभावाभावेन असंभवात् । पञ्चत्वविशिष्टप्राकृतावदानस्यैव वपोद्देशेन विधौ तु प्रकृतविधेरेव वपाभ्यासापूर्वसाधनीभूतावदाने पञ्चत्वविधौ तात्पर्यात् नावदानान्तरे पञ्चत्वविधिः संभवति, इति तदधिकरणसिद्धान्तः चिन्त्य एव इति न वपापददृष्टान्तेन यूपपदस्य अवयुत्यानुवादत्वादि इति । अतश्च आश्रयालाभात् न पशूद्देशेन औदुम्बरत्वविधिः संभवति इति वाक्यात् यूपाङ्गत्वमेव औदुम्बरतायाः । न च प्रकारान्तरेण आश्रयालाभेऽपि प्रकृतवाक्ये एव औदुम्बरत्वकरणकपशुकर्मकयूपाश्रयकभावनाविधानात् यूपात्मकौदुम्बरत्वाश्रयलाभः, आश्रयत्वस्य साध्यत्वातिरिक्तस्य दुर्वचत्वेन भावनायाः अनेककर्मत्वात् वाक्यभेदापत्तेः । यत्तु **राणके** (सुधायां औदुम्बराधिकरणे पृ. ७७) अतिदेशप्राप्तस्य पशुनियोजनस्य यूपद्वारा आश्रयत्वमाशङ्क्य 'प्रकृतौ हि प्रत्यक्षोपदिष्टस्य



होमप्रणयनादेः पश्चात् साधनापेक्षायां पयश्चमसादिवत् फलार्थस्यापि (दधि-) गोदोहनादेः आश्रयीभूतसाध्यापेक्षादर्शनात् उभयाकाङ्क्षावशात् साधनत्वमवसीयते । न चैतावता अङ्गत्वप्रसङ्गः, तादर्थ्येन विधानाभावात् । अत एव गुणकामप्रयोगे प्रासङ्गिकोपकारिणा गोदोहनादिना कार्यसिद्धौ चमसादेरनङ्गत्वेन तदभावे वैगुण्याभावः (–भावादनादरः) । विकृतौ तु अखण्डकरणोपकारमुखेन क्लृप्तोपकारप्राकृतखादिरत्वादिविशिष्टस्यैव पशुनियोजनस्य (पशुशब्दो नास्ति–सु.) अतिदेशात् साधनानाकाङ्क्षस्य परार्थविहितसाधनान्तरग्राहकत्वं न युक्तम् । अन्यतराकाङ्क्षाहेतुकस्य संबन्धस्य इतराकाङ्क्षोद्भावन– (क्षोत्थापन–) पूर्वकत्वात् विधिमन्तरेण च आकाङ्क्षानुत्थापनात् (आकाङ्क्षोत्थापनायोगात्)' इति परिहृतम् । **तच्चिन्त्यम् ।** प्रणयनस्य श्रुत्यवगताङ्गताकचमसेन निराकाङ्क्षतया गोदोहनाश्रयत्वस्य उभयाकाङ्क्षालभ्यत्वासंभवात् गोदोहनादेः फलसाधनताबोधनसमकालमेव हि प्रणयने चमससाध्यत्वबोधः, तदैव प्रणयनस्य नैराकाङ्क्ष्यम्, गोदोहने फलसाधनत्वान्यथाऽनुपपत्तिमूलकाकाङ्क्षाबललभ्यः प्रणयने गोदोहनसाध्यत्वबोधस्तु तदुत्तरकालीनः, इति 'सर्वतो बलवती ह्यन्यथाऽनुपपत्तिः' इति न्यायेन गोदोहनीयफलसाधनत्वान्यथाऽनुपपत्त्या निराकाङ्क्षस्यापि प्रणयनस्य आकाङ्क्षामुत्थाप्य गोदोहनाश्रयत्वाङ्गीकारः । 'काम्यं नित्यस्य बाधकम्' इति न्यायेन काम्यप्रयोगे चमसस्य अनङ्गत्वम् । इत्थमेव च उत्पत्तिशिष्टसोमेन निराकाङ्क्षस्यापि ज्योतिष्टोमस्य फलोद्देशेन विधीयमानोद्भिद्गुणाश्रयत्वं उद्भिदधिकरणे पूर्वपक्षा-(क्ष्या)युक्तं संगच्छते । अत एव प्रबलप्रमाणावगतसाधनान्तरावरुद्धक्रियायाः फलार्थगुणाश्रयत्वं स्थानप्रमाणकमेव । दध्याद्याश्रयत्वस्य प्राकरणिकत्वव्यवहारस्तु संनिधिपाठनिबन्धनः । अतः प्राकृतखादिरत्वावरुद्धेऽपि यूपे औदुम्बरतानिवेशसंभवात् आश्रयत्वं संभवत्येव इत्यस्मदुक्तरीत्यैव आश्रयत्वखण्डनम्, इत्यलमनया प्रासङ्गिकचिन्तया ।

**न च** 'धेनुर्दक्षिणा' 'उच्चैर्ऋचा क्रियते' 'सह श्रपयति' इत्यादिषु यथाक्रमं दक्षिणोद्देशेन अभेदसंबन्धेन धेनोः, ऋग्वेदविहितकर्मोद्देशेन मन्त्रघटितपरंपरासंबन्धेन उच्चैष्ट्वस्य, श्रपणोद्देशेन स्वरूपसंबन्धेन साहित्यस्य च विधेयत्वात् कर्तृत्वाद्यन्यतमत्वस्य शाब्दबोधाविषयत्वेन अव्याप्तिः इति **वाच्यम्** । वस्तुतो धेन्वादीनां करणत्वेन भावनाऽन्वयस्यैव तत्तदुदाहरणे विवक्षितत्वात् । तथाहि, 'धेनुर्दक्षिणा' इत्यत्र तावत् सुबन्तयोः परस्परान्वयाभावात् 'न हि क्रियारहितं वाक्यमस्ति' इति न्यायेन क्रियापदाध्याहारः आवश्यकः । तत्र च भावनायाः भाव्यापेक्षायां दक्षिणापदस्य दक्षिणाकार्यपरतया भाव्यसमर्पकत्वम् । करणाकाङ्क्षायां च करणतासंसर्गेण धेनुपदार्थस्य, धेनुपदोत्तरप्रथमायाः वा करणत्वलक्षणया धेनुकरणत्वस्य भावनायामन्वयः । धेनुदक्षिणयोः अभेदबोधस्तु पाष्ठिकः । धेनुत्वैकत्वयोर्विधाने वाक्यभेदस्तु विशिष्टकारकविधानात् अनाशङ्क्यः । एवं 'उच्चैर्ऋचा क्रियते' इत्यत्र वेदोपक्रमानुरोधात् धातुना ऋग्वेदविहितकर्मलक्षणात्, तस्य च प्राप्तत्वेन भावनायां उद्देश्यत्वेन अन्वये जाते करणाकाङ्क्षायां उच्चैष्ट्वस्य मन्त्रघटितपरंपरासंबन्धावच्छिन्नकरणतासंसर्गेण भावनाऽन्वयः, न तु मन्त्रघटितपरंपरासंबन्धमात्रेण, तथात्वे भावनायाः करणाकाङ्क्षोपशान्त्यभावात् । एवं 'सह श्रपयति' इत्यत्रापि प्रमाणान्तरप्राप्तश्रपणोद्देश्यकभावनायां साहित्यस्य कर्तृत्वाद्यन्यतमसंसर्गेणैव अन्वयः । तथाहि, दर्शपूर्णमासयोः 'यस्य हविर्निरुप्तं पुरस्तात् चन्द्रमा अभ्युदियात्, स त्रेधा तण्डुलान् विभजेत् । ये मध्यमाः स्युः तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत् । ये स्थविष्ठाः, तानिन्द्राय प्रदात्रे दधंश्चरुम् । येऽणिष्ठाः, तान् विष्णवे शिपिविष्टाय शृते चरुम्' इति श्रुतम् । तत्र अमावास्याकर्मणः चन्द्राभ्युदयावच्छिन्नदिनप्रारम्भे निमित्ते 'त्रेधा तण्डुलान्' इति वाक्येन अपनीतपूर्वदेवतासंबन्धकानां प्रकृतहविषामेव देवतान्तरसंबन्धबोधनार्थानि त्रीणि वाक्यानि, न तु कर्मान्तरविधायकानि, अपरित्यक्तपूर्वकर्मसंबन्धकप्रकृतहविषामेव देवतान्तरसंबन्धात् । अत एव पूर्वहविर्देवतान्तरसंबन्धस्य निरूपकीभूतयागापेक्षायां 'ऐन्द्रवायवं गृह्णाति' इत्यत्रैव पूर्वप्रकृतयागा एव निरूपकाः । अतः आग्नेयस्य मध्यमादिभेदेन वारत्रयमावृत्तिः । दधियागपयोयागयोः स्थविष्ठाणिष्ठसाध्य-

यागाभ्यां साभ्यासाभ्यां सह तन्त्रेणानुष्ठानं इति सिद्धान्तितं षष्ठे ( भाट्ट. ६।५।१ )। तत्र च मध्यमाद्युद्देशेन दातृत्वादिगुणविशिष्टदेवताविधिः, समानाधिकरणपदस्थले परस्परान्वयस्य क्लृप्तत्वात् । अतो न विधेयानेकत्वनिमित्तको वाक्यभेदः । उत्तरवाक्ययोः द्रव्यद्वयोद्देश्यत्वप्रयुक्तवाक्यभेदस्तु स्वीक्रियते । अभ्युदितेष्टिप्रकरणस्थ 'सह श्रपयति' इति वाक्येन संप्रतिपन्नदेवताकहविषः सहश्रपणविधानात् चरुत्वाधिकरणत्वे आर्थिके अनूद्येते । अतः द्रव्यदेवताविशिष्टभावनान्तरविधिपक्षे गौरवपात्तेः द्रव्योद्देशेन देवतान्तरविधिपक्ष एव श्रेयान् इति प्राञ्चः । **नव्यास्तु** समानाधिकरणपदस्थले परस्परान्वयस्वीकारे 'पञ्चदशाज्यानि' इत्यत्रापि स्तोत्रोद्देशेन पञ्चदशत्वसंख्याविशिष्टाज्यविधानापत्तेः, उत्तरवाक्ययोः स्थविष्ठादिप्रकृतिकस्य पुरोडाशेन समं सहश्रपणापत्त्या चरुत्वविधेरपि आवश्यकत्वात् । द्रव्योद्देशेन देवतान्तरविधिपक्षे विधेयानेकत्वनिमित्तकवाक्यभेदापत्तेः द्रव्यदेवता-तद्गुणचरुत्वादिविशिष्टभावनान्तरविधिपक्षः एव श्रेयान् इत्याहुः । तत्र च श्रपणविधिं विनैव श्रपणस्य प्राप्तत्वात् 'सह श्रपयति' इत्यनेन संप्रतिपन्नदेवताकहविः- श्रपणोद्देशेन साहित्यं विधीयते । तच्च एककालावच्छेदेन एकपात्राधिकरणकत्वं निरुक्तैकपात्राधिकरणतासंबन्धेन आधारतानिरूपकाधेयतासंबन्धेन भावनाऽन्वयि इति कर्तृत्वाद्यन्यतमस्य शाब्दबोधविषयत्वात् नोक्तातिप्रसङ्गः । **यद्वा** एकपात्रवृत्त्येककालावच्छिन्नाधिकरणत्वसंबन्धेन भावनान्वयि इति नोक्तदोषः । न च श्रपणानुकूलकृतिरूपभावनायाः आत्मवृत्तित्वात् निरुक्तसंबन्धैः निरुक्तसाहित्यविशिष्टत्वासंभवः, 'यजेत स्वर्गकामः' इत्यत्र स्वर्गनिरूपितकरणतासंबन्धेन भावनायां यागविशिष्टत्ववत् श्रपणानुयोगिकनिरुक्ततत्तत्संबन्धेन निरुक्तसाहित्यविशिष्टत्वस्यापि प्रकृतभावनायां संभवात् । यदि तु तत्र करणतानिरूपकोद्देश्यकत्वमेव संबन्धः, तर्हि प्रकृतेऽपि निरुक्ततत्तत्संबन्धानुयोगिश्रपणोद्देश्यकत्वमेव संबन्धः इति न क्वापि अनुपपत्तिः । **अथ** श्रपणोद्देशेन साहित्यविधौ दध्नः पयसः श्रपणाभावात् तत्र कथं साहित्यप्रतीतिः, अत एवायं साहित्यविशिष्टश्रपणविधिः । तत्र आग्नेयद्रव्ये श्रपणप्राप्तावपि दधिपयसोः तत्प्राप्तिरेव विशेषणांशे विधेः फलमिति प्राचीनैरुक्तम् । भवन्मते तु श्रपणांशे विध्यनङ्गीकारात् दधिपयसोः श्रपणं न स्यात्, नितरां ( नतरां ) च तदुद्देशेन विधीयमानं साहित्यं इति चेत् । सत्यम् । दधिपयसोः न प्रमाणान्तरेण श्रपणप्राप्तिः, तथापि श्रपणोद्देशेन साहित्यविधौ केनचित् साहित्यावश्यकत्वे अनुपस्थितयत्किंचिद्द्रव्यस्य साहित्यनिरूपकत्वकल्पने गौरवात् लाघवेन प्रदानसाहित्यनिरूपकत्वेन क्लृप्तयोः दधिपयसोरेव तन्निरूपकत्वं कल्प्यते । तथा च प्रहरणे शाखासाहित्यवशेन शाखाप्रहरणवत् आग्नेयद्रव्यश्रपणे दधिपयःसाहित्यवशेन दधिपयसोरपि श्रपणविधिः । एवं च तृतीयविधिप्रकाराश्रयणेन ( धात्वर्थोद्देशेन अन्यकरणकभावनाविधिः ) प्राप्त्युपपत्तौ प्राचां पञ्चमविधिप्रकाराश्रयणमपि ( गुणविशिष्टधात्वर्थकरणकभावनाविधिः ) अप्रामाण्यं प्रकटयति । न च संप्रतिपन्नदेवताकहविःश्रपणस्यैव उद्देश्यतायां प्रमाणाभावात् श्रपणमात्रस्य उद्देश्यत्वे मध्यमसाध्ययागाभ्यासीयश्रपणेऽपि केनचित् साहित्यापत्तिः इति वाच्यम् । लाघवानुरोधेन प्रदानसाहित्यनिरूपकनिरूपितसाहित्यस्यैव अत्र विधेयत्वेन पुनराधेयन्यायेन ( अग्निहोत्रे उभयाग्निनाशे० ६।४।८ ) विधेयसामर्थ्यानुरोधेन उद्देश्यसंकोचात् संप्रतिपन्नदेवताकहविःश्रपणस्यैव उद्देश्यत्वे मध्यमसाध्ययागीयश्रपणे साहित्याप्रसक्तेः इति ध्येयम् । **केचित्तु** 'समभिव्याहारो वाक्यं' इति प्राचीनप्रवादस्य साध्यत्वादिवाचकद्वितीयाद्यभावे सति वस्तुतः शेषशेषिणोः सहोच्चारणं वाक्यमित्यर्थः ( मीन्या. १६ ३ )। स्वप्रकृत्यर्थनिष्ठशेषित्वबोधिकानां विभक्तीनां शेषिपदोत्तरत्वेन, स्वप्रकृत्यर्थगतशेषत्वबोधिकानां च शेषपदोत्तरत्वेन अभावे सति, इति सत्यन्तार्थः। तेन प्रयाजशेषाभिघारणसक्त्वादिविनियोजकवाक्यसंग्रहः । शेषशेषिणोः वाचकपदयोः एकान्वयबोधोपयोगिसंनिधिविशेषेण उच्चारणं इति शेषशेषिणोः सहोच्चारणं इत्यस्यार्थः । तेन न प्रकरणविषयातिप्रसङ्गः इत्याहुः ( भाट्टालंकारः )। तत्तु स्वत्वाननुगमात् उपेक्षणीयम् । निरुक्तलक्षणं ब्राह्मणवाक्यस्यैव । मन्त्रवाक्यं तु एकान्वयबोधोपयोगिमन्त्रपदसमभिव्याहारः ।



अत एव 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां निर्वपामि' इति मन्त्रे कर्तृत्वाद्यन्यतमशक्तिज्ञानाजन्यस्य कर्तृत्वाद्यन्यतमसंसर्गकस्य कर्तृत्वाद्यन्यतमलक्षणज्ञानजन्यस्य वा कर्तृत्वाद्यन्यतमशाब्दबोधस्य अजननेऽपि उक्तपदसमभिव्याहाररूपवाक्यान्तरात् देवस्यत्वादिपदानां स्वार्थविशिष्टनिर्वापप्रकाशनद्वारा निर्वापाङ्गत्वम् । विधिवाक्यमन्त्रवाक्ययोः अयमपरो विशेषः, यत् विधिवाक्ये कर्तृत्वाद्यन्यतमलक्षणया, संसर्गविधया तद्भानाङ्गीकारेण वा, स्वत एव विनियोजकत्वम्, मन्त्रवाक्ये तु 'देवस्यत्वादिपदैः निर्वापं प्रकाशयेत्' इत्यादिवाक्यान्तरकल्पनया । देवस्यत्वादिपदानां मन्त्रघटकपदार्थत्वाभावेन विध्यभावेन च मन्त्रवाक्यस्य स्वतः अविनियोजकत्वात् । विध्यभावादेव च देवस्यत्वादिपदार्थानां निर्वापाङ्गत्वमपि न स्वतो मन्त्रवाक्यगम्यम्, अपि तु श्रुतिघटितवाक्यान्तरकल्पनया इति बोध्यम् । अत्र विधिवाक्यस्य योग्यताज्ञानं विना लक्षणया संसर्गविधया वा कर्तृत्वाद्यन्यतमबोधकत्वाभावेन योग्यतारूपलिङ्गानुमापकत्वेन अङ्गत्वप्रमाणत्वेऽपि न लिङ्गतो दौर्बल्यम्, प्रत्युत सश्रुतिकवाक्यान्तरकल्पनया प्रमाणभूतात् लिङ्गात् स्वतो विनियोजकत्वेन प्रबलत्वमेव । अत एव अग्नीषोमीयप्रकरणपठितस्य 'त्वं ह्यग्ने प्रथमो मनोता' इति मनोतामन्त्रस्य केवलाग्निप्रकाशकस्य उभयदेवत्याग्नीषोमीये विनियोगासंभवात् ज्योतिष्टोममहाप्रकरणरूपसामान्यसंबन्धबोधकप्रमाणसहकृतलिङ्गेन केवलाग्निदेवताके सवनीये उत्कर्षप्राप्तौ 'यद्यप्यन्यदेवत्यः पशुः आग्नेय्येव मनोता कार्या' इति ब्राह्मणवाक्येन लिङ्गबाधेन अग्नीषोमीयाङ्गत्वं इत्युक्तं दशमे ( १०।४।२२ )। मन्त्रवाक्यस्य तु सामर्थ्यकल्पनाद्वारा सश्रुतिकवाक्यान्तरकल्पकस्य द्व्यन्तरितप्रामाण्यकतया श्रुतिकल्पनारूपैकान्तरितप्रामाण्यकात् लिङ्गात् दुर्बलत्वम् । अत एव 'स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि । तस्मिन्त्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः ॥' इत्येकान्वयबोधोपयोगिपदसंनिधिरूपात् वाक्यात् संपूर्णस्य सदनाङ्गत्वप्रसक्तौ तद्बाधेन लिङ्गात् पूर्वार्धस्य सदने, उत्तरार्धस्य सादनेऽपि विनियोगः । तच्छब्दस्तु 'तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षा' इत्यत्रेव वाक्यान्तरीयार्थपरामर्शकत्वेन युज्यते इत्युक्तं बलाबलाधिकरणे । इति वाक्यनिरूपणम् । **मुरारि.** पृ. ११७५–८१.

* वाक्यं पदद्वयान्वयः । वि. ३।३।८. * वाक्यं प्रकरणात् बलवत् । **भा.** २।२।८।२२, २।२।१२।२७, २।३।११।२४ पृ. ६१३, ३।१।५।११, ३।१।६।१२, ३।१।१०।२०, ३।३।७।१४, ३।४।१।१, ३।४।५।१४, ३।४।६।१७, ३।६।१३।३५, ४।३।२।४, ६।५।१५।४५, ८।४।५।१७, ९।१।२।२, ९।१।५।११, १०।३।११।४१. * वाक्यं प्रकरणात् बलीयः । 'इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम्' इत्यत्र 'इन्द्राग्नी' पदस्य लिङ्गात् दर्शाङ्गत्वे सिद्धे 'इदं हविः' इत्यादेरपि तदेकवाक्यत्वात् दर्शाङ्गत्वम्, न तु प्रकरणात् पूर्णमासाङ्गत्वम् । **मीन्या.** * वाक्यं प्रकरणात् बलीयः । प्रकृतो ( प्रकरणेन ) वाजपेयः, अध्वर्युः पुनर्वाक्येन । **भा.** १०।३।२१।७४, * वाक्यं प्रकरणात् बलीयः । रशनाधर्माः प्रकरणात् अग्नीषोमीयस्य । 'त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति' इति वाक्यात् यूपमात्रस्य । ३।६।१०।३१, * वाक्यं प्रकरणाद् बलीयः । 'वेद्यां हवींषि आसादयति' इति हविर्मात्रं वाक्याद् गम्यते, प्रधानहवींषि प्रकरणात् । ३।७।१।२, * वाक्यं बलवत् क्रमश्च दुर्बलः । २।४।२।३३. * वाक्यम् । भवत्युक्तक्रियातः अन्यक्रियायोगाभावे वाक्यासमाप्तेः, असमाप्तस्य च अर्थाभावेन अर्थद्वारवाक्यान्तरान्वयायोगः । **सु.** पृ. ७४४. * वाक्यं भिद्येत उभयविधाने । **भा.** १।२।१।७, १०।७।१५।४९, * वाक्यं लिङ्गान्न बलीयः । ३।१।६।१२ पृ. ६८६. * वाक्यं लिङ्गश्रुती कल्पयित्वा अङ्गत्वे मानम् । **मीन्या.** * वाक्यं विशेषवृत्ति, पदं सामान्यवृत्ति । **भा.** ३।१।६।१२ पृ. ६८९. * वाक्यं विशिष्टपदक्रमसमूहात्मकम् । **सु.** पृ. १०९. * वाक्यं श्रुत्या बाध्यते । **भा.** ४।१।५।१४, * वाक्यं श्रुतेर्दुर्बलम् । 'द्यावापृथिव्यां धेनु०' इत्यादौ गवि सा च श्रुतिः, द्रव्यसंबन्धो वाक्येन स्यात् । तच्च दुर्बलं श्रुतेः । १०।२।

२९।६८, * वाक्यं श्रुत्यसंभवे क्रमते, न संभवन्त्यां श्रुतौ । ३।१।७।१३ पृ. ७१४. * वाक्यं संनिवेशलवत् । ' अथैतस्य हारियोजनस्य सर्वं एव लिप्सन्ते ' अत्र चमसिनां संनिधिः ' अथ–एव–सर्व-' शब्दघटितवाक्येन च ग्रावस्तुतोऽपि अचमसिनः ग्रहणम् । वि. ३।५।९. * वाक्यं समभिव्याहारः । स च साध्यत्वादिवाचकद्वितीयाद्यभावेऽपि वस्तुतः शेषशेषिणोः सहोच्चारणम् ' यस्य पर्णमयी जुहूर्भवति ' अत्र पर्णताया जुहूशेषत्वं समभिव्याहारमात्रात् । **मीन्या.** * वाक्यं समाख्याया बलवत् । **वा.** ३।३।७।१४ पृ. ८३७. * वाक्यं समाख्यानात् बलवत् । भक्षानुवाकगतानां लिङ्गावगतग्रहणाद्यङ्गभावानां ' सय्यासं ' इत्यादिपदैरेकवाक्यतापन्नानां शेषपदानां समाख्याप्राप्तं भक्षणाङ्गत्वं बाधित्वा वाक्येन ग्रहणादिष्वेव विनियोगः । **मीन्या.** * वाक्यं साकाङ्क्षं अनर्थकम् । **सु.** पृ. ६९०. * वाक्यं स्थानाद् बलवत् । यथा– अग्नीषोमीयक्रमेण प्रसक्ततन्मात्राङ्गत्वानां लिङ्गावगतपशुत्वाद्यङ्गभाव-'परिवीत'-पदैकवाक्यत्वानां ' युवा सुवासाः ' इति क्रियमाण-' परिव्याणानुवादि– ' मन्त्रगतानां पदानां क्रमं वाक्येन बाधित्वा तेषां सवनीयपरिव्याणे विनियोगसिद्धिः । **मीन्या.** * वाक्यं हारियोजनभक्षणे ग्रावस्तुतो भक्षहेतुः । **त्रि.** ३।५।११. * वाक्यं हि संबन्धस्य विधायकम् । **भा.** १।२।१७ पृ. ११९ । **वा**– वाक्यं हि एकं एकस्यैव संबन्धस्य विधायकम् । पृ. १२१. * वाक्यं हि संबन्धप्रत्यायकम् । यथासंभवमनेकविधः संबन्धो वाक्याद् गम्यते । क्वचित् क्रियाकारकसंबन्धः । क्वचिद् विशेषणविशेष्यसंबन्धः । क्वचित् लक्ष्यलक्षणसंबन्धः । इत्येवंप्रकाराः संबन्धविशेषाः । **भा.** १०।६।२।३, * अनेकस्मिन् अवधार्यमाणे भिद्येत **वाक्यम्** । १।१।४।४, * अपरिपूर्णं यद्वाक्यं तत् अध्याहारेण वा पूर्येत, व्यवहितकल्पनया वा । तत्र अध्याहारात् व्यवहितकल्पना ज्यायसी । अध्याहारे हि अश्रुतः शब्दः कल्प्येत, इतरत्र श्रुतेन संबन्धः । ७।४।२।१०, * अपूर्णं यद्वाक्यं तत्पूरणसमर्थेनावयवेन बुद्धौ संनिहितेन एकवाक्यतां याति । यथा ' दर्शपूर्णमासाभ्यां यजेत ' इति विध्यादिः, ' कथम् ' इति विध्यन्तापेक्षः, अग्न्यन्वाधानादिविधानकाण्डेन पाठाद् बुद्धौ संनिहितेन एकवाक्यतां याति ' दर्शपूर्णमासाभ्यां यजेत इत्थम् ' इति । एवं विध्यन्तापेक्षो यो वैकृतो विध्यादिः सोऽपि वैदिकेन विध्यन्तेन अनुमानाद् बुद्धौ संनिहितेन एकवाक्यतां यास्यति । ' सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः ' आग्नेयवत् इति । ८।१।२।२, * अर्थैकत्वाच्चैकं वाक्यं समधिगतम् । ४।३।३।७, * असति पुनः पक्षान्तरे उच्चारणानर्थक्यप्रसङ्गपरिजिहीर्षया अनेकार्थं वाक्यं अभ्युपगन्तव्यं भवति । ३।३।१५।४६, * एकं वाक्यं न अनेकं विधातुमर्हति । २।२।४।१०, * एकार्थं च वाक्यं समधिगतम् ( न द्व्यर्थम् ) । ४।३।५।१०, * एकार्थः पदसमूहो वाक्यम्, यदि च विभज्यमानं साकाङ्क्षं पदं भवति । यावता क्रियाया उपकारः प्रकाश्यते तावद्वक्तव्यत्वात् वाक्यमित्युच्यते । तस्य विशिष्टस्य वाचक एतावान् पदसमूहः तद् वाक्यम् । २।१।१४।४६, * एकार्थविधाने हि एकं वाक्यं भवति । २।३।३।४, * क्वचित् पादेऽपि परिपूर्णं वाक्यम् । ऋच्यपि, क्वचिदर्धर्चेऽपि परिपूर्णम् । ९।२।३।१८, * दुर्बलं च वाक्यं श्रुतेः । ६।४।६।२३. * न चापरिपूर्णं वाक्यं वाक्यान्तरमाकाङ्क्षति । **वा.** २।२।६।१७ पृ. ५१०. * न च एकेन केनचित् संबन्धे विहिते, परिपूर्णे वाक्ये, पुनरपरं वाक्यं कल्पयितव्यं भवति । **भा.** १०।४।८।१६, * न च महावाक्ये सति, अवान्तरवाक्यं प्रमाणं भवति । पदान्तरस्य बाधनात् । यथा नोद्यन्तमादित्यमीक्षेतेति प्रतिषेधो गम्यते महावाक्यात्, अवान्तरवाक्यादीक्षणविधानम् । ६।४।७।२५, * न च वाक्यं श्रुतिमपबाधितुमर्हति । २।२।११।२६, * न च श्रुत्या अन्येन संबध्यमानम्, वाक्येन आच्छिद्य अन्येन संबन्धमर्हति । ३।१।७।१४ पृ.७२४. * नहि किंचिदपि वाक्यं शब्दसामर्थ्येन अर्थाभिधानेन पदान्तरसंनिधानेन वा विना विद्यते । **वा.** ३।३।७।१४ पृ. ८२६. * प्रयोजनं यावतः पदसमूहस्यैकम्, तावदेकं वाक्यम् ( पूर्वपक्षे ) । **भा.** ३।२।९।२५, * यज्ञायुधवाक्यं अनुवादः दर्शपूर्णमासयोः । ४।१।४।



७–१०. * यदा वाक्यं तदा अन्यपदार्थसंबन्ध एव भवति, न अवान्तरसंबन्धः । यदा समासः तदा अवान्तरसंबन्धो लभ्यते । **टुप्.** १०।६।३।८. * यावन्ति पदानि एकं प्रयोजनमभिनिर्वर्तयन्ति तावन्ति एकं वाक्यम् । **भा.** २।२।१२।२७. * विभज्यमानसाकाङ्क्षसंहत्यार्थविशिष्टैकार्थप्रतिपादकपदसमुदायः वाक्यम् । **सु.** पृ. ५३३. * विशिष्टपदरचनात्मकं वाक्यम् । **वा.** १।३।८।२४ पृ. २६२. * शब्दश्च बलवान् न वाक्यम् । **भा.** ३।३।१०।२०, * संहत्य अर्थमभिदधति पदानि वाक्यम् । एकार्थं अनेकपदं वाक्यं इत्युक्तमेव तदेतत् सर्वेष्वेव वाक्येषु समवेतं विविक्तं च दृश्यते । ३।३।७।१४ पृ. ८२४, ८२६. * संघातसिद्ध्यर्थं स्वस्वपदार्थं अभिदधति पदानि वाक्यम् । **सु.** पृ. १२०९. * समुदाये वाक्यपरिसमाप्तिः । प्रत्येकं वाक्यपरिसमाप्तिः ' प्रायणीयोदयनीययोः ' इति । तत्र द्वंद्वभाविनोः प्राधान्यात् सत्यामपेक्षायां भवति समासः । समासे च इतरेतरयोगात् न एकादशिनी केवले प्रायणीये । सा उदयनीययुक्ते भवितुमर्हति । तद्वदुदयनीयेऽपि । तस्मात् समुदाये वाक्यपरिसमाप्तिः । यदि पुनः नोपादेयत्वेन अश्रोष्येताम्, तत्र द्वंद्वभाविनोरप्राधान्यम् । अप्राधान्ये असत्यामाकाङ्क्षायां न समासो भविष्यति । तत्र प्रत्येकं वाक्यपरिसमाप्तिः स्यात् । **भा.** १०।६।८।८. * सर्वमेव हि वाक्यं स्वार्थे पर्यवसिते अर्थान्तरापेक्षां न जहाति, न च तावता तदसमाप्तं भवति । या तु असौ अपेक्षा सा वाक्यान्तरेण पूरयिष्यते इत्यवगमात् न वाक्यान्तरसंबन्धं न सहते । **वा.** २।२।६।१८ पृ. ५१६, * साकाङ्क्षपदसंनिधिमात्रं हि वाक्यम् । ३।३।७।१४ पृ. ८५१. * स्वेन स्वेन पदसमूहेन परिपूर्णमेकं वाक्यम् । **भा.** ३।१।१४।२५. * स्वरसप्रवृत्तं वाक्यं यावत्येव विस्पष्टं आनर्थक्यं तावन्मात्रादेव निवर्तताम् । **वा.** ३।७।१।२ पृ. १०७४.

**वाक्यान्यपि द्विर्गतानि भवन्तीति न्यायः ।** यथा शब्दस्याप्यर्थवद्द्विर्गतत्वमित्यर्थः । तद्यथा, ' श्वेतो धावति ', ' अलम्बुसानां याता ' । अत्र श्वेत इति छेदेन कीदृश इत्यस्योत्तरमिदमिति । एवं केषां जनपदानां गन्ता, को वा समर्थ इति प्रश्ने, उत्तरम्– अलम्बुसानां याता । अलम्बुसा देशविशेषाः । बुसानां पलालवर्णानां याता प्रातिमान्, अलं समर्थ इति चार्थः । **साहस्री.** ४२८.

* वाक्यानि आख्यातोपक्रमाण्येवेति न नियमः । तेषां त्वनियमेनैव प्रयोगः सर्वदा स्थितः ' गां पश्य ' ' पश्य गां ' च इति । **वा.** ३।४।४।१३ पृ. ९२९. * वाक्यानि लौकिकानि विज्ञातेऽर्थे प्रयुज्यमानानि अध्याहार्यपदानि, गौणानि, विपरिणतव्यवहितार्थानि च प्रयुज्यन्ते । **भा.** ४।३।१।२. * ज्ञातं ह्यर्थं परस्मै प्रतिपादयितुं पुरुषाः प्रयुञ्जते **वाक्यानि । बृहती.** पृ. २२. * न च द्विष्ठानि वाक्यानि । एक एवार्थो वाक्यस्य । यत्रापि द्विष्ठत्वं तत्रापि पूर्णेनैव अर्थद्वयाभिधानात् एवं नास्ति । एतावांस्तु वाक्यान्तरे अल्पो विशेषः । तेषु एकैव विवक्षा वक्तृतो भेदस्तु श्वेतादौ । एकस्य विवक्षा श्वेतगुणो धावतीति, अपरस्य विवक्षा श्वा इतो धावतीति । **टुप्.** ४।३।२।४. * भवन्ति च द्विष्ठानि वाक्यानि । यथा श्वेतो धावति, अलम्बुसानां यातेति । श्वेतः अश्वादिः धावति, श्वा इतः धावति इति च । **भा.** ४।३।२।४. * यद्यपि महावाक्येषु अवान्तरवाक्यानि अप्रमाणं तथापि अर्थासंभवात् अविवक्षिते महावाक्ये अवान्तरवाक्याश्रयणात् विधिशक्तेरबाधः । **वा.** २।३।१।११. * वेदवाक्यानि समाम्नातारः समामनन्ति क्रिया कथमनुष्ठेयेति तां वदितुम् । **भा.** १।२।१।१. * **वाक्येन** अन्वयानुभवजनने आकाङ्क्षायोग्यताऽऽसत्तिज्ञानं सहकारि । ' घटः कर्मत्वं ' इत्यादेः निराकाङ्क्षतया स्वरूपायोग्यात्, ' अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम् ' इत्यादेः जनितान्वयबोधेन निराकाङ्क्षात्, ' वह्निना सिञ्चति ' इत्यादेः अयोग्यात्, ' गिरिर्भुक्तमग्निमान् देवदत्तेन ' इत्यादेः अनासन्नाच्च शाब्दबोधानुदयात् । **मणि.** पृ. ६५. * वाक्येन अविरुद्धं प्रकरणं अर्थवद् भवति । **भा.** ३।४।१।९. * 'वाक्येनाधानतुल्यानि पवमानहवींष्यपि । तेनासति तदङ्गत्वे सर्वयज्ञार्थतेष्यते ॥ ' प्रकरणगम्यां पवमानहविषां आधानार्थतां बाधित्वा वाक्येन अग्न्यर्थता

विज्ञायते ' यदाहवनीये जुहुति ' इति । वा. ३।१।१२।२२ पृ. ७३७. * वाक्येन क्वचित् देवानां देवतात्वम्, क्वचित् श्रुत्या । तद्धितनिर्देशे श्रुत्या चतुर्थीनिर्देशे वाक्येन । भा. २।२।९।२३, * वाक्येन नहि श्रुति-र्बाध्यते । ५।३।१४।४०, * वाक्येन प्रकरणं बाधित्वा काम्येष्टिषु उपांशुत्वं सर्वार्थं इति **पूर्वः पक्षः** । वाक्यमेव विशेषितं ' काम्या इष्टयः ' इति वचनात् उपांशुत्वं प्रधानार्थं इति उत्तरः पक्षः । ३।८।१९।३४–३५, * वाक्येन प्रकरणं बाधित्वा द्वादशोपसत्ता अहीनस्य न ज्योतिष्टोमस्य इति निश्चीयते । ३।३।८।१५–१६, * वाक्येन प्रकरणं बाधित्वा वारणवैकङ्कतानि पात्राणि यज्ञस्य भवन्ति । ३।१।१२।२२, * वाक्येन प्रकरणं बाधित्वा संतर्दनं उक्थ्यादिसंस्थासु निवेशनीयम्, नोत्कर्षः न चाग्निष्टोमे निवेशः । ३।३।११।२४–३१, * वाक्येन प्रकरणं बाध्यते । ३।३।१।८, ३।३।७।१४. * वाक्येन प्रकरणस्य न बाधः सामिधेनी-सप्तदश्यपाञ्चदश्यविषये । यद्यपि वाक्यं अविलम्बित-प्रवृत्तिकं तथापि आनर्थक्यपरिहाराय अपूर्वार्थत्व-सिद्ध्यै वाक्यस्य प्रकरणमपेक्ष्यैव प्रवृत्तिः । **सोम.** ३।६।२. * वाक्येन प्रकरणस्य बाधः । तेन संतर्दनस्य विकृतौ निवेशः । वि. ३।३।१६. * वाक्येन प्रकरणे बाध्यमाने न दोषो भविष्यति । **भा.** ३।३।१।८. * वाक्येन प्रत्यक्षेण चोदकप्राप्तमानुमानिकं बाध्यते ( चातुर्मास्यसाकमेधीयेष्टिषु ) द्व्यहकालत्वम् । **टुप्.** ५।१।११।२०. * वाक्येन वाक्यं बाध्यते यथा ' प्रोक्षि-ताभ्यामुलूखलमुसलाभ्यामवहन्ति ' इत्यत्र प्रोक्षिताभ्यां इति तृतीयायाः क्तप्रत्ययोक्तोलूखलमुसलगतकरणकारकानुवादि-त्वात् श्रौतविनियोगाभावेन वाक्यीयविनियोगे सति असौ वैयधिकरण्यान्नावघाते किंतु उलूखलमुसलयोरेव इति । **बाल.** पृ. १३५. * वाक्येन, हारियोजने ग्राव-स्तुतोऽपि सोमभक्षो ज्योतिष्टोमे । वि. ३।५।९. * आज्यभागक्रमं बाधित्वा **वाक्येन** अनुवाक्या-द्वित्वस्य प्रधानार्थत्वं इति **पूर्वपक्षः** । वा. ३।१।१३।२३, * ' ऐन्द्र्या गार्हपत्यमुपतिष्ठते ' इत्यत्र ऐन्द्र्या इति उपस्थातव्यमात्रापेक्षणात् गार्हपत्यमिति च साधन-मात्रापेक्षित्वात् विशेषसंबन्धो वाक्येनैव । ३।३।४।११. * न चापरिसमाप्तेन वाक्येन अर्थः कश्चित् अभि-धीयते । भा. ८।३।६।३६, * न च वाक्येनावगतोऽ-र्थोऽपह्नूयते । १।३।२।३ पृ. १८५, * यत्तूक्तं प्रसिद्धा चरोर्यागार्थतेति । प्रसिद्धिः वाक्येन बाध्यते । २।३।७।१८. * ' संस्कारे युज्यमानानां० ' ( ९।१।२।२ ) इत्यत्र वाक्येन ये संयुक्ताः ते अपूर्वार्था न संभवन्ति इति पूर्वपक्षः । **टुप्.** ९।१।२।२. * **वाक्यात्** एव संबन्धमवगच्छामः । यथा ' काष्ठान्याहर्तुकामोऽरण्यं गच्छेत्' इति यदि ब्रूयात्, ब्रूयादेतत्– दृष्टं तत्र प्रमाणा-न्तरेण अरण्यगमनस्य काष्ठाहरणसामर्थ्यं विद्यते इति । भा. ६।१।१।३ पृ. १३५३. * वाक्यात् प्रकरणं न बलवत्तरम् । वा. ३।६।२।९ पृ. १०३०. * **वाक्यात् लिङ्गं बलवत्** । **भा.** २।१।५।२४ पृ. ४२९, ३।३।७।१४ पृ. ८४७, **वा.** ३।३।७।१४ पृ. ८३१, ८३३. * **वाक्यात् श्रुतिर्बलीयसी** । भा. २।२।१।१, २।२।९।३, २।३।३।४, ३।१।६।१२, ३।१।७।१५, ३।१।८।१६, ४।१।५।११, ६।१।१।१ पृ. १३४९, ६।१।५।२२, ९।२।५।२३ वर्णकं २, १०।२।८।२२, १०।३।१६।५७, १०।५।१८।६६, १०।७।१९।६५. * वाक्यात्० । अरुणाशब्दः श्रुतिसामर्थ्यात् क्रियाविशे-षणम्, वाक्यादेकहायनीविशेषणम् । **भा.** ३।१।६।१२ पृ. ६८६, * वाक्यात्० । चतुःसंख्या श्रुत्याऽवगता निर्वापस्य, वाक्येन मुष्टीनाम् । १०।२।२८।६५, * वाक्यात्० । बार्हस्पत्यं ग्रहं गृह्णाति बृहस्पतिसवे । अत्र ग्रहे विधीयमाने श्रुतिरनुगृहीता । देवतायां वाक्यम् । १०।४।२।३, * वाक्यात्० । श्रुतिश्च अस्याः एक-हायन्याः क्रियासंबन्धमाह न गुणसंबन्धम् । ३।१।६।१२ पृ. ६८८, * वाक्यात्० । स्वरुत्वभावना श्रुत्या गम्यते, स्वरुं करोतीति, स्वरुमुत्पादयतीति । यूपावयवो-पादानं तु वाक्येन । ४।२।१।१, * वाक्यात् श्रुति-र्बलीयसी । होमविधानाथ श्रुतिर्विधायिका भवति । मन्त्रविधानार्थे वाक्यम् । १०।४।१।१. * **वाक्यस्य** अपि अत्यन्तानर्थक्यप्रसक्तौ श्रुतेरपि असामञ्जस्यस्य कल्पना उचिता ' आनर्थक्यप्रतिहतानां विपरीतं बला-



बलम् ' इति न्यायात् । सु. पृ. १५०२. * वाक्य-स्यापि एवमादेः ( जाघन्या पत्नीः संयाजयन्ति ) अधिकृतापेक्षित्वेन प्रकरणात् दुर्बलतरत्वम् । वा. ३।३।१०।२१. * वाक्यस्य एकस्य अनेकार्थव्यापारे गौरवमपरिहार्यम् । सु. पृ. ८५७. * वाक्यस्य पृथक् न वाचकत्वम्, लोकसिद्धेषु पदार्थेषु वर्तमानाना-मेव पदानां विशिष्टक्रियारूपवाक्यार्थज्ञानोपायत्वात् । **वैद्यनाथी.** १।१।७।२५. * वाक्यस्य प्रकरणं प्रति बाधकशक्तिः न तु लिङ्गं प्रति । भा. ३।३।७।१४ पृ. ८५३. * वाक्यस्य प्रकरणेन बाधः क्वचित् । **बाल.** पृ. १४६. * वाक्यस्य प्रकरणात् प्राबल्येन सूक्तवाकनिगदे-पांशस्य दर्शपूर्णमासयोः विभज्य विनियोगः । **वि.** ३।३।९.

* **वाक्यस्य लिङ्गश्रुत्यनुमानव्यवहितः (श्रुत्यर्थः)** कथम् ? **'वाचकेनैकवाक्यत्वादिहातद्वाचिनां सताम् । कल्पयित्वाऽभिधाशक्तिं श्रुतिः पश्चात् प्रकल्प्यते ॥'** ( प्रयोगासमवेतार्थवाचिनां तत्समवेतार्थवाचकेन एक-वाक्यत्वात् तेषां समवेतार्थाभिधानशक्तिं कल्पयित्वा पश्चात् विनियोगाभिधायिनी श्रुतिः कल्प्यते इत्यर्थः ) । सर्वत्र हि मन्त्रे किञ्चिदेव पदं कर्मसमवेतमर्थं वदति । यथा ' अग्नये जुष्टं निर्वपामि ' इति अग्निनिर्वपामिपदे । शिष्टानि तु असमवेतार्थाभिधायित्वात् अप्रयोगार्हाणि सन्ति दृश्यमानैकवाक्यताऽन्यथानुपपत्त्या अनुमित-सामर्थ्याभिधानानि सन्ति स्वार्थमुपसर्जनीकृत्य तद्विशिष्ट-समवेतार्थप्रकाशनेन प्रयोगार्हत्वं प्रतिपद्यन्ते । ततश्च श्रुतिमनुमाय विनियुज्यन्ते । तच्च अविरोधे सति सर्व-मभ्यनुज्ञायते । यदा दृश्यमानैकवाक्यत्वयोर्मन्त्रयोः पृथ-क्पृथक् प्रकाशयितव्यौ अर्थौ कर्मसमवेतौ दृश्येते तदा उभयोरपि भेदेन प्रकाशकापेक्षणात् प्रकाशकयोश्च प्रकाश्या-पेक्षणात् विनियोगाय प्रस्थिते सति ( भावे क्तः ) यस्य यत्र क्लृप्तं सामर्थ्यं स तत्र शीघ्रतरं प्राप्नुवन् नान्यत्रैक-वाक्यतया नेतुं शक्यते । नापि अन्येभ्यस्तत्र आग-च्छद्भ्यः सोऽवकाशं ददाति । कथम् ? **' एकवाक्यतया यावत् सामर्थ्यमनुमीयते । सामर्थ्येन श्रुतिस्तावत् कल्प्यते विनियोजिका ॥'** समुदायो हि विनियुज्यमानो नावयवान् अविनियुज्य विनियोक्तुं शक्यते । तत्र पूर्वोत्त-रयोर्भागयोः एकवाक्यत्वं प्रत्यक्षम्, नैकाभिधानसामर्थ्यम् । भिन्नार्थाभिधानसामर्थ्यं तु आर्थप्रत्ययदर्शनात् सिद्धम् । तत्र समुदायावयवविनियोगाय वाक्यसामर्थ्ययोः सहप्रस्थि-तयोः असमर्थविनियोगासंभवात् यावद्वाक्येन पूर्वो भाग उत्तरार्थाभिधानसमर्थः उत्तरो वा पूर्वसमर्थ इत्यनुमीयते, तावत् प्रत्येकभागवर्तिना सामर्थ्येन पूर्वस्यापि स्वार्थे, परस्यापि स्वार्थे श्रुतिरनुमिता । ततश्च यावदितरत्र विनि-योजकश्रुत्यनुमानाय प्रयत्यते तावदिह विनियोगे सिद्धे निराकाङ्क्षत्वात् प्रकरणाम्नानस्य न कश्चिदपि हेतुः श्रुत्यनुमाने इत्यनुपजातमूलो विनियोगो बाध्यते । मन्त्र-स्यापि हि पूर्वस्य पूर्वत्रार्थे शीघ्रं विनियोगः, उत्तरस्य चिरेण । तथा उत्तरोत्तरस्य शीघ्रम्, पूर्वस्य तत्र चिरेण । शीघ्रविनियुक्तश्च मन्त्रः चिरविनियोगं न आद्रियते । तथा अर्थोऽपि प्रथमावगतमन्त्रावरुद्धो नेतरं गृह्णाति, स्वप्राधान्ये च संभवति न परोपसर्जनत्वं प्रतिपद्यते । तस्मात् लिङ्गं बलीयः इति भित्त्वा वाक्यं विनियोग इति ।

ननु एवं सति ' निर्वपामि ' इत्यादिना क्लृप्तसाम-र्थ्येन शीघ्रतरप्राप्तेन अवरुद्धेऽर्थे विप्रकृष्टप्राप्तानां ' देवस्य त्वा ' इत्यादीनां बाधात् अविनियोगः प्राप्नोति । न चैषां भिन्नप्रयोजनत्वात् समुच्चयः, तथा सति एकवाक्यत्वा-भावात् । अवश्यं चैतैः यथाकथंचित् निर्वाप एव प्रकाश-यितव्यो नान्यप्रकाशनम्, कर्मानङ्गत्वप्रसङ्गात् । अतः समानविषयत्वात् समवाये सति वाक्यप्राप्यपदान्तर-बाधेन भवितव्यमिति । अत्रोच्यते । **' पदान्तराणि यत्रार्थं वदेयुः कर्मवर्तिनम् । तत्रैवमितरेषां तु वाक्यमप्यगतेर्वरम् ॥ '** यानि हि असमवेतार्थानि, तानि यदि स्वतन्त्रीक्रियन्ते ततः अनर्थकानि भवन्ति । तेन क्लृप्तसंबन्धैः निराकाङ्क्षीकृतोऽप्यर्थः इतरेषां साकाङ्क्षत्वात् पुनः तत्प्रकाश्यत्वं प्रतिपद्यते । यथा प्रकरणपूरितानामपि क्रमेण पुनः तद्धर्मप्राप्तिर्भवति । यथा प्रकृतौ निराकाङ्क्षीभूता धर्मा विकृतीर्गमिष्यन्ति । तथा च क्लृप्तौ व्याख्यातम् ( अनुषङ्गाधिकरणे ) । तस्मात् एवमादीन्यपि संबध्यन्ते । येषां तु प्रकाश्योऽर्थः समवेतो दृश्यते तेषां अनभिधेयेन असंबध्यमानानामपि

अर्थवत्ताऽस्ति इति नानर्थक्यनिमित्तमवकाशं लभन्ते।

सर्वेषामेव च श्रुत्यादीनां आनर्थक्यप्रतिहतानां दुर्बलैरपि बाध्यत्वमिष्यते। तद्यथा — व्रीह्यादीनां प्रोक्षणादीन् प्रति श्रुत्या शेषित्वं प्राप्नुवदपि अतिलङ्घ्य प्रकरणलभ्यापूर्वसाधनत्वकृतः संबन्धो भविष्यति। ततः अवस्थितं वाक्यात् लिङ्गस्य बलीयस्त्वम्। तथा च भक्षानुवाके दर्शितम् (३।२।९)। वा. ३।३।७।१४ पृ. ८३१–८३३. * वाक्यस्य लौकिकस्य प्रमाणान्तरप्रमितविषयता। **बृहती.** पृ. २२४. * वाक्यस्य वाक्यान्तरैकवाक्यत्वे प्रकरणं आकाङ्क्षारूपं प्रमाणमेव। **मीन्या.** * वाक्यस्य वाक्यार्थे न शक्तिः। पदशक्त्यैव वाक्यार्थसिद्धेः। **मीन्या.** * वाक्यस्य वाक्यार्थप्रतिपत्त्युपायभूतपदार्थवाचिपदाभावे साकाङ्क्षत्वेन अपरिपूर्णस्य विशिष्टार्थप्रतिपादकत्वायोगात् विशिष्टार्थप्रतिपादनं च विना व्यवहारासाधनत्वेन आनर्थक्यापत्तेः परिपूर्णत्वाय श्रुतपदैकवाक्यभूतपदान्तरकल्पना युक्ता। सु. पृ. ५३३, * वाक्यस्य विधिप्रयोजनत्वम्। पृ. ८६७. * वाक्यस्य विवक्षितार्थापेक्षया न्यूनत्वाभ्युपगमे लक्षणावाक्यभेदौ, आधिक्याभ्युपगमे तु आनर्थक्यम्। यद्वा, न्यूनस्य अधिकार्थविषयत्वकल्पने लक्षणावाक्यभेदगौणत्वाध्याहारदोषाः। यद्वा न्यूनत्वे लक्षणावाक्यभेदौ, आधिक्ये चानर्थक्यम्। अन्यथात्वकल्पने विपरिणामव्यवहितकल्पना-व्यवधारणकल्पना-दोषाः इति। **बाल.** पृ. २–३. * वाक्यस्य विशेषणविशेष्यभावमात्रे व्यापारः। **सु.** पृ. ११९२, * वाक्यस्य सकृदुच्चरितस्य अनेकार्थपरत्वायोगात् आवृत्तिलक्षणवाक्यभेदापत्तिः। पृ. ८५२, * वाक्यस्य सर्वात्मनान्विष्यमाणाकाङ्क्षणीयालाभे यावल्लब्धेन नैराकाङ्क्ष्यं कल्प्यते। पृ. ६९१, * वाक्यस्य स्वार्थासमाप्तस्य वाक्यान्तरान्वयो न भवति। पृ. ४५८, ७२८. * वाक्यस्य हेतुपरत्वे संभवति स्तुतिलक्षणायां प्रमाणाभावः। **भाट्ट.** ४।१।१७. * अनेनैव प्रसङ्गः, अनेनैव निवृत्तिः इति अतिभारः एकस्यैव **वाक्यस्य** भवति। **भा.** ७।१।१२. * एतदेव वाक्यस्य पौरुषेयत्वं यत् प्रमाणान्तरापेक्षस्वार्थप्रतीतार्थप्रत्यायनपरतया प्रयोगः, न वर्णादिकार्यता। **ऋजु.** पृ. ३८. * 'तत् सामर्थ्यं समाम्नाये' १।४।११।१७। तदेतदस्य वाक्यस्य समाम्नाये सामर्थ्यं यत् अविहितपूर्वकाभिधानम्। इतरथा अर्थवादाः सन्तः अनर्थकाः स्युः। **भा.** १।४।११।१७. * नच वाक्यस्य पदेयत्तायां प्रमाणमस्ति, विभज्यमानसाकाङ्क्षसंहन्यमानैकप्रयोजनमात्रोपलक्षणत्वात्। तेन वाक्यमेवैकं अल्पपदं अपरं बहुपदम्। **वा.** ३।३।७।१४ पृ. ८५१. * '**वाक्ययोः** एकवाक्यत्वं पुनः संहत्य जायते' इति न्यायेन आख्यातभेदेऽपि आकाङ्क्षावशात् अस्ति एकवाक्यता। (अग्निहोत्रे दध्ना जुहोति इति, दध्नेन्द्रियकामस्य जुहुयात् इति च इत्यत्र)। **सोम.** ८।३।३. * वाक्ययोर्विरोधे 'पञ्चदश सामिधेनीरनुब्रूयात्' 'सप्तदश वैश्यस्य' इत्येतदुदाहरणम्। उभयत्रापि हि सामानाधिकरण्यादेकवाक्यत्वे कृते विनियोगे सति निमित्तविशेषसंयोगात् साप्तदश्यं बलीयो भवति। **वा.** ३।३।७।१४ पृ. ८४०. * **वाक्यानां** अकार्यबोधकानां विध्युद्देशेन एकवाक्यत्वात् प्रामाण्यम्। अर्थवादाधिकरणम्। १।२।१।१–१८. * वाक्यानां अनेकार्थता सगुणकर्मविधानेन अगत्या स्वीक्रियते। (सौत्रामण्यां सुराग्रहविषये)। **भा.** ८।२।१७. * वाक्यानां अर्थवतामपि द्वैविध्यदर्शनात्। उच्चारणार्थप्रत्यायने हि अविनाभूते तत्र अन्यतरविवक्षया प्रयुज्यमानेऽपि किंचिन्नान्तरीयकं भवति। यदि अर्थप्रत्यायनं विवक्ष्यते तदा उच्चारणमर्थात्। अथोच्चारणविवक्षा ततोऽर्थप्रत्यायनमनुषङ्गात्। यथा जपेषु विषविद्यासु च। **वा.** १।२।४।३१ पृ. १४३–१४८. * 'वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते'। नहि अस्य ('दीक्षितो न ददाति' इत्यादेः) अग्निहोत्रादिविधिभिः पदैकवाक्यता। येन तेषामसंनिधाने तत्साकाङ्क्षस्यान्यस्य अर्थबोधकत्वासंभवेन पर्युदासो न भवेत्। किंतु 'अग्निहोत्रं जुहोति' 'दध्ना जुहोति' इत्यादिवत् 'वाक्यानामेक॰' इति न्यायात् वाक्यैकवाक्यत्वम् (पूर्वपक्षशङ्का)। **सोम.** १०।८।७. * वाक्यानां व्याकरणेन अनन्वाख्यानम्। **वा.** १।३।८।२४ पृ. २६१. * वाक्यानां– विधिवाक्यानाम्, अङ्गवाक्यानाम्, उपनिषद्वाक्यानाम्, अर्थवादवाक्यानां च



फलपर्यन्तगमने क्रमः सविस्तरं **अर्थवादाधिकरणे** (**मीको.** पृ. ६३९) वार्तिके द्रष्टव्यः। * वाक्यानां स्वार्थपर्यवसितानामपि संहत्य एकमहावाक्यार्थापादनेन एकवाक्यत्वं भवति। **सु.** पृ. ५२५. * 'स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया। **वाक्यानामे**कवाक्यत्वं पुनः संहत्य जायते॥' **वा.** १।४।१३।२८ पृ. ३६६. * **वाक्ये** एकस्मिन् अन्योऽर्थो विधीयमानो नान्येन संबध्यते, वचनव्यक्तिभेदात्। **भा.** ३।१।६।१२ पृ. ६९०, * वाक्ये एकस्मिन् द्वौ संबन्धौ न विधीयेते। भिद्येत हि तथा वाक्यम्। ३।४।१।७, * वाक्ये एकस्मिन् यथोपक्रमं निगमयितव्यम्। १।४।१३।२८. * वाक्ये पुनः 'अर्थं प्रति न सामर्थ्यं, न च शेषत्वमुच्यते। केवलः पदसंघातः प्रत्यक्षमुपलभ्यते॥' **वा.** ३।३।७।१४ पृ. ८२६. * वाक्ये वैरूप्यलक्षणो वाक्यभेदः। 'अरुणया' इत्यत्र तृतीयया करणीभूतां एकहायनीमुद्दिश्य अरुणप्रातिपदिकार्थविधौ भिन्नपदोपात्ताया अपि एकहायन्याः एकवाक्ये वैरूप्यम्। **बाल.** पृ. १८१. * असंबद्धपदाव्यवधाने सति आनन्तर्याभावेऽपि सर्वत्र लोके वेदे च **वाक्ये** पदानाम्, प्रकरणे च वाक्यानां संबन्धो भवति। **सु.** पृ. ६९५. * एकस्मिन्नेव वाक्ये न द्वौ संबन्धौ शक्नोति विधातुम्। **भा.** ३।५।९।३०, ४।३।१३।२३. * न च गुणफलसंबन्धपरे वाक्ये सति कर्मान्तरम्। **वा.** २।२।८।२२, * 'प्रकृतप्रत्यभिज्ञानं वाक्ये यत्रोपलक्ष्यते। तत्र स्यादनुवादत्वम्॰॥' २।२।५।१७ पृ. ५१२, * विशेषसंबन्धपरे वाक्ये सामान्यसंबन्धशक्तिमपि कल्पयतः आग्नेय्यधिकरणोक्तो वाक्यभेदो योज्यः (३।२।८)। ३।७।७।१६, * सर्वत्र हि अविरोधेन वाक्ये निविशमाने विरोधपक्षः त्यक्तव्यः। २।२।३।३ पृ. ४७८. * **वाक्ययोः** विरोधे शेष्यनेकत्वे उपांशुत्वस्य 'त्सरा वा एषा यज्ञस्य' इति व्यवेतयज्ञपदैकवाक्यत्वात् यज्ञभागधर्मत्वं 'तस्मात् यत्किंचिदग्नीषोमीयात्तेनोपांशु चरन्ति' इत्यनेन संनिहितयत्किञ्चित्पदैकवाक्यतया अवगतपदार्थधर्मत्वेन बाध्यते। शेषानेकत्वे तु 'पञ्चदश सामिधेनीः अनुब्रूयात्, सप्तदश वैश्यस्य' इति। **कौ.** ३।३।७।१४ पृ. ३६१. * वाक्ययोः विरोधे सामानाधिकरण्यबोधकवाक्यात्, निमित्तविशेषसंयोगबोधकं वाक्यं बलीयः। **वा.** ३।३।७।१४ पृ. ८४०. * लिङ्गवाक्ययोर्लिङ्गं बलीयः। **भा.** ३।३।७।१४ पृ. ८४९.

* **वाक्यांशस्य** पदमात्रस्य प्रमितिजनकत्वं नास्ति। **वि.** २।२।७.

**वाक्याधिकरणम्।** तद्भूताधिकरणम्। वेदवाक्यं धर्मप्रत्यायकम्॥

**उत्पत्तौ वाऽवचनाः स्युरर्थस्यातन्निमित्तत्वात्॥ १।१।७।२४॥**

**भाष्यम्**— यद्यपि औत्पत्तिको नित्यः शब्दः संबन्धश्च, तथापि न 'चोदनालक्षणो धर्मः'। चोदना हि वाक्यम्। न हि 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यतो वाक्यात् अन्यतमात् पदात् 'अग्निहोत्रात् स्वर्गो भवति' इति गम्यते, गम्यते तु पदत्रये उच्चरिते। न चात्र चतुर्थः शब्दोऽस्ति अन्यदतः पदत्रयसमुदायात्। न चायं समुदायोऽस्ति लोके, यतोऽस्य व्यवहारादर्थोऽवगम्यते। पदान्यमूनि प्रयुक्तानि, तेषां नित्योऽर्थः, अप्रयुक्तश्च समुदायः। तस्मात् समुदायस्यार्थः कृत्रिमो व्यामोहो वा। न च पदार्था एव वाक्यार्थः। सामान्ये हि पदं प्रवर्तते, विशेषे वाक्यम्। अन्यच्च सामान्यमन्यो विशेषः। न च पदार्थात् वाक्यार्थावगतिः, असंबन्धात्। असति चेत् संबन्धे कस्मिंश्चित् पदार्थेऽवगते अर्थान्तरमवगम्येत, एकस्मिन्नवगते सर्वमवगतं स्यात्। न चैतदेवं भवति। तस्मादन्यो वाक्यार्थः।

स्यादेतत्, अप्रयुक्तादपि वाक्यात् असति संबन्धे स्वभावादर्थावगम इति। यदि कल्प्येत शब्दो धर्ममात्मीयं व्युत्क्रामेत्। न चैष शब्दधर्मो यदप्रयुक्तादपि शब्दादर्थः प्रतीयते। नहि प्रथमश्रुतात् कुतश्चिच्छब्दात् केचिदर्थं प्रतियन्ति। (उच्यते)। तदभिधीयते, पदधर्मोऽयं न वाक्यधर्मः। वाक्याद्धि प्रथमावगतादपि प्रतियन्तोऽर्थं दृश्यन्ते। नैतदेवम्। यदि प्रथमश्रुतादवगच्छेयुरपि तर्हि सर्वेऽवगच्छेयुः पदार्थविदोऽन्ये च। न तु अपदार्थविदोऽवगच्छन्ति, तस्मान्नैतदेवम्। ननु पदार्थविद्भिरपि अव-

गच्छद्भिः अकृत एव वाक्यार्थसंबन्धो भविष्यति, पदार्थवेदनेन हि संस्कृता अवगमिष्यन्ति, यथा तमेव पदार्थं द्वितीयादिश्रवणेनेति । नेति ब्रूमः । यदि वाक्ये अन्त्यो वर्णः पूर्ववर्णजनितसंस्कारसहितः पदार्थेभ्योऽर्थान्तरं प्रत्याययति, उपकारस्तु तदा न पदार्थज्ञानादवकल्पते । तस्मात् कृत्रिमो वाक्यार्थप्रत्ययो व्यामोहो वा, न पदार्थद्वारेण संभवति वाक्यार्थज्ञानमिति । ननु एवं भविष्यति, सामान्यवाचिनः पदस्य गौरिति वा अश्व इति वा, विशेषकं शुक्ल इति वा कृष्ण इति वा पदमन्तिकादुपनिपतति यदा, तदा वाक्यार्थोऽवगम्यते । तत्र । कथमिव गौरिति वा अश्व इति वा सामान्यवाचिनः पदात् सर्वगवीषु सर्वाश्वेषु वा बुद्धिरुपसर्पन्ती श्रुतिजनिता वाक्यानुरोधेन कुतश्चिद्विशेषादपवर्तेत ? न च शुक्ल इत्यादेर्विशेषवचनस्य कृष्णादिनिवृत्तिर्भवति शब्दार्थः । न चानर्थको मा भूदिति अर्थपरिकल्पना शक्या । अतो न पदार्थजनितो वाक्यार्थः, तस्मात् कृत्रिमः । पदसंघाताः खल्वेते, संघाताश्च पुरुषकृता दृश्यन्ते, यथा – ' **नीलोत्पलवनेष्वद्य चरन्तश्चारुसंरवाः । नीलकौशेयसंवीताः प्रनृत्यन्तीव कादम्बाः ॥** ' ( ' रामाः कौशेयसंवीताः कादम्बा इव शोभनाः ' इति उत्तरार्धपाठो न्यायरत्नमालायाम् । ) अतो वैदिका अपि पुरुषकृता इति ।

**बृहती—** ' उत्पत्तौ वाऽवचनाः स्युरर्थस्यातन्निमित्तत्वात् ' । ' यद्यौत्पत्तिको नित्यः शब्दः संबन्धश्च, तथापि न चोदनालक्षणो धर्मः ' इति ( भाष्येण ) किमिदमारब्धम् ? इदमारब्धम्– वृद्धव्यवहारादौत्पत्तिकत्वमुक्तं शब्दार्थज्ञानस्य, वृद्धव्यवहारश्च प्रमाणान्तरावगम्यं वाक्येनार्थं प्रतिपादयतः कस्यचित् कश्चिदन्यः प्रतिपद्यते । तत्प्रतिपत्त्या बालोऽपि जानाति ' अनेनैव तत् प्रतिपाद्यते ' इति । प्रतिपत्तिश्च हानोपादानादिकार्यावगम्या । हानोपादानादि च प्रमाणान्तरप्रमितविषयमेव शक्यतेऽवगन्तुं नाप्रमितविषयम् । अतश्च प्रमाणान्तरप्रमितविषयमेव औत्पत्तिकत्वं शक्यतेऽवगन्तुम्, न पुनर्यत्र शब्दावगमपूर्वको व्यवहारः, तत्रौत्पत्तिकत्वं शक्यावगमम् । ( यदेव हि प्रमाणान्तरेण शक्यतेऽवगन्तुं तद्विषयमेव हानोपादानं शक्यावगमम् । अतः कथमनुन्मीलितागमविलोचनो बालः शब्दैकगम्यविषयं हानोपादानं बुध्येत ? अनववृद्धहानोपादानश्च कथं तद्विषयां प्रतिपत्तिं वृद्धस्यानुमिमीते ? अननुमिततद्विषयवृद्धप्रतिपत्तिश्च कथं तद्विषयां शब्दस्य शक्तिमवधारयेत् ? अनवधारिततद्विषयशक्तिश्च तदर्थं कथं शब्दादवगच्छेत् ? अनवगच्छंश्च कथं व्यवहरेदिति ) तस्मात् वैदिकानामग्निहोत्रादीनामौत्पत्तिकत्वं दुरवगमम् । तस्मादौत्पत्तिकत्वक्लेशोऽनर्थकः । वेदप्रामाण्यसिद्ध्यर्थं औत्पत्तिकत्वमिष्यते स्वतन्त्रागमवादिभिः ( मीमांसकैः ) । न च वृद्धव्यवहारात् सिद्धमौत्पत्तिकत्वं वेदार्थप्रतिपत्तौ अभ्युपायतां प्रतिपत्तुं क्षमम् । ( शङ्कते– ) किमिति न क्षमम् ? ( उत्तरं– ) समुदायाद्धि वृद्धव्यवहारे अर्थोऽवगम्यते । न चासौ समुदायो वेदे प्रयुक्तः । तस्मान्न निमित्ततां प्रतिपद्यते । ( चोदयति– ) ननु चान्वयव्यतिरेकाभ्यां वृद्धव्यवहारादेव पदार्थपूर्वको वाक्यार्थोऽवगम्यते । आवापोद्धाराभ्यां हि ' देवदत्त गामभ्याज शुक्लाम्, देवदत्त गामभ्याज कृष्णाम्, विष्णुमित्र गां बधान रक्ताम् ' इत्येकत्र अन्वितशुक्लार्थः, अन्यत्र अपोद्धृतशुक्लार्थः अन्वितकृष्णार्थश्च, अन्यत्रापोद्धृताभ्याजार्थः अन्वितबधानार्थश्च वाक्यार्थोऽवगम्यते, अतोऽवगम्यते पदेभ्यः पदार्था एवावगम्यन्ते, न वाक्यार्थः । पदार्थसमुदायेन वाक्यार्थोऽवगम्यते । अन्यथा हि एकपदोद्धारे सकलवाक्यार्थानवगतिरेव स्यात्, न पदार्थमात्रस्य । तस्मात् पदेभ्यः पदार्थाः, पदार्थेभ्यः परस्परान्वितावगतिः (परस्परान्वितार्थावगतिः । पूर्वपक्षी परिहरति– ) यदि पदेभ्यः पदार्था अवसीयन्ते, पदार्थेभ्यः परस्परान्वयः, किं पदार्थनिमित्तक एव वाक्यार्थः ? ( चोदयिता– ) ओमित्युच्यते । ( पूर्वपक्षी– ) कस्य पदार्थस्य कस्मिन्नन्वये हेतुत्वम् ? ( चोदयिता– ) सर्वस्य सर्वस्मिन्निति ब्रूमः । ( पूर्वपक्षी– ) एवं तर्हि सर्ववाक्यार्थावगतिः सर्वस्मात् ( स्यात् ), नियमे वा हेतुर्वक्तव्यः ' इत्थंभूतेन इत्थंभूतोऽन्वयः प्रतिपाद्यते ' इति ( संनिहितोच्चारितपदप्रतिपादितसाकाङ्क्षान्वययोग्येन तथाभूतपदार्थान्तरान्वयः पतिपाद्यते इति ) न चात्र वृद्धव्यवहारं मुक्त्वा अन्यत् कारणमुप-



लभामहे । तस्मात् यत्र समुदायः प्रयुक्तः, तत्रैव पदं पदार्थमवगमयति, पदार्थश्च पदार्थान्तरेणान्वितमात्मानं इति प्रयोगप्रतिपत्तिमूलेयं कल्पना । अतः अन्वयव्यतिरेकावपि प्रतिपत्तिविषयावेव । सत्यां हि प्रतिपत्तौ आवापोद्धारावगतिर्व्यवहारे व्युत्पाद्यस्य । अवगतिश्च प्रमाणान्तरप्रमितविषयैव हानोपादानावगम्यत्वात् वृद्धप्रतिपत्तेरित्युक्तम् ( प्रमाणान्तरेण योऽर्थः प्रतीयते, तत्संबन्धिनी एव हानोपादाने शक्ये अवगन्तुम् । यद्विषये एव हानोपादाने अवगते, तद्विषये वृद्धस्यापि प्रतिपत्तिरनुमीयते । यद्विषया च प्रतिपत्तिरनुमीयते, तद्विषये एव निमित्तत्वं प्रतीयते, इति प्रमाणान्तरप्रतिपाद्यविषयमेव पदपदार्थयोर्निमित्तत्वम्, न पुनः प्रमाणान्तरावेद्यविषयम् ) । यत्र पुनः ( वेदे ) प्रमाणेन ' अस्मिन्नर्थे प्रयुक्तः ' इति न ज्ञायते ( किंतु ) प्रयोगादेवार्थोऽवगन्तव्यः, तत्र कथं निमित्तता शक्यते कल्पयितुं पदपदार्थयोः, प्रतिपत्तिपूर्वकत्वात् निमित्तभावस्य । न पुनर्निमित्तावगमादेव नैमित्तिकावगतिः । यस्मिन् हि सति यद्भवति, तद्दर्शनात् ' अस्येदं निमित्तम् ' इति भवति मतिः, न पुनस्तत्संभवादेव । (चोदयति– ) केन वोक्तमन्यथा ? ( चोदक एव– ) नैमित्तिकावगमादेव निमित्तावगतिः । अवगम्यते च ' अग्निहोत्रं जुहुयात् स्वर्गकामः ' इति पदार्थान्वितो वाक्यार्थः । अतोऽत्रापि पदपदार्थयोर्निमित्तता केन वार्यते । ( पूर्वपक्षी– ) कथं पुनर्गम्यते ' अन्वितपदार्थको वाक्यार्थः ' इति । ( चोदकः– ) ननु एतस्मादेव वाक्यात् । (पूर्वपक्षी -) तर्हि निमित्तताऽवगमादेव नैमित्तिकावगतिः इत्युक्तम् । ( वाक्यादेवावगम्यते इत्ययमर्थो नैमित्तिकः इति त्वयोक्तं भवति ) । वृद्धव्यवहारे हि हानोपादानादिगम्यं नैमित्तिकत्वम् । इह ( वेदे ) पुनर्वचनादेव हानोपादाने प्रवर्तेते, तस्मात् विपरीतम् । ( चोदकः–) ननु च वृद्धव्यवहारेऽपि प्रतिपत्ता वाक्यादेवार्थं प्रतिपद्यते, बालस्तु पार्श्वस्थः शब्दार्थयोः संबन्धं हानोपादानाभ्यां वेत्ति । ( पूर्वपक्षी– ) सत्यम्, असावपि तु संबन्धज्ञानोत्तरकालं ततो विजानाति निमित्तानैमित्तिकम् । वेदे पुनः अविज्ञातनिमित्तनैमित्तिकसंबन्धः कस्य निमित्ततां विजानातु, कस्य वा नैमित्तिकत्वम् ? ( चोदकः– ) अथ सामान्यतोदृष्टानुमानं क्रियते ' वृद्धव्यवहारे पदपदार्थयोर्निमित्तभावो दृष्टः, वेदेऽपि त एव पदार्थाः, तस्मात् वेदेऽपि स्वार्थान्वितौ निमित्तत्वमिति ' । ( पूर्वपक्षी– यदि सामान्यतोदृष्टं ) एवं तर्हि कियन्तः कस्यां इत्यत्र प्रमाणं नास्ति ( वेदे हि अनेकसहस्रसंख्यपदजातार्थानामवगतानां न ज्ञायते के पदार्थाः कियन्तो वा कस्यामन्वितौ निमित्तमिति । चोदकः–) यावन्तो यस्यामवगतौ प्रतीयन्ते ( तावन्तः ) इति चेत् ( पूर्वपक्षी– ) अवगतिपूर्वकमेव तर्हि निमित्तत्वम्, न सामान्यतोदृष्टनिमित्तकम् । न चावगतेः प्रमाणमस्तीत्युक्तम् । तस्मात् सामान्यतोदृष्टनिबन्धनैवेयं भ्रान्तिः । ( परमार्थतस्तु वेदार्थावगतौ कारणमेव नास्ति ) । सामयिकी वा दृष्टव्यवहारपूर्विका अदृष्टावगतिः । लोकसिद्धैर्वा ( कृतकसंबन्धैरेव शब्दैः– ) संज्ञासंज्ञिसंबन्धं कृत्वा वैदिको व्यवहारः प्रवर्तितः कैश्चित् । ( चोदकः– ) ननु कार्यैक्यनिबन्धनमेकवाक्यत्वं भविष्यति ( वृद्धव्यवहार एव वेदार्थप्रतिपत्तावपि निमित्तम् । एवं हि वृद्धव्यवहारे प्रतिपन्नं ' कार्यान्विते स्वात्मानं पदार्थाः प्रतिपादयन्ति ' इति । लोके वेदे चैक एव कार्यात्मको नियोगार्थः । तेन व्युत्पत्तेर्विषयनानात्वं नास्ति । अतो यावन्तः पदार्था एकस्मिन् कार्येऽन्वीयन्ते तावत्पदार्थप्रतिपादकः पदसमूह एकं वाक्यं इति कार्यैक्यनिबन्धनमेकवाक्यत्वं भविष्यति ) । कार्यैक्यं च नियोगैक्यात् ( नियोगस्य लिङादिशब्दस्यैक्यात् ) । नियोगैक्यं चानुबन्धविनिर्मोकादित्युक्तम् । नियोगार्थश्च लोके वेदेऽपि स एवेत्युक्तम् । प्राप्ताप्राप्तविवेकेन हि प्रेषणादयो अभिहिताः ( पाणिनिना ) । तस्मात् निमित्तपूर्वकेऽपि न दोषः । सिद्धं सामान्यतोदृष्टमनुमानं निमित्तावगतौ । ( पूर्वपक्षी– ) तदिदमयुक्तम् । किं नियोगार्थः प्रमाणान्तरानिर्ज्ञातार्थतया लोकेऽर्थावगतौ निमित्ततया दृष्टः ? ( नियोगोऽर्थो वाच्यो यस्य लिङादेः स नियोगार्थो लिङादिः किं प्रमाणान्तरेण अनिर्ज्ञातार्थः सन् लोकेऽर्थावगतौ निमित्ततया प्रसिद्धः ? आक्षेप्ता– ) नेति ब्रूमः ( स एवाह– ) प्रथमश्रुतः किं न प्रत्याययति ? इत्यनतिक्रमणीयोऽयं हेतुः ( तस्मान्न प्रमाणान्तरावेद्यार्थविषयो लिङादिः प्रतीयते । पूर्वपक्षी– )

एवं तर्हि तदर्थभेदस्यापि प्रमाणान्तरं मृग्यम् । अनुबन्धाश्च तद्भेदानुवर्तिनो लोके दृष्टाः, न पुनस्तदनुवर्ती भेदः । ( यत एव वैदिको नियोगार्थो लौकिकाद्भिन्नः ) तस्मात् परस्परान्वयिता न प्रयोगावच्छेदमन्यतोऽविज्ञाय शक्यतेऽवगन्तुम् । न चासौ अवच्छेदः प्रमाणान्तराभावात् वेदे विद्यते, तस्मात् दर्शनान्तरं मृग्यम् ( संबन्धग्रहणसौकर्याय ) । न चेष्टं स्वतन्त्रागमवादिनामिदम् ( प्रमाणान्तरावगम्यार्थविषयत्वे स्वतन्त्रागमस्य प्रामाण्यं न सिध्यति इति स्वतन्त्रागमवादिनां दर्शनान्तरं वेदार्थे नेष्टम् ) न च स्वभावादर्थावगतिरित्युक्तम् ( ' सर्वत्र नो दर्शनं प्रमाणं ' इत्यत्र ) । अतः प्रतीयमानपदार्थान्वयी वाक्यार्थः, न प्रमाणान्तरापेक्षा इति गहनेयं न्यायपदवी । कथमियमवगाहनीयेति युक्ता संप्रधारणा ।

( सिद्धान्तैकदेशी पूर्वपक्षमेवोपजीव्याह– यत एव मीमांसकमते स्वतन्त्रागमस्य न प्रामाण्यं सिध्यति ) अत एक एवायं बहुधा ( प्रकृतिप्रत्ययविभागेन ) विकल्प्यावगम्यते लोके वेदे चेति ब्रह्मविदो मन्यन्ते ( एक एवायं शब्दो बहुधा प्रकृतिप्रत्ययविभागेन विकल्प्य अविद्यमानभेद एवारोपितभेदः सन् लोके वेदे च प्रतीयते इति ब्रह्मविदो वेदविदो वैयाकरणा मन्यन्ते ) तस्मात् विवर्त एवायं इति ब्रह्मविद्भिरवगन्तव्यम् । वेदविद्भिरित्यर्थः ( वैयाकरणैः मीमांसकैकदेशी– ) कथं पुनर्विवर्तपक्षे नायं दोषः ? एकताऽवगतिस्तावन्नैवाऽस्ति **' श्रोत्रग्रहणे ह्यर्थे लोके '** ( भा. १।१।५ पृ. ८५ ) इत्यनेन प्रतिपादितत्वात् । ( परिहरति– ) तदेव (एकत्वं नास्तीति ) दुरुक्तं कार्यविरोधादित्युच्यते । (एकदेशी–) किं कार्यतः प्रत्यक्षमात्मानं लभते ( येन भवानेकं वाक्यं मन्यते । परिहरति– ) मा भूत् प्रत्यक्षम्, अनुमानमपि प्रमाणमेव, अनुमानादपि प्रमाणावगतिर्युक्तैव । भवद्भिरपि ( मीमांसकैः ) आनुमानिकमेव सर्वत्र प्रामाण्यमुक्तम् । ( चोदयति– ) अनुमानादवगतस्यार्थस्य ( शब्दस्य ) कथमेकत्वम् । (कश्चित् पृच्छति–) अन्यत्वं वा कथम्, एकतया च विना किं न सिध्यति ? ( चोदयिता– ) इदं न सिध्यति ( असति एकत्वे ) न हि उपायाः कल्पिताः प्राप्नुवन्ति । एकत्वावगतौ श्रुत्यां अवच्छेदाः कल्पिताः स्युः (तस्मादेकत्वं यत्नतो वाच्यम् ) न चैकताऽवगतिर्युक्ताऽनुमानात् इति चोदितम् । (न मया अन्यत्वमनुमानादवगम्यते इति चोदितं किंतु एकत्वं कथमवगम्यते इति चोदितम्, तेन ममायमुपालम्भ एव नोपपद्यते ' अन्यत्वं वा कथं ' इति । वैयाकरणः परिहरति- ) नैष दोषः । अनुमानात् प्रमाणत्वमवच्छिद्य ततः पुनरेकतामवयवैर्वेत्ति ' शुक्लः पटः ' इत्येवमादिषु । तदिदं ( कार्यानुमानगम्यं ) आगमात् ( व्याकरणात् ) प्रतिपन्नमेकत्वं ' प्रत्यस्तमिताशेषागमविकल्पं स्वयं ब्रह्म प्रकाशते ' इति (प्रत्यस्तमिताः अशेषाः आगमविकल्पा व्याकरणनिबन्धनाः प्रकृत्यादिविकल्पा यस्मिन् इत्यर्थः ) । यदुच्यते (भाष्ये ) ' श्रोत्रग्रहणे ह्यर्थे लोके शब्दशब्दः प्रसिद्धः ' इति तदप्यागमविरुद्धम् । ' गौः ' इति शब्दः, ' गौः ' इत्यर्थः ' गौः ' इति ( च ) विज्ञानं ( इति ) एकाभिधाननिर्देशात् । नहि भिन्नस्य युगपदेकाभिधानं संभवति ( तस्मादेकमिदं तत्त्वं वाच्यवाचकज्ञानरूपतया विवर्तते ) । कथं पुनर्यौगपद्यावगमः ( कथं पुनर्युगपदयं व्यपदेश इत्यवगम इत्यर्थः । उत्तरं– ) वाचकज्ञानवाच्यानां परस्परापेक्षिणी स्वरूपावगतिर्यतः । अतश्च यदप्युक्तं ' सजातीयावमर्शशून्या न सामान्यावगतिरस्ति' इति तदप्ययुक्तम् (सर्वशब्देषु सजातीया ये वर्णाः, तदवमर्शशून्या सामान्यावगतिर्नास्तीति यदुक्तं तदयुक्तमित्यर्थः ) भेदनिबन्धना ह्येषा युक्तिः (भेदे पारमार्थिके सति एषा युक्तिः ) । विद्यमानस्य हि अवमर्शो भवति, न कल्पितस्य, उक्तं चैकत्वं ( सर्वशब्दानां ' शब्दः शब्दः' ' इत्येकाभिधाननिर्देशात् । पृच्छति– ) ततः किम् ? ( उत्तरं– ) इदं ततः, कल्पनयैव वृद्धव्यवहारस्य निमित्ततोच्यते । तच्चेदं कल्पनाबीजं बहुधोच्यते पदं आद्यं (वाक्यम्, सर्वाणि पदानि वाक्यम्, आख्यातपदं वाक्यं ) इत्येवमादि । तस्मात् पदार्थवेदनेन ( भेदकल्पनया ) संस्कृतानि अभेदं ( अभिन्नं वाक्यं ) प्रतिपद्यन्ते ( अर्थरूपेण विवृतं ) इत्यर्थः । न चैतावता अप्रामाण्यं श्रुतेः, प्रमेये शक्तिसद्भावात् इत्युक्तं ( वैयाकरणैः ) । अतः अनागमिकी कल्पना प्रत्यवायाय, न वैदिकी, परमार्थपरत्वात् ( मोक्षपरत्वात् ) वैदिकस्य



( अर्थस्य ) । अतः सिद्धमौत्पत्तिकत्वमस्मत्पक्षे । भेदाभिधानपक्षे यथा न सिध्यति, तथा प्रदर्शितम् । अत एव च यथाविनियोगं मन्त्रार्थान् मन्त्रविदो वर्णयन्ति । भेदे हि नियतमभिधानं स्यात् । अतः ' उणादयो बहुलं ' इत्येवमाद्यनागमपूर्वकमेव स्यात् ( विनियोगवशेन हि अनेकधा मन्त्रार्थवर्णने 'उणादयो बहुलं' इत्याद्युपयुज्यते, वृद्धव्यवहारप्रसिद्धनियतार्थाभिधाने तु न तस्योपयोगः ) । न चैतत्तव ( मीमांसकस्य ) अभीष्टम् । उपदेशश्चार्थवानङ्गविद्यानाम् (निगमनिरुक्तव्याकरणादीनामङ्गविद्यानामुपदेशः काल्पनिकभेदपक्षेऽर्थवान् ) भेदपक्षे हि लोकत एव नियतत्वाद्भेदानां किमन्यदाख्यायते । अस्मत्पक्षे पुनरागमानुसारी विकल्पः । आनन्त्याच्चागमस्य उपदेशोऽर्थवान् । अतश्चायं भेदव्यपदेशः लौकिकानाम्, वैदिकानाम्, छन्दसि, भाषायाम्, निगमे, इति च । आगमभेदाश्चोपपन्ना भवन्ति ( आगमे व्याकरणे दर्शनभेदाश्चोपपन्ना भवन्ति । तथाहि केचित् अस्ति सकारमातिष्ठन्ते, केचित् ' अस भुवि ' इति पठन्ति तदुपपन्नं भवति । अत एव च– ) केनचित् क्वचित् अवच्छिद्य तदेव प्रदर्शितं भवति । ( यत एव भेदः काल्पनिकः ) अत एव च एकादशद्वादशकपालमेकं कर्म । अन्यथा हि भेदावगमे एकत्वाभिधानं प्रलापः ( स्यात् ) । न केवलमत्र ( उक्तकर्मणि ) अभिधानसंदर्भेऽपि ( एकशास्त्राभिधानम्, शास्त्रान्तरेऽपि हि एकं शास्त्रमिच्छन्ति मीमांसकाः, तदपि भेदे सति प्रलापः स्यात् ) । अपि च कार्यावगम्यत्वात् च प्रमाणतायाः, एकत्वाच्च कार्यस्य नानाभिधानं ( नानार्थप्रतिपादनं ) न प्रमाणं नोपपद्यते । वाक्यसमासयोश्च अवगत्यन्यत्वेऽपि तुल्यकल्पनाप्रतिषेधार्थं वावचनं ( पाणिनेः ) आगमविकल्पज्ञापनाय उपपन्नार्थं भवति । अन्यथा हि वस्त्वेव निरोधकं स्यात् । ( वाक्ये ' नीलमुत्पलमानय ' इति क्रियासंबद्धयोः पश्चात् परस्परसंबन्धोऽवगम्यते, समासे तु ' नीलोत्पलमानय ' इति परस्परसंबद्धयोः पश्चात् क्रियासंबन्धः प्रतीयते ) । अत एव अभिधेयवशवर्तिशक्तिनिरूपणं नामाख्यातोपसर्गनिपातानाम् । भेदे हि स्वरूपभेदः पारमार्थिकः, तत्र प्रत्यभिज्ञाने सति 'विलम्बते' 'प्रलम्बते' 'विप्रः' इत्यन्यत्वं न स्यात् । तथा भवत्यादिषु वर्णमात्रवादिनः ( भवति इति संबोधने सप्तम्यां च यद्व्याख्यायते तत् वर्णमात्रवादिनो न स्यात् ) । ' राज्ञः पुरुषस्य हस्तिनः ' इति पदद्वयसंबन्धोऽपि भवति, न राजपुरुषस्य हस्तिनः इति ( मत्पक्षे तु राजपुरुषशब्दे परमार्थतो राजपदं नास्त्येव केवलं कल्पनामात्रं इति न भवत्येव प्रसङ्गः ) । एवं उपगोरिदम्, अपत्यस्येदम्, न पुनः 'औपगवस्येदं ' इति ( इदंशब्दार्थेन संबन्धः ) । तथा च ' करणं करणेन ' इति विभक्तेरुत्पत्तिरनुत्पत्तिश्च । ( यदि करणशब्दे विभक्तेरुत्पत्तिः ' घटेन करणेनोदकमानय ' इति तदा ' उदकानयने घटः करणं ' इत्यत्रापि स्यात् । अथ ' करणं ' इत्यत्र न भवति, ' करणेन ' इत्यत्रापि न स्यात् । मत्पक्षे तु वाक्यभेदान्नायं पर्यनुयोगः, पदानां वाक्येष्वभावात् ) तथा च सुब्धातवः ( सुबन्ता धातवश्च ) ' अश्वः, गर्दभः ' इति, 'अश्वति, गर्दभति' इति च । तथा च अष्टादशप्रभेदमवर्णकुलमर्थप्रतिपत्तये ( ह्रस्वदीर्घप्लुताः सानुनासिका निरनुनासिकाश्च प्रत्येकं षट्, पुनस्ते त्रेधा उदात्तादिभिः, इत्येवमष्टादशभेदभिन्नं सत् अर्थप्रतिपत्तयेऽस्मन्मते घटते ) अन्यथा हि ( पारमार्थिके पदवर्णविभागे ) एकत्वाद्वस्तुनः सर्वार्थप्रतिपत्तिः वा ( सर्वदा, अप्रतिपत्तिर्वा ) स्यात्, व्यवस्था नोपपद्यते । ( इतश्च शब्दविवर्तात्मकोऽर्थः, यस्मात्– ) प्रमाणान्तरप्रतीतेऽर्थे एकावगमो मृषा ' सुरभि चन्दनं ' ' शीतो वायुः ' इति च ( घ्राणेन्द्रियेण सौरभमवगम्यते, चन्दनं तु दर्शनस्पर्शनाभ्याम्, तथा स्पर्शेन्द्रियेण शैत्यम्, वायुः अनुमानेन, इति वैशेषिकमतेन । तेन भिन्नानि गन्धस्पर्शद्रव्याणि, भिन्नेषु चाभिन्नावगतिर्मृषा ) ' चन्दनस्य सुरभिः ', ' वायोः शीतं ' इत्येव स्यात् ( तस्मात् विवर्तात्मकोऽर्थः ) । उपसर्गनिपातानां क्वचित् विशेषणार्थता ( प्रपचतीत्यादिषु ) क्वचिदानर्थक्यं ( प्रलम्बते इत्यादिषु ) क्वचिद्विपरीतार्थता ( प्रतिष्ठते इत्येवमादिषु ) तद्भावे ( एकरूपत्वे ) नोपपद्यते ( काल्पनिकत्वे तूपपद्यते ) ।

पदार्थपूर्वकत्वाच्च वाक्यार्थस्य तद्वशादपि निर्णयो दुर्वचः (पदाभेदे पदार्थाभेदान्न वाक्यार्थप्रतिपत्तिभेदस्त्वन्मते स्यात् ) पदभेदे च पदार्थविनाशः स्यात् ( लम्बतेपदात् भिन्ने प्रलम्बतेपदेऽङ्गीक्रियमाणे लम्बतेपदे गृहीतसंबन्धस्य प्रलम्बते इत्यत्र पदार्थावगतिरेव न स्यात्, तस्मादनर्थक एव प्रशब्दः स्यात् ) आनर्थक्ये चैकवाक्यता कथम् ? विभागज्ञानं च ( कथम् ? ) । वर्णोपजन एव हि स्यात् ( भिन्नार्थप्रतिपादकतया विभिन्नं पदं भवति, विभागेन तु अर्थाप्रतिपादकत्वे न पदविभागः स्यात्, किंतु तस्मिन्नेव पदे वर्णान्तरमधिकमिदमुपजातमिति स्यात् ) आगमविकल्पपक्षे तु सर्वमुपपन्नम् । आगमविकल्पावगमः कुत इति चेत्, आगमान्तरादेव ( इत्थं प्रकृतिप्रत्ययादिविभागेन विकल्पिताः शब्दभागाः प्रतिपत्त्युपाया इति पाणिनिप्रभृतिभिः अपरस्मात् व्याकरणागमादेवावगतम् ) तदुक्तं ( तैः ) 'ऋषीणामपि यज्ज्ञानं तदप्यागमपूर्वकम्' इति । ( वाक्यपदीये १।३० तदप्यागमहेतुकं इति तु तत्र पाठः ) । अनिदंप्रथमता चास्यानादित्वात् संसारस्य शक्यतेऽवगन्तुम् । सेयमनपेक्षता प्रामाण्यहेतुः । भेदपक्षे सर्वमिदमसमञ्जसम् । ज्ञानप्रधानवर्ती वेदः अवच्छिद्यावबोधकत्वं वेदस्य वेदान्ताः कथम् ? 'अथ यदल्पं तन्मर्त्यम्, अथ यद्भूम तदमृतम्' इति । किं तदल्पम् ? अवच्छेदः । कल्पनीयस्यावच्छेदो दृष्टः, न पुनस्तत्त्वस्य । 'यावद्वाचो गतम्' इत्यादि च सर्वं उपपन्नार्थं भवति, अन्यथा हि विरोधः स्यात् ( यदद्वैतप्रतिपादकं तदुपपन्नार्थं भवति, कर्मविधीनां भिन्नार्थप्रतिपादकत्वे विरोधः कर्मविधीनां भिन्नार्थप्रतिपादकानां वेदान्तानां च स्यात् । शब्दविवर्तात्मकार्थपक्षे तु न विरोधः ) विरोधे चाप्रामाण्यम् । तस्मादेकानुगुणं ( ब्रह्मानुगुणं ) इदं ब्रह्मराशिं ( वेदराशिं ) आगमविदो व्याचक्षते । सोऽयमागमः । ( व्याकरणं ) तदिदं तत्त्वम् ( व्याकरणोक्तं ) । त इमे ब्रह्मविदः ( वैयाकरणाः ) य एवं विजानते । तस्मान्निवर्तस्व ( मीमांसक ! ) एतस्माद्भेदग्रहणात् संसारानुपातिनः ।

( 'अत एक एवायं' इत्यारभ्य वैयकरणोक्तं पूर्वपक्षी दूषयति— ) ननु चात्रापि वृद्धव्यवहारव्युत्पत्तिर्नैवोपकारिका । आगमतश्चेत् विकल्पाः प्रवर्तन्ते, किं वृद्धव्यवहारेण ? अथ वृद्धव्यवहारव्युत्पत्त्या अविकल्पिताः ( असंजातविकल्पाः ) नागमविकल्पात् प्रतिपद्यन्ते, तदिदं भेदव्यवहारेऽपि तुल्यम् । अथ ( वृद्धव्यवहारव्युत्पत्तिर्नाद्रियते ) आगमत एव विकल्पाः प्रतिपद्यन्ते ( परिगृह्यन्ते इति पाठो विमलायां ) वृद्धव्यवहारव्युत्पन्ना निमित्तावगतिः क्वोपयुज्यते ? तस्मात् ( वृद्धव्यवहारव्युत्पत्त्यपेक्षायां ) अयमपि भेदपक्षपर्यवसित एव पक्षः ( भेदं विना व्युत्पत्तिप्रतिपत्त्योरनुपपत्तेः ) ।

अथेदानीमयमपरः प्रकारः ( निरस्यते ) जातिगुणयोरिव एकद्रव्यनिवेशादेव द्रव्यसंबन्धः प्रतीयते, तद्वत् जातिगुणशब्दयोरपि संनिहिततयोच्चारितयोः तद्द्वारेणैकार्थताऽवगम्यते इति चेत्, तन्न, व्युत्पत्तौ निमित्तमात्रतयाऽवगतेः निमित्तमात्रतयैवावगतिः प्राप्नोति ( व्युत्पत्तिसमये पदार्थान्तरनिरपेक्षतया आवापोद्धाराभ्यां व्युत्पत्तेः केवलादेव पदात् केवलपदार्थावगतिः स्यात् तावन्मात्रे व्युत्पत्तेः इत्यर्थः ) । एवमानर्थक्यमिति चेत् ( पदार्थमात्रस्य संबन्धग्रहणसमये एवावगतत्वात् पदार्थमात्रप्रतिपादकत्वे आनर्थक्यमिति चेत् ), नहि आनर्थक्यमर्थान्तरावगतौ हेतुः । तस्मादनर्थक एवायं वृद्धव्यवहारनिबन्धनः शब्दार्थयोरौत्पत्तिकसंबन्धाभिधानक्लेशः । तस्मात् पूर्वोक्तमेव कृतकत्वं सामयिकत्वं संबन्धस्येति स्थितम् ।

( एवं पूर्वपक्षं साधयित्वा भाष्यमधुना व्याचष्टे— ) 'यद्यपि औत्पत्तिको नित्यः शब्दः संबन्धश्च, तथापि न चोदनालक्षणो धर्मः' इति वृद्धव्यवहारस्यानिमित्तताप्रतिज्ञेयं वैदिके व्यवहारे, यथोक्तं 'चोदना हि वाक्यम्, नहि अग्निहोत्रात् स्वर्गो भवतीति गम्यते' इति ( एकस्मात् पदात्, गम्यते तु पदत्रये उच्चारिते इति ग्रन्थेन पदादप्रतिपत्तिः ) वाक्यात् ( च ) प्रतिपत्तिर्योक्ता हेत्वभिधानपातनिकेयम् । न चायं समुदायो वृद्धव्यवहारसिद्धः यः श्रुतौ प्रयुक्तः । तस्मादनिमित्तता पूर्वोक्ता अस्य भाष्यस्य आर्थतया वर्णिता । 'पदानि ह्यमूनि प्रयुक्तानि, एषां नित्योऽर्थः' इति । वृद्धव्यवहारे हि पदानामौत्पत्तिकत्वं निमित्ततया सिद्धं तस्मिन्नेव ( प्रमाणान्तराधिगमनीये ) नैमित्तिके । इह पुनर्नैमित्तिकान्तरावगतौ ( प्रमाणान्तराविषयस्यावगतौ ) असिद्ध एव निमित्तभावः । कुत ? अप्रयुक्तः समुदायो यस्मात् । एवं सति कृत्रिमत्वमुपवर्णितम् । 'न च पदार्था एव वाक्यार्थः' इति परस्परान्वयितां दर्शयति । परस्परान्वयितता हि विशेष उच्यते ( अन्वयावस्था हि असाधारणी, साधारणी हि अनन्वितावस्था इति भवत्यनन्वितं सामान्यम् ) 'सामान्ये हि पदं वर्तते, विशेषे वाक्यम्' इत्यनेन व्यावहारिकी पदव्युत्पत्तिरनर्थिकेत्युक्तम् । विस्तरश्चात्रोक्त एव पूर्वम् । 'न च पदार्थाद्वाक्यार्थावगतिः असंबन्धात्' इति । ननु अस्त्येव पदार्थानां वाक्यार्थेन संबन्धः, तदन्वयस्यैव वाक्यार्थत्वात् ( परिहरति— ) न हि प्रयोगशून्या परस्परान्वितता शक्यतेऽवगन्तुं इति पूर्वोक्तानवगतिरेतद्भाष्यनिबन्धना । 'असति चेत् संबन्धे कस्मिंश्चिदर्थेऽवगते अर्थान्तरमवगम्येत एकस्मिन्नवगते सर्वमवगतं स्यात्' इति अपदार्थनिमित्तत्वे वाक्यार्थस्य हेतुः ( वाक्यार्थः पदार्थनिमित्तको न भवति इत्यत्रायं हेतुः ) वर्णितश्चायम् । 'अप्रयुक्तादपि वाक्यात् असति संबन्धे स्वभावादर्थावगमः इत्यनेन अनुबन्धविनिर्मुक्तं नियोगैक्यं ( कार्यैक्यं ) वेदे दर्शयति इति वर्णितम् । 'शब्दो धर्ममात्मीयं व्युत्क्रामेत् ( अतिक्रामेत् इति विमलायां पाठः ), न चैष शब्दधर्मः, यदप्रयुक्तादपि शब्दात् अर्थः प्रतीयते' इति कार्यानुवर्तितां अनुबन्धविनिर्मुक्तौ दर्शयति । यथोदितम् । 'नहि प्रथमश्रुतात् कुतश्चन शब्दात् केचिदर्थं प्रतियन्ति' इति सामान्यतोदृष्टविरोधः पूर्वोक्तः ( सोऽनेन भाष्येणोक्तः ) । 'यदभिधीयते पदधर्मोऽयम्, न वाक्यधर्मः, वाक्याद्धि प्रथमश्रुतादपि प्रतियन्तो दृश्यन्ते' इति, कथं तर्हि अर्थानवगमः ( किमिति प्रथममेव वाक्यं वृद्धस्येव बालस्यापि अर्थं नावबोधयति ? । न नावबोधयति, तेन अवगच्छामोऽस्ति कश्चित् प्रकारो येनावबोधयति । तत् कोऽसौ इति चेत् आह— ) अवगतेर्विघ्नः, पदार्थमात्रः व्युत्पत्तित एव वृद्धव्यवहारो वेदार्थावगतौ हेतुः, इत्युपन्यस्तमनेन भाष्येण प्रागुक्तमेव ( पदार्थसंबन्धे व्युत्पन्ने अवगतिर्वेदेऽपि भवतीत्यर्थः ) 'नैतदेवम् यदि प्रथमश्रुतादवगच्छेयुः अपि तर्हि सर्वेऽवगच्छेयुः पदार्थविदोऽन्ये च, न त्वपदार्थविदोऽवगच्छन्ति' इति । नहि अप्रयुक्तात् लोके समुदायात् अर्थोऽवगन्तुं शक्यते । यत्तु पदार्थविदोऽवगच्छन्तीति, तत् सामान्यतोदृष्टभ्रान्त्या पूर्वोक्तयेति मन्तव्यम् । 'ननु च पदार्थविद्भिरपि अवगच्छद्भिः अकृतक एव वाक्यार्थसंबन्धोऽवगतो भवति, पदार्थवेदनेन संस्कृता अवगमिष्यन्ति यथा तमेवार्थं द्वितीयादिश्रवणेनेति' किमत्र भ्रान्त्या ? आगमविकल्पानुगुण्याद्वरं निमित्ततैव, यथा वृद्धव्यवहारे एव ( मीमांसकपक्षे ) द्वितीयादिश्रवणं ( उपायः, तथा आगमविकल्पाः इति— ) अयं पूर्वोपवर्णितोऽर्थः । 'नेति ब्रूमः, यदि वाक्यान्त्यो वर्णः पूर्ववर्णजनितसंस्कारसहितः पदार्थेभ्योऽर्थान्तरं प्रत्याययति, क उपकारस्तदानीं पदार्थज्ञानादवकल्पते' इति पूर्वोक्तमनिमित्तत्वं वेदस्य कल्पनायामपि तुल्यं इत्यस्यार्थः । 'ननु एवं संभविष्यति, सामान्यवाचिनः पदस्य गौरिति वा अश्व इति वा, विशेषकं शुक्ल इति वा कृष्ण इति वा पदमन्तिकादुपनिपतति यदा, तदा वाक्यार्थोऽवगम्यते' इति । तदेतत् कार्यैनयविनिबन्धनं यदुक्तं अर्थयोरिव बुद्ध्येकत्वोत्पत्तिहेतुत्वम्, तदुपन्यस्तम् (विशिष्टार्थप्रतिपत्तिरेकं कार्यं तन्निबन्धनमेकबुद्ध्युत्पादकत्वं शुक्लगोशब्दयोरिति ) । 'नहि कथमिव गौरिति वा अश्व इति वा सामान्यवचिनः पदात् सर्वगवीषु सर्वाश्वेषु च बुद्धिरुपसर्पन्ती श्रुतिजनिता वाक्यानुरोधेन कुतश्चिद्विशेषादपवर्तेत' इति । निमित्तमात्रव्युत्पत्तेर्व्यवहारव्युत्पत्तौ ( व्यवहारव्युत्पत्तौ निमित्तमात्रव्युत्पत्तेः इति व्युत्क्रमेण पाठो विमलायाम् । निमित्तमात्रस्य पदान्तरनिरपेक्षस्य स्वार्थव्युत्पत्तेः ) पदार्थमात्रावगतिः प्राप्नोति, न परस्परान्वयः । इति प्रागुक्तमनेनोक्तम् । अर्थनिमित्तं तु आर्थम्, न शाब्दम्, शाब्दं त्विदं विचार्यते । तत्र च यावत्प्रयोगिण्येव ( प्रयोगभाविन्येव ) निमित्ततोक्ता । न च प्रयोगव्युत्पत्तौ ( प्रयोगे व्युत्पाद्यन्ते यत्र तत्र वृद्धव्यवहारे ) पदार्थान्तरव्यावृत्त्या पदस्य स्वार्थनिमित्तता दृष्टा, येन पदान्तर— ( ०दार्थान्तर० ) प्रयोगात् सर्व-

गवीषु प्रत्ययो व्यावृत्तः शब्दात् इति शक्यते वक्तुम् । ननु एवं सति आनर्थक्यं ( पदान्तरप्रयोगस्य ) भविष्यति । ( उत्तरं– ) भवतु ( आनर्थक्यं यस्यार्थो नावसीयते ) नहि इदमानर्थक्यं अर्थान्तरपरतया कल्पयितुं क्षमम्, आनर्थक्यमेव हि तन्न स्यात् । तस्मात् कृत्रिमः संबन्धः (इति सिद्धम् ) । प्रत्यस्तमितमनपेक्षत्वम् ( कृत्रिमत्वाद्वेदानाम् ) । समर्थितश्चायं हेतुः ' वाक्यात्मकत्वात् भारतादिवत् कृतको वेद इति' [ इति पूर्वः पक्षः ] ।

**तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् । २५ ॥**

**भाष्यम्—** तेष्वेव पदार्थेषु भूतानां वर्तमानानां पदानां क्रियार्थेन समुच्चारणम् । नानपेक्ष्य पदार्थान् पार्थगर्थ्येन वाक्यमर्थान्तरप्रसिद्धम् । कुतः ? प्रमाणाभावात्, न किंचन प्रमाणमस्ति येन प्रमिमीमहे । नहि अनपेक्षितपदार्थस्य वाक्यान्त्यवर्णस्य पूर्ववर्णजनितसंस्कारसहितस्य शक्तिरस्ति पदार्थेभ्योऽर्थान्तरं वर्तितुमिति । ननु अर्थापत्तिरस्ति, यत् पदार्थव्यतिरिक्तमर्थमवगच्छामः, न च शक्तिमन्तरेण तदवकल्प्यते इति । तन्न, अर्थस्य तन्निमित्तत्वात् । भवेदर्थापत्तिः यद्यसत्यामपि शक्तौ नान्यन्निमित्तमवकल्प्येत । अवगम्यते तु निमित्तम् । किम् ? पदार्थाः । पदानि हि स्वंस्वं पदार्थमभिधाय निवृत्तव्यापाराणि । अथेदानीं पदार्था अवगताः सन्तो वाक्यार्थं गमयन्ति । कथम् ? यत्र हि शुक्ल इति वा कृष्ण इति वा गुणः प्रतीतो भवति, भवति खल्वसौ अलं गुणवति प्रत्ययमाधातुम् । तेन गुणवति प्रत्ययमिच्छन्तः केवलं गुणवचनमुच्चारयन्ति । संपत्स्यते एषां यथासंकल्पितोऽभिप्रायः, भविष्यति विशिष्टार्थसंप्रत्ययः । विशिष्टार्थसंप्रत्ययश्च वाक्यार्थः । एवं चेदवगम्यते अन्यत एव वाक्यार्थः, को जातुचिददृष्टा पदसमुदायस्य शक्तिः ' अर्थादवगम्यते ' इति वदिष्यति ।

अपि चान्वयव्यतिरेकाभ्यामेतदवगम्यते, भवति हि कदाचिदियमवस्था मानसादप्याघातात्, यदुच्चरितेभ्यः पदेभ्यो न पदार्था अवधार्यन्ते, तदानीं नियोगतो वाक्यार्थं नावगच्छेयुः यद्यस्य अपार्थगर्थ्यमभविष्यत्, नियोगतस्तु नावगच्छन्ति । अपि चान्तरेणापि पदोच्चारणं यः शौक्ल्यमवगच्छति अवगच्छत्येव असौ शुक्लगुणकम् । तस्मात् पदार्थप्रत्यय एव वाक्यार्थः, नास्य पदसमुदायेन संबन्धः । यत्तु श्रौतः पदार्थो न वाक्यानुरोधेन कुतश्चित् विशेषादपवर्तितुमर्हतीति, सत्यमेवैतत्, यत्र केवलः पदार्थः प्रयुज्यमानः प्रयोजनाभावादनर्थकः संजायते इत्यवगतं भवति, तत्र वाक्यार्थोऽपि तावद्भवतु इति विशिष्टार्थताऽवगम्यते, न सर्वत्र । एवं च सति ' गुणान्तरप्रतिषेधो न शब्दार्थः ' इत्येतदपि परिहृतं भवति । अपि च प्रातिपदिकादुच्चरन्ती द्वितीयादिविभक्तिः प्रातिपदिकार्थो विशेषक इत्याह । सा च विशेषश्रुतिः सामान्यश्रुतिं बाधेत । यच्चैते पदसंघाताः पुरुषकृता दृश्यन्ते इति, परिहृतं तत् अस्मरणादिभिः । अपि च एवंजातीयकेऽर्थे वाक्यानि संहर्तुं न किंचन पुरुषाणां बीजमस्ति ।

**बृहती—** ' तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् ' । अत्रोच्यते, स्यादनुपायत्वं ( वेदार्थे ) वृद्धव्यवहारस्य, यदि पदार्थान्यत्वं स्यात्, आवापोद्धारतैव केवलमन्या । कथम् ? वैदिकलौकिकयोः पदार्थयोः अन्यत्वानवगतेः । ( चोदकः– ) किमिदं प्रत्युक्तं पुनरुच्यते, परस्परान्वयो हि पदार्थानां वाक्यार्थ इत्युक्तम्, न पदार्थाः ( एव न वाक्यार्थः किं तर्हि अन्वयः ) तस्मान्न पदार्थप्रत्यभिज्ञानमन्वयहेतुः, प्रमाणान्तरं च नास्त्यस्मिन् प्रयुक्तमित्युक्तम् । ततः प्रयोगशून्योऽन्वयो निर्बीजः । ( राद्धान्ती– ) पदपदार्थानभिज्ञो मातृप्रियो भवान् ( यो मातृस्नेहानुबन्धेन गुरुकुले न चिरमुषितः ) कथमनभिज्ञः ; पदार्थास्तावत् नाव्यतिषक्ताः क्वचिदुपलभ्यन्ते अनन्तोऽस्त्यर्थेन । ततः किम् ? ( नहि तावता शब्देन व्यतिषक्ता एवाभिधातव्याः ) । इदं ततः ( व्यतिषक्ता एवाभिधेया इति ), तत्प्रतिपत्तये हि शब्दार्थव्यवहारः (यतस्तथाऽवस्थितमेव वस्तु शब्देन वाच्यम्, न पुनरन्यथाभूतम् । अतोऽन्विता एवाभिधेयाः, स्वभावतोऽन्वितत्वात् ) । व्यवहारे च यथाव्यतिषङ्गमेवाऽऽवापोद्धारौ । तस्मात् न व्यतिषङ्गाभिधानं व्यतिषक्ततोऽवगतेर्व्यतिषङ्गस्य । किमेवं भविष्यति ? नानन्विताभिधायी शब्द उक्तो भविष्यति । ततश्च कार्याभिधायिता लोके नियोगस्याव-



गता ( अतो नियोगाभिधानं इति वक्ष्यमाणेन संबन्धः ) । **' आचार्यचोदितः करोमि '** इति हि दर्शितं ( भाष्ये । चोदितः प्रवर्तितः कार्यमवबोधित इत्युच्यते, नान्यथा चेतनः प्रवर्तयितुं शक्यते ) । ननु च प्रेषणादयोऽप्यवगम्यन्ते लोके । ( उत्तरं– ) उपाधयो हि ते, न शब्दार्थाः । के पुनरमी उपाधयो नाम ? (उत्तरं–) उपाधयो हि तटस्थाः प्रयोगदर्शनमात्रात् शब्दार्थे विशेषेऽवस्थापयन्ति, यथा दृतिहर्यभिधेयस्य पशुत्वम् । ( हरणक्रिया यदा पशुसंबन्धिनी, तदा तस्याः कर्ता दृतिहरिरित्युच्यते ) । एवमसौ नियोगः समहीनज्यायोभिः प्रयुज्यमानः प्रेषणादिव्यपदेशं लभते, प्रवर्तकत्वं तु शब्दार्थः सर्वत्रापरित्यागात् । अतो नियोगाभिधानमिदम् । नियोगाभिधाने च सति तत्साधनव्यतिषङ्गोऽवगम्यते । साधनाभिधाने च ( यागादौ साधने साध्यान्वितेऽभिधीयमाने अर्थात्– ) साध्यव्यतिषङ्गः । अत इदमुक्तं ' तद्भूतानां आत्मीयेष्वर्थेषु व्यवस्थितानां व्यतिषङ्गावगतेः निमित्तत्वमुपपद्यते ' इति ( नेदं भाष्ये– **के.** ) । ननु च प्रयोगे सति एतद्युक्तं वक्तुं (यदि अपूर्वान्वितेषु प्रयोगो दृष्टः स्यात्तदैतद्युक्तम्, न तु सोऽस्ति । परिहरति– ) केन चोक्तं अप्रयोगे सतीति ? एवंभूतेषु हि दृष्टो लौकिकः प्रयोगः, वैदिका अपि त एव । अतस्तथाभूतेष्वेवायं प्रयोगः ( लोके हि कार्यान्विताभिधायितया पदानि व्युत्पन्नानि, तेन वेदेऽपि कार्यान्विता एव पदैः पदार्था वक्तव्याः, लिङादिभिरपि पदार्थान्वितमेव कार्यं वक्तव्यमिति निश्चिते पदान्वययोग्यतया क्रियाव्यतिरिक्तकार्यावगतिः इति न किंचिदनुपपन्नम् । तस्मादपूर्वमेव अन्वितमभिधीयते लिङादिभिः । शङ्कते–यदि व्यतिषक्ततो व्यतिषङ्गावगतिः– ) एवं तर्हि निमित्ततो नैमित्तिकावगतिः ( न च व्यतिषङ्गमप्रतियन् व्यतिषक्तमवैति, तत् कथं ततो व्यतिषङ्गावगतिरिति । उत्तरं– ) मन्द ! मैवम् । कथनोपायोऽयम् । नहि अन्वितोऽन्वयशून्यः शक्यते प्रतिपत्तुम् ।

( एवं स्वमतं स्थापयित्वा वैयाकरणमतं निराकुर्वन्नाह– ) त एतेऽन्विताः पदार्थाः, एषामभिधानानि पदानि, तदिदं वाक्यपदीयं ( सूत्रम् । ' अन्विताभिधायीनि पदानि, न पुनरर्थावच्छेदशून्यानि, पदान्येव च वाक्यम्, न पदातिरेकि ' इति । वाक्यपदे अधिकृत्य कृतो ग्रन्थो वाक्यपदीयं ' शिशुक्रन्दयमसभद्वंद्व॰' इति छः ) । अन्यथा ( एवंविधपदपदार्थानाश्रयणे ) हि अवगम्यमानः पदपदार्थविवेकः अपह्नुतो भवति अविद्यमानः प्रतिपन्नः ( स्यात् ) । तस्मान्न कार्यतः ( वाक्यार्थप्रतिपत्तिलक्षणात् ) तावत् वाक्यवाक्यार्थयोः पदपदार्थाभ्यामन्यत्वं कल्पयितुं क्षमा प्रज्ञा (पदान्येव अन्विताभिधायीनि वाक्यम्, पदार्था एवान्विता अभिधीयमाना वाक्यार्थ इति ) । प्रत्यक्षतस्तु भेदावगमान्नास्त्येकत्वं इत्युक्तं ( स्फोटनिराकरणपर्वणि । यतो वाक्यार्थावगतिः प्रामाणिकी ) अतः क्रियार्थेन समाम्नायः ( वेदानाम् ) ।

ननु च नावश्यं क्रियार्थेनैव आम्नानं लोके । ( एकदेशी परिहरति– ) अस्ति तावत् क्रियार्थता वेदे, तद्विषयमिदमधिकरणं भविष्यति । ( चोदकः– ) किं न लौकिकविषयमिदमधिकरणम् ? ( एकदेशी– ) किं वा मन्यते भवान् ? ( चोदकः– ) न्यायाभिधानसाम्यात् सर्वत्रेति मन्यामहे ( यो न्यायोऽभिहितः अन्विताभिधानलक्षणः, स लोके वेदे च सम इति हेतोः सर्वत्रेदमधिकरणमिति । परमसिद्धान्ती ब्रूते– ) भवतु सर्वत्र । ( चोदकः– ) ननु च क्रियार्थेन इत्यव्यापकम् । ( राद्धान्ती– ) व्यवहारक्रियैवेयं क्रिया इति मत्वा शाम्यतु भवान् । ( नात्र क्रियाशब्देन विनियोगोऽभिहितः, किंतु व्यवहाररूपा क्रिया अभिप्रेता, सा च लोके सर्वत्रास्तीति व्यापकम् ) अतः सिद्धं ' अर्थस्य तन्निमित्तत्वात् ' इति । वैदिकानां सनिमित्तत्वम् । ' तेष्वेव पदार्थेषु ' इति ( भाष्ये ) अन्वितेषु इत्यर्थः । कुतः ? नानपेक्ष्य पदार्थान् पार्थगर्थ्येन वाक्यार्थः प्रतीयते ( अन्विता एव पदार्था वाक्यार्थः ) । न चेत् प्रतीयते कस्य वाक्यं प्रमाणतया कल्पयिष्यते ? ननु चान्वयो न पदार्थः, स च वाक्यार्थो भविष्यति, अतश्चार्थात् वाक्यमपि पदेभ्योऽन्यदिति गम्यते ( इदं ) ' नन्वर्थापत्तिः' इत्यनेनोक्तं ( भाष्येण) । 'तन्न, अर्थस्य तन्निमित्तत्वात्' इत्यन्विताभिधानेन कथितोऽस्यार्थः– अर्थापत्तिर्नास्तीति । ' अपि चान्वयव्यतिरे-

काभ्यां एतदवगम्यते, भवति हि कदाचिदियमवस्था मानसादपचारात् उच्चारितेभ्योऽपि पदेभ्यो न पदार्था अवधार्यन्ते, न तदानीं नियोगतो वाक्यार्थमवगच्छन्ति, न च नियोगतो वाक्यार्थं नावगच्छेयुः यद्यस्य पार्थगर्थ्यमभविष्यत्, नियोगतस्तु नावगच्छन्ति ' इति ( भाष्यं )। किमनेनानुक्तमुक्तम् ? न खलु किंचित्, प्रतिज्ञातार्थस्याऽनन्यत्वमेव ( किंतु ) तत्सिद्धये हेतुरुपन्यस्तः । कथम् ? यदि असंसृष्टपदार्थ एव वाक्यार्थोऽवगम्यते, व्युत्पत्तिमात्रं पदार्थावगतिः । कस्मात् व्युत्पत्त्यवमर्शशून्यमपि कदाचित् ज्ञानं न भवति निरूढव्यवहारस्य, यथा धूमात् महानसादिप्रदेशावमर्शशून्यमग्निज्ञानम् ? ( ये पदार्थेभ्यो भिन्नं वाक्यार्थं मन्यन्ते तान् प्रति इदमुच्यते। **यदि** असंसृष्टपदार्थकः असंसृष्टाः पदार्था यस्मिन् वाक्यार्थे प्रधानभूते नियोगे, सः असंसृष्टपदार्थकः पदार्थान्वयरहितो वाक्यार्थोऽवगम्यते, व्युत्पत्तिमात्रं पदार्थावगतिः ' अस्य पदस्यायमर्थः' इति व्युत्पत्तिमात्रम्, **तदा** निरूढव्यवहारस्य कदाचित् व्युत्पत्त्यवमर्शशून्यमपि व्युत्पत्तिमपरामृश्यापि कस्मात् वाक्यार्थज्ञानं नोत्पद्यते यथा धूमात् महानसादिप्रदेशात् व्युत्पन्नं संबन्धमपरामृश्यापि अग्निज्ञानं भवति ? )। न च वाक्यार्थे निरूढव्यवहारस्यापि एवंरूपा अवगतिर्दृष्टा। अतो न निमित्ततया पदार्था अवधार्यन्ते। किं तर्हि ? नैमित्तिकतयैव। ( चोदयति–) किं पुनः कारणं निरूढव्यवहारस्य निमित्तानपेक्षा नैमित्तिकावगतिः ( संबन्धस्मरणरूपं निमित्तम् । परिहरति– ) प्रचितसंस्कारो हि नावश्यं निमित्तव्यापारमपेक्षते अन्ध इवाभ्यस्तपदवीको न तदीक्षणमपेक्षते । अत्र पुनः ( वाक्यार्थे ) सर्वदा तदपेक्षणात् तदेव प्रमेयमित्युच्यते । ( शङ्कते– ) एवं तर्हि ' पदार्थेभ्यो वाक्यार्थप्रत्ययः ' इति कथमयं व्यतिरेकः ( भाष्ये दर्शितः ? समाधत्ते– ) एवमयं व्यतिरेकः अन्वितेभ्यः अन्वयप्रत्ययः इति । ' अपि च अन्तरेणापि पदोच्चारणं यः शौक्ल्यमवगच्छति, अवगच्छत्येवासौ शुक्लगुणकं द्रव्यं ' इति । ( पृच्छति– ) किमन्वयव्यतिरेकभाष्यशेषमेवैतत् ? ( राद्धान्तैकदेशी– ) ओमित्युच्यते, तत्र हि पदार्थस्य व्यतिरेकदर्शनं ( पदार्थस्य व्यतिरेके वाक्यार्थस्य व्यतिरेकः इत्युक्तम् ) इह चान्वयस्य ( पदार्थान्वयस्य दर्शनं पदार्थे सति वाक्यार्थो भवतीति । राद्धान्ती– ) सत्यमेवम्, न तु एतावन्मात्रमेव ( एकदेशी– ) किमतिरिच्यते ? ( राद्धान्ती– ) इदमतिरिच्यते, यदि हि व्युत्पत्तौ पदानां पदार्थमात्रे एव व्युत्पत्तिस्तदा अनन्वितपदार्थदर्शने तत्स्मरणानुपपत्तिः स्मर्यते च, अतः सिद्धमन्विताभिधानम् । ' नास्य पदसमुदायेन सह संबन्धः ' इति, न समुदायभूतानां प्रामाण्यम् ( समुदायभूतैः प्रत्यस्तमितवाचकविभागैर्वाक्यार्थो न प्रतिपद्यते ) किं तर्हि ? अन्वयव्यतिरेकसमधिगम्यस्वार्थव्यापृतानामेव ( पदानां प्रामाण्यम् )। ' यस्तु श्रौतः पदार्थो न वाक्यानुरोधेन कुतश्चित् विशेषादपवर्तितुमर्हति ' इति, कथं पुनर्व्युत्पत्तिशून्यैवावगतिः शक्यतेऽवगन्तुमित्यभिप्रायः । परिहारस्तु ' सत्यमेवमेतत् ' इति, व्यवहारार्थत्वात् प्रयोगस्य विशेषात्मकत्वाच्च व्यवहारस्य अन्वितावगतिरेव तदर्थानाम्, नान्वितार्थान्तरस्मरणं व्यवहारानङ्गत्वात् ( अत्र पूर्वपक्षसिद्धान्तभाष्ययोः अयमर्थः– श्रुत्यन्तरभावित्वादनन्वितार्थावगतेः अनन्वित एव पदार्थः श्रौतः, स न वाक्यानुरोधेन विशेषेऽन्विते अवस्थापयितुमर्हति इति पूर्वः पक्षः । राद्धान्तस्तु– सत्यमनन्वितः प्रथमं प्रतीयते, तथापि वृद्धव्यवहारव्युत्पत्तावेव केवलेन पदार्थेन व्यवहाराभावात् अन्विते एव पदार्थे पदानां व्युत्पत्तिः, अनन्वितावगतिस्तु स्मरणमात्रमिति)। तदिदमुक्तं ' यश्चार्थादर्थो न स चोदनाऽर्थः ' इति । न चेदानीं तत् ( अनन्वितार्थस्मरणं ) अविवक्षितं इति ( एतावता ) प्रतीयमानस्यापि शब्दात् ( अन्वितस्य व्यवहारोपयोगिनोऽपि ) अविवक्षितत्वं शक्यते वक्तुम् । ( चोदयति– ) गम्यते च शब्दात् निमित्तात्, अशब्दार्थश्च इति किमिदं ( स्मर्यमाणस्यापि शब्दार्थत्वमेव युक्तम् । परिहरति– ) शब्दान्तराभिधेयतया स्मरणात्, स्मृतेश्चाप्रामाण्यात् । अतः शब्दनिमित्तताऽपि भ्रान्तैरचोदिता प्रत्यक्षादीनामिव स्मरणीये ( प्रमाणभूतः शब्दः कथमप्रमाणभूतां स्मृतिं जनयति । परमार्थतस्तु शब्दोऽत्र निमित्तं न भवति, किंतु शब्दश्रवणादुद्बुद्धः संस्कार एवैनां स्मृतिं जनयति, यथा प्रत्यक्षादीनां



स्मरणीयेऽर्थे निमित्तता न भवति, तथा शब्दस्यापि )। ' एवं च सति गुणान्तरप्रतिषेधो न शब्दार्थः ' इति कल्पितनिमित्तपरिहारात् परिहृतम् ( कल्पनानिर्मितनिमित्तः पदार्थः इति किल बौद्धा मन्वते, तेषां मते अन्यापोहमात्रनिष्ठा श्रुतिः, ततश्च गुणान्तरप्रतिषेधः शुक्लशब्दस्यार्थः इति, तदिदं निराकृतं ' कल्पितं निमित्तं न भवति ' इति कल्पनाग्रन्थे )। ' अपि च प्रातिपदिकादुच्चरन्ती द्वितीयादिविभक्तिः ' इति, अन्वितार्थमेव प्रातिपदिकं स्मरन्ति, यतः करणवाचिनः प्रातिपदिकात् तृतीयां ( विभक्तिं ) विदधति ( करणं च क्रियासंबन्धि भवति । अतश्च क्रियासंबन्धिस्वार्थप्रतिपादकं प्रातिपदिकमित्युक्तं भवति )। विभक्तयश्च परस्परान्वयप्रतिपादिकाः प्रयोगान्तरस्मृतस्यार्थस्य अन्वयितां श्रुत्यैव दर्शयन्ति ( तेन अन्वितमेव शब्देनाभिधीयते इति विभक्तय एवात्र प्रमाणम् )। अतः अभ्युच्चयोपपत्तिरियम् ( अनन्वितस्याविवक्षायाम् )। प्रत्युक्तमनुमानं ' कृतकत्वात् ' इति ( पदसंघातस्य कृतकत्वात् वेदोऽपि कृतकः इति यदनुमानं तत् प्रत्युक्तं ) वृद्धव्यवहारस्य निमित्ततोपपत्त्या । ' अपि च ' इत्यनेन पूर्वोक्तां संबन्धकरणाशक्तिं दर्शयति ( भाष्यम् । अतीन्द्रिये कार्ये कार्यान्वयिषु चार्थेषु संबन्धकरणशक्तिर्नास्तीति )।

**लोके सन्नियमात् प्रयोगसंनिकर्षः स्यात् । २६ ॥**

**भाष्यम्**-- लौकिकेषु पुनरर्थेषु प्रत्यक्षेणार्थमुपलभ्य सन्नियमः सन्निबन्धनं शक्यं तत्र संहर्तुं एवंजातीयकानि वाक्यानि ' नीलोत्पलवनेष्वद्य ' इति । तस्मात् ' अग्निहोत्रं जुहुयात् स्वर्गकामः ' इत्येतेभ्य एव पदेभ्यो येऽर्था अवगताः, तेभ्य एवैतदवगम्यते ' अग्निहोत्रात् स्वर्गो भवति ' इति । पदेभ्य एव पदार्थप्रत्ययः , पदार्थेभ्यो वाक्यार्थ इति ।

**बृहती**-- लोके पुनः प्रमाणान्तरप्रमितविषयतया ( विषयता ) युक्तैव तत्पूर्वकत्वात् शब्दव्यवहारस्य । ' तस्मात् पदेभ्य एव पदार्थप्रत्ययः, पदार्थेभ्यो वाक्यार्थप्रत्ययः ' इति ( भाष्यं ) व्याख्यातम् ( व्यतिषङ्गाभिप्रायमिति ) । तस्मादुपपन्नं वृद्धव्यवहारनिमित्तमौत्पत्तिकत्वं संबन्धस्य, वेदवाक्यार्थप्रतिपत्तिहेतुत्वं च । ' विलम्बते ' इत्यादयस्तु शब्दप्रत्यभिज्ञयैव, अभिधाने हि स दोषः, समासादीनां तु तत्रतत्र परिहारोऽभिधीयते ।

**शा**— यद्यपि पदपदार्थसंबन्धस्यापौरुषेयत्वाद्वृद्धव्यवहारादेवार्थावगतिः सिध्यति तथापि वाक्यार्थरूपे धर्मे पुरुषसंकेतानपेक्षत्वान्न किंचिन्मूलं संभवतीत्यप्रामाण्यं धर्मे चोदनायाः । तथाहि, प्रत्येकं वा पदानि वाक्यार्थमवगमयेयुस्तत्संघातो वाक्यं वा पदार्था वा । न तावत्प्रत्येकं पदेभ्यो वाक्यार्थप्रतीतिर्दृश्यते, न पदानां वाक्यार्थविशेषैः संबन्धग्रहणमस्ति, न च संभवत्यनन्तत्वाद्वाक्यार्थानाम् । वेदार्थस्य च प्रमाणान्तरागोचरत्वात्तेन संबन्धग्रहणमत्यन्तासंभाव्यम् । अनन्तवाक्यार्थसाधारणत्वाच्च पदार्थानां प्रत्येकं वाक्यार्थविशेषप्रतिपादनमनुपपन्नम्, अगृहीतसंबन्धत्वादेव च पदसंघातवाक्यपदार्थानामपि न संभवति प्रत्यायकत्वम् । नचागृहीतसंबन्धः शब्दोऽर्थं प्रत्याययति बालानामप्रतीतेः, प्रतीतौ व्युत्पत्तिवैयर्थ्याच्च । यद्यपि पदमज्ञातसंबन्धं न प्रत्यायकं तथापि पदसंघातो वा पूर्वपूर्ववर्णजनितसंस्कारसहितो वा वाक्यान्त्यवर्णो वा निरवयवो वाक्यस्फोटो वा संबन्धग्रहणानपेक्ष एव वा वाक्यार्थं प्रत्याययिष्यतीति चेत् । न । अव्युत्पन्नानामपि प्रसङ्गात्, व्युत्पत्तिवैयर्थ्यप्रसङ्गाच्चेत्युक्तम् । अथ पदार्थवेदनमपि वाक्यार्थप्रतीतावङ्गमतस्तद्रहितानामपि प्रतीतिर्न दोषः, व्युत्पत्तिश्च पदार्थानां नानर्थिकेत्युच्यते, तदयुक्तम् । यदि हि पदेभ्योऽर्थान्तरभूतं वाक्यं पदार्थव्यतिरिक्तं वाक्यार्थं साक्षादेव वाचकतया प्रतिपादयति , कस्तदा पदार्थवेदनस्योपयोगः, तदनुपयोगे च पदार्थव्युत्पत्तिरनर्थिका वाक्यार्थं प्रतिपित्सताम् । न च पदार्थाद्वाक्यार्थावगतिः असंबन्धात् । ननु सामान्यं पदार्थो विशेषो वाक्यार्थः संबन्धश्च सामान्यविशेषलक्षणः । सत्यम् । नियतविशेषावगतिस्तु न सिध्यति सर्वविशेषसाधारणत्वात्सामान्यस्य । ततश्च गामानयेति पदावगतमानयनसामान्यं विशेषाक्षेपोन्मुखमपि न गोरेव आनयनं आक्षिपेत् । ततश्च न गोरेवानयनं प्रतीयेत । नचाकाङ्क्षासंनिधियोग्यत्वैर्नियमः, सत्स्वपि तेषु अदर्शनात् । नहि प्रत्यक्षेण गां उपलभ्य कस्येयमिति जिज्ञासमानः संनिहितमपि

देवदत्तं स्वामिनमध्यवस्यति, तस्मान्निर्मूलो वाक्यार्थः सांकेतिकः । न च वेदे संकेतयिताऽस्तीत्यप्रामाण्यम् । अथवा वेदवाक्यानामपि पौरुषेयत्वं आश्रित्य पुरुषप्रामाण्यादेव प्रामाण्यमङ्गीकर्तव्यम् । युक्तं च सर्ववाक्यानां पौरुषेयत्वदर्शनादेव वेदवाक्यानामपि पौरुषेयत्वम् । अथ पुरुषाणामीदृशेऽर्थे प्रामाण्यं न संभवति, ततोऽप्रामाण्यमेवास्तु न त्वनपेक्षं प्रामाण्यं सिध्यतीति **पूर्वः पक्षः ।**

अत्र केचिदाहुः– 'वाक्येनैव हि वाक्यार्थः साक्षादेवाभिधीयते । उपलक्षणतश्चास्य संबन्धग्रहसंभवः ॥ वाक्यं गोपदयुक्तं यत्तत्सास्नादिमदन्वितम् । वाक्यार्थं वदतीत्येवं व्युत्पत्तिः सुकरैव हि ॥ सत्यं व्युत्पत्तिरेवं स्यात्तथापि तु न वाक्यतः । वाक्यार्थावगतिर्युक्ता तिरोभावेऽपि दर्शनात् ॥ पूर्वभागेषु वाक्यस्य विस्मृतेष्वपि दृश्यते । वाक्यार्थावगतिः पुंसां पदार्थस्मृतिशालिनाम् ॥' यथैव विस्मृतपूर्ववर्णानामन्तिमवर्णमात्रान्न पदार्थावगतिर्भवति, तथैव वाक्यावयवेषु पूर्वपदेषु विस्मृतेषु वाक्यार्थावगतिर्न स्यात् । दृश्यते हि विस्मृतपूर्वपदानामपि दीर्घतमेषु वाक्येषु वाक्यावगतिः । न च स्वरूपेण विस्मृतेऽपि स्मर्यमाणपदार्थवशादेव तद्वाचिपदयोगितां वाक्यस्यानुमाय ततो वाक्यार्थावगतिरिति वक्तुं युक्तम्, अस्यां प्रणाड्यां प्रमाणाभावात् । अनुसंधीयमानैरेव हि पदार्थैः साक्षादेव हि वाक्यार्थप्रतीतिसंभवे को नामेदृशीं कल्पनामवलम्बते । संभवति च पदार्थेभ्यो वाक्यार्थावगतिरिति वक्ष्यामः । येऽप्याकाङ्क्षितसंनिहितयोग्यार्थान्तरान्वितस्वार्थाभिधायीनि पदान्येव वाक्यार्थप्रतीतिनिमित्तमिति ब्रुवते, तेषामपि विस्मृतेषु केषुचित्पदेषु वाक्यार्थावगतिर्न स्यादिति तुल्यमेव दूषणम् । किंचैवंवादिनां प्रतिपदं वाक्यभेदः स्यान्न क्वचिदेकवाक्यता सिध्येत् । गामानयेति गोपदमानयनकर्मभूतां गां प्रतिपादयति तथा नयतिरपि गोकर्मकमानयनं तयोश्च भेदाद्भिन्ने एव वाक्ये स्याताम् ।

**( अन्विताभिधानवादखण्डनम् )** अथान्वितभेदे सत्यप्येकस्यैवान्वितस्य प्रधानभूतत्वात् प्रयोजनैकत्ववशेन वाक्यैकत्वमुच्यते । तदयुक्तम् । न ह्यनेकं विशिष्टं प्रतिपादयतां प्रयोजनैकत्वमात्रेण एकवाक्यता भवति, यदि स्यात् 'यजेत स्वर्गः फलं पशुर्हविरग्निर्देवता' इत्यत्राप्येकवाक्यता स्यात् । सर्वेषां द्रव्यदेवताफलविशिष्टयागानुष्ठानप्रयोजनत्वात् । तथा 'दर्शपूर्णमासाभ्यां यजेत' इत्यस्य 'समिधो यजति' इत्यादिभिरेकप्रयोजनत्वात् वाक्यैकत्वं स्यात् । ननु इष्टमेवैकवाक्यत्वम् । यथा वक्ष्यति– 'तद्वाक्यं हि तदर्थत्वात्' ( ३।७।१।४ ) इति । भाष्यकारोऽपि– 'वाक्यं ह्येकं दर्शपूर्णमासाभ्यां सहधर्माणाम्' इति । सत्यम् । प्रकरणानुमेयं तु तत्रैकवाक्यत्वं न प्रत्यक्षम्, अन्यथा वाक्यविनियोज्यत्वापत्तेः । एवं गामानय इत्यत्रापि प्रत्यक्षैकवाक्यता साक्षान्न स्यात्, इष्यते चासौ । तस्मात् यत्रैकवाक्यत्वं तत्रापर्यवसितव्यापाराणामेव पदानामेकस्मिन्नर्थे पर्यवसानं वक्तव्यम् । त्वन्मते च आनयतिर्गवान्वितानयनं प्रतिपाद्य पर्यवस्यति, गोपदमपि गव्येवानयनान्विते पर्यवसितमिति स्यादेव वाक्यभेदः । नहि गोपदस्यानयने गवान्विते पर्यवसानं येनैकवाक्यता स्यात् । अथ गोपदमप्यानयनमेव गवान्वितमभिदध्यात् अनेकार्थत्वं स्यात्, गोश्चानयनस्य चाभिधानात् । नहि गोरन्यतः सिद्धिः यतस्तामनभिधाय तद्विशिष्टमानयनमेवाभिदध्यात् । किंच 'अतिशोभनो राजपुरुषः' इत्यत्र अतिशयान्वितस्य शोभनगुणस्य राजान्वितस्य च पुरुषस्य पुनः परस्परान्वयो गम्यते–– समासे हि परस्परान्वयपूर्वकः पदार्थान्तरान्वयः, तेनान्वितयोरेवात्रान्वयः । न चासावभिधानतः सिध्यति । पुरुषशब्दो हि पुरुषस्यैवार्थान्तरान्वयमभिधत्ते तस्यैव स्वार्थत्वात्, अतोऽनन्वितान्वयमलमभिधातुम्, एवं शोभनशब्दोऽपि स्वार्थस्यैव शोभनत्वस्यान्वयमाह नान्यान्वितस्य, अतोऽन्वितयोरन्वयोऽवश्यं पदार्थनिबन्धन इत्यभ्युपगन्तव्यम् । किंच 'रूढिर्योगाद्बलीयसी शीघ्रप्रवृत्तित्वात्' इत्यविवादम्, अन्विताभिधाने च विपरीतं बलाबलं स्यात्, अश्वकर्ण इति समुदायो यावद्वृक्षजातिं स्मारयति तावदेवाश्वशब्दोऽपि वाजिनं कर्णशब्दोऽप्यवयवं स्मारयत्येव, अतो न स्मृतिकाले तावद्विशेषः; अभिधानं तु योगवृत्तौ पदान्तरमनपेक्ष्य स्वावयवाभ्यामेव शीघ्रं मिथो निर्वर्तते । रूढिस्तु प्रतियोगिसंनिधानलिप्सया पदान्तरमपेक्षमाणाभिधाने विलम्बित इति वैपरीत्यम् ।



स्वरूपमात्राभिधानपक्षे तु पदान्तरापेक्षाभावादक्षरश्रवणमात्रात् एव रूढ्यर्थोऽभिधानसिद्धोऽवयवार्थलक्षितात् यौगिकाद्वाक्यार्थस्थानीयाद्बलीयान् भवति । एवं 'अतिमधुरं गोक्षीरम्' 'ईषन्मधुरमजाक्षीरम्' इति 'केतकीगन्धसमानः सर्पगन्धः' इत्यादिदर्शयितव्यम् । तस्मात्पदाभिहितैः पदार्थैर्लक्षणया वाक्यार्थः प्रतिपाद्यते । तत्र गामानयेत्यानयतिरानयनसामान्यमभिधाय तद्व्यक्तिं लक्षयति गोपदमपि स्वार्थद्वारेणानयनमेव गोकर्मकत्वाकारेण तत्संबन्धिस्वरूपेण लक्षणया प्रतिपादयति, एवं यत्रयत्र वाक्ये योयोऽर्थो विशेष्यत्वेन विवक्षितस्तमेव स्वपदेन सामान्यवाचिना लक्षितं सन्तमितराणि पदानि स्वार्थाभिधानद्वारेण तत्संबन्धिरूपेण लक्षयन्ति । यत्राप्यन्वितस्यैव पुनरन्वयान्तरं तत्रापि लक्षितलक्षणापरंपरया तस्य सर्वस्य सिद्धिरित्येषा दिक् । **ननु** कर्मत्वेनाभिहिता गौस्तत्कर्मिकां क्रियां लक्षयन्त्यपि कथमानयनमेव लक्षयति, तदेकवाक्यतया इति ब्रूमः–– लक्षणा हि साधारण्येनैव प्रवृत्ताऽप्येकवाक्यतया नियम्यते इति दर्शनबलादङ्गीक्रियते । योऽपि ह्यन्विताभिधानमिच्छति तेनापि सामान्यतः प्रवृत्ता लक्षणा पदान्तरैकवाक्यत्वेन नियम्यते इत्येतदङ्गीकृतमेव । यथाहि युगपदधिकरणवाचितायां द्वन्द्वमिच्छन्ति तत्र धवखदिरावित्यत्र खदिरप्रातिपदिकं द्विवचनोपपत्तयेऽर्थान्तरं लक्षयदपि धवमेव लक्षयति नार्थान्तरं तत्पदसमभिव्याहारादेव, तथा सर्वत्रास्तु । यत एवायमन्वयविशेषो विनाभावात् असिध्यन्नेकवाक्यतावशादेव सिध्यति । अत एव शब्दस्य प्रमणान्तरत्वमनुमानात् । ननु प्रत्यक्षेण गवि देवदत्ते चावगते सत्स्वप्याकाङ्क्षासंनिधियोग्यत्वेषु न परस्परान्वयप्रतीतिर्भवति तस्मान्न पदार्था वाक्यार्थं गमयन्तीति पदानामेवान्विताभिधानं युक्तम् । अन्विताभिधानेऽपि तुल्योऽयं दोषः । यौ तादृशौ प्रत्यक्षप्रतिपन्नौ तयोर्वाचकावपि शब्दौ तस्मिन्समये स्मृतिस्थौ भवतः, न च तौ स्वार्थयोराकाङ्क्षादिसद्भावेऽप्यन्वयं प्रतिपादयतः । अथ यादृगवस्थितैः पदैरन्वयो वृद्धव्यवहारे दृश्यते तादृशान्येव अन्वयं प्रतिपादयन्ति नान्यादृशानीत्युच्यते, तत्पदार्थेष्वपि तुल्यम् । तेऽपि हि पदार्था एकैकविशिष्टार्थप्रतिपादनाय समाहृता वाक्यार्थं प्रतिपादयन्तीति न दोषः । तेषां च समाहारे यत्र पुरुषस्य स्वातन्त्र्यम्, तत्र तद्बुद्ध्यधीनं प्रामाण्यम्, अस्वातन्त्र्ये चानपेक्षम्, अतो न पदानामन्विते शक्तिः प्रमाणवती, निरस्तश्चायमन्विताभिधानवादो **न्यायरत्नमालायामि**त्यास्तां तावत् ।

वाक्यस्फोटोऽपि पदस्फोटन्यायेनैव निरस्तः । वाक्यार्थस्य च निर्भागत्वं भागावगमात् प्रसङ्गाद्यनुपपत्तेश्च निरसनीयम् । तथाहि– 'प्रसङ्गतन्त्रबाधोहातिदेशाधिक्रियाक्रमाः । प्रयुक्तिशेषभेदाश्च कथं निर्भागवादिनाम् ॥' यदाहि 'अग्नीषोमीयं पशुमालभेत' इति निर्भागस्य साङ्गप्रधानविधेरर्थो निर्भागः न साध्यं न साधनं नाप्यङ्गानि तदा न पशुर्न प्रयाजा न पुरोडाशो न तदीया अनुयाजाः सन्तीति किं कुत्र प्रसज्ज्यते । एवं तन्त्रादिष्वपि दर्शयितव्यम् । तस्मादनेकपदार्थानुरक्तो वाक्यार्थः । स च पदार्थमूलो न निर्मूलो न च संकेतमूलः । तस्मान्नाप्रामाण्यं चोदनायाः । यत्तु वाक्यत्वात्पौरुषेयत्वमित्युक्तं तदुपरितनेऽधिकरणे निराकरिष्यामः ।

**वि**–– 'वेदवाक्यममानं स्यान्मानं वा, नास्य मानता । पृथक्संगत्यपेक्षायामनपेक्षत्ववर्जनात् ॥', वेदेऽपि लोकवन्नैव वाक्यार्थे संगतिः पृथक् । ग्रहीतव्या ततो वाक्यं प्रमाणं नैरपेक्ष्यतः ॥'

**भाट्ट**––पदपदार्थसंबन्धानां नित्यत्वेऽपि वाक्यार्थानां वाक्यैः सह संबन्धस्य संकेतितत्वेन तद्ग्रहसापेक्षतया वक्त्रिच्छाघटिततात्पर्यज्ञानसापेक्षतया च पुरुषसंबन्धेन भ्रमप्रमादसंभवात् न विधिवाक्यानामैकान्तिकं प्रामाण्यम्, अनन्तवाक्यार्थसाधारणपदानां वाक्यार्थविशेषे संबन्धासंभवाच्च । **इति प्राप्ते**, पदैरभिहिता एव पदार्थाः स्वबोध्यसंबन्धरूपया लक्षणया वाक्यार्थभूतां भावनां समभिव्याहारविशेषबलात् विशिष्य बोधयन्ति । तथा च 'यजेत स्वर्गकामः' इत्यादौ स्वर्गकामनिष्ठा यागकरणिका स्वर्गभाव्यिका प्रवर्तनाविषयो भावना इत्यादिरीत्या भावनाविशेष्यकबोधस्य सर्वविधिषु ऐकरूप्येण न तदानन्यप्रयुक्तसंबन्धाग्रहः । तात्पर्यं च शब्दगत एव धर्म-

विशेषः । तद्ग्राहकश्च अध्ययनविध्यादिरेवेति न पुरुषसंबन्धप्रयुक्तं विधीनामप्रामाण्यम् ।

**मण्डन**– ‘ चोदना साधिता धर्मे यद्यप्यन्यनिरासतः । वाक्यार्थबुद्धिमूलं तु नोक्तं तेन तदुच्यते ॥ ’

**शंकर**— ‘ तद्भूताधिकृतिस्तथा । ’ २४. ‘ वाक्याधिकरणं चाथ । ’ २५.

* **वाक्याधिकरणम्** । ननु अस्तु पदपदार्थयोः तत्संबन्धस्य च नित्यत्वम् । तथापि वाक्यस्य वाक्यार्थप्रतिपादकत्वासंभवात् न प्रामाण्यं संभवति । तथाहि, न तावत् घटादिपदानां प्रत्येकं घटादिकर्मकत्वरूपवाक्यार्थप्रतिपादकत्वं संभवति , अनन्तवाक्यार्थसाधारणपदानां वाक्यार्थविशेषसंबन्ध( न्धा )संभवात् । एतेन पदसंघातरूपवाक्यस्य प्रत्यायकत्वं अपास्तम् । तर्हि वाक्यस्य वाक्यार्थप्रतिपादकत्वासंभवात् न प्रामाण्यं संभवति इति चेत् ।

अत्र **वैयाकरणाः** । ‘ कृष्णैहि रक्षैनं ’ इत्यादौ वाक्ये पदरूपावयवविभागे मानाभावात् एकारघटितानुपूर्वीकस्य आगमनवाचकस्य अत्र सत्त्वे मानाभावाच्च न पदसमुदायस्य वाक्यत्वम् । किंतु अवयविरूपम् । तस्यैव विशिष्टार्थे शक्तिः । स एव वाक्यस्फोटः । एवं च ‘ एकं वाक्यं ’ ‘ सूक्ष्मं वाक्यं ’ ‘ महद् वाक्यं ’ इत्याद्यबाधितसंख्यापरिमाणा प्रतीतिः उपपद्यते । अन्यथा पदसमुदायस्य वाक्यत्वे समुदायस्य समुदाय्यपेक्षया भेदाभावात् तत्प्रतीत्यनुपपत्तिः । अतो वाक्ये शक्तिः । एवं ‘ घटेन ’ इत्यादिपदे प्रकृतिप्रत्ययविभागे तदंशे च शक्तिकल्पने मानाभावात् अवयविरूपपदस्यैव शक्तिरूपः स्फोटः । एवं ‘ भवति ’, ‘ पचति ’ इत्यादौ भूधातुलडाद्युपस्थितौ मानाभावात् आनुपूर्वीविशिष्टवर्णानां शक्तिः इति वर्णस्फोटः **इत्याहुः** ।

**तन्मन्दम्** । विस्मृतपूर्ववर्णस्य अन्तिमवर्णस्मृतिमतः पदार्थप्रत्ययाभाववत्पदार्थस्मृतिमतः विस्मृतपूर्वपदस्य वाक्यार्थप्रत्ययाभावापत्तेः तत्तत्पदार्थस्मृतिवशेन पदानुमानावलम्बे मानाभावाच्च । किंचैवं पदार्थवत् वाक्यार्थोऽपि निर्भागः स्यात् । तदा ‘**प्रसङ्गो बाधतन्त्रोहप्रदेशाधिक्रियागमाः । प्रयुक्तशेषभेदाश्च न कल्पेरन्निति स्थितिः** ॥ ’ इति ।

वाक्यस्य निरवयवत्वं तु पठ्यमानश्लोकार्थानवबोधे सति तदवयवपदार्थप्रदर्शनेन जायमानेन श्लोकार्थानुभवेन विरुद्धत्वात् प्रत्युक्तम् । पूर्वं अज्ञाताया वाक्यशक्तेः वाक्यार्थानुभवजनकत्वायोगात् पूर्वं ज्ञानकल्पने स्मारकत्वापत्तिः । वाक्यशक्तिज्ञानं तद्धेतुकवाक्यार्थानुभवश्च एकदा विरुद्धौ । एवं पदानामपि निरवयवत्वं प्रत्युक्तम् । धातुप्रत्ययविभागानभिज्ञस्य बोधापत्तेः । एवं वर्णस्फोटोऽपि स्फोटवर्णेषु शक्तिकल्पनगौरवमपेक्ष्य धातुप्रत्ययोपस्थापकत्वकल्पनालाघवेन निरसनीयः । धातुप्रत्ययानभिज्ञस्य यङन्तपदैः पदार्थानुपस्थितेश्च । एकत्वमहत्त्वप्रतीतिस्तु ‘ एको महान् धान्यराशिः ’ इतिवत् **औपाधिकी** । अतो न वाक्यस्फोटरूपा वाक्यशक्तिः इति ।

**केचित्तु** पदानां इतरपदार्थान्विते शक्तिः । इतरपदार्थश्च तत्समभिव्याहारेण विशेषितः अननुगत एव । एवं च आकाङ्क्षितयोग्यसंनिहितार्थाभिधायकानां पदानां वाक्यार्थप्रतिपादकत्वं **इत्याहुः** ।

**गुरवस्तु** कार्यान्वयस्य वाक्यार्थतया पदानामेव कार्यान्विते अनुभाविका शक्तिः । स्मारिका च जातिगुणादौ । अनुभावकशक्तिग्रहे च स्मारकशक्तिज्ञानस्य हेतुता । तेन उपपत्तेः न वाक्यार्थे शक्तिः । तथाहि । प्रयोज्यवृद्ध–प्रयोजकवृद्ध–व्यवहारेण शक्तिं गृह्णन् बालः प्रयोज्यवृद्धप्रवृत्तेश्च मातृस्तन्यप्रवृत्तिदृष्टान्तेन कार्यताज्ञानजन्यत्वमनुमाय तज्जनकापेक्षायां प्रयोजकवृद्धवाक्यानन्तर्यात् तस्यैव हेतुतां ज्ञात्वा तत्रत्यपदानां कार्यान्विते शक्तिं जानाति । ततः आवापोद्वापाभ्यां तत्तत्पदार्थे शक्तिं जानन्नपि पूर्वावधृतां कार्यान्वितशक्तिं न बाधते । एवं च पदानां कार्यान्वितवाचकत्वात् अन्वयेऽपि शक्तिः **इत्याहुः** ।

एतन्मतद्वयमपि इतरान्विते कार्यान्विते वा तस्यापि शक्तिग्रहस्य गौरवप्रतिसंधानदशायां चन्द्रतारकापरिमाणज्ञानवत् बाधसंभवात् कार्यवाचकपदसमभिव्याहाराभावे शाब्दबोधानुदयप्रसङ्गाच्च न युक्तम् ।



**नैयायिकास्तु** घटत्वप्रकारक–घटविशेष्यकप्रत्यक्षादौ समवायादेरिव घटकर्मप्रकारकानयनविशेष्यकशाब्दबोधेऽपि निष्ठत्वादेः संसर्गतया भानं संभवति । प्रकारविशेष्ययोरेव शाब्दत्वात् संसर्गस्य उभयसमभिव्याहारगम्यत्वात् संसर्गमर्यादालभ्यः इत्याहुः ।

**सिद्धान्तस्तु** ‘ घटमानय ’ इत्यादौ घटपदोपस्थितघटसामान्यस्य आनयनान्वयबोधासंभवात् घटानयनविशेष एव वाक्यार्थः । स च लाक्षणिकः, अतः लाक्षणिक एव वाक्यार्थः । तत्र च नामसु कारकविशेष्यता, सर्वत्र च भावनाविशेष्यता इति नियमः स्मृतिगम्यः ।

एतेन आख्यातसमभिव्याहारे प्रथमान्तार्थविशेष्यकबोधनियमं वदन्तः तादृशनियमे मानाभावेन परास्ताः । नहि प्रथमान्तपदार्थस्य प्राधान्यबोधकं स्मृत्यादि मानमस्ति । वाक्यार्थसंसर्गस्य उभयविधत्वेन विनिगमनायोगात् । तथा च लाक्षणिकवाक्यार्थे पदसमुदायरूपवाक्यस्य पदजन्यपदार्थोपस्थितिद्वारा जनकत्वं इति वाक्यस्य वाक्यार्थबोधे प्रामाण्यं इति युक्तं विधीनां धर्मे प्रामाण्यम् । **मणि.** पृ. १७१–१७३. * वाक्याधिकरणं ‘ श्रुतेर्जाताधिकारः स्यात् ’ ( ३।३।१।१–८ ) इति । सु. पृ. १५०१. * **वाक्याधिकरणे** ( १।१।७।२४–२६ ) उक्तं वार्तिककृता, ‘ पदावधारणोपायान् बहूनिच्छन्ति सूरयः । क्रमन्यूनातिरिक्तत्वस्वरवाक्यश्रुतिस्मृतीः ॥ ’ इति । **कौ.** १।३।९।३० पृ. १३८.

* ‘ **वाक्यानुशासनं** नैव कृतं व्याकरणेन च ’ । किंतु शब्दानुशासनं कृतम् । **वा.** १।३।८।२४ पृ. २७३.

* **वाक्यार्थः** अनेकपदार्थानुरक्तः । स च पदार्थमूलः, न निर्मूलः, न च संकेतमूलः । **शा.** १।१।७ पृ. १६०. * वाक्यार्थोऽपि पदार्थोपजनितो भवति नान्यथा । तदुक्तं ‘ तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् ’ ( १।१।७।२५ ) इति । **भा.** ४।३।१।९. * वाक्यार्थश्च पदार्थपूर्वको भवति । **भा.** ५।१।५।४, **टुप्.** ६।१।१।३, १०।४।१२।२३. * वाक्यार्थः पदार्थसामर्थ्यजनितो भवति । **भा.** ५।१।११।२१.

* वाक्यार्थः । पदज्ञानकरणको वाक्यार्थो द्विविधः । भेदरूपः संसर्गरूपश्च । ‘ राज्ञः पुरुषः ’ इत्यादौ ‘ अराजसंबन्धिभिन्नः पुरुषः ’ इति बोधात् इति **केचित्** ।

सर्वत्र संबन्ध एव वाक्यार्थः, उक्तरूपापोहस्य प्राचुर्येण भानाभावात्, अपोहस्याप्रसिद्धेश्च । अतः संसर्ग एव वाक्यार्थः । स च ‘ घटमानय ’ इत्यादौ । घटकर्मत्वादिरूपविशेषणविशिष्टं विशेष्यमेव वाक्यार्थः इत्या**चार्याः** ।

तस्य च विशिष्टवैशिष्ट्यरूपवाक्यार्थस्य भानं चतुर्विधम् । विशिष्टस्य वैशिष्ट्यरूपं एकम् । विशेष्ये विशेषणं तत्र च विशेषणान्तरं इत्यपरं यथा ‘ नीलदण्डवान् पुरुषः ’ इति । एकविशिष्टे अपरवैशिष्ट्यं इति तृतीयं ‘दण्डी देवदत्तः कुण्डली’ इति । एकत्र द्वयं इति चतुर्थं यथा ‘दण्डी कुण्डली देवदत्तः ’ इति । **मणि.** पृ. ७९–८०. * वाक्यार्थः संसर्गः नैयायिकमते । अर्थभावनैव कारकविशिष्टरूपेण मीमांसकमते । **बाल.** पृ. ७३ , * वाक्यार्थः । संसर्गो भेदश्च न वाक्यार्थः इत्युक्तं **भाष्ये** ( २।१।१४।४६ पृ. ४४६–४७ ) । ‘ भेदः संसर्गो वा वाक्यार्थ इति यद्युच्यते तथापि एकार्थता न स्यात् बहुपदेषु भेदानां संसर्गाणां च बहुत्वात् ’ इति । तद्विवरणं तु वार्तिके कृतम्– ‘ व्यक्तिपदार्थपक्षे सर्वव्यक्तीनां गवादिपदेनैव उपात्तत्वात् तद्विशेषशब्दैः शुक्लादिभिः कृष्णादिव्यवच्छेदमात्रं कर्तव्यं तत्संसर्गः पदार्थान्तर्गतत्वात् न वाक्यार्थो भवति इति तदुपसर्जनः तेषां भेदो गृह्यते । स च यथा शुक्लशब्देन गोशब्दस्य कृष्णादिभ्यो भिद्यमानत्वात् भवति । एवं शुक्लशब्दस्यापि गोशब्देन अश्वादिभ्यो व्यावर्तितस्य भवति । व्यवच्छेद्यनानात्वाच्च नास्त्येकवाक्यत्वे प्रमाणम् । भेदसामान्यग्रहणे वा सर्ववाक्यार्थैकत्वप्रसङ्गः ’ इति । तथा ‘ आकृतिपदार्थपक्षे शुक्लत्वगोत्वयोः स्वरूपेणाभिहितयोः संनिधानात् इतरेतरानुरञ्जनादर्थसिद्धो भेदो न वाक्यार्थः । स च गोत्वे शुक्लत्वसंसर्गः, शुक्लत्वे च गोत्वसंसर्गः सामस्त्येन एकव्यक्त्युपसंहारात् उपलभ्यते इति नाना । यद्यपि च कथंचित् द्विपदे स एवोभयत्रापि संसर्गः इत्येकत्वं गम्येत तथापि बहुपदे येन-

येन प्रदेशेन पदद्वयं संसृज्यते तेनतेन तत्संसर्गरूपोपलब्धेरनेकत्वम् ' इति । पृ. ७३. * वाक्यार्थः सर्वकारकान्वितक्रियारूपः । सु. पृ. ११९०. * आकृतिपदार्थपक्षे शुक्लत्वगोत्वयोः स्वरूपेणाभिहितयोः संनिधानात् इतरेतरानुरञ्जनं अर्थसिद्धमेदं **वाक्यार्थः** । स च गोत्वे शुक्लत्वसंसर्गः शुक्लत्वे वा गोत्वसंसर्गः सामस्त्येन एकैकव्यक्त्युपसंहारात् उपलभ्यते इति नाना । अस्माकं आकृतिपदार्थकत्वात् नैव भेदो वाक्यार्थत्वेन अभिप्रेतः । यदा भेदवन्तः पदार्था एव वाक्यार्थः तदा सिद्धमेव नानात्वम् ( न तु अर्थैकत्वं सिध्यति ) । **वा.** २।१।१४।४६ पृ. ४४७. * कामाधिकारे (फलाधिकारे) हि फलसिद्धिपर्यन्तो वाक्यार्थः । **ऋजु.** पृ. १५९. * द्वाभ्यां पदार्थाभ्यां वाक्यार्थः संजन्यते, न अन्यतरेण । संनिधौ समाम्नानस्य एतदेव प्रयोजनम् । कथं उभाभ्यां पदार्थाभ्यां विशिष्टां बुद्धिं उत्पादयेयुः ? अनन्तरावबुद्धेन सह वाक्यार्थः शक्यते कर्तुम् । अथान्येन प्रकारेण ध्यानादिना पूर्वपदार्थमवगम्य वाक्यार्थं संजनयेत् ( चेत् ) अवैदिकः सः पुरुषबुद्धिपूर्वको वाक्यार्थो भवेत् । यथा अन्यस्मादनुवाकात् आख्यातपदं गृहीत्वा अन्यस्माच्च नामपदं यो वाक्यार्थः संजन्यते तादृशं तद्भवेत् यत्र अन्येन ध्यानादिना पूर्वपदार्थमवगम्य वाक्यार्थं संजनयेत् । **भा.** ३।१।११।२१ पृ.७३४–३५. * 'नाप्रसिद्धे पदार्थे हि वाक्यार्थः संप्रतीयते' । **श्लोवा. निरालम्बनवादः** ५९. * न चासंप्रतिपन्नपदार्थको वाक्यार्थः प्रमाणं भवति । पदार्थो हि वाक्यार्थस्य मूलम्, नास्य पृथक् सिद्धिरस्ति । **भा.** १०।७।९।२९, * न हि अनन्वितः पदार्थो भवति वाक्यार्थः । ३।२।१।१ पृ. ७४७. * न हि द्वौ स्वतन्त्रौ पदार्थौ अगृहीत्वा वाक्यार्थः प्रतीयते । **वा.** २।२।९।२३ पृ. ५३४. * पदेभ्य एव पदार्थप्रत्ययः, पदार्थेभ्यो वाक्यार्थः । **भा.** १।१।७।२६, * पदार्थैः संस्कृतः पिण्डितोऽर्थः वाक्यार्थः । ( 'पदार्थैरेभिः संस्कृतं पिण्डितं वाक्यार्थम्' ) । १।१।८।३२. * पदेतरार्थे अवगते पदार्थोऽवधार्यते, तदुत्तरकालं वाक्यार्थः । **वा.** ६।१।१।१. * विशिष्टार्थसंप्रत्ययश्च वाक्यार्थः । **भा.** १।१।७।२५, * श्रुत्यर्थे संभवति वाक्यार्थो न ग्राह्यः, श्रुत्यर्थस्य मुख्यत्वात् । ११।१।१।३. * संकेतानपेक्षैरेव पदैः पदार्थाः प्रतिपाद्यन्ते, तैरपि अनपेक्षितसंकेतैः वाक्यार्थः इत्युक्तम् । **शा.** १।१।८. * सर्वत्र तु बोधिते पदार्थे वाक्यार्थः उपपद्यते नान्यथा । सामान्यवृत्ति हि पदम्, विशेषवृत्ति वाक्यम् । सामान्येनाभिप्रवृत्तानां पदार्थानां यद्विशेषेऽवस्थानं स वाक्यार्थः । तदेतदुक्तं 'तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्' इति ( १।१।७।२५ ) । **भा.** ३।१।६।१२ पृ. ६८९. * **वाक्यार्थस्य** अन्यथात्वकल्पने विपरिणाम–व्यवहितकल्पना–व्यवधारणकल्पनादोषाः । तत्र क्रमेण उदाहरणानि ( १ ) अत्रोदाहरणं आग्नेयवाक्यम् । ( २ ) 'प्रतितिष्ठन्ति ( ह वा य एता रात्रीरुपयन्ति' ) इत्यत्र 'प्रतितिष्ठासन्ति रात्रीरुपेयुः' इत्यन्यथात्वे कल्पिते ये इत्यस्य रात्रिसमभिव्याहृतस्य 'ये प्रतितिष्ठासन्ति' इति व्यवहितकल्पना । ( ३ ) व्यवधारणकल्पना इत्यत्र 'यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान् निर्वपेत्' इति । **बाल.** पृ. ४. * वाक्यार्थस्य पदार्थमूलतया प्रामाण्यम् । १।१।७।२४–२६. * **वाक्यार्थयोः** संबन्धः औत्पत्तिकः । **बृहती.** पृ. १०३. * **वाक्यार्थानां** परस्परापेक्षया अन्वयो न विरुद्धः पदार्थानां परस्परान्वयाकाङ्क्षापर्यवसानेऽपि । **सु.** पृ. ५२५. * **वाक्यार्थे** शक्तिः लक्षणा वा । वाक्यार्थे वाक्यस्य शक्तिः इति **वैयाकरणाः** ।

कार्यान्विताभिधानाङ्गीकारेण कार्यान्वयरूपे वाक्यार्थे शक्तिः इति **गुरवः** ।

इतरान्विताभिधानाङ्गीकारेण अन्वयरूपे वाक्यार्थे शक्तिः इति **वेदान्तिनः** ।

वैयाकरणानां वाक्यार्थो विशेष्यः, इतरयोस्तु विशेषणभूत इति भेदः ।

संसर्गमर्यादया वाक्यार्थभानं इति **गौतमीयाः** ।

वाक्यार्थे लक्षणा इति **सिद्धान्तः** । तत्र वैयाकरणास्तावत् । 'भवति, भूयात्, बभूव, रामः, रामान्' इत्यादौ श्रूयमाणतिकारविसर्गादीनां वाचकता, न तु भूधातुलकारसुबाद्युपस्थापनद्वारा अर्थप्रत्यायकत्वम्,



आदेशिनां वाचकत्वकल्पने आदेशानां तदुपस्थापकत्वकल्पने गौरवात् । व्याकरणभेदेन आदेशिनां अननुगमाच्च । अन्यथा 'ऋषभो वृषः' इत्यादावपि अन्यतरेण अन्यतरस्मरणेन एकत्रैव शक्त्यापत्तेः । अतः श्रूयमाणानुपूर्वीविशिष्टा वर्णा वाचकाः, न तु धात्वाद्युपस्थापकाः इति **वर्णस्फोटः** ।

एवं 'हरिणा, हरये, रामात्, हरेः' इत्यादौ पदादेशविभागाभावात् कस्यचिदंशस्य द्रव्यवाचकत्वम्, कस्यचित् करणत्वादिवाचकत्वं इति नियन्तुमशक्यत्वात् संपूर्णस्यैव करणत्वादिविशिष्टहरिवाचिता इति **पदस्फोटः** ।

एवं 'कृष्णेहि' 'रक्षैनं' इत्यादौ वाक्ये अंशविभागाभावात् एकारघटितानुपूर्वीकस्य आगमनवाचकस्य अत्र सत्त्वे मानाभावात् वाक्यस्यैव विशिष्टार्थे शक्तिः इति **वाक्यस्फोटः** ।

स द्विविधः सखण्डवाक्यस्फोटः, अखण्डवाक्यस्फोटश्च । आद्यो द्विधा पदरूपखण्डवाक्यस्फोटः, वर्णरूपखण्डवाक्यस्फोटश्च । तथाहि, 'विष्णोऽव' इत्यादिवाक्येषु आकाङ्क्षादिसहकृत–तत्तत्पदस्मारित–पदार्थानां संसर्गरूपवाक्यार्थावगमेऽपि तस्य शाब्दत्वसिद्धये वाक्यस्य शक्तिः कल्प्यते । सैव वाक्यस्फोटः । सा च अज्ञाता एव स्वरूपेण हेतुः । अन्वितशक्तिवादिमते अन्वयांशशक्तिवत् 'हरिद्रायां नद्यां घोषः' इति वाक्य इव अन्वयाव्यवहितपूर्वक्षणे तदवगमो वा कल्प्यते । यद्वा 'हरेऽव' इत्यादौ पदविभागानिर्णयात् वर्ण-( अक्षर- ) त्रयात्मकवाक्यस्य संबोध्यहरिकर्तृकलक्षणे शक्तिरूपः स्फोटः, तदा वर्णरूपः खण्डवाक्यस्फोटः । अस्याश्च व्यवहारकाले ग्रहः ।

न चैवं वाक्यस्य पदवत् स्मारकत्वापत्त्या अननुभावकत्वापत्तिः इति वाच्यम् । अनुभवत्वस्य प्रत्यक्षमात्रवृत्तितया इष्टत्वात् । यथार्थज्ञानजनकत्वस्यैव वाक्यप्रमाणत्वात् । आकाङ्क्षादिसहकृतपदार्थस्मरणजन्यार्थज्ञानजनकत्वस्यैव अनधिगतार्थगमकतया प्रामाण्याविघातः ।

**यद्वा** । वाक्ये बोधकत्वातिरिक्तः संबन्धो न शक्तिः, मानाभावात् । हस्तिपकादौ तु तस्य मानान्तरगम्यत्वात् युक्तं तेन तत्स्मरणम् । अतो न स्मारकत्वापत्तिलेशोऽपि । एवं च आकाङ्क्षादिज्ञानस्य हेतुत्वाभावात् तात्पर्यज्ञानस्यैव हेतुतया कार्यकारणभावकल्पनालाघवम् ।

**यद्वा** । 'घटमानय' इत्यादिवाक्येषु ध्वनिधर्मैः तारत्वमन्द्रत्वादिभिरिव घटत्वादिध्वनिधर्मैरेव एकशब्दो वर्णरूपोऽभिव्यज्यते । स एव वाक्यस्फोटः ।

एवं पदस्फोटेऽपि द्वैविध्यमुन्नेयम् ।

एवं च 'एकं पदं' 'एकं वाक्यं' 'महत् पदं' 'महत् वाक्यं' 'शब्दात् प्रत्येमि' इत्याद्यनुभवोपपत्तिः । वर्णानामनेकत्वेन महत्त्वाभावेन च तदनुपपत्तेः इत्याहुः ।

**परे तु** यथा बलवता प्रेरितः इषुः एकेनैव वेगाख्यव्यापारेण वर्मच्छेदम्, उरोभेदम्, प्राणहरणं च शत्रोः करोति एवं शब्दः एकेन अभिधाख्यापारेण पदार्थस्मृतिं वाक्यार्थानुभवं च करोति इति 'यत्परः शब्दः स शब्दार्थः' इति वाक्यार्थे शक्तिमाहुः । **तदयुक्तम्** । 'पूर्वो धावति' इत्यत्र परस्य, 'पुत्रस्ते जातः' इत्यादिषु हर्षादीनाम्, 'गच्छ गच्छसि चेत्' इत्यादौ 'मा गाः' इति निषेधस्य वाक्यार्थतापत्तेः । अत एव तादृशार्थप्रत्ययाय व्यञ्जनैव अङ्गीकृता । तच्च व्यञ्जनानिरूपणे स्पष्टम् ।

**केचित्तु** वाक्यार्थे तात्पर्याख्यं वाक्यस्य वृत्त्यन्तरमाहुः ।

**प्राभाकरास्तु** । कार्यान्विते पदानां शक्तिः । तथाहि, पदेषु स्मारिका अनुभाविका चेति शक्तिद्वयम् । तत्र स्मारिका जातौ । अनुभाविका कार्यान्विते । एवं च घटादिपदानि घटत्वादिजातिस्मरणद्वारा घटादेः कार्यान्वयानुभवजनकानि । तथाहि, सर्वत्र व्यवहारेणैव शक्तिग्रहः । प्रयोज्यवृद्धस्य प्रयोजकवाक्यश्रवणानन्तरं गोकर्मकानयनचेष्टया तादृशकृतीच्छानुमानद्वारा स्वप्रवृत्तौ कार्यताज्ञानस्य हेतुत्वदर्शनात् कार्यताज्ञानमनुमाय पदानां कार्यताज्ञानहेतुत्वमवधार्य तस्य असति वृत्त्यन्तरे तदर्थशक्तिं विना अनुपपन्नतया कार्यान्वये अनुभाविकां शक्तिमवधारयति । कार्यं च अपूर्वमेव इति यत्र कार्यवाचकपदाभावः तत्र न वाक्यार्थबोधः, किंतु पदार्थस्मरणमात्रम् । लिङ्गादियुक्तलौकिकवाक्यस्य च लक्षणया आनयनादिरूपकार्यान्वितबोधकत्वं इत्याहुः ।

**वेदान्तिनस्तु** इतरान्विते एव शक्तिग्रहः, न तु कार्यान्विते। तथाहि, प्रयोजकवाक्यस्य आनयनकर्मत्वविशिष्टगोरूपे अर्थे शक्तिमवधार्य आवापोद्वापाभ्यां गवादिपदस्य गोत्वादौ शक्तिमवधारयन् आद्यव्युत्पत्तिगृहीतान्वयांशे शक्तिमत्यजन् इतरान्विते एव शक्तिमवधारयति। एवं च अन्वयेऽपि शक्तिः **इत्याहुः।**

**नैयायिकास्तु** समभिव्याहारेण वाक्यार्थबोधः घटानयनविशिष्टसंसर्गज्ञाने तादृशानुपूर्वीज्ञानस्य हेतुतामात्रकल्पने लाघवात्। शाब्दत्वं च न शब्दवृत्तिविषयत्वं किंतु शब्दजन्यप्रतीतिविषयत्वम्। तेन वृत्त्यविषयस्यापि अन्वयस्य शाब्दत्वोपपत्तिः **इत्याहुः।**

**सिद्धान्तस्तु** वाक्यस्य वाक्यार्थे लक्षणा। न च शक्याभावात् कथं लक्षणा इति वाच्यम्। बोध्यसंबन्धस्यैव लक्षणात्वात्। 'घटमानय' इत्यादिवाक्ये घटानयनसामान्यबोधेऽपि तद्विशेषबोधस्य लक्षणां विना अनुपपत्तेः। नहि घटानयनसामान्यं वाक्यार्थः। ज्ञानेच्छाप्रवृत्तीनां समानप्रकारकत्वसमानविशेष्यकत्वेन हेतुहेतुमद्भावात् विशेषविषयकेच्छाप्रवृत्त्यनुपपत्तेः। अतः तद्विशेषरूपवाक्यार्थस्य लाक्षणिकत्वं युक्तम्। स्फुटीकरिष्यते चैतत् तद्भूताधिकरणे (१।१।७)। **मणि. पृ.** ८०–८३.

* **वाक्यार्थाधिकरणसिद्धान्तस्तु**–तथा च वाक्यानां वाक्यार्थे शक्तेर्ज्ञानं नापेक्ष्यते। तात्पर्यं च न पुरुषेच्छाघटितं इति तत्तत्पदसमभिव्याहृतक्रियापदरूपं वाक्यं पदार्थज्ञानसहकारेण तत्तत्पदार्थान्वितभावनारूपं वाक्यार्थं बोधयति इति न चोदनानामप्रामाण्यं इति। **कस्तूरि.** १ १।७। वाक्यार्थज्ञानं न पदार्थोपस्थितिमन्तरा भवति, किंतु पदेभ्य उपस्थितानामर्थानां योग्यतया परस्परसंबन्धज्ञानमेव वाक्यार्थज्ञानं तत्र च न लोकसापेक्षता इति चोदना धर्मे प्रमाणम्। वृत्तिः.

* **वाक्यार्थावगमः** न वाक्यग्रहणमूलकः, किंतु पदार्थावगममूलक एव, पदार्थान्वये अन्वीयमानत्वात् तद्व्यतिरेके व्यतिरिच्यमानत्वात्। **वैद्यनाथः** १।१।७। २५ पृ. ९८.

* **वाक्यार्थैकत्वे** यत्र एकवाक्यता संभवति, तत्र सर्वविशेषणविशिष्टैकभावनाविधिः। यथा 'देवदत्तः काष्ठैः स्थाल्यामोदनं पचति' इत्युक्ते सर्वेषामेकपाकविषयत्वम्। **वा.** ३।१।६।१२ **पृ.** ६९१.

* **वाक्यार्थत्वं** भावनायाः। **सु. पृ.** ६८३.

**वाक्यार्थप्रतिपत्तिन्यायः। साहस्री.** ८६२.

* **वाक्यार्थप्रतिपत्तिन्यायेन** तत्प्रतिपत्ति-(संबन्धप्रतिपत्ति) संभवे तत्र शक्तिकल्पने गौरवात्। **मीन्या.**

* **वाक्यार्थप्रतीतौ** पदार्थानां करणत्वम्। **बाल. पृ.** ७०.

* **वाक्यार्थबोधः** समभिव्याहारेण इति नैयायिकाः। **मणि. पृ.** ८२.

* **वाक्यार्थबोधप्रकारः** कार्यत्वं विध्यर्थं अङ्गीकृत्य गुरुमते प्रदर्श्यते। लोके 'तृप्तिकामः पचेत्' इत्यादौ प्रत्ययार्थकार्यत्वस्य प्रकृत्यर्थपाके अन्वयवत् 'स्वर्गकामो यजेत' 'शुचिः संध्यामुपासीत' इत्यादिवैदिकविधौ प्रत्ययार्थकार्यत्वस्य न प्रकृत्यर्थयागादौ अन्वयः संभवति, प्रकृत्यर्थाप्रतीतयोग्यताकत्वात्। तथाहि, यागादिक्रियायां कार्यत्वान्वये नियोज्यान्वयो हेतुः, नियोज्यविशिष्टायामेव पाकादिक्रियायां कार्यत्वान्वयदर्शनात्। अन्वयप्रयोजकरूपवत्त्वस्य तन्मते योग्यत्वात्। प्रकृते स्वर्गकामस्य नियोज्यत्वेन नियोज्यस्य स्वर्गफलकामनाप्रयुक्तकार्यताज्ञानविषयत्वेन संबन्धेन यागादिक्रियायामन्वये स्वर्गसाधनत्वं स्वर्गसाधनत्वेन ज्ञायमानत्वं वा योग्यता। तच्च न संभवति साक्षात् स्वर्गसाधनत्वस्य बाधात्, परंपरया तत्साधनत्वस्य परंपराघटकापूर्वज्ञानं विना दुर्ज्ञेयत्वात्। तथा च यागे नियोज्यान्वयासंभवात् न कार्यत्वान्वयः इति।

अथ 'शुचिः संध्यामुपासीत' इत्यादौ नित्ये यथा इष्टसाधनत्वज्ञानं विनाऽपि 'शुचिनियोज्यकं संध्यावन्दनविषयकं कार्यं' इति बोधः, तथा 'स्वर्गकामनियोज्यको यागः कार्यः' इति बोधः स्यात् इति चेन्न, प्रकृते कामनाविशिष्टस्य नियोज्यत्वेन नित्यविधिनो विशेषात्।

न च कामना उपलक्षणमस्तु आत्ममात्रमेव उपलक्ष्यम्, काम्यसाधनतालिङ्गककार्यताज्ञानस्य प्रवर्तकत्वेन नातिप्रसङ्ग इति **वाच्यम्।** तर्हि 'स्वर्गकामः' इत्यस्य



वैफल्यापत्तेः। कामनाया उपलक्षणत्वे नित्ये इव वेदाधीनकार्यताज्ञानात् निष्कामस्यापि प्रवृत्त्यापत्तेः, इष्टसंबन्धे मानाभावात् अप्रवृत्त्यापत्तेश्च। नहि नित्यविधितः प्रकृते स्वर्गकामपदसमभिव्याहारात् अन्यो विशेषः। विशेषणत्वे हि विशिष्टस्य स्वप्रयोज्यकार्यताज्ञानवत्त्वरूपनियोज्यत्वेन अन्वये तत्कामनाविषयसाधनत्वस्य योग्यतात्वात् स्वर्गकामपदैकवाक्यतानिर्वाहकप्रतीत्यनुपपत्त्या वाच्यं अपूर्वं कामनाविशिष्टान्वयि सिध्यति। अत एव प्रधानविधावेव अपूर्वाकाङ्क्षा, न नित्यविधौ आग्नेयादिविधौ च। 'ममेदं कार्यं' इतिबोधवत्त्वरूपनियोज्यत्वे च कामनायाः विशेषणतया प्रयोजकत्वं कामिनो जनकत्वं इति विशिष्टप्रयोज्यत्वं संबद्धत्वं च कर्तृत्वाधिकारित्वाभ्याम्। बोधे तु उपलक्षणता अनन्यगत्या न क्षतिकरी। प्राथमिकनियोज्यान्वये विशेषणतयैव इष्टसिद्धेः।

एतेन 'राजा स्वाराज्यकामः' इत्यादौ राजत्वादिवत् विद्यमानत्वे सति व्यावर्तकत्वेन विशेषणत्वमपि अपास्तम्। कामनायामेव तत्कृतेरुदयात्, 'यदा कामना तदा तत्कृतिः' इति रीत्या व्यावर्तकत्वसंभवाच्च। अतो यागे कार्यत्वान्वये नियोज्यान्वयो योग्यता। तत्र च इष्टसाधनत्वेन ज्ञायमानत्वम्, स्वर्गसाधनत्वस्य योग्यतात्वाभावात् इति गुरुमतनिगर्वः।

अत्र काम्यसाधनत्वेऽपि तत्त्वेन अज्ञायमाने नियोज्यानन्वयात् काम्यसाधनत्वेन ज्ञायमानत्वमुक्तम्।

यत्तु काम्यसाधनत्वेऽपि तत्साधनत्वभ्रमात् नियोज्यान्वयात् उपस्थितकाम्यसाधनत्वागृहीतासंसर्गकत्वमेव योग्यता। उपस्थित्यर्थमेव अपूर्ववाच्यतासिद्धिरिति। तन्न। त्वन्मते योग्यताविशिष्टज्ञानस्यैव शाब्दबोधे हेतुत्वात् अन्यथाख्यात्यापत्तेः।

एतेन तादृश-(काम्यसाधनत्व-) ज्ञानवतोऽपि नियोज्यस्य चिकीर्षाशून्यस्य न यागकृतिः इति न नियोज्यत्वं योग्यता, न वा चिकीर्षा, तद्वतोऽपि उपादानप्रत्यक्षविरहिणः असत्त्वात्, इति परास्तम्।

अन्वयप्रयोजकत्वं हि न अन्वितवृत्तित्वेन गृहीतत्वम्, किन्तु अनन्वितवृत्तित्वेन अगृहीतत्वम्। तत्त्वं च यदा यस्य तत्त्वं तदा तस्य न योग्यतात्वम्, किन्तु विशिष्टनिष्ठतया उक्तनियोज्यत्वमेव, प्रयोजकतया तस्य विशिष्टनिष्ठत्वात्। चिकीर्षावत्त्वमपि तथेति चेत्, सत्यम्। किंतु तत्प्रयोजकत्व तस्य उक्तनियोज्यत्वद्वारकत्वेन गुरु इति तत्त्यागः। अत एव कृतिप्रयोजकत्वरूपकर्तृत्वत्यागः। कृतिसमवायित्वरूपं कर्तृत्वम्, फलभोक्तृत्वरूपं चाधिकारित्वं न कामनायाम्, इति न तयोर्विशिष्टनिष्ठत्वं इति प्रागेवोक्तम्।

वस्तुतस्तन्मते अन्यथाख्यात्यभावात् 'यागो मत्कृतिसाध्यः' इति ज्ञानं कृतिशून्यस्य नास्त्येव इति न किंचिदेतत्।

ननु योग्यतान्वये योग्यतान्तरापेक्षायां अनवस्थाऽऽपत्तेः नियोज्यान्वयरूपयोग्यतान्वये न योग्यतान्तरापेक्षा इति चेत्, सत्यम्। नियोज्यत्वस्य योग्यतारूपस्य स्वर्गकामे अन्वये योग्यतान्तरानपेक्षायामपि नियोज्यत्वेन रूपेण स्वर्गकामस्य पदार्थस्य धात्वर्थे यागे अन्वये योग्यतान्तरस्य आवश्यकत्वात्।

घटे छिद्रेतरत्वस्यान्वये योग्यतान्तरानपेक्षायामपि छिद्रेतरत्वेन घटस्यान्वये, योग्याहरणत्वस्य आहरणे, योग्यजलत्वस्य जले योग्यतात्वात्। तथाहि, यथा घटादिमात्रेण आहरणाद्यसंभवात् घटे छिद्रेतरत्वं आहरणे योग्याहरणत्वं जले च योग्यजलत्वं योग्यता, तथा स्वर्गादिकामस्य 'ममेदं कार्यं' इति ज्ञानशून्यस्य यागाद्यन्वयासंभवात् स्वर्गकामे नियोज्यत्वम्, क्रियायां काम्यसाधनत्वेन ज्ञायमानत्वं योग्यता। नित्ये तु शौचादिमत्त्वमेव योग्यता इति बोध्यम्।

अथ अपूर्वरूपकार्येऽपि न नियोज्यान्वयसंभवः। अपूर्वस्य प्रागनुपस्थित्या तत्र काम्यसाधनत्वरूपयोग्यताज्ञानासंभवात् इति चेन्न। विशिष्य अपूर्वत्वेन ज्ञानासंभवेऽपि कार्यत्वेन तस्य काम्यसाधनत्वज्ञानसंभवेन नियोज्यान्वयसंभवात्। ओदनत्वेन तृप्तिसाधनतया ज्ञाते ओदने तृप्तिकामान्वयवत् समानप्रकारकत्वेनैव योग्यताधियो नियोज्यान्वये हेतुत्वात्। अपूर्व लाभस्तु योग्यताबलात्। 'यागजन्यं कार्यं स्थायि प्रकृतकाम्यसाधनं' इत्यत्र अपूर्वस्यैव विषयत्वात्, यागजन्यस्य कार्यान्तरस्य अतथात्वात्।

एतेन साक्षात्साधनत्वान्वययोग्यतारूपं स्थायित्वं प्राक् अपूर्वानुपस्थित्या असंभवि इत्यपास्तम् । कार्यत्वावच्छिन्ने क्वचित् स्थायित्वज्ञानसंभवात् । साक्षात्साधनत्वस्य नियोज्यान्वययोग्यतारूपस्य योग्यतात्वेनैव उपस्थितेः तत्र योग्यतान्तरानपेक्षणाच्च ।

'स्वर्गकामो यजेत' इत्यादिवाक्यश्रवणे स्वर्गसाधनं स्थायि कार्यं संभवति स्वर्गकामान्वययोग्यम् । यागस्तु अस्थायी इति अनुपपत्तिज्ञानात् अपूर्वं वाच्यं सिध्यति इति अनुपपत्तिज्ञानमेव योग्यताज्ञानं इत्यन्ये ।

लिङेव फलकरणत्वान्वितं स्वार्थमाह इति **न्यायप्रदीपः । मणि**. पृ. ८४–८८.

* **वाक्यार्थभूता** अर्थभावना इति गीयते । अर्थ्यते इत्यर्थः फलकामः पुरुषः तद्धर्मत्वात् । **बाल.** पृ. ७८.

* **वाक्यार्थविधिः** अन्याय्यः श्रुत्यर्थविधिसंभवे । **मीन्या.**

* **वाक्यार्थविषयको विचारः मीको.** पृ. ३४४९ 'वाक्याधिकरणं' इति बिन्दौ द्रष्टव्यः । १।१।७।२४–२६.

* **वाक्याद्यपेक्षया** लिङ्गस्य प्राबल्यम् । **वि.** ३।३।८.

* 'नात्रान्तरक्रियायोगादृते **वाक्योपकल्पितात् ।** गुणद्रव्ये कथंभावैर्गृह्णन्ति प्रकृताः क्रियाः ॥' **वा.** १।४।२।३ पृ. ३३१.

* **वाक्यैकत्वम् ।** नहि प्रतिपदं परस्पराकाङ्क्षा संबन्धो वा भवति । किं तर्हि ? केनचिदेकेन संबध्यमानानि सर्वाणि एकवाक्यतां गच्छन्ति । **वा.** ३।२।६।१९ पृ. ७६९.

* **वाक्यैकत्वसंभवे** वाक्यभेदस्य अन्याय्यत्वम् । **पराक्रमः.** ५।२।१.

* **वाक्यैकवाक्यता** विध्यर्थवादयोरस्ति । **वि.** १।२।१.

* **वाक्यैकवाक्यताजन्यबोधस्तु** न श्रुतशाब्दबोधः । **भाट्ट.** ७।२।१.

* **वाक्यैकवाक्यतास्थले** तद्व्यतिरेकप्रयुक्तकार्याजनकत्वं आकाङ्क्षा । **मणि.** पृ. ६६.

* **वाक्यक्रमयोर्विरोधे** शेष्यनेकत्वे (एकस्य शेषस्य अनेकं शेषिणं प्रति नीयमानस्य विरोधे) उदाहरणम्– परिव्याणकरणक्रियमाणानुवादिपरिवीरसिपरिवीतपदव्यतिरिक्तपदानां 'युवा सुवासाः परिवीत आगात् स उ श्रेयान्' इत्येवमादीनां लिङ्गविनियुक्तपरिवीतपदैकवाक्यत्वात् सवनीयपरिव्याणे विनियोगः । **अथ शेषानेकत्वे** उदाहरणम्–ज्योतिष्टोमे काम्यनैमित्तिकेषु प्रतिपत्कल्पेषु प्रतीकग्रहणात् पादमात्रं श्रुत्या विनियुज्यते । तत्र द्वितीयपादात् प्रभृति यथासंख्यक्रमेण नित्यानामेवर्चां प्रसङ्गः । तद्यथा– 'वृषा पवस्व धारया इति राजन्याय प्रतिपदं कुर्यात्' इत्यत्र 'पवमानायेन्दवे । अभि देवाँ इयक्षते' इत्येतावेव द्वितीयतृतीयपादौ प्राप्नुतः । वाक्याच्च 'मरुत्वते च मत्सरः । विश्वा दधान ओजसा' इति । ('वृषा पवस्व धारया मरुत्वते च मत्सरः । विश्वा दधान ओजसा ।।' ऋसं. ९।६५।१० । 'उपास्मै गायता नरः पवमानायेन्दवे । अभि देवाँ इयक्षते ।।' ऋसं. ९।११।१)। ननु विभक्तिभेदात् अत्र लिङ्गविरोधः स्यात् । नैष दोषः । सर्वेषां सोमलिङ्गत्वात् विभक्तिभेदेन तु एकवाक्यत्वमेव नोपपद्यते । तत् यावत् आकाङ्क्षापूर्वकमेकवाक्यत्वादि कल्प्यते तावत् इतरेण आनन्तर्यात् समानविषयत्वाच्च सामर्थ्यादि कल्पयित्वा विनियोगः कृत इति बलीयस्त्वम् । **वा.** ३।३।७।१४ पृ. ८३७, ८३९.

* वाक्यक्रमयोर्विरोधे (शेष्यनेकत्वे) परिव्याणकरणक्रियमाणानुवादिमन्त्रगतपरिवीरसिपरिवीतपदयोः लिङ्गादेव अग्नीषोमीयक्रमबाधेन यावत् परिव्याणशेषत्वेऽवगते तदेकवाक्यतापन्नपदान्तराणां तथैव क्रमबाधेन वाक्यात् सवनीयपरिव्याणार्थत्वम् । शेषानेकत्वे तु 'वृषा पवस्व धारया इति राजन्यस्य प्रतिपदं कुर्यात्' इति इतिकरणरूपगौणश्रुत्या आद्यपादमात्रस्यैव विनियोगात् द्वितीयमारभ्य यथाक्रमपाठेन नित्यप्रतिपद्द्वितीयादिपादप्रसक्तौ नैमित्तिक–प्रतिपदाद्यपादैकवाक्यतापन्न– द्वितीयादिपादानां वाक्येन प्राप्तिः । **कौ.** ३।३।७।१४ पृ. ३६२

* **वाक्यगतं** प्रत्येकं पदं नापूर्वबोधकम्, किन्तु एकमेव । २।१।१।१. **मीको.** पृ. २७२३ 'प्रतिपदाधिकरणम्' इत्यत्र द्रष्टव्यम् ।



* **वाक्यगतिः ।** लोकाधीनावधारणा वाक्यगतिः । लोके च प्रत्युद्देश्यं विधिवाक्यपरिसमाप्तिः । न खलु येनैव प्रयत्नेन एकमर्थं विधातुं एकमुद्दिशामः तेनैव अपरमपि उद्देष्टुं ईश्महे इति स्वानुभवसिद्धमेतत् । तस्मात् द्वयोरुद्देश्ययोः नैकवाक्यसमवायसंभवः । **कणिका.** पृ. ३७३.

* **वाक्यगम्यं** 'यदि कामयेत वर्षेत् पर्जन्य इति नीचैः सदो मिनुयात्' इति सामानाधिकरण्यं 'यदि कामयेत' इति आत्मनेपदश्रुत्या बाधितम् । **वा.** ३।८।५।१३. * **वाक्यगम्यस्य** आरुण्यस्य एकहायनीद्वारता 'अर्थैकत्वे द्रव्यगुणयोः' (३।१।६।१२) इत्यत्र उक्ता । **सु.** पृ. ११९२.

* **वाक्यत्वं** नाम जातिः भिन्नस्थानकरणप्रयत्नाभिव्यङ्ग्यक्रमवद्वर्णात्मकपदसमूहे अन्त्यवर्णे वा विलक्षणावयवपदार्थसंबन्धप्रत्ययाकाङ्क्षाव्यवधानात् भ्रमणत्वादिन्यायेन कल्पयितुं तद्भूताधिकरणे (१।१।७) न अध्यवसितम् । **वा.** ३।३।१।१ पृ. ८०५, **सु.** पृ. ११७०

* **वाक्यदोषाः** 'श्रूयमाणस्य वाक्यस्य०' इति बिन्दौ द्रष्टव्यम् ।

* **वाक्यपरिसमाप्तिः** प्रत्येकं दृष्टा । **भा.** ३।१।६।१२ पृ. ६५६ । समुदाये वाक्यपरिसमाप्तिः । १०।६।४।८.

* **वाक्यपादः** नाम द्वादशलक्षण्यां तृतीयाध्यायस्य तृतीयः पादः । **बाल.** पृ. १०१.

* **वाक्यप्रकरणे** क्रमात् बलीयसी । **भा.** ३।६।९।३०, * **वाक्यप्रकरणयोः** प्रकरणं अर्थविप्रकर्षात् दुर्बलम् । **वा.** ३।३।७।१४. **मीको.** पृ. २९३५ 'बलाबलाधिकरणम्' इत्यत्र द्रष्टव्यम् । * वाक्यप्रकरणयोर्विरोधे शेषानेकत्वे 'पूर्वेद्युरमावास्यायां वेदिं करोति' इत्युदाहरणम् । प्रकरणेन हि हविरभिवासनोत्तरकालं यद्विधानं तस्य ग्रहणं प्राप्नोति । अमावास्यासमभिव्याहारेण तु पूर्वेद्युः । **वा** ३।३।७।१४ पृ. ८३९. * वाक्यप्रकरणयोर्विरोधे शेष्यनेकत्वे पूषानुमन्त्रणमन्त्रगतस्य 'अहं देवयज्यया पुष्टिमान् भूयासम्' इति पदसमुदायस्य प्रकरणाद्दर्शाद्यङ्गत्वे प्रसक्ते पूषपदैकवाक्यत्वात् पूषदेवत्यकर्माङ्गत्वम् । (सूक्तवाकोदाहरणं तु प्रसिद्धमेव)। इदं अधिकाराख्यगौणप्रकरणोदाहरणम् । मुख्यप्रकरणोदाहरणं तु वैमृधस्य प्रयाजादिवत् दर्शाङ्गत्वप्रसक्तौ वाक्येन पौर्णमासमात्राङ्गत्वम् । शेषानेकत्वे तु वेदिकरणवृत्तिहविरभिवासनोत्तरत्वस्य अधिकाराख्यप्रकरणात् मुख्यप्रकरणादेव वा दर्शाङ्गत्वे सिद्धे 'पूर्वेद्युरमावास्यायां' इत्यनेन पूर्वेद्युः कालः । **कौ.** ३।३।७।१४. * वाक्यप्रकरणयोर्विरोधोदाहरणं 'अग्नीषोमाविदं हविरजुषेतां०' इत्यादिः सूक्तवाकमन्त्रः । **वि.** ३।३।९.

* **वाक्यप्रकरणाधिकरणम् । वि.** ३।३।९.

* **वाक्यप्रमाणत्वं** यथार्थज्ञानजनकत्वम् । इति वैयाकरणाः । **मणि.** पृ. ८१.

* **वाक्यप्रयोगः** वक्तॄणां परप्रत्यायनार्थः । **वा.** २।१।१४।४६.

* **वाक्यभेदः** । 'अथ द्वादशलक्षण्यां विप्रकीर्णा इतस्ततः । वाक्यभेदभिदाः सर्वाः संक्षिप्येह ब्रवीम्यहम् ॥' तत्र त्रिविधस्तावत् वाक्यभेदः आवृत्तिलक्षणो विभागलक्षणो वैरूप्यलक्षणश्चेति । आवृत्तिलक्षणोऽपि त्रिविधः प्रकृत्यावृत्तिः, प्रत्ययावृत्तिः, उभयावृत्तिश्चेति । प्रकृत्यावृत्तिरपि द्विविधा प्रातिपदिकावृत्तिः धात्वावृत्तिश्चेति । प्रातिपदिकावृत्तिरपि द्विविधा समासासमासभेदात् । प्रत्ययावृत्तिरपि चतुर्विधा– सुप्–तिङ्–कृत्–तद्धितभेदात् । तदुक्तं 'अर्थैकत्वादेकं वाक्यं' (२।१।१४६) इत्यत्र वार्तिके 'पदतदेकदेशतत्समूहावृत्तिप्रसङ्गात्मकः तद्विभागलक्षणो वाक्यभेदः' इति । तथा 'विभागलक्षणे गम्यमानसंबन्धत्यागः अनेकादृष्टकल्पना च दोषः, इतरत्रावृत्तेः अवेदत्वादप्रामाण्यं' इति । एतद्व्याख्यातं **भट्टसोमेश्वरेण** (सु. पृ. ६८२) "वाजपेयगुणविधौ आख्यातपदावृत्तिः, ग्रहैकत्वविवक्षायां पदैकदेशप्रातिपदिकावृत्तिः, हविरार्तेः उभयत्वेन विशेषणे 'हविरार्तिमार्च्छेत्' इति पदसमूहावृत्तिः, आरुण्यस्य कृत्स्नप्रकरणनिवेशे अरुणया इतिपदस्य पिङ्गाक्ष्यादिवाक्यात् विभागः" इति । विभागलक्षणवाक्यभेदस्य तु अवान्तरभेदा न सन्तीति नोक्ताः ।

वैरूप्यलक्षणोऽपि वाक्यभेदः अनेकविधः, वैरूप्यभेदात्। तत्र वैरूप्यं त्रिविधम्, प्रकृतौ प्रत्यये वाक्ये चेति। आद्यं वाजपेयगुणविधिपक्षे यजौ कर्मत्वकरणत्वरूपम्, उद्देश्यत्वोपादेयत्वरूपम्, गुणत्वप्रधानत्वरूपम् विधेयत्वानुवाद्यत्वरूपं चेति चतुर्विधम्। द्वितीयं ग्रहं इत्येकत्वस्य संमार्गे ग्रहं वा प्रति गुणत्वे द्वितीयाविभक्त्या लक्ष्ये ग्रहापेक्षया प्राधान्यस्यापि श्रौतत्वात्। तृतीयं तु अरुणया इत्यत्र तृतीयया करणीभूतां एकहायनीमुद्दिश्य अरुणप्रातिपदिकार्थविधौ भिन्नपदोपात्ताया अपि एकहायन्याः एकवाक्ये वैरूप्यम्।

तथा अन्यान्यपि नानाविधानि वैरूप्याण्युच्यन्ते। अश्वप्रतिग्रहेष्टेः लौकिकवैदिकोभयदाननिमित्तकत्वे क्रत्वर्थत्वपुरुषार्थत्वरूपवैरूप्यम्। षष्ठचतुर्थैकादशे (६।४।११) 'यः सत्रायागुरते, स विश्वजिता यजेत' इति विश्वजितः सत्रे प्रवृत्तमप्रवृत्तं च प्रति साधारण्येन विधौ प्रवृत्तं प्रति क्रत्वर्थत्वात्, अप्रवृत्तं प्रति च पुरुषार्थत्वात् वैरूप्यं स्यात् इत्युक्तम् (शा.)। तथा अवघातस्य आज्यौषधसांनाय्यार्थत्वे दृष्टादृष्टार्थत्ववैरूप्यम्। तथा सोमवमनेष्टेः लौकिक–वैदिक–सोमवमननिमित्तकत्वे अपेक्षितानपेक्षितविधिवैरूप्यम्। तथा पूर्वोदाहृते 'यः सत्रायागुरते' इत्यत्रापि। तथा षष्ठे अभ्युदितेष्टौ (६।५।१) तण्डुलविवक्षायां दधिशृतयोः देवताऽनपनयात् देवताविधौ आकाङ्क्षितानाकाङ्क्षितविधिवैरूप्यम्। तथा मातुलकन्यापरिणयने स्मृत्याचारतुल्यबलत्वे दोषजनकत्वाजनकत्वविरोधात् वस्तुवैरूप्यम्। इदं च विधिभेदात् आवृत्त्यभावेऽपि वैरूप्यप्रसङ्गादुदाहृतम्। तथा अन्यदपीदृशमेव वैश्वदेवस्य अन्नसंस्कारकर्मत्वे पुरुषार्थत्वे च एकमेव कर्म प्रति एकमेवान्नं द्रव्यम्, गुणभूतं प्रधानभूतं चेति। तथा कृष्णलचरौ 'घृते श्रपयति' इति श्रपणप्रतिप्रसवघृतनियमविधिवैरूप्यम्। तथा 'पूषा प्रपिष्टभागः' इति पेषणस्य चरुपशुपुरोडाशार्थत्वे चरौ प्रतिप्रसवात् पशुपुरोडाशयोश्च अपूर्वविधित्वात् वैरूप्यम्। तथा नवमे (९।१।९।२९–३२) 'पत्नीसंयाजान्तान्यहानि' इत्यत्र अपूर्वविधिनियमविधिवैरूप्यात् अन्त्याहवर्जे प्रवृत्तिः इत्युक्तम्। तथा ग्रहैकत्वविवक्षायां अपूर्वविधिपरिसंख्यावैरूप्यम्। तथा उभयार्थ्यधिकरणे अपि (६।४।६)। तथा दशमतृतीयोपान्त्ये 'सोमचमसो दक्षिणा' इत्यत्र एकवाक्यत्वे सोमचमस एवेति नियमात् स ब्रह्मणे एवेति परिसंख्यापत्तेश्च वैरूप्यम्। तथा नित्यानित्यसंयोगविरोधात्मकं च वैरूप्यम्, तदपि भाव्यस्वरूपे द्वारे वा। आद्यं संस्थासामानविध्ये। द्वितीयं फलचमसासामान्यविध्यधिकरणे (३।५।१९।४७–५१ भा.)। तथा षष्ठतुर्याद्ये एकस्यैव उपलक्ष्योपलक्षणत्ववैरूप्यम्। तत्र हि होमार्थचतुरवत्तनाशे शेषादेव पुनरवदेयम् 'यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वाऽऽज्येनैता देवताः परिसंख्याय यजेत' इति हविर्नाशे निमित्ते विहिते त्वाज्यं निःशेषनष्टे हविषि उत अन्यायातपुरोडाशान्तरोत्पादने प्रसक्ते हविर्नाशनिमित्तविहिताज्येन यष्टव्यमिति संशय्य पूर्वकोटिं पूर्वपक्षीकृत्य सिद्धान्तितं **तन्त्ररत्ने**। कृत्स्नस्य अविकलस्य पुरोडाशस्य मध्यपूर्वार्धे अवदानोपलक्षणमित्येव शास्त्रार्थः। कृत्स्नस्यैव शास्त्रवेलायां प्रकृतत्वात्। इतरथा यदि कृत्स्नपुरोडाशमध्यपूर्वार्धलक्षितमवदानद्वयं शास्त्रार्थ इति न गृह्यते ततो ह्यवदाननाशे सति इतरत्सर्वं अवशिष्टं तस्योपलक्षणम्, नाशे तु सति तदेवोपलक्षणभूतमेव शिष्टम्। पुनरवदीयमानं उपलक्ष्यं प्रसज्येतेति वैरूप्यं शास्त्रस्य स्यात्। एकरूपेण च शास्त्रेण भाव्यम्। तस्मात् अपादानत्ववाचिपञ्चमीबलात् यागाङ्गभूतद्वयवदानोपलक्षणमेवेतरन्न तु स्वयं यागाङ्गभूतमुपलक्ष्यमिति। तथा विधिप्रत्ययेऽपि विध्यनुवादवैरूप्यम्। तद्यथा द्वितीये (२।३।५।१२–१५) 'वायव्यं श्वेतमालभेत, सौर्यं चरुं निर्वपेत्' इति दार्शपौर्णमासिकौ 'ईषामालभेत, चतुरो मुष्टीन् निर्वपति' इत्यालम्भनिर्वापौ अनूद्य श्वेतचरुगुणौ विधीयेते। वायव्यमितीषाया वृक्षप्रभवत्वात् वृक्षस्य च वायुसंबन्धात् सौर्यमिति च चरोः स्थाल्याम्तेजस्वित्वेन सूर्यसादृश्यात् कथञ्चिदनुवादः इति पूर्वपक्षिते आलम्भनिर्वापयोः लोकेऽपि सत्त्वेन व्यभिचारात् न दार्शपौर्णमासिकयोरेवोपस्थितिः संभवति इति सिद्धान्तिना उक्ते लिङा विहितौ यौ आलम्भनिर्वापौ इति विशेषणात् नायं दोष इत्याशङ्क्य, एवं तर्हि लिङोऽनुवादकत्वात् गुणविधिर्न लभ्यते, उभयाश्रयणे च युगपद्विध्यनुवादविरोधः



इत्युत्तरितमिति। **बाल.** पृ. १८०–१८३. * अनेकार्थविधानाद् **वाक्यभेदः**। **वा.** २।२।११।२६ पृ. ५५१, ६।५।१।२. * अनेकार्थविधिलक्षणः वाक्यभेदः। **सु.** पृ. ९३१. * अनेककल्पनानिमित्तः वाक्यभेदः। **वा.** ३।१।७।१४ पृ. ७२२. * अनेकगुणविधानात् वाक्यभेदः। **भा.** ३।६।७।२१. * अनेकसंबन्धकरणात् वाक्यं भिद्येत। **वा.** २।२।१३।२९ पृ. ५६६, * अनेकसंबन्धकरणे वाक्यभेदप्रसङ्गात्। २।२।११।२५ पृ. ५४६. * अप्रवृत्तिलक्षणः वाक्यभेदः। **सु.** पृ. ८६६. * अर्थभेदात् वाक्यभेदः। **भा.** ३।२।१०।२७. * अर्थभेदनिमित्तः वाक्यभेदः। **वा.** ३।१।६।१२ पृ. ६९६. * आवृत्तिलक्षणः वाक्यभेदः। **सु.** पृ. ८५२. * इन्द्रशब्दस्य महत्त्वतद्धितार्थौ प्रति वैरूप्यनिमित्तवाक्यभेदः। विध्यनेकव्यापारात्मकश्च अपरो वाक्यभेदः। 'महत्त्वस्येन्द्रसंबन्धं, तस्य च द्रव्यसंगतिम्। विदधत्प्रत्ययो वाक्यं भिन्द्यात् पुनरपि श्रुतेः॥' (महेन्द्रः इन्द्र एव अन्यो वा इति विचारः प्रकृतः)। **वा.** २।१।५।१६ पृ. ४१९. * उभयविधाने वाक्यभेदः। **भा.** १।८।१।२. * उभयविशेषणत्वनिमित्तः वाक्यभेदः। **सु.** पृ. ८६८. * उभयसंबन्धे वाक्यभेदः। **भा.** २।२।१३।२९, ३।२।८।२३, * एकस्मिन् वाक्ये संबन्धद्वयविधाने वाक्यभेदः। ३।४।१।७. * एकोद्देशेन प्रधानद्वयविधाने वाक्यभेदः स्यादेव। **मीन्या.** * (अनेकगुणविधाने वाक्यभेदः प्रसज्जते) एकगुणविधाने गुणान्तरानाक्षेपात् अर्थापत्त्यभावे श्रौतानेकविधिव्यापारकल्पनायां पुनः पुनरुच्चारणं प्रत्ययस्य कर्तव्यमिति वाक्यभेदः स्यात्। आह च– 'अर्थादनेकमप्यर्थं विधापयति भावना। विशेषणविधिस्त्वन्यन्न गृह्णाति विशेषणम्॥' इति। **वा.** १।४।२।३, * एकत्र प्राप्तसामान्यसंबन्धानुवादेन विशेषमात्रकरणात् अपरत्र च सामान्यविशेषप्रापणात् वैरूप्यनिमित्तो वाक्यभेदः स्यात्' ३।२।८।२२ पृ. ७७९. * एकविशेषिणि तरसंबन्धे वाक्यभेदप्रसङ्गः। १।४।५।८, * क्रमवृत्तौ पुनरुच्चारणे वाक्यभेदः २।१।५।१७ पृ. ४२०. * गौरवलक्षणः वाक्यभेदः। **सु.** पृ. ८५२. * गौरवलक्षणः वाक्यभेदः क्वचित्, 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यस्य उत्पत्तिविधिपरत्वे अधिकारविधिपरत्वे च। **मीन्या.** * ('ग्रहं संमार्ष्टि' इत्यत्र) ग्रहस्य प्राधान्यानुवादात् एकत्वस्य गुणभावविधानात् अपरो वाक्यभेदः। **वा.** ३।१।७।१४ पृ ७२२, * तद्धितान्तपदोपात्तविधिना सर्वमन्यत् (देवता द्रव्यं संबन्धः विशेषणं भावना यागः) अर्थादाक्षिप्यमाणं न वाक्यं भिनत्ति। १।३।६।९ पृ. ३४२. * 'त्रिराह्वयति' इति त्रित्वमत्र विधीयते। यदि अस्मिन्नेव वाक्ये मन्त्रो विधीयेत अनेकगुणविधानात् वाक्यं भिद्येत। **भा.** ३।२।३।६. * दधिहोमसंबन्धं होमफलसंबन्धं च विदधत् वाक्यं भिद्येत। **वा.** २।२।११।२६ पृ. ५५१. * द्वयोश्च विधीयमानयोः परस्परेणासंबद्धयोः वाक्यभेदप्रसङ्गः। **भा.** ६।१।१।३. * द्विरुच्चारणनिमित्तवाक्यभेदः। **वा** २।१।५।१७ पृ. ४२१, * 'नैव ह्यनेकसंबन्धाद्वाक्यभेदः प्रसज्यते। अनेकविधिशक्त्या हि भेदः ...॥' बहवोऽपि ह्यर्थाः युगपदेकेन संबध्यन्ते। न च तावता वाक्यं भिद्यते। अनेकविधितो हि वाक्यभेद उक्तः। २।२।११।२६ पृ. ५५१, * न चैकपदोपात्तः अनेकोऽर्थः वाक्यं भिनत्ति। सर्वाख्यातेषु क्रियाकर्तृसंख्योपग्रहपुरुषविशेषभावनानां युगपदुपादानस्यापरिहार्यत्वात्। ३।८।११।२२, * न च प्रकरणलभ्या विशेषा वाक्यं भिन्दन्ति। २।२।१३।२९ पृ. ५६९. * (क्षौमे वसानौ इत्यत्र) न शक्यते उभयं विधातुं क्षौमं लिङ्गं च। भिद्येत हि तथा वाक्यम्। **भा.** ६।१।५।२२ पृ. १३६८. * न्यूनस्य अधिकार्थविषयकत्वकल्पने वाक्यभेददोषो यथा– 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इत्यत्र स्वर्गकामपदाध्याहारे वाक्यभेदापत्तिः। **बाल.** पृ. ३. * प्रत्युद्देश्यं वाक्यसमाप्तिलक्षणः वाक्यभेदः। **सु.** पृ. ८६८. * 'प्रत्यञ्चोऽव भृथेन चरन्ति' अत्र विहारस्य प्रत्यङ्मुखत्वमुक्तम्, कर्तॄणां तु प्राङ्मुखत्वं सामान्यविधिप्राप्तम्। तेषामपि प्रत्यङ्मुखत्वविधाने वाक्यभेदः इति **पूर्वपक्षः**। कर्तृगर्भकविहारस्यैव प्रत्यङ्मुखत्वविधानेन कर्तॄणां प्रत्यङ्मुखताया अर्थसिद्धत्वात् न वाक्यभेदः। **संकर्ष.** २।४।१६. * प्रत्ययाद्यन्यतमावृत्तिलक्षणः विभागरूपश्च वाक्यभेदः। **वा.** ३।१।६।१२

पृ. ६८०, * प्रत्ययावृत्तिलक्षणो वाक्यभेदः । २।२।१२।२७ पृ. ५५२. * प्रत्येकवाक्यपरिसमाप्तिनिमित्तः वाक्यभेदः । **सु.** पृ. १११४. * पदान्तरगतार्थग्रहणनिमित्तोऽपि वाक्यभेदः । **वा.** १।४।२।३ पृ. ३३०. * परस्परनिरपेक्षविधाने वाक्यभेदो भवति । 'यदग्नये च प्रजापतये च सायं जुहोति' इत्यत्र 'च'शब्दश्रवणात् परस्परसापेक्षस्यैव पदद्वयस्य आख्यातान्वयात् न वाक्यभेदः । एवं 'गौश्च अश्वश्च अश्वतरश्च' इत्यादावपि न वाक्यभेदः । **मीन्या.** * प्राप्ते कर्मणि अनेकार्थविधौ वाक्यभेदापत्तिः । **सु.** पृ. ९२६, * प्राप्ते कर्मणि गुण–फल–रूपानेकार्थविधौ वाक्यभेदापत्तिः । पृ. ९२७. * प्राप्ते कर्मणि संबन्धद्वयकरणात् वाक्यं भिद्येत । **वा.** ३।१।११।२१ पृ. ७३४. * प्राप्तोद्देशेन कालद्रव्याद्यनेकगुणविधाने वाक्यभेदः । **संकर्ष.** ३।१।१६. * यानि एकक्रियाविशेषणानि भवन्ति, तानि तया विधीयमानया (क्रियया) अर्थादाक्षिप्यमाणानि न विधायकव्यापारं भिन्दन्ति । क्रियान्तरविशेषणे पुनर्विधीयमाने, तया क्रियया संबन्धरहितया आक्षिप्यमाणे अवश्यं विधायकस्य आवृत्तिरेष्टव्या इति वाक्यभेदः प्राप्नोत्येव । **वा.** २।२।१२।२७ पृ. ५५६, * यत्र सकृदुच्चरिते द्वे विवक्षिताविवक्षितत्वे भवतः तत्र वाक्यभेदः । ६।२।२।४ पृ. १३९२, * यदा हि भावनारूढं विधित्वं भावनार्थत्वेनैव गृह्यते तदा अर्थाद्विशेषणविधौ सति अवाक्यभेदं वक्ष्यामः । यदा तु तद्विशेषणार्थमित्यवधार्यते तदा भावनायाः संनिहितप्रोषितत्वात् अनेकविशेषणयोगे सति यदर्थं विधित्वमवसीयते तस्यैवैकस्य विधानं नेतरस्य तद्देशस्यापि इति वाक्यभेदो भविष्यति । २।२।५।१६ पृ. ५०३, * यदि तत्र द्वावपि सामान्यविशेषसंबन्धौ इदमेव वाक्यं कुर्यात् ततो वाक्यं भिद्येत । ३।२।८।२२ पृ. ७७९. * यदि फलं दध्ना कुर्यादिति ब्रूयात् न दध्ना होममिति । अथ दध्ना होमं साधयेदिति ब्रूयात् न फलमिति । उभयवचने भिद्येत वाक्यम् । **भा.** २।२।११।२६ पृ.५४६. * युगपदुपलक्षणविधिकल्पने वाक्यभेदः । **वा.** २।२।३।६ पृ. ४८७. * वचनव्यक्तिभेदात् वाक्यभेदः प्रसज्यते । **भा.** ९।३।१२।३४. * वाक्यपरिसमाप्तिलक्षणः तावत् एको वाक्यभेदः । **वा.** ३।१।७।१४ पृ. ७२०. * वारवन्तीयस्य आश्रयान्वयविधिनिमित्तवाक्यभेदवत् आश्रयस्य अग्निष्टुद्विशेषणविधिनिमित्तोऽपि वाक्यभेदः स्यात् । **सु.** पृ. ८५७, * विधिप्रत्ययावृत्तिलक्षणः वाक्यभेदः । पृ. ८४५.. * विधेयभेदादपि वाक्यभेदो भवति । **मीन्या.** * विभक्तिवैरूप्यादिनिमित्तः अपरः वाक्यभेदः । **वा.** ३।१।७।१४ पृ. ७२१. * विवक्षितार्थापेक्षया न्यूनत्वाभ्युपगमे वाक्यभेदो यथा– 'यदाग्नेयोऽष्टाकपालः अमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति । अत्र विवक्षितोऽर्थः द्रव्यदेवताकालद्वयविशिष्टयागविधिः तदपेक्षया न्यूनोऽर्थः विद्वद्वाक्यविहितयोः यागयोः द्रव्यदेवतमेव विधीयते न यागविधिः इति । तदभ्युपगमे वाक्यभेद इति । **वाल.** पृ. ३. * विशिष्टानुवादो न वाक्यं भिनत्ति । **वा.** २।२।१२।२७ पृ. ५५७. * विशिष्टानुवादलक्षणो वाक्यभेदः । **सु** पृ. ८७६. * विशिष्टार्थभेदेन वाक्यभेदात् यजुर्मन्त्रभेदः, यथा 'इषे त्वेति शाखां छिनत्ति, ऊर्जे त्वेत्यनुमार्ष्टि' । 'आयुर्यज्ञेन कल्पताम्, प्राणो यज्ञेन कल्पताम्' इत्यादौ च । **चि.** २।१।१५. * विशिष्टभावनाविधानस्य एकत्वे न वाक्यभेदो भवति । **सु.** पृ. ८६८. * विशिष्टविधाने वाक्यभेदो न भवति द्वाभ्यां तु विशेषणाभ्यां विशिष्टमेकमाधानं विधायिष्यते तेन भविष्यति वाक्यभेदः । **भा.** २।३।३।४. * विशेषणवैशिष्ट्यांशे विशेष्यांशे च यदि विधिव्यापारः तर्हि वाक्यभेदः । **सोम.** ७।३।३. * विस्पष्टमर्थद्वयम्, विभागे च निराकाङ्क्षता, तेन वाक्यभेदः । **भा.** ३।१।१४।२५. * वैरूप्यनिमित्तो वाक्यभेदः 'यः सोमं वमति, यस्य सोमं ऋत्विक् वमति' इति । **वा.** ३।४।१३।३५, * वैरूप्यलक्षणः वाक्यभेदः । ३।२।१०।२१, * 'श्रूयमाणस्य वाक्यस्य न्यूनाधिकविकल्पने । लक्षणावाक्यभेदादिदोषो नानुमिते ह्यसौ ॥' १।४।२।३ पृ. ३२९. * सकृदुच्चरितस्य विधायकस्य अनेकार्थविधिशक्त्यभ्युपगमात् आवृत्तिलक्षणवाक्यभेदपरिहारेऽपि एकस्य अनेकार्थे तात्पर्यात् गौरवलक्षणवाक्यभेदः अपरिहार्यः । **सु.** पृ. ९३१, * सकृदुच्चरितस्य विधायकस्य



विध्यनुवादवैरूप्यलक्षणवाक्यभेदापत्तिः । पृ. ९२८. * समासोपात्तविशिष्टार्थविधौ नास्ति वाक्यभेदः । **वाल.** पृ. १०२. * सूत्रे वाक्यभेदः यथा– 'अग्नयश्च स्वकालत्वाद्, देयधर्मापयातनम् । व्याख्यानं वाक्यभेदेन ॥' **श्लोवा.** १।१।५७ । 'ते सर्वार्थाः प्रयुक्तत्वादग्नयश्च स्वकालत्वात्' (३।७।१९।३९) इत्येतत् सूत्रं वाक्यभेदमाश्रित्य अधिकरणान्तरं व्याख्यातम् ।

तथा 'अभ्युदये दोहापनयः स्वधर्मा स्यात् प्रवृत्तत्वात्' (९।४।१०।४१) 'शृतोपदेशाच्च' (९।४।१०।४२) इति सूत्रद्वयेन अभ्युदितेष्टौ दधिशृतयोः प्रदेयधर्माः कर्तव्याः इत्युक्त्वा 'अपनयो वाऽर्थान्तरे विधानात् चरुपयोवत्' (९।४।११।४३) 'लक्षणार्था शृतश्रुतिः' (९।४।११।४४) इति सूत्रद्वयेन प्रदेयधर्माणां अपयातनमुक्तम् । तदिदं पूर्वयोः सूत्रयोः अनयोश्च वाक्यैकभावेन ऐकाधिकरण्यात् अभ्युदितेष्ट्यामेव प्रदेयधर्मापयातनमुच्यते इति प्रतिभासमानमपि ततो भित्त्वा अधिकरणान्तरं पशुकामेष्टिविषयं व्याख्यातम् । **रत्नाकरः.**

* **वाक्यभेदात्** लक्षणा वरम् । लक्षणायाः पददोषत्वात् वाक्यभेदस्य च वाक्यदोषत्वात् । **मीन्या.** * वाक्यभेदात् व्यवहितकल्पनाश्रयणं वरम् । **वा.** ३।६।७।२२ पृ. १०८९.

## वाक्यभेदाधिकरणम् ॥

**समेषु वाक्यभेदः स्यात् । २।१।१५।४७ ॥**

**भाष्यम्**— 'इषे त्वा, ऊर्जे त्वा' इति । तथा 'आयुर्यज्ञेन कल्पताम्, प्राणो यज्ञेन कल्पताम्' इति । अत्र संदेहः किमेवमादिषु भिन्नं वाक्यं उत एकमिति । एकमिति ब्रूमः । इषे त्वा इत्येवमुक्ते न किंचिद्दृष्टं प्रयोजनम्, तथा ऊर्जे त्वा इत्यपि च । वचनसामर्थ्याददृष्टम् । तदुभाभ्यामेकं कल्पयितुं न्याय्यम् । एवं अल्पीयस्यदृष्टानुमानकल्पना भविष्यति । तस्मादेकं वाक्यम् । **एवं प्राप्ते, ब्रूमः ।** समेषु वाक्यभेदः स्यात् । समेषु परस्परानाकाङ्क्षेषु वाक्यं भिद्यते । 'इषे त्वा' इत्यनेन एकोऽर्थः क्रियते, 'ऊर्जे त्वा' इत्यनेन अपरः । ननु इदानीमेव उक्तं नात्र दृष्टोऽर्थ इति । यद्यपि प्रत्यक्षादिना प्रमाणेन नोपलभ्यते, श्रुत्या तु गम्यते 'इषे त्वेति छिनत्ति, ऊर्जे त्वेत्यनुमार्ष्टि' इति । तथा 'आयुर्यज्ञेन कल्पताम्, प्राणो यज्ञेन कल्पताम्' इत्यायुःक्लृप्तेरन्या प्राणक्लृप्तिः । ननु सामान्यमात्रमिष्टं तत्र विशेषणभेदात् भेदमर्हतीति । यथा 'अग्नये जुष्टं निर्वपामि' इति निर्वाप एकस्तस्य विशेषाः 'सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्' इति, न तेषां भेदात् निर्वापस्य भेद इष्यते । एवमिहापि क्लृप्तिर्नाम एकोऽर्थः, नासौ आयुरादिभिर्विशेषैः भिन्नो भविष्यतीति । उच्यते । इह 'क्लृप्तीर्वाचयति' इति बह्व्यः क्लृप्तयः श्रूयन्ते । ताश्च वक्तव्याः । तत्रैकां आयुःक्लृप्तिं 'आयुर्यज्ञेन कल्पताम्' इत्येष मन्त्रः शक्नोति वदितुम् । 'प्राणो यज्ञेन कल्पताम्' इत्ययमपि प्राणक्लृप्तिमपराम् । एवं तु सर्वे क्लृप्तिविशेषवचनाः । तच्च दृष्टं प्रयोजनम् । तस्मात् अनेकार्थत्वात् तत्रापि वाक्यभेद इति । ननु सामान्यवचनादेकत्वं यथा विभागे । नैतदेवम् । विभागे दृष्टार्थं सामान्यमिह न । अपि च क्लृप्तीर्वाचयति इति विहितम्, 'आयुर्यज्ञेन कल्पताम्' इति चाऽऽयुःक्लृप्त्यभिधानमभिनिर्वर्त्यते प्रत्यक्षम्, 'प्राणो यज्ञेन कल्पताम्' इति च प्राणक्लृप्तेः । तस्मात् वाक्यभेदः ।

**वा**— येषां अदृश्यमानकर्मसमवेतार्थत्वेन लैङ्गिकविनियोगाभावेन वचनाद्विनियोगः, तेषां प्राग्दृष्टार्थमन्त्रावत्वैरेकमन्त्रत्वं युक्तम् । तथाहि '**कल्प्यस्तेषामदृष्टोऽर्थः स चाल्पः स्यात्प्रमाणवान् । कल्पिते च तदेकत्वे साकाङ्क्षाः स्युर्वियोजिताः ॥**' यदा हि बह्वदृष्टकल्पना निष्प्रमाणिका इत्येकमदृष्टं सर्वेभ्यः कल्पितं भवति तदा प्रत्येकं तत्साधनशक्त्यभावात् विभज्यमानसाकाङ्क्षत्वमप्यस्तीत्येकवाक्यता । कथं पुनरस्मिन् पक्षे प्रतीकभेदेन विनियोगः 'इषे त्वेति शाखां छिनत्ति' 'ऊर्जे त्वेत्यनुमार्ष्टि' इत्येवमादिः । कथं च 'क्लृप्तीर्वाचयति' इति बहुत्वनिर्देशः । तदुच्यते '**एकोऽपि बहुभिर्मन्त्रः प्रतीकैर्विनियुज्यते । पुनः पुनः प्रयोगाच्च क्लृप्तीरित्यभिधीयते ॥**' आदिमध्यावसानग्रहणेन एकोऽपि मन्त्रस्तत्र तत्र विनियुज्यमानोऽपि न पीड्यते । यावद्विनियोगं हि सकलः आवर्तिष्यते, खण्डस्य अप्रयोजन-

त्वात् । कल्पतां कल्पतामिति च पुनः पुनः प्रयोगादेकवाक्यत्वेऽपि बहुवचनाविरोधः । उच्यते । नैतदेवम् । **‘ रूपादुत्तरकाले हि विनियोगप्रयोजने । तस्मात्प्रागेव तत्क्लृप्तेर्भेदाभेदपरीक्षणम् ॥ ’** तिष्ठतु तावत् प्रयोजनकल्पनं विनियोगवाक्यं वा । न हि तदुत्तरकालं स्वरूपनिरूपणं युक्तम् । अज्ञातरूपस्य विनियोगाशक्तेरविनियुक्तस्य च प्रयोजनकल्पनानुपपत्तेः । तत्तन्निरपेक्षं तु रूपं पाठादेव अवधार्यते । तत्कालावधृतभेदाभेदानुवर्तित्वं तु प्रयोजनविनियोगयोः । प्रमाणवच्चानेकमपि कल्पनीयमित्युक्तम् । रूपोपलब्धिवेलायां चेषेत्वादिना न परस्परसाकाङ्क्षत्वं एकप्रयोजनत्वं चोपलक्ष्यते । ततश्च निष्प्रतिद्वंद्वेऽवधारिते भेदे पश्चान्न किंचिदेकत्वापादने कारणं संभवति । न च प्रागनुपलब्धं साकाङ्क्षत्वं कल्पयितुं शक्यम् । तेन च विना यद्यप्येकप्रयोजनत्वं भवेत्तथाऽप्येकाङ्क्षवैकल्यादेकवाक्यत्वाभावः, किमुत यदा रूपभेदात् विनियोगभेदः तद्भेदाच्चादृष्टार्थत्वेऽपि प्रयोजनभेदः । त्वत्पक्षेऽपि चावश्यं यावद्विनियोगं तेन तेन भवितव्यम् । इयांस्तु विशेषः । तव समस्तान्मन्त्रात् मम व्यस्तेभ्यः । न चैषामदृष्टार्थत्वम्, ब्राह्मणोपदिष्टदृष्टार्थसाधनत्वात् । तद्बलेन चैषां यावता विना चोदितकरणसामर्थ्यं नास्ति तावदनाम्नातमपि कल्पनीयं च्छिनद्मीत्यादि । यद्वा, यथैव ‘ रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति ’ इति वचनात् अवाचकस्यापि विनियोगमात्रानुसंधानेन स्तोत्राभिमुख्यचिह्नत्वं भवति, एवं इषेत्वादीनां छेदनादिस्मरणहेतुत्वम् । उभयमपि चैतत् प्रमाणवदिति **सूत्रकारैः** केश्चित्कथंचिदाश्रितम् । सर्वथाऽत्रैवं अध्यवसातव्यम् । विकलवाक्यप्रयोगासंभवात् अवाचकप्रयोगानुपपत्तेश्च अध्याहारः । अथवा यथाम्नातविनियोगानुसारात् तादृशेनैव स्मर्तुं संस्काराधाने यतितव्यम् । तत्रानुष्ठात्रभिप्रायाधीनोऽन्यतरपरिग्रह इति दृष्टप्रयोजनभेदादपि सिद्धो वाक्यभेदः । किंच, **‘ अन्योन्यनिरपेक्षाणां कार्यान्यत्वे नियोगतः । प्रत्येकं यागहेतुत्वाद्यजुष्ट्वमवकल्पते ॥ ’** तथा ‘ आयुर्यज्ञेन कल्पताम् ’ इत्येवमादीनां निराकाङ्क्षभिन्नरूपोपलब्धेः नैकत्वापत्तिः सत्यप्येकार्थत्वे । न च तदस्ति, आयुःकल्पनादीनां भिन्नत्वात् । निर्वापवत् अभेद इति चेन्न, क्लृप्तीरिति मन्त्रबहुत्वचोदनायाः प्रत्यक्षत्वात् । इह तावत् अर्थानामकर्माङ्गापवादविवक्षायां सत्यां मन्त्रोच्चारणमात्रं प्रयोजनम् । तत्र च बह्वयः क्लृप्तयः श्रूयन्ते । तद्भेदश्च अर्थभेदमन्तरेण न भवतीत्यक्षरोपसर्जनभूतोऽर्थो नानात्वेन आश्रीयते । क्लृप्तिविशेषवचनं च दृष्टार्थमिति मन्त्रबहुत्वापादनार्थत्वात् । ‘ यथा विभागे ’ इति । सकृत् श्रुतनिर्वापवैलक्षण्यात् क्लृप्तीनाम् । पुनः पुनरुच्चारितशब्दोऽपि यथा विभागः साधनभेदे सत्यपि न भिद्यते, तथा क्लृप्तिभेदोऽपि न भविष्यतीति मन्यते । ‘ नैतदेवम् ’ इत्युत्तरम् । इह सामान्यविवक्षानुपयोगात् । अथवा सिद्धान्तवाद्येव ‘ यथा विभागे नैतदेवम् ’ इति स्वयमेवैकवाक्यभूतमुत्तरं ददाति । ननु च विभागवाक्यानामपि भेदोऽस्त्येवेति नोपन्यसनीयम् । एवं तर्हि नैवेदं प्रभेदप्रतिपत्त्यर्थम्, किं तर्हि दृष्टान्तेन सहैकत्वापादनपरत्वात् तदीयविकल्पापादनायोपन्यस्यति । यथा विभागे तथाऽत्र विकल्पः कस्मान्न भवतीति । ‘ नैतदेवम् ’ इति समानविषयत्वे हि विकल्पो भवति, न चेह सामान्यविवक्षा येन विभागवदैकार्थ्यं भवेत् । क्लृप्तिविशिष्टायुराद्याशासनपरत्वात् । विभागे हि साधनानामप्रयोजनत्वात् सामान्यभूतक्रियामात्रप्रकाशनपरत्वम् । इह पुनरायुरादीनामाशास्यत्वेन प्राधान्यात् तद्विशेषणत्वेन क्लृप्त्युपादानम्, न त्वायुरादिविशिष्टा सा प्रकाश्यते, निष्प्रयोजनत्वात् । अथापि क्रियाप्राधान्यं तथाऽपि तद्भेदपरत्वात् नानार्थत्वम् । भेदपरत्वे च पूर्वोक्तमेव दृष्टार्थत्वमुच्यते । अथवा ‘ क्लृप्तीर्वाचयति ’ इति नैव मन्त्रपरः क्लृप्तिशब्दः, कथं तर्हि ? क्रियाबहुत्वाभिधान एव, शब्दानामर्थतन्त्रत्वात् । अतश्च बहुत्वसंख्यया कर्मभेदात् विशेषणकृतभेदाश्रयणाच्च मन्त्राणां तत्परत्वे चोदितार्थनिर्वृत्त्या दृष्टार्थत्वात्सिद्धा भिन्नार्थता । कथं पुनरस्मिन्पक्षे वाचयतीत्युच्यते, शब्दपदार्थको ह्ययं प्रयुज्यते । नैष दोषः, उभयत्र प्रयोगात् । यथैव हि शब्दं ब्रुवन्तं प्रयुञ्जानो वाचयतीत्युच्यते तथैव च यः शब्देनार्थं ब्रवीति तस्यापि प्रयोजको वाचयतीति । तस्मात् क्लृप्तिक्रियाशब्दैर्यजमानं वक्तुं प्रवृत्तमध्वर्युर्वाचयतीत्ययमर्थो विज्ञायते,



तत्प्रकाशनेन च भिन्ना एव सन्तो मन्त्रा दृष्टार्था भवन्तीति वाक्यभेदः ।

शा— **‘ अदृष्टार्थत्वमेतेषां अनुष्ठेयाप्रकाशनात् । तच्चैकं तत्र साकाङ्क्षाः सर्वे इत्येकवाक्यता ॥ ’** अदृष्टं हि कल्प्यमानं एकमेव युक्तं तावतैव उपपत्तेः । अतः सर्वे तावत् एकार्थाः । तच्च सर्वेषां सह कल्पितमिति संभूयकारित्वात् विभज्यमानाः साकाङ्क्षा भवन्ति इत्येकवाक्यता । निश्चिते च मन्त्रैकत्वे यद्यपि प्रतीकभेदेन अनेकत्र विनियोगः ‘ इषे त्वेति छिनत्ति, ऊर्जे त्वेत्यनुमार्ष्टि ’ इति, तथापि यावद्विनियोगं सकल आवर्तिष्यते । ( इति प्राप्ते, ) उच्यते— **‘ यद्यप्येषामदृष्टोऽर्थस्तथापि न तदेकता । रूपतो हि निराकाङ्क्षा भिन्नत्वेनावधारिताः ॥ अन्योन्यानादरेणैव प्रार्थयन्ते प्रयोजनम् । यथापेक्षमतस्तेषां भिन्नादृष्टप्रकल्पनम ॥ यथा विश्वजिदादीनां भेदेन फलकल्पना । यथा च समिधादीनामपूर्वं भिन्नमिष्यते ॥ तद्वदत्र न चात्रैषामदृष्टार्थत्वसंभवः । शाखाच्छेदप्रकाशेन दृष्टार्था हि विधेरमी ॥ ’** ‘ इषे त्वेति छिनत्ति ’ इति शाखाच्छेदने करणत्वेन मन्त्रो विधीयते । क्रियानिर्वर्तकं च करणं भवति । न च मन्त्राणां क्रियानिर्वर्तकत्वम्, अन्यतः प्रकाशनात् । तेन विधिबलात् एषां प्रकाशनार्थत्वम् । तत्र यावता विना चोदितस्य प्रकाशनं न संभवति तत् अध्याहर्तव्यं छिनद्मीत्यादि । तत्र एकेन छेदनं प्रकाश्यते, अन्येन अनुमार्जनं इति अर्थभेदात् मन्त्रभेदः । तथा ‘ आयुर्यज्ञेन कल्पताम् ’ इत्यादीनामपि स्वरूपतो निराकाङ्क्षत्वात् ‘ क्लृप्तीर्वाचयति ’ इति च क्लृप्तिबहुत्ववचनस्य चोदितत्वात् तत्संपत्त्यर्थं आयुरादिविशिष्टक्लृप्तिभेदप्रकाशनपरत्वात् अर्थभेदेन मन्त्रभेदः ।

**सोम**—पूर्ववत् इह यजुर्भेदकाभावात् न अत्र तद्भेदः इति प्रत्यवस्थानात् **संगतिः** बोध्या । **सूत्रार्थस्तु** समेषु परस्परनिरपेक्षतया तुल्येषु यजुर्भेदः स्यादिति ।

वि— ‘ इषेत्वादिर्मन्त्र एको भिन्नो वैकः क्रियापदे । असत्यर्थास्मारकत्वादेकादृष्टस्य कल्पनात् ॥, छेदने मार्जने चैतौ विनियुक्तौ क्रियापदे । अध्याहृते स्मारकत्वान्मन्त्रभेदोऽर्थभेदतः ॥ ’

**भाट्ट**— यत्र तु नोक्तविधं विभज्यमानसाकाङ्क्षत्वं यथा ‘ इषे त्वा ऊर्जे त्वा ’ इत्यनयोः, यथा वा ‘ आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पताम् ’ इत्यादौ तत्र सत्यप्यर्थैकत्वे ‘ भगो वां ’ इत्यादिवन्मन्त्रभेदः । किमुत यदा विनियोगानुसारेणार्थभेदः एव प्रमाणवान् । तदा मन्त्रैकत्वे प्रमाणाभाव एव । अत्र हि ‘ इषे त्वेति शाखां छिनत्ति ’ ‘ ऊर्जे त्वेत्युन्मार्ष्टि ’ इति विनियोगभेदात् इषे त्वेति छिनद्मि इति क्रियापदाध्याहारेण भिन्नमेव मुख्यविशेष्यम् । एवं ‘ ऊर्जे त्वा उन्मार्ज्मि ’ इति । एवं ‘ क्लृप्तीर्वाचयति ’ इति बहुवचनात् क्लृप्तिभेदावगमेन अर्थभेदः । अतश्चात्र यजुर्भेद इति पूर्वोक्तप्रत्युदाहरणमात्रम् ।

**मण्डन**— ‘ भिन्नं यजुः स्याद्विनियोगभेदात् । ’

**शंकर**— ‘ यजुर्भेद इषेत्वादौ । ’

* **वाक्यभेदापत्तिर्न**, विशिष्टविध्यन्यथानुपपत्तिकल्पितैः विधिभिः अनेकार्थविधानेऽपि प्राधान्येन विधेयस्य प्रयोजनत्वात् तस्य चात्र एकत्वात् । **सु.** पृ. ८६८. * वाक्यभेदापत्तिः पौरुषेये वाक्ये अदोषः इत्यसकृदुक्तम् । ऋजु. पृ. ७०.

* **वाक्यभेदापत्तिलक्षणः** न्यायः अविवक्षासाधकः । सु. पृ. १०१५.

* **वाक्यभेददोषः** अधिकस्य सतो न्यूनार्थकत्वकल्पने यथा– ‘ वषट्कर्तुः प्रथमभक्षः ’ इति । अत्र प्राथम्यमात्रविधौ भक्षानुवादात् प्राथम्यस्य च विधानात् एकपदे चोभयासंभवात् । **वाल.** पृ. ४.

* **वाक्यभेदपरिहारार्थं** दुर्बलापेक्षाऽपि उपपन्ना । **सु.** पृ. ११३०.

* **वाक्यवाक्यार्थयोः** संबन्धः औत्पत्तिकः । **ऋजु.** पृ. १०३.

* **वाक्यविनियुक्तेषु** प्रोक्षणादिसंनिपत्योपकारकेषु अपूर्वप्रयुक्तत्वम् । ९।१।२।२–३.

* **वाक्यविनियोगः** संप्रति प्रस्तूयते । **वा.** ३।३। १।१.

* **वाक्यविनियोगसूत्रं** 'वेदो वा प्रायदर्शनात्' (३।३।१।२) इति। उपक्रमोपसंहारवशेनैव वेदधर्मत्वावधारणात्। वा. ३।३।४।११ पृ. ८१७.

* **वाक्यशक्तिः** भाष्यसंमता। अन्यथा अर्थवादेषु प्राशस्त्यलक्षणायां का गतिः। कु. ३।७।६।१४.

* **वाक्यशेषः।** न च अपरिपूर्णेन वाक्येन व्यवहारोऽवकल्पते। तत्र तदन्यथाऽनुपपत्त्या अवश्यं परिपूरणसमर्थो वाक्यशेषः कल्पनीयः। कुतः? 'न्यूनवाक्यप्रयोगो हि वेदे नैव समाश्रितः। कश्चित् क्वापि स्थितः शेषः सोऽन्वेष्टव्यः प्रयत्नतः॥' नहि वैदिकवाक्यानां प्रत्यक्षमेवैकं प्रमाणम्, तद्वदेव हि अनुमानादीन्यपि प्रमाणानि। सर्वप्रमाणप्रत्यस्तमये च षष्ठेन अभावः परिच्छिद्यते। तदिह प्रत्यक्षानुपलब्धे वाक्यशेषे न तावत्येव उपरन्तव्यम्। यदि अनुमानादीन्यपि निवर्तिष्यन्ते ततः एतावानेवायं मन्त्रः इति कल्पयिष्यामः। अथ तु तैः कश्चिदवगम्यते ततः तत्सहितोऽयं मन्त्रः सकलः, प्राक् तस्मादूनः इत्यध्यवस्यामः। वा. २।१।१६।४८ पृ. ४५२. * वाक्यशेषः संदेहेऽपेक्षितो निर्णयहेतुतां प्रतिपद्यते। कणिका. पृ. ३१६. * वाक्यशेषो हि भवन् पारतन्त्र्यात् गौणत्वाद्यपि प्रतिपद्यते। वा. १।२।३।२९. * निःसंदिग्धे विध्युद्देशे **वाक्यशेषः** न निर्णायकः। सु. पृ. १४०५. * साकाङ्क्षस्य संनिधौ परस्तात् पुरस्ताद्वा परिपूरणसमर्थः श्रूयमाणो वाक्यशेषो भवति। भा. २।१।१६।४८. * 'प्राजापत्येषु यागानामेकानेकत्वसंशये। कृतः प्रकृतिवच्छब्दवाक्यशेषेण निर्णयः॥' वा. ३।१।१।१ पृ. ६५०. * **वाक्यशेषात्** अर्थाच्च संदिग्धानां अर्थानामध्यवसानमुक्तम्। भा. २।१।१।१. * वाक्यशेषात् निर्णयः यत्र विध्युद्देशः संदिग्धः। यत्र तु असंदिग्धः तत्र तद्बलीयस्त्वात् वाक्यशेषबाधेनैव भवितव्यम्। वा. ३।४।११।३०. * **वाक्यशेषस्य** देवतासमर्पकत्वं उपक्रमस्य नैराकाङ्क्ष्यात् निराकृतं 'संयुक्तस्त्वर्थशब्देन' (२।३।७।१८) इत्यधिकरणे। पराक्रमः. ५४।२. * वाक्यशेषस्य संदिग्धेषु प्रामाण्यमुक्तं नेनैव (अक्ताधिकरणेन १।४।१३)। वा. ३।३।१।१. * **वाक्यशेषाणां** सर्वेषां आनर्थक्यनिराकरणेन अर्थवादत्वं अर्थवादाधिकरणेन सिद्धम्। सु. पृ. ३९७.

* **वाक्यशेषाधिकरणम्।** संदिग्धस्योपक्रमस्य वाक्यशेषान्निर्णयः। १।४।१३।२४. **मीको.** पृ. ७ 'अक्ताधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्। * वाक्यशेषाधिकरणम्। अत्र प्रकारान्तरेण प्रामाण्यनिरूपणम्। कौ. १।४।१९।२९. * **वाक्यशेषाधिकरणे** (१।४।१३) स्तावकत्वेन प्रमाणस्यापि 'तेजो वै घृतं' इत्यर्थवादस्यस्य घृतपदस्य 'अक्ताः शर्करा उपदधाति' इत्यादिविध्यपेक्षिताञ्जनसाधनीभूतद्रवद्रव्यादिनिर्णये प्रामाण्यमस्ति न वेति विचार्यते। कौ. १।४।१९।२९.

* **वाक्यशेषाध्याहारः** 'सं ते प्राणो वातेन०' इत्यादौ एकवाक्यत्वार्थम्। न तु अनुषङ्गः व्यवेतत्वात्। वि. २।१।१८.

* **वाक्यशेषत्वं** अर्थवादस्य। वा. १।४।१।१.

* **वाक्यशेषलोकयोः** विरोधे बलाबलम्। वा. १।३।४।९ पृ. २२१.

* **वाक्यसंयोगेन** अङ्गं विधत्ते सर्वोऽनारभ्यवादः। लिङ्गेन वा केनचिदव्यभिचारिणा। वा. ३।४।८।२४.

* **वाक्यसंयोगात्।** प्रकरणात् अङ्गता स्यात्, वाक्यसंयोगाद्वा, प्रत्यक्षोपकारदर्शनाद्वा। भा. १०।६।१०।३०.

* **वाक्यसंनिधावपि** पदसंनिधिवत् इतिकर्तव्यताकाङ्क्षायां विनियोगहेतुत्वं अवसीयते। सु. पृ. ११९३.

* **वाक्यसमाख्ययोर्विरोधे** भक्षानुवाक एव 'सद्यासम्' इत्येवमादिषु ग्रहणादौ विनियुज्यमानेषु तदेकवाक्यगतशेषपदावृत्तिः उदाहरणीया। तथा आध्वर्यवादिसमाख्यानात् ज्योतिष्टोमादिप्रधानेषु तदर्थेष्वेव प्राप्नुवत्सु स्वर्गकामाद्येकवाक्यत्वात् अर्थिमात्रविषयत्वं विज्ञायते। वा. ३।३।७।१८ पृ. ८३७। वाक्यसमाख्ययोर्विरोधे 'तस्मान्मैत्रावरुणः प्रेष्यति चानु चाऽऽह' इति हौत्रसमाख्याते प्रवचने प्रैषानुवचनं आम्नातम्। तस्य कर्तृविशेषाकाङ्क्षिणः समाख्यया होता प्राप्नोति। वाक्येन मैत्रावरुणः। एकेन च कृतार्थस्य न कर्त्रन्तरापेक्षा भवति। तत्र शीघ्रतरप्राप्ते मैत्रावरुणे प्रकरणकल्पनां यावत्प्राप्ता समाख्या बाध्यते। वा. ३।३।७।१४ पृ. ८३९. * वाक्यसमाख्ययोर्विरोधे (शेष्यनेकत्वे) भक्षानुवाकगतसद्यासमित्यादेः लिङ्गाद् ग्रहणादौ विनियोगे अवगते तदेकवाक्यतापन्नशेषपदानां समाख्यया भक्षाङ्गत्वप्रसक्तौ वाक्यात् ग्रहणाद्यङ्गत्वम्। शेषानेकत्वे तु प्रैषानुवचने समाख्यया होतृप्राप्तेः वाक्येन मैत्रावरुणविधानम्। कौ. ३।३।७।१८ पृ. ३६२–६३.



* **वाक्यसमासौ** भिन्नार्थौ। वाक्येन (राजपुरुषः) पुंलिङ्गैकत्वविशिष्टस्य पुरुषः प्रतीयते। समासे तु न ज्ञायते किं द्वयोः पुंसोः उत बहूनाम्, उत स्त्रियाः, उत नपुंसकस्येति। तस्मात् वाक्यसमासौ नैकार्थौ। टुप्. १०।८।१।४ पृ. २०६०.

* 'सामर्थ्यं कर्मणस्तावदेकं लिङ्गं विवक्षितम्। अपरं **वाक्यसामर्थ्यं** पौर्वापर्यनिरीक्षणात्॥' वा. ३।४।११।३१ पृ. ९६५. * **वाक्यसामर्थ्यात्** शालार्थमेव छेदनं न उपवेषार्थम्। टुप्. ४।२।३।८.

* **वाक्यस्थं** उपसर्जनं 'ऋद्धस्य राज्ञः पुरुषः' इतिवत् विशेषणः संबध्यमानं दृष्टम्। समासस्थं तु न संबध्यते। वा. ३।४।४।१३ पृ. ९३८.

* **वाक्यस्फोटः।** अखण्डमेव वाक्यम्, न सावयवम्। न पदसमुदायस्य वाक्यत्वम्, किन्तु अवयविरूपम्। तस्यैव विशिष्टार्थे शक्तिः स एव वाक्यस्फोटः। इति वैयाकरणाः। तन्न इति मीमांसकाः। मणि. पृ. १७१. * वाक्यस्फोटः 'वाक्यार्थ शक्तिः लक्षणा वा' इति बिन्दौ (मीको. पृ. ३४६४) द्रष्टव्यः।

* **वाग् यन्तव्या।** 'वैष्णवीमनूच्य वाग् यन्तव्या, सारस्वतीमनूच्य वाग् यन्तव्या, बार्हस्पत्यमनूच्य वाग् यन्तव्या' इति। भा. १२।४।१।१.

¶ **'वाग्वै हविष्कृत्' इति वाचो हविष्कृत्त्वं अर्थवादः॥**

'हविष्कृदेहि' इति मन्त्रे हविष्कृत्पदेनाध्वर्युरुच्यते। हविष्करणस्याध्वर्यवत्वात् मन्त्रस्तु परेण प्रयोज्यः। प्रैषेषु न पराधिकारात्। वाग्देव्येव वा हविष्कर्त्री। 'वाग्वै हविष्कृद्वाचमेव तदाह्वयति' इति वाक्यशेषात्। न च एतत्पक्षे आग्नेयौषधसान्नाय्यानामविशेषेण दैवी कर्म्यापत्त इति वाच्यम्। पशुपुरोडाशे 'हविष्कृता वाचं विसृज्य पशुं विशास्ति' इति श्रवणेन औपधमात्रहविःकर्तृत्वावगतेः। आज्यनिर्वापस्य पूर्वं वृत्तत्वेन तदर्थमाहूताया वाग्देव्याः पुनराह्वानाभावेन वाग्विसर्गे हविष्कृत्प्रैषकालिकत्वविध्यनुपपत्तेः। न च शास्त्रान्त्याधिकरणन्यायेन प्रैषावृत्तिः। एतत्पक्षे प्रैषस्यादृष्टार्थत्वेन प्रयाजानामिव प्रसङ्गोपपत्तेः। तस्मादौषधहविष्कृद्देव्येव। **इति प्राप्ते,** 'पत्न्येव हविष्कृदुपोत्तिष्ठति देवानृषीन् पितृन् साभिद्रुत्या वहन्ति' इति वाक्यशेषात् दृष्टार्थत्वाच्च वाचो हविष्कृत्त्वमर्थवादमात्रम्। **संकर्ष.** १।१।१।१.

* **वाचः** एकार्थवृत्तित्वात् युगपदसंबन्धः। भा. ३।३।७।१४ पृ. ८२३। क्रमवर्तित्वाद् वाचः युगपदशक्तेः। वा. * वाचो विसर्गे हविष्कृद्ग्रहणं काललक्षणार्थमित्युक्तम् (३।२।३)। भा. ११।३।७।१५. * वाचो व्रते द्वे सामनी अनृचे। बाल. पृ. ७२.

* **वाङ्नियमः** ज्योतिष्टोमादौ। स सर्वाङ्गः, तेन जिह्वाचापल्ये निवारिते सति मनसः एकाग्र्यस्य सर्वकर्मसु योग्यत्वम्। वि. ३।१।१८, * वाङ्नियमः दर्शपूर्णमासयोः हविष्कृदाह्वानप्राचीनापूर्वप्रयुक्तः, न परमापूर्वप्रयुक्तः। ९।१।७, * वाङ्नियमः नादृष्टार्थः किन्तु कर्तृसंस्कारार्थः। ११।३।८. * **वाङ्नियमस्य** प्रणीताकालीनस्य हविष्कृदाह्वाने त्यागः। वाङ्नियमस्य च मध्यकालीनाङ्गजातापूर्वमेव प्रयोजकं न परमापूर्वम्। शा. ९।१।६, वि. ९।१।७.

¶ **वाङ्नियमन्यायः।** साहस्री. ८६०.

* 'व्रीहीनवहन्ति' इत्यत्र, परमापूर्वस्य व्रीहिसाधनत्वमेव प्रदेयघटकत्वसंबन्धेन लक्ष्यते। अस्ति च आग्नेयादेः तत्प्रत्यपि साधनता। अत एव न **वाङ्नियमन्यायोऽपि।** भाट्ट. ३।१।४, * 'आग्नेय्या आग्नीध्रमुपतिष्ठते'– संभवति च प्रकृतानामपि आग्नेयीनां **वाङ्नियमन्यायेन** स्तोत्रद्वारा ज्योतिष्टोमापूर्वसंबन्धासंभवेऽपि कार्यान्तरद्वारा सः। आग्नेयीनां स्तोत्रादौ विनियोगेऽपि पार्थक्येन ज्योतिष्टोमप्रकरणे पाठादेव तावत् अपूर्वसंबन्धावगमः। ३।२।८.

* 'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य' इत्यत्र

त्रित्वस्य तावत् उपसदनुवादेन विहितस्य वाङ्नियमन्यायेन स्वापूर्वसाधनीभूतोपसदर्थत्वम् । ३।३।८.

* **वाङ्मनसयोः** निन्दा हिरण्यस्तुत्यर्था । **वा.** १।२।१।१८, * वाङ्मनसयोः सर्वशरीरेषु चेष्टाः प्रतिप्राधान्यम् । १।२।१।२ पृ. १०७.

* **वाग्यमः** अनुवाक्योत्तरं याज्यापर्यन्तं न तु अनुवाक्यातः पूर्वम् । **संकर्ष** ४।३।९. * वाग्यमः दर्शपूर्णमासयोः 'अपः प्रणेष्यन् वाचं यच्छति, तां हविष्कृत्काले विसृजति'। **भा.** ११।३।७।१५, * वाग्यमः पुरुषसंस्कारार्थः । ३।१।१४।२४. * वाग्यमः याजमानः ज्योतिष्टोमे । **वा.** ३।१।१४।२४. * वाग्यमः 'वाचं यच्छति' इति ज्योतिष्टोमे कृत्स्नप्रकरणार्थः, न तु दीक्षावेदनार्थः । ३।१।१४।२४–२५. * वाग्यमः । वाचंयमौ ( अध्वर्युयजमानौ ) सन्तौ अविक्षिप्यमाणचेतस्कौ पदार्थेषु क्रियमाणेषु अप्रमाद्यन्तौ तथा करिष्येते, यथा न कश्चित् पदार्थः पदार्थावयवो वा हीयते । अध्वर्युः वाग्यमेन अनन्यचेतस्को न पदार्थान् प्रमादयिष्यति । यजमानश्चैवं वाग्यमेन अनन्यचेतस्कः प्रमादयिष्यन्तं तं ( अध्वर्युं ) बोधयिष्यति । **भा.** ९।१।६।२४.

* **वाग्यमस्य** कृत्स्नप्राकरणिकाङ्गता । **सु.** पृ. १०६५.

* **वाग्विसर्गः** पशौ पुरोडाशस्य हविष्कृदाह्वानकाले कर्तव्यः । कृत्वाचिन्तेयम् । पशौ हविष्कृदाह्वानं नास्त्येव, पशुपुरोडाशे तु अस्त्येव । वस्तुतस्तु वाङ्नियम-विसर्गौ पश्वर्थं वा कर्तव्यौ पशुपुरोडाशार्थे वा कर्तव्यौ इति संशये पुरोडाशतन्त्रे एव कृताभ्यां ताभ्यां उभयोरुपकारः, इति **पूर्वपक्षः** । पुरोडाशार्थमेव कर्तव्यौ न पश्वर्थम्, तथा च तन्त्रविचार एव न प्रवर्तते इति सिद्धान्तः इति कृत्वाचिन्तेयम् । **वि.** ११।३।८. * वाग्विसर्गः पौरोडाशिककर्मार्थे हविष्कृदाह्वाने कर्तव्यः अग्नीषोमीये पशौ । ११।३।८।१८. **मीको.** पृ. १२२ 'अग्नीषोमीये पशौ वाग्विसर्गः' इत्यत्र अधिकरणं द्रष्टव्यम् । * वाग्विसर्गः राजसूये नानाबीजेष्टौ अन्त्यबीजसंबन्धिहविष्कृदाह्वानकाले एव । ११।३।७।१७. **मीको.** पृ. २३१३ 'नानाबीजेष्टौ अन्त्यबीज०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**वाग्विसर्गो हविष्कृता बीजभेदे तथा स्यात् । ११।३।७।१७॥**

दर्शपूर्णमासयोः 'अपः प्रणेष्यन् वाचं यच्छति तां सहविष्कृता विसृजति' इति श्रुतम् । राजसूये च नानाबीजेष्टिः श्रुता । तत्र हविष्कृदाह्वानकालः अनेकः । तत्रापि प्रथमे अन्त्ये वा हविष्कृदाह्वानकाले वाग्विसर्ग इति विचारे पूर्वाधिकरणन्यायेनैव सिद्धान्तमाह । हविष्कृता सह यो वाग्विसर्ग उक्तः स बीजभेदे सति तथा स्यात् अहर्गणे विषाणाप्रासनवत् अन्त्ये हविष्कृदाह्वानकाले एव स्यात् । **के.**

* **वाग्विसर्गाधिकरणम्** । ३।२।४।१०. **मीको.** पृ. ११०२ 'उत्थानवाग्विसर्गाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वाचःस्तोमे** सर्वे मन्त्रा उपदिष्टाः । **भा.** ३।२।८।२४.

* **वाचःस्तोमादौ** यूपैकादशिनीसद्भावः । **सु.** पृ. ९९८. * **वाचःस्तोमादिषु** तु यूपैकादशिन्यां रथाक्षमात्राण्येव यूपान्तरालानि भविष्यन्ति । **भा.** २।४।२।२६.

* **वाचकः** उपसर्गः इत्येकः पक्षः द्योतकः इत्यपरः । **बाल.** पृ. ४१.

* **वाचकाभ्यासात्** वाच्यभेदोऽभ्युपगन्तव्यः । **सु.** पृ. ७१४.

* **वाचकत्वं** अर्थप्रतिपत्तिफलकाभिधानक्रियायां शब्दस्य यत् विवक्षावशेन कर्तृत्वं करणत्वं वा तत् वाचकत्वम् । **रत्नाकरः.** पृ. ६४२.

* **वाचकशक्तिः** शब्दस्य यत्र कल्प्यते स नाम अर्थोऽभिधीयते । क्व च ( कचित् ) असौ अदृष्टा सती कल्प्यते यत्र तत्कल्पनामन्तरेण प्रतीतिप्रयोगौ नावकल्पेते । **वा.** ३।४।४।१३ पृ. ९१३.

* **वाचकशक्तिकल्पनायाः** तद्भावभावित्वान्यथानुपपत्त्यधीनत्वम् । **वा.** ३।४।४।१३ पृ. ९१३.

* **वाचनं** अभिज्ञस्यैव वाजपेयादौ ऋत्विजाम् । **भा.** ३।८।८।१८.

* **वाचनसमाख्यायाः** लोके अध्यापनाख्यशिक्षणवाचित्वप्रसिद्धेः तदनुसारादयं वाचयतिः ( ऋत्वीयजमानं वाचयति ) शिक्षणार्थोऽपि यज्ञस्यैवाधिकारात् तस्य च शिक्षणानर्हत्वेन तद्विषयत्वसामर्थ्याख्यात् लिङ्गात् उच्चारणसमर्थस्मरणावतारणाख्यप्रयुक्त्यर्थः । **सु.** पृ. ६२.



* **वाचनिकः** ऊहः यथा 'सकृदवहन्ति' इति । **बाल.** पृ. १२६, * वाचनिकः विकल्पः अष्टविधः– १ जात्योः २ द्रव्ययोः ३ गुणयोः ४ क्रिययोः ५ जातितदभावयोः ६ द्रव्यतदभावयोः ७ गुणतदभावयोः ८ क्रियातदभावयोश्चेति । एते पुनः क्रत्वर्थाः पुरुषार्थाश्च । पुनश्च पुरुषार्थः वाचनिको विकल्पः एकादशविधः –१ जातिद्रव्ययोः २ जातिगुणयोः ३ जातिक्रिययोः ४ द्रव्यगुणयोः ५ द्रव्यक्रिययोः ६ गुणक्रिययोः ७ जातिद्रव्यगुणानाम् ८ जातिद्रव्यक्रियाणाम् ९ जातिगुणक्रियाणाम् १० द्रव्यगुणक्रियाणाम् ११ जातिद्रव्यगुणक्रियाचतुष्टयविषय एकः इति । पृ. १५२–१५३, * वाचनिकः व्यवस्थितविकल्पः सप्तधा– देशतः, कालतः, कर्तृतः, कर्मतः, फलतः, निमित्ततः, अवधितश्चेति । पृ. १५९–१६१. * वाचनिकः समुच्चयः क्रत्वर्थः पुरुषार्थश्च । प्रत्येकं पञ्चदशभेदाश्च । पृ. १७०–१७३,

* **वाचनिकाः** विकल्पभेदाः अष्टत्रिंशत् । पृ. १५८,

* वाचनिकाः समुच्चयभेदाः न्यायगम्यवत् क्रत्वर्थाः पञ्चदश, पुरुषार्थाश्च पञ्चदशेत्येवं त्रिंशत् । अथ क्रत्वर्थाः उच्यन्ते ( १ ) **जात्योः**– 'गौश्चाश्वश्च' इति ज्योतिष्टोमे दक्षिणासु । ( २ ) **द्रव्ययोः**– 'आग्नेयमजमग्निष्टोम आलभेत, ऐन्द्राग्नमुक्थ्ये द्वितीयम्, ऐन्द्रं वृष्णिं षोडशिनि तृतीयम्, सारस्वतीं मेषीमतिरात्रे चतुर्थीम्'। अत्र तत्तद्देवताविशिष्टपशुद्रव्याणां समुच्चयो विधीयते । ( ३ ) **गुणयोः**– ब्रह्मपुराणे 'मृष्टस्निग्धानि यानि स्युरीषत् कट्वम्लकानि च । स्वादूनि देवभोज्यानि तानि श्राद्धे नियोजयेत् ॥' ( ४ ) **क्रिययोः**– 'संसव उभे कुर्यात्' 'गोसव उभे कुर्यात्' इति ।(५) **जातिद्रव्ययोः**– देवलः 'ततोऽन्नं बहुसंस्कारं नैकव्यञ्जनभक्षवत् । चोष्यपेयसमृद्धं च यथाशक्त्युपकल्पयेत् ॥' अत्र अन्नशब्दोक्ता जातिः, चोष्यादिशब्दोक्तं च द्रव्यम् । ( ६ ) **जातिगुणयोः**– 'अथ पिण्डावशिष्टान्नं भोजयेत् प्रयतो द्विजान् । भोजनैः सतिलैः स्नेहैर्भक्षपूपविमिश्रितैः ॥' इति देवलः । अत्र स्नेहैरिति गुणः तिलजातिश्च सहादेशोपस्थापितशब्देन चशब्दसमानार्थेन प्राप्ते श्राद्धे समुच्चित्य विधीयते । ( ७ ) **जातिक्रिययोः**– शङ्खलिखितौ 'ततस्तिलैर्मांसैः शाकैः पूपैः कृशरपायसापूपैर्लाजैर्भक्षैः पानैर्मधुना घृतेन दध्ना पयसा च प्रभूतमिष्टमन्नं दद्यात्' अत्र पयसा शृतं पायसं इति शृतार्थतद्धितोपात्ता श्रपणक्रिया पयआदिजातिश्च प्राप्ते श्राद्धे चशब्देन समुच्चित्य विधीयते । ( ८ ) **द्रव्यगुणयोः**— ब्रह्मपुराणे 'पूरिकां च रसालां च गोक्षीरं च नियोजयेत् । यानि चाभ्यवहार्याणि स्वादुस्निग्धानि भो द्विजाः ॥ ईषदुष्णकटून्येव देयानि श्राद्धकर्मणि ॥' इति । अत्र रसालाशब्देन द्रव्यं स्निग्धोष्णादिगुणश्च समुच्चित्य चशब्देन विधीयते । ( ९ ) **द्रव्यक्रिययोः**– पूर्वोक्ते शङ्खलिखितवाक्ये पायसशब्दगततद्धितोक्तश्रपणक्रिया भक्षशब्दोक्तं द्रव्यं च समुच्चित्य विहितम् । (१०) **गुणक्रिययोः**– सौरपुराणे 'विविधं पायसं दद्यात् भक्ष्याणि विविधानि च । लेह्यं चोष्यं यथाकाममुष्णमेव फलं विना ॥' इति । अत्र पायसशब्दगततद्धितोक्ता श्रपणक्रिया उष्णगुणश्च । एवं क्रत्वर्थजात्यादिविषया वाचनिकसमुच्चयभेदा दश उक्ताः । एवमेव दश पुरुषार्थजात्यादिविषया वाचनिकसमुच्चयभेदाः तदा स्युः यदि उदाहरणानि संभवेयुः । न तु तानि सभवन्ति । शेषोदाहरणानि तु अन्वेष्याणि । एवं वाचनिकसमुच्चयभेदाः ३० उक्ताः । पृ.१७०–१७३. * **वाचनिकस्य** सर्वत्र कार्यशेषभावः । **भा.** १०।६।१९।७४, * **वाचनिके** क्रियमाणे न दोषः । १२।४।७।२३.

* **वाचनिकप्रयाजादिविनियोगस्थले** न स्वाहाकारयागः ( चयने ) । **भाट्ट.** ४।१।७.

* **वाचनिकभक्षविषयकं** अधिकरणं पञ्चमं षष्ठं नवमं दशमं च ( ३।५।५–६, ९–१० ) । **के.**

* **वाचनिकविकल्पे** अष्टौ दोषा न सन्ति । **बाल.** पृ. १६१.

* **वाचनिकव्यवस्थाविधिः** सप्तविधः– देशतः, कालतः, कर्तृतः, संस्कार्यतः, कर्मतः, फलतः, निमित्ततश्चेति । **बाल.** पृ. १८.

*** वाचयति ।** यथैव हि शब्दं ब्रुवन्तं प्रयुञ्जानः वाचयतीत्युच्यते तथैव च यः शब्देनार्थं ब्रवीति तस्यापि प्रयोजकः वाचयति इति । **वा.** २।१।१५।४७ पृ. ४५२.

*** वाच्यत्वम् ।** प्रतिपत्त्याख्याभिधानक्रियाफलभागितया यत् अर्थस्य कर्मत्वं तत् वाच्यत्वम् । **रत्नाकरः.** पृ. ६४२.

* **' वाच्यवाचकभावः** न अतीन्द्रियः । **सु.** पृ. ११३७. * वाच्यवाचकभावो न व्याकरणस्मृत्यधीनः, तस्य न्यायसहितान्वयव्यतिरेकगम्यत्वात् । **मीन्या.** * **वाच्यवाचकभावस्य** अस्माभिः उपमानगम्यत्वानङ्गीकारः । **सोम.** ७।४।२.

* **वाच्यवाचकसंबन्धः** अन्वयव्यतिरेकाभ्यां विज्ञायते । **वा.** २।३।२।३ पृ. ५८६.

* **' वाच्यवाचकसामर्थ्यनियमो** योऽभिधागतः । संबन्धस्तदनेकत्वे स्वरूपात् सोऽवहीयते ॥ ' इति **न्यायेन** एकस्य संज्ञिनः अनेकसंज्ञानुपपत्तेः ( संज्ञायाः ) भेदकत्वमाशङ्कितम् । **सु.** ३।७ पृ. २७.

* **' वाजस्य मा प्रसवेन०** ' इति मन्त्रः अध्वर्युयजमानोभयप्रयोज्यः, दर्शपूर्णमासयोः । **वि.** ३।८।८.

* **वाजपेयः** अग्निष्टोमविकारः । ११।३।१५।८६. * वाजपेयः आध्वर्यवे वेदे विहितोऽपि नानर्त्विग्भिः कर्तव्यः, न केवलमध्वर्युणा । ३।७।२३।५०–५१. * वाजपेयः काम्यः अग्निष्टोमस्य संस्थाविशेषः । अग्निष्टोमानुष्ठानात् प्रागयं नानुष्ठातव्यः । **वि.** ५।३। १३, १४, * वाजपेयः चयनादौ कर्तुं न शक्यते । १०।८।११. * वाजपेयः ज्योतिष्टोमस्य केवलविकार एव न तु गुणविकारः, ज्योतिष्टोमप्रकरणे तद्विध्यभावात् । **कु.** ३।६।१६।४७. * वाजपेयः ज्योतिष्टोमस्य विकारः । **वि.** ३।७।२३. * वाजपेयः । ' देवा वै यथादर्शं यज्ञानाहरन्त ' इत्युपक्रम्य ' ते सहैव सर्वे वाजपेयमपश्यन् ' इति प्रस्तुत्य ' स वा एष ब्राह्मणस्य चैव राजन्यस्य च यज्ञः तं वा एतं वाजपेय इत्याहुः ' ।

यदपि वदन्ति वाजः अन्नं पेयं सुराग्रहविधिलब्धसुरारूपं यस्य इति बहुव्रीह्याश्रयणेन तत्प्रख्यतया नामधेयत्वं वाजपेयस्येति । तन्न । तथा सति बहुव्रीहिपूर्वपदप्रकृतिस्वरेण आद्युदात्तत्वापत्तेः, ' सप्तमीविशेषणे बहुव्रीहौ ' ( पा. २।२।३५ ) इति पेयशब्दस्य पूर्वनिपातापत्तेश्च । वस्तुतस्तु पिबन्ति सोमं यस्मिन् स पेयः ' अचो यत् ' ( पा. ३।१।९७ ) इत्यधिकरणे यत्प्रत्ययः । ' ईद्यति ' ( पा ६।४।६५ ) इति ईत्वम्, ईकारस्य गुणः ; वाजाय अन्नाय पेयः वाजपेयः इति तादर्थ्यचतुर्थ्या ' सुप् सुपा ' इति समासः । कृदुत्तरपदप्रकृतिस्वरत्वेन ' यतोऽनावः ' ( पा. ६।१।२१३ ) इति आद्युदात्तत्वम् । वाजार्थं होमं हुतशेषं यत्र पिबन्ति स वाजपेयः इति फलितम् । –इति **कुतूहलम्** । १।४। ६।७.

अन्नवाची वाजशब्दः । तच्चान्नं पेयं सुराद्रव्यं तच्चात्र गुणः सुराग्रहाणामनुष्ठेयत्वात् । –इति **विस्तरः** । १।४।६.

वाजं पेयं सुराद्रव्यं अस्मिन् इति सुराग्रहविधानात् तत्प्रख्यतया नामधेयत्वं– –इति **शास्त्रदीपिका** । १।४।६ पृ. ७२. ( इदमेव उपरिष्टात् कुतूहले खण्डितम् । **के.** ) * वाजपेयः प्राकृताङ्गेषु नानाकर्तृकः । ३।७। २३।५०–५१. ' श्येनवाजपेययोः प्राकृताङ्गेषु नानाकर्तृकत्वम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * वाजपेयः याजुर्वेदिकः । **वि.** ३।७।२३, * वाजपेयः शरदि विहितः । ४।३।२०. * वाजपेयः सप्तदशदीक्षः सप्तदशोपसत्कः । **भा.** १।४।५।७, * **' वाजपेयेन** इष्ट्वा बृहस्पतिसवेन यजेत ' इति । अङ्गप्रयोजनसंबन्धोऽयम् । वाजपेयाङ्गत्वेन बृहस्पतिसवस्य विधिः, न तु कालार्थसंयोगः, वाजपेयोत्तरकालत्वं बृहस्पतिसवस्येति । ४।३। १३।२९–३१, * ' वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत ' इति । तत्रेदं समाम्नातम्– ' गायत्रमेतदहर्भवति ' । अत्र किं प्रकृतीनां त्रिष्टुब्जगतीनां अक्षरावलोपं कृत्वा गायत्रं तदहः कर्तव्यं उतोत्पत्तिगायत्रीणां दाशतयीभ्यः आगमं कुर्वेति विचार्यते । उत्तरः पक्षः सिद्धान्तः । ८।३।६।१२–३६. * ' वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत ' इयं उत्तरस्य पूर्वाङ्गत्वे क्त्वाप्रत्ययरूपा



विनियोक्त्री श्रुतिः सोमेश्वरमतेन । **बाल.** पृ. ४५. * ' वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत ' ' गायत्रमेतदहर्भवति ' । ज्योतिष्टोमस्य विकृतिर्बृहस्पतिसवः । तत्र गायत्रीपूरणार्थं दाशतयीगतगायत्रीणामागमः कर्तव्यः । न तु ज्योतिष्टोमात् प्राप्तानां नानाछन्दस्कानामृचां अधिकाक्षरलोपेन चतुर्विंशतिसंख्यया गायत्रीत्वं संपादनीयम् । **वि.** ८।३।६, * ' वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत ' । बृहस्पतिसवो वाजपेयाङ्गं इति क्त्वाप्रत्ययार्थः । इदं चाङ्गभूतं कर्मान्तरमेव । बृहस्पतिसवशब्दस्तु प्रसिद्धबृहस्पतिसवधर्मातिदेशार्थः । तथा चेदं वाक्यमङ्गत्वबोधकमेव । इदं च कर्मान्तरं न वाजपेयाव्यवहितोत्तरकालं कर्तव्यं किन्तु स्वकाले चोदकप्राप्ते वसन्ते एव । अनेन वाजपेयस्य परमापूर्वे प्राबल्यं क्रियते । ४।३।१३, २०. * ' वाजपेयेन स्वाराज्यकामो यजेत ' इत्यत्र वाजपेयशब्दः किं गुणविधिः उत कर्मनामधेयं इति संदेहे कर्मनामधेयं वाजपेयशब्दः इति सिद्धान्तः । १।४।५।६–८. * ' वाजपेयेन स्वाराज्यकामो यजेत ' इति । तत्र प्राजापत्याः पशवः आम्नाताः ' सप्तदश प्राजापत्यान् पशूनालभते ' इति । प्रकृतौ ऋतुपशवः चोदकेन प्राप्ताः । अत्र प्राकृताः प्राजापत्यैः समुच्चीयन्ते । **भा.** १०।४।३।६, * ' वाजपेयेन स्वाराज्यकामो यजेत ' इति । तत्र ' सप्तदश प्राजापत्यान् पशूनालभते ' इति । प्रकृतौ च ' प्रयाजशेषेण हवींषि अभिघारयति ' इति च श्रूयते । तत्र किं प्राजापत्यानां वपाः अभिघारयितुं प्रयाजशेषस्य धारणार्थं पात्रमपरमुत्पादयितव्यम्, ततस्तेन प्राजापत्यानां वपाः अभिघारयितव्याः, उत न शेषो धारयितव्यः, नैव ततः प्राजापत्यानां वपाः अभिघारयितव्याः इति विचारे प्रयाजशेषेण अभिघारणं प्राजापत्यानां नास्ति, न च प्रयाजशेषो धार्यते इति निर्णयः । ४।१।१४।३३–३९, * ' शरदि **वाजपेयेन** स्वाराज्यकामो यजेत ' । १०।७।१६।५१. * **' वाजपेयस्य** ' इति षष्ठ्या ( ' सप्तदशारत्निर्वाजपेयस्य यूपो भवति ' ) संबन्धी उपात्तः, तस्य सप्तदशारत्निता विधीयते । संबन्धमात्रं च अङ्गाङ्गस्यापि अस्त्येव इति यूपे निवेशः । आनर्थक्यात्तदङ्गेषु इति न्यायेन ( ३।१।९ ) । **टुप्.** १०।८।२।५. * ' वाजपेयस्य यूपः ' ' तस्य ( सोमस्य ) एकशतं प्रयाजानुयाजाः ' । अङ्गाङ्गमपि च ' तस्य ' इति शक्यते वक्तुम् । **भा.** ८।१।५।१०, * **वाजपेये,** अनुयाजोत्तरं पठनीये सूक्तवाके सवनीयपुरोडाशदेवताः संकीर्त्यन्ते । तत्र सवनीयपुरोडाशदेवतानामपि उत्कर्षः । ११।३।१६।५२, * वाजपेये आग्निमारुतोत्तरमनुयाजानां उत्कर्षः तदुत्तरं सूक्तवाकस्यापि उत्कर्षः । ११।३।१६।५३, * वाजपेये आच्छादनं नित्यम् । ' दर्भमयं वासो भवति ' इति । ६।८।८।२८, * वाजपेये ' ऊषं पुटैरर्पयन्ति ' इति अध्वर्यवः अर्पयिष्यन्ति । ३।७।२३।५१. * वाजपेये कुम्भ्यादीनां न भेदः । **भाट्ट.** ११।४।८. * वाजपेये क्लृप्तिमन्त्रवाचनं ज्ञानवत एव यजमानस्य । ३।८।८।१८. **मीको.** पृ. १४८७ ' क्लृप्त्यधिकरणम् ' इत्यत्र द्रष्टव्यम् । * वाजपेये कौशेयादौ वस्त्रान्तरे सत्यपि ' दर्भमयं परिदधाति ' इति दर्भमयादिवस्त्रं परिधेयम्, अपूर्वार्थत्वात् । **वि.** ६।८।७. * वाजपेये ऋतुपशूनां प्राजापत्यपशूनां च प्रत्येकमग्निगुप्रैषस्यावृत्तिः । ११।४।२०।५७–५९. ' हविष्कृतः अध्रिगो० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * वाजपेये ऋतुपशूनां प्राजापत्यपशूनां च सह उपक्रमः । तत्र ऋतुपशवः प्रातःसवन आलभ्यन्ते, प्राजापत्यपशूनां तु प्रातःसवने पर्यग्निकरणान्तमेव अनुष्ठानं आलम्भस्तु माध्यंदिने ब्रह्मसामकाले । उभयपश्वर्थं प्रयाजाः सकृदेवानुष्ठीयन्ते । प्रयाजशेषेणाभिघारणं च ऋतुपशूनां निर्विघ्नमेव सिध्यति । प्राजापत्याभिघारणसिद्ध्यर्थं पात्रान्तरं संपाद्य तत्र शेषो धारयितव्य इति चेन्न, अभिघारणस्य शेषप्रतिपत्तित्वात् प्राजापत्यपशुषु तल्लोप एव । **वि.** ४।१। १४. * वाजपेये खादिर एव यूपः । १०।७।१६।५१ –५७. * वाजपेये खादिरं नियच्छन् ( यूपं ) अन्यत्र विकल्पमनुवदति ' बैल्वो वा खादिरो वा ' । **भा.** १२।३।४।१४. * वाजपेये चयनं नास्ति ' अन्यत्र साद्यस्केभ्यो वाजपेयात् षोडशिनः सारस्वताच्च सत्रात् ' इति **सत्याषाढः** । ' चिन्वीत वाजपेयेऽग्निम् ' इति **बौधायनः** । ' न चिन्वीत ' इति **शालीकिः** । ' केचिदत्रापीच्छन्ति ' इति छन्दोगमताच्च चयनं

कार्यम् । **सत्याश्रौ.** प्रयोगचन्द्रिका. १३।१।१. * वाजपेये नीवारेषु व्रीहिधर्माः प्रोक्षणादयो भवन्ति। **भा.** ९।२।१२। ४०. * वाजपेये नैवारचरुनीवारेषु प्रोक्षणावघातादयः कर्तव्याः । **वि.** ९।२।१२, * वाजपेये प्रयोगक्रमः— तृतीयसवने प्रथममार्भवः पवमानः। ततो वैश्वदेवग्रहपर्यन्ताः शस्त्रवन्तः सोमाः। ततः अशस्त्रिषु अवशिष्टेषु सोमग्रहेषु प्रचीर्णेषु अग्निष्टोमसाम्नः ऊर्ध्वं उक्थ्यादयः सोमविकाराः इति । ११।३।१५, * वाजपेये प्राजापत्याः चिरं क्रतुपशुभिः सहोपक्रान्ता अपि पर्यग्निकरणोत्तरं पशवः विलम्ब्य ब्रह्मसामकाले आलभ्यन्ते। क्रतुपशवस्तु प्रातः-सवने एवालभ्यन्ते । ततः 'दैव्याः शमितार०' इत्याद्यध्रिगुप्रैष आवर्तनीयः न तु तन्त्रम् । ११। ४।२१. * वाजपेये प्राजापत्यान् प्रकृत्य 'पर्यग्नि-कृतान् उत्सृजते, ब्रह्मसाम्न्यालभते' इत्यत्र यूपादुन्मोचनादिप्राणवियोगान्तव्यापारस्य एकपदार्थत्वात् संज्ञपन-करणकभावनायाः सेतिकर्तव्यताकाया एव आलम्भविधिना उत्कर्षात् उत्सृजतिः उत्तरव्यापारोपरममात्रं अनुवदति । **संकर्ष.** १।१।४. * वाजपेये प्राजापत्यानां पशूनामेक-प्रदानत्वं एककालत्वात् एकदेवताकत्वाच्च। **भा.** ११।२।५। २४. * वाजपेये प्राजापत्यानां पशूनां ब्रह्मसामकाले आल-म्भमात्रोत्कर्षविधानम् । ११।२।१२।५१–५३. **मीको.** पृ. २८४५ 'प्राजापत्यानां पशूनां ब्रह्मसामकाले आल-म्भोत्कर्षमात्रम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * वाजपेये प्राजापत्यानां पशूनां वसाहोमे एको याज्यार्धर्चान्तः । **भा.** ११।२।५।२४. * वाजपेये प्राजापत्येषु उपाकरणा-दिधर्माणां पदार्थानुसमयः। **वि.** ५।२।१. * वाजपेये प्राजापत्येषु पशुषु कुम्भी तन्त्रम्। **भा.** ११।४।११।३९, * वाजपेये प्राजापत्यपशूनां वसाहोमः तन्त्रम् । ११।२। ५।२४. * वाजपेये प्राजापत्यपशूनां साहित्यमवगतं 'सप्तदश प्राजापत्यान् पशूनालभते' इति 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति' इति च । **वि.** ५।२।१. * वाजपेये प्राजापत्यपशुषु अङ्गादिश्रपणार्थं कुम्भीशूल-वपाश्रपणीनां तन्त्रम्। **भा.** ११।४।८।३०. * वाजपेये प्राजापत्यपशुषु अध्रिगुप्रैषस्य आवृत्तिः। **वि.** ११।४।२०, * वाजपेये प्राजापत्यपशुषु अभिघारणार्थं प्रयाजशेष-धारणतत्पात्रे न कर्तव्ये अभिघारणं च प्रतिपत्तिः । ४।१।१४.

**☸ वाजपेये प्राजापत्यपशुषु दैवतावदानादिना अनुसमयः ॥**

**पशुगणे तस्यतस्यापवर्जयेत् पश्वेकत्वात् । ५।२। ६।१०॥**

**भाष्यम्**— वाजपेये प्राजापत्याः पशवः । तेषु संदेहः किमेकैकस्य पशोर्दैवतान्यवदाय ततः सौविष्टकृतानि, तत ऐडानि, अथ दैवतैर्दैवतानामनुसमयः, सौविष्टकृतैः सौविष्टकृतानाम्, ऐडैरैडानामिति । किं तावत्प्राप्तम् ? एकैकस्य कृत्स्नान्यवदाय ततो होतव्यम् । प्रकृतौ वचना-देतत् कृतम्, प्राजापत्येष्वपि चोदकेनैव प्राप्नोति ।

**टुप्**— यद्यपि सांनाय्ये पदार्थावयवोऽवदानम्, तथापि पशाववदानं विधीयते। कथम् ? प्रतिप्रस्थाता, अवद्यतिः, दक्षिणो देशः, प्लक्षशाखाऽऽधारः अतः इति सर्वविशेषणविशिष्टमवदानं विधीयते, विधीयते चेत्प-दार्थः । अथवा, अवदाने गृहीतेऽनन्तरमेव होमे प्राप्ते 'न तावत्येव होतव्यमथ सौविष्टकृतान्यवद्यति' इति वचनेन पदार्थान्तरं विधीयते । अतः प्रकृतौ पदार्थावयवौ एतौ । इह वचनात्तावेव पदार्थौ संजातौ । प्रकृतौ दैवतान्यवदाय अनन्तरं सौविष्टकृतान्यवत्तानि । इहापि तथैव स्यात्, पश्वेकत्वात् ।

**दैवतैर्वैककर्म्यात् । ११ ॥**

**भाष्यम्**--नैतदेवम्। दैवतैः दैवतानाम्, सौविष्ट-कृतैः सौविष्टकृतानाम्, ऐडैः ऐडानामिति । कस्मात् ? ऐककर्म्यात्। एवं सहकृतं भवति। यच्च वचनात् प्रकृतौ कृत्स्नावदानमिति । 'दैवतान्यवदाय न तावत्येव होत-व्यम्, सौविष्टकृतान्यवदेयानि । सौविष्टकृतान्यवदाय न तावत्येव होतव्यम्, ऐडान्यवदेयानि' इति प्रकृतौ श्रूयते। तदिह दैवतैर्दैवतानामनुसमयं कुर्वन् नैव प्राकृतं धर्मं बाधेत । दैवतान्यवदाय नैव जुहोति, सौविष्टकृतान्यवद्य-तीति । अथ सौविष्टकृतान्यवदाय नैव जुहोति, ऐडान्य-वद्यतीति । तस्मात् पदार्थमात्रेणानुसमय इति ।

**टुप्**— प्रयोगवचनस्य साहित्यानुग्रहादेकैकस्य दैवतै-रनुसमयः। प्रकृतौ 'दैवतान्यवदाय न तावत्येव होतव्यम्'



इत्येतावद्विवक्षितम्। इहापि द्वितीयस्य पशोरवदानं गृह्णन् तत्समर्थयामासैव। अर्थाच्च आनन्तर्यं प्रकृतौ वृत्तम्।

**मन्त्रस्य चार्थवत्त्वात् । १२ ॥**

**भाष्यम्**— एवं मनोतामन्त्रस्तन्त्रं भविष्यति । इतरथा पर्यायेणैव स्यात् । तस्माद्दैवतैर्दैवतानाम्, सौविष्टकृतैः सौविष्टकृतानाम्, ऐडैरैडानामिति ।

**शा**-- '**प्रकृतौ दैवतादीनामानन्तर्यमिहापि तत् । एकैकस्य पशोः कार्यः काण्डानुसमय-स्ततः ॥**' यद्येकस्य पशोः दैवतान्यवदाय अपरस्य दैवतान्यवदीयेरन्, ततः प्रथमस्य पशोः यत् दैवतसौविष्ट-कृतानन्तर्यं चोदकप्राप्तम्, तत् बाध्येत। तस्मात् काण्डा-नुसमयः। नैवम् । '**पश्वैक्यात् प्रकृतावर्थादान-न्तर्यमनुष्ठितम्। इह त्वनेकसाहित्यात् साजात्यात्तु समीयते ॥**' साहित्यसंपत्तये समानजातीयैः समान-जातीयानामनुसमयो दैवतैः दैवतानां इत्येवं कर्तव्यम् ।

**सोम**-- पूर्ववदिहापि वचनात् काण्डानुसमयः इति प्रत्यवस्थानात् ( दृष्टान्त- ) **संगतिः । सूत्रार्थस्तु**- पशुगणे तस्यतस्य पशोः दैवतादित्रिकमपवर्जयेत् प्रति-व्यक्ति पश्वेकत्वात् यथाप्रकृति एकैकस्य त्रिकस्य प्राप्तेरिति।

**वि**-- 'किं दैवाद्यवदानेषु काण्डानुसमयोऽथवा । , एकानुसमयोऽस्त्वाद्यः प्रकृतौ तस्य दर्शनात् ॥, पश्वैक्यात् प्रकृतौ सोऽस्तु विकृतौ तद्बहुत्वतः। सजातीयपदार्था-नुसमयोऽनन्तरत्वतः ॥'

**भाट्ट**— प्रकृतौ सांनाय्येऽवदानादिप्रदानान्तस्य एक-पदार्थत्वादतिदेशेन दैक्षेऽपि तथैव प्राप्तौ 'दैवतान्यवदाय न तावत्येव होतव्यं सौविष्टकृतान्यवद्यति, सौविष्टकृतान्यवदाय न तावत्येव होतव्यं ऐडान्यवद्यति' इति वचनेन क्रमा-न्यत्वविधायिना पदार्थभेदावगतिः । न ह्यसंबन्धिपदा-र्थान्तरव्यवधाने प्राकृतैकपदार्थता संपद्यते । अतश्चैक-देवत्ये पशुगणे प्राजापत्यन्यायेन दैवतावदानादिना प्रत्येकमनुसमयः । अन्ते च तन्त्रेण देवताहोमः । न च प्रकृतावेकस्य पशोर्दैवताद्यवदानत्रयमानन्तर्येण कृत-मितीहापि तथैव कार्यमिति **शङ्क्यम्**, प्राजापत्य-न्यायेनैव पश्वेकत्वस्य अङ्गत्वात् अव्यवधानानन्तर्यस्य प्रकृतावार्थिकत्वेन चोदकविरोधाभावात् । अत एव यत्र विभिन्नदेवताके पशुगणे चोदकविरोधस्तत्रावदानत्रयं होमं चैकस्य कृत्वा परस्याप्यवदानत्रयपूर्वकप्रदानान्तरं कार्यम्। स्विष्टकृदिडाभक्षणे तु तन्त्रेणैव । तत्रापि पदार्थानुसमये द्वितीयहोमस्यातिदेशप्राप्तैडावदानानन्तर्यबाधापत्तेः ।

वस्तुतस्तु असंबन्धिपदार्थान्तरव्यवधानेऽपि पश्चावत्त-होमसंपादकत्वेन दैवतावदानस्यापि प्रदानावयवत्वोपपत्ते-र्विभिन्नदेवताकस्थलेऽपि दैवतावदानादिप्रदानान्तेन अनु-समयः । एकदेवताके तु पदार्थावयवानामेवानुसमयः इति न कोऽपि विरोधः ।

**मण्डन**— 'हव्यावदानं युगपत् पशूनाम् ।'

**शंकर**— 'पशुष्ववत्ते साजात्यात् ।'

* वाजपेये प्राजापत्यपशुषु प्रधानार्थानि, स्विष्टकृद-र्थानि, इडाभक्षणार्थानि च इति त्रिविधान्यवदानानि अग्नीषोमीयात् चोदकप्राप्तानि । ते च त्रयः पदार्थाः पदार्थानुसमयेनैवानुष्ठातव्याः । न तु अवदानत्रयं एक-स्मिन् पशौ, पुनरवदानत्रयं द्वितीयपशौ इति काण्डानु-समयः। एवं सर्वत्र पशुगणे । **वि.** ५।२।६. * वाज-पेये प्राजापत्यपशुधर्माणां पदार्थानुसमयः। ५।२।१।१–३. **मीको.** पृ. २४३७ 'पदार्थानुसमयन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम्। * वाजपेये प्राजापत्यप्रचारः प्राकृ-तानां वैकृतानां च सर्वेषां सोमानां उपरिष्टात् । ११।३। १५।४८–५४. * वाजपेये प्राजापत्यवपानां प्रयाज-शेषाभिघारणं नास्ति। ४।१।१४।३३–३९. **मीको.** पृ. २७८५ 'प्रयाजशेषाभिघारणन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । * वाजपेये माहेन्द्रस्तोत्रोपाकरणसाधनतया विहितेन रथदुन्दुभिघोषेण प्राकृतदर्भमन्त्रयोर्बाधः । १०। ४।१।१-२ वर्णकं २. **मीको.** पृ. ३२८२ 'रथघोषा-धिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्। * वाजपेये 'यजुर्युक्तं रथमध्वर्यवे ददाति'। अनेन रथेन कस्या अपि अनिर्दिष्टोपदिष्टदक्षिणाया न बाधः। **वि.** १०।३। २०. * वाजपेये 'यजुर्युक्तं रथमध्वर्यवे ददाति, ऋग्भि-र्युक्तं होत्रे, सामभिर्युक्तमुद्गात्रे'। **भा.** १०।३।२१।७५. * वाजपेये यूपः सप्तदशारत्निः । **वि.** ३।१।९, * वाजपेये 'रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति' 'दुन्दुभिघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति'। तत्र रथेन

घोषेण च बर्हिषः तन्मन्त्रस्य च बाधः इति **पूर्वपक्षः**। बर्हिषस्तन्मन्त्रस्य च बाध एव परंतु घोषेणैवोभयोर्बाधः । घोषस्तु रथस्यैव दुन्दुभेरेव वा, नान्यस्य कस्यचित् घोषः इति सिद्धान्तः । १०।४।२ वर्णकं २, * वाजपेये विकृतिरूपः सप्तदशशरावश्चरुः श्रुतः । तत्र निर्वापे 'चतुरो मुष्टीन् निर्वपति' इति प्राकृतो मुष्टिः तच्चतुष्ट्वं च अस्ति इति **एकः पक्षः**। उभयं बाध्यं इति **द्वितीयः** । अन्यतरबाधः इति **तृतीयः**। धर्मस्य संख्याया एव लोपः इति **चतुर्थः**। मुष्टिरेव चरमश्रुतो बाध्यः, प्रथमश्रुता संख्या न बाध्या, चतुर्भिः कुडवादिभिः शरावपूरणं कर्तव्यं इति **सिद्धान्तः**। (सप्तदशत्वेन चतुष्ट्वस्य शरावेण च मुष्टेर्बाधः । शरावेणैव निर्वापः, निर्वापमन्त्रश्च तावत्कृत्वः आवर्तनीयः, सप्तदशकृत्वः इति **केवलानन्दस्य** भाति ) । १०।२।२८, * वाजपेये 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति'। ५।२।१. * वाजपेये श्रुतेन यजुर्युक्तरथेन अध्वर्योर्दास्यादिभागान्तरस्य समुच्चयः । १०।३।२१।७४-७५. **मीको.** पृ. ३१८५ 'यजुर्युक्ताधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्। * वाजपेये 'सप्तदश प्राजापत्यान् पशून् आलभते' इत्यत्र किं सप्तदश एतानि कर्माणि, अथ सप्तदशपशुगुणकं एकं कर्म इति संशये सप्तदश यागाः एते इति सिद्धान्तः। **भा.** २।२।७।२१. * वाजपेये 'सप्तदश प्राजापत्यान् पशूनालभते'। एतेन प्राकृतानामाग्नेयादिक्रतुपशूनां बाधः इति **पक्षः**, समुच्चयः इति **सिद्धान्तः। वि.** १०।४।४, * वाजपेये 'सप्तदश प्राजापत्यान् पशूनालभते' 'तान् पर्यग्निकृतानुत्सृजन्ति, ब्रह्मसाम्न्यालभते' । अत्र पर्यग्निकरणानन्तरं उत्सर्गः पशूनाम् (कर्मशेषनिषेधः इत्यर्थः) । ब्रह्मसामकाले च कर्मान्तरं विधीयते इति **पक्षः**। पर्यग्निकरणानन्तरं उत्सर्गो नाम कर्मोपरमः, ब्रह्मसामकाले तु तेषामेव पशूनामनुष्ठानमिति सिद्धान्तः । ११।२।१२. * वाजपेये 'सप्तदश प्राजापत्यान् पशूनालभते'। तेषु पशुषु चोदकप्राप्ताः प्रोक्षणादयो धर्माः। तत्र प्रथमः पदार्थः यतः कुतश्चिदारब्धव्यः । द्वितीयादिषु भवति संशयः। किं तत एव द्वितीयोऽपि पदार्थ आरब्धव्यः उत द्वितीयादिषु अनियम इति । निर्णयस्तु यतः पूर्वः आरब्धः तत एव द्वितीयादयोऽपि पदार्था आरब्धव्या इति । **भा.** ५।१।५।८-१२. **मीको.** पृ. २८६८ 'प्रावृत्तिकक्रमन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । * वाजपेये 'सप्तदशारत्निर्वाजपेयस्य **यूपो** भवति' इति श्रूयते। इयं सप्तदशारत्निता वाजपेयाङ्गभूतपशोरङ्गे यूपे निविशते न तु ऊर्ध्वपात्रे षोडशिनि। **भा.** ३।१।९।१८. * वाजपेये सप्तदशारत्नित्वं साक्षादसंभवात् तदङ्गभूतयूपद्वारा आनर्थक्यतदङ्गन्यायेन वाजपेयाङ्गतामश्नुते। 'वाजपेयस्य' इति षष्ठ्या अङ्गद्वाराऽपि उपकारकत्वेऽपि संभवात्। **कु.** २।२।१२। २७. * वाजपेये सप्तदशप्राजापत्यपशूनां एकैव देवता प्रजापतिः । तत्रैव ऐकादशिनेषु पशुषु देवताभेदः । तथापि उभयत्र कुम्भ्यादीनां तन्त्रम्। **वि.** ११।४।९, * वाजपेये सप्तदशप्राजापत्यपशुषु एकस्मिन् **पशौ** उपकरणनियोजनादीन् सर्वान् संस्काराननुष्ठाय द्वितीये **पशौ** सर्वे कर्तव्याः, एवं तृतीये इत्यादि। सोऽयं काण्डानुसमयः इति **पूर्वः पक्षः**। पदार्थानुसमय एव कर्तव्यः इति सिद्धान्तः । पङ्क्तिपरिवेषणवत् पदार्थानुसमयः । तथा च एकं संस्कारं सर्वेषु विधाय द्वितीयः संस्कारः सर्वेषु, एवं तृतीयः सर्वेषु कर्तव्यः इत्यादि । 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति' इति साहित्यश्रवणात्। **वि.** ५।२।१, वाजपेये सप्तदशप्राजापत्यपशुषु कुम्भ्याः, हृदयशूलस्य, वपाश्रपण्याश्च भेदः स्यादिति पक्षः। पश्वङ्गानां बहुत्वेऽपि प्रौढकुम्भ्यादेर्ग्रहणेन मांसादिश्रपणस्य शक्यत्वात् तन्त्रं इति सिद्धान्तः। ११।४।८, * वाजपेये सप्तदशप्राजापत्यप्रचारः आर्भवपवमानकाले इति **एकः** पक्षः। शस्त्रिणां वैश्वदेवग्रहान्तानां सोमानामुपरि इति **द्वितीयः** पक्षः । प्राकृतसोमानामुपरिष्टात्-यज्ञायज्ञीयसाम्नः उपरिष्टात् इति **तृतीयः** पक्षः । प्राकृतानां वैकृतानां च सर्वेषां सोमानामुपरिष्टात् प्राजापत्यपशुप्रचारः इति **सिद्धान्तः**। ११।३।१५, * वाजपेये सप्तदशरथदाने कस्य को रथः इति चिन्तायां यजमानेच्छैव नियामिका । १०।३।२०. * वाजपेये सप्तदशशरावश्चरुः श्रुतः। तत्र निर्वापे मुष्टे-



र्बाधः, चतुःसंख्यायास्तु न बाधः। तथा च चतुर्भिः कुडवादिभिः शरावं पूरयित्वा सप्तदशशरावात्मको निर्वापः कार्यः। **वि.** १०।२।२८। वस्तुतस्तु शरावपूरणपर्यन्तं मुष्टिचतुष्टयावृत्तिः कर्तव्या, किंवा यावद्भिर्मुष्टिभिः शरावपूरणं तावन्तो मुष्टयो ग्राह्याः। **भाट्ट.** (मुष्टिः शरावेण बाध्यते, चतुष्ट्वं च सप्तदशत्वेन बाध्यते, शरावेणैव सप्तदशकृत्वो निर्वापः निर्वापमन्त्रावृत्तिः सप्तदशवारं इति **केवलानन्दो** मन्यते, अन्यथा शरावो व्यर्थ एव स्यात् )। * वाजपेये सप्तदशशरावे **चरौ** मुष्टिलेपेन चतुःसंख्यानुग्रहः कर्तव्यः । १०।२।२८।६५-६८. 'संख्यामुष्टिन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम्। * वाजपेये सप्तदशसंख्याकानां प्राजापत्यपशूनां या वपाः तासां भेदेनानुष्ठानं इति **पक्षः**। पाकः प्रदानं च सहैव कर्तव्यं इति वपा(सा)होमोऽपि सहैव, तथा च तन्त्रं इति सिद्धान्तः । **वि.** ११।२।५.

### ☙ वाजपेये सर्वसोमोत्तरं प्राजापत्याङ्गप्रचारः॥

**उपरिष्टात् सोमानां प्राजापत्यैश्चरन्तीति सर्वेषामविशेषादवाच्यो हि प्रकृतिकालः। ११।३।१५। ४८॥**

**भाष्यम्**-- वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते 'उपरिष्टात् सोमानां प्राजापत्यैश्चरन्ति' इति । तत्र विचार्यते किमार्भवकाले प्रचरितव्यम्, उत शस्त्रवतां सोमानामुपरिष्टात्, उत विकारस्थाने, अथवा सर्वसोमानामुपरिष्टात् इति। किं प्राप्तम्? आर्भवकाले इति। कुतः? प्रकृतौ आर्भवकाले प्रचारो वृत्तः। प्रकृतिवत् इहापि तत्रैव कर्तव्यः । एवं च अङ्गविपर्यासो न कृतो भवति। यदि सर्वसोमानामुपरिष्टात् प्रचारः क्रियेत, ततः 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इति 'प्रहृत्य परिधीन् हारियोजनम्' इति एतदुभयमपि विपर्यस्येत, नाग्निमारुतादूर्ध्वं अनुयाजैश्चर्येत, हुत्वा च हारियोजनं परिधयः प्रहियेरन्। सोऽयं अङ्गानां विपर्यासो विना वचनेन क्रियेत। अथ तु आर्भवकाले प्रचारः, ततो नैव दोषो भवति। **एवं प्राप्ते, उच्यते**। 'उपरिष्टात् सोमानां प्राजापत्यैश्चरन्ति' इत्युक्ते सर्वसोमानामुपरिष्टात् प्रचर्येत। कुतः? अविशेषात्। सोमानां इत्युक्ते सर्वसोमानां (इति) अविशेषवचनात् प्रतीयते। यत्तु आर्भवकालः प्रकृतितः प्राप्यते इति, अवाच्यो हि प्रकृतिकालः, चोदकेनैव प्राप्तः। तदर्थो हि विधिः कृतकरः अनर्थकः स्यात्। तस्मात् सर्वसोमानामुपरिष्टात् प्रचारः।

**टुप्**-- यदि आर्भवकाले प्रचारः क्रियेत अप्रवृत्तिविशेषकरं वाक्यं स्यात्। ननु (चोदकप्राप्तकालबाधेन 'तीर्थे वै प्रातःसवनं, यत् प्रातःसवने पशव आलभ्यन्ते तीर्थे एवैतानालभते' इति, 'तान् पर्यग्निकृतानुत्सृजन्ति ब्रह्मसाम्न्यालभते' इति च) वचनेन प्रातःसवने माध्यंदिनसवने वा साकल्येन कर्तव्याः प्राप्नुवन्ति। तेन तार्तीयसवनिकार्भवकाले अङ्गप्रचारविधानार्थं अर्थवद् वचनम्। (तस्मिंश्च सति वपाहोमानां पूर्वयोः सवनयोः विकल्पो न भविष्यति। अङ्गप्रचारस्तु आर्भवकाले) **उच्यते**। प्रातःसवने माध्यंदिने वा सवने ये एते (भवदुक्ते) वाक्ये ते संस्कारवाक्ये, आलम्भमात्रश्रवणात्। अङ्गप्रचारस्तु आर्भवकाले एव, (चोदकप्राप्ते कर्तव्यः) नान्यस्मिन् (काले)। तस्मात् (वचनार्थवत्त्वात्, ननु शस्त्रवतां सोमानामुपरि आवापस्थाने किमिति न भवति इत्यत आह-) अविशेषात् सर्वसोमानामूर्ध्वम्।

**अङ्गविपर्यासो विना वचनादिति चेत्। ४९॥**

**भाष्यम्**-- अथ यदुक्तं एवं सति अङ्गविपर्यासो विना वचनेन कुतो भविष्यतीति। तस्य कः परिहार इत्याभाषान्तं सूत्रम्।

**टुप्**-- ननु 'आग्निमारुतादूर्ध्वम्, प्रहृत्य परिधीन्' इति च क्रमविपर्यासः प्राप्नोतीत्युक्तम्।

**उत्कर्षः संयोगात् कालमात्रमितरत्र। ५०॥**

**भाष्यम्** -- नैष दोषो यदुक्तमङ्गविपर्यास इति। कथं कृत्वा? पशुप्रचारे तावदुत्कृष्यमाणे अनुयाजानां परिधिप्रहरणस्य चोत्कर्षो न्याय्यः, संयोगात्। तानि हि पशुप्रचारेण क्रमतः संयुक्तानि। न च आग्निमारुतस्य अनुयाजैः सह, हारियोजनस्य वा परिधिप्रहरणेन, क्रमो विवक्षितः। न हि परिधिप्रहरणं हारियोजनस्याङ्गम्, हारियोजनो वा परिधिप्रहरणस्य। उभौ वा कस्यचिदेकस्य प्रधानस्य। एवं आग्निमारुतमनुयाजाश्च यदि पर-

स्परस्याङ्गभूतानि भवेयुः, एकस्य वा प्रधानस्य, तत एतेन क्रमेण उपकुर्वन्तीति विवक्षितः क्रमः स्यात् । अथ पुनः पशोरङ्गमनुयाजाः, आग्निमारुतं सोमस्य, तथा परिधिप्रहरणं पशोरङ्गम्, हारियोजनः सोमेज्या । तेषां क्रमो निष्प्रयोजनः । तस्मादविवक्षितः । कालमात्रमितरत्र । आग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीति, प्रहृत्य परिधीन् जुहोति हारियोजनमिति, एतस्मिन् काले इति लक्षणमाग्निमारुतं परिधिप्रहरणं च । अनपेतश्च लक्षणापाये कालः । यथा अग्निहोत्रवेलायामागन्तव्यमिति । यत्र अग्निहोत्रं नास्ति, तत्राप्यनपेता वेला । नन्वेवं लक्षणा भवति । नहि । काल एवेह श्रुत्यर्थः । क्त्वा तावत् पूर्वकाले एव स्मर्यते । ऊर्ध्वशब्दोऽपि देशं कालं वा ब्रूयात् । देशस्यासंभवात् कालार्थो विज्ञायते ।

**टुप्**-- उच्यते । आग्निमारुतं सोमाङ्गम् । अनुयाजाः पश्वङ्गम् । अनयोरङ्गाङ्गिभावस्तावन्नास्ति, येन आग्निमारुतं कृत्वा अनुयाजाः क्रियमाणाः सगुणा भवेयुः । न चैते एकेन प्रयोगवचनेन गृह्यन्ते, येन आग्निमारुतं कृत्वाऽनुयाजाः क्रियेरन् । (अतः क्रमलोपेऽपि न दोषः । किं तर्हि 'आग्निमारुतादूर्ध्वं' इत्यनेन क्रियते ? अत आह- ) प्रकृतौ परिध्यग्निसंमार्जनक्षणोत्तरकालं अनुयाजाः द्वितीये क्षणे प्राप्नुवन्ति । ( तदेवं ) ईदृशे चोदकेन प्राप्ते ( सति ) इह द्वितीये क्षणे अनुयाजा न कर्तव्याः, ( किंतु ) क्षणमात्रं ( आग्निमारुतकालं यावत् ) स्थित्वा कर्तव्याः ( इत्येककालविधानेन ) चोदकशेष एवेदं वचनम्, न तु ( आग्निमारुतानूयाजयोः क्रमविधानार्थं सत् ) चोदकं बाधते । द्वितीयेऽप्येवमेव ( 'प्रहृत्य परिधीन्' इति वाक्ये कालविधानं वक्तव्यम् ) । ननु एवं लक्षणा भवति ( शङ्काभाष्यानुवादोऽयम् ) । नहि । ( निराकरणभाष्यानुभाषणमिदम् । तत्र कारणभाष्योक्तं अर्थतोऽनुभाषते- ) क्त्वाशब्दः कालवचन एव स्मर्यते । स तावत् परिधिप्रहरणस्य पूर्वकालतायां श्रुत्या वर्तते । तद्वशादेव परिधिप्रहरणं कृत्वा तत उत्तरकालं हारियोजनः कर्तव्यः ( इति गम्यते । अतः ) सर्वाण्येव ( पदानि ) श्रुतिवृत्तानि । ( तथा ) आग्निमारुतशब्दोऽपि स्वार्थमेव प्रतिपादयति, ऊर्ध्वशब्दोऽपि ( श्रुत्यैव कालमाह ) । न तु किंचित् पदं लक्षणावृत्तम् । ( क तर्हि लक्षणा भवन्मते, अत आह- ) ईदृशे तु ( विषये ) लक्षणा भवति, यथा 'गौर्वाहीकः' इति गोशब्दः वाहीके ( प्रयुज्यमानः गोसंबन्धि ) तिष्ठन्मूत्रभक्षणादि यत्तल्लक्षयति । यथा वा आकृतिः व्यक्तिलक्षणार्था । एवमत्र न कांचित् लक्षणां पश्यामः ।

( एवं भाष्यमनुभाष्य चोदयति- ) एतेन व्याख्यातेन 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति (अत्र) यो दोष उक्तः ( अङ्गप्रयोजनसंबन्धं वदता ) सिद्धान्तवादिना पूर्वपक्षवादिनः ( 'कालविधिमिच्छतो लक्षणा स्यात्' इति ४।३।१२।२९ ), स नास्ति, सर्वेषां श्रुतिवृत्तत्वात् । ( इदं 'अग्निं चित्वा' इत्यादावपि ) उच्यते । नैतदेवम् । अत्रापि हि ( प्रहृत्य परिधीन् इत्यत्रापि ) लक्षणा । तेष्वपि ( वाजपेयेनेष्ट्वा इत्यादिष्वपि लक्षणा काचिदस्ति ) । कथम् ? पदार्थः उच्चार्यमाणः ( अग्निमारुतादिः, तस्य ) स्वरूपं वा कर्तव्यं ब्रवीति । अन्यत्र वा कर्तव्यम्, तत्र वा कर्तव्यमिति । इह तु स्वरूपं न कर्तव्यम्, तस्य ( वचनान्तरेण ) निर्ज्ञातत्वात् । ( तथा ) अन्यत्रापि न ( स्वरूपं कर्तव्यं अनूयाजाद्यङ्गत्वानभ्युपगमात् ) तत्रापि ( स्वरूपेऽपि ) न किंचित् ( कर्तव्यम्, अनूयाजानां एतदङ्गत्वाभावात् ) । किमर्थं तर्हि उच्चारणम् ? परार्थम् । तस्य ( अनूयाजस्य ) यः कालः, तं लक्षयितुम् । ( एवं सर्वत्र लक्षणा वाजपेयादिष्वपि द्रष्टव्या । स्वार्थस्य वाक्यार्थान्वयाभावात् परविशेषणत्वेन उच्चारणात् लक्षणेत्युक्तम् । परं तु 'गङ्गायां घोषः' इत्यादिवत् नाश्रुतः शब्दः किंतु श्रुत एव 'क्त्वा'शब्दः कालवचनः इति नातीवलक्षणादोष इति ज्ञेयम् ) ।

**प्रकृतिकालाऽऽसत्तेः शस्त्रवतामिति चेत् ।५१॥**

**भाष्यम्**— इति चेत्पश्यसि सर्वसोमानामुपरिष्टात्प्रचारः इति, नैतद्युक्तम् । शस्त्रवतां सोमानामुपरिष्टात् प्रचारो युक्तः । कुतः ? प्रकृतिकालासत्तेः । एवं प्राकृतस्य कालस्य आसत्तौ कृतः प्रचारो भविष्यति । अङ्गविपर्यासश्च



अकस्मान्न कृतो भविष्यति । अथ कतमोऽसौ कालः । तार्तीयसवनिकस्य वैश्वदेवस्य यदूर्ध्वम् ।

**न, श्रुतिप्रतिषेधात् । ५२ ॥**

**भाष्यम्**— एवं सति उपरिष्टात्सोमानामित्यविशेषश्रुतिर्विप्रतिषिध्यते । केषांचित् सोमानामधस्तादयं प्रचारः स्यात् । न च आसत्त्या प्राकृतः कालो लभ्यते ।

**विकारस्थान इति चेत् । ५३ ॥**

**भाष्यम्**-- इति चेत्पश्यसि शस्त्रवतामुपरि प्रचारः अयुक्त इति, विकारस्थाने भवतु । कतमत् पुनर्विकारस्थानम् । उक्थ्याद्याः संस्थाः अग्निष्टोमसंस्थाया विकाराः । तासां यत् स्थानमग्निष्टोमप्रचारादूर्ध्वम्, तत्र प्रचारो भवतु । तत ऊर्ध्वं सर्वेषामागन्तूनां प्रचाराणां स्थानम् । अयमपि च आगन्तुः । तस्मादयमपि तत्रैव भवति ।

**न, चोदनापृथक्त्वात् । ५४ ॥**

**भाष्यम्**-- नैतदेवम् । कस्मात् ? चोदनापृथक्त्वात्, कर्मपृथक्त्वादित्यर्थः । पृथगेते कर्मणी, यच्च सौमिकम्, यच्च पाशुकम् । सौमिकानां प्रचाराणामेतत्स्थानम्, न पाशुकानाम् । तस्मादेतस्य वचनात् सर्वसोमानामुपरिष्टात् स्थानम् ।

**शा**-- ( प्रयोजनम् ) आर्भवप्रचारकाले क्रतुपशूनां प्राजापत्यानां च एककालः प्रचारः, इति 'मनोतायै हविषोऽवदीयमानस्यानुब्रूहि' इति मनोतासूक्तानुवचनं तन्त्रम् । सिद्धान्ते तु कालभेदादावापः इति ( अध्याय-) संगतिः ।

**सोम**-- पात्रवत् मनोताऽपि तन्त्रं इत्युत्थितेः अवान्तरसंगतिः । सर्वशस्त्रवतां सोमानां इति सामान्योक्तावपि तृतीयसवनकर्तव्यवैश्वदेवशस्त्रानन्तरभाविसोमा एव विवक्षिताः ।

**वि**-- 'प्राजापत्यप्रचारः किमार्भवे शस्त्रिसोमतः ।, ऊर्ध्वं वा विकृतौ वोत परस्तात्सर्वसोमतः ॥, आर्भवे चोदकादुक्त्यासत्तिभ्यां तदनन्तरः । श्रुतिबाधस्तदा तस्मात् तृतीयो विकृतिस्त्वतः ॥, पशवो नहि सोमस्य विकारा अविशेषतः । उक्तत्वात् सर्वसोमानामुपरिष्टात् प्रचर्यते ॥'

**भाट्ट**— वाजपेये प्राजापत्यान् विधाय 'उपरिष्टात्सोमानां प्राजापत्यैश्चरन्ति' इति श्रुतम् । तत्रापि सवनीयतः ( सामान्यतः ) प्रकृतिवच्छन्दप्रापितार्भवकालस्य अबाधाय तस्मिन्नेव काले प्राजापत्याङ्गहविषां करणम् । उपदेशस्य कतिपयसोमोत्तरत्वेनाप्युपपत्तेः । न चैवमुपदेशवैयर्थ्यम्, अपूर्वतापरत्वेन चरितार्थत्वात्, प्रकृतिप्राप्तप्रचारविप्रकर्षबाधेन प्राप्तस्य 'ब्रह्मसाम्न्यालभते' इत्यनेन ब्रह्मसामकाले सकलप्राजापत्यप्रचारस्य बाधपूर्वकं पुनःप्रचारविप्रकर्षप्रतिप्रसवफलकत्वेन सार्थक्याच्च । एवं च ब्रह्मसामकालः प्राजापत्यवपायागे एव पर्यवस्यति । अतश्चार्भवकाले एव तद्धृदयादिप्रचारः । एवं च 'आग्निमारुतादूर्ध्वमनूयाजैश्चरन्ति' इति 'प्रहृत्य परिधीन् हारियोजनं जुहोति' इति च प्रकृतिप्राप्तः क्रमः कालो वा यथाश्रुत एव संपद्यते । इति **प्रथमः कल्पः ।** **द्वितीयस्तु** चोदकेनैव तत्प्राप्तिसंभवे 'उपरिष्टात्सोमानाम्' इत्यस्य वैयर्थ्यापत्तिः । न चापूर्वताऽर्थत्वम्, सोमोत्तरकालतारूपगुणविधानार्थत्वेनोपपत्तौ तत्कल्पनाऽयोगात् । न च प्रचारविप्रकर्षप्रतिप्रसवार्थत्वम्, प्रातःसवनिकस्यालम्भादिवपाप्रचारान्तस्यैव ब्रह्मसामकाले आलम्भोत्कर्षेणोत्कृष्टतया अङ्गहविषां तदानीमप्राप्तेः । अतः प्राकृतार्भवकालबाधेन सोमोत्तरताविधिः । तत्रापि शस्त्रवतां सोमानामुपरिष्टात्, प्राकृतकालप्रत्यासत्तेः । **तृतीयस्तु**- न प्रत्यासत्तिमात्रेण चोदकानुग्रहः । तेनाग्निष्टोमप्रचारादूर्ध्वम्, तस्यागन्तुकस्थानत्वात् ।

**सिद्धान्तस्तु**, तत् उक्थ्यादीनां सोमविकाराणां स्थानम्, न तु पशुविकाराणाम्, अतो विशेषात् सर्वसोमान्ते प्राजापत्याङ्गप्रचारः । यत्तु आग्निमारुतादूर्ध्वत्वं अनूयाजादीनाम्, तत् प्राजापत्योत्कर्षेण अनूयाजोत्कर्षेऽपि आग्निमारुतोत्तरत्वस्यानपायादकिञ्चित्करम् । नह्ययं क्रमविधिः, येनाव्यवहितोत्तरत्वं लभ्येत, भिन्नप्रयोगविधिपरिगृहीतत्वात्तु कालविधिरेवायम् । एवं हारियोजने परिधिप्रहरणात् पूर्वं क्रियमाणेऽपि तदुपलक्षितकालस्य सत्त्वान्न कश्चिद्विरोधः । अतः परिधिप्रहरणमपि अनूयाजोत्कर्षेणोत्कृष्यते एव । अत्र च पूर्वपक्षे क्रतुपशुभिः सह प्राजापत्यहविषां प्रचारात् 'शृतं हविः शमितः' इत्यादीनां तन्त्रता । सिद्धान्ते तु आवृत्तिरित्यध्यायसंगतिः ।

**पार्थसारथिस्तु** मनोतामन्त्रस्य पूर्वपक्षे तन्त्रतेत्याह । तत्तु विभिन्नदेवताकस्थले एकस्य पशोर्दैवतशोविष्टकृतैडावदानत्रयपूर्वकं होमं कृत्वा अपरस्यापि कार्यमिति स्वयमेव पञ्चमे ( ५।२।५ ) व्यवस्थापितत्वात् कालभेदेन अवदानकालीनमनोतामन्त्रस्यावृत्तेः पूर्वपक्षे अपि समानत्वादुपेक्षितम् ।

**मण्डन**— 'प्राजापत्याः सर्वसोमोपरिष्टात् ।'

**शंकर**— 'कृत्स्नसोमोर्ध्वाः पशवः ।'

* वाजपेये सोमग्रहाः सुराग्रहाश्च । **वि.** १०।४।३. * वाजपेये हिरण्यमालित्वं सर्वेषामृत्विजाम्, नाध्वर्योरेव । ३।८।४।१२. **मीको.** पृ. ३३८९ 'लोहितोष्णीषाधिकरणम्' इत्यत्र द्रष्टव्यम् । * 'एतस्य खादिर एव कार्यः' यूपः इति **वाजपेये** । **भा.** १२।३।४।१४.

* **वाजपेयाङ्गं** वृहस्पतिसवः । **भा.** ४।३।१२।२९, १०।२।१२।३९.

* **वाजपेयाङ्गत्वेऽपि** बृहस्पतिसवस्य स्वकाल- ( वसन्त- ) कर्तव्यता । **भा.** ४।३।१७।४०.

**वाजपेयाधिकरणम्** । वाजपेयशब्दः कर्मनामधेयम् ।

**नामधेये गुणश्रुतेः स्याद्विधानमिति चेत् । १।४।५।६ ॥**

**भाष्यम्**— 'वाजपेयेन स्वाराज्यकामो यजेत' इति श्रूयते । तत्र किं गुणविधिः कर्मनामधेयमिति संदेहः । एवं चेत् संदेहः, दृश्यते गुणविधिः । न संदेहः, श्रूयते हि गुणः । सोऽवगम्यमानो न शक्यो नास्तीति वदितुम् । तस्मात् गुणविधिः ।

**वा**— तन्त्रसंबन्धेन आख्यातपदस्य धात्वर्थः फलं प्रति करणं गुणं च प्रति साध्यो भवन्न विरोत्स्यते । तेनोद्भिदा यागं यागेन च पशून् भावयेदिति युगपद्विधिव्यापाराद्विनैव मत्वर्थलक्षणया संबन्धसिद्धिः । तथा आज्यादिपदस्य तन्त्रेण स्तोत्रसंख्यादियोगः । तस्मात् सर्वत्र त्वत्परिकल्पिते नामधेये गुणश्रुतेः प्रसिद्ध्यादिभिर्गुणप्रत्ययानपगमात्तद्विधानमेव भवतु अलं नामधेयत्वेनेति यथासंभवं सर्वाधिकरणाक्षेपेण इदमारभ्यते । तत्रेदमपि वाक्यं शुद्धं भविष्यतीति वाजपेयोपन्यासः । सर्वाण्येव त्विहोदाहर्तव्यानि । आह च–'**करणेषूपदिष्टेषु याऽर्थात्साध्यत्वकल्पना । तस्यां गुणविधानेन नास्ति मत्वर्थलक्षणा ॥**'

**तुल्यत्वात् क्रिययोर्न । ७ ॥**

**भाष्यम्**— नैतदेवम्, तुल्ये हीमे क्रिये स्याताम् । या च वाजपेयक्रिया या च दर्शपूर्णमासक्रिया, उभयत्र दार्शपौर्णमासिको विध्यन्तः स्यात् । तथा च दीक्षाणामुपसदां च दर्शनं नावकल्प्येत 'सप्तदशदीक्षो वाजपेयः' इति, 'सप्तदशोपसत्को वाजपेयः' इति ।

अथवा तुल्यत्वात् क्रिययोर्नेति । यदि न गुणविधिस्ततस्तुल्यैषा वाजपेयक्रिया ज्योतिष्टोमक्रियया । तत्र दीक्षाणां उपसदां च दर्शनमुपपन्नम् । तस्मात् कर्मनामधेयमिति । लिङ्गं त्वेतत्प्राप्तिः पुनरुत्तरसूत्रेण ।

**वा**— वाजपेये तावदयं विशेषोऽभिधीयते– '**वाजपेयं यवागूः स्यादौषधद्रव्यता ततः । द्रव्यसारूप्यसामान्यादैष्टिकत्वं प्रसज्यते ॥**'

**ऐकशब्द्ये परार्थवत् । ८ ॥**

**भाष्यम्**— यदि गुणविधिः स्यात्, स्वार्थवत् परार्थत्वाभिधानं विप्रतिषिध्यते यजेतेत्यस्य शब्दस्य । यदि 'स्वाराज्यकामो यजेत' इति स्वाराज्यकामस्य यागं विधातुं स्वार्थमुच्यते न तर्हि वाजपेयेन गुणेन संबन्धुं परार्थमनूद्येत यागेन वाजपेयगुणकेनेति । भिद्येत हि तथा वाक्यम् । **ननु द्वे एवैते** वाक्ये प्रत्यक्षमुपलभामहे 'स्वाराज्यकामो यजेत' इत्येतदेकं प्रत्यक्षं पदद्वयम् । 'यजेत वाजपेयेन' इत्येतदपि प्रत्यक्षमेव । **नैतदेवम् ।** एवं सति चत्वारि पदान्युपलभेमहि त्रीणि चैतान्युपलभ्यन्ते । उच्यते । यजेतेत्येतदुभाभ्यां संभन्त्स्यते । कथं सकृदुच्चारितं संबन्धं उभाभ्यां गमिष्यतीति । रूपाभेदात् । ईदृशमेवास्य रूपं स्वाराज्यकामेन संबध्यमानस्येदृशमेव वाजपेयेन । अतस्तन्त्रेणोभाभ्यां संभन्त्स्यते इति । नैतदस्तीदृशेनैव रूपेणेति । यद्यज्ञातस्ततो विधिः, यदि ज्ञातस्ततोऽनुवादः । न च ज्ञातोऽज्ञातश्च युगपत्संभवतीति । **आह**— यदिदमुक्तं गुणविधिपक्षेऽनुवादो यजेतेति । यद्ययमनुवादः केनेदानीं गुणो विधीयते । वाजपेयशब्देनेति मा वोचः । न ह्याख्यातमन्तरेण



कृत्यं वा, नामशब्दार्थव्यापारो विधीयते । यश्चात्र आख्यातशब्दो यजेतेति सोऽनुवाद इत्युक्तम् । केनेदानीं तस्य व्यापारो विधीयते । अतः स्वाराज्यकामं गुणं च प्रति यजेतेति विधिः । तस्मादुभाभ्यां संबध्यते इति । यद्युभयत्र विधिः, वाजपेयो न स्वाराज्यकामस्य यागेन संबध्येत । द्वे ह्येते तदा वाक्ये, न स्वाराज्यकामस्य यागेन सह गुणविधेरेकवाक्यता । प्रकरणात् संबन्धः स्वाराज्यकामस्य यागेन, इति चेन्न, वाक्येन यागमात्रे विधानात् । अस्तु यागमात्रेण संबन्धः, इति चेन्न, स्वाराज्यकामस्य यागेन सहैकवाक्यताया गम्यमानत्वात् । तदेवं प्रकरणस्य वाक्यस्य चाबाधो युज्यते यदि कर्मनामधेयम् । गुणविधिपक्षे हि सर्वे इमे वाक्यभेदादयो दोषाः प्रादुर्भवेयुः । तस्मात् कर्मनामधेयं वाजपेयशब्दः इति सिद्धम् ।

**वा**— '**तन्त्रत्वमैकरूप्येण भवेत्तुल्योपकारतः । उपकारान्यथात्वे तु भवत्यावृत्तिलक्षणम् ॥**' द्विधा हि तन्त्रं भवति प्रत्येकं वा समुदाये वा वाक्यपरिसमाप्तावाख्यातगुणत्वप्राधान्यापेक्षया । तदिह द्रव्यं यागे विधीयते न फलम्, अफलत्वप्रसङ्गात् । उद्दिश्यमानं हि सर्वत्र फलं भवति, तच्चेत् क्रियां प्रत्युपादीयेत अङ्गमेव स्यात् । यागोऽपि फलं प्रत्युपादातुं शक्यते न द्रव्यं प्रति, तत्संस्कारत्वप्रसङ्गात् तृतीयानिर्देशबाधाच्च । न च यागसंस्कृतस्य द्रव्यस्य अन्यत्रोपयोगो विद्यते येनैवमाश्रीयेत । एतेन यागफलयोर्द्रव्यं प्रत्युपादानं प्रत्युक्तम् । न च फले यागद्रव्ययोरुपादानम् । एकेन निराकाङ्क्षे फलेऽन्यस्य अविधानात् । यथा वक्ष्यति 'यदैकस्मादपूर्वं तदेतरत्तदर्थम्' इति । न च द्रव्योपसर्जनो यागः फले विधीयते, मत्वर्थलक्षणादिप्रसङ्गात् । तत्र एतदेव आपतति यागेन फलम्, यागं च द्रव्येणेति । ततश्च फलेनोपादेयविधेयगुणभूतयागग्रहणात् गुणेन चोद्देश्यानूद्यप्रधानभूतापेक्षणात् तन्त्रत्वाभावः । एकमार्गाश्रयणे अन्यतरस्यासंबन्धात् । तत्र युगपदाश्रयणे वाक्यभेदात् । अवश्यं हि यत्रोद्दिश्यमानादिरूपं यत्र चोपादीयमानात्मकता तत्र यागस्यैते द्वे वाक्ये कल्पनीये । ननु द्वे एवैते इति तन्त्रपदमभितो दर्शयन् ब्रवीति– 'चत्वारि पदान्युपलभेमहि' इति । अतुल्यार्थत्वादतन्त्रत्वाभिप्रायेण । परस्य तु शब्दरूपाभेदात् साधारण्याभिमानः । 'नैतदस्ति' इति कार्यप्राधान्याच्छब्दरूपस्य तद्गतवैरूप्यात् भेदापत्तिः । 'आह यदिदमुक्तम्' इति– वैरूप्यं परिहरति । गुणविध्यंशेऽपि ह्यवश्यमाख्यातं विधिरूपमेवाभ्युपगन्तव्यम् । वाजपेयपदस्य अनाख्यातत्वेन अविधायकत्वात् । 'यद्युभयत्र विधिरिति' द्रव्यसंस्कार्यत्वप्रसङ्गमनादृत्याऽऽख्यातगुणभावकृतप्रत्येकवाक्यपरिसमाप्तिनिमित्तपरम्परासंबन्धोपन्यासः । प्रकरणानुरोधात् 'व्रीहिभिर्यजेत' इत्यादिवत् व्यवस्था इति चेत् । न । 'वाक्येन यागमात्रे विधानात्' इति तन्त्रसंबन्धे हि परस्परनिरपेक्षयोर्यागेन संबन्धः । एकविशेषितेतरसंबन्धे वाक्यभेदप्रसङ्गात् । तत्रानिष्पन्ने स्वाराज्ययागप्रकरणे गुणो विधीयमानः शुद्धयजतिसंबन्धात् सार्वत्रिकोऽपूर्वयागसंबन्धो वा विज्ञायते । दर्शपूर्णमासादिवाक्यैस्तु निष्पादिते प्रकरणे विधीयमाना व्रीह्यादयोऽवतिष्ठन्ते इति वैषम्यम् । तेन स्वाराज्यकामैर्यागैकवाक्यता गम्यमाना नोत्स्रष्टा भविष्यतीति नामधेयता ।

**शा**— 'वाजपेयेन स्वाराज्यकामो यजेत' इति वाजपेयशब्दः किं गुणविधिः उत कर्मनामधेयमिति चिन्त्यते । तदर्थमिदं विचार्यते किं 'यजेत' इत्याख्यातं गुणफलाभ्यां तन्त्रेण संबद्धुं क्षमते न वेति सर्वाणि च उद्भिदादीनि अत्रोदाहर्तव्यानि । तत्र '**सर्वेष्वाख्यातशब्देषु तन्त्रसंबन्धसंभवात् । मत्वर्थलक्षणादोषो नास्तीत्याक्षिप्यतेऽधुना ॥ यागादेः किन्तु संबन्धमात्रं साधारणं च तत् ॥**' अत्रोच्यते– '**संबन्धमात्रतात्पर्ये नैकस्याप्यन्वयो भवेत् । तद्विशेषपरत्वे तु स्यादन्यतरसंगतिः ॥ रूपद्वयपरत्वं तु विनाऽऽवृत्त्या न लभ्यते । तस्मान्नाख्यातशब्दस्य तन्त्रसंबन्धसंभवः ॥**' तस्मात् सिद्धं नामधेयत्वम् ।

**सोम**— श्येनवाक्यादिषु अपि विशिष्टविधिपक्षे आपाततो मत्वर्थलक्षणादोषस्य आक्षेपेण प्रवृत्तेः **संगतिः** बोध्या । **सूत्रार्थस्तु**– नामधेयत्वेन संभाविते वाजपेयादौ गुणस्य श्रुतेः तस्यैव विधानं स्यादिति ।

**वि**— 'यजेत वाजपेयेन स्वाराज्यार्थीत्यसौ गुणः । नाम वा गुणता तन्त्रयोगाद् गुणफलद्वये ॥ साधारणयजेः

कर्मकरणत्वेन तन्त्रता । त्रिकद्वयं विरुद्धं स्यात् तन्त्रतायां फलं प्रति ॥ उपादेयविधेयत्वगुणत्वाख्यं त्रिकं यजेः । उद्देश्यानूक्तिमुख्यत्वत्रिकं तस्य गुणं प्रति ॥ त्यक्त्वा तन्त्रं तदावृत्तौ वाक्यं भिद्येत तेन सः । वाजपेयेतिशब्दोऽपि कर्मनामाग्निहोत्रवत् ॥'

**भाट्ट—** पूर्वं यत्रयत्र विशिष्टविधिपूर्वपक्षे यानियानि दूषणानि मत्वर्थलक्षणादीनि तानितानीहाक्षिप्यन्ते । यदीह यागस्य कारकत्वं स्यात् तदा सोमादीनां कारकान्तराणां तदन्वयानुपपत्तेः मत्वर्थलक्षणा भवेत्, उभयविशिष्टभावनाविधानं वा । न ह्येतदभ्युपगमे प्रमाणमस्ति । यागस्य क्रियारूपत्वाङ्गीकारात् । अतश्च तस्मिन् सर्वकारकाणां भावनावदेव विनैव मत्वर्थलक्षणां विनैव च वैरूप्यं संबन्धोपपत्तिः । यागस्य च क्रियारूपत्वेऽपि संबन्धसामान्येन भावनान्वयो न विरुद्धः । भावना च वैयाकरणवदन्यतिरिक्ता नैवाङ्गीक्रियते । अतश्च उद्भिदादिष्वपि सर्वत्र गुणविधित्वमेव युक्तम् । वाजपेयोदाहरणं तु मूले गुणसूत्रानुरोधेन । **इति प्राप्ते,** पचतीत्यस्य पाकं करोतीति विवरणात् धात्वर्थस्य कर्मत्वकरणत्वान्यतरकारकत्वेनैव भावनान्वयः । भावना च यथाऽतिरिक्ता तथा वक्ष्यते । अतः चेतरकारकाणां धात्वर्थान्वयानुपपत्तेः अगत्या उभयविशिष्टभावनाविधानं सोमादावङ्गीकृतम् । प्राचीनरीत्या वा मत्वर्थलक्षणा । अन्यथा श्रुत्यैव फलगुणयोः यागान्वये फलान्वयार्थं यागस्य उपादेयत्वविधेयत्वगुणत्वानि गुणान्वये च उद्देश्यत्वानुवाद्यत्वप्रधानत्वानीति विरुद्धत्रिकद्वयापत्तेः । उपादेयत्वादिनिरुक्त्यादिकं च **कौस्तुभे** द्रष्टव्यम् । अतो मत्वर्थलक्षणाभिया विशिष्टविध्यनुपपत्तेः नामधेयत्वमेवोद्भिदादीनाम् ।

**मण्डन—** 'वाजपेयपदं नाम ।'

**शंकर—** 'वाजपेयेऽथ नामत्वम् ।'

* **वाजपेयाधिकरणे** तन्त्रसंबन्धेन विशिष्टविधिसंभवात् गुणविधिपक्षोक्तमत्वर्थलक्षणादिदोषपरिहारेण प्रत्यवस्थानमाशङ्क्य वैरूप्यात् तन्त्रसंबन्धानुपपत्तेः दोषपरिहारासंभवेन गुणविधित्वनिराकरणे दृढीकृते । सु. पृ. ३९७. * वाजपेयाधिकरणे (१।४।५) वाक्यभेदभयादेव नामधेयत्वाश्रयणम् । **वाक्यार्थ.** पृ. २०. * उपादेयत्वस्य कृतिविषयत्वाश्रयत्वान्यतरत्वरूपस्य, विधेयत्वस्य च अप्राप्तप्रापणरूपस्य भेदो **वाजपेयाधिकरणे** निरूपितः । **कौ.** २।३।१३।२६ पृ. ९२. * यद्वैव यथा अनुपादेयानि तथा वाजपेयाधिकरणे **कौस्तुभे** प्रपञ्चितम् । **भाट्ट.** २।३।१२. * 'यज्जुहोति तदग्नये च प्रजापतये च' इति चशब्दात् समुच्चितयोरेव अग्निप्रजापतिशब्दयोर्विधायकान्वयप्रतीतेः प्रतिपदं विधेरपर्यवसानेन विधिव्यापारभेदाभावात् पृथक् चतुर्थीनिर्देशात् कारकभेदप्रतीतेः, भिन्नयोरपि विधेयत्वे प्रत्ययावृत्तिप्रसक्तेः समुदितरूपस्य च विधेयत्वेन विधेयभेदाभावात् अनेकार्थत्वाप्रसक्तेः देवताद्वयविधावपि न वाक्यभेदापत्तिः । प्रतिपादितं चैतत् तन्त्रसारे वाजपेयाधिकरणे । सु. पृ. ७८६, * यथा वाजपेयाधिकरणे 'यदि यजेत इत्यनुवादः, केनेदानीं गुणो विधीयते' इति प्रश्नोपपादनार्थं 'वाजपेयशब्देनेति मा वोचत, न ह्याख्यातं वा कृत्यं वाऽन्तरेण नामपदस्य विधिशक्तिरस्ति' इत्युक्तम् । पृ. ७७८.

* एकस्मिन्नेव वाक्ये क्रये पिङ्गाक्ष्येकहायन्याः, तस्यां चारुण्यस्य विधौ **वाजपेयाधिकरणोक्तरीत्या** विरुद्धत्रिकद्वयापत्तौ विध्यावृत्तिलक्षणवाक्यभेदापत्तेः । (पूर्वपक्षे) धात्वर्थस्य वाजपेयाद्यधिकरणन्यायेन कारकत्वात् । कु. ३।१।६।१२. * प्रणयनप्रादुष्करणादिरूपक्रियाविशिष्टत्वेन उपादेयता विधेयता च । अत एव तन्निर्वाहार्थं कर्मणः प्राप्त्यालोचनायां प्रापकविध्युपस्थापकप्रमाणान्तराभावेऽपि जुहोतिनैव कथंचिदुपस्थापनात् उद्देश्यत्वाविघातः । यत्र तु न योग्यमुपपदं यथा—'मासं०' ('मासमग्निहोत्रं जुहोति') इत्यादौ कालादेः वाजपेयाधिकरणोक्तरीत्या एव उपादेयत्वाविषयत्वात् पारिशेष्येण धात्वर्थमात्रवृत्तित्वात् सामानाधिकरण्यार्थं विधेयत्वमपि तद्गतमेव विधिरवबोधयति । **कौ.** २।३।११।२४ पृ. ७८, * संभवति हि कालदेशयोः वाजपेयाधिकरणोक्तरीत्या कृतिव्याप्यत्वरूपप्रयोगविषयत्वासंभवेऽपि यागोद्देशप्रवृत्तपुरुषकृतौ अधिकरणतासंबन्धेन कारकत्वात् यागाङ्गत्वेन विनियोगः । २।३।१३।२६ पृ. ९३.

* ननु गुणफलयोरेकवाक्योपादाने गुणविशिष्टस्य कर्मणः फले विधौ **वाजपेयाधिकरणोक्तवैरूप्यापत्तेः**



गुणस्यैव फले विध्यवगमात् । सु. पृ. ८२४.

* यदि च ('वाक्यगतपदेषु') एकं फलसंबन्धि इतराणि च तत्संबन्धीनि इति कल्प्यते ततो **वाजपेयाधिकरणन्यायेन** एकस्य फलं प्रति उपादान–विधान–गुणभावात्, इतरत्तु प्रति उद्देश–अनुवाद–प्राधान्यात् वैरूप्यनिमित्तवाक्यभेदप्रसङ्गः । (तस्मात्तन्न युक्तम्) । वा. २।१।१।१ पृ. ३७३.

**卐 वाजपेयादिविकृतौ वैकल्पिकानां प्राकृतानां खादिरत्वादीनां मध्ये अन्यतमपुनःश्रुतौ नियमविधित्वम् ॥**

**विरोधिनामेकश्रुतौ नियमः स्याद् ग्रहणस्यार्थवत्त्वाच्छरवच्च श्रुतितो विशिष्टत्वात् । १०।७।१६। ५१ ॥**

**भाष्यम्—** अस्ति वाजपेयः, 'शरदि वाजपेयेन स्वाराज्यकामो यजेत' इति । अत्र श्रूयते 'खादिरो यूपो भवति' इति । तत्र संशयः किं खादिरो वा, पालाशो वा, रौहितको वा, उत खादिर एवेति । तथाऽन्यत्र श्रूयते 'बृहत्पृष्ठं भवति' इति । तत्र संशयः किं बृहद्वा पृष्ठम्, रथंतरं वा, उत बृहदेवेति । त्रैधातव्यायां श्रूयते 'यवमयो मध्यमः' इति । तत्र संशयः किं यवमयो वा, व्रीहिमयो वा, उत यवमय एवेति । सर्वेष्वेषु किं प्राप्तम् ? विरोधिनामन्यतमे श्रूयमाणे नियमः स्यात् । खादिर एव यूपः, बृहदेव पृष्ठम्, यवमय एव मध्यम इति । कुतः ? ग्रहणस्यार्थवत्त्वात् । एवं बृहत्खादिरयवानां ग्रहणमर्थवद्भविष्यति । इतरथा प्राप्तानुवादमात्रमनर्थकं स्यात् । श्रुत्या विशिष्टाः खदिरादयश्चोदकप्राप्तान् पलाशादीन् बाधेरन् । शरवत् । यथा 'शरमयं बर्हिर्भवति' इति शरेषु श्रुतेषु कुशा निवर्तन्ते, एवमिहापीति ।

**उभयप्रदेशान्नेति चेत् । ५२ ॥**

**भाष्यम्—** इति चेत्पश्यसि, उभयं हि प्रदिशति चोदकः, खादिरं पालाशं च, बृहद् रथंतरं च, व्रीहीन् यवांश्च । केनेदानीं चोदकेन तुल्ये प्रदेशे सति पलाशादयो निवर्तिताः । खादिरग्रहणमशक्तं परिसंख्यातुम् । त्रिदोषत्वात् परिसंख्याया इत्युक्तम् । तस्मान्न नियमः, विकल्प एवेति ।

**शरेष्वपि । ५३ ॥**

**भाष्यम्—** यत्तु उभयप्रदेशादुभयं भवतीत्यध्यवसीयते, शरेष्वपि श्रुतेषु कुशा नैव निवर्तेरन्निति, स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति स्म ।

**विरोध्यग्रहणात्तथा शरेष्विति चेत् । ५४ ॥**

**भाष्यम्—** इति चेत्पश्यसि, एष न्याय उच्यमानः शरेष्वपि दोषं प्रसञ्जयतीति । न शरेषु किंचन दोक्ष्यति । यत्तत्र कुशा निवर्तन्त इति, तथा स्यात् । कुतः ? विरोध्यग्रहणात् । न हि विरोधिषु शरेष्वङ्गीक्रियमाणेषु कुशाः शक्या अङ्गत्वेन उपादातुम् । तस्मात् कुशा निवर्तन्ते इति ।

**तथेतरस्मिन् । ५५ ॥**

**भाष्यम्—** तथा इतरस्मिन्नपि खदिरादौ विरोधिन्यङ्गीक्रियमाणे न शक्याः पलाशादयोऽङ्गत्वेन उपादातुम् । तस्मात् निवर्तिष्यन्ते इति ।

**श्रुत्यानर्थक्यमिति चेत् । ५६ ॥**

**भाष्यम्—** इति चेत् पश्यसि, विरोध्यग्रहणात् पलाशादीनां निवृत्तिर्भविष्यतीति । चोदकश्रुतेः आनर्थक्यं स्यात् । प्रापयति हि चोदकः पलाशादीनि । स हि तुल्यः खदिरादिषु पलाशादिषु च । तदुक्तम्– अग्रहणादिति चेत्, न तुल्यत्वादिति । न च शक्यं वक्तुम्, खदिरादिभिः प्रयोगवचन एकवाक्यतामेतीति । बध्नातिप्रयोगवचनेन हि स श्रूयमाणः परम्परया पशुयागं यास्यतीति । अथेदानीं यागप्रयोगवचनस्तद्विशिष्टान् यागान् यास्यति । तेषु पलाशादयो विशेषाश्चोदकप्राप्ता न खदिरादिभिर्निवर्तिताः । तस्माद्विकल्प इति ।

**ग्रहणस्यार्थवत्त्वादुभयोरप्रतिपत्तिः स्यात् । ५७ ॥**

**भाष्यम्—** बध्नातिप्रयोगवचनो हि प्रत्यक्षश्रुतेन खदिरेणैकवाक्यतामेति । तस्मिन् निराकाङ्क्षे न पलाशः प्रवर्तिष्यते । तस्मात् खदिरविशिष्टः पशुयागो यागप्रयोगवचनेन गृहीतो न पलाशविशिष्टः । तस्मात् खदिरस्यैव प्रवृत्तिर्नोभयोः । एवं रथंतरे, यवमये च । तस्मात् खदिरादीनां नियमः । नैषां पलाशादिभिर्विकल्प इति ।

शा— यत्र चोदकेन अनेकेषां प्राप्तानां एकं प्रत्यक्षं श्रूयते, यथा ‘ खादिरो यूपो बृहत्पृष्ठं यवमयः पुरोडाशः’ इत्यादिषु तत्र किं श्रुतस्य खादिरादेः अतिदिष्टस्य पलाशादेः प्रकृतिवद्विकल्पः अथवा श्रुतस्यैव नियम इति संशये, विकल्पः प्रकृतिवत्, प्रत्यक्षवचनं तु न खादिरादेर्विधायकं प्राप्तत्वात्, पलाशादिनिवृत्त्यर्थत्वे त्रिदोषा परिसंख्या स्यात्, तस्मादनुवादमात्रमिति यथाचोदकं विकल्पः। नैवम् । यथैव प्रकृतावर्थादनियतानेकद्रव्यकत्वे प्राप्ते व्रीहिखदिरादिश्रवणं नियमार्थम् । एवं चोदकेनापि अनियमेन खादिरादिप्राप्यमाणं प्रत्यक्षवचनेन नियम्यते, तन्नियमात् च अर्थाभावात् पलाशादेर्निवृत्तिः ।

सोम— यथा अप्सुमत्ता प्राप्तत्वात् न विधेया तथा खादिरादिकमपीत्युत्थितेः संगतिः। सूत्रार्थस्तु–विरोधिनां खदिरपलाशादीनां मध्ये एकस्य श्रवणं इतरनियमार्थं स्यात् तथा सति तद्ग्रहणमर्थवद्भवेत् श्रुतितो विशिष्टत्वात् प्रत्यक्षश्रुतिचोदितत्वात् शरवदानुमानिकनिवृत्तिः स्यादिति ।

वि— ‘बृहद्यवः खादिरश्च विकल्प्या नियता उत।, विकल्प्याश्चोदकप्राप्तेः, नियताः स्युः पुनर्विधेः ।।’

भाट्ट— प्रकृतौ वैकल्पिकानामनेकेषामतिदेशेनानियमेन प्राप्तौ, विकृतौ यत्रैकस्य पुनःश्रवणं यथा ‘ खादिरो यूपो भवति, बृहत्पृष्ठं भवति, यवमयः पुरोडाश. ’ इत्यादिषु । तत्र यूपाद्युद्देशेन खादिरत्वादिमात्रविधानादपूर्वतापरत्वे यूपादीनामप्राप्त्यापत्तेरनुवादमात्रत्वे चानर्थक्यात् पालाशत्वादिव्यावृत्तिफलको नियमविधिरेव अयं खादिरत्वादेः । प्रकृतावाक्षेपलभ्यद्रव्यान्तरव्यावृत्तिफलकव्रीह्यादिनियमवदिति ।

अतिदेशस्य च पालाशादिविषयत्वाकल्पनादेव न तत्प्राप्तिः प्रामाणिकीति सिद्धमेव शिष्यहितार्थमुक्तम् ।

मण्डन— ‘ स्यात् वाजपेये खदिरो हि यूपः । ’

शंकर— ‘ वैकल्पिकैकनियमः । ’

**वाजपेयोपदिष्टैः प्राजापत्यैः पशुभिरातिदेशिकानां क्रतुपशूनां समुच्चयः ॥**

प्राजापत्येषु चाऽऽम्नानात् । १०।४।३।६ ॥

भाष्यम्— अस्ति वाजपेयः ‘ वाजपेयेन स्वाराज्यकामो यजेत ’ इति । तत्र प्राजापत्याः पशवः, ‘सप्तदश प्राजापत्यान् पशूनालभते ’ इति । सन्ति तु प्रकृतौ क्रतुपशवः । त इह चोदकेन प्राप्ताः । तत्र संशयः किं ते प्राजापत्यैः क्रतुपशवो बाध्यन्ते, उत समुच्चीयन्ते इति । किं प्राप्तम् ? प्रत्यक्षाः प्राजापत्याश्चोदकप्राप्तान् क्रतुपशून् बाधेरन्निति । एवं प्राप्ते, ब्रूमः । प्राजापत्येषु च समुच्चयः स्यात् । चशब्दोऽन्वाचयार्थः । आम्नायन्ते हि क्रतुपशवः ‘ ब्रह्मवादिनो वदन्ति, नाग्निष्टोमो नोक्थ्यो न षोडशी नातिरात्र इति । अथ कस्माद्वाजपेयेन सर्वे यज्ञक्रतवोऽवरुध्यन्ते, पशुभिरिति ब्रूयात् । यदाग्नेयं पशुमालभतेऽग्निष्टोमं तेनावरुन्धे, ऐन्द्राग्नेनोक्थ्यम्, ऐन्द्रेण षोडशिनम्, सारस्वत्याऽतिरात्रम्, मारुत्या बृहत्स्तोत्रम् । एतावन्तो वै यज्ञक्रतवस्तान् पशुभिरेवावरुन्धे ’ इति समुच्चयं दर्शयति । ननु दर्शनमिदमुपदिश्यते, कोऽत्र न्याय इति । उच्यते । प्रकृतिलिङ्गासंयोगः । ननु पशुशब्दः प्रकृतिलिङ्गम् । नेत्याह । नात्र पशुमनूद्य देवता विधीयते, संख्याश्रवणात् । संख्यादेवताश्रवणात् कर्मान्तरं चेदमुक्तम्, पृथक्त्वनिवेशात्संख्यया कर्मभेदः स्यादिति । अतो ग्रहाणामिव समुच्चयो भवितुमर्हतीति ।

शा— वाजपेये श्रूयते ‘सप्तदश प्राजापत्यान् पशूनालभते ’ इति । सन्ति तु चोदकप्राप्ता आग्नेयादयः क्रतुपशवः । ते किं प्राजापत्यैर्निवर्त्यन्ते किंवा समुच्चीयन्ते इति । पशुत्वेन प्रकृतिलिङ्गेन संयोगान्निवृत्तिं मन्वानस्योत्तरम्– न पशुत्वं सवनीयादिकार्यमलमुपस्थापयितुमनेकसाधारणम् । न च प्राकृतपश्वनुवादेन गुणविधिः संभवति, देवतान्तरस्य संख्यान्तरस्य च विधौ वाक्यभेदात् । तस्मात् कर्मान्तराणि, तानि च अदृष्टार्थत्वात् प्राकृतैः समुच्चीयन्ते ।

सोम— पूर्वत्र प्रयोगवचनविधेयत्वात् तस्य च अविशेषात्समुच्चयेऽपि इह प्रातिस्विकविधिना प्राकृतकार्ये विधानात् तद्बाध इत्युत्थितेः संगतिः । सूत्रार्थस्तु– ‘ आग्नेयं पशुमालभते अग्निष्टोममेव तेनावरुन्धे ऐन्द्राग्नेनोक्थ ऐन्द्रेण षोडशिनः स्तोत्रम् ’ इति वाजपेये क्रतुपशूनामाम्नानात्प्राजापत्यैः समुच्चयः, न बाध इति ।



वि— ‘प्राजापत्यैः पशूनां किं बाधो यद्वा समुच्चयः ।, अक्रियार्था पशूक्तिः स्याल्लिङ्गं तत्रास्ति बाधनम् ।। पशूनुद्दिश्य संख्याया देवस्य च विधौ भिदा । कर्मान्यत्वे ग्रहन्यायाद्रोधनाच्च समुच्चयः ।। ’

भाट्ट— वाजपेये ‘ सप्तदश प्राजापत्यान् पशून् ’ इति श्रुताः यागाः पूर्ववदेव न प्राकृतानां क्रतुपशूनां सुत्याकालीनपशुयागत्वसामान्यात् निवर्तकाः । सत्यपि सादृश्ये अदृष्टार्थत्वेनैककार्यत्वानवगतेः सादृश्यस्य कार्यकल्पनोत्तरकालीनप्रतीतिकत्वाच्च । न चात्र अतिदेशप्राप्तपशुयागाश्रयेण पशूद्देशेन देवतामात्रविधानाशङ्का । संख्याया अपि विधाने वाक्यभेदापत्तेः कर्मान्तरावश्यकत्वात् । अतोऽत्र समुच्चय एव । अत एव वाजपेये ‘ यदाग्नेयं पशुमालभते तेनाग्निष्टोममवरुन्धे ’ इत्यादिक्रतुपशुज्ञापकं लिङ्गमप्युपपद्यते ।

मण्डन— ‘ प्राजापत्या न बाध्यन्ते । ’

शंकर— ‘ प्राजापत्यैः क्रतुपशुः । ’ ( न बाध्यः इत्यर्थः ) ।

* **वाजपेयगत-प्राजापत्यपश्वङ्गादिश्रपणार्थ** कुम्भीशूलवपाश्रपणीनां तन्त्रम् । ११।४।८।३३. **मीको.** पृ. १९३५ ‘ तन्त्रं कुम्भीशूलवपाश्रपणीनां० ’ इत्यत्र अधिकरणं द्रष्टव्यम् ।

* यत्र षोडशिस्तोत्रोत्तरं वाजपेयस्तोत्रं क्रियते सा षोडशिसंस्थैव **वाजपेयपदवाच्या** । अत्र सप्तदश स्तोत्राणि । **भाट्ट.** ३।६।१६.

* **वाजपेययूपन्यायः** ( ३।१।९।१८ ) । ‘ वाजपेयस्य यूपः ’ इति वाजपेयाङ्गपशुयागगतयूपवत् । **सोम.** ८।१।३. * प्रयाजादिकं तु दीक्षणीयाद्यङ्गवर्ति**वाजपेययूपन्यायेन** एकशतसंख्यं प्राप्तमनूद्यते इति नास्ति सोमेऽतिदेशः । **शा.** ८।१।३.

* **वाजपेयशब्दः** कर्मनामधेयं न गुणविधिः । १।४।२।६–८. **मीको.** पृ. ३४८८ ‘ वाजपेयाधिकरणम् ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * वाजपेयशब्दस्तावत् सोमयागविशेषवचनः । **भा.** ३।१।९।१८.

* **वाजसनेयिभिः** शङ्खलिखितोक्तमेव धर्मसूत्रं परिगृहीतम् । **बा.** १।३।७।१५ पृ. २४४.

* **वाजसनेयिशाखायां** आध्वर्यवं ( अल्पं ) चरकशाखासु च बहु । **वा.** १।३।८।२७ पृ. २८६.

* **वाजिनां** आवाहनं वैश्वदेवे पर्वणि न कर्तव्यम् । **संकर्ष.** । ४।४।८.

**वाजिमन्दुरान्यायः** । ‘ वाजिशाला तु मन्दुरा ’ इति कोशात् । तथा पूर्व–( २०६ )वत् । **साहस्री.** २१३.

**वाजिनं उपसेचनार्थं यागार्थात् पृथङ् नोत्पाद्यम् ॥**

‘ चातुर्मास्येषु वाजिभ्यो वाजिनम् ’ इत्यत्र तादर्थ्यचतुर्थ्या यागोत्पत्तावेव सर्वस्य वाजिनस्य यागे विनियोगेनान्यत्र पुनर्विनियोगस्य ‘ शेषात्स्विष्टकृत ’ इत्यादाविव शेषपदाभावे स्वेच्छया कर्तुमशक्यत्वात् ‘ वाजिनेनोपसिञ्चति ’ इति विहितमुपसेचनं च प्रयोजकं सदन्यद्वाजिनमाक्षिपति । इति प्राप्ते, यागोत्पत्तौ विनियोगश्रवणेऽपि परार्थाऽऽमिक्षाऽनुनिष्पन्नस्य वाजिनस्य विनियोगाकाङ्क्षायां यागोपसेचनयोः समकालप्रवृत्तेरसंयुक्तोत्पन्नत्वौवाज्यस्येवोभयत्र विनियोगसंभवान्न वाजिनान्तरमुत्पाद्यम् । **संकर्ष.** १।४।१.

* वाजिनम् । ‘ तप्ते पयसि दध्यानयति ’ तत्र घनीभूतः पिण्डः आमिक्षा, अवशिष्टं जलं वाजिनम् । **वि.** २।२।९. * वाजिनं न प्रयोजकं तप्ते पयसि दध्यानयनस्य किंतु आमिक्षैव प्रयोजिका । ४।१।९।२२–२४. * वाजिनं यागे उपसेचने चैकमेव विनियुज्यते न वाजिनान्तरं उपसेचनार्थमुत्पादयितव्यं चातुर्मास्येषु । **संकर्ष.** १।४।१. * वाजिनं सांनाय्यविकृतम् । **भा.** ८।२।१।५. * ‘ वाजिभ्यो **वाजिनम्** ’ इति वाजिनगुणककर्मान्तरविधिः, न तु आमिक्षागुणके कर्मणि गुणविधिः । २।२।९।२३–२४. **मीको.** पृ. १५८० ‘ गुणन्यायः ’ इत्यत्र द्रष्टव्यम् : * **वाजिनस्य** । ततस्य पयसो दध्यानयनसंस्कृतस्य आमिक्षाशब्देन घनीभूतस्य वैश्वदेवयागे विनियोगात् तदनुनिष्पादिनो द्रवस्य वाजिनशब्दोक्तस्योपयुक्तशेषत्वात् प्रतिपत्त्यपेक्षस्य प्रतिपत्तिर्भविष्यति । **सु.** पृ. ८२८. * वाजिनस्य पर-( आमिक्षा ) प्रयुक्तदध्यानयनोपजीवित्वावगतेर्न दध्यानयनप्रयोजकत्वम् ।

**भाट्ट.** ४।१।९. * वाजिनस्य समुपहूय भक्षणम् । **भा.** ८।२।१।३. * वाजिनस्य सोमस्येव अनुवषट्कारोऽस्ति। स च स्विष्टकृद्रूप एव । **संकर्ष.** १।४।२. * **वाजिने** तिक्तकटुको रसः । **भा.** ४।१।९।२३.

**वाजिने परप्रयुक्तद्रव्यत्वान्नावाहनम् ॥**

वैश्वदेवे पर्वणि वाजिनेज्यादेवतानां वाजिनामप्या-वाहनकाले स्विष्टकृदादिदेवतानामिव आवाहनं कर्तव्य-मिति । **इति प्राप्ते,** परप्रयुक्तद्रव्योपजीवित्वाद् द्रव्यस्य चावाहनकाले जनिष्यमाणत्वेनानिश्चितत्वाद् विष्णोरुरुक्रम-स्यैव नावाहनम् । अत एव ' स वै वाजिनो नावाहयति ' इति लिङ्गम् । **संकर्ष.** ४।४।८.

* वाजिने सांनाय्यधर्मातिदेशः । ८।२।१।१–९.

**वाजिने सोमपूर्वत्वं सौत्रामण्यां च ग्रहेषु ताच्छब्द्यात् । ८।२।१।१ ॥**

चातुर्मास्येषु ' वाजिभ्यो वाजिनम् ' इति वाजिन-यागः श्रुतः । सौत्रामण्यां च सुराग्रहाः आश्विनः सार-स्वतः ऐन्द्रश्च ग्रहाः श्रुताः । अनयोः वाजिनग्रहयोः सौमिको वा विध्यन्तः दार्शपौर्णमासिको वा इति विचारे **पूर्वपक्षमाह** । वाजिने सौत्रामण्यां ग्रहेषु च सोमपूर्वत्वं स्यात्, सौमिको विध्यन्तो ग्राह्य इत्यर्थः । ताच्छब्द्यात् । सः शब्दः सोमशब्दः येषु ते तच्छब्दाः । तेषां भावः ताच्छब्द्यम् । ' सोमो वै वाजिनम् ' इति वाजिने सोम शब्दः । ' सुरा सोमः ' इति सुरायां सोमशब्दः । साहश्याच्च परशब्दः परत्र प्रवर्तते । सोमसादृश्यं च सोमधर्मवत्त्वम् । तस्मात् वाजिने ग्रहेषु च सोम-विध्यन्तः । स एष नाम्ना धर्मातिदेशः, न विध्यन्तेन ।

**अनुवषट्काराच्च । २ ॥**

पूर्वपक्षे युक्त्यन्तरप्रदर्शनार्थं सूत्रम् । चातुर्मास्येषु ' वाजिभ्यो वाजिनम् ' इति श्रुतम्, सौत्रामण्यां च सुराग्रहादयो ग्रहाः । ' वाजिनस्याग्ने वीहीत्यनुवषट्करोति ' ' सुराया वीहीत्यनुवषट्करोति ' इति च श्रुतम् । तथा च अनुवषट्कारात् अनुवषट्कारस्य विद्यमानत्वात् वाजिने सुराग्रहादिषु च सोमधर्मो ग्राह्यः ।

**समुपहूय भक्षणाच्च । ३ ॥**

चतुर्मास्येषु वाजिने सोमधर्मः स्यात् इति पूर्वपक्षे हेत्वन्तरमुच्यते । ' शेषं समं विभज्य समुपहूय भक्षयन्ति' इति वाजिने श्रुतम् । समुपहूयभक्षणं च सोमधर्मः । अस्मात् समुपहूयभक्षणात् सोमधर्मात् हेतोः वाजिने सोमविध्यन्तो ग्राह्यः ।

**क्रयणश्रयणपुरोरुगुपयामग्रहणासादनवासोपन-हनं च तद्वत् । ४ ॥**

सौत्रामण्यां सुराग्रहेषु सोमविध्यन्तः स्यात् इति पूर्वपक्षे हेत्वन्तरपरं सूत्रम् । क्रयणं च, श्रयणं च, पुरोरुक् च, उपयामश्च, ग्रहणं च, आसादनं च, वासश्च, उपनहनं च तेषां समाहारः । ' सीसेन क्लीबात् शष्पाणि क्रीणाति ' इति सुरासंधानार्थं कोमल-तृणाङ्कुराणां क्रयणं श्रुतम् । ' कुवलसक्तुभिराश्विनं श्रीणाति ' इति सूक्ष्मबदरफलपिष्टानां श्रयणं श्रुतम् । ' एका पुरोरुक् ' इति एका पुरोनुवाक्या श्रुता । ' उप-यामगृहीतोऽस्यच्छिद्राय त्वा ' इति उपयामशब्दविशिष्टो मन्त्रः ग्रहणार्थः श्रुतः । ' आश्विनं ग्रहं गृह्णाति ' इति ग्रहस्य ग्रहणं श्रुतम् । ' गृहीत्वा आसादयति ' इति गृहीतस्य ग्रहस्य आसादनं श्रुतम् । ' त्रिरात्रं संहता वसन्ति ' सुरानिष्पत्त्यर्थं संसृष्टानां तोक्ममासरनग्रहुसक्तु-गोदुग्धानां त्रिदिनं वासः वसतिः श्रुता । 'क्षौमे वाससि उपनद्धानि तोक्मानि शष्पाणि च भवन्ति ' इति उप-नहनं श्रुतम्। तदेतत् क्रयणादिकं तद्वत् सोमवत् भवति । तेन सुराग्रहेषु सोमविध्यन्तः स्यात् इति ।

**हविषा वा नियम्येत तद्विकारत्वात् । ५ ॥**

वाजिने सुराग्रहेषु च सोमस्य विध्यन्तः स्यात् इति पूर्वपक्षं सूत्रचतुष्टयेन प्राप्तं वाशब्देन निरस्य **सिद्धान्त-माह** । तच्छब्दत्वात् सोमस्य विध्यन्त इति यदुक्तं तन्न किन्तु हविषा हविःसामान्येन दार्शपौर्णमासिको विध्यन्तः नियम्येत । तद्विकारत्वात्, तस्य विकारः तद्विकारत्वात् । औषधविकृतिः सुरा, सांनाय्यविकृतिर्वाजिनम् । हविः-सामान्यं च बलीयः ।

**प्रशंसा सोमशब्दः । ६ ॥**

ननु यदि वाजिने सुराग्रहेषु च सोमविध्यन्तो न स्यात् कथं तर्हि ' सोमो वै वाजिनम् ' ' सुरा सोमः ' इति सोमसादृश्यबोधकः सोमशब्दः वाजिनादौ प्रयुक्तः इति चेत् तत्राह **सिद्धान्ती** । सोमशब्दः प्रशंसा । प्रशंसार्थोऽयं सोमशब्दो न विध्यर्थः । तस्मान्नायं नाम्ना धर्मातिदेशः ।



**वचनानीतराणि । ७ ॥**

क्रयणं श्रयणं पुरोरुक् उपयामः ग्रहणं आसादनं वासः ( वसतिः ) उपनहनं चेति इतराणि तु सोमधर्म-रूपाणि सुराग्रहेषु वाचनिकानि वचनैः प्राप्तानि, अन्यतः प्राप्तेरभावात् । न तु सोमधर्मातिदेशेन प्राप्तिः, सोमविध्य-न्ताभावादेव ।

**व्यपदेशश्च तद्वत् । ८ ॥**

' शष्पैरेव दीक्षणीयामाप्नोति, तोक्मभिः प्रायणी-याम्, सिंहलोमभिरातिथ्याम् ' इति सौत्रामण्यां यः शष्पादिना दीक्षणीयादिप्राप्तेः व्यपदेशः सोऽपि तद्वत् हविःसामान्यवत् ऐष्टिकं विध्यन्तं प्रापयति । सोमविध्य-न्तप्राप्तौ तु प्रत्यक्षमेव दीक्षणीयादीनि प्राप्नुयुः, ततो व्यपदेशो व्यर्थः स्यात् । तस्मात् वाजिने सुराग्रहेषु च ऐष्टिक एव विध्यन्तः सिद्धान्ते ।

**पशुपुरोडाशस्य च लिङ्गदर्शनम् । ९ ॥**

सौत्रामण्यां ग्रहेषु पशुपुरोडाशस्य लिङ्गं दृश्यते ' नैतेषां पशूनां पुरोडाशा विद्यन्ते ग्रहपुरोडाशा ह्येते पशवः ' इति । ग्रहास्तु न वस्तुतः पुरोडाशाः । यदि तु ते ग्रहाः पुरोडाशधर्मकाः स्युः तत एतत् लिङ्गं उपपद्यते । तस्मात् चातुर्मास्येषु वाजिने, सौत्रामण्यां च ग्रहेषु ऐष्टिको विध्यन्तो न सौमिक इति **सिद्धान्तः । के.**

**वाजिनानुवषट्कारस्यैव स्विष्टकृद्यागत्वात् आमिक्षायागस्विष्टकृतोर्न बाधः ॥**

अस्ति सोम इव वाजिनस्याप्यनुवषट्कारः । स च स्विष्टकृद्रूप एव, प्रधानद्रव्यप्रतिपत्तिरूपत्वात् । अतः ( आमिक्षायां सोम इव वाजिनस्याप्यनुवषट्कारः, स च स्विष्टकृद्रूप एव, प्रधानद्रव्यप्रतिपत्तिरूपत्वादतः ) आमि-क्षायागीयस्विष्टकृतं प्रत्याम्नेत् । अनिज्याशेषद्रव्यङ्गैर्यागः स्विष्टकृतमिव । **इति प्राप्ते,** वाजिनाऽनुवषट्कारस्य वाक्येन वाजिनसंबन्धात् वाजिनैकशेषप्रतिपत्तिरूपत्वेऽपि आमिक्षायागशेषस्य प्रतिपत्त्याकाङ्क्षाया अनिवृत्तेश्चोदक-प्राप्तस्य स्विष्टकृतो न बाधः । **संकर्ष.** १।४।२.

* **वाजिन-आमिक्षायागयोः** भेदः द्रव्यदेवता-लक्षणरूपभेदात् । **वि.** २।२।९.

* **वाजिनासादनस्य** अनुवादेन विहितेनोत्करेण प्राकृतवेदेर्बाधः सौमिकचातुर्मास्येषु । १०।३।३।१८–२२.

* **वाजिनेज्या** प्रतिपत्तिकर्म स्विष्टकृत्तुल्या । **भा.** ७।३।१०।२६.

* **वाजिनोपांशुत्वादेः** गुणभूतत्वात् आमिक्षायाग-दीक्षणीयादौ उत्पत्तिशिष्टनिरवकाशगुणावरुद्धे आकाङ्क्षो-त्थापनासंभवात् युक्तो बाधः । **कौ.** २।३।२।३ पृ. २३.

* **वाजिननाशे** आज्येन समापनं ( ६।४।१ ) चातुर्मास्यवैश्वदेवपर्वणि । **भाट्ट.** ४।१।९.

* अवघातस्य **वाजिनादिन्यायाविषयत्वेन** पर-प्रयुक्तव्रीह्युपजीवित्वासिद्धेः । न तावत् वाजिनन्याय-विषयत्वं व्रीहीणां यागाङ्गत्वस्य इव अवघाताङ्गत्वस्यापि वाक्यीयत्वाविशेषात् वाजिनवत् अवघातस्य अनुनिष्पन्न-त्वाभावाच्च । **कौ.** २।१।४।९ पृ. ६८.

* **वाजिनन्यायः** ( वाजिनं तप्ते पयसि दध्यानय-नस्य न प्रयोजकम् ) । ४।१।९।२२–२४. **मीको.** पृ. ९५.१ ' आमिक्षा तप्ते पयसि० ' इत्यत्र अधिकरणं द्रष्ट-व्यम् । * वाजिनन्यायः ( वाजिनयागः द्रव्यदेवतारूपगुण-भेदात् कर्मान्तरम् ) । २।२।९।२३. **मीको.** पृ. १५८० ' गुणन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * ' उप-सद्भिश्चरित्वा मासमग्निहोत्रं जुहोति ' इत्यत्र उप-सन्मासाभ्यां विशिष्टमिदं कर्म विधीयते । ततो **वाजिन-न्यायेन** गुणभेदात् कर्मभेद इति चेन्न, वैषम्यात् । **वि.** २।३।११. * क्वचित् द्रव्यदेवताख्यरूपलक्षणगुणादपि एका-दशकपालद्वादशकपालत्वरूपात् शाखाभेदेन आम्नानात् वाजिनन्यायेन भेदसिद्धिः (पूर्वपक्षे) । **कौ.** २।४।२।८ पृ.११४.( यत् एकादशकपालत्वद्वादशकपालत्वरूपभेदाख्यं भेदकारणमुक्तं तदेकत्वेऽपि व्रीहियवन्यायेन विकल्पोपपत्तेर-विरुद्धम् । **कौ.** २।४।२।१३ पृ. ११९ )। * ननु एव-मपि न कर्मान्तरत्वे प्रमाणमस्ति ' यदि ब्राह्मणो यजेत ' इत्यादौ अवेष्टेरिव अग्निष्टुत एव प्रयोगान्तरोपपत्तेः । न

हि उभयत्रापि वाजिनन्यायेन कर्मान्तरत्वाद्याकाङ्क्षा संभवति । २।२।१२।२६ पृ. २९०, * पाठक्रमेण प्रधानविधेः एकसंबन्धावगमोत्तरं अन्यसंबन्धायोगात् वाजिनन्यायेन भेदोपपत्तिः । प्रधानविधेः पर्यायेण अङ्गताग्राहकत्वस्य एकादशे ( ११।१।८ ) निषेत्स्यमानत्वेन पाठस्यानियामकत्वात् । अतः सर्वेषां युगपत्संबन्धात् न वाजिनन्यायेनापि भेदकत्वम् । २।२।१०।२३ पृ. २६४. * स्वर्गकामवाक्ये वाजिनन्यायेन चन्दनादिद्रव्यविशिष्टकर्मान्तरविधानात् न कश्चिद्दोषः । **सोम.** ६।१।१.

* **वाजिनन्यायस्वरूपम्**– दध्यानयनस्य आमिक्षार्थत्वं वाक्यीयम् । न वाजिनार्थत्वम् । अतः आमिक्षाप्रयुक्तदध्यानयनानुनिष्पन्नत्वात् वाजिनस्य, न दध्यानयनप्रयोजकता इति हि तन्न्यायः । **कौ.** २।१।४।९ पृ. ६८.

* **वाजिनयागः**, पराङ्गस्य स्वोपकारिणोऽपि दध्यानयनस्य अप्रयोजकः । **बाल.** पृ. १०७, * वाजिनयागः वाजिनस्य उत्पत्तेः अप्रयोजकः उपादानपाननयोस्तु प्रयोजकः । पृ. १०६. * **वाजिनयागमनुनिष्पन्नस्य** वाजिनस्य प्रतिपत्तिः चातुर्मास्यवैश्वदेवे । **भाट्ट.** ८।१।९, * **वाजिनयागस्य** आज्येन समापनं वाजिननाशे चातुर्मास्यवैश्वदेवपर्वणि । ४।१।९, * वाजिनयागस्य आमिक्षाविकारेऽतिदेशः अनुनिष्पन्नप्रतिपत्तित्वात् । ८।१।९.. * वाजिनयागस्य प्रधानतया अङ्गत्वाभावेन अनतिदेशात् वाजिनयागप्रतिषेधदर्शनरूपं लिङ्गमयुक्तम् । इति कृत्वाचिन्तया इदं इति केचिदाहुः । तदयुक्तम् । वाजिनयागस्य वाजिनापचारे द्रव्यप्रयोजकत्वाशक्ततया अनित्यस्य नित्यैः आमिक्षायागादिभिः सहाधिकारविधिविषयत्वाभावेन वाजिनः प्रतिपत्त्यर्थतया स्विष्टकृदादिवत् अङ्गत्वस्यैव युक्तत्वात् । **सोम.** ७।३।१०. * **वाजिनयागे** सान्नाय्यधर्माणामतिदेशः । ८।२।१।१–९.

* प्रतिपत्तिकर्मत्वेऽपि निष्कासावभृथ**वाजिनयागन्यायेन** इतिकर्तव्यताकाङ्क्षायां सोमजन्ययागत्वसादृश्येन अतिदेशोपपत्तेः ( सोमानुवषट्कारयागे ) । **कौ.** ३।२।५।३८ पृ २९७.

* **वाजिनयागवत्** । न च वाजिनयागवत् गुणाच्छेदः संभवति स्वर्गशब्दस्य फलसमर्पकतयाऽपि उपपत्तेः । ( कर्मान्तरमेव दर्शपूर्णमाससंज्ञकं स्वर्गविशिष्टं विधीयतां इति शङ्कायां उत्तरमिदम् ) । **रत्न.** ६।१।१।२. * वाजिनयागवत् । वाजिनयागो यथा कर्मान्तरं प्राप्नोति तथा 'क्षौमे वसानौ अग्निमादधीयातां' इत्यत्र पुंद्वित्वविवक्षायां कर्मान्तरं प्राप्नोति । **रत्न.** ६।१।५।२२ वर्णकं २.

* **वाजिनयागसुराग्रहयोः** ऐष्टिकधर्मातिदेशः । ८।२।१।१–९. **मीको.** पृ. २१८ 'अतिदेशः वाजिनसुराग्रहयोः ऐष्टिकधर्माणाम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वाजिनवत्** । वाजिनं यथा अनुषङ्गात् उत्पन्नं प्रतिपत्तिं आहुतिरूपां निष्पादयति तथा अध्ययनाङ्गमुपनयनं अनुषङ्गात् अध्यापनमाचार्यकं निष्पादयति । **रत्न.** ६।१।६।२४ वर्णकं २.

* **वाजिनशब्दस्य** कारकविभक्त्यन्तत्वात् अपि न नाम्ना अन्वयः संभवति । **सु.** पृ. ८३१.

* **वाजिनहोमः** चातुर्मास्येषु वैश्वदेवपर्वगतः आमिक्षाहोमात् ( आमिक्षायागात् ) कर्मान्तरम् । **वि.** २।२।९.

* **वाते** नाध्येयम्, अध्ययनधर्मोऽयं न कर्मणि प्रयोगधर्मः । १२।३।७।१८–१९.

* **वातादिन्यायः** । वातपित्तश्लेष्माणः परस्परं विरुद्धा अपि देहधारणादि एकं कार्यं कुर्वन्ति । **न्यास.**

* **वातप्रदीपन्यायः** । वातेन दीपनिवृत्तिः । **साहस्री.** ३७६.

* '**वादमात्रं** ह्यनर्थकम्' ( अर्थवादशेषः सन्ननर्थकः इत्यर्थः ) । १।२।२।१९ **सूत्रम्.**

* **वादित्रं** अस्ति महाव्रते 'दिक्षु दुन्दुभयो नदन्ति' इत्येवमादि । **भा.** १०।४।५।९.

* **वाध्र्यश्वानां** ( वध्र्यश्वानां सोमनाथीपाठः । वाध्र्यश्वानां इति केचित् । वाध्र्यश्व इति आश्वलायनश्रौतसूत्रे १२।१० ) नाराशंसो द्वितीयः प्रयाजः । **वि.** ६।६।१.

* **वानप्रस्थः** । ब्राह्मणः, परिव्राट्, वानप्रस्थः इति धर्मभेदात् संज्ञाव्यवस्था । **भा.** ८।२।५।२८.

* **वामदेवेन** दृष्टाः पञ्चदशर्चः । तत्र पञ्चदशानामृचां मध्ये एकादश सामिधेन्यः अन्याश्चतस्रः याज्यानुवाक्याः, न तु समुच्चयः । **संकर्ष.** ४।४।३.



* **वामदेवाधिकरणम्** । **संकर्ष.** ४।३।३. **मीको.** पृ. १४ 'अगस्त्यस्य कयाशुभीयादौ एकादशैव सामिधेन्यः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वामदेव्यं** नाम साम । **भा.** ९।२।६।२८ वर्णकं २, * वामदेव्यं साम आधाने गायति । 'य एवं विद्वान् वामदेव्यं गायति' इति । ३।३।२।९. * वामदेव्यं साम 'कया नश्चित्र०' इति गायत्रे तृचे गीयते । तच्च माध्यंदिने पृष्ठस्तोत्रेषु द्वितीयम् । **वि.** १।४।३, * वामदेव्यं साम 'कया नश्चित्र०' इति तृचे गीयते अध्ययनतः । परंतु 'कवतीषु रथंतरं गायति' इति विधानेन कवानस्तृचे रथंतरं गेयम् । ७।२।१, * वामदेव्यं साम 'कया नश्चित्र० कस्त्वा सत्यो० अभी षु णः०' इति तृचे ( ६८२, ६८३, ६८४ ) गीयते । तत्र प्रथमा ऋक् योनिर्नाम । ९।२।१ वर्णकं २.

* **वामदेव्यादिषु** पृष्ठशब्दप्रसिद्धिः । **मीको.** पृ. २६०८ 'पृष्ठानि' इति बिन्दौ द्रष्टव्यम् । **वा.** १।४। २।३ पृ. ३३२.

* **वामदेव्यादिसामानि** आधाने विहितानि, तत्र उद्गातुः गानं विकल्प्यते । **वि.** १०।८।६ । ब्रह्मा उद्गात्रा सह गाने विकल्प्यते कल्पसूत्रानुसारेण, तदापि गानस्यैव विकल्पः ब्रह्मणो गाननिषेधात् इति । **भाट्ट.** १०।८।६ । वारवन्तीयादिसामानि गेयानि इति । **शा.** १०।८।६.

* **वामदेव्यसाम्नो** योनौ द्वयोरर्धयोर्मध्ये 'ओ ओ हो हायी' इति स्तोभः । यथा स्वरः, वर्णविशेषः, विरामः, इत्येते गीत्युपयोगित्वात् अतिदिश्यन्ते तथा स्तोभा अपि अतिदेष्टव्याः । तथा च तत्रैव साम्नि उत्तरयोर्ऋचोः स्तोभस्य उक्तस्य अतिदेशः कर्तव्यः । **वि.** ९।२।१०.

* **वायवीयौ** संयोगविभागौ शब्दाभिव्यञ्जकौ । (उच्चारयितृमुखोद्गतवायवीयसंयोगविभागानां स्तिमितसमीरणापसारणेन शब्दाभिव्यञ्जकत्वम् । न तु ताल्वादिस्थानां तेषाम् । **वैद्यनाथः** ) अभिघातेन हि प्रेरिताः वायवः स्तिमितानि वाय्वन्तराणि प्रतिबाधमानाः सर्वतोदिक्कान् संयोगविभागान् उत्पादयन्ति, यावद्वेगं अभिप्रतिष्ठन्ते । ते च वायोरप्रत्यक्षत्वात् संयोगविभागा नोपलभ्यन्ते । अनुपरतेष्वेव तेषु शब्द उपलभ्यते नोपरतेषु । **भा.** १।१।६।१३.

* '**वायव्यं** श्वेतमालभेत भूतिकामः' । अत्र किं दार्शपौर्णमासिक आलम्भः गुणविधिः उत आलम्भान्तरं किंवा यागान्तरं इति विचारे यागान्तरमिदं न गुणविधिः नापि आलम्भान्तरम् । २।३।५।१२–१५. **मीको.** पृ. १००६ 'आलम्भनिर्वापन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । * 'वायव्यं श्वेतमालभेत भूतिकामः' इत्यत्र श्वेतवर्णस्य विधिः । न अनुवादः । ४।२।१०।२५. **मीको.** पृ. २१५७ 'द्रव्येषु गुणश्रुतिः नियमविधानार्था' इत्यत्र अधिकरणं द्रष्टव्यम् । * 'वायव्यं श्वेतमालभेत भूतिकामः' इत्यादौ छाग एव, नान्यः पशुः । **भा.** १०।२।३०।६९. * 'वायव्यं श्वेतमालभेत भूतिकामः' इति द्रव्यदेवतायुक्तत्वात् कर्मान्तरविधिः । **वि.** २।३।५. * **वायव्ये** पशौ विहितेन आघारमन्त्रेण प्राकृताङ्गान्तराणां न बाधः । १०।३।१।११–१२.

* **वायव्यादिपशौ** मनोतामन्त्रस्य नोहः ( 'त्वं ह्यग्ने प्रथमः' इत्यत्र 'त्वं हि वायो प्रथमः' इति नोहः ) अविकारेण प्रयोक्तव्यः । १०।४।२१।४३. **मीको.** पृ. ३०८६ 'मनोतान्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वायव्यपशौ** अग्नीषोमीयपशुविकृतौ अग्नीषोमीयदेवतायां निवृत्तायां तदीयपशुपुरोडाशोऽपि सा निवर्तते । **वि.** १०।१।९. * वायव्यपशौ उत्तराघारे हिरण्यगर्भमन्त्रस्य निवेशः । १०।३।२।१३–१७. 'हिरण्यगर्भमन्त्रन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । * वायव्यपशौ उपदिष्टश्वेतगुणेन प्राकृताजद्रव्यस्य न बाधः । १०।२।३०। ७०. **मीको.** पृ. २१५४ 'द्रव्यस्य गुणेन न बाधः' इत्यत्र अधिकरणं द्रष्टव्यम् । * वायव्यपशौ 'हिरण्यगर्भः' इत्याघारमन्त्रः । तत्र चोदकप्राप्तेतिकर्तव्यता नास्तीति पक्षः । मन्त्रान्तरेण पूर्वमन्त्रबाधेऽपि चोदकप्राप्तेतिकर्तव्यता अस्त्येवेति सिद्धान्तः । **वि.** १०।३।१, * वायव्यपशौ 'हिरण्यगर्भः समवर्तताग्रे इत्याघारमाघारयति' ।

प्रथमाघारे ‘ प्रजापतिं मनसा ध्यायन्नाघारयति ’ इति प्रकृतौ । द्वितीयाघारमन्त्रस्तु प्रकृतौ ‘ उर्वोऽध्वरः ’ इत्यादिः तत्र वायव्यपशौ प्राकृतमन्त्रं बाधित्वा हिरण्यगर्भमन्त्रो द्वितीयाघारे इति सिद्धान्तः । १०।३।२ .

* **वायव्यश्वेतपशौ** आघारे प्राकृतेतिकर्तव्यता प्राप्नोति । प्राप्तायां च मन्त्रविशेषरूपगुणविधिः । १०।३। ११-१२ .

* **वायुः** अपि त्वाचप्रत्यक्षः । स्पार्शने च उद्भूतस्पर्शो हेतुः न तु रूपमपि । **मणि.** पृ. २१. * वायुः न प्रत्यक्षः, वायोरप्रत्यक्षत्वात् । **भा.** १।१।६।१३.

**वायुर्नावमिवाम्भसीति न्यायः** । यथा, नद्याः परं पारं गच्छन्तीं नौकां प्रतिकूलो वायुर्गृहीत्वा महावर्ते पातयति, जलेनापूर्य वा मज्जयति, महापाषाणेनाभिहत्य भञ्जयति, पुनरपारं विषमस्थानं वा गमयति, सर्वथानर्थवतीमेव करोति, तथा विदुषोऽपि प्रज्ञां विवेकबुद्धिमनाद्यविद्यावासनाभिरुच्चावचाभिराकृष्टं मनो विषये वा कर्मणि वा योगे वाऽप्युपास्तौ वा व्यवहारे वाऽन्यत्र वा पातयित्वा वायुः नावमिव विध्वंसयतीत्यर्थः । **साहस्री.** ५२५.

* वायुर्नित्यः । **भा.** १।२।१।१०. * ‘ वायुर्वै क्षेपिष्ठा देवता ’ इत्यादौ अर्थवादेऽपि प्राशस्त्यप्रतिपत्तये वाक्ये एव लक्षणा अङ्गीकार्या, प्रत्येकपदात् तदनुपपत्तेः । **न च** तत्र कर्मणि क्षिप्रदेवताप्रसादहेतुत्वरूपतत्पदार्थसंबन्धबोधकत्वमेव, न तु तदन्यप्राशस्त्यलक्षकत्वमिति **वाच्यम्** । पदार्थमात्रसंसर्गबोधे ‘ वायुः शीघ्रतमः ’ इत्येव धीः स्यात्, न कर्मप्राशस्त्यविषया सा स्यात् । **अद्वैत.** २।२।५५४-५५६. * **वायोश्चायं धर्मः** ( चलनम् ) सर्वत्र हि श्वसनादिषु चलनात्मकतैव उपलभ्यते । **बृहती.** पृ. १६१. * वायोः सद्भावे किं प्रमाणम्? असति तस्मिन् व्यजनादिचालने वायूपलम्भासंभवापत्तेः । नहि तेनासौ जन्यते पार्थिवस्य वायूपादानत्वायोगात् । **वैद्यनाथः.** १।१।६।१३ पृ.७९.

**वायुभक्षणन्यायः । साहस्री.** २०१.

**वायुशैत्यौष्ण्यन्यायः** । वायोः शैत्यं औष्ण्यं वा औपाधिकम् । **साहस्री.** ३७२.

* **वारणं** प्रणयनपात्रं नित्यं गोदोहनादि नैमित्तिकमेव दर्शपूर्णमासयोः । **भा.** ४।३।२।४. **मीको.** पृ. २३९८ ‘ नैमित्तिकानि न नित्यत्वप्रयुक्तानि ’ इत्यत्र अधिकरणं द्रष्टव्यम् । * **वारणः** यज्ञावचरः सर्वशेषः । यज्ञावचरः यज्ञप्रचारहेतुः पात्रम् । **वि.** ३।१।१२.

**वारणाधिकरणम्** । वारणवैकङ्कताधिकरणम् । वारणवैकङ्कतपात्राणि सर्वयागेषु निविशन्ते ॥

**गुणानां च परार्थत्वादसंबन्धः समत्वात् स्यात् । ३।१।१२।२२॥**

**भाष्यम्**--अग्न्याधेये वारणवैकङ्कतपात्राणि अहोमार्थानि होमार्थानि च श्रूयन्ते । ‘ तस्माद्वारणो वै यज्ञावचरः स्यान्न त्वेतेन जुहुयात्, वैकङ्कतो यज्ञावचरः स्यात् जुहुयादेतेन ’ इति । न च वारणवैकङ्कतानां पात्राणां अग्न्याधेयेन संबन्धः । कुतः ? यज्ञावचरवचनात् । यज्ञस्यैतानि पात्राणि वाक्येन प्रकरणं बाधित्वा भवन्ति । तत्रैष संदेहः, किं पवमानेष्टिषु निविशन्ते उत दर्शपूर्णमासादिषु सर्वयागेषु इति । किं तावत् प्राप्तम् ? पवमानहविःषु इति । कुतः ? उक्तमेतत् (३।१।९।१८) प्रधाने असंभवन् पदार्थः तद्गुणे कल्प्यते इति । अग्न्याधेयप्रकरणे च समाम्नानात् पवमानहविषां तद्गुणता । तस्मात् पवमानहविःषु इत्येवं प्राप्तम् । **एवं प्राप्ते, ब्रूमः** । गुणानां समत्वात् पवमानहविषां अग्न्याधेयस्य च न परस्परेण संबन्धः । यथा आधानं अग्नेर्गुणः संस्कारार्थः, एवं पवमानहवींष्यपि अग्नेरेव गुणभूतानि । कस्तत्र परस्परेण संबन्ध इति । यदुक्तं आधानस्य प्रकरणे समाम्नायन्ते इति, यद्यपि समाम्नायन्ते तथापि प्रकरणं बाधित्वा वाक्येन अग्नेर्भवन्ति । किमिह वाक्यम् ? ‘ यदाहवनीये जुहोति, तेन सोऽस्याभीष्टः प्रीतो भवति ’ इति । **ननु** आहवनीयोऽत्र यागस्याधिकरणत्वेन गुणभूतः श्रूयते । सत्यम्, अधिकरणमाहवनीयः, तथापि तु आहवनीयार्थं एव यागः, प्रयोजनवत्त्वादाहवनीयस्य निष्प्रयोजनत्वात् पवमानहविषाम् । कथमेषां निष्प्रयोजनता ? फलाश्रवणात् । कल्प्यं फलमिति चेत्, सत्यं कल्प्यम्, अग्निसंस्कारस्तु तत्फलम्, न स्वर्गः । स्वर्गे कल्प्यमाने द्विरदृष्टं कल्प्येत, होमाच्च स्वर्गो भवति, तस्य



च आहवनीयेन अपरः अदृष्टः संस्कार इति । तस्मादग्न्यर्थता पवमानहविषाम् । न एषामाधानेन संबन्धः । तस्मात् न आधाने श्रूयमाणं पवमानहविषां भवितुमर्हति । किं तर्हि ? सर्वयागेषु दर्शपूर्णमासप्रभृतिषु आधानस्य प्रधानभूतेषु निवेश इति ।

**वा**— ‘आनर्थक्यात् तदङ्गेषु’ ( ३।१।९।१८ ) इत्यस्य अपवाद आरभ्यते । वारणवैकङ्कतानि होमार्थानि अहोमार्थानि च पात्राणि यज्ञगामित्वेन विहितानि आधानप्रकरणं बाधित्वा कतमस्य यज्ञस्य भवन्तु इति, ‘ आनर्थक्यात् तदङ्गेषु ’ ( ३।१।९।१८ ) इति पवमानहविःषु विज्ञायन्ते । **तथा प्राप्ते, अभिधीयते । ‘वाक्येनाधानतुल्यानि पवमानहवींष्यपि । तेनासति तदङ्गत्वे सर्वयज्ञार्थतेष्यते ॥**’ प्रकरणगम्यां पवमानहविषामाधानार्थतां बाधित्वा वाक्येन अग्न्यर्थता विज्ञायते, ‘ यदाहवनीये जुह्वति ’ इति । तत्र चोद्यते । यदि अस्माद्वाक्यात् आहवनीयः पवमानहविषां संस्कार्यो भवति ततः समानवाक्यनिर्देशात् अग्निहोत्रादीनामपि प्राप्नोति । अथ तेषां फलवत्त्वात् आहवनीयोऽङ्गं ततः पवमानहविषामपि अङ्गमेव स्यात् । न हि एकं वाक्यं फलवतां गुणभूतं अफलानां च प्रधानभूतं आहवनीयं वक्तुं समर्थम् । विध्यनुवाद--उद्देश्योपादेय--गुणप्रधानानां युगपद्विरोधात् । सप्तमी च एकत्र द्वितीयार्थं लक्षयति अन्यत्र च स्वार्थमेव वदति इति विरोधः । तथा च विश्वजिदादीनां अश्रुतफलानां अङ्गत्वप्रसङ्गः । सर्वं चायुक्तमेतत् । निष्पन्नश्च आहवनीय उपदिश्यते । फलवत्कर्मानुरोधेन च भाव्या आहवनीयसंज्ञा विज्ञायते ( एवं आक्षिप्तं भाष्यं परमतेन समाधातुम् आरभते– ) तस्मात् किल एवं वर्णनीयम् । द्वे ह्येते वाक्ये तुल्यरूपे । पवमानहविष्प्रकरणे एकम्, अपरमनारभ्यवादे । तत्र प्राकरणिकेन निष्पाद्यमानत्वात् संस्कारापेक्षिण आहवनीयस्य अफलानां पवमानहविष्प्रभृतीनां संस्कारत्वेन विधानम् । अनारभ्यवादेन तु निष्पन्नस्य सतः सर्वकर्माणि उद्दिश्य अधिकरणत्वेन विधानम् । तस्मादविरोध इति । **वयं तु ब्रूमः** । किमनेन अश्रुतवाक्यकल्पनाक्लेशेन । अन्यथाऽपि एतदुपपद्यते एव । भवन्तु नाम पवमानहवींषि आधानाङ्गम् । तथापि न तत्र पात्राणि भवन्ति । ‘ वाजपेयस्य यूपः ’ इति हि यूपग्रहणात् व्यवहितसंबन्धेऽपि षष्ठ्युपपत्तेः तथा कल्पितम् । न तु इह एवं किंचिदस्ति । यत्तु यज्ञावचरग्रहणं तत् प्रकृतयज्ञाभावात् अनारभ्यवादरूपेण सर्वत्र विदधाति । तच्चैतत् पूषाद्यनुमन्त्रणन्यायेनैव ( ३।३।१।१–२ ) सेत्स्यति इति नार्थोऽधिकरणेन । सूत्रं तु पूर्वस्यैव पदोत्तरत्वेन नेयम् । ( तच्चेत्थम्– ) **ननु** निविदां सामिधेन्यङ्गत्वात् न व्यवधायकत्वं स्यात् । अत आह ‘ गुणानां च परार्थत्वात् ’ इति । तत् व्याख्यातम् । तथाहि ‘ **वदन्ति सामिधेनीवन्निविदोऽग्निसमिन्धनम् । संयुक्तत्वादतस्तासां नाङ्गं प्रकरणेन ताः ॥** ’

**शा**— अयमभिप्रायो भाष्यकारस्य ‘ **अनारभ्यविधानेन सत्यं नाग्न्यर्थता भवेत् । तत्तुल्यं वाक्यमस्त्यन्यत पवमानेष्टिसंनिधौ ॥** ’ तेन च अग्नेरनिष्पन्नस्यैव साधनत्वेन विधानासंभवात् तस्यैव निष्पादयितव्यस्य फलवतः साधनत्वेन अफलानि पवमानहवींषि विधीयन्ते । सप्तमी च ( आहवनीये जुहोति इति ) लक्षणया साध्यत्वमेव प्रतिपादयति । ‘ तप्ते पयसि दध्यानयति ’ इतिवत् । तस्मात् वाक्यात् आधानवत् पवमानहविषां अग्न्यर्थत्वात् नाधानाङ्गत्वम् । अतः सर्वयज्ञार्थानि पात्राणीति ।

**आचार्यस्तु** ( वार्तिककारः ) असत्यपि पवमानहविषां अग्न्यर्थत्वे पात्राणां वाक्येन सर्वयज्ञार्थता सिध्यति, इति वाक्यद्वयपरिकल्पनाक्लेशं न ममृषे । यथाश्रुतयज्ञार्थत्वेऽपि दीक्षणीयार्थस्येव वाङ्नियमस्य आनर्थक्याभावात् न लक्षणाश्रवणेन प्रकरणानुप्रवेशकल्पना न्याय्या । यदि च पवमानेष्टिसंनिधौ पात्राणि यज्ञार्थानि श्रूयेरन् ततोऽनुवादस्य सति संभवे संनिहितगामित्वात् पवमानेष्ट्यनुवादेन विधानात् तास्वेव पात्राणि स्युः, न तु तासामिह संनिधानमस्ति । तस्मात् प्रकरणात् उत्कृष्टानि पात्राणि सर्वार्थानि इति नार्थोऽधिकरणेन । इति ।

**सोम**-- अभिक्रमणोपव्यानयोः आनर्थक्यतदङ्गन्यायेन कर्त्रन्वयसिद्धिमुपजीव्य तद्विशेषे विचारिते संप्रति आनर्थक्यतदङ्गन्यायापवादः क्रियते इति **संगतिः** ।

**वि**— 'वैकङ्कतादिकं पात्रं पवमानहविःष्वथ । यज्ञेऽखिले, प्रकरणादाधानेऽन्वितमस्तु तत् ॥ अनर्थकं तदङ्गेषु हविःष्वेवावतिष्ठते ।, नाधानहविषां साम्यात् वाक्याद्यज्ञेऽखिले भवेत् ॥'

**भाट्ट**— आधाने पवमानेष्टितः प्रदेशान्तरे 'वारणो यज्ञावचरः, वैकङ्कतो यज्ञावचरः' इति श्रुतम् । तत्र यज्ञसाधनत्वेन श्रुतानां वारणादीनां साक्षात् अयज्ञरूपाधाने निवेशासंभवात् आनर्थक्यतदङ्गन्यायेन ( ३।१।९।१८ ) पवमानेष्टिरूपे यज्ञे एव निवेशः । **इति प्राप्ते, भाष्यकारेण** तावत् एवं सिद्धान्तितम् । आधानप्रकरणे पठितेन 'यदाहवनीये जुहोति' इति वाक्येन पवमानहविषां अग्न्यङ्गत्वावगतेः आधानाङ्गत्वाभावेन आनर्थक्यतदङ्गन्यायासंभवात् स्वरूपेण च पवमानेष्टीनां असंनिहितत्वात् वारणवैकङ्कतादीनां सर्वप्रकृतियज्ञाङ्गत्वं सर्वयज्ञाङ्गत्वं वेति । वार्तिककारस्तु न तावदनारभ्यवाक्येन पवमानहविषां अग्न्यङ्गत्वम् । तेन सर्वहोमानुवादेन आहवनीयविधानात् पवमानेष्टीनामेव विशिष्य उपस्थित्यभावे सप्तम्या प्राधान्यलक्षणायां प्रमाणाभावात् । नापि पवमानेष्टिप्रकरणे वाक्यान्तरकल्पना, तदभावेऽपि वारणादीनां सर्वयज्ञार्थत्वोपपत्तेः । **अस्तु वा** आधानप्रकरणे तत्, तथापि तेन आधानाङ्गभूतहोमानां आहवनीयाधिकरणकत्वमेव, न तु अग्न्यङ्गत्वसिद्धिः । सप्तम्या लाक्षणिकत्वापत्तेः । अत एव तत्रत्यं आहवनीयपदं आधानजन्योत्पत्त्यपूर्वविशिष्टाग्निलक्षकमेव, परमापूर्वविशिष्टाग्निरूपमुख्याहवनीयस्य तदानीमसत्त्वात् । **न चैवं** पवमानेष्टिहविःश्रपणादौ गार्हपत्यादिप्रापकाभावः, तत्र मुख्यगार्हपत्याधिकरणत्वबाधेऽपि सति संभवे प्रकृतिदृष्टगौणगार्हपत्यादिबाधे प्रमाणाभावात् । अतश्च सत्यपि वचनान्तरे पवमानेष्टीनां अग्न्यङ्गत्वे प्रमाणाभावात् आधानाङ्गत्वेऽपि वारणादीनां सर्वयज्ञार्थतैव सूपपादनीया । सर्वत्र स्वोद्देश्यस्य अपूर्वव्यभिचारे अपूर्वसाधनत्वलक्षणार्थं प्रकरणानुप्रवेशः । यथा व्रीहीन् इत्यादौ । अत एव तादृशस्थले आनर्थक्यतदङ्गन्यायः । प्रकृते तु यज्ञपदेनैव अव्यभिचरितापूर्वसाधनत्वोपस्थितौ तदर्थं प्रकरणानुप्रवेशाभावात् प्रधानसंबन्धस्यैव अप्रसक्तौ क्व तदङ्गावतारः ? एवं सत्यपि यदि पवमानेष्टिसंनिधौ पात्राणि श्रूयेरन् तदा अनुवादस्य सति संभवे संनिहितगामित्वात् 'व्रीहिभिर्यजेत' इत्यादिवत् भवेत् प्रकृतमात्रविषयत्वम्, न त्वेतदस्ति । पवमानेष्टीनां प्रदेशान्तरस्थत्वात् । अतो वारणादीनां सर्वयज्ञार्थत्वमेव । **प्रयोजनम्**– पवमानेष्ट्यनन्तरं पात्राणां नाशे दर्शाद्यर्थं अनियतानामुत्पत्तिः पूर्वपक्षे, सिद्धान्ते तु वारणादीनामेवेति ।

**मण्डन**— 'वारणं यज्ञमात्राङ्गम् ।'

**शंकर**— 'नेष्ट्यङ्गं वारणादि च ।'

* **वारणाधिकरणापोदितस्य** अङ्गावतारस्य अनुवाक्याधिकरणेन उज्जीवनम् । **सु.** पृ. १०७२.

* **वारयतेः** ( अर्थः ) दूरदेशसंयोगानुकूलक्रिया । **मणि.** पृ. १४०.

* **वारवन्तीयं** साम आधाने गायति । **भा.** ३।३।२।९.. * प्रकृतौ ज्योतिष्टोमे यज्ञायज्ञीयस्य अग्निष्टोमाख्यस्तोत्रसाधनत्वेन अग्निष्टोमसामशब्दवाच्यत्वात् तत्कार्यापत्तिः **वारवन्तीयस्य । सु.** पृ. ८७२.

* **वारवन्तीयादीनां** कर्मान्तरत्वम् । २।२।१२।२७. **मीको.** पृ. ३३२८ 'रेवत्यधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वारवन्तीयसंस्कारः** यदि क्वचित् विधीयेत ततः कथंचित् व्रीहिप्रोक्षणादिषु इव प्रकृतप्रत्ययो भवेत् इति पूर्वाधिकरणवार्तिकोक्तन्यायेन उपादीयमानत्वे प्रकृतग्रहणायोगाशङ्का । **सु.** पृ. ८८१.

* '**वाराही उपानहौ** उपमुञ्चते' इति श्रूयते । तत्र वराहशब्देन आर्यप्रसिद्ध्या सूकर एव ग्राह्यो न कृष्णशकुनिः अग्निचयने । **भा.** १।३।४।८–९.

* 'वराहं गावोऽनुधावन्ति' इति **वाराहोपानद्विध्यर्थवादः । वि.** १।३।५.

* **वारुणः** एककपालः अवभृथे प्रधानम् । साङ्गं च प्रधानं अप्सु कर्तव्यम् । 'अप्स्ववभृथेन चरन्ति' इति । **वि.** ११।२।८, * वारुणः कृष्णः ऐकादशिनेषु एकादशः पशुः अश्वमेधे ज्योतिष्टोमे च । ८।१।७. * **वारुणाः** चतुष्कपालाः पुरोडाशाः बहूनामश्वानां प्रतिग्रहे अश्वप्रतिग्रहेष्ट्याम्, तत्र प्रतिपुरोडाशं कपालचतुष्कभेदः ।



११।४।११।३१–३६. **मीको.** पृ. ७३५ 'अश्वप्रतिग्रहेष्टौ प्रतिपुरोडाशं कपालचतुष्कभेदः' इत्यत्र द्रष्टव्यम् । * '**वारुणेनैककपालेन**' इत्यादिना अपूर्वस्यावभृथस्य विधानम् । **बृ.** १०।७।१५।४७–५०. * 'भूतान्तरानुबद्धेन तोयेनैव विनिर्मिताः । श्रूयन्ते **वारुणे** लोके देहाः स्वच्छाङ्गलक्षणाः ॥' **वा.** ३।१।७।१३ पृ. ७०२. * **वारुणेषु** चतुष्कपालेषु बह्वश्वप्रतिग्रहानुसारेण बहुषु कृतेषु काण्डानुसमयेनैव पुरोडाशधर्माः कर्तव्याः, अन्यथा पुरोडाशनाशप्रसङ्गः । **वि.** ५।२।२. * **वारुणी** आमिक्षा वरुणप्रघासेषु । सा द्विधा प्रदीयमाना दृश्यते । एकदेशः अस्याः आवापस्थाने ( आज्यभागस्विष्टकृतोरन्तरा ) एकदेशः समिष्टयजुरूर्ध्वम् । **भा.** ११।२।१५।६३. * वारुणी इष्टिः अश्वदातुः । ३।४।११।३०–३१. **मीको.** पृ. ७३६ 'अश्वप्रतिग्रहेष्ट्यधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * '**वारुण्याः** निष्कासेन तुषैश्चावभृथं यन्ति' । **शा.** ११।२।१४ । वारुण्या आमिक्षायाः स्थालीलग्नेन शेषेण पिष्टमयमेषप्रकृतिभूतयवानां तुषैश्च इत्यर्थ इति केचित् । पिष्टमयमेषस्य आमिक्षासंस्कारार्थतया प्रधानहविष्ट्वाभावात् पुरोडाशादिलक्षणप्रधानहविरर्थानां तुषैः इत्यन्ये । अविशेषादुभयेषामित्यपरे । **सोम.** ११।२।१४. * 'वारुण्याः निष्कासेन तुषैश्च' इत्यत्र ( ११।२।१५ ) निरपेक्षत्वत्यागः । **वाक्यार्थ.** पृ. २०. * वारुण्याः निष्कासेन पुरोडाशो बाध्यते अवभृथे । **बाल.** पृ. १३२.

* **वारुणाधिकरणम्** ( वारुणी इष्टिः वैदिके अश्वदाने ) । ३।४।१०।२८–२९. **मीको.** पृ. ७३० 'अश्वप्रतिग्रहेष्टिः वैदिके अश्वदाने' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* अस्तु **वारुणाधिकरणाद्युपपादितरीत्या** कुत्रापि योगरूढ्यनङ्गीकारात् समाख्याया यौगिकत्वम्, तथापि नास्याः स्वातन्त्र्येण मानत्वम् । पूर्वपक्षे । **कौ.** ३।३।६।१३ पृ. ३४४.

* **वारुणचतुष्कपालाः** वैदिकाश्वदाने कार्याः । **वि.** ३।४।१४. * **वारुणचतुष्कपालानां** प्रयोगस्तु भेदेन न सह, साहित्यस्याविवक्षितत्वात् । परंतु वार्तिके तन्त्ररत्ने च 'वचनान्तरमेषां साहित्यप्रतिपादकं द्रष्टव्यम्' इत्युक्तं अश्वप्रतिग्रहे । **सोम.** ५।२।१.

* **वारुणचतुष्कपालपुरोडाशेषु** अधिश्रयणाद्यभिवासनान्तेन काण्डेन अनुसमयः । **वि.** ५।२।२.

* **वारुणप्राघासिकैककपालधर्माणां** साकमेधीयैककपाले अतिदेशः । ७।१।५।२३. **मीको.** पृ. २२९ 'अतिदेशः साकमेधीयैककपाले वारुणप्राघासिकैककपालधर्माणाम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वारुणीनिष्कासतुषप्रचारस्य** अर्थकर्मता । **भाट्ट.** ११।२।१४.

* **वार्त्रघ्नौ** आज्यभागौ पौर्णमास्याम् । 'अग्निर्वृत्राणि जङ्घनत्०' 'त्वं सोमासि सत्पतिः०' । **भा.** ३।१।१३।२३.

* **वार्त्रघ्नी** पौर्णमास्यामनूच्येते ( आज्यभागयोर्याज्यानुवाक्ये ) । **वा.** २।२।३।३ पृ. ४७५. * 'वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायाम्' अयं व्यवस्थाविधिः क्रत्वर्थः । **बाल.** पृ. १७. * 'वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायाम्' इति कालार्थः संयोगः । 'तस्मात् कालार्थं एवायं संयोगोऽङ्गाङ्गिकल्पनात् । न्याय्यः पूर्वप्रतीतत्वात् कालो हि दुरतिक्रमः ॥' **वा.** ३।१।१३।२३ पृ. ७४०. * 'वार्त्रघ्नी पौर्णमास्याम्, वृधन्वती अमावास्यायाम्' इत्यत्र मन्त्रलिङ्गविनियोगस्य वाक्यगम्यतया, वाक्यस्य च लिङ्गापेक्षया दुर्बलत्वेन, तद्बलतो लिङ्गं बाधित्वा मन्त्रलक्षणाश्रयस्यान्याय्यत्वम् । **कु.** ३।१।१३।२३ .

**वार्त्रघ्न्यधिकरणम् ।** अनुवाक्याधिकरणम् । पूर्णमासे वार्त्रघ्नीयुगलं अमावास्यायां वृधन्वतीयुगलं च आज्यभागाङ्गम् । वार्त्रघ्नीवृधन्वत्योरनुवाक्ययोः आज्यभागाङ्गत्वम् ॥

**मिथश्चानर्थसंबन्धात् । ३।१।१३।२३॥**

**भाष्यम्**— दर्शपूर्णमासयोः श्रूयते 'वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायाम्' इति । तत्र संदेहः किमनुवाक्याद्वित्वस्य प्रधाने निवेशः, उत

आज्यभागयोरिति । किं तावत् प्राप्तम्? प्रधाने इति । कुतः ? पौर्णमासीसमभिव्याहारादमावास्यासमभिव्याहाराच्च । प्रधानं पौर्णमासी च अमावस्या च, नाऽऽज्यभागौ । तस्मात् साक्षाद्वाक्यात् प्रधानस्येति प्राप्तम् । **तत्र ब्रूमः** । मिथः सह द्वाभ्यामनुवाक्याभ्यां न प्रधानस्य कार्यमस्ति। यत्र तु द्वे अनुवाक्ये, तत्र तयोर्वार्त्रघ्नता वृधन्वत्ता च विधीयते । प्रधाने चैकाऽनुवाक्या । तत्र द्वित्वं वार्त्रघ्नतां वृधन्वत्तां च विदधद्वाक्यं भिद्येत । आज्यभागयोस्तु द्वे प्राप्ते, आग्नेयी सौमी च। तत्र वार्त्रघ्नतां वृधन्वत्तां ( च ) केवलां शक्ष्यति विधातुम् । ननु प्रधानगामित्वेऽपि द्वयोः प्रधानयोर्द्वे अनुवाक्ये आग्नेयस्याग्नीषोमीयस्य चेति । उच्यते । एका वार्त्रघ्नी आग्नेयी, एका सौमी । तथा वृधन्वत्यौ । तत्र या आग्नेयी सा विधीयमाना संबध्येत न सौमी । अमावास्यायां तावन्नास्त्येव सोमः । पौर्णमास्यामप्यग्नीषोमीये एव क्रियमाणे क्रियेत । तत्राप्येकदेवत्या न शक्नुयात् देवताद्वित्वे कार्यं कर्तुम् । अथोभे अग्नीषोमीये प्राप्ते इति। नैकस्य यागस्य द्वाभ्यामनुवाक्याभ्यां प्रयोजनम् । उपादेयत्वेन ह्यनुवाक्या चोद्यते, तत्रैकत्वं विवक्षितम् । तेन तत्रापि न द्वे । तस्मादाज्यभागयोर्निवेश इति । ( अत्र 'अग्निर्वृत्राणि जङ्घनत्' 'त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा' इति वार्त्रघ्नीयुगलम् । तत्र प्रथमा आग्नेयी, द्वितीया सौमी । 'अग्निः प्रत्नेन जन्मना शुम्भानस्तनुवं स्वाम् । कविर्विप्रेण वावृधे ।।' 'सोम गीर्भिष्ट्वा वयं वर्धयामो वचोविदः ' इति वृधन्वतीयुगलम् । अत्रापि प्रथमा आग्नेयी, द्वितीया सौमी । के. )

**वा**—यथासंयोगं निवेशार्थमारम्भः (आज्यभागक्रमाम्नातस्य वार्त्रघ्नीवृधन्वतीमन्त्रचतुष्टयस्य क्रमावगताज्यभागसंबन्धबाधेन निवेशार्थमित्यर्थः ) कुतः संदेह इति । संयोगस्यैव द्वेधा प्रतिभानात् । '**साधारण्येन संयोगः संदिग्धः कालकर्मभिः। विरुद्धः कर्मसंबन्धे न क्रमः कालसंगतौ ।। तुल्यकक्षौ हि संबन्धौ विरुद्धौ न विलक्षणौ । तुल्यत्वं कर्मसंबन्धे वैषम्यं कालसंगतौ ।। नित्यं तत्रानुवाक्याभियोगानामेव संगतिः । न कालयोः क्रमस्तस्मात् प्रधानाङ्गतया हतः ।। गुणानां च परार्थत्वादित्यनेनापि हेतुना । संबद्धं नाऽऽज्यभागाभ्यामनुवाक्याचतुष्टयम् ।।**' तस्मादाज्यभागक्रमं बाधित्वा वाक्येन प्रधानार्थत्वे प्राप्तेऽभिधीयते । '**मिथश्चानर्थसंबन्धादिष्टो नाङ्गाङ्गिसंगमः। न चेहास्त्यनुवाक्यानां प्रधानैरर्थसंगतिः ।। द्वे तावन्नानुवाक्ये स्तः कर्मैकत्वे कथंचन । द्वयोरपि च नैवैते देवते कर्मणोरिह ।।**' अमावास्यायां तावत् सौमी नैव विद्यमानार्था । नह्यमावास्यायां सोमः प्रधानदेवता । पौर्णमास्यामपि अग्निसहितस्य चोदितत्वात् केवलस्य प्रकाशनं महेन्द्राधिकरणे (२।१।५) निराकृतम् । न चाग्नीषोमयोर्द्वयोरपि प्रयोगः, 'पुरोनुवाक्यामन्वाह ' इत्येककर्माणि विवक्षितैकसंख्यत्वात् । अथाप्राप्तमपि द्वित्वं विधीयते, ततो मन्त्रविशेषस्य द्वित्वस्य च विधानात् वाक्यं भिद्यते । आज्यभागयोस्तु कालकृतं व्यवस्थामात्रं सुकरमित्युक्तम् । '**तस्मात् कालार्थ एवायं संयोगोऽङ्गाङ्गिकल्पनात् । न्याय्यः पूर्वप्रतीतत्वात् कालो हि दुरतिक्रमः ।।**'

**शा**— दर्शपूर्णमासयोः आग्नेयः सौम्यश्चेति द्वौ आज्यभागौ विहितौ । ... तत्र संदेहः किमाज्यभागयोः क्रमप्राप्ता मन्त्राः ताभ्यामाच्छिद्य वचनेन प्रधानाङ्गतया विधीयन्ते, उत आज्यभागयोरेव अव्यवस्थया प्राप्तयोर्युगलयोः व्यवस्थामात्रमिति । तदर्थं च अस्मिन् वचने पौर्णमास्यमावास्याशब्दौ कर्मवचनौ, उत कालवचनौ इति । तत्र '**कालस्यास्मरणीयत्वान्न मन्त्रेण प्रयोजनम् । नापि प्रकरणं तस्य तेन नासाविहोच्यते ।। कर्मणः प्रकृतत्वेन मन्त्रापेक्षितयाऽपि च । तत् पौर्णमास्यमावास्याशब्दाभ्यामभिधीयते ।।**' सप्तमी च 'पूर्वेद्युरमावास्यायां वेदिं' इतिवत् प्रधानेऽप्यविरुद्धा । तस्मात् वाक्येन क्रमं बाधित्वा प्रधानार्था मन्त्रा इति । **नैवम्** । यद्यपि कर्मैव शब्दाभ्यां प्रतिपाद्यते, तथापि सप्तमीश्रुत्या न प्रधानवत्त्वसंभवः । 'पूर्वेद्युरमावास्यायाम्' इति तु लक्षणा । न चेह तथा, मुख्यार्थसंभवात् । न चेह सौम्यस्य मन्त्रस्य प्रधानेषु सामर्थ्यमस्ति, सोमस्य प्रधानदेवताया अभावात् । अग्नीषोमीयेऽपि अग्निसहितस्य देवतात्वं न केवलस्य । अमावास्यायां



तु नास्त्येव सोमः । न च वचनादयथार्थत्वम् । लिङ्गं हि वाक्यात् बलीयः । वाक्याद्धि कर्मणः प्राधान्यं लक्षणाश्रयणात्, न श्रुतेः । अथापि विधिवाक्यत्वात् मन्त्ररूपं बाधेत, यदि अबाधेन नोपपद्येत । तत्तु व्यवस्थामात्रमपेक्षितं अल्पं च विदधत् सुतरामबाधेनैव वर्तते, पौर्णमासीगतयोराज्यभागयोः वार्त्रघ्न्यौ, अमावास्यागतयोः वृधन्वत्याविति । यद्वा कालद्वारेण कर्मणि शब्दप्रवृत्तौ कालो मुख्यः, इति तद्द्वारेण व्यवस्था विधीयते, इत्याज्यभागयोरेव मन्त्राः ।

**सोम**-- पूर्वत्र यथा वाक्येन प्रकरणबाधः, एवमिह वाक्येन क्रमबाधस्य प्रसक्तस्य निराकरणात् **संगतिः** । पौर्णमास्यां काले इमौ मन्त्रौ इति व्यवस्थाविधिः । अव्यवस्थायां च प्राप्तायां व्यवस्था विधातव्या । सा चाज्यभागद्वारा प्राप्ता, इति साक्षात् कालोद्देशेन व्यवस्थाविधानेऽपि तत्कालकर्तव्याज्यभागयोर्व्यवस्था पर्यवस्यति । एवं च न विशिष्टोद्देशदोषप्रसङ्गः, पौर्णमास्यमावास्याशब्दयोः स्वयमुद्देश्यसमर्पकत्वात् न परार्थत्वप्रसङ्गश्चेति । **सूत्रार्थस्तु**– मिथोभूतानां युगलभूतानामनर्थसंबन्धात् प्रयोजनाभावात् प्रधानेन असंबन्धः इति ।

**वि** — 'वार्त्रघ्न्यौ पूर्णमासे स्तो वृधन्वत्यौ तु दर्शगे । इति प्रधानशेषत्वमुक्तं किं वा व्यवस्थितिः ।।, क्रमेण प्रापिता मन्त्राश्चत्वारोऽप्याज्यभागयोः । क्रमाद् वाक्यं बलीयोऽत एषां दर्शादिशेषता ।।, न मुख्ये सोम एकोऽस्ति नाधारत्वादिकालयोः । दर्शादेरव्यवस्थित्याऽप्राप्तौ वाक्याद् व्यवस्थितिः ।।'

**भाट्ट**— आज्यभागक्रमे श्रुतानां वार्त्रघ्नीवृधन्वतीमन्त्राणां लिङ्गक्रमौ बाधित्वा 'वार्त्रघ्नी पूर्णमासेऽनूच्येते वृधन्वती अमावास्यायाम्' इति वाक्याभ्यां प्रधानाङ्गत्वम् । इष्यते च लिङ्गस्यापि मन्त्रगतस्य वाक्येनापि ब्राह्मणगतेन बाधः 'यद्यप्यन्यदेवत्यः' इत्यादिना । इति प्राप्ते, अबाधेनोपपत्तौ बाधायोगात् न प्रधानाङ्गत्वम् । नहि सोमदेवत्यस्य मन्त्रस्य लिङ्गाविरोधः संभवति । सोमस्य देवतात्वाभावात् अमावास्यायामधिष्ठानत्वस्याप्यसंभवाच्च । वस्तुतस्तु वाक्यस्यास्य व्यवस्थामात्रकरणे लाघवाच्च प्रधानाङ्गताबोधकत्वम् । व्यवस्था च पौर्णमास्यां यौ आज्यभागौ तत्र वार्त्रघ्नी इत्यादिरूपेण कालकृता, पौर्णमासीसंज्ञकप्रधानाङ्गभूताज्यभागयोर्वार्त्रघ्नी इत्येवं कर्मकृता वेत्यादिविशेषः **कौस्तुभे** द्रष्टव्यः ।

**मण्डन**— 'वार्त्रघ्न्यावाज्यभागयोः ।' १२.

**शंकर**— 'वार्त्रघ्न्यौ न प्रधानाङ्गम् ।' १३.

* **वार्त्रघ्नीवृधन्वत्योः** उभयप्राप्तौ व्यवस्थया विधिः । **बाल.** पृ. १८.

* **वार्ष्टिषेणाः** पञ्चावत्तिनः । **वि.** १०।७।२०.

* **वार्ष्णिः** वर्कुः नाम ऋषिः । 'इति ह स्माह वर्कुर्वार्ष्णिर्माषानेव मह्यं पचत ' इति दर्शपूर्णमासप्रकरणे । **वि.** ६।७।१२.

**वालिसुग्रीवन्यायः** । यथा वालिसुग्रीवयोर्युध्यमानयोर्भगवता श्रीरामचन्द्रेण वालिनि हते वालिनः सुग्रीवापेक्षया दौर्बल्यं मन्यन्ते शूराभिमानिनः इत्येवं प्रकृतेऽप्यूह्यमिति । **साहस्री.** ५८५.

* **वासः** अहतं ज्योतिष्टोमे परिधानार्थमाम्नातम् । **भा.** १२।३।१।१. * वासो दक्षिणा आग्रयणे। तत् अन्वाहार्यधर्मकं स्यात् । **भा.** १०।३।७।३५ । परंतु वाससि पाको न कार्यः । १०।३।९।३७ । अभिघारणमपि न स्यात् । १०।३।१०।३८. * 'वासो ददाति ' 'अनो ददाति ' इत्यत्र 'वासस्– अनस् ' शब्दौ जातिवाचकौ । तथा च ताभ्यां न वान–तक्षणक्रियातिदेशः । आहृत्य वान–तक्षणक्रियामकारयित्वाऽपि पूर्वसिद्धस्य वाससः अनसश्च दानं कर्तुं शक्यम् । **पूर्वपक्षे** तु वानतक्षणादिक्रियां कारयित्वा नवीनं वासः अनश्चोत्पाद्य दानं कर्तव्यं इति । अयमेव **अनोवासोन्यायः** । **वि.** ७।३।११. * वासः परिधत्ते । 'एतद्वै सर्वदेवत्यं वासो यत् क्षौमम् । इति वासः क्षौममेव ग्राह्यं न कार्पासादिकम् । **बाल.** पृ. ५३. * वासः वैसर्जनहोमीयम् । 'वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाति ' इति । **वा.** १।३।२।४. * '**वासांसि** वसीरन्, रक्तानि वसीरन् काषायं ब्राह्मणो माञ्जिष्ठं क्षत्रियो हारिद्रं वैश्यः' स्मार्तोऽयं वाचनिकः कर्तृतः व्यवस्थितविकल्पः । **बाल.** पृ. १५९. * **वाससः** उपरिवाससोऽपि कार्ये 'परिधत्ते ' इति भवति ( प्रयोगः ) । **भा.** १०।४।७।१४.

* वाससः कार्यं गुह्याच्छादनम् । वि. १०।४।८. * ' यथा काष्ठतृणादीनां मारुतादेव शुद्धता । स्मर्यते **वाससो** नैवं तोयप्रक्षालनाद्विना ॥ ' वा. १।३।२।३ पृ. १८९. * **वाससि** अन्वाहार्यस्थानापन्ने अभिघारणस्य बाधः आग्रयणे । १०।३।१०।३८. **मीको.** पृ. ८५५ ' आग्रयणे वासोवत्सयोः अन्वाहार्यस्थानापन्नयोरपि अभिघारणस्य बाधः' इत्यत्र अधिकरणं द्रष्टव्यम्। * वाससि अन्वाहार्यस्थानापन्ने पाकाननुष्ठानमाग्रयणे । १०।३।९।३७. **मीको.** पृ. ८५३ ' आग्रयणे अन्वाहार्यस्थानापन्नेऽपि वाससि पाकस्य बाधः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * वाससि मानोपावहरणे कार्ये ज्योतिष्टोमे । १०।६।२०।७७. **मीको.** पृ. १८३१ ' ज्योतिष्टोमे सोमस्य मानमुपावहरणं च वाससा कर्तव्ये ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

**वाससि मानोपावहरणे प्रकृतौ सोमस्य वचनात् । १०।६।२०।७७ ॥**

प्रकृतौ ज्योतिष्टोमे तावत् सोमस्य मानोपावहरणे वाससि वाससा च भवतः । वाससि मानं वाससा च उपावहरणं स्यात्, ' वाससि मिनोति ' ' वाससा चोपावहरति ' इति वचनात् । उत्तरसूत्रेषु विशेषविवरणं करिष्यते तदर्थं इदं सामान्यत उक्तम् । के.

* **वासोन्तरोत्पादनं** अहर्गणे प्रत्यहमुपावहरणार्थम् । १०।६।२१।७८. **मीको.** पृ. ७६४ ' अहर्गणे प्रत्यहं सोमोपावहरणार्थं पृथक् वासः उत्पादनीयम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * वासोन्तरोत्पादनं सोमोपावहरणकाले एव अहर्गणे, तच्चोपावहरणार्थमेव न मानार्थम् । १०।६।२२।७९-८०. **मीको.** पृ. १२१६ ' उपावहरणाधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वासआदिशब्दानां** आकृतिनिमित्तता । **भाट्ट.** ७।३।९.

* **वासोद्वयं** पुरुषस्य आचारतः प्राप्यते । **भा.** १२।३।१।२.

**वासोवत्सं च सामान्यात् । १०।३।६।३४॥**

वासश्च वत्सश्च तयोः समाहारो वासोवत्सम्, वासोवत्सं आधानदक्षिणानामिव प्राकृत्या अन्वाहार्यदक्षिणाया विकारः । सामान्यात् कार्यसामान्यात् दक्षिणाकार्यस्य ऐक्यात् । आग्रयणे ' वासो दक्षिणा, वत्सः प्रथमजो दक्षिणा ' इत्युक्तम् । प्रकृतौ च ' अन्वाहार्यश्चरुः दक्षिणा ' । सा चोदकेन आग्रयणे प्राप्ता विशेषविहितेन वासोवत्सेन बाध्यते । न समुच्चयः । चकारेण आधानदक्षिणा उपमिता । के.

* **वासोवत्सयोः** आग्रयणे अन्वाहार्यस्थानापन्नयोरभिघारणं नानुष्ठेयम् । १०।३।१०।३८. **मीको.** पृ. ८५५ ' आग्रयणे वासोवत्सयोः० ' इत्यत्र द्रष्टव्यम् । * वासोवत्सयोः आग्रयणे दक्षिणारूपयोः प्राकृतान्वाहार्यधर्माः कर्तव्याः । १०।३।७।३५. **मीको.** पृ. ८५५ ' आग्रयणे दक्षिणारूपयोर्वासोवत्सयोः प्राकृतान्वाहार्यधर्माः कर्तव्याः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वासोवत्सदक्षिणया** आग्रयणे उपदिष्टया अतिदिष्टान्वाहार्यदक्षिणाया बाधः । १०।३।६।३४. **मीको.** पृ. ८५४ ' आग्रयणे उपदिष्टवासोवत्सदक्षिणया० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वासोवत्सन्यायः** । वि. १०।३।७.

* **वासोविन्यासमात्रं** उपवीतं कर्तृगुणो भवति । **भा.** ३।१।११।२१ पृ. ७३३.

* **वासोहिरण्यादीनां** क्रयसाधनत्वम् । वि. ३।१।६.

* **वासना** स्मृतिहेतुः संस्कारः । **रत्नाकरः.** आत्मवादे १२४. * **वासनाः** सांसारिक्यः व्यामोहनिबन्धनाः ( इति बौद्धाः ) । **बृहती.** पृ. ५५.

* **वासनातो** व्यामोहः, व्यामोहात् वासना इति अनादित्वात् बीजाङ्कुरवत् अदोषः ( इति बौद्धाः ) । **ऋजु.** पृ. ५५.

* **वासिष्ठं** धर्मसूत्रं बह्वृचैरेव परिगृहीतम् । **वा.** १।३।७।१५ पृ. २४४. * **वासिष्ठः** ब्रह्मा सत्रे । स्तोमभागान् अधीयान एव वासिष्ठः अत्र, न तु वसिष्ठगोत्रजः । **भा.** ६।६।४।२५. * **वासिष्ठानां** तत्समकल्पानां चाधिकारः सत्रे इति **पक्षः** । वैश्वामित्रस्य तत्समकल्पानामेव सत्राधिकारः नान्येषां ब्राह्मणानामिति **सिद्धान्तः** । ' वैश्वामित्रो होता ' इति विशेषात् ।



' वासिष्ठो ब्रह्मा ' इति तु अर्थवादः । ' रश्मिरसि क्षयाय त्वा ' ( तैसं. ४।४।१ ) इत्यादिस्तोमभागसंज्ञकमन्त्रवेत्ता वासिष्ठोऽत्र, न तु तद्गोत्र इति । **वि.** ६।६।८. * ' वासिष्ठानां नाराशंसो द्वितीयः प्रयाजः तनूनपादन्येषाम् ' अयं अन्यतरप्राप्तौ व्यवस्थया विधिः । **बाल.** पृ. १८.

**वासिष्ठानां ब्रह्मत्वस्य नियमात् । ६।६।४।२४ ॥**

सत्रे ब्राह्मणानामेवाधिकार इति पूर्वं समधिगतम् । तत्रापि वासिष्ठानां तत्समानकल्पानां चैव सत्राधिकारः स्यात् नान्येषां ब्राह्मणानामपि । कुतः ? ' वासिष्ठो ब्रह्मा भवति ' इति ब्रह्मत्वस्य वासिष्ठानां नियमात् इति **पूर्वः पक्षः** । अत्र यद्यपि कुतूहलभिन्नेषु सर्वेषु पुस्तकेषु वाशब्दः पठ्यते तथापि व्यर्थत्वात् कुतूहलानुसारी पाठः स्वीकृतोऽस्माभिः । वाशब्दपाठाग्रहे तु शङ्कानिरासार्थत्वं तस्य स्वीकर्तव्यम् ।

**सर्वेषां वा प्रतिप्रसवात् । २५ ॥**

वासिष्ठानां तत्समानकल्पानां चैव सत्रेऽधिकारः इति पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्यन् **सिद्धान्तमाह** । सर्वेषां सत्रेऽधिकारः स्यात् । ननु तर्हि ' वासिष्ठो ब्रह्मा ' इति कथमुच्यते, तत्राह-प्रतिप्रसवात् ' य एव कश्चन सोमभागमधीयीत स एव ब्रह्मा भवेत् ' इति ब्रह्मत्वस्य प्रतिप्रसवः कृतः । तेन नात्र वसिष्ठगोत्रोत्पन्नस्य वासिष्ठत्वं किंतु स्तोमभागाख्यमन्त्रज्ञानवतो अवासिष्ठस्यापि वासिष्ठत्वं ब्रह्मत्वं च । इदं च स्तोमभागमन्त्रज्ञानस्तुत्यर्थं वचनम् । तस्मात् सर्वेषां ब्राह्मणानां सत्राधिकारः ; तत्रापि विशेषस्तु ' वैश्वामित्रस्य० ' इत्युत्तरसूत्रे वक्ष्यते । स्तोमभागा नाम मन्त्रास्तु ' रश्मिरसि क्षयाय त्वा क्षयं जिन्व ' इत्यादयः तैत्तिरीयके पठ्यन्ते ( तैसं. ४।४।१ ) ।

**वैश्वामित्रस्य हौत्रनियमाद् भृगुशुनकवसिष्ठानामनधिकारः । २६ ॥**

यद्यपि ब्राह्मणानां सर्वेषां सत्राधिकारः तथापि भृगुशुनकवसिष्ठानां सत्रे अनधिकारः न अधिकारः किंतु तद्भिन्नानाम् । कुतः ? ' विश्वामित्रो होता भवति ' इति वैश्वामित्रस्य हौत्रनियमात् । सत्रे वैश्वामित्रस्य हौत्रं तावत् नियतम् । ' वासिष्ठो ब्रह्मा भवति ' इत्यपि नियमो भाति । उभयोश्च असमानकल्पत्वात् विरोधः । तत्र स्तोमभागाख्यमन्त्राध्यायिनः गौणं वासिष्ठत्वं उक्तम्, वैश्वामित्रत्वं तु न गौणम् । तस्मात् वैश्वामित्रतत्समानकल्पानां सत्रेऽधिकारः । वैश्वामित्रभिन्नकल्पानां तु भृगुशुनकवसिष्ठानां न सत्राधिकारः इति **सिद्धान्तः** । **के.**

* **वासुदेवार्जुनयोः** प्रतिषिद्धमातुलदुहितृरुक्मिणीसुभद्रापरिणयनम्, ' उभौ मध्वासवक्षीबौ ' इति सुरापानाचरणं च धर्मातिक्रमः । **वा.** पृ. २०४.

यत्तु वासुदेवार्जुनयोः मद्यपानमातुलदुहितृपरिणयनं स्मृतिविरुद्धमुपन्यस्तं तत्र अन्नविकारसुरामात्रस्य त्रैवर्णिकानां प्रतिषेधः । ' **सुरा वै मलमन्नानां पाप्मा च मलमुच्यते । तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥** ' इति । मधुसीध्वोस्तु क्षत्रियवैश्ययोः नैव प्रतिषेधः, केवलब्राह्मणविषयत्वात् ' मद्यं नित्यं ब्राह्मणस्य ( वर्ज्यं ) ' इति वचनात् । यद्यप्येतत् ' **गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा । यथैवैका तथा सर्वा न पेया ब्रह्मवादिभिः ॥** ' इति, एतदपि ब्रह्मवादिशब्दस्य तच्छीलतद्धर्मतत्साधुकारित्वनिमित्तत्वात् प्रवचनाश्रयणेन ब्रूञ्वदत्योः एकार्थत्वात् ' प्रब्रूयाद् ब्राह्मणस्त्वेषां ' इति नियमात् यस्यैव प्रवचनं स एव तच्छीलः तद्धर्मः तत्साधुकारी वा भवति । तस्मात् ब्राह्मणा एव ब्रह्मवादिनः । तथा च मद्यसामान्यप्रतिषेधाङ्गनिन्दार्थवादे अभिहितम् ' **अकार्यमन्यत् कुर्याद्धि ब्राह्मणो मदमोहितः** । ' इति । तस्मादेतदुक्तं भवति, यथैव एका अन्नसुरा त्रयाणामपि अपेया, तथा सर्वा ब्रह्मवादिभिरपेयेति । इतरथा ' यथैवैका ' इति च ' ब्रह्मवादिभिः ' इति च उभयमपि अनर्थकमेव स्यात् । श्लोकान्तरनिर्देशेनैव वर्णत्रयसंबन्धलाभात् । तेन ' उभौ मध्वासवक्षीबौ ' इत्यविरुद्धम् । तथा चान्यार्थदर्शनं अभ्यनुज्ञावचनं ' यन्माल्यमासीत् तत् पश्चात् पर्यौहत, सुरा वै माल्यम्, ततो राजन्यमसृजत, तस्मात् ज्यायांश्च स्नुषा च श्वशुरश्च सुरां पीत्वा विलपन्तश्चासते, पाप्मा वै माल्यम् । तस्मात् ब्राह्मणः सुरां न पिबेत्

पाप्मना न संसृज्यै इति । तदेतदेतत् क्षत्रियो ब्राह्मणं ब्रूयात् नैनं सुरा पीता हिनस्ति, य एवं विद्वान् सुरां पिबति ' इति ( काटकसं. १२।३४ अक्षरभेदस्तु भूयान् )। मधुसीधुविवक्षयैतत् ।

यत्तु मातुलदुहितृपरिणयनं तयोस्तत् मातृष्वस्रीयादि-संबन्धव्यवधानेऽपि भ्रात्रादिव्यवहारात् अविरुद्धम् । यद्यपि वासुदेवस्वसा सुभद्रा ख्याता, तथापि उत्पत्तौ बलदेववासुदेवयोः एकानंशायाश्च निजत्वान्वाख्यानात् मातृष्वस्रीया सुभद्रा तस्य, 'मातृपितृष्वस्रीया दुहिता वा' इति परिणयनाभ्यनुज्ञानात् विज्ञायते । '**वसुदेवाङ्गजाता च कौन्तेयस्य विरुध्यते । न तु व्यवेतसंबन्धप्रभवे तद्विरुद्धता ॥**' येन हि अन्यत्रैवमुक्तम् '**मम वर्त्मानुवर्तेरन् मनुष्याः पार्थ सर्वशः**' । '**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत् प्रमाणं कुरुते लोकस्तदनु वर्तते ॥**' इति स कथं सर्वलोकादर्शभूतः सन् विरुद्धाचारं प्रवर्तयिष्यति । एतेन रुक्मिणीपरिणयनं व्याख्यातम् । **वा.** १।३।३।७ पृ. २०९-२१० । **सु.**- सीधुः गौडी । त्रिविधसुराव्यतिरिक्तताडादिप्रभवमद्यमात्रनिषेधो गौतमीये यथा केवलब्राह्मणविषयः तथा मानवीयोऽपि त्रिविधसुरानिषेधः ब्रह्मवादिशब्दस्य ब्राह्मणमात्रविषयत्वात् केवलब्राह्मणविषयः । ( एकानंशा नाम यशोदागर्भसंभूता निद्रा अष्टमो गर्भः ) । पृ. १९४.

* **वास्तवी** कार्यापत्तिः द्विविधा, प्रत्यक्षानुमानाभ्याम् । **टुप्.** ९।२।१२।४० पृ. १७३०.

* **वास्तुमयम्** । ( ' वास्तुमयं रौद्रं चरुं निर्वपेत् ' इति निषादस्थपतीष्टौ । ) वास्तु शाकबीजप्रकृतिकं इत्यर्थः । ( वास्तु - वास्तुकं चंदनबटवा = चंदनबथुआ इति मध्यदेशे ) । **वि.** ६।१।१३.

* **वास्तुविद्या** ( दृष्टमूला, तत्रापि वेदमूलकत्वं तत्र तत्र ) । ईदृशा वा विषयः सर्वत्रानुमातव्याः । ईदृशे गृहशरीरादिसंनिवेशे भति एतदेतच्च प्रतिपत्तव्यमिति । **वा.** १।३।१।२ पृ. १६७.

* **वास्तुविद्याविषयः** गृहादिसंनिवेशविशेषः । **सु.** पृ. १३०.

* **वास्तुहोमस्य** वैदिकस्य स्थालीपाकादीनां स्मार्तानां कर्मणां च नामधेयं दर्विहोमशब्दः । ८।४।२।२-३. **मीको.** पृ २०१८ ' दर्विहोमशब्दः स्मार्तानां श्रौतानां च कर्मणां नामधेयम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * **वास्तुहोमे** वैदिके कर्मणि ' यदेकया जुहुयात् दर्विहोमं कुर्यात्, पुरोनुवाक्यामनूच्य याज्यया जुहोति सदेवत्वाय ' इति श्रूयते । अत्र दर्विहोमशब्दः किं गुणविधिः उत कर्मनामधेयं इति संशयः । कर्मनामधेयमिति सिद्धान्तः । **भा.** ८।४।१।१,५-५. **मीको.** पृ. २०१७ ' दर्विहोमन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **वास्तोष्पतीयहोमस्य** ( प्रवासे प्राप्ते ) अग्निहोत्राङ्गत्वं नास्ति । **संकर्ष.** ३।२।३१.

* **वाहीकवत्** । वाहीकोऽतिथिरागतः, यवान्नमस्मै प्रक्रियतामित्युक्ते यो यो वाहीकस्तस्य तस्य यवान्नं क्रियते । **भा.** ७।१।१।८ । ' अर्थस्य त्वविभक्तत्वात् तथा स्यादभिधानेषु ' ( सूत्रांशः ७।१।१।९ ) । **भाष्यम्**- अर्थः वाहीकत्वं तद्देशसंबन्धः, सोऽविभक्तः, सर्ववाहीकेषु अनुगत इत्यर्थः । तन्निमित्तश्च प्रीतिविशेषो न पुरुषनिमित्तः । बहुशो वाहीकाश्चावाहीकाश्च भोजिताः । तत्रान्वयव्यतिरेकाभ्यां ज्ञातमेतत्, देशनिमित्तेयं यवान्नप्रियता, न पुरुषनिमित्ता । ७।१।१।९.

* **विंशत्यादीनां** स्वभावात् स्वाभिधेयसंख्याग्राहित्वमेव, न तु द्रव्यसंख्याग्राहित्वम् । तद्यथा ' विंशतिर्गावो गच्छन्ति ' इति द्रव्यमेव प्रधानम्, बहुवचननिर्देशात् । संख्याप्राधान्ये हि तस्यैकत्वात् गच्छति इति ( एकवचनं ) प्राप्नोति । **टुप्.** ९।४।१।१३.

*' **वि** ' इत्युपसर्गो विविधत्ववाची । **सु.** पृ. १४५१.

* **विकर्षणं** अग्नेः वेतसशाखयाऽवकाभिश्च सकृदेव कर्तव्यम्, ननु प्रतीष्टकं अग्निचयने । ९।१।८।२६-२८. * विकर्षणं गीत्युपायः अन्यतमः । **भा.** ९।२।७।२९.

* **विकलाङ्गस्य** काम्येषु नाधिकारः । पूर्वारब्धेषु नित्येषु तु ईषत्कर्मलोपेऽपि अधिकारः । **वि.** ६।१।१०.

* **विकलाङ्गत्वेन** काम्यत्यागेऽपि प्रत्यवायप्रायश्चित्ते न स्तः । **वि.** ६।३।२.



* **विकल्पः** अग्नीषोमीये पशौ पाशैकत्वपाशबहुत्वाभिधायिनोः मन्त्रयोः । ९।३।५।१५-२०. **मीको.** पृ. २५५३ ' पाशाधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकल्पः अदाक्षिण्य-सर्वस्वदाक्षिण्ययोः उद्गातृप्रतिहर्त्रोः अपच्छेदयौगपद्ये । ६।५।१८।५१-५३. **मीको.** पृ. ४९७ ' अपच्छेदयौगपद्ये अदाक्षिण्यसर्वस्वदाक्षिण्ययोर्विकल्पः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकल्पः अध्रिगुप्रैषगतस्य एकवचनान्तस्य मेधपतिशब्दस्य बहुदैवत्ये पशौ द्विवचनान्तेन मेधपतिशब्देन । ९।३।१३।४२-४३. **मीको.** पृ. ३४० ' अध्रिगुप्रैषगतस्य मेधपतिशब्दस्य० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकल्पः अभिमर्शनमन्त्रस्य आग्नेयविकारेषु । **भा.** ८।२।५।२८, * विकल्पः अर्थैकत्वात् । अन्यतमेन निर्वृत्ते ( कार्ये ) नेतरः प्रयोगमर्हति । ९।२।७।२९. * विकल्पः अश्वमेधे सवनीयपशुत्रयार्थे अध्रिगुप्रैषे अश्वविषये 'चतुस्त्रिंशद्वाजिनः' इति मन्त्रस्य । **वि.** ९।४।३. * विकल्पः अष्टदोषग्रस्तः । ते च दोषाः- १ प्राप्तप्रामाण्यपरित्यागः । २ अप्राप्ताप्रामाण्यस्वीकारः । ३ त्यक्तप्रामाण्यस्वीकारः । ४ स्वीकृताप्रामाण्यपरित्यागः इति प्रयोगद्वयालोचनेन प्रतिवाक्यं चत्वारः इति वाक्यद्वयं अष्टौ दोषाः । **वि.** ४।१।१५. * विकल्पः आधाने साम्नाम् । १०।८।६।९-११. * विकल्पः आधानदक्षिणानां संख्यासु । १२।४।५।९. **मीको.** पृ. ९२२ ' आधाने दक्षिणानां संख्यासु विकल्पः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकल्पः एकार्थानां गुणानामेकस्मिन् कर्मणि व्रीहियवयोः, खादिरादीनां यूपद्रव्याणाम्, बृहद्रथंतरयोश्च । १२।३।४।१०-१५. * विकल्पः एकार्थत्वात् । **भा.** १२।३।१५।३३. * विकल्पः ऐकादशिनादिपशुगणेषु पत्नीसंयाजेषु जाघनीनाम् । १२।४।६।१०-१६. **मीको.** पृ. १३०९ ' ऐकादशिनादिपशुगणेषु पत्नीसंयाजेषु जाघनीनां विकल्पः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकल्पः करणमन्त्राणामेकार्थानाम् । १२।३।१३।२९. **मीको.** पृ. १३६३ ' करणमन्त्राणामेकार्थानां विकल्पः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकल्पः गीत्युपायानां विश्लेषादीनां शाखाभेदेन समाम्नातानाम् । ९।२।७।२९. **मीको.** पृ. १५६८ ' गीत्युपायानां विश्लेषादीनां शाखाभेदेन समाम्नातानां विकल्पः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकल्पः गुणानां एककार्यार्थानाम् । १२। ३।८।१०-१५. * विकल्पः गुरुलघ्वोरपि एकविंशतिसर्ववेदसयोरिव संभवति । **संकर्ष.** ३।२।३६. * विकल्पश्चतुर्होतृपञ्चहोत्रोः मन्त्रयोः पौर्णमासिकदार्शिकयोः सौर्ययागे । **भा.** ८।१।१५।२६. * ' विकल्पश्चाष्टदोषत्वान्न कथंचन युज्यते ' । **वा.** १।३।८।९ पृ. २१८. * विकल्पः ' चित्ताय स्वाहा, चित्तये स्वाहा ' इत्यादिभिः शाखान्तरमन्त्रैः ' चित्तं च स्वाहा ' इत्यादीनाम् । **संकर्ष.** २।४।२२. **मीको.** पृ. १७०२ " चित्ताय स्वाहा, चित्तये स्वाहा ' इत्यादिभिः० " इत्यत्र अधिकरणं द्रष्टव्यम् । * विकल्पः जाघनीनां न समुच्चयः पशुगणेषु पत्नीसंयाजेषु । जाघन्या पत्नीसंयाजनं च न प्रतिपत्तिकर्म किंतु अर्थकर्म । १२।४।६।१०-१६. * विकल्पः न ' इमे वयम्, स्मो वयम् ' इति पाठयोः स्रुगादापनमन्त्रे, कर्मान्तरे सावकाशत्वात् । **संकर्ष.** ४।३।१. " स्रुगादापनमन्त्रे ' इमे वयम्, स्मो वयम् ' इति पाठौ० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकल्पः न ऐकादशिनेषु पशुषु उपयाजहोमे अनेकगुदानाम् । किंतु समुच्चयः । १२।४।४।८. **मीको.** पृ. ११५८ ' उपयाजगुदसमुच्चयन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकल्पः न किन्तु समुच्चयः हौत्राणां मन्त्राणाम्, क्रियमाणानुवादित्वात् । १२।३।१६। ३६-३८ ' हौत्रमन्त्राणां समुच्चयः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकल्पः न द्रव्यस्य कर्मणो वा आग्रयणेषु । **संकर्ष.** ३।१।१६. **मीको.** पृ. ८५५ 'आग्रयणेषु तत्तद्द्रव्यकालयोः नियमो न विकल्पः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकल्पः न न्याय्यः संभवति समुच्चये । पक्षे बाधः स्यात् । **भा.** ५।३।११।२९, * विकल्पः न भवति नानाकार्यत्वात् । ३।१।६।१२ पृ. ६९५ . * विकल्पः न मन्त्राणां जपस्तुत्याशीरभिधानानाम् । किन्तु समुच्चयः । १२।४।१।१-२. **मीको.** पृ. १७४४ ' जपस्तुत्याशीरभिधानमन्त्राणां समुच्चयः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकल्पः न सवनीयपशुतन्त्रप्रसङ्गस्य सवनीयपुरोडाशेषु किंतु पाशुकं तन्त्रं पुरोडाशेषु प्रसज्यते ।

१२।२।१२।३०-३२. 'सवनीयादिन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकल्पः न सोमक्रयणार्थानां दशानां द्रव्याणाम्, किन्तु समुच्चयः । १२।४।३।५-७. 'सोमक्रयन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकल्पः पुरोडाशविभागार्थानां मन्त्राणां प्रयोगे एकार्थत्वात् । दर्शपूर्णमासयोः । भा. १२।३।१३।२९, * विकल्पः प्रकृतौ जाघन्या आज्येन सह । १२।४।६।१६. * विकल्पः प्रायश्चित्तानां दोषनिर्घातार्थानां ऐकार्थ्ये सति । १२।३।५।१६. **मीको.** पृ. २८६७ 'प्रायश्चित्तानां दोषनिर्घातार्थानां विकल्पः' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकल्पः ब्राह्मणविनियुक्तानामेकार्थानां मन्त्राणाम् । **भा.** १२।३।१५।३१-३५. **मीको.** पृ. ३०९८ 'मन्त्राणां ब्राह्मणविनियुक्तानां विकल्पः' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकल्पः याज्याऽनुवाक्यायुगलद्वयस्य ऐन्द्राबार्हस्पत्ये कर्मणि । १२।४।२।३-४. **मीको.** पृ. १३२२ 'ऐन्द्राबार्हस्पत्ये कर्मणि याज्याऽनुवाक्यायुगलद्वयस्य विकल्पः' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकल्पः विष्ण्वादिदेवतासु उपांशुयाजे । १०।८।१७।५१-६१. **मीको.** पृ. १२०२ 'उपांशुयाजे वैकल्पिकी विष्ण्वादिदेवता पौर्णमासीकालश्च' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकल्पः व्यवस्थितः अग्निचयने अकामिनः उख्योऽग्निर्नित्यः, कामिनस्तु वृक्षाग्राद्याहृतः काम्यः इति । १२।४।७।१७-२५. **मीको.** पृ. २८ 'अग्निचयनगतेन ज्वलद्वृक्षाग्राद्याहृतेन काम्येन अग्निना उख्यस्याग्नेर्बाधः' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकल्पः व्यवस्थितः अतिग्राह्याणां पृष्ठ्यव्यहद्वये । **संकर्ष.** ३।३।५. **मीको.** पृ. १८९ 'अतिग्राह्याणां पूर्वत्र्यहे उत्तरत्र्यहे च व्यवस्थितविकल्पः' इत्यत्र अधिकरणं द्रष्टव्यम् । * अन्यतो बलाबलपरिच्छेदाभावे तुल्यबलत्वावगत्या **विकल्पः** स्यात्, सति तु तस्मिन् अष्टदोषविकल्पाङ्गीकरणं न युक्तम् । **सु.** पृ. १५२, ( अपि चेतरेतराश्रये अन्यतः परिच्छेदात् । **भा.** १।३।२।३ पृ. १८२ । 'परस्परविरुद्धे हि विरुद्धाव्यभिचारिवत् । प्रमाणे यत्र दृश्येते तत्रान्येनैव निर्णयः ॥' **वा.** ) विरुद्धात् व्यभिचारिणः विरोधे अन्यतः परिच्छेदो दृष्टान्तितः । पृ. १५३. * एकस्य शास्त्रस्य कर्तव्यता प्रमेया, अपरस्य निवृत्तिः । तस्मात् भिन्नविषयत्वान्न बाध्यबाधकभावः । तस्माद्विकल्पः । न चेदं पूर्वपक्षोक्तिमात्रम्, पारमार्थिकमेव । तथा सत्रभाष्यकारावाहतुः । 'सर्वप्रतिषेधो वाऽसंयोगात् पदेन स्यात्' इति । वचनेन ऋक् प्रतिषिध्यते । आनुमानिकी प्राप्तिः, प्रकरणाम्नानात् । तत्र विकल्पोऽभ्युपगतः, नाऽऽनर्थक्येन प्रमाणेन । आनर्थक्यं हि परित्यागे कारणं नोपादाने । तस्माद्युक्तो विकल्पः । **टुप्.** १।८।१।१ पृ. २०५८. * एकार्थानां विकल्पो वा बाधो वा भवति । **भा.** १०।४।२।३. * एकार्थानां हि विकल्पः न नानार्थानाम् । **रत्न.** १०।८।१।४. * तत्र नाम विकल्पो युज्यते, यत्र इतरेतरनिरपेक्षाः समानार्थे नियुज्यन्ते । **वा.** २।२।६।१९ पृ. ५१८. * तुल्यार्थयोर्हि तुल्यविषययोः विकल्पो भवति, न नानार्थयोः । **भा.** १०।६।१२।३३. * तुल्यप्रमाणवतां च विकल्पः । **टुप्.** ६।५।८।२८. * नासति व्यामोहविज्ञाने विकल्पो भवति । **भा.** १।३।२।३ पृ. १८२. * प्रत्येकं तुल्यार्थाश्च व्रीहियवादयो विकल्पन्ते । वाक्यसंयोगिनो हि ते परस्परनिरपेक्षाः स्वेन स्वेन वाक्येन विनियुज्यन्ते । **वा.** २।२।६।१९ पृ. ५१८. * प्रमाणविपर्ययाभ्यां अयमन्यो विकल्पाख्यः प्रत्ययः इति विकल्पविदः । **बृहती.** पृ. ४३. * यानि परस्परनिरपेक्षाणि व्रीहियवादिवाक्यवत् प्रवर्तन्ते तेषां तुल्यबलत्वात् भवति विकल्पः । **वा.** १।४।२।३ पृ. ३३०. * यस्मिंस्तु साधनोपकारे कार्ये तस्मिन्नेवोपकारे अन्यत् साधनं विधीयते तत्र विकल्पः । यथा 'व्रीहिभिर्यजेत' 'यवैर्यजेत' इति उभयेऽपि तण्डुलनिर्वृत्त्यर्थाः । **भा.** ३।१।६।१२ पृ. ६९६, * यत्रान्यतरदानर्थक्यमापद्यते, कल्पेतापि तत्र विकल्पः, यत्र न केनचिदपि प्रकारेण अर्थवत्ता संभवति । १०।८।१।४, * यत्र पुनः अन्या वचनव्यक्तिरस्ति वाक्यस्य, तत्र न विकल्पो भविष्यति । यथा 'नानुयाजेषु येयजामहं करोति' इति । १०।८।३।६. * विधिपूर्विकेयं प्राप्तिः इति विधिप्रतिषेधयोर्विकल्पः षोडशिवत् । यत्तु अर्थात् प्राप्नोति तत् प्रतिषेधेन बाध्यते । यथा व्रत्येऽहनि मधुमांसाशनम् । **टुप्.** ९।४।२।१७,



* सत्यपि तुल्यकार्यत्वे नास्ति विकल्पः, भिन्नविषयत्वात् । ४।१।१५।४०. * समानविषयत्वे हि विकल्पो भवति । **वा.** २।१।१५।४७ पृ. ४५१. * समुच्चयासंभवे च बाधविकल्पौ, न संभवति समुच्चये । **भा.** १०।३।४।२६. * **विकल्पाः** निरालम्बनाः । नहि ग्राह्यं वस्तु जात्यादिभिः ( जाति-नाम-गुण-क्रियाद्रव्यैः ) योजयितुं शक्यते, तस्य विकल्पैरसंस्पर्शात् । किंतु तद्गृह्णन्तोऽपि विकल्पाः तद्ग्रहाभिमानिनो भासन्ते । तदभिमानानुरोधेन तदालम्बना इत्युच्यन्ते । परमार्थस्तु निरालम्बना एव ( इति बौद्धाः ) । **ऋजु.** पृ. ४०. * विकल्पाः पुनः यथायथं भावाभावविषयाः पञ्चधा । ( १ ) प्रकृतिगता एव ( २ ) विकृत्युपदिष्टपदार्थविषयाः ( ३ ) अप्रकृतिविकृत्यात्मककर्माङ्गोपदिष्टपदार्थविषयाः ( ४ ) विकृतौ उपदिष्टातिदिष्टपदार्थविषयाः ( ५ ) विकृतौ अतिदिष्टमात्रविषया इति । **बाल.** पृ. १६२-६३. * एकस्मिन् कर्मणि भूयोमन्त्रसत्त्वे मन्त्रस्य **विकल्पेन** ग्रहणम् । **संकर्ष.** १।२।३. **मीको.** पृ. २०७० 'भूयोमन्त्राधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * एकस्मिन् कर्मणि शाखाभेदेन मन्त्रनानात्वे विकल्पेन विनियोगः । **संकर्ष.** १।२।२. 'विषमकर्ममन्त्रन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । * ये हि एकस्मिन् कार्ये विकल्पेन साधकाः श्रूयन्ते, ते परस्परेण विरोधिनो भवन्ति । विरोधिनां च न सह प्रवृत्तिः । लोकवत्- यथा 'मत्स्यान् न पयसा समश्नीयात्' इति । यद्यपि सगुणा मत्स्या भवन्ति, तथापि पयसा सह न समश्यन्ते । **भा.** १०।७।१५।६६. * **विकल्पस्य** अष्टदोषग्रस्तत्वेऽपि गत्यन्तराभावात् विकल्पः स्वीकार्यः व्रीहियवयोः, अतिरात्रे षोडशिग्रहे च । तथा हि प्रथमप्रयोगे व्रीहयः स्वीकृताः न यवाः इति यववाक्ये प्राप्तप्रामाण्यपरित्यागः अप्राप्तप्रामाण्यस्वीकारः इति दोषद्वयं प्राप्तम् । कालान्तरे द्वितीयप्रयोगे यवाः स्वीकृताः न व्रीहयः तेन यववाक्ये एव त्यक्तप्रामाण्यस्वीकारः स्वीकृताप्रामाण्यापरित्यागः इति अधिकौ द्वौ दोषौ इति यववाक्ये चत्वारो दोषाः सिद्धाः । तदैव च व्रीहिवाक्ये प्रथमौ द्वौ दोषौ उत्पन्नौ । पुनः कालान्तरे प्रयोगान्तरे व्रीहयः स्वीकृताः न यवाः, तदा व्रीहिवाक्ये तृतीयचतुर्थौ दोषौ उत्पन्नौ इति चत्वारो दोषा व्रीहिवाक्ये सिद्धाः । इति प्रयोगत्रयानुसारेण विचारे प्रतिवाक्यं चत्वारः चत्वारः अष्टौ दोषाः सिध्यन्ति । **वि.** १०।८।३. * 'विकल्पस्याष्टदोषत्वात् न तावत् स्वभ्युपेयता' । तुल्यबलविकल्पो हि तावत् अष्टदोषत्वात् अगतिकगतिन्यायेन क्वचिदेवाश्रीयते । 'एवमेषोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः । विकल्प आश्रितस्तत्र गतिरन्या न विद्यते ॥ सति गत्यन्तरे त्वेतत् नैव कल्पनमर्हति ॥' **वा.** १।३।२।३ पृ. १७४-१७५. * विकल्पस्य चान्याय्यत्वात् । अन्याय्यश्च विकल्पः । तत्र हि अभावः पक्षे । नित्यवच्च 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति श्रूयमाणे यदभावः पक्षे परिकल्प्यते तदश्रुतं भवति, श्रुतं च हीयते । यावांश्च श्रुतस्यार्थस्योत्सर्गे दोषः तावानश्रुतपरिकल्पनायाम् । उभयत्र हि प्रसिद्धिर्बाध्यते । **भा.** ३।३।७।१४ पृ. ८४६, १०।८।१।४, १०।८।८।१६. * विकल्पस्य तुल्यार्थत्वमात्रेण वक्ष्यमाणत्वात् 'एकार्थास्तु विकल्पेरन्०' ( १२।३।१० ) इत्यत्र । **सु.** पृ. ८००. * **विकल्पे** अष्टौ दोषाः । परिसंख्यायां दोषत्रयम् श्रुतहानिः, अश्रुतकल्पना, प्राप्तबाधश्चेति । **वि.** १०।७।१२. * विकल्पे अष्टौ दोषाः- प्रतीतप्रामाण्यत्यागः, अप्रतीताप्रामाण्यकल्पनम्, त्यक्तप्रतीतप्रामाण्यस्य पुनरुज्जीवनम्, अप्रतीतस्य अप्रामाण्यस्य कल्पितस्य त्यागः एतच्चतुष्टयं वाक्यद्वये इत्यष्टौ दोषाः । ( वस्तुद्वयविकल्पे ) । वाक्यत्रये द्वादश । वाक्यचतुष्टये षोडश इत्येवं रीत्या वाक्यानेकत्वे दोषचतुष्टयस्य वृद्धिः । **बाल.** पृ. १५१-१५२, * विकल्पे अष्टौ दोषा भवन्ति परंतु न्यायगम्ये एव विकल्पे ते ते द्रष्टव्याः, न तु ऐच्छिकविकल्पे व्यवस्थितविकल्पे च । पृ. १६१-१६२. * विकल्पे ऐच्छिके अष्टदोषदुष्टत्वम्, न तु व्यवस्थितविकल्पे । **संकर्ष.** ३।३।५. * विकल्पे च पक्षे बाधः । **भा.** २।२।८।२२ पृ. ५३०. * विकल्पे बीजं नैकार्थत्वमात्रम्, द्वारैक्ये सत्येव तस्य तत्प्रयोजकत्वात् । **कु.** ३।१।६।१२ पृ. २५५. * विकल्पे हेतुः एकार्थत्वम्, समुच्चयप्रमाणाभावश्च । प्रथमः १२।

३।४ इत्यत्रोक्तः। द्वितीयस्तु ५।३।११ इत्यत्र **तन्त्ररत्ने** उक्तः। **सोमेश्वरेण** तु निरपेक्षसाधनत्वमपि हेतुरुक्तः स च न युक्तः। **बाल. पृ. १५०–१५१.**

**☸ विकल्पाधिकरणम्** । व्रीहियवन्यायः। गुणानामेककार्याणामेकस्मिन् कर्मणि विकल्पः॥

**एकार्थास्तु विकल्पेरन्, समुच्चये ह्यावृत्तिः स्यात्प्रधानस्य । १२।३।४।१०॥**

**भाष्यम्**— ये त्वेकार्थाः, एककार्यार्थास्ते विकल्पेरन्। यथा व्रीहियवौ, यथा खादिरादीनि यूपद्रव्याणि, बृहद्रथंतरे च। ते विकल्पेरन्। कस्मात्? समुच्चये ह्यावृत्तिः स्यात् प्रधानस्य। एकेन कार्ये कृते यदि द्वितीयः उपादीयते, आवृत्तिः प्रधानस्य भवेत्। सा चायुक्ता। किं कारणम्? प्रधानं हि फलाय वा क्रियते, फलवदुपकाराय वा, नाङ्गाय। सकृत्कृतेन च कृतं कार्यम्। तस्य निरर्थिका आवृत्तिः।

**अभ्यस्येतार्थवत्त्वादिति चेत् । ११ ॥**

**भाष्यम्**-- इति चेत्पश्यसि, अनर्थकोऽभ्यास इति। नानर्थकः। गुणान्तरशासनस्यार्थवत्त्वाय अभ्यस्येत।

**नाश्रुतित्वात् । १२ ॥**

**भाष्यम्**-- नैतद्युक्तम्। कुतः? अश्रुतित्वात् अश्रुतोऽभ्यासः। तस्य प्रमाणं नास्ति, केन करिष्यति। गुणान्तरशासनस्यार्थवत्त्वं वक्ष्यति, 'कालान्तरेऽर्थवत्त्वं स्यात्' (१५) इति।

**सति चाभ्यासशास्त्रत्वात् । १३ ॥**

**भाष्यम्**— अभ्यासशास्त्रं क्वचिद्भवति, 'संसवे उभे कुर्यात्', 'गोसवे उभे कुर्यात्'। अपचितावप्येकाहे श्रूयते 'उभे बृहद्रथंतरे कुर्यात्' इति। तत् समुच्चये सति न स्यात्। तस्मादपि विकल्पः।

**विकल्पवच्च दर्शयति । १४ ॥**

**भाष्यम्**— विकल्प इव दर्शनं भवति 'बैल्वो वा खादिरो वा पालाशो वाऽन्येषां यज्ञक्रतूनां यूपा भवन्ति, अथैतस्य खादिर एव कार्यः' इति वाजपेये खादिरं नियच्छन् अन्यत्र विकल्पमनुवदति। तस्मादपि विकल्पः।

**कालान्तरेऽर्थवत्त्वं स्यात् । १५ ॥**

**भाष्यम्**-- यच्च गुणान्तरशासनस्य आनर्थक्यमिति, नाऽऽनर्थक्यम्। कालान्तरे प्रयोगान्तरे अर्थवत्त्वं तस्यापि भविष्यति। तस्मिन्नर्थवति नाभ्यासस्य प्रमाणम्। ननु विकल्पस्यापि नास्ति प्रमाणम्। न। विकल्पे न किंचिदश्रुतं क्रियते। 'व्रीहिभिर्यजेत' इति श्रुतम्, तैरिज्यते। 'यवैर्यजेत' इत्यपि, तैरपीज्यते एव। एकस्मिन् प्रयोगे कार्याभावान्नोभाभ्यामिज्यते। अथ कस्मान्न मिश्रीयते? नैतद्युक्तम्। एकैकस्य निरपेक्षस्य साधकत्वं श्रुतम्। तत् मिश्रीभावे बाध्येत। तस्माद्विकल्पः।

**शा**-- व्रीहिप्रयोगे तैरेव कार्यसिद्धेः यवानामनुपादानम्। यथा पाशुकैरङ्गैः कार्यसिद्धेः पौरोडाशिकानाम्। ननु च अन्यार्थेनान्यस्य कार्यसिद्धिः प्रसङ्गः '**साधारणं भवेत् तन्त्रं परार्थे त्वप्रयोजकः। एवमेव प्रसङ्गः स्याद् विद्यमाने स्वके विधौ॥**' इति (द्वादशादौ भाष्ये) वचनात्। अत्र तु द्वयोरपि (व्रीहियवयोः) आग्नेयार्थत्वात् नास्ति प्रसङ्गरूपम्। **सत्यम्**, एतावान् विशेषः, तथापि अनेन कार्यसिद्धेः अन्यस्य निवृत्तिः इत्येतावता सामान्येन अत्र (द्वादशाध्याये अस्याधिकरणस्य) **संगतिः**।

**सोम**-- इहापि (आघारे संततत्वादीनामिव) सहसंभवात् समुच्चयः इत्युत्थितेः **संगतिः**। **न** च व्रीहिभिः इति तृतीयया व्रीहीणां साधनत्वमात्रं प्रतीयते, तच्च यवसहितानां साधनत्वेऽपि उपपद्यते, इति कथं नैरपेक्ष्यलाभः इति **वाच्यम्**। यवसहितानां साधनत्वे साधनत्वाय यवसापेक्षत्वेन असमर्थत्वात् 'समर्थः पदविधिः' इति सामर्थ्यापेक्षतृतीयाविभक्तिरेव (व्रीहिभिः इति) न स्यात्, इति तद्बलादेव नैरपेक्ष्यलाभात्। 'अरुणया' इत्यादौ तु द्रव्यपरिच्छेदादिलक्षणद्वारभेदेन तत्र द्रव्यगुणयोः परस्परनैरपेक्ष्यात् उभयतृतीयोपपत्तिः (अरुणया इति एकहायन्या इति च)। किंच 'व्रीहिभिर्यजेत' इत्यनेन पुरोडाशप्रकृतिद्रव्यतया व्रीहयो विधीयन्ते। प्रकृतिद्रव्यं च यावता पुरोडाशो निष्पद्यते तावदपेक्षितम्, न तदेकदेशः। तस्यां चापेक्षायां यववाक्यनिरपेक्षेण व्रीहिवाक्येन विधीयमाना व्रीहयः कृत्स्नमेव पुरोडाशं प्रति प्रकृतिद्रव्यत्वेन संबध्यन्ते। तेन अर्थात् द्रव्यान्तरनिवृत्त्या निरपेक्षत्वं



लभ्यते। तेन एकस्मिन् पुरोडाशनिर्वृत्तिलक्षणोपकारे अन्यनिरपेक्षतया विनियोगेन नित्यवत् आम्नातयोरपि (व्रीहियवयोः) पर्यायेणैव प्रयोगवचनग्राह्यत्वम्, न युगपत् इति न ज्योतिष्टोमवत् अभ्यासप्रसक्तिः। निरपेक्षविधानादेव च मिश्रत्वमपि अनुपपन्नम्।

**वि**— 'समुच्चयो यवव्रीह्योर्विकल्पो वा, ऽत्र पूर्ववत्। आद्यो, मैवं नैरपेक्ष्याददृष्टाभेदतोऽन्तिमः॥'

**भाट्ट**-- यत्र त्ववान्तरकार्यमप्येकं यथा व्रीहियवादौ तत्र समुच्चयग्राहकप्रमाणाभावात् विकल्प एव। न च तत्र प्रयोगविधिना युगपदुभयोपसंग्रहात् समुच्चयः, विनियोगानुसारेणैव हि प्रयोगविधिकल्पनात्। यत्र प्रमाणान्तरेण विनियोगविधिवेलायामवान्तरकार्यैक्यं न निर्णीतं यथा प्रयाजादौ, तत्रैव प्रयोगविधिना एकवाक्योपादानेन साहित्यावगमात् समुच्चयः। शक्यते च प्रयाजादौ कारणतावच्छेदकवैजात्ये कार्यतावच्छेदकवैजात्यस्य औत्सर्गिकत्वात् अवान्तरकार्यभेद एव निर्णीतः इति वक्तुम्। प्रकृते तु पुरोडाशनिष्पत्तिरूपावान्तरकार्यस्य एकत्वावधारणात् प्रथमावगतविनियोगविध्यनुरोधेन प्रयोगविधिनाऽपि विकल्पेनैव ग्रहणम्। **यद्यपि** तेषां अर्थाधिकरणकौस्तुभोक्तरीत्या व्रीहित्वयवत्वादिरूपकरणतावच्छेदकभेदेन आग्नेयत्वादिव्याप्यधर्माणां कार्यतावच्छेदकत्वकल्पनम्, **तथापि** आग्नेयत्वरूप– व्यापकधर्मावच्छिन्ननिरूपितसाधनताकपुरोडाशनिष्पत्तिरूपावान्तरकार्यभेदे प्रमाणाभावात् तदैक्यनिर्णयः स्फुट एव। विशिष्य च तत्तद्वाक्ये तृतीयया निरपेक्षसाधनत्वावगमात् नियमविधिबलेन च स्वेतरसकलनिवृत्तिप्रतीतेः नैकस्मिन्नपि कार्ये व्रीहियवयोः समुच्चयसंभव इति व्यक्तं हेत्वधिकरणे **कौस्तुभे**। अतश्च व्रीहियवस्थले यागावृत्त्या मिश्रीकरणेन वा समुच्चयासंभवात् विकल्पमङ्गीकृत्य एकेनैव तत्कार्यसिद्धौ तत्प्रयोगे इतरस्य प्रसङ्गः। अत एव सर्वसाधारणमस्मदुक्तं प्रसङ्गलक्षणमप्यत्र सुस्थम्। एवं च शास्त्रान्तरपर्यालोचनया यवाद्यनास्कन्दितप्रयोगे एव व्रीह्यादेरङ्गत्वावगमात् तत्प्रयोगे तदितरस्यानङ्गत्वादेव न क्रतुवैगुण्यमपि।

**मण्डन**— 'कार्यैकत्वे स्याद् गुणानां विकल्पः।'

**शंकर**— 'यवव्रीहिविकल्पनम्।'

*** विकल्पगतदोषनिरूपणम्**। तत्र द्वयोर्विकल्पे तावत् अष्टौ दोषाः। तथाहि, व्रीह्यनुष्ठाने यवशास्त्रस्य प्रतीतप्रामाण्यत्यागः, अप्रतीताप्रामाण्यकल्पनं चेति द्वौ दोषौ। तथा पूर्वं यवानुष्ठानसमये व्रीहिशास्त्रे त्यक्तस्य प्रतीतप्रामाण्यस्य पुनरुज्जीवनम्, अप्रतीतस्य चाप्रामाण्यस्य कल्पितस्य त्यागः इति द्वौ दोषौ। तदेवं व्रीह्यनुष्ठाने यवशास्त्रे द्वौ दोषौ व्रीहिशास्त्रे च द्वौ इति चत्वारो दोषाः। एवं यवानुष्ठानेऽपि व्रीहिशास्त्रे द्वौ दोषौ यवशास्त्रे च द्वौ इति चत्वारः। एवं वस्तुद्वयविकल्पे अष्टौ दोषाः। एवं वस्तुद्वयविकल्पे प्रतिशास्त्रं दोषचतुष्कापत्तौ वस्तुत्रयविकल्पे एकशास्त्रवृद्ध्या दोषचतुष्कवृद्धेः द्वादश दोषाः। **ननु** एकस्मिन् युगले दोषाष्टकप्रसक्तौ प्रतियुगलं दोषाष्टकवृद्धेः त्रिविकल्पे त्रीणि युगलानि इति चतुर्विंशतिर्दोषाः स्युः। एवं चतुष्टयविकल्पे षड् युगलानि इति षडष्टकानि अष्टाचत्वारिंशत् दोषाः स्युरिति चेत्, न। स्याद्धि एतत् यदि सामयिकानां प्रामाण्यत्यागानाम्, सामयिकानां चाप्रामाण्यकल्पनानां भेदः स्यात्, न तु तदस्ति। त्रिविकल्पे हि शास्त्रद्वयार्थानुष्ठानसमयद्वयेऽपि अननुष्ठीयमानार्थकतृतीयशास्त्रे कृतः प्रामाण्यत्यागः एक एव, न समयभेदाद्भिन्नः। एवमप्रामाण्यकल्पनमपि न समयभेदात् भिन्नम्। ततश्च त्रिविकल्पे तृतीयशास्त्रे तौ द्वावेव दोषौ, तद्विपर्ययरूपौ च द्वावेव दोषौ इति द्वादशैव दोषाः इति द्विविकल्पप्रसक्तदोषाष्टकात् प्रतिशास्त्रं दोषचतुष्कस्यैव प्रवृद्धेः चतुर्विकल्पे षोडश दोषाः, पञ्चविकल्पे विंशतिः, षड्विकल्पे चतुर्विंशतिः, सप्तविकल्पे अष्टाविंशतिः, अष्टविकल्पे द्वात्रिंशत्, नवविकल्पे षट्त्रिंशत्, दशविकल्पे चत्वारिंशत् अग्निहोत्रद्रव्येषु। एवमुत्तरत्रापि शास्त्रसंख्यातः चतुर्गुणा दोषाः उन्नेयाः। इति विकल्पदोषनिरूपणम्। **बाल. पृ. १५१–१५२.**

*** विकल्पप्रयोजकनिरूपणम्**। अथ द्वादशे अध्याये 'एकार्थास्तु विकल्पेरन् समुच्चये ह्यावृत्तिः स्यात् प्रधानस्य' इत्यधिकरणे (१२।३।४।१०) व्रीहियवादीनां विकल्पे एकार्थत्वं हेतुरुक्तः, तेन न

दृष्टार्थत्वं तत्र हेतुः। द्वादशे एव ( १२।३।५।१६ ) दर्शपूर्णमासात्ययजदोषनिर्घातार्थानां पथिकृतवैश्वानरीयादीनां विकल्प उक्तः, तानि चादृष्टार्थानि इति दृष्टार्थत्वहेतुः तत्राव्यापकः। तथा पञ्चमे 'परेणावेदनाद्दीक्षितः स्यात्' इत्यधिकरणे ( ५।३।११।२९-३१ ) काम्यानामेकार्थानां कर्मणां विकल्पः **तन्त्ररत्ने** उक्तः, तत्रापि अव्यापकः अदृष्टार्थत्वहेतुः। अतः ऐकार्थ्यं सूत्रे हेतुरुक्तः, तत्रापि श्रुतं भाव्यं गृहीत्वा ऐकार्थ्यं बोध्यम्, न तु अश्रुतमवान्तरकार्यं गृहीत्वा, काम्यानामेकफलानां कर्मणां तदभावात्।

**ननु** एवं आग्नेयादीनामैकार्थ्यात् विकल्पापत्तिः। अत्र समादधे **भट्टसोमेश्वरः**। निरपेक्षसाधनत्वमपि विकल्पे हेतुः, 'समर्थः पदविधिः' इति हि स्मृत्या पदसंबन्धिविधिमात्रे सामर्थ्यापेक्षोक्तेः समासो यथा पदयोर्विधिः इति कृत्वा पदविधिः, एवं पदत्वसंपादकः सुब्विधिरपि पदविधिः इति तृतीयादिविभक्तावपि सामर्थ्यं प्रतीयते, तच्च व्यपेक्षारूपम्। विगतापेक्षत्वं च व्यपेक्षा। तेन निरपेक्षसाधनत्वावगमात् व्रीह्यादौ विकल्पः। आग्नेयादीनां तु फलवाक्ये उपादेयत्वात् यजतिरूपैकशब्दोपादानात् द्वंद्ववशाच्च साहित्यविवक्षया निरपेक्षसाधनत्वाभावात् न विकल्पापत्तिः इति।

**तदयुक्तम्**। पञ्चमे हि 'परेणावेदनाद्दीक्षितः स्यात्' इत्यत्र 'दण्डेन दीक्षयति' 'मेखलया दीक्षयति' इति तृतीयया दीक्षायां दण्डादीनां समुच्चय उक्तः, सोऽनुपपन्नः स्यात् तृतीयया निरपेक्षसाधनत्वावगमात्। न च यथा मम एकस्मिन्नपि क्रये निरपेक्षसाधनत्वेन एकहायन्यजादीनां समुच्चयः, तथा दण्डादीनामपि इति वाच्यम्। दृष्टादृष्टार्थत्वेन वैषम्यात्। अजादीनां हि एकहायन्यसिद्धानत्यतिरेकरूपदृष्टार्थत्वात् नैकहायनीमात्रेण क्रयो निराकाङ्क्षो भवति इति युक्तः समुच्चयः, दण्डादीनां तु दीक्षाभिव्यञ्जकत्वम्, इष्टेस्तु तदुत्पादकत्वम्, दीक्षा चादृष्टरूपा, अतः तदुत्पादकेन नाभिव्यञ्जकाकाङ्क्षानिवृत्तिः। अभिव्यञ्जकानेकत्वेऽपि च नान्यतरेण अन्यतराकाङ्क्षानिवृत्तिः। अतो दण्डादिसमुच्चयसिद्धान्तभङ्गापत्तेः न निरपेक्षसाधनत्वं विकल्पहेतुः। अतः आग्नेयादीनां ऐकार्थ्यात् विकल्पापत्तिः मिश्रोक्तरीत्यैव समाधेया। तर्हि 'परेणावेदनात्' इत्यत्र **तन्त्ररत्ने** उक्तम्– ऐकार्थ्यवत् समुच्चयप्रमाणाभावोऽपि विकल्पहेतुः। समुच्चयप्रमाणं च युगपत् सर्वाङ्गप्रधानग्राही प्रयोगवचनः। स च आग्नेयादिषु एकशब्दोपादानद्वंद्वगर्भोऽस्ति इति न समुच्चयप्रमाणाभावः। व्रीहियवादौ तु दृष्टार्थे अन्यतरेणैव तत्सिद्धेः नासौ समुच्चयेन गृह्णाति इति समुच्चयप्रमाणाभावः। काम्यानां तु एकार्थानां कर्मणां एकप्रयोगवचनाभावादेव समुच्चयप्रमाणाभावः। एवं द्वादशे दर्शपूर्णमासातिपत्त्येकनिमित्तकानां पथिकृतवैश्वानरीयादीनां एकप्रयोगवचनाभावादेव समुच्चयप्रमाणाभावः। दण्डादिषु तु एकप्रयोगवचनसत्त्वात् अदृष्टार्थत्वेन च व्रीहियवन्यायाभावात् ( १२।३।४।१०-१५ ) समुच्चयप्रमाणमेवास्ति, इति युक्तः समुच्चयः, इति सर्वं सुस्थम्। इति विकल्पप्रयोजकनिरूपणम्। बाल. पृ. १५०-१५१.

* **विकल्पभेदा निरूप्यन्ते**। तत्र प्रथमं तावत् विकल्पः सर्वोऽपि **त्रिविधः** न्यायगम्यः, वाचनिकः, ऐच्छिकश्चेति। तत्राद्यः **अष्टविधः**– जात्योः, द्रव्ययोः, गुणयोः, क्रिययोः, जातितदभावयोः, द्रव्यतदभावयोः, गुणतदभावयोः, क्रियातदभावयोश्चेति। [ १ ] तत्र जात्योर्विकल्पः क्रत्वर्थो यथा– व्रीहियवयोः। इह च यद्यपि द्रव्यविकल्पोऽप्यस्ति, तथापि द्रव्यपरिच्छेदरूपव्यापारवत्त्वाख्यकरणत्वस्य जातौ संभवात् द्रव्यलक्षणां विना जात्योरेव करणत्वोपदेशे तयोरेव आदौ विकल्पो भवति। जातेः करणत्वान्यथाऽनुपपत्त्या द्रव्यकरणत्ववत् जातिविकल्पान्यथाऽनुपपत्त्या द्रव्यविकल्पः प्रसूतो भवन् न स्वातन्त्र्येण व्यपदिश्यते इति। [ २ ] द्रव्ययोर्विकल्पः क्रत्वर्थो यथा– दर्शपूर्णमासयोः अग्नीषोमीयैकादशद्वादशकपालयोः शाखाभेदेनाम्नातयोर्विकल्पः शाखान्तराधिकरणे ( २।४।२।८-३३ ) उक्तः। यौगिकानां हि द्रव्यवाचिता उक्ता 'सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते' ( वा. पृ. ६७५ ) इति। [ ३ ] गुणयोर्विकल्पः क्रत्वर्थो यथा– 'कृष्णसारङ्गः अग्नीषोमीयः' 'लोहितसारङ्गः अग्नीषोमीयः' इति। [ ४ ] क्रिययोर्विकल्पः क्रत्वर्थो यथा– ज्योतिष्टोमे बहिष्पवमानं



प्रसर्पतां अन्योन्यकच्छधारणे 'यदि प्रस्तोताऽपच्छिन्द्यात् ब्रह्मणे वरं दद्यात्, यदि प्रतिहर्ता सर्ववेदसं दद्यात्, यद्युद्गाता अदक्षिणो यज्ञः परिसमाप्य तेन पुनर्यजेत यत् पूर्वस्मिन् दास्यन् स्यात् तद् दद्यात्' इति विशिष्टदानादिनैमित्तिकविधीनां युगपदपच्छेदे विकल्पः इति षष्ठे ( ६।५।१७-२० ) उक्तम्। [ ५, ६ ] जातितदभावयोः द्रव्यतदभावयोश्च विकल्पयोः क्रत्वर्थयोः उदाहरणे यथा– वाजसनेयिनाम् 'ऋतु-नक्षत्र- संभार- चातुःप्राश्य-जागरण- इध्म-पूर्वार्धान्वारम्भण-सार्पराज्ञीर्वा कुर्यात्' इत्याधाने श्रुतम्। तदिह नक्षत्रशब्देन कृत्तिकाद्युक्तेः जातितदभावयोर्विकल्पः। संभार-चातुःप्राश्यशब्दयोश्च यौगिकत्वेन द्रव्यवाचित्वात् द्रव्यतदभावयोर्विकल्पः। अत्र वाशब्दश्रवणेऽपि न वाचनिको विकल्पः, किंतु विधिनिषेधवशात् न्यायत एव इति वाशब्दोऽनुवादः। [ ७ ] गुणतदभावयोर्विकल्पः क्रत्वर्थो यथा– दार्शिकवेदिमाने वाजसनेयिनामेव वेदिपरिमाणविशेषतदभावयोः, 'व्याममात्रा पश्चात् स्यादित्याहुः' इति 'नात्र मात्राऽस्ति' इति च शतपथात्। [ ८ ] क्रियातदभावयोर्विकल्पः क्रत्वर्थो यथा– 'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाति' इति।

तदेवमष्टविधो न्यायगम्यो विकल्पः। सोऽयं न्यायगम्यो विकल्पः क्रत्वर्थपुरुषार्थभेदेन **द्विविधः**। तत्र अष्टविधोऽपि क्रत्वर्थः उदाहृतः एव। स च अष्टविध एव जातिद्रव्ययोः, जातिगुणयोः, जातिक्रिययोः, द्रव्यगुणयोः, द्रव्यक्रिययोः, गुणक्रिययोः इति द्विकविषयाः षट्। तथा जातिद्रव्यगुणानां जातिद्रव्यक्रियाणां जातिगुणक्रियाणां द्रव्यगुणक्रियाणां चेति त्रिकविषयाश्चत्वारो भेदाः, तथा चतुष्टयविषय एकः इत्येकादशभेदाः न संभवन्ति ऐकार्थ्याभावात्। पुरुषार्थस्य तु एतेऽपि एकादश संभवन्ति। पूर्वोक्ताश्चाष्टौ इति **एकोनविंशतिविधोऽसौ**। [ १ ] तत्र न्यायगम्यः पुरुषार्थजात्योर्विकल्पो यथा– 'वानस्पत्येन ब्रह्मवर्चसकामस्य प्रणयेत्' इति वाजसनेयिनामुक्तम्। 'कांस्येन ब्रह्मवर्चसकामस्य प्रणयेत्' इति तु चतुर्थे उदाहृतम् ( ४।३।२।४ भाष्ये )। अत्र हि जातिरेव फलार्थं विधीयते। यथा हि 'औदुम्बरो यूपो भवति' इत्यत्र अतिदेशेन 'यस्य पर्णमयी जुहूर्भवति' इत्यत्र च 'जुह्वा जुहोति' इत्यनेन द्रव्यप्राप्तेः जातिमात्रं क्रत्वर्थत्वेन विधीयते, तथा कांस्यवानस्पत्यवाक्ययोरपि 'चमसेनापः प्रणयेत्' इत्यनेन आकारविशिष्टद्रव्यप्राप्तेः जातिरेव फले विधीयते। अत एव वानस्पत्यकांस्यमये चमसाकारे एव पात्रे कर्तव्ये। तदुक्तं तन्त्ररत्ने चतुर्थे 'नैमित्तिके विकारत्वात्' इत्यधिकरणे ( ४।३।२।४ ) 'ननु प्रणयने विशेषत एव चमसो विहितः। सत्यम्। न तु स कांस्यविधिना विरुध्यते। आकारवाची हि चमसशब्दः, न प्रकृतिविशेषमपेक्षते। शक्यते हि कांस्येनापि तदाकृतिकं पात्रं संपादयितुम्, सामान्यविहितं होमार्थं वारणमेव तेन विरुध्यते' इति ग्रन्थेन। तस्मात् जात्योरेवात्र एकस्मिन् फले विहितयोः न्यायगम्यो विकल्पः इति। [ २ ] न्यायगम्यः पुरुषार्थद्रव्यविकल्पो यथा–'गोदोहनेन पशुकामस्य प्रणयेत्' इतिवत् यौगिकेनैव शब्देन द्रव्यान्तरस्य पशुफलार्थत्वेन विहितस्य विकल्पो भवति। [ ३ ] न्यायगम्यः पुरुषार्थगुणविकल्पो यथा– 'यदि कामयीत वर्षुकः पर्जन्यः स्यात् नीचैः सदो मिनुयात्' इति वृष्ट्यर्थविहितनीचैर्मानाख्यगुणेन सह वृष्ट्यर्थविहितगुणान्तरस्य विकल्पः इति। [ ४ ] न्यायगम्यः पुरुषार्थक्रियाविकल्पो यथा– एकार्थानां काम्येष्टीनाम्। [ ५-७ ] न्यायगम्यस्य पुरुषार्थजातितदभावयोः, द्रव्यतदभावयोः, गुणतदभावयोश्च विकल्पस्य उदाहरणानि मृग्याणि। [ ८ ] पुरुषार्था हि जातिद्रव्यगुणाः गुणफलसंबन्धेष्वेव संभवन्ति, तेषां च विकल्पसिद्ध्यर्था निषेधाः यद्यपि अभागिप्रतिषेधसूत्रे (१।२।१।५) वार्तिककृता वैयर्थ्यान्निरस्ताः, तथापि यत्र तद्विषयाः गुणफलसंबन्धविधयः सामान्यतः प्रवृत्ताः, सामान्यत एव च तन्निषेधाः, 'अभिचारमहीनं च कृत्वा चान्द्रायणं चरेत्' इति काम्याहीननिषेधवत् तत्र पुरुषार्थस्यापि जात्यादित्रयस्य विकल्पः संभवति। वार्तिककृदुक्तं तु वैयर्थ्यं निषेधस्य अननुष्ठानमात्रफलकत्वाभ्युपगमेन। तस्य तु दोषार्थत्वात् वस्तुतो न वैयर्थ्यम्। निषेधाभावे हि काम्यस्य कामना-

यामपि सत्यां ऐच्छिकाननुष्ठानसिद्धावपि काम्यानुष्ठाने दोषो न सिध्येत् इति तदनुष्ठाने दोषबोधनेन अर्थवान् निषेधः, यथा ‘ अभिचारमहीनं च कृत्वा चान्द्रायणं चरेत् ’ इति काम्यानामहीनानां निषेधः। तादृशानि तु पुरुषार्थजात्यादित्रयविषयाणि उदाहरणानि अन्वेष्याणि। [ ८ ] न्यायगम्यः पुरुषार्थक्रियातदभावयोस्तु विकल्पो यथा– अहीनविकल्प एवोक्तः। उदाहरणान्तरमपि यथा– पिण्डपितृयज्ञे ‘ जीवत्पितृकस्य होमान्तं जीवत्पितुरनारम्भो वा ’ इति पिण्डपितृयज्ञो विहितो निषिद्धश्च। तत्र पुरुषार्थक्रियातदभावयोर्विकल्पो न्यायगम्यः। न चात्र वाचनिको विकल्पो वाशब्दात् इति भ्रमितव्यम्, विहितप्रतिषिद्धस्य न्यायादेव विकल्पो भवति षोडशिग्रहणाग्रहणयोरिव इति वाशब्दस्य अनुवादत्वादिति।

एवं जातिद्रव्यादीनां एकादश ये विकल्पभेदाः तेषामपि उदाहरणानि अन्वेष्याणि। एवं न्यायगम्यः एकोनविंशतिविधो विकल्पो निरूपितः। एवमेव वाचनिकस्यापि विकल्पस्य एकोनविंशतिर्भेदा ज्ञेयाः।

तत्र तु क्रत्वर्थजातिविकल्पे वाचनिके उदाहरणं मृग्यम्॥ क्रत्वर्थद्रव्यविकल्पस्तु वाचनिको यथा– ‘ य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा ’ इति। न चायं न्यायगम्यः ‘होमान्तं जीवत्पितुरनारम्भो वा ’ इतिवत् वाशब्दस्तु अनुवादः इति वाच्यम्। तत्र हि एकवाक्योपादानाभावात् समुच्चयासंभवाच्च न्यायाद्विकल्पः। इह तु इष्टिपशुसोमानां उद्देश्यानां भेदात् एकवाक्यान्तर्गत्यसंभवेऽपि इष्ट्युद्देशेन कालद्वयविधेरेव पशूद्देशेन सोमोद्देशेन च कालद्वयविधेः प्रयोगविधित्वेन ‘ द्वादशाहेन प्रजाकामं याजयेत् ’ इत्यनेकगुणफलान्वयविधिवत् अनुत्पत्तिविधित्वे अपि अनेकगुणविधिनिमित्तकवाक्यभेदाभावात् एकवाक्योपादानेन समुच्चयप्रसक्तौ वाशब्देन वाचनिक एव विकल्पः। अत एव वाशब्दोपादानाभावे दृष्टार्थयोरपि गुणयोः एकवाक्योपादानात् समुच्चय उक्तो वैश्वानराधिकरणे वार्तिककृता ( पृ. ३५१ ) ‘यदि चैकं वाक्यं भवेत् ततः सर्वविशिष्टैकभावनाविधानात् न विकल्पः स्यात्’ इति। प्रयोगविधित्वाच्च वाक्यभेदपरिहारसंभवे तदर्थं पौर्णमास्यमावास्यापदाभ्यां पर्व लक्ष्यते, ततश्च ऐच्छिको विकल्पः ‘ पशुना यजेत ’ इत्यत्र ‘ अयं वा पशुरयं वा पशुः ’ इतिवत् इत्यभिधानं मूलस्य उपेक्ष्यम्॥ वाचनिकः क्रत्वर्थगुणविकल्पो यथा– ‘ युग्मा अयुग्मा मुष्टीर्लुनाति ’ इति। इहापि न न्यायात् विकल्पसिद्धिः, युजां चायुजां च मुष्टीनां एकवाक्योपादानेन समुच्चयप्रसक्तौ वाशब्देन वाचनिकत्वादेव विकल्पस्य। अत्र हि ‘ बर्हिर्लुनाति ’ इति विहितेऽपि लवने कालादिप्रयोगविधिचिह्नाभावेऽपि च युगयुक्पदलक्षितोभयविशिष्टैकविकल्पविधानान्न वाक्यभेदः यथा ‘ रथंतरं वा ’ इत्यत्र वक्ष्यते॥ वाचनिकः क्रत्वर्थक्रिययोः विकल्पो यथा– ‘ रथंतरं पृष्ठं भवति ’ ‘ बृहत् पृष्ठं भवति ’ इति वाक्यद्वयविहितपृष्ठस्तुत्योः विकल्पमात्रं रथंतरं वा पृष्ठं भवति, बृहद्वा पृष्ठं भवति इति वाशब्दलक्षितैकविकल्पविधिः। **ननु** पृष्ठद्वयोद्देशे वाक्यभेदः स्यात्। न। नैकत्वं विवक्षितम्, न द्वित्वम्, किंतु पृष्ठमात्रमुद्दिश्य विकल्पविधौ विधेयविकल्पसामर्थ्यादेव पृष्ठद्वयलाभादिति क्रत्वर्थयोस्तु जातितदभावयोः द्रव्यतदभावयोः गुणतदभावयोः क्रियातदभावयोश्च ये वाचनिका विकल्पाः, तदुदाहरणानां एवंविधो विषयः– यत्र विकृतौ आतिदेशिकजात्यादिचतुष्टयस्य निषेधा वाशब्दयुक्ताः श्रुताः, प्राकृतजात्याद्येव वा वाशब्दयुक्तं श्रुतम्, तत्रासौ चतुर्विधोऽपि विकल्पः संभवति। न च तत्र न्यायाद्विकल्पसिद्धिः, वाशब्दार्थविध्यभावे हि औपदेशिकेन निषेधेन ‘ न तौ पशौ करोति ’ इतिवत् प्राकृतस्य जात्यादेर्बाध एव स्यात्, अतो न्यायादसिध्यन् वाचनिको विकल्प इति। तादृशानि चोदाहरणानि मृग्याणि॥ एवं जातिद्रव्यादीनां एकादश ये विकल्पाः तेषामपि वाचनिकानां उदाहरणानि अन्वेष्याणि। यथा ‘ पयसा पायसेन वा श्राद्धं कुर्वीत ’ इत्यादीनि॥ पुरुषार्थजात्योः, पुरुषार्थद्रव्ययोः, पुरुषार्थगुणयोः, पुरुषार्थक्रिययोर्विकल्पे उदाहरणानि। तत्र पुरुषार्थजातिविकल्पो वाचनिको यथा– ‘ तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा। दत्तेन मासं प्रीयन्ते विधिवत् पितरो नृणाम्॥ ’ इति॥ पुरुषार्थद्रव्यविकल्पो वाचनिको यथा– मनुः–– ‘ कुसूलधान्यको वा स्यात्



कुम्भीधान्यक एव वा। त्र्यहैहिको वाऽपि भवेदश्वस्तनिक एव वा॥ ’ इति॥ पुरुषार्थगुणविकल्पो वाचनिको यथा–– मनुः– ‘षट्कर्मैको भवत्येषां त्रिभिरन्यः प्रवर्तते। द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति॥ ’ इति॥ पुरुषार्थक्रियाविकल्पो वाचनिको यथा– ‘ चतुर्थकालिको वा स्याद् यद्वाऽप्यष्टमकालिकः। चान्द्रायणविधानैर्वा शुक्ले कृष्णे च वर्तयन्। पक्षान्तयोर्वाऽप्यश्नीयात् यवागूं क्वथितां सकृत्॥ ’ इति॥ पुरुषार्थजातितदभावयोः, पुरुषार्थद्रव्यतदभावयोः, पुरुषार्थगुणतदभावयोः, पुरुषार्थक्रियातदभावयोश्च वाचनिकविकल्पे तु उदाहरणानि मृग्याणि। स च यत्र विधिनिषेधौ भिन्नौ स्तः, तत्र न्यायादेव विकल्पः सिद्धः, न वाचनिकः, किंतु यत्र पुरुषार्थजात्यादिविधिरेव वाशब्दयुक्तः श्रुतः तत्र भवति वाचनिकः॥

एवं जातिद्रव्यादीनां एकादश ये विकल्पभेदाः तेषामपि पुरुषार्थविषयाणां वाचनिकानां उदाहरणानि अन्वेष्याणि, यथा ‘ पयसा पायसेन वा श्राद्धे दत्तेन मासं तृप्तिः पितृणाम् ’ इत्यादीनि॥

ऐच्छिकोऽपि विकल्पः क्रत्वर्थविषयः एकोनविंशतिविधः पुरुषार्थन्यायगम्यविकल्पवत् क्रत्वर्थवाचनिकविकल्पवत् पुरुषार्थवाचनिकविकल्पवच्च। तत्र [ १ ] क्रत्वर्थविषययोर्जात्योः ऐच्छिको विकल्पो यथा–‘ब्रह्मणे ब्राह्मणमालभेत ’ इत्यादौ कौण्डिन्यादिजात्योः। इह यद्यपि ब्राह्मणत्वादिजातेरेवाङ्गत्वं न कौण्डिन्यत्वादिजातेः, तथापि क्रतूपकारकत्वमात्रेण क्रत्वर्थत्वव्यवहारः। सन्ति हि ईदृशा अपि अस्मिन् शास्त्रे व्यवहाराः, तदुक्तं बलाबलाधिकरणवार्तिके ‘ पशुकामप्रयोगे च क्रमेण चमसाङ्गता। श्रौतात् गोदोहनात् तत्र चमसस्य निराक्रिया॥ ’ इति ( वा. पृ. ८३८ ) एवमुत्तरत्र॥ [ २ ] क्रत्वर्थविषयो द्रव्ययोः ऐच्छिको विकल्पो यथा–‘ पशुना यजेत ’ इत्यत्र उपादेयविशेषणस्य एकत्वस्य विवक्षितत्वात् मन्त्रवर्णेन छागनियमेऽपि ‘ अयं वा छागः, अयं वा ’ इत्यैच्छिको द्रव्यविकल्पः। एवं ‘ आग्नेय्या आग्नीध्रमुपतिष्ठते ’ इत्यत्र प्रकृता आग्नेयी ग्राह्या इति तार्तीयन्यायेन ( ३।२।८।२१–२४ ) सिद्धेऽपि ‘ इयं वा प्रकृता आग्नेयी ऋक्, इयं वा ’ इत्यैच्छिक एव ऋग्द्रव्यविकल्पः॥ [ ३ ] क्रत्वर्थविषययोर्गुणयोरैच्छिको विकल्पो यथा– ‘ गौरनुबन्ध्यः ’ इत्यादौ निर्गुणोपादानायोगात् यत्किंचिद्गुणोपादाने प्रसक्ते ‘ श्वेतो वा, रक्तो वा ’ इत्यैच्छिक एव गुणविकल्पः। तथा अहीने अनेकयजमानके येन केनचिद्यजमानेन शुक्रान्वारम्भः, औदुम्बरीसंमानं च कार्यं इति द्वादशे उक्तं ( १२।४।१२।३३ )। [ ४ ] क्रत्वर्थविषयः क्रिययोरैच्छिको विकल्पो यथा– ‘ वर्षासु रथकार आदध्यात् ’ इति अत्रैवर्णिकस्य आधाने विहिते सति ज्ञानं विना तदनुष्ठानायोगात् ज्ञानेऽपि आक्षिप्ते पुस्तकपाठादिजन्यानां ज्ञानानां ऐच्छिको विकल्पः॥ [ ५ ] क्रत्वर्थस्य तु जात्यादेस्तदभावस्य च ऐच्छिको विकल्पः नित्यकर्मणि शक्ताशक्तविषयत्वेन व्यवस्थितः संभवति। षष्ठे ( ६।३।१।१–७ ) नित्यकर्मणि अशक्याङ्गत्यागस्य स्थापितत्वात्॥

एवं एकादश ये जातिद्रव्यविषया विकल्पाः, तेषामपि क्रत्वर्थविषयाणामैच्छिकानां उदाहरणानि अन्वेष्याणि। श्राद्धे हि पयःपायसादि भिन्नैर्वाक्यैर्विहितम्, तच्च लोकतो भोजने समुच्चयेनापि क्लृप्तं विकल्पेनापि यथाप्राप्तं च विधीयते इति न नित्यं समुच्चयः, नापि नित्यं विकल्पः इति हेमाद्रौ उक्तं युक्तं च। अतः ऐच्छिके क्रत्वर्थजातिद्रव्यादिविकल्पे तदुदाहरणम्। पुरुषार्थजात्यादिविकल्पभेदा अपि ऐच्छिका **एकोनविंशतिरेव**। तत्र यद्यपि तुल्यफलानां जात्यादीनां न्यायगम्यो विकल्पो न तु ऐच्छिकः, तथापि भिन्नफलानां अन्यतरफलकामनायां ऐच्छिको विकल्पो भवति। तेषां तूभयफलकामनायां समुच्चयोऽपि भवति, अतो वक्ष्यमाणानि तद्विषयाणि समुच्चयोदाहरणान्येव अन्यतरफलकामनायां विकल्पोदाहरणानि ज्ञेयानि। पुरुषार्थजातितदभावादीनां तु चत्वारि उदाहरणानि समुच्चयेन संभवन्ति विकल्पविषयाणि, तान्युच्यन्ते। [१] इन्द्रियार्थदधित्वतदभावयोः ऐच्छिको विकल्पः। [ २ ] तथा ‘गोदोहनेन पशुकामस्य प्रणयेत् ’ इति पश्वर्थविहितगोदोहनद्रव्यतदभावयोः ऐच्छिको विकल्पः। [ ३ ] तथा ‘ यदि कामयीत वर्षुकः पर्जन्यः स्यात् नीचैः सदो मिनुयात् ’ इति वृष्ट्यर्थविहितनीचस्त्वतदभावयोः ऐच्छिको

विकल्पः । [ ४ ] तथा 'चित्रया यजेत पशुकामः' इति पश्वर्थविहितचित्रेष्टिक्रियातदभावयोः ऐच्छिको विकल्पः इति ॥

एवं ऐच्छिकविकल्पस्य एकोनविंशतिः क्रत्वर्थविषयाः एकोनविंशतिश्च पुरुषार्थविषयाः इत्येवं **अष्टत्रिंशत्** ऐच्छिकविकल्पभेदाः, पूर्वोक्ताश्च **सप्तविंशतिः** न्यायगम्यविकल्पभेदाः, **अष्टत्रिंशच्च** वाचनिकविकल्पभेदाः इति सर्वे मिलित्वा **त्र्यधिकं शतं** ( १०३ ) विकल्पभेदाः सिद्धाः ।

पुनरपि द्विविधो विकल्पः पूर्वोक्तो यथासंभवं अव्यवस्थितो व्यवस्थितश्च । आद्यो यथा– अग्निहोत्रे दशद्रव्यविकल्पः । द्वितीयो यथा– 'व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेत आ यवेभ्यः, यवैरिष्ट्वा यवैरेव यजेत आ व्रीहिभ्यः' इति व्रीह्याग्रयणोत्तरं व्रीहिभिरेव दर्शपूर्णमासौ कार्यौ यवाग्रयणावधि, यवाग्रयणोत्तरं च यवैरेव दर्शपूर्णमासौ कार्यौ व्रीह्याग्रयणपर्यन्तं इति । यदा तु 'अग्निहोत्रीं वै तानादयित्वा तस्याः पयसा जुहुयात्' इति व्रीह्याग्रयणकाले, यवाग्रयणकाले च यवानग्निहोत्रधेनुं खादयित्वा तत्पयसा अग्निहोत्रहोमे कृते आग्रयणसिद्धिपक्षः तदा आग्रयणाभावादेव व्रीहियवयोरपि अव्यवस्थितविकल्पः एव ॥ व्यवस्थितविकल्पस्तु द्विविधः न्यायगम्यो वाचनिकश्च । तत्राद्यो यथा 'स्रुवेणावद्यति' 'स्वधितिनाऽवद्यति' 'हस्तेनावद्यति' इति संहत–द्रव्य–मांसावदानेषु अव्यवस्थितविकल्पे स्रुवादेः प्राप्ते न्यायतो व्यवस्था उक्ता 'अर्थाद्वा कल्पनैकदेशत्वात्' इत्यत्र ( १।४।१४।२५ )। स्मार्तोदाहरणं तु 'प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि, पञ्च वा, ग्रहणान्तिकम्' इत्यव्यवस्थितविकल्पः उक्तः स्मृतिपादे ( १।३ ) **वार्तिककृता** समर्थासमर्थगार्हस्थ्ययोग्यायोग्यविषयोऽयं व्यवस्थितविकल्पः इति न्यायेन स्थापितम्, 'वेदान् अधीत्य, वेदौ वा, वेदं वाऽपि, यथाक्रमम् । सामर्थ्याश्रमयोग्यत्वमङ्गीकृत्यैतदुच्यते ॥' इति ( वा. पृ. १९२ )।

वाचनिकस्तु व्यवस्थितविकल्पः **सप्तधा** संभवति । देशतः, कालतः, कर्तृतः, कर्मतः, फलतः, निमित्ततः, अवधितश्चेति । [ १ ] तत्र देशतो वाचनिको व्यवस्थितविकल्पो यथा–– तैत्तिरीयाणां श्रौतसूत्रे 'त्रयः परिधयः' इति परिधिषु विहितेषु पश्चाद्देशादित्रये स्थविष्ठादीनां परिधीनां अव्यवस्थितविकल्पे प्राप्ते 'स्थविष्ठं पश्चात्, अणीयान् द्राघीयान् दक्षिणार्ध्यः अणिष्ठो ह्रसिष्ठ उत्तरार्ध्यः' इति देशतो व्यवस्थितविकल्प उक्तः । स्मार्तोदाहरणमपि 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादौ यत्र वसन्तस्याङ्गत्वं तत्र त्रिकाण्डमण्डनेन 'श्रौतस्मार्तक्रियाः सर्वाः कुर्याच्चान्द्रमसर्तुषु' इति चान्द्रर्तुनियमे कृते 'अमावास्यया मासान् संपाद्य अहरुत्सृजन्ति, अमावास्यया हि मासान् संपादयन्ति' 'पौर्णमास्या मासान् संपाद्य अहरुत्सृजन्ति' 'पौर्णमास्या हि मासान् संपादयन्ति' इति श्रुत्युक्तस्य द्विविधस्य चान्द्रस्य सर्वदेशेषु अव्यवस्थितविकल्पे प्राप्ते त्रिकाण्डमण्डनेन, 'चान्द्रोऽपि शुक्लपक्षादिः कृष्णादिर्वेति च द्विधा । कृष्णपक्षादिकं मासं नाङ्गीकुर्वन्ति केचन । येऽपि चेच्छन्ति न तेषामपीष्टो विन्ध्यस्य दक्षिणे ॥' इति देशतो व्यवस्थितविकल्प उक्तः । [ २ ] कालतो वाचनिको व्यवस्थितविकल्पो यथा–दर्शपूर्णमासयोराज्यभागयोः क्रमे वार्त्रघ्नीयुगलं वृधन्वतीयुगलं च इति याज्यानुवाक्यायुगले पठिते तयोः पौर्णमास्यां अमावास्यायां च अव्यवस्थितविकल्पे प्राप्ते 'वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायाम्' इति वाक्यात् कालतो व्यवस्थितविकल्पः । पौर्णमास्यमावास्याशब्दौ कर्मवाचिनौ अङ्गीकृत्य कर्मतो व्यवस्थितविकल्पोऽयं इति **सोमेश्वरमतं** ( सु. पृ. ७२७) अस्माभिः शास्त्रदीपिकाप्रकाशे निरस्तम् । [ ३ ] कर्तृतो वाचनिको व्यवस्थितविकल्पो यथा– याजमाने व्रते तत्प्रकाशकस्य दर्शपूर्णमासप्रकरणाधीतस्य 'अग्ने व्रतपते०' 'वायो व्रतपते०' 'आदित्य व्रतपते०' इति मन्त्रत्रयस्य ब्राह्मणक्षत्रियवैश्येषु अव्यवस्थितविकल्पे प्राप्ते ब्राह्मणादिकर्तृतः क्रमेण व्यवस्थितविकल्प उक्तः । स्मार्तोदाहरणमपि आश्वलायनगृह्यसूत्रे, 'यदि वासांसि वसीरन् रक्तानि वसीरन् काषायं ब्राह्मणो, माञ्जिष्ठं क्षत्रियो, हारिद्रं वैश्यः' इति । अत्र वृत्तौ 'वासांसि वसीरन्' इति अजिनेन पूर्वविहितेन सह वैकल्पिको वासोविधिः इत्युक्तम् । तथा 'यदि रक्तानि वसीरन्'



इति यदिशब्दस्य व्यवहितान्वयोऽङ्गीकृतः । तत्र काषायादीनां अव्यवस्थितविकल्पे ब्राह्मणादौ प्राप्ते ब्राह्मणादिकर्तृतः काषायादेः व्यवस्थितविकल्पः । [ ४ ] कर्मतो व्यवस्थितविकल्पो यथा– वरुणप्रघासेषु 'द्वावग्नी प्रणयतः' इति विहारद्वयं विहितम्, तस्य अव्यवस्थितविकल्पो नवहविरासादने प्राप्तः, तत्र 'अष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्' इति मारुतीव्यतिरिक्तहविरासादन–मारुतीहविरासादनरूपकर्मतः विहारद्वयस्य व्यवस्थितविकल्पः । [ ५ ] फलतो व्यवस्थितविकल्पो यथा–ज्योतिष्टोमे षोडशिसंस्थे 'सौभरमुक्थ्यानां ब्रह्मसाम भवति' इति उक्थ्यत्रयब्रह्माख्यस्तोत्रसाधनत्वेन ( उक्थ्यत्रये ब्राह्मणाच्छंसिसंबन्धिस्तोत्रसाधनत्वेन ) नित्यं सौभरं विहितम्, ज्योतिष्टोमातिरात्रे तु 'यदि बृहत्सामा अतिरात्रः स्यात् सौभरमुक्थ्यानां ब्रह्मसाम कार्यम्' इति ब्रह्मसामत्वेनैव नैमित्तिकं 'यदि रथंतरसामा सौभरं कुर्यात्' इति चोक्थ्यत्रयेऽपि नैमित्तिकं विहितम् । अतो नित्यं नैमित्तिकं च सौभरं पुनः फलत्रयसाधनत्वेन विहितं 'यो वृष्टिकामो, योऽन्नाद्यकामो, यः स्वर्गकामः, स सौभरेण स्तुवीत' इति । सौभरस्य च नानाशाखीयस्य नानानिधनकस्य अव्यवस्थितविकल्पे प्राप्ते 'हीष् इति वृष्टिकामाय निधनं कुर्यात्, ऊर्क् इत्यन्नाद्यकामाय, ऊ इति स्वर्गकामाय' इति तत्तत्फले तत्तन्निधनकस्य सौभरस्य विधानात् फलतो व्यवस्थितविकल्पः । [ ६ ] निमित्ततो व्यवस्थितविकल्पो वाचनिको यथा– 'दशाहं शावमाशौचं सपिण्डेषु विधीयते । अर्वाक् संचयनादस्थ्नां त्र्यहमेकाहमेव वा ॥' इति अर्वागित्यनेन चतुरहोपलक्षणात् चतुर्णां पक्षाणामव्यवस्थितविकल्पे मनुना उक्ते 'उपनीते तु विषमं' इति स्मृत्यन्तरात् 'दन्तजातेऽनुजाते च कृतचूडे च संस्थिते' इति मनुवाक्यान्तरे चोपक्रमस्थे अनुलोमक्रमे अङ्गीक्रियमाणे दन्तजाते दशाहापत्तेः कृतचूडे च एकाहापत्तेः । तत्र च 'निर्वृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते' इति मनुनैव विरोधापत्तेः प्रतिलोमक्रमाश्रयणेन दन्तजाते एकाहः, अनुजातमपत्यं यस्मात् तादृशे त्र्यहः, कृतचूडे चतुरहः, उपनीते दशाहः इति व्यवस्थितविकल्पो विरोधाधिकरणे ( १।३।२।३ ) वार्तिककृता उक्तः । अस्मिन् पक्षे निर्वृत्तचूडकानां इति त्रिरात्रपक्षः प्रथमवर्षकृतचूडविषयः, चतुरहस्तु तृतीयवर्षकृतचूडविषयः, अकृतचूडे तत्रापि त्र्यह एवेति प्रकारान्तरेणापि व्यवस्थितविकल्पो वार्तिके एवोक्तः । 'ब्राह्मणस्य स्वाध्यायानिवृत्त्यर्थम्' इति गौतमवचनात्, 'एकाहाद् ब्राह्मणः शुध्येद् योऽग्निवेदसमन्वितः । त्र्यहात् केवलवेदस्तु द्विहीनो दशभिर्दिनैः ॥' इति स्मृत्यन्तराच्च त्रिवेदस्याग्निमतः एकाहः, द्विवेदस्य चतुरहः, अग्निवेदरहितस्य दशाहः इत्ययमेव पक्षः आदृतो मेधातिथिविज्ञानेश्वरादिभिः । अनुजातपदव्याख्या मेधातिथेः 'अनुजातो दन्तजातात् बालतरः इति स्मरन्ति' इति, तत् 'दन्तजातानुजातान्यकृतचूडेषु च क्रमात् । चितिक्रिया त्र्यहैकाहाः' इति वार्तिकविरोधादुपेक्ष्यम् ( वा. पृ. १९० )। अत्र हि क्रमशब्दस्य प्रतिलोमक्रमपरतोक्तेः दन्तजातविषयात् एकाहात् अधिकस्त्र्यहः अनुजातविषयः उक्तः । स दन्तजाताद् बालतरे अनुजातशब्दार्थे सद्यःशौचविषये विरुध्येतेति । [ ७ ] अवधितो व्यवस्थायास्तु उदाहरणमुक्तमेव 'व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेत' इत्यादि ।

सर्वस्मिंश्च व्यवस्थितविकल्पे पूर्वोक्ता **अष्टौ** दोषा न सन्ति, इतरेतरविषये इतरेतरवाक्याप्रवृत्तेरेव एकानुष्ठानेऽपि इतरशास्त्रस्य प्रतीतप्रामाण्यत्यागाद्यभावात् । 'व्यवस्थितविकल्पे च दोषाष्टकं नास्ति' इति शाखान्तराधिकरणे ( २।४।२ ) 'न चैकं प्रति शिष्यते' इति सूत्रे ( १९ ) 'अथ तेषां विकल्पेनार्थवत्त्वम्, तद्वरं शाखान्तराणामेव व्यवस्थितप्रतिपद्यमानानां अनाकुलतरं कल्पितम्' इति वार्तिके ( पृ. ६४० ) अनाकुलतरं इत्यनेनोक्तम्, भट्टसोमेश्वरेण व्याख्यातं 'पूर्वपक्षिणा ( सुधामूले नास्तीदं पदम् ) प्रतिचरणं अग्निहोत्रादिव्यवस्थाऽनभ्युपगमे निरपेक्षसाधनत्वेन समुच्चयायोगात् एकेनैव ( अग्निहोत्रादिना सर्वपुंसां फलसिद्धेः ) शाखान्तरीयाग्निहोत्राद्यानर्थक्यापत्तेः विकल्पेनार्थवत्त्वं वाच्यम्, तच्च कर्मैक्याभ्युपगमेन शाखानामेव व्यवस्थितैः कठादिचरणैः प्रतिपद्यमानत्वेन अष्टदोषत्वनिमित्ताकुलत्वानापादकत्वात् कल्पितं वरम्' इति ( सु. पृ. ९९३ )। एवं ऐच्छिक-

विकल्पेऽपि अष्टौ दोषा न सन्ति, कस्यापि शास्त्रस्य प्रतीतप्रामाण्यत्यागाद्यभावात् । 'पशुना यजेत' इति हि एकमेव शास्त्रम्, तत्र च एकत्वविवक्षावशेन कदाचित् कस्याश्चित् पुंव्यक्तेरुपादानेऽपि सकलस्तच्छास्त्रार्थः अनुष्ठीयते एवेति क्वत्यं तस्य शास्त्रस्य प्रामाण्यत्यागादि । एवं स्वेच्छया व्यक्त्यन्तरोपादानेऽपीति । एवमेव वाचनिकेऽपि विकल्पे अष्टौ दोषा न सन्ति । 'रथंतरं वा पृष्ठं भवति' 'बृहद्वा पृष्ठं भवति' इत्यादौ हि उभयोः पाक्षिककर्तव्यतैव प्रतीयते, न व्रीहियववत् सर्वदा उभयकर्तव्यता इति नान्यतरानुष्ठानेऽपि इतरशास्त्राप्रामाण्यादि कल्प्यमिति । तस्मात् न्यायगम्यविकल्पे एवाष्टदोषत्वमिति सिद्धम् ।

पूर्वोक्ताश्च विकल्पाः पुनः यथासंभवं भावाभावविषयाः **पञ्चधा ।** केचित् प्रकृतिगता एव, केचित् विकृत्युपदिष्टपदार्थविषयाः, केचित् अप्रकृतिविकृत्यात्मककर्माङ्गोपदिष्टपदार्थविषयाः, केचित् विकृतौ उपदिष्टातिदिष्टपदार्थविषयाः, केचित् विकृतौ अतिदिष्टमात्रविषया इति । तत्र [ १ ] प्रकृतौ उपदिष्टपदार्थमात्रविषयो भावविकल्पो भावाभावविकल्पश्च यथा– मासाग्निहोत्रप्रकृतौ नित्याग्निहोत्रे पयआदिदशद्रव्याणां विकल्पः । दध्यधिश्रयणतदभावयोश्च विकल्पः । 'न दध्यधिश्रयेत्, अधिश्रयेदित्येके' इति बह्वृचब्राह्मणम् । [ २ ] विकृतौ उपदिष्टयोर्भावयोः भावाभावयोश्च विकल्पो यथा– वाजपेये प्राजापत्यानां क्रतुपशुभिः सहालम्भो ब्रह्मसामकाले वा इत्युपदिष्टयोः कालयोर्विकल्पः, 'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाति' इति षोडशिग्रहतदभावयोर्विकल्पः । [ ३ ] अप्रकृतिविकृत्यात्मककर्मोपदिष्टयोर्भावयोः अभावयोश्च विकल्पो यथा– आधाने पवमानेष्टीनां पूर्णाहुत्या सह विकल्पः, तत्रैव वाजसनेयिनां 'ऋतु–नक्षत्र–संभार–चातुःप्राश्य–जागरण–इध्मपूर्वार्धान्वारम्भण–सार्पराज्ञीर्न वा कुर्यात्' इति पूर्ववदुदाहृतम् । [ ४ ] विकृतौ उपदिष्टयोर्भावयोः तादृशयोर्भावाभावयोश्च विकल्पो यथा– 'इष्टया पशुना सोमेन यजेत, सोऽमावास्यायां पौर्णमास्यां वा' इत्यत्र इष्टिशब्दोपात्तायां अमावास्याविकृतौ अतिदिष्टाया अमावास्यायाः, उपदिष्टायाश्च पौर्णमास्याः विकल्पः, एवं इष्टिशब्दोपात्तायां पौर्णमासीविकृतौ अतिदिष्टायाः पौर्णमास्याः, उपदिष्टायाश्च अमावास्यायाः विकल्पः । भावाभावोदाहरणं तु 'न तौ पशौ करोति' इति पशुयागरूपायां विकृतौ अतिदिष्टयोः आज्यभागयोः, उपदिष्टस्य च तन्निषेधस्य विकल्पः इति । [५] विकृतौ अतिदिष्टमात्रविषयस्तु भावयोर्विकल्पो यथा– 'जाघन्या पत्नीः संयाजयन्ति' इति । तत् पत्नीसंयाजानां जाघन्यर्थतार्थं न भवति, अप्राकृतकार्यतापत्तेः, किंतु प्रकृतितो वैकल्पिकयाः प्राप्तायाः जाघन्याः नियमार्थम् । तत्र चोपादेयत्वात् जाघन्येकत्वं विवक्षितम्, ततश्च पशुगणे प्रतिसंस्कार्ये संस्कारावृत्तिः इति जाघनीसमुच्चयन्यायाप्रवृत्तेः ( १२।४।६।१०–१६ ) या काचित् जाघनी उपादेया इति विकल्पः । इदं च द्वादशे 'द्रव्यविकारं तु पूर्ववदर्थकर्म स्यात्' इत्यधिकरणे उक्तं ( १२।४।६।१० ) विकृतौ अतिदिष्टस्य भावस्य अनुपदिष्टेन अतिदिष्टेनाभावेन विकल्पे उदाहरणम् । अत्र च कश्चिद्भावः प्रकृतौ अवैकल्पिक एव, विकृतौ तु निषेधानुपदेशेऽपि पदार्थान्तरविकल्पवशात् अर्थात् स्वाभावेन सह विकल्पं भजते, तादृगुदाहार्यं अन्त्ये भेदे । तद्यथा– अग्नीषोमीये प्रयाजशेषाभिघारणं वपाया अवैकल्पिकमेवासीत् प्राजापत्यपश्वालम्भे तु कालद्वयं विहितं क्रतुपश्वालम्भकाले ब्रह्मसामकाले वेति । ततश्च प्रयाजशेषाभिघारणं प्राजापत्यवपानां वैकल्पिकं भवति ब्रह्मसामकालपक्षे प्राजापत्यवपाऽभिघारणार्थं प्रयाजशेषस्थापनस्य चतुर्थे निरासात् ( ४।१।१४।३३–३९ ) इति ।

तदेवं प्रकृतिविकृतितदुभयानात्मककर्मनिष्ठाः उपदिष्टातिदिष्टभावाभावविषया दश विकल्पभेदा निरूपिताः ।

अथेदमुच्यते, ये केचित् पूर्वं भावाभावविषया विकल्पभेदा उक्ताः, ते सर्वे यद्भावविषयाः तत्प्रातियोगिकाभावविषया एव । केचित्तु यद्भावविषयाः, तत्प्रतियोगिकाभावव्यतिरिक्ताभावविषया अपि सन्तो भावविषया अपि अभावान्तरविषया अपि विकल्पाः संभवन्ति । तद्यथा अग्निष्टोमसंस्थैव नित्या क्रतोरङ्गम्, अन्याः काम्याः । संस्था च ग्रहस्तोत्राभ्यासविषयव्यापारोपरमात्मकत्वेनाभावरूपा । न चात्र समुच्चयः संभवति, संस्थितस्य



संस्थान्तरत्वायोगात् । तत्र क्रत्वर्थया अग्निष्टोमसंस्थया पुरुषार्थानां उक्थ्यादिसंस्थानां ऐच्छिको विकल्पः । तथा पुरुषार्थानामुक्थ्यादिसंस्थानां भिन्नफलानामपि ऐच्छिको विकल्पः अन्योन्यम् । तथा संस्थानां स्वसमानफलैः ज्योतिष्टोमतदङ्गाश्रितैर्जात्यादिभावैः सह ऐकार्थ्यात् न्यायगम्यो विकल्प इति ।

अत्र च ये केचिदन्ये विकल्पा दृश्यन्ते, यथा उपांशुयाजादौ वैष्णवादियाज्यानुवाक्यामन्त्रविकल्पः, यथा वा तत्रैव देवताविकल्पः, यथा वा 'तन्त्रं वा वैश्वदेविकम्' इति तन्त्रविकल्पः, यथा वा इष्टिपूर्वत्वादिक्रमविकल्पः, यथा वा 'एको द्वौ वहवो वाऽहीनेन यजेरन्' इत्यादिः कर्तृविकल्पः, यथा वा तलवकारादिसहस्रसामशाखागतानां गीतिप्रकारभेदानां विकल्पः इत्यादयः, ते यथासंभवं जात्यादिविकल्पेषु एव अन्तर्भवन्ति केचित् । तन्त्रक्रमादीनामपि क्रियाधर्मत्वात् धर्मधर्मिणोश्चाभेदात् तद्विकल्पाः क्रियाविकल्पभेदे एवान्तर्भवन्ति । तथा क्वचित् विकल्पस्यापि अन्यतरकोट्या सह विकल्पो भवति, यथा असोमयाजिनः सांनाय्यविकल्पः 'नासोमयाजी संनयेत्, तदु समेव नयेत्' इति विधिप्रतिषेधबलात् । सोमयाजिनस्तु सांनाय्यमेवेति । 'पुरोडाशाभ्यामेवासोमयाजिनं याजयेत् यावेतौ आग्नेयश्चैन्द्राग्नश्च, सांनाय्येन तु सोमयाजिनम्' इति वचनात् । तदेतद्दशमे प्रतिपादितम् 'पुरोडाशाभ्यामित्यधिकृतानां' इत्यत्र ( १०।८।१४।३५–४६ ) । स्मार्तोदाहरणत्रयं तु **विज्ञानेश्वरेणोक्तं** –'श्वश्र्वा सह, भर्त्रा सह, पित्रा सह' इति ( १।२५३ ) सपिण्डीकरणे विकल्पः स्मृतिभेदेनोक्तः । स्मृतिः 'पितामह्यादिभिः सार्धं सपिण्डीकरणं स्मृतम् ।' **पैठीनसिः**– 'अपुत्रायां मृतायां तु पतिः कुर्यात् सपिण्डनम् । श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत् ॥' **यमः**– 'पत्या चैकेन कर्तव्यं सपिण्डीकरणं स्त्रियाः । सा मृताऽपि हि तेनैक्यं गता मन्त्राहुतिव्रतैः ॥' **उशनाः**– 'पितुः पितामहे यद्वत् पूर्णे संवत्सरे सुतैः । मातुर्मातामहे तद्वदेषा कार्या सपिण्डता ॥' इति । तत्र अपुत्रायां भार्यायां मृतायां भर्ता स्वमात्रैव सापिण्ड्यं कुर्यात् । अन्वारोहणे तु पुत्रः स्वपित्रैव मातुः सापिण्ड्यं कुर्यात् । आसुरादिविवाहोत्पन्नः पुत्रिकापुत्रश्च मातामहेनैव । ब्राह्मादिविवाहोत्पन्नः पित्रा मातामहेन पितामह्या वा विकल्पेन कुर्यात् इति । तथा मातुः पिण्डदानादौ गोत्रे विकल्पः 'स्वगोत्राद् भ्रश्यते नारी विवाहात् सप्तमे पदे । स्वामिगोत्रेण कर्तव्या तस्याः पिण्डोदकक्रिया ॥' इति भर्तृगोत्रविषयात्, 'पितृगोत्रं समुत्सृज्य न कुर्याद् भर्तृगोत्रतः । जन्मन्येव विपत्तौ च नारीणां पैतृकं कुलम् ॥' इति पितृगोत्रविषयाच्च वचनात् । तत्र आसुरादिविवाहेषु पुत्रिकाकरणे च पितृगोत्रमेव, ब्राह्मादिविवाहेषु व्रीहियववत् बृहद्रथंतरवच्च विकल्प एवेति । तथा क्षयाहश्राद्धे एकोद्दिष्टं पार्वणं वेति विकल्पः । 'सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः । मातापित्रोः पृथक् कार्यमेकोद्दिष्टं मृतेऽहनि ॥' इति **यमेन** एकोद्दिष्टविधानात् । 'सपिण्डीकरणं कृत्वा कुर्यात् पार्वणवत् सदा । प्रतिसंवत्सरं विद्वान् छागलेयोदितो विधिः ॥' इति **शातातपेन** पार्वणविधानात् । तत्र संन्यासिनां क्षयाहे सुतेन पार्वणं कार्यं 'एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह । सपिण्डीकरणाभावात् पार्वणं तस्य सर्वदा ॥' इति **प्रचेतोवाक्यात्** । अमावास्याक्षयाहे प्रेतपक्षक्षयाहे च पार्वणमेव 'अमावास्याक्षयो यस्य प्रेतपक्षेऽथवा पुनः । पार्वणं तस्य कर्तव्यं नैकोद्दिष्टं कदाचन ॥' इति स्मृतेः । अन्यत्र क्षयाहे असंन्यासिनः पार्वणैकोद्दिष्टयोः व्रीहियववत् विकल्प एवेति । इति विकल्पभेदनिरूपणम् । **बाल.** पृ. १५२–१६५.

* **विकल्पसमुच्चयौ ।** अगतिका ह्येषा गतिः यत् कृत्स्नसंयोगे सति विकल्पसमुच्चयौ स्याताम् । सत्यां हि गतौ न तौ आश्रयणीयौ स्तः । **भा.** १०।५।११।४७.

* **विकल्पितगुणान्तरशासनस्य** अर्थवत्त्वं वक्ष्यति 'कालान्तरे अर्थवत्त्वं स्यात्' ( १२।३।४।१५ ) इति । **भा.** १२।३।४।१२.

**विकारस्तत्प्रधाने स्यात् । ९।१।१५।४१॥**

दर्शपूर्णमासयोः 'सूक्तवाकेन प्रस्तरं प्रहरति' इति विहितम् । सूक्तवाकनिगदश्च 'इदं द्यावापृथिवी' इत्यादिः । तत्र 'अयं यजमान आयुराशास्ते' इति पठ्यते । तत्र बहुकर्तृकायां विकृतौ यजमानशब्दः ऊहि-

तव्यः, न वेति विचारे **सिद्धान्तमाह** । तत्प्रधाने यजमानप्रधाने कर्मणि विकारः यजमानपदस्यैकवचने ऊहः 'यजमानौ आयुराशासाते', 'यजमाना आयुराशासते' इति यथायथं स्यात् । यदि सूक्तवाकः प्रस्तरप्रहरणे तत्साधनं तत्फलं वा प्रकाशयति । प्रहरणफलं च आयुराशासनं यजमानस्य इति यजमानस्य प्राधान्यम् । तस्मात् यत्र अनेके यजमानाः तत्रोहः कर्तव्यो भवति वचनस्य । **के.**

* विकारो न अध्रिगुप्रैषगतस्य 'प्रास्मै' इति पदस्य अग्नीषोमीयसवनीययोः समानविधित्वपक्षे । ९।३।८।२३. **मीको.** पृ. ३३९ 'अध्रिगुप्रैषगतस्य प्रास्मै इति पदस्य०' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकारः नाम कार्यापत्तिप्रमाणम् । **बाल.** पृ. ८.

**विकारः सन्नुभयतोऽविशेषात् । ६।७।९।१८ ॥**

विश्वजित् यागः ज्योतिष्टोमस्य विकारः, ज्योतिष्टोमे च द्वादशशतं दक्षिणा । तेन द्वादशशतधनेन यजमानेन ज्योतिष्टोमस्य विकारः सन् विश्वजित् कर्तुं शक्यते एव । अथ द्वादशशतात् धनात् न्यूनधनेन अधिकधनेनापि वा उभयतः न्यूनाधिकोभयपक्षयोरपि कर्तुं शक्येत । अविशेषात् विशेषाभावात् । तत्र हि सर्वस्वं देयम् । यस्य च यावत् धनं तत् सर्वं स्वम् । तच्च परिमाणेन द्वादशशतात् न्यूनं वा स्यात् अधिकं वा स्यात् । यावत् धनं तावति सर्वस्मिन् दत्ते सर्वस्वदानस्य न विशेषोऽस्ति । तस्मात् द्वादशशतात् न्यूनधनेन अधिकधनेन वा सर्वस्वं दत्त्वा विश्वजित् कर्तव्यो भवति इति **पूर्वः पक्षः** ।

**अधिकं वा प्रतिप्रसवात् । १९ ॥**

द्वादशशतात् अधिकधनेन न्यूनधनेनापि वा विश्वजित् कर्तव्यः इति प्राप्तं पूर्वपक्षं वाशब्देन निरस्यन् सिद्धान्तमाह । यस्य द्वादशशतात् अधिकं धनं आनमनीयं स्यात् तेनैव विश्वजित् कर्तव्यः, न तु ततो न्यूनधनेन । प्रतिप्रसवात् । ज्योतिष्टोमे तावत् सर्वस्वस्य प्रतिप्रसव उच्यते । द्वादशशतं विधाय तत आह 'एतावता वाव ऋत्विज आनमनीया अपिवा सर्वस्वेन' इति । तत्र यदि ऋत्विजः द्वादशाधिकेन शतेन नानमन्ति, नानमन्तितरां ततो न्यूनेन धनेन । तथा च अत्र सर्वस्वशब्देन अधिकमेव ग्राह्यं भवति । यथा च ज्योतिष्टोमे तथैव विश्वजित्यपि । तस्मात् द्वादशशतं ततो अधिकं सर्वस्वम् । तस्मात् न्यूनधनस्य नाधिकारः । अत्र भाष्यात् द्वादशशतधनेन ततोऽधिकधनेन वा विश्वजित् कर्तव्य इति सिध्यति । सूत्रस्वारस्येन तु द्वादशशतादधिकधनेनैव विश्वजित् कर्तव्यः इति सिध्यति इति विशेषः ।

**अनुग्रहाच्च पादवत् । २० ॥**

यस्य द्वादशशतादधिकं धनं तेन विश्वजित् कर्तव्यः इति उक्ते सिद्धान्ते हेत्वन्तरस्य अन्वाचयपरं सूत्रम् । इतश्च सर्वस्वं नाम द्वादशशतादधिकं धनम् । अधिके हि दीयमाने तदन्तर्गतत्वात् द्वादशशतमपि दत्तं भवति । तत्र सर्वस्वदाने अधिकस्य धनस्य अनुग्रहो भवति । पादवत् यथा कार्षापणे दत्ते कार्षापणपादोऽपि दत्तो भवति । तत्र कार्षापणदाने पाददाने अनुग्रहः क्रियते । तद्वत् । तस्मात् द्वादशशताधिकधनस्यैव विश्वजिदधिकारः इति **सिद्धान्तः** । पादः चतुर्थोऽशः । **के.**

* **विकारास्तु कामसंयोगे स नित्यस्य समत्वात्** । ३।६।१८।४३ ॥ नित्यस्याश्रयस्य उक्थ्यादिः काम्यो गुणो विकारः इति नित्यत्वसाम्येन आश्रयस्य नित्यधर्मान्वयाविरोधात् इति व्याख्यान्तरम् । संस्थाधिकरणसिद्धान्तसूत्रमिदम् । **सु.** पृ. ८४८. * 'क्लृप्तोपकारसाकाङ्क्षाः प्रथमं प्राकृतैः सह । संबध्यन्ते, समीपस्थं **विकाराः** प्रोज्झ्य चोदितम् ॥' **वा.** २।१।४।१२पृ. ४१४. * **विकारेण** प्रकृतिलिङ्गसंयोगो यथा—'नैर्ऋतश्चरुर्नखावपूतानाम्' इति । **भा.** १०।४।१।१ । तत्र तुषकणविप्रमोकं दृष्ट्वा फलम्, नूनमवघातकार्ये वर्तते नखावपनमिति । **टुप्.** * '**विकाराच्च न भेदः स्यादर्थस्याविकृतत्वात्** । १२।१।१।४ ॥ गुणकालविकारात् न तन्त्रभेदः स्यात् सत्यपि तद्विकारे अर्थस्य अङ्गजन्योपकारस्य अविकृतत्वात् इत्यर्थः । **सोम.** १२।१।२ पृ. ८४७. * यदि च सत्यपि प्रयोजकत्वे कार्याभावादननुष्ठानं ततो वरुणप्रघासेषु उत्तरवैहारिकैरेवाङ्गैर्मारुत्याः कार्यसिद्धेः, सत्यपि देशभेदे कर्तृभेदे च '**विकाराच्च न भेदः स्यादर्थस्याविकृतत्वात्**' इत्यनेन **न्यायेन** पृथगङ्गानि न क्रियेरन् । **शा.** १२।१।२. * **विकाराणां** सोमस्य दर्शपूर्णमासोत्तरकालता । ५।४।९।२६. 'सोमविकाराणां दर्शपूर्णमासाभ्यां प्राक् नानुष्ठानम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।



**विकारे त्वनुयाजानां पात्रभेदोऽर्थभेदात् स्यात् । ५।२।८।१६॥**

अग्नीषोमीये पशौ 'पृषदाज्येन अनुयाजान् यजति' इत्युक्तम् । तत्र प्रयाजानुयाजाज्यधारणार्थं यत् उपभृन्नाम पात्रम्, तदेव पृषदाज्यमपि धारयेत् उत पृषदाज्यधारणार्थं भिन्नं पात्रं स्यात् इति विचारे उलूखलवत् प्रकृताविव एकमेव पात्रं स्यात् इति उत्सूत्रे **पूर्वपक्षे** प्राप्ते तुशब्देन तं निरस्य **सिद्धान्तमाह** । अनुयाजानां विकारे प्राकृतद्रव्यात् केवलादाज्यात् अन्यद्रव्यकत्वे पशौ पृषदाज्यद्रव्यकत्वे सति पृषदाज्यधारणार्थं पात्रभेदः भिन्नं पात्रं स्यात् । अर्थभेदात् शुद्धस्य आज्यस्य प्रयाजार्थत्वात् पृषदाज्यस्य च अनुयाजार्थत्वात् । अर्थभेदात् द्रव्यभेदात् इति वा । नहि द्रव्यद्वयं भिन्नं एकपात्रे ग्रहीतुं शक्यम् । **के.**

* **विकारेषु** प्रकृतिवदुपचारः । **वा.** २।२।६।१७ पृ. ५१२.

* **विकारपक्षे** तु ज्ञायते प्राकृतस्य पूर्वतरं क्लृप्तिः इति अवश्यावहेये अन्यतरस्मिन् कर्मणि विप्रकृष्टं प्राकृतं एव हातव्यं भवति इति बाधप्रसङ्गः । **वा.** ३।६।१६।४२ पृ. १०६५.

* **विकार्यं** ईप्सितं कर्म । तद्गतदृष्टातिशयोत्पादनं विकृतिः । यथा 'व्रीहीनवहन्ति' । **मणि.** पृ. १२९.

* विकृतिः अग्नीषोमीयपशुः सांनाय्यस्य । ८।२।२।१०–१४. **मीको.** पृ १०० 'अग्नीषोमीयः पशुः सांनाय्यविकारः' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतिः अग्नीषोमीयपशुः सांनाय्यस्य । तत्रापि पयसः न दध्नः । ८।२।३।१५–१८. **मीको.** पृ. १०० 'अग्नीषोमीयः पशुः पयोविकारः' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतिः कामेन, निमित्तेन वा चोद्यते । **भा.** १२।२।६।२१, * विकृतिः कामे वा निमित्ते वा उत्पन्ने आगच्छति । १२।२।१३।३३. * विकृतिः प्रकारमपेक्षते । स चैकः प्रकारः (विकृत्या अपेक्ष्यते)। प्रकारापेक्षायां प्रमाणमस्ति। न शास्त्रापेक्षायाम् । सौर्येण साधयेत् । कथं इत्यपेक्षायां सादृश्येन आग्नेये बुद्धिर्भवति । आग्नेयेनापि प्रकाराः (स्वगताः प्रथममुपस्थाप्यन्ते)। तान् गृह्णाति विकृतिः । ते चापेक्षिताः । शास्त्राणि पदार्थाश्च अनपेक्षितानि, व्यवहितानि च । तस्मात् कृत्स्नं चोदकः प्रापयति । कृत्स्नप्रापितत्वान्नोपसंहारः । **टुप्.** १०।७।९।३१.

**विकृतिः प्रकृतिधर्मत्वात् तत्काला स्याद् यथाशिष्टम् । ५।१।११।१९ ॥**

साकमेधाख्ये तृतीये पर्वणि प्रथमदिने 'अग्नयेऽनीकवते प्रातरष्टाकपालः, मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुः, मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनम्' इति इष्टित्रयं विहितम् । इदं द्व्यहकालं सद्यस्कालं वेति विचारे पूर्वपक्षमाह । विकृतेः प्रकृतिधर्मत्वात् अनीकवत्यादिविकृतिः यथाशिष्टं तत्काला प्रकृतिकाला स्यात् । प्रकृतेरेव धर्मा यस्यां सा प्रकृतिधर्मा विकृतिः । प्रकृतिधर्मणः भावः प्रकृतिधर्मत्वं तस्मात् । विकृतौ अतिदेशेन प्रकृतेर्धर्मा एव भवन्ति । प्रकृतिश्च दर्शेष्टिः द्व्यहकाला । कालोऽपि धर्मविशेषः । तस्मात् यथाशिष्टं चोदकेन शिष्टं विहितं प्रापितं अनतिक्रम्य द्व्यहकालत्वमनतिक्रम्य तत्काला तस्याः प्रकृतेः काल इव कालो यस्याः विकृतेः सा विकृतिः तत्काला द्व्यहकाला स्यात् । तस्मात् अनीकवतीसांतपनीयागृहमेधीयाः द्व्यहकालाः स्युः इति **पूर्वः पक्षः** ।

**अपिवा क्रमकालसंयुक्ता सद्यः क्रियेत तत्र विधेरनुमानात् प्रकृतिधर्मलोपः स्यात् । २० ॥**

साकमेधेषु अनीकवत्यादीष्टयः द्व्यहकालाः स्युः इति पूर्वपक्षव्यावृत्त्यर्थः अपिवा- शब्दः । अनीकवती, सांतपनी, गृहमेधीया च इष्टिः क्रमकालसंयुक्ता । क्रमश्च कालश्च ताभ्यां संयुक्ता । तास्तिस्र इष्टयः क्रमेणोक्ताः । प्रातः मध्यंदिने सायं इति तासा काला उक्ताः । तस्मात् सा सा इष्टिः सद्य एव क्रियेत । तत्र सद्यस्कालत्वे साक्षादविहितेऽपि 'सद्यः कार्याः' इति विधेः क्रमकालविधानेन अनुमानात् । यस्मादेताः विशिष्टक्रमकालसंयुक्ताः तस्मात् सद्यः कार्या इति अनुमीयते । तस्मात् प्रकृतेः दर्शेष्टेः यो धर्मो द्व्यहकालत्वम्, तस्य लोपः स्यात् अनीकवत्यादिषु । तथा च एताः सद्यस्काला न द्व्यहकालाः ।

**कालोत्कर्ष इति चेत् । २१ ॥**

साकमेधीये तृतीये पर्वणि पूर्वदिने अनीकवती-सांतपनीयागृहमेधीया इष्टयः क्रमेण प्रातः, मध्यंदिने, सायं चेति विहिताः । ताः सद्यस्काला भवेयुः इति सिद्धान्तिना उक्ते पूर्वपक्षी आह । **ननु** कालस्य उत्कर्षः स्यात् । पूर्वदिने प्रातर्मध्यंदिने सायं चेति इष्टयः उपक्रंस्यन्ते, परेद्युः प्रातर्मध्यंदिने सायं चेति यक्ष्यन्ते । न च चोदकस्य प्रातरादिकालविधेश्च विरोधोऽस्ति । तस्मात् द्व्यहकाला एता इति ।

**न तत्संबन्धात् । २२ ॥**

साकमेधाख्ये तृतीये पर्वणि पूर्वदिने प्रातर्मध्यंदिने सायं इति विहितानां अनीकवतीसांतपनीयागृहमेधीयानामिष्टीनां कालोत्कर्षेण द्व्यहकालता पूर्वपक्षिणा पुनरुक्ते सिद्धान्ती निषेधति । न कालोत्कर्षः शक्यते कर्तुम् । तत्संबन्धात् अङ्गैः सह प्रधानानां एकेनैव प्रातरादिकालेन संबन्धात् संबन्धस्य श्रवणात् । तत्र अन्यकालेषु अङ्गेषु अन्यकालेषु च प्रधानेषु कृतेषु न साङ्गं तेषु कालेषु कृतं स्यात् । तस्मात् न द्व्यहकालता किंतु सद्यस्कालतैव । **के.**

* विकृतिः प्राकृतान् धर्मान् चोदकेन गृह्णाति । **भा.** ५।४।७।२२. * विकृतिः । यत्र न समग्राङ्गोपदेशः सा विकृतिः । यथा सौर्यादिः । विकृतौ हि प्रायः प्रधानमेव, नवीनं हि विधीयते अङ्गकलापस्तु अन्यतो गृह्यते । यतो गृह्यते सा प्रकृतिः, यत्र गृह्यते सा विकृतिः । प्रकृतिविकृतित्वं चेदं पारिभाषिकमेव । न तु मृद्वत् घटवच्च वास्तवम् । **मीन्या.** * विकृतिर्हि उपकाराकाङ्क्षिणी क्लृप्तोपकारान् पदार्थान् उपमितलक्षितप्रापणेन गृह्णाति । **टुप्.** ४।८।४।७. * प्रकृत्या हि **विकृतिः** तुल्यशब्दा भवति । **भा.** ८।२।१।२५. * **विकृतयः** ऐन्द्राग्नादयः साङ्गाः पौर्णमास्याममावास्यायां वा कर्तव्याः 'य इष्ट्या पशुना०' इति वचनात् । तेन सद्यस्काला विकृतयः । ५।४।७।२२–२४. **मीको.** पृ. १३२० 'ऐन्द्राग्नादीनां विकृतिरूपाणामिष्टीनां सद्यस्कालता' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतयः महाप्रकरणोपनिपातिन्यः क्रमप्रकरणयोः क्रमस्य अर्थविप्रकर्षे उदाहरणम् । तासु हि यत् प्राकृताङ्गमध्यपातित्वेन नोत्पन्नं तत् पुरस्तात् परस्तात् वा अर्वास्थतक्रमभाग् भवति, प्रकरणस्य क्लृप्तोपकारैः प्राकृतैः व्यावर्तितत्वात् । **वा.** ३।३।७।१४ पृ. ८३३, * विकृतयः यागगतव्यापारापेक्षित्वात् स्वप्रकरणाम्नानमपि अतिक्रम्य प्राकृतं गृह्णन्ति इति सर्वत्र स्थापयिष्यामः । ३।६।१।८. * विकृतयः सद्यस्कालाः । **भा.**५।४।७।२४, * विकृतयः सर्वाः पूर्ववत्यः, चोदनावाक्यानां असमाप्तत्वात् । ८।१।१६।२८. * **विकृत्या** प्रकृतेः प्रधानप्रसङ्गसिद्धिः यथा तीर्थश्राद्धेन दर्शश्राद्धस्य । **बाल.** पृ. १४९, * **विकृतेः** अवान्तरप्रकरणं संदंशोद्भूतिकं वरुणप्रघासानामुक्तं सप्तमे प्रणयनाधिकरणे । तत्र हि 'उपात्र वपन्ति' इति वरुणप्रघासावान्तरप्रकरणाधीतमपि 'न वैश्वदेवे उत्तरवेदिमुपवपन्ति, न शुनासीरीये' इति पर्युदासैकवाक्यता बलादेवावान्तरप्रकरणं बाधित्वा चातुर्मास्यानामेव 'अत्र' इति वादः इत्युक्तम् । पृ. ११–१२. * विकृतेः उपकारकपदार्थाकाङ्क्षा न तु प्राकृतपदार्थमात्रस्याकाङ्क्षा । **मीन्या.**

**विकृतेः प्रकृतिकालत्वात् सद्यस्कालोत्तरा विकृतिस्तयोः प्रत्यक्षशिष्टत्वात् । ५।४।७।२२॥**

'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' इत्यादिः उत्तरा दर्शपूर्णमासाभ्यामुपरिष्टात् कर्तव्या विकृतिः सद्यस्काला स्यात् । वेदिकरणादि च इतराङ्गसहितं प्रधानं च एकस्मिन्नेवाहनि कर्तव्यम् । तयोः अमावास्यापौर्णमासीरूपकालयोः 'य इष्ट्या पशुना वा यजेत, सोऽमावास्यायां पौर्णमास्यां वा' इति वचनेन प्रत्यक्षेण शिष्टत्वात् विहितत्वात् । द्व्यहकालत्वे गृहीते तु प्रकृतिकालत्वप्रसङ्गात् । दर्शेष्टिरूपप्रकृतेर्यत् द्व्यहकालत्वं तच्चोदकेन प्राप्तम् । तस्य अनुष्ठाने ग्रहणप्रसङ्गः । परंतु तत् आनुमानिकत्वात् प्रत्यक्षविधानेन बाध्यते । तस्मात् सद्यस्कालत्वं इति सिद्धान्तः ।

'उत्तरा विकृतिः' इत्यत्र 'उत्तरा ततिः' इति **सोम–वृ–कु–**पाठः । तनु विस्तारे इति धातोस्ततिशब्दनिष्पत्तिः । ततिः इष्टिसमुदायः इत्यर्थः । इति शब्दभेदे अपि अर्थः समानः ।



'उत्तरा ततिः' अयमेव पाठो युक्तः । विकृतिः इति पाठे तु उत्तरा इति विशेषणं व्यर्थं भवेत् । तस्मात् भाष्ये ततिशब्दाभावेऽपि सूत्रगतोत्तरेतिविशेषणबलात् 'वृ' पुस्तकपाठ एव साधीयान् ।

**द्वैयहकाल्ये तु यथान्यायम् । २३ ॥**

'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' इत्यादिः उत्तरा विकृतिः सद्यस्कालैव इति सूत्रेण सिद्धान्ते उक्ते तुशब्देन तं निरस्यन् पूर्वपक्षमाह । सद्यस्कालत्वं न युक्तम् । द्वैयहकाल्ये द्व्यहकालत्वे तु स्वीकृते यथान्यायं अतिदेशरूपं न्यायमनतिक्रम्य अनुष्ठानं स्यात्, तच्च युक्तम् । तस्मात् इष्टिद्वयादौ कर्तव्ये एकां द्व्यहकालामभिनिर्वर्त्य तदहरेव द्वितीयामुपक्रम्य तृतीयेऽहनि समापनीया इत्यादि । द्वे अहनी कालः यस्याः सा द्व्यहकाला, द्व्यहकालाया भावः द्वैयहकाल्यम् । 'न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्' (पा. ७।३।३) पदान्ताभ्यां यकारवकाराभ्यां परस्य आदेरचः वृद्धिर्न स्यात् । किंतु ताभ्यां यकारवकाराभ्यां पूर्वौ ऐच्संज्ञकौ ऐकारौकारौ क्रमेण स्तः । इत्यनेन 'द्व्यह' इत्यस्य 'द्वैयह' इति निष्पन्नम् । 'द्वैयह्ये वा यथान्यायं' इति य–कु–पाठे तु वाशब्दः सिद्धान्तपक्षनिरासाय । द्व्यहस्य भावः द्वैयह्यं इति विग्रहः । अर्थस्तु उक्त एव ।

**वचनादैककाल्यं स्यात् । २४ ॥**

'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' इत्यादयः दर्शपूर्णमासाभ्यामुत्तरा विकृतयः द्व्यहकालाः स्युः, न सद्यस्कालाः इति सूत्रेण पूर्वपक्षे प्राप्ते पुनः सिद्धान्तमाह । वाशब्दः पूर्वपक्षनिरासार्थः । 'य इष्ट्या पशुना सोमेन वा यजेत स पौर्णमास्याममावास्यायां वा यजेत' इति सर्वाङ्गसहितप्रधानावशिष्टस्य प्रयोगस्य विधायकात् वचनात् ऐककाल्यम्, एकः अहोरूपः कालः यस्याः सा एककाला, तस्याः भावः ऐककाल्यम्, एककालकत्वं सद्यःस्कालत्वं स्यात् । वचनेन चोदकस्य बाधः इति भावः । **के.**

**सांनाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात् प्रकृतिवत् । २५ सिद्धान्तसूत्रम् ॥**

सांनाय्यं शृतं दधि च अमावास्यायाम् । तद्विकाराः आमिक्षा पशुश्च इति । अग्नीषोमीयपुरोडाशस्य विकाराः 'अग्नीषोमीयमेकादशकपालं निर्वपेच्छ्यामाकं' इत्यादयः सोमात् अग्निष्टोमानुष्ठानोत्तरं स्युः, न प्राक् । प्रकृतिवत् । दर्शगतसांनाय्यरूपा प्रकृतिः । पौर्णमासीगताग्नीषोमीयपुरोडाशरूपा प्रकृतिश्च यथा इष्टिपूर्वाधानपक्षे सोमादूर्ध्वं भवति तद्वत् । प्रकृतिवत् विकृतिः इति **न्यायात्** ।

**तथा सोमविकारा दर्शपूर्णमासाभ्याम् । २६ ॥**

अतिदेशेन सिद्धान्तमाह । यथा सांनाय्याग्नीषोमीयपुरोडाशविकाराः सोमादूर्ध्वं तथा सोमविकाराः ज्योतिः गौः आयुः इत्येवमादयः, ते दर्शपूर्णमासाभ्यामूर्ध्वं स्युः । प्रकृतिवत् । यथा प्रकृतिः अग्निष्टोमः, इष्टिपूर्वाधानपक्षे सोमादूर्ध्वं भवति, तद्वत् विकृतिरपि । **के.**

* विकृतेः महाप्रकरणं संदंशेन असंदंशेन च भवति । **बाल.** पृ. ९, * विकृतेः महाप्रकरणं संदंशोद्भूतिकं प्रकृतेस्तु असंदंशोद्भूतिकम् । पृ. ११, * **विकृत्योः** प्रधानतन्त्रं यथा– आहिताग्नेः युगपदनेकगृहदाहादौ क्षामवत्यादीनाम् । पृ. १४८, * विकृत्योः प्रधानप्रसङ्गो यथा– या विकृतयो निमित्ते कामे च विहिताः, तत्र काम्यप्रयोगेण नित्य–(नैमित्तिक) प्रयोगस्य प्रसङ्गसिद्धिः । स्मार्तोदाहरणं तु दर्शश्राद्धविकृतिभूतयोः महालय–नित्यश्राद्धयोः पूर्वेण उत्तरस्य प्रसङ्गसिद्धिः । पृ. १४९. * विकृतीनां इष्टिपशुबन्धादीनां प्राकृते स्वरत्रये प्राप्ते प्रत्यक्षोपदेशवशेन प्रधानवेदस्वरप्रसक्तौ 'तद्ग्रहणाद्वा स्वधर्मः स्यात्' (३।७।२४।५१) इत्यनेन न्यायेन प्रयोगवचनस्य चोदकापेक्षितत्वेन दुर्बलत्वात् चोदकप्रापितस्वरग्रहणमेवेष्टम् । **वा.** ३।३।२।९ पृ. ८११. * विकृतीनामैन्द्राग्नादीनां सद्यस्कालता । ५।४।७।२२–२४. **मीको.** पृ. १३२० 'ऐन्द्राग्नादीनां विकृतिरूपाणां०' इत्यत्र द्रष्टव्यम् । * **विकृतौ** अग्निचयनस्य अतिदेशः । १०।८।११।२३–२८. **मीको.** पृ. १२७ 'अग्न्यतिग्राह्याधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतौ अग्निशब्दस्य ऊहः निर्वापमन्त्रे । ९।१।१३।३८–३९. **मीको.** पृ. १२२५ 'ऊहः अग्निशब्दस्य विकृतौ निर्वापमन्त्रे' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतौ अतिदिष्टानां प्राकृतानामर्थलोपादिना बाधः । **भाट्ट.** १०।१।१. * विकृतौ अतिदिष्टपदार्थ-

विषयः समुच्चयः 'संसवे उभे कुर्यात्', 'गोसवे उभे कुर्यात्', 'अपचितौ अपि एकाहे उभे बृहद्रथंतरे कुर्यात्' इति । **बाल.** पृ. १७७. * विकृतौ अपि उद्देश्यदेवानामेव उपलक्षणं न्याय्यं अनुवषट्कारे । **वि.** ३।२।१६. * विकृतौ अपूर्वपदार्थाङ्गत्वं प्राकृतधर्माणां नास्ति । ३।८।१६।३१. * विकृतौ अर्थश्चोदकेनातिदिश्यते, न शब्दो वाचक इत्येतद् वक्ष्यामः । **टुप्.** ५।१।१२।३९ वर्णकं २. * विकृतौ इडानिगदे यज्ञपतिशब्दस्य न ऊहः । **भा.** ९।१।१४।४०. **मीको.** पृ. ३१९३ 'यज्ञपत्यधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतौ उत्पत्त्यभावः । **सु.** पृ. ८५५. * विकृतावुपदिष्टद्रव्यदेवतादिभिः प्राकृतद्रव्यदेवतादीनां बाधः । १०।७।१७।५८–६०. **मीको.** पृ. १४४३ 'काम्यासु विकृतिषु उपदिष्टः०' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतौ उपदिष्टातिदिष्टपदार्थविषयः समुच्चयः यथा– उक्थ्यादौ क्रतुपशूनां समुच्चयः, प्राकृतवैकृतदक्षिणासमुच्चयः । वायव्यादिपशौ श्वेतगुणस्य अजादिजातेश्च समुच्चयः । दीक्षाहुतिमन्त्राणां आकूतिमग्निं प्रयुजं स्वाहा– आकूत्यै प्रयुजेऽग्नये स्वाहा इति षण्णां पण्णां मन्त्राणां समुच्चयः । वाजपेये यजुर्युक्तरथेन सह अध्वर्युभागस्य समुच्चयः । नक्षत्रेष्टौ उपहोमानां नारिष्ठहोमानां च । बृहस्पतिसवे उपदिष्टस्य बार्हस्पत्यग्रहस्य अतिदिष्टग्रहाणां च समुच्चयः । वाजपेये प्राजापत्यपशूनां संस्थापशूनां च समुच्चयः । सांग्रहण्यां आमनहोमानां अनुयाजैः सह समुच्चयः । महाव्रते उपगात्रीणां पत्नीनां अतिदिष्टैः उपगातृ-ऋत्विजां च समुच्चयः । अञ्जनाभ्यञ्जनीये गौग्गुलवाभ्यञ्जनेन नवनीतेनातिदिष्टेन समुच्चयः । महाव्रते तार्प्येण अहतस्य समुच्चयः । महाव्रते उपदिष्टश्लोकादिसाम्नां अतिदिष्टगायत्रादिसाम्नां च समुच्चयः । स्तोमविवृद्धौ उपदिष्टातिदिष्टसाम्नां समुच्चयः । पशुगणे उपयट्-होमे गुदानां समुच्चयः प्रतिपत्तित्वात् इति । **बाल.** पृ. १७७–१७८, * विकृतौ उपदिष्टपदार्थविषयः समुच्चयः यथा– दशपेये 'शतं ब्राह्मणाः सोमान् भक्षयन्ति' इति ब्राह्मणजातेः 'दश दश एकैकं चमसमनुप्रसर्पन्ति' इति शतसंख्यायाश्च समुच्चयः । पृ. १७७, * विकृतौ एव संदंशोद्भूतिकं अवान्तरप्रकरणम् । पृ. ११, * विकृतौ औपदेशिकयोः भावयोः बाध्यबाधकता यथा– खादिरबैल्वयूपयोः । पृ. १३३, * विकृतौ औपदेशिकयोः भावाभावयोः बाध्यबाधकत्वं यथा– अतिरात्रे षोडशिग्रहणाग्रहणे । पृ. १३३. * विकृतौ कथंभावाकाङ्क्षायां उपकारसंपादनं अतिदिश्यते । **मीन्या.** * विकृतौ क्वचित् प्रकृतिधर्माऽनतिदेशः । वि. ७।१।११, * विकृतौ क्वचित् 'बृहत् पृष्ठं भवति' इति श्रूयते । तत्र विधिचोदकाभ्यां बृहद्रथंतरयोर्विकल्पः इति **पूर्वपक्षः** । पृष्ठे बृहत एव नियमः न विकल्पः इति **सिद्धान्तः** । १०।७।१६.

## ✻ विकृतौ चापि तद्वचनात् । ९।३।७।२२ ॥

द्विपत्नीके बहुपत्नीके च विकृतिप्रयोगे 'पत्नीं संनह्य' इति मन्त्रः ऊहितव्यो न वेति विचारे विकृतौ चापि प्रकृतौ इव नोहितव्यः, 'यत्प्रकृतौ तद् विकृतौ' इत्यतिदेशवचनात् । प्रकृतौ च एकत्वमविवक्षितम् । द्विपत्नीकत्वादावपि द्वित्वं बहुत्वं एकत्वं च न विवक्षितव्यम् । तस्मात् पत्नीशब्दे अविकारः इति सिद्धान्तः । **के.**

## ✻ विकृतौ त्वनियमः स्यात् पृषदाज्यवद् ग्रहणस्य गुणार्थत्वादुभयोश्च प्रदिष्टत्वाद् गुणशास्त्रं यदेति स्यात् । १०।७।१९।६४ ॥

विकृतौ 'सौमारौद्रं वृते चरुं निर्वपेत् शुक्लानां व्रीहीणां ब्रह्मवर्चसकामः' इत्यादौ विकृतीष्टौ व्रीहियवयोः अनियमः विकल्पः स्यात् । ग्रहणस्य व्रीहिनिर्देशस्य गुणार्थत्वात् व्रीहिनिर्देशः शुक्लत्वादिगुणसंबन्धार्थः न यागसंबन्धार्थः । व्रीहयश्चेत् शुक्लाः, यागस्तु व्रीहिभिर्वा यवैर्वा । पृषदाज्यवत् यथा 'पृषदाज्येनानुयाजान् यजति' इत्यत्र आज्यं पृषत्तासंबन्धार्थं भवति तद्वत् । तस्माद् विकल्पः । उभयोश्च व्रीहियवयोः चोदकेन प्रदिष्टत्वात् प्रापितत्वात् विकल्पः । गुणशास्त्रं 'शुक्लानां व्रीहीणां' 'कृष्णानां व्रीहीणां' इत्यादि गुणशासनं तु 'यदा इति स्यात्' ('यदीति स्यात्' इत्यपि पाठः) यदा व्रीहयः तदा शुक्लाः इति विधानार्थं स्यात् । तस्मात् विकल्पः इति **पूर्वः पक्षः** ।



## ऐकार्थ्याद्वा नियम्येत श्रुतितो विशिष्टत्वात् । ६५ ॥

'सौमारौद्रं वृते चरुं निर्वपेत् शुक्लानां व्रीहीणां ब्रह्मवर्चसकामः' इत्यादिविकृतौ व्रीहियवयोर्विकल्पः व्रीहिग्रहणं तु शुक्लगुणसंबन्धार्थं इति पूर्वपक्षे प्राप्ते, सिद्धान्तयति । वाशब्दः प्रसिद्धः । व्रीहियवयोः ऐकार्थ्यात् हविर्जननरूपैककार्यकरत्वात् उभयोः प्राप्तयोः श्रुतितः प्रत्यक्षश्रवणेन विशिष्टत्वात् विशेषतो विहितत्वात् नियम्येत व्रीहिद्रव्यं यवानां निवृत्तिः । तस्मान्न विकल्पः ।

## विरोधित्वाच्च लोकवत् । ६६ ॥

सौमारौद्रादिचरौ व्रीहियवयोर्न विकल्पो यवानां बाध इति सिद्धान्ते साधकान्तरमाह । विकल्पेन एककार्यकराणां परस्परं विरोधो भवति, एवं व्रीहियवयोर्विरोधित्वाच्च प्रत्यक्षश्रुता व्रीहयो यवान् निवर्तयेयुः । लोकवत् यथा 'मत्स्यान् न पयसा समश्नीयात्' इति मत्स्याः पयो निवर्तयन्ति तद्वत् ।

## क्रतोश्च तद्गुणत्वात् । ६७ ॥

'सौमारौद्रं वृते चरुं निर्वपेच्छुक्लानां व्रीहीणां ब्रह्मवर्चसकामः' इत्यादि विकृतौ यदि व्रीहीणां यागेन संबन्धः स्यात् तर्हि शुक्लगुणेन संबन्धो न स्यात् इति चेत्तत्राह सिद्धान्ती क्रतोः यागस्य, तद्गुणत्वात् तौ शुक्लता च व्रीहिश्च गुणौ यस्य स तद्गुणः । अरुणैकहायनीवत् शुक्लता व्रीहिश्च क्रतोरेव गुणौ । पश्चाच्च परस्परान्वयः । तस्मात् उक्तविकृतौ व्रीहियवयोर्न विकल्पः ।

## विरोधिनां च तच्छ्रुतावशब्दत्वाद् विकल्पः स्यात् । ६८ ॥

सौमारौद्रादिचरौ व्रीहीणां नियमो यवानां निवृत्तिः इति सिद्धान्ते हेत्वन्तरमाह । विरोधिनां मध्ये तच्छ्रुतौ तस्य अन्यतरस्य विरोधिनः प्रत्यक्षे श्रवणे सति अन्यस्य च अशब्दत्वात् शब्दशून्यत्वात् कथं विकल्पः स्यात् इति काकुः । किंवा विकल्पः अन्याय्यः स्यात् इत्यध्याहारः । तथा च सौमारौद्रादिचरौ शुक्लादिव्रीहीणां प्रत्यक्षश्रवणात् यवानां चाश्रवणात् व्रीहीणां नियमः यवानां बाधः ।

## पृषदाज्ये समुच्चयाद् ग्रहणस्य गुणार्थत्वम् । ६९ ॥

सौमारौद्रादिचरौ 'शुक्लानां व्रीहीणां' इति व्रीहिग्रहणं न यागसंबन्धार्थं किंतु शुक्लगुणसंबन्धार्थं इति पूर्वपक्षे पृषदाज्यदृष्टान्त उक्तः 'विकृतौ त्वनियमः' इति सूत्रे (१०।७।१९।६४) तं पृषदाज्यदृष्टान्तं वैषम्येण विघटयति सिद्धान्ती । पृषदाज्ये ग्रहणस्य आज्यनिर्देशस्य गुणार्थत्वं पृषत्तागुणसंबन्धार्थत्वं युक्तम्, दध्ना आज्यस्य समुच्चयात्, दध्ना पृषत्ताया उत्पादनीयत्वात् । तेन न पाक्षिकं दधि, आज्येन च समुच्चयः सौमारौद्रादिचरौ तु व्रीहियवयोर्न समुच्चयसंभवः । ततो विषमो दृष्टान्तः ।

## यद्यपि चतुरवत्तीति तु नियमे नोपपद्यते । ७० ॥

सौमारौद्रादिचरौ शुक्लानां व्रीहीणां प्रत्यक्षश्रवणेन चोदकप्राप्तानां विकल्पितानां यवानां बाधेन नियमे स्वीकृते 'यद्यपि चतुरवत्ती' इति चतुरवत्तग्रहणं नोपपद्यते नोपपद्येत । 'यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या' इति पञ्चावत्तेन प्राकृतं चतुरवत्तं न निवर्त्येत ततः पञ्चावत्तेन चतुरवत्ते अनिवर्तिते 'यद्यपि चतुरवत्ती' इति चतुरवत्तदर्शनं उपपद्यते । तस्मान्न नियमः इति पूर्वपक्षिणः शङ्का ।

## क्रत्वन्तरे वा तन्न्यायत्वात् कर्मभेदात् । ७१ ॥

'यद्यपि चतुरवत्तीति तु नियमे नोपपद्यते' (१०।७।१९।७०) इति पूर्वपक्षिणः शङ्कां निरस्यति । क्रत्वन्तरे पशोरन्यस्मिन् क्रतौ दर्शपूर्णमासयोः 'यद्यपि चतुरवत्ती' इति चतुरवत्तदर्शनं भविष्यति । कर्मभेदात् दर्शपूर्णमासयोश्चतुरवत्तं पशौ पञ्चावत्तं इति कर्मणोर्भेदात् । तन्न्यायत्वात् सः 'विरोधित्वाच्च लोकवत्' (१०।७।१९।६६) इति न्यायः पञ्चावत्तचतुरवत्तयोः उक्तकर्मणोर्वा इति तन्न्याये तादृशत्वात् । इति विषमो दृष्टान्तः ।

कुतूहले तु– तत् इति पृथक् पदम्, प्रत्यक्षश्रुतं पञ्चावत्तं इति तदर्थः । न्यायत्वात् कर्मणि घञ् न्याय्यत्वात् 'विरोधित्वाच्च०' इति उक्तन्यायादिति– इति

व्याख्यातम् । **सुबोधिन्यां** तु अतन्न्यायत्वात् इत्यकारं प्रश्लिष्य न्यायस्य अप्रसरात् इति व्याख्यातम् ।

तस्मात् सौमारौद्रादिचरौ व्रीहीणां नियमः यवानां बाधः इति सिद्धान्तः । **के.**

* विकृतौ तु चोदकप्राप्ताः सन्तः ( धर्माः ) आनुमानिकाः बाध्येरन् ( अपि ) । **भा.** ३।३।९।१९. * विकृतौ दक्षिणाम्नानं चोदकेन प्राप्तं बाधित्वा निविशते, विरोधात् । **टुप्.** १०।५।२५।८५ पृ. १९८१. * विकृतौ दर्शपूर्णमासादिप्रकृतिगता गुणकामाः न प्रवर्तन्ते । ८।१।१४।२३–२५. * विकृतौ देवतानिष्ठगुणवाचिपदस्यापि त्यागार्दो प्रयोगः । १०।४।१४।२६–२९. **मीको.** पृ. २५५२ ' पावकाग्निन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतौ द्विपशुकायां एकवचनान्तबहुवचनान्तपाशमन्त्रयोः द्विवचनान्तेनोहः । ९।३।४।१०–१४. **मीको.** पृ.२५५७ 'पाशन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतौ द्विबहुपत्नीकायां ' पत्नीं संनह्य ' इत्यत्र वचनस्य नोहः । ९।३।७।२२. **मीको.** पृ. १२२८ ' ऊहः न एकवचनस्य० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतौ निर्वापमन्त्रे सवितृ–अश्वि–पूषशब्दानां न ऊहः । एते धर्मसमवेतमर्थं नाभिदधति । **भा.** ९।१।११।३६–३९. * विकृतौ पार्वणहोमयोर्नातिदेशः । ९।२।१८।५०–५५. **मीको.** पृ. २५४७ ' पार्वणन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतौ प्रकरणं नास्ति । अन्यतराकाङ्क्षारूपस्थानादेव अपूर्वाङ्गग्रहणम् । **मीन्या.** * विकृतौ प्रकरणं न प्रवर्तते । ( यतः ) विकृतेः उपकाराकाङ्क्षायां सत्यामपि विकृतौ अतिदिष्टानां प्रयाजादीनां साध्याकाङ्क्षायाः प्राकृतप्रमाणसिद्धेन उपकारेण निवृत्तेः । ( उभयाकाङ्क्षारूपप्रकरणाभावः ) । **सु.** पृ. ११९४. * विकृतौ प्रकृतिगताः कार्यकृद्धर्मा एव अतिदिश्यन्ते । **वि.** ३।८।१७, * विकृतौ प्रकृतिगतानां फल–नियम–कर्तृ–प्रधानयागसंघानां नातिदेशः, किन्तु विध्यन्तस्यैवातिदेशः, तस्यैवाकाङ्क्षितत्वात् । ८।१।१३.

**ꣻ विकृतौ प्राकृतस्य विधेर्ग्रहणात् पुनःश्रुतिरनर्थिका स्यात् । १०।७।९।२४॥**

विकृतौ साकमेधगतगृहमेधीये कर्मणि ' आज्यभागौ यजति ' इति चोदकप्राप्तावपि पुनःश्रुतिः अनर्थिका स्यात् न विधायिका किंतु अनुवादः । प्राकृतस्य आज्यभागयोर्विधेरेव अनेन ग्रहणात् अनुवादात् । तस्मात् चोदकेन प्राप्तयोः आज्यभागयोः अनुवादोऽयं ' आज्यभागौ यजति ' इति । इति **प्रथमः पक्षः** ।

**अपिवाऽऽग्नेयवद् द्विशब्दत्वं स्यात् । २५ ॥**

**द्वितीयं पक्षमाह** । आज्यभागयोः द्विशब्दत्वं स्यात् । द्वौ विधायकौ शब्दौ ययोः तौ द्विशब्दौ तयोर्भावः द्विशब्दत्वम् । यावेव आज्यभागौ चोदकः प्रापयति तावेव ' आज्यभागौ यजति ' इति शब्दोऽपि प्रापयति । आग्नेयवत् । यथा आग्नेये आवाहननिगदे ' अग्निमग्न आवह ' इत्युच्यते । अत्र द्वौ अग्निशब्दौ अर्थस्तु एक एवाग्निः । आत्मानमावह इत्युच्यते । अत्र यथा एकस्य द्विशब्दत्वं तद्वत् आज्यभागयोरपि । तस्मात् ' आज्यभागौ यजति ' इत्यनेन चोदकेन च एकमेव कर्म चोद्यते इति ।

**न वा शब्दपृथक्त्वात् । २६ ॥**

द्वितीयं पक्षं वाशब्देन पर्यावर्त्य तृतीयं पक्षं सूचयति । न एकस्य कर्मणो द्विशब्दत्वं युक्तम् । तस्मादर्थवादार्थं अनुवादोऽयं ' आज्यभागौ यजति ' इति ' आज्यभागौ यजति यशतायै ' इति । आग्नेयदृष्टान्ते तु शब्दपृथक्त्वात् अर्थभेद एव । अग्ने आवह इत्यनेन आवोढा अग्निरुक्तः, अग्निमावह इत्यनेन वोढव्योऽग्निरुच्यते । न च ताभ्यामेकोऽर्थः क्रियते । तस्मात् अर्थवादार्थं अनुवादः इति **तृतीयः पक्षः** ।

**अधिकं वाऽर्थवत्त्वात् स्यादर्थवादगुणाभावे वचनादविकारे तेषु हि तादर्थ्यं स्यादपूर्वत्वात् । २७ ॥**

**चतुर्थं पक्षमाह** । अर्थवादगुणाभावे अविकारे च सति वचनात् अधिकं स्यात् अर्थवत्त्वात् इत्यन्वयः । वाशब्दः पूर्वोक्तपक्षत्रयव्यावृत्त्यर्थः । ' आज्यभागौ यजति ' इति वाक्यं नार्थवादः । न च आज्यभागौ गुणः नापि कस्यचिद्विकारः । एवं अर्थवादगुणयोः अभावे अविकारे विकारत्वाभावे च सति ' आज्यभागौ यजति ' इति पुनर्वचनात् अधिकमेव आज्यभागरूपं कर्म चोदकप्राप्तप्राकृताज्यभागानुष्ठानोत्तरं कर्तव्यं स्यात् तस्य अर्थवत्त्वात् सफलत्वकल्पनात् । तेषु स्तुतिगुणविधिप्राकृतधर्मबाधेषु हि सत्सु अपूर्वत्वात् वचनस्य अपूर्वार्थकत्वात् तादर्थ्यं स्तुत्याद्यर्थकत्वं स्यात् । न तु इह तत् किमपि । तस्मात् प्राकृताज्यभागाभ्यां आज्यभागरूपमेव कर्मान्तरं इदं विधीयते ।

**कुतूहले** तु— आज्यभागकर्मणी अविकारे अप्राकृते कर्मान्तरे प्रत्येतव्ये । अर्थवत्त्वात् कर्मान्तरत्वे सत्येव पुनः श्रवणस्य अर्थवत्त्वात् । ते च कर्मणी अधिके प्रधानयागादुपरिष्टात् कार्ये पाठक्रमात् । अर्थवादगुणाभावे वचनात् अर्थवादगुणस्य अर्थवादत्वप्रयोजकधर्मस्य विध्येकवाक्यत्वस्य अभावे असद्भावे वचनात् आज्यभागयोः पुनर्वचनात् विध्येकवाक्यत्वाभावेन अर्थवादत्वासंभवात् इति यावत् । तेषु हि तादर्थ्यम्, हि यतः तेषु ' अप्सुमन्तावाज्यभागौ ' इत्यादिवाक्येषु गुणविधानं युज्यते– इति व्याख्यातम् ।

**प्रतिषेधः स्यादिति चेत् । २८ ॥**

आज्यभागौ इति तद्धर्मकत्वे लक्षणाप्रसङ्गात् न कर्मान्तरवचनम् । किंतु परिसंख्यया आज्यभागेतरेषां अङ्गानां प्रतिषेधः स्यात् । तस्मात् समाख्या इति **पञ्चमः** ।

**नाश्रुतत्वात् । २९ ॥**

चतुर्थपक्षवाची पञ्चमं पक्षं दूषयति । न प्रतिषेधः, अश्रुतत्वात् । नहि अत्र प्रतिषेधवाचि किंचित् पदं श्रूयते । तस्मान्न परिसंख्या । किंतु कर्मान्तरवचनम् ।

**अग्रहणादिति चेत् । ३० ॥**

न कर्मान्तरचोदना । अत्र आज्यभागयोः स्वशब्देन ग्रहणम्, अन्येषामङ्गानां चोदकेन ग्रहणम् । स्वशब्देन गृहीतयोः आज्यभागयोः चोदकेन अग्रहणात् । तथा च प्रकृतिवदेव सर्वमनुष्ठानम् । तस्मात् चोदकेन अग्रहणात् आज्यभागौ यजतीति ग्रहणम् । इति **षष्ठः पक्षः** ।

**न तुल्यत्वात् । ३१ ॥**

नैतदेवम् । चोदको यथा अपूर्वद्वारा इतराण्यङ्गानि गृह्णाति तथा आज्यभागावपि । तस्मात् अन्यैरङ्गैः तुल्यत्वात् चोदकेन अगृहीतयोराज्यभागयोर्ग्रहणं इति वक्तुं न युक्तम् ।

**तथा तद्ग्रहणे स्यात् । ३२ ॥**

ननु चोदकेन आज्यभागावेव गृहीतौ तथा च आज्यभागवाक्येन चोदकस्य आज्यभागयोः संकोचः इति सप्तमः पक्षोऽस्तु इति चेन्नेत्याह । तद्ग्रहणे चोदकेन आज्यभागयोरेव ग्रहणे तथा स्यात् अग्रहणेन तुल्यं स्यात् । चोदको यथा आज्यभागौ गृह्णाति तथा इतराण्यपि अङ्गानि गृह्णीयात् चोदकस्य उभयत्र तुल्यत्वात् ।

**अपूर्वतां तु दर्शयेद् ग्रहणस्यार्थवत्त्वात् । ३३॥**

' आज्यभागौ यजति ' इति वाक्यं गृहमेधीयस्य अपूर्वतां दर्शयेत् । ग्रहणस्य आज्यभागपदोच्चारणस्य गृहमेधीयापूर्वतायामेव अर्थवत्त्वात् सफलत्वात् । पूर्ववत्त्वे तु तत् अनर्थकं स्यात् । तस्मात् गृहमेधीयं कर्म अपूर्वम् । न प्रकृतिर्न विकृतिः । तुशब्दः पूर्वपक्षनिरासार्थः । **के.**

* विकृतौ प्राकृतैकदेशग्रहणे प्राथमिकानामेव ग्रहणम्, अन्त्यानां लोपः । १०।५।१।१–६. **मीको.** पृ. १३५५ ' कपालन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतौ प्राकृतकाम्यगुणानां नातिदेशः । ८।१।१४।२३–२५. **मीको.** पृ. २५२ ' अतिदेशो न विकृतौ प्राकृतकाम्यगुणानाम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतौ प्राकृतधर्मानुवादेन विधीयमानयोः धर्मयोः अन्तराले अपूर्वमपि अङ्गं पठ्यते, तदपि प्रकरणेन विनियुज्यते यथा आमनहोमेषु । **मीन्या.** * विकृतौ प्राकृतयाज्यानुवाक्ययोः बाधः । **भाट्ट.** १०।४।२१. * विकृतौ मन्त्रे सूर्यनीवारादिपदानां ऊहः । **भाट्ट.** ९।३।१. * विकृतौ यजमानशब्दस्य दर्शपूर्णमासस्थसूक्तवाकगतस्य ऊहः । ९।१।१५।४१. **मीको.** पृ. ९६९ ' आयुरादिफलन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतौ यत् प्राकृताङ्गानुवादेन गृह्यते तत् प्रकरणाद् गृह्यते । यथा ' औदुम्बरो यूपो भवति ' इति यूपानुवादेन औदुम्बरत्वम् । **मीन्या.** * विकृतौ यस्यां प्राकृतं किंचिदङ्गं संकीर्त्य तस्य पुरस्तात् परस्ताद्वा वैकृतमङ्गमाम्नायते तत्र कथंभावगृहीताङ्गमध्यवर्तित्वात् ( अवान्तर- ) प्रकरणपाठो

विज्ञायते । वा. ३।३।७।१४ पृ. ८५५. * विकृतौ यत्र प्राकृताङ्गानुवादेन विधिः संदंशो वा तत्रैव प्रकरणं विनियोजकं अन्यत्र संनिधिरेव । बाल. पृ. ११.

**卐 विकृतौ लुप्तार्थानां प्राकृतानामङ्गानां बाधः ॥**

**विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् । १०।१।१।१ ॥**

**भाष्यम्**-- ऊहो वृत्तः । बाधाभ्युच्चयं इदानीं वर्तयिष्यामः । बाधो नाम यदेवेदमिति निश्चितं विज्ञानं कारणान्तरेण मिथ्येति कल्प्यते । तथा अभ्युच्चयो यदिदमिह भवतीति विज्ञातेऽपरमपि भवतीति विज्ञानम् । तत्रायमर्थः प्रथमं परीक्ष्यते किं सर्वं प्राकृतं विकृतौ कर्तव्यमुत किंचिद्बाध्यते इति । किं तावत्प्राप्तम् ? विधेः प्राकृतस्य प्रकरणान्तरे विकृतौ यतो भवत्यविशेषेणातिदेशः, अतो यच्च यावच्च प्राकृतं धर्मजातं तत्सर्वं विकृतौ कर्तव्यम्, यदप्यर्थलुप्तम् । कुतः ? वचनेन हीदं सर्वं प्राप्यते । न च वचनस्यातिभारोऽस्ति प्रापयतः । कथं वचनमिति गम्यते ? सर्वास्वेव वैकृतीषु देशनासु प्राकृतं धर्मजातमपेक्ष्यते वाक्यशेषत्वेन । तद्यथैव प्राकृत्यां देशनायामनुषज्यते, एवं वैकृत्यामपि । न कश्चिद्विशेषोऽस्ति । तत्र यथा कृष्णलानां पाकोऽप्राकृतार्थोऽपि वचनप्रामाण्यात् क्रियते, एवं अवहन्त्यादि अप्राकृतार्थमपि सर्वं कर्तव्यमिति ।

**टुप्**— सप्तमेन अतिदेशसत्ता व्याख्याता । दशमेन इदानीं किमतिदिश्यते इति व्याख्यायते । यत्प्रकृतौ विद्यते तदतिदिश्यते । तस्यां च शास्त्रपदार्थोपकारा विद्यन्ते । अतस्ते अतिदिश्यन्ते । तस्मात् लुप्तार्थमपि प्रवर्तते ।

**अपिवाऽभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात् । २ ॥**

**भाष्यम्**— अपिवेति पक्षव्यावृत्तिः । नैतदस्ति । सर्वं प्राकृतं विकृतौ कर्तव्यमिति । क्वचिदभिधानसंस्कारद्रव्यं निवर्तितुमर्हति यल्लुप्तार्थम् । कुत एतत् ? अभिधानसंस्कारद्रव्यं हि प्रयोजने सति क्रियते, नाप्रयोजनम् । अन्यस्मै प्रयोजनाय तदाम्नायते, न स्वार्थम् । ननु चोक्तं लुप्तार्थमपि क्रियते, वचनप्रामाण्यात् । यथा कृष्णले पाकः । नेत्याह । नास्ति लुप्तार्थस्य देशकं वचनम् । न वैकृतं कर्म प्राकृतैरङ्गपदार्थैः सहैकवाक्यतां याति । नैवं विज्ञायते, यागेन फलं कुर्यात्, कथम् ? प्राकृतैरङ्गैरिति । कथं तर्हि ? यथा प्राकृतेन यागेन फलं साधितमभूत् तथेति ।

कुत एतत् ? यागगतो हि व्यापारविशेषस्तेन अपेक्ष्यते, न व्यापारमात्रम् । यागगतश्च व्यापारः प्राकृते यागे प्रयोगवचनेन कल्पितः, संगृहीतश्च विद्यते । स शक्योऽपेक्षितुम् । स च आकाङ्क्षितो निराकाङ्क्षं शक्नोति कर्तुमिति । अङ्गेष्वपि अपेक्ष्यमाणेषु न यागगतो विकृतौ व्यापारविशेषः कल्प्यः स्यात् । इतरथा लक्षणा स्यात् । यथा दण्डेन युध्यते इति वचने न दण्डिरूपं शब्देनाभिहितम् । यदि तु तेन लक्षितेन प्रयोजनं स्यात्, शक्यते तेन लक्षयितुम् । एवमिहापि अङ्गत्वं यागगतो विशेषो नाङ्गेष्वपेक्ष्यमाणेषु शब्दाभिहितो भवति । लक्षणया तु कल्प्यते । लक्षणायां च शब्दो बाध्येत ।

अथ शब्दो मा बाधीति यागगतो विशेषो नैवापेक्ष्येत, अङ्गान्येवापेक्ष्येरन् । ततः, कथमिति-- इतिकर्तव्यताविशेषं प्रति वैकृतस्य कर्मणश्चोदकशब्दोऽनिवृत्ताकाङ्क्ष एवावतिष्ठेत । अङ्गैरपि चापरेतिकर्तव्यता आकाङ्क्ष्येत । गम्यमाना च प्राकृतयागेतिकर्तव्यता उत्सृज्येत । प्राकृतानां चाङ्गानां प्रकरणेऽर्थवतां दुर्लभो वैकृतेन कर्मणा एकवाक्यभावोऽभ्युपगम्येत । सर्वं चैतदन्याय्यम् । तस्मादेवमभिसंबन्धः क्रियते । यथा प्राकृतेन यागेन फलं साध्यते, तथैवैतेनापीति । किमतो यद्येवम् । एतदतो भवति । प्राकृतान्यङ्गानि यस्मै प्रयोजनाय प्रकृतौ भवन्ति, नासति तस्मिन् प्रयोजने विकृतौ चोदितानि भवन्ति । तस्मात् लुप्तप्राकृतप्रयोजनं न चोदकश्चोदयतीति ।

**टुप्**-- अर्थलुप्तं न प्रवर्तते । कथंभावोऽयं लौकिको वैदिकश्चोपकारमेवापेक्षते । उपकारद्वारेण उपकारकप्रवृत्तिः । तस्मात् लुप्तार्थस्य निवृत्तिः । **ननूक्तं** प्रकृतौ शास्त्रपदार्थोपकारा विद्यन्ते इति । तत्र कथमुपकारोऽतिदिश्यते । उच्यते । सौर्यं उपमानेनाऽऽग्नेयविध्यन्तं गृह्णाति । आग्नेये चोपकारा अनन्तराः । व्यवहिताः पदार्थाः । व्यवहिततराणि शास्त्राणि । अतः कथभावोऽनन्तरानुपकारान् पश्यति ।



तांश्च गृह्णाति । पदार्थाः उपकारैर्व्यवहिताः । न चापेक्षिताः । ननु प्रकृतौ पदार्था एवानन्तराः, शाब्दत्वात् । प्रथमं ते गृह्यन्ते । पश्चात्तूपकाराः कल्पिताः । विकृतावपि तथैव युक्तमिति । सत्यम् । प्रकृतौ पदार्था गृह्यन्ते, न तु पदार्थापेक्षया । किंतूपकारापेक्षया । स एष कथंभावः श्रुत्योपकारान् गृह्णाति, लक्षणया पदार्थान् । श्रुतिश्च लक्षणाया गरीयसी ।

**तेषामप्रत्यक्षशिष्टत्वात् । ३ ॥**

**भाष्यम्**-- अथ यदुक्तम्, यथा कृष्णलेषु लुप्तप्राकृतप्रयोजनोऽपि पाको वचनप्रामाण्यात् क्रियते, एवमन्यदपि क्रियेतेति । तन्न । न हि कृष्णलेषु पाकश्चोदकेन प्राप्नोति । प्रत्यक्षं हि तत्र वचनम्, 'घृते श्रपयति' इति । न तत् प्राकृतप्रयोजनं पाकमाह । तत्र वचनप्रामाण्याददृष्टार्थः पाकः । यदि च तत्र प्रत्यक्षवचनं नाभविष्यत्, तेषामप्रत्यक्षशिष्टत्वात् पाकोऽपि नाभविष्यदेव । तस्मादनुपवर्णनं पाकवदिति ।

किं भवति प्रयोजनम् ? कतरद्वा वैकृतमुदाह्रियते इति । क्वचित् श्रूयते, 'स्वयं दितं बर्हिर्भवति' इति । तत्र प्राकृतं द्रव्यं निवर्तते । 'स्वयं कृता वेदिर्भवति' इति । उद्धननखननपरिलेखनानि निवर्तन्ते । 'स्वयं शीर्णा शाखा भवति' इति, असिद्रव्यं निवर्तते । मन्त्राश्चैतेषु निवर्तन्ते ।

**शा**—'**ऊहे सिद्धेऽतिदिष्टानां बाधाभ्युच्चयचिन्तया । इयत्ता दशमेऽङ्गानां विकृतिष्वभिधीयते ॥**' अतिदिष्टपदार्थविषयत्वात् बाधस्य अपि ऊहवत् अतिदेशोत्तरकालमारम्भः । प्रथमं तावत् इदं चिन्त्यते- किं सर्वं प्राकृतं विकृतौ कर्तव्यं उत लुप्तप्राकृतप्रयोजनं न कर्तव्यमिति । तदर्थमिदं विचार्यते- किं प्राकृतमङ्गजातमङ्गशास्त्रं वा स्वरूपेणैव अनादृत्य प्रयोजनं विकृतावतिदिश्यते । सौर्येण भावयेत् । कथम् ? आग्नेयस्य यान्यङ्गानि तानि कृत्वेति, उत पदार्थकार्याणि यानि दृष्टादृष्टरूपाणि तद्वत्तासंपादनाय य आग्नेयादिगतो व्यापारः सः अतिदिश्यते । सौर्येण भावयेत्, कथम् ? यथा आग्नेयेन तथेति । तत्र पूर्वस्मिन् पक्षे अतिदेशावगताङ्गभावानां पदार्थानां प्राकृतप्रयोजनानादरेण विकृतावेव यथासंभवं दृष्टादृष्टप्रयोजनकल्पनात् स्वयं दितेऽपि बर्हिषि लवनं अदृष्टार्थतया कर्तव्यमिति नास्ति बाधः । उत्तरत्र तु प्राकृतस्य लवनकार्यस्य दृष्टस्य स्वयं दिते बर्हिषि अभावेन अनतिदेशात् लवनस्वरूपस्य च अनतिदेशात् न कर्तव्यं लवनमिति सिध्यति बाधः । तत्र उपदेशवत् अतिदेशोऽपि पदार्थपूर्वक एव युक्तः । उपदेशानुरूपत्वात्तस्येति मन्वानः, सर्वं कर्तव्यं न तु किंचित् बाधितव्यमित्याह । सिद्धान्तस्तु '**अपेक्षासत्तियोग्यत्वैरुपकारातिदेशनम् । तदभावात्पदार्थानामतिदेशो न कल्प्यते ॥**'

**सोम**— अबाधो द्विविधः । अभ्युच्चयपर्यन्तः केवलश्च । यत्र वैकृतेन प्राकृतस्य बाधप्रसक्तौ अबाधः प्रतिपाद्यते सोऽभ्युच्चयपर्यन्तः । तत्र प्राकृतवैकृतयोरुभयोरप्यनुष्ठेयत्वात् । यत्र तु न वैकृतं किंचित् किंतु प्राकृतस्यैव लुप्तद्वारत्वादिशङ्कया बाधप्रसक्तौ अबाधो व्युत्पाद्यते सः केवलः । तत्र प्राकृतमात्रस्यैव अनुष्ठेयत्वेन अभ्युच्चयाभावात्, यथा खलेवाल्यादौ पर्यूहणादेः । एवं च अभ्युच्चयग्रहणं केवलाबाधस्याप्युपलक्षणमिति ऊहनिरूपणानन्तरं बाधनिरूपणस्य अवसरलक्षणा **संगतिः । सूत्रार्थस्तु**- प्रकरणान्तरे विकृतिलक्षणे विधेः विधीयमानपदार्थानां विधायकशास्त्रस्य चातिदेशात् सर्वेषामनुष्ठानं स्यान्न कस्यचिद्बाध इति ।

**वि**— ' रूपान्तरत्वादासन्नं नवमे स्थितमूहनम् । निवृत्तित्वाद्विप्रकृष्टो दशमे बाध उच्यते ॥ वेदिः स्वयंकृतेत्यादौ प्राकृतं सर्वमाचरेत् । लुप्तार्थं बाध्यतां वाऽऽद्यश्चोदकप्रापितत्वतः ॥ अपेक्षासत्तियोग्यत्वहानेरुद्धननादिकम् । बाध्यतेऽपेक्षितं सर्वं चोदकेनातिदिश्यते ॥ '

**भाट्ट**— तदेवमूहे सिद्धे अधुनाऽतिदिष्टानां पदार्थानामुत्सर्गापवादाभ्यां विकृतौ बाधो निरूप्यते । तत्र बाधो नाम प्रकृतिसंबन्धिनः पदार्थस्य विकृत्यङ्गत्वग्राहकप्रमाणाभावः । न तु पदार्थाभावमात्रम्, प्रकृतावेव नित्ये यथाशक्तिप्रयोगे तत्सत्त्वेन बाधव्यवहारापत्तेः । नापि विकृतौ सः, नित्यविकृतिप्रयोगे तदापत्तेः, पशुपुरोडाशे प्राकृतपदार्थाभावेन प्रसङ्गेऽपि बाधत्वापत्तेश्च । अस्ति चेदं कृष्णलचरौ, प्रकृतिसंबन्धिनोऽवघातस्य वितुषीभावरूपप्रयोजनलोपेन सतोऽप्यतिदेशस्य विकृत्यङ्गत्व-

ग्राहकत्वाभावात् । अस्ति च कुशानां प्रकृतिसंबन्धिनां शरैः प्रत्याम्नानेन कार्यसिद्धौ अतिदेशेन विकृत्यङ्गत्वाभावात्तेषु । 'न होतारं वृणीते' इत्यादिपर्युदासवशाच्च होतृवरणादेर्विकृत्यङ्गत्वाभावात्तेष्वपि । अत्र विकृत्यङ्गत्वग्राहकप्रमाणाभावस्य घटादावपि सत्त्वादाद्यं विशेषणम् । नित्यप्रयोगे प्रसङ्गस्थले चातिदेशस्यैव विकृत्यङ्गत्वग्राहकप्रमाणस्य सत्त्वादन्त्यम् । यद्यपि च प्रसङ्गस्थलेऽन्यत एव उपकारलाभान्न तस्मिन् प्रयोगे प्रयाजादिपदार्थस्याङ्गत्वम्, तथापि सर्वत्र प्रकृतौ विकृतौ वा पदार्थानामन्यत उपकारालाभे प्रयाजादिभिस्तत्तत्प्रधानस्योपकुर्यात्, उपकारलाभे तु तैरेव करणनिष्ठयोग्यतां कुर्यादित्येवंविधस्यैव प्रमाणस्य कल्पनान्न विकृत्यङ्गत्वग्राहकप्रमाणासत्त्वम् । अत एव प्रकृतेरपि दैववशान्नैमित्तिकविकृतिप्रयोगान्तःपाते प्रसङ्गसिद्धिरव्याहता ।

अत्र चान्यसंबन्धिनोऽन्याङ्गत्वग्राहकप्रमाणाभाव इत्युक्तौ विकृतिसंबन्धिन उपहोमादेः प्रकृतिसंबन्धिनः प्रयाजादेर्वा ज्योतिष्टोमाङ्गत्वग्राहकप्रमाणाभाववत्त्वात् बाधापत्तेः प्रकृतिविकृतिपदोपादानम् । अत्र च प्रकृतिशब्दो नातिदेशनिरूपकपरः, विकृतिशब्दो वा नातिदेशवत्परः । तथात्वे गृहमेधीयस्य वस्तुतो दर्शप्रकृतित्वाभावेन तत्र प्रयाजादिबाधे निरुक्तलक्षणाव्याप्तेः । अपितु दर्शादिसंबन्ध्यङ्गप्रकारकज्ञानविशेष्यपरो विकृतिशब्दः, प्रकृतिशब्दश्चोक्तविशेष्यतानिरूपकप्रकारपरः, तच्च ज्ञानं सौर्यादावतिदेशवाक्यजन्यं प्रमारूपम्, गृहमेधीये तु 'आज्यभागौ यजति' इत्येतद्वाक्याभावमापाद्य तार्किकम् । अत एवोभयसाधारण्येन दोषजन्यज्ञानत्वेनानुगमः । अत एव ज्योतिष्टोमादौ दोषेण विकृतित्वभ्रमे प्रयाजादिबाधे नातिव्याप्तिः । **अस्तु** वा गृहमेधीयवृत्तिप्रयाजादिबाधस्याहवनीयादिबाधवत् स्वरूपेणाध्यायार्थत्वाभावेऽपि प्रसङ्गागतयैव दशमाध्यायनिरूप्यत्वम् ।

एवं च यद्धर्मावच्छिन्नस्य यत्प्रकृति-संबन्धित्वविशिष्टस्य यद्विकृतिभूतयदङ्गत्वग्राहकप्रमाणविषयत्वाभावः तद्धर्मावच्छिन्नस्य तत्र बाधितत्वमिति निष्कृष्टोऽर्थः फलितः । यदि तु निरुक्तबाधस्याप्यध्यायान्तरे क्वाचित्कं निरूपणं संभाव्येत तथाऽपि दशमे तस्य प्राधान्येन निरूपणान्न काचित्क्षतिः । दृश्यत एव हि तन्त्रावापनिरूपणस्य तृतीये प्रासङ्गिकं निरूपणं सर्वपृष्ठायाम्, नामधेयत्वादेश्च दर्वीहोमादावष्टमादौ ।

अत एव भाष्यकारोक्तमपि बाधलक्षणमतिप्रसक्तमपि नातीवासंगतम्, तथाहि–यद्विशेषादर्शने यस्य शास्त्रस्य यद्विषये यादृशनिश्चयजनकत्वं तादृशनिश्चयस्य तद्विशेषदर्शनेनाप्रामाण्यनिश्चय एव तद्विषये तस्य शास्त्रस्य बाधः । भवति च शरपदादिरूपविशेषादर्शनेऽतिदेशशास्त्रस्य कुशाहवनीयादिविषये, तत्तदुद्देश्यसंबन्धनिश्चायकत्वं तस्य तद्विशेषदर्शनेनाप्रामाण्यनिश्चय इति तद्विषये तस्य शास्त्रस्य बाधः । इदं च यद्यपि रागप्राप्तानृतवदनादिबाधेऽसंभवि, तथापि तस्य प्रासङ्गिकनिरूपणीयत्वाङ्गीकारात् न क्षतिः । इदं हि बाधसामान्यलक्षणं अध्यायान्तरस्थश्रुतिलिङ्गादिबाधसाधारणमपि प्राधान्येनेहैव निरूपणीयत्वात् यथा नासंगतं तथा ममापीति न कश्चिद्दोषः । परं तु अतिदेशोपजीवित्वस्य भाष्यकारोक्तबाधेऽवच्छेदकावच्छेदेनासंभवात् तदनङ्गीकारः ।

अस्य च बाधस्योहोपजीवित्वाभावेऽपि ऊहस्यातिदिष्टपदार्थधर्मत्वेनातिदेशप्रत्यासन्नत्वात् तदुत्तरं निरूपणे कृत एवावसर इति ऊहेनापि संगतिः ।

अयं च बाधस्त्रिविधः अर्थलोपात्, प्रत्याम्नानात्, प्रतिषेधाच्चेति । तत्रान्त्यभिन्नबाधोपोद्घातत्वेनेदं प्रतिपादनीयम्, यत्प्राकृतपदार्थानामुपकारानादरेण स्वरूपेणैव न विकृतावतिदेशः । येन प्रकृतिदृष्टकार्यासंभवे विकृतावेवादृष्टं प्रयोजनान्तरं कल्पयित्वा बाधाभावः शङ्क्येत । विकृतेस्तु फलानुकूलयोग्यताजननार्थमुपकारस्यैवापेक्षितत्वात् पदार्थानां च स्वतः क्षणिकत्वेन योग्यताजननेऽयोग्यत्वादुपकारद्वारैव प्रकृतौ योग्यताजननेनोपकारस्यैव तज्जनने योग्यत्वावसायात् विकृतिभावनया च सादृश्येन प्रकृतिभावनोपस्थितौ तदव्यवहितान्वयिनोऽवान्तरोपकारस्यैव संनिहितत्वात् तेषामेवाकाङ्क्षाऽऽसत्तियोग्यत्वैः प्रथममतिदेशो न तु पदार्थानाम्, तेषां तु तत्पृष्ठभावेन ।

तत्र च द्वयी गतिः तत्तदवान्तरोपकाराणामेवाग्नेयसंबन्धित्वेन रूपेण क्रोडीकारात् आग्नेयोपकारव्यक्तिसमानजातीयोपकारैः सौर्यस्योपकर्तव्यं इत्येवंविधवाक्यकल्पनयोपकारेष्वतिदिष्टेषु पश्चात्तज्जनकापेक्षायां तज्जनकप्राकृतपदार्थानां पृथगतिदेशकल्पनम् । न चैवं विकृतौ तादृशोपकारबाधेऽपि पदार्थानामेवोपकारान्तरकल्पनया करणापत्तेः ऊहबाधोच्छेदापत्तिः । उपकारजनकापेक्षायामेव पदार्थातिदेशस्य कल्पनेन तद्भावे तस्यैवाकल्पनात्, पदार्थातिदेशस्यैव प्रथमतः कल्पनेऽपि वा वचनातिदेशनामातिदेशयोरिव निरूपितरूपाणामेव पदार्थानामतिदेशात् प्राकृतोपकाराभावे उपकारान्तरकल्पनानुपपत्तेश्च ।

**वस्तुतस्तु** उपकारजनकापेक्षायामपि पृथक्पदार्थातिदेशकल्पने गौरवात् पदार्थविशिष्टोपकाराणामेक एवातिदेशः । प्रकृतिवत् तत्तत्पदार्थजन्यांस्तत्तदुपकारान् विकृतौ कुर्यादिति । शास्त्रस्य तु पृथक्प्रवृत्तौ वाऽतिदेशकल्पने नैव किञ्चित्प्रमाणं पश्यामः । तत्त्वं तु प्राकृतयोग्यताजनकैर्विकृतियोग्यतां प्रकृतिवज्जनयेदित्येवातिदेशः । जनकत्वं चोपकारवत् पदार्थेऽप्यविशिष्टमित्येक एवोभयोरतिदेशः । अतिदेशलक्षणं च पदार्थमादायोपपन्नतरम् । अत एवापेक्षितत्वादिनोपकाराणामेवातिदेशः । पदार्थानां तु तदाक्षेपादेव करणमिति न तेषां विकृत्यङ्गत्वमित्यपास्तम्, तथात्वे उपकारत्वस्याप्यतिदेश्यतावच्छेदककोटिप्रवेशे गौरवापत्तेः । उपकाराणां प्रकृतावपि करणनिष्ठयोग्यतारूपफलप्रयुक्तपदार्थानुनिष्पन्नानामिह पदार्थाक्षेपकत्वकल्पने गौरवाच्च । अतिदेशैक्येऽपि च प्रकृतिवद्भावस्याप्यतिदेशान्न पदार्थानामुपकारमनादृत्यातिदेशः । एवं च यत्र प्राकृतोपकाराभावस्तत्र तज्जनकपदार्थस्य नैवातिदेशः ।

न चैवमपि प्रत्युपकारं प्रतिपदार्थं वाऽनन्तातिदेशस्य कल्पने गौरवादेकस्यैवातिदेशस्य पदार्थान्तरप्राप्त्यर्थमावश्यकस्य बाधितपदार्थप्रापकत्वापत्तिः, एकस्यैवातिदेशस्य बाधितपदार्थांशे तात्पर्यविषयत्वाकल्पनात् अत एव तादृशविषये न तच्छास्त्रम् । वस्तुतस्तत्तदतिरिक्तविषयमेव ।

न चैवं प्रसक्त्यभावात् बाधानापत्तौ सुतरां प्राप्तबाधानापत्तिः, विशेषादर्शननिमित्तकभ्रान्तिप्रसक्त्यैव तदुभयाङ्गीकारात् । अत एव फलतस्य बोधकस्य विशेषविषयताप्रतिबन्धकत्वमेव प्राप्तबाधत्वमित्युक्तं **कौस्तुभे** । स चायं बाधस्त्रिविध इत्युक्तम् । तत्रान्त्ययोरुदाहरणं वक्ष्यते ।



अर्थलोपाद्बाधस्य तु विकृतिविशेषे 'स्वयं दिनं बर्हिर्भवति' इति । अत्र स्वतश्छिन्नबर्हिषि लवनप्रयोजनस्य स्तरणोपयोगिमूलाग्रावयवसंयोगनाशस्य प्रतियोग्यभावेनानुत्पत्तेरर्थलोपेनाध्वर्युकर्तृकस्य प्रयोगान्तःपातिनो वैधस्य लवनस्य तदङ्गभूतासिदानादेश्च बाधः । ( इत उत्तरः कृष्णलावघातविषयको **भाट्टग्रन्थः मीको**. पृ. ६८० 'अवघातस्य कृष्णलचरौ बाधः' इति बिन्दौ गृहीत इति ज्ञेयम् ) । **के.**

**मण्डन—** 'लुप्तार्थकं यत् विकृतौ न तत् स्यात् ।'

**शंकर—** 'लुप्तार्थबाधो विकृतौ ।'

**विकृतौ शब्दवत्त्वात् प्रधानस्य गुणानामधिकोत्पत्तिः संनिधानात् । १०।३।१।१ ॥**

अग्नीषोमीये पशौ 'एकादश प्रयाजान् यजति एकादशानुयाजान्' इति श्रूयते । तदिदं अप्राप्तायां प्राकृतेतिकर्तव्यतायां कर्मान्तरं विधीयते इति पूर्वः पक्षः । तदाह– विकृतौ प्राकृतगुणविलक्षणगुणकप्राकृताङ्गके अग्नीषोमीयपश्वादौ शब्दवत्त्वात् एकादशत्वादिविशिष्टप्रयाजादिविधायकशब्दवत्त्वात् गुणानां अधिकोत्पत्तिः अप्राकृतगुणानां अधिकानां स्वातन्त्र्येण उत्पत्तिः स्यात् । प्रधानस्य संनिधानात् मुख्यविशेष्यस्य भावनायाः संनिधानात् । पदश्रुत्या धात्वर्थविधिः इत्यर्थः । इति **सुबोधिनी** । विकृतौ अग्नीषोमीयपशुयागभावनायां प्रधानस्य करणांशभूतयागमात्रस्य शब्दवत्त्वात् प्रत्यक्षश्रुतत्वात् गुणानां प्रयाजानां अधिकोत्पत्तिः एकादशत्वसंख्याविशिष्टतया उत्पत्तिः । न तु प्रयाजानुवादेन केवलगुणविधिः । ननु विशिष्टविधौ गौरवं स्यात् तत्राह– संनिधानात् एकपदश्रुतिलाभादित्यर्थः । तस्मात् विशिष्टविधिः आश्रयणीयः इति **कुतूहलम्** ।

**प्रकृतिवत्त्वस्य चानुपरोधः । २ ॥**

अग्नीषोमीये पशौ 'एकादश प्रयाजान् यजति एकादशानुयाजान्' इति श्रुतम् । तदिदं अप्राप्तायां प्राकृतेतिकर्तव्यतायाम्, कर्मान्तरं विधीयते इति पूर्वपक्षे हेत्वन्तरमाह । एकादशत्वसंख्याविशिष्टप्रयाजविधौ सति प्रकृतिवत्त्वस्य 'प्रकृतिवत् कर्तव्यं' इति चोदकशब्दस्य अनुपरोधः, न उपरोधः, कल्पना न भवति ; वैकृतैरेव संनिहितैः प्रयाजैः उपकाराकाङ्क्षाशान्तेः ।

**चोदनाप्रभुत्वाच्च । ३ ॥**

पूर्वपक्षे हेत्वन्तरमाह । चोदनाप्रभुत्वात् चोदनायाः एकादशत्वविशिष्टप्रयाजविधेः चोदकलोपे प्रभुत्वात् समर्थत्वात् । तथा च प्रयाजादियागस्य एकादशत्वसंख्यायाश्च विधाने शब्दस्य समर्थत्वात् प्राकृतीतिकर्तव्यता न प्राप्नोति ।

**प्रधानं त्वङ्गसंयुक्तं तथा भूतमपूर्वं स्यात् तस्य विध्युपलक्षणात् सर्वो हि पूर्ववान् विधिरविशेषात् प्रवर्तितः । ४ ॥**

अग्नीषोमीये पशौ 'एकादश प्रयाजान् यजति एकादशानुयाजान्' इति श्रुतम् । एकादशत्वसंख्याविशिष्टं प्रयाजादि कर्मान्तरमत्र विधीयते, अत्र प्राकृती इतिकर्तव्यता न प्राप्नोति इति **पूर्वपक्षं** तुशब्देन निवर्तयन् **सिद्धान्तमाह** । नैतदस्ति प्राकृती इतिकर्तव्यता न प्राप्नोतीति । किन्तु प्राप्नोत्येव । प्राकृतं प्रधानं यथा अङ्गसंयुक्तं यादृशाङ्गसंयुक्तम्, तथाभूतं तादृशाङ्गसंयुक्तं अपूर्वं विकृतिसामान्यं स्यात् । क्वचित् विकृतौ सौर्यादौ 'प्रयाजे प्रयाजे कृष्णलं जुहोति' इति तस्य प्राकृताङ्गस्य विध्युपलक्षणात् विधानस्य उपलम्भात् सर्वो हि सर्व एव विधिः वैकृतः पूर्ववान् प्रकृतिपूर्वक इति अविशेषात् अविशेषेण प्रवर्तितः स्यात् । 'प्रकृतिवत् विकृतिः कर्तव्या' इति सर्वविकृतिषु नियमः । तस्मात् अग्नीषोमीये पशौ अपि प्रकृतितः इतिकर्तव्यतायां प्राप्तायां एकादशत्वादिगुणविधय एव इति **सिद्धान्तः** ।

**न चाङ्गविधिरनङ्गे स्यात् । ५ ॥**

अग्नीषोमीये पशौ 'एकादश प्रयाजान् यजति एकादशानुयाजान्' इति श्रुतम् । तत्र प्रकृतितः प्राप्तायां इतिकर्तव्यतायां एकादशत्वादिगुणविधिः इति सिद्धान्तं उपोद्बलयति । न च अनङ्गे कर्मणि अङ्गस्य विशेषविधिः स्यात् । भवति च विशेषविधिः 'आश्वबालः प्रस्तरः' इति । नहि असति प्रस्तरे आश्वबालत्वरूपो विशेषः शिष्येत । तस्मात् विकृतिषु प्रकृतितः इतिकर्तव्यतायां प्राप्तायां विशेषगुणविधयः ।

**कर्मणश्चैकशब्द्यात् संनिधाने विधेराख्यासंयोगो गुणेन तद्विकारः स्याच्छब्दस्य विधिगामित्वाद् गुणस्य चोपदेश्यत्वात् । ६ ॥**

सिद्धान्तसाधकं अपरं विशेषमाह । कर्मणः प्रधानकर्मणो गुणकर्मणश्च ऐकशब्द्यात् एकः शब्दो विधायको यस्य तदेकशब्दम्, तस्य भाव ऐकशब्द्यम्, तस्मात् । एकेन हि प्रयोगवचनेन अङ्गप्रधानान्युच्यन्ते । तस्मात् प्रधानवचनेन अङ्गानां संनिधानम् । एवं संनिधाने सति विधेः अङ्गविधेः आख्यया नाम्ना संयोगो भवति यः प्रयाजसंज्ञको यागः तत्र एकादशत्वगुणविधिः इति । एवं सर्वत्र यागे गुणेन तद्विकारः स्यात् । संख्यया मन्त्रेण च संख्यान्तरं मन्त्रान्तरं च विक्रियेत । गुणेन वैकृतगुणेन तद्विकारः प्राकृतगुणविकारः स्यात् । तथा च शब्दस्य एकादशादिशब्दस्य विधिगामित्वात् प्रयाजादिविधिगामित्वात्, गुणस्य च एकादशत्वादेः उपदेश्यत्वात् विधेयत्वात् नानर्थकं पुनर्वचनम् । तस्मात् पशौ प्रकृतितः इतिकर्तव्यता प्राप्यते, प्राप्तायां च गुणविधयः इति सिद्धान्तः ।

**अकार्यत्वाच्च नाम्नः । ७ ॥**

प्रयाजाः, अनुयाजाः इति नाम्नः अकार्यत्वात् अविधेयत्वात् 'एकादश प्रयाजान् यजति' इत्यादिना न कर्मान्तरविधिः । किन्तु अग्नीषोमीये पशौ प्रकृतितः प्राप्तानां प्रयाजानां एकादशसंख्यारूपगुणस्य विधिः इति सिद्धान्तः ।

**तुल्या च प्रभुता गुणे । ८ ॥**

तुल्या च प्रभुता सामर्थ्यं चोदकस्य गुणे, गुणान् प्रयाजादीन् प्रकृतितः प्रापयितुम् । प्राप्तेषु च तेषु संख्यादिगुणविधयः । अथवा तुल्या प्रभुता सामर्थ्यं आख्यातशब्दानाम् । ये हि शक्नुवन्ति गुणवचनसहिता गुणं कर्म च विधातुं शक्नुवन्तितरां ते केवलं गुणं विधातुम् । तस्मात् अग्नीषोमीये पशौ प्राप्तानां प्रयाजानां एकादशत्वसंख्यारूपगुणस्य विधिः इति सिद्धान्तसिद्धिः ।

**सर्वमेवं प्रधानमिति चेत् । ९ ॥**

यदि आख्यातशब्दो गुणमपि विधास्यति, एवं सति सर्वं प्रधानं स्यात् अग्नीषोमीयपशुप्रयाजेषु प्रधानत्वं स्यात् इति चेत् पूर्वपक्षी ब्रूयात् ।

**तथाभूतेन संयोगात् यथार्थविधयः स्युः । १० ॥**

आख्यातशब्दवाच्यात् गुणस्यापि प्रधानत्वं प्रसज्येत



इति यदुक्तं पूर्वपक्षिणा सूत्रेण, तन्निरस्यति सिद्धान्ती । तथाभूतेन आख्यातशब्दभूतेन संयोगात्, नहि प्रधानभूतो गुणभूतो वाऽर्थो भवति । किंतु यथार्थविधयः स्युः । ये अर्थाः यथा भवन्ति प्रधानभूता गुणभूता वा तेषां यथार्थानामेव सतां विधयः स्युः । यत् प्रधानं तत् प्रधानमेव यत् गुणभूतम्, तत् गुणभूतमेवेति ।

**विधित्वं चाविशिष्टमेवं प्राकृतानां वैकृतैः कर्मणा योगात् तस्मात् सर्वं प्रधानार्थम् । ११ ॥**

विधत्ते उपकरोति इति विधिः तस्य भावो विधित्वं अङ्गत्वं इति कुतूहलम् । प्राकृतानां पदार्थानां वैकृतैः पदार्थैः सह विधित्वं अङ्गत्वं एवं अविशिष्टं तुल्यम् । कर्मणा आर्थवादिकप्रशंसारूपेण योगात् संबन्धात् । 'अग्निं स्विष्टकृतं यजति, यज्ञस्य प्रतिष्ठित्यै' इति प्रकृतौ य एवार्थवादः, स एवार्थवादो विकृतौ भवति 'अग्निं स्विष्टकृतं यजति, यज्ञमेव प्रतिष्ठापयति' इति तथा 'चक्षुषी एते यज्ञस्य यदाज्यभागौ' इति प्रकृतौ, 'आज्यभागौ यजति चक्षुषी एव नान्तरेति' इति विकृतौ । तस्मात् सर्वं एवंजातीयकं प्रधानार्थं विकृतौ गुणभूतम् ।

**समत्वाच्च तदुत्पत्तेः संस्कारैरधिकारः स्यात् । १२ ॥**

इतश्च पश्यामो न सर्वं प्रधानम्, प्रधानार्थमपि किंचिदस्तीति । तदुत्पत्तेः तयोः प्रकृतिविकृत्योः प्रकृतौ विकृतौ च उत्पत्तेः प्रयाजानुयाजानां उत्पत्तिक्रमस्य समत्वात् तुल्यत्वात् । आदौ प्रयाजाः मध्ये प्रधानं ततोऽनुयाजाः इति क्रमः प्रकृतौ विकृतौ च समान एव । तस्मात् संस्कारैः दृष्टादृष्टविधया उपकारकैरङ्गैः सहितस्य प्रधानस्य अधिकारः विकृतिप्रयोगविधिः विधायकः स्यात् । तस्माच्च सर्वं प्रधानम्, प्रधानार्थमपि किञ्चिदस्ति । अधिकरणार्थस्तु तस्मात् प्रकृतेः प्राप्तायामितिकर्तव्यतायां गुणविधयः पशौ एकादशप्रयाजानुयाजवाक्यानि इति । के.

❁ विकृतौ श्रूयमाणेनौदुम्बरत्वेन प्राकृतत्वादिरत्वादेर्निवृत्तिः । १०।७।१८।६१–६३. मीको. पृ. १५३९ 'खादिरत्वस्य प्राकृतस्य' इत्यत्र अविकरणं द्रष्टव्यम् ।

❁ **विकृतौ सर्वार्थः शेषः प्रकृतिवत् । ३।८। १७।३४ ॥**

इदं समामनन्ति– 'यज्ञाथर्वणं वै काम्या इष्टयः ता उपांशु कर्तव्याः' इति । तत्र संशयः किं अङ्गप्रधानार्थमुपांशुत्वम्, उत प्रधानार्थमिति । पूर्वं विकृतावतिदेशात् प्राप्तानां बर्हिराज्यधर्माणां अङ्गप्रधानार्थत्वं प्रसङ्गात् सापवादं निरूप्य इदानीं विकृतावेवोपदिष्टधर्माणां किं अङ्गप्रधानार्थत्वमुत केवलप्रधानार्थत्वं इति प्रसङ्गान्निरूप्यते । अत्रायं पूर्वपक्षः– प्रकृतौ विधीयमानाः साङ्गप्रधानार्थाः । अतः विकृतावप्युपांशुत्वादयो धर्माः साङ्गप्रधानार्था एव । न च काम्या इष्टय इत्यनेन प्रधानमात्रोपादानमिति वक्तव्यम्, साङ्गस्यैव प्रधानस्य कामसाधकत्वात् । अङ्गानामपि काम्यत्वेनोपादानाविशेषात् । तस्मात् विकृतावपि यथाप्राप्तकृत्स्नकार्यं एवोपांशुत्वविधिरिति । **एवं प्राप्ते अभिधीयते ।**

**मुख्यार्थं वाऽङ्गस्याचोदितत्वात् । ३५ ॥**

**अयमभिप्रायः**– भवेदेवं यदि प्राकृतबर्हिर्धर्मविधितुल्यत्वमस्य भवेत् । तत्र हि प्रकरणात् प्रधानार्थत्वे प्राप्ते ब्रवीयस्त्वादङ्गप्रधानार्थत्वं धर्माणामवधारितम् । इह तु काम्या इष्टय इति श्रवणाद्वाक्यमेव प्रधानार्थत्वं प्रतिपादयति । न च साङ्गस्य कामोपायत्वेनाङ्गानामपि काम्यशब्दवाच्यत्वमिति वक्तव्यम् । यतोऽङ्गानां खलु प्रधानोपकारद्वारेण परम्परया प्रधानोपायत्वम्, प्रधानस्य तु साक्षादेव । न तु साक्षात्संभवे परम्पराश्रयणमुचितमिति प्रधानेष्टीनामेव मुख्यकाम्यशब्दवाच्यत्वात् तासामेव उपांशुत्वमिति सिद्धम् ।

**प्रयोजनम्**– पूर्वपक्षे अङ्गमन्त्रेष्वप्युपांशुत्वं कर्तव्यम् । सिद्धान्ते तु प्रधानमन्त्रेष्वेव । **सूत्रं** तु–मुख्यार्थं एवायमुपांशुत्वविधिरङ्गस्य कृते अचोदितत्वादिति । **तौता.**

❁ **विकृतौ सर्वार्थः शेषः प्रकृतिवत् । ३।८। १९।३५ ॥**

'यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्याः' इति काम्येष्टिषु आथर्वणवेदोक्तयज्ञवत् उपांशुः स्वरः उक्तः । सः शेषः शेषभूतः उपांशुः स्वरः विकृतौ तस्यां तस्यां काम्येष्टौ सर्वार्थः अङ्गार्थः प्रधानार्थश्च स्यात्, न

केवलं प्रधानार्थं एव । प्रकृतिवत् । प्रकृतौ यथा वेदिधर्मा आज्यधर्माश्च सर्वार्था भवन्ति तद्वत् । इति **पूर्वः पक्षः ।**

**मुख्यार्थो वाऽङ्गस्याचोदितत्वात् । ३६ ॥**

'यज्ञाथर्वणं वै काम्या इष्टयः ता उपांशु कर्तव्याः' इति काम्येष्टिषु आथर्वणवेदोक्तयज्ञवत् उपांशुः स्वर उक्तः । स विकृतिभूतकाम्येष्टिषु अङ्गार्थः प्रधानार्थश्च ज्ञेय इति पूर्वसूत्रेण पूर्वपक्षे प्राप्ते सिद्धान्तयति । उक्त उपांशुः स्वरः मुख्यार्थः प्रधानार्थं एव स्यात् नाङ्गार्थः । कुतः ? अङ्गस्य अचोदितत्वात् । 'काम्याः इष्टयः' इति हि उक्तम् । काम्याश्च प्रधानयागा एव । अङ्गयागास्तु न कामार्थाः किंतु प्रधानार्थाः । तस्मात् उक्तवाक्ये अङ्गं न चोदितम् । तत्तु चोदकेन लभ्येत । तस्मात् अङ्गस्य तेन वाक्येन चोदितत्वाभावात् प्रधानस्यैव च चोदितत्वात् उपांशुत्वं प्रधानार्थमेवेति **सिद्धान्तः । के.**

* विकृतौ सादृश्येन धर्मप्राप्तिः ! **टुप्**. १०।१।९। १९. * विकृतौ सौर्य–ऐन्द्राग्न- चित्रा–सांग्रहणी–इत्यादौ निर्वापमन्त्रे ऊहः कार्यः । ९।३।१।१-२. * प्राकृतान्यङ्गानि यस्मै प्रयोजनाय प्रकृतौ भवन्ति, नासति तस्मिन् प्रयोजने विकृतौ चोदितानि भवन्ति । तस्मात् लुप्तप्राकृतप्रयोजनं न चोदकश्चोदयति । **भा**. १०।१। १।२. * यत् प्राकृतमङ्गं विकृतौ श्रूयते तदेव विकृतिः निराकाङ्क्षत्वात् स्वीकरोति । **टुप्**. १०।३।१।१. * यत्र हि प्राकृतैरङ्गैः पूर्यमाणायां विकृतौ तन्मध्येऽपि अपूर्वाणि कानिचित् प्रक्षिप्यन्ते तत्र विकृतौ प्रकरणग्रहणं भवति । **वा**. ३।६।७।२५. * **विकृतिषु** आज्यभागौ सद्वन्तौ वा प्राकृतौ वेति विकल्पः । **संकर्ष**. ४।४।२. **मीको**. पृ. ८७७ 'आज्यभागौ विकृतिषु सद्वन्तौ प्राकृतौ वा' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतिषु आरम्भणीया पृथक् कर्तव्या । १२।२।६।१९-२१. **मीको**. पृ. ९७६ 'आरम्भणीयायाः दर्शपूर्णमासविकृतिषु सौर्यादिषु पुनरनुष्ठानम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतिषु एकद्व्यादिकपालानि प्राकृताष्टाकपालेषु आदितः क्रमेण ग्राह्याणि । तत्र मन्त्रविशेषा ग्राह्याः । अवशिष्टेषु च लोपः । **वि**. १०।५।१, * विकृतिषु चोदकप्राप्तं द्व्यहकालत्वं 'य इष्ट्या पशुना०' इति वचनेन बाध्यते । ५।४।७. * विकृतिषु दीक्षणीयादिषु ज्योतिष्टोमे अन्वारम्भणीयाया बाधः । १०।१।२।४. **मीको**. पृ. ९७४ 'आरम्भणीयायाः ज्योतिष्टोमाद्यङ्गभूतदीक्षणीयादिविकृतौ बाधः' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतिषु पार्वणहोमौ न भवतः । **संकर्ष**. २।२।३. **मीको**. पृ. २५४९ 'पार्वणहोमौ विकृतिषु न भवतः' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतिषु सर्वास्वेव उपमानेन धर्मप्राप्तिः । **टुप्**. १०।४।१।१. * विकृतिषु सर्वास्वेव यत् प्राकृताङ्गमध्ये न पठितं तत् अक्लृप्तोपकारत्वात् प्राकृतैर्निराकाङ्क्षीकृते प्रकरणे पश्चादागच्छत् संनिधिविषयो भवति । स चाविरोधे विनियुज्यते । विरोधे तु विदेवनादिवत् प्रकरणेन बाध्यते । **वा**. ३।१।११।२१ पृ. ७३६. * विकृतिषु सामदृश्यं निषिध्यते । **भा**. ९।१।१७।५३. * विकृतिषु सामिधेनीसामदृश्यविशिष्टासु वर्णत्रयस्याधिकारः, न वैश्यमात्रस्य । ६।६।७।३६-३९. **मीको**. पृ. २८३ 'अधिकारः अध्वरकल्पादिषु०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **विकृत्यन्तरवत्** । यथैव हि पौर्णमास्यमावास्याविधानात् विकृत्यन्तराणां चोदकप्राप्तद्व्यहकालत्व–(द्व्यहकालत्व–) बाधेन सद्यस्कालता भवति, तथैव प्रातरादिवचनात् अनीकवत्यादीनामपि सिद्धैव सद्यस्कालता । **रत्न**. ५।१।११।१९. * विकृत्यर्थरूपं वैदिकं कर्म यथा–'व्रीहीनवहन्ति' इति । इदं वैतुष्यरूपविकारार्थम् । **बाल**. पृ. ८८.

* **विकृतीष्टयः** ऐन्द्राग्नादयः सद्यस्काला एव न द्व्यहकालाः । ५।४।७।२२–२४.

* **विकृतिकालः ।** पूर्वपर्वणि अपराह्णसंधौ वा विकृतिं कृत्वा प्रकृतेरन्वाधानम् । पूर्वाह्णसंधावपि औदयिकपर्वणः प्रकृत्यवरुद्धत्वात् पूर्वपर्वण्येव विकृत्यनुष्ठानम् । ततः प्रकृत्यन्वाधानम् । **याज्ञिका धूर्तस्वाम्यादयस्तु**–आवर्तनतत्पूर्वसंध्योः प्रकृत्यनुष्ठानानन्तरं संधिदिने एव विकृत्यनुष्ठानमाहुः । तद्व । **भाट्ट**. ५।४।७.



* **विकृतिगताः** पर्युदासविधिप्रकाराः **मीको**. पृ. २४८० 'पर्युदासविधिः षोडशविधः' इति बिन्दौ द्रष्टव्याः । * **विकृतिगतानां** अपूर्वाङ्गाणां उपहोमादीनां प्रकरणं न विनियोजकम् । **मीन्या.**

* **विकृतिगत–क्रियानिषेधप्रकाराः मीको**. पृ. २७३५. स्तम्भः १ इत्यत्र द्रष्टव्याः ।

* **विकृतिगतद्रव्यादिवाचकपदस्योहः** सौर्यादिविकृतौ अतिदिष्टमन्त्रे । ९।३।१।१-२. **मीको**. पृ. ३११८ 'मन्त्रोहन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **विकृतिगत–भावाभावविषयकविकल्पोदाहरणानि मीको**. पृ. ३५१२ 'विकल्पभेदाः' इति बिन्दौ द्रष्टव्यानि ।

* **विकृतिगत–संनिपत्योपकारकक्रियानिषेधप्रकाराः मीको**. पृ. २७३६ स्तम्भः १ इत्यत्र द्रष्टव्याः ।

* **विकृतित्वं** चोदकेन सधर्मत्वम् । **वि**. ३।२।१६.

* **विकृतिनिगमेष्वपि** वैधशब्देनैव देवताभिधानम् । **वि**. १०।४।१५.

* **विकृतिप्रकृत्योः** समानतन्त्रत्वे विकृतितन्त्रेण प्रकृतेः प्रसङ्गसिद्धिः । १२।२।१३।३३. **मीको**. पृ. २३१५ 'प्रकृतिविकृत्योः समानतन्त्रत्वे०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **विकृतिप्रकृत्यर्थता** आधानस्य । ३।६।५। १४–१५. **मीको**. पृ. ९१४ 'आधानं सर्वकर्मार्थम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **विकृतिप्रधानेन** अङ्गस्य प्रसङ्गो यथा–काम्यभरण्यादिश्राद्धेन यात्राङ्गभूतश्राद्धस्य । **बाल**. पृ. १५०, * **विकृतिप्रधानस्य** स्वाङ्गविकृत्या सह प्रधानाङ्गतन्त्रं यथा– ऐन्द्रस्य आमिक्षायागस्य प्रधानभूतस्य आमिक्षातौ अतिदिष्टेन तदङ्गभूतेन विकृतिरूपेण सांनाय्यहविरार्तिनिमित्तकैन्द्रपञ्चशरावयागेन सह तन्त्रम् । पृ. १४८.

* **विकृतियागेषु** केषुचित् अग्निचयनस्य अतिग्राह्याणां चातिदेशः । १०।८।११।२३–२८. **मीको**. पृ. १२७ 'अग्न्यतिग्राह्याधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **विकृतिरूपं** वैदिकं कर्म यथा– मासाग्निहोत्रादि । **बाल**. पृ. ८५.

* **विकृतिविशेषे** 'कौत्सं भवति' 'काण्वं भवति' इति श्रूयते । अत्र कौत्सादिसाम प्राकृतेन साम्ना समुच्चितं इति **पक्षः** । प्राकृतस्य बाध इति **सिद्धान्तः ।** परंतु एकवचनेन एकमेव प्राकृतं साम बाध्यं न सर्वाणि । एवं द्विवचनेन द्वे बाध्ये, बहुवचनेन बहूनि बाध्यानि । **वि**. १०।४।१०–११. * विकृतिविशेषे कौत्सादिसामभिः प्राकृतसाम्नां बाधः । **भा**. १०।४।८।१७ वर्णकं २. **मीको**. पृ. १४९३ 'कौत्सकाण्ववसिष्ठस्यजनित्रादिसामभिः०' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतिविशेषे प्रगीतयैव ऋचा आहवनीयोपस्थानम् । ९।२।८।२९–३० वर्णकं २. * विकृतिविशेषे श्रूयमाणैः कौत्सादिसामभिः तत्समसंख्याकप्राकृतसामबाधः । १०।४।९।१८–१९. **मीको**. पृ. १४९४ 'कौत्सादिन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतिविशेषे सामिधेनीकार्ये अपेक्षितानामेव मनुलिङ्गानामृचामेकादशानां दाशतयीभ्यः समानयनम् । **भा**. १०।६।१९।७३–७६.

* **विक्रयः** प्रतिषिद्धः अश्वानाम् । स्मर्यते च 'नाश्वं विक्रीणीत' इति । **भा**. १०।३।११।४७. * **विक्रये**ऽपि हि स्वत्वपरित्यागपरस्वत्वापादनसद्भावात् सकलो ददात्यर्थो विद्यते । तथा च लोके विक्रीय वक्तारो भवन्ति अस्माभिर्धान्यं दत्तमिति । क्रीत्वा वदन्ति अस्माभिर्धान्यं गृहीतमिति । **वा**. ३।४।१०।२८ पृ. ९६१.

ॐ **विक्रयी त्वन्यः कर्मणोऽचोदितत्वात् । ३।७।१५।३१॥**

अस्ति सोमविक्रयी । तत्र संदेहः किं अध्वर्य्वादीनामन्यतमः, उत एतेभ्योऽन्य एवेति । पूर्वापवादेनायं विचारः । अत्रायं **पूर्वपक्षः**:– यद्यपि सोमविक्रयी साक्षात्तदङ्गत्वेनाविहितः । न च विक्रयं विना क्रयो भवति । तेन क्रयविधिनैव अर्थाक्षिप्तो विक्रयविधिरिति सोऽपि कर्माङ्गकर्ता । स च प्रकृत एवोपात्त इति प्रकृतानामेवान्यतमः सोमविक्रयीति । **एवं प्राप्ते, अभिधीयते**– भवेदेवं यदि क्रयविधिर्विक्रयविधिमपेक्षेत । स तु राग-

प्राप्तलोकसिद्धविक्रयप्राप्त्यैवोपपद्यते । न तु तद्विधिमप्याक्षिपति । तेन विक्रयस्यानङ्गत्वेन प्रकृतर्त्विक्कर्तृकत्वमिति भवति प्रकृतेभ्योऽन्य एव सोमविक्रयीति सिद्धम् । **प्रयोजनम्**– पक्षोक्तम् । **सूत्रं तु**– सोमविक्रयी पुनः प्रकृतेभ्योऽन्य एव विक्रयस्य कर्माङ्गत्वेनाचोदितत्वादिति । **तौता.**

**विक्रयी त्वन्यः कर्मणोऽचोदितत्वात् । ३।७।१५।३१ ॥**

ज्योतिष्टोमे यः सोमविक्रयी सोमस्य विक्रेता ऋत्विक्षु एव अन्यतमः स्यात् इति उत्सूत्रे पूर्वपक्षे प्राप्ते सिद्धान्तयति सूत्रम् । तु–शब्दः पूर्वसूत्रोक्तेभ्य उपगेभ्यो वैलक्षण्यस्य बोधकः । विक्रयी यः सोमं विक्रीणाति स तु अन्य एव ऋत्विग्भ्यः स्यात् । कर्मणः विक्रयरूपस्य अचोदितत्वात् । यथा सोमस्य क्रयो विहितः न तथा विक्रयो विहितः । विक्रयाभावे क्रयो न सेत्स्यति इत्यर्थात् विक्रयो गम्यते । तत्कर्ता तु अध्वर्य्वादिभ्यश्चोदितेभ्यो भिन्न एव ।

अत्र **सुधा**– द्रव्यलोभात् विक्रये प्रवृत्त्युपपत्तेः विधिकल्पनानपेक्षत्वेन अनङ्गत्वात् सिद्धान्तः स्पष्टः इति । **के.**

**विक्रीते करिणि किमङ्कुशे विवाद इति न्यायः ।** अयं श्लोकाभ्यां निबद्धः ; यथा– 'सौमित्रि वैदति विभीषणाय लङ्कां देहि त्वं भुवनपते विनैव कोशम् । सौमित्रिं प्रति निजगाद रामचन्द्रो विक्रीते करिणि किमङ्कुशे विवादः ॥' इति । 'नारब्धं कुचपरिरम्भणेषु वाम्यं वैमत्यं विरचति चुम्बने कदापि । किं नीवीगतमचले रुणत्सि पाणिं, विक्रीते करिणि किमङ्कुशे विवादः ॥' इति । **साहस्री.** ७४९.

* विक्रेतुः मूल्येन आनमनं क्रियते । तत् बहुभिर्द्रव्यैः सुकरतरं भवति । **भा.** १२।४।३।६.

* **विक्लिद्** । भूविक्लिद्योश्च केवलप्रयोज्यक्रियानिष्ठत्वम् । **वा.** २।१।१।१ पृ. ३७८.

* **विक्लिद्यन्ति** तण्डुलाः इत्यत्र आक्षिप्तप्रयोजकव्यापारं प्रयोज्यव्यापारमात्रं विवक्ष्यते । **वा.** २।१।१।१ पृ. ३७८.

* **विगीत-अविगीतत्वे** । नहि सर्वलोकासर्वलोकविदितत्वव्यतिरेकेण विप्रगीताविप्रगीतत्वे विद्येते । **वा.** २।३।२।३ पृ. ५८१.

* **विगीतस्मृतिः** अविगीतस्मृत्या बाध्यते । **वा.** ३।३।७।१४ पृ. ८६०.

* **विग्रहादिपञ्चकं** देवतास्तित्वसाधकम् । ( १ ) विग्रहः ( २ ) हविःस्वीकारः ( ३ ) तद्भोजनम् ( ४ ) तृप्तिः ( ५ ) प्रसादश्चेति । **विग्रहः**– 'सहस्राक्षो गोत्रभिद् वज्रबाहुः' इति । **हविःस्वीकारः**– 'अग्निरिदं हविरजुषत॰' इति । **हविर्भोजनम्**– 'अद्धीन्द्र प्रस्थितेमा हवींषि' इति । **तृप्तिः प्रसादश्च**– 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति' इति । मन्त्राणां स्वार्थे तात्पर्याभावात् नेद देवतास्तित्वसाधनाय इति **मीमांसासिद्धान्तः ।** **वि.** ९।१।४. * विग्रहादिपञ्चकम्– 'विग्रहो हविषां भोग ऐश्वर्यं च प्रसन्नता । फलप्रदानमित्येतत् पञ्चकं विग्रहादिकम् ॥' **कल्पतरुः.** १।३।८।३२ ब्रसू.

* **विग्रहवाक्यस्य** अवैदिकत्वेन समासस्थस्यैव विशेषणविशेष्यत्वस्य ग्राह्यत्वम् । **सु.** पृ. ८८७.

* **विचारः** लक्षणान्तरगोचरोऽपि लक्षणान्तरे क्रियमाणो न दोषमावहति । **सु.** पृ. ४५६.

* **विचारशास्त्रं** विधिवशादेवारम्भणीयम् । **वि.** १।१।१.

* **विचित्रगतिः** सूत्रकारः चिन्तान्तरमध्येऽपि प्रसङ्गात् चिन्तान्तरं करोति । **शा.** १०।५।११.

* '**विच्छिन्नयत्नव्यङ्ग्यैश्च** नित्यैः स्वर्गगतैरपि । व्यतिरिक्तपदारम्भो वर्णैर्नात्रोपपद्यते ॥' इत्यनेन न्यायेन पदावयविवत् ऋग्वेदाद्यवयविनो वेदावयविनश्चानुपपत्तेः अनारब्धावयविकानां चावयवानां देहत्वादर्शनात् ऋग्वेदादीनां देहत्वायोगः । **सु.** पृ. १००८.

* **विज्ञस्यैव** वाचयितव्यता । **बिन्दु.** ३।८।८.

* **विज्ञानस्य** विज्ञानस्य च नहि कश्चित् विशेष उपलभ्यते रूपं प्रति, अस्य भङ्गुरस्येव रूपं अस्य दृढस्येव इति । **भा.** ३।३।७।१४ पृ. ८४२.

* **विज्ञानग्रहणपुरःसरो** विज्ञेयबोधः इति सिद्धान्तः । **ऋजु.** पृ. १६८.

* **वितस्तिर्द्वादशाङ्गुला** । **सु.** पृ. १२८.



* श्लोकमप्युदाहरन्ति– 'वितीर्य हि महज्जालमृषिः संक्षिप्य चाब्रवीत् । इष्टं हि विदुषां लोके समासव्यासधारणम् ॥' इति । **भा.** ८।१।२।२.

* **विदग्धः** अत्यन्तपक्वः । **वि.** ३।४।७.

* **विदहनं** ( पुरोडाशादेः ) यावद्भिः क्षणैः पक्वत्वाख्यफलसिद्धिः तावद्भ्योऽधिकसंख्यक्षणानुष्ठानं श्रपणस्य । **सु.** पृ. १३६१.

**विदेवनाधिकरणम्** । राजसूये विदेवनादीनां कृत्स्नयागाङ्गता ॥

**मध्यस्थं यस्य तन्मध्ये । ४।४।२।३ ॥**

**भाष्यम्**— राजसूये अभिषेचनीयमध्ये 'पष्ठौहीं दीव्यति' इति विदेवनादयः समाम्नाताः । ते किं अभिषेचनीयस्याङ्गं उत कृत्स्नस्य राजसूयस्य इति संशयः । उच्यते । मध्याम्नानात् अभिषेचनीयस्येति । तथा आनन्तर्यमनुग्रहीष्यते इति ।

**वा**–– विदेवनादयः अभिषेचनीयादूर्ध्वं समाम्नायमानाः क्रमादभिषेचनीयाङ्गम् । विरोधे च प्रकरणं बलीयः इत्युक्तम् । तस्मात् निर्णीतत्वात् अनारभ्यम् । उच्यते । प्राकृताङ्गसंबन्धेन श्रूयमाणाः कथम्भावाकाङ्क्षायां अव्यावृत्तायां ये पदार्था उपनिपतन्ति ते संबन्धिव्यवायेन गृह्यन्ते । एते च माहेन्द्रस्तोत्रकालत्वात् उपनिपतन्ति प्राकृताङ्गमध्ये । तस्मात् अवान्तरप्रकरणात् अभिषेचनीयाङ्गम् । महाप्रकरणात् राजसूयाङ्गम् । तच्च दुर्बलम् । तस्मात् अभिषेचनीयाङ्गत्वात् विदेवनादयः तत्प्रयुक्ता इति ।

**सर्वासां वा समत्वाच्चोदनातः स्यान्नहि तस्य प्रकरणं देशार्थमुच्यते मध्ये । ४ ॥**

**भाष्यम्**— सर्वासां च अनुमत्यादीनां चोदनानामङ्गं विदेवनादि स्यात् । कुतः ? चोदनातः समत्वात् । समाना एता अनुमत्यादयः चोदनाः । ताः सर्वाः फलवत्यश्च प्रधानभूताः । सर्वासां आसां प्रकरणम् । नहि अभिषेचनीयस्य केवलस्य । क्रमादभिषेचनीयस्य केवलस्य । क्रमात् अभिषेचनीयस्य प्राप्नुवन्ति । प्रकरणात् सर्वासाम् । प्रकरणं च क्रमात् बलीयः । तस्मात् नाभिषेचनीयस्य केवलस्येति । अभिषेचनीयस्य तु मध्ये स्थानं विदेवनादीनां तत्र क्रियमाणाः सर्वासामुपकुर्वन्तीति ।

**वा**— यत्रैवोत्पद्यन्ते तत्रैव प्रयोजनमपेक्षमाणा राजसूयप्रकरणगृहीता निराकाङ्क्षा भवन्ति । तस्मात् अन्यत्रोत्पन्नानां प्रकरणात् सर्वार्थानां तत्रैव उत्पत्तिदेशे करणे प्राप्ते 'माहेन्द्रस्य स्तोत्रं प्रति अभिषिच्यते' इति वचनात् अभिषेचनीयमध्ये क्रियन्ते । न च अवान्तरप्रकरणेन गृह्यन्ते संयुक्तत्वाद्राजसूयेन तस्मात् राजसूयप्रयुक्ता विदेवनादयः । अत्र अवान्तरप्रकरणे निराकृते तृतीये चिन्ता ।

**शा**— ( सिद्धान्तः– ) '**तत्र प्रयोजनापेक्षा कर्मणां यत्र चोदना । विदेवनादिकानां तु न मध्ये प्राकृतो विधिः ॥**' अभिषेचनीयानन्तरं विहिताः प्रयोजनानपेक्षाः संनिधिप्राप्ताभिषेचनीयाङ्गत्वबाधेन प्रकरणात् राजसूयाङ्गतां नीताः नापकर्षसमये भूयः प्रयोजनमपेक्षन्ते, येन अवान्तरप्रकरणविषयतां प्रतिपद्येरन् । तस्मात् राजसूयाङ्गम् ।

**सोम**–– विदेवनादीनामङ्गत्वं यदुक्तं तस्य विशेषव्यवस्थापनेन स्थिरीकरणात् **संगतिः** ( एकविषयकत्वम् ) ।

**वि**–– 'एकस्यैवाभिषेच्यस्य तदङ्गं निखिलस्य वा । राजसूयस्यापकर्षादाद्यः, प्रक्रिययोत्तरः ॥'

**भाट्ट**–– विदेवनादीनां अत्र अङ्गत्वे सिद्धे संनिधानात् अवान्तरप्रकरणाद्वा अभिषेचनीयमात्राङ्गत्वस्य तृतीये एव निराकृतत्वात् सर्वराजसूयाङ्गत्वस्यैव महाप्रकरणादवगतेः सर्वप्रयुक्तत्वम् । तार्तीयाधिकरणप्रयोजनकथनार्थं च इदमधिकरणम् ।

**मण्डन**–– 'देवनमस्य गुणः सकलस्य ।'

**शंकर**–– 'विदेवनादि तस्याङ्गम् ।'

**विदेवनाधिकरणम् ( द्वितीयम् )** । राजसूये विदेवनादीनां अभिषेकपूर्वकालिकत्वम् ॥

**कृतदेशात्तु पूर्वेषां स देशः स्यात् तेन प्रत्यक्षसंयोगान्न्यायमात्रमितरत् । ५।२।१०।२१ ॥**

**भाष्यम्**--- राजसूये श्रूयते 'अक्षैर्दीव्यति' 'शौनःशेपमाख्यापयति' 'अभिषिच्यते' इति । तत्र संदेहः किं विदेवनादीनां अन्ते प्रयोगः उत अभिषेचनीयात् पूर्वं इति । किं प्राप्तम् ? 'अन्ते तु बादरायणः' इत्यन्ते प्रयोगः कर्तव्य इति । एवं प्राप्ते, **ब्रूमः ।** कृतदेशात्

अभिषेकात् पूर्वं तु प्रयोग: । कृतदेशो हि अभिषेक: ' माहेन्द्रस्य स्तोत्रं प्रति अभिषिच्यते ' इति । प्रत्यक्षानु प्रहाय अभिषेकात् पूर्वं प्रयोक्तव्यम् । न्यायमात्रं इतरत् ' अन्ते तु बादरायण: ' इति ।

टुप्— अभिषेचनीयात् ऊर्ध्वं प्राग् दशपेयात् ' पष्ठौहीं दीव्यति ' इत्येवमादय: पठ्यन्ते । तत्र संशय: किं अभिषेक: अपकृष्यमाण: इतरान् अपकर्षति उत नेति । केवल: अपकृष्यते ' अन्ते तु बादरायण: ' (५।२।१।१९) इति । राजसूयान्ते इत्याशङ्कैव नास्ति । अत: अभिषेचनीयान्ते इति । तत्र अभिषेकमात्रस्य अपकर्ष:, यथा अमावास्यायां वेदिमात्रस्य । प्रयाजानुयाजानां प्रकृतौ संबन्धस्य अवगतत्वात् विकृतौ उत्कर्षापकर्षौ युज्येते । इह संबन्धस्य अनवगतत्वात् अपकर्ष: अयुक्त: इति । एवं प्राप्ते, ब्रूम: । अत्रापि पाठस्य प्रत्यक्षत्वात् पूर्वै: पदार्थैरस्ति संबन्ध: । न चायं पाठ: अत्र कृतार्थ:, यथा पौर्णमास्यां वेदे: । अत: पूर्वेषामपकर्ष: । ननु अभिषेचनीयपरत्वेऽपि पाठोऽस्ति । उच्यते । अभिषेचनीये साङ्गे विहिते तत एते परा भवन्ति । तस्य च एतेषां च भिन्नप्रयोगवचनपरिग्रहात् पाठ एव नास्ति ।

शा-- ' अपूर्वो ह्यभिषेकोऽतो न तदन्तापकर्षगम । करोति वेदिवत्, तस्मात् तन्मात्रमपकृष्यते ॥ ' इति प्राप्ते, अभिधीयते । ' अभिषेकेण पूर्वेषां क्रम: प्रत्यक्षपाठत: । परत्वं प्राकृताङ्गेभ्यस्त्वनुमानेन गम्यते ॥' इति ।

सोम-- दृष्टान्तसंगतिरत्र ।

वि-- ' अभिषेच्यप्राकृताङ्गसमाप्तौ देवनादिकम् । मध्ये वा, पूर्ववत् सर्वसमाप्तौ देवनादय: ॥, अभिषेकोऽपकृष्टोऽस्मात् पूर्वं प्रत्यक्षपाठत: । देवनाद्यास्ततो मध्ये माहेन्द्रस्तोत्रत: पुरा ॥ '

भाट्ट— राजसूये अभिषेचनीयसोमयागान्तरं प्राक् दशपेयात् विदेवनादय: अभिषेकान्ता: राजसूयधर्मा: ' अक्षैर्दीव्यति, राजन्यं जिनाति, शौन:शेपमाख्यापयति, अभिषिच्यते' इत्यादिभि: विहिता: । तत्र अभिषेकस्तावत् वचनादेव ' माहेन्द्रस्य स्तोत्रं प्रति अभिषिच्यते ' इति अभिषेचनीयमाहेन्द्रकाले अपकृष्ट: । तदपकर्षेऽपि च न तत्पूर्वपठितानामपि विदेवनादीनामपकर्ष:, वेदिकरणन्यायेन (५।२।१६) अपूर्वाणामेषां बद्धक्रमत्वाभावात् । अभिषेचनीयोत्तरमपि च पाठस्य सत्त्वेन पूर्ववत् प्राकृताङ्गोत्तरमेव करणम् । इति प्राप्ते, पूर्वं प्रयाजादिवत् बद्धक्रमत्वात् कल्प्सावपि इदानीमेव प्रत्यक्षेण पाठेन एकराज्यसूयप्रयोगविधिपरिगृहीतानां विदेवनाद्यभिषेकान्तानां बद्धक्रमत्वोपपत्तौ अभिषेचनीयपाठेन प्राकृताङ्गानां आनुमानिकत्वेन तै: सह विदेवनादीनां भिन्नप्रयोगविधिपरिगृहीतानां क्रमकल्पनानुपपत्ते: अभिषेकापकर्षेण अपकर्ष एव विदेवनादीनाम् ।

मण्डन-- ' विदेवनादेर्विहितोऽपकर्ष: । '

शंकर-- ' देवनाद्यपकृष्येत । '

* **विदेवनादय:** अङ्गं अयागभूता:, यागास्तु प्रधानं अनुमत्यादय: । राजसूये । ४।४।१।१-२. * विदेवनादय: तैत्तिरीयशाखानुसारेण अभिषेचनीयाङ्गमेव । कृत्वाचिन्तया तु राजसूयाङ्गत्वमुक्तम् । **सोम.** ४।४।२. * विदेवनादय: राजसूयाङ्गम्, प्रकरणस्य स्थानाद् बलवत्त्वात् । **वि.** ३।३।१०. * **विदेवनादीनां** अभिषेचनीयप्रयोगमध्ये दैवादननुष्ठाने अभिषेचनीयप्रयोगसमाप्त्यनन्तरं अपि क्रमविपर्यासप्रायश्चित्तपूर्वकं तदनुष्ठानं कर्तव्यम् । **सोम.** ४।४।२. * विदेवनादीनां राजसूये प्रकरणं न विनियोजकं राजसूयगतेष्टिपशुसोमानां तैस्तै: प्राकृतैर्धर्मैर्निराकाङ्क्षत्वात् । **मीन्या.**

* ' **विद्यते** ' इति फलमात्रप्रतीति: । **मणि.** पृ. १०२.

* **विद्यमानं** यत् दक्षिणाकाले स्वीयं तस्यैव देयता विश्वजिति । ६।७।६।७. * **विद्यमानस्यैव** सर्वस्य स्वीयस्य दानं विश्वजिति । ६।७।४।५.

* **विद्या:** । ' पुराण-न्याय-मीमांसा-धर्मशास्त्राङ्गमिश्रिता: । वेदा: स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रय: । अर्थशास्त्रं चतुर्थं च विद्या ह्यष्टादशैव तु ॥ ' आयुर्वेदधनुर्वेदगान्धर्ववेदा: त्रय: उपवेदा: । मीमांसान्यायविस्तरौ द्वे तु उपाङ्गे । **सु.** १।३।४।७ पृ. १८३.



* **विद्याधिगम:** त्रैवर्णिकानां नियत: न ब्राह्मणानामेव । **भा.** ६।२।११।३१.

* **विद्याग्रहणोत्तरकालश्च** दारसंग्रह: । **भा.** ६।८।२।१३.

* **विद्यावान्** । अध्ययनविधिसिद्धविद्यावता जीवता अग्निहोत्रादिकं कर्म कर्तव्यम् । **शा.** ६।२।७.

* **विद्या-विनयाधाने** शिष्याणां उपाध्यायो वर्तते प्रधानभूत: । **भा.** ३।१।२।२.

* **विद्यासोमप्रजा:** त्रैवर्णिकानां नित्या: । **भा.** ६।२।११।३१.

* **विद्यास्थानानि** । प्रतिकल्पमन्वन्तरयुगनियतनित्यऋषिनामाभिधेयकृत्रिमविद्यास्थानकारा: ये वेदेऽपि मन्त्रार्थवादेषु श्रूयन्ते तत्प्रणीतान्येव विद्यास्थानानि धर्मज्ञानाङ्गत्वेन संमतानि । **वा.** १।३।३।७ पृ. २०२, * परिमितान्येव हि चतुर्दश अष्टादश वा **विद्यास्थानानि** (' पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिता: । वेदाश्च, आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रय: । अर्थशास्त्रं चतुर्थं च ' ) धर्मप्रमाणत्वेन शिष्टै: परिगृहीतानि वेद–उपवेद – अङ्ग– उपाङ्गाष्टादशधर्मसंहितापुराणशास्त्रशिक्षादण्डनीतिसंज्ञकानि ( उपवेदा:– आयुर्वेदधनुर्वेदगन्धर्ववेदा: । अङ्गानि- शिक्षादीनि । उपाङ्ग-पूर्वोत्तरमीमांसाद्वयम् ), न च तेषां मध्ये बौद्धार्हतादिग्रन्था: स्मृता गृहीता वा । १।३।३।७ पृ. २०१ .

* **विद्वांश्च** अधिक्रियते । **टुप्.** ५।१।१०।३५ . * **विदुषां** पुन: पद-वाक्य-न्यायोद्गारि मुखं शोभते । **वा.** १।२।१।१५ पृ. १२९.

* **विद्वदधिकरणम्** । पौर्णमास्यमावास्याशब्दौ प्रधानवाचकौ इति विद्वदधिकरणे (२।२।३) व्यवस्थापितम् । **बृ.** ३।७।४।८ .

* **विद्वद्वाक्यम्** । ' य एवं विद्वान् पौर्णमासीं यजते ', ' य एवं विद्वानमावास्यां यजते ' इति वाक्यद्वयम् । **वि.** २।२।३ .

* **विधवानियोगोऽपि** ब्रह्मचारिण: अनुचित: । **सु.** पृ. १८५.

* **विधवानियोगविधेरपि** एकापत्यविषयत्वात् अनेकोत्पादनानौचित्यम् । **सु.** पृ. १८५.

* **विधात्री** श्रुति: लिङाद्यात्मिका । **मीन्या.** * विधात्री श्रुति:— लिङ्-लोट्-तव्य-पञ्चमलकाराणां तु विधिसामर्थ्यम् । **वा.** ३।१।७।१३ पृ. ७००. * यागपशुकामयो: संबन्धस्य **विधात्रीं** यजतेरुपरितनीं विभक्तिं उपलभामहे लिङम् । **भा.** २।२।१२।२७ पृ. ५६२.

* **विधानं** अज्ञातस्य ज्ञापनम् । **भा.** २।३।३।४ पृ. ५९३. * विधानं अप्रवृत्तप्रवर्तनम् । तच्च पुरुषविषय: शब्दव्यापार: । **वि.** २।३।१३, ४।१।२ वर्णकं २. * विधानं कल्प: इतिकर्तव्यता इत्यर्थ: । **भा.** ११।२।२।८. * विधानं हि अत्यन्तानवगतार्थविषयम् । **वा.** १।२।२।२९ पृ. १४१, * न च विधेयान्तरोपादाने सति अतिक्रान्तार्थ**विधानं** अवकल्पते इत्युक्तम् (२।२।५।१६ इत्यत्र) । २।२।११।२६ पृ. ५४७.

* **विधायकं** ब्राह्मणम् । **भा.** १०।८।१०।२० । ब्राह्मणवाक्यस्य विधायकत्वम् । **वि.** ३।२।२. * **विधायक:** अविदितस्यार्थस्य वक्ता (शब्द:) विधायको भवति । **भा.** २।३।५।१२. * विधायक: ऋङ्मन्त्र: यथा— ' पृणीयादिन्नाधमानाय तव्यान्० ' इति (ऋसं. १०।११७।५) । यजुर्मन्त्र: यथा– ' वसन्ताय कपिञ्जलानालभते ' इति । **बाल.** पृ. ५८. * ' एकशक्ति: स्वभावेन सर्वदैव विधायक: । अल्पार्थविधिसंतुष्टो नानेकार्थविधिक्षम: ॥ ' **वा.** २।२।१२।२७ पृ. ५५३, * गुणोपादानवशेन धात्वर्थादुत्तारितो विधायक:, फलाय गुणं विदधत् यदन्यत्र अज्ञातशेषत्वं विधत्ते । २।२।१२।२७ पृ. ५५२.

* **विधायकाविधायकयो:** वाक्ययोरेकवाक्यत्वं न भवति । विधायकं ब्राह्मणम्, अविधायको मन्त्र: । **भा.** १०।८।१०।२०.

* **विधायकत्वं** नास्ति मन्त्रगताख्यातानाम् । २।१।६।३०-३१. * न च स्तावकेन (वाक्येन) ब्राह्मणादिसंयुक्तस्य **विधायकत्वं** निवार्यते तदानुगुण्यात् । **वा.** २।३।३।४ पृ. ५९३. * यत्र हि अनेकविधायकश्रवणं तत्र एकस्य विधायकत्वं अन्यस्यानुवादकत्वं इत्येकवाक्य-

त्वसंभवे वाक्यभेदावहो विधिभेदो न स्वीक्रियते । **पराक्रमः.** ५०।१. * **विधायकत्वे** संभवति अनुवादकत्वमन्याय्यम् । **सोम.** ९।१।१६.

* ‘ **विधायकवाक्ये,** कर्तरि छन्दोगत्वादिविशेषणविशिष्टत्वग्राहकप्रमाणाभावे सर्वविषयत्वमेव तद्वाक्यस्य ’ इति हि **न्यायः** । ‘सर्वधर्मताग्राहकन्यायः ’ अयम् । **कस्तूरि.** १।३।७।१९.

* ‘ **विधायिष्यते** तु वेदे वचनेन ’ इत्यनेन न्यायेन विध्यनुमानम् । अग्निप्रकरणे ‘ यत् सप्तदशवतीमुपदधाति अन्नमेवोभयतो दधाति, तस्मादुभाभ्यां हस्ताभ्यां परिगृह्य पुरुषोऽन्नमत्ति ’ इत्यत्र । **वा.** १।३। ४।९ पृ. २२१.

* **विधिः** अज्ञातज्ञापनात्मकः । सु. पृ. ८४५. * ‘ विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्ते परिसंख्येति कीर्त्यते ॥ ’ अपूर्वविधिः, नियमविधिः, परिसंख्याविधिः । **वा.** १।२।४।३४ पृ. १५२, * विधिः अत्यन्तदुर्बलोऽपि तदधीनात्मलाभेन प्रतिषेधेन तुल्यबलो भवतीति ‘ प्रतिषेधः प्रदेशेऽनारभ्यविधाने च० ’ ( १०।८।१ ) इत्यत्र वक्ष्यते । सत्यम्, यस्य शास्त्रमन्तरेण अप्राप्तिरस्ति तत्रैतदेवम् । १।२।१।२, * विधिः अनुक्तो हि सन् अर्थवादादेव कल्प्येत यदि अन्यथा नोपपद्येत । १।२।१।७ पृ. १२०.

**विधिरप्येकदेशे स्यात् । ६।३।२०।४०॥**

मुख्यं द्रव्यं व्रीहयः द्व्यवदानमात्रपर्याप्ता लब्धाः । नीवाराश्च शेषकार्याणामपि पर्याप्ता लब्धाः । तदा एकदेशे अपि निर्वर्त्यमाने मुख्यद्रव्येण द्व्यवदाननिर्वर्तनसंभवेऽपि शेषकार्यार्थमपि समर्थस्य प्रतिनिधेर्नीवारद्रव्यस्य विधिः विधानं स्यात् । तदा प्रतिनिधिर्ग्राह्यः इति **पूर्वः पक्षः** ।

**अपि वाऽर्थस्य शक्यत्वादेकदेशेन निर्वर्त्येतार्थानामविभक्तत्वाद् गुणमात्रमितरत् तदर्थत्वात् । ४१ ॥**

दर्शपूर्णमासादौ व्रीहयो द्व्यवदानमात्रपर्याप्ता लब्धाः । नीवारास्तु शेषकार्याणामपि पर्याप्ता लब्धुं शक्याः । एवं स्थिते प्रतिनिधिरेव ग्राह्य इति पूर्वपक्षं सूत्रेण प्राप्तं अपिवाशब्देन निरस्यन् सिद्धान्तमाह । उक्तायां स्थितौ प्रतिनिधिर्न ग्राह्यः । अर्थस्य द्व्यवदानमात्रस्य प्रधानस्य उपलब्धैः अल्पैरपि व्रीहिभिः शक्यत्वात् । एकदेशेन प्रधानकार्यशेषकार्यपर्याप्तानां बहूनां व्रीहीणां एकदेशेन उपलब्धेन मुष्टिमात्रेणापि द्व्यवदानमात्रं प्रधानं निर्वर्त्येत क्रियेत कर्तव्यमित्यर्थः । अर्थानां प्रधानानां यागेन अविभक्तत्वात् विभक्तत्वाभावात् । द्रव्यदेवतात्मको यागः । तेन द्व्यवदानरूपं द्रव्यं यागेन अविभक्तम् । द्व्यवदानग्रहणेन च यागो निर्वर्तित एव भवति । इतरत् प्रधानादन्यत् स्विष्टकृदादिशेषकार्यं तु तदर्थत्वात् प्रधानार्थत्वात् गुणमात्रम् । तस्मिन् लुप्तेऽपि न यागलोपो भवति । तस्मात् प्रधानाहुतिपर्याप्ते मुख्ये लब्धे प्रतिनिधिः सर्वपर्याप्तोऽपि न ग्राह्य इति **सिद्धान्तः** ।

**कुतूहले** तु निर्वर्त्येत इत्यत्र वर्तेत इति पाठः । एकदेशेन वर्तेत यागे व्याप्रियेत इति तदर्थः । अर्थानां विभक्तत्वात् इति पाठः । अर्थानां अश्वशफपरिमाणशेषकार्यरूपाणां व्रीहित्वस्य च विभक्तत्वात् वैलक्षण्यात् । व्रीहित्वं हि प्रधानगुणः ‘ व्रीहिभिर्यजेत ’ इति विधानात् । इतरत् अश्वशफपरिमाणं शेषकार्यं च सर्वं गुणमात्रं यागाङ्गभूतपुरोडाशगुण एव । तदर्थत्वात् पुरोडाशार्थत्वेन विधानात् । इति ।

सूत्रार्थं समाप्य पुनः कुतूहलम् । ‘ अत्रेदं चिन्त्यम् । व्रीहय एव पुरोडाशभावमापन्ना यागद्रव्यं इत्यनुपपन्नम्, सतुषाणामेव व्रीहिशब्दार्थत्वात् । तुषाणां च पुरोडाशे अनुप्रवेशाभावात् । ‘ रक्षसां भागोऽसि इति पुरोडाशकपालेन तुषान्निरस्यति ’ इति विधानात् । व्रीह्यवयवतण्डुलानामेव पिष्टप्रणाड्या पुरोडाशानुप्रवेशात् व्रीहिशब्दस्य तण्डुलपरत्वे तु लक्षणाप्रसङ्गः । ततश्च ‘ व्रीहिभिर्यजेत ’ इति यागसाधनपुरोडाशप्रकृतिद्रव्यविधिरेवायम् । उत्पत्तिवाक्यावगतपुरोडाशद्रव्यस्य प्रकृतिद्रव्यापेक्षत्वात् । यजिस्तु प्रकरणप्राप्तानुवाद एव । ततश्च व्रीहित्वमपि अश्वशफपरिमाणशेषकार्यवत् अङ्गाङ्गमेव इति कथं व्रीहित्वस्य ततो विशेषः । एवं च ‘ अर्थानां विभक्तत्वात् गुणमात्रमितरत्तदर्थत्वात् ’ इत्यनुपपन्नम् ।



किंच ‘ यदाग्नेयोऽष्टाकपालः ’ इत्याद्युत्पत्तिवाक्यतः पुरोडाशस्य कार्त्स्न्येन यागसाधनत्वम्, न तु द्व्यवदानमात्रस्य इत्यादि स्थितं **वार्तिके** सर्वप्रदानाधिकरणे ( भा. ३।४ १४।३७–४१ ) पुरोडाशस्वरूपं च ‘ पुरोडाशं प्रथयति उत्तुङ्गमनुपूर्वं चाकृतिं कूर्मस्येव प्रतिकृतिं अश्वशफमानं करोति ’ इत्यवगतम् । एवंविधपुरोडाशेन च कृत्स्नेन साध्यो यागः कथं द्व्यवदानमात्रपर्याप्तात्पव्रीह्यारब्धेन अल्पपरिमाणेन पुरोडाशेन साध्येत । द्रव्यदेवते हि यागस्य स्वरूपम् । उक्तविधः पुरोडाशश्च कार्त्स्न्येन यागद्रव्यं तदल्पत्वे च कार्त्स्न्याभावात् याग एव न संवर्तेत । ततश्च ‘अर्थस्य शक्यत्वात् एकदेशेन वर्तेत ’ इत्यनुपपन्नम् । नापि अश्वशफपरिमाणं पुरोडाशाङ्गमिति युज्यते । तस्य पुरोडाशादनतिभिन्नतया पुरोडाशशब्दार्थानुप्रवेशात् । अवयवानामवयवितादात्म्यवत् गुणस्यापि गुणितादात्म्याभ्युपगमाच्च । यद्यपि अस्तु वा अश्वशफपरिमाणं पुरोडाशाङ्गम्, तथापि उपयोक्ष्यमाणार्थमेव तत् । तस्य च उपयुक्तसंस्कारशेषकार्यवशेन बाधोऽनुचितः । उपयुक्तसंस्कारात् उपयोक्ष्यमाणाङ्गस्य प्रबलत्वात् । तस्मात् कृत्स्नपुरोडाशो यागद्रव्यं न तु द्व्यवदानं इति वार्तिकमते ( सूत्रमते ) सूत्रमेतदनुपपन्नमेव ।

द्व्यवदानमेव साधनं पुरोडाशस्तु तदुपादानं इति सर्वप्रदानाधिकरणप्रपञ्चितभाष्यमते तु सूत्रमिदं समञ्जसम् । अर्थस्य यागस्य द्व्यवदानेनैव शक्यत्वात् एकदेशेन द्व्यवदानपर्याप्ताल्पव्रीहिद्रव्येणैव वर्तेत यागे व्याप्रियेत । यागसाधने द्व्यवदाने उपयोक्ष्यमाणे व्रीहिमयत्वस्य साक्षादङ्गत्वात् । न तु अश्वशफमात्रपरिमाणशेषकार्यलिप्सया नीवाराः प्रतिनिधातव्याः । अर्थानां अश्वशफपरिमाणस्य शेषकार्याणां च व्रीहित्वापेक्षया वैलक्षण्यात् । यतः अश्वशफपरिमाणं शेषकार्यं चेति सर्वं गुणमात्रं यागसाधने द्व्यवदाने परंपरया अङ्गमेव, न तु साक्षात्, तदर्थत्वात् अश्वशफपरिमाणस्य शेषकार्याणां च स्विष्टकृत्प्राशित्रेडाचतुर्धाकरण—शंयुवाककालभक्षणानां तदवयवसंस्कारद्वारा अवयवान्तरभूतोपयुक्तद्व्यवदानसंस्कारार्थत्वात् । अतो द्व्यवदानमात्रपर्याप्तव्रीहिलाभे सति न नीवाराः प्रतिनिधातव्याः । अल्पव्रीहिद्रव्येणैव अल्पपरिमाणपुरोडाशकृतिं निर्वर्त्य अल्पपरिमाणेषु कपालेषु श्रपयित्वा तेन द्व्यवदानमात्रेण प्रधानयागो निर्वर्तयितव्य इति । इति मुख्ये लब्धे, प्रतिनिधिः सर्वपर्याप्तोऽपि न ग्राह्यः ।

**तथा चान्यार्थदर्शनम् । ४२ ॥**

इदं सूत्रं कुतूहले अधिकम् । भाष्येऽपि “ तथा चान्यार्थदर्शनं भवति ‘ तदेव यादृक् कीदृक् च होतव्यम् ’ इति ” इति ग्रन्थस्य विद्यमानत्वात् स्वीकार्यम् । ‘ स्कन्नशिष्टसाध्याग्निहोत्रहोमविधिपरे वाक्ये विहितपरिमाणशेषकार्यासंभवेऽपि प्रधानाभिनिर्वृत्तिं मुख्यद्रव्येणैव दर्शयति ’ इति **कुतूहले** सूत्रं व्याख्यातम् । **के.**

* ‘ विधिरप्येकदेशे स्यात् ’ ( ६।३।२०।४० ) ‘ व्रीहिभिर्यक्ष्ये ’ इति संकल्प्य प्रक्रान्ते प्रयोगे यदि द्व्यवदानपर्याप्तमात्रा व्रीहयो लभ्यन्ते, नीवारास्तु शेषकार्येभ्योऽपि पर्याप्ता लभ्यन्ते, तदा व्रीहिकार्यस्याग्नेययागस्य प्रधानस्य द्व्यवदानत एव संभवात् अङ्गभूतस्विष्टकृदादिकार्यानुरोधेन प्रधानगुणस्य व्रीहित्वस्य बाधितुमशक्यत्वात् न नीवाराः प्रतिनिधातव्याः किंतु व्रीहिभिरेव कथंचिद् द्व्यवदानपर्याप्तं पुरोडाशमुत्पाद्य ततः प्रधानमात्रं कर्तव्यम्, स्विष्टकृदाद्यङ्गकार्याणि तु नादर्तव्यानि इति व्यवस्थापयिष्यते । **कु.** ३।४।१८।४७ पृ. ३८९. * विधिरपि हि पूर्वं प्रयोजनवति पुरुषं नियुङ्क्ते । **वा.** ३।६।२।९ पृ. १०३०. * विधिः अप्रवृत्तप्रवर्तनात्मकः । **सु.** पृ. ८४४. * विधिः अप्राप्तप्रवर्तनम् । **बाल.** पृ. ७६. * विधिः अप्राप्तप्रेषणम् । अयमेव च विधिप्रैषयोर्विशेषः ( लक्षणम् ) । ‘ प्रवर्तनस्मृतिः प्राप्ते प्रैष इत्यभिधीयते । अप्राप्तप्रेषणं सर्वं विधित्वं प्रतिपद्यते ॥ ’ **वा.** २।१।१।१ पृ. ३८२. * विधिः अविदितबोधनम् । सु. पृ. ४७२. * विधिः इष्टसाधनत्वमिव कृतिसाध्यत्वापरपर्यायं प्रयोज्यत्वमपि विषयस्य आक्षिपति इति भवति प्रयोजकः । **भाट्ट.** ४।१।१. * विधिः । ‘ उत्पत्तिविनियोगार्थप्रयोगाऽधिक्रियात्मकः । सर्वो विधिस्तत्परताविशेषान्न विभज्यते ॥’ (**विधि. कारिका** ३४ पृ. ३७४) । सर्वत्रापि च प्रतीयमाने अस्मिंश्चतुष्टये ऐदंपर्यं भिद्यते । तेन उत्पत्त्यादिविधिवाक्यभेदः । ( **कणिका** – यद्यपि सर्वत्र विधेरतच्चतुष्टयात्मकता तथापि वाक्यानां वैचित्र्यात्

सामर्थ्यभेदेन चतुस्त्रिद्व्येकपरत्वात् उत्पत्त्यादिविधिवाक्यभेदः ) तच्चैदंपर्यं प्राप्त्युपपदविशेषसंबन्धात् । क्वचिच्चतुष्टयपरता यथा ‘ उद्भिदा यजेत ’ इति । अन्यतः कस्यचिदलाभात्, फलपदसंबन्धाच्च । क्वचित् त्रिपरता यथा ज्योतिष्टोमवाक्ये, उत्पत्तेरन्यतो लाभात् ( सोमेन यजेत इत्यतः ) । क्वचित् द्विपरता, यथा दर्शपूर्णमासवाक्ये, उत्पत्तिप्रयोगयोः अन्यतः सिद्धेः । क्वचिदेकपरता यथा ‘ अग्निहोत्रं जुहोति ’ ( अत्र उत्पत्तिपरता ) ‘ ( पौर्णमास्यां- ) पौर्णमास्या यजेत ’ इति ( अत्र प्रयोगपरता ) । **विवि.** पृ. ३७७–७९. * विधिरुपवीतस्य दर्शपूर्णमासयोः ‘ उपव्ययते ’ इति । **वि.** ३।४।३. * विधिरेव च ब्राह्मणाभिधः । **वा.** १।२।४।४५. * विधिरेव धर्मे प्रमाणम् । **वि.** १।१।५. * विधिरेव प्रधानं प्रवृत्तिकारणम्, तस्यैव तु अनुग्राहिका प्राशस्त्यावगतिः । **शा.** १।२।१ पृ. ९. * विधिः कः ? यद्वाक्यमुपलभ्य पुरुषः कस्मिंश्चिदर्थे प्रवर्तते, कुतश्चिद्वा निवर्तते, स विधिः । विधीयते ह्यनेनार्थः । यथा लोके ‘ देवदत्त गामभ्याज शुक्लाम् ’ इति । **भा.** ७।४।२।१०, * विधिः कश्चिद् वेदभागः । यः अविदितमर्थं वेदयति यथा– ‘ सोमेन यजेत ’ इति । १।४।१।१. * विधिः कर्तव्यत्वप्रतिपादनात्मकः । **सु.** पृ. ८. * विधिः कर्तुः इष्टसाधनताज्ञानम् । **कणिका.** पृ. ३७५. * ‘ विधिश्चानर्थकः क्वचित् ’ ( १।२।२।२३ सूत्रांशः । ) ‘यजमानः प्रस्तरः’ इत्यादौ गुणविधेरशक्यत्वात् ‘विधिश्चानर्थकः क्वचित् ’ इत्यौदुम्बराधिकरणस्थसूत्रोक्तेन न्यायेन न गुणविधिः । **कौ.** १।४।१३।२३ पृ. २७२. * विधिश्चतुर्धा । फलनिमित्तयोः कर्मविधिः **अधिकारविधिः** । देशकालयोः कर्मविधिः **प्रयोगविधिः** । संस्कार्ये शेषतया कर्मविधिः **विनियोगविधिः** । एतत्त्रितयभिन्नः विधिः **उत्पत्तिविधिः** इति । **कु.** २।२।५।१५. * विधिः चतुर्विधः– उत्पत्तिविधिः, अधिकारविधिः, विनियोगविधिः, प्रयोगविधिश्चेति । तत्र कर्मस्वरूपमात्रबोधको विधिः **उत्पत्तिविधिः** । यथा–‘अग्निहोत्रं जुहोति’ इति । अङ्गप्रधानसंबन्धबोधको विधिः **विनियोगविधिः** । यथा– ‘ दध्ना जुहोति ’ इति । प्रयोगप्राशुभावबोधको विधिः **प्रयोगविधिः** । फलस्वाम्यबोधको विधिः **अधिकारविधिः** । स च ‘ यजेत स्वर्गकामः ’ इत्येवंरूपः । **मीन्या.** * विधिः चेतनप्रवर्तना । **बाल.** पृ. ७८, * विधिः चोदना उपदेश इत्येकोऽर्थः । पृ. ८. * विधिर्ज्यायान् अनुवादात् । **भा.** १०।२।१४।४३.

**ॾ विधिस्तु धारणेऽपूर्वत्वात् । ३।४।५।१५ वि. ॥**

मृताग्निहोत्रे महापितृयज्ञे वा श्रुते ‘ अधस्तात् समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति ’ इति वाक्ये हिशब्दयोगात् वर्तमानापदेशात् विध्यन्तरेण चैकवाक्यत्वात् अर्थवादोऽयं न विधिः इति **पूर्वपक्षं** उत्सूत्रं प्राप्तं तुशब्देन प्रत्याचक्षाणः **सिद्धान्तमाह** । स्रुग्दण्डस्य उपरि समिधो धारणे विधिरेवायं नार्थवादः । अपूर्वत्वात् वाक्यान्तरेण अप्राप्तत्वात् । तस्मात् धारणे विधिः इति **सिद्धान्तः** । **के.**

* ‘ विधिस्तु धारणेऽपूर्वत्वात् ’ ( ३।४।५।१५ वि. ) । ‘ अधस्तात् समिधं धारयन्ननुद्रवेत् उपरि हि देवेभ्यो धारयति ’ इत्यत्र सत्यामपि अधोधारणेन एकवाक्यताप्रतीतौ विधीयते एव उपरिधारणं अपूर्वत्वात् । तथा चोक्तं शेषलक्षणे ‘ विधिस्तु धारणेऽपूर्वत्वात् ’ इति । **शांभा.** ३।४।२।२० ब्रसू. । अधस्तात् इत्यादि महापितृयज्ञे दिष्टगताग्निहोत्रे च श्रूयते । **कल्पतरुः.**

* विधिः त्रिविधः— अपूर्वविधिः नियमविधिः परिसंख्याविधिश्च । ‘ विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥ ’ अत्यन्ताप्राप्तविषयप्रापको विधिः अपूर्वविधिः । यथा ‘ व्रीहीन् प्रोक्षति ’ अत्र प्रोक्षणं अत्यन्ताप्राप्तम् ।

पक्षे प्राप्तस्य अप्राप्तांशपूरणफलको विधिः नियमविधिः । यथा ‘ व्रीहीनवहन्ति ’ इति व्रीहीणां पुरोडाशद्वारा यागसाधनत्वस्य तुषविमोकसाधनीभूतावघातनखविदलनान्यतराक्षेपकतया अवघातस्य पक्षप्राप्तत्वात् ।

एकस्मिन् प्रधाने नियतप्राप्तस्य अङ्गद्वयस्य, एकस्मिन्नङ्गे नियतप्राप्तस्य प्रधानद्वयसंबन्धस्य अन्यतरनिवृत्तिफलको विधिः परिसंख्याविधिः । यथा गृहमेधीये ‘ आज्यभागौ यजति ’ इति । ‘ इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते ’ इति च । अत्र अतिदेशेन आज्यभागतदितराङ्गयोः गृहमेधीये, मन्त्रे च मन्त्रलिङ्गेन अश्वगर्दभरशनादानसंबन्धयोः नियतप्राप्ततया तद्विधेः इतरनिवृत्तिफलकत्वात् ।



न च विधीनां आक्षेपातिदेशलिङ्गानपेक्षप्रवृत्तिकतया अप्राप्तावघातादिप्रापकत्वेन अपूर्वविधित्वं इति वाच्यम् । विधानवेलायां विधिमात्रस्य अपूर्वविधित्वेऽपि फलतो नियमादिव्यपदेशात् ।

न च एवमपि नियमपरिसंख्याविध्योः इतरनिवृत्तिफलकत्वस्य एवकारेण विवरणस्य च तुल्यतया भेदो न स्यात् इति वाच्यम् । अप्राप्तांशप्राप्तेः विधेयावघातनिष्ठतया शीघ्रोपस्थितत्वेन लाघवेन च फलत्वसंभवे लिङ्गोपस्थितिकाया निष्पादिन्याश्च निवृत्तेः फलत्वायोगात् । मन्त्रविधौ तु नियमस्य फलत्वासंभवात् इतरनिवृत्तेरेव फलत्वं इति ।

ननु एवमपि अपूर्वविधिलक्षणं ‘ अग्निहोत्रं जुहुयात् स्वर्गकामः’ ‘अथातोऽग्निमग्निष्टोमेनानुयजति’ इति विध्योः अव्याप्तम् । एतद्विधिविषययोः अग्निहोत्रचयनयोः उत्पत्तिविधिप्राप्तत्वात् ।

न च उद्देश्यसंबन्धित्वेन इति अप्राप्तेर्विशेषणं इति वाच्यम् । तथापि ‘ तं उक्थ्येन ’ इत्यादिविधौ अव्याप्तेः । उद्देश्योक्थ्यादिसंबन्धेन अतिदेशतः चयनादिप्राप्तेः ।

न चायं प्रकृतौ उत्तरवेद्या सह विकल्पितस्य उक्थ्ये अतिदिष्टस्य नियमः अङ्गान्तरपरिसंख्या वा, गौरवात् । उपपादितं च अप्राकरणिकस्यापि चयनस्य वाक्येन प्रकृतिभूतज्योतिष्टोमाङ्गत्वमिव उक्थ्याद्यङ्गत्वम्, तस्य चयनाश्रितगुणकामप्राप्तिः फलं इति दशमे ( १०।८।११।२३–२८ ) ।

न च उद्देश्यसंबन्धित्वेन विधिविषयान्ययत्किञ्चित्प्राप्तिफलको विधिः अपूर्वविधिः इति लक्षणम् । द्वादशाहिकगावामयनिकव्यनीकादिविध्यन्तर्गतयोः ‘ ऐन्द्रवायवाग्रं प्रथममहर्भवति अथ शुक्राग्रम् ’ इति विध्योः अव्याप्तेः । रथंतरबृहत्पृष्ठत्वेन ऐन्द्रवायवाग्रत्वादिप्राप्तेः सत्त्वात् अनैमित्तिकत्वबोधनद्वारा तत्तद्विकृतौ वामदेव्यपृष्ठवति तत्प्राप्तिफलकत्वेन अपूर्वविधित्वात् ।

न च यत्किंचित्संबन्धित्वेन यस्य कस्यचित् अप्राप्तस्य प्राप्तिफलको विधिः अपूर्वविधिः इति वाच्यम् । अवघातनियमस्यापि विकृतौ आज्यधर्मप्राप्तिफलकत्वेन अतिव्याप्तेः । ‘ तावब्रूतामग्नीषोमौ आज्यस्यैव नौ उपांशु पौर्णमास्यां यजन् ’ इत्युपांशुयाजे कालविधौ अप्राप्तस्वर्गसंबन्धप्राप्तिफलके अव्याप्तेश्च । तत्र उद्देश्यान्यसंबन्धित्वेन यत्किञ्चित्प्राप्तिफलकत्वाभावात् । आपराग्निकहोमविधिसंदंशपठिते ‘ द्वे आहवनीये जुहोति ’ इति विधौ गार्हपत्यान्वाहार्यपचनाधिकरणचतुःसंख्याकहोमान्तरत्वतदङ्गत्वव्यावृत्तप्राप्ताग्निहोत्रहोमाभ्यासत्वसिद्धया तेषामभ्यासानां अप्राप्तफलसंबन्धप्राप्तिफलकत्वात् ।

न च विधेयसंबन्धित्वेन यत्किञ्चित्प्राप्तिफलकत्वं विवक्षणीयम् । ‘ वैश्वदेवीं सांग्रहणीं निर्वपेद् ग्रामकामः ’ इति विधौ संनिध्याम्नातानां आमनहोमानां आर्थवादिकग्रामफलसंबन्धव्यावृत्त्या अङ्गत्वसिद्धिफलके अव्याप्तेः । ‘ दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ’ इति विधौ सर्वथा अव्याप्तेश्च । इति चेत् । (अत्रत्यो ग्रन्थो गलितः स्यात् ) ।

अत्र **पितृचरणाः** । उद्देश्यविधेयफलान्यतराणां अनिर्धारितस्वविरोधिप्राप्तिप्रयुक्तस्वाप्राप्तांशप्रापको विधिर्नियमविधिः । अस्ति चेदं ‘ व्रीहीनवहन्ति ’ इत्युपायनियमे नियम्यावघातस्य अनिश्चितस्वविरोधिनखविदलनप्रतिप्रयुक्तावघाताप्राप्त्यंशपूरकत्वात् । ‘ यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्, यदुपभृति प्रयाजानूयाजेभ्यस्तत् ’ इत्युभयनियमे, ‘ पुरोडाशं प्रथयति ’ इति नियमे च ।

अत्र च ‘ उद्देश्यविधिविषययोः पाक्षिकत्वे सति ’ इत्युक्तौ ‘ तमुक्थ्येन ’ इति विधौ ‘ रथंतरे प्रस्तूयमाने संमीलयेत् ’ इत्यत्र च अतिव्याप्तिः, तद्वारणार्थं अप्राप्त्यंशपूरणफलकेति ।

एवमपि ‘ सर्वेभ्यो दर्शपूर्णमासौ ’ इति विधेः अप्राप्तस्वर्गान्यफलांशपूरणफलकत्वात् अतिव्याप्तिः, तद्वारणाय स्वविरोधिप्राप्तिप्रयुक्तत्वं अप्राप्तिविशेषणम् । स्वर्गान्य-

फलप्राप्तेः प्रापकप्रमाणाभावप्रयुक्तत्वेन विरोधिप्राप्तिप्रयुक्तत्वाभावात् ( न दोषः ) ।

एवमपि 'पृष्ठ्यः षडहो बृहद्रथंतरसामा कार्यः' इति विधौ षडहांशतृतीयादिदिवसेषु बृहद्रथंतरविरोधिवैरूपादिप्राप्तिप्रयुक्तस्वाप्राप्तिपूरणफलकत्वात् अतिव्याप्तिवारणाय निर्धारितत्वं स्वविरोधिप्राप्तेर्विशेषणम् । अत्र विरोधिप्राप्तेः अनिर्धारितत्वात् ( निर्धा ? ) नातिव्याप्तिः ।

न च 'हिरण्यगर्भः समवर्तताग्र इत्याघारमाघारयति' इति नियमे अव्याप्तिः । अत्र पक्षप्राप्त्यभावात् इति वाच्यम् । तस्य अपूर्वविधित्वेन इष्टापत्तेः ।

न च नियमापूर्वस्य नियम्यजन्यत्वात् तत्र दृष्टार्थत्वात् नियमादृष्टकल्पनावश्यम्भावः, नियमापूर्वस्य हिरण्यगर्भमन्त्रस्य जनकतानवच्छेदकत्वात् नियमापूर्वजनकत्वाभावात् ।

एवं असमर्थमन्त्रविनियोगेषु 'उत्करे वाजिनमासादयति' 'परिधौ पशुं नियुञ्जीत' इत्यादिषु ( च ) अपूर्वविधित्व द्रष्टव्यं इति दिक् ।

**परिसंख्यात्वं** च वैदिकप्रमाणेन केनचित् संबन्धेन द्वयोः एकसंबन्धत्वे लिङ्गादिप्रमाणकृतविध्यनुपपत्त्यन्तरेण समुच्चित्य नित्यप्राप्तयोः अनुयोगितासंबन्धेन इतरनिवृत्तिफलकनञाद्यसमभिव्याहृतविधित्वम् । वर्तते चेदं 'अश्वाभिधानीमादत्ते' इति शेषिपरिसंख्यायाम् । शेषित्वसंबन्धेन अश्वाभिधानीगर्दभाभिधान्योः मन्त्रसंबन्धित्वेन प्राप्तयोः इतरनिवृत्तिफलकत्वात् । 'इडान्ता प्रायणीया संतिष्ठते' इति शेषपरिसंख्यायां च, 'यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्' इति नियमान्तरपरिसंख्यायां च । अस्य प्रकृतिविकृतिभूतानां रथंतरसाम्नां अरथंतरसाम्नां च ऐन्द्रवायवाग्रतासंबन्धित्वेन प्राप्तरथंतरसामनिवृत्तिफलकत्वात् । 'वाग्वा एषा यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते' इत्याश्रयान्तरपरिसंख्यायां च ।

'अत्र ह्येवावपन्ति अत एवोद्वपन्ति' इति पात्रमानगायत्रीबृहत्यनुष्टुप्भिन्नऋक्परिसंख्यायां गायत्र्यादिषु तद्भिन्नऋक्समागमस्य एतद्विधितः प्राक् असिद्धत्वेन प्राप्त्यभावात् अव्याप्तिवारणाय प्रकृतविध्यनुपपत्तीति । अत्र च एवकारोक्तपरिसंख्याबोधानन्तरं अर्थप्राप्तिबोधः प्राप्तिसामर्थ्येन आवापस्य ऋग्विषयत्वपरित्यागः सामविषयत्वं ( च ) कल्प्यते इति । एवमपि अप्राप्तपरिसंख्या इति नाव्याप्तिः ।

'चत्वारो भवन्ति' 'षडहा भवन्ति' इत्यपूर्वविधिषु षट्त्रिंशद्रात्रिक्रमप्रयोगसंबन्धितया प्राप्तषडहच्छन्दोमधर्माणां मध्ये छन्दोमधर्मनिवृत्तिषडहेषु अतिव्याप्तिवारणाय समुच्चित्येति प्राप्तिविशेषणम् । नहि षडहच्छन्दोमधर्माणां एकत्र समुच्चित्य प्राप्तिः । सप्तमादिषु छन्दोमधर्माणां प्राप्तेः । यदि च एककर्तृकप्रयोगसंबन्धित्वेन प्राप्तिरस्ति इति विभाव्यते तदा अस्त्येव परिसंख्याविधिः इति नातिव्याप्तिसंभावनाऽपि ।

**एतेन** 'सर्वं ब्रह्मणे परिहरति' 'सप्रियाय सगोत्राय ब्रह्मणे देयः' 'अग्निष्टुति आग्नेया ग्रहा भवन्ति' इति विधिषु अतिव्याप्तिसंभावना परास्ता । सर्वर्त्विजां स्वस्वभागसंबन्धितया प्राप्तिसत्त्वेन एकत्र समुच्चित्य प्राप्त्यभावात् ।

सकलनियमविधिव्यावृत्त्यर्थं नित्येति । 'यावज्जीवमग्निहोत्रं जुहोति' इति अकरणनिवृत्तिफलके विधौ अतिव्याप्तिवारणाय अनुयोगितासंबन्धेन इति निवृत्तिविशेषणम् । अकरणनिवृत्तेः करणत्वरूपायाः अनुयोगितासंबन्धेन तदभावात् । अत एव अभावाभावस्य भावरूपत्वम् । ननु तथापि क्रत्वर्थनिषेधेषु 'दीक्षितो न ददाति न जुहोति न पचति' इत्यादिषु अतिव्याप्तिः । दीक्षितस्य क्रत्वर्थपुरुषार्थहोमादीनां समुच्चित्य प्राप्तिसत्त्वेन एतस्य पुमर्थहोमनिवृत्तिफलकत्वात् इति चेत् । निषेधेषु विधित्वाभावात् विधिपदेनैव तद्व्यावृत्तिः इति **केचित्** । नञाद्यसमभिव्याहृतेति वा विशेषणीयम् । तेन न कुत्राप्यव्याप्त्यतिव्याप्त्यवकाशः इति दिक् ।

उभयभिन्नो विधिः**अपूर्वविधिः** । 'प्राप्तिफलको विधिः' इति लक्षणं तु नियमपरिसंख्ययोः फलत्वाभावेऽप्राप्तिरेव फलत्वेन पर्यवस्यति इत्यभिप्रायेण **इत्याहुः** ।

**केचित्तु** अयोगान्ययोगव्यावृत्तिभिन्नफलको विधिः अपूर्वविधिः । अयोगव्यावृत्तिमात्रफलको नियमः ।



अन्ययोगव्यावृत्तिमात्रफलको विधिः परिसंख्या इति लक्षणानि **आहुः** ।

**परे** तु तात्पर्यविषयतापर्याप्त्यवच्छेदकप्राप्तिमद्विधित्वं **अपूर्वविधित्वम्** । एवं तात्पर्यविषयतापर्याप्त्यवच्छेदकनिवृत्तिमद्विधित्वं **परिसंख्यात्वम्** । तात्पर्यविषयतापर्याप्त्यवच्छेदकायोगव्यवच्छेदकत्ववद्विधित्वं **नियमत्वम्** । विषयताया अपि पर्याप्त्यङ्गीकारात् । यत्र तु एकस्यैव विधेः उभयत्र तात्पर्यं तत्र संकरोऽपि इष्ट **एवेत्याहुः** । वर्तते चैतत् प्रोक्षणविधौ प्रोक्षणप्राप्तिफलकत्वात् ।

ननु 'अग्नये वो जुष्टं प्रोक्षामि' इति मन्त्रस्य देवतार्थद्रव्यप्रोक्षणलिङ्गबलात् हविःप्रोक्षणद्वारा कर्मार्थत्वावगमात् तत एव प्रोक्षणप्राप्तिः । यथा प्रकृतौ 'दीक्षाहुतीर्जुहोति' इति विहितासु दीक्षाहुतिषु 'आकूत्यै प्रयुजेऽग्नये स्वाहा' इत्यादिषु षट्सु मन्त्रेषु लिङ्गक्रमप्राप्तेषु अग्निप्रयोगे पुनराकूतिमग्निमित्यादिषु षट्सु मन्त्रेषु पठितेषु 'षड्भिर्दीक्षयति' इति वचनेन विनियुक्तेषु स्वाहालिङ्गबलात् होमद्वारा दीक्षार्थत्वे प्राप्ते लिङ्गात् होमप्राप्तिः । न च वाच्यं तत्र 'द्वादश जुहोति' इति वाक्यं होमविधायकं इति । प्रकृतितः प्राप्तत्वेन विध्यनुवादकृतवैरूप्यप्रसङ्गेन अनुवादत्वात् । न च वाच्यं 'एकादश प्रयाजान् यजति' इतिवत् अभ्यासविधिरयं इति । 'षड्भिर्दीक्षयति' इति विधेः आनर्थक्यापत्तेः । एतत्कृतदीक्षासंबन्धानुपपत्त्या होमद्वारकप्राप्त्या प्राकृतमन्त्रबाधापत्तेश्च । अस्तु वा मन्त्रगतद्वादशत्वं विधिः । होमप्राप्तिस्तु मन्त्रलिङ्गादेव । एकस्य वाक्यस्य सर्वथानर्थक्यापेक्षया गुणविधित्वस्य न्याय्यत्वात् इति चेन्न । तार्किकप्राप्त्यनवधानदशायामेव अपूर्वविधित्वात् । तार्किकप्राप्त्यालोचने अभ्युदयशिरस्कत्वप्रायश्चित्तप्राप्त्यध्वर्युकर्तृकत्वाद्यनेकप्रयोजनासिद्धेः । विधिना प्रोक्षणाप्राप्तौ मन्त्रस्य लिङ्गेन अग्निप्रोक्षणादौ उत्कर्षापत्तेः । न च ग्रहणावेक्षणवत् मन्त्रलिङ्गेन प्राप्तिरिति वाच्यम् । तयोरपि भक्षविधिनैव विध्यङ्गीकारात् । अतः पदार्थविध्यभावे मन्त्रस्य अनङ्गतया तेन न पदार्थप्राप्तिसंभावनाऽपि । दीक्षाहुतीनामपि 'द्वादश जुहोति' इति अभ्यासविध्यङ्गीकारात् लिङ्गात् न होमप्राप्तिः । तेन युक्तमुदाहरणं इति दिक् ।

तत्र अपूर्वविधिः उत्पत्तिविधि–विनियोगविधि–अधिकारविधि–प्रयोगविधिभेदेन चतुर्धा । ( अपूर्वविधिविषयकं विवरणं **मीको.** पृ. ५२९ 'अपूर्वविधिः' इति बिन्दौ द्रष्टव्यम् ) । नियमपरिसंख्याविधिः प्रायेण विनियोगविषयावेवेति दिक् ।

सोऽपि विधिः विषयभेदात् अष्टविधः । १ शुद्धधात्वर्थविधिः । यथा 'अग्निहोत्रं जुहोति' इति । २ अन्योद्देशेन धात्वर्थविधिः । यथा 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति । ३ विशिष्टधात्वर्थविधिः । यथा 'सोमेन यजेत' इति । ४ अन्योद्देशेन विशिष्टधात्वर्थविधिः । यथा 'दशापवित्रेण ग्रहं संमार्ष्टि' इति । ५ धात्वर्थोद्देशेन अन्यविधिः । यथा 'दध्ना जुहोति' इति । ६ धात्वर्थोद्देशेन विशिष्टान्यविधिः । यथा 'य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा' इति । अत्र यागोद्देशेन पौर्णमास्यमावास्याविशिष्टविकल्पविधानात् । विकल्पितपौर्णमास्यमावास्याविधानाद्वा । ७ धात्वर्थोद्देशेन अन्ययोः संबन्धविधिः । यथा 'प्राकाशावध्वर्यवे ददाति' इति । अत्र प्रकृतदानोद्देशेन प्राकाशाध्वर्युसंबन्धविधानात् । ८ मुक्त्वा धात्वर्थं अन्ययोः संबन्धविधिः । यथा 'दध्नेन्द्रियकामस्य जुहुयात्' इति । अत्र मुक्त्वा धात्वर्थं दधीन्द्रिययोः अन्ययोः संबन्धविधानात् । इति अष्टौ प्रकारा इति **जीर्णाः** ।

धात्वर्थोद्देशेन अन्यसंबन्धविधेः धात्वर्थोद्देशेन विशिष्टविधितो भेदाभावात् सप्तविधत्वं युक्तम् ।

अत्र च पूर्वापेक्षया उत्तरोत्तरदौर्बल्यं प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थाभिधायकत्वव्युत्पत्तितद्भङ्गाभ्यां द्रष्टव्यम् । **मणि.** पृ. ९३–१००. * **विधिः त्रिविधः** परिसंख्याविधिः नियमविधिः अपूर्वविधिश्चेति । शब्दतः फलतो वा यस्य शास्त्रस्यान्यनिवृत्तिर्विषयः स परिसंख्याविधिः । यथा 'नानृतं वदेत्' 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्यादौ । अत्र अनृतवदननिवृत्तेः गर्दभरशनारूपशेषितो मन्त्रनिवृत्तेश्च विधेयत्वात् । अत्र चैतद्विध्यभावे प्रायशः

औत्सर्गिकी तत्र चान्यत्र च प्राप्तिः, न तु साऽपि लक्षणघटिकेति ध्येयम् । अत एव एकस्मिन् कार्ये अनृतस्य सत्येन सह पाक्षिकप्राप्तावपि 'नानृतं वदेत्' इति परिसंख्यैवेयम्, न तु नियमविधिः । अत एव यस्य शब्दतः फलतो वा पाक्षिकायोगव्यावृत्तिरूपो नियमः शास्त्रविषयः स नियमविधिः । यथा 'सत्यमेव वदेत्' 'व्रीहीनवहन्ति' इत्यादौ । अत्र नियमस्यैव अयोगव्यावृत्त्यर्थकेन एवकारेण विधेयत्वात्, आक्षेपतः पूर्वप्रवृत्तस्यावघातविधेर्नियमफलत्वाच्च । नियमे पाक्षिकायोगश्च तन्मात्रविध्यप्रवृत्तिनिमित्तको विध्यन्तरप्रवृत्तिसहितैतद्विध्यप्रवृत्तिनिमित्तकश्च इत्यादिप्रकारेण बोध्यः । 'व्रीहीनवहन्ति' 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इत्यादौ आद्यः, एतद्विध्यभावे आक्षेपेण अतिदेशेन वा अवहननस्य षोडशिग्रहणस्य च पक्षप्राप्तत्वात् । 'व्रीहिभिर्यजेत' इत्यादौ द्वितीयः, यवविध्यभावसहितैतद्विध्यभावे व्रीहीणामाक्षेपेण पक्षप्राप्तत्वात् । एवंविधभेदसत्त्वेऽपि अयोगव्यावृत्तिमात्रस्य लक्षणे प्रवेशान्न कोऽपि दोषः । यत्तु दृष्टार्थत्वं नियमविधिलक्षणं कैश्चिदुक्तं तत् 'उत्तरेऽहन्' इत्यादौ अव्याप्तत्वादुपेक्षितम्, षोडशिग्रहणाभ्यासस्यादृष्टार्थत्वात् । अत एव नियमपरिसंख्यातिरिक्तफलको विधिरपूर्वविधिः । यथा 'व्रीहीन् प्रोक्षति' इत्यादौ । अत्र प्रोक्षणादिप्राप्तेरेव फलत्वात् । एतेषां चोपाधीनां क्वचिदुदाहरणे सांकर्येऽपि न दोषः इति न विधिरसायनोक्ततत्तल्लक्षणदूषणावकाशः । विस्तरेण चैतत् **अस्मन्मीमांसाकौस्तुभे** द्रष्टव्यम् । उत्पत्तिविध्यादयस्तद्भेदाः तत्रतत्र विवेचयिष्यन्ते । **भाट्ट.** १।१।६.

* **विधिः द्विविधः** [पृ. १२] प्रत्यक्षः कल्प्यश्च । प्रत्यक्षोऽपि अनेकधा वक्ष्यते ।

कल्प्योऽपि (१) नानास्मृतिकल्प्यः (२) आचारकल्प्यः (३) विधिकल्प्यः (४) अर्थवादकल्प्यः (५) मन्त्रकल्प्यश्च । तत्र विधिकल्प्यो यथा विशेषणविधिः । अर्थवादकल्प्यस्तु द्विविधः– स्वतन्त्रार्थवादकल्प्यः, विध्यन्तरशेषार्थवादकल्प्यश्च । आद्योऽपि त्रिविधः– फलार्थवादकल्प्यः, सिद्धवत्कीर्तनार्थवादकल्प्यः, उपाख्यानार्थवादकल्प्यश्च । अन्त्योऽपि द्विविधः – एककर्तृकोपाख्यानरूपपरकृतिकल्प्यः, अनेककर्तृकोपाख्यानरूपपुराकल्पकल्प्यश्च ।

तत्र फलार्थवादकल्प्यो यथा– 'यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोति' इति । सिद्धवत्कीर्तनार्थवादकल्प्यो यथा – 'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहती अनुष्टुप् च, अत्र ह्येवावपन्ति अत एवोद्वपन्ति' इति । परकृतिकल्प्यो यथा – 'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्' इति । इन्द्रस्येदमुपाख्यानं तस्मादिन्द्रोऽबिभेदिति उपक्रमात् तस्य प्रायच्छदिति क्रियायां कर्तृत्वेन अनुषङ्गात् । पुराकल्पकल्प्यो यथा 'तावब्रूतामग्नीषोमौ आज्यस्यैव नौ उपांशु पौर्णमास्यां यजन्' इति । विध्यन्तरशेषार्थवादकल्प्यो यथा – 'उपरि हि देवेभ्यो धारयति' इति ।

मन्त्रकल्प्योऽपि द्विविधः मन्त्रगताख्यातस्यैव लेट्त्वकल्पनात् विधियुक्तवाक्यान्तरकल्पनाच्च । तत्राद्यो यथा– 'वसन्ताय कपिञ्जलानालभते' इति । द्वितीयो यथा– उपांशुयाजादौ याज्यानुवाक्यासूक्तवाकादिमन्त्रकल्प्यो देवताविधिः । यथा वा 'उच्चा दिवि दक्षिणावन्तो अस्थुर्ये अश्वदाः सह ते सूर्येण' इत्यश्वदानफलविधिः ।

[पृ. १३] अथ प्रत्यक्षविधिभेदाः प्रायश उच्यन्ते । ते च केचित् स्मार्ता अपि संभवन्तः प्रत्यक्षभेदप्रदर्शनेनैव उक्तप्रायाः इति न पृथगुच्यन्ते । केचित् स्मार्ता एव संभवन्तीति तत्रतत्र वक्ष्यन्ते ।

विधिः पुनर्द्विविधः– अर्थकर्मविधिः गुणकर्मविधिश्च । गुणकर्मविधिरपि त्रिविधः–अदृष्टार्थः, दृष्टार्थः, उभयार्थश्च । उत्तरौ द्विविधौ– प्रतिपत्तिरूपौ अप्रतिपत्तिरूपौ च । तत्र दृष्टार्था प्रतिपत्तिर्यथा–'चात्वाले कृष्णविषाणां प्रास्यति' इति । उभयार्था प्रतिपत्तिर्यथा–आश्रयिकर्म स्विष्टकृदादि । अप्रतिपत्तिरूपं दृष्टार्थं गुणकर्म यथा–'व्रीहीनवहन्ति' इति । अप्रतिपत्तिरूपं उभयार्थं गुणकर्म यथा– पशुपुरोडाशयागादि आश्रयिकर्म ।

विधिः पुनरपि चतुर्विधः – उत्पत्तिविधिः, विनियोगविधिः, प्रयोगविधिः, अधिकारविधिश्च । तत्र उत्पत्त्यादिविधिः चतुर्विधोऽपि प्रत्येकं द्विविधः– क्रत्वर्थः



पुरुषार्थश्च । तत्र क्रत्वर्थः उत्पत्तिविधिर्यथा– 'समिधो यजति' इत्यादिः । पुरुषार्थः उत्पत्तिविधिर्यथा–'अग्निहोत्रं जुहोति' इत्यादिः । क्रत्वर्थो विनियोगविधिर्यथा 'व्रीहीन् प्रोक्षति' इत्यादिः । पुरुषार्थो विनियोगविधिर्यथा– द्रव्यार्जनविधिः । क्रत्वर्थः प्रयोगविधिर्यथा, आरम्भणीयादिविधिः आतिदेशिककालदेशाद्येकवाक्यताऽऽपन्नः ।

पुरुषार्थः प्रयोगविधिरपि द्विविधः– अवान्तरप्रयोगविधिः, महाप्रयोगविधिश्च । तत्राद्यो यथा– 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इत्यादिः । अत्र च फलवाक्ये करणत्वेनैव प्रयोगावच्छेदेन कर्मणो विधेयत्वात् तस्य करणत्वाक्षितं अङ्गसाहित्यमन्योन्यमपि विवक्षितम् । कालस्यापि च विधेयत्वात् तदेकत्वमपि विवक्षितम् । महाप्रयोगविधिर्यथा– 'समे दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । अत्रापि षण्णामेकप्रयोगतासाधकः पूर्वोक्तोऽखिलोऽपि न्यायस्तुल्यः । तस्य फलं एकः संकल्पः ।

[पृ. १४] क्रत्वर्थः अधिकारविधिरपि द्विविधः– नैमित्तिकः सन् अदोषनिर्घातार्थः, अनैमित्तिकः सन् दोषनिर्घातार्थोऽपि च । तत्राद्यो यथा– 'भिन्ने जुहोति' इति । द्वितीयो द्विविधः– विहितातिक्रमनिमित्तकः, निषिद्धाचरणनिमित्तकश्च । तत्राद्यो यथा– 'यदि ऋक्तो यज्ञ आर्तिमियात् भूः स्वाहेति गार्हपत्ये जुहुयात्' इत्यादिः । ऋग्वेदादिनिषिद्धाचरणेऽपि अस्य प्रवृत्तेः द्वितीयोदाहरणमपि इदमेव ।

पुरुषार्थः अधिकारविधिस्त्रिविधः– काम्यः, नैमित्तिकः, संवलितश्च ।

काम्योऽपि द्विविधः– कर्मफलसंबन्धपरः गुणफलसंबन्धपरश्च । तत्राद्यो यथा–'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादिः । द्वितीयो यथा– 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यादिः ।

नैमित्तिकोऽपि द्विविधः– नियतनिमित्तकः अनियतनिमित्तकश्च । [पृ. १५] तत्राद्यो यथा–'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिः । द्वितीयो यथा–'यस्याहिताग्नेरग्निर्गृहान् दहेत् क्षामवतेऽग्नये पुरोडाशमष्टाकपालं निर्वपेत्' इत्यादिः ।

तृतीयोऽपि द्विविधः–निमित्तजन्यदोषनाशफलसंवलितः, इतरफलसंवलितश्च । तत्राद्योऽपि द्विविधः– विहितातिक्रमनिमित्तकः, निषिद्धाचरणनिमित्तकश्च । तत्राद्यो यथा– 'योऽमावास्यां पौर्णमासीं वाऽतिपातयेत् अग्नये पथिकृतेऽष्टाकपालं निर्वपेत्' इत्यादिः । निषिद्धाचरणनिमित्तको यथा–'यद्येकं यूपमुपस्पृशेत् एष ते वायो इति ब्रूयात्' इत्यादिः । इतरफलसंवलितो यथा–'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इत्यारभ्य 'यस्मिन् जाते एतामिष्टिं निर्वपति, पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' इत्यन्तो जातेष्टिविधिः ।

विधिः पुनरपि एकादशविधः–(१) सामान्यविधिः, (२) विशेषविधिः, (३) प्रतिप्रसवविधिः, (४) अभ्यनुज्ञाविधिः, (५) उपसंहारविधिः, (६) व्यवस्थाविधिः, (७) पर्युदासविधिः, (८) अभावविधिः, (९) साधारण्यविधिः, (१०) उत्कर्षविधिः, (११) अपकर्षविधिश्चेति ।

इह च अभ्यनुज्ञाविधिः प्रतिप्रसवभिन्नोऽप्यस्ति, यथा– 'षण्णां कर्मणामस्य त्रीणि कर्माणि जीविका । याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥' इति । तथा प्रतिप्रसवरूपोऽप्यस्ति 'क्रीतराजकोऽभोज्यान्नः' इति । तथा प्रतिप्रसवोऽपि अभ्यनुज्ञाविधिभिन्नोऽप्यस्ति 'पूषा प्रपिष्टभागः' इति । अतस्तौ पृथगुपात्तौ । यद्यपि च उपसंहारविधिः विशेषविधिभेद एव, प्रतिप्रसवविधेरपि च सामान्यविधिविशेषविधिभेदौ संभवतः, तथापि भेदं विनाऽपि सामान्यसंभवात् गोबलीवर्दन्यायेन पृथगुद्देशः ।

एकादशविधोऽपि विधिर्द्विविधः– क्रत्वर्थः पुरुषार्थश्च । तत्र क्रत्वर्थः सामान्यविधिर्यथा–'यदाहवनीये जुहोति' इति । पुरुषार्थः सामान्यविधिर्यथा– पुत्रकामेष्टिः । क्रत्वर्थो विशेषविधिर्यथा – 'पदे जुहोति' इति । पुरुषार्थो विशेषविधिर्यथा – 'यः कामयेत वीरो म आजायेतेति, स चतुर्होतारं जुहुयात्' इति । वीरपुत्रकामनायां हि चतुर्होतृहोमेन बाधात् पुत्रसामान्यकामस्यैव पुत्रेष्टिः । क्रत्वर्थः प्रतिप्रसवविधिर्यथा – 'पूषा

प्रपिष्टभागः' इति । पुरुषार्थः स यथा – ग्रहणे सूतकेऽपि श्राद्धविधिः स्मार्तः ।

प्रतिप्रसवविधिः पुनः पञ्चविधः– लुप्तार्थप्रतिप्रसवः, भूतानिषिद्धप्रतिप्रसवः, पर्युदस्तप्रतिप्रसवः, नियमविधिना फलतो व्यावर्तितं यत् तद्विषयः प्रतिप्रसवः, परिसंख्यया व्यावर्तितं यत् तद्विषयश्चेति ।

तत्राद्यो यथा – ' पूषा प्रपिष्टभागः ' इति तार्तीयः (३।३।१४।३५) । दाशमिकश्च [ पृ. १६ ] कृष्णलचरौ ' घृते श्रपयति ' इति ( १०।२।१।१–२ ) ।

द्वितीयो यथा उदाहृतः स्मार्तः, ग्रहणे सूतकेऽपि श्राद्धविधिः । ' स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके ' इति राहोरन्यत्र निमित्ते यत् स्मार्तकर्म श्राद्धादि तस्य सूतके परित्यागः, न राहुनिमित्तक–स्मार्तस्य इत्यर्थः । श्रौतोऽपि 'न हिंस्यात् सर्वा भूतानि ' इति निषिद्धस्य प्रतिप्रसवः ' अग्नीषोमीयं पशुमालभेत ' ' वायव्यं श्वेतमालभेत ' इति ।

पर्युदस्तप्रतिप्रसवो यथा– **भट्टसोमेश्वरमते** ' न प्रथमयज्ञे प्रवृञ्ज्यात् ' इत्यस्य पर्युदासत्वात् प्रतिप्रसवः ' अग्निष्टोमे प्रवृणक्ति ' इति ।

नियमविधिव्यावर्तितप्रतिप्रसवो यथा– ' वृतैरेवार्त्विज्यं कर्तव्यम् ' इति वरणनियमेन अवृतव्यावृत्तौ सत्यां ' अवृतः सामिधेनीरन्वाह ' इति होतुरवृतस्यापि प्रतिप्रसवः ।

परिसंख्याव्यावर्तितप्रतिप्रसवो यथा– दशमे पशोरेकहविष्ट्वमित्यत उत्तरेऽधिकरणे ' हृदयस्याग्रेऽवद्यति ' इत्यादौ परिसंख्या इति यथासूत्रं भाष्यकृतो मतम् । ' एकादश वै पशोरवदानानि ' इति परिसंख्या इति सोमेश्वरः ।

क्रत्वर्थः अभ्यनुज्ञाविधिर्यथा– ' यदि सोमविक्रयी प्रतिविवदेत पृषतैनं वरत्राकाण्डेन अवक्षाणेन वा नाशयेयुः, लकुटैर्घ्नन्ति इत्येके, नित्यवदेके वधं समामनन्ति ' इति **आपस्तम्बसूत्रे** ।

पुरुषार्थः अभ्यनुज्ञाविधिर्यथा– ' क्रीतराजकोऽभोज्यान्नः ' इति ।

अभ्यनुज्ञाविधिः पुनर्द्विविधः– कुतोऽपि अव्यावृत्तं यत् तद्विषयः, कुतोऽपि व्यावृत्तं यत् तद्विषयश्च । तत्राद्यो यथा– ' षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका । याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥ ' इति ।

द्वितीयः पञ्चविधः–निषिद्धविषयः, पर्युदस्तविषयः, नियमाव्यावर्तितविषयः, परिसंख्याव्यावर्तितविषयः, उपसंहारव्यावर्तितविषयश्चेति । तत्राद्यो द्विविधः, सामान्यरूपो विशेषरूपश्च । आद्यो यथा– मनूक्तः ' न दीक्षितस्यान्नमश्नीयात्' इति निषिद्धे ' जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः । आकाश इव पङ्केन न स पापेन लिप्यते ॥ ' इति ॥ द्वितीयो यथा– ' क्रीतराजकोऽभोज्यान्नः ' इति । उभयोश्च [पृ. १७] प्रयोजनं अल्पदोषत्वं निर्दोषत्वं चेत्युक्तं वार्तिके ' सामान्येनाभ्यनुज्ञानाद्विशेषश्च विशिष्यते । विशेषोऽत्यन्तनिर्दोषः स्तोकदोषेतरक्रिया ॥ ' इति ( पृ. १९१ ) ॥ एवं पर्युदस्ताभ्यनुज्ञाविधिरपि द्विविधः । सामान्यरूपो विशेषरूपश्च । तत्राद्यो यथा– ' न दीक्षितस्यान्नमश्नीयात् ' इत्यस्य पर्युदासत्वपक्षे ' अग्नीषोमीये संस्थिते यजमानस्य गृहे अशितव्यम् ' इति ॥ द्वितीयो यथा ऐतरेयब्राह्मणे ' अशितव्यं वपायां हुतायाम् ' इति । उभयोश्च प्रयोजनं बह्वल्पत्वफलत्वं पर्युदासविधेः इत्याह **भट्टसोमेश्वरः** ॥

नियमविधिव्यावर्तिताभ्यनुज्ञा यथा– विप्रादेर्द्रव्यार्जनोपायनियमव्यावर्तिता क्षत्रियादिवृत्तिः आपदि अभ्यनुज्ञायते ' अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा । जीवेत् क्षत्रियधर्मेण ॥ ' इति ॥ परिसंख्याव्यावर्तिताभ्यनुज्ञाविधिर्यथा– ' पञ्च पञ्चनखा भक्ष्याः ' इत्यनेन व्यावर्तितानां मार्जारादीनां अभ्यनुज्ञाविधिः ' प्राणात्यये ' इत्यादिः ॥ उपसंहारव्यावर्तितविषयः अभ्यनुज्ञाविधिर्यथा– ' भवत्पूर्वां ब्राह्मणो भिक्षेत ' इति सामान्यविधेरुपसंहारेण ' ब्राह्मणेषु चरेद् भैक्षं ' इत्यनेन व्यावर्तितस्य क्षत्रियादेरभ्यनुज्ञाविधिः ' चातुर्वर्ण्ये चरेद्भैक्षम् ' इति ॥ क्रत्वर्थे उपसंहारविधिर्यथा– ' आग्नेयं चतुर्धा करोति ' इति ॥ पुरुषार्थः स यथा– ' ब्रह्महा द्वादशाब्दानि ' इति सामान्यं पूर्वयोर्वर्णयोः ' वेदाध्यायिनं हत्वा ' इति विशेषे उपसंह्रियते ॥



उपसंहारः पुनरपि द्विविधः– उपसंहार्यस्य उपसंहारविषये नियमतः प्राप्तौ, अनियमतः प्राप्तौ वेति । आद्योदाहरणानि उक्तान्येव ॥ द्वितीयोदाहरणं तु ' वज्रयुक्तं रथमध्वर्यवे ददाति ' इति ॥

व्यवस्थाविधिः क्रत्वर्थो यथा– ' वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायाम् ' इति । ' चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्राऽमावास्यायाम् ' इति च ॥ [ पृ. १८ ] पुरुषार्थो व्यवस्थाविधिर्यथा– क्षयाहे पार्वणैकोद्दिष्टव्यवस्थाविधिः ॥

व्यवस्थाविधिः पुनः त्रिविधः – उभयप्राप्तौ, अनुभयप्राप्तौ, अन्यतरप्राप्तौ वेति । आद्यो यथा-वार्त्रघ्नीवृधन्वत्योः । आज्यभागक्रमे पाठात् लिङ्गाच्च उभयप्राप्तेः ॥ द्वितीयो यथा चतुर्होतृपञ्चहोतृमन्त्रयोः, तयोः प्रकरणे अनाम्नानात् । यथा वा ' यदग्नये च प्रजापतये च सायं जुहोति ' 'सूर्याय च प्रजापतये च प्रातः ' इति । ब्राह्मणेन देवताविधिपक्षे अग्निसूर्ययोः अप्राप्तेः ॥ तृतीयो यथा– ' वासिष्ठानां नाराशंसो द्वितीयः प्रयाजः तनूनपादन्येषाम् ' इति । अत्र हि विधिपाठक्रमात् तनूनपादेव द्वितीयः प्राप्तः, न नाराशंसः ॥ तथा ' यदि रथंतरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान् ' इति । अत्रापि हि पाठत ऐन्द्रवायवाग्रतैव प्राप्ता, न शुक्राग्रता इति ॥

व्यवस्थायाः द्वैविध्यात् पुनरपि द्विविधो व्यवस्थाविधिः– न्यायगम्या व्यवस्था वाचनिकी च । तत्राद्या यथा– उत्पवनावघातादेः, आज्यौषधयोः ॥

वाचनिकी तु व्यवस्था सप्तधा, तेन सप्तविधस्तद्विधिः – देशतो व्यवस्था, कालतो व्यवस्था, कर्तृतो व्यवस्था, संस्कार्यतो व्यवस्था, कर्मतो व्यवस्था, फलतो व्यवस्था, निमित्ततो व्यवस्था इति । (१) देशतो व्यवस्था यथा– ' वरुणप्रघासेषु उत्तरे विहारे अध्वर्युरष्टौ हवींष्यासादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन् ' इति । स्मार्तमुदाहरणं यथा– ' नर्मदोत्तरभागे तु कर्तव्यं सिंहयुक्तके । कुलीरे संस्थिते भानावुपाकुर्यात्तु दक्षिणे ॥' इति बृहस्पतिः ॥ ( २ ) कालतो व्यवस्था यथा– ' वसन्ते ब्राह्मणोऽग्निमादधीत ' ' ग्रीष्मे राजन्यः ' ' शरदि वैश्यः ' ' वर्षासु रथकार आदधीत ' इति । स्मार्तमुदाहरणं यथा– ' दिवा संध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः । कुर्यान्मूत्रपुरीषे च रात्रौ चेद्दक्षिणामुखः ॥' इति ॥ (३) कर्तृतो व्यवस्था यथा– ' पयोव्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य' इति । तथा– 'बार्हद्गिरं ब्राह्मणस्य [ पृ. १९ ] ब्रह्मसाम कुर्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य ' इति । तथा– ' युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्, एते असृग्रमिन्दवः इति बहुभ्यो याजमानेभ्यः ' इति ॥ (४) संस्कार्यतो व्यवस्था यथा– आज्यौषधसांनाय्यधर्माणाम् । स्मार्तं तूदाहरणम् ' गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् । गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥ ' इति ॥ (५) कर्मतो व्यवस्था यथा– ' रथंतरे प्रस्तूयमाने संमीलयेत्, बृहति समुद्रं मनसा ध्यायेत् ' इति । स्मार्तोदाहरणं तु बृहस्पतिः ' इष्टिश्राद्धे क्रतुर्दक्षः, सत्यो नान्दीमुखे वसुः । नैमित्तिके कालकामौ, काम्ये तु धुरिलोचनौ । , पुरूरवार्द्रवौ चैव पार्वणे समुदाहृतौ ॥ ' इत्यादि । मनुः– ' पित्र्ये स्वदितमित्येवं वाच्यं गोष्ठे तु सुश्रुतम् । संपन्नमित्यभ्युदये दैवे रोचितमित्यपि ॥' इति ॥ ( ६ ) फलतो व्यवस्था यथा– ' मृन्मयेन प्रतिष्ठाकामस्य प्रणयेत्, कांस्येन ब्रह्मवर्चसकामस्य ' इति । स्मार्तोदाहरणं तु, ब्रह्मयज्ञे एव फलविशेषार्थं ऋग्यजुःसामाध्ययनविधिः ॥ ( ७ ) निमित्ततो व्यवस्था यथा – ' यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान् ' इति । स्मार्तोदाहरणं तु ' नृणामकृतचूडानामशुद्धिर्नैशिकी स्मृता । निर्वृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते ॥ ' इति मनुः ॥

तथा अन्यतरकोटिव्यवस्था या कोट्यन्तरस्य आर्थिकी व्यवस्था भवति साऽपि भावविषया अभावविषया चेति द्विविधा । तत्राद्या यथा– ' आग्नेयो वै ब्राह्मणो देवतया, स सोमेनेष्ट्वाऽग्नीषोमीयो भवति, यदेवादः पौर्णमासं हविः तत् तर्हि अनुनिर्वपेत्, तर्हि स उभयदेवतो भवति ' इति अग्नीषोमीयपुरोडाशे कृतसोमयागपुंविषयत्वेन व्यवस्थापिते अर्थात् तदभावः अकृतसोमयाग-

पुंविषयत्वेन व्यवस्थितो भवति । 'पूर्वेद्युरमावास्यायां वेदिं करोति' इति अमावास्यायां पूर्वेद्युः वेदिकरणे व्यवस्थापिते अर्थात् हविरभिवासनोत्तरं वेदिकरणं पौर्णमास्यां व्यवस्थितं भवति । तदिदं उदाहरणद्वयं पञ्चमे सिद्धम् । 'तथाऽपूर्वम्' (५।१।१६।२९) [पृ. २०] इत्यत्र पूर्वम्, 'उत्कर्षाद् ब्राह्मणस्य' (५।४।४।१०-१४) इत्यत्र उत्तरम् ॥

पर्युदासविधिः क्रत्वर्थो यथा- 'यजतिषु येयजामहं करोति, नानुयाजेषु' इति । पुरुषार्थो पर्युदासो यथा- 'नेक्षेतोद्यन्तमादित्यं' इत्यादिः ।

पर्युदासविधिः पुनर्द्विविधः- पर्युदासस्य स्वातन्त्र्यात्, परविशेषणत्वाच्च । तत्राद्ये 'नेक्षेत' इत्येवोदाहार्यम् । द्वितीयस्तु द्विविधः- पर्युदासस्य उद्देश्यविशेषणत्वात् विधेयविशेषणत्वाद्वा । तत्र उद्देश्यविशेषणत्वेन 'अनुयाजेषु' इत्युदाहार्यम् । विधेयविशेषणत्वाद्यथा- 'नार्षेयं वृणीते, न होतारं वृणीते' इति ।

पुनरपि वक्ष्यमाणनिषेधषोडशत्ववत् पर्युदासोऽपि षोडशविधः । तथाहि, प्रकृतौ विकृतौ प्रकृतिविकृत्यात्मके अप्रकृतिविकृत्यात्मके च कर्मणि समानविधानः पर्युदासविधिः 'नानुयाजेषु येयजामहं' इति । अत्र हि आतिदेशिकद्वारा प्रतीक्षणात् 'सप्तदशो वै प्रजापतिर्यज्ञेयज्ञेऽन्वायत्तः' इत्यत्र वार्तिककृदुक्तस्य द्विरुक्ततान्यायापवादस्य साम्यात् ।

एवं प्रकृतिगतारादुपकारिपर्युदासः, विकृतिगतारादुपकारिपर्युदासः, अप्रकृतिविकृत्यात्मककर्मगतारादुपकारिपर्युदासः । प्रकृतिगतादृष्टार्थसंनिपातिपर्युदासः, प्रकृतिगतप्रतिपत्तिव्यतिरिक्तसंनिपातिदृष्टार्थपर्युदासः, प्रकृतिगतप्रतिपत्तिपर्युदासः, विकृतिगतोपदिष्टस्य पूर्ववत् त्रिविधस्य संनिपातिनः पर्युदासाः त्रयः, विकृतिगतातिदिष्टस्य पूर्ववत् त्रिविधस्य संनिपातिनः पर्युदासाः त्रयः, अप्रकृतिविकृत्यात्मककर्मगतोपदिष्टसंनिपातिनः पूर्ववत् त्रिविधस्य पर्युदासाः त्रयः इति द्वादश । एषामुदाहरणानि यथासंभवं मृग्याणि ।

अभावे क्रत्वर्थो विधिर्यथा स्विष्टकृदर्थावत्तनाशे आज्यविधिः 'यां वै कांचित् देवतामन्तरियात् तस्या आवृश्च्यते आज्येनैता देवताः परिसंख्याय यजेत' इति । तथा 'अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत्' इति ॥ पुरुषार्थः अभावे विधिर्यथा- 'सत्रायागूर्य विश्वजिता यजेत' इति ॥

साधारण्यविधिर्द्विविधः-- विनियोगसाधारण्यविधिः अनुष्ठानसाधारण्यविधिश्चेति । तत्र आद्यो यथा-'यदातिथ्यायां बर्हिः तदुपसदां तदग्नीषोमीयस्य' इति । यथा वा बर्हिषो बर्हिर्धर्माणां च वेद्या वेदिधर्माणां च विधिः अङ्गप्रधानसाधारणः ॥ [पृ. २१] द्वितीयो यथा- उपदेशेन अग्नीषोमीये, अतिदेशेन च सवनीयाऽनुबन्ध्ययोः अङ्गभूतस्य यूपस्य अनुष्ठानसाधारण्यार्थः 'दीक्षासु यूपं छिनत्ति' इति अपकर्षविधिः इति ॥

उत्कर्षविधिः यथा-- 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' 'स एष औपवसथ्येऽहन् द्विदेवत्यः पशुरालभ्यते' इत्यग्नीषोमीयस्य क्रयसंनिधौ उत्पन्नस्य उत्कर्षविधिः ॥ साधारण्यविधिव्यतिरिक्तोऽपि यथा-'तिष्ठन्तं पशुं प्रयजन्ति' इति ॥

पुनरपि सामान्यादिविध्येकादशकं यथासंभवं द्विविधम्- दृष्टार्थमदृष्टार्थं च । तत्र अदृष्टार्थौ सामान्यविशेषविधी यथा उदाहृतावेव आहवनीयपदविधी ॥ दृष्टार्थौ तु सोमफलचमसविधी ॥ प्रतिप्रसवविधिस्तु उदाहृतो द्विविधोऽपि अदृष्टार्थ एव । दृष्टार्थस्तु प्रतिप्रसवविधिर्यथा-'पशुं संज्ञपयति' इति । अभ्यनुज्ञाविधिस्तु सर्वोऽपि दृष्टार्थ एव, न तु अदृष्टार्थोऽपि इति । उपसंहारविधिस्तु पूर्वोक्तः क्रत्वर्थः दृष्टार्थः । पुरुषार्थस्तु पूर्वोक्तः अदृष्टार्थः । व्यवस्थाविधिस्तु प्रागुक्तः सर्वोऽपि अदृष्टार्थ एव । यद्यपि वार्त्रघ्नीवृधन्वत्योः आज्यभागदेवताभूताग्निसोमप्रकाशनार्थत्वात् दृष्टार्थतैव तथापि तुल्यार्थयोर्युगलयोः व्यवस्थाविधिः अदृष्टार्थ एव ॥ दृष्टार्थो व्यवस्थाविधिर्यथा आर्षसंख्याशिखाव्यवस्थाविधिः तत्संख्याप्रयुक्तगोत्रज्ञानरूपदृष्टार्थः इत्युक्तं स्मृत्यधिकरणन्यायसुधायाम् ॥

पर्युदासविधिस्तु प्रागुक्तो द्विविधोऽपि पुरुषार्थः अदृष्टार्थ एव ॥ दृष्टार्थस्तु पर्युदासः 'यजतिषु येयजामहं करोति नानुयाजेषु' इति । अत्र च यद्यपि अनूयाजव्यतिरिक्तेषु इत्यंशो न दृष्टार्थः तथापि विधेययेयजामहांशे



यागप्रकाशकत्वेन दृष्टार्थत्वात् पर्युदासविधिः दृष्टार्थं इत्युच्यते ॥ अभावविधिस्तु पूर्वोदाहृतयोर्मध्ये क्रत्वर्थो यः सः दृष्टार्थः पुरुषार्थस्तु अदृष्टार्थः ॥

सामान्यादिविध्येकादशकं पुनरपि जाति-द्रव्य-गुण-क्रिया-विषयत्वेन यथासंभवं चतुर्धा । जात्यादिविषयत्वमपि उद्देश्यांशे, विधेयांशे, उभयांशे चेति जात्यादिविषयमपि विध्येकादशकं प्रत्येकं त्रिविधं इति द्वात्रिंशदुत्तरं शतं भेदा भवन्ति । एषामुदाहरणानि अन्वेष्याणि ग्रन्थगौरवभयात्तु न प्रदर्शितानि ॥ [पृ. २२] विधिः पुनरपि अष्टविधः-(१) धात्वर्थमात्रविधिः (२) सगुणधात्वर्थविधिः (३) किंचिदुद्दिश्य धात्वर्थविधिः (४) तत्रैव विशिष्टधात्वर्थविधिः (५) धात्वर्थोद्देशेन अन्यविधिः (६) धात्वर्थे अन्ययोः संबन्धविधिः (७) धात्वर्थानुरक्तेन प्रत्ययेन अन्ययोः संबन्धविधिः (८) मुक्त्वा धात्वर्थं अन्ययोरेव संबन्धविधिश्चेति । अत्र दूषणभूषणं द्वितीयाध्यायार्थप्रस्तावे वक्ष्यते ॥

विधिः पुनरपि त्रिविधः-अपूर्वविधिः, नियमविधिः, परिसंख्याविधिश्च ॥ त्रिविधोऽप्यसौ चतुर्विधः- जातिविधिः, द्रव्यविधिः, गुणविधिः क्रियाविधिश्चेति । तत्र जातेरपूर्वविधिर्यथा - 'खादिरं वीर्यकामस्य यूपं कुर्यात्' इति ॥ द्रव्यस्यापूर्वविधिर्यथा - 'गोदोहनेन पशुकामस्य प्रणयेत्' इति गोदोहनशब्दस्य यौगिकत्वेन द्रव्यवाचित्वात् ॥ गुणस्यापूर्वविधिर्यथा- 'यदि कामयेत वर्षुकः पर्जन्यः स्यात् नीचैः सदो मिनुयात्' इति ॥ क्रियाया अपूर्वविधिर्यथा - 'अग्निहोत्रं जुहोति' इति ॥ देवताविधिः, होमाधिकरणीभूताहवनीयादिविधिश्च अपूर्वविधावेव अन्तर्भूतः । देवतायाः यागसिद्ध्या दृष्टार्थत्वेऽपि विध्येकप्रमाणत्वात् । आहवनीयादेरपि अधिकरणत्वेन दृष्टार्थत्वेऽपि होमविधिना अनाक्षिप्तत्वेन अदृष्टार्थत्वस्य आघाराग्निहोत्राधिकरणवार्तिके उक्तत्वात् । तदेवं द्विविधोऽपि अपूर्वविधिः दृष्टार्थः अदृष्टार्थश्च ॥ देवताविधिरपि तद्धित-चतुर्थी-मन्त्रवर्ण-द्वितीया-अर्थवादभेदात् पञ्चविधः । तत्रान्ये स्फुटाः । आर्थवादिकः अर्थवादभेदेषु वक्ष्यते ॥ अध्ययनविधिरपि अपूर्वविधिः दृष्टार्थश्च । नहि अयं नियमः ॥

अपूर्वविधिः पुनरपि द्विविधः- क्रत्वर्थः पुरुषार्थश्च । तत्राद्यो यथा-[पृ. २३] 'समिधो यजति' इत्यादिः ॥ द्वितीयो यथा- 'अग्निहोत्रं जुहोति' इत्यादिः ॥

नियमविधिस्तु त्रिविधः- प्रतिनिधिनियमः, प्रतिपत्तिविधिः, तदुभयव्यतिरिक्तश्चेति ॥ प्रतिनिधिनियमोऽपि तावत् अपूर्वविधिवदेव जाति-द्रव्य-गुण-क्रिया-विषयत्वेन चतुर्विधः । तत्र जातिप्रतिनिधिनियमो यथा- पूतीकविधिः ॥ द्रव्यप्रतिनिधिनियमो यथा-षष्ठे 'यदि सत्राय दीक्षितानां प्रमीयेत योऽस्य नेदिष्ठः स्यात् तं तस्य स्थाने दीक्षयित्वा' इति । नेदिष्ठशब्दस्य यौगिकत्वेन द्रव्यवाचित्वात् । 'यद्युपाकृतः पशुः पलायेत अन्यं तद्वयसम्' इति तु कातीयम् ॥ गुणप्रतिनिधिनियमो यथा- कातीयानां कृष्णसारङ्गाभावे लोहितसारङ्गविधिः अग्नीषोमीये पशौ 'यदि कृष्णसारङ्गं न विन्देदथो अपि लोहितसारङ्गः स्यात्' इति शतपथात् ॥ क्रियाप्रतिनिधिनियमो यथा- आपस्तम्बः "यदि यजमानः प्रवसेत् 'प्रजापतेर्विभान्नाम लोकः' इति ध्रुवायां यजमानभागमवधाय समिष्टयजुषा सह जुहुयात्" इति । अत्र होमः प्रक्षेपमात्रं देवताऽभावात् । तथा आहिताग्निपात्रप्रतिपत्तेः 'दक्षिणे हस्ते जुहूमासादयति' इत्याद्यायाः प्रतिनिधिः पतिताहिताग्निपात्रेषु अन्यः स्मर्यते 'पात्राणि तु दहेदग्नौ यजमाने वृथा मृते' इति । तथा द्विजाभावे श्राद्धान्नभोजनस्य प्रतिनिधिः स्मर्यते । हेमाद्रौ देवलः- 'निधाय वा दर्भवटूनासनेषु समाहितः । प्रैषानुप्रैषसंयुक्तं विधानं प्रतिपादयेत् ॥ निर्दिश्याप्यन्नमुद्धृत्य यत्र पात्रं ततो गतिः । पात्राभावे क्षिपेदग्नौ गवे दद्यादथाप्सु वा ॥' इति ॥ प्रतिनिधिनियमः सर्वः क्रत्वर्थ एव, न पुरुषार्थः अपि इति न द्विविधः । तथा प्रतिनिधिनियमः सर्वोऽपि दृष्टार्थ एव, नादृष्टार्थोऽपि इति न द्विविधस्त्रिविधो वेति ।

प्रतिपत्तिविधिस्तु क्रियाविधिरेव, न जातिद्रव्यगुणविधिः इति न चतुर्विधः । तथा प्रतिपत्तिविधिः द्रव्योद्देश्यक एव, न जातिगुणक्रियोद्देश्यकः इति न उद्देश्यचातुर्विध्यादपि चतुर्विधः ॥ प्रतिपत्तिः पुनः क्रत्वर्थैव [पृ.२४] न पुरुषार्था इति न द्विविधस्तद्विधिः ॥ प्रति-

पत्तिविधिः पुनः दृष्टार्थः दृष्टादृष्टोभयार्थश्च, नादृष्टमात्रार्थः इति न त्रिविधः। तत्राद्यो यथा– 'चात्वाले कृष्णविषाणां प्रास्यति' इत्यादिः॥ द्वितीयो यथा– स्विष्टकृद्विधिः इति॥ प्रतिपत्तिः पुनश्च द्विविधा– साक्षाद्विनियुक्तप्रतिपाद्यविषया साक्षाद्विनियुक्तोपादानानुषङ्गसिद्ध– प्रतिपाद्यविषया च। तत्राद्या उदाहृतैव। द्वितीया यथा– 'शकृत् प्रविध्यति' इति॥ प्रतिनिधिप्रतिपत्तिनियमव्यतिरिक्तोऽपि नियमविधिः प्रतिपत्तिविधिवत् जात्यादिविषयत्वेन तावच्चतुर्विधः। तत्र जातेर्नियमविधिर्यथा– क्रयवाक्ये 'गवा' इति। गोपदवदेव हि क्रयवाक्यं आकृत्यधिकरणवार्तिके 'अद्रव्यशब्दत्वात्' इति सूत्रे अनन्यथासिद्धग्रन्थे उदाहृतम्॥ द्रव्यस्य नियमविधिर्यथा– 'एकहायन्या' इति॥ गुणस्य यथा– 'अरुणया' इति (अरुणया एकहायन्या गवा सोमं क्रीणाति)॥ क्रियाया यथा– 'व्रीहीनवहन्ति' इति॥ सोऽयं प्रतिनिधिप्रतिपत्तिविधिव्यतिरिक्तो नियमविधिः पुनर्द्विविधः–क्रत्वर्थः पुरुषार्थश्च। अनन्तरोदाहृतः चतुर्विधः क्रत्वर्थः॥ पुरुषार्थो यथा– 'ऋतौ भार्यामुपेयात्' इति। 'प्राङ्मुखोऽन्नानि भुञ्जीत' इति च॥ पुनः सोऽयं नियमविधिः त्रिविधः– दृष्टार्थः, अदृष्टार्थः, दृष्टादृष्टोभयार्थश्च। तत्र पुरुषार्थक्रियानियमो नैमित्तिकः सर्वोऽपि 'ऋतौ भार्यामुपेयात्' इत्यादिः दृष्टादृष्टोभयार्थः। इह हि प्रयोजकत्वेन तादर्थ्यमुच्यते नियमादृष्टस्य अप्रयोजकत्वात् अवघातादेर्दृष्टार्थत्वात्। प्राङ्मुखत्वादेरपि भोजननिरपेक्षेण अदृष्टमात्रेण अप्रयुक्तेः अवघातवत् दृष्टार्थतैव। गमनं तु भार्यासुखानिच्छोरपि क्रुद्धादेः ऋतौ निमित्ते अदृष्टार्थं प्रयुङ्क्ते एव विधिः। सुखेच्छुं प्रति तु उदास्ते इति दृष्टादृष्टोभयार्थोऽयम्॥ केवलादृष्टार्थस्तु नियमविधिर्यथा– प्रकृतौ वैकल्पिकयोः बृहद्रथंतरपृष्ठयोः अन्यतरस्य क्वचिद्विकृतौ नियमः श्रूयते इति॥

परिसंख्याविधेरपि अपूर्वविधिवत् नियमविधिवच्च जात्यादिविषयाणि उदाहरणानि मृग्याणि॥ परिसंख्याविधिः पुनर्द्विविधः– शेषिपरिसंख्या, शेषपरिसंख्या च। आद्या यथा– 'इमामगृभ्णन्' इति। द्वितीया यथा– गृहमेधीये पञ्चमे पक्षे॥ [पृ. २५] परिसंख्या पुनर्द्विविधा – शाब्दी आर्थी च। तत्राद्या निषेधरूपैवेति **भट्टसोमेश्वरः**। एवकारेण शाब्दी परिसंख्या इति **मिश्राः**। यथा 'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् च, अत्र ह्येवावपन्ति अत एवोद्वपन्ति' इति॥ आर्थी तु द्विविधा प्राप्तपरिसंख्या या त्रिदोषा॥ अप्राप्तपरिसंख्या च या तद्धीना, सा च फलतः परिसंख्येति गीयते। तत्र आद्यायाः भाष्यवार्तिकोक्तसिद्धान्ते उदाहरणं नास्त्येव। पूर्वपक्षे तु गृहमेधीये पञ्चमे पक्षेऽस्ति। भाष्यकारान्तरमते तु सिद्धान्तेऽपि कैश्चित् अङ्गीकृता। यथा दशमे अङ्गिरसां द्विरात्रे श्रुतं 'वैखानसं पूर्वेऽहन् साम भवति, षोडश्युत्तरे' इति। तत्र द्विरात्रोत्तमाहानां अतिरात्रसंस्थत्वात् प्रकृत्यतिरात्रतः षोडशिविकल्पे प्राप्ते 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इति वाक्यान्तरेण अनारभ्याधीतेन नियतः षोडशी इति 'उत्तरे' इत्यनेन अङ्गिरसां द्विरात्रे एव परिसंख्यायते। तेन द्विरात्रान्तरे विकल्पः इति भाष्यकारान्तरोक्तः सिद्धान्तः॥ **शबरस्वामिभिस्तु** परिसंख्या नाङ्गीकृता त्रिदोषत्वात्। वैखानसविधेस्तु अर्थवादः 'षोडश्युत्तरे' इत्यङ्गीकृतमिति। 'सप्तदशार्त्विजः' इत्यपि न प्राप्तपरिसंख्या। यद्यपि 'न वा परिसंख्यानात्' (३।७।१६।३३) इति सूत्रकृता तत्र परिसंख्यात्वमेवोक्तं भाष्यकृता च तथैव व्याख्यातम्। तथापि वार्तिककृता अधिकरणान्ते सप्तदशश्रुतेः उपसंहारार्थतैवोक्ता। तदेतदुपपादितमस्माभिः शास्त्रदीपिकाप्रकाशे। तस्मात् प्राप्तपरिसंख्योदाहरणं स्मार्तमेव। 'पञ्च पञ्चनखा भक्ष्याः' इति॥ अप्राप्तपरिसंख्योदाहरणं तु 'इमामगृभ्णन्' इत्येव।

[पृ. २६] परिसंख्या पुनर्द्विविधा – क्रत्वर्था पुरुषार्था च। पूर्वोक्तानि श्रौतानि आद्योदाहरणानि। द्वितीयोदाहरणं तु स्मार्तमेव 'पञ्च पञ्चनखा भक्ष्याः' इति।

परिसंख्या पुनर्द्विविधा-दृष्टार्था अदृष्टार्था च। तत्र इतरनिवृत्त्यंशः सर्वत्रापि अदृष्टार्थ एव। विधेयांशस्तु क्वचित् दृष्टार्थः, क्वचिददृष्टार्थः। आद्यो यथा –'इमामगृभ्णन्' 'पञ्च पञ्चनखा भक्ष्याः' 'त्रीणि ह वै यज्ञस्योदराणि' इति। मन्त्रभक्षणाऽऽवापोद्वापानां दृष्टार्थत्वात्॥ अदृष्टार्थोदाहरणं तु गृहमेधीये पञ्चमे पक्षे इति॥



परिसंख्या पुनरपि द्विविधा-नियमतः तत्र चान्यत्र च प्राप्तौ, अनियमतः तत्र चान्यत्र च प्राप्तौ चेति। तत्राद्योदाहरणं 'इमामगृभ्णन्' इत्यादि श्रौतम्॥ द्वितीयोदाहरणं तु स्मार्तं 'पञ्च पञ्चनखा भक्ष्याः' इति।

विधिः पुनरपि नवविधः–अध्याहारेण, विपरिणामेन, व्यवहितकल्पनया, व्यवधारणकल्पनया, गुणकल्पनया, अनुषङ्गेण, यदिशब्दपरित्यागेन, रुच्यध्याहारेण हेतुहेतुमतोर्लिङ् इति। तत्र आद्याः पञ्च अर्थवादाधिकरणपूर्वपक्षे आशङ्कामिषेण भाष्ये एवोक्ताः। अत्र अध्याहारेण वा विपरिणामेन वा व्यवहितकल्पनया वा व्यवधारणकल्पनया वा गुणकल्पनया वा कश्चिदर्थः कल्पयिष्यते इति। अनुषङ्गस्तु अनुषङ्गाधिकरणे (२।१।१६।४८) सिद्धः। यदिशब्दपरित्यागादयस्तु त्रयः रथंतराधिकरणपूर्वपक्षे अवेष्ट्यधिकरणसिद्धान्तोपयोगितया भाष्ये वार्तिके च उक्ताः। 'यदिशब्दपरित्यागो रुच्यध्याहारकल्पना। व्यवधानेन संबन्धो हेतुहेतुमतोश्च लिङ्॥' इति। अत्र व्यवधानेन संबन्धः पूर्वोक्ता व्यवहितकल्पनैव। यदिशब्दश्च यच्छब्दादेरप्युपलक्षणं इति नवैव भेदाः। तत्र आद्यनतुष्टयलक्षणार्थः प्राचां सार्धः श्लोकः 'अध्याहारोऽश्रुताक्षेपो व्यत्यासो व्यवधिः पदैः। मतो विपरिणामोऽसौ प्रकृतिप्रत्ययान्यता॥ वाक्यान्यथात्वकरणं व्यवधारणकल्पना॥' इति॥ तत्र अध्याहारोदाहरणं यथा– 'विश्वजिता यजेत' इति। अत्र हि चतुर्थे (४।३।७।१५) स्वर्गकामपदाध्याहार उक्तः॥ व्यवहितकल्पना यथा– रात्रिसत्राधिकरणे (४।३।८।१७) 'प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्ति' इत्यत्र ये प्रतितिष्ठन्ति ते एता रात्रीरुपयन्ति इत्यन्वयकल्पनादुक्ता॥ विपरिणामस्यापि एतदुदाहरणं 'प्रतितिष्ठासन्ति उपेयुः' इति विपरिणामोक्तेः॥ व्यवधारणकल्पना यथा – वेदोपक्रमे (३।३।१) 'उच्चैरृचा क्रियते' इत्यत्र [पृ. २७] उपसंहारे वेदविषयत्वकल्पनात् वाक्यपादाद्ये उक्ता। तथा अश्वप्रतिग्रहेष्ट्यधिकरणे (३।४।११) दानविषयोपक्रमबलेन 'यावतोऽश्वान् प्रतिगृह्णीयात्' इत्युपसंहारस्य 'प्रतिग्राहयेत्' इति दानविषयत्वकल्पना उक्ता॥

गुणकल्पना यथा–'सृष्टीरुपदधाति' 'प्राणभृत उपदधाति' इति। पूर्वत्र असृष्टिलिङ्गा अपि, उत्तरत्र अप्राणभृच्छब्दोपेता अपि मन्त्राः गौण्या वृत्त्या उक्ता विधीयन्ते इति। यथा 'श्येनचितं चिन्वीत स्वर्गकामः' इति प्रकृतचयनाश्रितः श्येनसादृश्यं गुणः फलाय विधीयते। अत्र हि 'कर्मणि हनः' (पा. ३।२।८६) इत्यतः उपपदार्थे कर्मणि इत्यनुवर्तमाने 'कर्मण्यग्न्याख्यायां' (पा. ३।२।९२) इति कर्मणि क्विब्विधेः 'श्येनं चीयमानं' इति प्रतीतेः सामानाधिकरण्योपपत्त्यै श्येनसदृशं इति गौण्या कल्प्यते। पुरुषार्थोदाहरणमेतत्॥

अनुषङ्गेण विधिस्तु द्विविधः– पुरस्तादनुषङ्गः, परस्तादनुषङ्गश्च। तत्राद्यो यथा– 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधाय आहुतिमाहुतिं हुत्वा तमभिघारयेत्, यदि राजन्य ऐन्द्रं, यदि वैश्यो वैश्वदेवम्' इत्यत्र ऐन्द्रं वैश्वदेवं इत्यतः परं 'मध्ये निधाय' इत्याद्यनुषज्यते। [पृ २८] तदुक्तं अवेष्ट्यधिकरणवार्तिके राजन्यस्यापि ब्राह्मणवैश्यवदेव कर्मान्तरेण प्रयोगान्तरेण वा संबन्धः इत्युक्त्वा 'एवं च तस्यापि मध्यनिधानवाक्यं तन्त्रप्रयोगे सति उपपद्यते' इति॥ परस्तादनुषङ्गो यथा 'अथैष ज्योतिः, अथैष विश्वज्योतिः, अथैष सर्वज्योतिः, एतेन सहस्रदक्षिणेन यजेत' इत्यत्र एतेन इत्यादि, पूर्ववाक्यत्रये अनुषज्यते॥

यदिशब्दपरित्यागेन विधिस्तु यद्यपि वार्तिके 'यदि ब्राह्मणो यजेत' इत्यत्र उत्तरपक्षोत्थापनाय पूर्वापरितोषमिषेण दूषितः 'परित्यागाद्वरं अध्याहृत्य पूरणं' इति मत्वा 'अथवा यदि रोचेत इति दर्शयति' इति ग्रन्थेन, तथापि यदिशब्दसमानार्थक–यच्छब्दपरित्यागोदाहरणं 'यदाग्नेयोऽष्टाकपालः' इत्याद्येव यदिशब्दपरित्यागस्थाने अभिषिच्य उदाहार्यम्। यद्वा रुच्यध्याहारसंभवे यदिशब्दपरित्यागो न युक्तः, व्यवधानेन संबन्धसंभवे

रुच्यध्याहारोऽपि अयुक्तः, हेतुहेतुमल्लिङ्संभवे व्यवधानेन संबन्धोऽपि अयुक्तः इति वार्तिके उक्तम् । अतो यत्र रुच्यध्याहार–व्यवहितकल्पना– हेतुहेतुमल्लिङ्कल्पनरूपपक्षत्रयं न संभवति तत् यदिशब्दपरित्यागे उदाहार्यम् । यथा ‘ यदि आतुरः स्यान्मनसा वाचा वा संन्यसेत् ’ इति । बाल. पृ. १२–२८.

* विधिः पुनः प्रत्येकं पञ्चविधः । लिङ्–लोट्–कृत्य–कृत्यार्थ–पञ्चमलकारभेदात् । पञ्चविधोऽपि विधिः पुनर्द्विविधः-श्रौतः स्मार्तश्च । तत्र श्रौतो लिङ् यथा– ‘ ज्योतिष्टोमेन स्वर्गकामो यजेत ’ इति ॥ श्रौतो लोट् यथा– ‘ एकधाऽस्य त्वचमाच्छयतात् ’ इति । अयं च मन्त्रगतोऽपि लोट् विधौ ज्ञेयः, एकेन प्रकारेण त्वगाच्छेदस्याप्राप्तेः ॥ श्रौतः कृत्यो यथा – ‘ स्वाध्यायोऽध्येतव्यः ’ इति । यद्यपि विधौ कृत्यो न स्मर्यते तथापि प्राप्तविषयप्रवर्तनारूपप्रैषे स्मृतस्य तव्यादेः अप्राप्तविषयप्रवर्तनारूपो विधिर्लक्ष्यः । तदुक्तं ‘ प्रवर्तनस्मृतिः प्राप्ते प्रैष इत्यभिधीयते । अप्राप्तप्रेषणं सर्वं विधित्वं प्रतिपद्यते ॥ ’ इति ( वा. पृ. ३८२ ) ॥ विधौ कृत्यार्थतवैप्रत्यया्युदाहरणेषु तवैप्रत्ययो यथा – ‘ अन्वेतवै ’ अन्वेतव्यम्, केन् ‘ अवगाहे ’ अवगाहितव्यम्, केन्यः ‘ शुश्रूषेण्यः ’ शुश्रूषितव्यः, त्वन् ‘ कर्त्वं हविः ’ कर्तव्यम्, एवंजातीयकाः । विधौ श्रौतः पञ्चमलकारो यथा– ‘ समिधो यजति ’ इत्यादिः ॥

स्मार्तो विधौ लिङ् यथा– मनुः ‘ अग्निहोत्रं तु जुहुयादाद्यन्ते द्युनिशोः सदा ’ । इति । स्मार्तो विधौ लोट् यथा–मृग्यम् । स्मार्तो विधौ कृत्यो यथा–‘ चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये ’ इति । तवैप्रत्यया्युदाहरणानि स्मृतिषु प्रायो नोपलभ्यन्ते । स्मार्तो विधौ पञ्चमलकारो यथा– मनुः ‘ महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ’ । ‘ प्राङ्नाभिवर्धनात् पुंसो जातकर्म विधीयते ’ । इति । अत्र कर्तव्या, विधातव्यं इत्यर्थः ॥ बाल. पृ. ३९–४०. * विधिः धर्मे प्रमाणम् । मणि. पृ. १३. * विधिः । न च अवगमितोऽर्थो विधीयते । भा. २।२।६।१७. * विधिः नियोगापरपर्यायः । सु. पृ. ७९७. * विधिः न्याय्यः । वादमात्रमनर्थकम् । भा. १०।६।२।३. * विधिः प्रवर्तनात्मकशब्दभावना । प्रवृत्तिहेतुर्व्यापारश्च प्रवर्तना । न च समीहितसाध्यादन्यत्र चेतनः प्रवर्तयितुं शक्यते इति विधिः स्वस्य प्रवर्तनात्वसिद्ध्यर्थं स्वभाव्यायाः भावनायाः समीहितभाव्यत्वं गमयन् भावनाकरणस्य समीहितोद्देशप्रवृत्तव्यापारगोचरत्वं गमयति । उक्तं च न्यायरत्नमालायां ‘ कर्तुः समीहितं येन सिध्यत्यङ्गं तदुच्यते । प्रमाणं च विधिस्तत्र श्रुतिलिङ्गादिसंयुतः ॥ ’ इति । सोम. २।१।४ पृ. १०९–११०. * विधिः प्रवर्तनारूपः । भाट्ट. ४।१।१. * ‘ विधिः प्रवर्तमानो हि श्रेयःसिद्धयै प्रवर्तते ’ । वा. ३।४।४।१३ पृ. ९११. * विधिः प्रेरणा नियोगः शब्दभावना इत्येकोऽर्थः । बाल. पृ. ७५. * विधिः फलांशस्य न प्रयोजकः । भा. ४।१।२।२ वर्णकं २. * विधिः फलान्तः एव विध्युद्देशः इत्युच्यते । बाल. पृ. ४. * विधिः भृत्यादेर्निकृष्टस्य प्रवर्तनं प्रेरणं लिङर्थः । मणि. पृ. ११७. * विधिः यदि अज्ञातः ततो विधिः, यदि ज्ञातः ततोऽनुवादः । भा. १।४।२।८. * यावत् किं केन कथंभावैः तद्भावना न पूर्यते तावत् विधिः न प्रवर्तते । वा. ३।६।६।१७.

**☸ विधिर्वा स्यादपूर्वत्वात् । ३।४।३।१२ वि. ॥**

‘ उपव्ययते ’ इति ‘ नित्योदकी नित्ययज्ञोपवीती ’ इति स्मृतिविहितस्य उपवीतस्यानुवादो न विधिः इति पूर्वपक्षं उत्सूत्रं प्राप्तं वाशब्देन व्यावर्तयन् सिद्धान्तमाह । अयं विधिरेव स्यात् अपूर्वत्वात् वासोविन्यासविशेषरूपोपवीतनियमस्य दर्शपूर्णमासाङ्गतया अप्राप्तत्वात् । अथवा पूर्वपक्षसूत्रमिदम् । ‘ प्राचीनावीती दोहयेत् यज्ञोपवीती हि देवेभ्यो दोहयति ’ इति मृताग्निहोत्रप्रकरणाम्नाते वाक्ये यज्ञोपवीतस्य विधिः स्यात् अपूर्वत्वात् । यज्ञोपवीतपदस्य ब्रह्मसूत्रपरत्वे श्रौत प्रायश्चित्तप्रातिफलकतया अप्राप्तत्वात्, वासोविन्यासपरत्वे च अजिनवैकल्पिकतया तस्य काठकश्रुतितः प्राप्तत्वेऽपि तन्नियमस्य विधित्सितस्य अप्राप्तत्वात् । अस्योत्तरपक्षस्तु ‘ सतो वा ’ इति सूत्रे द्वितीयव्याख्यायां द्रष्टव्यः । के.



**☸ विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् । १।२।२।१९ ॥**

इह ये विधिवन्निगदा अर्थवादास्ते उदाहरणम् । ‘ औदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर ऊर्क्पशव ऊर्जैवाऽस्मा ऊर्जं पशूनाप्नोत्यूर्जोऽवरुध्यै ’ इति । किमस्य विधिः कार्यम्, उत अस्यापि स्तुतिरिति ।

अत्र प्रभाकरेण साक्षात्संगतिलोभेन ‘ औदुम्बरो यूपो भवति, ऊर्जं पशूनाप्नोति ’ इत्युभयमुदाहृत्य विचारितम् । अत्रायं **पूर्वपक्षः**–– ‘ औदुम्बरो यूपो भवति ’ इति विधिर्व्यवस्थित एव । ‘ ऊर्जं पशूनाप्नोति ’ इत्यत्रापि विध्यपेक्षितपशुरूपसाध्यदर्शनात् मुख्यार्थत्वे च संभवति स्तुत्यर्थत्वायोगात्, प्रयोजनवत्त्वाच्च विधितात्पर्यं तावत् प्रतिभाति । तथा ऊर्क्शब्दाभिधेयस्यौदुम्बरस्य अनिर्दिष्टव्यापारस्य पशुसाधनत्वं न संभवतीति विधिपक्षेऽपि यूपोत्पत्तिरूपाश्रयलाभाय अवश्यम्भाविसंनिहितयूपौदुम्बरविधिसापेक्षत्वात् ‘ पशूनाप्नोति’ इति वर्तमानापदेशप्रतिभातस्य पञ्चमलकारत्वकल्पनात् ऊर्गुदुम्बराद्यर्थवादपदानां च संनिधानाविशेषात् आवृत्त्याऽपि विधिद्वयशेषत्वकल्पनादोषात् एकार्थतात्पर्यमपि स्फुरति । अतस्तात्पर्यसंदेहेनाऽनध्यवसायात् अप्रामाण्यमिति । **सिद्धान्तस्तु**––यद्यपि नियोज्यविशेषणार्थं विध्यपेक्षितसाध्यावभास अत्रास्ति, तथापि ‘ संभवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते ’ इति न्यायेन एकवाक्यत्वानुग्रहाय यस्मिन् पक्षे एकवाक्यत्वमनुरुद्धं भवति, तदेव स्वीकरणीयमित्यनध्यवसायाभावात्, स्तुत्यर्थत्वमेव इति । तदेतदविचारितसकलन्यायस्याभिधानम् । सर्वत्रैव हि संशयपूर्वो न्यायावतारः । तत्रान्यतरपक्षपरित्यागेन अन्यतरग्रहणमिति स्थितम् । संशयेन तु अप्रामाण्यमाशङ्क्य सिद्धान्ताभिधाने सर्वत्रैव तथासंभवात् सकलन्यायेष्वेवाऽप्रामाण्येनैव पूर्वपक्षः प्रसज्येत । तेनात्रापि संशये सति विधित्वेन पूर्वपक्षं कृत्वाऽर्थवादत्वं सिद्धान्तयितुमुचितम् । यत्तु अप्रामाण्येन पूर्वपक्षाभिधानं तदसंबद्धमेव । अतो यथावार्तिकमेवेदमधिकरणं वर्णनीयमिति ।

पूर्वत्रानर्थक्यप्रतियोगिनामर्थवादानां विध्येकवाक्यतया प्रामाण्यं प्रतिपादितम् । इदानीं तेषामेव विधिप्रतियोगिनां प्रामाण्यं प्रतिपाद्यते । तत्र ‘ औदुम्बरो यूपो भवति ऊर्जोऽवरुध्यै ’ इत्यत्र संदेहः किमयं फलविधिः, उत अर्थवादः इति । अयमत्र **पूर्वपक्षिणोऽभिसंधिः** । यद्यप्यत्रोर्गवरोधस्य फलत्वप्रतिपादिका कर्मिश्रुतिर्नास्ति, तथापि ‘ औदुम्बरो यूपो भवति ’ किमर्थमित्याकाङ्क्षायामूर्क्शब्दाभिधेयस्यैव संनिहितस्य योग्यतया संबन्धः । विशेषतो यथा ‘ रन्धनाय स्थाली ’ ‘ मूत्राय यवागूः ’ तथेहापि तादर्थ्यप्रतिपादिका चतुर्थीश्रुतिः कर्मिश्रुतिसमानार्था समस्ति । तेनात्र समभिव्याहारादेव तृतीयान्तस्याप्यौदुम्बरत्वस्य यागस्येव स्वर्गकरणत्वेनैव निवेशः, अन्नप्राप्तेः स्वर्गस्येव साध्यत्वेन । न च स्तुतित्वेनैव अस्यान्वयः, फलार्थत्वेन विध्युपयोगे सति स्तुत्यर्थत्वायोगात् । न चात्र विधिरेव नास्ति, ‘ औदुम्बरो यूपो भवति ’ इत्यत्र औदुम्बरयूपस्य स्वयं भवनायोगादप्रतिपाद्यत्वेन औदुम्बरं यूपं भावयेदिति सिद्धान्तेऽप्यवश्यकल्पनीयत्वात् ।

न च चातुर्थगतपर्णमय्यधिकरणेनास्य गतार्थत्वम् । तस्याप्यत्रैव तुल्यन्यायतया सिद्धेऽर्थवादत्वेऽपापश्लोकश्रवणस्य रात्रिसत्रन्यायेन विपरिणामकल्पनया फलत्वमाशङ्क्य ‘ द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः ’ ( ४।३।१।१ ) इत्यनेन अन्यार्थस्य द्रव्यादेः फलश्रुतिः फलाकाङ्क्षाभावान्न विपरिणमयितुं शक्यते इत्युक्तम् । इह त्वर्थवादत्वमेव गुणफलसंबन्धनिरासेन प्रतिपाद्यते इत्यपुनरुक्तिः ।

ननु औदुम्बरस्याप्यक्रियारूपत्वात् गुणफलसंबन्धो वक्तव्यः । न चासौ संभवति, यतः क्रियाश्रितो गुणः फलं साधयति, गुणसाध्या च क्रिया गुणाश्रयः । यथा दध्नो होमः, गोदोहनस्य प्रणयनम् । न चात्र प्रकृतो यागः उदुम्बरसाध्यः । न च यूपसंबन्धोपस्थिता यूपोत्पत्तिः पशुनियोजनं वाऽऽश्रय इति वाच्यम्, यतः फले गुणविधिः प्रकरणे विहितं विपरिवर्तमानं कर्म आश्रयति । यथा– दधिगोदोहनविधिः । न च यूपोत्पत्तिः पशुनियोजनं वा विकृतिविहितम्, प्रकृतौ श्रुतत्वात् । किञ्च लोकावगतसंबन्धो ह्याश्रयो भवति । यथा दधिगोदोहनयोर्होमप्रणयनक्रिये । अत्र तु उदुम्बरस्य

यूपसंबन्ध एव नावगतपूर्वः, यूपस्यालौकिकत्वात् । अतः कथं तद्द्वारेण यूपोत्पत्तिपशुनियोजनाश्रयत्वम् । अनेनैव वाक्येन यूपसंबन्धकरणे च वाक्यभेद इति । उच्यते– यूपसंबन्धोपस्थिता यूपोत्पत्तिः पशुनियोजनं वा आश्रयः । प्रकरणश्रुतेनैव आश्रयेण भवितव्यम्, नातिदिष्टेनेति किमियं राजाज्ञा बुद्धिविपरिवृत्तिर्ह्याश्रयत्वे कारणम् । सा च प्रकरणविहितस्येव चोदकप्राप्तस्यापि न विशिष्यते । तेन यत्र गोदोहनादौ प्रकरणविहितमेव लभ्यते, तत्र तथाभूतस्यैव आश्रयत्वम् । यत्र चोदकप्राप्तं लभ्यते, तत्र चोदकप्राप्तस्यैव । नापि यूपस्य अलौकिकत्वेन औदुम्बरसंबन्धो नावगतः । यतः, यदि विशेषेण प्रकृतक्रत्वपूर्वीययूपसंबन्धो नावगतः, तदा गोदोहनस्यापि प्रकृतापूर्वीयप्रणयनसंबन्धः पूर्वं नावगत एव । अथ तत्र सामर्थ्यतः सामान्येन पूर्वमवगतः, तदा अलौकिकत्वेऽपि यूपस्य काष्ठमयत्वं तावत् अवगतमेव, औदुम्बरस्यापि काष्ठमयत्वात् सामान्यसंबन्धावगमोऽपि विद्यते एवेति न विशेषः । तेन गुणफलसंबन्धविधिरेवायम् । तथा सत्यपूर्वोऽर्थो विहितो भवति । इतरथा त्वनुवादमात्रमनर्थकमनतिप्रयोजनम् । इत्येवं प्राप्ते–

**उक्तं तु वाक्यशेषत्वम् । २२ ॥**

**अभिधीयते ।** अयमभिप्रायः– भवेदेवं यदि कर्मिश्रुतिव्यतिरेकेणोर्गवरोधस्य फलत्वं प्रतीयते । न च रात्रिसत्रन्यायेन कर्मिश्रुतिविरहेऽपि फलत्वम् । यूपसंबन्धनिराकाङ्क्षस्यौदुम्बरत्वस्य फलाकाङ्क्षाविरहेण विपरिणामाभावस्य वक्ष्यमाणत्वात् । न च तादर्थ्यचतुर्थीवशेन रन्धनाय स्थालीतिवत् फलत्वावगतिः, व्यभिचारात् । न हि 'देवाय पुष्पम्, ब्राह्मणाय दुग्धम्' इत्यादिषु फलत्वमवगम्यते । किं तर्हि ? प्रयोजनत्वमात्रम् । तच्च स्तुतिद्वारेणाप्यविरुद्धम् । 'रन्धनाय स्थाली' इत्यत्र प्रमाणान्तरवशात् भवतु फलत्वेनैव प्रयोजनविशेषनिर्णयः । न त्विह तथा प्रमाणान्तरं फलविशेषनिर्णयाय प्रक्रमते इति न फलार्थत्वेनापि उपयोगः संभवति । भवतु वा यथाकथञ्चित् फलत्वावगतिः, तथापि कथमुदुम्बरत्वस्य क्रियामनाश्रितस्य फलसाधनत्वसंबन्धः ।

**ननु** अत्र विकृतौ यूपस्तदुत्पत्तिस्तत्संबद्धं पशुनियोजनं च चोदकप्राप्तमस्ति । अतो यूपद्वारेण तदुत्पत्तिः पशुनियोजनं वा आश्रित्य फलं साधयिष्यति । मैवम् । विकृतौ चोदकप्राप्तस्य गुणफलविधावाश्रयत्वायोगात् । तथाहि उपकारद्वारेण विकृतौ पदार्थप्राप्तिः । प्राकृतश्चोपकारो यथाभूतैः प्राकृतपदार्थैः जनितस्तथाभूतैरेवात्र जनयितव्यः । न च प्राकृतो उदुम्बरजातिविशिष्टैः पदार्थैरसावुपकारो जनितः । तेन यदि पुरुषार्थत्वेन श्रुतौदुम्बरता प्राकृततरुजातिबाधेन यूपोत्पत्तिं पशुनियोजनं वा आश्रयते, तदा प्राकृतोपकारलाभ एव विकृतौ न भवेत् ।

यत्र पुनः 'शमीमय्यः स्रुचो भवन्ति' इत्यादिषु तत्परः शब्द एव प्राकृततरुजातिबाधेन जात्यन्तरं निवेशयति, तत्र तथाभूतस्यैव शब्देन प्राकृतोपकारजनकत्वज्ञानात् तथैव स्वीक्रियते । न चेह तथाभूतोऽन्यः कश्चिच्छब्दोऽस्ति । अस्यैव तु शब्दस्य प्राकृततरुजातिबाधेनोदुम्बरताया यूपसंबन्धप्रतिपादनपरत्वे फलसंबन्धप्रतिपादनपरत्वे च वाक्यभेदः ।

न चैवं सति पुरुषार्थगोदोहनेन क्रत्वर्थचमसबाधात्त दर्शपूर्णमासोपकारसिद्धिरिति वाच्यम् । यतः प्रकृतौ पदार्थप्रभावेन उपकारकल्पना । तत्र चोपकाराकाङ्क्षी विधिः क्रत्वर्थपुरुषार्थोभयपदार्थनिष्पाद्य प्रणयनं पश्यन् उभयपदार्थनिष्पाद्यप्रणयनसाध्यमेव उपकारं कल्पयति । वैकृतस्तु विधिः खदिरादिप्रकृतिकयूपसाध्यस्यैव पशुनियोजनस्योपकारसाधनत्वेन क्लृप्तस्यैवाऽतिदेशेनेह प्राप्तत्वात् तथाभूतमेव स्वीकुरुते, न त्वन्यथाभूतम् । तस्योपकारजनकत्वेन तत्रानवगतत्वात् । तस्मादुदुम्बरविधिरेवायं यूपसंबन्धेन शमीविधिरिव स्रुक्संबन्धेनेति । 'ऊर्गुदुम्बरः' इत्यादिपदानां 'ऊर्जोऽवरुध्यै' इत्यन्तानां तु सर्वेषां स्तुतिपरत्वमेवेति । तस्मादेवंविधानामर्थवादत्वमेव, न तु फलविधित्वमिति सिद्धम् ।

न च 'निवृत्तिर्वा कर्मभेदात्' ( ८।१।१४।२४ ) इत्यष्टमाध्यायगताधिकरणेन विकृतौ गुणफलप्रवृत्तेः निराकृतत्वादिदमनारभ्यमिति वाच्यम् । यतस्तत्र प्रकृतिश्रुतस्य गोदोहनादेः गुणस्य पुरुषार्थत्वात् विकृतावतिदेशो निराकृतः । तदुक्तं टुप्टीकायाम्– 'यत्क्रत्वर्थं तदतिदिश्यते । न च गोदोहनादीनां क्रत्वर्थता' ( ८।१।१४।२४ पृ. १५९७ ) इति । इह तु विकृतिश्रुतस्यैवौदुम्बरादिगुणस्यातिदिष्टाश्रयमासाद्य फले विधानं निराक्रियते इति वैषम्यम् ।

अत एव यैर्विध्यनुपयोगेन पूर्वपक्षं कृत्वा विध्युपयोगेन सिद्धान्तितं तैरतिदिष्टाश्रयो गुणविधिरनिराकृत एव स्यात् । न च विध्युपयोगवर्णनमप्यन्यत्र न कृतम्, तस्यौत्पत्तिकसूत्रविषयत्वेनैव प्रथमपाद एव वर्णितत्वात् । तदुक्तं तत्रैव '**विधावनाश्रिते साध्यः पुरुषार्थो न लभ्यते । श्रुतस्वर्गादिबाधेन धात्वर्थः साध्यतां व्रजेत् ॥ विधौ तु तमतिक्रम्य स्वर्गादेः साध्यतेष्यते । तत्साधनस्य धर्मत्वमेवं सति च लभ्यते ॥**' ( श्लोवा. )

तेन पक्षविकल्पमात्रेण यदुक्तं वार्तिककृता तदेव विचार्यत्वेन भ्रान्तैरनुमितमिति नादरणीयमेवेति ।

**प्रयोजनम्**– पूर्वपक्षे गुणफलार्थिनैव परमौदुम्बरो यूपः कार्यः । सिद्धान्ते त्वौदुम्बरतायाः प्राकृतजातिबाधेन क्रत्वर्थत्वान्नित्यमेवौदुम्बरो यूपः कर्तव्य इति ।

सूत्रं तु— एवंविधानां 'वाक्यशेषत्वं' अर्थवादाधिकरणे एवोक्तमिति । **तौता.**

**ऋ विधिर्वा स्यादपूर्वत्वाद् वादमात्रं ह्यनर्थकम् । १।२।२।१९ ॥**

'औदुम्बरो यूपो भवति, ऊर्ग्वा उदुम्बर ऊर्क् पशव ऊर्जैवास्मा ऊर्जं पशूनाप्नोति, ऊर्जोऽवरुद्ध्यै' 'अस्मै' इति षष्ठ्यर्थे चतुर्थी । अस्य यूपस्य ऊर्जा ऊर्ग्रूपेण उदुम्बरेण प्रकृतिद्रव्येण ऊर्ग्रूपान् पशूनाप्नोति । ऊर्क् बलं जीवनं वा । अत्र 'ऊर्ग् वै उदुम्बरः' इत्यादिः 'आप्नोति' इत्यन्तः अर्थवादः इति निर्विवादम्, वैशब्दोपबन्धात् वर्तमानापदेशाच्च । 'औदुम्बरो यूपो भवति ऊर्जोऽवरुद्ध्यै' इति तु विधिः स्यात् । वाशब्दः प्रत्यवस्थाने । अपूर्वत्वात् पूर्वं प्रापकं प्रमाणमस्य नास्ति । तथा च अपूर्वमर्थं विधास्यति । इतरथा स्तुतिवादमात्रं अनर्थकं स्यात् । हि यस्मात् वादमात्रं अनर्थकं तस्मात् च विधिः स्यात् । इति **पूर्वः पक्षः** ।

**लोकवदिति चेत् । २० ॥**

स्तुतिवादमात्रं अनर्थकं इति पूर्वपक्षिणा उक्तम् । तत्र सिद्धान्ती शङ्कते । यथा लोके 'इयं गौः क्रेतव्या देवत्तीया, एषा हि बहुक्षीरा, स्व्यपत्या, अनष्टप्रजा च' इति वदन्ति । क्रेतव्या इत्युक्तेऽपि तथा न प्रवर्तन्ते यथा गुणाभिधानात् प्रवर्तन्तेतराम् । इति चेत् सिद्धान्ती ब्रूयात् ।

**न पूर्वत्वात् । २१ ॥**

सिद्धान्तिशङ्कानिराकरणार्थं पूर्वपक्षसूत्रम् । लोकवत् स्तुतिः सफला इति न वाच्यम् । पूर्वत्वात् 'इयं गौः क्रेतव्या, एषा हि बहुक्षीरा, स्व्यपत्या, अनष्टप्रजा च' इति गुणाः पूर्वं प्रत्यक्षादिना ज्ञाता भवन्ति । पूर्वत्वात् तु युक्तं लोके । वेदे तु न प्रमाणान्तरेण ज्ञातुं शक्यं इति व्यर्था स्तुतिः । यो हि विधिं न गणयति कुतः सोऽर्थवादम् । अत्र पूर्ववत्त्वात् इति **कुतूहले** पाठः । अर्थस्तु समान एव ।

**उक्तं तु वाक्यशेषत्वम् । २२ ॥**

'औदुम्बरो यूपो भवति, ऊर्जोऽवरुद्ध्यै' इत्यत्र विधिरेव स्यात् न स्तुतिः इति सूत्रत्रयेण पूर्वपक्षे प्राप्ते सिद्धान्ती आह । तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । उक्तमस्माभिर्वाक्यशेषत्वं अर्थवादस्य 'विधिना त्वेकवाक्यत्वात्' ( १।२।१।७ ) इति । तस्मात् 'औदुम्बरो यूपो भवति' इत्यारभ्य 'ऊर्जोऽवरुद्ध्यै' इत्यन्तः सर्वोऽपि अर्थवादः । 'औदुम्बरं यूपं कुर्वीत' इति तु विधिः कल्प्यः ।

**विधिश्चानर्थकः क्वचित्, तस्मात् स्तुतिः प्रतीयेत, तत्सामान्यादितरेषु तथात्वम् । २३ ॥**

'औदुम्बरो यूपो भवति, ऊर्जोऽवरुद्ध्यै' इत्यत्र विधिसंभवे लक्षणया स्तुतिकल्पनमन्याय्यं इत्याशङ्कायां आह सिद्धान्ती । विधिः क्वचित् स्वीकृतः सन् अनर्थको भवति तस्मात् स्तुतिः प्रतीयेत । तत्सामान्यात् तत्तुल्यत्वात् इतरेषु अपि वाक्येषु तथात्वं स्तुतिपरत्वमेव स्वीकार्यम् । इत्यन्वयः ।

'अप्सुयोनिर्वा अश्वः अप्सुजो वेतसः' इति अप्सुयोनिः अश्वः कर्तव्यः इति विधेः अशक्यत्वात्

आनर्थक्यम् । तत्र अवश्यं स्तुतिः कल्पयितव्या । शमयित्रीभिः अद्भिः अश्वस्य अवकानां च संबन्धोऽयं यजमानस्य कष्टं शमयति इति । तत्सामान्यात् इतरेषु 'यजमानः प्रस्तरः' इत्यादिषु तथात्वम् । तथा इति यावत्, तावत् तथात्वमिति । किं तत् सामान्यं विध्यसंभवः स्तुतिसंभवश्च ।

**प्रकरणे संभवन्नपकर्षो न कल्प्येत, विध्यानर्थक्यं हि तं प्रति । २४ ॥**

दर्शपौर्णमासप्रकरणाम्नाते 'यो विदग्धः स नैर्ऋतः, योऽशृतः स रौद्रः, यः शृतः स सदेवः, तस्मादविदहता शृतंकृत्यः सदेवत्वाय' इत्येतद्वाक्ये 'यो विदग्धः स नैर्ऋतः' इत्यादेः 'अविदहता' इत्यादिविधिशेषतया अर्थवादरूपत्वं चेत् प्रकरणे स्वीये दर्शपूर्णमासप्रकरणे एव संभवन् सन् निविशेत, अपकर्षः प्रकरणादन्यत्र निवेशश्च न कल्प्येत । नैर्ऋतयागानुवादेन विदग्धत्वविधाने हि तत्र स्वीक्रियमाणे अपकर्षः स्यादेव । हि यतः तं प्रति प्रकरणसंनिहितं दर्शपूर्णमासयागमुद्दिश्य विध्यानर्थक्यं विदग्धत्वविधेः असंभवदर्थकत्वं स्यात् प्रकृतयोगे निर्ऋतिदेवताविरहेण नैर्ऋतपदेन प्रकृतकर्मानुवादासंभवात् । इति **कस्तूरिरङ्गाचार्याः ।**

चोऽवधारणे । केवलस्तुतिवादत्वे सत्येव विदग्धस्य नैर्ऋतत्वनिन्दया 'तस्मादविदहता शृतंकृत्यः' इति विधेः शेषीभवन् 'यो विदग्धः' इति वाक्यशेषः दर्शपूर्णमासयोः प्रकरणे इतिकर्तव्यताकाङ्क्षालक्षणे संभवन् लब्धनिवेशः सन् अपकर्षः, कर्मणि घञ्, अपकृष्यमाणः दर्शपूर्णमासाभ्यामन्यत्र विकृतिषु निविशमानो भवितुं न कल्पेत (कल्प्येत इत्यस्य स्थाने) न समर्थो भवेत् । विधिकल्पकत्वे तु विकृतिषु अपकर्षः प्रसज्येत इति यावत् । कुतः ? हि यस्मात् तं प्रति दर्शपूर्णमासकर्मविशेषं प्रति दर्शपूर्णमासयोरिति यावत् । विध्यानर्थक्यं 'यो विदग्धः स नैर्ऋतः' इति विधेः असंभवन्निवेशत्वम्, 'तस्मादविदहता शृतंकृत्यः' इति अविदाहविधानेन 'यो विदग्धः' इत्यनुवादस्यासंभवात् । इति **कुतूहलम् ।**

ननु 'यो विदग्धः स नैर्ऋतः' इत्यत्र यो निर्ऋतियागः तमुद्दिश्य विदग्धद्रव्यविधिसंभवे अर्थवादत्वकल्पनमन्याय्यं अत आह । प्रकरणे दर्शपूर्णमासप्रकरणे संभवन् निविशमानः अर्थवादरूपेण अपकर्षः प्रकरणवियोगः न कल्पेत, विधिप्राप्तं मुक्त्वा प्रकरणसंबन्धकल्पनपक्षो न संभवति । अतः विधिकल्पनानर्थक्यं दर्शपूर्णमासे निर्ऋतियागाभावात् । इति **सुबोधिनीवृत्तिः ।**

यदि स्तुतिः दर्शपूर्णमासयोरेव शृतः स्ताविष्यते । तथा संभवन्नपकर्षो न कल्प्येत ( अपकर्षकल्पनाप्रसङ्गो न स्यात् ) । अपकृष्यते इत्यपकर्षः । विधिपक्षे तु यत्र नैर्ऋतः तत्र विदग्धता नीयेत ( अपकर्षः स्यात् ) । तथा सति प्रकरणं बाधितं भवेत् । दर्शपूर्णमासकर्म प्रति ( तत्रेत्यर्थः ) नैर्ऋताभावात् विदग्धविधानं अनर्थकं स्यात् । तस्मात् स्तुतिरेव । इति **भाष्यम् ।** सिद्धान्तसूत्रमिदम् ।

**विधौ च वाक्यभेदः स्यात् । २५ ॥**

'औदुम्बरो यूपो भवति' इति विधौ ( यूपस्य विधौ ) आश्रीयमाणे 'ऊर्जोऽवरुद्धयै' इत्येतस्मिंश्च ( फलस्य विधौ आश्रीयमाणे ) वाक्यं भिद्येत । इत्थं औदुम्बरो यूपः प्रशस्तः ( इत्येकं ), स च ऊर्जः अवरुद्धयै ( इति द्वितीयमिति ) । तस्मात् विधिवन्निगदानामपि स्तुतिरेव कार्यं अर्थवादानां इति । इति **भाष्यम् । के.**

* 'विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम्' (१।२।२।१९) इत्यनेनैव तावत् विधिः ( निवीते ) । **वा.** ३।४।१।१ पृ. ८९०. * 'विधिर्वा स्यादपूर्वत्वात्' ( १।२।२।१९ ) इत्यौदुम्बराधिकरणपूर्वपक्षसूत्रन्यायेन वैकल्पिको यजमानः साधनत्वेन विधीयते प्रस्तरैककपालकार्ये, इति **पूर्वपक्षः । कौ.** १।४।१३।२३ पृ. २७२. * विधिः विधानं तदङ्गानां प्रयोगः । **भा.** १२।१।१।१. * विधिः विधेयान्तररहितः अनन्यपरः कर्मस्वरूपमेव विदधत् पूर्वविहितादवश्यमेव कर्मान्तरं करोति ( इति प्रथमाध्यायोक्त- ) विधित्वनिर्णयफलोपजीवनम् । **वा.** ३।१।१।१ पृ. ६४९. * विधिः वेदभागः पञ्चसु अन्यतमः । स च धर्मे मुख्यं प्रमाणम् । नामधेयान्यपि 'अग्निहोत्रं' इत्यादीनि विधावेव अन्तर्भवन्ति । **वि.**



१।४।१, * विधिः साक्षात् प्रमाणम्, अर्थवादमन्त्रौ तु विध्यन्वयेन । १।४।१. * विधिः । स्तोकार्थविधिसंभवे तावद्विधायको बहुतरार्थविधानमुपेक्षते । **वा.** २।२।११।२६ पृ. ५४८. * अविदितवेदनं च **विधिः** इत्युच्यते । **भा.** १।४।३।८ पृ. ३३३, * कृतकरो विधिरनर्थकः स्यात् । १०।५।१५।५८ वर्णकं २. * चेतनप्रवर्तनात्मको हि विधिः । **सोम.** ६।२।२. * न च सफलचेष्टानुष्ठानसंभवे विफलानुष्ठाने विधिः पुरुषं नियोक्तुं शक्नोति । **वा.** ३।१।४।१० पृ. ६६८–६९, * न हि विधिरेवैकः प्रयोजनवान् इति कश्चिन्नियमहेतुरस्ति । अविधेरपि विधिशेषत्वेन अर्थवत्त्वात् । २।२।३।३ पृ. ४७९, * पुरुषो येन प्रवर्त्यते स विधिः । ३।४।१।१५ पृ. ९४८. * प्राप्ते वचनं न विधिरिति गम्यते । प्राप्तस्यानुवादो भवितुमर्हति । **भा.** ६।३।१३।३१. * यन्न कदाचिदपि प्राप्नोति स विधिः, यथा 'अग्निहोत्रं जुहुयात्' इति । **वा.** ६।३।८।१६ पृ. १४१७. * विध्यन्तरशेषार्थवादकल्प्यो विधिर्यथा– 'उपरि हि देवेभ्यो धारयति' इति । **बाल.** पृ. ३०. * विशिष्टभावनाविधाने आर्थिको विशेषणविधिरावश्यकः । तत्र च यदंशे अप्राप्तिस्तदंश एव विधिकल्पनम् । फलस्य रागप्राप्तत्वात् न विधिः । **भाट्ट.** ४।१।२ वर्णकं २. * 'समाप्यते विधिः कश्चित्, कदाचिन्नाप्रोचितः' । **वा.** १।४।१३।२४ पृ. ३६७, * सर्वत्रैव विशिष्टविधानोत्तरकालं किं प्राप्तं किं न प्राप्तं इत्यन्वेषणायां अप्राप्तमात्रविषयोपसंहारात् विधिः भावनाधात्वर्थयोरनुवादः इत्यभिधीयते । न तु आदित एव तौ अनूद्य गुणो द्रव्यं वा विधीयते इति कदाचिदपि शास्त्रार्थाभिव्यक्तिः । २।२।५।१६ पृ. ५०१. * सिद्धवत्कीर्तनार्थवादकल्प्यो विधिर्यथा 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इत्यनेन । **बाल.** पृ. ३०. * **विधिं** विना देवतात्वाभावः । **सु.** पृ. ७५५, * **विधिना** अनिच्छतः प्रवर्तयितुमशक्यत्वम् । पृ. ८८९. * विधिना अलौकिकश्रेयःसाधनत्वबोधः इत्थम् । लिङादिश्रवणे प्रवृत्तिर्जायते इति लिङादिज्ञानं प्रवृत्तिसामग्रीजनकम् । सा च कृतिसाध्यत्वप्रकारकेच्छारूपा चिकीर्षा । तज्जनकज्ञानं च लिङादिभिर्जन्यते । तच्च इष्टसाधनत्वबलवदनिष्टाननुबन्धित्वज्ञानम् । अन्यतराभावे प्रवृत्त्यजननात् । अतो लिङादिज्ञानेन त्रितयज्ञानजननात् त्रितयेऽपि शक्तिः । पुष्पवन्तशब्दवत् युगपदर्थत्रयस्य बोधः । अन्वयश्च तेषां विधेयधात्वर्थे । एवं च यागादिनिष्ठेष्टसाधनताबोधात् धर्मे प्रामाण्यम् । इति केचित् ।

निषेधेष्वपि कलञ्जभक्षणादौ अनिष्टसाधनत्वबोधात् अधर्मे प्रामाण्यं इति केचित् ।

**मीमांसकास्तु** विधेः प्रवर्तनायां शक्तिः शब्दजन्यप्रवृत्तौ प्रवर्तनाज्ञानस्य हेतुत्वात् । प्रवर्तनाज्ञानस्य प्रवृत्तिहेतुत्वम्, 'अहमेनं प्रवर्तयामि' 'आचार्यो मां प्रवर्तयति' इत्यनुभवात् । नच तत्र इष्टसाधनत्वज्ञानमेव प्रवर्तकम् । अनिष्टसाधनेऽपि 'आचार्यप्रवर्तितोऽहं करोमि' इत्यनुभवात् । प्रवृत्तिजनकत्वं च प्रवृत्तिविषयेष्टसाधनताज्ञानजननद्वारा इति आक्षिप्तेष्टसाधनताबोधकत्वात् सिद्धं विधेः प्रामाण्यम् । **मणि.** पृ. ९–१०. * विधिनैव धर्मो गम्यते न प्रत्यक्षानुमानाभ्याम् । **वि.** १।१।८. * 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः' । १।२।१।७ ॥ एवं सूत्रव्याख्या–विधेयभावनांशाप्रतिपादकत्वेऽपि तदनुष्ठापकानां विधीनां अङ्गं अर्थवादाः स्युः । केनोपकारेण इत्यपेक्षिते स्तुत्यर्थेन इत्युक्तम् । विधिना अनुष्ठानसिद्ध्यर्थे स्तुतेरुपकारकत्वे अभिहिते विधिमात्रेण अनुष्ठानसिद्धेः किं स्तुत्या इत्याशङ्कानिराकरणार्थं अर्थवादानां धर्मप्रमोपयोगित्वसिद्धौ अति क्लिष्टलाक्षणिकस्तुत्यर्थत्वाङ्गीकारकारणं विधिना एकवाक्यत्वात् इत्यनेन उक्तम् । **सु.** पृ. ५१. * 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः' (१।२।१।७) इति न्यायात् अर्थवादपदानां सर्वेषां लाक्षणिकत्वेऽपि तदेकवाक्यतापन्नं विधिपदमेव अनुभावकम् । **अद्वैत.** २।२।६२८ – ६२९. * 'विधिना त्वेकवाक्यत्वात्' ( १।२।१।७ ) इति सूत्रमपि धर्मप्रमाणत्वाभिमतक्रियाविधिसमभिव्याहृतवायुक्षेपिष्ठादिवाक्यमात्रविषयम् । **परिमल.** १।१।१।१ पृ. ५१ ब्रसू., * 'विधिना त्वेकवाक्यत्वात्' इति सूत्रेण केवलासिद्धार्थविषयत्वेन भासमानानां वाक्यानां विध्येकवाक्यतया क्रियार्थता-

मुपपाद्य प्रामाण्यसमर्थनं कृतम् । १।१।१।१ पृ. ५० ब्रसू. * विधिना स्वविषये इष्टसाधनत्वाक्षेपः क्रियते । भाट्ट. ३।४।८. * नाविधीयमाने अर्थवादः संभवति 'विधिना त्वेकवाक्यत्वात्' इति न्यायात् अविधिशेषस्य आनर्थक्यात् । शा. ७।३।५ पृ ५३८. * यत्तु 'विधिना त्वेकवाक्यत्वात्' (१।२।१।७) इति तत् अङ्गप्रधानवाक्यानामिव पश्चात् संबन्धसद्भावाभिप्रायेण इति केचित् । वा १।४।१३।२४ पृ. ३६६. * **विधेः** अबोधकत्वात् न धर्मे प्रामाण्यं इति पूर्वपक्षः । अबोधकत्व-सापेक्षत्वयोः अप्रामाण्यकारणयोः अभावात् विधेः स्वतः सिद्धं प्रामाण्यं इति सिद्धान्तः । वि. १।१।५. * विधे अर्थवादशून्यस्य श्रुतार्थपरया अर्थवादकल्पकत्वम् । सु. पृ. ४१. * विधेः अवस्थाः उत्पत्तिविनियोगप्रयोगरूपाः द्वितीयतृतीयचतुर्थाध्यायैः निरूपिताः । षष्ठेन च अधिकारो निरूपयिष्यते । कणिका पृ. ४१२. * विधेः एकस्य अनेकफलत्वायोगात् एकत्रैव विशेषणे विधित्वं पर्यवसितं 'चोदिते हि तदर्थत्वात्०' (२।२।३।६) इत्यत्र दर्शितम् । सु. पृ. ७७३. * 'विधेरेव द्वे शक्ती कल्पयिष्यामः' इति न्यायेन विधेरेव प्ररोचनार्थत्वसंभवात् न तदर्थं विधेरर्थवादापेक्षा । सोम १।४।१९. * 'विधेरेव द्वे शक्ती कल्पयिष्यामः' इति न्यायेन विधितः एव प्ररोचनासंभवेन (प्ररोचनायाः संभवेन इति विग्रहः) विधेः अवश्यमर्थवादानपेक्षत्वेन, विधितः सामान्याक्षेपोपपत्तेः । कु. १।४।१९।२०

**विधेः कर्मापवर्गित्वादर्थान्तरे विधिप्रदेशः स्यात् । ४।२।१४।२९ ॥**

पूर्वपक्षसूत्रम् । ज्योतिष्टोमे 'यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्य' इति श्रुतम् । तत्र आतिथ्यायां यद् बर्हिः विहितं तत् तत आच्छिद्य उपसदादौ विनियोगो विधीयते इति **प्रथमः पूर्वपक्षः** । तत्रायं सूत्रार्थः, विधेः विधानस्य कर्मापवर्गित्वात् कर्मणः आतिथ्याकर्मणः सकाशात् अपवर्गित्वात् अपच्छेदकत्वात् अपच्छेदनपरत्वात् अर्थान्तरे उपसदादौ विधिप्रदेशः विधेः विधानस्य उपयोगस्य प्रदेशः नियमनं स्यात् इति । आतिथ्यायामेव बर्हिः संपादनीयम्, परन्तु तस्य तत्र नोपयोगः दृष्टार्थः किंतु अदृष्टार्थं तत्र संपादनम्, उपयोगस्तु उपसत्सु अग्नीषोमीये पशौ च इति ।

अथ आतिथ्यायां बर्हिः संपादनीयं विनियोक्तव्यं च । तत्र विनियुक्तस्यैव बर्हिषः पुनः उपसदादौ विनियोगः उक्तेन वाक्येन विधीयते । तथा च उपयुक्तस्य उपयोगः इति **द्वितीयः पक्षः** । तत्रायं सूत्रार्थः– अर्थान्तरे उपसदादौ कर्मान्तरे विधिप्रदेशः, विधीयते उपयुज्यते इति विधिः, तस्य आतिथ्यायामुपयुक्तस्य बर्हिषः प्रदेशः विनियोगः स्यात् । विधेः आतिथ्यायां बर्हिर्विधानस्य कर्मापवर्गित्वात् दृष्टकार्यावसायित्वलाभात् । अन्यथा केवलमदृष्टार्थता स्यात् इति ।

अथ आतिथ्याबर्हिषो ये धर्माः आश्वबालत्वादयः तेषां उपसदादिबर्हिषि अतिदेशार्थं उक्तं वाक्यं इति **तृतीयः पूर्वपक्षः** । तत्रायं सूत्रार्थः– अर्थान्तरे कर्मान्तरे उपसदादौ विधिप्रदेशः विधेः विधीयमानस्य आतिथ्याबर्हिर्धर्मस्य प्रदेशः अतिदेशः स्यात् । विधेः विधीयमानस्य आतिथ्याबर्हिषः कर्मापवर्गित्वात् कर्मणा आतिथ्याकर्मणा सह अपवर्गित्वात् समाप्तत्वात् । आतिथ्यकर्मणा सह तदीयं बर्हिरपि समाप्तं सत् नान्यत्र विधातुं शक्यते । तस्मात् तद्धर्मातिदेश एवायं इति । इदं सर्वं **कुतूहलानुसारेणोक्तम्** ।

**सोमेश्वरेण** तु तृतीयपक्षानुसारेण सूत्रं व्याख्यातम् 'विधेः विधिगम्यातिथ्यासंबन्धस्य तत्कर्मातिथ्यापवर्गे अपवर्गित्वात् उपसदादिसंबन्धकाले आतिथ्यासंबन्धाभावात् भूतपूर्वगत्याश्रयणे लक्षणाप्रसङ्गात् लक्षणायां धर्मलक्षणैव शिष्टाचारानुग्रहात् ज्यायसी इति अर्थान्तरे उपसदादौ विधिप्रदेशः आतिथ्याविहितधर्मातिदेशः स्यात्' इति ।

**अपिवोत्पत्तिसंयोगाद् अर्थसंबन्धोऽविशिष्टानां प्रयोगैकत्वहेतुः स्यात् । ३० ॥**

ज्योतिष्टोमे 'यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्य' इति पठ्यते । तत्र यद्धर्मकं आतिथ्याबर्हिः तद्धर्मकं उपसदामग्नीषोमीयस्य च इति तदर्थः इति पूर्वः पक्षः । तन्निरासार्थः अपि-वा- शब्दः । उत्पत्तिसंयोगात् बर्हिषः आतिथ्योपसदग्नीषोमीयैः उत्पत्त्या एव उत्पत्तिविधिनैव संयोगात् संबन्धात् अविशिष्टानां विशेषेण रहितानामेव त्रयाणां अर्थेन बर्हिषा संबन्धः । एकेन बर्हिषा त्रयाणां संबन्धे विशेषो नास्तीत्यर्थः । स च संबन्धः प्रयोगैकत्वहेतुः स्यात् । प्रयोगस्य बर्हिषः प्रयोगस्य यदेकत्वं त्रिषु, तस्य हेतुः स्यात् । त्रयार्थे बर्हिषः प्रयोग एक एव इति अविशिष्टानां अर्थसंबन्धेन सिध्यति । **तन्त्ररत्ने** तु 'अर्थेन आश्वबालादिधर्मेण संबन्धो नातिथ्याया एव, किंतु अविशिष्टानां आतिथ्योपसदग्नीषोमीयाणाम् । को हेतुस्तमाह– प्रयोगैकत्वहेतुः । प्रयुज्यते इति प्रयोगो बर्हिः तदेकत्वं हेतुर्यस्य सः तथोक्तः । बर्हिःसाधारण्यात् तद्धर्मसंबन्धोऽपि साधारण इत्यर्थः' इति व्याख्यातम् । सर्वथाऽपि त्रयाणां साधारणं बर्हिः इति **सिद्धान्तः** । के.

* विधेः कर्मसाद्गुण्यप्रयोजकत्वम् । भा. १०।६।१२।३३. * विधेः । कामाधिकारे अन्धादीनामधिकारस्य अनिर्दिष्टस्यानापत्तेः नित्याधिकारे च आपाद्यमानस्य इष्टत्वात् सामान्यतः प्रवृत्तस्य सामर्थ्यानुरोधेन संकोचकल्पनेऽपि नानिष्टापत्तिः । सु. पृ. ५३२. * विधेश्च व्यापारः ग्राहकलक्षणान्विताभिधानसिद्धः । ऋजु. पृ. ५. * 'विधेस्त्वेकश्रुतित्वादपर्यायविधानात्०' इत्यत्र सर्वेषामेव अङ्गानां एकप्रयोजनकल्पनया एकं विधिं वक्ष्यति । वा. ३।४।५।१५ पृ. ९४८ । अत्र **सुधा**– सर्वाङ्गसमुच्चयसिद्ध्यै सर्वेषामङ्गानां एकं क्रतूपकाराख्यं प्रयोजनं इति कल्पनाय अपर्यायविधानेन हेतुना विधिशब्दवाच्यस्य अङ्गग्रामस्य एकविधिश्रुतिकत्वं वदता सूत्रकृता सर्वाङ्गविधायकः एको विधिर्वक्ष्यते । पृ. १४७०. * 'विधेस्त्वेकश्रुतित्वात्' इत्यनेन न्यायेन (११।१।३।१६) संभूय कार्यमङ्गानां युक्तम् । भा. ११।१।३।१८.

**विधेस्त्वेकश्रुतित्वादपर्यायविधानान्नित्यवच्छ्रुतभूताभिसंबन्धादर्थेन युगपत् प्राप्तेर्यथाप्राप्तं स्वशब्दो निवीतवत् सर्वप्रयोगे प्रवृत्तिः स्यात् । ११।१।३।१६ ॥**

काम्ये अग्निहोत्रादिप्रयोगे एकदेशेनाप्यनुष्ठानं सर्वाङ्गोपसंहारेणैव वा इति विचारे सर्वाङ्गोपसंहारेणैव इति सिद्धान्तं प्रतिपादयितुं सूत्रम् । अत्र **भाष्यम्**– न तु एतदेवं एकदेशेनापि अङ्गानां प्रयोग इति (सौत्रतुशब्दस्यार्थोऽयम्) । कथं तर्हि ? सर्वाङ्गोपसंहारेण । कुतः ? विधेः एकश्रुतित्वात् । एकेन शब्देन अङ्गानां प्रयोगो विधीयते 'दर्शपूर्णमासाभ्यां यजेत' इति सर्वापेक्षया इत्युक्तम् । सा तु अपेक्षा कृत्स्ने वा अग्न्यन्वाधानादिव्यापारे तदेकदेशे वा ? तत्र एकदेशापेक्षा न युक्ता । कस्मात् ? अपर्यायविधानात् । इमान्यङ्गानि न पर्यायेण विधीयन्ते, कदाचित् समिधो यजति, कदाचित् तनूनपातमिति । कथं तर्हि ? नित्यवत् यथाभूतानि च श्रुतानि तथाभूतानि अपेक्षया अभिसंबध्यन्ते । अथोच्येत नित्यवत् श्रुतानामपि सतां एकदेशोऽपेक्षिष्यते इति । नैतद्युक्तम् । कुतः ? अर्थेन युगपत्प्राप्तेः । अर्थेन प्रधानोपकारेण 'खले कपोतवत्' युगपत् संनिपतन्ति अङ्गानि । तत्र न गृह्यते विशेषः, इदं प्राप्यते इदं नेति । अतः सर्वाणि प्राप्यन्ते । यथाप्राप्तं च स्वशब्दार्थो निवीतवत् । यथा 'निवीता ऋत्विजः प्रचरन्ति' इति ऋत्विग्विशेषाभावात् सर्वेषां च संनिधानात् सर्वे ऋत्विजः निवीता भवन्ति । एवमिहापि सर्वप्रयोगे प्रवृत्तिः स्यात् । इति ।

विधेः यावदङ्गानुष्ठानबोधकविधेः । एकश्रुतित्वात् प्रधानविधिगम्यत्वात् यावदङ्गप्रयोगविधेः । नित्यवच्छ्रुतात् भावनावाचकशब्दात् भूता उत्थिता आकाङ्क्षा कथंभावाकाङ्क्षा, तया अभिसंबन्धात् । अर्थेन प्रधानोपकारेण युगपदेककालं प्राप्तेः संबन्धात् । यथाक्रमं (यथाप्राप्तं इत्यस्य स्थाने पाठोऽयम्) प्रथमं यथा आकाङ्क्षापूरकतया अन्वितं तथैव अनुष्ठानम् । निवीतवत् इति दृष्टान्तः । तस्मात् इत्यादिना निगमनम् । इति **सुबोधिनी** ।

अत्र **न्यायसुधा** (पृ. ११७६)– प्रधानेन सह एकवेदविहितानामङ्गानां वाक्यैकवाक्यतापन्नवाक्यसमूहात्मकमहावाक्यार्थभूतानामङ्गप्रधानविशिष्टभावनाविषयवैदिकप्रयोगविधिप्रयोज्यत्वसंभवेऽपि वेदान्तरविहितानामेकवाक्यत्वायोगात् न तत्प्रयोज्यत्वोपपत्तिरित्याशङ्कानिरासार्थं सिद्धान्तसूत्रम् । साङ्गप्रधानप्रयोगविधेः एकप्रधानप्रयोगविधिश्रुतिनिबन्धनत्वेन अपर्यायेण अकादाचित्कत्वेन सर्वाङ्गानां विधानावगतेः । नित्यवच्छ्रुतानां च तथाभूतानां श्रुत्यादि-

प्रमाणोपनयलक्षणसंनिधानाविशेषात् संनिकर्ष- विप्रकर्षानादरेण प्रधानान्वयावगतेः, अनिर्ज्ञातोपायपरिमाणत्वेन च प्रधानोपकाररूपेण अर्थेन सर्वेषां अपेक्षितत्वात् युगपत् प्राप्तेः, यथाप्राप्ते च स्वशब्दार्थे विकल्पायोगात्, 'निवीता ऋत्विजः प्रचरन्ति' इति सर्वर्त्विजां निवीतवत् यथाप्राप्तस्य अङ्गसमूहस्य सर्वस्य स्वप्रधानप्रयोगविधायिशब्दविषयत्वावगतेः सर्वाङ्गप्रयोगे फलसिद्धिः स्यात् इति समस्ताङ्गप्रयोगोपपादनाय एककाण्डाम्नाननिमित्तैकवाक्यत्वाभावेऽपि अङ्गप्रधानानां अन्योन्यापेक्षावशात् सर्वाङ्गानुगृहीतेन प्रधानेन फलं भावयेत् इत्येवं वाक्यैकवाक्यत्वकल्पनया संनिकृष्टविप्रकृष्टानां सर्वेषामङ्गानां प्रधानप्रयोगविधिप्रयोज्यत्वस्य वक्ष्यमाणत्वात् वेदान्तरीयाणामपि अङ्गानां प्रधानविधिप्रयोज्यत्वोपपत्तिः । इति । के.

* 'विधेस्त्वेकश्रुतित्वात्०' ननु यावन्मात्रं आधानस्य यजुर्वेदविहितं तन्मात्रस्यैव उपांशुत्वं इत्यवगमात् नैव सामगानस्य प्राप्नोति (उपांशुत्वम्) । नैतदेवं वक्ष्यति हि 'विधेस्त्वेकवाक्यत्वादपर्यायविधानात्०' इति । वा. ३।३।२।९ पृ. ८१०. * विधेः निराकाङ्क्षस्यापि उपसंहारप्राबल्येन संकोचो नाभ्युपगम्यते । **पराक्रमः.** ४३।२. * विधेः निराकाङ्क्षस्य मन्त्रलिङ्गानुसारेण संकोचो निराकृतः इन्द्रपीताधिकरणे (३।२।११। २८–२९)। **के.** * 'विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात्' (१०।१।१।१) इत्यनेन न्यायेन अस्थियज्ञे जपसंस्कारं कर्तव्यम् । इति पूर्वः पक्षः । **भा.** १०।२।१८।४९.

**ॐ विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् । १०।१।१।१ ॥**

विधीयते इति विधिः अङ्गजातम् । विधेः प्रकरणान्तरे विकृतौ अतिदेशात् सर्वकर्म प्राकृतं सर्वं धर्मजातं अर्थलुप्तमपि कर्तव्यं स्यात् । वचनेन सर्वस्य प्रापितत्वात् । यथा 'प्राजापत्यं चरुं निर्वपेच्छतकृष्णलमायुष्कामः' इत्यत्र चरुशब्दात् पाकः कर्तव्यः । इति **पूर्वः पक्षः** । इति प्रथमं वर्णकम् । द्वितीयवर्णके तु पाकवत् अवघातोऽपि कर्तव्यः इति **पूर्वः पक्षः** ।

अथ तृतीयं वर्णकम् । 'वैश्वदेवं चरुं निर्वपेद् भ्रातृव्यवान् तं बर्हिषदं कृत्वा शम्यया स्फ्येन व्यूहेत् इदमहममुं चामुं च व्यूहामि इति, यं द्विष्यात् तं ध्यायेत्, यदधोऽवमृद्येत् यच्च स्फ्य आश्लिष्येत् तद् विष्णव उरुक्रमायावद्येत्' इति श्रूयते । अत्र विष्णुः उरुक्रमः आवाहयितव्यः । इति **पूर्वः पक्षः** । सूत्राक्षरार्थः स एव ।

**अपिवाऽभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात् । २ ॥**

सर्वं प्राकृतं विकृतौ कर्तव्यं उत किंचित् बाध्यमपि इति विचारे सर्वं कर्तव्यं इति पूर्वः पक्षः । तं निराकर्तुं अपिवा–शब्दः । अभिधानसंस्कारद्रव्यं अर्थे क्रियेत । अभिधानं च संस्कारश्च अभिधानसंस्कारौ । अभिधानसंस्काराभ्यां युक्तं द्रव्यं अभिधानसंस्कारद्रव्यं इति उत्तरपदलोपः । 'स्वयं दितं बर्हिर्भवति' इति अभिधानयुक्तं बर्हिरादि द्रव्यम्, 'देवस्य त्वा सवितुः प्रसवे० आददे' इति आदानसंस्कारयुक्तं असिदरूपं द्रव्यम्, अर्थे उक्तद्रव्यस्य प्रयोजने सति क्रियेत कर्तव्यम् । तादर्थ्यात् तादृशप्रयोजनार्थत्वात् तस्य द्रव्यस्य । अर्थलोपे तु द्रव्यस्यापि विकृतौ लोप एव । इति प्रथमं वर्णकम् ।

द्वितीये वर्णके तु कृष्णलेषु अवघातबाधः कर्तव्यः । आदित एव वितुषत्वात् । सूत्राक्षरस्तु स एव ।

तृतीये वर्णके तु अभिधानसंस्कारो निवर्तते, प्रयोजनाभावात् । विष्णुः उरुक्रमः नावाहयितव्यः ।

**तेषामप्रत्यक्षशिष्टत्वात् । ३ ॥**

यदुक्तं पूर्वपक्षिणा यथा कृष्णलेषु लुप्तप्राकृतप्रयोजनोऽपि पाकः वचनप्रामाण्यात् क्रियते एवं प्राकृतं लुप्तार्थमपि विकृतौ क्रियेत इति । तन्न । प्रत्यक्षं हि 'धृते श्रपयति' इति वचनेन श्रपणं शिष्टं विहितम् । प्रत्यक्षशिष्टत्वात् युक्तं तत्र । स्वयंदितबर्हिरादिषु तेषां अभिधानसंस्कारद्रव्याणां अप्रत्यक्षशिष्टत्वात् प्रत्यक्षविधानाभावात् चोदकस्य च प्रकृतोपकाराभावात् अप्रवृत्तिः । तस्मात् विकृतौ अर्थलुप्तं प्राकृतं न प्रवर्तते इति **सिद्धान्तः** ।

यथा 'स्वयं दितं बर्हिर्भवति' इत्युक्ते प्राकृतं छिन्नं बर्हिर्निवर्तते, एवं 'स्वयं कृता वेदिर्भवति' इत्यत्र



उद्धननम्, खननम्, परिलेखनं च निवर्तन्ते । 'स्वयं शीर्णा शाखा भवति' इत्यत्र असिदद्रव्यं निवर्तते । मन्त्राश्च एतेषु निवर्तन्ते ।

इति प्रथमं वर्णकम् । द्वितीयवर्णके तु कृष्णलेषु अवघातस्य बाधः साधनीयः सूत्राक्षरार्थस्तु न भिन्नः ।

तृतीयवर्णके तु विष्णुः उरुक्रमः नावाहयितव्यः इति सिद्धान्तः । **के.**

* **विधेः प्रयोजनविचारः** । प्रयोजनं खलु इह विधेः वेदप्रामाण्यसिद्धिर्वा, पदार्थसंसर्गप्रतीतिर्वा, हिताहितसाधनताऽवगमो वा प्रवृत्तिनिवृत्तिनिमित्तम् । न तावत् प्रामाण्यसिद्धिः, अन्तरेणापि विधिं तत्संभवात् ।

स्यादेतत्, विधिविरहे कार्यशून्यतया भूतार्थावगाहिनो भूतस्य च मानान्तरविषयतया तदपेक्षत्वाद्वेदस्य प्रामाण्यं विहन्येत, पुरुषवाक्यवत् । तत् अनुपपन्नम् । अत्रेदं तु भवान् पृष्टो व्याचष्टाम्, यदेतत् पुरुषवचसां मानान्तरापेक्षत्वम्, तत् किं भूतार्थतया, आहोस्वित् पुरुषबुद्धिप्रभवतया, न तावत् भूतार्थतया प्रत्यक्षादीनामप्रामाण्यप्रसक्तेः । तान्यपि हि भूतार्थान्येव । चैत्यवन्दनादिवाक्यस्य च कार्यार्थाभिधायिनो निरपेक्षतया प्रामाण्यप्रसङ्गात् । विनियोगमात्रपरमेतत्, न कार्यपरं इति च स्वतन्त्रसिद्धान्तश्रद्धामात्रविजृम्भितम्, न प्रामाणिकं इति निवेदयिष्यते । तस्मात् वक्तृधीप्रभवत्वमेव सापेक्षत्वे हेतुः, तच्च भूतार्थेऽपि वैदिके नास्ति इति नास्ति सापेक्षता । सा च कार्यनिष्ठानामपि पुरुषवचसाम् । तन्न प्रामाण्यसिद्धिः अर्थो विधेः ।

नापि पदार्थसंसर्गप्रतीतिः, विनाऽपि विधिना 'स्थाल्यामोदनं पचति चैत्रः' इति पदार्थसंसर्गप्रतीतेरुपपत्तेः । यदि मन्येत 'विवक्षाऽधीनरचनानि पुंसो वचनानि, विवक्षा च मानान्तरावधारणाधीना, मानान्तरं च पदार्थसंसर्गगोचरम्, न पदार्थमात्रगोचरम्, इति तत्प्रभवतया पुंवाक्यान्यपि पदार्थसंसर्गमेव गोचरयन्ति, न त्वेवं वेदवाक्यानि अपौरुषेयाणि, इति पदार्थसंसर्गसिद्ध्यर्थं विधिरेषितव्यः' इति, तदयुक्तम् । विधावपि तदनुपपत्तेः । 'तस्मिन् सति तदाकाङ्क्षानिबन्धनः संबन्धः पदार्थानां' इति चेत्, तदाकाङ्क्षैव कुतः । 'तदपर्यवसानात्' इति चेत्, न क्रियादिष्वपि साम्यात् । यथा हि शब्दाभिहितो विधिः विषयनियोज्यादिभिर्विना न पर्यवस्यति, तथा क्रियादयोऽपि पदार्थाः कारकादिभिर्विना इति ते एव पदैरुपात्ताः आकाङ्क्षायोग्यतासंनिधिसध्रीचीनाश्च संसर्गं गमयिष्यन्ति इति कृतं विधिना । विशिष्टार्थप्रतीतिप्रयुक्तत्वेन च पदानां समभिव्याहारस्य लोके विदितत्वात् तदुपायत्वाच्च वैदिकार्थप्रतीतेः ।

नापि हिताहितसाधनताऽवगमः तस्य प्रयोजनं संभवति, 'संतापमपनयति च ततस्य सलिलावसेकः' 'दहति च ज्वलनज्वालाकलापालिङ्गनं' इति वर्तमानापदेशादपि हिताहितसाधनताऽवगमात् । ततश्च ईप्साजिहासाभ्यां प्रमाणान्तरादिव प्रवृत्तिनिवृत्त्योरुपपत्तेः व्यर्थो विधिः इति ।

(अत्रोच्यते) मा भूवन् अन्यानि प्रयोजनानि विधेः, पुरुषार्थसाधनतावबोधस्तु विधिनिबन्धनः । नहि 'स्वर्गकामो यजेत' इति विधौ असति स्वर्गो भावनाया भाव्यः संभवति । सा हि भाव्यमात्रापेक्षिणी । भविता च भाव्यः, यागादयश्च भवितारः, इति समानपदोपादानतया प्रकृत्यर्थतया च तदनुरक्ताया एव भावनायाः प्रतीतेः । स्वर्गस्य च पदान्तरोपादानतया पुरुषविशेषणतया च व्यवस्थानात् तमपहाय यागादीनेव भाव्यतया भावना गृह्णीयात् । कर्त्रपेक्षितोपायतारूपविध्युपहितमर्यादा पुनरियं भावना समानपदोपादानमपि प्रथमावगतमपि दुःखाकरतया कर्त्रनपेक्षितमपहाय धात्वर्थं असमानपदोपादानमपि पुरुषविशेषणमपि अपेक्षिततया स्वर्गमेव भाव्यमवलम्बते । समासादिततथाविधभाव्या च यागादीन् करणतया स्वीकरोति इति पुरुषार्थसाधनता तेषां सिद्धा भवति । कथं तर्हि वर्तमानापदेशेभ्यो लोके पुरुषार्थसाधनताऽवगतिः? (उत्तरं-) प्रमाणान्तरवशात्, न शब्दसामर्थ्यात् । यथा चैतत् तथा 'द्रव्यसंस्कारकर्मसु' इति च, 'असाधकं तु तादर्थ्यात्' इति च व्याचक्षाण उपपादयिष्यति स्वयमेवाचार्यः । **कणिका.** पृ. २–४.

* विधेः प्ररोचनानपेक्षस्य प्रवृत्तौ असामर्थ्यात् अर्थवादसंनिधाने च स्वयं अप्ररोचकत्वात् अर्थवाद-

सहितस्यैव विधायकत्वावगतिः इति शङ्काग्रन्थः । प्ररोचनानपेक्षस्यैव विधेः स्वविषयेष्टसाधनत्वज्ञापनमात्रेण प्रवर्तकत्वोपपत्तेः अर्थवादाभावेऽपि विधायकत्वाविरोधः । ... अर्थवादनिरपेक्षस्य विधिमात्रस्य प्रवृत्तिशक्तौ अपि अर्थवादानर्थक्यपरिहारमात्रार्थं अर्थवादान्वयप्रतीतिः । ... प्ररोचनानपेक्षस्यापि विधेः प्रवृत्तिसामर्थ्येन अर्थवादान्वयात् प्रागेव विध्युद्देशार्थनिर्णयात् । ...प्ररोचनानपेक्षस्य असामर्थ्येऽपि अर्थवादाभावे विधेरेव प्ररोचनाशक्त्याविर्भावः । ... विनाऽपि तु अर्थवादेन विधेरेव प्ररोचनाशक्तिकल्पनेन विधायकत्वोपपत्तिः । ... अर्थवादसद्भावकृतत्वात् प्ररोचनाशक्त्यपगमस्य । इत्युक्तम् । अर्थवादसद्भावे च विधेः प्ररोचनाकल्पनाऽयोगात् । सु. पृ. ५२६–२८. * विधेः प्रवृत्तिजननस्वरूपयोग्यत्वस्यैव वाच्यत्वेन फलोपधाननैयत्याभावात् प्रवृत्तिविरहेऽपि अरण्यस्थदण्डवत् विधेः प्रवृत्तिजनकत्वोपपत्तेः । नहि फलोपहितप्रवृत्तिजनकत्वं विध्यर्थः, विधिशतश्रवणेऽपि केषांचित् प्रवृत्त्यदर्शनात् । **भाट्ट.** ६।१।१ पृ. २१८. * विधेः फलं विधेयेष्टसंयोगः । सु. पृ. २६४. * विधेर्मन्त्रानुसारेण पर्यवसाननियमाभ्युपगमेऽपि न तदुपसंहारप्राबल्यम् । **पराक्रमः**. ४३।२. * विधेर्विधेश्च एकवाक्यता नहि भवति, वचनव्यक्तिभेदात् । **भा.** ३।८।१।९.

* **विधेः विषयकरणयोर्विचारः** ( विषयकरणीयम् ) । ‘ प्रभाकरमतं सम्यगालोच्य क्रियते मया । विषयं करणं चैव विवेक्तुं युक्तिवर्णना ॥ ’ ‘ ज्योतिष्टोमेन स्वर्गकामो यजेत ’ इत्यादिषु स्वर्गकामादिर्नियोज्यत्वेन संबध्यमानो नास्वर्गसाधने कार्ये बोध्यतया नेतुमलम् । क्रिया क्षणभाविनी न कालान्तरभाविनः स्वर्गादेः साधनायोपपद्यते इति कालान्तरावस्थायि क्रियातो भिन्नं कार्यमपूर्वं लिङादयो बोधयन्तीति स्थितम् । कार्यं च कृतीप्सितमुच्यते इति । कृतिः आत्मव्यापारः पुरुषप्रयत्न इत्यनर्थान्तरम् । चेतनश्च आत्मा कार्ये बोध्यतया अन्वयमुपैति । न चान्यव्यापाराभिनिर्वर्त्यमन्यः स्वसंबन्धितया कार्यत्वेन संवेदयितुमलमित्यात्मनो मानसप्रत्यक्षसमधिगमनीयः प्रयत्नः स्वव्यापारः । अतस्तन्निर्वर्त्यमेवापूर्वं कार्यमात्मा मन्यते । प्रयत्न एव भवितव्ये अपूर्वे प्रयोजकभूतस्य भावयितुरात्मनो व्यापार इति भावनाशब्देनोच्यते । न च कार्याभिधानं कृतिमनभिदधतां लिङादीनामुपपद्यते इति कृतिमप्यभिदधति । अपूर्वं च । न च युगपदनेकाभिधानं दोषः, तथा अवगमात् आनुगुण्याच्च । अवगतो हि प्रमाणेन लिङादीनां कार्याभिधायिता आनुगुण्यात् । कृतिर्गुणभूता प्रधानपदवर्तिन्यपूर्वात्मनि कार्ये, अविवादा च कर्त्रादिसंख्यावाचिता लिङादीनां कार्याभिधायिनामपि । न चाभिधेयतामात्रेण भावनाया एव वाक्यार्थत्वं भाव्यं अपूर्वं प्रति गुणभावेनाभिधानात् । प्रधानभावेनापूर्वस्याभिधानात् । तदेवं वाक्यार्थ इति न किञ्चिद् अनुपपन्नम् । अत एव भगवतो भाष्यकारस्य तत्रतत्र व्यवहारः पुरुषप्रयत्नः प्रकरणतोऽपूर्वस्य नोच्यते इति । तस्य तथाविधस्य कार्यस्य नूनं केनचित् भावार्थेनावच्छेदः । नहि प्रयत्नो भावार्थमन्तरेणास्ति । सर्वो हि पुरुषप्रयत्नः कञ्चिद् भावार्थमवश्यमाश्रयति, तेन विना तदभावात् । तेन प्रयत्नाविनाभावी भावार्थः प्रयत्नाभिनिर्वर्त्यमपूर्वमवच्छिनत्ति । अवच्छेदकतयैव विषयभावम् । यत्रैव हि यो भवति नान्यत्र स तस्य विषय इति विषयविदः, अनन्यत्रभावो विषयार्थः । अत एव भाव्य एवार्थो विषयः । भाव्यस्यैव पुरुषप्रयत्नगोचरत्वात् । तेन कार्याभिधायिभिः सह विषयबोधकतयैव भावार्थः कर्मशब्दः समभिव्याहारं प्रथममर्हति । तस्य प्रतिपत्त्यनुबन्धत्वात् । अविषयं ह्यपूर्वं कार्यं प्रत्येतुमशक्यम् । प्रतीतस्य च कार्यस्य साधनाऽऽकाङ्क्षा । तेन न जघन्यया साधनतया भावार्थानामपूर्वेण सहान्वयः । किन्तु प्रतीत्युपायतामेव मन्यमानो भगवानेवं ब्रूते । नह्यविषयान्नियोगाद् नियोगज्ञानमुत्पद्यते इति । स च विषयीभूतभावार्थावच्छिन्नो विध्यर्थः कार्यात्मा प्रतीतः करणं इतिकर्तव्यतां च अपेक्षते । अन्यत्रापि साध्ये दर्शनात् । तत्र स एव भावार्थो विषयीभूतः करणमित्यवसीयते । कृतिव्याप्यत्वात् । यो हि यया कृत्याऽन्यार्थप्रवृत्तया विषयीक्रियते स एव तत्र करणम् । यथा परशुरुद्यमननिपतनाभ्यां काष्ठगतद्वैधीभवनलक्षणकार्ये प्रवृत्ताभ्यां व्याप्यमानस्तयोरेव द्विधाभवनलक्षणफलावच्छेदलब्धद्वैधीकरणव्यपदेश्ययोः छिदिधातुवाच्ययोः करणम्, तथेहापि अपूर्वार्थप्रवृत्तपुरुषप्रयत्नव्याप्यमानो भावार्थः तस्मिन्नेव प्रयत्ने अपूर्वभावनारूपे करणम् । **ननु** कथं प्रयत्नलब्धात्मा भावार्थो भावनायां करणम्, भाव्यमानतया हि कर्मैव स्यात् । **उच्यते** । तत्र न कर्म तावदपूर्वार्थकृतिविषयत्वात् । सर्वस्यैव हि कारकाणि कर्तृव्यतिरिक्तानि तद्व्यापारव्याप्यानि, न चैतावता तानि कर्मतां प्रतिभजन्ते । अनीप्सितत्वात् । क्वचिच्चानीप्सिते कर्मता दृश्यते एव । यथा ‘ अग्निहोत्रं जुहोति ’ इति । करणं तु यद्यपि स्वरूपनिवृत्तौ न संभवति । तथाप्यपूर्वभावनारूपता तदधीनेति नानुपपन्नम् । यथा परशोरेव । न हि परशुः कर्म । करणं तु भवति, अनीप्सितत्वात् । उद्यमननिपतनयोर्द्वैधीकरणभवनरूपतायाः तदधीनत्वात् । परशुसंबन्धप्रभावेण ह्युद्यमननिपतने द्वैधाभवनफलनिष्पादकतया द्वैधाभवने कारणतां भजेते । अतः ‘ उद्भिदा यजेत ’ इति तृतीयानिर्देशोपपत्तेः । अपूर्वभावनायां कारणत्वाद्यागस्य तन्नामत्वाच्चोद्भिच्छब्दस्य । एवं चापूर्वफलयोरेकैव भावना, एकत्वात्पुरुषप्रयत्नस्य एकमेव च कारणं तद्भावनाव्याप्यत्वात् एका एव भाव्यता इति । अत एव च साध्यविवृद्धिरिति **प्राभाकराः** । यदि विषयीभूतस्य करणता, हन्त तर्हि दर्शपूर्णमासाभ्यामित्यत्र तन्त्राभिहितानां तन्त्रेणैव प्रतिपत्त्यनुबन्धत्वात् विषयभावस्यैकत्वादेकमेव कारणं स्यात् । ततश्च भेदेनेतिकर्तव्यतासंबन्धो न स्यात् । **उच्यते** । न सम्यगवधृतमायुष्मता श्रुतिशालिनां वचः । यदेव विषयीभूतं तदेव करणं नान्यदिति । तस्यार्थः । प्रतीत्यनुबन्धतया च विषयभावः स यथाभिधानमवकल्पते प्रतिपत्त्युपायत्वाद् अभिधानस्य । अतस्तन्त्राभिधानात् सहितानां विषयभावः करणं सिद्ध्यनुबन्धो नियोगस्य यथास्वभावं वेदितव्यम् । स्वभावाधीना हि साधकानां साधकता इति स्वभावभेदे हि भिन्ना साधकता । साधकत्वे च कृतिविषयत्वात् कारणतेतिभेदेन कारणभावः । **नन्वेवं** प्रत्येकं कारणभावाश्रयणे कारणान्तरनिरपेक्षणा किमिति नियोगसिद्धिहेतुता न भवति ? **नैवम्** । यथाश्रुतकरणाधीनसिद्धित्वान्नियोगस्य । तत्र बहूनि करणानि तस्य श्रूयन्ते इति तथैव तस्य सिद्धिः । अनेककरणसंपाद्यताऽपि एकस्य दृष्टा । यथा गमनस्य अश्वेन शिबिकया वा गच्छतीति । भिन्नस्तत्र कारणव्यापार इति यद्युच्येत । अत्राप्युत्पत्त्यपूर्वाण्यवान्तरव्यापारभूतानि भिन्नानि संगिरामहे एव । अत एव तद्भेदेन भिन्नत्वात्कारणभावस्य परमापूर्वप्रयुक्तत्वेऽपि आज्यौषधसान्नाय्यधर्माणामसंकरः । अपूर्वसाधननिवेशितत्वाद् धर्माणां तस्य च भेदात् । ये पुनर्यागादीनामपूर्वं चान्तरा भावनां नानुमन्यन्ते । तेषां यागादीनां करणभावो दुर्घटः । अव्यापाररूपत्वादपूर्वस्य, व्यापारसंबन्धप्रसवत्वाच्च करणभावस्य । गौणकरणत्वमिति चेत् । कथं तर्हि इतिकर्तव्यतासंबन्धः ? करणं हि इतिकर्तव्यतया संबध्यते । गौणं च न करणम्, नहि गौणो मुख्यधर्मः संभवति येऽपि सर्वाख्यातेष्वेव भावनाभिधानमाहुः, तेषामपि मतमस्मभ्यं न रोचते । नहि कार्यानभिधायिषु लिङादिषु भावनाभिधाने प्रमाणमस्ति । यदपि करोति पचतीति उत्तरदर्शनप्रमाणमुपन्यस्तम्, तदपि न । साधकव्यापारविशेषप्रश्नो ह्ययं किं करोतीति तत्र पचतीत्युत्तरेणापि तदेव निर्दिश्यते । यत्तु व्यापारमात्रवाचिधातूच्चारणमात्रं न क्रियते, तत्र तावन्मात्रस्यापभ्रंशत्वात् प्रत्ययान्तरोच्चारणं च प्रश्नेन सहासंबन्धः । अत एवाचेतने व्यापारे वर्तमानापदेशादीनां प्रयोगः । लिङादयस्तु चेतनमेवाधिकृत्य प्रयुज्यन्ते । न चाचेतनेषु गौणः प्रयोगः । मुख्यत्वेऽप्यविरोधात् कर्त्रादिसंख्यादिमात्रवचनत्वेन ‘ रथो गच्छति ’ इत्यादिषु लडर्थः तेनाचेतनेऽपि मुख्य एव लडर्थ इति । धातूनामेव क्रियावाचित्वात् प्रथमोपनिपाती व्यापार एव धात्वर्थो युक्तः । जघन्यौ संयोगविभागौ किञ्चानेकार्थताऽप्यापद्येत । केवलस्य संयोगस्यावाच्यत्वात् संयोगजेऽपि संयोगेऽच्छ गच्छतीत्यप्रयोगाद्विभागजेऽपि विभागे प्रयोगानुपलब्धेः । न केवलस्य विभागस्य गमिवाच्यतेति किमनेन मनीषिकानिर्मितेन बालजल्पितेन मनोहारिणा निर्बन्धेन ।

‘ शालिकनाथेन कृतं कृतिनामुपकारसिद्धये सम्यक् । समुदीक्ष्य वा गुरुमतं सम्यग्विषयकरणीयमिदम् ॥ ’ **प्रकरणपञ्चिका**. पृ. १९७–२०१.

* विधेः सकृदुच्चरितस्य ऐकरूप्येण एकशाब्दबोध-जनकत्वनियमात् । भाट्ट. ७।१।१. * विधेः संदिग्धत्वे अर्थवादो निर्णयहेतुः । 'अक्ताः शर्करा उपदधाति' अत्र अञ्जनद्रव्यं किमिति संशयः । 'तेजो वै घृतं' इति अर्थवादात् घृतं अञ्जनद्रव्यं इति निर्णयः । वि. १।४।१९. * 'विधेः सर्वविषयत्वम्' इति न्यायः । 'अपिवा सर्वधर्मः स्यात् तन्न्यायत्वाद्विधानस्य' (१।३।७।१६) इति सिद्धान्तसूत्रम् । तत्र तस्य सर्वधर्मत्वस्य उपपादको न्यायः विधेः सर्वविषयत्वं यस्मिन् कल्पे विधाने विधायके वाक्ये अस्ति तत् तन्न्याय्यम् । तस्य भावस्तन्न्यायत्वम् । सु. पृ. २४५-२४६, * विधेः सामान्यमात्रे पर्य-वसितस्य अर्थवादविरोधात् विषयसंकोचात्मको बाधो-ऽभ्युपगम्यते । पृ. ५२५, * विधेः स्तुत्या अविना-भावात् अन्यतरदर्शनेन अन्यतरदनुमाय वाक्यं पूरयि-तव्यम् । पृ. ४१. * विधेः स्तुतेश्चैकवाक्यत्वं भवति पदानां साकाङ्क्षत्वात् । 'भूतिकाम आलभेत', कस्मात्? यतो वायुः क्षेपिष्ठेति । भा. १।२।१।७ पृ. ११७. * विधेः स्वतः प्रामाण्यम्, अबोधकत्वसापेक्षत्वयोरप्रामाण्य-कारणयोरभावात् । वि. १।१।५. * कारकान्यत्वे विधेः व्यापारभेदो भवति । एककारकनिबन्धनं तु अर्थसहस्रमपि एकप्रयत्नसाध्यम् । वा. २।२।५।१६ पृ. ५०७. * न च विधेर्विधिना एकवाक्यभावो भवति, वचनव्यक्ति-भेदात् । भा. ६।१।२।५. * 'पशुमालभेत' इति सामान्यपर्यवसितस्यापि विधेः 'छागस्य वपाया मेदसोऽनु-ब्रूहि' इति मन्त्रवर्णानुरोधेन संकोचः, विधिमन्त्रयोरेक-विषयत्वात्, सामान्यस्य च कृत्स्नस्य छागेऽपि विभावे-नाविरोधात्, नियमसंभवे च अनियमानुपपत्तेः षष्ठान्त्ये वक्ष्यते । सु. पृ. ५२५. * न च द्वयोः विध्योः एकवाक्यभावोऽस्ति । भा. ६।७।१२।३०. * **विधीनां** अन्येन अत्यन्ताप्राप्तविषयत्वेन श्रुतान्यथात्वकल्पनस्या-प्रमाणकत्वम् । वा. ३।४।११।३० पृ. ९६४. * विधीनां प्रवृत्तिजनकप्रवर्तनाज्ञानं प्रयोजनम् । मणि. पृ. ५. * नियोगार्थनिर्वृत्तेः किमन्यत् प्रयोजनं **सर्वविधीनाम्** । ऋजु. पृ. १०. * सर्वविधीनां अप्राप्तस्व-विषयत्वम् । वा. ३।६।१।२, * सर्वविधीनां पुरुषार्थफल-त्वात् प्रयोजनाकाङ्क्षा स्वर्गादिना निवर्त्यते । ३।४।४।१३ पृ. ९११, * **विधौ** अर्थवादावगतविषये ऋगादि-शब्दानां अनुवादकत्वात् लक्षणायामप्यदोषः । ३।३।१।२ पृ. ८०७. * विधौ अवाचकशब्दायोगः । सु. पृ. ७१०. * विधौ गौणत्वासंभवः । वा. ३।५।२०।५२. * विधौ च लक्षणायोगः । सु. पृ. ९२. * विधौ लक्षणा अन्याय्या । 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति विधायकं ब्राह्मणम् । 'निवेशनः संगमनो वसूनां' इति मन्त्रो-त्तरार्धगतं इन्द्रपदं गार्हपत्यलक्षकम् । न तु विधिगते गार्हपत्यपदे लक्षणा । वि. ३।२।२. विधौ शब्दार्थेन व्यवहारो भवति (न लक्षणया, न विधौ परः शब्दार्थः) । भा. ८।३।६।२३ । (क्वचित्) लक्षणयाऽपि विधानं भवति । यथा लोके- 'अमी पिष्टपिण्डाः सिंहाः क्रिय-न्ताम्' । सिंहशब्दोऽत्र प्रतिकृतिवचनो दृष्टः । वेदेऽपि 'पृष्ठैरुपतिष्ठते' पृष्ठशब्दोऽत्र पृष्ठसाधनमन्त्रवचनः । २४, * विधौ हि न परः शब्दार्थः प्रतीयते । १।२।३।२५, * अनुवादे हि लक्षणा न्याय्या, न विधौ । ४।४।८।१९. * अल्पार्थविधौ च सर्वपदार्थान्वयसंभवे बह्वर्थविधिर्न लभ्यते । सु. पृ. ८५४. * क्त्वा-शब्दश्च नैव विधौ स्मर्यते । सर्वत्रैव यत्र 'इदं कृत्वा इदं कुर्यात्' इति श्रूयते, तत्र यदि तावत् क्त्वान्त-धातुवाच्या क्रिया अन्यत एव प्राप्ता ततो निमित्तार्थं श्रवणं भवति । अथ तु न प्राप्ता तत उत्तरस्याः करणं पूर्वनिर्वृत्त्युत्तरकालत्वेन विहितं तामननुष्ठाय यथा (यथा विहितं तथा इत्यर्थः) कर्तुं न शक्यते इत्यर्थात् अवश्यं कर्तव्या सती विहितवत् विज्ञास्यते । वा. २।१।१२।२७ पृ. ५५८, * यथा चान्यत्र अर्थवादानामनुवादत्वात् लक्षणावृत्तिरदोषः । तथा अत्र (उच्चैर्ऋचा क्रियते०) अर्थवादावगतविषये विधौ ऋगादिशब्दानां अनुवादकत्वात् लक्षणायामपि अदोषः । ३।३।१।२ पृ. ८०७. * '**विधिषु** श्राद्धो (श्रद्धावान्) अधिकारी' इति न्यायेन विवर्तवादालम्बनेन प्रपञ्च-मिथ्यात्वे निश्चिते, विहिते प्रवृत्त्यसंभवात् परिणाम-वादस्यैव विहितप्रवृत्त्युपयोगः । अद्वैत. चं. पृ. ५०३.



* **विध्यधीनः** परिग्रहः । वा. ३।१।७।१३. पृ. ७००.

* **विध्यनुवादौ** यौगपद्येन न संभवतः । भा. २।१।१।४, * **विध्यनुवादयोः** विधिर्ज्यायान्, अपूर्वा-र्थप्रकल्पकत्वात् । यदि तु प्रमाणान्तरप्राप्तिर्नावगम्यते । १०।६।२।३ पृ. १९८६, * विध्यनुवादयोः विशेषः । कदाचित्तु किंचित् विधित्सितं भवति । (कथम्?) कदाचित् उपसर्जनीभूतोऽर्थो विधित्सितः, प्रधानीभूतोऽ-नुवादः । तद्यथा-'दण्डी' इत्युपसर्जनीभूतदण्डकपुरुषप्रधा-नकः शब्दोऽवगम्यते । कदाचित्तु निर्ज्ञाते पुरुषे दण्डगुण-विधानार्थमुच्चार्यते 'दण्डी प्रैषानन्वाह' इति, यथा (वा) 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इति । ३।१।६।१२ पृ. ६८७.

* **विध्यनुवाद-उद्देश्योपादेय-गुणप्रधानानां** युगपद्विरोधः (विरुद्धत्रिकद्वयं नामैतत्) । वा. ३।१।१२।२२.

* **विध्यनुवादविचारः** (विधिरनुवादो वेति) पशुसोमाधिकरणे (२।२।६ **मीको.** पृ. २५२५) (द्रष्टव्यः) । सु. पृ. ९२५.

* **विध्यन्तः** अग्निष्टोमस्य शताग्निष्टोमादौ । ८।३।५।१०-११. * विध्यन्तः अग्नीषोमीयस्य द्विदैवत्येषु आग्नावैष्णवादिषु । ८।३।१।१-२. * विध्यन्तः अग्नीषोमीयस्य पशुषु सवनीयादिषु आलभतिचोदना-सामान्यात्, पशुत्वचोदनासामान्याच्च । भा. ८।१।६।१३. * विध्यन्तः अग्नीषोमीयस्य सांनाय्यात् । टुप्. १०।७।१।१. * विध्यन्तः आग्नेयस्य, ऐन्द्रे पुरोडाशे । भा. ८।१।१७।३४. * विध्यन्तः आग्नेयस्य कृष्णलचरौ । ८।१।१८।३५-३९. * विध्यन्तः आग्नेयस्य सौर्ये चरौ । ८।१।१६।२७-३१. * विध्यन्तः उपांशुयाजाज्यस्य चित्रेष्टौ मधुनि उदके च । ८।१।१९।४०-४३. * विध्यन्तः ऐका-दशिनानां पशुगणेषु, 'प्रतिपशु यूपदर्शनात्' । भा. ८।१।८।१५. * विध्यन्तः । कः पुनरयं विध्यन्तो नाम । विधेरन्तो विध्यन्तः । अथ विधिः कः । यद् वाक्यमुपलभ्य पुरुषः कस्मिंश्चिदर्थे प्रवर्तते, कुतश्चिद्वा निवर्तते, स विधिः । विधीयते ह्यनेनार्थः । यथा लोके 'देवदत्त गामभ्याज शुक्लाम्' इति । तस्य 'अभ्याज' इति विध्यादिः । इतरः अन्तः । वेदेऽपि 'दर्शपूर्णमासाभ्यां यजेत' इति विध्यादिः । विध्यन्तोऽपि प्रधानविधिवर्जितं कृत्स्नं पौरो-डाशिकं ब्राह्मणम् । तेन समेतोऽयं विध्यादिः विशिष्टा-पूर्वनिर्वृत्तिं प्रतिपुरुषं प्रवर्तयति । तस्मात् सोऽस्यान्तः । तथा 'सोमेन यजेत' इति विध्यादिः, सौमिकमपि ब्राह्मणं विध्यन्तः । एष विध्यन्तो नाम । भा. ७।४।२।१०, * विध्यन्तः गवामयनस्य 'आदित्यानामयनं' इत्यादिषु संवत्सरसत्रेषु । ८।१।११।१८. * विध्यन्तः गवामयनगतज्योतिरादिषु एकाहकाण्डपठितज्योतिरादि-धर्माणाम् । ७।४।३।१३-२०. * विध्यन्तः गवामयनगतस्वरसाम्नां 'पृष्ठ्यः षडहो द्वौ स्वरसा-मानौ' इत्यत्र स्वरसाम्नोः । ७।३।१०।२६-२७. * विध्यन्तः चातुर्मास्य-वैश्वदेविकद्यावापृथिव्यैककपालस्य वरुणप्रघासगतकायैकपाले । ७।३।१०।२६-२७. * विध्यन्तः दार्शिकोऽग्नीषोमीये पशौ । ८।१।५।१२. * विध्यन्तः दार्शिकाग्निप्रणयनस्य चातुर्मास्यगतवरुण-प्रघाससाकमेधयोरग्निप्रणयने, न तु सौमिकस्येति **भाष्य-मतम्** । न दार्शिकस्य न सौमिकस्य किंतु अपूर्वमेव तत् प्रणयनं इति **वार्तिकमतम्** । भा. ७।३।८।१९-२२. * विध्यन्तः दार्शपौर्णमासिकधर्माणां अग्नीषोमीये पशौ । ८।१।५।१२. * विध्यन्तः दार्शपौर्णमासिकधर्माणां ऐन्द्राग्नादिषु इष्टिषु । भा. ८।१।४।११. * विध्यन्तः द्वादशाहस्य द्विरात्रादिषु शतरात्रपर्यन्तेषु अहर्गणेषु । ८।१।१०।१७ * विध्यन्तः द्वादशाहस्य पञ्चोक्थ्य-शतोक्थ्य-शताग्निष्टोम-शतातिरात्रादिसंस्थागणेषु । परंतु तत्र तत्र तत्तत्संस्थता । ८।३।४।८-९. * विध्यन्तः द्वादशाहस्य सत्रात्मकस्य पञ्चदशरात्रकुण्डपायिनामयनयोः । ८।२।६।३०-३३. * विध्यन्तः द्वादशाहस्य सत्रात्म-कस्य सत्रेषु, अहीनात्मकस्य चाहीनेषु द्विरात्रादिषु । ८।२।५।२४-२८. * विध्यन्तः द्वादशाहिकप्रथमाहप्राय-णीयस्य गवामयनप्रथमाहप्रायणीये नातिदिश्यते । ७।३।२।५. * विध्यन्तः द्वादशाहिकसप्तानामह्नां क्रमेण जनक-सप्तरात्रे । तत्राग्रिमचतुरहे त्रिवृत्ता विधीयते । ८।३।२।३-५. * विध्यन्तः न यूपस्य, एकादशिनीगतोपशया-

ख्ययूपे ‘उपशयो यूपो भवति’ इति यूपशब्देन । ७।३।१३।३३-३४. * विध्यन्तः न सोमे ऐष्टिकधर्माणाम् । ८।१।३।३-१०. * विध्यन्तः नाम इत्थम्भावरूपं इतिकर्तव्यतावधारणम् । तस्य च अनेकाङ्गवाक्यतदर्थतत्प्रयोजनालोचनमध्यस्य कथंभावः आदिः इत्याचार्याणां विध्यादित्वेन प्रसिद्धिः । वा. ३।३।७।१४ पृ. ८५२. * विध्यन्तः निकायिनः प्रथमस्य उत्तरनिकायिषु । ८।१।१२।१९. * विध्यन्तः नैयमिकाग्निहोत्रगतः कौण्डपायिनामयनगताग्निहोत्रे । भा. ७।३।१।१-४. * विध्यन्तः पशौ सांनाय्यात् । टुप्. १२।१।१।१ पृ. २२१६, * विध्यन्तः पशुपुरोडाशे दार्शपौर्णमासिकात् अग्नीषोमीयात् पुरोडाशात् । १२।१।१।१ पृ. २२१६. * विध्यन्तः प्रथमस्य साद्यस्क्रस्य साहस्रस्य च उत्तरेषु । ८।१।१२।१९. * विध्यन्तः वारुणप्राघासिकैककपालधर्माणां साकमेधीयैककपाले । ७।१।५।२३. * विध्यन्तः श्येनीयविशेषधर्माणां इषौ । ७।१।२।१३-१६. * विध्यन्तः षडहधर्माणां षट्त्रिंशद्रात्रे । ८।३।३।६-७. * विध्यन्तः सवनीयपशुधर्माणां ऐकादशिनेषु पशुषु द्वैरशान्यसामान्यात् सुत्याकालत्वाच्च । ८।१।७।१४. * विध्यन्तः सादृश्येन नियम्यते । टुप्. ८।१।३।५, १०।७।३।२५. * विध्यन्तः सांनाय्यस्य अग्नीषोमीयपशौ । तत्रापि पयसो न दध्नः । ८।२।२।१०-१४, ८।२।३।१५-१८. * विध्यन्तः सांनाय्यस्य आग्नेये पयसि । भा. ८।१।१७।३४. * विध्यन्तः सांनाय्यस्य वाजिने । ८।२।१।१-९. * विध्यन्तः सांनाय्यपयोधर्माणां वैश्वदेव्यामिक्षायाम् । ८।२।४।१९-२४. * विध्यन्तः सोमस्य अभिजिद्विश्वजिदादिषु श्येने च, अव्यक्तचोदनत्वात् । ८।१।९।१६. * विध्यन्तः सौमिकावभृथधर्माणां चातुर्मास्यवरुणप्रघासावभृथे । ७।३।४।१२-१५. * विध्यन्तं नातिदिशति चयनगतनिर्मन्थ्यशब्दः अग्नीषोमीयपशुगतनिर्मन्थ्ये । ७।३।७।१९. * विध्यन्तं नातिदिशति सौमिकातिथ्येष्टिगतवैष्णवशब्दः राजसूये पूर्वत्रिसंयुक्तगतवैष्णवत्रिकपाले । भा. ७।३।६।१८. * विध्यन्तेन धर्माः प्रवर्तन्ते । भा. ८।१।१३।२०. * विध्यन्तस्य अतिदेशोऽविहितकर्तव्यताकेषु सौर्यादिषु । ७।४।१।१. * विध्यन्तस्य वैदिकस्य यस्य लिङ्गं किंचित्, शब्दगतमर्थगतं वा वैकृत्यां कर्मचोदनायां तद्गुणवाक्ये वा दृश्यते तत्र स विध्यन्तः स्यात् । भा. ८।१।२।२.

**विध्यन्ताधिकरणम् । सौर्यादौ वैदिकस्यैव विध्यन्तस्य अतिदेशः ॥**

**स लौकिकः स्याद् दृष्टप्रवृत्तित्वात् । ७।४।२।२॥**

**भाष्यम्**— अधुना एवं चिन्त्यते किं अनियमो लौकिकी वैदिकी वा इतिकर्तव्यता उत लौकिक्येव आहोस्वित् वैदिक्येव इति । अत्र विशेषाभावात् अनियमे प्राप्ते उच्यते, स लौकिकः स्यात् । स खलु कर्तव्यतोपायः लौकिकः स्यात् । कुतः ? दृष्टप्रवृत्तित्वात् । दृष्टा हि अस्य तत्रतत्र प्रवृत्तिः, यथा पार्वणस्थालीपाके, अष्टकाचरौ, आग्रहायणे कर्मणि । इत्येवं यत्रयत्र यागेन अपूर्वं साध्यते तत्रतत्र अस्य प्रवृत्तिर्दृष्टा । अतः अन्वयात् विज्ञायते यागस्य अपूर्वं साधयतः अयं अभ्युपाय इति । अयं चापि यागः । तस्मात् अस्यापि स एवाभ्युपायः ।

**टुप्**— इदं तु चिन्त्यम्, किमसौ लौकिकी वैदिकी वेति ।

**वचनात्तु ततोऽन्यत्वम । ३ ॥**

**भाष्यम्**--आह, किं एष एवोत्सर्गः सर्वत्र लौकिकी इतिकर्तव्यतेति ? एवं खलु प्राप्तम् । **एवं प्राप्ते, ब्रूमः** । वचनात्तु ततोऽन्यत्वमिति । यत्र प्रत्यक्षं वचनम्, वैदिक्यास्तत्र न लौकिकी स्यात्, वचनसामर्थ्यात् वैदिकी एव स्यात् । यथा उपसत्सु, गृहमेधीये च ।

**लिङ्गेन वा नियम्येत लिङ्गस्य तद्गुणत्वात् । ४॥**

**भाष्यम्**— लिङ्गेन वा इतिकर्तव्यता नियम्येत । कतरा ? यस्या लिङ्गम् । वैदिक्याश्च लिङ्गम् । तस्मात् वैदिकी । किं पुनर्लिङ्गम् ? सौर्ये तावत् चरौ श्रूयते ‘प्रयाजे प्रयाजे कृष्णलं जुहोति’ इति । तथा ऐन्द्राबार्हस्पत्ये ‘अर्धं बर्हिषो लुनाति अर्धं न, स्वयं दितं अर्धं वेद्यां करोति अर्धं न’ इति । तथा पितृयज्ञे ‘न होतारं वृणीते, नार्षेयम्’ इति । एतैर्लिङ्गैर्ज्ञायते वैदिकी



इतिकर्तव्यता इति । कथम् ? लिङ्गस्य तद्गुणत्वात् । एते हि प्रयाजादयः वैदिकस्य अपूर्वस्य गुणाः । यदि च तदीया इतिकर्तव्यता प्रवर्तिता, तत एतेषु कर्मसु एते सन्ति । तत्र एतानि वचनानि उपपद्यन्ते ‘प्रयाजेप्रयाजे कृष्णलं जुहोति’ इत्येवमादीनि । तस्मात् वैदिकी इतिकर्तव्यता नियम्येत ।

**अपिवाऽन्यायपूर्वत्वाद् यत्र नित्यानुवादवचनानि स्युः । ५ ॥**

**भाष्यम्**— अपिवा नैवं स्यात्, वैदिकी इतिकर्तव्यतेति । यत् कारणम्, एतैर्लिङ्गैः न शक्यते वैदिकी नियन्तुम् । कुतः ? अन्यायपूर्वत्वात् । न्यायपूर्वकं हि वचनं तत्साधकं भवति । न च एतानि न्यायपूर्वाणि । नहि वैदिक्याः प्रवृत्तिर्युक्ता । निबद्धा हि सा प्रकरणादिभिः कारणैः दर्शपूर्णमासादिषु । कथं तर्हि एतानि लिङ्गानि ? उच्यते । यत्र नित्यानुवादवचनानि स्युः । इह तावत् ‘अर्धं बर्हिषो लुनाति अर्धं न’ इति यत्र बर्हिः तत्रैव भविष्यति । तत् कारणम्, सतो बर्हिष एतदुच्यते । न च इहास्ति बर्हिः । ‘न होतारं वृणीते, नार्षेयम्’ इति नित्यानुवादो भविष्यति । ननु नित्यानुवादः सन् अनर्थको भवति । किं क्रियतां यस्यार्थो नास्ति । ‘प्रयाजेप्रयाजे कृष्णलं जुहोति’ इति वचनं प्रयाजानां भविष्यति । कथं पुनरत्र प्रयाजाश्च कृष्णलहोमश्च युगपच्छक्या वक्तुम् । भिद्यते हि तथा वाक्यम् । एवं तर्हि न प्रयाजान् वक्ष्यति, प्रयाजे कृष्णलहोमं विधास्यति । न च असत्सु प्रयाजेषु कृष्णलहोमः शक्यते कर्तुं इति अर्थात् प्रयाजान् करिष्यति । तस्मान्न लिङ्गेन वैदिक्या नियमः । यथोक्तेन न्यायेन लौकिकी एव इतिकर्तव्यता इति ।

**टुप्**-- ‘अपिवाऽन्यायपूर्वत्वात् यत्र नित्यानुवादवचनानि स्युः’ । ( अत्र भाष्यम्- कथं पुनः ( अत्र ) प्रयाजाश्च कृष्णलहोमश्च युगपच्छक्या वक्तुम् । भिद्येत हि तथा वाक्यम् । एवं तर्हि न प्रयाजान् वक्ष्यति, प्रयाजेषु कृष्णलहोमं विधास्यति । न च असत्सु प्रयाजेषु कृष्णलहोमः शक्यते कर्तुं इति अर्थात् प्रयाजान् करिष्यतीति । – इति भाष्यं ) अयुक्तमिदम् । विशिष्टविधाने न भवति वीप्सा । यथा ग्रामोग्रामो रमणीयः इति । नानवगते ग्रामार्थे वीप्सा, एवमिहापि । अनवगतश्चात्र प्रयाजार्थः विधेयत्वात् । तस्मादन्यथा सूत्रं वर्ण्यते । ‘प्रयाजे कृष्णलं जुहोति’ इति नानेन प्रयाजा विधीयन्ते । ‘समिधो यजति’ इत्येवमादिभिर्विहितत्वात् । एवं चेत् यत्र प्रयाजा विद्यन्ते तत्र ‘प्रयाजे’ इत्युपपद्यते गुणविधिर्वीप्सा च । तस्मात् लौकिक्येव । ( अयं टुप्पाठो लिखिते पुस्तकेऽस्मदीये वर्तते ) ।

**मिथो विप्रतिषेधाच्च गुणानां यथार्थकल्पना स्यात् । ६ ॥**

**भाष्यम्**—तत्राह । अथ कस्मान्नोभे अपि इतिकर्तव्यते सह प्रवर्तेते इति । किमेवं भविष्यति ? एवं तुल्यापेक्षा कर्मणां अन्यतरतो न बाधिता भवति । उच्यते, सह प्रवृत्तौ एकया चेत् कर्म निरपेक्षं कृतम्, द्वितीयस्याः प्रवृत्तिः विप्रतिषिद्धा । अतो मिथः प्रवृत्तेः विप्रतिषेधात् यथार्थकल्पना स्यात् । एकस्याः प्रवृत्तिः स्यादित्यर्थः । कथं एकस्याः प्रवृत्तेः धर्माणां यथार्थकल्पना भवति ? ये धर्मा येषु कार्येषु प्रकृतौ उत्पन्नाः ते इहापि तेष्वेव भवन्ति । इतरथा द्वितीयस्या धर्मा अयथार्था भवेयुः पूर्वैर्धर्मैः । तेषां कार्याणां निर्वर्तितत्वात् । एवं एकस्याः प्रवृत्तेः यथार्थकल्पना भवति । अतो यथार्थकल्पना स्यात् इत्यनेन एकस्याः प्रवृत्तिः इत्युक्तं भवेत् । एकस्याः प्रवृत्तौ यथोक्तेन न्यायेन लौकिक्याः प्रवृत्तिरिति ।

**भागित्वात्तु नियम्येत, गुणानामभिधानत्वात, संबन्धादभिधानवद् यथा धेनुः किशोरेण । ७ ॥**

**भाष्यम्**-- तुशब्दः पक्षनिवृत्तौ न तु एवं स्यात् लौकिकी इतिकर्तव्यता इति । किं तर्हि ? वैदिकी नियम्येत । कुतः ? भागित्वात् । वैदिक्यपि भागिनी प्रवृत्तेः । साऽपि हि अपूर्वस्य इतिकर्तव्यता । समाने च भागित्वे उभयोः वैदिकी एव स्यात् । गुणानामभिधानत्वात् । गुणा एते प्रयाजादयः सौर्यादिषु दृश्यमाना अभिधायका भवन्ति एतस्यार्थस्य । यथा ‘वैदिकी अत्र इतिकर्तव्यता’ इति बोधका भवन्तीत्यर्थः । कस्मात् ? संबन्धात् । एते हि तया इतिकर्तव्यतया संबद्धाः । अतः साहचर्यात् तां गमयन्ति, अभिधानवत् ।

यथा कौण्डपायिनामयने अग्निहोत्रं इत्यभिधानं कर्मणो वाचकम्। तत् कर्मसहचरितान् धर्मान् आनयति। तेषु असत्सु एतत् अभिधानं इह न युज्यते इति तेषां धर्माणां तत्र भावो विज्ञायते। एवमिहापि प्रयाजादीनां दर्शनं असत्यां वैदिक्यां न युज्यते इति तस्या अपि इह भावो विज्ञास्यते। **ननु** असति न्याये लिङ्गमकारणम्। सत्यमेवम्, उक्तस्तु न्यायः भागित्वात् इति। यत्तु दृष्टप्रवृत्तिः लौकिकी इति, तत्र ब्रूमः। यद्यपि दृष्टप्रवृत्तिः स्यात्, तथापि वैदिकी एव नियम्येत। कथम्? यथा धेनुः किशोरेण। तद्यथा कृष्णकिशोरा धेनुरिति। यद्यपि धेनुशब्दो गोधेन्वां दृष्टप्रवृत्तिः, तथापि अभिधानसामान्यात् अश्वधेन्वामपि भागी इति किशोरेण लिङ्गेन अश्वधेन्वां विज्ञायते। एवमिहापि यद्यपि लौकिकी दृष्टप्रवृत्तिः, तथापि इतिकर्तव्यतासामान्येन भागित्वात् लिङ्गेन वैदिकी विज्ञेया।

**उत्पत्तीनां समत्वाद्वा यथाधिकारं भावः स्यात्। ८ ॥**

**भाष्यम्**— अथवा नैव लिङ्गेन नियम इति। कुतः? उत्पत्तीनां समत्वात्। धर्माणां प्रयाजादीनां उत्पत्तयः समाः सर्वेषां आग्नेयाद्यङ्गभावेन, न परस्पराङ्गत्वेन। किमतः? यदि प्रयाजादीनां अनुयाजादयः अङ्गानि स्युः, ततो 'यत्र प्रधानं तत्राङ्गानि' इति प्रयाजदर्शनेन अनुयाजादयः अनुमीयेरन्। यदा तु समप्रधाना एते, तदा प्रयाजदर्शनेन कामं प्रयाजा अनुमीयेरन् प्रयाजधर्मा वा, न तु अनुयाजादयः। तस्मात् लिङ्गमनियामकम्। यत्तु अभिधानवत् इति, अत्र ब्रूमः। युक्तं तत्र। यत्र हि परशब्दः परत्र प्रयुक्तः सन् तद्धर्मानतिदिशति इत्युक्तम्। अपि च विधिरसौ अग्निहोत्रवत् होतव्यमिति। अयं पुनरनुवादः। तेनात्र प्रयाजादीनामेव नास्ति प्राप्तिः, कुतः अनुयाजादीनाम्। तस्मात् विषम उपन्यासः अभिधानवत् इति। अतो यथाधिकारं भावः स्यात्, ये धर्मा यस्यापूर्वस्य अधिकारे आम्नाताः ते तत्रैव भवेयुः।

**उत्पत्तिः शेषवचनं च विप्रतिषिद्धमेकस्मिन्। ९ ॥**

**भाष्यम्**-- एवं तर्हि 'सौर्यं चरुं निर्वपेत्' इत्यनेन आख्यातेन प्रधानस्य विधानोत्पत्तिः। शेषाणां च वचनं भवतु। कथं कृत्वा? नानङ्गं प्रधानमुच्यमानं कस्मैचित् प्रयोजनाय कल्पते इति। तेन च प्रापितानामङ्गानां एतेभ्यो लिङ्गेभ्यः विशेषावधारणं भविष्यति। तत्रेदमुच्यते 'उत्पत्तिः **शेषवचनं च विप्रतिषिद्धमेकस्मिन्**'। एकस्मिन् शब्दे प्रधानस्य उत्पत्तिः, अङ्गानां च वचनं न संभवति। किं कारणम्? उत्पन्नं हि प्रधानं अङ्गानि अपेक्षते। अपेक्षया च तानि गृह्यन्ते। तस्मान्नैतदपि युक्तम्। यदि च 'निर्वपेत्' इत्यनेन शब्देन अङ्गान्यपि विधीयेरन् ततः तेषामपि फलसंबन्धः स्यात्, तथा अङ्गत्वमेव व्याहन्येत। ततः अयमपि वादो न घटते। तस्मात् यथोक्तो लौकिकः एवाभ्युपायः।

**विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेत तथाहि लिङ्गदर्शनम। १० ॥**

**भाष्यम्**--विध्यन्तो वा सौर्यादिकायां चोदनायां प्रवर्तेत, न धर्मा लौकिकाः। कः पुनरयं विध्यन्तो नाम? विधेरन्तो विध्यन्तः। अथ विधिः कः? यद्वाक्यमुपलभ्य पुरुषः कस्मिंश्चिदर्थे प्रवर्तते, कुतश्चिद्वा निवर्तते स विधिः। विधीयते हि अनेनार्थः। यथा लोके 'देवदत्त गामभ्याज शुक्लाम्' इति। तस्य 'अभ्याज' इति विध्यादिः। इतरः अन्तः। वेदेऽपि 'दर्शपूर्णमासाभ्यां यजेत' इति विध्यादिः। विध्यन्तोऽपि प्रधानविधिवर्जितं कृत्स्नं पौरोडाशिकं ब्राह्मणम्। तेन समेतोऽयं विध्यादिः विशिष्टापूर्वनिर्वृत्तिं प्रति पुरुषं प्रवर्तयति। तस्मात् सोऽस्यान्तः। तथा 'सोमेन यजेत' इति विध्यादिः। सौमिकमपि ब्राह्मणं विध्यन्तः। एष विध्यन्तो नाम। एतेषु च सौर्यादिषु विध्यादिरस्ति विध्यन्तो नास्ति। एतेष्वपि स विध्यन्तः कल्प्येत। कथं कृत्वा? अपरिपूर्णं यत् वाक्यं तत् अध्याहारेण वा पूर्येत, व्यवहितकल्पनया वा। तत्र अध्याहारात् व्यवहितकल्पना ज्यायसी। अध्याहारे हि अश्रुतः शब्दः कल्प्येत। इतरत्र श्रुतेन संबन्धः। तस्मात् व्यवहितो ब्राह्मणान्तरतः अस्य परिपूरकः कल्प्यते। यथा 'वसन्ताय कपिञ्जलानालभते'



'ग्रीष्माय कलविङ्कानालभते' इति। तेन वैदिकी इतिकर्तव्यता प्राप्यते। **ननु** यदि तत् ब्राह्मणं अस्य अन्तः कल्प्यते, तत्र न भवति। तदेतत् मयूरनृत्यं आपद्यते। तद्यथा, मयूरस्य नृत्यतः अन्यदपाव्रियते अन्यत् संव्रियते। एवमिहापि इदं संव्रियते तत् अपाव्रियते। नैष दोषः। प्रत्यक्षस्तस्य तत्र भावः। इह पुनरानुमानिकः। न च आनुमानिकं प्रत्यक्षं बाधते। इह तर्हि न प्राप्नोति, प्रत्यक्षविरोधात्। स्यादेवम्, यदि विरोधः स्यात्। न तु अस्ति विरोधः। तत्रापि भविष्यति इहापि। तदेतदुक्तं 'विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेत' इति (१० सू.)। उच्यते। प्रकृतिवदिति किम्? आह, अष्टमे प्रकृतिनियमं करिष्यति, इयमस्य प्रकृतिरिति। तदुच्यते, विध्यन्तो वा प्रकृतिरिव प्रवर्तेत। यो यस्य कर्मणः प्रकृतिरिति, यस्य आग्नेयः प्रकृतिः, तस्य आग्नेयादेव। यस्य अग्नीषोमीयः, तस्य अग्नीषोमीयादिति। एवं सर्वत्र। अथ कस्मात् न लौकिको विध्यन्तः कल्प्यते? उच्यते। लौकिकस्य विधेः अभावात् विध्यन्त एव नास्ति, कुतः तत्कल्पनेति। आह, लौकिकी इतिकर्तव्यता प्राप्यतां किं विध्यन्तकल्पनयेति। उच्यते। वैदिकी हि अत्र इतिकर्तव्यता, न लौकिकी। कस्मात्? तथाहि लिङ्गदर्शनं प्रयाजादि समर्थितं भवति।

**टुप्**-- कथंभावाकाङ्क्षायां यत्र इतिकर्तव्यता न आम्नायते, तत्र कथंभावस्य अव्यावृत्तत्वात् चोदना सदृशं वाक्यं बुद्धौ उपस्थापयति। तद् वाक्यमवबोधितं वाक्यार्थमवबोधयति। स च वाक्यार्थः फलकरणेतिकर्तव्यतायुक्तः। तत्र फलकरणे अनाकाङ्क्षितत्वात् न संबध्येते। इतिकर्तव्यता तु अपेक्षितत्वात् संबध्यते उपमितलक्षितप्रापणेन। सादृश्यं च वैदिकेनैव भवति, न लौकिकेनेति।

**लिङ्गाहेतुत्वादलिङ्गे लौकिकं स्यात्। ११ ॥**

**भाष्यम्**-- यदि लिङ्गात् वैदिकोऽभ्युपायो भवति, तेन तर्हि? अलिङ्गे लौकिकं स्यात्। यत्र कर्मणि किंचिल्लिङ्गं नास्ति, तत्र लौकिकं स्याद्विधानम्, यथा 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् यस्य सजाता वीयुः' इति।

**लिङ्गस्य पूर्ववत्त्वाच्चोदनाशब्दसामान्यादेकेनापि निरूप्येत यथा स्थाली पुलाकेन। १२ ॥**

**भाष्यम्**— अत्रोच्यते। स्यादेतदेवं यदि लिङ्गहेतुको वैदिक उपायः स्यात्। न तु असौ लिङ्गहेतुकः। किं हेतुकस्तु? विध्यन्तहेतुकः। विध्यन्तोऽपि न्यायपूर्वः। स च न्यायस्तुल्यः सर्वेषां कर्मणां वैकृतानां लिङ्गवतां अलिङ्गवतां च। कुतः? चोदनाशब्दसामान्यात्। कर्मचोदनायां शब्दः समानः। सर्वत्र विध्यादिरस्ति, न विध्यन्तः। तुल्यश्च अपेक्षया अन्यत्र श्रुतेन विध्यन्तेन संबन्धः। तदेतत् न्यायपूर्वकं लिङ्गं एकत्रापि दृश्यमानं तुल्यन्यायानां सर्वेषां धर्मवत्तां ज्ञापयति। यथा स्थाल्यां तुल्यपाकानां पुलाकाना एकं उपमृद्य अन्येषामपि सिद्धतां जानाति तुल्यो हेतुरस्य च अन्येषां च सिद्धत्वस्येति। तस्मात् सर्वत्र वैदिकी इतिकर्तव्यता। अथ यदुक्तं दृष्टप्रवृत्तिः लौकिकी इतिकर्तव्यतेति। **अत्र ब्रूमः।** सामान्यतो दृष्टमेतदुपदिश्यते। सामान्यतो दृष्टं च यदव्यभिचारि तत् प्रमाणम्। सव्यभिचारि चैतत्। दृष्टा हि गणयागादयः अनेवमितिकर्तव्यताकाः। तस्मात् दृष्टप्रवृत्तित्वात् इत्यहेतुः। यत्तु वैदिक्या भागित्वात् तत्पूर्वकाणि लिङ्गानि भविष्यन्तीति। **अत्र ब्रूमः।** भागित्वस्य अपूर्वेतिकर्तव्यतात्वं किल हेतुः। तद्भावश्च तस्याः शब्दपूर्वः। शब्देन च दर्शपूर्णमासयोः असौ इति ज्ञायते, न सर्वत्रेति। तस्मान्न भागित्वम्। अतो विध्यन्तेनैव इतिकर्तव्यता प्राप्यते नान्यथा।

अथ कस्मादेतानि वैकृतानि वाक्यानि न्यूनान्येव नानुमन्यन्ते, किमेभिः पूरितैः? न्यूनानि अनर्थकानि भवन्तीति। भवन्तु, को दोषः? शिष्टैरेषां संपरिग्रहो न युज्यते। प्रमादात् भविष्यतीति। नास्त्यक्षरे मात्रायां वा प्रमादः, कुत एतावति ग्रन्थे भविष्यति। कथम्? 'तुल्यं च सांप्रदायिकम्' (१।२।१।८) इत्युक्तम्। व्यामोहोऽपि विदुषां युगसहस्राणि बहूनि नानुवर्तेत। युज्यते चैषां अपेक्षया पूरणम्। तस्मात् ऊनानि नानुमन्यन्ते। अतो वैदिकी इतिकर्तव्यता इति सिद्धम्।

**शा—** एवं स्थिते इह चिन्त्यते लौकिकी वैदिकी वेति । '**वैदिकी हि निबद्धत्वात् नेतुं नान्यत्र शक्यते । लौकिकी त्वनिबद्धत्वात् सर्वत्रैवानुपज्यते ॥' इति प्राप्ते, उच्यते । 'वैदिकी वैदिकत्वेन सामान्येनोपतिष्ठते । लौकिकी त्वसमानत्वान्नोपस्थास्यत्यपेक्षिता ॥ यद्यप्यनुमिताद्वेदाल्लौकिकोऽपि तु वैदिकः । प्रत्यक्षवेदविरहान्नैवासौ सदृशो मतः ॥**' तस्मात् वैदिकं इत्थंभावः सौर्यादिषु अतिदिश्यते ।

**सोम—** पूर्वस्मिन्नेव विषये विशेषविचाररूपत्वात् उत्तरविचारस्य **संगतिः ।**

**वि—** 'विध्यन्तोऽपेक्षितस्तत्र ( सौर्यादौ ) लौकिको वाऽथ वैदिकः । आद्यो निबन्धराहित्या, दन्त्यो धीसंनिकर्षतः ॥ '

**भाट्टग्रन्थस्तु** 'अतिदेशः सौर्यादिषु इतिकर्तव्यतायाः' इति **विन्दौ ( मीको.** पृ. २३१) एव गृहीतः । प्रथमादिद्वादशान्तानां सूत्राणां भाट्टे एकाधिकरणत्वात् ।

**मण्डन--** 'वैदिकान्येव तानि तु ।' अङ्गानि ।

**शंकर--** 'विध्यन्तो वैदिकस्तु सः ।'

* **विध्यन्ताधिकरणे** सौर्यादिषु आनुमानिकवचनेन वैदिकीतिकर्तव्यता अस्ति इत्युक्तम्, तस्येदानीं विशेष उच्यते । **शा.** ८।१।१. * ननु **विध्यन्ताधिकरणे** एव लौकिकवैदिकविध्यन्तसमुच्चयमाशङ्क्य एकेनैव इत्थम्भावपूरणान्न द्वयोः सहप्रवृत्तिः इत्युक्तम्, तेन गतमेतत् । सत्यम् । समुच्चयस्तत्र निराकृतः, इह तु विकल्पो **निरस्यते ।** ८।१।१.

* **विध्यन्ताधिकरणन्यायः ।** 'सौर्यं चरुं निर्वपेत्' इति विध्यादिवाक्यं साकाङ्क्षं विध्यन्तवाक्यैः दार्शपौर्णमासिकैः निराकाङ्क्षीक्रियते विध्यन्ताधिकरणन्यायात् । ( टुप्. पृ. १७८३ ) । **रत्न.** ९।३।१।१.

* **विध्यन्तापेक्षः** विध्यादिः । **भा.** ३।३।७।१४ पृ. ८५२, * **विध्यन्तापेक्षायां** अनेकविध्यन्तसंनिपाते असाधारणेन लिङ्गेन विध्यन्तो नियम्यते । ८।१।२।२.

* **विध्यन्तनियमः** लिङ्गेन भवतीत्युक्तम् । **भा.** ८।१।१६।२८.

* **विध्यन्तराविहितस्य** प्रकृतविधेयव्यतिरिक्तस्य निन्दाद्वारा प्रकृतविधेयप्रशंसारूपः अर्थवादः यथा – 'यदृचा स्तुवते तदसुरा अन्ववायन्, यत्साम्ना स्तुवते तदसुरा नान्ववायन्, य एवं विद्वान् साम्ना स्तुवीत' इति । **बाल.** पृ. ५२.

* **विध्यन्तरविहितस्य** प्रकृतव्यतिरिक्तस्य निन्दाद्वारा प्रकृतविधेयप्रशंसारूपः अर्थवादः यथा– 'प्रातः-प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम् । दिवाकीर्त्यमदिवाकीर्तयन्तः **सूर्यो** ज्योतिर्न तदा ज्योतिरेषाम् । तस्मादुदिते होतव्यम्' इति । **बाल.** पृ. ५३.

* **विध्यन्तरशेषार्थवादकल्प्यः** प्रतिषेधो यथा– 'तस्मादारण्यमेवाश्नीयात्' इति विधिविशेषेण 'न वा एते माषान् हविर्गृह्णन्ति' इत्यनेन माषनिषेधः कल्प्यते । **बाल.** पृ. ३०, * विध्यन्तरशेषार्थवादकल्प्यः विधिः यथा– 'उपरि हि देवेभ्यो धारयति' इति । देवेभ्यः उपरि धारयेत् इति कल्पना । पृ. १२.

* **विध्यपराधे** च प्रायश्चित्तानि विधीयन्ते, निमित्त कर्माङ्गभूतानि । **भा.** ६।३।१।७.

* **विध्यर्थः** अपि प्रवर्तना जनकतासंबन्धेन भावनान्वयी । **मणि.** पृ. ११३.

* **विध्यर्थः ( रहस्यगः ) ।** ननु करणत्वबोधकशब्दाभावात् 'यजेत स्वर्गकामः' इत्यादौ कथं यागगतश्रेयःसाधनत्वस्य वेदबोध्यत्वम्, कश्च वा विधिः ? यद्बोध्यत्वं श्रेयःसाधनत्वस्य इति चेत् ।

**अत्र तार्किकाः ।** लिङादिश्रवणोत्तरं प्रवृत्तिदर्शनात् प्रवृत्तिसामग्रीजननद्वारा लिङादिज्ञानस्य प्रवृत्तौ उपयोगः इति तावदविवादम् । तत्सामग्री च कृतिसाध्यत्वप्रकारकेच्छारूपा चिकीर्षा । तस्याश्च स्वरूपसत्याः कारणत्वात् तत्र लिङादिज्ञानस्य अनुपयोगेऽपि चिकीर्षाकारणीभूतज्ञाने तदुपयोगः कल्प्यते । तच्च बलवदनिष्टाननुबन्धित्वज्ञानम्, कृतिसाध्यत्वज्ञानम्, इष्टसाधनत्वज्ञानं च । अन्यतमाभावे इतरद्वयसत्त्वेऽपि मधुविषसंपृक्तान्नभोजने, चन्द्रस्पर्शे, मण्डलीकरणादौ च प्रवृत्त्यदर्शनात् । अतो लिङादिज्ञानेन वितयज्ञानजननात् लिङादेः बलवदनिष्टाननुबन्धित्वे, कृतिसाध्यत्वे, इष्टसाधनत्वे च शक्तिः । तत्रापि विशेषण-



विशेष्यभावे विनिगमनाविरहात् प्रत्येकं शक्तिः । पुष्पवच्छब्दवच्च व्युत्पत्तिवैचित्र्यात् युगपत् अर्थत्रयस्यापि बोधः । अन्वयश्चास्य योग्यताबलात् धात्वर्थे यागादावेव । 'न कलञ्जं भक्षयेत्' इत्यादौ च नञर्थे अभावे । सोऽपि न वितयस्यापि, कलञ्जभक्षणस्य कृतिसाध्यत्वात् इष्टसाधनत्वाच्च । अपि तु बलवदनिष्टाननुबन्धित्वस्यैव । अत एव तस्मिन् बलवदनिष्टाननुबन्धित्वाभावः बलवदनिष्टानुबन्धित्वं निषेधेन बोध्यते इति कारणाभावात् तत्राप्रवृत्तिः । तस्य च अधर्मत्वं यागादेश्च धर्मत्वम् । श्येनादौ च कृतिसाध्यत्वेष्टसाधनत्वयोरेव अन्वयः, न तु बलवदनिष्टाननुबन्धित्वस्य, प्रमाणान्तरेण तत्फलस्य अभिचारस्य नरकसाधनत्वावगमेन तस्य नरकप्रयोजकत्वरूपबलवदनिष्टानुबन्धित्वात् । अतस्तत्र आस्तिकानां अप्रवृत्तिः । इत्याहुः ।

**तन्न ।** शक्तित्रयकल्पने गौरवात् । बलवदनिष्टाननुबन्धित्वज्ञानाभावेऽपि बलवदनिष्टानुबन्धित्वज्ञानाभावमात्रेण इष्टसाधनताज्ञानादिनैव प्रवृत्तेः आनुभविकत्वाच्च । अतः बलवदनिष्टानुबन्धित्वज्ञानं प्रवृत्तिप्रतिबन्धकम् । तदभावश्च स्वरूपसन्नेव कारणम् । अतश्च तत्र इच्छावदेव लिङादेरनुपयोगात् न तस्य तद्वाच्यत्वम् । किंच एवं नञ्समभिव्याहृतलिङर्थबलवदनिष्टाननुबन्धित्वप्रकारकशाब्दबोधे नञ्पदजन्योपस्थितिः कारणम्, नञ्समभिव्याहृतबलवदनिष्टाननुबन्धित्वातिरिक्तलिङर्थप्रकारकशाब्दबोधे धातुपदजन्योपस्थितिः कारणम्, नञ्समभिव्याहृतलिङर्थप्रकारकशाब्दबोधे धातुजन्योपस्थितिः कारणम्, लिङ्समभिव्याहृतनञर्थप्रकारकशाब्दबोधे प्रथमान्तपदजन्योपस्थितिः कारणम्, लिङ्समभिव्याहृतनञर्थप्रकारकशाब्दबोधे धातुजन्योपस्थितिः कारणम्, नञ्समभिव्याहृताख्यातार्थकृतिप्रकारकशाब्दबोधे प्रथमान्तपदजन्योपस्थितिः कारणम्, नञ्समभिव्याहृताख्यातार्थकृतिप्रकारकशाब्दबोधे नञ्पदजन्योपस्थितिः कारणम्, इति सप्त कार्यकारणभावाः । किंच एवं बलवदनिष्टाननुबन्धित्वरूपलिङर्थस्यैव नञ्समभिव्याहारसत्त्वे तत्रान्वयः । तद्भिन्नलिङर्थस्य तु सर्वत्र धात्वर्थे एव, नञः असत्त्वे धात्वर्थे इति गुरुभूतानेकसमभिव्याहारज्ञानकार्यकारणभावकल्पनापत्तिः । एवं 'घटो नास्ति' 'न पचति चैत्रः' इत्यादौ लिङादिसमभिव्याहाराभावे नञर्थस्य अभावस्य आश्रये प्रथमान्तपदोपस्थाप्ये अन्वयः, लिङादिसमभिव्याहारसत्त्वे तु धात्वर्थे एव इति व्युत्पत्त्यनेकत्वम् । तथा आख्यातार्थस्य कृत्यादेः नञः असत्त्वे आश्रयतासंबन्धेन प्रथमान्तपदोपस्थाप्ये, तत्सत्त्वे तदर्थे प्रतियोगिताकत्वसंबन्धेन इति गुरुभूताः कार्यकारणभावाः । 'नातिरात्रे षोडशिनं गृह्णाति' इत्येतदर्थं अन्योऽपि ।

**अस्मन्मते** तु वक्ष्यमाणरीत्या विध्यर्थस्य नञः असत्त्वे प्रयोज्यत्वसंसर्गेण आख्यातार्थकृतौ, ( विध्यर्थस्य ) तत्सत्त्वे ( नञ्सत्त्वे ) स्वप्रयोज्याभावप्रतियोगित्वसंसर्गेण ( आख्यातार्थकृतौ ), नञर्थस्य सर्वत्र प्रतियोगितासंसर्गेण ( आख्यातार्थकृतौ ), प्रथमान्तार्थस्य च आधेयत्वसंसर्गेण आख्यातार्थे कृतौ, इति चत्वारः । वक्ष्यमाणरीत्या एक एव वा इति लाघवम् ।

किञ्च 'न कलञ्जं भक्षयेत्' इत्यत्र भक्षणे बलवदनिष्टानुबन्धित्वबोधेऽपि इष्टसाधनत्वस्यापि विधिना बोधितत्वात् तस्य च लोकावगततृप्तिसाधनत्वमादाय निर्वाहे वैयर्थ्यापत्तेः भवन्मते विश्वजिन्न्यायेन स्वर्गकल्पनाऽऽपत्तिः । तदधिकस्यैव नरकस्य कल्पनात् न बलवदनिष्टानुबन्धित्वविरोधः । अत एव यत्र कृतिसाध्यत्वबोधे न कथंचिदपि वैयर्थ्यपरिहारः तत्र लोकसिद्धानुवादकत्वमपि नानुपपन्नम् ।

किंच यदि वितयमपि लिङर्थः तदा श्येनं बलवदनिष्टाननुबन्धित्वस्य कुतो न बोधः ? बाधादिति चेत्, कोऽयं बाधो नाम ? श्येनफलस्य अभिचारस्य हिंसात्वेन 'न हिंस्यात्' इति निषेधविषयत्वमेव बाधकमिति चेत्, तस्य सामान्यशास्त्रत्वेन रागप्राप्तहिंसोपजीवनेनापि चरितार्थतया यागीयपशुहिंसायामिव श्येने बलवदनिष्टाननुबन्धित्वस्य विशिष्य विधिप्रमितत्वेन तन्निर्वाहार्थं श्येनेऽपि अप्रवृत्तेः । कथंचित् प्रवृत्तावपि अभिचारजन्यनरकस्य अधिकत्वाकल्पनेन उभयोपपत्तेश्च ।

किंच बलवदनिष्टाननुबन्धित्वं न तावत् इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वम्, विधितः तज्ज्ञानसत्त्वेऽपि

स्वद्रव्यव्ययद्वेषवतः अलसस्य यागादौ प्रवृत्त्यदर्शनेन तज्ज्ञानस्य प्रवृत्तिं प्रति अकारणत्वात् । इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकत्वस्य निषेधशास्त्रतः कलञ्जभक्षणादौ ज्ञानेऽपि रागिणः प्रवृत्तिदर्शनेन तज्ज्ञानस्य न प्रवृत्तिप्रतिबन्धकत्वमपि । अतः अनिष्टे बलवत्त्वं उत्कटद्वेषविषयत्वम् । औत्कटयं च जातिविशेषः फलैकोन्नेयः । तादृशद्वेषश्च प्राचीनकर्मानुरोधेन । अतश्च यागादिजन्येऽपि दुःखे यदा प्राचीनकर्मवशात् उत्कटो द्वेषः तदा तस्य बलवदनिष्टानुबन्धित्वज्ञानसत्त्वात् तत्र अप्रवृत्तिः । यदा तु शुभकर्मवशात् तत्र नोत्कटो द्वेषः तदा तस्य बलवदनिष्टानुबन्धित्वज्ञानाभावसत्त्वात् प्रतिबन्धकाभावेन तत्र प्रवृत्तिः । एवं कलञ्जभक्षणादौ श्येने च प्राचीनकर्मवशेनैव प्रवृत्त्यप्रवृत्ती कादाचित्के उपपादनीये । अतश्च यागादौ नैयत्येन बलवदनिष्टाननुबन्धित्वस्य विधिना बोधयितुमशक्यत्वात् कलञ्जभक्षणादौ च नैयत्येन तदभावस्य नञा बोधयितुमशक्यत्वात् च न तत्र लिङादेः शक्तिः ।

यत्तु, बलवदनिष्टाननुबन्धित्वस्य विध्यर्थत्वाभावे 'तृप्तिकामः कलञ्जं भक्षयेत्' इति वाक्यस्य प्रामाण्यापत्तिः । बलवदनिष्टाननुबन्धित्वातिरिक्तेष्टसाधनत्वादिरूपविध्यर्थस्य तत्र अबाधात् । अस्मन्मते तु बलवदनिष्टानुबन्धित्वस्य तत्र श्रुतिबोधितत्वात् अप्रामाण्योपपत्तिः इति । **तन्न** । बलवदनिष्टाननुबन्धित्वातिरिक्तेष्टसाधनत्वादिविध्यर्थवादिनां मते तदापत्तावपि प्रवर्तनाविध्यर्थवादिमते तदनापत्तेः । तथाहि नञः असत्त्वे वक्ष्यमाणप्रवर्तनाप्रयोज्यत्वसंसर्गेण आख्यातार्थे कृतौ अन्वेति इति वक्ष्यते । तच्च प्रयोज्यत्वं स्वविषयकज्ञानजन्यानुमितिप्रयोज्यत्वमपि । तद्यत्र प्रमाणान्तरेण यागादौ इष्टसाधनता न बुध्यते तत्र इष्टसाधनत्वस्यैव प्रवर्तनाज्ञानादनुमितिः । यत्र तु तत् प्रमाणान्तरेण अवगतं निषेधेन च तस्य अनिष्टसाधनत्वमपि यथा दीक्षितान्नभोजनस्य 'न दीक्षितान्नमश्नीयात्' इति निषेधात्, तत्र 'हुतायां वपायां दीक्षितस्यान्नमश्नीयात्' इति पुनर्विधिः अनिष्टसाधनत्वाभावस्यैव आक्षेपकः न तु इष्टसाधनत्वस्य, तस्य प्रमाणान्तरसिद्धत्वेन सिषाधयिषाऽभावे अनुमित्यनुत्पत्तेः । अनिष्टसाधनत्वाभावज्ञानस्यापि स्वविषयविशेष्यकानिष्टसाधनत्वज्ञाने अप्रामाण्यनिश्चायकतया प्रवृत्तौ उपयोगः । प्रवृत्तौ हि अप्रामाण्यज्ञानानास्कन्दितानिष्टसाधनताज्ञानमेव द्वेषबलवत्तादशायां प्रतिबन्धकम् । अतश्च तेन अप्रामाण्यनिश्चये विशिष्टाभावसंपादकतया तस्य प्रवृत्तौ उपयोगः सुलभ एव । अतश्च निषेधविषयविषयकेण विधिना अभ्यनुज्ञाविधिरूपेण स्वविषये अनिष्टसाधनत्वाभावस्यैव आक्षेपात् तस्य च लौकिकवाक्ये प्रत्यक्षश्रुतिविरोधेन बाधितत्वात् अप्रामाण्योपपत्तिः । अतो न तावत् बलवदनिष्टाननुबन्धित्वं लिङर्थः । नापि कृतिसाध्यत्वम्, तस्य भवन्मते पाकानुकूलत्वस्य कृतौ भाने समानसंवित्संवेद्यतया पाकेऽपि कृतिसाध्यत्वस्य भानोपपत्ते. अन्यलभ्यतया लिङो वाचकत्वानुपपत्तेः ।

अस्मन्मतेऽपि प्रवर्तनाक्षेपादेव इष्टसाधनत्वादिवत् भानोपपत्तेः अन्यलभ्यत्वम् । अतः परिशेषात् इष्टसाधनत्वमेव लिङाद्यर्थः इति वक्तव्यम् । इष्यते च कैश्चिदाधुनिकैः इदमेव । 'नञ्समभिव्याहारस्थले तु अनिष्टसाधनतायां लिङो लक्षणा । अतो लिङादेः इष्टसाधनत्वमेवार्थः' इति । तदपि न । तथात्वे इष्टसाधनताज्ञानादेव प्रवृत्तेः 'आचार्यप्रेरितोऽहं गामानयामि' इत्यादौ आचार्यादेः प्रवर्तकत्वव्यवहारानुपपत्तेः । न च प्रवृत्तिजनकेष्टसाधनताबोधकलिङुच्चारयितृत्वात् तस्य प्रवर्तकत्वव्यवहारः, तथात्वे राजप्रेरितपदातेः तादृशलिङुच्चारयितृत्वेन प्रवर्तकत्वापत्तौ 'पदातिप्रेरितोऽहं न गामानयामि किंतु राजप्रेरितः' इति पदातौ प्रवर्तकत्वाभावव्यवहारानुपपत्तेः । अथ अन्याप्रेरितत्वे सति तादृशलिङुच्चारयितृत्वं प्रवर्तकत्वम्, तथापि पितृप्रेरिते राज्ञि प्रवर्तकत्वानापत्तेः । अतश्च एतादृशव्यवहारबलात् प्रवृत्तिकारणीभूतज्ञानविषयीभूतेच्छाश्रयत्वेनैव राजादेः प्रवर्तकत्वं वाच्यम् । न च इच्छायाः लिङादिवाच्यत्वाभावे अपि ज्ञानं संभवति, विषयविशेषस्य इष्टसाधनत्वेऽपि परेच्छाविषयत्वाभावेन व्यभिचारात् इष्टसाधनत्वस्य अनुमापकत्वानुपपत्तेः । अतः परिशेषात् लिङादिवाच्यैव सा । तथा च प्रवृत्तिविषये यागादौ इष्टसाधनत्वादेः अनुमानेनैव बोधोपपत्तेः न पुनर्वाच्यत्वकल्पनावसरः ।



भवति हि 'अयमत्र प्रवर्तताम्' इत्याकारकेच्छाविषयत्वं इष्टसाधनत्वव्याप्तम् । अतस्तेन तदनुमानम् । अत्र अमुखे सुखत्वभ्रमेण सुखे एव वा 'सुखं मे जायताम्' इतीच्छाविषयत्वसत्त्वेऽपि इष्टसाधनत्वाभावात् तत्र व्यभिचारवारणाय हेतौ आकारकपर्यन्तानुधावनम् । प्रतारकतादृशेच्छाविषये व्यभिचारवारणाय आप्तेति । अत्र च इच्छाविषयत्वं इच्छाविषयीभूतप्रवृत्तिविषयत्वं बोध्यम् । तेन प्रवृत्तौ, तदाश्रये पुरुषे वा इच्छाविषये इष्टसाधनत्वाभावेऽपि न व्यभिचारः, यागादावेव च हेतुसत्त्वात् इष्टसाधनत्वानुमानम् ।

अत्र च यद्यपि वक्ष्यमाणरीत्या व्यापारत्वं इच्छात्वमेव वा लिङादिपदशक्यतावच्छेदकं तथापि तेन रूपेण उक्तविधेच्छाया एव लिङादिपदात् बोधः । तत्तद्धातुप्रत्ययादिसमभिव्याहारस्य नियामकत्वात् । भवति हि 'मृदस्ति पात्रं करिष्यामि' इत्यादौ पात्रत्वेन सामान्यरूपेण मन्मयपात्रविशेष्यको बोधः समभिव्याहारात् । प्रवृत्तिसामर्थ्याच्च प्रवृत्त्याश्रयस्य पुरुषस्य बोधः । वचनेङ्गितादिना च आप्तत्वे अवगते इच्छायां आप्तनिष्ठत्वस्य समानसंवित्संवेद्यतया यागादौ तादृशेच्छाविषयत्वस्य बोधः इति न हेत्वसिद्धिः । तेन उक्तविधसामग्र्या हेतुज्ञाने जाते इष्टसाधनत्वाद्यनुमानं सुलभमेव । अतश्च अन्यलभ्यत्वात् इष्टसाधनत्वादेः न लिङादिवाच्यत्वम् ।

किंच भवन्मते येन स्वत एव पाकादौ इष्टसाधनत्वादि बुद्ध्वा प्रवृत्तम्, तस्य पाकवर्तमानतादशायां 'चैत्रः पचेत्' इति प्रयोगापत्तिः । इष्टसाधनत्वादिविशिष्टपाकानुकूलकृतिमत्त्वस्य चैत्रे अबाधितत्वात् । 'चैत्रः पचति' इतिवत् वर्तमानत्वाबोधेऽपि क्षतिविरहात् । मन्मते तु तादृशप्रवृत्तेः प्रेरणाप्रयोज्यत्वाभावात् विषयबाधेन अप्रामाण्योपपत्तिः तादृशप्रयोगस्य इति वैषम्यम् ।

ननु भवन्मतेऽपि यत्र अन्यप्रेरणया चैत्रस्य प्रवृत्तिः, तत्र पाकवर्तमानतादशायां 'चैत्रः पचेत्' इति प्रयोगस्य प्रामाण्यापत्तिः, पाकानुकूलायाः चैत्रनिष्ठप्रवृत्तेः प्रेरणाप्रयोज्यत्वस्य अबाधात् । वस्तुतस्तु स्वतःसिद्धेष्टसाधनताज्ञानजन्यप्रवृत्तेरपि प्रेरणाप्रयोज्यत्वस्वरूपयोग्यतया प्रेरणाप्रयोज्यत्वात् तत्रापि 'चैत्रः पचेत्' इति प्रयोगापत्तिः अनिवार्यैव । नहि तत्र फलोपहितप्रयोज्यत्वविशिष्टा कृतिः शाब्दबोधे भासते । बहुशः शाब्दबोधेऽपि आलस्यादिना प्रवृत्त्यनुत्पत्तेः इति चेन्न । प्रवृत्तित्वावच्छिन्नं प्रति न प्रेरणायाः प्रयोजकता, व्यभिचारात् । अपितु प्रेरणोत्तरप्रवृत्तित्वावच्छिन्नं प्रति । 'इयं प्रवृत्तिः प्रेरणाप्रयोज्या, इयं न किंतु स्वत एव' इत्यादि सर्वलौकिकव्यवहारात् । यद्वा प्रेरणाप्रयोज्यतावच्छेदकतया प्रवृत्तित्वव्याप्यं धर्मान्तरमेव इत्यपि वक्तुं शक्यम् । अत एव तत्प्रयोजकतावच्छेदकतया प्रेरणात्वं अखण्डो धर्मः लोकवेदसाधारणः इत्यपि वक्ष्यते । तस्य च प्रवृत्तित्वव्याप्यधर्मस्य लिङादिसमभिव्याहारस्थले लक्षणया आख्यातात् बोधः । सामान्यधर्मेणैव वा प्रेरणाप्रयोज्यव्यक्त्युपस्थितिः इत्याद्यन्यदेतत् । सर्वथा स्वतःसिद्धेष्टसाधनताज्ञानजन्यप्रवृत्तिं प्रति न प्रेरणायाः स्वरूपयोग्यतयाऽपि प्रयोजकत्वं इति न तादृशप्रवृत्तिमति लिङादिमद्वाक्यप्रयोगापत्तिः । प्रेरणाप्रयोज्यप्रवृत्तिवर्तमानतादशायां तु प्रयोगापत्तिः एवं निवार्या– न अस्माभिः प्रेरणायाः विषयतासंबन्धेनैव प्रवृत्तौ अन्वयः इत्युच्यते । न वा प्रेरणाविषयीभूतप्रवृत्तिविषयत्वेन यागादौ, येन तादृशप्रयोगापत्तिः शङ्क्येत । किंतु अत एव साक्षात्संबन्धपरित्यागेन स्वज्ञानजन्यानुमितिप्रयोज्यत्वसंसर्गेण आख्यातार्थप्रवृत्तौ प्रेरणायाः प्रकारत्वम् । अस्ति हि प्रेरणाज्ञानजन्येष्टसाधनत्वाद्यनुमितेः प्रवृत्तिं प्रति जनकत्वात् प्रयोजकत्वम् । उपपादयिष्यते एतदुपरिष्टात् । तत्प्रेरणाज्ञानं स्वप्राक्कालीनस्वज्ञानोपधेयमेव स्वरूपेण तद्व्यक्तित्वेन संसर्गमध्ये निवेश्यते । प्रथमस्वपदं तत्तत्प्रवृत्तिव्यक्तिपरम् । द्वितीयस्वपदं तत्तल्लिङादिव्यक्तिपरम् । तेन तत्तत्प्रवृत्तिप्रागभावकाले यत् लिङादिपदज्ञानं तेन उत्पादितम् । यत्प्रेरणाज्ञानं तज्जन्येष्टसाधनत्वानुमितिप्रयोज्यत्वस्वरूपयोग्यत्वं संसर्गः इति फलितार्थः । अतश्च प्रवृत्तिवर्तमानतादशायां अनेन संसर्गेण प्रेरणावत्त्वस्य प्रवृत्तौ बाधात् न तादृशप्रयोगापत्तिः अस्मन्मते ।

अन्यदीयप्रेरणाप्रयोज्यप्रवृत्तिप्राक्काले अन्यदीयलिङन्तप्रयोगस्तु राजप्रेरितप्रवृत्तिकाले पदात्यादीनां अन्येषाममात्यादीनां च लिङन्तप्रयोगदर्शनात् इष्टापत्त्यैव नापादनीयः ।

संभवति हि तत्र राजप्रेरणामादायापि प्रयोगः अन्यदीय-प्रेरणामादाय च, तज्ज्ञानजन्यानुमितेरपि प्रवृत्तिस्वरूप-योग्यत्वात् ।

अतः सिद्धं न तार्किकरीत्या इष्टसाधनत्वादेः लिङाद्यर्थत्वम्, अपि तु पूर्वोक्तरीत्या प्रवर्तकेच्छाया एव । 'विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्' (पा. ३।३।१६१) 'लोट् च' (पा. ३।३।१६२) 'छन्दसि लिङर्थे लेट्' (पा. ३।४।७) इत्यादिपाणिन्यनुशासनात् अयमेवार्थो विज्ञायते । विधिः– निकृष्टस्य प्रेरणम् । निमन्त्रणम्– अनिष्टजनकीभूताकरणप्रतियोगित्वानुमापक-प्रवर्तकेच्छा । यथा श्राद्धादौ दौहित्रादेः प्रवर्तनम् । तत्र प्रमाणान्तरेण अभोजने प्रत्यवायावगमात् । अत एव विधिस्थले इव अग्रिमयोरपि च लाघवात् इष्टसाधनत्वानुमापकत्वमेव । कृतिसाध्यत्वानुमापकत्वं तु सर्वत्रैव । माऽस्तु वा तत् । आमन्त्रणं कामचारानुज्ञा । तत्र प्रेरकस्य आग्रहाभावमात्रम् । अन्यत्र सर्वत्र आग्रहोऽपि अधिको भासते । अधीष्टं सत्कारपूर्वकं उत्तमं प्रति प्रेरणम् । एतेषु चतुर्षु प्रवर्तनात्वस्य एकस्य अनुगतत्वात् तेनैव रूपेण एकैव शक्तिः । अन्यांशस्य तु प्रमाणान्तरलभ्यत्वात् न शक्यत्वम् । संप्रश्नप्रार्थनयोस्तु अतिरिक्तैव शक्तिः 'किं त्वमधीयीथाः' 'भवति मे प्रार्थना वेदमधीयीय' इत्यादौ । तत्र प्रवर्तनात्वाभावात् । आनुशासनिकी वा निरूढा लक्षणा । 'हेतुहेतुमतोर्लिङ्' (पा. ३।३।१५६) 'कामप्रवेदनेऽकच्चिति' (पा. ३।३।१५३) इत्याद्यनुशासनेनैव हेतुत्वादौ प्रचुरप्रयोगेण प्रवर्तनात्वस्यैव शक्यतावच्छेदकत्वात् । प्रवर्तनात्वं च प्रवृत्त्यनुकूलव्यापारत्वम् । अनुकूलत्वं च जनकत्वम् । तच्च लोके पुरुषाशयवृत्ति । वेदे च तदभावात् इच्छाभिन्नस्य कस्यचित् प्रवर्तनात्वं बोध्यम् । अत्रापि इष्टसाधनत्वमेव प्रवर्तनात्वेन रूपेण वेदे लिङाद्यर्थः इति मण्डनमिश्राः । अर्थभावनाऽभिधानानुकूलायाः लिङादिनिष्ठशक्तेरेव अभिधाख्यायाः प्रवर्तनात्वेन रूपेण लिङ्वाच्यत्वं परिकल्प्य तज्ज्ञानस्य प्रवृत्तिं प्रति कारणत्वमात्रं कल्प्यते इति तु पार्थसारथिः । वस्तुतस्तु इष्टसाधनत्वकृतिसाध्यत्वयोः विनिगमनाविरहः । तथात्वे वा लोकेऽपि तस्यैव तथात्वापत्तेः तार्किकमतोक्तदूषणापत्तिः । शक्तिप्रवर्तनावादिमतेऽपि उक्तशक्तेः संख्याभिधानानुकूलशक्त्या लिङ्त्वादिनैव वा विनिगमनाविरहः तदवस्थ एव । अतः 'बलेन विनिगमनाविरहे कल्प्यमन्यत् सिध्यति' इति न्यायेन अलौकिको धर्म एव लिङादिनिष्ठः, प्रवर्तनात्वेन लिङादिवाच्यश्च कल्प्यते । तज्ज्ञानं च प्रवृत्तिं प्रति कारणं इति न्यायसुधाकृन्मतमेव कथं वियुक्तं इति व्यक्तं कौस्तुभे ।

वस्तुतस्तु लोके नेच्छायाः स्वरूपेण प्रवृत्तिं प्रति कारणत्वम्, तदभावेऽपि तद्भ्रमेण प्रवृत्त्युदयात् । स्वरूपेण कारणत्वे लिङुक्तिवैयर्थ्याच्च । नापि तज्ज्ञानस्य कारणत्वं इष्टसाधनत्वाद्यनुमापकतया प्रवृत्तिविशेषं प्रति प्रयोजकतयैव अन्वयव्यतिरेकसिद्धौ कारणत्वकल्पने मानाभावात् । अतः प्रवृत्तिप्रयोजकत्वमेव प्रवर्तनात्वं वाच्यम्, तदपि च न लिङादेः शक्यतावच्छेदकं गौरवात् अन्यलभ्यत्वाच्च । प्रवृत्तिर्हि आख्यातादेव लभ्यते । प्रयोजकत्वं तु संसर्गबलेन इति न तदपि शक्यतावच्छेदककोटिप्रविष्टम् । अपि तु लोकवेदसाधारण्येन व्यापारत्वमेव शक्यतावच्छेदकम् । अस्ति हि लौकिके लिङादिशब्दोपस्थाप्ये पुरुषाशये प्रवृत्तिसाधनाभूतेष्टसाधनत्वाद्यनुमापकतया प्रवृत्तिप्रयोजकव्यापारत्वम् । वेदेऽपि शब्दश्रवणोत्तरकालं अनुमायैव तत्कार्यदर्शनात् इच्छायाश्च अपौरुषेये वेदे बाधात् कार्यानुमेयं अलौकिकं धर्मं लिङादिनिष्ठं लिङादिवाच्यं परिकल्प्य तस्य तदनुमापकत्वकल्पनात् तत्रापि प्रवृत्तिप्रयोजकव्यापारत्वम् । अतः उभयसाधारण्येन व्यापारत्वमेव शक्यतावच्छेदकम् ।

यद्यपि च तत् अन्यत्राप्यतिप्रसक्तं तथापि समभिव्याहारबलात् विशेषलाभः । तथाहि लिङ्पदात् व्यापारत्वावच्छिन्नव्यापारमात्रोपस्थितावपि तस्य आख्यातोपात्तकृतौ निरुक्तसंसर्गेण अन्वये बुद्धे पश्चात् तत्संसर्गस्य तत्त्वेन रूपेण बोधवेलायां तेनतेन प्रमाणेन विशेषलाभो न असुलभः । इष्यत एव हि 'भूतलं घटवत्' इत्यादौ घटपदात् घटत्वावच्छिन्नघटमात्रप्रतीतावपि तस्य योगदसंसर्गेण भूतले घटान्वये बुद्धे तत्संसर्गस्य तत्त्वेन



जिज्ञासायां प्रमाणान्तरेण संयोगत्वादिना संयोगादिरूपसंसर्गप्रतीतिवत् भूतलवृत्तिघटविशेषप्रतीतिः ।

तदयमत्र क्रमः । प्रथमं लिङादिपदात् व्यापारत्वेन सामान्यरूपेणैव व्यापारोपस्थितिः । पश्चात् आख्यातोपस्थितकृतौ तस्य स्वविषयकज्ञानविशेषजन्यानुमितिप्रयोज्यत्वसंसर्गेण तत्त्वेन अनुपस्थितेनैव अन्वयः । शाब्दबोधश्च 'व्यापारवती यागादिकृतिः' इति । न च लिङर्थविशेष्यक एव शाब्दबोध इति भ्रमितव्यम् । 'भावप्रधानमाख्यातम्' इति स्मृत्या लकारार्थप्रकारकशाब्दबोधत्वावच्छिन्नं प्रति अर्थभावना विशेष्यतासंबन्धेन आख्यातपदजन्योपस्थितिः कारणं इति कालादिसाधारण्येन एककार्यकारणभावकल्पनालाघवानुरोधेन च आख्यातार्थकृतेरेव मुख्यविशेष्यत्वात् ।

संप्रश्नप्रार्थनयोः अपि विषयतासंबन्धेन तस्यामेव अन्वयः । हेतुत्वादेरपि स्वरूपसंबन्धेन तस्यामन्वयेऽपि तस्याः उपलक्षणत्वादेना इतरक्रियायामन्वयः । लिङो वा हेतुमत्त्वरूपसंसर्गतात्पर्यग्राहकत्वम् । तेन आख्यातार्थस्यैव 'आर्तिमार्छेत्' इत्यादौ इतरक्रियान्वयः हेतुमत्त्वसंसर्गेणैव इति न कश्चित् विरोधः ।

एवं 'यदि शालीन् भुञ्जीत तर्हि दधि उपसिञ्चेत्' इत्यादौ कामप्रवेदने ऽपि स्वविषयेच्छानिमित्तकत्वं संसर्गः, लिङ्तात्पर्यग्राहकः । आख्यातमेव इच्छालक्षकं यदि शालीन् भोक्तुमिच्छेत्' इति निमित्तत्वमेव संसर्ग इति न क्वापि व्युत्पत्त्यन्तरम् । अतश्च 'देवदत्तः पचेत्' इत्यादौ लोके तावत् शाब्दबोधोत्तरं स्वसंसर्गस्य तत्त्वेन जिज्ञासायां 'चैत्रप्रेरितोऽहं पचामि' इत्यादिव्यवहारवशात् व्यापारस्य इच्छारूपत्वे अवगते पाकविषयकृतिसंबन्धात् 'पाकेऽयं प्रवर्तताम्' इत्याकारत्वे च तस्याः सिद्धे तदाश्रयस्य प्रयोजकवृद्धस्य प्रमाणान्तरेण आप्तत्वावगमे समानसंवित्संवेद्यतया 'पाकेऽयं प्रवर्तताम्' इत्याद्याकारकात्मनिष्ठेच्छा–विषयकृतिविषयत्वरूप हेतुज्ञानं मानसं जायते । ततश्च तस्मिन् हेतौ क्रियान्तरदृष्टान्तेन इष्टसाधनत्वकृतिसाध्यत्वयोः व्याप्तिस्मरणात् उभयविषयिणी अनुमितिः उत्पद्यते । क्वचिच्च अनिष्टसाधनीभूताकरणप्रतियोगित्वादेरपि, सामग्रीवशात् । तत्सामग्री च 'अयमत्र प्रवर्तताम्' इत्याकारकस्वभङ्गनिमित्तकानिष्टकविच्छाविषयत्वरूपहेतुपरामर्शादिरूपा । स्वपटं इच्छापरम् । इदं च तत्रतत्र कौस्तुभादौ स्पष्टम् । तस्याश्च प्रवृत्तिप्रयोजकत्वं स्पष्टमेव इति संसर्गस्य तत्त्वेन लाभः इच्छाविशेषलाभश्च उभयं सुलभम् । वेदेऽपि लिङादिशब्दश्रवणोत्तरकालं व्यापारत्वरूपेण व्यापाररूपपदार्थोपस्थित्या 'निरुक्तसंबन्धेन व्यापारवती यागादिकृतिः' इति शाब्दबोधे जाते संबन्धस्य तत्त्वेन जिज्ञासायां 'वेदस्थलिङादिप्रेरितोऽहं यागादि करोमि' इत्यादिव्यवहारात् यागविषयकृतिसंबन्धाच्च तस्य लिङादिगतत्वं 'यागेऽयं प्रवर्तताम्' इत्याकारकत्वं चापि गम्यते । अत एव वर्णात्मकलिङादेर्नित्यत्वात् तद्वृत्त्यलौकिकधर्मस्यापि नित्यत्वम् । न च भ्रमप्रमासाधारण्येन तज्ज्ञानस्यैव अनुमितिजनकत्वात् लोकवदेव तत्सिद्धौ प्रमाणाभावः, वेदोत्थज्ञानस्य भ्रमत्वानुपपत्त्या तत्सिद्धेः । तस्मिन् यागविषयककृतिविषयिता च न ज्ञानादिविषयितासाधारणी अतिरिक्ता वा । अपितु 'पाके अयं प्रवर्तताम्' इत्यादिलौकिकेच्छानिष्ठविषयितासाधारणी इच्छासामान्यनिष्ठविषयितातभिन्ना लिङाद्यर्थमात्रनिष्ठा, अनुगतप्रतीतेरेव तत्र प्रमाणत्वात् । अतश्च लिङादेर्निर्दोषत्वेन अनाप्तभिन्नत्वे अवधारिते समानसंवित्संवेद्यतया प्रतारणाद्यजन्यहिताहितोपदेशजनकनिष्ठनिरुक्ताकारकव्यापारविषयीभूतकृतिविषयत्वरूपहेतुज्ञानं तथैव मानसं जायते । अत एव लोकवेदसाधारणं प्रतारणाद्यजन्यहिताहितोपदेशकर्तृत्वे सति तादृशोपदेशकर्तृत्वं आप्तत्वम् । अतश्च तेन इष्टसाधनत्वाद्यनुमितिः लोकवदेव नानुपपन्ना । न च भ्रमप्रमासाधारण्येन इष्टसाधनत्वाद्यनुमितेरेव प्रवृत्तिप्रयोजकत्वात् न भवन्मते यागादावपि इष्टसाधनत्वादिसिद्धिः, ज्ञानस्य असन्मते स्वतःप्रमाणत्वेन दोषाद्यभावे प्रमात्वस्यैव सिद्धेः । सल्लिङ्गकपरामर्शस्य भ्रान्तानुमित्यजनकत्वाच्च ।

अतः सिद्धं शक्यतावच्छेदकस्य अतिप्रसक्तत्वेऽपि लोके वेदे वा विशेषलाभो निरुक्तसंसर्गलाभश्चेति ।

अथवा लोकवेदसाधारणः पूर्वोक्तविषया प्रवृत्तिविशेष-

प्रयोजकतावच्छेदकतया सिद्धो व्यापारत्वरूपः अखण्डधर्म एव अनतिप्रसक्तः लिङादिपदशक्यतावच्छेदकः।

**अथवा** 'अयमत्र प्रवर्तताम्' इत्याकारकत्वरूपस्य लोकवेदसाधारणस्य विषयिताविशेषस्य पूर्वमुक्तत्वात् स एव लिङादिशक्यतावच्छेदकः। एष्टव्यश्च अयमेव प्रकारः शाब्दबोधत्वावच्छिन्नं प्रति लक्षणादिजन्यशाब्दबोधत्वावच्छिन्नं प्रति वा लोकवेदसाधारण्येन तात्पर्यज्ञानस्य भट्टमते कारणत्वनिर्वाहार्थम्। नहि 'अस्मात् पदात् अयमर्थो बोद्धव्यः' इत्याकारकेच्छारूपं तात्पर्यं वेदे संभवति। अतस्तत्र अतिरिक्तः शब्दनिष्ठो धर्मविशेष एव तात्पर्यं भट्टमते वाच्यम्। न च तज्ज्ञानस्य कारणत्वं लोके क्लृप्तम्। अत्रैव अतिरिक्तकार्यकारणभावकल्पने मानाभाव एव। अतः विषयिताविशेषस्यैव अनुगतव्यवहारात् उभयसाधारणत्वं अङ्गीकृत्य कारणतावच्छेदकत्वं वाच्यम्। तद्वत् इहापि विषयिताविशेषस्यैव प्रवृत्तिप्रयोजकतावच्छेदकत्वं लिङादिपदशक्यतावच्छेदकत्वं च।

यदि तु निरुक्तविषयिताविशेषस्य इच्छात्वव्याप्यत्वमेव इत्याग्रहः, तदा वैदिकलिङादिनिष्ठव्यापारस्यापि इच्छारूपत्वे न काचित् क्षतिः। गुणे गुणानङ्गीकारस्य निर्युक्तिकत्वेन अश्रद्धेयत्वात्। श्रद्धेयत्वेऽपि वा शब्दस्य द्रव्यत्वोपपत्तेः। जीवातिरिक्तेश्वरे नित्येच्छाङ्गीकारवत् वैदिकशब्देऽपि नित्येच्छाङ्गीकारे बाधकाभावात्।

यदि तु इच्छात्वस्य आत्मनिष्ठत्वव्याप्यत्वमेवेत्याग्रहः तदा लिङादिवैदिकशब्दे श्रौतात्मशब्दप्रयोगाभावेन ईश्वरे इव आत्मत्वाङ्गीकारे मानाभावात् उपनिषदादिप्रमाणगम्यं ईश्वरमपि अङ्गीकृत्य तदिच्छैव तत्तदाकारिका वेदे लिङाद्यर्थः तात्पर्यरूपा च। 'वेदस्थलिङादिप्रेरितोऽहं यजे' इत्यादिव्यवहारस्तु तादृशेच्छायाः लिङादिबोध्यत्वात् इति सर्वथा न इष्टसाधनत्वादिकं विध्यर्थः।

**वस्तुतस्तु** इच्छात्वं जातिरेव लिङादिशक्यतावच्छेदिका लाघवात्। विशेषलाभः पूर्ववत्। वेदे तु अलौकिकप्रेरणायां लक्षणा। अन्यत् सर्वं पूर्ववत् इत्यपि वक्तुं शक्यम्। एवं 'चैत्रो न पचेत्' 'न कलञ्जं भक्षयेत्' इत्यादौ नञ्समभिव्याहृतलिङादिस्थलेऽपि न तावत् 'बलवदनिष्टाननुबन्धित्वं लिङर्थः, तदभावो नञा बोध्यते' इति पक्षः सुवचः, पूर्वमेव निरस्तत्वात्। नापि 'अनिष्टसाधनत्वे लिङो लक्षणा, नञ्पदं तात्पर्यग्राहकम्' इति **नवीनतार्किकमतं** युक्तम्, 'ज्योतिष्टोमेन न यजेत' इति लौकिकवाक्यस्य प्रामाण्यापत्तेः। श्रुत्या स्वर्गसाधनत्वावगमेऽपि तात्कालिकानिष्टसाधनत्वस्य यागे बाधाभावात्। नहि नरकादिरूपकालान्तरभाव्यनिष्टजनकत्वमेव निषेधार्थः इत्यत्र प्रमाणमस्ति। 'अग्निं न स्पृशेत्' इत्यादिलौकिकवाक्ये व्यभिचारात्, 'नातिरात्रे षोडशिनं गृह्णाति' इत्यादौ उभयथाऽपि व्यभिचाराच्च।

यदि हि तात्कालिकानिष्टसाधनत्वं तत्र निषेधार्थः, तदा तस्य प्रमाणान्तरसिद्धानुवादकत्वेऽपि 'अतिरात्रे षोडशिनं गृह्णाति' इत्यनेन इष्टसाधनत्वस्य बोधात् क्रत्वङ्गतया नित्यवत् करणापत्तिः। अथ तत्र वैयर्थ्यभिया क्रतुगतवैगुण्यरूपानिष्टसाधनत्वमेव 'नानृतं वदेत्' इतिवत् तदर्थः, तदा एकस्यैव क्रतुसाद्गुण्यतद्वैगुण्यजनकत्वविरोधः। अथ विरोधपरिहारार्थं वैगुण्यापेक्षया साद्गुण्याधिक्यं कल्प्येत, तदा तात्कालिकानिष्टसाधनत्ववत् वैगुण्यस्यापि नान्तरीयकत्वापत्तेः नित्यवत् करणापत्तिः। **अस्मन्मते** तु वक्ष्यमाणरीत्या प्रवृत्त्यभावप्रयोजकप्रवृत्तिसामग्रीविघटनाय षोडशिग्रहणाभावेऽपि इतराङ्गैरेव क्रतुमहोपकारसिद्ध्यनुमितेरेव तत्र संसर्गघटकतया उक्तविधानुमित्या प्रवृत्त्यभावोपपत्तौ तत्र अनिष्टसाधनत्वाननुमानात्। अत एव विध्युत्तरनिषेधे सर्वत्र विधिप्रमितेष्टसाधनत्वाभावस्यैव बोधनात् द्वयोर्वैदिकत्वे प्रयोगभेदेन प्रामाण्योपपत्तावपि श्रौतविधिविरोधे लौकिकवाक्यस्य अप्रामाण्यं नानुपपन्नम्।

एतेन 'इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वमेव शक्त्या लक्षणया वा नञ्समभिव्याहारे लिङाद्यर्थः, तदभावः तादृशदुःखजनकत्वरूपः बलवदनिष्टाननुबन्धित्वं नञर्थः। तस्य च धात्वर्थे अन्वयः। नातो लौकिकवाक्यस्य प्रामाण्यापत्तिः निर्मूलत्वात्' इत्यपास्तम्। 'नातिरात्रे षोडशिनं गृह्णाति' इत्यादावपि तदापत्तेः।



किंच एतेषु सर्वेष्वपि पक्षेषु रागिणः कलञ्जभक्षणवर्तमानतावेलायां 'चैत्रः कीदृशः' इति प्रश्ने 'इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःख-जनककलञ्जभक्षणानुकूलकृतिमान्' इत्युत्तरवत् 'न कलञ्जं भक्षयेत्' इत्युत्तरवक्तुः असंबद्धप्रलापित्वानापत्तिः। श्येनवर्तमानतादशायां च 'श्येनेन न यजेत' इत्युत्तरापत्तिः। अस्मन्मते तु वक्ष्यमाणरीत्या लिङर्थस्य इच्छायाः स्वज्ञानविशेषजन्यानुमितिसंपादितप्रवृत्तिसामग्र्यभावकालीनाभावप्रतियोगित्वसंबन्धेन आख्यातार्थे कृतौ अन्वयात् न तदापत्तिः इति वैषम्यम्।

किंच 'चैत्रः कीदृशः' इति प्रश्नस्य नैवेदमुत्तरं प्रथमान्तमुख्यविशेष्यकत्वाभावात्। 'कीदृशी कृतिः' इत्यस्यापि नोत्तरम्, लिङ्गधर्मितावच्छेदकप्रश्ने तदनालिङ्गितोत्तरस्य असंबद्धत्वात्। अत एव 'कीदृशी कृतिः' इति प्रश्नस्यापि 'चैत्रः पचति' 'न पचति' इत्यादि नैवोत्तरम्, लिङ्गानालिङ्गितत्वात्। अत एव कृतिमुख्यविशेष्यकत्वमेव भट्टसंमतम्, प्रथमान्तमुख्यविशेष्यकत्वे तादृशोत्तरस्य असंबद्धत्वानापत्तेः। अतो नञ्समभिव्याहारस्थले प्रवर्तनावत् निवर्तनाऽपि निवृत्तिप्रयोजकतया अभ्युपेया। 'आचार्योपदेशादहं निवृत्तः, न स्वतः न वाऽन्योपदेशात्' इति व्यवहारदर्शनात्। निवर्तनात्वं च **प्राचां** मते प्रवर्तनात्ववदेव निवृत्तिजनकव्यापारत्वादिरूपं भिन्नं बोध्यम्। तदवच्छिन्नं च लोके इच्छा, वेदे च अलौकिको धर्मः इत्यादि सर्वं पूर्ववत्। शक्ततावच्छेदकं च तस्याः नञ्पदत्वम्। प्रवर्तनावाचकं च लिङादिपदं तात्पर्यग्राहकम्, इतरथा 'न पचति चैत्रः' इत्यादौ नञ्पदात् अत्यन्ताभावस्यैव बोधात्। लिङा वा निवर्तना उच्यते, नञ्पदं तु प्रवृत्त्यभावानुवादकं सत् तात्पर्यग्राहकं इत्यादि प्राचीनमतं **कौस्तुभे** एव व्यक्तम्।

**वस्तुतस्तु** अनेकशक्तिकल्पनापत्तेः न प्रवर्तनानिवर्तनयोः पृथक् शक्तिः, प्रवृत्त्यभावनिवृत्त्योर्वा भेदः, प्रमाणाभावात् गौरवाच्च। अपि तु आख्यातस्य कृतावेव, नञः अभाव एव, लिङादेः प्रवर्तनानिवर्तनासाधारणव्यापारादावेव। शक्यतावच्छेदकं च पूर्ववत् अनतिप्रसक्तं अनतिप्रसक्तं वा प्रवर्तनानिवर्तनासाधारणमेकमेव।

यदि तु प्रवर्तनानिवर्तनासाधारण्येन न एका विषयिता इत्याग्रहः, तदा अस्तु निवृत्तिविषयत्वावच्छिन्ने लिङादेर्लक्षणा, नञ्पदं तात्पर्यग्राहकमिति। तस्य च लिङर्थस्य स्वविषयकज्ञानविशेषजन्यानुमितिप्रयोज्याभावप्रतियोगित्वसंसर्गेण आख्यातार्थे कृतावेव अन्वयः, नञ्पदं च संसर्गविशेषेऽपि तात्पर्यग्राहकम्। अतो 'निरुक्तसंसर्गेण व्यापारवती कलञ्जभक्षणकरणिका कृतिः' इति शाब्दबोधे वृत्ते संसर्गस्य तत्त्वेन भानं पूर्ववत्।

अत्र हि निवारणाविषयकज्ञानात् 'कलञ्जभक्षणे अयं निवर्तताम्' इत्याकारकातिच्छाविषयीभूताभावप्रतियोगिकृतिविषयत्वरूपहेतुज्ञानम्, तेन कलञ्जभक्षणे अनिष्टसाधनत्वानुमितिः जायते। एवं 'नातिरात्रे षोडशिनं गृह्णाति' इत्यादौ विहितनिषेधे तादृशोक्तविधहेतुज्ञानात् षोडशिग्रहणे अतिरात्रानुपकारकत्वानुमितिद्वारा तद्व्यतिरेकेणैव इतराङ्गैः क्रतूपकारसिद्धेरपि अनुमानम्। उक्तानुमितेश्च प्रवृत्तिसामग्रीविघटकतया प्रवृत्त्यभावप्रयोजकत्वम्। तथाहि यत्र अनिष्टसाधनत्वानुमितिः तत्र प्राचीनकर्मवशात् द्वेषगतबलवत्त्वे सति बलवदनिष्टाननुबन्धित्वज्ञानरूपप्रतिबन्धकसंपादनात् तदभावघटितसामग्रीविघटनम्। यत्र तु इष्टसाधनत्वाभावानुमितिः तत्र तथा पूर्वावगतेष्टसाधनताज्ञाने प्रयोगविशेषावच्छेदेन अप्रामाण्यज्ञानात् तदभावरूपप्रवृत्तिसामग्रीविघटनम्। यद्यपि च उभयत्रापि प्रतिबन्धकसंसर्गाभावस्य अत्यन्ताभावादिरूपस्य नित्यतया नानुमितिनाश्यत्वम्, तथापि प्रतियोगिसत्त्वस्य अभावसंबन्धनाशकत्वात् अभावीयविशेषणतासंबन्धरूपस्य कारणतावच्छेदकसंबन्धस्य प्रतियोगिसत्त्वे नाशात् तस्याः प्रवृत्तिसामग्रीविघटकत्वं सुलभमेव। अतश्च लिङर्थस्य स्वविषयकज्ञानविशेषजन्यानुमितिजन्य–स्वनिरूपितकारणतावच्छेदकीभूतसंबन्धनाशकालीनाभावप्रतियोगित्वसंसर्गेण आख्यातार्थकृतौ अन्वयः इति फलितोऽर्थः। प्रथमं स्वपदं लिङर्थपरम्, द्वितीयं स्वपदं प्रवृत्तिपरम्। अत्र च दैववशसंपन्नप्रवृत्तिसामग्र्यनन्ताभावकालीनप्रवृत्त्यभावदशायां 'न कलञ्जं भक्षयेत्' इति प्रयोगापत्तिवारणाय उक्तं संबन्ध-

नाशकालीनेति । यत्र 'कलञ्जभक्षणं अनिष्टसाधनम्' इति वाक्यात् अनिष्टसाधनत्वादिशाब्दबोधः तत्र तज्जन्य-संबन्धनाशकालीनाभावदशायां उक्तप्रयोगापत्तिवारणाय अनुमितिजन्येति नाशविशेषणम् । अनिष्टान्वयव्यतिरेकानुविधायित्वादिहेत्वन्तरज्ञानजन्यानिष्टसाधनत्वानुमितिजन्य-संबन्धनाशकालीनप्रवृत्त्यभावदशायां तादृशप्रयोगापत्तिवारणाय स्वविषयकेत्यादि । अत्र निरुक्तसंबन्धेन निवारणाप्रयोज्याभाववर्तमानतादशायां तादृशप्रयोगापत्तिः, अतः स्वविषयकज्ञानमपि स्वध्वंसासमानकालीनस्वज्ञानोपधेयमेव विशिष्य तत्तद्व्यक्तित्वेन प्रविष्टं इति ज्ञापनाय विशेषणपदम् । अत्र प्रथमं स्वपदं प्रवृत्तिकारणतावच्छेदकीभूततत्तत्संबन्धव्यक्तिपरम्, द्वितीयं स्वपदं तु पूर्ववत् लिङाद्यतत्तद्व्यक्तिपरम् । तेन निरुक्तसंबन्धध्वंसासमानकालीनलिङादिज्ञानोपधेयहेतुज्ञानजन्यानुमितिजन्य इत्यादिः फलितोऽर्थः । एवं च अनुमितित्वस्य विशिष्याप्रवेशेऽपि न क्षतिः ।

तत् सिद्धं निवारणरूपस्य लिङर्थस्य अनेन संबन्धेन आख्यातार्थकृतौ अन्वयः इति । नञ्पदं तु स्वार्थस्य अभावस्य प्रतियोगितासंसर्गेण आख्यातार्थकृतौ अन्वयानुवादकं सत् लिङाद्यर्थतात्पर्यग्राहकं इति सर्वमनाकुलम् ।

तत् सिद्धं प्रवर्तना–प्रेरणा–विधि– अपरपर्यायभूता भावना नञ्रहितवाक्ये लिङर्थः । सैव च शब्दनिष्ठत्वात् वेदे शाब्दी भावना इत्युच्यते । तत्तच्छक्ततावच्छेदकं तु लिङ्त्वं लोट्त्वं च, न तु तव्यत्वादिकमपि, तेषां 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' (पा. ३।३।१६३) इति स्मृत्या प्रैषाद्यर्थकत्वेन विध्यर्थकत्वास्मृतेः । प्रमाणान्तरप्रमितेऽर्थे पुरुषनिष्ठा पुरुषप्रवर्तना प्रैषः । अतिसर्गः कामचारः । 'स्वाध्यायोऽध्येतव्यः' इत्यादौ तु अप्राप्तार्थत्वात् प्रैषत्वाभावेन विधौ लक्षणा इति **सांप्रदायिकाः ।** लिङाद्यादेशत्वं वा शक्ततावच्छेदकं श्रूयमाणत्वात् । **रहस्य. पृ. ३–१९.**

* **विध्यर्थबोधक्रमः ।** तदयं भाट्टमते बोधक्रमः । स्वर्गकामनिष्ठा यागकरणिका स्वर्गफलिका प्रयाजादीतिकर्तव्यताका भावना इत्यर्थभावनाबोधः ।

विधिनिष्ठा शक्तिग्रहकरणिका स्तुत्यर्थवादोपकृता प्रवर्तना इति शब्दभावनाबोधः शक्तिकल्पनेन लक्षणया वा उपपद्यते । ततः अर्थभावना निरुक्तप्रवर्तनाविषय इत्येकवाक्यतया महावाक्यार्थबोधः । अत एव विध्युपरक्ता भावना लिङर्थः इति **भाट्टसिद्धान्तः ।** विधिः प्रवर्तना, तदुपरक्ता तद्विशिष्टा अर्थभावना लिङ्प्रतिपाद्या इत्यर्थः । अर्थभावनाविशेषणत्वेनैव शब्दभावनाया अन्वयः । राजादिकृताज्ञादेः तथैवान्वयात् । तदन्वयेन योग्यत्वेन प्रवर्तनायामपि बलवदनिष्टाननुबन्धीष्टसाधनत्वं लभ्यते ।

'न सुरां पिबेत्' इत्यादौ प्रतिषेधवाक्यार्थोऽपि इत्थमेवोन्नेयः । एवमन्येऽपि अन्वयबोधाः स्वयमूह्याः इति । **मणि. पृ. ९३.**

* **विध्यर्थवादः** पयोहोमस्य, अग्निहोत्रे जर्तिलयवाग्वादिनिषेधः । १०।८।४।७. **मीको** पृ. १७४९ 'जर्तिलयवागून्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । * विध्यर्थवादः वैश्वानरसाम्नः 'षोडशयुत्तरे' इति वाक्यम् । प्राप्तानुवादोऽन्यविध्यर्थे अङ्गिरसां द्विरात्रे । १०। ५।१३।५३–५४ वर्णकं २. **मीको.** पृ. १८१ 'अङ्गिरसां द्विरात्रे षोडशिग्रहस्योपसंहारः' इत्यत्र अधिकरणं द्रष्टव्यम् । * **विध्यर्थवादयोः** एकवाक्यत्वम् । **सु.** पृ. ७८४. * विध्यर्थवादयोः एकवाक्यत्वाभावात् अर्थवादस्य धर्मे नास्ति प्रामाण्यं इति **पूर्वपक्षः ।** विध्यर्थवादयोः पदैकवाक्यत्वाभावेऽपि वाक्यैकवाक्यता अस्त्येव । अर्थवादो हि विध्यपेक्षितं प्राशस्त्यं समर्पयति । ततश्च अर्थवादा अपि धर्मे प्रमाणम् । **वि.** १।२।१. * विध्यर्थवादयोर्बलाबलम्— विध्येकवाक्यत्वं विना अर्थवादस्यानवसायात् विधिविरोधानवभासेऽपि स्तुतिनिन्दाज्ञानानुत्पत्तेः न विधिजन्येन ज्ञानेन अर्थवादजन्यस्य ज्ञानस्य बाध्यत्वलक्षणं विध्यर्थवादयोर्बलाबलं किंतु विध्येकवाक्यत्वानुसारेण अर्थवादस्वरूपावधारणलक्षणं तच्च विरोधकारणकत्वाभावात् न मुख्यपक्षाद्दौर्बल्यापेक्षम् । **सु.** पृ. ११७१. * विध्यर्थवादयोः शक्तिः विषयावबोधने तुल्या । **वा.** ३।४।११।३१ पृ. ९६७, * **विध्यर्थवादानां** प्रधानगुणभावे सत्यपि पूर्वापरोच्चारणकृतोऽन्यो विशेषो भवति । सर्वत्रैव तावत् पूर्वं विज्ञानं अनुपजातप्रतिद्वंद्वि, द्वितीयविज्ञानान्तरानुत्पत्त्यवस्थत्वात् आञ्जस्येन आत्मानं लभते । पश्चात्तनं तु



पूर्वविज्ञानावरुद्धज्ञानविषये उपजायमानं सत्यां विरोधावस्थायां तदानुगुण्यातिरिक्तेन रूपेण उत्पत्तुमेव न शक्नोति अन्यथात्वमपि प्रतिपद्यते । 'परस्तादर्थवादेषु स्वतन्त्रो जायते ह्यसौ । पुरस्तादर्थवादेषु तत्पूर्वा विधिकल्पना ॥' ३।४।११।३१ पृ. ९६६.

* **विध्यर्थविचारः । नैयायिकाः** इष्टसाधनत्वकृतिसाध्यत्वबलवदनिष्टाननुबन्धित्वज्ञानानां अन्यतमाभावेऽपि चिकीर्षाया अजननात् सर्वेषां तज्जनकत्वमविवादम् । अन्यथा चन्द्रमण्डलादावपि चीकीर्षाऽऽपत्तेः । एवं च प्रवृत्तिजनकलिङादीनां विनिगमनाविरहेण त्रितयेऽपि शक्तिः । पुष्पवन्तशब्दवच्च युगपदर्थत्रयबोधेन एका शक्तिः । शक्तित्रयेण वा युगपद् बोधः । अन्वयश्च तेषां धात्वर्थे । अतः त्रितयं विध्यर्थः **इत्याहुः ।**

अत्रेदमवधेयम् । कृतिसाध्यत्वं न विधिवाच्यम्, कृतौ यागानुकूलत्वबोधेन समानसंवित्संवेद्यतया यागे कृतिसाध्यत्वस्यापि भानात् ।

एवं इष्टसाधनत्वमपि न वाच्यम् । तस्यापि यागस्वर्गयोः साध्यसाधनभावबोधेनैव भानात् । अनन्यलभ्यस्य च शब्दार्थत्वात् ।

**न च** तत्र तत्प्रकारकबोधार्थं शक्तिकल्पनम्, इष्टत्वावच्छिन्नसाध्यतानिरूपितसाधनताज्ञानस्यैव प्रवर्तकत्वात् इति वाच्यम् । स्वर्गकामपदेन तत्र इच्छाविषयत्वबोधात् यागे तत्साधनत्वबोधेनैव इष्टसाधनत्वस्यापि बोधात् । 'स्वर्गः अनिष्टः, यागो वा असाधनं' इति बोधे स्वर्गकामादिपदार्थबोधाभावेनैव तद्वाक्यजन्यप्रवृत्त्यभावोपपत्तेः ।

एवं बलवदनिष्टाननुबन्धित्वमपि न वाच्यम् । अर्थवादेनैव तद्बोधात् । क्लमायासादिरूपानिष्टे इष्टोत्पत्तिनान्तरीयकदुःखाधिकत्वाभाव–बोधनेनैव बलवदनिष्टाननुबन्धित्वस्य लाभात् ।

किंच 'इष्टसाधनकृतिसाध्यबलवदनिष्टाननुबन्धिज्योतिष्टोमाभिन्नयागानुकूलकृतिमान् स्वर्गकामः' इति बोधे आख्यातार्थकृतेः विशेष्यतया प्रकारतया च भाने वैरूप्यापत्तिः इति दिक् ।

**अत्राभिधीयते ।** अभिधैव शब्दनिष्ठा प्रवर्तनारूपा विध्यर्थः । तथाहि, प्रवृत्तिर्द्वेधा स्वेच्छाधीना, पराधीना च । तत्र आद्यायां इष्टसाधनत्वादिधीः कारणम् । अन्त्यायां राजगुर्वादेः आज्ञाप्रेरणादिधीः । अनिच्छन्तमपि 'राजा मां प्रवर्तयति' इत्यनुभवात् । तेषां च प्रवृत्तौ प्रत्येकरूपेण न हेतुत्वं व्यभिचारात् **गौरवाच्च ।** किंतु इच्छादिनिष्ठप्रवर्तनात्वप्रकारकज्ञानं हेतुः । तच्च 'अयं मां प्रवर्तयति' 'विधिर्मां प्रवर्तयति' इत्याकारकम् । प्रवर्तना च प्रवर्तयितुः परप्रवृत्त्यनुकूलव्यापारविशेषः । स च चेतनस्य राजादेः आज्ञादिः । वेदे वक्तुरभावात् अचेतनस्य वेदस्य अभिधानात्मकः कश्चित् शब्दसमवेतः अलौकिकः । तथा च राजाज्ञादिज्ञानात् यथा प्रवृत्तिः तथा विधेरभिधाज्ञानात् इति सैव लिङर्थः । सा च शब्दाश्रितत्वात् शब्दशक्तिः । शब्दव्यापारत्वाच्च शाब्दभावना इत्युच्यते । भावनापदस्य व्यापारवाचकत्वात् । अत एव आख्यातार्थो भावनाऽपि व्यापार एव ।

ननु उक्तयुक्त्या अभिधादिपदाभिधेयत्वादिना ज्ञानात् अप्रवृत्तेश्च प्रवर्तनात्वेनैव अभिधाज्ञानं प्रवृत्तिहेतुः । तेन तज्ज्ञानं च कथं स्यात् ? किंच अभिधायाः अचेतनवेदरूपकर्तृशक्तित्वेन तस्यां व्युत्पत्त्यसंभवश्च इति **चेन्न ।** प्रवर्तनात्वविशिष्टे लिङ्त्वावच्छिन्नशक्तिस्वीकारात् तत एव तज्ज्ञानात् तथैव व्युत्पत्तेः । **तथाहि ।** स्तनपानार्थं रुदन्तं स्वं पश्यन्त्या मातुः स्तन्यदानार्थं प्रवृत्तिमुपलभ्य तज्जनकं ज्ञानं जिज्ञासुः स्वरोदनेन स्वाभिप्रायरूपप्रवर्तनानुमानमेव मातुः परिशेषात् तथा इति प्रतिसंधत्ते । ततश्च प्रयोजकवृद्धवचनश्रवणजन्म प्रयोज्यवृद्धस्य प्रवृत्तिं दृष्ट्वा तस्य तद्वाक्यजं प्रवर्तनाज्ञानं अनुमिनोति । ततः 'तस्य किं हेतुः' इति जिज्ञासायां वाक्यमेव तथा अवधारयति । ततः आवापोद्वापाभ्यां लिङः तत्र शक्तिं गृह्णाति । तदुक्तं 'अभिधाभावनामाहुरन्यामेव लिङादयः । अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचरः ॥' इति (वा. पृ. ३७८)।

अर्थात्मत्वं अर्थविषयकत्वं अर्थाश्रितत्वं वा । तथा च अर्थनिष्ठत्वात् अर्थभावना फलोत्पत्त्यनुकूलकृतिनोदना–

दिव्यापाररूपा आख्यातत्वावच्छिन्नशक्त्या चेतनाचेतनकर्तृसाधारणी कर्तृशक्तिः ।

द्विविधाऽपि भावना नियमतः कर्मकरणेतिकर्तव्यतारूपांशत्रयसाकाङ्क्षा तत्त्रितयसाकाङ्क्षत्वमेव उभयानुगतं भावनापदप्रवृत्तिनिमित्तम् ।

**ननु** इष्टसाधनताज्ञानं प्रवृत्तिमात्रे हेतुः, तथा च तद्विना प्रवर्तनामात्रज्ञानेऽपि कथं प्रवृत्तिः इति **चेत् ।** **सत्यम् ।** 'स्वर्गकामो यजेत' इत्यादौ प्रथमतो लिङ्पदार्थयोः अर्थभावनाशब्दभावनयोः अन्वयबोधः प्रवर्तनाविषयकृतिः इत्याकारको जायते । एकपदोपात्ततया धात्वर्थापेक्षया प्रत्यासत्तितारतम्यात् । तदुक्तं 'विधिभावनयोः श्रुत्या संगतिः पूर्वमिष्यते' इति । प्रवर्तनात्वविशिष्टस्य च विषयतया अर्थभावनायामन्वये इष्टभावनात्वं इष्टं भावयति उत्पादयति इति व्युत्पत्त्या इष्टसाधनत्वरूपम् । योग्यता तस्य विध्यर्थेऽपि । क्रियागतमिष्टसाधनत्वं न विध्यर्थे इति एतन्मते विशेषः । अर्थभावनाया इष्टसाधनत्वं क्रियागतेष्टसाधनत्वं विना न इति आक्षिप्तक्रियेष्टसाधनत्वधीरपि इति प्रवृत्तिर्नानुपपन्नेति । **मणि.** पृ. ८८–९२.

*** विध्याख्यशब्दभावनानिरूपणं** बाल-ग्रन्थगतं 'शब्दभावना' इति बिन्दौ द्रष्टव्यम् ।

*** विध्यात्मकः** वेदः । **के.**

*** विध्यादिः ।** यद्वाक्यमुपलभ्य पुरुषः कस्मिंश्चिदर्थे प्रवर्तते, कुतश्चिद्वा निवर्तते स विधिः । यथा लोके 'देवदत्त गामभ्याज शुक्लाम्' इति । तस्य 'अभ्याज' इति विध्यादिः । वेदेऽपि 'दर्शपूर्णमासाभ्यां यजेत' इति विध्यादिः । **भा.** ७।४।२।१०; * विध्यादिः विध्यन्तापेक्षः । ३।३।७।१४ पृ. ८९२.

*** विध्युत्तरनिषेधे** सर्वत्र विधिप्रमितेष्टसाधनत्वाभावस्यैव बोधनात् द्वयोर्वैदिकत्वे प्रयोगभेदेन प्रामाण्योपपत्तिः । **रहस्य.** पृ. १६.

*** विध्युद्देशः ।** न तावत् सर्वो विध्युद्देशः अर्थवादापेक्षः, शुद्धस्यापि 'वसन्ताय कपिञ्जलानालभते' इत्यादेः दर्शनात् । कश्चिदेव तु 'वायव्यं श्वेतमालभेत' इत्यादिः तदपेक्षः । तस्यापि विधिविधेयसंबन्धरूपावान्तरवाक्यार्थे अर्थवादपदनिरपेक्षस्य स्तुतिस्तुत्यसंबन्धात्मके महावाक्यार्थरूपे अर्थान्तरे एव तदपेक्षा । ततश्च एकदेशाक्षेपरूप एव तेषामाक्षेपः । अर्थवादाप्रामाण्येन महावाक्यार्थविवक्षायामपि अवान्तरवाक्यार्थविवक्षा दुर्निवारा । **सु.** पृ. ७. * फलान्तो **विध्युद्देशः** इति भाष्यकारलक्षितः विधिः । **बाल.** पृ. ४. * भूतिकामः ('वायव्यं श्वेतमालभेत भूतिकामः') इत्येवमन्तो विध्युद्देशः । तेन एकवाक्यभूतः 'वायुर्वै क्षेपिष्ठा देवता' इत्येवमादिः । **भा.** १।२।१।७ पृ. ११७, * **योऽसौ** विध्युद्देशः स शक्नोति निरपेक्षः अर्थं विधातुम् । शक्नोति च स्तुतिपदानां वाक्यशेषी भवितुम् । प्रत्यक्षश्च वाक्यशेषभावः । अतः अस्माद्विधेः स्तुतिमवगच्छामः । १।२।१।७. * यत्र विध्युद्देशः संदिग्धः, तत्र वाक्यशेषान्निर्णयो न विरुध्यते । यत्र तु असंदिग्धः, तत्र तद्बलीयस्त्वात् वाक्यशेषबाधेनैव भवितव्यम् । **वा.** ३।४।११।३० पृ. ९६३, * **विध्युद्देशात्** परस्तात् ये हि अर्थवादाः श्रूयन्ते तेषामस्ति दौर्बल्यम् । ये पुरस्तात् श्रूयन्ते ते मुख्यत्वात् बलीयांसो भवन्ति । ३।३।१।२ पृ ८०६ . * **विध्युद्देशस्य** अर्थवादं विना प्रवर्तनाशक्तत्वेन आनर्थक्यप्रसङ्गात् अर्थवादाङ्गत्वापत्तिः इति आशङ्क्य, अर्थवादाभावे तस्यैव प्ररोचनशक्त्याविर्भावेन अर्थवादं विनाऽपि प्रवर्तनाख्यस्वार्थसिद्धिः । **सु.** पृ. १४९७. * विध्युद्देशस्य प्रधानत्वेऽपि अर्थवादानुसारेणैव लब्धात्मकस्य उपक्रमविरोध्यर्थोपस्थापकत्वाभावः । **पराक्रमः.** ३।१. * विध्युद्देशस्य प्राधान्ये अप्राप्तविषयत्वाभ्यां अवगतं प्राबल्यं अभ्याहतं पूर्वपक्षे उक्तम् । ५।१. * यत्रैव चांशे स्तुतिर्दृश्यते तत्र **विध्युद्देशस्य** प्ररोचनाशक्तिरपगच्छति अन्यत्र तु अविहतशक्तिना विधानम् । **वा.** १।४।१३।२४ पृ. ३६७ * **विध्युद्देशे** सामान्यश्रवणे सति अनुष्ठानाय यत्र विशेषापेक्षा 'अक्ताः' इत्यादौ, तत्रैव वाक्यशेषावगतविशेषपरत्वं विध्युद्देशगतसामान्यशब्दस्य । यत्र तु सामान्येनैवानुष्ठानसिद्धेर्न विशेषापेक्षा तत्र न संकोचः इति पक्षः । **सोम.** १०।१।९.



*** विध्युद्देशगतत्वेऽपि** ऋगादिशब्दानां दौर्बल्यं भवति । ऋगादिशब्दाः स्वार्थपराः सन्तः न संबध्यन्ते इति बलात् लक्षणां प्रतिपद्यन्त । तेन सत्यपि विध्युद्देशगतत्वेऽपि दौर्बल्यम् । **वा.** ३।३।१।२ पृ. ८०६.

*** विधिकल्पकः** अर्थवादः– 'यजमानसंमितौदुम्बरी भवति' इति । **बाल.** पृ. ५१.

*** विधिकल्प्यः** विधिः यथा– विशेषणविधिः । **बाल.** पृ. १२.

*** विधिकाण्डस्य** सार्थवादस्य अतिदेशः साकमेधीयैन्द्राग्नैककपालयोः । ७।१।४।२२. **मीको.** पृ. २३० 'अतिदेशः साकमेधीयैन्द्राग्नैककपालयोः०' इत्यत्र अधिकरणं द्रष्टव्यम् । * विधिकाण्डस्य सार्थवादस्य वैश्वदेविकस्य वरुणप्राघासिकपञ्चसंचरेषु अतिदेशः । ७।१।३।१७–२१. **मीको.** पृ. २१४ 'अतिदेशः वरुणप्रघासगतपञ्चसंचरेषु०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

*** विधिकोपश्चोपदेशे स्यात् । ३।२।३।९ ॥**

अवघाताङ्गत्वेन हविष्कृन्मन्त्रोपदेशे सति 'अव रक्षो दिवः सपत्नं वध्यासं इत्यवहन्ति' इत्यादिभिर्मन्त्रान्तरविधिभिः 'हविष्कृदेहि' इति हविष्कृन्मन्त्रविधेः पाक्षिकता स्यात् इति । **सु.** पृ. १०९६.

*** विधिकोपाधिकरणन्यायस्य** स्वरूपं 'प्रबलप्रमाणविरोधे सति विधावपि लक्षणा' इति । **कु.** ३।२।४।९.

*** विधिगतं** लक्षणाश्रयणं न युक्तम् । **वा.** ३।४।११।३० पृ. ९६४.

*** विधिगतोस्रावनस्पति**शब्दाभ्यामेव अनुबन्ध्यावनस्पतियागयोर्निगमेषु द्रव्यदेवताभिधानम् । १०।४।१६। ३२–३३. **मीको.** पृ. ३८९ 'अनुबन्ध्यावनस्पतियागयोर्निगमेषु' इत्यत्र अधिकरणं द्रष्टव्यम् ।

*** विधिगतशब्देनैव** आवाहनादिमन्त्रेषु देवतानां प्रकाशनं सौर्यादिविकृतौ । १०।४।१३।२५. **मीको.** पृ. २१२९ 'देवतानां विधिगतशब्देनैव०' इत्यत्र अधिकरणं द्रष्टव्यम् । * विधिगतशब्देनैव देवताप्रकाशनं यागादौ कार्यम् । १०।४।१२।२३–२४. 'विधिशब्दाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

*** विधिचातुर्विध्यनिरूपणम् ॥ 'ननूत्पत्त्यादिभेदेन चातुर्विध्यं विधेः कथम् । प्रयोगविधिरेवैको भवतैवं प्रकीर्तितः ॥' १८ ॥** श्रुत्यादिभिरुपनीतांशत्रये पश्चाद्विधिरिति वदता प्रयोगविधिरेवैको विधिरित्युक्तं भवति । चतुर्विधं च तं समाचक्षते । **'उत्पत्तिविधिनामैको यो द्वितीये विचार्यते । विनियोगविधिस्त्वन्यो यस्तृतीये विचार्यते ॥१९॥ चतुर्थे पञ्चमे चैव प्रयोगविधिचिन्तनम् । अधिकारविधिस्त्वन्यो यः षष्ठाध्यायगोचरः ॥' २० ॥** तस्मादेकध्याभिधानमनुपपन्नमिति । उच्यते । **'उत्पत्त्यादित्रयाणां च विध्यन्वयबलाद्गतेः । स्वरूपेण प्रयोक्तृत्वाच्चातुर्विध्यं विधेर्मतम् ॥' २१ ॥** अप्रवृत्तप्रवर्तकस्वरूपस्य विधेर्यदा तत्सिद्ध्यर्थं कर्मस्वरूपपरत्वं भवति तदा विध्यन्वयप्रतिपत्तिवशादेव तद्विषयस्य कर्मणः प्रमाणान्तराप्राप्तिपरिकल्पनात् उत्पादकत्वसिद्धिः, तद्वशेनैव च तद्विषयस्य फलसाधनत्वं वा फलवदुपकारकत्वं वा कल्प्यते इति विनियोजकत्वम् । फलसाधने च कर्मणि पुरुषस्याधिकारः स्वामित्वं सिध्यतीत्यधिकारोऽपि विधिप्रमेय एव । स्वरूपेणैव च प्रयोजकत्वमिति युक्तं प्रमेयचातुर्विध्यात् विधेश्चातुर्विध्यम्, विधिशब्दो हि प्रवर्तकैकरसं विध्यात्मानमभिधत्ते तदन्वयानुपपत्त्यैवेतरत्त्रयं कल्पयतीति प्रमेयचतुष्टयसिद्धिः । न तु स्वरूपेणैव चातुर्विध्यम् । आह च— 'विधात्री च तृतीयोक्ता प्रयोगो यन्निबन्धनः' इति । **'चतुष्टयेऽपि चैकस्मिन् क्वचित्किंचिद्विवक्षितम् । एकं द्वयं त्रयं वाऽपि क्वचिच्चापि चतुष्टयम् ॥' २२ ॥** 'अग्निहोत्रं जुहोति' इत्युत्पत्त्यैकपरत्वम्, 'समिधो यजति' इत्युत्पत्तिविनियोगपरत्वं असति विधौ प्रकरणविनियोगासिद्धेरिति प्रागेव गतम् । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति विनियोगाधिकारप्रयोगपरत्वम् । उत्पत्तेः 'सोमेन यजेत' इत्यनेन सिद्धत्वात् । 'उद्भिदा यजेत पशुकामः' इति चतुष्टयपरत्वम् । एकस्याप्यन्यतोऽसिद्धेः यथा च विनियोजकत्वेऽपि विधेः श्रुत्यादीनां विनियोजकत्वं सिध्यति तथा प्रागेवाभिहितम् । **रत्नमाला.** पृ. १५९–१६०.

* विधितः एव सर्वत्र फलस्य कर्तृगामित्वसिद्धिः। सोम. ६।२।२, * यत्र साध्यत्ववाचि द्वितीयादिकं नास्ति तत्र साध्यत्वं उद्देश्यत्वं च द्वयमपि विधितः एव स्वर्गादेरवगम्यते। २।१।४.

* विधित्रैविध्यनिरूपणं ( कृतं ) परिसंख्यानियम-अपूर्वविधिभेदेन। भाट्ट. १।१।६.

* विधित्वं अनुवादेन बाध्यते। बाल पृ. १४३. * विधित्वं अयमत्र प्रवर्ततां इत्याकारकः प्रेरणाख्यो व्यापार-विशेषः। मीन्या. * विधित्वं अर्थवादत्वेन बाध्यते। बाल. पृ.१४४. * 'विधित्वं श्रौतमार्थं च भावनाकारका-श्रयम्'। श्रुत्या तावत् प्रयोजनभावना विधीयते। तद-न्यथानुपपत्तेस्तु अर्थात् कारकान्तराणि। वा. २।१।७। १३ पृ. ७०१ * अप्राप्तविषयप्रवर्तनस्य विधित्वम्। सु. पृ ५७३. * यदा हि भावनारूढं विधित्वं भावना-र्थत्वेनैव गृह्यते, तदा अर्थात् विशेषणविधौ सति अवा-क्यभेदं वक्ष्यामः। यदा तु तत् विशेषणार्थमित्यवधार्यते, तदा भावनायाः संनिहितप्रोषितत्वात् अनेकविशेषणयोगे सति यदर्थं विधित्वमवसीयते तस्यैवैकस्य विधानम्, नेतरस्य तदङ्गस्यापि इति वाक्यभेदो भविष्यति। वा. २।१।५।१६ पृ. ५०८. * यद्यपि 'विधित्वं प्रत्ययोपात्तं न नामपदमृच्छति' इति आधारा ग्रहोऽधिकरणवार्तिकोक्त-न्यायेन सर्वत्र धात्वर्थावच्छिन्ना भावनैव विधेया तथापि...। सु. पृ. ४४५.

‡ विधिनिगमभेदात् प्रकृतौ तत्प्रकृतित्वा-द्विकृतावपि भेदः स्यात्। १०।४।१६।३२॥

ज्योतिष्टोमे 'अग्नीषोमीयः' इति विधौ अज-शब्दः पठितः। प्रैषनिगमे तु 'छागस्य वपाया मेदसो-ऽनुब्रूहि' इति छागशब्दः पठितः। एवं प्रकृतौ विधौ निगमे च शब्दभेदात् विकृतावपि 'गौरनुबन्ध्यः' इत्य-त्रापि भेदः स्यात्। विधौ गोशब्दे पठितेऽपि निगमे उस्रा, उस्रिया, अही, मही, अदितिः इत्यादेरन्यतमस्य पाठः स्यात्. न तु गोशब्दस्यैव। एवं 'पृषदाज्येन वन-स्पतिं यजति' इति विधौ वनस्पतिशब्दे पठितेऽपि निगमेषु वृक्षः, पादपः, द्रुमः, नगः इत्यन्यतमस्य नामधेयस्य पाठः स्यात्। तत्प्रकृतित्वात् अनुबन्ध्यस्य अग्नीषोमीयप्रकृतिकत्वात् वनस्पतियागस्य च अनुयाज-प्रकृतिकत्वात्। तस्मात् विधिनिगमयोर्न शब्दैकत्वम्। इति पूर्वः पक्षः।

यथोक्तं वा विप्रतिपत्तेर्न चोदना। ३३॥

'गौरनुबन्ध्यः' इत्यस्य प्रैषनिगमे यथोक्तं शब्दं उस्राशब्दं पठेत्। न तु अन्यतमं गोः पर्यायम्। 'उस्राया वपायै मेदसोऽनुब्रूहि' इति हि तत्र उस्राशब्द आम्नातः। विप्रतिपत्तेः इति षष्ठ्यन्तम्। "विप्रतिपत्तेर्न चोदना। न विप्रतिपत्ति चोदकः प्रापयति। न च प्रकृतौ विधिनिगमभेदो विवक्षितः। 'छागस्य वपाया मेदसोऽनु-ब्रूहि' इत्येतत् वक्तव्यं इति विधीयते। तत्र अर्थात् विधिनिगमभेदो जातः। छागशब्दविधानं श्रुत्या गम्यते विधिनिगमभेदो लक्षणया। तस्मादाम्नानसामर्थ्यात् उस्रा-शब्देनाभिधानं कर्तव्यम्। तथा पृषदाज्ये देवतायां यो विधिशब्दः उक्तः, तेन वचनं कर्तव्यम्। विधिनिगम-विप्रतिपत्तिर्न चोद्यते। तस्मात् वनस्पतिशब्देन निर्देशः कर्तव्यः।" इति भाष्यम्। सुबोधिनी तु- विप्रति-पत्तेः विधिवाक्यश्रुतशब्दात् अन्यस्य शब्दस्य न चोदना, अन्यशब्दः पठितव्य इति न विधिरस्ति इति। कुतूहलं तु-श्रुतार्थविलक्षणतया प्रतिपद्यते गम्यते इति विप्रतिपत्तिः आर्थिकोऽर्थः- तस्य न चोदना नातिदेशः इति। "आर्थिकस्य विधिनिगमवैलक्षण्यस्य नातिदेशः" इत्य-प्येकोऽर्थः इति च। के.

* विधिनिर्णयः— 'विधितत्त्वे विमन्यन्ते बहुधा वादिनो यतः। अतो वार्तिककारीयैः क्रियते तत्र निर्णयः॥' १॥ कः पुनरयं विधिः। केचिदाहुः प्रमाणान्तरागोचरो लिङादिशब्दमात्रालम्बनः कार्यात्मा यागादिभावार्थगोचरः स्वर्गकामादिनियोज्यमात्मानं प्रेरयन् नियोगो विधिरिति। कथं पुनरेवंविधे विधौ लिङादीनां व्युत्पत्तिः। अत्राहुः। लोके तावल्लिङादिशब्दश्रवणानन्तरं प्रयोज्यवृद्धं प्रवर्तमानमुपलभमानो व्युत्पित्सुः पार्श्वस्थो नूनमस्य कार्यावगतिः संजाता। कथमन्यथा स्वतन्त्रः प्रवर्तते ईदृशी हि मे प्रवृत्तिः कार्यावगतिपूर्विकैव सर्वदा दृष्टा, अस्यापि मदविशेषात् तत्पूर्विकयैवानया प्रवृत्त्या भवितव्यम्। सा च कार्यावगतिः लिङादिशब्दानन्तर्यात् तत्कारणिकैवेति लिङादिशब्दानां कार्याभिधायित्वं निश्चिनोति। तत्र यद्यपि प्रवृत्त्यवगमयोरेकगोचरत्वात् प्रवृत्तेश्च क्रियागोचरत्वात् कार्यावगतिरपि तद्गोचरैव लिङादिभिर्जनितेति क्रियैव कार्यात्मिका लिङादि-शब्दानामर्थः, न तु तदतिरेक्यपूर्वमिति बुद्धिर्भवति तथापि वेदे षष्ठाद्यसिद्धान्तरीत्या कार्यं प्रति नियोज्यत्वेन स्वर्गकामादीनामन्वय इति स्थितम्। नियोज्यश्च स उच्यते यः कार्यं ममेदं कार्यमिति बुध्यते। न चाकाम-साधनं कामी कार्यतया बोद्धुमलम्। विनश्वरी च क्रिया तेन नेयं कालान्तरीयफलदानेन कामिनं रमयतीति नानया फलोपभोगार्थिनः कामिनो युक्तः संसर्गस्तेन तदन्वययोग्यं स्यात्तु कार्यं क्रियातिरिक्तं लिङादि-शब्दाभिवेयं निश्चीयते। तच्च प्रमाणान्तरापूर्वतयाऽ-पूर्वमिति च स्वात्मनि पुरुषं नियुञ्जानं नियोग इति च ख्यायते। तस्मिंश्च क्रियातिरिक्ते कार्ये वाच्ये यो लोके लिङादीनां क्रियायां प्रयोगः स लाक्षणिको भवति, अनेकार्थत्वस्यान्याय्यत्वात्। एवं च नैमित्तिक-निषेधाधिकारयोरसत्यपि फलवत्त्वे अपूर्वमेव वाक्यार्थो भविष्यति, तस्यैवाभिधेयत्वादिति। तदिदं बाल-संमोहनं महेन्द्रजालोपमं वा सम्यक् न्यायौषधसंस्कृत-स्वान्तानां न संमोहाय कल्पते। तथा हि। 'न कार्या-वगतिः क्वाऽपि प्रवृत्तेः कारणं मता। कर्तुरिष्टाभ्यु-पायत्वबोधात्सा सर्वदा यतः॥' २॥ यत्तावत् कार्यावगतिः प्रवृत्तिकारणमिति तत्र किं तत् कार्यं किञ्च तत्र प्रमाणमिति वक्तव्यम्, कृतिसाध्यं प्रधानं च कार्यमित्युच्यते तत्र कृतिसाध्यत्वं तावत् कृतौ सत्यां भावादसत्यां चाभावात् अन्वयव्यतिरेकाभ्यामवगम्यते। प्राधान्यं तु तदुद्देशेन कृतेः प्रवृत्तिः मानसप्रत्यक्षे-णावगम्यते। कृतिर्हि पुरुषप्रयत्नः, स च मानस-प्रत्यक्षवेद्यो यदुद्देशेन प्रवर्तते तद्विशिष्ट एव प्रत्यक्षे-णावगम्यते। सर्वो हि 'इदमुद्दिश्याहं प्रवर्ते' इति प्रवृत्तिवेलायामेव विशिष्टोद्देश्यसंबन्धिनं प्रयत्नं प्रत्यक्षेण जानातीति। प्रत्यक्षानुमानप्रमाणकं कार्यमिति चेत् किमिदानीं कृत्युद्देश्यत्वमात्रं कार्यत्वम्। यद्येवं ततो यदेव किञ्चित् रागद्वेषलोभादिभिरनर्थरूपमर्थं तयोद्दिश्य पुरुषः प्रवर्तते तत्सर्वं कार्यं प्राप्तम्। तत्र को दोषः? नैवंविधकार्यावगतिः प्रवृत्तिकारणं भवितुमर्हति, सत्यामपि तस्यां प्रवृत्त्यदर्शनात्। यो हि मोहात् सर्पाय अङ्गुलि-दानमुद्दिश्य प्रवर्तमानो मध्ये तस्यानर्थत्वं जानाति स तावत्ततो निवर्तते, तत्र कार्यता तावदुद्दिश्य प्रवृत्त्यैवा-ङ्गुलिदानस्य संजाता, तन्मात्रलक्षणत्वात्कार्यतायाः। सा च पश्चादनर्थत्वावगमेऽपि न बाध्यते। न खलु जानन्नपि अनर्थमुद्दिश्य न मे प्रवृत्तिः संजातेत्यध्यवस्यति, किन्तु अनर्थमेवोद्दिश्य मोहात्प्रवृत्तोऽस्मीत्यवगच्छति। तस्मात् प्रत्यक्षप्रमाणिका येयं कृत्युद्देश्यत्वमात्ररूपा कार्यता न तदवगतिः प्रवृत्तिकारणमिति सिद्धम्।

अथ कृत्युद्देशार्हता कार्यता सा केन प्रमाणेन प्रती-यते? न तावत् प्रत्यक्षेण। प्रवृत्त्यवस्थायामपि कर्मणः कार्यत्वसंदेहात्। भवति हि संदेहादपि क्वचित् प्रवृत्तिः। तत्र यः कार्यत्वं संदिहान एव कचिद्व्यापारे प्रवृत्तः स प्रवृत्तिवेलायामपि न कार्यतां प्राक्फललाभात् निश्चिनोति। वदन्ति हि न विद्मः कार्यमकार्यं वेति संदेहादेव प्रवर्ता-महे इति। मा भूत् प्रवृत्तिवेलायां प्रत्यक्षं कार्यत्वं फल-वेलायां भविष्यतीति चेत् कस्य पुनस्तदानीं कार्यत्वं प्रत्यक्षगम्यम्। न तावत्क्रियायाः नष्टत्वात्, नापि फलस्य तस्य सुखरूपमात्रोपलम्भात्। न हि कार्यत्वं नाम किञ्चित्तत्रावगम्यते। यो हि दैवनिर्मितमेघच्छायाजन्यं सुखमनुभवति, यश्च प्रयत्नजनितमातपत्रच्छायाजन्यम्, तयोरुभयोरपि प्रत्यक्षा सुखोपलब्धिस्तुल्यैव, न कृति-जन्ये सुखे कार्यत्वं नाम कश्चिदतिरेकः प्रत्यक्षमीक्ष्यते। भवतु वा सुखस्य प्रत्यक्षगम्या कार्यता, तत्साधनस्य तु व्यापारस्य न कदाचित् प्रत्यक्षेण कार्यताऽवगम्यते, न अनुमानेन न हि सुखस्य दृष्टं कार्यत्वं तत्साधनेऽ-नुमातुं शक्यम्। स्यादेतत्। कृत्यर्हता नाम कार्यता सा च यदाकारं वस्तु प्रतिपद्य तदुद्देशेन पुरुषस्य प्रवृत्त्यौत्सुक्यं जायते तदाकारभागितैव। कः पुनरसा-वाकारः? समीहितरूपत्वं तत्साधनत्वं वा। तादृशे ह्यर्थे स्वरसादेव पुरुषाणां प्रवृत्त्यौत्सुक्यं जायते। द्विविधं च समीहितम्। सुखं दुःखाभावश्च। तत्र सुखं प्रत्यक्षगम्यम्, दुःखाभावस्तु अनुपलब्धिगम्यः। तत्साधनता चान्वय-

व्यतिरेकगम्येति न प्रामाणिकी कार्यतेति युक्तमेतत् । किन्तु एवं सति सुखदुःखपरिहारातिरिक्तेषु तत्साधनतैव प्रवृत्तिकारणमङ्गीकृतं स्यात् । ततश्च 'गामानय' इत्यत्र गवानयनस्य सुखदुःखप्राप्तिपरिहारत्वाभावात् प्रवृत्तिहेतुभूतां कार्यतामभिदधानो विधिशब्दः समीहितसाधनताभिधायी स्यात् । तेन कार्यं गवानयनं कृत्यर्हं यथाविधे पुरुषाणां कृतिः प्रवर्तते तथाविधमित्यर्थः । तथाविधता तावन्न स्वयं समीहिततया संभवतीति तत्साधनतैव पारिशेष्यात् कार्यवाचिना शब्देनाभिहिता भवति । तथा च वेदेऽपि अपूर्वस्य स्वयं सुखदुःखपरिहाररूपत्वाभावात् तत्साधनतैव कृत्यर्हतेति कार्यरूपमपूर्वमभिदधानो लिङ् समीहितसाधनतामेवाभिदध्यादिति नैमित्तिकनिषेधाधिकारयोरपि साधनरूपापूर्वाभिधानात् तद्बलेनैवाश्रुतमपि फलं कल्पनीयं स्यात् । **ननु** न सुखत्वं कार्यत्वम्, तत्साधनेऽपि भावात् । न साधनत्वम्, सुखेऽपि भावात् । तदुभयानुगतं कार्यबुद्ध्यालम्बनं कार्यत्वं नाम प्रवृत्तिकारणमिति । **मैवम्** । न हि साधने कार्यत्वं नाम किञ्चित् प्रवृत्तिवेलायामुत्तरकाले वा प्रत्यक्षेणावगम्यते इत्युक्तम् । अतो नास्त्युभयानुगतः कार्यत्वं नाम कश्चिदर्थविशेषः । कर्तव्यशब्दस्तु अयमेकोपाधिवशात् उभयत्र प्रवर्तते, तद् द्वयमपि साध्यमानं स्वोद्देशेन पुरुषं प्रवर्तयतीति अनेनैवोपाधिना कार्यशब्दप्रवृत्तिः । तस्मान्न कार्यतावगतिः क्रियायां प्रवृत्तिकारणम्, अपि तु समीहितसाधनत्वज्ञानम् । भवतु वा समीहितसाधनत्वोपपन्नमेव कार्यत्वम् । तत्तु क्रियाया एवाभिधातव्यम् । तत्रैव प्रवृत्तिदर्शनात् । सत्यं लोके क्रियैव कार्यतया शब्देन प्रतिपाद्यते, वेदे तु फलकामिनियोज्यान्वयानुगुण्यात्स्थिरमेव कार्यं लिङादिभिरभिधीयते इति **चेन्मैवम्**, क्रियायामपि कामिनः कार्यतावगमाविरोधात् । नासौ फलसाधनीभवितुं समर्था भङ्गुरत्वात्, इति चेन्न, अपूर्वद्वारेणोपपत्तेः । नान्यद्वारेणान्यस्य साधनत्वं संभवति अतिप्रसङ्गात् । अवान्तरव्यापारो वा शक्तिर्वा साधनत्वमुपपादयति नापूर्वम् । तथा शक्तिमति व्यापारवति वाऽतीते शक्तिव्यापारयोः स्थित्यनुपपत्तेरिति चेत्, किमिदानीं काष्ठानां पाकसाधनत्वं नास्ति तत्रापि हि काष्ठेभ्यस्तैजसाः परमाणवः समुद्गताः स्थाल्युदरमनुप्रविशन्तः तण्डुलान् विक्लेदयन्ति । न च तेषां द्रव्यरूपाणां काष्ठावान्तरव्यापारत्वं तच्छक्तित्वं वा समस्तीति न तद्द्वारेण काष्ठादीनां साधनभावः स्यात् । मा भूदिति चेन्न, सर्वलोकप्रसिद्धिविरोधात् । 'काष्ठैः पचति' इति निर्विवादप्रयोगात् । तस्मात् यदेव येन समीहितफलोद्देशप्रवृत्तेन तदुपायभूतमन्तरा साध्यते तदेव तस्यावान्तरव्यापारत्वेन अभिधीयते । तेन संभवत्येवापूर्वस्य कर्मावान्तरव्यापारत्वम् । यदि चैवं नेष्यते ततोऽपूर्वं प्रत्यपि साधनत्वं कर्मणो न स्यात् । तदपि न कर्मानन्तरं जायते स्विष्टकृदाद्युत्तरतन्त्रानुष्ठानप्रतीक्षणात् । तत्रावश्यमुत्पत्त्यपूर्वाणि अवान्तरव्यापारत्वेनैषितव्यानि । उत्पत्त्यपूर्वाण्येव परमापूर्वस्य कारणानि, न यागादीनि, इति चेत्, न, असिद्धत्वादशब्दार्थत्वाच्च । अधिकारवाक्ये फलकामिनियोज्यान्वयानुगुणापूर्वाभिधायित्वे स्थिते पश्चादाग्नेयादिवाक्येष्वपूर्वाभिधानसिद्धिः प्राक्च लोकावगतक्रियाभिधायित्वमेव तेषु संभवतीत्यसिद्धत्वादुत्पत्त्यपूर्वाणां न परमापूर्वसाधनत्वेन अन्वयसंभवः । न च यजतेरपूर्वाभिधायित्वम्, येनावान्तरापूर्वाणां प्रत्ययार्थपरमापूर्वं प्रति कारणत्वं स्यात् । तस्मात् यजिरेव करणम् । **किञ्च** कार्यत्वमेवापूर्वस्य नोपपद्यते कृतिसाध्यं हि कार्यमुच्यते । कृतिश्च पुरुषप्रयत्नः । न च प्रयत्नसाध्यता अपूर्वस्य संभवति, चिरविनष्टे प्रयत्ने तदुत्पादात् । प्रयत्नेन हि यागः, ततोऽवान्तरापूर्वम्, ततः पश्चात् अधिकारापूर्वम्, तस्मात् कार्यत्वानुपपत्तेर्न कार्याभिधायिलिङ्वाच्यता अपूर्वस्य संभवति । तत्रावश्यं प्रयत्नसाध्यत्वमपूर्वस्य यागावान्तरापूर्वद्वारमाश्रयितव्यम् । तद्वत् यागस्यापि फलसाधनत्वमपूर्वद्वारं किमिति नेष्यते ? मा वा भूत् फलसाधनं क्रियापूर्वं साधनं तावद्भवत्येव, तावतापि कार्यतया तामवगन्तुमर्हत्येव पुरुषः, यस्मिन् अकृते समीहितं न प्राप्यते, कृते च प्राप्यते साक्षात्प्रणाड्या वा तदेव कार्यतया बुध्यते, न तु साक्षात् भावविशेषस्तत्रोपयोगी । अवश्यं च कामिनः क्रियायामपि कार्यावगतिरेषितव्या । कथमन्यथा स्वतन्त्रः प्रवर्तते । सत्यम्, अस्त्येव तत्रापि कार्यावगतिः, न तु शाब्दी किन्तर्हि



आर्थी, कामानुगुणापूर्वसाधनत्वात् । तामपि कार्यतया कामी प्रतिपद्यते, इति चेन्न, विकल्पासहत्वात् । किं फलप्रसूता कार्यावगतिः क्रियायामुतापूर्वप्रसूता । न तावदपूर्वप्रसूता, काम्येषु विधेरनुष्ठापकत्वानभ्युपगमात् । यदि हि विधिनिबन्धना कार्यावगतिः क्रियायाः स्यात्, ततो विध्याक्षिप्तानुष्ठानतया करणांशस्यापि विधेयत्वप्रसङ्गः । फलप्रसूतत्वमपि भवदुक्तया नीत्या न सिध्यति, न हि फलकामः पुरुषः क्षणिकं कर्म कार्यतया अवगन्तुमलम् । तस्याः साक्षात्साधनत्वायोगात् अपूर्वस्य चावान्तरव्यापारत्वाभावात् तद्द्वारेणाप्यसाधनत्वात् । साधनसाधने च साध्यार्थिनः कार्यावगमानुपपत्तेः । तस्मात् क्रियायाः कार्यत्वावगतिः न फलायत्ता, नापि विध्यायत्ता संभवतीत्यननुष्ठानमेव तस्याः प्रसज्ज्येत । तस्मादविधिप्रसूतं काम्यानुष्ठानं फलायत्तमिच्छता अवश्यं क्रियायाः फलसाधनता वा साधनसाधनेऽपि वा साध्यार्थिनः कार्यावगतिरेषितव्या । ततश्च शब्देनापि शक्यते एव फलकामस्य कार्यतया क्रिया प्रतिपादयितुमिति नापूर्वाभिधानसिद्धिः । यच्चान्यद्वक्तव्यं तत्सर्वं **अङ्गनिर्णये** एव **वक्ष्यामः** ।

अन्यन्मतं समीहितसाधनत्वमेव भावनाया लिङा अभिधीयते । तदवगतेरेव प्रवृत्तिकारणत्वेन आत्मनि दृष्टत्वात् । ननु इच्छैव प्रवृत्तिकारणम् । सत्यम्, सा तु उत्पन्ना प्रवृत्तिकारणं नावगता । शब्दस्य च प्रमाणत्वादवगतिजननद्वारेण प्रवृत्तिकारणत्वमिति नेच्छाभिधायित्वसंभवः । इच्छा हि सुखदुःखप्राप्तिपरिहारयोरन्यतरत्तदुपायं चाधिकृत्य समुत्पद्यते, तेन लिङ्शब्दानन्तरं प्रवर्तमानस्य प्रयोज्यवृद्धस्य प्रवृत्तिहेतुभूतेच्छासंपादकत्वेन समीहितसाधनत्वावगतिरेव क्रियायां व्युत्पित्सुना कल्प्यते । तस्यां च शब्दानन्तर्यात् शब्दस्य तदभिधायित्वं निर्णीयते । **ननु** मदिरास्वादस्य समीहितसाधनत्वादनुष्ठानं स्यात् । न, प्रबलेन द्वेषेण निरुद्धत्वात् । यथैव हि इच्छा प्रवृत्तेः कारणं तथैव द्वेषोऽपि निवृत्तेः । द्वेषश्च दुःखसुखपरिहारतदुपायानधिकृत्य प्रवर्तते । सुरापानं च महानर्थसाधनत्वेन निषेधेन प्रतिपादितं द्वेषगोचरतया नानुष्ठानमर्हति । यस्तु संनिहितेनाल्पीयसाऽपि सुखेनाक्रान्तस्वान्तो महान्तमनर्थं नालोचयति न वा आद्रियते स प्रबलेन रागेण प्रतिक्षिप्यमाणचित्तः प्रवर्तते एव सुरापाने । तस्मात् समीहितसाधनत्वेन भावना विधिना सामान्येन बोधिता पदान्तरसमर्पितेन स्वर्गादिना निराकाङ्क्षीभवतीत्येतत्स्वर्गकामाधिकरणे (६।१।१) व्युत्पाद्यते । यत्र फलविशेषसमर्पकं पदान्तरं समानवाक्ये नास्ति तत्र प्रकरणादिना फलं कल्प्यं भवतीति प्रकरणाधिकरणे (३।३।४) व्युत्पाद्यते । प्रकरणादीनामप्यभावे अर्थवादोत्थेन फलेन समन्वय इति रात्रिसत्राधिकरणे (४।३।८) स्थितम् । तस्याप्यभावे अध्याहृतेन फलेनान्वय इति विश्वजिदधिकरणे (४।३।७) सिद्धम् । धात्वर्थस्तु सर्वत्र समानपदोपात्तोऽपि बलीयस्या विधिश्रुत्या साध्यांशात् प्रच्यावितः प्रत्यासत्त्या करणांशेन निविशते इति भावार्थाधिकरणार्थः (२।१।१) । तथा चोक्तम् 'तथा धात्वर्थकार्यत्वे पदश्रुत्योपदर्शिते । भावनाया विधिश्रुत्या पुरुषार्थांशसाध्यता ॥' इति । 'श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते ॥' इति च । तस्मात् इष्टसाधनतैव विधिर्लिङाद्यभिधेयेति तद्युक्ताया भावनायाः फलमेव भाव्यं धात्वर्थस्तु करणमिति । आचार्यस्य तु 'अभिधाभावनामाहुरन्यामेव लिङादयः' इति वदतोऽन्यादृशं विधितत्त्वं अभिमतं लक्ष्यते । **किं पुनस्तदुच्यते** । इदं तावत् सिद्धं यथा समीहितसाधनत्वावगतिमन्तरेण चेतनस्य स्वतन्त्रा प्रवृत्तिर्न घटते इति लिङ्शब्दश्रवणानन्तरं प्रवर्तमानस्य पुरुषस्य समीहितसाधनत्वावगतिः शब्दात् संजातेति कल्पनीयम् । तत्तु समीहितसाधनत्वं किमभिधानत एवोपात्तं किं वाऽर्थान्तराभिधायिना विधिशब्देन तदनुपपत्त्या बोधनीयमिति चिन्तनीयम् । तत्र नाभिधायकता युक्ता, संविद्विरोधात् । न हि यागानुरक्तो व्यापारः इष्टार्थहेतुरित्यस्माद्यजेतेत्यस्माच्च शब्दात् तुल्याऽवगतिः सहप्रयोगाच्च । लोके हि समीहितसाधनतावचनो विधिशब्दश्च युगपत्प्रयुज्यमानौ **दृष्टौ** । माणवक संध्यामुपासीनस्य तेऽभ्युदयो भविता, तस्मात्संध्यामुपास्वेति । न च पर्याययोः सह प्रयोगो भवति । लोकप्रमाणकश्च शब्दार्थावगम इति नेष्टसाधनताभिधायित्वं लिङादीनाम् । तस्मात् वरं कार्याभिधायित्व-

मेवाश्रयितुम् । ननु एतदयुक्तं कार्यमिति यदि कृतिं प्रति उद्देश्यमभिधीयते, ततस्तादृशी कार्यता सर्ववस्तूनामविशिष्टेति न तदवगतिः प्रवृत्तिहेतुः । पारिशेष्यात् कृत्यर्हता कार्यता वक्तव्या । तदवगतिर्हि प्रवृत्तिहेतुः, कृत्यर्हता च न सुखदुःखपरिहारतदुपायव्यतिरेकिणी काचिदस्ति । तेन आनयनादिक्रियाणां स्वरूपेण सुखदुःखपरिहाररूपत्वाभावात् तदुपायत्वमेव कृत्यर्हतेति क्रियादिविषयायाः कार्यावगतेः प्रवृत्तिहेतुभूतायाः समीहितसाधनत्वमेवावलम्बनम् । तदुक्तम् ‘ कर्तुरिष्टाभ्युपाये हि कर्तव्यमिति लोकधीरिति । पुंसां नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्तकः ॥ ’ इति च । तेन लिङ्शब्दोऽपि कृत्यर्हतारूपकार्यमभिदधत् समीहितसाधनत्वमेवाभिदध्यादिति न तन्मतादस्य विशेषः स्यात् । उच्यते । अयमस्ति विशेषः यत्समीहितसाधनता न तत्स्वरूपेणाभिधीयते किन्तु लिङ्शब्दः कृत्यर्हतारूपं सुखदुःखपरिहारतदुपायसाधारणमभिदधाति । तस्मिंस्तु अभिहिते क्रियायाः स्वयं सुखत्वाद्यभावात् पारिशेष्यात्तदुपायत्वं निश्चीयते । तथा च कर्तव्यतावचनो भावनायां पुरुषं प्रवर्तयतीति भूयान् भाष्यवार्तिकयोर्व्यवहार इति । इदमपि मतं अभिधाभावनामाहुरित्याद्यननुगतम् । किञ्च कार्यशब्देनापि सह विधिशब्दः प्रयुज्यते कार्ये ते संध्योपासनमतः तत्कुरुष्वेति । यद्यपि चायं प्रयोगः कर्तृकर्मगतसंख्याभिधानभेदेनात्यन्तापर्यायत्वात् उपपद्यते तथापि न कार्यस्य लिङर्थता युक्ता । तथाहि अकार्येऽप्यर्थे कार्यतामङ्गीकृत्य लिङादिप्रयोगो याच्ञायां दृश्यते । कश्चिद्धि कञ्चिदेवं याचते यद्यप्येतत्तव निषिद्धत्वादकार्यमेव तथापि मत्कृते कुरुष्वेति । कार्यार्थत्वे तु व्याघातः स्यान्न ह्येवं प्रयुज्यते यद्यप्येतदकार्यं तथापि कार्यमिति एवं ब्रुवन् हास्यो भवति । तस्मात् कृत्यर्हता विधिश्च भिन्नावर्थौ । किं पुनरिदमभिधाभावनेत्युक्तम् ? सर्वशब्दानामेव अर्थप्रतीत्युत्पत्तावस्ति यो व्यापारः सोऽभिधा । लिङादीनां त्वसौ व्यापारः पुरुषप्रवृत्तिभवनफलत्वात् भावनेति प्रवर्तनेति च गीयते । कश्चिदाह न शब्दव्यापारः संभवति गुणत्वात् द्रव्यत्वेऽपि विभुत्वादिति । तदयुक्तम् ; गुणस्याप्यरुणादेर्द्रव्यावच्छेदव्यापारदर्शनात् । विभूनां चात्मादीनां ज्ञानादिव्यापारसंभवात् । स्पन्दसमवायस्तु न संभवति न चासौ अस्माभिः शब्दस्येष्यते । कस्तस्य व्यापारः स्वज्ञानमेव तज्जनितो वा संस्कारस्तद्योगी हि शब्दोऽर्थप्रतीतिं जनयति । तथा चोक्तम्– ‘ शाब्दं शब्दविज्ञानादसंनिकृष्टेऽर्थे विज्ञानम् ’ इति । ‘ पूर्ववर्णसंस्कारसचिवोऽन्त्यवर्णो वाचकः ’ इति च । यदा अयमागन्तुकं धर्मं प्राप्य कार्याय पर्याप्तो भवति, स एवागन्तुकधर्मस्तस्य व्यापार इत्युच्यते तेन ज्ञानसंस्कारयोः शब्दव्यापारत्वमुपपन्नम् । ननु ज्ञानस्याभिधात्वमयुक्तं ज्ञानं प्रति हि कर्मीभूतः शब्दः कर्तृत्वं करणत्वं वा तस्याभिधानं प्रत्यभ्युपगम्यते स कथमेकस्मिन्नेव व्यापारे कर्मत्वं कर्तृत्वकरणत्वयोरन्यतरच्च प्रतिपद्येत । परशुवदिति ब्रूमः । परशुर्हि उद्यमननिपातनयोः कर्माऽपि सन् तदद्वैधीभावलक्षणफलावच्छेदेन छिनत्तिपदाभिधानयोस्तयोरेव करणं भवति, सर्वमेव हि करणं कर्तृव्यापारगोचरः । तथा ज्ञानस्य शब्दविषयस्याप्यर्थप्रतिपत्तिलक्षणफलावच्छेदलब्धाभिधाभिधानस्यार्थ एव कर्म । शब्दस्तु फलान्तरप्रवृत्तव्यापारव्याप्यतया तस्यामवस्थायां करणम् । स्वातन्त्र्यविवक्षायां च कर्तृत्वमनवद्यम् । अनेनैव न्यायेनार्थकर्मकस्याप्यभिधाव्यापारस्य पुरुषप्रवृत्तिभवनफलावच्छेदलब्धशब्दभावनाभिधानस्य पुरुषप्रवृत्तिफलावच्छेदलब्धप्रवर्तनाभिधानस्य च प्रवृत्तिकर्मत्वं पुरुषकर्मत्वं च व्याख्यातम् । तेनैक एव व्यापारो यदा जानातिना विषयप्रकाशनफलावच्छिन्नोऽभिधीयते, तदा विषयीभूतः तत्फलताकशब्द एव कर्म भवति शब्दं जानातीति । यदा तु स एवार्थप्रतिपत्तिफलावच्छिन्नोऽभिदधातिना अभिधीयते तदा प्रतिपत्तिरूपफलभागर्थः कर्म भवति अर्थमभिदधाति शब्द इति यदा तु स एव पुरुषप्रवृत्तिफलावच्छिन्नो भावयतिना अभिधीयते तदा भवनफलभाक् प्रवृत्तिः कर्म भवति प्रवृत्तिं भावयति शब्देनेति यदा तु पुरुषप्रवृत्तिफलावच्छिन्नव्यापाराभिधायिना प्रवर्तयतिना अभिधीयते तदा प्रवृत्तिफलभाक् पुरुषः कर्म भवति पुरुषं प्रवर्तयतीति । एवं संस्कारेऽप्यभिधाव्यापारे यथासंभवं योज्यम् । नहि व्यापारस्वरूपापेक्षः कर्मभावः, तथा सति चलत्यभिहिताऽपि क्रिया गच्छत्यभिहितेव



सकर्मिका स्यात् । तथा प्रयत्नोऽपि करोतिभावयतिभ्यामिव प्रयतिनाऽप्यभिहितः सकर्मकः स्यात् । तथा छेत्तृव्यापारोऽपि उद्यच्छतिनियच्छतिभ्यामिव छिनत्तिनाऽप्यभिहितः परशुकर्मकः स्यात् । ताभ्यामेव वाऽभिहितः छिनत्त्यभिहित इव वृक्षकर्मकः स्यात् । तस्मादेक एव व्यापारः फलभेदेन निरूप्यमाणस्तं तं कर्मभेदं भजते । यदा फलानपेक्षेण स्वरूपेण निरूप्यते प्रयततेचलतीत्यादिभिस्तदाऽकर्मको भवति । यदा तु फलाधीननिरूपणीयेन रूपेण निरूप्यते तदा सकर्मकः तत्र येन धातुना यत्फलाधीननिरूपणं येन रूपेण क्रिया अभिधीयते तद्वाच्यायां क्रियायां तत्फलभाग् वस्तु कर्म भवति । यत्तु केनचिदात्मनो ज्ञानकर्मतां निराकुर्वता परसमवेतक्रियाफलभागित्वं कर्मलक्षणमुक्तं तदतिव्यापकं पूर्वोक्तेष्वपि परश्वादिषु छिदादिकर्मत्वप्रसङ्गात् । अव्यापकं च देवदत्तः पावमानीभिरात्मानं पुनातीत्यादिषु स्वसमवायिक्रियाफलभागित्वेनापि देवदत्तस्य पुनातिकर्मत्वात् । तथा च वेदे ‘ पुनात्येवाग्निं पुनीत आत्मानम् ’ इति प्रयोगो दृष्टः । तस्मात्पूर्वोक्तमेव कर्मलक्षणम् । न चैवं गतौ गन्तुः कर्मत्वप्रसङ्गः, गच्छतिर्हि गन्तव्यप्राप्त्यधीननिरूपणीयेनैव रूपेण क्रियामभिदधातीति ग्रामादेरेव तत्कर्मत्वं न गन्तुः । एवं च ज्ञेयावभासफलाधीननिरूपणीयेनैव रूपेण जानाति संविदित्यादिभिरभिहितायां ज्ञानक्रियायामात्मनोऽप्यहंवित्तौ भासमानत्वात् कर्मत्वं समर्थितम् । आह अस्त्वभिधा व्यापारः न त्वस्य पुरुषप्रवर्तकत्वं लिङभिधेयत्वं च संभवति न हि प्रेक्षाकारी कश्चिदभिधामात्रावगमात् प्रवर्तते, समीहितसाधनत्वावगमाधीनत्वात् प्रवृत्तेः । न चासावर्थप्रतिपत्तिलक्षणफलेन्नेया शब्दान्तराभिधावदभिधेयाऽपि भवितुमर्हति । उच्यते । सत्यं फलसाधनत्वं प्रवर्तकत्वं तत्तु न शब्दस्याभिधेयमित्युक्तम् । अतो व्युत्पित्सुर्बालकः प्रयोज्यवृद्धं प्रवर्तमानमुपलभ्य प्रवृत्तिहेतुभूतामिष्टसाधनतावगतिं शब्दजनितामध्यवसाय पूर्वोक्तेन न्यायेन साक्षाच्छब्दस्य जनकत्वासंभवात् येनाभिहितेन फलसाधनत्वं कल्पयितुं शक्यते तदभिधायी लिङ्शब्द इति निश्चिनोति । ततः स्वव्यापारस्यार्थप्रतिपत्त्यैव कल्पितस्य प्रवर्तनात्मरूपेणाभिधानं लिङादिभिः कल्प्यते । प्रवृत्तिफलता च प्रवर्तनारूपता । न चैवंरूपताऽर्थप्रतिपत्त्यैव कल्पयितुं शक्या इत्यनन्यलभ्यत्वात् अभिधान्तरविलक्षणां लिङ्शक्तिं कल्पयति । एवंविधविध्यवरुद्धा च भावना पुरुषार्थसाधनतया निरुचीयते । न ह्यपुरुषार्थफलस्य व्यापारस्य प्रवर्तनारूपविध्यन्वयसंभवः । प्रेक्षापूर्वकारिणां निष्फले प्रवर्तयितुमशक्यत्वात् । तदेवं अभिधाव्यापारमेव प्रवर्तनारूपेणाभिदधाना लिङादयस्तद्बलादेव फलसाधनत्वं बोधयन्ति । ननु अस्मिन् पक्षे प्रवर्तनारूपस्य विधेः प्रवर्त्यापेक्षत्वात् प्रवर्त्यसमर्पकत्वेनैव स्वर्गकामादिशब्दाः संबध्येरन् फलसमर्पकतया । तथा नामेति केचित् । न चैवमफलताप्रसक्तिः प्रवर्तत्वानुपपत्त्यैव काम्यमानस्य फलत्वकल्पनात् । भाष्यवार्तिकयोस्तु फलपरत्वमेव स्वर्गकामादिशब्दानां लक्ष्यते, युक्तं चैतत् तथा हि यद्यस्मिन् पक्षे कार्यात्मकविधिपक्षवत् कर्तृनियोज्ययोरभेदापत्तिः विधेयक्रियाविषयं कर्तृत्वं विधिविषयं तु नियोज्यत्वमिति विषयभेदात् तथाऽपि न तत्परत्वं कामशब्दानां युक्तं अप्राप्तार्थपरं हि शास्त्रं इह च विधिवशादेवैतावदवगतं अस्ति कश्चित् नियोज्यः स चासौ योऽस्य विध्यन्वितस्य व्यापारस्य शेषी समर्थश्चानुष्ठातुं न ह्यस्वार्थव्यापारे कश्चित् प्रवर्तयितुं शक्यते । नाप्यसमर्थः स एव वा शेषी यदभिलषितफलसाधनोऽयं व्यापार इत्येतावति कामशब्दमन्तरेणैवावगते फलविशेषमात्रे चाऽनवगते तत्परत्वमेव कामशब्दानां युक्तम् । तदेवं विधिशब्देनैव प्रवर्तनारूपविधिमभिदधताऽर्थाद्विधेयस्य कर्तव्यता फलसाधनता चावबोध्यते इत्यभिप्रायेण कर्तव्यतावचनः प्रत्ययः ‘ श्रेयःसाधनता ह्येषां नित्यं वेदात् प्रतीयते ’ इति च व्यवहारः । ननु स्वव्यापारेऽभिधीयमाने स्वरूपाभिधानप्रसङ्गः, न ह्यनभिधाय विशेषणं विशिष्टमभिधातुं शक्यम् । मैवं वोचः । उक्तं हि ‘ विशिष्टग्रहणं नेष्टमगृहीतविशेषणम् । अभिधानाभिधाने तु न केनचिदिहाश्रिते ॥ ’ इति । तुल्यं चैतदिष्टसाधनताविधिपक्षेऽपि । तत्रापि तु नेष्टसाधनतामात्रं विधिः अपि तु [ कर्तुमसंभवात्पारिशेष्यात् ] कर्तुरिष्टसाधनता न चाख्यातं कर्त्रभिधायि तत्रावश्यं भावनाक्षेपावगतकर्तृविशेषितेष्टसाध-

नताऽभिधीयते इत्याश्रयणीयम् । तथाऽस्मिन् पक्षे प्रत्यक्षावगतलिङ्शब्दादिभ्यः प्रवर्तनावगतेः न शब्दस्वरूपविशिष्टाभिधाव्यापाराभिधानादिदोष इति । न्यायविदां त्विष्टसाधनत्वमेवाभिमतम्, न च संविद्विरोधः तेन रूपेणाभिधानाभावात् । प्रवर्तनारूपेण तु शब्दोऽभिधत्ते प्रवृत्तिहेतुश्च धर्मः प्रवर्तना । सा चापौरुषेये वेदे प्रैषादीनामसंभवात् पारिशेष्यादिष्टाभ्युपायतैव निश्चीयते तेन अभिधाव्यापारप्रवर्तनाभिधानवत् प्रवर्तनारूपेणेष्टसाधनतां शब्दोऽभिधत्ते न स्वरूपेणेति न प्रतीतिविरोधः । इदमेव भगवतो **मण्डनमिश्रस्यापि** 'पुंसां नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्तकः । प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम् ॥' ( विवि. २४३ ) । 'एवङ्कारं च प्रवर्तनाप्रत्ययः' इत्यादिवदतोऽभिमतम् । एवं चानेकार्थत्वं कल्पितं न भवति इतरथा हि प्रेषणमध्येषणमभ्यनुज्ञानमिष्टसाधनत्वं चेति बहवोऽर्थाः शब्दस्य कल्प्येरन् । प्रवर्तनासामान्यवाचित्वे तु लाघवं स्यात् तत्रापि तु रागद्वेषमोहादीनां प्रवृत्तिहेतूनामवाच्यत्वादेवं वक्तव्यं योऽवगम्यमानतया प्रवृत्तिहेतुस्तदभिधायी लिङ्शब्द इति । न च कार्यमेव ज्यायः समकनीयोभिः प्रतिपाद्यमानं प्रैषादिव्यपदेशभाक् सर्वानुगतं शब्दार्थ इति सांप्रतम् । अकार्यत्वाभ्युपगमेनैव याच्ञायां लिङ्प्रयोगादित्युक्तम् । तस्मात् प्रवर्तनासामान्यं शब्दार्थः । एवं च 'विशेष एव शब्दार्थो दृष्टरूपान्वयोऽपि हि । न च प्रवर्तनाबाध इष्टशक्तेर्विनार्थऽवान ॥' इत्यत्र श्लोके पूर्वार्धेन परमतमुपन्यस्योत्तरार्धेन स्वमतमुपन्यस्तवानिति व्याख्यातव्यम् । प्रवर्तनासामान्यमभिदधता लिङ्शब्देन निर्विशेषसामान्यबोधस्यानर्थक्यापत्तेरपौरुषेये च वेदे पुरुषधर्माणां प्रैषादीनां विशेषाणामसंभवात् पारिशेष्यादिष्टसाधनतैव बोध्यते इति 'अभिधाभावनामाहुः' इत्यस्यापि वार्तिकस्यायमेवार्थः । अभिधीयते इत्यभिधा प्रवर्तना कर्तव्यता वा सैव च पुरुषप्रवृत्तिं भावयतीति भावना तामाहुरिति । अथवा अभिधायाः शब्दस्य भावना अभिधाभावना सैव प्रवर्तना परसमवेताऽपि शब्देन पुरुषं प्रवर्तयता तत्सिद्धयेऽभिधीयमाना शब्दव्यापारत्वेनोच्यते तामाहुरिति । अथवा इष्टसाधनताऽभिधानमभिधा सैव विधानं विधिरिति व्युत्पत्त्या विधिरित्युच्यते सैव च भूतिकर्तृत्वं प्रतिपद्यमानायाः पुरुषप्रवृत्तेः प्रयोजकस्य शब्दस्य व्यापारो भावना तामाहुः कुर्वन्तीति ओदनपाकं पचतीतिवद्व्याख्येयम् । तदेवं शब्दकर्तृकं प्रवर्तनारूपेष्टसाधनत्वाभिधानमेव शब्दभावनेति गीयते । तस्याः पुरुषप्रवृत्त्यर्थं प्रवृत्तेः पुरुषप्रवृत्तिर्हि स्वर्गादिस्थानीया भाव्या समीहितसाधनताविज्ञानं तु परार्थप्रवृत्तशब्दव्यापारजन्यतया यागादिवत् करणं प्राशस्त्यज्ञानं तु इतिकर्तव्यतेति विवेक्तव्यम् । प्रवर्तनेति समीहितसाधनतैवोच्यते । तदुद्देशेन हि कृतिः प्रवर्तते इति दर्शितम् । एवं च प्रवर्तनावचनः कर्तव्यतावचनः प्रत्यय इत्यादिग्रन्थस्याविरोधः । न च सहप्रयोगविरोधः, प्रवृत्तिनिमित्तभेदात् पर्यायत्वाभावात् । इष्टसाधनशब्दो हि तत्साधनतामेव साक्षादभिधत्ते, लिङादयस्तु प्रवर्तनारूपेण कृत्यर्हतारूपेण वेति नास्ति पर्यायता । तदिदं कर्तव्यतारूपं प्रवर्तनारूपं वा समीहितसाधनत्वमेव लिङादिभिरभिधीयते इत्येतावदेव रमणीयम् । स्वव्यापाराभिधानं दुरुपपादं ग्रन्थानुगुण्यमपि नातीव दृश्यते । तथा हि निषेधशास्त्रेषु प्रतिषेधस्य वर्जनस्य नञाभिधेयस्य लिङादिभिर्विधेर्वा प्रतिषेध इति वचनव्यक्तिद्वयमङ्गीकृत्य 'ब्राह्मणं न हन्यात्' इत्यत्र पुंस्त्वाविवक्षां प्रतिपादयता प्रतिषेधविधावविवक्षामुपपाद्य विधिप्रतिषेधेऽप्यविवक्षामुपपादयतोक्तं विध्यर्थमपि द्वेषाद्यर्थप्राप्तमनूदितं हननं प्रतिषिध्य चरितार्थो नञ् न लिङ्गमपरं शक्नोति प्रतिषेद्धुमिति । यदि हि स्वव्यापारो विध्यर्थः स्यान्न तस्यानुवादोऽवकल्पते । न हि द्वेषादिनिमित्तायां हननादिप्रवृत्तौ लिङ्व्यापारः प्रवर्तकः प्राप्तः यो न हन्यादित्यादिषु लिङाऽनूद्य नञा प्रतिषिध्येत । **ननु** कर्तव्यताऽप्यनभिधेया कथमनूद्यते अननूदिता वा कथं निषिध्यते । **ननु** भवन्मते समीहितसाधनता हननस्य विद्यते एवेति कथं निषिध्यते । **उच्यते**, प्रवर्तना हि विध्यर्थः कर्तव्यता च महान्तमनर्थं जनयत्सु हननादिषु यदपि स्वल्पसुखसाधनत्वं तेन प्रवर्तना कर्तव्यता वा न हि तादृशे प्रेक्षापूर्वकारिणां कृतिः प्रवर्तते । ये तु महान्तमनर्थं न जानन्ति ते स्वल्पसुखसाधनत्वादेव भ्रान्त्या कर्तव्यतां मन्यन्ते सा शक्यते



प्रतिषेद्धुम् । या भ्रान्त्या हननस्य कर्तव्यताऽवगता सा नास्तीति तस्मादनवद्यम् '**न्यायागमानुसारेण श्रीमद्यज्ञात्मसूनुना । पार्थसारथिमिश्रेण कृतोऽयं विधिनिर्णयः ॥**' ३ ॥ **रत्नमाला**. प्रकरणं. ३.

* **विधिनिषेधयोः भेदः** । तथाहि, 'फलबुद्धिप्रमेयाधिकारिबोधकभेदतः । पञ्चधाऽत्यन्तभिन्नत्वाद् भेदो विधिनिषेधयोः ॥ विधिरिष्टफलोऽनिष्टपरिहारफलोऽपरः । प्रेरितोऽस्मीति धीः पूर्वे वारितोऽस्मीति चापरे ॥ विधेयस्येष्टहेतुत्वं विधिना च प्रमीयते । निषेधेन निषेध्यस्य प्रत्यवायनिमित्तता ॥ विधिश्चाधिकरोत्यन्यकारणेनाप्रवर्तितम् । रागादिना प्रवृत्तं तु निषेधस्तद्विलक्षणम् ॥ नञ्वर्जितो लिङादिश्च विधिबोधस्य कारणम् । लिङाद्यनुगृहीतस्तु नञ् निषेधस्य बोधकः ॥' एतदेवाभिप्रेत्य बृहट्टीकायामुक्तम् 'अन्तरं यादृशं लोके ब्रह्महत्याश्वमेधयोः । दृश्यते तादृगेवेदं विधानप्रतिषेधयोः ॥' इति । **सु. पृ.** २०१. * विधिनिषेधयोः समावेशे पर्युदासः स्वीकार्यः । 'यजतिषु येयजामहं करोति, नानुयाजेषु' इत्यत्र यथा । तत्र हि विधिः सर्वयागविषयः, निषेधस्तु अनुयाजमात्रविषयः । अनुयाजभिन्नयागेषु 'येयजामहः कर्तव्यः' इति पर्युदासरूपो वाक्यार्थः । **वि.** १०।८।३.

* **विधिपरिसंख्यासंशये** विधिर्ज्यायान् । तत्र स्वार्थे शब्दः । **भा.** ६।४।३।७.

* **विधिप्रकाराः** षट् । विधिः यद्यपि भावनामेव विधत्ते, तथापि तस्याः निरंशायाः अनुष्ठातुमशक्यत्वेन विधानायोगात् धात्वर्थादिकमपि तद्विशेषणतया विधिना विधीयते । तत्रायं क्रमः — शुद्धधात्वर्थकरणकभावनाविधिः **आद्यः** । यथा — 'अग्निहोत्रं जुहोति' इति । अत्र हि यद्यपि इष्टसामान्यं भावनाभाव्यत्वेन अन्वेत्येव तथापि तस्मिन् विधिव्यापाराभावात् शुद्धत्वोपपत्तिः ॥ अन्योद्देशेन धात्वर्थकरणकभावनाविधिः **द्वितीयः** । यथा—'अग्निहोत्रं जुहुयात् स्वर्गकामः' 'व्रीहीन् प्रोक्षति' इति च । एतस्य च पूर्वापेक्षया पदान्तरोपस्थितिसापेक्षत्वेन विप्रकर्षात् दौर्बल्यम् । पदान्तरसापेक्षत्वेऽपि तत्रातात्पर्यात् न **गौरवम्** । इष्टसामान्यस्य तु विधिपदादेवोपस्थितेः पदान्तरानपेक्षत्वम् ॥ धात्वर्थान्यकरणकभावनाविधिः **तृतीयः** । यथा—'दध्ना जुहोति' इति । अत्र अग्निहोत्रहोमानुवादेन दधिविधानात् । अत्र च पदान्तरसापेक्षत्वाविशेषेऽपि विधिव्यापारस्य कर्तव्यताविषयकाज्ञातज्ञापनरूपस्य धात्वर्थनिष्ठत्वाभावात् पूर्वापेक्षयाऽपि दौर्बल्यम् । पूर्वत्र हि धात्वर्थस्वरूपस्य उत्पत्तिवाक्येन प्राप्तत्वेऽपि कर्तव्यतया अधिकारवाक्य एव विधिः । प्रकृते तु धात्वर्थस्य स्वविधानार्थं अनुच्चारणात् पारार्थ्यापत्तेः विप्रकृष्टपदान्तरार्थविधानाच्च दौर्बल्यं इति विशेषः ॥ धात्वर्थं साधुत्वार्थमनूद्यापि अन्योद्देशेन अन्यकरणकभावनाविधिः **चतुर्थः** । यथा 'दध्नेन्द्रियकामस्य जुहुयात्' इति । अत्र धात्वर्थस्य उद्देश्यत्वेनाप्यसंबन्धात् पूर्वापेक्षया दौर्बल्यम् ॥ गुणविशिष्टधात्वर्थकरणकभावनाविधानं **पञ्चमः** । यथा 'सोमेन यजेत' इति । अत्रापि च विधेः श्रुत्यर्थाभ्यां उभयत्र व्यापारकल्पनात् संनिकृष्टार्थविध्यसंभवकृतत्वाच्च विप्रकृष्टार्थविधेः एकत्रैव युगपत् संभवासंभवविरोधापत्तेः पूर्वापेक्षया दौर्बल्यम् ॥ अन्यत्र गुणविशिष्टधात्वर्थकरणकभावनाविधिः **षष्ठः** । यथा— 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इति । अत्रापि पदान्तरोपस्थितिसापेक्षत्वेन पूर्वापेक्षया दौर्बल्यं इति द्रष्टव्यम् । **कौ.** १।४।२।२ पृ. १६२–१६४.

* विधिप्रकाराः षट्– ( १ ) शुद्धधात्वर्थकरणकभावनाविधानात् **आद्यो** विधिप्रकारः । यथा 'अग्निहोत्रं जुहोति' इति । ( २ ) अन्योद्देशेन तद्विधिः **अपरः**, यथा 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति । एतस्य च उद्देश्यवाचकपदान्तरसापेक्षत्वात् दौर्बल्यम् । ( ३ ) धात्वर्थोद्देशेन अन्यकरणकभावनाविधिः **तृतीयः**, यथा 'दध्ना जुहोति' इति । अत्र विधेयताया धात्वर्थवृत्तित्वाभावात् पदार्थान्तरवृत्तित्वाच्च ततोऽपि दौर्बल्यम् । ( ४ ) धातोः साधुत्वार्थकत्वमङ्गीकृत्य अन्योद्देशेन अन्यकरणकभावनाविधिः **चतुर्थः**, यथा 'दध्नेन्द्रियकामस्य जुहुयात्' इति । अत्र धात्वर्थस्य उद्देश्यत्वेनापि असंबन्धात् ततोऽपि दौर्बल्यम् । ( ५ ) गुणविशिष्टधात्वर्थकरणकभावनाविधानं **पञ्चमः**, यथा 'सोमेन यजेत' इति । अत्र विशेषणविधिकल्पनाऽऽधिक्यात् ततोऽपि दौर्बल्यम् । ( ६ ) अन्योद्देशेन पूर्वोक्तः **षष्ठः**, यथा 'सौर्यं चरुं

निर्वपेद् ब्रह्मवर्चसकामः' इति । अयं तु सर्वतो दुर्बलः । **भाट्ट.** १।८।२, * सर्वत्र प्रातीतिके विशिष्टभावनाविधानेऽपि फलमादायैव षट् **विधिप्रकाराः** । तेषां च उत्तरोत्तरस्य दौर्बल्यं पूर्वमुक्तम् । २।२।५ पृ. ११०.

* **विधिप्रतिषेधौ** अर्थभावनामेव साक्षात् विषयी कुरुतः, तद्द्वारा तु तद्विशेषणानि कारकाणि । **बाल.** पृ. ७४. * **विधिप्रतिषेधयोः** एव ( धर्मे ) प्रामाण्यं प्रतिपादितम्, न च तद्व्यतिरिक्तशब्दगम्यत्वं धर्माधर्मयोः । **वा.** १।२।१।१. * विधिप्रतिषेधयोः प्रतिषेधो बलीयान् । प्राप्ते हि विधौ प्रतिषेधो भवति । येन च नाम प्राप्ते यदुच्यते तत् तस्य बाधकं भवति । **भा.** १०।८।१।२, * विधिप्रतिषेधयोः यतरो गुणवान् सोऽनुष्ठीयते । १०।८।१।३.

* **विधिप्रत्ययः** द्रव्यविशेषणपर्यन्तं न गच्छेत् । **सु.** पृ. १०१२. * यत्र पुनः स्वविशेषणाविशिष्टा क्रिया विधीयते, वाक्यान्तरप्राप्तस्य क्रियान्तरस्य विशेषणम्, तत्रावश्यावर्तनीयो विधिप्रत्ययः । **वा.** ३।६।७।२२ पृ. १०४९. * स्वार्थप्रवृत्त्या पुरुषस्य दर्शनमस्ति । नापश्यन् पुरुषः क्रियासु व्यापारं उपगन्तुमुत्सहते इत्यर्थप्राप्ते विधिप्रत्ययोऽपि अनुवाद इत्यवगम्यते । **भा.** १०।६।२।३.

* **विधिप्राप्तपुरुषार्थमात्रविषयकः** क्रत्वर्थः श्रौतो निषेधो यथा– 'दीक्षितो न ददाति न जुहोति' इति । दशमे इदमुक्तम् । **बाल.** पृ. ३२, * विधिप्राप्तपुरुषार्थमात्रविषयकः पुरुषार्थः श्रौतनिषेधो यथा– असोमयाजिनः सांनाय्यनिषेधः 'नासोमयाजी संनयेत्' इति । स च कर्तृनिषेधेन फलितः । पृ. ३३, * विधिप्राप्तविषयकः पुरुषार्थमात्रनिषयकः पुरुषार्थः कल्प्यः प्रतिषेधो यथा– स्त्रियाः अध्ययननिषेधः इति षष्ठे । पृ. ३१–३२.

* **विधिमन्त्रयोः** एकविषयत्वनियमः । **पराक्रमः.** ४१।२. * 'विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात्' ( २।१।६।३० ) इत्यधिकरणे 'यजते' 'ददाति' इत्याख्याताविशेषात् 'देवांश्च याभिर्यजते ददाति च' अस्यापि मन्त्रस्य यागान्तरविधित्वं पूर्वपक्षं कृत्वा यच्छब्दाद्युपबन्धात् क्लृप्तयोरेव यागदानयोरनुवादः इति सिद्धान्तितम् । **बाल.** पृ. ६५.

(symbol) **विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् । २।१।७। ३० ॥**

इदमाम्नायते 'न ता नशन्ति, न दभाति तस्करः । नैना अमित्रो व्यथिरादधर्षति । देवांश्च याभिर्यजते ददाति च । ज्योगित्ताभिः सचते गोपतिः सह ॥' ( तैब्रा. २।४। ६ ) इति । यजते ददाति जुहोतीत्युदाहरणम् । किं यद्वद् ब्राह्मणशब्दो विधायकस्तद्वन्मन्त्रोऽपि, उत मन्त्रोऽभिधायक इति ।

अत्र **भाष्यकारेण** मन्त्रगतानेव भावशब्दानुदाहृत्य विचारितम् । तदयुक्तम् । यतो न हि मन्त्रे सर्वे भावशब्दा अभिधायकाः । 'वसन्ताय कपिञ्जलानालभते' ( मैसं. ३।१४।१ ) इत्यत्र विधायकस्यापि दर्शनात् । नापि ब्राह्मणे भावशब्दाः सर्वे विधायकाः । 'यस्योभयं हविरार्तिमार्च्छेत्' ( तैब्रा. ३।७।१ ) 'य एवं विद्वान् पौर्णमासीं यजते' इत्यादिषु अभिधानमात्रदर्शनात् । तस्मादविशेषेण यथावार्तिकमेव अधिकरणं वर्णनीयम् । अध्यायार्थभूतस्य कर्मभेदस्य उपोद्घातभूतं भावार्थविचारं सापवादं परिसमाप्य इदानीं मन्त्रब्राह्मणगताख्यातशब्दानामुक्तगुणप्रधानरूपद्वैविध्यप्रसङ्गेनेदं विचार्यते । किं सर्वाख्यातशब्दानां गुणप्रधानकर्मविधायकत्वमेव परम्, अस्ति वा तृतीयोऽपि प्रकारः कर्माभिधायकत्वमात्रमेवेति । अत्रायं **पूर्वपक्षिणोऽभिसंधिः** । त एव विधिप्रत्ययवन्तो भावशब्दाः क्वचिद्विधायकाः क्वचिच्चाभिधानकर्ममात्रपर्यवसायिन इत्ययुक्तम्, एकरूपत्वेन शब्दशक्त्यविशेषात् । न च यच्छब्दसंनिध्युपपन्नातकर्मत्वेन विधिप्रत्यययोगेऽप्यविधायकत्वात् अभिधानमात्रपर्यवसायित्वमेवेति वाच्यम् । 'यदाग्नेयोऽष्टाकपालो भवति' इत्यादिषु यच्छब्दयुक्तस्यापि विधायकत्वात् । अतः सर्वत्र विध्युद्देशे मन्त्रे च भावशब्दानामेकरूपत्वात् एकार्थविध्यर्थत्वम्, विधानस्य द्वैविध्यगुणकर्मप्रधानकर्मविधायकत्वमेव परम्, न तु कर्माभिधायकत्वमात्रमपि तृतीयप्रकारोऽस्ति । **इत्येवं प्राप्ते अभिधीयते**–



**अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात् । ३१ ॥**

अयमभिप्रायः । भवेदेतदेवं यदि यच्छब्दादिप्रयोगात् केषुचिद्विधिशक्त्युपघातो न भवेत् । तथाहि, सर्वत्र खलु यच्छब्दादियोगादनुवादता परिस्फुरति । तद्यत्र क्रियायोगात् यच्छब्दस्तत्र यच्छब्देन यथावगतां क्रियामनूद्य तद्गतायां पुरुषप्रवृत्तौ विधीयमानायां न विधिशक्तिस्तिरोधीयते । विधेयभूतायाः पुरुषप्रवृत्तेः अननुवादात् कर्तृयोगिनि यच्छब्दे यः करोतीति प्रवृत्तेरेवानूदितत्वात् भवति विधिशक्त्युपघात इति । तेन भवतु 'यस्योभयं हविरार्तिमार्च्छेत्' 'य एवं विद्वान् पौर्णमासीं यजते' इत्यादिकर्तृयोगित्वात् यच्छब्दस्य विधिशक्त्युपघातः । 'यदाग्नेयोऽष्टाकपालः' इत्यादिषु क्रियायोगित्वात् यच्छब्दस्य विधिशक्तिरव्याहतैवेति । तदुक्तं पौर्णमास्यधिकरणे– '**क्रियापदैकयोगित्वे यच्छब्दो न रुजेद्विधिम् । कर्तृयुक्तः स एवान्यप्रापितार्थानुवादकृत् ॥**' इति ( वा. पृ. ४८८ ) । स च कर्तृयुक्तयच्छब्दाद्युपबन्धो मन्त्रे ब्राह्मणे वा अविशिष्ट एवेति तद्वशेन विधिशक्त्युपघाते सति कर्माभिधायकत्वमात्रमुभयत्रापीति । तदुक्तम्– '**येषामाख्यातशब्दानां यच्छब्दाद्युपबन्धनात् । विधिशक्तिः प्रणश्येत्तु ते सर्वत्राभिधायकाः ॥**' इति ( वा. पृ. ४३३ ) । अतोऽस्ति तृतीयोऽपि प्रकार इति । इदं तु इह वक्तव्यम्– अत्र यच्छब्दाद्युपबन्धेन मन्त्रब्राह्मणवाक्यगताख्यातशब्दस्याभिधायकत्वमभिमतं पदार्थे वाक्यार्थे वा । न तावत्पदार्थे, अभिधायकवाक्यगतस्य आख्यातशब्दस्य पदार्थाभिधायकत्वाविशेषात् । नापि वाक्यार्थे, सर्वत्रैव वाक्यार्थस्य गम्यमानत्वेनानभिधेयत्वात् । अथ एतदेव वाक्यार्थाभिधानं यत् स्थलविशेषे विशेषणान्वययोग्यप्रधानीभूतपदार्थाभिधानम्, तदा ब्राह्मणे यच्छब्दाद्युपबन्धस्य... विशेषणीभूतार्थप्रतिपादकत्वेन तथाभूतार्थानभिधानेनाभिधायकत्वमिति । सत्यं ते सर्वत्राभिधायका इत्यनेन सर्वत्राभिधायकत्वमभिमतम्, किन्तु अभिधायकत्वेन विशेषार्थप्रतिपादकत्वमात्रम् । तच्च ब्राह्मणे मन्त्रे च समानमेव । तत्र 'न ता नशन्ति' इत्यत्र यच्छब्दः, 'अहे बुध्न्य मन्त्रं मे गोपाय' इत्यामन्त्रणविभक्तिः, 'दामि, गृह्णामि' इत्युत्तमपुरुषः, 'यदि सोममपहरेयुः' इत्यत्र यदिशब्दः, यदित्येवमादयः । प्रायेण मन्त्रेष्विति सूत्रे मन्त्रोपन्यासः । किन्तु एतावानत्र विशेषः ब्राह्मणगतानां स्वरूपमेवोपलभ्य विधित्वनिवृत्तौ सत्यां स्वरूपादेव कर्मसु प्रयोगानर्हत्वात् निमित्तादिव्यवस्थापनार्थतैव । मन्त्रगतानां तु दामि गृह्णामि निर्वपतीत्येवमादीनां स्वरूपमेवोपलभ्य शक्यमेभिः कर्म कर्तुमिति विनियोगबुद्धिर्भवति । तदुक्तम्– '**अनुष्ठाने पदार्थानामवश्यंभाविनी स्मृतिः । अनन्यसाधनानन्यकार्यैर्मन्त्रैर्नियम्यते ॥**' इति ( वा. पृ. ४३३ ) । तेन संशयोऽत्र किं प्रधानरूपकर्मविधायकत्वमेव परं सर्वत्र ? अथ विधायकत्वमपि ? कर्मणि प्रतिपादकत्वमपि तृतीयः प्रकारोऽस्तीति मन्तव्यम् । **प्रयोजनं** पूर्वपक्षे– विधायकत्वे सर्वत्राख्यातानामभ्यासात्कर्मभेदेऽनुष्ठानभेदः । सिद्धान्ते तु नैवम् । **सूत्रं तु**– यच्छब्दाद्युपबन्धः स्यात् । मन्त्रग्रहणमुपलक्षणार्थम्, तेनायमर्थः– यच्छब्दाद्युपबन्धसहितमाख्यातमभिधानवाचकं विधिशून्यप्रत्यायनमात्रहेतुभूतं प्रयोगसामर्थ्यादिति । **तौता.**

(symbol) **विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् । २।१।६। ३० ॥**

'न ता नशन्ति, न दभाति तस्करो, नैना अमित्रो व्यथिरादधर्षति । देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सह' इत्याम्नायते । अयं मन्त्रः काम्यपशुयाज्याकाण्डे गोदेवत्यपश्वर्थतया पठितः । याभिर्गोभिः देवान् यजते, याश्च ददाति ता गावो न नश्यन्ति, न च तस्करो हरति, न च आसां कंचिदवयवं अमित्रकृतो व्याधिः उपद्रवः पीडयति । गोस्वामी च ताभिः सह ज्योक् चिरकालं सचते संयुक्तो भवति इति मन्त्रार्थः । अत्रत्य– यजते– ददाति इत्यत्र विचारः । किं यद्वत् ब्राह्मणे भावशब्दो विधायकः, तद्वत् मन्त्रेऽपि, उत मन्त्रे न विधायकः इति । तत्र पूर्वपक्षमाह । विधिमन्त्रयोः विधौ ब्राह्मणे मन्त्रे च विद्यमानस्य भावशब्दस्य ऐकार्थ्यं एक एवार्थः स्यात् । ऐक-

शब्द्यात् एकविधशब्दत्वात् । ब्राह्मणे यदि विधायकः ततो मन्त्रेऽपि विधायकः स्यात् ।

**अपिवा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात् । ३१ ॥**

मन्त्रस्थो भावशब्दः विधायकः ब्राह्मणस्थवत् इति पूर्वपक्षं अपिवाशब्दो व्यावर्तयति । आख्यातपदविशिष्टोऽपि मन्त्रः अभिधानवाची स्यात् । अभिधीयते इत्यभिधानं कर्मणि ण्वुल् । लक्षणया वा अभिधेयवाची अभिधानशब्दः । तथा च अभिधायका अपि मन्त्राः । प्रयोगसामर्थ्यात् प्रयोगे प्रयोगगतार्थस्मारणे मन्त्राणां सामर्थ्यम् । प्रयोगसामर्थ्यात् विधाने सामर्थ्याभावात् मन्त्रो न विधायकः इति सिद्धान्तः । किंचिदाख्यातं गुणकर्मविधायकं किंचित् प्रधानकर्मविधायकम् । मन्त्रगतं तु अभिधायकम् । इति त्रेधा आख्यातं इति तात्पर्यम् । **के.**

* न च **विधिमन्त्रयोः** पूर्वापरभावनियमोऽस्ति, अतः मन्त्रस्य विध्युपसंहारत्वाभावः । **पराक्रमः.** ४।३।२.

‡ **विधिमन्त्राधिकरणम्** । मन्त्रगतं आख्यातं न विधायकम् ।।

**विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् । २।१।६।३०॥**

**भाष्यम्**-- इदं समाम्नायते ' न ता नशन्ति, न दभाति तस्करो, नैना अमित्रो व्यथिरादधर्षति । देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सह ।।' इति । यजते ददातीत्युदाहरणम् । किं यद्वत् ब्राह्मणे भावशब्दो विधायकस्तद्वन्मन्त्रेऽपि, उत मन्त्रे अविधायक इति । किं तावत्प्राप्तम् ? विधौ मन्त्रे चाऽऽम्नायमानस्य भावशब्दस्य एक एवार्थः स्यात् । ऐकशब्द्यात् । स एवायमेकः शब्दो ब्राह्मणगतो विधास्यति, मन्त्रगतो न शक्नोति विधातुमित्यनुपपन्नम् । तस्माद्विधायकः ।

**वा**— इह मन्त्रा उदाहरणम् । किं तद्गता भावनावचना ब्राह्मणवद्विदधति नेति संदेहे शब्दाभेदाद्विधायकाः इत्याशङ्क्य मन्त्रत्वात् प्राप्तार्थत्वाच्च विधित्वासंभवेन प्रयोगकालेषु ब्राह्मणविहितानामेवार्थानां स्मारका इत्युत्तरपक्ष उक्तः । तथाहि ' **न कर्मान्तरताऽस्त्यत्र बलवत्प्रत्यभिज्ञया । न चोपात्तो गुणः कश्चिन्न च वाक्यान्तरे स्तुतिः ॥** ' स्मारकत्वप्रतिपक्षौ हि विध्यर्थवादौ स्याताम्, तदिह स्वरूपं तावदन्यतः क्रियायाः प्राप्तं गुणफलनिमित्तानि तु नैवोपात्तानि यानि विधीयेरन् । न च वाक्यान्तरस्थे पर्यवसितप्रयोजने विधौ स्तुतिरुपपद्यते । तदुक्तं प्रथनमन्त्रे । तस्मात् प्रकाशका मन्त्रा इति यद्व्याख्यायते तत्र वदामः । किं पुनः कारणं मन्त्रत्वेनाऽऽख्यातविशेषाणां विधिशक्तिस्तिरोधीयते, कथं च ब्राह्मणत्वेनासावाविर्भाव्यते । दृष्टाश्च मन्त्रगता अपि विधायकाः 'वसन्ताय कपिञ्जलानालभते ' इत्यादयः । तथा ब्राह्मणगता अप्यविधायका यथा ' यस्योभयं हविरार्तिमार्छेत् ' इत्यादयः । तस्मान्नायमेकान्तः । किञ्च ' **प्राप्तत्वाद्यदि चेष्येत मन्त्राणामनुवादता । तैरेव विहितं कस्मान्न स्मारयति चोदना ॥** ' न ह्यत्र विशेषहेतुरस्ति किं ब्राह्मणविहितमासाद्योपहतविधिशक्तिर्मन्त्रः स्मारको भवत्यथ वा विपर्यय इति । तत्रोभयोः अनुवादत्वासंभवात् अगृह्यमाणविशेषत्वाच्च द्वयोरपि विधायकत्वम् । अभ्यासाच्च कर्मभेदः स्यात् । बलवत्प्रत्यभिज्ञायाश्चाभ्यासाधिकरण एवोत्तरं भविष्यति । तस्मात् नैवमभिधायकत्वसिद्धिः । येऽप्याहुः- ' **यस्माद्व्रीह्यादिवन्मन्त्राः करणत्वेन कर्मणाम् । ब्राह्मणेन नियुज्यन्ते तद्वत्ते न विधायकाः ॥** ' तैरपि सामान्यतो दृष्टमात्रं व्यपदिष्टम् । कुतः- ' **विधिशक्तिर्नियोगेन न मन्त्रस्यापनीयते । ततो विधास्यति ह्येष नियोगात्स्मारयिष्यति ॥** ' न हि विनियुक्तेन न विधातव्यमिति किञ्चित्प्रमाणं यदि स्वतो विधिशक्तिरस्त्येव । अथ त्वसौ प्रथममेव नास्ति व्यर्थो विनियोगोपन्यासः । न चोभयकरणे विरोधः । तथा हि '**विधायकं सदप्यर्थं ब्राह्मणं स्मारयिष्यति । मन्त्रतस्तु विरोधे स्यात् इत्यत्रैतद्वदिष्यते ॥** ' ये च वचनेनाविनियुक्तास्ते च स्वपक्षे निराकरणहेत्वभावाद्विधायकाः प्राप्नुवन्तीत्येतदप्यकारणम् । न चात्र मन्त्रोपन्यासः । कश्चित्संबन्ध इत्यन्यथा वर्ण्यते । त्रिविधमेवाऽऽख्यातं गुणप्रधानाभिधानत्वेनोक्तम् ।

अथेदानीं प्रस्तूयते किं तावेव द्वौ प्रकारावुतान्योऽप्यस्तीति । तत्र न तृतीयः प्रकारोऽस्तीति मत्वा पूर्वपक्षवादी वदत्यैकार्थ्यमिति । तथा प्राप्तेऽभिधीयते ।



**अपिवा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात् । ३१ ॥**

**भाष्यम्**— अपिवेति पक्षो व्यावर्त्यते । एवंजातीयको मन्त्रोऽभिधानवचनः स्यात् । प्रयोगसामर्थ्यात् । प्रयोगे क्रियमाणेऽस्य सामर्थ्यं विद्यते, गोदानं गोयागं च प्रत्याययितुम्, न विधातुम् । कुतः ? विहितत्वात् गोदानस्य दक्षिणाविधाने, गोयागस्य त्वनुचन्ध्यायाम् । कर्मान्तरं भविष्यतीति चेन्न । असकृदप्युच्यमाने तत्प्रत्ययादेव । स्तुत्यर्थकल्पनायामप्यानर्थक्यम्, परिमिमामेतेन सार्थवादकेन वाक्येन विहितत्वात् यागस्य । तस्मान्न मन्त्रगतो भावशब्दः एवंजातीयको विधायक इति ।

**वा**— अस्ति तृतीयः प्रकारो यदभिधायकत्वं नाम । यस्य ' **येषामाख्यातशब्दानां यच्छब्दाद्युपबन्धनात् । विधिशक्तिः प्रणश्येत्तु ते सर्वत्राभिधायकाः ॥** ' मन्त्रगतानां ब्राह्मणगतानां चाऽऽख्यातशब्दानां येषां शब्दान्तरेण विधिशक्तिरपगच्छति तेषामभिधायकत्वम् । तत्र ' न ता नशन्ति ' इत्यत्र तावद्यच्छब्दोपहितो विधायकोऽनुवादत्वं प्राप्यते । तथा ' अहे बुध्निय मन्त्रं मे गोपाय ' इत्यामन्त्रणविभक्त्या । दामि गृह्णामीत्युत्तमपुरुषेण । ' यदि सोममपहरेयुः ' इति यदिशब्देन । ते चैवमादयः प्रायेण मन्त्रेष्विति मन्त्रा उदाहरणम् । अविधायका मन्त्रा इति च प्रसिद्धिः ।

ब्राह्मणे तु भूयांसः प्रत्यया विधायकास्तेन तद्विधायकमिति प्रसिद्धम् । अल्पे त्वविधायका इति तदिह नोदाहरणम् । विधायकत्वाविधायकत्वे तु तयोर्यथोक्तमेव कारणमिति न मन्त्रत्वब्राह्मणत्वयोर्व्यापारः । तत्र त्वेतावान् व्यापारो दृश्यते । रूपादेव ब्राह्मणगतानां विधित्वनिवृत्तौ सत्यां निमित्तादिप्रत्यायनार्थता । न हि तेषां रूपं कर्मसु प्रयोगार्हम् । मन्त्रगतानां तु रूपमेवोपलभ्य दामि गृह्णामि निर्वपामि इदमिदं च करोम्यग्नीन्विहर, बर्हिः स्तृणीहि, इदमिदं च कुरु इत्यादिकं शक्यमेतैः कर्म स्मर्तुमिति विनियोगबुद्धिर्भवति । कुतः-' **अनुष्ठाने पदार्थानामवश्यंभाविनी स्मृतिः । अनन्यसाधनाऽनन्यकार्यैर्मन्त्रैः प्रसाध्यते ॥** ' न तावदनुष्ठानवेलायामस्मृतः कश्चित्पदार्थः शक्यः कर्तुमित्यवश्यभाविन्या स्मृत्या योग्यसाधनमात्रापेक्षणाद्यत्किंचिद् ब्राह्मणपदार्थानुसंधानं वा पूर्वपदार्थप्रत्यवेक्षणं वा सूत्रग्रन्थो वा आत्मीयग्रहणवाक्यानि वा उपद्रष्टादि वा साधनं ग्रहीतुमारभ्यते ।

तत्रानन्यप्रयोजनान् मन्त्रान् प्रकरणे पठ्यमानान् सामान्येन किमप्येभिः कर्तव्यमित्येवं प्रयोगवचनेन गृह्यमाणानुपलभ्य यादृशेन वाक्येन स्मृतिः कर्तुमाकाङ्क्ष्यते तद्रूपा एते इति विदित्वा लिङ्गप्रकरणानुमितया श्रुत्या विनियोगे सत्यभिधानार्थता विज्ञायते । ततश्चोपायान्तराण्यप्रमाणकत्वान्निवर्तन्ते । नियमादृष्टसिद्धिश्च मन्त्रैरेव स्मृत्वा कृतं कर्म अभ्युदयकारि भवतीत्यवधार्यते । भाष्यमप्यत्रैव योजनीयम् । नासकृदप्युच्चारणे तत्प्रत्ययादिति न प्राप्तत्वाभिप्रायेणोच्यते । किन्तु यच्छब्दोपबन्धादस्यैव मन्त्राख्यातस्यान्यतः प्राप्तमहं ब्रवीमीत्येवंरूपप्रत्ययात् । शतकृत्वोऽपि ह्येवमादिरुच्चार्यमाणः स्वसामर्थ्येनैव नापूर्वप्रत्ययं करोति तत एव पूर्वप्राप्तबुद्ध्युत्पादात् ।

**शा**-- द्विविधं आख्यातं उक्तम्- प्रधानकर्मणां विधायकं गुणकर्मणां च । किं एतदेव प्रकारद्वयम् ? नेत्युच्यते । अस्ति तु तृतीयमपि प्रकारान्तरमभिधायकत्वमिति । ( अभिधायकत्वं अनुवादकत्वमित्यर्थः ) ।

**सोम**-- **सूत्रार्थस्तु**-- विधिगतानां मन्त्रगतानां आख्यातानां च विधायकतया ऐकार्थ्यम्, एकजातीयशब्दत्वात् इति ।

**वि**-- ' देवांश्च याभिर्यजत इत्याख्यातं तु मन्त्रगम् । विधायकं न वाऽन्येन समत्वात्तद्विधायकम् ॥ यच्छब्दादेः क्षीणशक्तिर्न विधिस्त्रिविधं ततः । आख्यातमभिधानं च प्रधानगुणकर्मणी ॥ '

**भाट्ट**-- गुणकर्मप्रधानकर्मविधायकाख्यातद्वये निरूपिते प्रसङ्गादभिधायकं तृतीयमाख्यातं निरूप्यते । मन्त्रगतानां ब्राह्मणगतानां च यच्छब्दादिसमभिव्याहृतानामपि विधायकत्वम् । सत्यामपि च प्रमाणान्तरेण प्राप्तौ अभ्यासात् कर्मभेदः । इति प्राप्ते, ' देवांश्च याभिर्यजते ' ' यस्योभयं हविरार्तिमार्छति ' इत्यादौ यच्छब्दस्य प्राप्तिद्योतकत्वेन स्वविषये अज्ञातज्ञापनरूपविधिप्रतिबन्धकत्वं स्पष्टम् । एवं ' अग्नीदग्नीन् विहर ' इत्यादौ संबोधनविभक्तेरभिमुखश्रोतृमात्रविषयायाः अभिमुखानभिमुख-

साधारणविधिविरोधित्वम् । दामीत्यादेरुत्तमपुरुषस्य च परप्रवर्तनरूपविधिविरोधित्वम् । अतो विधायकत्वासंभवात् मन्त्रगतानां स्मारकत्वम् । ब्राह्मणगतानां निमित्तादिप्रतिपादकत्वं लक्षणयेति द्रष्टव्यम् ।

**मण्डन**-- ' मन्त्रे स्थितं भावपदं विधिर्नो । '

**शंकर**-- ' मन्त्राः स्युः अभिधायकाः । '

* **विधियुक्तवाक्यान्तरकल्पनात्** मन्त्रकल्प्यः विधिर्यथा- उपांशुयाजादौ याज्यानुवाक्या-सूक्तवाकादिमन्त्रकल्प्यः देवताविधिः । यथा वा- ' उच्चादिवि दक्षिणावन्तो अस्थुर्ये अश्वदाः सह ते सूर्येण ' इति अश्वदानफलविधिः । एतत् विरोधाधिकरणभङ्गटीकाव्याख्यानान्ते **सोमेश्वरेणोक्तम्** । **बाल**. पृ. १२.

* **विधिरूपं** मन्त्ररूपं च अवान्तरवाक्यं द्विविधम् । **बाल**. पृ. ९.

* **विधिरूपप्रमाणप्रतिपादनं** प्रथमाध्यायगतप्रथमपादार्थः । **वि**. प्रस्तावना श्लोकः १३.

* **विधिलक्षणे** । नहि यौगपद्येन विधातुं शक्यते, लक्षणत्वेन चोच्चारयितुम् । प्रसिद्धसंबन्धो हि शक्नोति लक्षयितुम् । न च अविहितः एवंजातीयकः शब्दावगम्यः प्रसिद्धसंबन्धो भवति । **भा**. ३।१।७।१४ पृ. ७१५.

* **विधिवन्निगदस्य** अर्थवादस्य ' औदुम्बरो यूपो भवति, ऊर्ग्वा उदुम्बरः ' इत्यादेः किं विधिः कार्य उत स्तुतिः इति संदेहे स्तुतिरेव कार्य इति सिद्धान्तः । **भा**. १।२।२।१९-२५. * विधिवन्निगदानां अर्थवादत्वमुक्तम । **वा**. ३।६।७।२७. * विधिवन्निगदाधिकरणम् । १।२।२।१९-२५. **मीको**. पृ. १३३६ '**औदुम्बराधिकरणम्**' इत्यत्र अधिकरणं द्रष्टव्यम । * ' विधिवत् प्रकरणाविभागे प्रयोगं बादरायणः ' ( ११।१।१०।६५ ) । प्रधानैरपृथक्कालानामङ्गानां तन्त्रम् । एवं सहत्वस्य वक्ता प्रयोगवचनोऽनुग्रहीष्यते, 'द्वादशाहेन प्रजाकामं याजयेत्' इति । तदुक्तं '**विधिवत् प्रकरणा०**' इति एवं प्राप्ते । **भा**. ११।४।६।२३. * **विधिवत्** ( ' **चोदिते तु परार्थत्वात् विधिवदविकारः स्यात्** ' ९।१।१३।४० ) । यथा यत्र यजमानो गुणभूतो विधीयते, तत्र येन केनचित् यजमानेन स विधिः सिध्यति । यथा ' यजमानसंमितौदुम्बरी भवति ' ' शुक्रं यजमानोऽन्वारभते ' इति । **भा**. ९।१।१३।४०; * विधिवत् ( 'विधिवत् प्रकरणाविभागे प्रयोगं बादरायणः' ११।१।१०।६५) । यथा विधौ तुल्यत्वात् प्रकरणस्य सर्वार्थान्यङ्गानि विज्ञायन्ते, न यस्य संनिधौ तदर्थानि । क्रमस्य प्रकरणेन बाधितत्वात् । **भा**. ११।१।१०।६५.

* **विधिवाक्यं** अर्थवादात् प्रबलम् । स्वार्थतया विधेर्मुख्यत्वम्, प्रथमश्रुतत्वाच्च असंजातविरोधित्वम्, अनधिगतार्थबोधकत्वादप्राप्तार्थत्वं चेति विधेः प्राबल्यम् । अर्थवादस्तु स्तावकत्वान्न मुख्यः । चरमश्रुतत्वात् संजातविरोधी, ज्ञातार्थानुवादित्वात् प्राप्तार्थश्च । विधेः संदेहजनकत्वे तु अर्थवादोऽपि निर्णयहेतुः । **वि**. १।४।१९.. * **विधिवाक्यस्य** विधायकत्वेनोपयुक्तस्यापि पदार्थक्रमनियामकत्वं मन्त्राम्नानक्रमाभावे । **भाट्ट**. ५।१।४. * **विधिवाक्यानां** फलपर्यन्तगमने क्रमः सविस्तरं अर्थवादाधिकरणे **मीको**. पृ. ६३९. वार्तिके द्रष्टव्यः । * **विधिवाक्ये** देवतायाः सगुणत्वे निगमेष्वपि सगुणाया एव देवताया अभिधानम् । 'अग्नये पवमानाय' इति विधिः । ' अग्निं पवमानं यज ' इति वक्तव्यम्, न तु ' अग्निं यज ' इति । ' इन्द्राय वैमृधाय ' इति विधौ सति ' इन्द्रं वैमृधं यज ' इति वक्तव्यम्, न तु ' इन्द्रं यज ' इति केवलम् । **वि**. १०।४।१६; * विधिवाक्ये यावन्ति पदानि, तावन्ति प्रत्येकमपूर्वं प्रतिपादयन्ति इति पूर्वपक्षः । विधिवाक्ये एकमेव पदं अपूर्वप्रतिपादकं इतराणि तु पदानि तच्छेषः इति सिद्धान्तः । २।१।१; * विधिवाक्ये संशयितोऽर्थः अर्थवादान्निर्णीयते । ' अक्ताः शर्कराः उपदधाति ' इति विधिवाक्ये शर्कराः केन द्रव्येण अक्तव्याः इति संशयः । ' तेजो वै घृतं ' इत्यर्थवादात् घृतेन अक्तव्याः इति अर्थवादान्निर्णयः । १।४।१९.

* **विधिवाक्यसंनिधौ** अर्थवादसत्त्वे स्तवनेन प्ररोचना, यदा नार्थवादः तदा विधिशब्देनैव प्ररोचना । इदं विस्तरेण अर्थवादाधिकरणे (**मीको**. पृ. ६३९) द्रष्टव्यम् ।

* **विधिविपरिवृत्तिः** साक्षात् उत्पत्तेः प्रतिषेधिका, नान्यद्वारा । **सु**. पृ. ९५५.



* **विधिविवेकः** । '**साधने पुरुषार्थस्य संगिरन्ते त्रयीविदः । बोधं विधौ समायत्तमतः स प्रविविच्यते ॥**'१॥ स खलु शब्दभेदो वा (**कणिका**— शब्दान्तराद्भिद्यते इति भेदः । तस्य खलु लिङादेः अयस्कान्तमणेरिव वस्तुस्वभावजोऽतिशयः, येन लोहमिव चेतनं प्रवर्तयति ), तद्व्यापारातिशयो वा ( प्रवृत्तिहेतुरुपेयते ), अर्थभेदो वा, यदभिधानात् शब्दोऽपि तथा व्यपदेश्यः । ( तत्र शब्दस्वरूपस्य तावत् विधिभावं निषेधति- ) '**प्रमाणत्वादनियमात् प्रवृत्तेः संविदाश्रयात् । समभिव्याहृतेः शब्दो न विधिः कार्यकल्पनात् ॥**'**२॥** प्रमाणं हि शब्दः प्रतिज्ञायते । बोधकं च प्रमाणम् । तत्र प्रवृत्तिहेतुं कंचनार्थातिशयमवगमयन् शब्दः चोदनात्वेन प्रमाणतामश्नुते । स्वयमेव तु प्रवृत्तेः कारकः तां प्रमाणतामपजह्यात् । न हि कारको हेतुः प्रमाणम् ( मा भूत् बीजादीनामङ्कुरादिकारकाणां प्रामाण्यम् ), अपि तु ज्ञापकः ( इन्द्रियादौ तथा भावात् ) । विषयावबोधनान्न दोष इति चेन्न, तन्मात्रस्य अन्यत्रापि तुल्यत्वात् ( वर्तमानापदेशेऽपि ' चैत्रः पचति ' इत्यादौ ) । ' चोदनालक्षणोऽर्थो धर्मः ' इत्यभ्युपगमानर्थक्यात् । ( तस्मात् येन रूपेण प्रामाण्यम्, न तेन चोदना, येन चोदना, न तेन प्रामाण्यं तस्य प्रवृत्तिं प्रति कारकत्वादित्यर्थः । प्रमाणत्वादिति हेतुं व्याख्याय ' अनियमात् प्रवृत्तेः ' इति व्याचष्टे-) शब्दस्वातन्त्र्ये च नियोगतोऽवश्यं प्रवृत्तिः स्यात् । तथा च ' अकुर्वन् विहितं कर्म ' इति निर्विषयं स्यात् । नहि तदानीं बलवदनिलसलिलौघनुद्यमानस्येव इच्छाऽपि तन्त्रं प्रवृत्तिं प्रति पुरुषस्य ( संविदाश्रयात् इति व्याचष्टे- ) ज्ञापकश्च स्वरूपतत्कर्मसंबन्धविषयज्ञानं अपेक्षते ( न तु कारकः ) लिङादिस्वरूपं च प्रवृत्तेः कारकं इत्यनुपयुक्तस्वरूपतत्कर्मसंबन्धविषयसंविदोऽपि पुंसः प्रवृत्तिप्रसङ्गः ।

**ननु** शङ्खध्वनिवदेतत् स्यात् । यथाहि ' शङ्खशब्दात् प्रवर्तितव्यम् ' इत्युपयुक्तस्वरूपसंबन्धसंविद एव प्रवर्तन्ते, नेतरे । न च शङ्खशब्दः प्रवृत्तेरभिधायकः, अन्यस्य वा कस्यचित् प्रवृत्तिहेतोः, येन ज्ञापकः स्यात् । वार्तमेतत् । न हि शङ्खध्वनिः प्रवृत्त्युपयुक्तसंगतितया प्रवृत्तिकारणं ' शङ्खशब्दात् प्रवर्तितव्यम् ' इति, अपितु प्रवर्तितव्यं इति । प्रकृत्यर्थातिरिक्ते प्रत्ययार्थे च विधेयस्य पुंसः अभिप्रायभेदे कृतसंकेतः तमनुस्मारयति ( तमभिप्रायविशेषं उपलक्षणीकृत्य अनुमातुमुद्दिश्य स्मारयति संबन्धम् ) । ततः तदनुविधायिनः प्रवर्तन्ते ( ततः कृतसंबन्धस्मरणसहकारिणः शङ्खध्वनेः ) । ' अविदितविषयतया न अनविगतसमयाः ( पुमांसो लिङादिभ्यः प्रवृत्तिकारकेभ्योऽपि ) प्रवर्तन्ते ' इत्यपि मिथ्या, तन्मात्र- [ तद्विषयमात्र- ] संगतिज्ञस्यापि तत्प्रसङ्गात् । ( दूषणान्तरमाह-) अप्रत्ययपूर्वायां च शब्दपरतन्त्रस्य प्रवृत्तौ विषयवेदनाऽनुपयोगात् । प्रबलपवनेरितस्य इव अन्धपङ्ग्वादेः न वेदनं प्रवृत्त्यङ्गम् । (चोदयति-) कारकोऽपि प्राणिस्थः अहिदंशः ज्ञानमपेक्षते, नैवम् । ज्ञानस्यैव तत्र कारकत्वात् । विनाप्यहिदंशं शङ्काविषेणापि मरणदर्शनात् ।

योऽप्याह, ' अभिधेयविज्ञानं प्रति कारकहेतुरपि शब्दो यथा शक्तिज्ञानमपेक्षते तथा प्रवृत्तिशक्तिसंविदमपि ' इति । तेनापि न ज्ञापकादन्यत्र ज्ञानापेक्षा प्रदर्श्यते, ज्ञानकारकस्यैव 'ज्ञापकः' इत्याख्यानात् ( तथा च न सपक्षेण व्यभिचारः इति भावः ) ।

ननु ज्ञानकारकोऽपि चक्षुरादिः न शक्तिज्ञानं अपेक्षते । किमतः ? ( पार्श्वस्थ आह- ज्ञानं प्रति ) शब्दस्य अकारकत्वप्रसङ्गः ( ज्ञानकारकचक्षुरादिवैधर्म्यात् ) । ( चोदकः पार्श्वस्थमाह- ) अयमपरो दोषः । ( पार्श्वस्थ आह- ) कुतर्हि अर्थबोधः ? ( चोदक आह- ) अभ्यासात् कशाङ्कुशवत् । उक्तं च ' अभ्यासात् प्रतिभाहेतुः सर्वः शब्दः समासतः । बालानां च तिरश्चां च यथार्थप्रतिपादने । अनागमश्च सोऽभ्यासः समयः कैश्चिदिष्यते ॥ ' इति । ( अभ्यासात् इत्यादेरयमर्थः । नाभिधानाधीनः अर्थबोधः शब्दात्, अपि तु अभ्यासाधीनः । यथा हि खलु कशाङ्कुशाभिघातादयः अनभिधायका अपि वाजिगजादीनां अभ्यासात् स्वतः प्रवृत्तिनिवृत्तिहेतुं अर्थप्रतिभासां प्रतिभां भावयन्तः प्रवर्तका निवर्तकाश्च, तथा संक्षेपतः सर्वः शब्दः व्युत्पन्नानां अव्युत्पन्नानां चेह जन्मनि । अभ्यासात् इति अभ्यासजनितां भावनां अभ्यासशब्देनाह कार्ये कारणोपचारात् । अयं

च प्राग्भवीयोऽभ्यासः अवश्याभ्युपेयः इत्यत्र दृष्टान्तमाह– बालानां च तिरश्चां चेति । नहि तेषां प्राग्भवीयभावनामन्तरेण प्रवृत्ति–निवृत्तिहेतुभूतार्थप्रतिभासप्रतिभोत्पादनसंभवः । अर्थाभासप्रतिभोत्पादनेन चार्थप्रतिपादनमुक्तम् । ‘ अनागमश्च सोऽभ्यासः ’ । आगम्यते प्राप्यते अस्मात् इति कारणमागमः । अविद्यमान आगमो यस्मिन् असौ अनागमः अनादिरित्यर्थः । ‘ समयः कैश्चिदिष्यते ’ । समयः इति आदिमत्तामाह । नैयायिकादयो हि ईश्वरनिर्माणं शब्दार्थसंबन्धं समय इत्याचक्षते । स चाभ्यासस्य भावनाया विषयः इत्यभ्यास उक्तः । इति ) ( अथ पूर्वपक्षी चोदकमाह– ) न च ब्रूमः सर्वो ज्ञापको ज्ञानापेक्षः, किंतु स एव नेतरः बीजादिष्वदर्शनात् ( स एव ज्ञापक एव । नेतरः कारकः । कुतः ? बीजादिषु अङ्कुरादिकारकेषु अदर्शनात् ज्ञानापेक्षायाः ) । न च दृष्टविपरीतस्वभावकल्पना लिङादीनां अनुपपत्त्या, तादृशानुसारेणापि उपपत्तेः । प्रत्ययश्च सहाभिधानात् प्रकृत्या, तदनुवादाद्वा, तद्द्योतनाद्वा, तत्संबन्ध्यर्थान्तराभिधानाद्वा तथा समभिव्याहारमर्हति । ( प्रकृतिप्रत्यययोः सहाभिधानं तदनुवादात् प्रकृत्यर्थानुवादाद्वा यथा एको द्वौ बहवः इति, तद्द्योतनात् प्रकृत्यर्थद्योतनाद्वा यथा ‘ कुमारी ’ इति ईप्रत्ययः स्त्रीत्वं द्योतयति, तत्संबन्ध्यर्थान्तराभिधानात् । यथा ‘ पचति, पाचकः, दण्डी ’ इति तिप् – अक – इनयः प्रकृत्यर्थविशिष्टभावनाः कर्तृसंबन्धार्थाः ) अवाचकस्य तु ( लिङादेः ) प्रवृत्तेः कारकस्य स न युक्तः ( समभिव्याहारः ) । ( शङ्कते– ) संख्याद्यभिधेयान्तरनिबन्धनः स इति चेत्, अस्तु । ( समभिव्याहारमात्रम् । विशेषस्तु न सिध्यतीत्याह– ) प्रवृत्तेस्तु प्रत्ययेन अप्रतिपाद्यमानायाः कथं प्रकृत्यर्थसंबन्धः ? अभिधयैव प्रत्ययस्य प्रकृत्यर्थानुरक्ता प्रवृत्तिः इति चेत् ( प्रवृत्तिर्भावना ) ? ( निराकरोति– ) न तावत् भावना कार्यरूपा लिङाद्यभिधेया इति शब्दविधिवादिभिः शक्यं वक्तुम् । तस्यां तर्हि तादृश्यां ( कर्तव्यताकारायां प्रवृत्तौ ) लिङादेः कारकत्वेन संगतिः । समभिव्याहृतिस्तु तस्याः वाच्यं लक्ष्यं वा तथाविधेन ( वाच्येन लक्ष्येण वा ) संबन्धं उपादत्ते, अप्रतीतयोः घटनाऽयोगात् । कार्यायां तु प्रवृत्तौ न नियमनिमित्तं समस्ति अनभिधेयस्य प्रवृत्तिहेतोः ( विशिष्टसमभिव्याहारनिमित्तं अविद्यमानविशिष्टाभिधेयस्य शब्दस्वरूपविधिवादिनो मते प्रवृत्तिहेतोः लिङादेः इत्यर्थः ) ।

( कार्यकल्पनात् इति विवृणोति– ) अपि च अश्रुतफलेषु ( पिण्डपितृयज्ञादिषु ) फलाध्याहारः, क्वचित् ( समिदादौ ) क्रतूपकारकल्पना , श्रुतानामपि स्वर्गादीनां फलत्वाध्यवसायः इति सर्व एव महिमा विधेः । स शब्दस्य तद्भावे ( विधिभावे ) अनुपपन्नः । नहि तदा शब्दादनवगम्यमानं अन्यथा ( फलं क्रतूपकारं विना ) गम्यते । नहि लिङादिस्वरूपस्यैव अन्यथाऽनुपपत्तिः । प्रवर्तकस्य इति चेत् ( प्रवर्तकत्वानुपपत्त्या फलादिकल्पना, इति शङ्का ) न, तस्यापि ( प्रवर्तकत्वस्य ) पवनादिवर्तिन इवोपपत्तेः फलरूपं कारकं विना । ( द्वितीयकारिकार्थमुपसंहरति– ) तस्मात् न विधिः शब्दः तद्व्यापारो वा ॥ २ ॥

ननु अनभिधेये ( शब्दव्यापारे ) एते दोषाः । अभिधेये एव तु लिङादिशब्दानां पुरुषं प्रति ( प्रयोज्यं प्रवर्तमानं प्रति ) प्रयोजकव्यापार आत्मीयः प्रवर्तना । एवं ह्युक्तं ‘ अभिधाभावनामाहुरन्यामेव लिङादयः ’ (वा. २।१।१।१ पृ. ३७८ ) ( अभिधायाः शब्दस्य भावनां प्रवर्तनामाहुरित्यर्थः ) तथा च ज्ञापकत्वात् प्रामाण्यम् । प्रवृत्तिहेतुं बुद्ध्वा पुरुषस्येच्छया प्रवृत्तिः ( तथा च प्रवृत्तिनियमोऽपि उपपन्नः ), संबन्धबोधापेक्षा च । ( तथा च संविदाश्रयत्वमपि उपपन्नम् ), अभिधेयसंबन्धनियमश्च अभिधेयत्वात् (अभिधेययोर्धात्वर्थप्रत्ययार्थप्रवर्तनयोः संबन्धनियमात् प्रकृतिप्रत्यययोः समभिव्याहारविशेषोऽपि प्रवर्तनाया अभिधेयत्वात् उपपन्नः इत्यर्थः ), प्रतीतप्रवर्तनाऽन्यथाऽनुपपत्त्या कार्यकल्पना ( अपि उपपन्ना ) इति । ( तदेतद् दूषयति– ) नैतत् सारम् । **‘ न प्रयोगानिरूप्यत्वाद् वैयर्थ्यात् पूर्वदोषतः । अप्रवृत्तेः फलायोगाद् रूपोक्तेर्व्यापृतिः श्रुतेः ॥ ’ ३ ॥** विधिः इत्यनुपज्यते । नहि प्रेषणाऽध्येषणाऽभ्यनुज्ञालक्षणः शब्दस्य व्यापारो निरूप्यते, तस्य



पुरुषधर्मत्वात् । नापि अन्यः तत्समर्थाचरणलक्षणः कारीषादिवत् अनुपलब्धेः ( कारीषोऽग्निरध्यापयति इतिवत् ) । अत एव उपलब्धिः संबन्धापेक्षणादसमीचीना । ( ननु यथा णिच्प्रत्ययः कारीषादीनां अध्ययनप्रवृत्त्यनुकूलं व्यापारमभिधत्ते तथा लिङादयः स्वव्यापारमेव पुरुषप्रवृत्त्यनुकूलां प्रवर्तनामभिधास्यन्ते इति चेन्नेत्याह– ) न च णिज्वत् प्रेषणाद्यतिरिक्ते तत्समर्थाचरणमात्रे लिङादयो निरूपितप्रयोगाः । कारीषादिस्तु शीतापनोदनादिना शक्ततां संपादयन् प्रवृत्तिहेतुः । शब्दस्तु कथमिति न निरूप्यते । (एतदेव विवरीतुं आशङ्क्य निराकरोति–) स्यान्मतम् । पवनादिरिव लिङादिः प्रेरयति पुरुषम् । **तदसत्** । अभिधानवैयर्थ्यात् । अप्रतीतव्यापारस्यापि ( लिङादेः ) वाय्वादेरिव स्वभावतः प्रेरकत्वात्, पूर्वोक्तदोषापाताच्च ( अप्रमाणत्वादिदोषप्रसङ्गादित्यर्थः ) । नहि प्रवृत्तिं प्रति कारकत्वे शब्दस्य सदपि तद्व्यापाराभिधानमङ्गम् । अनभिहितव्यापारस्यापि तस्य कारकत्वात्, कारकस्य अनपेक्षितज्ञानत्वात् ( एतेन वैयर्थ्यात्, पूर्वदोषतः इति पदे विवृते ) ( अप्रवृत्तेः इति विवृणोति– ) उपेत्यापि तु शब्दस्य प्रयोगं ब्रूमः, न प्रवर्तेत पुरुषः, प्रवर्तयतोऽपि शब्दस्य अननुरोध्यत्वात् । नहि सर्वस्मिन् प्रवर्तयितरि प्रवृत्तिः प्रेक्षावताम्, अपि तु अनुविधेये । ( अथ अनुविधेयः शब्दः कस्मात्त न भवति, इत्यत आह– ) न च अर्थानर्थप्राप्तिपरिहाराद्यनुविधानकारणं स्वाम्यादाविव शब्दे समस्ति ( आदिशब्देन करुणादुःखिनोर्ग्रहणम् ), फलात् प्रवृत्तौ तद्वैयर्थ्यम् ( शब्दव्यापारवैयर्थ्यम् ) । तत एव ( शब्दव्यापारात् ) फलावगमात् अवैयर्थ्यं इति चेत्, तन्न, फलायोगात् । आप्ते हि सप्रत्ययक्रिये हितकरे एव प्रवर्तयितरि अन्यथाऽनुपपत्त्या फलावगमः । ( प्रत्ययः उपदिष्टस्यार्थस्य मानान्तरेण संवादः, तेन सह वर्तते इति सप्रत्यया क्रिया यस्य उपदेशरूपा, सा यस्योपदेष्टुः, स तथोक्तः, तस्मिन् सप्रत्ययक्रिये । यदेव यस्मै हितमुपदिशति कर्म, तस्य तत्प्रवृत्तौ हितप्राप्तेः संवाददर्शनात् उपदेष्टृवर्तिनी अपि तत्त्वज्ञानकारुण्ये ईपरकरज्ञाने एव इति तदेतस्मिन् प्रवर्तयितरि तत्प्रवर्तनाऽन्यथाऽनुपपत्त्या फलावगमः इत्यर्थः) । शब्दे तु किमनुपपन्नम् ? प्रवर्तनामात्रस्य ( आप्तानाप्तप्रणेतृकस्य ) वाय्वादाविव विपरीते अप्युपपत्तेः । पुरुषश्रेयोऽर्थं प्रवृत्तेः शास्त्रस्य नैवमिति चेत्, शासनाद्धि शिष्याणां शास्त्रमुच्यते । शासनं च शङ्कितसमारोपितरूपव्यवच्छेदेन हिताहितप्राप्तिपरिहारोपायतत्त्वज्ञापनम् । ततश्च शास्त्रत्वात् एव पुरुषश्रेयोऽवगतिरित्यर्थः ) न, प्रमाणाभावात्, प्राक् ( फलावगमात् ) शास्त्रत्वासिद्धेः । ( तदनेन फलायोगात् इति विवृतम् ) ।

( रूपोक्तेः इति व्याचष्टे– ) लिङादिव्यापारे च विधौ ( लिङादि– ) स्वरूपाभिधानप्रसङ्गः । अन्यथा ( लिङादिस्वरूपानभिधाने ) शब्दविशिष्टव्यापाराप्रत्ययात् ( लिङादेः– ) संनिधानात् विशिष्टत्वे अर्थस्यापि तत्प्रसङ्गात् ( व्यापारत्वप्रसङ्गात् ) योग्यत्वस्य उभयत्रापरिज्ञानात् । ( कारिकार्थमुपसंहरति– ) तस्मात् नाभिधेया भावना विधिरूपम् ॥ ३ ॥

**अथ मतम्** । अभिधैव भावना विधिर्लिङाद्यर्थ इति । ( नाभिधेया भावना अभिधाभावना, अपि तु अभिधैव अर्थाभिधाव्यापारः शब्दस्य भावना विधिलिङाद्यर्थः इत्यर्थः ) अत्रोच्यते । **‘ प्रवृत्तेः सर्वतोऽर्थे वा प्रसङ्गात् कार्यतो गतेः । अस्थानान्नियतेर्हेतोरभावाच्चाभिधैव न ॥ ’ ४ ॥** विधिरित्यनुपज्यते । [ सर्वतः प्रवृत्तेः प्रसङ्गात्, अर्थे प्रवृत्तेः प्रसङ्गात्, कार्यतो गतेः हेतोः अस्थानात् हेतोः नियतेरभावाच्च हेतोः अभिधैव न विधिः इति पदान्वयः । के. ] ( प्रवृत्तेः सर्वतः प्रसङ्गात् इति हेतुं विवृणोति– ) अभिधा चेत् विधिः, सर्वशब्दानां यथास्वं अभिधेयेषु तद्भावः ( अभिधाव्यापारसद्भावः ) इति घटादिशब्देभ्योऽपि प्रवृत्तिप्रसङ्गः । अस्याः ( अभिधायाः ) अविशेषात् । ( अर्थे वा इति विवृणोति– ) अभिधेयविशेषाद्भेदे स एव प्रवृत्तिहेतुः अन्वयव्यतिरेकाभ्याम् । ( अन्वयव्यतिरेकाभ्यां अभिधेयविशेषावगमे सति प्रवृत्तेः, सत्यामपि अभिधायां घटादिशब्देभ्यः तदभावे प्रवृत्तेरभावात् इत्यर्थः ) । ( कार्यतो गतेः इति विवृणोति– ) अनन्यलभ्यस्तु शब्दार्थः इति स्थितौ ( अर्थप्रतीतिलक्षण– ) कार्योन्नेयायाः अभिधायाः शब्दार्थत्वमयुक्तम् ।

( अस्थानात् इति विवृणोति– ) अभिधायाश्च अभिधाऽपेक्षणे अनवस्थापातात् । ( अभिधाऽभिधाऽपि अभिधात्वेन अभिधेया, एवं तदभिधाऽपि इत्यनवस्थापातः) । अर्थाभिधैव अपेक्षते ( अभिधाम्, नाभिधा ) इति चेत्, न । नियामकस्य हेतोरभावात्, अर्थाभिधानस्य च । नहि अत्र हेतुरस्ति अर्थाभिधैव अपेक्षते, नाभिधेति ( अर्थाभिधानस्य च इत्यनेन ‘ नियतेर्हेतोरभावाच्च ’ इति व्याख्यातम्, ‘ च ’ इति अभिधानाभावहेतुसमुच्चयात् ) ; अभिधीयते अभिधा इति, पुरुषस्य च प्रवृत्तिः, इति किं केन संगतम् । (अभिधीयते लिङादिभिः स्वार्थाभिधा इति, प्रेक्षावतां हिताहितप्राप्तिपरिहारार्थिनां प्रवृत्तिः इति च किं केन संगतम्, न खलु प्रासादः श्वेतः इति पिपासवो दहनमाहरन्ति । उपसंहरति– ) तस्मात् अभिधा न विधिः ॥ ४ ॥

अस्तु तर्हि ( लिङादीनां ) अर्थभेदः ( विधिः ) । नैतदपि । **‘ अपौरुषेये प्रैषादिर्नृधर्मो नावकल्पते । न च प्रवर्तनामात्रमविशेषमकर्तृकम् ॥ ’** ५ ॥ लोके हि प्रतीतः प्रेषणाऽध्येषणाऽभ्यनुज्ञालक्षणः अभिप्रायातिशयः प्रयोक्तृधर्मो लिङर्थः । तस्य अपौरुषेयेषु वेदवाक्येषु असंभवः । (लोकावगतसामर्थ्यात् लिङादेः वेदेऽपि श्रूयमाणात् प्रैषादि– ) प्रतीतेः संभवः इति चेत्, न । पौरुषेयत्वापत्तेः । ( वेदान्तवादिनः प्रत्याह– ) वेदात्मनः ( वेदरूपदेहवतः आत्मनः ) अभिप्रायः इत्यतिस्थवीयः । तेन असंदब्धत्वे अभिप्रायावगत्यभावात्, संदब्धत्वे पौरुषेयत्वदोषात् ।

यदपि मतं अनेकसामर्थ्यपरिकल्पनादोषात् व्यभिचाराच्च प्रैषादीनामवाच्यत्वात् अव्यभिचारात् प्रवर्तनामात्रं लोके लिङाद्यर्थः ( न पुनः प्रैषादयः ) तस्य अपौरुषेये वेदेऽपि उपपत्तिरिति । इदमपि अचतुरस्रम् । निर्विशेषसामान्यायोगात् अकर्तृकत्वे व्यापारानुपपत्तेश्च । ( कारिकोक्तं प्रथमं हेतुं विवृणोति–) न तावत् प्रैषादयो विशेषा वेदे संभविनः । नाप्यन्यो विशेषः कश्चिदुपदर्श्यते । तदुपदर्शने वा सामान्याभिधानप्रसाधनं अस्मिन्नवसरे व्यर्थम् ( विशेषस्यैव प्रवर्तकत्वात् ) । तदेतत् अपास्तसकलभेदं प्रवर्तनासामान्यं ब्राह्मण्यमिव समुज्झितकठादिभेदं स्यात् । ( द्वितीयं हेतुं विवृणोति– ) प्रवर्तना च प्रवर्तयितुर्व्यापारः, स तमन्तरेण इति नातिविराजते, पुरुषस्य अभावात् । शब्दस्य च ( अधस्तात् ) प्रवर्तकत्वनिषेधात् । ( तस्मात् ) प्रवर्तयितुरभावः ( तदभावात् तद्व्यापारायाः प्रवर्तनाया अप्यभावः ) ॥ ५ ॥

यदि मन्येत, फलं प्रवर्तकम्, तद्व्यापारः ( अर्थिता प्रीत्यात्मता वा ) प्रवर्तना, फलार्थिनः पुरुषस्य तत्साधने प्रवृत्तेः । अन्यथा ( फलव्यापारमन्तरेण ) अभावात् । न कश्चित् व्यापारविशेषः प्रवर्तना, अपि तु प्रवृत्तिसमर्थं व्यापारमात्रं प्रयोजकव्यापारः । ‘ भिक्षा वासयति ’ ‘ कारीषोऽग्निरध्यापयति ’ इति दर्शनात् । ( दूषयति– ) तदसत् । **‘ अर्थिता व्यापृतिः पुंसो नियमः किंनिबन्धनः । फलसाधनता कर्मनिश्रेया साध्यता कदा ॥ ’** ६ ॥ फलार्थिता चेत् प्रवृत्तिहेतुः सा इच्छा तद्योगो वा इच्छासमवायो वा ‘ कृत्तद्धितसमासेषु संबन्धाभिधानं त्वतल्भ्यां ’ इति ( वार्तिककार– ) वचनात् पुरुषधर्मः इति न फलं व्यापृतिः । अथ तदिच्छोपहारमुखेन फलस्य प्रवृत्तिहेतुधर्मः प्रीत्यात्मता फलव्यापारः प्रवर्तना । ( इष्टलक्षणं फलम्, सुखानुशायिनी चेच्छा इति फलेन सुखात्मना भवितव्यम्, सुखत्वेन तदिच्छामुपहरति, इच्छा च प्रयत्नं प्रसूते, इति इच्छोपहारमुखेन फलसमवायिनी प्रीत्यात्मता प्रवृत्तिहेतुव्यापारत्वात् भवति प्रवर्तना इत्यर्थः ) साऽपि तत्रैव ( प्रीत्यात्मता फले एव ) न कर्मणि । फलव्यापाराच्च प्रवर्तमानः सर्वत्र प्रवर्तेत ( फलादन्यत्वेन तत्साधनस्य अन्येषां चाविशेषात्– ) नियमनिमित्ताभावात् । ( चोदयति– ) तत्साधनत्वात् कर्मण्येव प्रवर्तते, न सर्वत्र ( सर्वेषां फलसाधनत्वाभावात् । परिहरति– ) तत एव ( तत्साधनत्वे सति प्रवृत्तिभावादेव भवतु ) तर्हि तत्साधनत्वं प्रवृत्तिहेतुः कर्मणि न फलरूपम् । ( भवतु को दोषः ? इत्यत आह– ) तच्च कर्मसमवायि ( न फलसमवायि ) इति कर्म प्रवर्तकं स्यात् ( न फलम् ) ।

( चोदयति– ) एवं तर्हि तत्साध्यता प्रवृत्तिहेतुः । सा च फलसमवायिनी इति न दोषः । तथाहि, समभि-



लषितस्य तृप्त्यादेः कर्मविशेषेण साध्यत्वात् तत्रैव प्रवृत्तिः ( न तु सर्वत्र । तदेतद्दूषयति– ) का पुनरियं साध्यता ? यदि रूपं फलस्य, सर्वत्र प्रवृत्तिप्रसङ्गः ( फलरूपसाध्यतायाः साधनाधीननिरूपणत्वाभावात् न साधने प्रवर्तयेत् । प्रवर्तयेद्वा सर्वत्रैव अन्यत्वाविशेषात् इत्यर्थः । चोदयति– ) कारकविशेषः ( प्रवर्तकः । विशेष्यते व्यावर्त्यते कर्मकारकं गगनकुसुमादिभ्यो येन शक्तिभेदेन स तथोक्तः ) स हि फलस्य साधननियतः शक्तिभेदो रूपादिवत् । अन्यथा ( फलस्य शक्तिभेदाभावे ) कारकत्वाभावात् ( कारकत्वाभावप्रसङ्गात्, शक्तिमत एव कारकत्वात् ) । यथा हि रूपादीनां ( कर्मकारकाणां ) शक्तिविशेषात् ग्रहणे साधननियमः, तथा फलेष्वपि द्रष्टव्यः, गगनकुसुमादेरनुत्पादात् तृप्त्यादेश्च ( फलस्य ) कर्ममात्रेण । ( तदेतत् विकल्प्य दूषयति– ) कदा पुनरयं शक्तिभेदः साध्यताऽभिधानः ? फलस्य भावसमये न तावत्, वैयर्थ्यात् अप्रवृत्तिहेतुत्वाच्च । न खलु उत्पन्नस्योत्पादः यद्योगिनी शक्तिरर्थवती । नापि सिद्धे फले तत्साधने कश्चित् प्रवर्तते । अभावकालेऽपि असत् कथं शक्तिमत् ? खपुष्पवत् ।

ननु सदेव कार्यमुत्पद्यते । इदं तावदसत्कार्यवादिनोऽनुनाथ्य वक्तव्यम् । अपि च निरुपादानकार्योऽनुत्पादात्तदत्यन्तव्यतिरेकाभावादुपादेयस्योपादानरूपेण सत उत्पत्तिरुच्यते । सर्वात्मना तु सत्त्वे तदनुपपत्तेर्वैयर्थ्याच्चोपादेयवत् । साध्यं नोपादानम् । कथं तर्हि कर्म कारकम् ? नैव कर्मकारकं कारकाश्रितमिति केचित् । विकारप्राप्ययोर्वा सत्त्वाददोषः । त्रैविध्यं तर्हि हीयते । कामं न त्वसतः कारकत्वं शक्याध्यवसानम् । कथं तर्हि घटं करोतीति प्रयोगः ? उपादेयश्रुत्या उपादाननिर्देशात् । बुद्धिस्थस्य वा क्रियासुप्रयोगाद्युक्तो निर्वर्त्यस्य कारकभावः । यथोक्तम्– ‘ व्यक्तौ पदार्थे शब्दादेर्जन्यमानस्य कर्मणः । कारकत्वं तथा सिद्धं बुद्धिरूपप्रकल्पितम् ॥ ’ एतेन साध्यसाधनयोः परस्परानुकूल्यं परास्तम् ( एतेन फलगतशक्तिभेदसाध्यतानिराकरणमात्रेण साध्यसाधनयोः सिद्धिं प्रति परस्परानुकूल्यं संबन्धः साध्यता परास्ता वेदितव्या । तत्रापि साम्यात् ‘ कदा ’ इति प्रश्नस्य ) ।

अस्तु तर्हि कर्म प्रवर्तकम्, अभिमतसाधनता तस्य प्रवर्तना ( प्रयोजकव्यापारः ) प्रवृत्तिहेतुरूपत्वात् । न, तस्य विषयत्वात् ( प्रवृत्तिकर्तुः प्रयोजकः प्रवर्तकः । सिद्धश्च स भवति । तदिह सिद्धं चेत् कर्म प्रवृत्तेः प्राक्, प्रवृत्तेर्भावनाया विषयः, न भाव्यम् । विषयश्चेत् कर्म, असिद्धत्वात् कथं प्रवर्तकमित्यर्थः ) अपिच **‘ प्रज्ञायते लिङादीनां व्यञ्जनीया प्रवर्तना । प्रयोक्तृधर्मो, न णिचो यथाऽनियतकर्तृका ॥ ’** ७ ॥ लोकाद्धि शब्दार्थाधिगमः । तत्र च प्रवर्तना नियताधारा प्रयोक्तृसंश्रयैव लिङाद्यर्थः अवगम्यते । णिजर्थस्तु सा अनियताधारा । न च णिजर्थवत् लिङाद्यर्थोऽपि भवितुमर्हति । यथालोकप्रज्ञानं शब्दार्थव्यवस्थानात् ॥ ७ ॥

यस्य तु ( दर्शनं इति परेणान्वयः । दर्शनमाह– ) “ एवं सति पुरुषयत्नः अनुवादः, होमानुगतस्तु व्यापारः श्रुत्या उच्यते इति ( तेषु–तेषु शास्त्रप्रदेशेषु भाष्यकार– ) दर्शनात् चेतनकर्तृव्यापारात्मिका ( प्रयत्नशब्दप्रवेदनीया ), इतरथा वा स्पन्दास्पन्दसाधारण्येन औदासीन्यप्रच्युत्यात्मव्यापारमात्रं भावना विधिशब्दपर्याया लिङर्थः अपरामृष्टकालभेदा ( ननु यदि भावनैव विधिः, पचति, अपाक्षीत्, पक्ष्यति इत्यत्रापि अस्ति भावना, इति पचेदित्यनेन तुल्यार्थत्वप्रसङ्गः इत्यत आह– अपरामृष्टकालभेदा प्रवृत्तिहेतुर्भावना विधिः । सा च लिङर्थः । न तु एवं लडाद्यर्थः इत्यर्थः ) । लडादिषु तु ( भावनायाः ) सत्त्वेऽपि कालविशेषेण ( वर्तमानादिना ) विधिरूपप्रतिबन्धात् अप्रवृत्तिहेतुत्वात् यद्यादिभिरिव लिङभिधेयायाः ( ‘ यदि रथंतरसामा सोमः स्यात् ’ ‘ यस्योभयं हविरार्तिमार्च्छति ’ इत्येवमादिषु लिङभिधेयायाः प्रतिबन्धो यथा ) ” इति दर्शनम्, तं प्रति उच्यते **‘ नैकं विबद्धं, न च तद्विशेषश्चेत् स कथ्यताम् । कालभेदाऽपरामर्शः कामं नास्मात् प्रवर्तते ॥ ’** ८ ॥ ( यदि हि भावना विधिः इत्येकमेव तत्त्वम्, ततः– ) लिङादिषु ( लडादिषु ? ) कालभेदेन विधिरूपस्य प्रतिबन्धे भावनाज्ञानाभावः ( विधेः भावनायाश्च ) अभेदात् । अविबद्धे ( वा भावनायाः विबद्धाविबद्धविरुद्धधर्माध्यासात् ) भेदप्रसङ्गात् । न खलु एकं विबद्धमविबद्धं च

कल्पते । ( चोदयति– ) विशेषस्य प्रतिबन्धो न भावरूपस्य ( ‘ भाव ’ इति ण्यन्ताद्भवने ‘ एरच् ’ इत्यचि कृते भावनामाह । परिहरति– ) विशेषरूपभावाभावानुविधानात् प्रवृत्तिभावाभावयोः । स तर्हि विशेषो विधिः, ( अतः ) न भावो भावना विधिः उपदेशः प्रेरणं इत्येकं ( वस्तु )। निदर्शनीयश्चासौ । ( भावनायाः– ) कर्तव्यता इति चेत्, न, तस्या एव बुभुत्सनात् । ननु कालभेदपरामर्शविरह एव विशेषः ( भावनायाः कर्तव्यताविधिः ), किमन्येन ( विशेषेण ) वर्तमानादिरूपायाः अननुष्ठेयत्वात् तदभावेऽपि अनुष्ठेयत्वप्रतीतेः । ( दूषयति– ) भवतु एष विशेषः, न तु पुरुषस्य प्रवृत्तिहेतुः ( अतद्धेतुश्च कथं विधिः ? ) । कामं प्रत्येतु ( पुमान् ) कालभेदविभक्तां भावनाम्, अनुष्ठानं तु कुतः । नहि वस्तुस्वरूपमात्रप्रतिपत्तिः प्रवृत्तिनिमित्तम् । न खलु ‘ घटः ’ इति प्रतिपद्य, तत अर्थे ( घटशब्दार्थे कालभेदपरामर्शरहितं प्रतिपद्य ) तावत्येव तस्मिन् ( घटे ) प्रवर्तते । साध्यतया प्रवर्तते इति चेत्, केयं साध्यता ? यदि असिद्धत्वम्, ( तदा अत्यन्तप्रागभावाभ्यां ) खपुष्पम् ( खपुष्पवत् तत् )। मृत्पिण्डावस्थायां च ‘ घटो नास्ति ’ इत्यपि ( साध्यं इति प्रवृत्तेः– ) प्रसङ्गः । अथ कारकविषयत्वम्, तैः ( कारकैः ) विषयीकृतायां प्रवृत्तिकारिकायां किमर्थं प्रवर्तेत ( साधनप्रवर्तकत्वं हि कर्तृव्यापारः, प्रवृत्तानि चेत् साधनानि स्वव्यापारे, कृतं तर्हि प्रवर्तकेनेत्यर्थः )। साध्यायां च ( भावनायां ) अनेन ( हिताहितप्राप्तिपरिहारार्थिना ) प्रवर्तितव्यं इति कुतस्त्यम् ? फलवत्ताऽवगमात् प्रवर्तते इति चेत्, स एव कुतः ? ( अन्तरङ्गतया धात्वर्थभाव्यावरुद्धायां भवन्मते कुतः ? ) । अनुष्ठेयत्वावगमात् इति चेत्, न, सिद्धे अनुष्ठेयत्वे फलकल्पना ततश्च अनुष्ठेयत्वं इति इतरेतराश्रयत्वात् । एवमेव ( तद्धेत्वभावात् इति वक्ष्यमाणस्य हेतोः एवं इति परामर्शः ) अप्रवृत्तस्य आद्या प्रवृत्तिः आकूतम्, चिकीर्षा, अध्यवसायो वा लिङाद्यर्थः, उत्तरकाला प्रवृत्तिः प्रयत्नो वा देहवचनचेष्टा वा लडाद्यर्थः इति ( आचार्यदेशीयानां ) विशेषाभिधानं प्रत्यूढम्, तद्धेत्वभावात् ( आद्यप्रवृत्तिहेतोरभावात् ) पुरुषस्य रूपमात्रप्रतीतेः (प्रतीत्या) अप्रवृत्तेः, हेत्वन्तराप्रतीतेश्च ( साध्यतायाः फलस्य वा अप्रतीतेश्च ) । तां च ( प्रवृत्तिं ) भूतवर्तमानौ प्रतिबध्नीतः, नेतरः कालः, भविष्यति अनुष्ठेयत्वाविरोधात् ॥ ८ ॥

यदपि समर्थनम्, अप्राप्तसंबन्धया क्रियया आत्मनः संबन्धस्य प्रतीत्या प्रवृत्तिः, यथा ‘ अद्य तवेदं कर्म ’ इति लोके ( तथा च अप्राप्तक्रियाकर्तृसंबन्ध एव विधिः इति भावः । एकदेशी तु प्रसङ्गमापादयति– ) अत्रापि तु ( समर्थने पश्यतीत्यादौ ) लडन्ते श्रोतुः प्रमाणान्तरेण अनधिगतमर्थमवगमयति विधित्वप्रसङ्गः । ( चोदकः परिहरति– ) न, निमित्तान्तराप्राप्ते ( क्रियाकर्तृसंबन्धे ) तस्य ( लिङादेः ) तदभिधानं ( संबन्धाभिधानं ) तत्र ( लडादौ ) निमित्तान्तरप्राप्तस्यैव भविष्यत्त्वेन ( रूपेण ) अभिधानात् अर्थस्य ( संबन्धस्य ) । लिङादिभिस्तु तथाऽभिधानम् ( निमित्तान्तराप्राप्ततया अभिधानम् । अप्राप्ते हि द्विविधा प्राप्तिः प्रतिषिध्यते उत्पत्तिः प्रमितिश्च । तत्र मानान्तरानधिगतं संबन्धं अवगमयति लडन्ते यद्यपि प्रमितिरूपा प्राप्तिर्न समस्ति, समस्ति तु उत्पत्तिरूपा, निमित्तान्तरात् उत्पत्स्यमानस्यैव तस्य तत्राभिधानात् । न तु एवं लङन्ते तद्वाक्यार्थावगतिनिबन्धनं पुरुषप्रयत्नमन्तरेण अन्यतो यागादिसंबन्धासिद्धेः इत्यर्थः ) अतश्च अज्ञातज्ञापनं अप्रवृत्तप्रवर्तनं · उभयविधप्राप्तिप्रतिषेधेन अप्राप्तक्रियाकर्तृसंबन्धो विधिः इति विधिविदां उद्गाराः । ( तदेतद्दूषयति– ) नैतत् सारम् । यस्मात्, ‘ **न प्रवृत्तिर्योगधियो लोकेऽभिप्रायवेदनात् । मृषा भवेत्तथा कामं किं मुधैष प्रयस्यसि ॥** ’ ९ ॥ प्रतिपद्यतां नाम अयमात्मनः क्रियायोगं शब्दात्, तं च तथाभावे ( मानान्तरेण संवादे ) तथेति निश्चिनोतु, विपर्यये ( मानान्तरेण बाधे ) नैतदेवमिति । प्रवर्तते तु कस्मात् ? लोके तु ‘ अद्य तव इदं कर्म ’ इति वचनात् अधिगतवक्त्रभिप्रायो यो यदभिप्रायानुरोधी स प्रवर्तितुमर्हति, अन्यथा ( यदि क्रियाकर्तृसंबन्धबोधमात्रं प्रवृत्तिहेतुः न तु अनुविधेयाभिप्रायभेदबोधः, ततः संबन्धबोधः सर्वसाधारणः इति ) सर्वस्य प्रवृत्तेः ( प्रसङ्गात् ) । ननु इहापि शब्दानुरोधी प्रवर्त्स्यति । ( दूषयति– ) न शब्दानुरोधे किंचन निमित्तम् । ननु



अस्ति प्रामाण्यम्, तच्च प्रवृत्तौ समर्थितं भवति, अन्यथा ( प्रवृत्त्यभावे, तदभिधायिनो वेदराशेः ) मृषात्वापातात् । ( पृच्छति– ) कथम् ? ( पुनः प्रवृत्त्यभावे संबन्धाभावः ? उत्तरम्– ) भूतवर्तमानयोः संबन्धयोः ( उपलम्भार्हयोरनुपलब्धेः ) अभावात् । भविष्यत्यपि ( संबन्धे ) न चेत् पुरुषः प्रवर्तते, न तत् ( प्रामाण्यं ) स्यात् इति मृषात्वापातः । ( दूषयति– ) पुरुषप्रवृत्त्या तर्हि प्रामाण्यम् । ( भवतु को दोषः इत्यत आह– ततः ) भवतु कामं मृषा ( शब्दः ) किमर्थोऽयमस्य ( पुंसः ) शब्दप्रमाणीकरणप्रयासः ? ( न खलु अस्य प्रेक्षावतः तत्प्रमाणीकरणे हितप्राप्तिरहितनिवृत्तिर्वा । यदि प्रामाण्यसिद्धिमात्रं ईहितं तत्र– ) बहुतरं च तस्य एवमायसितव्यमापतति सकलमिथ्याज्ञानप्रमाणीकरणात् । ननु न शाब्दं मिथ्याज्ञानं द्विविधहेत्वभावात् ( तस्मात् प्रामाण्यमेव शब्दस्य पुरुषप्रवृत्तिमाक्षेप्स्यति । दूषयति– ) यद्यपि हेतुदोषो न स्यात् ( अपौरुषेयत्वात् वेदशब्दस्य ), बाधस्तु दुर्वारः भूतवर्तमानयोः संबन्धयोः उपलब्धिगोचरयोः ( उपलम्भकप्रत्ययान्तरसाकल्यस्वभावविशेषशालिनोः ) अनुपलब्धेः । भविष्यतो हेत्वभावात् ( हेत्वभावे च कार्याभावः, अन्यथा कादाचित्कत्वानुपपत्तेः । चोदयति– ) शब्दप्रामाण्यं ( भविष्यतः संबन्धस्य ) हेतुः । न । प्रवृत्तौ तस्य ( प्रामाण्यस्य ) भावात् ( प्रामाण्ये तु सति प्रवृत्तिसिद्धेः ) इतरेतराश्रयत्वात् । ननु स्वतः प्रामाण्याद्विज्ञानस्य नेतरेतराश्रयम् । न । प्रवृत्तिहेत्वभावेन तस्य ( प्रामाण्यस्यौत्सर्गिकस्य ) अपवादात् । ( ननु प्रमाणमेव प्रवृत्तिहेतुः, स्वतःप्रामाण्यान्यथाऽनुपपत्त्या तदाक्षेपकत्वात् इत्यत आह– ) प्रमाणस्य परिच्छेदकत्वात्, स्वतः अप्रवृत्तिकारणत्वात् प्रवृत्तिहेतुसद्भावादेव प्रामाण्यसिद्धेः । ननु च स्वतः प्रामाण्यात् प्रवृत्तिहेतुः कल्पयिष्यते । तस्मात् ( स्वतःसिद्धप्रमाणभावात् प्रमाणात् ) प्रमितसिद्धौ ( तदन्यथाऽनुपपत्त्या ) अन्यपरिच्छेदात् ( अन्यस्य तदुपपादकस्य परिच्छेदात् ) अन्यापरिच्छित्त्या च प्रमिततहानात् । ( कः अन्यः प्रवृत्तिहेतुः ? उत्तरं– ) फलम् । ( दूषयति– ) न, फलवत्यपि अर्थिनः अप्रवृत्तेः । क्रियासंबन्धस्य अविशेषेण ( अर्थिनः अनर्थिनश्च ) प्रवृत्तेः । कल्पितेऽपि ( फले ) तस्मिन् तदनुपपत्तेः ( क्रियासंबन्धस्यानुपपत्तेः ) । ननु स्वर्गकामादय एव क्रियासंबन्धिनः श्रूयन्ते । ( न तु पुरुषमात्रम् )। ( दूषयति– ) सत्यम्, न तु सर्वत्र ‘ विश्वजिता यजेत ’ ‘ यावज्जीवमग्निहोत्रं जुहुयात् ’ इति ॥ ९ ॥

( चोदक आह– ) अत एव सर्वस्याभिलषितं एकत्र फलं ( विश्वजिति स्वर्गः ) अन्यत्र ( नैमित्तिके ) अपायपरिहारः प्रयोजनं कल्प्यते । ( दूषयति– ) सत्यम् । न त्वेवमपि श्रुतोपपत्तिः । तथाहि ‘ **अर्थिनोऽपि नियोगेन न क्रिया न निमित्तिनः । आलस्यादन्तरायेभ्यो विहिताऽकृत्यभावतः ॥** ’ १० ॥ न खलु फलकामो निमित्तवान् वा अपायपरिहारप्रयोजनः ( कर्ता ) नियोगतः क्रियासंबन्धमनुभवति ( प्राप्नोति ), येन श्रुतक्रियासंबन्धोपपत्तिः स्यात् फलापायपरिहारकल्पनयोः सतोः । यतो हि अवश्यं क्रियासंबन्धः स हेतुः तमुपपादयितुं क्षमते । कथं पुनः फलकामस्य अपायभीरोर्वा न क्रिया ? ( उत्तरं– ) अलसतया । ( पृच्छति– ) न तर्हि अर्थिता ( न ह्यस्ति संभवः, तदर्थिता च तदक्रिया चेति । उत्तरं– ) न प्रत्यात्मवेद्या ( मनसा संयुक्तसमवायात् इष्टा ) अर्थिता क्रियाऽभावेन शक्यनिह्नवा ( अनुमानस्य मानसप्रत्यक्षबाधितविषयतया अनुत्पादादित्यर्थः ) तथा मरणादिभ्योऽन्तरायेभ्यः अप्रवृत्तिः । यदि च नियोगतः प्रवृत्तिः, विहिताकरणाभावप्रसङ्गः ॥ १० ॥

अपि च ‘ **निमित्तान्तरतः प्राप्तिर्मोहादेश्च प्रकल्पते । न चोपदेशकः शब्द उदीक्षेत ततः पुमान्** ॥ ’ ११ ॥ फले हि प्रवृत्तिहेतौ कल्प्यमाने, न शब्दनिमित्तः क्रियासंबन्धः ( क्रियया संबन्धप्रसङ्गः ) अपि तु शाब्दपरिप्रापितः ( शाब्दफलपरिप्रापितः ) इति निमित्तान्तराप्राप्तताऽनुपपत्तिः । ( यदि मन्येत, भवतु फलं निमित्तं अस्योत्पादकतया, ज्ञापकतया तु संबन्धस्य अन्यतः अप्रज्ञातस्य शब्दो निमित्तं भविष्यति, इति शङ्कते– ) प्रमाणान्तरानधिगतत्वात् उपपत्तिर्यदि, ( निराकरोति– ) लडन्तेऽपि ( विधित्व– ) प्रसङ्ग इत्युक्तम् । अपि च मोह-

यदृच्छादौ संभविनि क्रियासंबन्धहेतौ नैकान्ततः फलवत्त्वं परिकल्प्यम् (शक्यपरिकल्पनम्)। शास्त्रस्य पुरुषश्रेयोऽभिधायकत्वात् (मोहयदृच्छादिपरिहरणात्–) फलकल्पना इति चेत्। न, अशास्त्रत्वात्। उपदेशकं हि शास्त्रम्। न चैतेषां उपदेशकाः 'यजेत' इत्यादयः शब्दाः। नहि एभिः 'इदं कुरु' इत्युपदिश्यते। अपि तु स्वर्गकामादेः यागसंबन्धः (यागेन संबन्धः) अवगम्यते (गम्यते इति णिचि रूपम्)। दण्ड्यादिश्रुतिभिरिव (अनुपदेशिकाभिः) दण्डादिसंबन्धः (देवदत्तादेः)। स च भूतो वर्तमानो वा अनुपलब्धिनिराकृतः, इति भविष्यन् अवशिष्यते (तत्र च फलमिव मोहयदृच्छादयोऽपि हेतवः संभविनः इति नैकान्ततः फलकल्पनासंभव इति)। अपि च एवं न प्रत्ययपूर्वं पुरुषः प्रवर्तते सामुद्रविदाख्यातमिव (सामुद्रिकशास्त्रज्ञेन कथितमिव) अनिरूपितनिमित्तं क्रियासंबन्धमुदीक्षेत। तथा च वचनवैयर्थ्यं पुरुषकाराभावात् (यदा तु वचनादर्थं प्रतिपद्यापि पुंसा उदीक्षितव्यम्, न प्रवर्तितव्यम्, तदा अनर्थकं वचनमित्यर्थः) ॥ ११ ॥

(संप्रति टीकाकारीयं मतमुपन्यस्यति–) यदपि दर्शनं "प्रमाणान्तरागोचरः शब्दमात्रालम्बनः (शब्दमात्रं आलम्बनं आश्रयः प्रतिपादकतया यस्य स तथोक्तः। लिङादियुक्तवाक्यश्रवणसमनन्तरं स्वर्गकामादिना नियोज्येन–) 'नियुक्तोऽस्मि' इति प्रत्यात्मवेदनीयः सुखादिवत् अपरामृष्टकालत्रयः लिङादीनामर्थः (नियोगः) विधिः" इति, अत्रोच्यते। '**पदार्थ एव वाक्यार्थो न च सोऽनन्यगोचरः। नाकर्तृका क्रिया कालविविक्तं च खपुष्पवत् ॥'१२ ॥** स खलु शब्दप्रमाणकः (नियोगः) वाक्यार्थः, पदार्थो वा ? (प्रथमपक्षं निराकरोति–) तत्र पदार्थस्यैव पदार्थान्तरोपकल्पितविशेषस्य वाक्यार्थत्वात् अपदार्थत्वे तदनुपपत्तिः। संबन्धवाक्यार्थवादिनोऽपि (मते) तद्विशेषो वाक्यार्थः, संबन्धिनश्च पदार्था एव, इति नापदार्थो वाक्यार्थः। अस्तु तर्हि (नियोगः) पदार्थः। **नैवम्।** अनन्यप्रमाणगोचरस्य तत्त्वानवक्लृप्तेः (पदार्थत्वानुपपत्तेः) संबन्धसंवेदनसापेक्षत्वात् (पदार्थत्वस्य), तस्य च संबन्धिपरिच्छेदपुरःसरत्वात्, प्रमाणादृते च तस्यायोगात् (कार्यसंबन्धिपरिच्छेदस्यायोगात्। परिच्छेदो हि प्रमाणस्य फलम्, तन्न तदभावे भवितुमर्हति)।

ननु अस्ति शब्दः प्रमाणम्। न, इतरेतराश्रयत्वात्। प्रमिते हि शब्देन नियोगे (तेन सह) संबन्धग्रहः, सति च तस्मिन् शब्देन तस्य प्रमा। (यस्तु मन्यते, अस्ति खलु लिङादेः तादृशः सामर्थ्यातिशयो येन अगृहीतसंबन्धो विलक्षणविषयः कतिपयश्रवणसहकारी जनयति विलक्षणविषयमवबोधम्। कतिपयश्रवणसमनन्तरं तद्भावात्। न च अन्येन अगृहीतसंगतितया शब्दाः स्वार्थमभिदधति इति अनेनापि तथा भवितव्यम्, मा भूदन्येषां न साक्षात् कार्यार्थता इति अस्यापि तथा भावः। तत् निराकरोति–) अविदितसंगतेः पदस्य प्रकृतेः प्रत्ययस्य चाप्रत्यायकत्वात् (अयमभिसंधिः– प्रथमश्रवणादिव संबन्धाग्रहे शतशोऽपि श्रुतात् लिङादेः विलक्षणविषयबोधानुत्पत्तेः, व्यवहारदर्शनस्य च अर्थरूपसंबन्धिदर्शनगर्भतया उत्पत्तेः उपपत्तेः, नादृष्टचरसामर्थ्यातिशयपरिकल्पनादौ नैसर्गिकशब्दमात्रवर्तिसंबन्धापेक्षापवादः असति बलवद्बाधकोपनिपाते युज्यते इति। चोदयति–) प्रैषादीनां लोके प्रतीतेः तद्गतस्य तदुपाधेः संबन्धग्रहः। (दूषयति–) तेषामेव (प्रैषादीनामेव) तर्हि प्रतीतेः संबन्धज्ञानम्, न नियोगस्य (अपूर्वस्य। यतः–) उपाधयस्ते, न शब्दार्थाः व्यभिचारात्। (नहि प्रैषादयो लिङर्थाः, समं प्रति आमन्त्रणेऽपि तस्याप्रयोगात्। नामन्त्रणम्, ज्यायांसं प्रति अध्येषणेऽपि प्रयोगात्। नाध्येषणम्, हीनं प्रति प्रेषणेऽपि प्रयोगात्। सोऽयं व्यभिचारः) प्रवर्तकस्तेषु अनुयायी शब्दार्थः, सर्वत्रापरित्यागात् (सर्वेष्वेव प्रैषादिषु कर्तव्यता एका संभवेत्। अन्यथा स्वतन्त्रप्रवृत्तेरनुपपत्तेः। तस्मात् कर्तव्यताऽभिधायिनो लिङादयः स्वर्गकामपदसंबन्धात् नियोज्यविशेषणीभूतसाध्यस्वर्गाद्यनुकूलस्य आशुतरविनाशियागाद्यतिरिक्तस्य अपूर्वस्याभिधायिनः। तदेवं प्रमाणान्तराऽगोचरता लिङाद्यर्थता नियोगस्य इति सिद्धम्। एतद्दूषयति–) नैतत्सारम्। उपाधयश्चेत् मानान्तरसिद्धाः, नैकस्तेषु अन्वयी प्रवर्तको नियोगः (अपूर्वम्। अतः–) प्रमाणान्तरगोचरत्वात्



तेषां संबन्धज्ञानम् (लिङादिवाच्यत्वज्ञानं), न तस्य (अपूर्वापरनाम्नो नियोगस्य) अविदितविषयस्य संबन्धस्य प्रत्येतुमशक्तेः। ते एव च शब्दार्थाः विदितसंगतित्वात्, नेतरे (नियोगसंगतिसंवेदनविरहात्)। अथ मानान्तरात् सिद्धिः, न, मानान्तरविषयत्वेन अनपेक्षत्वासिद्धेः (चोदनायाः)। अपि च नियोक्तृव्यापारो नियोगः न नियोक्तुर्विना अवकल्पते। न च अस्यास्ति संभवः, अपौरुषेयत्वाभ्युपगमात्। (अस्तु तर्हि शब्दो नियोक्तेति चेत्तत्राह–) शब्दस्य पुरस्तात् प्रतिषेधात् ('प्रमाणत्वात्०' कारिका २ इत्यादिना) 'कुरु' इति तदपरामर्शात् अनन्यगोचरत्वम् (कालत्रयापरामर्शात् करिष्यसि, अकार्षीः, करोषि इत्यभिन्नार्थत्वप्रसङ्गात् अनन्यगोचरत्वम्)। तद्यदि शब्दतः, घटादावपि प्रसङ्गः (मानान्तरागोचरत्वस्य)। नहि घटादिश्रुतयोऽपि भूतादीनामन्यतमं आमृशन्ति। अथ अर्थतः (त्रैकाल्यानामर्शो न पुनः शब्दमात्रात्, इति चेत् न इत्याह–) अत्यन्तासत्त्वं खपुष्पादिवत्। एतल्लक्षणत्वात् अत्यन्तासत्तायाः (नहि अत्यन्तासत्तायाः कालत्रयपरामर्शशून्यत्वादन्यत् लक्षणम्। ननु परमाण्वाकाशादयः सन्तो न च कालावच्छिन्नाः, तस्मात् व्यभिचारः, इत्यत आह–) नित्यानां च वर्तमानत्वात् अव्यभिचारः (अतीतानागताभ्यां व्यावृत्तया अस्तिक्रियया स्वायोगं नित्येषु नियोगेन व्यवच्छिन्दन्त्या उपहितानां नित्यानां वर्तमानता सदातनी इत्यर्थः। आशङ्क्य दूषयति–) यदि इतरप्रतियोगिता वर्तमानता, न नित्येषु सा। (या खलु अनागतता कारणद्वारेण उपमृद्य भवति, या च अतीततया स्वनाशककारणद्वारेण उपमृद्यते सा वर्तमानता। न चेयं नित्येषु संभवति प्राक्प्रध्वंसाभावाविनाभावितया नित्यत्वविरोधिनीत्वात्। दोषान्तरमाह–) कालासंसृष्टमपि तर्हि मानान्तरविषयः इति व्यर्थः कालविवेकोपन्यासः। (चोदयति–) प्रमाणग्राह्यता सत्त्वलक्षणम् (सा च त्रैकाल्यानवच्छिन्नस्य कालस्येव नियोगस्यापि शास्त्रप्रमाणप्रयोगवेदनीयस्यास्ति), अतो नात्यन्तासत्त्वम् (नियोगस्य। दूषयति–) न, अभावस्यापि प्रमेयत्वात् (न खलु प्रमेयता सत्ता, तदनुवृत्तावपि सत्ताया अभावात् व्यावृत्तेः) ॥ १२ ॥

**[ अत्रत्यो ग्रन्थः 'अभावस्यापि प्रमेयत्वम्' (मीको. पृ. ५४३–५४५) इति बिन्दौ संगृहीतत्वात् अत्र न संगृहीतः ]।**

अस्तु वा प्रमाणग्राह्यता, वर्तमानता तु सत्त्वमुच्यते (अतीतानागतयोः प्रमाणग्राह्ययोरपि असत्प्रतीतिव्यवहारास्पदत्वात्)। '**अर्थाभावो नियोगस्य शाब्द्यां भूताद्यपाकृतौ। अनन्यगोचरत्वं न प्रमाणान्तरजन्मनि ॥' १३ ॥** (अपि च अस्य [नियोगस्य] त्रैकाल्यानवच्छेदः शब्देन वा प्रतिपाद्यते मानान्तरेण वा। यदि शब्देन अत्यन्तासत्त्वम्। मानान्तरेण तु त्रैकाल्यव्यवच्छेदे मानान्तरगोचरत्वप्रसङ्गात् विवक्षितार्थभावनं इत्याह–) अशाब्दश्चेन्नियोगः, नाभूत्, नास्ति, न भविष्यति, इति बोधयति, (तथा सति) न नियुक्तः, न नियुज्यते, न नियोक्ष्यते वा स्वर्गकामः इति वाक्यार्थः स्यात् इति सुनिरूपितोऽधिकारः। अथ न शाब्दो भूतादिप्रतिक्षेपः, किंतु तस्य (शब्दस्य तेषु भूतादिषु निषेध्येषु) औदासीन्यात् मानान्तरतः तथा अवसायः (त्रैकाल्यव्यवच्छेदेन अवसायः) न तर्हि अनन्यगोचरः, मानान्तरेण तथात्वस्यावसायात् (त्रैकाल्यावच्छेदस्यावसायात्। शङ्कते–) शब्दप्रमितस्य विशेषस्ततः (नियोगस्य विशेषः त्रैकाल्यविवेको मानान्तरात्। न पुनर्मानान्तरं नियोगे प्रवर्तते)। प्रत्यक्षस्येव गिरेः अग्निमत्ता अनुमानात्। (निराकरोति–) न, विशिष्टापरिच्छेदे विशेषणस्याविषयत्वात् (नहि अस्ति संभवो यत् विशिष्टं पर्वतादि न परिच्छिद्यते तद्विशेषश्चाग्निमत्त्वं गम्यते इति)। अपि चान्यतोऽपि तथात्वाधिगमे अनियोग एव स्वर्गकामः, तस्यापि प्रमाणत्वात् (कालत्रयविरहात्), अतत्त्वे वा भूतादिविवेकाभिधानं (अप्रामाणिकं) प्रलापः। ननु उपाधयः (विशेषणानि) भूतादयः (कर्णस्येव कुण्डलादयः, न पुनः स्वभावः) न चोपाधिनिवृत्तौ उपाधिमतः निवृत्तिः प्रतीतिर्वा। (न खलु कुण्डलनिवृत्तौ कर्णो निवर्तते, न प्रतीयते वा। परिहरति–) भवतु अन्योपाधिष्वेवं (कुण्डलादिषु) इह तु एतल्लक्षणमेव अत्यन्ता-

सत्त्वम् । ( न खलु शशविषाणादीनां अत्यन्तासत्त्वमन्यत् अतः त्रैकाल्यविवेकात् ) नित्यानित्यत्वोपाधिनिवृत्तौ च नोपाधिमत्संभवः । प्रत्यक्षं तु आपातजन्मकाले भेदोपाधिविविक्तरूपमात्रग्राहि इति न ततो विषयभेदः ( अपि च शब्दतः त्रैकाल्यानवमर्शे प्रत्यक्षं तु आपातजन्मविशेषणविशेष्यभावाऽनवमर्शात् कालभेदोपाधिविविक्तरूपमात्रग्राहि इति न ततः प्रत्यक्षात् विषयभेदः शाब्दस्य ज्ञानस्य भवेत् । शङ्कते– ) अवर्तमानस्यारूपत्वात् वर्तमानविषयं तत् । ( निराचष्टे– ) सत्यं वस्तुतः, न प्रमितितः । ( उक्तमर्थं संक्षिपति– ) वस्तुतो वर्तमानादिविवेके निरात्मकत्वं अत्यन्ताप्रमितितः, न विषयभेदात् प्रमाणान्तरानपेक्षत्वं शब्दस्य । सैषा उभयतस्पाशा ( रज्जुः ) ।

ननु प्रतीयते 'यजेत' इति कार्योऽर्थः, न स भविष्यन् ( भविष्यत्यर्थे ) मानाभावात्, एकान्तानवधारणात् ( तत्त्वानिश्चयात् ) । कार्यत्वादेव नेतरकालानुपाती ( वर्तमानभूतकालानुपाती । गगनकुसुमायमानस्तर्हि, इति चेन्नेत्याह– ) न च नास्ति, प्रतीतेः । ( परिहरति– ) उक्तोत्तरमेतत् ( उक्तप्रायमस्योत्तरम् । तद्दर्शयति– ) सात्मकत्वे न वस्तुतः कालभेदः ( कालभेदविवेकः ) । प्रमितितश्चेत् न विषयभेदः ( प्रत्यक्षात् घटादिशब्दाच्च ) इति नैरात्म्यम् ( तस्मान्मानान्तरागोचरत्वमिच्छतः नियोगस्य त्रैकाल्यसंभवविरहमन्तरेण तदनुपपत्तेः नैरात्म्यमापतेत् ) । कथं तर्हि प्रतीतिः ( अत्यन्तासतो नियोगस्य ? । उत्तरयति– ) अत एव ( असद्गोचरत्वादेव ) प्रतिभामात्रं विकल्पमात्रं वा शाब्दज्ञानं इति विपश्चितः ( असत्प्रतीतिरेव प्रतिभा इति वा, विकल्प इति वा मतभेदेन व्यपदेशभेदवती । एतदुक्तं भवति– नात्यन्तासत्प्रतीतेरगोचरः, अपि तु प्रमितेः । ननु असद्विषया प्रतीतिः कथं व्यवहाराङ्गम् ? अत आह– ) प्रतिभानिबन्धनश्च व्यवहारः ( नास्ति अयं नियमः असदर्थविज्ञानं न व्यवहाराङ्गमिति । संशयविपर्ययौ हि तथा, ताभ्यां व्यवहारानुपलब्धेः । प्रतिभा पुनर्व्यवहारहेतुः, तद्भावाभावानुविधानात् द्रव्यव्यवहारभावाभावयोः इत्यर्थः । यद्येवम्, न तर्हि व्यवहारसाधनत्वं प्रमाणानाम्, प्रतिभात एव तत्सिद्धेः, इत्यत आह– ) प्रतिभानुगृहीतानि च प्रमाणानि व्यवहाराङ्गं इति ( इतिः समाप्तौ ) ॥ १३ ॥

अपि च **'वेदार्थं इत्थमाशङ्का नियोगस्य न कार्यता । नियुक्तस्य प्रवृत्तिश्च न नियोगैकबन्धना ॥' १४ ॥** ( 'वेदार्थं इत्थमाशङ्का' इति विवृणोति– ) यत् खलु न भूतम्, न वर्तमानम्, भावि न वा इत्यनवधारितैकान्तम्, तत् आशङ्काज्ञानगोचरः, यथा वर्षमनतिपतितं अप्रवृत्तं ( अभूतं अप्रवर्तमानं ) अतिनीलबहलजलदोदय– ( ०दयात् बहुल– ) दर्शनसामर्थ्येन प्रत्ययपथमनुपतत् ( क्वचित् ) व्यभिचारदर्शनात् अनिश्चीयमानैकान्तम् । इमां चावस्थां बत वेदार्थः प्रज्ञाशालिभिरुपनीतः अतिव्याख्यया ( निश्चयफलं हि प्रमाणम्, अयं च स्वार्थे शङ्कां अनिश्चयात्मिकां विदधानः अप्रमाणं स्यादित्यर्थः । 'नियोगस्य न कार्यता' इति विवृणोति– ) अपि च विषयः कार्यो न नियोगः ( आज्ञादिषु हि नियोगेषु स्वाम्यादिनियोक्तृकेषु विषयः कार्योऽवगम्यते नियोज्येन । न चाज्ञादयो नियोगः ) । कार्यश्च वेदप्रमेयः ( लोकानुसारात् । ननु द्रव्यादयोऽपि तत्पदेभ्योऽवगम्यन्ते, इति कथं कार्यस्यैव वेदप्रमेयता इत्यत आह– ) इतरपदार्थानां तदन्वयित्वात् ( सर्वमेव पदजातं कार्यपरम्, तत्रैव व्युत्पत्तेः । तत्र किंचिदभिधायकतया यथा लिङादि, किंचित्तु तदर्थस्वार्थाभिधायकतया यथा दध्ना हत्यादि । तथा च– ) तस्यैव कालविवेको मानान्तरागोचरतया अनपेक्षत्वसिद्धये अभिधानीयः ( न तु नियोगस्य, तस्याकार्यत्वेन वेदार्थत्वाभावात् । न चासौ कालरहितः, तस्य कारकव्यापारविषयतया त्रैकाल्यपरामर्शसंभवात् ) ननु नियोगे एव कार्यत्वप्रत्ययः ( लौकिकानाम् ), एवं हि व्यपदिशन्ति 'आचार्यनियोगः कर्तव्यः' 'राजशासनमनुष्ठेयम्' इति । नैतत्, ( नियोगे नियोज्यस्य कार्ये सति ) नियोज्यस्य नियोक्तृत्वप्रसङ्गात् । नियोगस्य हि कर्ता नियोक्तेति ( यथा स्वाम्यादिः आज्ञादेः ) । अपि च, यागे ( विषये ) नियोगात् कर्तव्यता तस्य ( नियोगस्य ) । कुतः ? ( कर्तव्यता ? ) नहि एष तत्र ( नियोगे ) नियुज्यते ( नियोगान्तराभावात्, स्वात्मनि च विषयविषयिभावानुपपत्तेः, भेदाधिष्ठानत्वात् तस्य । शङ्कते– ) स्वरूपेणैव स कार्यः ( नियोगः ), न तत्र अन्यापेक्षा ( नियोगान्तरापेक्षा ) विषयवत् ( यथा हि विषयो विषयिनियोगकर्तव्यताऽऽक्षेपात् कर्तव्यः, नैवं नियोगस्य कर्तव्यता, स्वभावत एव तस्य कर्तव्यतारूपत्वात् । परिहरति– भवतु ) किंतु 'यजेत' इति 'याजयेत्' इत्यर्थः स्यात् । तथा च स्वर्गकामोऽन्यनियोगमात्रेण कृतशास्त्रार्थः स्यादिति साधु सुसंपादितं अत्रभवता । ( अयमभिसंधिः– न तावत् अपूर्वं भावार्थविषयं कार्यतया अवगम्यमानं स्वात्मनि नियोज्यं प्रेरयन् नियोगो लिङर्थः इत्युपपादितमधस्तात् । तथा च आज्ञादय एवावशिष्यन्ते इति यजेतेति लिङा कार्यं नियोगमभिदधता यागविषयाज्ञादिरर्थः कर्तव्यः इत्युक्तं स्यात् । तस्य चापौरुषेये वेदेऽपि संभवः । न चाज्ञादयो विषयानुष्ठानमन्तरेण आज्ञापयित्रा कर्तुमशक्याः । न खलु राजा विष्टिं नियुञ्जानः शिबिकावहने वहति स्वयं शिबिकाम् । ततश्च स्वर्गकामो यागनियोगकरणमात्रेण कृतशास्त्रार्थः स्यात् इति साधु सुकरं संपादितमत्रभवता । अतश्च न नियोगः कार्यं इत्याह– ) नियोगार्थे च कार्ये स्वर्गयागयोः परस्परासंबन्धः तदन्वयात् ( कार्यरूपनियोगान्वयादुभयोः । चोदयति– ) एकनियोगसंबन्धिनोः ( स्वर्गयागयोः ) अरुणैकहायनीवत् नियमात् ( परस्परसंबन्धः स्यात् । न विनियोगोपमर्दी नियोगः, तद्विषयतया तदविरोधेन अवस्थानात् । परिहरति– ) सत्यम्, नान्यकामो यागनियोगे, स्वर्गकामनियोगो न यागादन्यत्र । साध्यसाधनभावस्तु अयुक्तः ( स्वर्गयागयोः एकनियोगसंबन्धिनोरपि स्वर्गकामयागयोरेव संबन्धोऽवगम्यते, न पुनः स्वर्गयागयोः । अनवगम्यमानश्च विनियोगो न नियोगविषय इत्यर्थः ) ।

ननु न नियोगो विषयनियोज्यसंबन्धमकुर्वन् ( स्वयं ) कर्तव्यताऽवगमामायालं ( तदसंबन्धे ) रूपाभावात् । क्वचित् ( नियोज्यं स्वर्गकामादिं ) क्वचित् ( विषये यागादौ ) नियुङ्क्ते इति हि नियोगस्य रूपं 'अस्येदं कर्तव्यं' इति । न च ( स्वर्गस्य यागेन– ) संबन्धो गुणप्रधानभावादृते संभवति, इति नेष्टं परनिष्पत्तये, इति स्वर्गस्य अपरार्थत्वात् यागस्य ( अनिष्टत्वेन ) तादर्थ्यम् ( स्वर्गार्थत्वम् ) । इष्टसंयुक्ते तदर्थान्वयप्रतीतेः । ( इष्टसंयुक्ते वाक्ये स्वधर्मानष्टस्य तदिष्टार्थान्वयप्रतीतेः । दूषयति– ) करोतु नियोज्यविषयसंबन्धं नियोगः । विषयनियोज्यविशेषणसंगतिस्तु कुतः ? ( ययोरेकनियोगसंबन्धः तयोर्भवतु परस्परान्वयनियमः स्वर्गकामयागयोः । स्वर्गयागयोस्तु किमायातम् ? नहि स्वर्गो याग इव नियोगेन संबद्धः, अपि तु नियोज्यविशेषणं इत्यर्थः । चोदयति–) विशिष्टसंबन्धाच्चेत् ( यद्यपि न साक्षात् स्वर्गो नियोगेन संबद्धः, तद्विशिष्टस्तु नियोज्यः नियोगसंबद्धः इति स्वर्गोऽपि नियोज्यमुखेन नियोगसंबद्धः इति एकनियोगसंबन्धात् यागेनापि संबध्यते । तथा च साध्यसाधनभावसिद्धिः स्वर्गयागयोरित्यर्थः । दूषयति–) जीवनादेरपि प्रसङ्गः ( जीवनादेरपि निमित्तस्य नियोज्यद्वारेण संबन्धद्वारेण नियोगसंबन्धे यागादिसंबन्धप्रसङ्गः । चोदकः पृच्छति– ) किमतः ? ( उत्तरं– ) अङ्गत्वं वा निमित्तस्य, ( नियोगविषये यागादौ ) प्राधान्यं वा । ( तत्र ) अङ्गत्वे ( विकृतौ समिदादिवत् ) अतिदेशप्रसङ्गो निमित्तस्य ( प्राधान्यं तु यागं प्रति साध्यत्वलक्षणं जीवनादेः निमित्तस्य सिद्धस्य न संभवत्येव । अभ्युपेत्योच्यते– ) प्राधान्ये काम्यनैमित्तिकाधिकारयोः अविशेषः, उभयोः कार्यनिष्ठत्वात् ( ततश्च ) न नैमित्तिकः प्रयोगनिष्ठः स्यात् । तथा चोभयत्र ( काम्ये नैमित्तिके च ) सर्वाङ्गोपसंहारो न वा । ( चोदक आह– ) नियोज्यभेदसमर्पणेन कृतार्थस्य जीवनादेः न विषयसंबन्धः स्यात् ( नहि अस्य विषयसंबन्धमन्तरेण वैयर्थ्यम्, नियोज्यावच्छेदकतया अर्थवत्त्वात् । यदि नियोज्यभेदसमर्पणेन चरितार्थं जीवनं न संबन्धान्तरमर्हति, हन्त भोः निमित्तनैमित्तिकभावमपि न भजेत इति चेत्तत्राह– नियोज्यभेदसमर्पणपरस्यैव जीवनादेः– ) आर्थस्तु निमित्तनैमित्तिकभावः । तस्मिंश्च सति तत्राधिकारात् । ( दूषयति– ) 'स्वर्गकामो यजेत' इत्यपि तर्हि एवं स्यात् ( नियोज्यविशेषणं कामः निमित्तत्वेन संबध्येत, न साध्यतया । चोदक आह– ) न भविष्यति ( कामस्य

निमित्तभावः ) साध्यस्यैव विशेषणत्वात् ( साध्यत्वं तु– ) काम्यत्वात् । ( दूषयति– ) तथापि न ( कामस्य ) विषय-संबन्धे प्रमाणं अन्यसाध्यस्यापि ( स्वर्गस्य नियोज्यावच्छेदकतया ) विशेषणत्वोपपत्तेः । ( परमार्थतस्तु साध्यताऽपि न प्रतीयते ) इच्छामात्रदृष्टेश्च । ( प्रयत्नव्याप्यता हि साध्यता, न पुनः उद्देश्यतामात्रम् , नापि तदविनाभाविनी सा । न खलु कारणानि अवश्यं कार्यवन्ति व्यभिचारात् ) । ननु कामिनः अधिकारावगतिः कामोपाये ( स्वर्गाद्युपाये एव ) अवकल्पते । नान्यथा तत् ( कर्म ) नियोज्येन कृतं स्यात् । ( उत्तरं– ) कामिना कृतं नियोज्येन कृतं स्यात् । न तु कामः प्रवृत्तिहेतुः, अधिकारहेतुस्तु ( नियोगावगमनहेतुस्तु नियोज्यावच्छेदकतया, इति न व्यर्थं कामश्रवणम् ) । अधिकारहेतुका च प्रवृत्तिरिष्यते, न फलहेतुका, प्रागधिकारात् तदज्ञानात् । ननु कामिनोऽधिकारः ( स्वर्गकामादिपदसंबन्धादवगम्यते । तथा च कामो निमित्तमधिकारस्य ) कामानुपाये च न कामनिमित्तः ( नियोगः ) । अधिकारो न निर्निमित्तः ( कार्यरूपत्वेन स्वरूपहानिप्रसङ्गात् ) न वा अन्यनिमित्तः ( कामपदवैयर्थ्यात् । उत्तरमाह– ) कामनिमित्तः, सति अस्मिन् ( कामे ) अधिक्रियमाणत्वात् । ( चोदकः स्वाभिप्रायमाह– ) ननु अनुपाये अधिक्रियमाणस्य न फलार्थिता ( नियोगावगमस्य ) निमित्तम् । उपाये हि उपेयार्थिता नियोगनिमित्तम् ( नियोगावगमनिमित्तम् । दूषयति– यदि उपेयार्थिता अनुपाये नियोगावगमनिमित्तं– ) सिद्धे तर्हि उपायोपेयभावे नियोगः, न नियोगात् तत्सिद्धिः । ( चोदक आह– ) सिद्धः एवासौ नियोगात् प्रतीयते । ( अयमर्थः– न तदवगमपुरःसरं नियोगविज्ञानम् , अपि तु नियोज्यस्य स्वर्गकामस्य यागे नियोगावगमः अपर्यवस्यन् स्वर्गयागयोः साध्यसाधनभावमाक्षिपति । तेन सिद्धः एवोपायोपेयभावः कारणान्तरात् नियोगेन ज्ञाप्यते इति । दूषयति– ) न । सापेक्षत्वात् ( सापेक्षत्वप्रसङ्गात् ) । तथाहि यदि विशिष्टपुरुषनियोगः शब्दार्थः ( यो हि पुरुषः स्वर्गः उपायेन मे साध्यः इत्यवगच्छति, तदीयो नियोगः शब्दार्थः, तर्हि नियोगात् प्राक् अयं विशेषः पुरुषस्यावगन्तव्यः, इति– ) कथं स नियोगात् गम्यते ? ( शङ्कते – ) अथ फलविशेषनिमित्तको नियोगः ( यागसाध्यता स्वर्गस्य विशेषः, तन्निमित्तको नियोगः शब्दार्थः । निराकरोति– ) नासौ प्रागसिद्धे तद्भावे ( यागसाध्यत्वे फलस्य भवितुमर्हति, इति मानान्तरेण– ) इति प्राक्सिद्धतद्भावापेक्षः शब्देनोच्यते इति प्रमाणान्तरापेक्षत्वप्रसङ्गः । ( यदि मन्येत नियोगनिमित्तत्वं अनुपेयस्य कामस्य न संभवति इति यागं प्रति उपेय एवेति, तत्राह– ) उपेयस्यैव च अधिकारनिमित्तत्वे जीवनादिषु अधिकाराभावः ( अधिकाराभावप्रसङ्गः । अपि च अधिकारनिमित्ततां कामस्याभ्युपेत्य इदमुक्तम् , परमार्थतस्तु– ) निमित्तत्वप्रतीतिहेतु– ( लिङादि– ) शब्दाभावाच्च अयुक्तमेवैतत् । ( चोदयति– मा भूत् निमित्तत्वप्रतीतिहेतुः शब्दः किंतु– ) नियोज्यविशेषणमेव तु, तस्मिन् सति नियोगात् अर्थात् निमित्तमुच्यते । ( परिहरति– ) यदि च स्वर्गकामाऽयो निमित्तपराः, न तर्हि नियोज्यपराः । तत्र ( निमित्तपरत्वे ) अधिकाराप्रतीतेः प्रयोगाभावः । ( शङ्कते– ) अथ ( निमित्तपरादपि शब्दात् अपेक्षितत्वात् ) अर्थात् ( निमित्तवतः ) अधिकारसिद्धिः । ( निराकरोति– तर्हि अधिकारसिद्ध्यर्थं ) मुधा कर्तृविशेषणपक्षनिरासः । ( कुतः सिद्धिरधिकारिणः इति चेत्तत्राह– ) यथैव हि ( भवतां ) कामितया अधिकारोऽवगम्यमानः उपायभूते धात्वर्थे, तथा ( अस्माकमपि ) कामितया कर्तृत्वं नानुपाये ( तथापि कुतोऽधिकारविशेषप्रतिलम्भः इत्यत आह– ) यस्य च कामोपायः तस्येदं कर्म इति अर्थात् कर्तृनियमविधेः अधिकारसिद्धिः ( अस्माकम् , भवतां तु ) अधिकारविधेरिव कर्तृनियमसिद्धिः । ( दूषणान्तरमाह– ) इष्टसंयुक्ते च वाक्ये इष्टार्थे अन्वयः, न नियोगाथ अन्वयः । उभयार्थे अन्वये ( तु ) वाक्यभेदात् ।

( संप्रति जरत्प्राभाकरपक्षमुपन्यस्यति– ) ननु न विनियोगोपमर्दी नियोगः, विरोधाभावात्, यथाविनियोगं तत्प्रत्ययात् । तत्र परस्परान्विताः पदार्थाः नियोगविषयतामापद्यन्ते । न चान्वयो गुणप्रधानभावमन्तरेण । तत्र इष्टत्वात् स्वर्गः प्रधानम् , कर्म गुणतः ( गुणः,



सार्वविभक्तिकस्तसिः ) इति कर्मोपसर्जने ( कर्म उपसर्जनं यस्य तस्मिन् स्वर्गे यागसाध्ये ) स्वर्गकामः पुरुषो नियुज्यते इति न नियोगप्रधानता हास्यते, कर्मफलसंबन्धश्चोपपत्स्यते । न च कामे ( यागोपसर्जने ) स्वतः प्रवृत्तो नियोज्यः पुरुषः, उपायरहिते अर्थिनोऽपि अप्रवृत्तेः । न च प्राङ्नियोगात् उपायोपेयज्ञानम् ( नियोगादेव तदवगतेः । तदेतत् स्वतन्त्रसिद्धान्ताविरोधेन दूषयति– ) न खलु विनियोगनिबन्धना स्वर्गयागसंगतिः इष्यते ( भवद्भिः ) तार्तीयी सा ( विनियोगनिबन्धना ) नैयोगिकी त्वेषा ( द्रव्यधिकरणस्य–३।१।३–तृतीयेऽध्याये साक्षात्संगतिमनिच्छतः टीकाकारस्य संमता, इति राद्धान्तव्याकोपः । अपि च सोपायफलविषयं नियोगं अभ्युपगच्छतः इदमपरं अनिष्टमापद्यते इत्याह– ) भावार्थश्च ( केवलो ) नियोगविषयः इति प्रत्युद्धृतमेव स्यात् । ( अपि च यदा फलं नियोगविषयः, तदा ) निरधिकारता च स्यात्, विषयस्यानधिकारहेतुत्वात् ( अथाधिकारहेतुरेव विषयः कस्मान्न भवति इत्यत आह– ) विश्वजिदादौ तदकल्पनप्राप्तेः ( विषयस्याधिकारहेतोर्विद्यमानत्वात् । ननु प्रयोजनमेतत् , प्रमाणं तु वक्तव्यम् , तदिदमुच्यते– ) विधेयत्वलक्षणत्वयोर्विरोधात् प्राप्त्यप्राप्तिभ्याम् ( लक्षणस्य प्राप्त्या प्रसिद्धत्वात् अप्राप्तस्य च विधेयत्वेन विधिविषयत्वात्, प्राप्तौ तदनुपपत्तेः । नियोगावगमात् प्राक् स्वर्गकामः क्रियया संबध्यमानः कर्तृतयैव संबध्यते, पश्चात्तु नियोगप्रतीतौ नियोज्याय इति कर्तुरधिकारात् पुनरपि राद्धान्तव्याकोप एवेत्याह– ) कर्तृतया च अन्वयात् प्राक् नियोगात् नियोज्यत्वाभावात् । ( इदं चापरमनिष्टमापद्यते इत्याह– ) अवश्यकर्तव्यताप्रसङ्गश्च ( यागावच्छिन्नविषयकर्तव्यतावगतेः कर्तव्यतया च स्वविरुद्धस्वभावव्यवच्छेदात् अवश्यकर्तव्यताप्रसङ्गश्च सोपायस्य स्वर्गादेः ) कामस्य अतन्त्रत्वात् । तन्त्रत्वेऽपि इच्छाऽपि अवश्यकार्या स्यात् ( तद्विषयत्वान्नियोगस्य फलादिवत् । उपसंहरति– ) तस्मात् परस्परं अनन्वितयोः ( याग–स्वर्गकामयोः ) नियोगान्वयः । तदन्वये परस्परं वाक्यभेदात् [ यागस्वर्गकामयोः परस्परमन्वये च वाक्यभेदप्रसङ्गादित्यर्थः– इति केवलः ] ( तदन्वये च न परस्परं तन्त्रम् , फलस्यापि साध्यतया द्वयोः वाक्यभेदात् ) एकनियोगसंबन्धादपि साध्यसाधनभावः प्रत्युक्तः ।

ननु नियोगात् अस्य ( लिङादेः, पुरुषस्य ) इदमुपकारकं इत्यवगम्यते, कथं तस्य ( अधिकारिणः ) कर्म स्यात् ( यदि नोपकारकं कर्म ) क इव अस्योपकारः अन्यत्र काम्यात् ( उपकारात् । ननु जगति किमयमेवोपकारः ? इत्यत आह– ) उपकारान्तरे ( कल्प्यमाने ) अर्थिपदमनर्थकं स्यात् ( अविवक्षितार्थम् । तथा च श्रुतहानिरश्रुतकल्पना चेति दोषद्वयमापतितम् । दूषयति–यदि लिङादेः अस्य पुरुषस्य इदं उपकारकं कर्म इति सिद्धमवगम्यते– ) उपकार्योपकारकत्वे तर्हि नियोगार्थः ( लिङर्थः । चोदकः पृच्छति– ) किमतः ? ( उत्तरं– ) उपदेशकत्वं ( प्रसिद्धं ) हीयते, स्थितवस्त्वनुवादात् ( ततः ) सापेक्षत्वं च ( अप्रामाण्यनिमित्तं मूर्धाभिषिक्तं प्रसज्येत । उपसंहरति– ) तस्मात् अस्येदं कर्तव्यमिति नियोगार्थः ( न पुनः अस्येदमुपकारकमिति ) अनुष्ठानप्रतीतेः अव्यभिचाराच्च ( उपकार्योपकारकयोस्तु नियोगार्थत्वे व्यभिचारः स्यात् ) नैमित्तिकनिषेधाधिकारयोः उपकारानाश्रयणात् ( न चापूर्वोत्पत्तिरुपकारः, तस्यासुखस्य हिताहितप्राप्तिपरिहारासाधनस्य अनुकलवेदनीयताऽभावेन उपकारभावाभावात् । ननु वेदेऽपि नियोगविषयस्य कर्मणो नियोज्यार्थकर्मता उचिता, इत्यत आह– ) न च नियोज्यार्थ एव कर्मणि नियोगः, अत एव ( नैमित्तिकनिषेधाधिकारयोः व्यभिचारादेव । ननु लोके प्रतीतिसामर्थ्यात् नैमित्तिकनिषेधाधिकारयोरुपकारं कल्पयिष्यामः, इत्यत आह– ) लौकिके च अध्येषणादौ अभावात् ( नियोज्यार्थतायाः कर्मणः । पुनरपि स्वर्गे साध्यतायां उपलक्षणवैलक्षण्येन नियोज्यविशेषणतां प्रमाणयति– ) ननु विशेषणं स्वर्गः, नोपलक्षणं ( येन आत्मानं न कार्ये निवेशयेत् । परिहरति– ) भवतु नियोगे अस्य ( स्वर्गस्य ) अन्वयः ( यागस्य तु कथम् ? ) ननु नियोग एव यागसंबन्धं ( स्वर्गस्य यागेन संबन्धं ) विदधाति ( तथा च स्वर्गयागयोः संबन्धः साध्यसाधनभावः इति । परिहरति– ) तथा नाम, ईदृशः पुरुषो नियुज्यते इति ( तथा च स्वर्गकामयोः संबन्धो नाम नियोगात्, न तु स्वर्ग-

यागयोः । नहि एतावता नियोगसंगतिस्तयोर्न कल्प्यते इति ) ' यस्याग्निर्गृहान् दहेत् ' ( स यजेत ) इति यथा ( यथा आहिताग्नेर्गृहदाहवतः इष्टौ नियोगो नेष्टिर्गृहदाहं प्रति साधनतामवगमयति, तथा स्वर्गकामस्यापि यागनियोगो न यागस्य तद्विशेषणं प्रति साधनभावमवगमयितुमर्हति ) । ननु इष्टसिद्ध्युपाधौ भावार्थे नियोगात् फलसिद्धिः स्यात् । ( परिहरति- ) स्यात् यदि ईदृशो भावार्थः । न तु अयमेवेत्युक्तं भावनाविवेके (तादृशं चेत् कर्म नियोगविषयः, तर्हि तन्नियोगात् प्रागवगन्तव्यम् । न खलु अनवगतगोचरो नियोज्यः तद्गोचरं नियोगमवगन्तुमुत्सहते । न च स्वर्गावधिको यागः प्राङ्नियोगावगमात् मानान्तरेण पाक इवौदनावधिः शक्यावगमः । न च नियोगात् तदवगमः , परस्पराश्रयदोषप्रसक्तेः , सति नियोगावगमे तन्निरूपणम् , तस्मिंस्तु सति तदवगमः इति । यद्यपि यागरूपं प्रमाणान्तरसिद्धम् , तथापि भावात्मना न तत् सिद्धम् । तेन च तद्विषयः, न पुना रूपमात्रेण । तन्मात्रेण वा विषयत्वसमर्थने नास्य स्वर्गसंबन्धः स्यात् इति भावः ) नैमित्तिके च फल-( कल्पना-प्रसङ्गः, इष्टोपाधेः भावार्थस्य काम्यवत् तत्राप्यविशेषात् । न चापूर्वमिच्छागोचरः ) यथा च अस्मिन् दर्शने न प्रकारान्तरेणापि कर्मफलसंबन्धः, तथोक्तं भावनाविवेके । अतः स्वर्गयागयोरसंबन्धात् न पुरुषार्थसाधनज्ञानम्, पुरुषार्थसाधनं च जिज्ञासन्ते प्रेक्षावन्तः । ( तदनेन प्रबन्धेन चतुर्दशकारिकाविवरणेन गतेन स्वर्गयागयोः परस्परासंगतिप्रसङ्गात् नियोगस्य कार्यता प्रतिषिद्धा पुनस्तामेव प्रकारान्तरेण निषेधति-) लोकाच्च शब्दार्थावगमात् न नियोगप्रधानता ( नियोज्यकृतिं प्रति ) तत्सिद्धौ अनियोगात् ( नियोक्तुरेव तत्सिद्धेः ) नापि प्रतिपत्ता प्रत्येति ताम्, ( नियोगसिद्धिं नियोक्तुर्वाक्यात् ) विषयसिद्धावपि अननुष्ठानात् ( नियोज्यस्य प्रतिपत्तुः ) नहि ' गामानय ' इति नियोगसिद्धिर्विवक्षिता वक्तुः, अपि तु विषयसिद्धिः ( नहि अन्येनानीतायां गवि इतरस्तदानयनमारभते । तस्मात् विषयसिद्धौ नियोक्तृनियोज्ययोः संप्रतिपत्तेः संबद्धविषयपरामेव साधनतामध्यवस्यति, न तु नियोगपराम् । चोदयति-) अन्यल्लोके शब्दवृत्तं अन्यद्वेदे, विवक्षापरो हि समन्वयो लोके शब्दानां ( अर्थानां ), नियोगपरो वेदे । ( तेन वेदे नियोगस्यैव कार्यता । दूषयति- ) अयपमरो गण्डस्योपरि स्फोटः । यदि खलु विवक्षापरे अन्वये शब्दसामर्थ्यं लोकतोऽवगम्यते ( ततः ) न ( विवक्षितात् ) अन्यपरत्वं ( वेदस्य ) अनन्यप्रमाणकत्वात् ( लोकप्रमाणकत्वात् ) शब्दसामर्थ्यस्य, ( नोपायान्तरं तदवगमाय वेदे संभवति । शङ्कते- ) वक्तुरभावात् ( न विवक्षासंभवो वेदे ) इति चेत् ( निराकरोति- ) अयमेव विवक्षापरोऽन्वयः तमनुमापयेत् इति प्राप्तं पौरुषेयत्वम् । ( सोऽयं अस्मिन् पक्षे लोकविरोधलक्षणस्य गण्डस्योपरि पौरुषेयत्वप्रसङ्गलक्षणः स्फोटः । अथ दृढतरमपौरुषेयत्वम् , ततः ) प्रतिपत्त्यभावो वा ( स्फोटः, तदुपायाभावात् । अथ स्वानुभवसिद्धा वेदवाक्यश्रवणसमनन्तरा प्रतीतिः नापह्नवमर्हति, तत्राह- ) भवन्ती वा प्रतिपत्तिः न शब्दनिमित्ता सामयिकी स्यात् ( स्वतःसिद्धेष्वेव वेदवाक्येषु पुरुषकृतसंकेतनिबन्धना तदुच्चारणात् अर्थप्रतीतिः । यदि तु संबन्धुरभावात् न संकेतक्रियासंभवः, ततः ) सामान्यतोदृष्टजा वा ( गवादिपदयुक्तं हि वाक्यं अर्थविशेषप्रत्ययनिमित्तमुपलब्धम् , वैदिकं च तथा इति तदपि प्रत्यायकम् , इति सामान्यतो दृष्टात् अर्थप्रत्ययो वैदिकादपि वाक्यात् ) तस्मात् लाक्षणिकप्रयोगज एव ( प्रयोगप्रभव एषः इति कणिकापाठः ) तत्रभवतो विभ्रमो ' नियोगः कार्यः ' इति । ( एतावता चतुर्दशकारिकायाः पूर्वार्धे ' नियोगशब्देन स्वाभिधेयविषयभावार्थलक्षणात् ' इति व्याख्यातम् । अथ पश्चार्धं व्याचष्टे- )

अपि च न लोके नियोगमात्रं प्रवृत्तिहेतुः सर्वस्य नियोगादप्रवृत्तेः, अनुविधेयनियोगाच्च तद्भावात् ( तत्प्रवृत्तिभावात् । तस्मात्- ) अनुविधेयत्वं नियोक्तुः अन्यनियोगात् प्रवृत्तिहेतुः । अनुविधानकारणं च अर्थानर्थप्राप्तिपरिहारादि प्रमाणान्तरसिद्धम् । ( वेदेऽपि अनुविधेयोऽस्तु लोकवत् इति चेत् तत्राह- ) न च वेदे ( अपौरुषेयेऽपि ) नियोक्ताऽपि ( दृश्यते ) । कुतः पुनरनुविधेयः ? ( धर्मस्य अत्यन्तासिद्धेः । चोदयति- ) ननु शब्दः ( नियोक्ता अनुविधेयः । शब्दनियोक्तृत्वं



च न्यरासि प्रथममेव ' ' प्रमाणत्वात् ' –कारिका २ – इत्यादिना । अभ्युपगम्याह- ) भवतु नाम नियोक्ता, न तु अनुविधेयः ( अनुविधान- )हेत्वभावात् । न हि अर्थानर्थप्राप्तिपरिहारयोः शब्दानुविधाने प्रमाणमस्ति । नियोग इति चेत् ( शब्दानुविधाने सति अनुविधातुः पुरुषस्य हितप्राप्तिः अहितनिवृत्तिर्वा भवति इत्यत्र नियोगः प्रमाणमिति चेत् ) न । तस्य ( नियोगस्य ) प्रमेयत्वात् ( न खलु प्रमेयं प्रमेयत्वेन प्रमाणं भवति ) नियोगज्ञानं तर्हि ( नियोगस्य प्रमेयतया प्रमाणत्वाभावे प्रमाणमस्तु ) न । तस्य नियोगविषयत्वात्, तस्य च ताभ्यामन्यत्वात् ( नियोगस्य अर्थानर्थप्राप्तिपरिहाराभ्यां भिन्नत्वात् । ननु मा नाम भूत् नियोगः अर्थानर्थप्राप्तिपरिहारयोः प्रमाणम् , शब्दावगतेस्तु अयं चेतनप्रवृत्तिं विना अनुपपद्यमानः तस्याश्च अर्थानर्थप्राप्तिपरिहारमन्तरेण असंभवात् प्रवृत्तिं अर्थानर्थप्राप्तिपरिहारप्रयोजनं आक्षेप्स्यते, आक्षेप्स्यते च तदपेक्षया प्रमेयमपि प्रमाणताम् , कारकशब्दानां आपेक्षिकप्रवृत्तित्वात् इत्यत आह- ) न चार्थादाक्षेपः, अनाप्तनियोगदर्शनात् ( अपथमेव सुपन्थानमाख्याय तत्र प्रवर्तयति अनाप्तः ) ' क्षेम्योऽयं पन्थाः , गच्छतु भवाननेन ' इति यथा । ( चोदयति- ) पदार्थान्वयनिष्ठः ( अर्थानर्थप्राप्तिपरिहारोपायतालक्षणसमन्वयनिष्ठः ) नियोगः ( लिङादिः– नियुज्यते अनेनेति व्युत्पत्त्या ) लोके, तस्य च ( साध्यसाधनभावस्य ) प्रमाणान्तरविषयत्वात् तदपेक्षत्वात् (प्रमाणान्तरापेक्षत्वात् ) तन्निबन्धना प्रवृत्तिर्लोके ( अनाप्तवाक्ये च नियोगस्य मानान्तरेण बाधितत्वादप्रवृत्तिः । मानान्तरागोचर– ) नियोगनिष्ठस्तु ( पदार्थान्वयः ) वेदे, अतो नान्यापेक्षा । ( तदेतत् दूषयति- ) उक्तोत्तरमेतत् ( विवक्षापरत्वनिराकरणप्रस्तावे ) । अपि च ( लौकिको भवतु अलौकिको वा, सर्वथा नियोग इत्येव– ) न नियोगमात्रं प्रवृत्तिहेतुः । ( चोदयति– न चेत् प्रवर्तयति– ) मिथ्या तर्हि नियोगज्ञानम् । न चैतत् युक्तं कारणद्वयाभावात् । ( परिहरति- ) न वयं नियोगमवजानीमहे येन मिथ्यात्वं स्यात् ( वेदस्य ) । सत्यपि तस्मिन् पुरुषः प्रवर्तते लोके इव यस्य कस्यचिन्नियोगात्, नहि तत्र नियोगो नास्ति । ( अथ न तन्नियोगपरं लौकिकं अपि तु विनियोगपरं इत्यत आह- ) अतत्परत्वे ( अनियोगपरत्वे लौकिकस्य लोकाधीनावधारणार्थस्य वैदिकस्य ) तात्पर्यं अप्रमाणकं इत्युक्तम् । ( ननु न वयं नियुक्तिमात्रं नियोगं ब्रूमहे, अपि तु कर्तव्यताम् । सा च निरपेक्षा प्रवृत्तेः हेतुर्वेदादवगम्यते इति शङ्कते- ) ननु कर्तव्यताऽवगमात् प्रवृत्तिः । अवगच्छति च नियुक्तः ' इदं मम कर्तव्यम् ' इति । यस्तु अवगच्छन्नपि अनुष्ठेयं नानुतिष्ठति, स सत्त्वेऽपि अर्थानर्थप्राप्तिपरिहारयोः अननुतिष्ठन्निव न दण्डैर्वार्यते । ( दूषयति– ) तदेतत् अविमृष्टनियोगरूपम् ( वचः ), तथाहि ( लोकानुसारात् आज्ञादिरूपितं ) प्रवर्तनामात्रं नियोगः ; स च लिङाद्यर्थः ( न पुनः प्रवृत्तिहेतुः कर्तव्यता ) इति ' प्रवर्तितोऽहमत्र ' इति प्रतिपत्तिः शब्दात् ( प्रवृत्तिहेतुः ) कर्तव्यताऽवगमस्तु नियोक्तुः अनुविधेयत्वात् । अनुविधेयनियोगे ' ममेदं कर्तव्यं ' इत्यध्यवसायात् । इतरत्र तु ( कर्तव्यताऽवसायरहित– ) प्रवर्तनामात्रप्रतीतेः । ( अत्रैव जरत्प्राभाकरोन्नीतार्थे गुरोः वचः संगच्छते इत्याह– ) उक्तं च ' कर्तव्यताविषयो नियोगः, न नियोगः कर्तव्यतामाह ' । ( कर्तव्यताविषयो नियोगः प्रवर्तना नियोक्तुर्धर्मः, तमभिदधाति लिङ् , न नियोज्यस्य धर्मं कर्तव्यत्वं प्रवर्तनाया विषयमाह, विषयस्य विषयिणः अन्यत्वात् । नवीनास्तु उन्नयन्ति, ' अनिरूपितनियोगव्यापारस्येदं चोद्यं ' इत्युपक्रम्य इदमुक्तं ' कर्तव्यताविषयो हि नियोगः, न [ पुनः ] कर्तव्यतामाह ' इति [ बृहती १।१।२ पृ. २९–३० ] यागकर्तव्यता अनुष्ठानं विषयो यस्य नियोगस्य स तथा । तेन हि नियोगः साध्यते, न पुनः नियोगो यागस्यानुष्ठानं ज्ञापयति । एतदुक्तं भवति, साक्षान्नियोग एव कर्तव्यतया अवगम्यते लिङादिभ्यः । स तु यागविषयः तदनुष्ठानमन्तरेण कर्तव्यतया अपर्यवसानात् तदनुष्ठानमाक्षिपति । सोऽयं आक्षेपापरनामा उपादानव्यापारः नियोगस्य आस्थीयते इति । तदेतत् अपूर्वात्मनि कार्यरूपे नियोगे सति उपपद्यते । चोदयति– नियोगस्य ) तद्विषयत्वादेव हि तर्हि कर्तव्यतावगमः ( विषयिणो विषयनान्तरीयकत्वात् ।

निराकरोति– ) न तावदयं शाब्दः, शब्देन नियोगमात्रस्याभिधानात् । ( यत्तु नान्तरीयकत्वादिति, तत्राह– ) नापि आर्थः, सर्वनियोगेषु अभावात् ( कर्तव्यताऽवगमस्य । उपसंहरति– ) तस्मादिदमपि दर्शनं अविमृश्यमानसुन्दरं इति नाद्रियन्ते वृद्धाः ॥ १४ ॥

( सिद्धान्तमुपक्रमते– ) उच्यते ( पृ. २३८ ) **‘ उपदेशो नियोज्यार्थकर्माप्रस्थितचोदना । प्रथितो गुरुवैद्यादौ नित्येऽपि न न कल्पते ॥ ’ २५ ॥** यद्यपि आज्ञाऽभ्यर्थनाऽनुज्ञा वेदेऽनुपपन्ना ( तस्यापौरुषेयत्वेन चेतनस्य नियोक्तुरभावात् ) उपदेशस्तु युज्यते (तस्यापौरुषेयेऽपि संभवात्)। सोऽपि तद्वदेव ( आज्ञादिवदेव ) प्रेरणात्मकश्चतुर्थो लोके प्रज्ञायते । तथाहि, आज्ञाऽभ्यर्थने हि नियोक्त्रर्थं अनाहतनियोज्यफलं कर्म गोचरयतः । नियोज्यार्थं तु ( कर्म ) उपदेशः ( गोचरयति । अनेन ‘उपदेशो नियोज्यार्थकर्म’ इति कारिकांशो विवृतः ) । अनुज्ञा तु यद्यपि एवं क्वचित् तथापि प्रवृत्तपुरुषविषयत्वात् नोपदेशः । ( अनेन ‘ अप्रस्थितचोदना ’ इति विवृतम् । अप्रस्थितस्य अप्रवृत्तस्य पुंसः प्रस्थापना चोदना इत्यक्षरयोजना ) । नियोज्यार्थकर्मगोचरं अप्रवृत्तप्रवर्तनं उपदेशमाचक्षते धीराः । नहि ‘ गां अभ्याज ’ ( इत्याज्ञायां ) ‘ माणवकं अध्यापय ’ ( इत्यभ्यर्थनायां ) ‘कुरु यथाऽभिमतं ’ ( इत्यनुज्ञायां ) इत्युपदेशप्रतीतिः । नापि ‘ भैक्ष्यं चरेत् ’ ‘ ज्वरितः पथ्यं अश्नीयात् ’ इति प्रतीतिः ( आज्ञादिरूपा ) । भूयसा चैष ( प्रकारेण ) पौरुषेयेषु कामार्थशास्त्रादिषु आज्ञादिभिरनारूपितो लोके प्रज्ञायते ( न केवलं शास्त्रेषु, निकृष्टबुद्धिवचनेष्वपि इति प्रसिद्धतरत्वमाह– ) गोपालादिवचःसु च मार्गाख्यानपरेषु ‘ अनेन पथा गच्छ ’ इति । नहि हीनस्य अज्ञानात्माख्ये ( ऽर्थे ) कर्मणि अभ्यर्थनाऽनुज्ञानमप्रवृत्तस्य । अत एव चोपदेशः इति आज्ञादिभ्यो भेदेन तस्य प्रतीतत्वात् ‘ तस्य ज्ञानमुपदेशः ’ – १।१।५।५– इति ततो भिन्न उपदेशशब्देन दर्शितः ( सूत्रकारेण ) ॥ २५ ॥

भवतु ततो भिन्नः, कः पुनरसौ ( समानासमानजातीयव्यवच्छेदकमस्य वाच्यमित्यर्थः ) ? ननु उक्तं ( भाष्यकृता ) ‘ उपदेश इति विशिष्टस्य शब्दस्योच्चारणम् ’ ( इति शब्दस्य रूपगतो विशेष उक्तः ) । यद्येवं अव्युत्पन्नस्यापि प्रवृत्तिप्रसङ्गः । उच्यते **‘विशिष्टः पुरुषार्थस्य शुद्धस्योपायमाह यः । पुरुषार्थो यदा येन यो नरेणाभिकाङ्क्ष्यते ॥ ’ २६ ॥** पुरुषार्थस्योपायं अनवगतमवगमयन् उत्कर्षाद्विशिष्टः (अर्थगतेन विशेषेण विशिष्टः ) शब्द उक्तः, अन्यथा सर्व एव शब्दः शब्दान्तराद्भिन्नः इति अविशेषणमेव स्यात् । अतो नाविदितार्थस्य ( प्रथमश्राविणः पुरुषस्य उपदेशात् ) प्रवृत्तिः । प्रदर्शनार्थं चेदम्, अतः अर्थ–शब्द–अभिधा–उच्चारणादिज्ञानं च कर्म–कर्तृ–करण–भावसाधनेन उपदेशशब्देनोच्यते प्रेषणादिवत् । तैरपि हि ( प्रेषणादिशब्दैः ) यथाविवक्षितमर्थादयो निर्दिश्यन्ते । ( शङ्कते– ) अर्थस्तर्हि प्रवर्तकः । ( परिहरति– ) सत्यम्, शब्दोऽपि ( प्रवर्तकः ) तत्प्रतिपादनात् ( एतेन कारिकायाः पूर्वार्धं व्याख्यातम् । अत्र च पुरुषार्थस्येति पुरुषो नियोज्योऽभिमतः । शुद्धस्येति नियोज्यार्थस्यैव, न नियोक्त्रर्थस्येत्यर्थः । ननु यदि पुरुषार्थोपायाभिधायी शब्द उपदेशः– ) कथं तर्हि अङ्गोपदेशः ? ( न खलु अङ्गानि पुरुषार्थानि अपि तु क्रत्वर्थानि । परिहरति– ) अपेक्षितो हि अर्थः पुरुषार्थः, अन्यथा ग्रामादिरपि न तथा स्यात् ( तस्यापि स्वयं असुखत्वात् ) । अपेक्षितश्च उपदिष्टसाधनानुग्रहः ( साधनानि अङ्गानि ) ॥ २६ ॥

ननु लिङादिभ्यः प्रवर्तनाऽवगम्यते (न पुनः पुरुषार्थोपायता ) पराहतं चेदं ‘ उपदेशो नियोज्यार्थकर्माप्रस्थितचोदना’ इति । (उत्तरं–) नेदं पराहतम् । तथाहि, **‘ पुंसो नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्तकः ।** ( ननु तथापि इष्टसाधनतामात्रं शब्देन प्रतिपादितम्, कुतः पुनः प्रवर्तनाप्रत्ययः ? तत्राह– ) **प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम् ॥ ’ २७ ॥** प्रवृत्तिसमर्थो हि कश्चित् भावातिशयो व्यापाराभिधानः प्रवर्तना । सा च क्रियाणां अपेक्षितोपायतैव । नहि तथात्वं ( अपेक्षितोपायत्वं ) अप्रतिपद्य तत्र ( क्रियासु ) प्रवर्तते कश्चित् । ( ननु अनपेक्षितोपायत्वेऽपि नृपाद्याज्ञया प्रवर्तन्ते प्रेक्षा-



वन्तः इति कथं अपेक्षितोपायतैव प्रवृत्तिहेतुः, इत्यत आह– ) याऽपि आज्ञादिभ्यः प्रवृत्तिः, साऽपि कथंचित् अपेक्षितनिबन्धनत्वमुपाश्रित्यैव, अन्यथा अभावात् ( तदनुपाश्रये प्रवृत्तेः अभावात् ) ॥ २७ ॥

( अत्र केचित् आम्नायं प्रति श्रद्धामानिनः प्राहुः– ) ननु ‘ कर्तव्यं ’ इति प्रतिपत्तेः प्रवृत्तिः । कथं हि तथा प्रतिपद्यमानो न प्रवर्तेत ? यो हि स्वर्णमुपलभ्य मृत्तिका इत्याह, कस्तस्य उत्तरं दद्यात् । ( सिद्धान्ती पृच्छति– ) कः पुनरयमर्थः कर्तव्यमिति ? ( पूर्वपक्ष्येकदेशी प्राह– ) न कश्चित् । ( किंतु सा ) प्रतिभा । ( सिद्धान्ती पृच्छति– ) का पुनरियम् ? ( एकदेशी आह– ) नियतसाधनावच्छिन्नक्रियाप्रतिपत्त्यनुकूला प्रज्ञा ( साध्यसाधनेतिकर्तव्यताऽवच्छिन्नायाः क्रियायाः प्रतिपत्तौ अनुकूलाम्, तत्प्रतिपत्त्या कार्ये अनुष्ठानलक्षणे कर्तव्ये सहकारिणीम्, ‘ कर्तव्यं ’ इति प्रज्ञा प्रतिभा ) प्रतिभाक्रियाविषयत्वे हि क्रियाप्रतीतिः स्यात् । सा च प्रवृत्तिहेतुः । अप्रमाणं ( तु ) न व्यवहाराङ्गम् । संशयविपर्ययौ हि तथा ( प्रतिभा पुनः ताभ्यामन्या व्यवहारं प्रवर्तयति एव । तत्र व्यतिरेकमाह– ) नहि ‘ इदमित्थं अनेन कर्तव्यम् ’ इत्यनुपजातप्रतिभाभेदः प्रवर्तते प्रत्यक्षाद्यवगतेऽप्यर्थे । तत्र हि प्रमाणकार्यसमाप्तिः । ( अन्वयमाह– ) प्रतिभानेत्रो हि लोकः इतिकर्तव्यतासु समीहते ( कायवचनचेष्टासु प्रयतते इत्यर्थः ) ( सिद्धान्ती शङ्कते– ) किं पुनरस्या निमित्तम् ? ( पूर्वपक्ष्येकदेशी उत्तरमाह ) शब्दः । तत्र ( ये जना व्युत्पन्नास्तेषां ) व्युत्पन्नानां साक्षात् भावनामुखेन वा, अप्रसिद्धशब्दनिबन्धनव्यवहाराणां बालादीनां अनादिशब्दभावना ( अभ्युपेतव्या ), अन्यथा आद्यकरणविन्यासाद्यसंभवात् । यथोक्तं ‘ आद्यः करणविन्यासः, प्राणस्योर्ध्वं समीरणम् । स्थानानामभिघातश्च न विना शब्दभावनाम् ॥ ’ (जातमात्रः खल्वयं बालकः पित्रा मुखहुते मधुसर्पिषी जिह्वया लेढि, सोऽयमाद्यः करणविन्यासः । प्राणांश्चोर्ध्वं समीरयति यत् श्वसितीत्युच्यते, अपि चोदीरितेन वायुना हृदयादीनि स्थानानि अभिहन्ति, यतः शब्दभेद आविरस्ति, तदेतत् सर्वं प्राग्भवीयशब्दभावनाविजृम्भितम् ) । विच्छिन्नप्रतिपत्तीनामपि च पदार्थानां किं कथमनुसंधीयेत ( इति ) विचारविकलाऽप्रत्यवमृष्टपूर्वशक्तिः समाविष्टपूर्वशक्तिप्रतिभासेव उदीयमाना उपश्लेषं विदधाति । ( अत्र ‘ किं कथमनुसंधीयते ’ ‘ विचारविकला ’ इति अनुमानबीजभूतानां धर्मिस्वरूपदर्शनतद्धर्मसंदेहजिज्ञासापक्षहेतुधर्मपरामर्शप्रमाणान्तराबाधानामभावं सूचयति । ‘ अप्रत्यवमृष्टपूर्वशक्तिः ’ इति व्याप्तिस्मरणाभावमाह । सेयमेवंविधा प्रतिभा भावानामुपश्लेषं विदधाति ) तादर्थ्यात् (प्रवृत्त्यर्थत्वात् अस्याः प्रतिभायाः) अनुपश्लेषे तदभावात् । दुर्ज्ञानोपायेषु च प्राज्ञैरपि स्वरविशेषाश्रयभेदेषु पक्षिणां पूर्वशब्दभावनाऽनुगमात् प्रत्युत्पन्नशब्दव्यापारा ( विप्रकृष्टशब्दव्यापारा ) प्रतिभा प्रवृत्तिनिबन्धनम्, नोपायज्ञानं ( प्रवृत्तिनिबन्धनम् ) उपदेशाऽसकृद्दर्शनयोरभावात् । आहारविशेषप्रतिपत्तिश्च ( अस्माभिरेतदादरणीयं इति प्रतिभा ) तज्जातीयानां अविदितप्रीत्युपायत्वेन प्रथमज्ञाननिबन्धना ( विना पूर्वभावनां ) न भवेत् । जातिभेदाऽभिव्यक्तप्रतिभाभेदानां प्लवनादिक्रियायां प्रवृत्तिश्च ( जातमात्राणां चक्रवाकादीनां न भवेत् ) अज्ञातोपायानां एकजातीयानां च ( पारावतोरगादीनां ) रागादिमयी प्रवृत्तिः ( न भवेत् ) शाश्वतिकविरोधानां ( अहिनकुलादीनां ) द्वेषप्रवृत्तिः ( न भवेत् ) । अतो नेष्टाभ्युपायमात्रं प्रवृत्तिहेतुः, अपि तु प्रतिभा इत्यादर्शयन् वृद्धाः । यथा अवोचन्, ‘ उपश्लेषमिवार्थानामाकरोत्यविचारिता । सार्वरूप्यमिवापन्ना विषयत्वेन वर्तते ॥ ’ ( प्रतिभैव ताद्रूप्यमापन्ना विषयत्वेन वर्तते ) ‘ साक्षात् शब्देन जनिता, भावनाऽनुगमेन वा । इतिकर्तव्यतायां, तां न कश्चिदनिवर्तते ॥ प्रमाणत्वेन तां लोकः सर्वः समनुगच्छति । व्यवहाराः प्रवर्तन्ते तिरश्चामपि तद्वशात् ॥ ( तिरश्चामुदाहरणान्याह– ) स्वरवृत्तिं विकुरुते मधौ पुंस्कोकिलः कथम् । जन्त्वादयः कुलायादिकरणे शिक्षिताः कथम् ॥ आहारप्रीतिविद्वेषप्लवनादिक्रियासु च ( ० सु कः । ) जात्यन्वयप्रसिद्धासु प्रयोक्ता मृगपक्षिणाम् ॥ ’

( अथ सिद्धान्ती पूर्वपक्षैकदेशिनम्, अनन्तरतया निराकरोति– ) उच्यते ‘ **न निरालम्बनं ज्ञानं**

क्रियासाधनयोगिनि । सामान्येऽस्मिन् विप्रकृष्टे यच्छब्दवदुपायधीः ॥ ' २८ ॥ सा खलु प्रतिभा आलम्बनवती न वा ? ( यद्यपि प्रतिभा निर्विषया इत्युक्तम्, तथापि कदाचिदिदं अभ्युपगमसिद्धान्तमात्रं स्यान्न तात्त्विकं इति मत्वा दूषणाभिधित्सया विकल्पितम् ) आलम्बनवती चेत् तदेवावबोद्धव्यं प्रवृत्तिनिबन्धनम् । न च तत् अन्यत् ईहितोपायतायाः । निरालम्बनं तु ज्ञानमयुक्तमेव, तस्य ज्ञेयावभासकार्यलक्षणत्वात् । विषयाभावाच्च व्युत्पत्त्यसंभवे तदनपेक्षस्य प्रवृत्तिः स्यात् । ( कश्चिदाह-- ) ननु कारकसंसर्गिणी क्रिया आलम्बनमिष्टैव । ( दूषयति– ) न । तस्या अप्रवर्तकवचनजन्मन्यपि प्रख्यायां ( ' काष्ठैः पचेत् ' इत्यादौ ) साम्यात् लिङादियुक्तेभ्यो वचनेभ्यः प्रतिभाभेदात् अप्रवृत्तिप्रसङ्गात् । ( कश्चिदेव शङ्कते– ) ननु नाप्रवर्तकमनिवर्तकं वा वचः समस्ति, वैयर्थ्यात् । कर्तव्यतापर्यवसायिनी हि वाक्यप्रवृत्तिः । ( परः शङ्कते– ) कथं तर्हि भूतान्वाख्यायिनो वेदान्ताः लौकिकवचांसि च । ( उत्तरमाह कश्चित्– ) कर्तव्यताभेदात् प्रवृत्तिनिवृत्तिप्रतिपत्तिविषयत्वात् । सर्वा हि कर्तव्यता भेदवती, वेदान्तेषु तावत् आत्मतत्त्वप्रतिपत्तिकर्तव्यता । लोके च ' इदमिह निध्यादि प्रतिपत्तव्यम् ' इति वाक्यपर्यवसानम् । ( सिद्धान्ती दूषयति– ) नैतत् सारम् । ( तिस्रः प्रतिपत्तयः । श्रुतमयी, चिन्तामयी, साक्षात्कारवती चेति । तत्र श्रुतमयीं अधिकृत्य आह– ) शब्दात् प्रतिपत्तेरुत्पत्तेः पुनस्तत्राव्यापारात् कर्मफलसंबन्धबोधवत् ( यथा कर्मविधिवाक्यं न कर्मफलसंबन्धबोधे विधीतरदपेक्षते तद्वत् ) । निश्चयोऽपि ( आत्मनि ) यदि शब्दात्, संजात एव, अन्यतश्चेत् तदाऽप्रामाण्यम् ( शब्दस्य ) । अर्थपरताऽपि न ( विधेः प्रयोजनं ) दृष्टार्थत्वात् स्वाध्यायाध्ययनविधेः कर्मवत् ( उपनिषदां कर्मविधिवत् ) ' अविशिष्टस्तु वाक्यार्थः ' इति न्यायात् ( १।२।८।३२ ), अन्यथा सविधिकस्यैवाविवक्षितार्थत्वप्रसङ्गात् । न च पुरुषार्थत्वाय विधिः प्रार्थ्यते, ज्ञानस्य ज्ञेयाभिव्यक्तिफलत्वात्, फलान्तरानभ्युपगमात् ( ' अपुनरावृत्तिः ' इति हि मोक्ष उच्यते, न चासौ साध्यः ) क्रियापरत्वाच्च विधेः वस्तुस्वरूपसत्ताया अविवक्षितत्वात् तत्प्रतिपत्त्यर्थमनुष्ठानं गम्येत, नात्मतत्त्वावबोधः स्यात् । अतः ( ' आत्मा ज्ञातव्यः ' इत्यादिः ) श्रूयमाणो विधिः एवंजातीयेषु अविवक्षितः, नित्यप्राप्तेः ।

ननु विधिरहितस्यानुवादरूपस्य साकाङ्क्षस्य प्रामाण्यमलभ्यम् । ( इदं विकल्प्य दूषयति– ) अथ केयमनुवादता ? प्रमाणान्तराधिगतार्थता, आहोस्विद्भूतार्थता ? प्रमाणान्तराधिगतार्थता चेत् विधिशून्यमपि ( तर्हि भूतार्थं ) अतादृशं ( प्रमाणान्तरविषयीकृतार्थं ) अपौरुषेयं नानुवादः । ( अथ ) भूतार्थता चेत् कुतः सापेक्षता । ( शङ्कते– ) यदि लौकिकवचसां प्रमाणान्तराधिगतगोचरत्वात् भूतार्थानां सापेक्षत्वं दृष्टमौषधपानादिषु । विधयोऽपि लौकिकास्तथा ( सापेक्षाः ) इति विधिमत् तत् ( वैदिकं ) अपेक्षेत ; अथ ( विधिमद्वैदिकं ) अपौरुषेयत्वात् नापेक्षते ततः अपौरुषेयत्वं इतरत्रापि ( वैदिकभूतार्थेऽपि ) अपार्थम् । अथ प्रमाणान्तरसंभवात् भूतार्थस्य ( वैदिकस्य ) सापेक्षता, न विधिमतः । विध्यर्थे तदसंभवात् ( प्रमाणान्तरासंभवात् । उत्तरमाह– ) लौकिकस्यापि ( औषधादिविधेः ) तदनपेक्षताप्रसङ्गः । ( चोदयति– ) पुरुषबुद्धिप्रभवत्वात् विनियोगस्य तत्सापेक्षतया तत्र सापेक्षत्वमपौरुषेये वचसि । सोऽपि ( विनियोगः ) न केवलं ( नियोगः ) बुद्ध्यन्तरनिरपेक्षः । ( परिहरति–) मानान्तरविषयोऽपि तर्हि ( भूतरूपोऽर्थः नियोग इव) अपौरुषेयवचननिमित्तानपेक्षः इति यतोऽसौ ( अपौरुषेयता ) अनपेक्षत्वकारणं न मानान्तरासंभवः, पौरुषेयता च सापेक्षत्वे हेतुः । नियोगनिष्ठेऽपि लौकिके वचसि सापेक्षत्वात्, न प्रमाणान्तरसंभवः ( सापेक्षत्वे हेतुः ) । तथा च सापेक्षत्वे प्रत्यक्षानुमानयोः परस्परविषयसंभवात् सापेक्षत्वात् प्रमाणत्वहानिः ( हानिप्रसङ्गः ) । अतः प्रमाणान्तरोपलब्धिविवक्षापुरःसरप्रवृत्तित्वात् विधिमदितरत्वाद्वा ( पौरुषं ) वचनं सापेक्षम्, अतथाभावात्तु वैदिकमुभयमपि अनपेक्षमिति चतुरस्रम् । ( प्रकृतमुपसंहरति– ) तेन प्रमाणत्वार्थमपि न विधिविवक्षा ।



( एवं तावत् न श्रुतमयी प्रतिपत्तिर्विधातव्येत्युक्तम् । अथ साक्षात्कारवतीमाश्रित्य चोदयति– ) ननु अन्यदेवेदं शब्दप्रभवात् ( विज्ञानात् ) आत्मतत्त्वगोचरं ज्ञानं विधीयते । न हि शाब्दज्ञानपरिवेद्यं ब्रह्मस्वरूपम् । वाक्यलक्षणो हि शब्दः प्रमाणम् । पदार्थसंसर्गात्मा च तदर्थः, प्रत्यस्तमिताखिलभेदप्रपञ्चं चात्मतत्त्वम्, तत् कथं अस्य गोचरः ? तस्मात् प्रलीनसकलावच्छेदोल्लेखं अद्वैततत्त्वावभासात्मकं ज्ञानमन्यदेव शाब्दात् विधीयते । ( दूषयति– ) वार्तमेतत् । न खलु फलांशो विधिगोचरः, निष्प्रपञ्चात्मतत्त्वावभासश्च फलमेव, न ततोऽन्यदभीप्स्यते । मोक्षः ( ततोऽन्योऽभीप्सिष्यते ) इति चेत्, न, ततोऽव्यतिरेकात् । सप्रपञ्चात्मतत्त्वावभासो हि संसारः । निष्प्रपञ्चात्मतत्त्वावभासो मोक्षः स्वात्मनि स्थितिः । अन्यथा कार्यत्वादमोक्षात् । ( अविद्योच्छेदः कस्मात् न भवति ? आह– ) बन्धहेतुश्च कर्मादिप्रपञ्चः अविद्या, तदुच्छेदश्च विद्यैव ( इति अविद्योच्छेदोऽपि न प्रवृत्तिविषयः । दूषणान्तरमाह– ) यदि च न कथंचिदपि शब्दज्ञानविषयो ब्रह्म, कथं तज्ज्ञानविधिः शक्यप्रतिपत्तिः, विषयतश्च ज्ञाननिरूपणम्, सिद्धश्च ( विषयः ) तत् ( ज्ञानं ) निरूपयति । तत्सिद्धिश्च प्रमाणान्तराभावात् ( शब्दात् ) स्यात् । तस्यापि चेदविषयः, तदसिद्धेः (विषयासिद्धेः ) ज्ञानविशेषाप्रतिपत्तेर्विध्यप्रतिपत्तिः । अथ कथंचित्तद्विषयः ( भेदप्रपञ्चविलयद्वारेण ) न तर्हि शाब्दज्ञानानपेक्षता ( ० ज्ञानापरिच्छेद्यता ) । प्रतिपत्तिकर्तव्यतापरत्वाच्च वचनस्य, ईदृक्षा नागमार्थः स्यादित्युक्तम् । नापि आर्थोऽर्थः, अध्यारोपेणापि प्रतिपत्तेः संभवात् । अतो न नियोगानुप्रवेशेन वस्तुतत्त्वं प्रकाश्यते । नहि तत्र ( वस्तुतत्त्वे ) शब्दस्य प्रामाण्यम् । एवं ( भूतार्थत्वेऽपि ) अनपेक्षतया प्रामाण्यसिद्धेः कार्यान्वयरहितभूतादिकमपि अवगमयितुमलमाम्नायः इति ( ' चोदना हि ' इतिभाष्यग्रन्थस्य निबन्धनकृतो व्याख्यानं– ) असमञ्जसमेतत् । ( तदेव व्याख्यानमुदाहरति 'गमयति' इत्यन्तेन ग्रन्थेन–) ' यदि कार्यरूप एव वेदार्थः, कथं तर्हि मन्त्रार्थवादाः सोपनिषत्काः ? यस्माद्भूतादिकमर्थं चोदनैव गमयति । कथम् ? कार्यं अर्थं एवमवगमयन्ती भूतादिकमपि गमयति ' ।

( संप्रति चिन्तामयीं प्रतिपत्तिं निराचिकीर्षुस्तामुपन्यस्यति– ) अन्ये तु शाब्दज्ञानविधानसंतानविधानमिच्छन्ति । तस्य संहृतनिखिलभेदोल्लेखविशुद्धविशदज्ञानफलत्वात् ( तत्र दूषणमाह– ) अत्रापि नात्मरूपावगतिः, ज्ञानप्रकर्षश्च अभ्यासनिबन्धनः प्रथित इति न चोदनाऽर्थता । तस्मात् दृष्टार्थेषु कर्मसु विशेषविधयः । उपनिषदामात्मतत्त्वं तु अनपेक्षविध्यन्तराद्वाक्यात् प्रतीयते । ( अभ्युपेत्याह–) अलं वा गुरुभिर्विवादेन । भवतु वा प्रतिपत्तिकर्तव्यता नियोगद्वारेण आत्मतत्त्वावगतिः । लोकवचांसि भूयांसि भूतान्वाख्यानानीत्युक्तम् ।

ननु ( नाप्रवर्तकं वचः, यतः– ) वैयर्थ्यं अत्रोक्तम् । ( परिहरति– ) प्रतिपत्तिविधावपि तुल्यमेतत् । भूतार्थप्रतिपत्तेरनतिरेकात् । अथ अविपरीतात्मप्रतिपत्तिरेव ( अर्थः प्रतिपत्तिविधेः ) । ( उत्तरं– ) सा ( प्रतिपत्तिः ) भूताख्यानपर्यवसानेऽपि तुल्या । ( चोदयति– ) अस्तु तर्हि प्रवृत्तिनिवृत्तिपर्यवसायित्वमेव सर्ववचसां भूतोऽप्यर्थः कथ्यते । तेनान्यत्र प्रवृत्तिं कर्तुं तत्रैव वा, अन्यथाऽर्थाभावात् । ( परिहरति– ) न, कुतूहलनिवृत्तेरपि अर्थत्वात् । तथाहि, अजिहासितानपादित्सितदूरदेशराजसंज्ञाचरितगोचराः कुतूहलिनां दृश्यन्ते प्रश्नाः । कुतूहलनिवृत्तिपराणि च तज्ज्ञानां वचांसि । अटवीवर्णकादयश्च प्रवृत्तिनिवृत्तिशून्याः भारतादिषु भूतपर्यवसायिनो रूपादेव प्रीतिहेतवः, प्रीत्युत्पत्त्यर्थं च इष्टाख्यानानि, न प्रवृत्तये निवृत्तये वा श्रोतुः, इत्यलमतिप्रसङ्गेन । शिशुशकुन्तादीनां यथा विप्रकृष्टः शब्दो निमित्तं भावनाऽनुगमात् प्रतिभायाः, तथा तादृशमेवोपायज्ञानं प्रवृत्तिनिवृत्तिमुखेन किं नेष्यते ? जातिविशेषादयश्च शब्दभावनाया इव उपायज्ञानभावनायाः प्रबोधकाः । ( चोदयति– ) ननु प्रतिभाऽऽलम्बनस्य ( समीहितोपायस्य क्रियाविशेषस्य ) स्वरूपतोऽनिष्पत्तेः शब्दज्ञानाकारणैव निरूपणा । न च प्रत्युत्पन्नः शब्दोऽस्ति । तदवश्याऽऽश्रयणीया ( अपूर्वशब्द– ) भावना । ( परिहरति– ) नैतत् सारम् । अनिष्पत्तिर्हि अवर्तमानत्वाद्वा अनेकार्थसमाहारात् एकात्मभावाद्वा प्रतिभाऽऽलम्बनस्योच्यते । ( उत्तरं– ) शब्देऽप्यसौ तुल्या । सोऽपि तर्हि

अतीतो वर्णसमाहारात्मको नैकः समस्ति, 'भेददर्शनाभावात् अभेददर्शनाच्च' इत्युक्तम् । (चोदयति–) ननु एवंजातीयकमेव (०यकेष्वेव इति विवि. पाटः) अभेदवस्तुबुद्धेः एकशब्दात्मकमुपागमन् (धीराः) । नहि अवस्तुषु संसर्गसमूहात्यन्तासदादिषु संसर्गिषु वा नानात्मसु एकवस्तुप्रतिभासः संभवति, विना एकस्य शब्दात्मनः प्रत्यासात् (अध्यासात्) परिणामात् विवर्ताद्वेति । (परिहरति– ) न, अन्यथासिद्धेः । संसर्गस्तावत् वाक्यार्थलक्षणः कारकोपसर्जनक्रियाप्रधानः अतुल्यप्रधानसंसर्गी । समूहोऽपि नान्तरेण तद्भावनिमित्तमेकं समूहिनाम् । तत्र (समूहिषु) तदुपाधिः (एकदेशकालोपाधिः) एकप्रकाशः (एकविषयः प्रकाशः) शशविषाणादयोऽपि जात्यन्तरपरिदृष्टवस्तुरूपेणोत्प्रेक्ष्यमाणा वस्त्वात्मकाः प्रकाशन्ते, अन्यथा (एकस्य शब्दात्मनः प्रत्यासेन भिन्नेष्वभेदकल्पनायां) एकवाक्यगम्येन एकवाक्यता स्यात् । (एकत्राप्येकता स्यात् इति कणिकायां पाटः) । न च तत्र शब्दभेदः, रूपाभेदात् । अर्थभेदात् भेद इति चेत् (उत्तरं–) कथमन्यथा (एकत्वेन) प्रतीतः अन्यथा (नाना) । अर्थभेदानुमानात् इति चेत् । (उत्तरं–) प्राक् तर्हि अर्थभेदाभेदौ अवगम्येते, पश्चाच्छब्दभेदाभेदौ इति न शब्दप्रत्यासत्तिनिमित्तः अर्थेषु एकताऽवभासः । समूहैकशब्दयोश्च अविशेषः । अविदितसमूहशब्दस्य च तत्तदवभासो न दूरतः स्यात् । अभावे शब्द इति च भावशब्दप्रतीतेः विवक्षितार्थहानिः । विवर्तपरिणामयोस्तु सर्वस्यैकत्वात् अवान्तरैकत्वं नैकशब्दालम्बनम् । वस्त्ववस्तुविभागश्च न स्यात् । (शङ्कते) अथ तुल्येऽपि शब्दविवर्ते अन्यनिबन्धनः (अनाद्यविद्यावासनावैचित्र्यनिबन्धनः) अयं विभागः । (उत्तरं–) न, शब्दनिवर्तनिबन्धनः शशविषाणालातचक्रादिषु वस्त्वाकारनिरूपणा ।

पराक्रान्तमेव च बहुधा स्वयूथ्यैः (भाष्यकारवार्तिककारादिभिः) इत्यलमतिप्रसङ्गेन ।

तस्मात् ईप्सितस्योपायता कर्तृप्रवृत्तिहेतुः ॥ २८ ॥

(एवं पूर्वपक्षैकदेशिनि निरस्ते संप्रति परमपूर्वपक्षी ब्रूते– ) ननु कर्तव्यताऽवगमात् प्रवर्तते, सैव तथा अस्तु । (दूषयति– ) का पुनरियम् ? (कर्तव्यता । पूर्वपक्षी आह– ) कर्तव्यतैव । (सिद्धान्ती पृच्छति– ) केन प्रमाणेनावगम्यते ? (सिद्धान्ती एवाह– ) नेन्द्रियैरध्यक्षमीक्ष्यते, तत्पुरःसरत्वान्नेतरैः (प्रमाणैः) । (पूर्वपक्षी ब्रूते–) सत्यम्, न शब्दातिरेकिभिः । (सिद्धान्ती–) ननु शब्दोऽपि संविदपेक्षया इतरसिद्धिं (इतरेण. कर्तव्यतायाः सिद्धिं) अपेक्षते । (पूर्वपक्षी– ) ननु नियोगतः (प्रमाणान्तरादेव सिद्धिं अर्थस्यापेक्षते) शब्देऽपि तत्संभवात् (शब्दतः सिद्धेऽपि संबन्धज्ञानसंभवात् । सिद्धान्ती– ) ननु इतरेतराश्रयः स्यात् (शब्दतः सिद्धौ संबन्धविज्ञानम्, संबन्धविज्ञाने च शब्दतः सिद्धिरिति । पूर्वपक्षी– ) न, अनादित्वाच्छब्दभावनायाः । न खलु शब्दः साक्षादेव कर्तव्यताप्रतिभासमाविर्भावयति विप्रकृष्टः, अपि तु भावनानुगममुखेन । तत्र विप्रकृष्टशब्दभावनाद्वारसिद्धेः कर्तव्यतात्मनि (स्वज्ञानेन प्रवृत्तिहेतौ) परत्र प्रवृत्तिप्रसवोचीतप्रत्यये नासुकरा प्रत्युत्पन्नशब्दसंवित् (वर्तमानस्य शब्दस्य ज्ञानम्) । उक्तं च 'साक्षाच्छब्देन जनिता (तां) भावनाऽनुगमेन वा । इतिकर्तव्यता या, तां न कश्चिदतिवर्तते ॥' [वाक्यपदीये काण्डे २ श्लो. १४८ पृ. १४२] । कर्तव्यतावगमादेव प्रवृत्तिः, न ईप्सितोपायतायाः, नित्येषु अपि अप्रवृत्तिप्रसङ्गात्, ईप्सितोपायत्वे वा नित्यत्वव्याघातः । (इमं पूर्वपक्षं सिद्धान्ती दूषयति– ) उच्यते '**पूर्वशब्दैर्व्यवहृतिर्व्युत्पत्तेरनपेक्षणम् । भवेद्विशेषहेतुः को बीजमर्थेन तु श्रुतौ ॥**' २९ ॥ (पूर्वपक्षी शङ्कते– ) का पुनरियं शब्दभावना, शब्दविषया (वाचकत्वविशिष्टविषया) शब्द– (वाचकत्व–) ज्ञानबीजम्, उत शब्दाभिहिता अर्थज्ञानबीजम् । यदि शब्दविषया तैरेव अनष्टस्मृतिसंस्कारैः प्राग्भवीयैः शब्दैर्व्यभिचारः स्यात् (तथा च प्रथमश्राविणोऽपि अर्थप्रत्ययाप्रसङ्गः । तदिदमुक्तं पूर्वशब्दैर्व्यवहृतिः, व्युत्पत्तेरनपेक्षणं भवेत् इदानीं इति) । व्युत्पत्तिश्च तदा नापेक्ष्येत । शब्दाभिहिता (अर्थविषया) चेत् तथापि पूर्वस्यां सत्यां स एव प्रसङ्गः । अथ इयमेव (अर्थविषयैव, न पूर्वशब्दविषया) । (तदा सिद्धान्ती– ) विशेषहेतुर्वक्तव्यः, यत् (येन) तुल्येषु प्रत्ययपाटवाभ्यासादरेषु शब्दार्थसंबन्धविषयेषु अर्थ एव भावनाबीजम्, न शब्दसंबन्धयोः । (तदिदमुक्तं विशेषहेतुः को बीजमर्थे, न तु श्रुतौ अपि अर्थसंबन्धो बीजं इति) । प्रायणं दुःखं वोच्छेत्तृ जात्यन्तरव्यवधानं वा शब्दसंबन्धयोर्भावनाबीजानाम्, नार्थेषु (इति विशेषहेतुर्वक्तव्यः) । तेष्वपि च भावनाऽनुगमश्चेत् जात्यन्धबधिराः तज्जन्मानुभूतानिव रूपशब्दप्रकारान् जन्मान्तरानुभूतानाचक्षीरन् ॥ २९ ॥

(चोदयति– ) अथापि पूर्वाभ्यस्तस्मृत्यनुबन्धात् जातस्य हर्षभयशोकसंप्रतिपत्तेः कासांचिद्भावनानामनुगमो न सर्वासाम्, व्युत्पन्नवदव्यवहारात् बालस्य । (सिद्धान्ती दूषयति– ) भवतु, किंतु '**पूर्वसिद्धिव्यपेक्षत्वान्मानं तत्र न किंचन । सिद्धे सामान्यतो वृत्तिर्विशिष्टे लिङ्गवाक्ययोः ॥**' ३० ॥ न तावत् लिङ्गादिजं ज्ञानं तत्र प्रमाणम् (न पदं प्रत्ययो वा कर्तव्यतायां प्रमाणम्) । संवित्प्रभवतया पूर्वसिद्धिव्यपेक्षत्वेन । नापि भावनाजं तन्निमित्तज्ञानापेक्षत्वेन । नापि लिङ्गवाक्यजे । तयोः सामान्यरूपप्रसिद्धेः विशिष्टावगाहित्वेन अप्रसिद्धपदार्थवाक्यार्थप्रतीत्यनुपपत्त्या (पदार्थस्यैव इतरपदार्थविशिष्टस्य वाक्यार्थत्वात्) सामान्यरूपप्रसिद्धिनिबन्धनप्रमाणापेक्षायां तदभावे प्रामाण्याभावः (सामान्यरूपसिद्धिनिबन्धनस्य च कर्तव्यतायां प्रमाणस्याभावात् लिङ्गवाक्ययोः विशिष्टायां तस्यां प्रामाण्याभावः– इति कणिका) । यथा चेह जन्मनि, तथा पूर्वस्मिन्, पूर्वतरेऽपि सा (भावना) अपेक्षितेति प्रमाणाभावः । तत्र किं विकल्पमात्रमेवेदं अनादिशब्दवासनानिबन्धनं स्यात्, तच्च पुरस्तात् प्रत्युक्तम् । (तत् पारिशेष्यात् कर्तुरीप्सितोपायतैव प्रवृत्तिहेतुः कर्तव्यताज्ञानस्यालम्बनम्) ॥ ३० ॥

अपि च '**कर्तुरिष्टाभ्युपाये हि कर्तव्यमिति लोकधीः । विपरीते त्वकर्तव्यमिति तद्विषये ततः ॥**' ३१ ॥ यः खलु प्रत्ययो यमर्थमन्वेति स तस्य विषयः शुक्ल इव शुक्लप्रत्ययस्य । अपेक्षितोपायतां तद्विपरीततां चानुयातौ कर्तव्यमकर्तव्यमिति प्रमितिप्रत्ययौ लौकिकानाम् । तेन तयोर्गोचरौ इति गम्यते (अन्वयव्यतिरेकाभ्याम्) । तस्मात् कर्तव्यताऽपि नान्या कर्तुः समीहितोपायतायाः । यथोक्तं 'कर्तव्यस्य सुखं फलम्' इति ॥ ३१ ॥

(चोदयति– ) कथं तर्हि नित्येषु नित्यता, कर्तव्यता वा, यथाशक्ति चाङ्गोपसंहारः (कथम्) । तथाहि– यदि तावत् पुत्रादि ईप्सितम्, तत्रोपेयनित्यता विहन्येत, तदिच्छाया अनित्यत्वात् । तत्र (अनित्यत्वे सति) 'यावज्जीवं' इत्यनर्थकम् । नापि अधिकारिविशेषणतया अर्थवत्, अर्थसिद्धेः (व्यवच्छेद्याभावात् अनर्थकत्वमित्यर्थः) । अथ मतं सर्वेषां सर्वदा सर्वमीहितं फलं भविष्यति उपात्तदुरितनिबर्हणम् । (निराचष्टे– ) भवेदेवं नित्यता फलवशेन, न शब्दात् । तथाहि, फलस्य नित्यसमीहितत्वात् तद्वशेनावश्यकर्तव्यता वास्तवी । शब्दस्तु नित्यसमीहितोपायप्रतीतिमात्रोपलक्षणः । तत्रासति शब्दव्यापारे ततो निर्हृत्यर्थकृच्छ्रादिवत् सर्वाङ्गोपसंहाराप्रसङ्गः, अन्यथा फलाभावात् । शाब्दे हि नित्यत्वे परिपूर्णाङ्गं सर्वदा च इत्यसंभवात् 'यथा शक्नुयात्' इत्युपपद्यते । इतरथा (वास्तवे नित्यत्वे) अङ्गाम्नानस्याविकल्प्यत्वात् 'यो यदा' इति विश्वजिदादिवत् स्यात् । नहि सर्वेषां समीहितोपाये विश्वजिति पङ्ग्वादयः अधिकारिणः । नानुषङ्गिकमीप्सितम्, प्रमाणाभावात् । अर्थापत्तेः अक्रियायां प्रत्यवायेनापि क्षयात् । स्मृतिवाक्यशेषाभ्यां च तत्कल्पनाया एव (अकरणे प्रत्यवायकल्पनाया एव) युक्तत्वात् । स्मृतितश्च पुनः तदर्थावगमात् । प्रतिषिद्धस्य च नियोगतः अकर्तव्यस्य क्रियायामिव, नियोगतः कर्तव्यस्याक्रियायां प्रत्यवायो युक्तः । तथा नियोगोपपत्तेः (अकरणे) प्रत्यवायभयात् । ईप्सितोपायेषु इच्छया प्रवृत्तेः । तथा च यादृशी प्रवृत्तिः, न तादृशी अभ्युदयाय । (परपक्षे विरोधमादर्शयति– ) नित्येप्सितोपायनित्यत्वफलवत्त्वयथाशक्त्यनुष्ठेयत्वानां चासंगतेः अकरणे प्रत्यवायकल्पना (ज्यायसी) । तस्मात् नित्येप्सितोपायानि न नित्यानि (कर्माणि) । प्रवृत्तिस्तु तेषु अकरणे प्रत्यवायकल्पनात्, दुःखात्मकत्वाच्च कर्मणः आनुषङ्गिकात् कार्यविरोधिनः पाप्मनः क्षयात् (प्रवृत्तिः) इति । भावनायाश्च साध्यत्वात् । (परिहारान्तरं) अग्निहोत्रमितिवत् निर्देशार्थत्वात् विपरिणम्यापि संभवात् तृतीयानिर्देशाविरोधः (अग्निहोत्रेणेति) ।

( ' अथ मतं ' इत्यादिना प्राप्तं पक्षं निराकरोति– ) वार्तमेतत् । तथाहि, ' **नित्यं नित्येहितोपाये यावज्जीवमिति श्रुतेः । अङ्गान्यतो यथाशक्ति न वा सर्वाणि चान्यथा ॥** ' ३२ ॥ न तावत् इष्टसाधनत्वेऽपि नित्यत्वविहतिः, नित्येष्टस्यैव साध्यत्वकल्पनात् दुरितनिर्हरणस्य । सुखे तद्धेतौ वा कदाचित् माध्यस्थ्यमेवेति ( आलस्यादिभ्यः ), दुःखतद्धेतुभ्यां तु सर्वदोद्विजमानस्य तन्निवृत्तौ सर्वदा कामः, हितमपि च प्रेप्सतस्तस्य प्रतिबन्धक्षये समीहाऽस्त्येव, तस्मात् इष्टनिबन्धनः पाप्मनः क्षयः सदा समीहितः । नित्यानां कर्मणां फलनित्यत्वादेव ' यावज्जीवं ' इति शब्दावगतात् इति न नित्यत्वविरोधः, अनित्ये साध्ये सा विहन्येत । यथाशक्त्युपसंहारश्च नित्यत्वादेव अहीनाङ्गस्य नित्यं क्रियासंभवात् । न चेदं वास्तवं नित्यत्वम्, नहि फलवादिनो यावज्जीवशब्दं नामनन्ति फलविशेषशब्दं वाऽधीयते, किंतु यावज्जीवश्रुतेरवगतनित्यत्वाः तत एवार्थापत्त्या फलभेदप्रयोगभेदौ कदाचिदुन्नयन्ति । ( अर्थापत्तिं दर्शयति– ) अनित्ये साध्ये परिपूर्णाङ्गे च प्रयोगे यावज्जीवशब्दाधिगतनित्यकर्तव्यताऽनुपपत्तिः । नहि कदाचिदीप्सितोपायात्मिकायां कर्तव्यतायां परिपूर्णाङ्गसाधनात्मिकायां च यावज्जीवशब्दोऽन्वेति, नित्यत्वाच्च कल्पितः फलभेदो न तदेव बाधते । ( यदि शब्दावगम्यमेव नित्यत्वं– ) कथं तर्हि नित्येप्सितोपायत्वात् नित्यत्वमुक्तम् ? ( उत्तरं– ) शब्दावगतस्यैव तस्याविघातः शब्दसामर्थ्यलभ्येनैव तेन ( नित्यसमीहितोपायत्वेन ) उक्तो यथाशक्तिप्रयोगेण तन्त्रेण च ।

( प्रसङ्गात् किंचिदाह– ) तत एव ( यावज्जीवश्रुतिविशिष्टलिङ्ग नित्येप्सितस्य फलस्य कल्पितत्वादेव ) अनयोः ( नित्यकाम्ययोः ) मानान्तरं मृग्यम् । कथं चेदं नित्यत्वं कर्मणो यदि नित्यसमीहितसाधनत्वं इति नित्यानुष्ठानात् एतदकरणे प्रत्यवायात् ( इतरस्याप्यनुष्ठानमिति तुल्यम् । शब्दपूर्वकत्वेन तत्कल्पनायां अङ्गीक्रियमाणायां– ) नाशब्दनित्यत्वमुभयोः ( परस्यात्मनश्च ) । ( पर आह– ) नाकरणे प्रत्यवायात् ( अस्मन्मते ) नित्यक्रिया, ( किंतु ) शब्दादेव । ( परिहरति– ) नैतत्, शब्दादेव चेदवश्यकर्तव्यता किमर्थमकरणे प्रत्यवायकल्पना, शब्दादेव प्रवृत्तिसिद्धेः । न च शब्दः कारकत्वेन प्रवृत्तिहेतुरित्युक्तम् । ज्ञापकत्वे चाकरणे प्रत्यवायज्ञापनात् नित्यमनुष्ठापयति इति वास्तवमेव ( नित्यत्वं ) स्यात् । तस्मात् अव्यवस्थितविधितत्त्वानां ईदृशा नानाविधाः समुल्लासाः ।

( प्रासङ्गिकात्पूर्वमनुवर्तयति– ) कृच्छ्रविश्वजितोस्तु सदा सर्वस्य समीहितसाधनयोरपि सर्वस्य ' सर्वदा ' इतिशब्दस्याभावात् सर्वाङ्गप्रयोगः । ननु फलवत्त्वे शक्त्यनुसार एव न संभवति, वैगुण्यात्, फलाभावप्रसङ्गात् । ( परिहरति– ) किमिदं वैगुण्यम् । ( परः– ) चोदनार्थत्वहानिः, ( सिद्धान्ती– ) न तर्हि वैगुण्यम्, यावज्जीविके यथाशक्त्यङ्गोपेतेऽपि चोदनार्थत्वात् । अचोदनार्थत्वे वा शक्तेरफलत्वेऽपि सर्वाङ्गोपसंहारः, अन्यथा चोदनार्थनिर्वृत्त्यभावाच्चेति । ( शङ्कते– ) तदा क्रियाव्यतिरिक्तसाध्याभावान्नाङ्गापेक्षा । ( दूषयति– ) अनङ्गत्वमेव प्राप्तं कर्मणो विज्ञातोपायत्वात् । ( शङ्कते– ) क्रियाऽपि विधिरूपेण ज्ञातस्वभावा चोदनार्थनिर्वृत्तये अपेक्षतेऽङ्गानि इति चेत् । ( निराचष्टे– ) सर्वाङ्गोपसंहारप्रसङ्गः । ( शङ्कते– ) अथ ' आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी ' इति यावज्जीवश्रुतेः शक्तिश्चोदनायाः । ( निराचष्टे– ) फलवादिनो न सा दण्डवारिता । किंच इदं रूपं चोदनायाः ( देवतोद्देशेन द्रव्यत्यागात्मकम् । ननु भवतु कर्मस्वरूपं मानान्तरवेद्यम्, यत् पुनरेतस्य अष्टसु कपालेषु संस्कृतपुरोडाशद्रव्यत्वं अग्निदेवतत्वं च तत् ' आग्नेयोऽष्टाकपालः ' इत्येतस्मादुत्पत्तिवाक्यादन्यतः अशक्यावगममिति । न चोत्पत्तिवाक्यावगतविविधविशेषणे कर्मणि न्यूनातिरेककरणाय प्रमाणान्तरं प्रभवति, तत्करणे तत्स्वरूपग्रहणप्रसङ्गात् अन्यतस्तदविज्ञानात् इत्याशयवानाशङ्कते– ) यदि दर्शपूर्णमाससंज्ञकम् । ( निराकरोति– ) तदुत्पत्तिवाक्यावगतं इत्यनौत्पत्तिकानां ( अङ्गानां ) अभावः ( अभावप्रसङ्गः ) । अथान्यत्र तच्छ्रेयःसाधनत्वात् । यथोक्तं ' श्रेयः साधनता ह्येषां नित्यं वेदात् प्रतीयते ' इति [ श्लोवा. चोदनासूत्रे पृ. ८०. ] ' तस्यायमभ्युपायः इति हि



तेषामुपदेशः ' इति च [ भाष्यं चोदनासूत्रे पृ. १९ ] । नाप्यकरणे प्रत्यवायहेतुता, असतो हेतुत्वानुपपत्तेः । तुल्ये च साध्यत्वे नानुपपत्तिः प्रयाजादीनाम् ( प्रयाजादीनामङ्गत्वानुपपत्तिः ) । नहि स्वरूपे कार्ये वाऽनुपयोगि अङ्गम् । प्रयुक्तेरपि एवंविधस्याभावात् ( दर्शपूर्णमासाभ्यां साध्यत्वेन तुल्यस्यापि प्रकरणादिनियुक्तस्य न प्रयुक्तिरुपादानं संभवति विनियोगानुसारादुपादानस्य ) । न च दुःखत्वात् कर्मणः आनुषङ्गिकात् पापक्षयात् प्रवृत्तिः । अशास्त्रीयत्वे ( अपि ) तप्तशिलारोहणादिवत् । पापकृतत्वे च पुरुषकारवैयर्थ्यात् ( नित्यानां कर्मणां प्राग्भवीयपापपरिपाकादेवोत्पादात् पुरुषकारवैयर्थ्यात् ) । अतत्कृतत्वे वा ( नित्यकर्मणां ) नाशाभावात् । शास्त्रीयेण तूपायेन विपाचने ( निवृत्तौ ) न दोषः ।

( चोदयति– ) " यदि तर्हि फलवत्यपि न सर्वाङ्गोपसंहारः, काम्येऽपि तथा स्यात् । यावज्जीवश्रुतेः इतरत्र ( नित्ये ) एवं ( सर्वाङ्गोपसंहारः ) इति चेत्, इहापि ( काम्ये अपि ) स्वर्गकामश्रुतेरस्तु । यथैव यावज्जीवमशक्यं अहीनाङ्गं तथा सर्वेण स्वर्गकामेन । तत्र ( नित्ये ) यथा यदा यावन्ति शक्नोति, तदा तावतामुपसंहारः, तथा ( काम्येऽपि ) यो यावन्ति शक्नोति स तावन्ति उपसंहरिष्यति । अङ्गविधिविरोधाद्धि स्वर्गकामश्रुतिः अर्थिमात्रविषया [ न ? ] विशेषमनुरुध्यते । शक्त्यपेक्षायां तु अङ्गविध्यविरोधे नित्यवत् न विशेषानुरोधहेतुः । अथ मतम्, अनुपरोधे स्वर्गकामश्रुतेः अङ्गविधय एवोपरुध्येरन् अविशेषप्रवृत्ता यथाशक्तिव्यवस्थायाम् । ( तर्हि ) नित्येऽपि तुल्यम् । यावज्जीवश्रुतेः अनन्यगतित्वात् तत्रैवम । कामश्रुतिस्तु सर्वाङ्गोपसंहारसमर्थेऽपि उपपन्नैव, तत्राविरोधात् कांस्यभोजिन्यायेन ( १२।२।१४। ३७ ) तदनुरोधेनाङ्गिवृत्तिः । सत्यमविरोधः, दर्शितस्तु स्वर्गकामश्रुतेर्विषयसंकोचलक्षणो विरोधः । तत्र अङ्गप्रधानविरोधे प्रधानानुरोधः श्रेयान्, लोकवत् । यथा हि ' ब्राह्मणान् भोजय नानाविधोपकरणेनान्नेन ' इति यथाशक्त्युपकरणव्यवस्थानोपकरणानुरोधेन ब्राह्मणनियमः । एवं चाङ्गविधीनामपि नात्यन्तसापेक्षत्वम् । ततः काम्येष्वपि ' यथा शक्नुयात् ' इत्येव अस्तु, न ' यो यदा शक्नुयात् ' इति अवैलक्षण्यात् " । नैतत् सारम् । एकप्रयोगविधिवैरूप्यप्रसङ्गात् अनेकप्रयोगकल्पनाप्रसङ्गात् । केवलपदार्थव्यवहाराभावात् विशेषश्रुतेरविरोधाच्च । ( एवं हि– ) स एव प्रयोगविधिः तस्यैवाङ्गस्य प्रयोगं तमेव प्रति विदधाति, न विदधाति इति स्यात् । कल्पनागौरवं च सामर्थ्यभेदेन प्रयोगभेदात् । पदस्य च पदान्तरसंबन्धे विशेषपरत्वं सर्वत्रगमिति न कदाचिदन्यायकल्पना । नित्येऽपि तर्हि एवमेवास्तु ' जीवन् यदा शक्नुयात् ' इति । ( शङ्कते– ) यावदित्यनुपपन्नमिति चेत्, ( परिहरति– ) अनियतनिमित्तेषु कथम् ? अपि च सातत्येन होमप्रसङ्गः । अथ कालविशेषोपादानानुरोधान्न तथा, हन्त अङ्गविध्यनुविधायिन्यपि यावज्जीवश्रुतिः सामर्थ्ये संबन्धमन्वेति इत्यङ्गविध्यनुरोधात् ' यदा ' इति स्यात् ( यदा शक्नुयात् इत्युपबन्धसिद्धिः ) । अथ मतं जीवन्नपि साङ्गे एव कर्मणि अधिक्रियते नाङ्गशून्यं विधानम्, अधिकृतस्य तु प्रयोगो यावदधिकारं नाङ्गानुरोधेन निवर्तते, यथासंभवं तु अधिकारायत्तत्वात् तस्य । न च काम्येऽपि प्रसङ्गः, कार्यनिष्ठत्वात् कामाधिकारस्य प्रयोगनिष्ठत्वाच्च नैमित्तिकस्य साधनापेक्षत्वात् कार्यस्य, यावदङ्गं च साधनभावावगतेः सर्वाङ्गोपसंहारेणैव कार्यसिद्धेः । ननु उभयत्राप्यधिकार एव कर्तव्यः, सत्यम्, एकत्र निमित्तपर्यन्तः अपरत्र फलपर्यन्तः । तत्र निमित्तपर्यन्ते निमित्तवतोऽधिकृतस्य अप्रयुञ्जानस्याधिकारातिक्रान्तिः इति यथासंभवं प्रयोगः । फलपर्यन्ते तु अङ्गवैकल्ये फलानुपपत्तेः फलकामिता अधिकारहेतुर्निवर्तते इत्यधिकाराभावात् नाधिकारातिक्रान्तिदोषः इति न ( ? ) यथाकथंचित् प्रयोगः, एवं न सातत्येन प्रयोगः, नार्थावरुद्धेषु ( कालेषु ), यथाशक्ति चोपसंहारो नित्येषु, न काम्येषु इति सर्वं चतुरस्रम् ।

( तदेतदेकदेशिमतं विकल्प्य दूषयति– ) नेदं चतुरस्रम् । इदमङ्ग भवान् व्याचष्टां किं शक्त्यपेक्षोऽधिकारो यथाऽधिकारं च प्रयोगः, आहोस्वित् श्रुत्यपेक्षोऽधिकारः अधिकृतस्य तु यथाशक्ति प्रयोगः ? पूर्वस्मिन् कल्पे यथैव कालविशेषयुक्ते कर्मणि ( दर्शपूर्णमासादौ ) तत्कालजीविनोऽधिकृतात् अन्यस्य

( अतत्कालजीविनः ) तद्विशिष्टकर्मोपसंहारासामर्थ्यात्, अन्यथा अन्यदाऽपि ( पञ्चम्यादौ ) अकुर्वतः अधिकारातिक्रान्तिः । पश्चिमे तु ( कल्पे ) नाङ्गशक्तिः अधिकारं विशिनष्टि इति सातत्यप्रसङ्गः । ( एकदेशी– ) न ब्रूमः अङ्गशक्तिरधिकारं विशिनष्टीति, किंतु अङ्गशक्त्यपेक्ष एवाधिकार इति, तादृशस्यैव तु कस्यचिदङ्गस्यासंभवे न प्रयोगो निवर्तते इति, वैगुण्याच्चापि फले अधिकारहेतुरेव नास्तीत्युक्तम् । ( एकदेशिनं दूषयति– ) कोऽयमसंभवः ? ( यदि– ) तदुपसंहारासामर्थ्यम्, न तर्हि अधिकृतः तद्विशेषणत्वात्तस्य । अथ अनुपसंहारः, अनङ्गत्वमेव । ( एकदेशी– ) कादाचित्कमसामर्थ्यं असंभवः, न तेनाधिकारात् पर्युदासः, द्रव्याप्रतिसमाधेयाङ्गवैकल्यवत् । (एकदेशिनं दूषयति– ) सत्यम्, न शूद्रवत् एकान्ततः, न त्वधिकारहेतुविगमे अधिकारो न निवर्तते वीतायामिव फलेच्छायां कामिनः । अन्यथा अधिकृतस्य समर्थस्य स्वर्गकामस्य कादाचित्काङ्गशक्तिवैकल्ये फलानुत्पत्तावपि अधिकारातिक्रान्तिः स्यात् अप्राप्तकालं चाकुर्वतः । अथाधिकृतोऽपि जातपुत्रवत् कालशौचे ( कालं दशाहोत्तरामावास्यादिरूपं शौचं च ) उपसंहृत्य कुर्वन् ( जातेष्टिं, ) नाधिकारमतिक्रामति निमित्तानन्तर्यस्याशब्दार्थत्वात् । ( उत्तरं– ) कालसंपत्तावपि अन्याङ्गसंपत्तिमपेक्ष्य कुर्वन् तथा स्यात् (नाधिकारमतिक्रमेत् ) । अथ अङ्गभूतकालावच्छिन्नमेव जीवनं अधिकारहेतुः ( तर्हि– ) अन्याङ्गेष्वपि तुल्यम् । अपि च परिपूर्णाङ्गोऽधिकृतः किमङ्गविकलं प्रयुङ्क्ते । असंभवात् ( विकलं प्रयुङ्क्ते ) इति चेत्, न, कल्पनात्रयपरिप्लुतेः ( परिप्लुतिरुपपत्तिः ) । तथाहि, क्रमपर्यन्तापेक्षित्वाद्वा नियोगस्याधिकारानिवृत्तेरप्रयोगः ( विनियोगोपादानावगतशेषभावं पदार्थावगमे शब्दाभिहितं च तत्क्रममनङ्गमपि अपेक्षमाणः स्वोत्पत्तौ नियोगः यावज्जीविको नाङ्गहानौ उत्पत्तुमर्हति इति । सर्वथा प्रयोगाभावः असंभवशब्दार्थः ), अधिकारवशाद्वा यथासंभवं ( यद्यपि अयं परिपूर्णाङ्गोऽपि अधिकृतः तथापि तदधिकारप्रतीतिसामर्थ्यात् तत्प्रवृत्तौ हीनाङ्गमपि समापयति, क्वचिदङ्गकरणे सामर्थ्याभावे संपूर्णाङ्गप्रयोगकरणादिति, सोऽयं असंभवः ), अधिकाङ्गोपदेशानुरोधात् वा यदा तादृशस्य संभवः ( अधिकं तत्कालशक्याङ्गापेक्षया यदशक्यमङ्गं तदुच्यते । यदा साङ्गं उपसंहर्तुं शक्यते तदा तस्य संभवः ) तत्र उभयानुग्रहात् आनन्तर्यस्य अशब्दार्थत्वात् जातेष्टिवत् ‘ यदा ’ इति युक्तम् ( अधिकारप्रतीतेः अधिकाङ्गोपदेशस्य चानुग्रहात् यदेति युक्तम् ) । अङ्गशक्त्या वा कालवत् अधिकारावच्छेदात् अप्रयोगः । न चैक एव विधिः तेषामेव प्रयोजकश्चाप्रयोजकश्च । अपि च किमर्थं विकलाङ्गे प्रवर्तते ? ( एकदेशी आह– ) अधिकारनिर्वृत्तये इति ब्रूमः । ( दूषयति– ) किमधिकारनिर्वृत्तिर्नाङ्गापेक्षा फलनिर्वृत्तिरिव । यद्येवम्, अनङ्गत्वमेव । सापेक्षा चेत् यथाऽऽम्नाताङ्गसाध्यैव इति वैकल्ये वृथा चेष्टा स्यात् । अथ यथाशक्त्यङ्गसाध्येति ( निराकरोति– ) न कार्यनिष्ठता विशेषायालम् । ( एवं पुरुषप्रवृत्तिं पर्यनुयुज्य अधिकारोत्पत्तिं पर्यनुयुनक्ति–) अपि चाधिकारात् फलनिर्वृत्तिः, तत्र यथाशक्त्यङ्गोपेते अधिकृतस्य तादृशादेव ( यथाशक्त्यङ्गोपेतादेव ) अधिकारनिर्वृत्तिमुखेन ( तत्फलं संपद्यते ) तन्निमित्तमिव । अथ न तादृशे ( अङ्गहीने काम्येऽधिकारः । तर्हि काम्यनैमित्तिकेऽपि विकलाङ्गे ) अधिकारनिर्वृत्तिरपि न स्यात् परिपूर्णाङ्गे अधिकृतस्य विकलाङ्गप्रयोगे कर्मान्तरप्रयोगे इव । अङ्गप्रधानभेदोऽपि अत्रानुपकारकः, अधिकारविधिविषयत्वेनाभेदात्, भेदे चाऽनङ्गत्वप्रसङ्गः । ( एकदेशिमते च– ) अङ्गप्रधानभावस्य चासंप्रधार्यत्वात् । सत्यपि ( अङ्गप्रधानभावे नैमित्तिकस्यानङ्गत्वे अस्य प्रयोगे ) चोदनार्थानिर्वृत्तेर्वृथा चेष्टाप्रसङ्ग इत्युक्तम् । कश्चायमधिकारो यस्य निर्वृत्तिः ( एकदेशिना उच्यते ) ? नियोगश्चेत्, न निर्वृत्तिर्विचारिता । नियोज्यता चेत्, साऽपि नियोगादेव निर्वृत्ता । स्वामिता चेत्, न तत्कृतं किंचिद्भुञ्जानः स्वामी इत्युभावपि अधिकारौ कार्यनिष्ठौ स्याताम् । तस्मान्न कार्यनिष्ठत्वप्रयोगनिष्ठत्वाभ्यां काम्यनैमित्तिकाधिकारयोर्भेदः शक्यः समाधातुम् । इत्यन्यथा समाधेयः ॥ ३२ ॥

तदुच्यते ‘ **जीवनादेर्निमित्तस्य साम्यात् कालो विशेषकः । निमित्तार्थस्तत्र जाते कर्मणोऽवश्यकार्यता ॥** ’ **३३ ॥**



यस्तावत् यथोक्ताय प्रयोगाय एकान्ततोऽसमर्थः ( शूद्रपङ्ग्वादिः ) स दूरपर्युदस्त एवाधिकारात् । न त्वसौ तादृशे नियोज्यतया प्रत्येतुं पार्यते । तेन शक्त्यङ्गोपदेशौ अपेक्ष्य समर्थस्य तावदधिकारप्रतीतिः । सा चेयमधिकारप्रतीतिः ( नैमित्तिके ) नेति पर्यवसिता अनित्यत्वात् सामर्थ्यस्य ( अनैमित्तिकस्य चावश्यकार्यत्वात् ) । अन्यथा अधिकृतस्य सर्वाङ्गोपसंहाराभावे ( सति ) नानुष्ठानं यथासंभवमन्यथा, अन्यादृशेऽधिकारात् तादृशप्रयोगस्य ( न्यूनाङ्गस्य) अशास्त्रीयत्वात् नानुष्ठानमनधिकारात् । अतः पुनरपि शक्त्यपेक्षा अधिकारप्रतिपत्तिपर्यवसानाय । शक्तिर्हि प्रमाणैकदेश इत्युक्तम् ( शक्तिश्रुतिः चोदनैकदेश इत्युक्तमाचार्यैः । यदि तु न चोदनैकदेशः स्यात्– ) न प्रयोगनिश्चयाय ( कल्प्येत ) अनन्यप्रमाणकत्वात्तस्य । ( पूर्वपक्षी– ) सा कालतः अङ्गतो वा आश्रीयेत, तत्र अङ्गतः संश्रये शब्दावगतानामङ्गान्तराणां हानाच्छब्दविरोधः । कालतस्तु कालान्तराणामशब्दार्थत्वात् न कश्चिद्विरोधः ( इति काम्ये नैमित्तिके च यदेत्येव युक्तम् । सिद्धान्ती– ) स चायमविरोधो निर्निमित्तेऽधिकारे इदम्, अनेन, ईदृशेन (भाव्यं, करणेन, इतिकर्तव्यताविशेषेण) इत्येतावन्मात्रस्य शब्दार्थत्वात् । सनिमित्ते तु निमित्तश्रुतिविरोधः, संप्राप्ते च तस्मिन् कार्यस्य तन्निमित्तत्वव्याघातात् । ( शङ्कते– ) इतरत्रापि स्वर्गकामश्रुतिविरोधः । ( समर्थमसमर्थं चार्थिमात्रं प्रति असंकुचितवृत्तरर्थिश्रुतिः समर्थं प्रति नियम्यमाना पीड्येत ) इति चेत् । ( समाधत्ते–) उक्तम् ( केवलपदार्थव्यवहाराभावाद्विशेषश्रुतेः इति पृ. ३२२ ) । न च पुरुषविशेषनिर्देशोऽत्र विवक्षितः साध्यत्वात् । न च सातत्येन प्रयोगः (प्राप्नोति), निमित्ते कालविशेषवतः कर्तव्यताऽवगमात् । कालविशेषेण तस्यार्थाद्विशेषणात् तस्यापि निमित्तानुप्रवेशित्वात् । तदुक्तं ( आचार्येण ) ‘ न कालो गुणो, निमित्तं ह्येतत् ’ इति । न गुण एवेत्यर्थः, न त्वङ्गान्तराण्येवं ( निमित्तेन– ) असाम्यात् वचनव्यक्तिभेदात्, उपादेयानि हि ( कालात्– ) अङ्गान्तराणि, अनुपादेयं निमित्तम् । ‘ एभिः एतानि वा कुर्यात् ’ इत्यङ्गेषु वचनव्यक्तिः, ‘ अस्मिन् सति ’ इति निमित्ते । ततः अङ्गान्तराणि नालं निमित्तमनुप्रवेष्टुम् । कालस्त्वनुपादेयः (निमित्तेन) समानवचनव्यक्तिः अङ्गमपि सन् निमित्तमनुप्रविशतीति युक्तम् । (शङ्कते–) अथ निमित्तोपसंहार एव किं नेष्यते ? ( कश्चित् परिहरति– ) काम्येऽपि तत्कालेच्छया । ( शङ्काकारः– ) ननु प्रयोजनमेतत् । ( सिद्धान्ती– ) सत्यम् । हेतुस्तु यावज्जीवश्रुतेरनतिरिक्तार्थत्वम् । प्रकरणिनोऽपि अङ्गार्थत्वं च ( तस्मात् कालविधिवाक्यं प्रकरणसहायं कालस्याङ्गतायां प्रमाणम्, न निमित्ततायाम् ) । तदेवं अविरोधात् अनिमित्ते कालतः शक्त्याश्रयो ‘ यदा ’ इति, निमित्तवति तु निमित्तविरोधात् कालवतः एवाङ्गतो यथेति ।

( एवं कारिकापूर्वार्धं व्याख्याय पश्चार्धं व्याख्यातुं आक्षिपति– ) किं पुनरिदं ( निमित्तं ) यद्विरुणद्धि ? कालतः शक्त्याश्रयं ( इति स्वरूपाक्षेपः ), कस्य चेति ( इति संबन्ध्यन्तराक्षेपः ), कुतो गम्यते निमित्तनैमित्तिकभावः ( इति प्रमाणाक्षेपः ), कथं चास्य नैमित्तिकसंबन्धः । ( स्वरूपाक्षेपं विभजते– ) यदि तावत् ‘ यस्मिन् सति ’ को विरोधः ( कालतः शक्त्याश्रयेण ) नहि कालतोऽपि शक्त्याश्रये तस्मिन्नसति तत्क्रिया ( किंतु– ) सत्येव, अथ तस्मिन् सति क्रियते एव । (दूषयति–) स्याद्विरोधः न त्वीदृशो निमित्तार्थः (निमित्तशब्दार्थः ) । हेतुर्हि निमित्तम्, न चावश्यं हेतवः कार्यवन्तः । कार्यं तु नासति हेतौ । तस्मान्न विरोधः । ( कस्येत्याक्षेपं विभजते– ) यदि कर्मणो निमित्तम्, तत एव कर्मप्रवृत्तेर्विधिवैयर्थ्यम्, अनिरूपितादपि निमित्तात् निमित्तवद्दर्शनात् पुरुषकाराभावात् । (अथ विधेर्निमित्तं) न तस्य निमित्तादुत्पत्तिर्नित्यत्वात् । तस्य तस्मिन् सति न बोधो वाक्यादेव तत्सिद्धेः । ( अथ फलस्य निमित्तं तर्हि ) कर्मवैयर्थ्यं सति ( निमित्ते फलं ) भवत्येवेति । सत्येव तस्मिन् ( निमित्ते ) कर्मणः फलमिति चेत्, विरोधाभावः सर्वाङ्गोपसंहारेण । अथाधिकारस्य ( निमित्तं इति चेत् ) न, ( निमित्तात् किंतु ) नियोगादधिकारः । (शङ्कते–) स एव नियोगसंबन्धस्तन्निमित्तः । (दूषयति–) यदि तर्हि तन्निमित्तको नियोगः, न नियोगान्निमि-

त्तावगतिः । ( मा भूत् को दोषः ? इत्यत आह ) प्राक्सिद्धनिमित्तापेक्षः स शब्देनोच्यते इति सापेक्षत्वम् । अथ नियोज्यविशेषणस्य अर्थात् निमित्तभावः तस्मिन् सत्यधिकारात् (अर्थान्निमित्तत्वं स्वर्गकामनाया अपि संभवति । न च सर्वाङ्गोपसंहारेण विरोधः तथा यावज्जीवमित्यत्रापि स्यादित्यर्थः । कुतो वेति विभजते-) न चात्र ( निमित्तभावे जीवनादेः ) प्रत्यक्षादि क्रमते, नापि शब्दः, विधिप्रधानत्वात्, तस्य च ( विधेः ) भावविषयत्वात्, तस्य चांशत्रयातिरेकात् । ( कथं चास्येति विभजते- ) तत्र ( निमित्ते ) विधीयमानस्य कर्मणः फले विधानात्, तत्र ( फले ) विधौ निमित्ते ( विधानात् ) उभयविधौ ( फले निमित्ते च कर्मविधौ ) वाक्यभेदः इति । ( इतिः आक्षेपपरिसमाप्तौ )।

( आक्षेपोत्तरतया कारिकोत्तरार्धं अवतारयति- ) उच्यते । यत्र जाते कर्मणः अवश्यकर्तव्यता तन्निमित्तम् । कथम् ? यस्मिन् सति भवत्येव स हेतुर्मुख्यः इतरस्तु भक्त्या (लक्षणया ) तदवस्थाभेदसंबन्धात् (बीजादय एव हि परस्परसमवधानसमासादितावस्थाविशेषाः नियमेन कार्यशालिनः ) गौणमुख्ययोश्च मुख्ये संप्रत्ययः इति आवश्यकसिद्धिः (कर्तव्यतायाः) तन्निमित्तसामर्थ्यादेव । निमित्तमेव हि तन्न स्यात् यस्मिन् सति न क्रियेत । अवश्यकर्तव्यता च कर्मणः प्रतीता नोपसंहार्यनिखिलाङ्गस्य कल्पते, न कदाचिदीहितोपायस्य इत्यतो यथाशक्त्यङ्गसमवेतं सदा समभिलषितोपायं कर्म ( नैमित्तिकं ) इति गम्यते । ( कस्य निमित्तं इति यदुक्तं तस्योत्तरमाह- ) निमित्तता च कर्तव्यताया विधिरूपायाः, तस्मिन् सति तत् कुर्वतो यथाकथंचित् सदा समीहितमनःक्षयं साधयत्येव । भावव्यतिरेकेऽपि च ( चोदना- ) शब्दप्रमेयत्वं ( निमित्तस्य ) अविधेयस्यापि विधिवत् विध्यनुप्रवेशात् विधिविशेषणत्वात् । ( कथं चास्य नैमित्तिकसंबन्ध इति यदुक्तं तत्रोत्तरमाह- ) अत एव च अस्य कर्मणा सह संबन्धे विकल्पोऽनवकाश इति चतुरस्रम् ।

( यदुक्तं प्रथमत एव ' जीवनादिः निमित्ततया संबध्यते इति तत् प्रत्याख्यातव्यम् । शङ्कते एकदेशी-) ननु नियोज्यविशेषणं जीवनादि स्वर्गादिवन्मन्यन्ते, नियोगेन नियोज्यस्य प्रथममपेक्षितत्वात् । नहि अनाश्रितनियोज्यविशेषो नियोगो लोक दृश्यते, तदभावे ( नियोज्यविशेषस्य प्रतिपत्तुरभावे ) प्रतिपत्तिरेव न स्यात् । तद्विशेषणमेव तु स तस्मिन् सति अधिकारान्निमित्तत्वेनावतिष्ठते, स्वर्गादि तु साध्यतया काम्यत्वेन । ( एकदेशिमतं सिद्धान्ती दूषयति- ) नैतत् सारम् । विशेषणानुपपत्तेः । नहि यावज्जीवनं तावता विशिष्टः कश्चित् कदाचिद्वा यो नियुज्यते, नानावसन्तकालविशिष्टो वा । न जीवनमात्रं वसन्तमात्रं वा विशेषणम्, अवाच्यत्वाज्जीवनस्य, यावद्वीप्सयोरनन्वयाच्च । न च प्राप्तयोरनुवादः, जीवतोऽपि स्वर्गकामस्यैवाधिकारे 'यदा शक्नुयात्' इत्युपबन्धात् विरोधाभावात् । क्रमपर्यन्तापेक्षित्वान्नियोगस्य नाङ्गहानम् । तस्मात् यावद्वीप्सार्थानन्वयात् यथा न कर्तृविशेषणं जीवनमवाच्यत्वात्, ' वसन्तेवसन्ते ' इति च न कालार्थः संयोगः तथा नाधिकारविशेषणं अपि । ( स्वमतमुपसंहरति- ) अतो निमित्तमेव तन्निमित्तम् ( नाधिकारिविशेषणं प्रथमम् ) । तथाहि, तयोः ( यावद्वीप्सयोः ) अनन्वयः । निमित्तमेव हि तन्न स्यात् यदि तस्मिन् सति न क्रियेत । निमित्तवांश्च नियोगो यस्य तस्येत्यधिकारिविशेषसिद्धेर्नाप्रतिपत्तिः ( यस्य पुंसस्तन्निमित्तमस्ति तस्य कर्मकर्तव्यता इत्यधिकारिविशेषणसिद्धेः ), तेन निमित्तं सदधिकारिविशेषणम्, नाधिकारिविशेषणं सत् निमित्तम् । शाब्दत्वाच्च निमित्तभावस्य, लिङादयो हि 'दहेत्' 'भिन्ने' ' आरभमाणः ' इति तत्रतत्र स्मृतेस्तदभिदधति ( दहेत् इति लिङ्, भिन्ने इति निमित्तसप्तमी, आरभमाणः इति हेतौ लट् ) । तत्र शब्दार्थे ( शब्दार्थनिमित्तभावं ) परित्यज्य अन्यपरः ( अधिकारिविशेषपरः ) शब्दसामर्थ्यात् तत्परः ( निमित्तपरः ), इतरः ( अधिकारिविशेषः ) अर्थात् इति ( विमर्शे ) शब्दवृत्त्यनुसारो न्याय्यः ( नाभिधेयपरत्वे संभवति अन्यपरता न्याय्या । अभिधेयता च निमित्तस्य वर्णिता )। [ अयं मूलपाठः ' क्वचित्पाठः ' इति कणिका । कणिकामतेन सार्वत्रिकः मूलपाठः " तत्र शब्दार्थे ( शब्दार्थनिमित्तभावं )



परित्यज्य अन्यपरः ( शब्दार्थभूताधिकारिविशेषणपरः ) शब्दः ( निमित्तशब्दः ) स च शब्दार्थभूतः ( निमित्तभावः, अर्थात् ) न पुनस्तत्परः ( शब्दार्थभूतनिमित्तभावपरः ) इतरस्तु ( अधिकारिविशेषणपरस्तु ) अर्थात्, इति ( अनेन प्रकारेण ) अन्याय्यः ( अन्याय्यतया अनर्ह इत्यर्थः) " इति । ] यथा च निमित्तं सत् अधिकारिविशेषणम्, एवं फलं सत् अधिकारिविशेषणम्, नाधिकारिविशेषणं सत् फलं इत्युक्तं भावनाविवेके । यद्यपि सः (अधिकारी नियोज्यः ) पूर्वं अपेक्षितः, प्रतिपत्तिस्तु अस्य ( साङ्गप्रधानप्रतीतेः- ) पश्चादेव, अनुष्ठानापेक्षत्वात् । तथा च क्रमपर्यन्तात् ( प्रधानाङ्गग्रामगोचरविचारात् ) परा निरूपणा ( विचारणा ) इति ॥ ३३ ॥

( चोदयति- ) ननु एवं विधिमति सर्वत्र इष्टानुबन्धादुत्पत्तिचोदनाऽभावः । तथा च परस्परानपेक्षत्वात् संनिधावपि न फलार्थेन पुनःश्रुतिः इति सर्वत्र कर्मभेदः स्यात्, क्रत्वर्थश्च न स्यात् ( प्रयाजादिः ) । ' दध्ना जुहोति ' इति च न गुणफलसंबन्धः स्यात् । न चान्यत् मुख्यात् इष्टम्, तच्च स्वर्गः इति स्वर्गाविरोधात् पश्वाद्यवकाशो दुर्लभः, उपादानाद्वा तेऽपि स्युः, नित्यस्तु स्वर्गः स्यात् । तस्मात् किमिति अवशिष्टं भावनायाः । ( किमिति भावना भाव्यमुपलक्षयति । ननु भवत्पक्षेऽपि भावनैव विधिवत् भाव्यमुपस्थापयति इति पश्वाद्यवकाशो दुर्लभः इति चेदाह- ) पुरुषार्थतैव विशेषणम् । तथापि च ( किमंशस्य अपि वि-[ व ? ] शिष्टत्वे ) निमित्ते कर्मैव साध्यं ( न पुरुषार्थः ) अन्यथा ( नित्यसमीहितसाधनत्वे ) निमित्तफलयोरुपादेये ( च कर्मणि ) वाक्यभेदः । ' जीवनेन होमः, होमेन फलं ' इति वैरूप्यात् । द्वयोरुद्देश्ययोः एकवाक्याऽसमवायात् ! नहि एकस्मादशुभक्षयः अक्रियायामपायश्च सुलभः । एवं चानङ्गत्वमेव ( नैमित्तिकस्य नाङ्गसंबन्धः ), प्रज्ञातत्वात् कर्मरूपस्य न यथाशक्त्युपादानं ( नैमित्तिककार्येऽस्ति ) इति ! ( परिहरति- ) उच्यते ' **उत्पत्तिविनियोगार्थप्रयोगाधिक्रियात्मकः । सर्वो विधिस्तत्परताविशेषात्र विभज्यते ॥** ' ३४ ॥ नेष्टसाधनतामात्रं विधिः, अपि तु कर्तुः (कर्तुर्यदिष्टसाधनं तत् तस्य कर्तव्यमिति) । एवंकारं च प्रवर्तनाप्रत्ययः, अन्यथा ( विधेः ) प्रवृत्तिहेतुत्वाभावात्, स्वतः ( पुरुषप्रयत्नमनपेक्ष्य ) अन्यतो वा सिद्ध अत एवानपेक्षितव्यापारे समीहितसाधनेऽपि अप्रवृत्तेः । तदुक्तं ' शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात् ' ( ३।७।८।१८ ) इति प्रयोक्तृफलसाधनतालक्षणत्वात् शास्त्रस्येति । ततश्च विधिपर्यायाच्छास्त्रादनुष्ठानं कर्मणोऽवगम्यते, अदृष्टार्थस्य च शास्त्रायत्तानुष्ठानस्य स्वरूपविशेषोऽपि ( अवगम्यते ) प्राग् विधेः अप्राप्तेः । अपेक्षिते च अपेक्षितसाधनत्वात् विनियोगः । प्रवर्त्यश्च कश्चित् अधिकारी स्वामी यस्य तदिष्टसाधनम्, सर्वत्रापि च प्रतीयमाने अस्मिंश्चतुष्टये ऐदंपर्यं भिद्यते, तेन उत्पत्त्यादिविधिवाक्यभेदः । तच्चैदंपर्यं प्राप्त्युपपदविशेषसंबन्धात् । क्वचिच्चतुष्टयपरता यथा- ' उद्भिदा यजेत ' इति अन्यतः कस्यचिदलाभात् फलपदसंबन्धाच्च । क्वचित् त्रिपरता यथा ज्योतिष्टोमवाक्ये उत्पत्तेः अन्यतो लाभात् ( ' सोमेन यजेत ' इत्यतः ) । क्वचित् द्विपरता यथा दर्शपूर्णमासवाक्ये उत्पत्तिप्रयोगयोरन्यतः सिद्धेः ( ' यदाग्नेयोऽष्टाकपालः ' इत्यतः उत्पत्तेः, प्रयोगस्य च ' पौर्णमास्यां पौर्णमास्या यजेत ' इत्यादितः सिद्धेः ) । क्वचिदेकपरता यथा ' अग्निहोत्रं जुहोति ' ' पौर्णमास्यां यजेत ' इति । न च फले विनियोगः, अनिर्दिष्टफलविशेषस्याशक्यप्रतीतित्वात् । तदनिर्देशे ( फलविशेषानिर्देशे ) अधिकारिविशेषाप्रत्ययात् नाधिकारोऽपि । अत एव न प्रयोगः, नहि अप्रतिष्ठितेष्टसाधनभावे अनुष्ठानप्रत्ययः प्रतितिष्ठति, नानिरूपितानुष्ठातृकः । तस्मात् फलवाक्यादेव प्रयोगप्रत्ययः । तेन ' अग्निहोत्रं जुहोति ' इति कर्मस्वरूपपरता विधेः, इतरे त्वंशाः प्रतीता अपि अविवक्षिताः । ' पौर्णमास्यां ' इति तु अनन्यपरत्वात् प्रयोगभेदपरता । संमार्गप्रोक्षणादौ तु ( ' दशापवित्रेण ग्रहं संमार्ष्टि ' ' व्रीहीन् प्रोक्षति ' इति ) उत्पत्तिविनियोगपरता । व्रीह्यादिमुखेन प्रकृतयजिकरणांशप्राप्तौ करणविधिना एव अनुष्ठानसिद्धेः । तदविकृतस्य ( करणाविकृतस्य ) अधिकाराप्रत्ययात् । ( अत्र एकदेशिमतमुपन्यस्यति- ) समिदादिषु उत्पत्तिपरतामेव केचित् मन्यन्ते । प्रकरणोन्नीतश्रुतिनिबन्धनत्वात् विनि-

योगस्य । श्रुतिरेव त्विह विनियोजिका प्रकरणोन्नेया ( यद्यपि श्रुतित्वेनाभेदः तथापि प्रत्यक्षश्रुतिः श्रुतिरित्यभिधीयते, प्रकरणोन्नेयायां श्रुतौ तन्मूलत्वात् प्रकरणं विनियोजकमुच्यते इति भेदः । इदमेकदेशिमतं दूषयति– ) विधिस्त्वयमेव विनियोगनिबन्धनः ( समिदादिवाक्यानां उत्पत्तिविनियोगपरत्वमित्यर्थः)। ननु श्रुत्यादयश्च (चकारः एवकारार्थः ) विनियोजकाः, किमत्र विधिना ? नैतत्, तादर्थ्यं हि विनियोगः, तच्च विधेः । श्रुत्यादयस्तु संबन्धमात्रहेतवः । संबन्धश्च आश्रयाश्रयिभावादिरनेकविधः, पारार्थ्यं तु ( शेषत्वलक्षणस्तु संबन्धः ) विधेः । ( प्रश्नः– ) कथं तर्हि श्रुत्यादयो विनियोजकाः ? ( उत्तरं– ) विधिना प्रतिपाद्यमानपारार्थ्यः ( अवघातादिः ) यस्य श्रुत्यादिभिः संबन्धितयाऽवगम्यते, तदर्थः ( व्रीह्यर्थः ) इति प्रत्ययात् । न चोभयलक्षणमपि शेषलक्षणमुक्तं विधेस्तद्विषयत्वात् ।

या च स्वरूपपरता सा भेदलक्षणे चिन्तिता तदायत्तत्वाद्भेदस्य, स्वरूपपरो हि विधिर्भिनत्ति कर्मभावनाम् । तत्परता च एकशब्दोपादानेऽपि भावनात्मनि प्रकृतिप्रत्यययोः पौर्वापर्यनियमात् प्रकृत्यर्थाक्षेपेण प्रत्ययेन अर्थस्याभिधायाः कृतानुबन्धे ( प्रत्ययार्थे ) प्रतीयमाने शब्दान्तरत्वात् शुद्धे ( भावनात्मनि ) अलभ्यमाने धात्वर्थविनियोगपरत्वानुपपत्तेः एकस्यां भावनायां नानाधात्वर्थविनियोगपरत्वानुपपत्तौ नैकस्यां भावनायां नानाधात्वर्थविनियोजकाभावात् कृत्स्नो वेद एकं वाक्यं एकं चापूर्वमिति । ( अभ्यासेन कर्मभेदमाह– ) समिदादिषु तु अनन्यपरत्वात् ( भेदः । संख्यातो भेदमाह– ) 'तिस्र आहुतीः' 'सप्तदश' इति तु स्वरूपपरत्वेऽपि संख्यातो भेदः ( भाष्यकारेण तु 'सप्तदश प्राजापत्यान् पशून्' इत्युदाहृतं इति तदप्युपन्यस्तम् )। अकारणं तर्हि तत् ( स्वरूपपरत्वम् ) , न, तस्मिन्नसति संख्यायामभ्यासेनापि संपत्तेः । ( पूर्वकर्मासंभविनो गुणादपि भेद इत्याह– ) गुणोऽपि पूर्वसंयोगात् विनियोगमात्रपरतां निवारयंस्तत्परतामेव आवहति । संज्ञाऽपि पूर्वबुद्धिविच्छेदेन सहस्रदक्षिणत्वादिगुणविनियोगमात्रविरोधेन अपूर्वबुद्धिप्रसूता च तदेवानयति । प्रकरणान्तरमपि अन्यबुद्धिविच्छेदात् तात्पर्यायैव व्याप्रियते । संनिधौ तु तदविच्छेदात् (प्रत्यभिज्ञानाविच्छेदात् ) न तात्पर्य ( न स्वरूपपरत्वं ) इत्यविच्छेदः ( विनियोगमात्रपरत्वम् ) । एवं च कर्मणो विधेयत्वं तद्भेद उपोद्घातः ।

विनियोगपरता तु तृतीये वक्ष्यते । नहि श्रुत्यादिमात्रात् तादर्थ्यमित्युक्तम् । न चानाश्रितानुष्ठानं तत् (तादर्थ्यम्) । अनुष्ठानं च विधेः ( साक्षादवहन्तिविषयावान्तरविधेः ) । ( शङ्कते– ) तदपि ( अनुष्ठानमपि ) तर्हि विवक्षितम् । ( उत्तरं– ) सत्यम्, ( 'पौर्णमास्यां पौर्णमास्या यजेत' इत्यादेः– ) प्रयोगविधेस्तत्सिद्धेः ( अनुष्ठानसिद्धेः ) विनियोगमात्रपरमेतत् ( अवहन्त्यादिवाक्यम् ) । यथोक्तं 'एवं सति अङ्गविधिरनुवादः' 'न चाविहितमङ्गं भवति इत्यङ्गत्वाय विधातव्यं' इति । तत्र श्रुत्यादिनिबन्धनत्वाद्विनियोगस्य प्रवर्तनमात्रत्वाद्विधेः द्रव्यादिष्वेव शेषत्वं इति विधिरविनियोजकः इति पूर्वपक्षयित्वा प्रवर्तनारूपमपि अविनियोजकत्वे दुर्लभमिति 'असाधकं तु तादर्थ्यात्' ( ६।१।१।२ ) इति वक्ष्यमाणरीत्या विनियोगशक्तिरुक्ता ( विधेः ) । विधिश्चेद्विनियोजकः अकारणं श्रुत्यादीनि इत्याशङ्क्य उत्तरत्र श्रुत्यादिसापेक्षत्वमभिहितम् ।

चतुर्थे तु अनुष्ठानगताङ्गपरिमाणचिन्ता । कथम् ? क्रतुविध्यनुष्ठानाधीनः क्रत्वर्थः, पुरुषेच्छानिबन्धनप्रवृत्तिः पुरुषार्थः । तत्र कस्य क्रतुविधितोऽनुष्ठानम्, कियति ( अङ्गजाते ) अनुष्ठापनव्यापारः क्रतुविधेः, कस्य वाऽनपेक्षिततद्विधिनिमित्तान्तरतः पुरुषस्य (अनपेक्षितता ) इति प्रयोजकाप्रयोजकचिन्तयाऽपि क्रत्वनुष्ठानविधिव्यापारपरिमाणमवधार्यते । तथाहि, आमिक्षार्थत्वेन चातुर्मास्यप्रयोगविधिर्दध्यानयनं अनुष्ठापयति, न वाजिनार्थतया, तदर्था– ( आमिक्षार्था– ) तन्निष्पन्नस्यैव तदनुप्रवेशित्वात् ( वाजिनस्य ) । एवं क्रयार्थानयननान्तरीयकस्य सप्तमस्य पदस्य । तथा पुरोडाशशेषस्यैव कपालस्य तुषोपवापमुखेन तत्संस्पर्शात् ( नोपवापार्थं पृथगनुष्ठानं इति परेण संबन्धः ) , उत्तरार्धस्य च ( स्विष्टकृदर्थस्य ) एकदेशत्वात् उपात्तैकदेश्युपादेयस्यैव तत्संबन्धात् न पृथगनुष्ठानमिति । अर्थवादत्वे हि जुह्वाद्यङ्गक्रतुप्रयोगविधि-



निबन्धनानुष्ठानत्वं पर्णमयीत्वादीनाम्, फलविधौ तदभावः । अतः अर्थवादः क्रत्वर्थः, फलविधिः पुरुषार्थः । सत्यपि च विध्यधीनानुष्ठानत्वे पर्णमयीत्वस्य क्रतुप्रयोगविध्यविषयत्वात् पुरुषार्थत्वम् । तद्व्यापारपरिमाणं च एवमेव चिन्तितम् । प्रधाने तु यद्यपि विधितः प्रवृत्तिर्विशेषरूपा, सामान्यरूपा तु पुरुषे सा इत्येतावता पुरुषार्थः । अङ्गापेक्षा तु करणज्ञानात् पराचीना तज्ज्ञानं च विधेः इति सामान्यतोऽपि ( न केवलं विशेषतः ) प्रवृत्तेस्तदायत्तत्वात् अङ्गं क्रत्वर्थः । ( शङ्कते– ) इदं तर्हि कथं ( भाष्योक्तं ) 'प्रयोजकः कश्चित् पुरुषार्थः, अप्रयोजकः क्रत्वर्थः' इति । ( पृच्छति– ) किमत्र कथम् ? (चोदकः–) प्रयोज्यौ हि अत्र क्रत्वर्थपुरुषार्थावुक्तौ, तत्रैवं वक्तव्यं 'प्रयोज्यः कश्चित् पुरुषार्थः, कश्चित् क्रत्वर्थः' इति । (परिहरति–) नैष दोषः, पुरुषार्थः क्रत्वर्थः इति समानाधिकरणसमासः, पुरुषः अर्थः ( विषयः आश्रयः कामनिमित्तयोः, क्रतुः अर्थः विषयः क्रतुविधेः ) इति विग्रहात् । एतदुक्तं भवति, कस्यचित् कश्चित् पुरुषः किंचित् प्रयोज्यमित्यर्थः ( कस्यचित् कर्मणः काम्यस्य नैमित्तिकस्य वा कश्चित् पुरुषः कामी निमित्तवान् वा प्रयोजकः, किंचित् कर्म काम्यं नैमित्तिकं वा कस्यचित् कामिनो निमित्तवतो वा प्रयोज्यमित्यर्थः ) । क्रतुविधेरपि किंचित् प्रयोज्यम्, किंचिद् अप्रयोज्यं यथा आमिक्षावाजिनद्वारेण दध्यानयनम् । ( एवं भाष्यं व्याख्यातम् । सूत्रे तु पुरुषेच्छाधीनप्रवृत्तिः पुरुषार्थः, क्रतुविध्यधीनप्रवृत्तिश्च क्रत्वर्थ इति । एतदेव स्थितम् )। तत्र 'यस्मिन् प्रीतिः' ( ४।१।२।२ ) इति फलांशे अनुष्ठानं न विधित इति दर्शितम् । ( विचारप्रयोजनमाह– ) प्रयोजनं श्येनादिफलस्यानर्थत्वम् । पुनः क्रत्वङ्गत्वेन तदङ्गत्वेन च क्रतुप्रयोगविधिविषयत्वाविषयत्वे शेषलक्षणेन (दर्शिते भवतः) । क्रत्वर्थपुरुषार्थौ विभक्तौ क्रतुशेषत्वाशेषत्वविचारेण ( साम्यवैषम्यविचारात् पूर्वं दर्शितौ ) । परतस्तु सिद्धे एकशेषत्वे क्रतुविधिप्रयोगविधिव्यापारपरिमाणमात्रविचारात् । अत एव ( साम्यवैषम्यविचारोपक्रमे भाष्यकारेण– ) उक्तं अतिक्रान्तस्तृतीयविषय इति ।

पञ्चमे तु किं चिन्त्यते ? ननु क्रमः ( चिन्त्यते ), केन प्रमाणेन ? ( उत्तरं– ) श्रुत्यादिभिः । ( आक्षेप्ता– ) नैतत् सारम् । 'चोदनालक्षणोऽर्थो धर्मः', स च चतुरवस्य एव ( विधिचातुर्विध्यात् ) इत्युक्तम् । क्रमश्च तदतिरिक्तः । न ह्येष प्रयोगविधेर्विषयः, अननुष्ठेयत्वात्, अशब्दार्थत्वात्, क्रमवद्व्यतिरेकेण इदन्तयाऽनिरूपणात् । पदार्था हि क्रमेण अनुष्ठीयन्ते न तु क्रमः । नापि विनियोगविधेः उत्पत्तिविधेर्वा ( विषयः ) । अत एव ( अननुष्ठेयत्वादेव ) नाधिकारविधेः ( विषयः ) अनियोज्यत्वात् । स्याच्च तावत् श्रौते क्रमनियमे तत्परो विधिः अर्थादिषु तत्परविध्यसंभवः । ( एवमाक्षिप्ते समाधत्ते– ) उच्यते । प्रयोगो विध्यर्थ इत्युक्तम् । क्रमभेदश्च प्रयोगविशेषः । तथाहि, क्रमेण पदार्था अनुष्ठीयन्ते इत्युच्यते । तथा च प्रयोगविधिविषयत्वात् न चोदनालक्षणत्वमतिवर्तते क्रमः । ( एवं प्रमेयं परिशोध्य विचारस्वरूपमादर्शयति–) तत्र प्रथमं क्रमवद्व्यतिरेकेण इदंतयाऽनिरूपितत्वात् अप्रयोज्यतामविनियोज्यतामनुत्पाद्यतां च मत्वा विधिविषयत्वमाशङ्क्य प्रयोगविधिविषयता दर्शिता । उत्तरवर्णकेन तु उदाहरणशुद्धिः कृता दीक्षापदार्थस्य प्राप्तेः । अनभिधेयस्यापि कथंचित्प्रतीयमानस्य विशिष्टक्रमानुष्ठानस्य विध्यर्थत्वात् कर्तृविशेषविधौ अध्वर्युसंबन्धस्य आनर्थक्यात् अनेकार्थविधितो वाक्यभेदात् । दीक्षापदार्थस्य तु प्रतिप्रधानावृत्तेः अनुष्ठानविशेषविधेरेकार्थत्वात् ( विशेष्यते अनेनानुष्ठानं इति अनुष्ठानविशेषः क्रमः ) तद्विधौ 'न पूतः पावयति' इति प्रतिषेधात् ( ननु अध्वर्युपुरुषा बहवः इति तेषां प्रतिप्रस्थातृविषये वचनं भविष्यति इत्यत आह–) 'इतरमन्यस्तेषां यतो विशेषः स्यात्' ( ३।८।१०।२२ ) इति । अब्राह्मणस्य आर्त्विज्याभावात् उत्तराश्रमिणोश्च । ब्रह्मचारिणश्च आचार्यपरतन्त्रत्वात् । अर्थादिषु तु यद्यपि पदार्थपरो विधिस्तथापि तद्रूपप्रयोजनापेक्षी ( अनुष्ठानविशेषं क्रमं प्रतिपादयति इति परेण संबन्धः ) स्वाध्यायविधि-प्रत्यायित- पाठक्रमनियम–प्रयोजनापेक्षश्च ( स्वाध्यायविधिप्रत्यायितो यः पाठक्रमनियमः तत्प्रयोजनं च तदपेक्षः प्रयोगविधिः इत्यक्षरार्थः । क्रमं प्रति-

पादयति इति परेण संबन्धः । प्रवृत्तिक्रममाह– ) निशांतं च क्रममनुरुध्यमानः स्वावगतं च सहभावमत्यन्तमबाधमानः अनुष्ठानविशेषं प्रतिपादयति इति प्रयोगाङ्गमेव । ( ननु ) चिन्तितोऽसौ ( चतुर्थं प्रयोगचिन्तयैव ) पुरस्तात् । ( उत्तरं– ) सत्यम्, प्रयोज्येयत्ता (प्रयोज्या ये पदार्थास्तेषामियत्तारूपः प्रयोगाङ्गश्चिन्तितः । क्रमस्तु न तथा– ) अप्रयोज्यस्तु क्रमः प्रयोगविशेष एव । अतः पूर्वेणासिद्धेः अनुष्ठानविशेषचिन्तेयं इति भिद्यते लक्षणार्थः ।

षष्ठे तु अधिकारांशो निरूप्यते सर्वाङ्गोपसंहारसमर्थस्य उतेतरस्यापीति, शक्तेः शास्त्रीयत्वात् शास्त्रीयाशास्त्रीयत्वाभ्याम् । ( पूर्वपक्षमाह– ) तत्र यथैव अपेक्षितसाधनत्वं प्रवृत्तिहेतुर्नेतरत् तथा शक्यत्वमपि ( लोकत एवान्वयव्यतिरेकाभ्यामवगतमिति )। शक्यताऽपि प्रवर्तनात्मविधिरूपमनुप्रविशन्ती इष्टसाधनतावत् शास्त्रगम्या । तथा चार्थिमात्रस्येष्टसाधनम् । शक्यं च शास्त्रात् प्रतीतं कर्म प्रमाणान्तरविरोधेन यथासंभवं व्यवतिष्ठते ( यो यावन्ति शक्नोत्युपसंहर्तुमङ्गानि तस्य तावद्भिरेवाङ्गैः तत् प्रधानं शक्यमभिमतसाधनमिति ) इति सर्वाधिकार उक्तः । ( सिद्धान्तमुपक्रमते– ) प्रमाणान्तरविषयत्वात्तु ( तुशब्दः पूर्वपक्षं व्यावर्तयति ) शक्तेरप्राप्तेः शास्त्रस्यार्थवत्त्वात् विधिरूपानुगताया अपि न शास्त्रार्थता ( प्राप्तत्वात् ) विधिस्तु मानान्तरगम्यशक्त्यपेक्षः शब्देन प्रतीयते । न चैवं सापेक्षत्वदोषः, यथा मानान्तरगोचरपदार्थरूपापेक्षित्वे । अन्यथा ( शास्त्रस्य शक्तिविषयत्वे ) सर्वः सर्वाङ्गोपसंहारसमर्थः स्यात्, कुतो यथासंभवं व्यवस्था । ( पूर्वपक्षी– ) प्रमाणान्तरविरोधादिति चेत् । ( उत्तरं– ) हन्त तर्हि शब्दस्याप्रामाण्यम् । लक्षणप्रमाणान्तरसिद्धो यः पदार्थस्वरूपविशेषोपायप्रतिपत्तिः ( पदार्थस्वरूपविशेषः शक्यतालक्षणः तदुपायप्रतिपत्तिर्यस्य शास्त्रविषयस्य सः ) अनन्यगोचरः शास्त्रविषयोऽभ्युपगमनीयः । तथा च ( शक्यताग्राहिणि नियामके प्रमाणे सति ) नाशक्तस्य प्रवृत्तिहेतुरकर्तृकत्वादिति । नासमर्थस्तत्र प्रवर्त्यो गम्यते इति समर्थाधिकारः ( सिध्यति ) ।। ३४ ।।

सति चाधिकारे स कस्येति स एव पुरस्तात् प्रतिपादितः । कथं पुनस्तस्य अभावः शङ्कितः ? इह केचित् ‘ **साध्यत्वात् कर्तुराख्यातैर्व्यापाराः सिद्धसाधनाः । प्राधान्येनाभिधीयन्ते फलेनापि प्रवर्तिताः ।।** ’ **३५ ।।** क्रियाप्रधानमेकार्थं वाक्यं ( शब्दवृत्त्यनुसारात् ) इति । क्रियैव हि ( साध्यरूपा ) भाव्यते, स्वभावसिद्धं ( तु ) द्रव्यं ( तां प्रति ) गुणं ( स्वर्गादि ) इति वदन्तः फलस्यासमन्वयं वाक्ये मन्यन्ते । तथा च फलाभावादधिकाराभावः, नहि अफलेषु कर्मसु कश्चिन्नियोज्यः स्वामी वा । ( चोदयति– ) कथं पुनरसमन्वयः फलस्य ? ( समाधत्ते– ) कर्मणः ( धात्वर्थस्य ) साध्यत्वप्रतीतेः, द्वयोः साध्ययोरसमवायात् । तथाहि, यदि यागादय एव क्रियाः ते एव पूर्वापरीभूताः प्रधानात्मना गम्यन्ते ( न तदा भाव्यान्तरापेक्षाऽस्ति )। अथापि तदतिरेकिणी क्रिया, सा च सकर्मिका भाव्यप्रधाना, तथापि ते एव ( यागादयः, न तु फलम् )। कुतः ? पौर्वापर्यनियमात्, प्रत्ययस्य प्रकृत्यर्थाभिसंबन्धिस्वार्थाभिधायित्वात् ( धात्वर्थस्य च– ) साध्यत्वेन प्रतीतेः, अन्यथा (धात्वर्थस्यासाध्यत्वे) द्रव्यगुणशब्दाविशेषात् ( अविशेषप्रसङ्गात् )। अनभ्युपगमाच्च ‘ येषामुत्पत्तौ ’ इति ( २।१।१।३ ) साक्षात्करणाभिसंबन्धाच्च ( धात्वर्थस्य साध्यत्वं ) ‘ काष्ठैः पचति ’ इति । ननु कर्मान्तराभिसंबन्धात् ( काष्ठैरोदनं पचतीति ) नैवं स्यात् । न, कर्मण्यपि कारकस्मृतेः कारकत्वेनैव क्रियाऽन्वयात् ( स्व– )शब्देन भूततयोपादानात्, ईप्सिततमत्वं तु प्रमाणान्तरविषयः । तथा च दृष्टफलेषु ( ओदनपाकादिषु ) अस्तु फलवत्ता, यागादिषु तु न फलं स्वर्गादिः, तथा असमन्वयात् मानान्तरस्य चाभावात्, एवं च ‘ तानि द्वैधं ’ इत्युक्तम् ( २।१।३।६ ) ( केषांचित् कर्मणां फलानां साध्यत्वेन प्रधानत्वं ज्योतिष्टोमप्रयाजादीनाम्, केषांचिच्च मानान्तरसिद्धफलानामवघातादीनां फलं प्रति गुणत्वेनेति )। अन्यथा ( सर्वेषां फलवत्त्वे तु ) ऐकध्यमेव स्यात् ( एकरूपतैव स्यात् । प्रमेयं परिशोध्य सूत्रमत्र योजयति–) एवं तावत् ‘ द्रव्याणां कर्मसंबन्धे ( कर्मसंयोगे इत्यन्यत्र पाठः )



गुणत्वेनाभिसंबन्धः ’ ( ६।१।१।१ ) न फलत्वेन इति युक्तम् । वस्तुतश्च न संबन्धत्वेन ( संबन्धः फलत्वेन ) पुरुषप्रयत्नस्य ( भावनायाः ) यागादिविषयत्वात् स्वर्गाद्यसंबन्धात् । यागादेश्च व्यापारान्तरादर्शनात् करणत्वानुपपत्तेः । भूतेः ( भवनस्य ) अव्यापारत्वात् । शक्ये च पुरुषनियोगात् ‘ स्वर्गं कुर्यात् ’ इत्यनुपपत्तेः, अवश्यकर्तव्यताप्रसङ्गाच्च, फलस्य चाविधेयत्वोपगमात्, यागादेश्च विधेयत्वाश्रयणात् । प्रवृत्तिविषयो हि विधिः ( प्रवर्तनारूपत्वात् ) न साक्षात् यागे फले वा । प्रवृत्तिश्च भावना, यद्विषयायाश्च प्रवृत्तेर्हेतुः शब्दः स विधिरित्युच्यते । तत्र आख्यातोपादाना भावना नास्त्येव या विधीयेत (द्वितीया च भावना नास्त्येव या फलविषया विधीयेत )। सत्यामपि भिन्नभावनायां न भावनाकर्मणोर्यागफलयोरसमवायः, न विधिसामर्थ्यात् अन्यदपि फलं तस्याप्येवं समवायात् वैरूप्यात् साधनभावस्य दुरवबोधत्वात् ( तस्मात् साधनभावो दुरवबोधः साध्यत्वेन श्रुतस्य यागस्य )। नार्थापत्तितः ( यागादेः फलसाधनत्वावगतिः ) चोदनालक्षणत्वहानेः, तस्याः साध्यत्वपर्यवसानात् । अफलस्य कर्मणो लोके साध्यत्वादृष्टेः, साधनत्वस्य च साध्यत्वपुरःसरत्वात् अर्थात् तदाक्षेपायोगात् । साध्यत्वस्य पुरोभाविनः साधनत्वाक्षेपासामर्थ्यात् । आक्षेपेऽपि सिद्ध्यर्थं कर्तृरूपस्य ( सेद्धुः ) कारणत्वाभावात् ।

कथं तर्हि इदानीं विधिः ? ( पूर्वपक्षी– ) किमत्र कथम् ? प्रवर्तनामात्रं विधिः न पुरुषार्थानथा स्पृशति । कुतः ? प्रतीतेरव्यभिचाराच्च । (प्रतीतेरिति विवृणोति–) तथा च लिङादिभ्यः प्रेरणाऽवगमः । यद्यपि च इष्टसाधनता प्रवृत्तिहेतुः, शब्दस्तु अनामृष्टतद्रूपः प्रवृत्तिहेतुमात्रमभिनिविशते तदाकारावबोधात् । ( अव्यभिचारं विवृणोति– ) प्रैषादिषु च तदभावात् ( अभिमतसाधनत्वाभावात् ) प्रवर्तनामात्रस्य चाव्यभिचारात् । ( यद्युच्येत क्वचित् प्रेषणा, क्वचिदध्येषणा, क्वचिदभिमतफलसाधनता लिङर्थो भविष्यति, इत्यत आह– ) अनेकार्थत्वदोषात् ( न खलु प्रवर्तनामात्रत्वे संभवति अनेकार्थता युक्ता)। न च तद्रूपबोधादेव तद्बोधः ( न च तत्र अवबोधादेव अभिमतसाधनता बोधहेतुरित्यर्थः इति तु कणिका )। मोहादेरपि संभवात् । ( मीमांसकैकदेशी आह– ) ननु एवमपि प्रवर्तनायाः प्रवर्त्यविशेषविषयत्वात् तस्यैव पूर्वमपेक्षणात् स्वर्गकामादिपदानां च तत्समर्पणसामर्थ्यात् स एव ( प्रवर्त्य एव ) तैः समर्प्यते, न साधनविशेषः ।(पूर्वपक्षी– ) किमतः ? ( एकदेशी– ) कामिनोऽधिकारः प्रतिपन्नो भवतीति । ( पूर्वपक्षी– नहि अफले अधिकार इत्युक्तम् । अभ्युपगम्याप्युच्यते– ) एवं नाम, न तु प्रवृत्तिसिद्धिः असति फले, प्रवृत्त्यर्थश्चाधिकारः । ननु आनर्थक्यमुपदेशस्यैवं स्यात् । ( उत्तरं– ) सति अर्थे नानर्थक्यम्, असति तु किमन्यत् ( आनर्थक्यं स्यात् ) । आत्मविज्ञानाधिकारसिद्धिप्रयोजनत्वाद्वा नानर्थक्यम् । एष खलु पुरुषः स्वभावतो रागाद्याविष्टो दृष्टफलैरुपायैर्विषयोपार्जने प्रवर्तमानस्तदाक्षिप्तमनाः तत्पक्षपाती न विगलितविषयप्रपञ्चमात्मतत्त्वमुपदिष्टं प्रत्येतुं ( निश्चेतुं ) परिभावयितुं ( निदिध्यासयितुं ) वा अलम् । कर्मोपदेशैस्तु अनुशिष्टः कृतकामनिबर्हणः स्वाभाविक्याः प्रवृत्तेः निवृत्तः शास्त्रीयायां कर्मप्रवृत्तौ व्यवस्थितो दान्तः ( कामैरबाधितमनाः ) शक्नोति तादृशमपि आत्मतत्त्वमुपदिष्टं प्रत्येतुं परिभावयितुं च । एवं दृष्टेनैव कर्मविधयः आत्मज्ञानाधिकारप्रयोजनाः । एवं च शास्त्रत्वं नियोज्यानुयोजनात् हितोपदेशाद्वा ( आत्मज्ञानाधिकारसिद्धिप्रयोजनकर्मज्ञानोपदेशादित्यर्थः ) । कामे तु ( काम्यमाने स्वर्गादौ ) साध्ये रागाद्यभिध्यातायां स्वाभाविक्यां प्रवृत्तौ उपायदर्शनेन स्वहस्तदानात् शब्दः शास्त्रतामतिवर्तते, नहि तदा पुरुषोऽनुशिष्टः स्यात्, स्वच्छन्दचेष्टायां त्वनुज्ञायेत । अथापि हितमुपदिशच्छास्त्रं तथापि प्रकृत्या दुःखानुषक्तेषु काम्येषु उपायदर्शनेन प्रवर्तयन न हितोपदेशी शब्दः स्यात् ।

ननु एवं ज्ञानविधिरपि अनुशासनमात्रमेव स्यात्, न, ज्ञानस्य दृष्टार्थत्वात् स्वभावतश्च गुणभूतत्वात् संमार्गादिवत् । इममेव चार्थमभिप्रेत्य ‘ कर्तव्यश्च सुखवान्, अकर्तव्यो दुःखवान् ’ इत्याद्युक्तम् । एषोऽर्थः ( उक्तभाष्यस्य– ) स्वर्गादेः क्षणिकत्वादिदुःखानुषङ्गात् तदुपायो यागो दुःखतया न कर्तव्य एव स्यात्, प्रलीनाशेषदुःखप्रपञ्चावभासप्रयोजनस्तु सुखफलः कर्तव्यः । ननु एवं

वर्णयता अतिसृष्ट एवाधिकारो भवति। सत्यम्, न्यायस्तु निरूप्यते नाभ्युपगमः। न च 'यागं कुर्यात्' इत्यर्थे यथाऽधिकारस्तथोपरिष्टात् वक्ष्यते ॥ ३५॥

(एवं पूर्वपक्षयित्वा सिद्धान्तमाह-) अत्रोच्यते,

**'विशेषा एव शब्दार्था दृष्टरूपान्वयेऽपि हि। न च प्रवर्तनाबोध इष्टशक्तेर्विनाऽर्थवान् ॥' ३६॥**

न तावत् सामान्यं लिङाद्यर्थः प्रेषणाऽध्येषणाऽभ्यनुज्ञोपदेशानां तु विशेषाणामेव लोके प्रतीतेः, मोहादिभेदान्तरावगतेश्च। नहि प्रवृत्तिहेतुमात्रावबोधः क्वचिदस्ति। सामान्यशब्दात् विशेषप्रमाणाभावे तन्मात्रावगतिः। अतो न तावन्मात्रं शब्दार्थः। विशेषानुपक्तमेव तु तृन्नादीनामिव कर्तृत्वं ताच्छील्यानुपक्तम्। अन्यथा (ताच्छील्यादिवचनाभावे) कर्तृप्रयोगप्रतीतिप्रसङ्गात् (कर्तृमात्रे प्रयोगप्रसङ्गात्)। नाप्युपाधयो न शब्दार्थाः (उपदेशादयः), अप्रतीतानामभेदकत्वात्, अन्यस्य प्रत्ययहेतोरभावात्। 'तदन्तत्वात्तद्वाच्यः समानशब्दोऽयम्' इति च (कात्यायन-)स्मरणात्। (द्विविधोऽप्युपाधिः उपहितसमानाधिकरणः तद्व्यधिकरणश्च। तद्यथा 'दृतिहरिः पशुः' 'गार्गिकया श्लाघते' इति च। तत्र यः समानशब्दः स समानाधिकरणोपाधिः स तदन्तवाच्यः प्रत्ययान्तवाच्यो दृतिहरिपश्वादिः। न तु असमानशब्दः असमानाधिकरणः 'गार्गिकया श्लाघते' इत्यादिः। नहि 'गार्गिकया' इति श्लाघाद्यधिकारविहिते वुनि तदन्तेन असमानाधिकरणः (ण-) गार्गिकया श्लाघा अभिधीयते इत्यर्थः। ननु तटस्था एवोपाधयः न पुनरभिधाविनिवेशिन इत्यतः आह-) गोत्वादीनामपि उपाधित्वात् (अन्यथा) सत् इत्येव शब्दार्थत्वप्रसङ्गात्। उपेयापि तु (प्रवर्तनामात्राभिधानं) उच्यते। सामान्यचोदनाया विशेषपरत्वात् विशेष एव प्रतिपाद्यः। स च यः कश्चित्, सर्वो वा, कश्चिदेव वा, सर्वथा तु विशेषप्रत्यस्तमयेन सामान्यबोधोऽर्थवान्। तत्र इष्टतच्छक्त्यनपेक्षाणां अभिप्रायमात्रानुविधायिनां तदपेक्षाणां च तदानुकूल्यमपेक्षमाणानां प्रवृत्तिहेतवः प्रेषणाऽध्येषणाऽभ्यनुज्ञाः अपुरुषबुद्धिप्रभवायाः (चोदनायाः) न प्रतिपाद्याः। न मोहादयः (प्रवृत्तिहेतवः) बोधविरोधात्। ते हि प्रतिपाद्यमाना अप्रवृत्तिहेतव इति प्रवर्तनाऽवबोधो विहन्येत, विपर्यय एव स्यात्। नेष्टता (इष्टसाधनता इति कणिकायाम्) कर्मणि (प्रवृत्तिहेतुः) प्रत्यक्षविरोधात्। इष्टसाधनतामपि चेन्न गमयेत् अप्रतिपादकतैव स्यात्। सामान्यबोधस्य विशेषप्रत्यस्तमये अनर्थकत्वान्मिथ्यात्वापातात्। तस्य च हेतुद्वयाभावे (कारणदोषबाधकप्रत्ययाभावे) अयुक्तत्वात्, तदुक्तं 'असाधकं तु तादर्थ्यात्' इति (६।१।१।२), भवेदसाधकं कर्म साधयितारं नाधिगच्छेत् अनधिकारि स्यात् इत्यर्थः, तादर्थ्यात् प्रवर्तनामात्रार्थत्वात् (विधि-)शब्दस्य प्रीतिसाधनत्वानवगमात्, प्रीत्यर्थत्वाच्च पुरुषप्रयत्नानाम्। अविशेषे तु प्रीतिसाधनत्वे सिद्धोऽधिकारः। सर्वविशेषप्रत्यस्तमये चासाधकं वाक्यं स्यादबोधकं अविशेषार्थत्वात् सामान्यचोदनायाः ॥ ३६॥

ननूक्तं 'प्रज्ञायते लिङादीनां व्यञ्जनीया प्रवर्तना। प्रयोक्तृधर्मः' (कारिका ७) इति। सत्यम्, आज्ञादिको नोपदेशः (प्रयोक्तृधर्मो वेदे)। ननु उपदेशोऽपि अनुग्रहाभिप्रायात्मक इति न प्रयोक्तृधर्मतामतिवर्तते। नैतत् सारम्। उपदेशे प्रैषादिष्विव प्रवृत्तिहेतुत्वाभावादभिप्रायस्य। तथाहि,

**'आज्ञादौ कर्मशक्तेर्हि नाभिप्रायानुरोधिता। उपदेशे कर्मशक्तिमवबुध्य प्रवर्तते ॥' ३७॥**

आज्ञाऽभ्यर्थनयोर्हि कर्मणः सामर्थ्यं अनपेक्षमाणः तद्विशेषं (तस्य कर्मणः प्रयोजनविषयं विशेषं) अनाद्रियमाणः तदभिप्रायानुरोधादेव किंचित् समीहमानः अभिप्रायानुरोधी प्रवर्तते। अनुज्ञानेऽपि यद्यपि क्रियाफलात् प्रवृत्तिः तथाप्यभिप्रायानुकूल्यमपेक्षते। उपदेशे तु सत्यप्यनुग्रहाभिप्राये कर्मणः समीहितशक्त्यभावे न प्रवर्तते। कर्मशक्तिं त्ववबुध्य (उपदेष्टुः) अप्रतारकत्वमात्रेण विप्रलम्भकनिमित्ताभावेन सत्यार्थवचनात् असत्यपि अनुग्रहाभिप्राये वक्तुः प्रवर्तते। तस्मादुपदेशे तु सत्यपि अनुग्रहाभिप्रायः शब्दार्थः, अनुमतसाधनता तु कर्मणः (इति मूलपाठः। तस्मादुपदेशप्रवृत्तेः प्रवृत्तिविषयसमीहितसाधनत्वभावाभावानुविधानात् अभिप्रायाऽननुविधानाच्च नानुग्रहाभिप्रायः शब्दार्थः, अभिमतसाधनता तु कर्मणः शब्दार्थः-इति तु कणिका)।



(शङ्कते-) तत्प्रतिपादनं (अभिमतसाधनताप्रतिपादनं) नानुग्रहाभिप्रायमन्तरेण इति चेत् (निराकरोति-) न, मध्यस्थस्यापि प्रश्नादिदर्शनात्। न चैवं तावता शब्दार्थत्वं सर्वशब्दानां ज्ञातार्थत्वप्रसङ्गात्। ननु एवं (समीहितसाधनतायाः प्रवर्तनात्वे सति। प्रवर्तनैव चोदनेति तस्याः शब्दार्थत्वात्) प्रमेयैव स्यात् चोदना, प्रमाणं चेष्यते 'चोदनालक्षणोऽर्थो धर्मः' इत्यभिधानात्। तस्मात् शब्देन प्रमाणात्मना अभिधेयः प्रवृत्तिप्रतिपत्तिकार्योन्नेयः क्रियाविषयः प्रतिपत्तृस्थः स्वसंवेद्यः प्रवृत्तिहेतुरर्थश्चोदना। (दूषयति-) वार्तमेतत्। प्रवृत्तिहेतोर्वाक्यस्य चोदनात्वाभिधानात् 'चोदनेति क्रियायाः प्रवर्तकं वचनं' इति (भाष्यं- १।१।२।२)। यत्र चास्य प्रामाण्यं (अभिधेयस्येष्यते,) शब्दस्यैव तत्रास्तु किमनेनान्तर्गडुना (प्रमाणरहितेन), नहि तत्र शब्दस्य कश्चिद्विरोधः। पदार्थान्तरवत् प्रामाण्यमस्तु व्यर्थं विशेषणा- (विशेषा-) भिधानम्।

(संप्रति विषयं विचारयति-) क्व चास्य प्रामाण्यम्? विषये (यागादौ) चेत्, न, प्रमाणान्तरसिद्धेः। अपूर्वस्यापि च संसर्गस्य लोकवत् तदभावेऽपि प्रतिपत्तेः। अदृष्टसाधनत्वे (यागादीनां श्रेयःसाधनत्वे) चेत्, शब्दस्यैवास्तु। शब्दकार्यत्वे च अव्युत्पन्नशब्दप्रवृत्तिः। शब्दज्ञाप्यत्वं अन्यहेतुकस्य अयुक्तमित्युक्तम्। अनुमानं च न स्वार्थप्रतिपत्त्या (गृहीतसंबन्धम्), तस्याः (प्रतीतेः) अलिङ्गत्वात् लिङ्गफलत्वात्, अनवस्थानात् (लिङ्गभूतायाः प्रतिपत्तेरपि कारणान्तराभावात् स्वात्मप्रतिपत्त्यन्तरमेव कारणं वाच्यम्, एवं च तस्या अप्यात्मप्रतिपत्त्यन्तरमित्यनवस्था)। न च विषयप्रतिपत्त्या (चोदनानुमानं) विषयशब्देभ्यस्तत्सिद्धेः (भावार्थरूपविषयप्रतिपत्तिसिद्धेः)। प्रवृत्त्याऽपि नात्मीयया (लिङ्गेन चोदनाऽनुमानम्। निमित्ताभावेन-) तदभावात्, (चोदनाऽवगमनिमित्तत्वे वा) इतरेतराश्रयात्। प्रवृत्तिमेये शब्दवैयर्थ्यम्, शब्दमेये वृथाऽनुमानम्। परप्रवृत्त्या अनुमितात् विदितशब्दसंगतेः स्वयं शब्दादवबुध्य प्रवर्तते इति नोभयवैयर्थ्यं (शब्दस्य च प्रवृत्तिलिङ्गस्यानुमानस्य च) इति चेत्, न, परप्रवृत्त्या प्रवृत्तिहेतुमात्रावगमात् विशेषानिर्धारणात् तदभिधानप्रतीतेः (तन्मात्राभिधानप्रतीतेः)। तन्मात्रप्रतिपत्त्या प्रवृत्त्ययोगात्, नहि सर्वः सर्वस्य प्रवृत्तिहेतुः (न खलु आज्ञादयो विशेषाः सर्वे सर्वं प्रवर्तयन्ति। अपि च संबन्धसंवेदनाधीनप्रवृत्तित्वाच्छब्दस्य मानान्तरेण च संबन्धग्रहणमन्तरेण तदनुपपत्तेः) अनन्यहेतुकस्वभावत्वाच्च। (शङ्कते-) शब्दपूर्वयैव प्रवृत्त्या अनुमानहेतुकमिति चेत् (शब्दपूर्वयैव प्रवृत्त्या अनुमानात् शब्दहेतुक इति चेत्। निराकरोति-) अनुमानपूर्वकमेव शब्दात् प्रतीतेः किं नानुमानप्रमाणक एव। अपि च नादृष्टातिरिक्तः प्रवृत्तिहेतुरनुमीयते, तस्य पूर्वसिद्ध्यपेक्षत्वात् प्रवृत्तेः (तस्य शब्दनिबन्धनप्रवृत्तिलिङ्गकस्यानुमानस्य प्रवृत्तेः), दृष्टैरपि हेतुभिस्तदुपपत्तेः। प्रतिपत्त्राश्रितश्च यैः प्रत्ययविशेष आश्रितः, तैरालम्बनं वाच्यं अन्यप्रमाणकत्वं च (अनन्यप्रमाणकत्वं च) समर्थनीयम् (न च शक्यं स्वसंवेदनसिद्धत्वात् अनुमेयत्वाद्वा)। अर्थान्तरोपगमेऽपि नित्यत्वे सर्वः सर्वदा सर्वत्राधिकृतः स्यात्। अप्रमाणकं च तत् (प्रमाणाभिमतात्) शब्दात् कस्यचित् क्वचिन्नियोगप्रतीतेः। अनित्यत्वेऽपि न शब्दः कार्यः उक्तदोषत्वात् (कारिका २ पृ. ५)। निमित्तात् कामाद्वा उत्पत्तौ (निमित्तकारका-(क-)विनाशेऽपि कार्याविनाशात्) कृतप्रयोगस्यापि (तदस्तीति) प्रसङ्गः। यावन्निमित्तमनुवृत्तौ कृतप्रयोगस्यापि प्रागुपभोगात् प्रवृत्तिः स्यात्। तस्मात् पूर्व एव (कर्तृसमीहितसाधनतैव) विधिः ॥ ३७॥

तत्र (च स्थिते)

**'यागानुरक्तो व्यापारो दृष्टहेतुर्न युज्यते। तत्परत्वेन शब्देन यदा स प्रतिपादितः ॥' ३८॥**

यदि खलु यागानुरक्ते व्यापारे यागः साध्यात्मना भावानुरञ्जकत्वेन (यागं कुर्यात् इत्यनेन रूपेण) गृह्यते तदा संनिकृष्टस्तत्परः शब्देन उक्तः इति इष्टहेतुतात्मा न तत्र विध्यर्थः समवेयात् तस्य (यागादेः) अनिष्टत्वात् (दुःखं कर्म इति ह्यनुभवो लोकस्य)। तत्राविवक्षिते विधौ सफलस्य निष्फलस्य वा लोके कथंचित् (अनुविधेयपुरुषाशयवशात्) प्रवृत्तिः स्यात्, (अपौरुषेये तु वेदे पुरुषाशया-

भावात् विध्यविवक्षायां प्रवृत्तिर्न स्यात् ) तदुक्तं 'असाधकं तु तादर्थ्यात्' इति । ( सूत्रार्थमाह– ) प्रीत्यर्थत्वात् पुरुषप्रयत्नानां प्रीतिहेतुता तु विध्यर्थासमवाये साधकं नाधिगच्छेत् इति । अथैवं विधिसामर्थ्यात् इष्टनिष्ठः, तथा सति धात्वर्थः करणं तन्नान्तरीयकतास्तितः ( विधिविवक्षायामपि यागस्य साध्यत्वप्रतिपत्तिरुपपद्यते तस्य प्रागसिद्धेः साधितस्यैव साधनत्वेन साध्यत्वाक्षेपात् तद्भावस्य तन्नान्तरीयकत्वात् । कारिकां व्याचष्टे– ) यदि तु विध्यविवक्षाहेत्वभावात् नार्थव्यापारः ( इष्टानिष्टः ) तदा यागस्यानिष्टत्वात् तदन्यपरं ( व्यापारं ) प्रधानात्मना अनवकाशो यागः । [ अत्र 'प्रधानात्मनोनवकाशो यागः' इति मूलं मुद्रितम् । 'प्रधानात्मना यागोऽनवकाशो न भवति' इति कणिका मुद्रिता । युक्तं तु सुधीभिर्विचारणीयम् ] प्रकारान्तरेणापि सावकाशतया विधेश्चानवकाशतया ( इष्टपरतैव व्यापारस्य युक्ता ) सामर्थ्यात् ( अनवकाशविधिप्रतीतिसामर्थ्यात् ) नान्तरीयकतया (वृत्त्या) प्रतिपाद्यमानो विषयत्वं (याग–) करणात्मनाऽन्वेति । नहीष्टपरो व्यापारः तत्परः ( यागपरः ) यागपरो वा इष्टपरः । एवं तावत् 'यजेत' इति विधिवशात् फलाभिसंबन्धः ॥ ३८ ॥

( कर्मिसंबन्धादपि स्वर्गादेर्भाव्यतेत्याह– ) यतश्च

'**भावनाकर्मता पूर्वमिच्छारूपाऽवगम्यते । स्वर्गः सिद्धोऽपि तद्योगादतोऽन्वेति फलात्मना ॥**' ३९ ॥

यो हि यदिच्छति स तत् करोति इति भावनायाः प्रारम्भ इच्छा । तथा च तत् ( इच्छाकर्म ) भावनासाध्यं इति सिद्धोऽपि स्वर्गादिः तत्कर्मतया ( इच्छाकर्मतया ) कर्मिसंबन्धात् ( द्वितीयादिसंबन्धात्– ) ओदनादिवत् साध्यात्मनैव भावनायामन्वेति नान्यथा, तदुक्तं 'प्रत्यर्थं चाभिसंबन्धात्' इति ( ६।१।१।३ ) । ( सूत्रं विवृणोति– ) अर्थ्यमानं प्रति पुरुषव्यापारः आभिमुख्येन संबध्यते अतः अर्थनायोगात् स्वर्गादेः तत्कर्मतया अभिसंबन्धः, अन्यथाऽनन्वयात् । अतो न केवलं 'यजेत' इति फलापेक्षत्वात् (विध्युपहिताया भावनायाः, अपि तु) स्वर्गादेः (कर्मियोगापादितसाध्यभावस्य ) अन्यथाऽसमवायात् । तथा च संबन्धात् कर्म स्वर्गं प्रति साधनत्वेन गम्यते ॥३९॥

( शङ्कते– ) कथं पुनः स्वर्गस्यान्यविशेषणस्य भावनाऽभिसंबन्धः, तत्संबन्धे वा अन्यविशेषणत्वं कथम्, समासो वा । नहि तदभिसंबन्धरहितस्य ( पुरुषसंबन्धरहितस्य ) अन्यसंबन्धसव्यपेक्षस्य वा भावनासंबन्धः, गुणभूतस्य नहि समासो युज्यते ( प्रधानस्य तु अन्यसंबन्धसापेक्षस्यापि समासो दृष्टः ) । ( परिहरति– ) नैष दोषः '**अर्थाद्विशेषणपरं संबन्धं याति दण्डवत् । तद्योगाच्चान्यसंबन्धे न समासः प्रदुष्यति ॥** ४० ॥' न खलु स्वर्गकामान्वयनिरपेक्षः स्वर्गो भावनाऽभिसंबन्धी ( येन शाब्दी पुरुषविशेषणप्रतीतिः व्याहन्येत ) किंतु स एव विशेषणप्रधानः संबन्धमुपाश्नुते ( भावनायाम् ) । यथा 'दण्डी प्रैषानन्वाह' इति दण्डप्रधानो दण्डी ( यथा 'मैत्रावरुणः प्रैषानन्वाह' इति प्रैषानुवचनं मैत्रावरुणस्य प्राप्ते 'दण्डी प्रैषानन्वाह' इति मैत्रावरुणलक्षणविशेष्यविधानानुपपत्तेः विशेषणस्य दण्डस्य चाप्राप्तेर्विधेयत्वात् तत्परो दण्डिशब्दः, तथेह 'यजेत' इति भावनाक्षेपादेव भावयितुः प्राप्तेरविधेयत्वात् भाव्यविशेषापेक्षत्वाच्च भावनायाः, स्वर्गस्य च पुरुषविशेषणस्याप्राप्तरूपतया कर्मिकर्मतया च भाव्यत्वार्हत्वात् अन्यतश्चाप्राप्तेः तत्परा स्वर्गकामश्रुतिरिति ), तदभिसंबन्धी तु तत्परः ( भावनासंबन्धपरः ) स्वात्मना अविवक्षित एव । एवं च समासोऽपि उपपन्नः । स्वतन्त्रस्य हि अन्यसंबन्धे तदसंभवात् ( पुरुषसंबन्धासंभवात् ) सापेक्षत्वात् समासो न स्यात् । तदभिसंबन्धेन तु ( पुरुषसंबन्धेन ) तद्द्वारा अन्यसंबन्धे नैकार्थ्यभावोपरोध इति युक्तः समासः । अन्यथा सर्वमेव विशेषणं असमासं स्यात्, तस्य कार्यमसंस्पृशतो वैयर्थ्यात् । संस्पर्शे वा सापेक्षत्वात् ( भवन्मते ) समासो भवेत् ।

यत्तु आख्यातार्थे साध्ये साध्यान्तरासमवायः ( साध्यान्तरस्य स्वर्गादेरसमवायः ) इति । ( दूषयति– ) भावनायां तावत् रूपादेव तत्समवायः ( साध्यसंबन्धः ) तस्याः भाव्यप्रधानरूपत्वात् । धात्वर्थेऽपि यदि तात्पर्येण भावनायाः ( धात्वर्थस्य ) साध्यत्वं तत् विधिनाऽपास्तम् । अथ ( अन्यार्थप्रवृत्त– ) भावनाविषयत्वमात्रम्, तत् कारणान्तरेष्वपि ( परश्वादिषु ) समानम् । उक्तं हि 'करणं



खलु सर्वत्र कर्तृव्यापारगोचरः' इति ( भावनाविवेके ) । द्रव्यगुणशब्दार्थस्वरूपतोऽपि ( द्रव्यगुणशब्दार्थविशेषस्तु धात्वर्थस्य रूपतोऽपि ) निष्पाद्यस्य साधनत्वात् ( प्रागसिद्धेः) सिद्धस्योपादानाभावात् (गोदोहनादीनां तु अन्यतः सिद्धार्थानां सतामुपादानात् ) । श्रुत्यैव भावनामनुरञ्जयतो यागादेः तद्विशेषणस्य प्रतीतेः ( भावनाया विशेषणस्य प्रतीतेः साध्यत्वावगमः । यदपि चोदितम्, सर्वाभिमतसाधनत्वेन कर्मणो गुणभावात् गुणप्रधानभावेन द्वैविध्यं हीयेतेति तत्राह– ) द्विविधत्वं तु अपूर्वभावाभावकृतम् । पुरुषप्रयत्नस्य यागादिविषयत्वं स्वर्गे ( साध्ये ) अपि अविरुद्धम्, वृक्षे इव च्छेद्ये परशुविषयत्वम् । न च यागादेरव्यापारत्वं शब्दादेव ( साधनतया ) तत्प्रतीतेः । ज्ञानप्रदीपादीनां चोत्पत्तेरपि व्यापारत्वाभ्युपगमात् ।

( यच्चोक्तं 'स्वर्गं कुर्यात्' इत्यशक्योपदेश इति, तदनुपपन्नम्, द्विधा हि भवति क्रियानर्हता अत्यन्तसत्त्वात् गगनवत्, अत्यन्तासत्त्वाद्वा खपुष्पवत् । न चैतदुभयमपि स्वर्गादौ समस्तीत्याह– ) न च स्वर्गो नित्यः, अत्यन्तमसत्त्वात् येनाशक्यः । उपायाज्ञानात् इति चेत् ( परिहरति– ) अत एव स ( उपायः ) ज्ञाप्यते ( विधिना, अतश्च ज्ञातोपायः शक्यो भविष्यतीति ) । न चावश्यकर्तव्यताप्रसङ्गः ( स्वर्गादेः ) फलांशेऽनुवादात् करणांशोपसंहाराच्च विधेः, 'दध्ना जुहोति' इति यथा । ( न वयमाचक्ष्महे न फलविषयेति, किंतु तदुद्देश्यत्वात् ) फलविषयाया एव प्रवृत्तेः यागविषयत्वेन ( अप्राप्तत्वात् ) शब्दो हेतुः ( प्रमाणं ) इति यागो विधीयते । नहि अन्या पुरुषस्य कर्मणि प्रवृत्तिः, अन्या करणे, करण एव प्रवृत्तः फलप्रवृत्तो भवति, कर्मण्येव ( फले ) प्रवर्तमानः करणे प्रवर्तते । तदेवं अर्थावगमान्न वैयर्थ्यम् । नाप्यन्यत् ( आत्मज्ञानाधिकारानुवेशः ) प्रयोजनम् । 'स्वर्गकामो यागं कुर्यात्' इति यागनिष्ठे शब्दे तत्समवायात् ( तत्रैव तात्पर्यसमवायात् ) अप्रमाणत्वात् ( आत्मज्ञानाधिकारानप्रवेशस्य । तत्परत्वे वा– ) श्रुतहानात् अश्रुतकल्पनाच्च ( श्रुतयागकर्तव्यताहानात् अश्रुतात्मज्ञानानुप्रवेशकल्पनाच्च ) । न च दृष्टमेव प्रयोजनं आत्मप्रतिपत्तिः, कर्मभिः कृतकामनिबर्हणेन दान्तेन कामैरनागर्द्धितमनसा आत्मतत्त्वस्य सुप्रत्ययत्वात् । यदि खलु कामनिबर्हणानि कर्माणि, तैश्च कृती न प्रयोजनान्तरमपेक्षते कामी, तथा च तत्पर एव कर्मविधिः इति नान्यपरत्वे प्रमाणम् ( कामनानपेक्षितत्वात् ) । न चाशास्त्रत्वम्, श्रेयोऽभिधायकत्वात् श्रेयसः प्रीतिरूपत्वात्, प्रीतेश्च कामेषु प्रत्यात्मसंवेद्यत्वात् । न च भोगो निबर्हणम्, नहि कामानां तृप्तिरस्ति । अथ प्रवृत्त्यन्तरनिवृत्त्या, तत्रापि यदि कामी यागेन कुर्यात् नान्येनोपायेन कामम्, को विशेषः कामपक्षे ( कामाक्षेपे इति कणिकायाम् ) चेतसः कामनिवृत्तायां प्रवृत्तौ, कथं च पक्षेऽपि अप्राप्तविधौ अन्यनिवृत्तिः । अथ कामी यागं कुर्यान्न कामम्, ( उत्तरं– ) दुर्लभमर्थद्वयं अविशेषतः श्रौतलाक्षणिकादिकम् । ( यागं कुर्यादिति श्रौते संभवति, न कामनिवृत्तिर्लाक्षणिकी युक्ता आश्रयितुमिति ) यागविधिपरत्वे न कामनिषेधः, कामनिषेधपरत्वे न यागविधिः । अर्थात् ( अर्थापत्त्या ) कामनिवृत्तिः ( इति चेन्न ) उभयस्याप्यसमवायात् । सर्वदृष्टार्थप्रवृत्तिनिरोधे न कर्मविधिकृतेऽपि अपार्थकाः स्युः दृष्टोपायसाध्यत्वात् तदर्थस्य ( यागादेः ) । स्वाभाविकत्वाच्च फलोपभोगस्य स्वभाववाद एवाम्नायार्थः छद्मना आश्रितः स्यात् । तस्मात् महद्दण्डपदमिदं 'दृष्टेनैव कर्मविधयः आत्मज्ञानाधिकारमारोहन्ति' इति । नियोज्यानुशासनं शास्त्रस्य इति ज्ञाननियोगोऽपि नियोज्यानुशासनमात्रं इति न तत आत्मप्रतिपत्तिः । ( शङ्कते– ) ज्ञानस्वभावादिति चेत्, ( निराकरोति– ) विधिवैयर्थ्यात् । अवहन्त्यादिवत् इति चेत्, न, नियमार्थत्वात् ( अवहन्त्यादिविधेः ) । न ज्ञानविशेषनियमः, पक्षेऽपि अप्राप्तेः । समारोपेण च संभवात् न तत्त्वपरिच्छेदः । ( उपसंहरति– ) तस्मान्नासाधने धात्वर्थे अधिकारसिद्धिः । साधनत्वं चास्य विधिः इत्युक्तम् ॥ **विधिविवेकः समाप्तः ।**